विधिः, शत्रुप्रहितस्य सर्वस्य संपरीक्ष्य उपादानम्; १६८५ अवध्यो दूतः; राज्ञा परदूतः प्रणिधातव्यः; शत्रुलेखस्वरूपम्. **युक्तिकल्पतरुः**— १६८६ दूतगुणाः, त्रिविधो दूतः, दूतकर्माणि, दूता अदण्ड्या अवध्याश्च.

## स्वाम्यनुजीविवृत्तम्

(पृ. १६८७–१७६०)

**वृद्धहारीतः**— १६८७ अनुजीविषु पितृवद्वृत्तं राज्ञः. **महाभारतम्**— १६८७ सहायप्राप्त्युपायः, सहायाः पृथिवीप्राप्त्युपायाः; राजवेश्मनि वसतां अनुजीविनां वर्तननियमाः; १६९१ राज्ञा पालनीया अनुजीविविषया वर्तननियमाः; १६९२ राज्ञो मार्दवोपेतं भृत्यैः सह वर्तनं भृत्यदोषजनकम्; १६९३ अनुजीविनां राज्ञा सह वर्तननियमाः; राज्ञा महति कर्मणि नियोज्या अनियोज्याश्च; अनुजीविदोषजनका राजदोषाः, भृत्यसंग्रहः, राजसहायगुणाः; १६९४ उत्तममध्यमाधमस्थानेषु स्वाभाविकगुणतारतम्येनैव सहाया नियोज्या राज्ञा, अस्मिन्नर्थे जामदग्न्यरामाश्रमस्थमुनिकृता शुनः परिवर्तनकथा. **वाल्मीकिरामायणम्**— १६९९ गुणानुरूपं भृत्यनियोजनम्; राजसहायस्य वक्तव्यरीतिः; १७०० युक्तोऽयुक्तश्च भृत्यः. **कौटिलीयमर्थशास्त्रम्**— १७०० विविधभृत्यवेतनपरिमाणानि वेतनद्रव्यप्रकाराश्च; १७०३ लोकयात्राज्ञानम्, मन्त्रिसचिवाद्यनुजीविगुणाः, मन्त्रिसचिवादिभिराश्रयणीयराजगुणाः, अनुजीविज्ञानपरीक्षा, अनुजीविपदनियुक्तस्य वर्ज्यावर्ज्यानि आत्मरक्षणपरता च; १७०५ राजसहायानां मन्त्रिसचिवादीनां शिष्टसंकेतानुसरणं राजव्यसननिवारणं च कर्तव्यम्, राजप्रीत्यप्रीतिलिङ्गानि. **चाणक्यसूत्राणि**— १७०८ अनुजीविना स्वामी अनुसरणीयः. **चाणक्यनीतिदर्पणः**— १७०८ कुलीनाः शीलगुणकर्मभिः परीक्षिताः सहायाः. **वृद्धचाणक्यः**— १७०८ त्याज्याः स्वाम्यनुजीविनः. **चाणक्यनीतिशास्त्रम्**— १७०९ प्राज्ञमूर्खसहायविवेकः. **चाणक्यसारसंग्रहः**— १७०९ गुणतारतम्यानुसारि स्थानतारतम्यं सहायानाम्. **चाणक्यराजनीतिशास्त्रम्**— १७०९ सहायानां गुणदोषविवेकः, गुणदोषपरीक्षया सहाया नियोज्याः. **मनुः**— १७१० सहायानां स्थानकर्मानुरूपं वेतनपरिमाणम्, वेतनद्रव्यप्रकाराः, भृत्यभरणम्. **याज्ञवल्क्यः**— १७११ अनुजीविषु पितृवद्वृत्तं राज्ञः. **बृहस्पतिः**— १७११ नियुक्तो भृत्यः वेतनस्थानाभ्यामचालनीयः, चालने दोषः. **यमः**— १७११ भृत्यरक्षणं राज्ञः कर्तव्यम्. **मत्स्यपुराणम्**— १७११ उत्तममध्यमाधमकर्मसु उत्तममध्यमाधमभृत्यनियोजनम्, गुणानुरूपं वेतनविधानम्; परीक्षितानां विविधभृत्यानां गुणानुसारेण विविधकर्मसु सवेतनं नियोजनम्; १७१२ अनुजीविनां कर्तव्याकर्तव्यानि; १७१४ रक्तविरक्तराजविवेकः त्याज्यात्याज्यानुजीविविवेकश्च; १७१५ भृत्यैः सह परिहासो वर्ज्यः. **विष्णुधर्मोत्तरपुराणम्**— १७१६ भृत्यानां वेतनकल्पनम्. **गरुडपुराणम्**— १७१६ राज्ञो भृत्यैः सह वर्तनरीतिः; परीक्ष्या विविधा भृत्याः, तेषां त्रीणि कर्माणि; वर्ज्या भृत्याः; भृत्यदोषाः भृत्यगुणाश्च. **अग्निपुराणम्**— १७१७ नियोज्या अनियोज्याश्च भृत्याः; भृत्यानां कर्तव्याकर्तव्यानि; रक्तविरक्तराजविवेकः; भृत्यानां कर्तव्याकर्तव्यानि. **कामन्दकीयनीतिसारः**— १७१८ मन्त्रिसचिवादिभिर्भृत्यैः सेव्यस्य राज्ञो गुणाः; १७२० अनुजीविगुणाः; १७२१ अनुजीविनां राजसंबन्धीनि कर्तव्याकर्तव्यानि; १७२६ रक्तविरक्तराजलिङ्गानि; १७२९ बन्धुमित्रानुजीविनां कर्तव्याकर्तव्यानि; १७३१ भृत्यैः आजीव्यः निराजीव्यश्च राजा; १७३१ भृत्यानां वेतनकल्पनं राजकर्तव्यम्; १७३४ विविधेषु कर्मसु परीक्षितभृत्यनियोजनम्; १७३६ राज्ञः पण्योपजीविविषयं कर्तव्यम्; १७३७ सस्यरक्षणं राजकर्तव्यम्; पञ्चविधं प्रजानां भयं निवार्यं राज्ञा; अग्नाविव राज्ञि भृत्यवर्तनमिष्टम्; १७३८ अनुजीविषु विश्वासाविश्वासविवेकः; १७३९ स्वाम्यनुजीविवृत्तफलम्. **शुक्रनीतिः**— १७४० अमात्यादिभृत्यपरीक्षा भृत्यगुणदोषाश्च; १७४२ भृत्यानां कर्तव्याकर्तव्यानि राजविषयकाणि; १७४४ रक्तविरक्तराजलिङ्गानि; १७४५ अमात्यमन्त्या-

दिभृत्यानां राजसेवाविधिः; १७४८ दुष्टः अधार्मिकश्च राजा त्याज्यः, तत्स्थाने तत्कुलजस्य गुणवतः स्थापनं पुरोहितस्य कर्तव्यम्; राजसभायां भृत्यस्थानानि, राज्ञः सभाप्रवेशविधिः; १७४९ राज्ञः भृत्येषु वर्तनविवेकः, भृत्यैः परिहासादीनि वर्जनीयानि राज्ञा; १७५० भृत्येन राजकार्ये लेख्यप्रमाणमेवानुसरणीयम्; भृत्येषु वाक्पारुष्यादि शत्रुत्वकरम्; यथागुणं भृत्यानां भृतिसंमानादिविधिः; १७५१ भृत्यानां कार्याङ्कनम्; पुरोहितादिनियोजने चातुर्वर्ण्यविवेकः; १७५२ त्याज्यराजभृतकविवेकः; अन्तःपुरधनादिव्ययबाह्यकृत्यादिषु नियोज्या भृत्याः, मित्रेषु भृत्येषु कर्तव्यम्; परराष्ट्रहरणे भृतिविचारः; स्वामिभृत्ययोः परस्परं कृतज्ञता प्रीतिश्च श्रेयस्करी; १७५३ त्रिविधा भृतकाः उत्तममध्यमाधमभेदेन, तेषामधिकारभेदेन परिचारकाश्वरथयानादीनि प्रकल्पनीयानि; १७५४ अधिकारगुणवर्णानुसारेण भृत्यानां भृतिविचारः, सेवानिवृत्त्यादौ च भृतिभेदाः. **नीतिवाक्यामृतम्**– १७५८ भृत्यानां स्वामिनश्च गुणा दोषाश्च, भृत्यभरणं राजकर्तव्यम्; १७५९ विरक्तानुरक्तराजलिङ्गानि. **मानसोल्लासः**– १७६० भृत्यप्रकाराः, भृत्यरक्षणादि राजकर्तव्यम्. **अनिर्दिष्टकर्तृकवचनम्**– १७६० विरक्तराजलिङ्गानि.

## मन्त्रः

### ( पृ. १७६१–१८०६ )

**शङ्खलिखितौ**– १७६१ मन्त्रस्य गूहनमभिमतम्. **महाभारतम्**– १७६१ मन्त्राधिकारः, मन्त्रदेशकालादीनि, समस्तैर्व्यस्तैश्च सह मन्त्रणम्, मन्त्रानधिकारिणो मन्त्राधिकारिणश्च, मन्त्रगूहनरीतिः, गूढस्यैव मन्त्रस्य सिद्धिकारिता, मन्त्रभेदद्वाराणि, मन्त्रभेददोषः. **वाल्मीकिरामायणम्**– १७६४ मन्त्रप्रयोजनम्, मन्त्राधिकारिणः तत्संख्या च, समस्तैर्व्यस्तैश्च मन्त्रणम्, उत्तममध्यमाधमा मन्त्राधिकारिणः मन्त्राश्च; १७६६ सुव्यवस्थितमन्त्रलक्षणम्, अलक्षणीयता मन्त्रस्येष्टा, मन्त्रमूलानि राजकार्याणि, मन्त्रे चिन्तनीयाः शत्रुमित्रादयो विषयाः, मन्त्रनिश्चयविधिः, ऐकमत्येन मन्त्रानुसरणम्, मन्त्रविनाशकाः, मन्त्रभेदे दोषाः, मन्त्राधिकारिणोऽनधिकारिणश्च. **कौटिलीयमर्थशास्त्रम्**– १७६८ मन्त्रमूलानि कार्याणि, मन्त्रस्य संवृतो देशः, मन्त्ररक्षणं मन्त्रभेदनिवारणमिष्टमत्यन्तम्, मन्त्राधिकारिणो मन्त्रे तत्संख्याविवेकश्च, मन्त्ररीतिश्चिन्तनीया विषयाश्च, बहुमतत्वं कार्यसिद्धिकरत्वं वा प्रमाणम्, मन्त्राङ्गानि, मन्त्रिपरिषत्. **चाणक्यसूत्राणि**– १७७२ मन्त्रमूलानि कार्याणि, मन्त्ररक्षणं मन्त्रभेदनिवारणमत्यन्तमिष्टम्, मन्त्राधिकारिणः, ऐकमत्ये मन्त्रनिश्चयः. **चाणक्यनीतिदर्पणः**– १७७२ मन्त्रगूहनमत्यन्तमिष्टम्. **चाणक्यनीतिशास्त्रम्**– १७७२ मन्त्रगूहनमत्यन्तमिष्टम्. **चाणक्यसारसंग्रहः**– १७७३ मन्त्रगूहनमत्यन्तमिष्टम्. **लघुचाणक्यः**– १७७३ मन्त्रहानौ राज्यनाशः. **मनुः**– १७७३ मन्त्राधिकारिणः सचिवाः, मन्त्रणीयाः विषयाः, समस्तैर्व्यस्तैश्च मन्त्रिभिर्मन्त्रणम्; १७७५ मन्त्रस्य गूहनमिष्टम्, मन्त्रार्हानर्हदेशकालादीनि; १७७६ मन्त्रणीया विषयाः. **याज्ञवल्क्यः**– १७७८ मन्त्राधिकारिणः, मन्त्रविषयो राज्यं राजमण्डलं च, मन्त्रगूहनमत्यन्तमिष्टम्. **बार्हस्पत्यसूत्रम्**– १७७९ मन्त्रप्रयोजनम्, मन्त्रलक्षणम्, मन्त्रानधिकारिणः, त्रिविधा उत्तममध्यमाधमा मन्त्रिणो मन्त्राश्च, मन्त्रणविधिः, मन्त्रविषयाः. **बृहत्पराशरः**– १७८० मन्त्राधिकारः, मन्त्रणदेशः. **प्रचेताः**– १७८० मन्त्रविषयाः पञ्च. **आश्वलायनः**– १७८० मन्त्राधिकारः मन्त्रविषयश्च. **मत्स्यपुराणम्**– १७८० मन्त्रप्रयोजनम्, मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम्. **विष्णुधर्मोत्तरपुराणम्**– १७८१ मन्त्रप्रयोजनम्, मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम्. **गरुडपुराणम्**– १७८१ मन्त्रगूहनमत्यन्तमिष्टम्. **अग्निपुराणम्**– १७८२ मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम्, मन्त्रानधिकारिणः, पञ्च मन्त्रणविषयाः, मन्त्रभेदकारणानि. **कालिकापुराणम्**– १७८२ मन्त्राधिकारः, समस्तैर्व्यस्तैश्च मन्त्रणम्, मन्त्रणार्हानर्हदेशकालादयः. **कामन्दकीयनीतिसारः**–

१७८२ मन्त्रप्रयोजनम्, मन्त्राधिकारिणो मन्त्रानधिकारिणश्च, मन्त्रविधिः, मन्त्रमहिमा; १७८५ उपायानुपायशक्याशक्यादिविचारो मन्त्रणम्; १७९१ मन्त्रगूहनमत्यन्तमिष्टम्; पञ्चाङ्गो मन्त्रः; १७९४ मन्त्ररक्षणम्, मन्त्रभेदकारणानि; १७९५ मन्त्रार्हानर्हदेशकालादयः; १७९६ मन्त्रणविधिः; समस्तैर्व्यस्तैश्च मन्त्रिभिर्मन्त्रणम्; मन्त्रनिर्णयोत्तरं कार्यकालानतिक्रम एव इष्टः; १७९७ मन्त्रानुसरणविधिः. **शुक्रनीतिः**– १७९८ मन्त्रणा मन्त्रिभिः सहैव, मन्त्रदेशकालादयः, मन्त्राधिकारिणः मन्त्रानधिकारिणश्च, बहुसंमतो मन्त्रोऽनुष्ठेयः; १७९९ मन्त्रणविषयाः. **नीतिवाक्यामृतम्**– १७९९ मन्त्रप्रयोजनम्, मन्त्रणाविषयाः, मन्त्राधिकारिणः; १८०० पञ्चाङ्गो मन्त्रः; मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रभेदकारणानि; १८०१ मन्त्रानुसरणं कर्तव्यम्; १८०२ मन्त्रणाविधिः, मन्त्रमहिमा. **युक्तिकल्पतरुः**– १८०४ मन्त्रप्रयोजनम्, मन्त्रणाविषयाः, मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रार्हानर्हदेशकालादयः. **मानसोल्लासः**– १८०५ पञ्चाङ्गो मन्त्रः, युक्तमन्त्रलक्षणानि, मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रार्हानर्हदेशकालादयः, मन्त्रणाविषयाः, व्यस्तैर्मन्त्रिभिर्मन्त्रणमिष्टम्, मन्त्रनिर्णयविधिः. **अनिर्दिष्टकर्तृकवचनम्**– १८०६ मन्त्रगूहनमत्यन्तमिष्टम्.

## व्यवहारदर्शनम्

(पृ. १८०७–१८३०)

**पारस्करगृह्यसूत्रम्**– १८०७ सभाप्रवेशनविधिः– सभानमस्कारः, सभाप्रवेशनम्, जपः, क्रोधापनयनं द्रोहापनयनं च मन्त्रपूर्वम्. **गौतमः**– १८०८ व्यवहारदर्शनप्रमाणानि वेदादीनि; कार्यदर्शनाधिकारी प्राड्विवाकः राजा ब्राह्मणो वा. **हारीतः**– १८०९ प्राड्विवाककर्तव्यं शल्योद्धरणम्. **वृद्धहारीतः**– १८०९ राजा सभ्यसहकृतः व्यवहारदर्शने लघुगुरुतारतम्येन पापिदण्डने च अधिकारी. **आपस्तम्बः**– १८०९ व्यवहारपरिषत्सभ्यलक्षणानि. **वसिष्ठः**– १८०९ व्यवहारपरिषत्सभ्याः राजमन्त्रिनागराः. **विष्णुः**– १८०९ व्यवहारदर्शनाधिकारी राजा ब्राह्मणो वा, परिषत्सभ्यलक्षणानि. **महाभारतम्**– १८०९ सभ्यकर्तव्यं धर्मशल्योद्धरणम्; व्यवहारदर्शनाधिकारिसभ्यलक्षणम्; १८१० सभ्यानां संख्या लक्षणानि च; १८११ अनाथासाक्षिककार्यं विशेषतः परीक्ष्यम्; सम्यग्दण्डप्रणयनविधिः. **वाल्मीकिरामायणम्**– १८१२ पौरकार्यदर्शने विलम्बो महादोषावहः, एतन्निदर्शनं नृगराजकथया. **कौटिलीयमर्थशास्त्रम्**– १८१३ राजकर्तव्यं कार्यदर्शनं कार्यार्थिनां क्रमेण कार्यगौरवात्ययिकताविवेकेन च, विलम्बे दर्शनपरिहारे च राजविपत्; १८१४ व्यवहारदर्शनाधिकारिसंख्या दर्शनाधिकरणानि च; व्यवहारदर्शनं सम्यग्दण्डनं च वर्णाश्रमाचाररक्षणाय. **मनुः**– १८१४ विनीतो मन्त्रज्ञसभ्यसहकृतः सभागतो राजा राजनियुक्तो ब्राह्मणो वा कार्यदर्शने अधिकारी. **याज्ञवल्क्यः**– १८१८ दण्ड्यदण्डनप्रयोजनकं व्यवहारदर्शनं सभ्यसहकृतस्य राज्ञः कर्तव्यम्; व्यवहारदर्शने प्रमाणं धर्मशास्त्रानुसारी क्रोधादिदोषरहितो राजा; १८२० सभ्यलक्षणानि; १८२१ राजनियुक्तः ससभ्यो ब्राह्मणो व्यवहारदर्शनाधिकारी. **नारदः**– १८२२ धर्मशास्त्रप्रमाणेन व्यवहारदर्शने दण्ड्यदण्डने च अधिकारी राजा प्राड्विवाकसहकृतः; १८२३ प्राड्विवाकलक्षणम्, व्यवहारशल्योद्धरणं प्राड्विवाककर्तव्यम्; राजनियुक्तसभ्यलक्षणम्. **बृहस्पतिः**– १८२४ राजा प्राड्विवाको वा सभ्यानां धर्मशास्त्रस्य च मतानुसारेण व्यवहारदर्शनाधिकारी, प्राड्विवाकसभ्यलक्षणम्. **वृद्धबृहस्पतिः**– १८२४ प्राड्विवाकलक्षणम्. **कात्यायनः**– १८२४ प्राड्विवाकामात्यपुरोहितसभ्यसहकृतः सभागतो राजा व्यवहारदर्शनाधिकारी; व्यवहारदर्शने राजनियुक्तो ब्राह्मणादिर्वा अधिकारी, अधिकारलक्षणम्, राजनियुक्तसभ्यलक्षणम्, शूद्रो वर्ज्यः; १८२५ राजनिर्णयः अविचाल्यः. **व्यासः**– १८२५ प्राड्विवाकलक्षणम्, व्यवहारदर्शने द्विजाः सहकारिणः, न शूद्राः. **बृहत्पराशरः**– १८२५ प्राड्विवाकादिनियुक्तिः. **बुधः**– १८२५ व्यवहारदर्शनविधिः. **आश्वलायनः**– १८२५ सभालक्षणम्, व्यवहारदर्शनं शास्त्रीयव्यवहारप्रवर्तनं च

## लेख्यम्

(पृ. १८३१–१८४८)



## राजमण्डलविचारः

(पृ. १८४९–१८८३)

राजनीतिकाण्डस्य

# तृतीयभागस्य ऋष्यादिक्रमेण विषयानुक्रमणिका

स्वाम्यनुजीविवृत्तम्—

अनुजीविषु पितृवद्वृत्तं राज्ञः १६८७.

व्यवहारदर्शनम्—

राजा सभ्यसहकृतः व्यवहारदर्शने लघुगुरुतारतम्येन पापिदण्डने च अधिकारी १८०९.

## बौधायनः

प्रकृतयः— कोशः—

षष्ठांशो राज्ञः ; सामुद्रासामुद्रशुल्कपरिमाणम् १३०७. प्रनष्टस्वामिकद्रव्यव्यवस्था १३०८.

पुरोहितः—

राज्ञा वरणीयः सर्वतोधुः पुरोहितः , पुरोहितशासनानुवर्तनम् १६१४.

## आपस्तम्बः

प्रकृतयः— कोशः—

शुल्कं धार्म्यं ग्राह्यम् ; अकरा जनाः श्रोत्रियादयः १३०८.

प्रकृतयः— राष्ट्रम्—

राज्ञा परिहर्तव्यः सर्वथा प्रजावसादः ; चोरभयनिवारणं प्रजारक्षणार्थमधिकृतनियुक्तिश्च १३८४.

प्रकृतयः— दुर्गम्—

पुरवेश्मामन्त्रणसभानिर्माणम् , तत्राग्निस्थापना, आमन्त्रणमतिथिवासार्थम् , सभा अधिदेवनार्थम् १४४०.

व्यवहारदर्शनम्—

व्यवहारपरिषत्सभ्यलक्षणानि १८०९.

## वसिष्ठः

प्रकृतयः— अमात्याः—

हंससदृशो राजा इष्टः अगृध्रपरिवारश्च १२०६.

प्रकृतयः— मन्त्रिणः—

मन्त्रिभिर्नागरैश्च सह राज्ञा कार्याणि निर्वर्तनीयानि १२४०.

प्रकृतयः— प्रधानमन्त्री—

राज्यसदसः कर्माणि प्रधानमन्त्रिणः १२८१.

प्रकृतयः— कोशः—

अब्राह्मणधनस्य षष्ठांशो राज्ञः करः , पण्यस्य नौकायाश्च करग्रहणव्यवस्था १३०९. अकरा जनाः ; अस्वामिकधनव्यवस्था १३१०.

प्रकृतयः— राष्ट्रम्—

पादपरक्षणं गार्हस्थ्याङ्गमानोन्मानरक्षणं च १३८५.

पुरोहितः—

ब्राह्मणः पुरोहितो वरणीयः १६१४.

व्यवहारदर्शनम्—

व्यवहारपरिषत्सभ्याः राजमन्त्रिनागराः १८०९.

## विष्णुः

प्रकृतयः— प्रकृतिप्रकाराः—

सप्त प्रकृतयः , प्रकृतिदूषका हन्तव्याः ११६५.

प्रकृतयः— अमात्याः—

अमात्यानां शौचादिगुणाः १२०६.

प्रकृतयः— कोशः—

षष्ठांशकराहाणि धान्यादीनि, पशुहिरण्यपण्यानां करांशाः १३१०. धर्मकरदा ब्राह्मणा अकराः ; प्रजासुकृतदुष्कृतषष्ठांशभाक् राजा; स्वदेशपण्याद्दशमांशस्य परदेशपण्याद्विंशांशस्य चाऽऽदानम् १३११. शुल्कस्थानादपक्रामतः सर्वापहारः ; शिल्पि—कर्मजीविनां प्रतिमासं ऐकाहिकं कर्म शुल्कम्; आकरोत्पन्नं सर्वं राज्ञः; निधिलाभव्यवस्था १३१२. चौरहृतधनव्यवस्था १३१३.

प्रकृतयः— राष्ट्रम्—

स्वदेशगुणसंपत् , ग्रामाधिपानामध्यक्षाणां च नियुक्तिः १३८५.

प्रकृतयः— दुर्गम्—

वैश्यशूद्रप्रायेऽर्थसंपन्ने देशे षड्विधदुर्गान्यतमो दुर्गं आश्रयणीयो राज्ञा १४४१.

प्रकृतिव्यसनानि—

राज्ञा परिहार्याणि मृगयाद्यूतमद्यस्त्रीपारुष्यद्वयार्थदूषणानि सप्त १५४६.

## शङ्खः



## शङ्खलिखितौ



## महाभारतम्

अमित्रलक्षणं च १२८७. मित्रप्रकाराश्चत्वारः; मित्रतामस्थिरां विचिन्त्य मित्रसंग्रहः कर्तव्यः १२८८. अमित्रलिङ्गानि; उत्तममित्रलक्षणानि १२८९. हितकर्ता सुहृत् दुर्लभः; मित्रत्वेन संधेया असंधेयाश्च १२९०.

प्रकृतयः– कोशः–

अर्थप्रयोजनम्; कोशवर्धनाय पशुहिरण्यधान्यानां करांशपरिमाणम्, शास्त्रविहित एव मालाकारन्यायेन करो ग्राह्यः १३१३. अब्राह्मणेभ्यः अश्रोत्रियब्राह्मणेभ्यश्चापि करग्रहणं विहितम् १३१४. रक्ष्यः अर्थोत्पादकः कोशविलोपकामात्यज्ञापकश्च १३१५. अर्थप्रशंसा; अनापदि वणिक्शिल्पिभ्यः उच्चावचकरादानम्, स्वमूलं परमूलं च रक्ष्यम् १३१६. आपदि करादानपद्धतिः १३१७. वैश्येभ्यः करादानं तेषां हिते करविनियोगश्च; भ्रमरकृतमधुदोह–धेनुदोह–जलौकारक्तहरण– व्याघ्रीपुत्रहरणादिवत् मृदूपायेन प्रजाभ्यः करग्रहणं न्याय्यम् १३१८. धनसंचयपद्धतिः; अष्ट धनसमिन्धनानि १३१९. क्षीणे कोशे अधर्ममार्गेणापि बलात् धनिनां धनहरणं आपद्धर्मः १३२०. मध्यममार्गेण बलात् कोशसंचयः कर्तव्यः १३२४. अनापदि न्यायेनैव कोशसंचयः कर्तव्यः १३२६.

प्रकृतयः– राष्ट्रम् –

भूमिमहिमा; ग्रामाद्यधिपतीनां नियुक्तिः तेभ्यः प्रजारक्षणं च १३८५. राष्ट्रोपघातकानां अमायिकोपायैर्दमनम् १३८६. सत्यार्जवपरेण राज्ञा कृषिगोरक्षवाणिज्यकारिणो धनिनश्च रक्षणीया माननीयाश्च; कर्तव्यं प्रजायाः शौचाशौचपरिज्ञानम् १३८८.

प्रकृतयः– दुर्गम् –

राज्ञा आस्थापनीयाः षड्विधा दुर्गाः, नरदुर्गस्योत्तमत्वम्, दुर्गसंपन्नपुरनिर्माणविधिः १४४१.

प्रकृतयः– बलम् –

चतुरङ्गसेनाविभागवाचकानां पत्ति– सेनामुख– गुल्म– गण– वाहिनी– पृतना– चमू– अनीकिनी– अक्षौहिणीतिपदानां विवरणम्; सेनाया दोषः भेदः १४९९. प्रकाशाप्रकाशभेदेन दण्डद्वैविध्यम्, प्रकाशदण्डोऽष्टविधः; गान्धारादिदेशभेदेन योधलक्षणानि; विविधानि शूरप्रकृतिलक्षणानि अन्त्यजशूरलक्षणानि च १५००. योधसंग्रहविधिः, अष्टाङ्गं बलम् १५०१. असिः प्रहरणानां श्रेष्ठः, असेरुत्पत्तिकथा असिधारकपरंपरा च १५०२. राज्ञा संग्राह्याणि विविधानि बलानि १५०७.

प्रकृतिव्यसनानि–

बहुदोषं द्यूतम् १५४६. चत्वारि स्त्रीद्यूतमृगयामद्यानि व्यसनानि; सैन्यव्यसनं भेदः; द्यूतं बहुदोषम्; व्यसनानि सप्त १५४७. कामजानि क्रोधजानि दश व्यसनानि; अनासक्त्या युक्त्या मद्यादिसेवनमनुमतम् १५४८.

पुरोहितः–

राज्ञा ब्राह्मणः पुरोहितो वरणीयः, पुरोहितप्रयोजनम्, पुरोहिताभ्यनुज्ञया वर्तनम् १६१४. इक्ष्वाकुकुलराजपुरोहितो वसिष्ठः, ब्राह्मणः पुरोहितो वरणीयः; पुरोहितगुणाः १६१५. राज्ञा वरणीयः ब्राह्मणः पुरोहितः, पुरोहितकर्तव्यम्, सर्ववर्णगुरुर्ब्राह्मणः १६१६. पुरोहितवरणम् १६१७. ब्राह्मणक्षत्रिययोः वैमत्यं प्रजानां क्षतिकरं परस्परं सौहृदं च हितकरम् १६१८. ब्राह्मणहिंसया रुद्रकोपात् राष्ट्रहानिः १६१९. प्रथमं पुरोहितवरणं पश्चाद्राजाभिषेकः १६२१. सपुरोहितो राजा रक्षसां हन्ता इत्यस्य निदर्शकं मुचुकुन्दराजाख्यानम् १६२२.

ऋत्विजः–

राज्ञा वरणीयानां ऋत्विजां कर्तव्यानि गुणाश्च १६३२.

ज्योतिर्वित् मान्त्रिकः वैद्यश्च–

कुशलदैवज्ञवैद्ययोः संग्रहः १६३५.

प्रणिधिः–

स्वपरराष्ट्रयोः स्थानविशेषेषु च राज्ञा योजनीयाः पाषण्डादयः चाराः, तैर्बोद्धव्या विषयाः, परचारा ज्ञातव्या हन्तव्याश्च १६४०.

## वाल्मीकिरामायणम्

मन्त्रः—

मन्त्रप्रयोजनम्, मन्त्राधिकारिणः तत्संख्या च, समस्तैर्व्यस्तैश्च मन्त्रणम्, उत्तममध्यमाधमा मन्त्राधिकारिणः मन्त्राश्च १७६४. सुव्यवस्थितमन्त्रलक्षणम्, अलक्षणीयता मन्त्रस्येष्टा, मन्त्रमूलानि राजकार्याणि, मन्त्रे चिन्तनीयाः शत्रुमित्रादयो विषयाः, मन्त्रनिश्चयविधिः, ऐकमत्येन मन्त्रानुसरणम्, मन्त्रविनाशकाः, मन्त्रभेदे दोषाः, मन्त्राधिकारिणोऽनधिकारिणश्च १७६६.

व्यवहारदर्शनम्—

पौरकार्यदर्शने विलम्बो महादोषावहः, एतन्निदर्शनं नृगराजकथया १८१२.

## कौटिलीयमर्थशास्त्रम्

प्रकृतयः— प्रकृतिप्रकाराः—

सप्त प्रकृतयः ११६५.

प्रकृतयः— स्वामी—

स्वामिनः आभिगामिका गुणाः प्रज्ञागुणाः उत्साहगुणाः आत्मसंपच्च ११७७.

प्रकृतयः— अमात्याः—

आचार्या अमात्या वा राजमर्यादा; अमात्यनियुक्तिविवेकः १२२४. उपधाभिः शौचाशौचज्ञानममात्यानाम् १२२६.

प्रकृतयः— मन्त्रिणः—

अमात्यगुणसंपत् गुणपरीक्षाविधिः अमात्यकर्म च १२४७. राज्ञा स्थापनीयमन्त्रिपरिषद्विचारः मन्त्रिसंख्याविचारश्च १२४८. मन्त्रिणां कर्तव्यानि १२४९.

प्रकृतयः— प्रधानमन्त्री—

राज्ञि आसन्नमरणे मुख्यामात्येन अनुष्ठेया राज्यबाधानिवारणोपायाः, अमात्ययुवराजराजकन्यामहिष्याद्यन्यतमानां अधिकारिताविवेकः १२८२.

प्रकृतयः— मित्रम्—

मित्रगुणसंपत् अमित्रदोषसंपच्च १२९३. मित्रप्रकाराः १२९४.

प्रकृतयः— कोशः—

करः राज्ञो भृतिः १३२७. कृषिकर्तारः कोशवृद्ध्यर्थं द्रव्येण अनुग्राह्याः, कोशपण्यादिगृहनिर्माणविधिः, कोशगतद्रव्यरक्षणोपायाः; कोशस्य प्रयोजनं वृद्धिक्षयहेतवश्च; क्षीणकोशेन राज्ञा अनुष्ठेया विशिष्टोपाया धर्म्या अधर्म्याश्च १३२८. कोशगुणसंपत् १३३४.

प्रकृतयः— राष्ट्रम्—

जनपदगुणसंपत् १३८८. सामान्यतः जनपदनिवेशनम्, विशेषतः ग्रामनगरान्तपालदुर्गश्रोत्रियकृषककारकर्मान्तवनव्रजपथपत्तननिवेशनम्, बालानाथादिभरणम्, व्याधिदुर्भिक्षादिपीडितदेशपरिहारः, वणिक्पथादीनां रक्षा १३८९. विवीतवनद्रव्यवनहस्तिवनानां पालनं हस्तिवनपालने विशेषश्च १३९३. दैवमहाभयेभ्यो जनपदरक्षणम् १३९५. राजराज्ययोः कण्टकशोधनम् १३९८. शत्रुकर्शने तज्जनपदाय अभयदानम् १४०३.

प्रकृतयः— दुर्गम्—

परिखावप्रप्राकारराजगृहहर्म्याट्टालिकाप्रतोलिकादेवमार्गादिसहितानां प्रत्येकं द्विविधानां चतुर्णां दुर्गाणां निर्माणम् १४४५. राजभवनसहितायाः दुर्गरूपायाः राजधान्याः निर्माणम् १४५०.

प्रकृतयः— बलम्—

सेनागुणाः; मौलादिषड्विधसेनानां चातुर्वर्ण्यसेनानां च श्रेयस्त्वतारतम्यम् १५०८. हस्तिबलमहिमा; चतुरङ्गसेनानामनेकमुख्यत्वम् १५०९.

प्रकृतयः— सामान्यविचारः—

परस्परोपकारिण्यः स्वगुणोदयाः प्रकृतिसंपदः कृत्स्नपृथिवीजयकारणम्, प्रकृतिकोपात् राजहानिः १५४४.

प्रकृतिव्यसनानि—

व्यसनविचारः यानरक्षाविचारफलः, व्यसनशब्दव्युत्पत्तिः, स्वाम्यमात्यादिप्रकृत्यवयवानां प्रत्येकं व्यसनस्य गुरुलघुभावविचारः १५४८. राज्ञो व्यसनानि राज्यदूषकाणि १५५४. अविनीतपुरुषकर्तृको द्विविधो व्यसनवर्गः कामजः क्रोधजश्च १५५७. दैव्य आपदः मानुष्य आपदश्च, आपदां परस्परगुरुलघुभावविचारः, कोश-

## चाणक्यसूत्राणि

## चाणक्यनीतिदर्पणः



## वृद्धचाणक्यः



## चाणक्यनीतिशास्त्रम्



## चाणक्यसारसंग्रहः



## लघुचाणक्यः



## चाणक्यराजनीतिशास्त्रम्

## मनुः

मन्त्रः—

मन्त्राधिकारिणः सचिवाः, मन्त्रणीया विषयाः, समस्तैर्व्यस्तैश्च मन्त्रिभिर्मन्त्रणम् १७७३. मन्त्रस्य गूहनमिष्टम्, मन्त्राहनर्हदेशकालादीनि १७७५. मन्त्रणीया विषयाः १७७६.

व्यवहारदर्शनम्—

विनीतो मन्त्रज्ञसभ्यसहकृतः सभागतो राजा राजनियुक्तो ब्राह्मणो वा कार्यदर्शने अधिकारी १८१४.

राजमण्डलविचारः—

राज्ञा चतुर्विधराजमण्डलविचारः कर्तव्यः; विविधमण्डलस्वरूपम् १८५३. मण्डलेषु उपायप्रयोगविवेकः १८५६.

## याज्ञवल्क्यः

प्रकृतयः— प्रकृतिप्रकाराः—

राज्यं सप्ताङ्गम् ११६७.

प्रकृतयः— स्वामी—

महोत्साहादिगुणवान् चातुर्विद्यः स्वामी ११७९.

प्रकृतयः— मन्त्रिणः—

राज्ञः कर्तव्यं मन्त्रिवरणम्, मन्त्रिगुणसंपत्, ब्राह्मणप्राधान्यं मन्त्रणे, मन्त्रणपद्धतिः १२५२.

प्रकृतयः— मित्रम्—

मित्रलाभः श्रेष्ठः १२९६.

प्रकृतयः— कोशः—

धनार्जनपालनदानविधिः १३५१. भाण्डागारेषु हिरण्यस्य निक्षेप एव; अन्यायेन कोशवृद्धिर्निषिद्धा; निधिलाभे नष्टापहृतलाभे च व्यवस्था १३५२. द्यूतस्य करांशग्रहणम्; व्यवस्थापितपण्यार्घे करांशः, राज्ञा प्रतिषिद्धं राजयोग्यं च राजगामि १३५५.

प्रकृतयः— राष्ट्रम्—

प्रजारक्षणे धर्मषड्भागहरो राजा १४११. कण्टकेभ्यः प्रजारक्षणविधिः, अरक्षणे अर्धपापभाक् राजा, अधिकृतेषु साधूनां रक्षणमसाधूनां निग्रहश्च राजकर्तव्यम् १४१२. राष्ट्रकर्षनात् राजनाशः १४१४.

प्रकृतयः— दुर्गम्—

जनकोशात्मगुप्त्यर्थं राज्ञाऽऽवसनीये सुखोपजीव्ये देशे दुर्गनिर्माणम् १४५८.

पुरोहितः—

गुणसंपन्नः ज्योतिःशास्त्रवित् दण्डनीतिकुशलः अथर्ववेदपारगः पुरोहितो राज्ञा वरणीयः १६२४.

ऋत्विजः—

ऋत्विजां वरणं कर्तव्यानि च १६३२.

ज्योतिर्वित् मान्त्रिकः वैद्यश्च—

प्रतिदिनं ज्योतिर्विद्वैद्ययोः दर्शनम् १६३५.

प्रणिधिः—

चाराणां दर्शनम्, तेषां गूढभाषितश्रवणम्, तेषां परीक्षणीयानि स्थानानि १६५३. चारद्वारा निश्चितानां साधूनां असाधूनां च यथायथं संमानः घातश्च कर्तव्यः १६५४.

दूतः—

दूतप्रेषणम् १६७५.

स्वाम्यनुजीविवृत्तम्—

अनुजीविषु पितृवद्वृत्तं राज्ञः १७११.

मन्त्रः—

मन्त्राधिकारिणः, मन्त्रविषयो राज्यं राजमण्डलं च, मन्त्रगूहनमत्यन्तमिष्टम् १७७८.

व्यवहारदर्शनम्—

दण्ड्यदण्डनप्रयोजनकं व्यवहारदर्शनं सभ्यसहकृतस्य राज्ञः कर्तव्यम्; व्यवहारदर्शने प्रमाणं धर्मशास्त्रानुसारी क्रोधादिदोषरहितो राजा १८१८. सभ्यलक्षणानि १८२०. राजनियुक्तः ससभ्यो ब्राह्मणो व्यवहारदर्शनाधिकारी १८२१.

राजमण्डलविचारः—

मण्डले उपायप्रयोगविवेकः १८५६.

## नारदः

प्रकृतयः— स्वामी—

स्वातन्त्र्यं स्वामिलक्षणम् ११८१.

## बृहस्पतिः



## बार्हस्पत्यसूत्रम्



## वृद्धबृहस्पतिः



## कात्यायनः

## व्यासः



## उशना



## औशनसधनुर्वेदः



## यमः



## व्याघ्रः



## पराशरः



## बृहत्पराशरः

प्रकृतिव्यसनानि—

व्यसनसप्तकनिषेधः, अर्थदूषणविवरणम्, स्त्रीमद्यादीनां युक्त्या सेवनमनुमतम् १५७७.

ज्योतिर्वित् मान्त्रिकः वैद्यश्च—

वैद्यस्य गुणाः अनुसरणं च १६३५.

प्रणिधिः—

चारचक्षुः राजा, चारगुणाः, वणिगादयः चाराः परस्पराज्ञाताः प्रमाणम्, चारपरीक्षणीया विषयाः १६५५.

दूतः—

दूतगुणाः १६७६.

स्वाम्यनुजीविवृत्तम्—

उत्तममध्यमाधमकर्मसु उत्तममध्यमाधमभृत्यनियोजनम्, गुणानुरूपं वेतनविधानम्; परीक्षितानां विविधभृत्यानां गुणानुसारेण विविधकर्मसु सवेतनं नियोजनम् १७११. अनुजीविनां कर्तव्याकर्तव्यानि १७१२. रक्तविरक्तराजविवेकः त्याज्यात्याज्यानुजीविविवेकश्च १७१४. भृत्यैः सह परिहासो वर्ज्यः १७१५.

मन्त्रः—

मन्त्रप्रयोजनम्, मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम् १७८०.

व्यवहारदर्शनम्—

व्यवहारदर्शनाधिकारी ब्राह्मणः, सभ्यनियुक्तिः १८२६.

लेख्यम्—

लेखकलक्षणानि १८३७.

राजमण्डलविचारः—

बाह्याः त्रिविधाः शत्रवः त्रीणि च मित्राणि १८५७.

## हरिवंशः

प्रकृतयः— स्वामी—

सूतमागधकृतं पृथुराजगुणवर्णनम् ११८१.

## स्कन्दपुराणम्

प्रकृतयः— प्रकृतिप्रकाराः—

सप्त प्रकृतयः ११६९.

## विष्णुधर्मोत्तरपुराणम्

प्रकृतयः— प्रकृतिप्रकाराः—

सप्त प्रकृतयः ११६९.

प्रकृतयः— स्वामी—

राष्ट्रप्रवरैर्वरणीयस्वामिलक्षणानि ११८२.

प्रकृतयः— अमात्याः—

आस्तिकामात्यवरणमेव राज्ञः श्रेयस्करम् १२२९.

प्रकृतयः— मन्त्रिणः—

मन्त्रिगुणसंपत्, मन्त्रिणः कार्याकार्यविवेकः १२५५.

प्रकृतयः— कोशः—

अर्थप्रयोजनम्, धर्मेण कृत एव कोशो राज्यतरोर्मूलम् १३५९. प्राप्तनिधिव्यवस्था प्रनष्टस्वामिकधनव्यवस्था च; वणिजः सकाशात् शुल्कादानविधिः १३६०. नौकाशुल्कग्रहणविधिः; धान्यपशुहिरण्यगन्धौषधिरसपुष्पमूलफलवैदलभाण्डादिषु करपरिमाणम्; शिल्पिकर्मकराणां प्रतिमासं ऐकाह्निकं कर्म करः; आत्मीयपरकीययोर्मूलस्यानुच्छेदेन वाणिज्यधान्यपशुहिरण्यादिषु करप्रकल्पनम्; स्वदेशविदेशपण्यशुल्कव्यवस्था १३६१. अकरा जनाः १३६२.

प्रकृतयः— राष्ट्रम्—

राज्ञा अधिष्ठेयं राष्ट्रं राष्ट्रसंग्रहविधिश्च १४१७.

प्रकृतयः— दुर्गम्—

षडन्यतमदुर्गरूपा राजधानी आस्थापनीया १४७४.

प्रकृतयः— बलम्—

धनुषः शरस्य च निर्माणविधिः १५१०. खड्गनिर्माणविधिः १५११. अश्वार्जनम् १५१२. कुञ्जरार्जनम्; सैनिकार्जनम्, सैनिकगुणाः, देशभेदेन सैनिकलक्षणानि; चतुरङ्गसेनाकर्माणि १५१३. धनुर्वेदे प्रोक्तानि पञ्चविधानि शस्त्रास्त्राणि; धनुर्वेदाध्यापकविवेकः १५१४. धनुर्धारिणः स्थितिभेदाः, सशरधनुर्धारणविधिः विविधलक्ष्यवेधविधिश्च १५१५. वाहाश्रितस्य आयुधधारणक्षेपणविधिः, पाशासियष्टिदण्डशूलतोमरक्षेपणीकृपाणीपट्टिशमुद्गरवज्रगदापरश्वादिशस्त्रकर्माणि, नियुद्धकर्म १५१९.

## देवीपुराणम्



## कालिकापुराणम्

## कामन्दकीयनीतिसारः

भृत्यैः आजीव्यः निराजीव्यश्च राजा १७३१. भृत्यानां वेतनकल्पनं राजकर्तव्यम् १७३२. विविधेषु कर्मसु परीक्षितभृत्यनियोजनम् १७३४. राज्ञः पण्योपजीविविषयं कर्तव्यम् १७३६. सस्यरक्षणं राजकर्तव्यम्; पञ्चविधं प्रजानां भयं निवार्यं राज्ञा; अग्नाविव राज्ञि भृत्यवर्तनमिष्टम् १७३७. अनुजीविषु विश्वासाविश्वासविवेकः १७३८. स्वाम्यनुजीविवृत्तफलम् १७३९.

मन्त्रः—

मन्त्रप्रयोजनम्, मन्त्राधिकारिणो मन्त्रानधिकारिणश्च, मन्त्रविधिः, मन्त्रमहिमा १७८२. उपायानुपायशक्याशक्यादिविचारो मन्त्रणम् १७८५. मन्त्रगूहनमत्यन्तमिष्टम्; पञ्चाङ्गो मन्त्रः १७९१. मन्त्ररक्षणम्, मन्त्रभेदकारणानि १७९४. मन्त्रार्हानर्हदेशकालादयः १७९५. मन्त्रणविधिः; समस्तैर्व्यस्तैश्च मन्त्रिभिर्मन्त्रणम्; मन्त्रनिर्णयोत्तरं कार्यकालानतिक्रम एव इष्टः १७९६. मन्त्रानुसरणविधिः १७९७.

व्यवहारदर्शनम्—

व्यवहारदर्शनविधिः १८२६.

राजमण्डलविचारः—

विजिगीषया मण्डलचिन्तनं राज्ञा कर्तव्यम् १८५९. सप्तप्रकृतिकं राज्यम्; विजिगीषुलक्षणम्, विजिगीषुगुणाः १८६०. शत्रुलक्षणम्, दारुणसुखोच्छेद्यशत्रुलक्षणानि; विजिगीषोर्मण्डले अरिमित्रादयः पुरस्तात् पार्ष्णिग्राहादयश्च पश्चात् राजानः १८६२. विजिगीषोर्मण्डले मध्यमोदासीनौ राजानौ १८६३. मण्डलस्वरूपे पूर्वाचार्याणां मतानि १८६४. पार्ष्णिग्राहादीनां शत्रुत्वमित्रत्वविवेकः; शत्रुमण्डले षाड्गुण्यप्रयोगस्वरूपम् १८६९. मध्यमोदासीनौ प्रति वृत्तिः १८७१. शत्रौ चतुर्विधा वृत्तिः तत्रापवादाश्च १८७२. उपायचतुष्टयप्रयोगविवेकः १८७४.

## शुक्रनीतिः

प्रकृतयः— प्रकृतिप्रकाराः—

सप्ताङ्गराज्यस्य पुरुषरूपकम् ११७०.

प्रकृतयः— स्वामी—

स्वामिनः सप्त गुणाः ११८८. स्वामी द्विविधः देवतांशकः रक्षोंशश्च; गुणाः पूज्यन्ते स्वामिनः, न कुलम्; मन्त्रिभिः स्वच्छन्दस्वामिनियमनं दुर्घटम् ११८९. बहूनामैकमत्यं तु नृपतिबलात् बलवत्तरम् ११९०.

प्रकृतयः— मन्त्रिणः—

बहुमन्त्रिसंमतं स्वीकार्यम्, मन्त्रिप्रयोजनम् १२६३. राज्ञः पुरोधःप्रतिनिधिप्रधानसचिवमन्त्रिप्राड्विवाकपण्डितसुमन्त्रामात्यदूताः दश पुरोधोदूतवर्जिता अष्टौ वा प्रकृतयः, तेषां लक्षणानि कर्तव्यानि च १२६५.

प्रकृतयः— मित्रम्—

मित्रगुणसंपत्, मित्रद्वैविध्यम्, मित्रता अस्थिरा, सहजमित्रलक्षणानि १३००.

प्रकृतयः— कोशः—

सदासंचयवान् कोशः कार्यः; कोशस्य विषयभेदेन व्ययव्यवस्था; कोशप्रयोजनानि १३६५. अपात्रात् अधार्मिकनृपतिकपरराष्ट्राद्वा धनहरणमनिषिद्धम्; अनापदि प्रजापीडां विनैव धनसंचयो युक्तः, अस्य आपत्कालस्तु अपवादः; स्वप्रजारक्षणक्षमः कोशः १३६६. कोशमूलकं बलम्; उत्तममध्यमाधमाः कोशवृद्ध्युपायाः; अधनमध्यमोत्तमधनाः त्रिविधाः प्रजाः त्रिविधं धनं च; वाणिज्ये क्रयविक्रयरीतिः १३६७. वैश्यधनं व्यवहारे धृतं न आहार्यम्; धान्यसंग्रहविधिः; ओषधिधातुतृणकाष्ठादिद्रव्याणां संग्रहविधिः १३६८. धनरक्षणव्ययादिविवेकः; उच्चावचानि नव रत्नानि सलक्षणानि तेषां परीक्षा च १३६९. सप्तधातुपरीक्षा १३७३. गवादिपशूनां मूल्यनिश्चयः १३७४. पण्ये शुल्कग्रहणविधिः; फलानुसारेण कृषिभूमिकरतारतम्यनिश्चयः १३७५. स्वर्णादिखनिजकरग्रहणविधिः; वनजन्येषु तृणकाष्ठादिषु गोमहिष्यश्वादिषु कारुशिल्पिषु जलाशयनिर्मातृषु नवभूमिकर्षकेषु च करग्रहणविवेकः १३७६. करहरणे कालविलम्बो निषिद्धः, कर्षकाय भागपत्रदानं ग्रामपनियोजनं

मन्त्रः—

मन्त्रणा मन्त्रिभिः सहैव, मन्त्रदेशकालादयः, मन्त्राधिकारिणः मन्त्रानधिकारिणश्च, बहुसंमतो मन्त्रोऽनुष्ठेयः १७९८. मन्त्रणविषयाः १७९९.

व्यवहारदर्शनम् —

प्राड्विवाकलक्षणम्; व्यवहारदर्शनाङ्गानि साक्षिलेख्यभोगादीनि मानुषदिव्यानि प्रत्यक्षानुमानादीनि च, व्यवहारनिर्णयः प्राड्विवाकेन राज्ञे निवेदनीयः, सर्वजातीयाः सभ्या नियोज्याः १८२६. रहसि व्यवहारदर्शनस्य निषेधः; शास्त्रसभ्यनिरपेक्षदर्शने दोषः १८२७. व्यवहारनिर्णये नियोज्यब्राह्मणादिवर्णविवेकः, सभ्यलक्षणानि, सभ्यसंख्या १८२८.

लेख्यम् —

लेखकलक्षणानि १८३७. नृपलेखानुसारेणैव भृत्यैः कार्यं निर्वर्तनीयम्; उत्तमोत्तमोत्तममध्यमाधमभेदाः लेख्यस्य; राज्ञे निवेद्यं वृत्तलेख्यम्; राजादिकृतलेख्यस्य प्रतिलिपिः स्मृतिपत्रकम्; वृत्तलेख्यमायव्ययलेख्यं चेति द्विविधं लेख्यम् १८३८. वृत्तलेख्यप्रकाराः १८३९. आयव्ययलेख्यविवरणम् १८४०. लेखनपद्धतिः; राजमन्त्रिप्राड्विवाकपण्डितदूतामात्यसुमन्त्रप्रधानप्रतिनिधियुवराजानां लेख्ये स्वाक्षराङ्कनादिरीतिः १८४४. आयव्ययलेख्यरीतिः १८४५. मानलक्षणम् १८४६. गणकलेखकनियोजनम्; राजकीयं लौकिकं चेति द्विविधं लिखितं सविवरणम् १८४७.

राजमण्डलविचारः—

मित्रशत्रुविवेकः १८७८.

## योगयात्रा

प्रकृतयः— स्वामी—

स्वामिगुणाः ११९०.

प्रकृतयः— मन्त्रिणः—

मन्त्रिवचनं राज्ञा ग्राह्यम् १२७०.

प्रकृतयः— कोशः—

कोशप्रयोजनम् १३७८.

प्रकृतयः— राष्ट्रम् —

राष्ट्ररक्षणविधिः १४३४.

प्रकृतयः— दुर्गम्—

दुर्गसंपत् १४९०.

प्रकृतयः— बलम् —

मुहूर्ताद्यपेक्षया प्रधानो बलकोशादिः राज्ञो विजयहेतुः १५३५. गजमहिमा; खड्गलक्षणानि खड्गप्रयोजनं च; खड्गव्रणानां ज्ञानं फलानि च १५३६. शस्त्राणां पानसंस्कारः; सैनिकसुलक्षणानि १५३७.

प्रकृतिव्यसनानि—

कामजानि क्रोधजानि च व्यसनानि, तेषां निषेधः, स्त्रीमद्यादीनां युक्त्या सेवनमनुमतम् १६०७.

पुरोहितः—

ब्राह्मणेन पुरोहितेन शान्तिकर्माणि कर्तव्यानि १६२७.

ज्योतिर्वित् मान्त्रिकः वैद्यश्च—

ज्योतिर्विदः प्रयोजनम् १६३८.

व्यवहारदर्शनम्—

व्यवहारदर्शने राज्ञोऽवस्थानम् १८२९.

## नीतिवाक्यामृतम्

प्रकृतयः— स्वामी—

स्वामिपदार्थः; राजपदार्थः; स्वामिलक्षणानि स्वामिदोषाश्च ११९०. प्रकृतिविषये राज्ञा पालनीया निषेधाः ११९६. स्वामिलक्षणानि; स्वामी मूलं प्रकृतीनाम् ११९७. स्वामिदोषाः ११९८. उत्साहगुणाः स्वामिनः; स्वामिदोषाः; राजाज्ञा श्रेष्ठा ११९९. प्रजाकार्यं स्वामिना स्वयं द्रष्टव्यम् १२००. स्वामिनो दुर्दर्शत्वं दोषः; राजपुरुषाः स्वामिव्यसनजीविनः; लञ्चग्रहणदोषाः १२०१. स्वामिकर्तव्यं न्यायतः परिपालनम् १२०२. स्वामी विश्वकुटुम्बी; केचित् संकीर्णाः राजधर्माः १२०३. लोकव्यवहारज्ञानं विद्याप्रयोजनम्; प्रज्ञाप्रयोजनं परप्रतिबोधनम् १२०४.

प्रकृतयः— अमात्याः—

अमात्यवरणं राजकर्तव्यम्, अमात्यलक्षणानि, अमात्यकर्तव्यानि, अमात्यपरीक्षा, वर्ज्या अमात्याः १२३१.

## युक्तिकल्पतरुः

प्रकृतयः— मन्त्रिणः—

मन्त्रिगुणसंपत् १२७९.

प्रकृतयः— कोशः—

कोशप्रयोजनम् १३८१.

प्रकृतयः— राष्ट्रम्—

राष्ट्राभिवृद्धिविधिः १४३८.

प्रकृतयः— दुर्गम्—

दुर्गः एव द्वंद्वं द्वंद्वद्वैविध्यं द्वंद्वसंपच्च १४९२. आस्थाप्या राजधानी १४९३.

प्रकृतयः— बलम्—

विविधबलगुणतारतम्यम्; अस्त्रप्रकाराः १५४२.

पुरोहितः—

पुरोहितगुणाः १६३१.

ज्योतिर्वित् मान्त्रिकः वैद्यश्च—

ज्योतिर्विद्गुणाः १६३८.

प्रणिधिः—

स्वराष्ट्रे परराष्ट्रे च चाराणां नियोजनं प्रयोजनं च, चारगुणाः, अनेकचारमतं प्रमाणम्, प्रकाशः अप्रकाशश्च द्विविधश्चारः १६६५.

दूतः—

दूतगुणाः, त्रिविधो दूतः, दूतकर्माणि, दूता अदण्ड्या अवध्याश्च १६८६.

मन्त्रः—

मन्त्रप्रयोजनम्, मन्त्रणाविषयाः, मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रार्हानर्हदेशकालादयः १८०४.

## मानसोल्लासः

प्रकृतयः— स्वामी—

स्वामिनः प्राप्तराज्यस्थिरीभावकारणानि; स्वामी त्रिविधः आत्मायत्तः द्वयायत्तः सचिवायत्तश्च; प्रभुशक्तिः उत्साहशक्तिश्च १२०५.

प्रकृतयः— मन्त्रिणः—

सचिवानां नीतिशास्त्रज्ञानजनसंमतत्वादिः गुणसंपत्, अमार्गगामिनृपनिवर्तनादीनि सचिवकर्तव्यानि, सचिवानां परीक्षा सचिवसंख्या च १२७९.

प्रकृतयः— मित्रम्—

कुलीनत्वादिगुणसंपन्नं मित्रं वरणीयम् १३०२.

प्रकृतयः— कोशः—

द्रव्यभेदेन करांशभेदः; रत्नखनिरक्षणम्, निधिलाभः, संपदर्थे सामुद्रस्थानरक्षा; धातुभिः कोशवर्धनम् १३८२. कोशे रत्नसंचयः; कोशवृद्धिरीतिः; कोशद्रव्यविभागाः १३८३.

प्रकृतयः— राष्ट्रम्—

राज्ञा अधिष्ठेयं राष्ट्रम्, राष्ट्राभिवृद्धिविधिः राष्ट्रसंग्रहविधिश्च १४३८.

प्रकृतयः— दुर्गम्—

नव दुर्गप्रकाराः १४९७.

प्रकृतयः— बलम्—

षड्विधबलगुणानां तारतम्यम्; सैनिकवेतनम्; सैनिकदर्शनम् १५४२. अश्वहस्तिपोषणम्; चतुरङ्गं बलम् १५४३.

पुरोहितः—

राज्ञा वरणीयः त्रैविद्यः अथर्ववेदवित् पुरोहितः १६३१.

ज्योतिर्वित् मान्त्रिकः वैद्यश्च—

ज्योतिर्विद्वैद्यगुणाः १६३९.

स्वाम्यनुजीविवृत्तम्—

भृत्यप्रकाराः, भृत्यरक्षणादि राजकर्तव्यम् १७६०.

मन्त्रः—

पञ्चाङ्गो मन्त्रः, युक्तमन्त्रलक्षणानि, मन्त्रगूहनमत्यन्तमिष्टम्; मन्त्रार्हानर्हदेशकालादयः, मन्त्रणाविषयाः, व्यस्तैर्मन्त्रिभिर्मन्त्रणमिष्टम्, मन्त्रनिर्णयविधिः १८०५.

व्यवहारदर्शनम्—

व्यवहारदर्शनाधिकारः, सम्यग्दण्डप्रणयनम्; नियोज्यसभ्यलक्षणानि १८२९. प्राड्विवाकलक्षणानि, प्राड्विवाकनियुक्तौ वर्णविवेकः १८३०.

## अनिर्दिष्टकर्तृकवचनानि

प्रकृतयः— मन्त्रिणः—

नियोज्या अनियोज्याश्च मन्त्रिणः १२८०.

# शुद्धिपत्रम्

—o—

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ११६९ | २ | १० | ऽऽमसा | ऽऽत्मसा |
| ११७० | १ | १३ | प्यङ्क्न | प्यङ्क्तेन |
| ११७३ | २ | ३१ | दुर्बि | दुर्वि |
| ११७५ | ,, | १२ | मुक | भुक् |
| ११७७ | ,, | १६ | शील- | शीलै- |
| ११७८ | १ | २५ | दाढयम् | दार्ढ्यम् |
| ११८७ | ,, | ५ | नेत्यथः | नेत्यर्थः |
| ११९० | ,, | १२ | बलवत्तरम | बलवत्तरम् |
| ११९१ | ,, | २५ | माप | नाप |
| ११९३ | ,, | १३ | षुरुषाः | पुरुषाः |
| ११९६ | ,, | ३२ | समद्धिः | समृद्धिः |
| १२०६ | ,, | ३० | श्लोकाः. | श्लोकाः, नारद-हारीतौ. |
| ,, | २ | २४ | र्धकौ | र्थकौ |
| १२११ | ,, | ३ | चच्छ | चेच्छ |
| १२१२ | १ | ७ | आशि | आशी |
| १२२८ | ,, | ३३ | श्लोकाः. | श्लोकाः, नारद-हारीतौ |
| ,, | २ | २ | वरणं | वरणं |
| १२४३ | ,, | ८ | द्वर्षे | द्वर्षे |
| १२४० | १ | २३ | ब्रुयु | ब्रूयु |
| ,, | ,, | २९ | मन्त्रिणां | मन्त्रिणां |
| १२५५ | ,, | २१ | आश्व. | आश्वस्मृ. |
| ,, | ,, | २२ | आश्व. | आश्वस्मृ. |
| १२५६ | २ | २५ | गुसंण | गुणसं |
| १२५७ | १ | १५ | याथा | यथा |
| ,, | ,, | २२ | स्तस्मा | तस्मा |
| १२६४ | ,, | ११ | वभैव | वैभव |
| १२६५ | ,, | २९ | मृतौद | भृतौद |
| १२६९ | ,, | ९ | बलैः | बलैः |
| १२७५ | २ | ,, | पनीनां | पतीनां |
| १२७८ | ,, | २९ | टोघिऽका | टोऽधिका |
| १२८५ | १ | ४ | द्यपु | द्य पु |
| ,, | ,, | २८ | णं घ | णत्वध |
| १२९८ | ,, | १४ | कुछ्रे | कृच्छ्रे |
| १३०१ | २ | १७ | संबन्थः | संबन्धः |
| १३०३ | ,, | ४ | हिंग्वादि | हिङ्ग्वादि |
| १३०४ | १ | ११ | गम्येऽथैं | गम्येऽर्थे |
| ,, | २ | १ | वर्धयेत् | वर्धयेत्। |
| १३०७ | १ | २८ | हासं. | हास्मृ. |
| १३२१ | २ | २१ | याश्चि | यश्चि |
| १३३१ | १ | १२ | पाचे | याचे |
| १३३४ | २ | २५ | चास. | चासू. |
| १३३५ | १ | २६ | पुरुर्षा | पुरुषा |
| १३६१ | २ | ५ | च्छेद्न | च्छेदेन |
| १३७५ | ,, | २४ | च्छुत्कं | च्छुल्कं |
| १३८३ | ,, | ९ तः उपरि | ...... | कोशवृद्धि-व्ययरीतिः |
| १३९१ | १ | १० | स्वाथ्य | स्वास्थ्य |
| १३९३ | २ | ६ | भमिः | भूमिः |
| ,, | ,, | ७ | सूत्राथः | सूत्रार्थः |
| १३९९ | ,, | २२ | संपन्नं | संपन्न |
| १४२६ | ,, | ३१ | नविंश | नविंश |
| १४४१ | १ | १२ | महि | मही |
| ,, | ,, | १६ | नीया | नीयाः |
| १४४४ | २ | २७ | रतैति | तैरति |
| १४४८ | ,, | ३० | चद्रशा | चन्द्रशा |
| १४५८ | १ | २३ | दुग | दुर्गे |
| १४६० | ,, | ६ तः उपरि | ...... | दुर्गाः कर्तव्याः |
| १४७४ | ,, | ७ | अब्दुर्गे | अब्दुर्गे |
| १४७६ | ,, | ८ | कादिनां | कादीनां |
| १४८५ | २ | ३० | छाद | च्छाद |
| १४९० | ,, | ६ तः उपरि | ...... | दुर्गसंपत् |
| १४९२ | ,, | २१ | जलंस | जलं स |
| १४९५ | ,, | ६ | महि | मही |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १४९७ | २ | १५ | लभम् | लंभम् |
| ,, | ,, | ३२ | यान्नपः | यान्नृपः |
| १५२३ | ,, | १८ | ध्रवम् | ध्रुवम् |
| १५४२ | ,, | १० | शाररदैः | शारदैः |
| १५४३ | ,, | २४ तः उपरि | ··· ··· | बलप्रकाराः |
| १५४९ | ,, | ३३ | आमात्या | अमात्या |
| १५५३ | ,, | ८ | दडस्य | दण्डस्य |
| १५५९ | १ | २६ | यायाम | यायाम् |
| १५७९ | ,, | १७ | अंल्यंस | अल्यस |
| ,, | २ | ५ | उत्हाह | उत्साह |
| १५८१ | ,, | १० | आमात्ये | अमात्ये |
| १६०२ | १ | १९ | द्यते | द्यूते |
| १६११ | २ | २८ | मगया | मृगया |
| १६१७ | १ | २२ | थवणो | थर्वणो |
| ,, | ,, | २३ | मङ्गालं | मङ्गल |
| १६२४ | ,, | ५ | रोहि | पुरोहि |
| १६२५ | २ | ३ | कतव्य | कर्तव्य |
| १६२८ | १ | २५ | हितन | हितेन |
| १६३३ | ,, | ११ | स्मति | स्मृति |
| १६३४ | ,, | ३ | दवो | दैवो |
| ,, | ,, | २३ | ,, | ,, |
| १६४१ | शीर्षके | | ज्योतिर्वित् मान्त्रिकः वैद्यश्च | प्रणिधिः |
| १६४३ | ,, | | ,, | ,, |
| १६४५ | ,, | | ,, | ,, |
| १६४९ | ,, | | ,, | ,, |
| १६५६ | २ | १३ | श्लोकः | श्लोकैः |
| १६६७ | ,, | २६ | वाक्य | वाक्यं |
| १६८० | ,, | ९ | वरण | वरणं |
| १६८३ | १ | १० | नीति | नीति- |
| १७०९ | ,, | १७ | पूवग | पूर्वग |
| ,, | २ | २४ | मुर्खे | मूर्खे |
| १७१६ | १ | १८ | कमाणि | कर्माणि |
| १७१७ | ,, | ६ | यकिंचि | यत्किंचि |
| १७१८ | ,, | २१ | स्थान | स्थानं |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १७२३ | १ | २८ | ब्रयात् | ब्रूयात् |
| १७२४ | २ | ३ | किर्तं | कीर्तं |
| १७२७ | ,, | २८ | थित | थितं |
| १७३१ | ,, | १४ | भृत्यः | भृत्यैः |
| १७३७ | १ | १ | कतव्य | कर्तव्य |
| १७४८ | ,, | १३ | भर्ति | मूर्ति |
| १७४९ | २ | १ | विवकः | विवेकः |
| १७५२ | १ | ९ | भतकः | भृतकः |
| ,, | २ | २४ | मानैवि | मानैर्वि |
| १७५३ | ,, | १२ | भेदन | भेदेन |
| १७५५ | ,, | १३ | भतिः | भृतिः |
| १७५६ | १ | २९ | वेंऽपि | वेऽपि |
| १७५९ | ,, | २७ | महस | मसह |
| १७६३ | २ | १८ | कुता | कृता |
| १७६४ | १ | १४ | नेत्रकत्र | नेत्रवक्त्र |
| १७६६ | २ | ७ | नूषुर | नूपुर |
| १७६८ | ,, | ४ | विपरि | विपरी |
| ,, | ,, | १६ | तसंख्या | तत्संख्या |
| १७७५ | १ | २० | निदश | निर्देश |
| १७८४ | २ | १ | विध– | विधा– |
| १७८५ | ,, | १३ | सरज्ञ | रसज्ञ |
| १७९१ | १ | २३ | किया | क्रिया |
| १७९५ | २ | २० | प्रासदा | प्रासादा |
| १८०० | १ | १५ | तसिद्धय | तत्सिद्धय |
| १८०९ | ,, | ८ | तम्यन | तम्येन |
| १८१४ | २ | ३ | भत | भूत |
| १८२० | ,, | ३० | शर्कारो | शकर्तारो |
| १८२५ | ,, | २९ | १।४५ | ४५ |
| १८२६ | १ | ७ | दशन | दर्शने |
| १८२७ | ,, | २९ | विकेन | विवेकेन |
| १८२९ | २ | २८ | मौलर्लो | मौलैर्लो |
| १८३८ | १ | १७ | भत्यः | भृत्यः |
| १८५६ | २ | ९ | विवकः | विवेकः |
| १८५९ | ,, | १३ | कतव्यम् | कर्तव्यम् |
| १८७१ | १ | १४ | संर्वज | सर्वज |
| १८८२ | २ | १ | विक्त | विरक्त |

# धर्मकोशः
## राजनीतिकाण्डम्

### प्रकृतयः

### प्रकृतिप्रकाराः

#### विष्णुः

सप्त प्रकृतयः, प्रकृतिदूषका हन्तव्याः

[1]स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः ॥

एतत् सप्ताङ्गकं राज्यमुच्यते । *सुहृत् पुरोहितः । दण्डः सेना । रार. ७१

[2]तद्दूषकांश्च हन्यात् ॥

#### महाभारतम्

प्रकृतिसप्तकात्मकं राज्यम्, राजकर्तव्यं प्रकृतिरक्षणम्

¶[3]कच्चित्प्रकृतयः षट् ते न लुप्ता भरतर्षभ ।
आढ्यास्तथाऽव्यसनिनः स्वनुरक्ताश्च सर्वशः ॥

[4]राज्ञा सप्तैव रक्ष्याणि तानि चापि निबोध मे ।
आत्माऽमात्यश्च कोशश्च दण्डो मित्राणि चैव हि ॥

[1]तथा जनपदश्चैव पुरं च कुरुनन्दन ।
एतत्सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥

* 'सुहृत् पुरोहितः' इति व्याख्यानं न युक्तमाभाति ।

¶ एतस्य श्लोकस्य व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ५४३) द्रष्टव्यम्।

(१) विस्मृ. ३।३३; रार. ७१ अर्थानुवादः, मनुविष्णू.

(२) विस्मृ. ३।३४.

(३) भा. २।५।१२; भामु. २।५।२३ षट् ते (सप्त).

(४) भा. १२।६९।६२; भामु. १२।६९।६४ चापि (चैव) मात्यश्च कोशश्च (मात्याश्च कोशाश्च).

#### कौटिलीयमर्थशास्त्रम्

सप्त प्रकृतयः

[2]स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतयः ॥

प्रकृतीराह-- स्वाम्यमात्येत्यादि । स्वाम्यादयः सप्त । तत्र स्वामी अमात्यादीनां पञ्चानां द्रव्यप्रकृतीनामधिपतिः । स द्विधा-- राजा युवराजश्चेति । अमात्याः बुद्धिसहायाः, ते च त्रयश्चत्वारो द्वादश षोडश विंशतिरित्युक्ता मन्त्राधिकारे । जनपदो ग्रामादिभेदेनाष्टविधः । दुर्गं 'अन्तर्द्वीपम्' (कौ. २।३) इत्यादिना विभक्तम् । कोशो रत्नसारफल्गुकुप्यभेदाच्चतुर्विधः । दण्डश्चतुर्विधो रथगजतुरगपदातिभेदात् । मित्रं सहजकृत्रिमप्राकृतभेदेन त्रिप्रकारम् । सप्तैतानि अन्योन्यसहकारीणि त्रिविष्टब्धकवदन्योन्याश्रयाणि परस्परं प्रकृष्टमुपकुर्वन्तीत्यतः प्रकृतय इत्याख्यायन्ते । श्रीमूला.

(१) भा. १२।६९।६३; भामु. १२।६९।६५ पद (पदा).

(२) कौ. ६।१.

## मनुः

राज्यं सप्ताङ्गम्

¹स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥

( १ ) समाप्तायां कण्टकशुद्धौ केवलं राज्यतन्त्रोपयोगी राजधर्म उच्यते । यथैतस्मिन्ननुष्ठीयमाने राज्यानाशः एवं व्यवहारदर्शने कण्टकशुद्धौ वा क्रियमाणायां तुल्यो राज्यानाशः । किंच, महिषीकुमारराजवल्लभसेनाध्यक्षाश्रिताः प्रायेण भवन्ति कण्टकाः । तान् कदाचिदनया बुद्ध्या नोद्धरेत्– 'प्रकृतिक्षोभशङ्कायां महत्तमं प्रयोजनं सेनाध्यक्षेण सामन्तेन च । किमनेन निगृहीतेन राष्ट्रापराधिना ?', तदर्थमुच्यते– तुल्यं राष्ट्रं स्वाम्यादिनेति राज्यप्रकृतित्वेन । गुरुलघुभावश्च प्रकृतीनामेवमर्थमुच्यते– यदि महान् क्षोभोऽमात्यात् (इति राज्यप्रकृतित्वेन ?) तत् परिहर्तव्यम्, राष्ट्रं ततो दुर्बलं केनचिदुपायेन वा बोधयित्वा कण्टकशुद्धिं करिष्यामीति न सहसा प्रवर्तितव्यम् । अतः सप्तमाध्यायोपदेशतोऽप्युत्कृष्यास्मिन्नवधा बुध्यते ( ? नेवाध्याये उच्यते ) । स्वामी राजैव । अमात्यः मन्त्री पुरोहितः सेनानी । पुरं निवासनगरम् । राष्ट्रं जनपदाः । कोशः रूप्यसुवर्णरूपकादिधनसंचयः । हस्त्यश्वरथपादातं दण्डः, चर्मदण्डादि वा । सुहृत् समानकार्यः । यथोक्तम्– 'मित्रं तस्मादनन्तरम्' ( मस्मृ. ७।१५८ ) इति । एता राज्यस्य प्रकृतयः कारणं अवयवाः, यथा घटस्य कपालानि । स्वभाववचनो वा प्रकृतिशब्दः । एवं तदात्मकमेव राज्यं समस्तं क्षिप्तम्, अस्यैव भेदविस्तारो द्वासप्ततिस्तत्रापि योऽन्यो भेदः स उक्त एव । मेधा.

( २ ) पुरं दुर्गीभूतमात्मनः शिबिरम् । राष्ट्रं जानपदो जनः । दण्डः दण्डप्रणयनजं तेजः । ( सुहृत् ) सन्मित्रम् । प्रकृतयः, अवयवतया तत्समुदायरूपस्य राज्यस्योत्पादनात् । इति समस्तं मिलितमवयविस्थानीयं राज्यमुच्यते । * मवि.

( ३ ) मित्रं त्रिविधं सप्तमाध्यायोक्तम् । ¶ ममु.

( ४ ) सुहृत् पुरोहितः । रार. ७१

( ५ ) 'प्रकृतिसंपन्नः' इत्यादौ कति प्रकृतय इत्यपेक्षां पूरयन्नाह– स्वामीति । अमात्याः प्रकृतयः । दण्डः हस्त्यश्वरथपादातमिति । अथवा वधमसाहसादि, हस्त्यादीनां राजन्यन्तर्गतत्वात्, तं विना राजत्वानुपपत्तेः । सुहृत् सप्तमाध्यायोक्तः त्रिविधः, दूतो वा । * मच.

( ६ ) एवं कण्टकशोधनमुक्तम् । अथ राजधर्मानुक्तशिष्टान् वक्तुमुपक्रमते — स्वाम्यमात्याविति । नन्द.

( ७ ) स्वामी 'महोत्साहः' ( यास्मृ. १।३०९ ) इत्युक्तलक्षणो महीपतिः । पुरं समृद्धं राष्ट्रम् । दुर्गं धन्वदुर्गादि । ¶ भाच.

सप्तानां पूर्वपूर्वस्य व्यसनं गुरुतरम्

$'सप्तानां प्रकृतीनां तु राज्यस्याऽऽसां यथाक्रमम् ।
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं महत् ॥

प्रकृतीनां सप्तानां अन्योन्योपकारकत्वं प्रातिस्विककार्यवैशिष्ट्यं च

²सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत् ।
अन्योन्यगुणवैशेष्यान्न किंचिदतिरिच्यते ॥

( १ ) तथा च दृष्टान्तः– सप्ताङ्गस्येति । विष्टब्धस्य त्रिदण्डवदिति । विष्टब्धस्य अन्योन्यस्याऽऽधारभावेन । एतदेवाऽऽह– अन्योन्यगुणवैशेष्यात् परस्परस्योपकार्यो-

---

( १ ) मस्मृ. ९।२९४; मेधा. सप्ताङ्गं ( समस्तं ); राक. ९७ राज्य ( राष्ट्र ); मवि. मेधावत्; रार. ७१ अर्थानुवादः, मनुविष्णू; राप्र. २७८ सप्ताङ्गं राज्य ( समस्तं राष्ट्र ); भाच. राष्ट्रं ( दुर्गं ) सप्ताङ्गं ( समस्तं ).

* शेषं मेधागतम् ।

¶ शेषं मेधागतं मविगतं च ।

$ व्याख्यासंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतिव्यसनानि' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

( १ ) मस्मृ. ९।२९५.

( २ ) मस्मृ. ९।२९६ ; राक. ९८ ङ्गस्येह ( ङ्गस्यास्य ); मवि. वैशेष्यान्न ( वैशिष्ट्यान्न ); राप्र. २७८, ३२० राकवत्.

प्रकारकभावेनैकैकस्य च विनाशोत्पत्तेः भूमिबीजोदकसामग्र्याः इव अङ्कुरजनने । तस्मात् सर्वेषां पूज्यता अत्रोच्यते । अस्त्येवात्र गुरुलघुभावः । यत्तु 'न किंचिदतिरिच्यते' इति, तत् महताऽऽदरेण मित्रादिरक्षायां वर्तितव्यमित्येवंपरमेतत् । मित्रनाशे चिरेण राज्यनाशो यदा बलवतोपरोधः, न तु तदानीमेवेत्यालम्बनं लघीयस्तायाः । * मेधा.

(२) न चैवं तत्तदुत्तरप्रकृतिव्यसने न प्रतिकर्तव्यमेव, स्वकार्ये सर्वप्राधान्यादित्याह— सप्ताङ्गस्येति । विष्टब्धस्यान्योन्याधारतया । त्रिदण्डवत् अन्योन्यावष्टम्भगृहादिदण्डत्रयवत् । अन्योन्यगुणवैशिष्ट्यात् स्वस्वगुणेन सर्वासां वैशिष्ट्यात् न किंचित् व्यसनमतिरिच्यते । अतितुच्छताजाति(?जातवि)चारानर्हत्वं न भवतीत्यर्थः । $ मवि.

(३) उक्तसप्ताङ्गवतो लोके राष्ट्रस्य त्रिदण्डवदन्योन्यसंबद्धस्य परस्परविलक्षणोपकरणान्न किंचिदङ्गमधिकं भवति । यद्यपि पूर्वश्लोके पूर्वपूर्वाङ्गस्याऽऽधिक्यमुक्तं तथाप्येषामङ्गानां मध्यादन्यस्याङ्गसंबन्धिनमुपकारमन्यदङ्गं कर्तुं न शक्नोति, तस्मादुत्तरोत्तराङ्गमप्यपेक्षणीयमित्येवंपरोऽयमाधिक्यनिषेधः । अत्र प्रसिद्धं यतित्रिदण्डमेव दृष्टान्तः । तद्धि चतुरङ्गुलगोवालवेष्टनादन्योन्यसंबद्धम् । न च तन्मध्ये त्रिदण्डधारणशास्त्रार्थे कश्चित् दण्डोऽधिको भवति । ममु.

(४) सप्त स्वाम्यादयोऽङ्गं(?ङ्गानि) परस्परसहकारि(?कारीणि) यस्य तस्य सप्ताङ्गस्य, विष्टब्धस्य विष्टम्भनरूपस्य, अन्योन्यगुणवैशेष्यात् अन्योन्येन गुणानां स्वाम्यादीनां परस्परोपकारितालक्षणगुणवैशेष्यात् राज्यं स्यात् । स्वातन्त्र्ये तु न किंचित् सिध्येत् । यद्यप्यत्र पूर्वं पूर्वं गुरुतरमित्युक्तं तथापि राज्यलक्षणकार्ये न कस्यापि प्राधान्यमिति । अत एव दृष्टान्तः— त्रिदण्डवत् । ते हि भ्रम्यादौ स्वतन्त्रा अपि घटधारणादौ न (तेषु) कस्यापि स्वातन्त्र्यमिति भावः । मच.

* भाच. मेधागतं मविगतं च ।

$ नन्द. मविगतं ममुगतं च ।

¹तेषु तेषु तु कृत्येषु तत्तदङ्गं विशिष्यते ।
येन यत्साध्यते कार्यं तत्तस्मिन् श्रेष्ठमुच्यते ॥

(१) नास्ति तद्वस्तु यद्राज्ञो नोपयुज्यते । भवति हि तत् कार्यं यन्निकृष्टेन साध्यते, न महता । तस्मात् सर्वाः प्रकृतयो यत्नतः पालनीयाः, असद्दण्डादिना न राष्ट्रं कर्शनीयम्, चौराद्युपद्रवेभ्यश्च यत्नतो रक्ष्यमिति तात्पर्यार्थः । अतः कण्टकशुद्धिशेषोऽयम् । मेधा.

(२) तदेवाऽऽह— तेषु तेष्विति । तत्तन्मात्रसंपाद्येष्वित्यर्थः । येन यदिति पूर्वार्धार्थस्यैव स्फुटार्थप्रपञ्चनम् । मवि.

(३) यस्मात् तेषु तेषु संपाद्येषु कार्येषु तत्तदङ्गस्यातिशयो भवति, तत्कार्यमन्येन कर्तुमशक्तेः । एवं च येनाङ्गेन यत्कार्यं संपाद्यते तस्मिन् कार्ये तदेव प्रधानमुच्यते । ततश्चान्योन्यगुणविशेषादि यदुक्तं तदेवानेन स्फुटीकृतम् । * ममु.

(४) तत्रैव क्षितिसलिलबीजन्यायमाह— तेष्विति । कृत्येषु साध्येषु । विशिष्यते, प्रधानतयेति शेषः । साधनायत्तत्वात् साध्यस्य । तद्यथा— अङ्कुरस्य बीजावयवस्तु उपादानम्, एवं राजा सर्वत्र प्रधानम् । यथा क्षितिरङ्कुरधारणे, एवं पुरम् । सलिलं यथा तदुच्छूनतायाम्, एवं दण्डो रक्षाहेतुः । यथा पवनः परिणामहेतुतया वृद्धेर्हेतुः, एवं कोशः । यथा तत्र तेजः परिपाकहेतुः, एवमेवामात्यः । एवमन्यत् । मच.

## याज्ञवल्क्यः

### राज्यं सप्ताङ्गम्

²स्वाम्यमात्या जनो दुर्गं कोशो दण्डस्तथैव च ।
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ॥

* भाच., नन्द. ममुगतम् ।

(१) मस्मृ. ९।२९७ ; राक. ९८ तु (हि) यत्साध्यते (तत्स्थाप्यते) ; राप्र. २७८, ३२० तु (हि).

(२) यास्मृ. १।३५२ ; विश्व. १।३४९ मात्या (मात्यो) ; अप. १।३५१ जनो (जना) ; राक. ९७ स्वाम्यमात्या जनो (स्वाम्यमात्यजना) ; रार. ७१

(१) स्वामी राजा। अमात्यः सचिवः। जनः जनपदः। कोशः द्रव्यनिचयः। दण्डः बलं हस्त्यश्वरथपादातात्मकम्। मित्रदुर्गे उक्ते। एताः प्रकृतयः सप्तैव। एतदपेक्षया हि राज्यं सप्ताङ्गमुच्यते यस्मात्, तस्मात् यथैवाऽऽत्मामात्यादिप्रकृतयश्च प्रयत्नतः पालनीयाः तथैव मित्राण्यपीत्यर्थः। * विश्व.

(२) इदानीं राज्याङ्गान्याह— स्वाम्यमात्या इति। 'महोत्साहः' (यास्मृ. १।३०९) इत्याद्युक्तलक्षणो महीपतिः स्वामी। अमात्याः मन्त्रिपुरोहितादयः। जनः ब्राह्मणादिप्रजाः। दुर्गं धन्वदुर्गादि। कोशः सुवर्णादिधनराशिः। दण्डः हस्त्यश्वरथपत्तिलक्षणं चतुरङ्गबलम्। मित्राणि सहजकृत्रिमप्राकृतानि। एताः स्वाम्याद्याः राज्यस्य प्रकृतयः मूलकारणानि। एवं राज्यं सप्ताङ्गमुच्यते। § मिता.

(३) राज्ञः कर्म जनपदपालनं राज्यम्, तत् सप्ताङ्गम्। सप्तास्याङ्गानि भवन्ति। कानि तानीत्यपेक्षिते स्वामीत्यादिना मित्राणीत्यन्तेन तद्विशेषो निर्दिष्टः। कुतस्तेषामङ्गत्वमित्याकाङ्क्षिते उक्तम्— 'एताः प्रकृतयः' इति। यतः कार्यमुत्पद्यते अवतिष्ठते नियमेन भवति सा प्रकृतिः। यथा हिरण्यं कुण्डलस्य। राज्यं च विना स्वाम्यादिभिर्नोत्पद्यते, उत्पन्नमपि न तैर्विना चिरकालमनुवर्तते। ततो भवन्ति स्वाम्यादयो राज्याङ्गानि। मित्राणि उपकारका राजानः। † अप.

(४) उक्तान्येव सप्ताङ्गानि संक्षिप्य प्रदर्शयन् राज्ञस्तत्प्राप्त्युत्तरकृत्यमाह— स्वाम्यमात्या इति। स्वामी महोत्साहत्वादिविशेषणविशिष्टो महीपतिः। तदवाप्तिश्च विशेषणावाप्तिपर्यवसिता। दण्ड्यतेऽनेनेति दण्डः हस्त्यश्वादिसमुदायः। एवकारेण साहित्यापन्नानामङ्गपदार्थत्वं व्यवच्छिनत्ति। तथाशब्दचशब्दाभ्यां परस्परसाहित्येन मूलनिर्वाहकत्वमभिप्रैति। * वीमि.

## बृहत्पराशरः

सप्ताङ्गप्रधानो राजा पृथ्वीभोक्ता

'स्वामिप्रधानौ नयदुर्गकोशान्
दण्डं च मित्राणि च नीतिविज्ञाः।
अङ्गानि राज्यस्य वदन्ति सप्त
सप्ताङ्गपूर्वो नृपतिर्धराभुक्॥

## मत्स्यपुराणम्

सप्ताङ्गराज्यस्य मूलं स्वामी, अङ्गद्रोही वध्यः

'स्वाम्यमात्यो जनपदो दुर्गं दण्डस्तथैव च।
कोशो मित्रं च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते॥
'सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्तितः।
तन्मूलत्वात्तथाऽङ्गानां स तु रक्ष्यः प्रयत्नतः॥
'षडङ्गरक्षा कर्तव्या तथा तेन प्रयत्नतः।
अङ्गेभ्यो यस्तथैकस्य द्रोहमाचरतेऽल्पधीः॥
वधस्तस्य तु कर्तव्यः शीघ्रमेव महीक्षिता॥

अमात्यादिभी राजा रक्ष्यो राज्ञा च ते रक्ष्या इत्युक्तम्— स्वाम्यमात्य इत्यादिना। दण्डः बलम्। मूलं प्रधानम्। रक्ष्य इति। अमात्यादिभिरिति शेषः। षडङ्गानि अमात्यादयः। तेन राज्ञा। एकः अङ्गमध्यस्थः कश्चित्। राप्र. १२३

---

* दीक. विश्वगतम्।

§ राकौ. मितानुवादः।

† शेषं मितागतम्।

विश्ववत्; राप्र. २७८ राज्यं सप्ताङ्ग (सप्ताङ्गं राज्य) शेषं राकवत्; राकौ. २४६.

* शेषं मितागतम्।

(१) बृपसं. १२।७९.

(२) मत्स्य. २२०।१९; विध. ३।६५।२०–२१ पूर्वार्धे (स्वाम्यमात्यजनपदा बलं दुर्गं तथैव च।); राप्र. १२३.

(३) मत्स्य. २२०।२०; विध. ३।६५।२१–२२; राप्र. १२३.

(४) मत्स्य. २२०।२१–२२; विध. ३।६५।२२–२३ तथा तेन (तेन चापि) यस्तथै (यस्त्वथै); राप्र. १२३ भ्यो यस्तथैकस्य (भ्यश्च तथैकस्तु).

## स्कन्दपुराणम्

सप्त प्रकृतयः

[1]प्रस्तुतं प्राह राजेन्द्रं नृपते कुशलं पुरे।
कोशे बले च मित्रे च भृत्यामात्यप्रजासु च।
तथाऽऽत्मनि महाबाहो यत्र सर्वं प्रतिष्ठितम् ॥

## विष्णुधर्मोत्तरम्

सप्त प्रकृतयः

[2]स्वाम्यमात्यं जनं दुर्गं कोशो दण्डः सुहृत्तथा।
राज्ये प्रकृतयः सप्त रक्ष्या यत्नेन भूभुजा ॥

## अग्निपुराणम्

सप्ताङ्गानां राष्ट्रं प्रधानम्, अङ्गद्रोही वध्यः

[3]स्वाम्यमात्यो जनपदा दुर्गो दण्डस्तथैव च।
कोषो मित्रं च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥
मूलं स्वामी स वै रक्ष्यस्तस्माद्राज्यं विशेषतः।
राज्याङ्गद्रोहिणं हन्यात् ... ... ... ... ॥

[4]स्वाम्यमात्यश्च राष्ट्रं च दुर्गः कोषो बलं सुहृत्।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥
राज्याङ्गानां वरं राष्ट्रं साधनं पालयेत्सदा ॥

## कालिकापुराणम्

सप्ताङ्गं राज्यं गुरुप्रोक्तम्

[5]स्वामी सचिवराष्ट्राणि मित्रं कोशो बलं तथा।
दुर्गं तु सप्तमं ज्ञेयं राज्याङ्गं गुरुभाषितम् ॥
[6]सप्ताङ्गेषु प्रसादश्च सदा कार्यो नृपोत्तमैः ॥

(१) स्कन्द. ७।२।१७।१६२.
(२) विध. ३।३२३।११.
(३) अग्नि. २२५।११-१२.
(४) अग्नि. २३९।१-२.
(५) कालिका. ८७।५९-६०.
(६) कालिका. ८७।१०१.

## कामन्दकीयनीतिसारः

सप्ताङ्गराज्यस्य सत्त्वं बुद्धिश्चाऽऽधारः, सप्ताङ्गस्य सामग्र्येणाविकलत्वं सततमन्वेषणीयम्

*[1]स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम् ॥
[2]आलम्ब्य बलवत्सत्त्वं बुद्ध्यालोचितनिर्गमः।
सप्ताङ्गस्यास्य लाभाय यतेत सततोत्थितः ॥
[3]स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥

(१) यथा सद्वृत्तेनाऽऽत्मसात्कृतो लोको न भिद्यते तथा राज्यमपि गुणतः परीक्षितं न विश्लेषमेति, विश्लिष्टमपि समग्रीभवति। तस्मात् तत्परीक्षणार्थं प्रकृतिसंपद उच्यन्ते इति प्रकरणक्रमः। तत्र राज्यं प्रथमसर्गे संज्ञया निर्दिष्टम्। पुनरिह स्वाम्याद्युपादानं पूर्वपूर्वप्राधान्यज्ञापनार्थम्। प्राधान्यं चतुर्दशे सर्गे वक्ष्यामः। परस्परोपकारि स्वेन स्वेन कर्मणा। ततश्चान्योन्यसहायमेतत् सप्तावयवं समुदायसाध्ये कर्मणि रथवत् प्रवर्तते। जम.

(२) जितेन्द्रियस्य विद्यावृद्धैः संयुक्तस्य वर्णाश्रमाचारस्थापनानन्तरं राज्यप्रकृतीनां सप्तानामपि गुणसमूहकृतां संपदं दर्शयितुं प्रकृतीरेव तावदाह— स्वाम्येति। स्वाम्यमात्यौ उक्तलक्षणौ। राष्ट्रं जनपदः। दुर्गं स्थानीयादि। कोशः रत्नसारादि। बलं चतुरङ्गम्। सुहृत् मित्रम्। परस्परोपकारीदमिति। स्वामी अमात्यस्योत्पादकत्वेनोपकारी। अमात्योऽपि स्वामिनो बुद्ध्यादिसाहाय्येन। तौ राष्ट्रस्य रक्षादिनोपकारकौ। राष्ट्रं कोशादिसंपादनेन तयोः। दुर्गं रक्षादिविधानेन तेषाम्। तेऽपि संस्कारादिसंपादनेन दुर्गस्य। कोशो वृत्त्युपकरणसंपादनेन तेषाम्। वर्धनरक्षणतीर्थप्रतिपादनादिना तेऽपि कोशस्य।

* अस्य श्लोकद्वयस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११२६) द्रष्टव्यम्।

(१) कानी. १।१८; नीम. ३२.
(२) कानी. १।१९; उनि. लोचित (लोकित).
(३) कानी. ४।१.

बलं चतुरङ्गं असाध्यसाधनादिनोपकारि पूर्वोक्तानाम्। तेऽपि भरणादिना बलस्य। मित्रं साहाय्यदानादिनाऽनन्तरोक्तानाम्। तेऽपि तथैव च मित्रस्य। इति परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते, ततो न्यूनाङ्गे न राज्यव्यपदेश इति। उनि.

[1]एकाङ्गेनापि विकलमेतत्साधु न वर्तते।
तस्य सामग्र्यमन्विच्छन्कुर्वीताऽऽशु परीक्षणम्॥

(१) तदेव व्यतिरेकेण दर्शयन्नाह– एकाङ्गेनापीति। आशु परीक्षणं कुर्वीत, अन्यथा समुदायसाध्यं कार्यमतिपतेत्। जम.

(२) तदेव समर्थयन्नाह– एकाङ्गेनापीति। एकेनाप्यङ्गेन विकलमेतत् साधु यथा भवति तथा न वर्तते, रथवत्। रथो यथा चक्राक्षाश्वसारथियोक्त्रादीनामेकेनापि रहितो न वर्तते तद्वत् राज्यम्। तस्मात् सामग्र्यं संपूर्णतां अन्विच्छन् कुर्वीत आशु शीघ्रं परीक्षणं अन्वेषणम्। कस्य के गुणाः समग्रा असमग्रा वेति परीक्षामपि कुर्वीतेति भावः। उनि.

## शुक्रनीतिः

### सप्ताङ्गराज्यस्य पुरुषरूपकम्

[1]स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च।
सप्ताङ्गमुच्यते राज्यं तत्र मूर्धा नृपः स्मृतः॥
दृगमात्या सुहृच्छ्रोत्रं मुखं कोशो बलं मनः।
हस्तौ पादौ दुर्गराष्ट्रौ राज्याङ्गानि स्मृतानि हि॥

राज्यं सप्ताङ्गं सप्तावयवं उच्यते। स्वामी राजा, अमात्यः मन्त्री, सुहृत् मित्रम्, कोशः धनम्, राष्ट्रं राज्यस्थप्रजावर्गः, दुर्गं शत्रुदुर्गमं गुप्तिस्थानम्, तथा बलं सैन्यम्। तत्र तेषु सप्तसु मध्ये नृपः मूर्धा उत्तमाङ्गं स्मृतः। दृगिति। अमात्यः दृक् चक्षुः, सुहृत् श्रोत्रं कर्णावयवम्, कोशः मुखम्, बलं मनः, दुर्गं हस्तः, राष्ट्रं पादः। एतानि राज्याङ्गानि स्मृतानि कथितानि। हिशब्दः अवधारणे। शुनीटी.

---

(१) कानी. ४।२; उनि. तस्य (तस्मात्).

(१) शुनी. १।६१-६२.

# * स्वामी

—०—

## गौतमः

स्वामी चातुर्विद्यः शुचिः जितेन्द्रियः सहायोपपन्नः

[†]साधुकारी स्यात्साधुवादी ॥

[1]त्रय्यामान्वीक्षिक्यां चाभिविनीतः ॥

(१) आन्वीक्षिकी न्यायविद्या । राक. १९

(२) त्रयी ऋग्यजुःसामलक्षणा । आन्वीक्षिकी न्यायविद्या आत्मविद्या वा । अनयोः अभिविनीतः कुशलः । विसमासाद्दण्डनीत्यां च, चशब्दाद्वार्तायां च । तथा च मनुः— 'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च तद्विदः । आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भं च लोकतः ॥' ( मस्मृ. ७।४३ ) इति । मभा.

(३) ऋग्यजुःसामात्मकास्त्रयो वेदाः त्रयी । आथर्वणश्च वेदस्तेष्वन्तर्भवति । तत्रापि हि मन्त्रा ऋचो यजूंषि वा । भेदव्यवहारस्तु प्रवचननिमित्तः शान्तिकपौष्टिकादिप्रमेयभेदनिबन्धनो वा । आन्वीक्षिकी न्यायविद्या । तयोः अभिविनीतः गुरुभिः सम्यक् शिक्षितः । गौमि.

(४) आन्वीक्षिकी वेदाद्यविरुद्धा आत्मज्ञानोपयोगिनी न्यायविद्या । § राप्र. ११८

[2]शुचिर्जितेन्द्रियो गुणवत्सहायोपायसंपन्नः ॥

(१) शुचिः अलुब्धः । जितेन्द्रियः मृगयादिव्यसनरहितः । गुणवत्सहायः गुणवद्भिर्विद्याचारित्रादिभिर्गुणैर्युक्तैः सहायैर्मन्त्रिसामन्तदूतादिभिरुपेतः । उपायैः देशकालावस्थाद्यपेक्षया प्रयुक्तैः सामादिभिश्च युक्तः । गुणवत्सहायोपायवानिति वक्तव्ये संपन्नग्रहणमनिलावमन्त्रलोपसंग्रहार्थम् । * मभा.

(२) शुचिः अन्तः परद्रव्यादिष्वस्पृहः, बहिः स्नानादिपरः । जितेन्द्रियः स्त्रियोऽक्षा मृगया पानमित्यादिव्यसनरहितः । गुणाः शान्त्यादयः । तद्वद्भिः त्रिसामादिभिः ( १ मन्त्रिसामन्तादिभिः ) सहायैः संपन्नः समवेतः । सामादिभिश्चोपायैः संपन्नः देशकालावस्थानुरूपं तेषां प्रयोक्ता । सर्वत्र स्यादिति वक्ष्यमाणमपेक्ष्यते । गौमि.

## हारीतः

सत्यैश्वर्यादयः स्वामिगुणाः, नीतिशास्त्रज्ञः धार्मिकः स्वामी

[1]सत्यैश्वर्यं तथा त्यागो नृपस्यैते महागुणाः ।
एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥

नीतिशास्त्रार्थकुशलः संधिविग्रहतत्त्ववित् ।
देवब्राह्मणभक्तश्च पितृकार्यपरस्तथा ॥

## शङ्खलिखितौ

दीर्घदर्शित्वादयः स्वामिगुणाः, जितेन्द्रियो नीतिज्ञः सर्वभूतशरण्यः स्वामी

[3]राजा दीर्घदर्शी महोत्साहः शक्तिमाननसूयुर्भक्तवत्सलस्त्यागी शरण्यः सर्वभूतानां संविभक्ता सत्य-

---

* राजशिक्षा, इन्द्रियजयः, राजकर्तव्यानि इत्यादिप्रकरणेष्वपि केचित् स्वामिगुणाः सन्त्येव । आकरग्रन्थेषु प्रकृतिभूतं स्वामिनमधिकृत्य ये गुणा वर्णितास्त एव प्रायोऽस्मिन् प्रकरणे संगृहीताः ।

† व्याख्यासंग्रहः शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १०२४) द्रष्टव्यः ।

§ शेषः गौमिव्याख्यानुवादः ।

(१) गौध. ११।२.

(२) गौध. ११।३ ; राक. १९ क्षिक्यां ( क्षिक्यादिकायां) ; मभा. ; गौमि. चाभि (वाऽभि) ; राप्र. ११७.

(३) गौध. ११।४ ; राक. १९ ; मभा. ; गौमि. ; राप्र. ११७ पायसंपन्नः (पायोपसंपन्नः ) इति व्याख्याने पाठः.

* राप्र. मभागतं गौमिगतं च ।

(१) रार. ९.

(२) हास्मृ. २।४.

(३) राक. १८ ; राप्र. ११६ भक्तवत्सल ( भक्तबल ) संविभक्ता ( संविभक्तः ) जितराग ( जितकामराग ).

वागमत्सरी गम्भीरोऽमर्षणो बुधस्तेजस्वी प्रतिविधानकुशलोऽदीर्घसूत्रो दक्षः क्षमावान् लक्ष्यज्ञो देशकालद्रव्यप्रयोगसंग्रहनिमित्तज्ञानकुशलो गूढमन्त्रप्रचारः संवृतरन्ध्रः पररन्ध्रज्ञो दृढप्रहारी लघुहस्तो जितस्थानासनहिमातपो जितरागद्वेषलोभमत्सरः प्रजाभिरामो दीनानुग्रहकर्ता ब्राह्मणेष्वन्नप्रदाता श्रीयशोर्थी ॥

(१) दीर्घदर्शी अनागतकार्यतत्त्वज्ञः । गम्भीरः अनुपलक्षितक्रोधहर्षाद्याकारः । अमर्षणः परसमृद्धेरसोढा । अदीर्घसूत्रः अचिरक्रियः । गूढमन्त्रप्रचारः फलानुमितमन्त्रतत्त्वः । संवृतरन्ध्रः, रन्ध्रं यत्र परे प्रहरन्ति, तदावृतं यस्य । प्रजाभिरामः प्रजानामभिरमयिता । राक. १८

(२) अथाभिषिक्तस्य राज्ञो गुणवतो जनपदपरिपालनादीन् धर्मान् वक्तुं यैर्गुणैः प्रजापालनयोग्यो भवति ते गुणाः उच्यन्ते । तत्र शङ्खलिखितौ— राजेति । अस्यार्थः— महोत्साहः, पुरुषार्थसाधनकर्माध्यवसायः उत्साहः, स महान् यस्य सः । बहुविषयत्वमविहन्यमानत्वं चोत्साहस्य महत्त्वम् । शक्तिमान् प्रभावोत्साहमन्त्रशक्तित्रययुक्तः । अनसूयुः, असूया परगुणेषु दोषारोपः, तद्रहितः । प्रतिविधानं उपस्थितानिष्टप्रतीकारः, तत्र कुशलः । अदीर्घसूत्रः अचिरक्रियः, अवश्यकार्याणां कर्मणां प्रारम्भे प्रारब्धानां च परिसमाप्तौ यो न विलम्बते । दीर्घसूत्रस्य कर्महानिरुक्ता मत्स्यपुराणे— 'अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः । दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ॥' (मत्स्य. २२०।२९–३०) इति । कार्यविशेषे दीर्घसूत्रताऽपि कर्तव्येत्युक्तं तत्रैव— 'दोषे दर्पे च माने च द्रोहे पापे च कर्मणि । अप्रिये चैव कर्तव्ये दीर्घसूत्रः प्रशस्यते ॥' (मत्स्य. २२०।३०–३१) इति । लक्ष्यज्ञः तत्कालकर्तव्यज्ञः । जितमत्सर इति पुनर्ग्रहणं उत्पन्नस्यापि मत्सरस्याप्रकाशनार्थम् । * राप्र. ११६–११७

* शेषं राकानुवादः ।

## महाभारतम्

स्वामिगुणाः स्वामिदोषाश्च

[1]दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥
[2]निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥

लोकस्य पर्यायः इहलोकपरलोकवत्त्वम्, तेन तद्विषयवृत्तान्तं कर्मफलाधीनत्वस्वरूपं प्राज्ञो जानाति । न तु बुद्ध्या धनं जाड्येन वा दारिद्र्यं लभ्यते, सर्वत्र व्यभिचारदर्शनादिति भावः । नीटी.

[3]विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत ।
धनाभिजनवृद्धांश्च नित्यं मूढोऽवमन्यते ॥

अभिजातः कुलीनः । नीटी.

[4]अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥
अविसंवादनं दानं समयस्याव्यतिक्रमः ।
आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक् ॥

अविसंवादनं वञ्चनाशून्यम् । समयस्य स्वपरकृतमर्यादायाः । आवर्तयन्ति शत्रूनपि स्वीयान् कुर्वन्ति । प्रणिहिता प्रयुक्ता । नीटी.

अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।
अपि संक्षीणकोशोऽपि लभते परिवारणम् ॥

परिवारणं परिवारान् भृत्यमित्रादीन् । नीटी.

(१) भा. ५।३८।२७ ; भामु. ५।३८।३० च य (प्रय).

(२) भा. ५।३८।२८–३० ; भामु. ५।३८।३१–३३.

(३) भा. ५।३८।३१ ; भामु. ५।३८।३४ जन (जात).

(४) भा. ५।३८।३२–३४ ; भामु. ५।३८।३५–३७.

[1]धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥

(१) समिधः उद्दीपिकाः। नीटी.
(२) समिधः वर्धनानि। नीम. ४७

[2]असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः।
तादृङ्नराधमो लोके वर्जनीयो नराधिप ॥

असंविभागी पोष्येभ्योऽदत्त्वा स्वयं भुञ्जानः। नीटी.

[3]न स रात्रौ सुखं शेते ससर्प इव वेश्मनि।
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥

[4]येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत।
सदा प्रसादनं तेषां देवतानामिवाऽऽचरेत् ॥

दुष्टेषु दूषितेषु वेतनाद्यतिक्रमात्। नीटी.

[5]येऽर्थाः स्त्रीषु समासक्ताः प्रथमोत्पतितेषु च।
ये चानार्यसमासक्ताः सर्वे ते संशयं गताः ॥

समासक्ताः निहिताः। संशयं गताः कदाचित्प्राप्या इत्यर्थः। नीटी.

[6]यत्र स्त्री यत्र कितवो यत्र बालोऽनुशास्ति च।
मज्जन्ति तेऽवशा देशा नद्यामश्मप्लवा इव ॥

[7]प्रयोजनेषु ये सक्ता न विशेषेषु भारत।
तानहं पण्डितान् मन्ये विशेषा हि प्रसङ्गिनः ॥

ये भृत्याः। विशेषाः आधिक्यानि, तेषु हि प्रदर्श्यमानेषु परस्परं स्वीयानामेव कलहप्रसङ्गात् मुख्यं प्रयोजनं नश्यतीति भावः। प्रसङ्गिनः, प्रसङ्गः संघर्षः, तत्कारिणः। नीटी.

यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥

(१) भा. ५।३८।३५ ; भामु. ५।३८।३८ ; नीम. ४७ सप्तैताः (एताश्च).
(२) भा. ५।३८।३६ ; भामु. ५।३८।३९ नराधमो (नराधिपो).
(३) भा. ५।३८।३७ ; भामु. ५।३८।४० न स (न च).
(४) भा. ५।३८।३८ ; भामु. ५।३८।४१.
(५) भा. ५।३८।३९ ; भामु. ५।३८।४२ समासक्ताः प्रथमोत्प (समायुक्ताः प्रमत्तप) चानार्य (चानार्ये).
(६) भा. ५।३८।४० ; भामु. ५।३८।४३ यत्र बालोऽनुशास्ति च (बालो यत्रानुशासिता) देशा (राजन्).
(७) भा. ५।३८।४१–४२ ; भामु. ५।३८।४४–४५.

युधिष्ठिरे समस्ता राजगुणाः

[1]युधिष्ठिरो राजपुत्रो महात्मा
न्यायागतं राज्यमिदं च तस्य।
स कौरवस्यास्य जनस्य भर्ता
प्रशासिता चैव महानुभावः ॥

[2]स सत्यसंधः सततात्रमत्तः
शास्त्रे स्थितो बन्धुजनस्य साधुः।
प्रियः प्रजानां सुहृदानुकम्पी
जितेन्द्रियः साधुजनस्य भर्ता ॥

आसमन्तात् अनुकम्पी दयावान्। नीटी.

[3]क्षमा तितिक्षा दम आर्जवं च
सत्यव्रतत्वं श्रुतमप्रमादः।
भूतानुकम्पा ह्यनुशासनं च
युधिष्ठिरे राजगुणाः समस्ताः ॥

[4]अराजपुत्रस्त्वमनार्यवृत्तो
लुब्धस्तथा बन्धुषु पापबुद्धिः।
क्रमागतं राज्यमिदं परेषां
हर्तुं कथं शक्ष्यसि दुर्विनीतः ॥

(१) भा. ५।१४७।३१ ; भामु. ५।१४९।३२ जनस्य (कुलस्य).
(२) भा. ५।१४७।३२ ; भामु. ५।१४९।३३ सतता (स तथाऽ).
(३) भा. ५।१४७।३३ ; भामु. ५।१४९।३४.
(४) भा. ५।१४७।३४ ; भामु. ५।१४९।३५ ब्धस्तथा (ब्धः सदा) दुर्विनीतः (दुर्विनीत).

संवृतरन्ध्रत्वादयः स्वामिगुणाः

[१]गुणवाञ्शीलवान्दान्तो मृदुर्धर्म्यो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥

गुणाः शौर्यौदार्यगाम्भीर्यादयः, तद्वान् । शीलं सदाचारः, तद्वान् । दान्तः अचपलः । मृदुः दयावान् । धर्म्यः धर्मादनपेतः । जितेन्द्रियः जितचित्तः । सुदर्शः प्रसन्नवक्त्रः । स्थूललक्ष्यः बहुप्रदः । नीटी.

*[२]गुप्तमन्त्रो जितक्रोधः शास्त्रार्थगतनिश्चयः ।
धर्मे चार्थे च कामे च मोक्षे च सततं रतः ॥
त्रय्या संवृतरन्ध्रश्च राजा भवितुमर्हति ।
वृजिनस्य नरेन्द्राणां नान्यत्संवरणात्परम् ॥

राजसत्तमः कीदृशः

सर्वातिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते ॥
शुचिस्तु पृथिवीपालो लोकचित्तग्रहे रतः ।
न पतत्यरिभिर्ग्रस्तः पतितश्चावतिष्ठते ॥
अक्रोधनोऽथाव्यसनी मृदुदण्डो जितेन्द्रियः ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥
प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु तत्परः ।
सुदर्शः सर्ववर्णानां नयापनयवित्तथा ॥
क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः ।
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ॥
आरब्धान्येव कार्याणि न पर्यवसितानि च ।
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ॥
पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥
अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः ।
नयापनयवेत्तारः स राजा राजसत्तमः ॥

* व्याख्यानं शेषाः स्थलादिनिर्देशाश्च 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ५६७, ५६९-५७०) द्रष्टव्याः ।

(१) भा. १२।५६।१९ ; भामु.
(२) भा. १२।५७।१३-१४, २७-४५.

स्वकर्मनिरता यस्य जना विषयवासिनः ।
असंघातरता दान्ताः पाल्यमाना यथाविधि ॥
वश्या नेया विनीताश्च न च संघर्षशीलिनः ।
विषये दानरुचयो नरा यस्य स पार्थिवः ॥
न यस्य कूटकपटं न माया न च मत्सरः ।
विषये भूमिपालस्य तस्य धर्मः सनातनः ॥
यः सत्करोति ज्ञानानि नेयः पौरहिते रतः ।
सतां धर्मानुगस्त्यागी स राजा राज्यमर्हति ॥
यस्य चारश्च मन्त्रश्च नित्यं चैव कृताकृते ।
न ज्ञायते हि रिपुभिः स राजा राज्यमर्हति ॥
श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना ।
आख्याते रामचरिते नृपतिं प्रति भारत ॥
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥

लोकरक्षा एव स्वामिनः सनातनो धर्मः

तद्राजन् राजसिंहानां नान्यो धर्मः सनातनः ।
ऋते रक्षां सुविस्पष्टां रक्षा लोकस्य धारणम् ॥

प्राचेतसमनुनिर्दिष्टाः षट् त्याज्याः

प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ ।
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥
षडेतान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥

स्वामिनः स्थिरा गुणाः

[१]वेदवेदाङ्गवित्प्राज्ञः सुतपस्वी नृपो भवेत् ।
दानशीलश्च सततं यज्ञशीलश्च भारत ॥
एते गुणाः समस्ताः स्युर्नृपस्य सततं स्थिराः ॥

(१) भा. १२।६९।३०-३१ ; भामु. १२।६९।३१-३२.

शतगुणाकीर्णः स्वामी

*[1]एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः ।
एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥
[2]धीरो मर्षी शुचिः शीघ्रः काले पुरुषकारवित् ।
शुश्रूषुः श्रुतवाञ्श्रोता ऊहापोहविशारदः ॥

मर्षी क्षमी । नीटी.

[3]मेधावी धारणायुक्तो यथान्यायोपपादकः ।
दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥

विपर्यये अक्षमावति अपकारिणि क्षमावान् । नीटी.

[4]दानाच्छेदे स्वयंकारी सुद्वारः सुखदर्शनः ।
आर्तहस्तप्रदो नित्यमाप्तंमन्यो नये रतः ॥

दानस्य अच्छेदे विषये स्वयं अविच्छेदकर्ता । नीटी.

[5]नाहंवादी न निर्द्वंद्वो न यत्किंचनकारकः ।
कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ॥

(१) न निर्द्वंद्वः न निष्परिग्रहः । कर्ता उपकर्ता । नीटी.

(२) न निर्द्वंद्वः शैत्योष्णादिसहिष्णुः । राकौ. २४७

[1]संगृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा ।
दाता भृत्यजनावेक्षी न क्रोधी सुमहामनाः ॥
[2]युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासकः ।
चारनेत्रः परावेक्षी धर्मार्थकुशलः सदा ॥
[3]राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ॥

गुणशतं कुलीनत्वादयः एकपञ्चाशत् अमात्यगुणाः, तत्सहिताः धर्मपरमत्वादय एकचत्वारिंशत्, एवं अष्टोनं गुणशतम्, एतेषां संधिविग्रहकोविदं इत्यादिरीत्याऽन्यत् गुणाष्टकं ऊहयित्वा पूर्णं शतं ज्ञेयम् । नीटी.

गुणवान् दोषरहितश्च राजा महीभुक्

[4]ज्ञातीनामनवज्ञानं भृत्येष्वशठता सदा ।
नैपुण्यं चार्थचर्यासु यस्यैते तस्य सा मही ॥
आलस्यं चैव निद्रा च व्यसनान्यतिहास्यता ।
यस्यैतानि न विद्यन्ते तस्येयं सुचिरं मही ॥
वृद्धसेवी महोत्साहो वर्णानां चैव रक्षिता ।
धर्मचर्या सदा यस्य तस्येयं सुचिरं मही ॥
नीतिवर्त्मानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं तस्येयं सुचिरं मही ॥
उत्थानं चैव दैवं च तयोर्नानात्वमेव च ।
मनुना वर्णितं पूर्वं वक्ष्ये शृणु तदेव हि ॥

---

* अत्र एतच्छब्देन पूर्वश्लोकेषु निर्दिष्टाः सचिवगुणाः परामृष्टाः । ते 'प्रकृतयः– मन्त्रिणः' इत्यस्मिन् प्रकरणे द्रष्टव्याः ।

(१) भा. १२।११८।१६ ; भामु. ; राकौ. २४७ एष्टव्यो ( यष्टव्यो ).

(२) भा. १२।११८।१७ ; भामु. १२।११८।१७ शीघ्रः ( तीक्ष्णः ) ; राकौ. २४७ मर्षी ( ऽमर्षी ) शीघ्रः ( तीक्ष्णः ) श्रुतवान् ( श्रुतवाक् ) ऊहापोह ( चोहाप्रोह ).

(३) भा. १२।११८।१८ ; भामु. ; राकौ. २४७ न्यायो ( युक्तो ).

(४) भा. १२।११८।१९ ; भामु. १२।११८।१९ सुद्वारः ( श्रद्धालुः ) माप्तंमन्यो नये ( ममात्यो हि हिते ) ; राकौ. २४७ दाना ( दान ) सुद्वारः सुख ( साध्वाचारः सु ) माप्तंमन्यो ( मास्तामात्यो ).

(५) भा. १२।११८।२० ; भामु. १२।११८।२० ण्यमोघानां ( ण्यमात्यानां ) भृत्य ( भक्त ) ; राकौ. २४७ ण्यमोघानां ( ण्यमात्यानां ) भृत्य ( सर्व ).

(१) भा. १२।११८।२१ ; भामु. १२।११८।२१ दाता ( सदा ) जनावेक्षी ( जनापेक्षी ) ; राकौ. २४८ जनोऽस्तब्धः ( जनः स्तब्धः ) दाता ( सदा ) न क्रोधी ( अक्रोधी ).

(२) भा. १२।११८।२२ ; भामु. १२।११८।२२ शासकः ( शासनः ) परा ( प्रजा ) ; राकौ. २४८ शासकः ( शासनात् ) परा ( प्रजा ).

(३) भा. १२।११८।२३ ; भामु. ; राकौ. २४८ एष्टव्य ( यष्टव्य ).

(४) भापुस्तके १२।११८।२६ इत्यतः परं टिप्पण्यामेते सप्त श्लोकाः.

उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
नयानयविधानज्ञः सदा भव कुरूद्वह ॥

दुर्हृदां छिद्रदर्शी यः सुहृदामुपकारवान् ।
विशेषविच्च भृत्यानां स राज्यफलमश्नुते ॥

[1]सर्वसंग्रहणे युक्तो नृपो भवति यः सदा ।
उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः ॥

## वाल्मीकिरामायणम्

रामः सर्वगुणोपेतः

[2]संयतात्मा प्रद्युतिमान्धृतिमान्गुणवान् वशी ।
बुद्धिमान्नीतिमान्वाग्मी धीमाञ्छत्रुनिबर्हणः ॥

[3]विशालाक्षो महाबाहुः कम्बुग्रीवो महाहनुः ।
महेष्वासो महातेजा गूढजत्रुररिंदमः ॥

[4]आजानुबाहुः सुशिरा बलवान् सत्यविक्रमः ।
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ॥

[5]पीनवक्षा विशालाक्षो लक्ष्मीवान् कुलनन्दनः ।
धर्मज्ञः सत्यसंधश्च जितक्रोधो जितेन्द्रियः ॥

[6]मनस्वी ज्ञानसंपन्नः शुचिर्वीर्यसमन्वितः ।
प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ॥

[1]रक्षिता सर्वलोकस्य धर्मस्य परिरक्षिता ।
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ॥

[2]सर्ववेदाङ्गविच्चैव सर्वशास्त्रविशारदः ।
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा बहुश्रुतः ॥

[3]सर्वदाऽनुगतः सद्भिः समुद्र इव सिन्धुभिः ।
स सत्यश्च समश्चैव सौम्यश्च प्रियदर्शनः ॥

[4]रामः सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये स्थैर्ये च हिमवानिव ॥

[5]विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः कोपे क्षमया पृथिवीसमः ॥

[6]धनदेन समश्चार्थे सत्ये चानुपमद्युतिः ॥

[7]धर्मात्मा सत्यवादी च शीलवाननसूयकः ।
दान्तः सत्त्वहितः प्राज्ञः कृतज्ञो विजितेन्द्रियः ॥

---

(१) भा. १२।११८।२७ ; भामु.

(२) वारा. १।१।१३ ; वाराकु. १।१।८–९ पूर्वार्धे ( नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी । ).

(३) वारा. १।१।१४ ; वारा[illegible] १।१।९–१० विशालाक्षो ( विपुलांसो ) उत्तरार्धे ( महोरस्को महेष्वासो गूढजत्रुररिंदमः ॥ ).

(४) वारा. १।१।१५ ; वाराकु. १।१।१०–११ बलवान् सत्य ( सुललाटः सु ).

(५) वारा. १।१।१६ ; वाराकु. १।१।११–१२ कुलनन्दनः ( शुभलक्षणः ) जितक्रोधो जितेन्द्रियः ( प्रजानां च हिते रतः ).

(६) वारा. १।१।१७ पू. ; वाराकु. १।१।१२ पूर्वार्धे ( यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् । ).

(१) वारा. १।१।१७ पू. ; वाराकु. १।१।१३ सर्व ( जीव ).

(२) वारा. १।१।१८ द्वितीयार्धं नास्ति ; वाराकु. १।१।१४–१५ प्रथमार्धे ( वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः । ) बहुश्रुतः ( विचक्षणः ).

(३) वारा. १।१।१९ ; वाराकु. १।१।१५–१६ सर्वदाऽनु ( सर्वदाऽभि ) स सत्यश्च ( आर्यः सर्व ) सौम्यश्च ( सदैक ).

(४) वारा. १।१।२० ; वाराकु. १।१।१६–१७ रामः ( स च ) स्थैर्ये च ( धैर्येण ).

(५) वारा. १।१।२१ ; वाराकु. १।१।१७–१८ कोपे ( क्रोधे ).

(६) वारा. १।१।२२ ; वाराकु. १।१।१८ इचार्थे ( स्त्यागे ) चानुपमद्युतिः ( धर्मे इवापरः ).

(७) वारा. २।४।१७ ; वाराकु. २।२।३१ धर्मात्मा सत्यवादी ( धर्मज्ञः सत्यसंधः ) दान्तः सत्त्वहितः प्राज्ञः ( क्षान्तः सान्त्वयिता श्लक्ष्णः ) ; राकौ. २४८.

[1]मृदुश्च स्थिरबुद्धिश्च नित्यं दीनानुकम्पकः ।
प्रियवादी जितक्रोधो दीर्घदर्शी महामतिः ॥

[2]बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ।
तेन तस्यातुला कीर्तिर्यशस्तेजश्च वर्धते ॥

[3]समर्थश्च धनुर्वेदे हयपृष्ठे गजे रथे ।
लब्धास्त्रः शब्दवेधी च दूरपाती दृढायुधः ॥

चतुर्दश राजदोषाः

[4]नास्तिक्यमनृतं क्रोधः प्रमादो दीर्घसूत्रता ।
अदर्शनं ज्ञानवतामालस्यं पापवृत्तिता ॥

[5]एकचिन्तनमर्थानामनर्थज्ञैश्चोपमन्त्रणम् ।
निश्चितानां च नाऽऽरम्भो मन्त्रस्यापरिरक्षणम् ॥

[6]मङ्गलानाम[illegible]गश्च प्रीत्युत्सर्गश्च सर्वशः ।
कच्चित्त्वं वर्जयस्येतान् राजदोषान् चतुर्दश ।
यैराविष्टः श्रियं क्षिप्रं नाशयेत्पृथिवीपतिः ॥

---

(१) वारा. २।४।१८; वाराकु. २।२।३२–३३ (मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः । क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥); राकौ. २४८ बुद्धि (वृत्ति) नित्यं (नित्य).

(२) वारा. २।४।१९; वाराकु. २।२।३३–३४ तेन तस्या (तेनास्येहा); राकौ. २४८.

(३) वारा. २।४।२०; राकौ. २४८ समर्थ (समाप्त) लब्धास्त्रः शब्दवेधी च (लब्धशस्त्रः शब्दभेदी).

(४) वारा. २।११४।६६; वाराकु. २।१००।६६ पूर्वार्धे (नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।) पापवृत्तिता (पञ्चवृत्तिताम्).

(५) वारा. २।११४।६७ एकचिन्तन (एकं चित्त); वाराकु. २।१००।६७ ज्ञैश्चोप (ज्ञैश्च) नां च नाऽऽरम्भो (नामनारम्भं).

(६) वारा. २।११४।६८; वाराकु. २।१००।६८ प्रथमार्धे (मङ्गलस्याप्रयोगं च प्रत्युत्थानं च सर्वतः ।) तृतीयार्धं नास्ति.

दमादयः स्वामिगुणाः

[1]दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः ।
पार्थिवानां गुणा राजन्दण्डश्चाप्यपराधिषु ॥

## कौटिलीयमर्थशास्त्रम्

स्वामिनः आभिगामिका गुणाः प्रज्ञागुणाः उत्साहगुणाः आत्मसंपच्च

[2]तत्र स्वामिसंपत् । महाकुलीनो दैवबुद्धिसत्त्वसंपन्नो वृद्धदर्शी धार्मिकः सत्यवागविसंवादकः कृतज्ञः स्थूललक्षो महोत्साहोऽदीर्घसूत्रः शक्यसामन्तो दृढबुद्धिरक्षुद्रपरिषत्को विनयकाम इत्याभिगामिका गुणाः ॥

तेषु स्वामिनः प्राधान्यात् प्रथमं स्वामिसंपदमाह— तत्र स्वामिसंपदिति । उच्यते इति शेषः । सा च द्विविधा— आभिगामिकगुणा इति आत्मसंपदिति च । तत्राऽऽभिगामिकान् गुणान् प्रथममाह— महाकुलीन इत्यादि । महाकुलीनः सूर्यसोमादिवंशोत्पन्नः श्रुतशीलश्चर्ययुक्तश्च । दैवबुद्धिसत्त्वसंपन्नः । दैवसंपन्नः, दैवं पौर्वदेहिकं शुभकर्म अल्पप्रयत्नमात्रकार्यसिद्ध्याऽनुमेयम्, तत्संपन्नः । बुद्धिसंपन्नः शुश्रूषाश्रवणादिबुद्धिगुणयुक्तः । सत्त्वसंपन्नश्च, सत्त्वं धैर्यं व्यसनाभ्युदययोर्निर्विकारता, तद्युक्तश्च । वृद्धदर्शी ज्ञानोत्कृष्टदर्शनशीलः । धार्मिकः धर्मानुष्ठानपरः । सत्यवाक् तथ्यभाषी । अविसंवादकः वचनकर्मणोस्तुल्यार्थः । कृतज्ञः उपकारस्मर्ता । स्थूललक्षः महेच्छो महादाता च । महोत्साहः प्रशस्तव्यवसायः । अदीर्घसूत्रः क्षिप्रकारी । शक्यसामन्तः पीडयितुं कर्शयितुमुच्छेत्तुं च शक्याः विषयान्तरभूपा यस्य स तथाभूतः । दृढबुद्धिः अभेद्यनिश्चयः । दृढभक्तिरिति पाठे तु अभेद्यस्नेहः । अक्षुद्रपरिषत्कः गुणवत्परिवारः ।

---

(१) वारा. ४।१६।५८ पूर्वार्धे (शमो दानं दया धर्मः सत्यं शीलं पराक्रमः ।) राजन् (राम) राधिषु (कारिषु); वाराकु. ४।१७।२०: ४।१७।२९ पूर्वार्धे (साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ।).

(२) कौ. ६।१.

विनयकामः शास्त्रसंस्कारार्थी । इति षोडश आभिगामिका गुणाः । श्रीमूला.

**शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः ॥**

शुश्रूषा श्रोतुमिच्छा । श्रवणं शब्दावगमः । ग्रहणं अर्थावगमः । धारणं अवगताविस्मरणम् । विज्ञानं विशेषज्ञानम् । ऊहः ज्ञातस्यार्थस्योपपत्तिपरिचिन्तनम् । अपोहः दुष्टपक्षपरित्यागः । तत्त्वाभिनिवेशः गुणवत्पक्षानुष्ठानम् । इति अष्टौ प्रज्ञागुणाः श्रीमूला.

**शौर्यममर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः ॥**

शौर्यमिति निर्भीकत्वम् । अमर्षः अक्षमा । शीघ्रता क्षिप्रक्रियत्वम् । दाक्ष्यं लङ्घनप्लवनादिनैपुण्यं च । उत्साहगुणाः चत्वारः । श्रीमूला.

**वाग्मी प्रगल्भः स्मृतिमतिबलवानुदग्रः स्ववग्रहः कृतशिल्पो व्यसने दण्डनाय्युपकारापकारयोर्दृष्टप्रतिकारी ह्रीमानापत्प्रकृत्योर्विनियोक्ता दीर्घदूरदर्शी देशकालपुरुषकारकार्यप्रधानः संधिविक्रमत्यागसंयमपणपरच्छिद्रविभागी संवृतोऽदीनाभिहास्यजिह्मभ्रुकुटीक्षणः कामक्रोधलोभस्तम्भचापलोपतापपैशुन्यहीनः शक्तः स्मितोदग्राभिभाषी वृद्धोपदेशाचार इत्यात्मसंपत् ॥**

वाग्मीति अभिसंहितार्थसमर्पणक्षमवाक्यवक्ता । प्रगल्भः असभाकम्पवक्ता । स्मृतिमतिबलवान् । स्मृतिः अतीतविषया धीः, मतिः आगामिगोचरा, बलं शरीरेन्द्रियदाढर्यम्, तद्वान् । उदग्रः चित्तोन्नतिमान् । स्ववग्रहः अकार्यात् सुखनिवार्यः । कृतशिल्पः हस्त्यश्वप्रहरणविद्यानिपुणः । व्यसने दण्डनायी शत्रोर्दैवमानुषव्यसनावसरे स्वसैन्यं तद्विजयाय प्रेषयिता आत्मनो व्यसनावसरे स्वसैन्यं रक्षिता च । उपकारापकारयोर्दृष्टप्रतिकारी शास्त्रदृष्टप्रतिकारविधायी । ह्रीमान् लज्जावान्, अकार्यानुष्ठानविमुख इत्यर्थः । आपत्प्रकृत्योर्विनियोक्ता । आपत् दुर्भिक्षम्, प्रकृतिः स्वास्थ्यं सुभिक्षम्, तयोर्धान्यादिकं विनियोक्ता, सुभिक्षे संचित्य दुर्भिक्षे विनियोक्तेत्यर्थः । अथवा आपदि प्रजायां च धान्यादिविनियोक्ता । दीर्घदूरदर्शी दीर्घकालसंबद्धमर्थं प्रज्ञया द्रष्टुं दूरदेशसंबद्धमर्थं चारचक्षुषा द्रष्टुं च शीलमस्येति तथाभूतः । देशकालपुरुषकारकार्यप्रधानः । स्वसैन्यस्य युद्धोचितो देशः, कालः, पुरुषकारः उत्साहादिशक्तिलक्षणः, कार्यं च प्रधानं यस्य स तथाभूतः । संधिविक्रमत्यागसंयमपणपरच्छिद्रविभागी । विभागो विविच्य ज्ञानम्, तद्वान् विभागी । स संध्यादिषु प्रत्येकं संबध्यते । संधिविभागी संधिप्रयोगाभिज्ञः । विक्रमविभागी प्रकाशयुद्धादिप्रयोगज्ञः । त्यागविभागी यथादेशकालपुरुषदानसमर्थः । संयमपणविभागी प्रजानुपपीडया गूढकोशाभिसंहरणप्रवीणः । परच्छिद्रविभागी शत्रोश्छिद्रं पानमृगयादिव्यसनमुपलभ्य तीक्ष्णरसादिप्रयोगसमर्थः । संवृतः संरक्षिताभयस्थानः गूढमन्त्रश्च । अदीनाभिहासी दीनानभिहसितुं शीलमस्य नास्तीति तथाभूतः, गभीरहासी वा । अजिह्मभ्रुकुटीक्षणः अवक्रसौम्यवीक्षणः । कामादिसप्तकहीनः । तत्र स्तम्भः उत्सेकः, चापलं अविवेकानुष्ठानम्, उपतापः प्रजाद्रोहः । शेषं प्रतीतम् । शक्तः प्रियंवदः । स्मितोदग्राभिभाषी स्मितपूर्वोदाराभिभाषणशीलः । वृद्धोपदेशाचारः विद्यावृद्धोपदेशानुसार्यनुष्ठानः । इत्यात्मसंपत् । श्रीमूला.

## चाणक्यसूत्राणि

अविनीतः स्वामी गर्ह्यः

**[1]अविनीतस्वामिलाभादस्वामिलाभः श्रेयान् ॥**
**[2]नीतिशास्त्रानुगो राजा ॥**

## चाणक्यसारसंग्रहः

प्राज्ञत्वादयः स्वामिगुणाः

**[3]प्राज्ञः स्निग्धो महीपालश्छिद्रकर्मविवर्जितः ।**
**विदूरे च परित्यागी समं दुःखं समं सुखम् ॥**

पञ्चलक्षणः स्वामी

**[4]पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।**
**शास्त्रे बोद्धा रणे योद्धा नृपतेः पञ्चलक्षणम् ॥**

(१) चासू. १४. (२) चासू. ४८.
(३) चासा. १।५३. (४) चासा. २।५.

## याज्ञवल्क्यः

महोत्साहादिगुणवान् चातुर्विधः स्वामी

[1]महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्शुचिः ॥

(१) न चैवं सति ग्रहाधीनत्वात् पातोच्छ्राययो-र्दैवतन्त्र एव राजा स्यात् । किं तर्हि ?– महोत्साह इति । स्यादिति शेषः । महोत्साहः विजिगीषुः । स्थूललक्षः प्रभूतदाता । कृतज्ञः उपकारज्ञः, न स्वार्थैकनिष्ठः । वृद्धसेविता ज्ञानवयोवृद्धसेवी । विनीतः अनुद्धतः, विविक्तनयतया वा येन केनचिदनेयः । सत्त्वसंपन्नः सर्वथाऽविषादी । कुलीनः महाकुलप्रसूतः । नन्वेतदशक्यम्, दैवाधीनत्वात् । सत्यम् । कुलीननृपत्यनुकारी स्यादित्यर्थः । सत्यवाक् सत्यसंधः । शुचिः सर्वोपधाशुद्धः । विश्व.

(२) साधारणान् गृहस्थधर्मानुक्त्वा इदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाह– महोत्साह इति । पुरुषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः । महानुत्साहो यस्यासौ महोत्साहः । बहुदेयार्थदर्शी स्थूललक्षः । परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः । तपोज्ञानादिवृद्धानां सेवकः । विनयेन युक्तो विनीतः । विनयशब्देनाविरुद्धः पूर्वोक्तस्नातकधर्मकलाप उच्यते 'न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्' (यास्मृ. १।१३२) इत्यादिनोक्तः । सत्त्वसंपन्नः संपदापदोर्हर्षविषादरहितः । मातृतः पितृतश्चाभिजनवान् कुलीनः । सत्यवाक् सत्यवचनशीलः । शुचिः बाह्याभ्यन्तरशौचयुक्तः । * मिता.

(३) उक्ता वर्णधर्मा ब्रह्मचारिगृहस्थधर्माश्च । इदानीं राज्ञो गृहस्थस्यापि गुणवतो जनपदपरिपालनादीन् धर्मान् वक्तुं यैर्गुणैर्युक्तः प्रजापालनयोग्यो भवति तांस्तावदाह– महोत्साह इति । महोत्साहत्वादिगुणवान्नृपो भवति । ब्राह्मणादीनां स्वकर्मस्थापनयोग्यो भवतीत्यर्थः । महोत्साहः महोद्यमः । महाविषयत्वमविहन्यमानत्वं चोत्साहस्य महत्त्वम् । यः प्रत्युपकारायोपकारिणं स्मरति स कृतज्ञः । दुर्दशामापन्नोऽपि न न्यायादपैति यः स सात्त्विकः । * अप.

(४) य एतेऽन्तरङ्गा राजधर्माः एत एव राजगुणा इत्यप्युच्यन्ते । अत एव 'षट्त्रिंशद्गुणोपेतो राजा' इत्यस्य सूत्रस्य व्याख्यानावसरे महोत्साहादयः उशनसा पठिताः । पमा. ४०५

(५) इदानीं सर्वधर्मरक्षाहेतो राज्ञो धर्मानाह– महोत्साह इत्यादि । वृद्धसेवकः त्रैविद्यवृद्धसेवी । ¶ दीक.

(६) साधारणान् गृहस्थधर्मानभिधाय वक्ष्यमाणं सप्ताङ्गं राज्यं यथायथं प्रपञ्चयन्नेव नरेन्द्रपदेन प्रक्रान्तस्य राज्ञो गृहस्थस्य विशेषधर्मानाह संपूर्णप्रकरणेन– महोत्साह इति । कुलीनः क्षत्रियकुलोत्पन्नो नराधिपो राज्याभिषिक्तः सन् महोत्साहादिः स्यादित्यर्थः । स्थूलं प्रचुरं लक्षं ब्राह्मणादिभ्यो देयत्वेनेच्छाविषयो यस्य स स्थूललक्षः । सत्यवाक् शास्त्रानभ्यनुज्ञातानृताभिधानशून्यः । ‡ वीमि.

(७) स्थूललक्ष्यः बहुदेयार्थदर्शी । तस्य च सर्वा पृथिवी वश्या भवतीत्युक्तं मत्स्यपुराणे– 'भाव्यं धर्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभृता । स्थूललक्ष्यस्य वशगा सर्वा भवति मेदिनी ॥' (मत्स्य. २२०।२८–२९) इति । ‡ राप्र. ११९

(८) स्थूललक्षः स्थूलं महत् लक्षं उद्देश्यमस्यासौ । कुलीनः कन्यादानग्रहणयोः सत्कुलसंबन्धेन कुलमर्यादारक्षणपरः । नीम. ३५

---

* राकौ. मितागतम् ।

(१) यास्मृ. १।३०९ ; विश्व. १।३०४ सेवकः (सेविता) ; मिता. ; अप. १।३०७–३०८ ; राक. १९ लक्षः (लक्ष्यः) ; रार. ३ ; पमा. ४०५ ; राप्र. ११८ राकवत् ; नीम. ३५ ; राकौ. २४५.

* शेषं विश्वगतं मितागतं च ।

¶ शेषं अपगतम् ।

‡ शेषं मितागतम् ।

'अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥

(१) अदीर्घसूत्रः सर्वथा क्षिप्रकारी । स्मृतिमान् आलोचनकः अविस्मरणशीलश्च । अक्षुद्रपरिषत्कः हंसपरिवारः । तथा च शङ्खः— 'न हंसो गृध्रपरिवारः कामं तु गृध्रो हंसपरिवारः स्यात्' इति । तथाशब्दात् प्रकृत्यन्तरग्रहणम् । धार्मिकः यथाविहितधर्मानुष्ठाता । दृढभक्तिः भक्तिग्राह्यः, यत्र वा समाश्रितः तत्राविचलितभक्तिः देवब्राह्मणगुर्वादौ च । प्राज्ञः सर्वत्र सारासारविवेकज्ञः । शूरः प्रसह्य सकलारातिमण्डलविक्षोभिता तदभिभूतश्चाविषण्णः । रहस्यवित् मित्रार्युदासीनविजिगीषुमध्यमाखिलगुप्तिप्रयुक्तिप्रचारज्ञः, अमात्यादिप्रकृतिपरीक्षाप्रकारज्ञश्च, निगूढाव्यभिचारिचारचक्षुः । अध्यात्मं वा रहस्यम्, तज्ज्ञः, प्रसंख्यानवानित्यर्थः । * विश्व.

(२) अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां च समापने यो न विलम्बते असौ अदीर्घसूत्रः । अधिगतार्थाविस्मरणशीलः स्मृतिमान् । अक्षुद्रः असद्गुणद्वेषी । अपरुषः परदोषाकीर्तनः । धार्मिकः वर्णाश्रमधर्मान्वितः । न विद्यन्ते व्यसनानि यस्यासौ अव्यसनः । व्यसनानि चाष्टादश । यथाऽऽह मनुः— 'मृगयाऽक्षा दिवा स्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाटया च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥' (मस्मृ. ७।४७–४८) इति । तत्र च सप्त कष्टतमानि । यथाऽऽह— 'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥' (मस्मृ. ७।५०–५१) इति । प्राज्ञः गम्भीरार्थावधारणक्षमः । शूरः निर्भयः । रहस्यवित् गोपनीयार्थगोपनचतुरः । * मिता.

(३) अदीर्घसूत्री प्रमितेऽर्थे निराशङ्कः । स्मृतिमान् प्रशस्तस्मृतिः । अक्षुद्रः अनल्पहृदयः, यः अल्पापकारोपकाराभ्यां कोपप्रसादवान् सः अल्पहृदयः । अपरुषः अकठोरवाक् । धार्मिकः प्रसिद्धः । पुरुषार्थविक्षेपकं द्यूतादिकं व्यसनम्, तद्रहितः अव्यसनः । प्राज्ञशूरौ प्रसिद्धौ । रहस्यवित् आत्मज्ञः मन्त्रज्ञः पररन्ध्रज्ञो वा । अप.

(४) अचिरक्रियः अदीर्घसूत्रः । इत्यादिलक्षणं प्रशंसापरम्, स्मृतिपुराणादौ सपापनृपस्य नरकविधानात् । अभिषेककाले प्रथमपरीक्षार्थमिति बहवः । रार. ३

(५) स्मृतिमान् राज्याद्युपयुक्तार्थाविस्मरणशीलः । अपरुषः शास्त्राननुमतपरुषाभिधानशून्यः । प्राज्ञः इतिहासादिश्रवणेन । रहस्यवित् मन्त्रणाचतुरः । † वीमि.

¶'स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥

(१) स्वरन्ध्रगोप्ता अखिलनिजव्यसनगोपनः परच्छिद्रोद्भावकश्च । एवं महोत्साहादिगुणयुक्तः स्यात्, न दैवनिक्षिप्तभरः पुण्याभिमानात् । महोत्साहादिगुणवानन्यो वाऽरिरपि कष्टत्वाच्चिन्त्यः, विपरीतश्चाऽऽरभ्य इति नयसंक्षेपः । तद्यथा— 'अराजबीजी लुब्धः क्षुद्रपर्षत्को विरक्तप्रकृतिरन्यायवृत्तिरयुक्तो व्यसनी निरुत्साहो यत्किंचनकार्यगतिरननुबन्धो नित्यापकारी च' (कौ. ६।१) इत्यादि । सर्वथा च तथा (च ?) कुर्यात्

---

* दीक. विश्वगतं मितागतं च ।

(१) यास्मृ. १।३१० ; विश्व. १।३०५ क्षुद्रोऽपरुषस्तथा (क्षुद्रपरिषत्तथा) ऽव्यसनश्चैव (दृढभक्तिश्च) ; मिता. ; अप. १।३०८–३०९ सूत्रः (सूत्री) ; राक. १९ ; रार. ३ ; पमा. ४०५ नक्षुद्रो (नक्षुधो) ; राप्र. ११८ ; नीम. ३५ ; राकौ. २४६.

* नीम. मितागतम् । राकौ. मितावत् । राप्र. मिता-अप-व्याख्यानयोरनुवादः ।

† शेषं मितागतम् ।

¶ 'आन्वीक्षिक्याम्' इत्यादिशेषश्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजशिक्षा' इत्यस्मिन् प्रकरणे (पृ. ८७७) द्रष्टव्यः ।

(१) यास्मृ. १।३११.

यथाऽखिलकृत्य(?भृत्य)वर्गो महोत्साहादिगुणसंपद्वैपरीत्यादारम्यः स्यात्, स्वयं च यथाऽखिलमहीमण्डलस्वीकरणक्षमो विजिगीषुरनन्यारभ्यो याता परमण्डलोच्छित्तिसमर्थः स्यादिति । अन्वयव्यतिरेकमूलत्वाच्च स्मृतेरनुक्तमुक्तं वाऽखिलं विविच्य यथार्हं व्याख्येयम् । यतश्च नराधिप एवंगुणः स्यात् ततश्च प्रतिष्ठितराज्यस्यापि गुणार्जनमविरुद्धम् । विश्व.

(२) स्वरन्ध्रगोप्ता, स्वस्य सप्तसु राज्याङ्गेषु यत् परप्रवेशद्वारशैथिल्यं तत् स्वरन्ध्रम्, तस्य गोप्ता प्रच्छादयिता । * मिता.

(३) एवकारैर्बहूनामेषामावश्यकत्वम्, तथाशब्दाभ्यां चकारैश्च ऋष्यन्तरोक्तानां राज्ञोऽन्तरङ्गधर्माणां समुच्चयो दर्शितः । एतेन स्वामिनो राज्याङ्गस्य प्रपञ्चनं कृतमित्यवधेयम्। † वीमि.

## नारदः

स्वातन्त्र्यं स्वामिलक्षणम्

[१]अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ॥

(१) 'स्वातन्त्र्यमप्रतिहतेच्छत्वम्, राजा महीपतिः' इति कामधेनौ स्पष्टम् । रार. ६८

(२) 'अस्वतन्त्राः प्रजाः सर्वाः' इति सर्वग्रहणं वर्णाश्रमान्तरालप्रभवोपसंग्रहार्थम् । स्वतन्त्रो राजा धर्मानुशासने शिष्टपरिपालने दुष्टनिग्रहे च । तासामस्वतन्त्रता च तदनुशासने स्थानम् । नाभा.

## बार्हस्पत्यसूत्रम्

स्वामी जितेन्द्रियः

[२]आत्मवान् राजा ॥

## कात्यायनः

विनीतत्वसत्यधर्मपरत्वादयः स्वामिगुणाः

[१]विनीतः शास्त्रसंपन्नः कोशशौर्यसमन्वितः ।
ब्रह्मण्यो दानशीलः स्याद्धर्मसत्यपरो नृपः ॥

[२]स्तम्भोपतापपैशुन्यचापलक्रोधवर्जितः ।
प्रगल्भः सन्नतोदग्रः संभाषी प्रियदर्शनः ॥

(१) स्तम्भः पराप्रणतिः । उपतापः अत्र प्रजापीडनम् । पैशुन्यं परदोषाविष्करणम् । प्रगल्भः अपरिषद्भीरुः । राक. २०

(२) सन्नतोदग्रः सत्सु नतः असत्सु अधृष्यः । संभाषी स्मितपूर्वाभिभाषी । * राप्र. १२१

[३]वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

## उशना

राज्ञो गुणाः षट्त्रिंशत्

[४]षट्त्रिंशद्गुणोपेतो राजा ॥

## बृहत्पराशरः

राज्ञः उत्साहादिगुणैः पूज्यता

[५]नित्यमुत्साहयुक्तश्च विजिगीषुरुदायुधः ।
सदालंकारयुक्तश्च सदैव प्रियभाषकः ॥
सदा प्रियहिते युक्तः पूज्यो नाकेऽप्यसौ नृपः ॥

## हरिवंशः

सूतमागधकृतं पृथुराजगुणवर्णनम्

[६]सत्यवाग्दानशीलोऽयं सत्यसंधो नरेश्वरः ।
श्रीमान् जैत्रः क्षमाशीलो विक्रान्तो दुष्टशासनः ॥

---

* अप०, दीक., राप्र. मितागतम् । राकौ. मितानुवादः ।

† शेषं मितागतम् । इदं व्याख्यानम् 'महोत्साहः' इत्यादिश्लोकत्रयमभिलक्ष्य वर्तते ।

(१) नासं. २।२९; नास्मृ. ४।३३; मभा. ११।१; गौमि. ११।१; रार. ५,६८; राप्र. ११७.

(२) बासू. १।१.

ध. को. १४८

* शेषं राकवत् ।

(१) राक. २० द्धर्मसत्य (त्सत्यधर्म); राप्र. १२०.

(२) राक. २०; राप्र. १२०.

(३) राक. २०; राप्र. १२०–१२१.

(४) पमा. ४०५.

(५) बृपसं. १२।२०–२१.

(६) हरि. १।५।३९–४१.

धर्मज्ञश्च कृतज्ञश्च दयावान् प्रियभाषणः ।
मान्यो मानयिता यज्वा ब्रह्मण्यः सत्यसंगरः ॥
शमः शान्तश्च निरतो व्यवहारस्थितो नृपः ॥
[1]राजा षाड्गुण्यवक्ता वै राजा मन्त्रार्थतत्त्ववित् ॥

## विष्णुधर्मोत्तरपुराणम्

राष्ट्रप्रवरैर्वरणीयस्वामिलक्षणानि

पुष्कर उवाच–
[2]सर्वलक्षणलक्षण्यो विनीतः प्रियदर्शनः ।
अदीर्घसूत्री धर्मात्मा जितक्रोधो जितेन्द्रियः ॥

राजलक्षणपूर्वकं तदीयपुरोहितादिपदार्थलक्षणानि च विष्णुधर्मोत्तरादावुक्तानि । न चोपादानकाले लक्षणानामुपादेयपरिच्छेदार्थत्वात् उपादातृलक्षणकथनं व्यर्थमिति शङ्क्यम् , स्वयमीदृशलक्षणो भवेदिति तं प्रत्यपि विधिसंभवात् । यद्वा, पूर्वराजमरणोत्तरं पुरोहितसांवत्सराभ्यामितरप्रजाभिर्वा कस्यचित् राजाधिकारे संपादि(? पादयि)तव्ये बहूनां च तत्प्रसक्तौ य एव विहितलक्षणसंपन्नः तस्यैव तत् संपादनमुचितमित्येतदर्थं तदिति बोध्यम् । तत्र राजलक्षणं विष्णुधर्मोत्तरे–– 'पुष्कर उवाच– सर्वलक्षण० ' । प्रियदर्शनः प्रियं दर्शनं यस्य सः । अस्य राज्ञो दर्शने जाते अन्यस्य इष्टं भवति । अदीर्घसूत्रः अवश्यकार्याणां कर्मणामारम्भे आरब्धानां च समाप्तौ योऽत्यन्तं न विलम्बते सः । राकौ. २४३

[3]स्थूललक्षो महोत्साहः स्मितपूर्वाभिभाषकः ।
सुरूपः कुलसंपन्नः क्षिप्रकारी महाबलः ॥

स्थूललक्षः बह्वर्थदर्शी । महोत्साहः महान् उत्साहः पुरुषार्थसाधनकर्मारम्भेऽध्यवसायः यस्य सः । राकौ. २४३

[4]ब्रह्मण्यश्चाविसंवादी दृढभक्तिः प्रियंवदः ।
अलोलुपः संयतवाग् गम्भीरः प्रियदर्शनः ॥

अविसंवादी ब्राह्मणेषु । दृढभक्तिरिति ब्राह्मणादिष्वेव । राकौ. २४३

[1]नातिदण्डो न निर्दण्डश्चारचक्षुरजिह्मगः ।
व्यवहारे समः प्राप्ते पुत्रस्य रिपुणा सह ॥
[2]रथे गजेऽश्वे धनुषि व्यायामे च कृतश्रमः ।
उपवासतपःशीलो यज्ञयाजी गुरुप्रियः ॥
मन्त्रिसांवत्सराधीनः समरेष्वनिवर्तकः ।
कालज्ञश्च कृतज्ञश्च नृविशेषज्ञ एव च ॥

सांवत्सरः ज्योतिर्वित् । कृतज्ञः परकृतोपकर्म न विस्मरति इति सः । राकौ. २४३–२४४

[3]पूज्यं पूजयिता नित्यं दण्ड्यं दण्डयिता तथा ।
षाड्गुण्यस्य प्रयोक्ता च शक्त्युपेतस्तथैव च ॥

षट् गुणाः संधिविग्रहयानासनद्वैधीभावसंश्रयाश्च षाड्गुण्यं परिकीर्तितम् । राकौ. २४४

[4]उक्तैरनुक्तैस्तु गुणैरनेकै-
रलंकृतो भूमिपतिश्च कार्यः ।
संभूय राष्ट्रप्रवरैर्यथावत्
राष्ट्रस्य रक्षार्थमदीनसत्त्वः ॥

पुष्कर उवाच–
[5]एवं गुणगणाकीर्णं वरयेयुर्नराधिपम् ।
संभूय राष्ट्रप्रवराः क्षत्रियं तु कुलोद्गतम् ॥

## अग्निपुराणम्

साधुस्वामिलक्षणानि

[6]शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता ।
उत्साहो वाग्मितौदार्यमापत्कालसहिष्णुता ॥

---

(१) हरि. २।३९।२.
(२) विध. २।३।१ ; राकौ. २४३ सूत्री ( सूत्रो ).
(३) विध. २।३।२ ; राकौ. २४३ कुल ( शील ).
(४) विध. २।३।३ ; राकौ. २४३.

(१) विध. २।३।४; राकौ. २४३ प्राप्ते पुत्रस्य ( शास्ति पुत्रेण ).
(२) विध. २।३।५–६ ; राकौ. २४३–२४४.
(३) विध. २।३।७ ; राकौ. २४४ पूज्यं ( पूज्ये ) दण्ड्यं ( दण्ड्ये ).
(४) विध. २।३।८ ; राकौ. २४५ पतिश्च (पतिस्तु).
(५) विध. २।४।१.
(६) अग्नि. २३८।४–५.

प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता ।
कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ॥

[1]कुलं शीलं वयः सत्त्वं दाक्षिण्यं क्षिप्रकारिता ॥
अविसंवादिता सत्यं वृद्धसेवा कृतज्ञता ।
दैवसंपन्नता बुद्धिरक्षुद्रपरिवारता ॥
शक्यसामन्तता चैव तथा च दृढभक्तिता ।
दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षिता ॥
विनीतत्वं धार्मिकता साधोश्च नृपतेर्गुणाः ॥

[2]वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान् वशी ॥
नेता दण्डस्य निपुणः कृतशिल्पपरिग्रहः ।
पराभियोगप्रसहः सर्वदुष्टप्रतिक्रिया (? यः) ॥
परवृत्तान्तवेत्ता च संधिविग्रहतत्त्ववित् ।
गूढमन्त्रप्रचारज्ञो देशकालविभागवित् ॥
आदाता सम्यगर्थानां विनियोक्ता च पात्रवित् ।
क्रोधलोभभयद्रोहदम्भचापलवर्जितः ॥
परोपतापपैशुन्यमात्सर्येर्ष्यानृतातिगः ।
वृद्धोपदेशसंपन्नः शक्तो मधुरदर्शनः ॥
गुणानुरागस्थितिमानात्मसंपद्गुणाः स्मृताः ॥

## कालिकापुराणम्

स्वामिना अभ्यसनीया गुणाः

[3]धृतिः प्रागल्भ्यमुत्साहो वाक्पटुत्वं विवेचनम् ।
दक्षत्वं धारयिष्णुत्वं दानं मैत्री कृतज्ञता ।
दृढशासनता सत्त्वं शौचं मतिविनिश्चयम् ॥
पराभिप्रायवेदित्वं चारित्रं धैर्यमापदि ।
क्लेशधारणशक्तिश्च गुरुदेवद्विजार्चनम् ॥
अनसूया ह्यकोपित्वं गुणानेतान्नृपोऽभ्यसेत् ॥

(१) अग्नि. २३९।२–५.

(२) अग्नि. २३९।६–११.

(३) कालिका. ८७।३०–३२.

## कामन्दकीयनीतिसारः

स्वामिनः संपत्तिहेतवो गुणाः

*[1]शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता ।
उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता ॥
प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता ।
कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ॥

गुणवदमात्यादीनिच्छता स्वामिना प्रथममात्मना संपादनीया गुणा आभिगामिकाः

[2]आत्मानमेव प्रथममिच्छेद्गुणसमन्वितम् ।
कुर्वीत गुणसंपन्नस्ततः शेषपरीक्षणम् ॥

(१) तत्रेश्वरप्रकृतेः प्रधानत्वात् स्वामिनमधिकृत्याऽऽह– अत्मानमित्यादि । जम.

(२) स्वामिनाऽऽत्मगुणसंपत्संपादनमेव प्रथमं विधेयमिति दर्शयन्नाह– आत्मानमिति । अमात्यादिप्रकृतिभ्यः प्रथमं स्वशरीरमेव गुणसमन्वितं वक्ष्यमाणगुणोपेतं इच्छेत् । वक्ष्यमाणो गुणसमूह आत्मसंपदुक्ता आभिगामिकाश्च गुणाः एते समुदिता एकत्र स्वामिप्रकृतिरितीर्यते, न क्षत्रियकुमारशरीरमात्रमेव । अत इदं घटते– 'सप्ताङ्गस्यास्य लाभाय यतेत' (कानी. १।१९) इति । राजान्वयः कुमार आत्मसंपदुक्तगुणमयी या स्वामिप्रकृतिः तया सह सप्ताङ्गराज्यस्य लाभाय यतेत यत्नं कुर्वीतेति । गुणसंयुक्त इति लब्धात्मलाभः तदनन्तरं शेषपरीक्षणं अवशिष्टप्रकृतीनां परीक्षणं निरूपणं कुर्यात् गुणसंपत्संपादनार्थमिति । उनि.

[3]साधु भूतलदेवत्वं दुर्धार्यमकृतात्मभिः ।
आत्मसंस्कारसंपन्नो राजा भवितुमर्हति ॥

(१) किमर्थं पुनर्गुणयुक्तः स्यादित्याह– साधु भूतलदेवत्वमित्यादि । यस्मात् पृथिवीतले देवो राजा,

* अस्य श्लोकद्वयस्य व्याख्यानसंग्रहः 'इन्द्रियजयः' इत्यस्मिन् प्रकरणे (पृ. ९२४–९२५) द्रष्टव्यः ।

(१) कानी. १।२३–२४; नीम. ३२.

(२) कानी. ४।१; उनि. संपन्न (संयुक्त).

(३) कानी. ४।४–५.

तस्य देवत्वं स्वामिसंपत्, सा च लोके साधुर्भवति । सा चानात्मवद्भिर्दुःखेन धार्यते । तस्मात् स्वपरमण्डलकार्यहेतुत्वादात्मसंस्कारसंपन्नो राजा भवितुमर्हतीति । जम.

( २ ) एतदेव समर्थयन्नाह– साध्विति । शोभनतरं भूतलदेवत्वं परमैश्वर्यम्, किंतु दुर्धार्यं दुर्वहं अकृतात्मभिः गुणैरसंस्कृतात्मभिः । उनि.

**लोकाधाराः श्रियो राज्ञां दुरापा दुष्परिग्रहाः ।**
**तिष्ठन्त्याप इवाऽऽधारे चिरमात्मनि संस्कृते ॥**

( १ ) लोकाधाराः लोकपरिपोषिकाः । दुष्परिग्रहाः प्राप्ता अपि दुःखेन परिपाल्यमानत्वात् । संस्कृते गुणवति । जम.

( २ ) आत्मसंपदं समर्थयन्नाह– लोकेति । राज्ञां श्रियः आपः पानीयानि इव दुरापाः । ता यथा दुःखेनाऽऽनुकूल्ये महाह्रदे प्राप्यन्ते, दुष्परिग्रहाः दृढतरसेत्वादिभिः परिगृह्यन्ते, तथा श्रियोऽपि दुरापा दुष्परिग्रहाश्च । आपः (इव ?) संस्कृते आधारे यथा चिरं तिष्ठन्ति तथा विजिगीषोर्गुणसंस्कृते आत्मनि श्रियस्तिष्ठन्ति, नान्यथेति आत्मसंपदादिगुणैरात्मा संस्कार्य इति । उनि.

**[1]कुलं सत्त्वं वयः शीलं दाक्षिण्यं क्षिप्रकारिता ।**
**अविसंवादिता सत्यं वृद्धसेवा कृतज्ञता ॥**

( १ ) ते च गुणा आश्रितात्मोपकारिभेदात् द्विविधाः । तत्राऽऽश्रितोपकारिण उच्यन्ते– कुलमित्यादिना श्लोकत्रयेण । तत्र राजबीज्ययमिति कुलीनः सर्वैरेवाऽऽश्रयेप्सुभिरवगम्यते । तथा व्यसनेऽभ्युदये चायमविकारीति सत्त्ववान् । युवा साध्योपायकर्मसमर्थः प्रतिष्ठितश्चेति तदवस्थोऽभिगम्यते, न तु बालो वृद्धो वा, अप्रतिष्ठानादसामर्थ्याच्च । सुस्वभावोऽयमिति शीलवान् । अनुकूलोऽयमिति दाक्षिण्यवानाश्रीयते । क्षिप्रकारिता अदीर्घसूत्रता । उत्साहगुणत्वात् पुनरुपादानं प्राधान्यार्थम् । तथाहि कालानतिपातित्वात् कार्यार्थिभिरभिगम्यते । अविसंवादिता सत्यमिति । यत् ब्रवीति तदवश्यं करिष्यतीति सत्यवानाश्रीयते । तत्र सत्यवागपि कश्चिच्छलेनातिसंधत्ते, यथा ‘ सुवर्णं ते दास्यामि ’ इति कर्षं प्रतिज्ञाय माषं ददाति । नैवमयमित्यविसंवादी । साङ्कुशोऽयमिति वृद्धोपसेवी समाश्रीयते । उपकृतमत्र न नश्यतीति कृतज्ञोऽभिगम्यते । जम.

( २ ) आत्मा संस्क्रियते यैराभिगामिकगुणैस्तानभिधातुमाह– कुलमिति । कुलं उभयकुलविशुद्धिः आभिजात्यम् । शीलं सुस्वभावता । वयः यौवनम् । सत्त्वं व्यसनेऽभ्युदये च यदविकारि ( इति सत्त्वमनुगृह्यते ? ) । दाक्षिण्यं सर्वत्र सानुकम्पत्वम् । क्षिप्रकारिता अदीर्घसूत्रत्वम् । अविसंवादिता वाक्छलेन विरुद्धसंवादरहितत्वम् । यथा– ते ‘ सुवर्णं दास्यामि ’ इति षोडशमाषकपरिकल्पितसुवर्णाख्यप्रतिमानमितं सुवर्णं न ददाति, वाक्छलेन सुवर्णजातिमात्रं ददाति, तादृशो न यस्तस्य भावः । सत्यं अमृषावादः । वृद्धसेवा विद्यावृद्धाराधनतत्परता । कृतज्ञता कृतस्य प्रत्युपकारतत्परता । उनि.

**[1]दैवसंपन्नता बुद्धिरक्षुद्रपरिवारता ।**
**शक्यसामन्तता चैव तथा च दृढभक्तिता ॥**

( १ ) स्वल्पेनापि पौरुषेणाप्रतिहतार्थसिद्धित्वात् दैवसंपन्नो दैवोपहतैः सुतरामभिगम्यते । मन्त्रशक्तियुक्तत्वान्न परेणातिसंधीयत इति बुद्धिमानाश्रीयते । अदुष्टपरिवारत्वात् सेव्योऽयमित्यक्षुद्रपरिवारो गुणवद्भिराश्रीयते । दुर्बलसामन्तत्वादयमनुच्छेद्य इति शक्यसामन्तः आश्रयेप्सुभिरभिगम्यते । स्थिरस्नेहोऽयं न हरिद्रारागवत् विरज्यत इति दृढभक्तिः सद्भिराश्रीयते । जम.

( २ ) दैवसंपन्नता, यद्यदिच्छति तत्तत् संपद्यते यस्य स दैवसंपन्नः, तस्य भावः । बुद्धिः अष्टगुणा प्रज्ञा । अक्षुद्रपरिवारता अक्षुद्रपरिजनत्वम् । शक्यसामन्तता, शक्याः वशे कर्तुं सामन्ताः संसक्तमण्डलमर्यादाभूम्यनन्तरा अरयः यस्य, तद्भावः । दृढभक्तिता स्थिरानुरागत्वम्, प्रतिपन्ननिर्व्यूढिरित्यर्थः । उनि.

---

(१) कानी. ४।६ ; उनि. सत्त्वं वयः शीलं ( शीलं वयः सत्त्वं ).

(१) कानी. ४।७.

[१]दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षता ।
विनीतता धार्मिकता गुणाः साध्वाभिगामिकाः ॥

( १ ) पूर्वोत्पन्नकार्यविभागज्ञानेन दीर्घकालभाव्यर्थानुमानात् दीर्घदर्शी । स ह्यनागतवस्त्वपेक्षया प्रवर्तते, न सहसेत्यभिगम्यते । शौर्यादिगुणोपेतत्वादुत्साहवान् सर्वैराश्रीयते । तथा शुचिः, धर्मादिषु शुद्धचित्तत्वात् । महेच्छोऽयमिति स्थूललक्षो विजिगीषुरभिगम्यते । विनीतता जितेन्द्रियता । अन्यथा ह्यविनीत इत्याश्रितैरपि त्यज्यते, किमुताऽऽश्रयेप्सुभिः अभि( ? नाभि )गम्यते । धार्मिकः स्वधर्माचरणान्नोत्पथं प्रतिपद्यत इति साधुभिरभिगम्यते । साध्वाभिगामिका इति । सुष्ठु अभिगमाय प्रभवन्ति । जम.

( २ ) दीर्घदर्शित्वं दीर्घे देशेन कालेन च व्यवहितं प्रज्ञाचक्षुषा चारचक्षुषा च द्रष्टुं शीलं यस्य तद्भावः । उत्साहः शौर्यादिगुणसंयुक्तत्वम् । शुचिता परदारादिनिरीहा । स्थूललक्ष्यता, दित्सुः स्थूलमेव लक्ष्यं संख्यादिभिः करोति, न कृशं स्वल्पमित्यर्थः । साध्वाभिगामिकाः संश्रयणीयत्वकारकाः । बहुभिराश्रितो भवतीति भावः । उनि.

[२]गुणैरेतैरुपेतः सन् सुव्यक्तमभिगम्यते ।
तथा तु कुर्वीत यथा गच्छेल्लोकाभिगम्यताम् ॥

( १ ) यदाह— गुणैरिति । तथा कुर्वीत गुणाधानं तु प्राधान्येन कुर्यात्, यथा लोकेनाभिगमनीयः स्यात् । जम.

( २ ) एतदेव दर्शयितुमाह— गुणैरिति । गुणैरेतैः अनन्तरोक्तैः उपेतः सन् सुव्यक्तं निश्चयेन परिजनैरभिगम्यते । तथा च कुर्वीत यथा गच्छेल्लोकाभिगम्यताम् । लोकैरभिगतो राजा भवेत्, नान्यथेति । उनि.

स्वामिनः परिवारो गुणवानेवेष्टः

[३]प्रख्यातवंशमक्रूरं लोकसंग्राहिणं शुचिम् ।
कुर्वीताऽऽत्महिताकाङ्क्षी परिवारं महीपतिः ॥

( १ ) प्रख्यातवंशं कुलीनम् । लोकसंग्राहिणं सापेक्षम् । परिवारं सेवकम् । रार. ४६

( २ ) अक्षुद्रपरिवारतामाह— प्रख्यातवंशमित्यादि । अक्रूरं अपापाशयम् । लोकसंग्राहिणं गुणवतामवकाशदायिनम् । शुचिं उपधाशुद्धम् । कुर्वीत परिवारम्, यथोदितगुणचतुष्टययुक्तस्याक्षुद्रत्वात् । जम.

( ३ ) आभिगामिकैर्गुणैरभिगतोऽपि परिवार एवंविधः कार्यः, नान्यथेति दर्शयन्नाह— प्रख्यातेति । प्रख्यातो वंशः सोमसूर्यादिर्यस्य तम् । अक्रूरं अहिंस्रम् । लोकसंग्राहिणं सुजनत्वादपरलोकसंग्रहणशीलम् । शुचिं अपुंश्चलं अस्तेनं च । एवंभूतं परिवारं कुर्यान्महीपतिरात्महिताकाङ्क्षी । यस्तु विपरीतं करोति स नाऽऽत्मनो हित इति । उनि.

[१]दुष्टोऽपि भोग्यतामेति परिवारगुणैर्नृपः ।
न दुष्टपरिवारस्तु व्यालाक्रान्त इव द्रुमः ॥

( १ ) क्षुद्राक्षुद्रपरिवारताया दोषगुणावाह— दुष्टोऽपीत्यादिना श्लोकत्रयेण । दुष्टपरिवारस्त्विति क्षुद्रपरिवार इत्यर्थः । जम.

( २ ) गुणवदगुणपरिवारे गुणं दोषं च दर्शयन्नाह— दुष्ट इति । दुष्टोऽपि नृपो गृध्र इव भोग्यतां आश्रयतां एति हंससमपरिवारगुणैः । न दुष्टपरिवारस्तु । गृध्रपरिवार इव हंससमोऽपि व्यालाक्रान्तः आशीविषपरिवेष्टितः चन्दनद्रुम इव भोग्यतां नैति । तस्मात् सुपरिवारः स्यात् । उनि.

[२]निरुन्धानाः सतां मार्गं भक्षयन्ति महीपतिम् ।
दुष्टात्मानस्तु सचिवास्तस्मात्सुसचिवो भवेत् ॥

( १ ) मार्गमिति प्रवेशम् । भक्षयन्तीति । तमवगृह्य दुष्टात्मानः स्वार्थं कुर्वन्तीत्यर्थः । जम.

( २ ) एतदेव समर्थयन्नाह— निरुन्धाना इति । सतां सत्पुरुषाणां विजिगीषुमभिगच्छतां मार्गं सेवान्तरद्वारैः निरुन्धानाः आसेवमानाः प्रतिबन्धकत्वेन । भक्षयन्ति महीपतिमिति । उत्पादकसत्पुरुषशून्यं महीपतेः समुदयं

---

(१) कानी. ४।८ ; उनि. लक्षता ( लक्ष्यता ).
(२) कानी. ४।९.
(३) कानी. ४।१० ; रार. ४६.

(१) कानी. ४।११ ; रार. ४६ दुष्टो ( क्रूरो ) पू.
(२) कानी. ४।१२–१३.

कोशं भक्षयन्ति । समुदयभक्षणात् महीपतिरुपचारात् भक्षितो भवति । दुष्टात्मानस्तु । दुष्टाः सचिवाः इति अविशुद्धकर्मामात्याः न योग्याः । तस्मात् सुसचिवः विशुद्धचित्तकर्मामात्यः भवेदिति । उनि.

विभूतीः परमाः प्राप्य सतां संभोग्यतामियात् ।
यासु सन्तो न तिष्ठन्ति ता वृथैव विभूतयः ॥

( १ ) परमाः उत्कृष्टाः, स्वपरोपकारहेतुत्वात् । संभोग्यतां व्रजेत् दुष्टपरिवारत्यागेन । जम.

( २ ) सतां मार्गनिरोधे कुसचिवकृते विभूतिवैफल्यं दर्शयन्नाह– विभूतीरिति । विभूतीः विभवान् प्राप्य । परमाः उत्कृष्टाः । सतां सत्पुरुषाणां संभोग्यतां नयेत् । यासु विभूतिषु सन्तो न तिष्ठन्त्युपभोक्तुं ता वृथैव निष्फलाः विभूतय इति । उनि.

*'असद्भिरसतामेव भुज्यन्ते धनसंपदः ।
फलं किम्पाकवृक्षस्य ध्वाङ्क्षा भक्षन्ति नेतरे ॥

स्वामिनः आत्मसंपत्

'वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान् वशी ।
नेता दण्डस्य निपुणः कृतविद्यः स्ववग्रहः ॥

( १ ) आत्मोपकारिणो गुणानाह– वाग्मीत्यादिना श्लोकपञ्चकेन । वाग्मी वाक्सौष्ठवयोगान्न स्वपरैरतिसंधीयते । प्रगल्भः सदसि निगृह्य वक्ता । स्मृतिमान् अविस्मरणशीलः । बुद्धिगुणत्वात् पुनरुपादानमाभिगामिकात्मगुणयोरुभयोरप्यङ्गभावं प्रतिपद्यते बुद्धिरिति ज्ञापनार्थम् । उदग्रः महाप्रमाणः परेषामनभिभवनीयो भवति । बलवान् युद्धाध्वलङ्घनादिक्रियासमर्थः । वशी जितेन्द्रियः । विनीते( ? नीतते)ति सिद्धे पुनर्वचनमुभयत्र अङ्गभावप्रतिपत्त्यर्थम् । नेता दण्डस्येति । स्वव्यसने परव्यसने वा चतुरङ्गस्य बलस्य प्रयोक्ता । निपुणः पण्यादिव्यवहारेषु गीतनृत्तादिषु वा । कृतविद्यः शिक्षितशास्त्रः । स्ववग्रहः प्रमादादकार्यप्रवृत्तः सुखेन निवर्त्यते । जम.

( २ ) स्वामिप्रकृतिसंबन्धिनामाभिगामिकगुणानां स्वरूपं गुणैरुत्कृष्टानामभिगच्छतां कर्मसचिवादीनां च प्रसङ्गात् स्वरूपमभिधाय प्रस्तुतामात्मसंपदमभिधातुमाह– वाग्मीति । वाग्मी प्रशस्तवाक् । प्राशस्त्यं च वाचां ललितमधुरैरल्पैरेवाक्षरैर्बह्वर्थप्रतिपादनम् । प्रगल्भः अपर्षद्भीरुः, सुरसदस्यपि विगृह्य वक्तीत्यर्थः । स्मृतिमान् श्रुतं दृष्टं वा वर्षशतेऽपि पृष्टो न विस्मरति । उदग्रः उद्गताग्रः प्रांशुरित्यर्थः । बलवानिति कायबलसंपन्नः वृकोदरवत् । वशी जितेन्द्रियः इन्द्रियविषये वशो विद्यतेऽस्येति । नेता दण्डस्य वधपरिक्लेशादिकस्य प्रणेता सुविज्ञातप्रणयनाचतुरङ्गबलात्मकदण्डस्य प्रणयनाच्च । निपुणं यथा भवति तथा कृतशिल्पः अभ्यस्तकलः । स्ववग्रहः सुखेनैवानीतिप्रवृत्तोऽवगृह्यते निषिध्यते इति । उनि.

'पराभियोगप्रसहः सर्वदृष्टप्रतिक्रियः ।
परच्छिद्रान्ववेक्षी च संधिविग्रहतत्त्ववित् ॥

( १ ) पराभियोगप्रसहः न सहसा विषीदति । सर्वदृष्टप्रतिक्रियः सर्वत्रोपनिपातेऽपीदं प्रतिविधातव्यमिति निश्चितार्थः । परच्छिद्रान्ववेक्षी च, परप्रणिधानात् । संधिविग्रहतत्त्ववित्, अवस्थाया बलाबलभेदवेदनात् । जम.

( २ ) परैः शत्रुभिः कृतं अभियोगं विग्रहं सहते, साध्वसादेवोपनतो न भवति । सर्वदृष्टप्रतिक्रिय इति सर्वापायेषु दृष्टाः प्रतिक्रियाः प्रतीकाराः येन स तथा । परच्छिद्रान्ववेक्षी शत्रुच्छिद्रान्वेषणशीलः । संधिविग्रहतत्त्वविदिति षाड्गुण्यप्रयोगवित् । संधिविग्रहोपादानात् षडपि गुणा गृहीता भवन्ति । उनि.

---

* श्लोकोऽयं पुस्तकान्तरेऽत्र पठ्यते । आदर्शपुस्तके तु त्रयोदशश्लोकस्य उपाध्यायनिरपेक्षाया अन्ते उत्तरार्धे 'फलं किंपाकवृक्षस्य ध्वाङ्क्षस्तक्षति नेतरे' इति पाठभेदेन कैश्चिद्वे मुद्रितः ।

(१) कानी. ४।१३ इत्यस्य अनन्तरं पुस्तकान्तरीयः श्लोकः.

(२) कानी. ४।१४; उनि. निपुणः कृतविद्यः ( निपुणं कृतशिल्पः ).

(१) कानी. ४।१५.

[१]गूढमन्त्रप्रचारश्च देशकालविभागवित् ।
आदाता सम्यगर्थानां विनियोक्ता च पात्रवित् ॥

(१) गूढमन्त्रप्रचारः मन्त्रणकाले प्रयोगकाले च । देशकालविभागवित् अश्वबलप्रायोऽनूपदेशं वर्षासु न यायादित्यादिना । आदाता सम्यगर्थानां न्यायेनेत्यर्थः । विनियोक्ता चार्थानां पात्रवित्त्वात् । जम.

(२) गूढः अतिगुप्तः मन्त्रः पञ्चाङ्गः कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेत्येवंलक्षणो यस्य । तथा गूढप्रचारः अन्यैरविदितसंचारः परेषामसाध्यः स्यात् । देशकालविभागविदिति । देशः कोऽस्माकं युद्धाध्वसेनास्थानादेरनुकूलः कालश्च ? शत्रोः प्रतिकूलः ? इति विभागं जानाति यः सः । आदाता सम्यगर्थानां प्रजादिभ्यः शास्त्रोक्तन्यायेन, तथा विनियोक्ता च सद्व्ययकरणेन । पात्रविदिति । अर्थविनियोगे पुरुषार्थत्रयाभिसंधिना पात्राणि त्रिविधानि, धर्माभिसंधिना ब्राह्मणतपस्विक्षपणकादयश्च, अर्थाभिसंधिना मन्त्रिपुरोहितादयः अर्थोत्पादकाः, कामाभिसंधिना मनोरमाः स्त्रियः इत्येवं गुणवत्तया पात्राणि वेत्तीति । उनि.

[२]क्रोधलोभभयद्रोहस्तम्भचापलवर्जितः ।
परोपतापपैशुन्यमात्सर्येर्ष्यानृतातिगः ॥

(१) क्रोधः अस्थाने । लोभः न्यायादन्यत्र वस्तुनि । भयं अकार्यकरणादन्यत्र । द्रोहः जिघांसा । स्तम्भः मानः । चापलं अविमृश्यकारिता । परोपतापः परस्य पीडनम् । पैशुन्यं परस्परभेदनम् । मात्सर्यं परेष्वसंविभागशीलता । ईर्ष्या परगुणाक्षमा । सत्यमिति सिद्धे पुनरनृतग्रहणमुभयत्राङ्गभावप्रतिपत्त्यर्थम् । जम.

(२) क्रोधादि प्रतीतम् । परोपतापपैशुन्यमात्सर्येर्ष्यानृतानि प्रतीतानि, तान्यतिगच्छतीति । परोपतापादिभिर्वियुक्त इत्यर्थः । उनि.

(१) कानी. ४।१६; उनि. प्रचारश्च (प्रचारः स्यात्).

(२) कानी. ४।१७.

[१]वृद्धोपदेशसंपन्नः श्लक्ष्णो मधुरदर्शनः ।
गुणानुरागी मितवागात्मसंपत्प्रकीर्तिता ॥

(१) वृद्धोपदेशसंपन्नः, वृद्धोक्ताचरणात् । श्लक्ष्णः मधुरवादी । मधुरदर्शनः, भ्रूनेत्रविकाराभावात् । गुणानुरागी आश्रितेषु । मितवाक् मितभाषी । जम.

(२) अनवरतं वृद्धोपदेशैः संपन्नः वृद्धोपदेशानुष्ठानजनितसंपत्तिः । शक्त इति उत्साहशक्तिभिः समर्थ इत्यर्थः । मधुरदर्शनः, रमणीयाकृतित्वात् । गुणानुरागी गुणवत्सु कृतानुरागः । स्मितवाक् ईषद्धसितोपलक्षितवाक् । एवंपर्यायपञ्चविंशतिगुणपरिकल्पिता आत्मसंपत्तिः तया संपद्यते विजिगीषोरात्मेति । आत्मसंपत् प्रकर्षेण कीर्तिता पूर्वाचार्यैरिति । उनि.

[२]इत्यादिगुणसंपन्ने लोकयात्राविदि स्थिरे ।
निर्वृतः पितरीवाऽऽस्ते यत्र लोकः स पार्थिवः ॥

(१) अत्यन्तादरार्थं पुनः स्वामिसंपदः प्रयोजनं दर्शयति— इतीत्यादिना श्लोकद्वयेन । आदिशब्देन ह्रीमानादीनाभिभाषित्वदूरदर्शित्वादयो गुणा द्रष्टव्याः । लोकयात्राविदि, गुणसंपन्नत्वादेव । एवं च कृत्वा स्थिर इत्यपि विशेषणमर्थवद्भवति । पितरीव, प्रियहितकरणात् । जम.

(२) आत्मसंपदो माहात्म्यं दर्शयन्नाह— इत्यादीति । इत्यादिगुणसंपन्ने, लोकयात्रा लौकिको व्यवहारः, तं वेत्तीति सः, तस्मिन् लोकयात्राविदि स्थिरे अचपले निर्वृतः निर्वाणः, सकलोपतापविच्छेदात्, पितरीव जनक इव आस्ते स्थितिं करोति पुत्र इव लोकः जनपदः यत्र स पार्थिवः, नान्य इति । उनि.

आत्मसंपद्गुणैः सम्यक् संयुक्तं युक्तकारिणम् ।
महेन्द्रमिव राजानं प्राप्य लोको विवर्धते ॥

(१) युक्तकारिणम्, यथासमीहितफलसंपादनात् । जम.

(१) कानी. ४।१८; उनि. श्लक्ष्णो (शक्तो) मित (स्मित).

(२) कानी. ४।१९–२३.

(२) अमुमेवार्थं द्रढयन्नाह– आत्मेति । युक्तकारिणं विमृश्यकारिणं प्राप्य लोकः जनपदः विशेषेण वर्धते इति । उनि.

स्वामिनः प्रज्ञागुणाः

**शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।**
**ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥**

(१) बुद्ध्युत्साहावुक्तौ, तौ किंलक्षणावित्याह– शुश्रूषेत्यादि । श्रवणार्हेषु श्रोतुमिच्छा शुश्रूषा । तस्यां सत्यां श्रवणं आसेवा । श्रुतानामर्थानामवधारणं ग्रहणम् । धारणं गृहीतानामविस्मरणम् । धारितेष्वर्थेषु विविधसाध्यसाधनस्वरूपविवेकविज्ञानं अर्थविज्ञानं इति धारणानन्तरं द्रष्टव्यम् । श्लोकानुरोधात्त्वत्र न पठितम् । तथा चोक्तम्– 'शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः' (कौ. ६।१) इति । ज्ञातेष्वर्थप्राप्तस्योल्लिङ्गनं ऊहः । अयुक्तियुक्तस्य त्यजनं अपोहः । वस्तुस्वभावनिर्णयः तत्त्वज्ञानम् । जम.

(२) आभिगामिकगुणमध्ये पठिताया बुद्धेरुत्साहस्य च प्रत्येकं गुणान्तरमभिधातुं बुद्धेरष्टौ गुणानाह– शुश्रूषेति । शुश्रूषा जन्मान्तरवासनया विद्यासु गुरोः श्रोतुमिच्छा । तदनन्तरं श्रवणं चतुर्वर्गस्य करोति । श्रुतस्य ग्रहणं श्रुतक्रमेणैव व्याख्यातस्याऽऽदानम् । धारणं अवधारणं मनसि । विज्ञानमिति विविधं ज्ञानं सदसद्रूपम् । ऊहः वितर्कः 'किमिदमेवंविधं अन्यथा वा' इति संदेहः । विचार्य असतः श्रुतस्य परित्यागः अपोहः । तत्त्वज्ञानं च तत्त्वाभिनिवेश इति, तत्त्वं परमार्थः, तत्र अभिनिवेशः चित्तस्याऽऽवेशनम् । एवमेतेऽष्टावपि गुणा धियः । तथा च कौटिल्यः– 'शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः' (कौ. ६।१) इति । उनि.

स्वामिनः उत्साहलक्षणभूता गुणाः

**दाक्ष्यं शैघ्र्यं तथाऽमर्षः शौर्यं चोत्साहलक्षणम् ।**
**गुणैरेतैरुपेतः सन् राजा भवितुमर्हति ॥**

(१) दाक्ष्यं अनालस्यम् । शैघ्र्यं क्षिप्रकारिता । कश्चिदलसोऽपि त्वरयैकं कर्म कृत्वा श्राम्यति, दक्षस्त्वविश्रान्तोऽन्यच्चाऽऽरभते । अमर्षः परिभवासहिष्णुता । गुणैरेतैरुपेतः सन् राजा भवितुमर्हति, मन्त्रोत्साहशक्त्योः प्रधानत्वात् । जम.

(२) उत्साहगुणानभिधातुमाह– दाक्ष्यमिति । दाक्ष्यं कौशलम् । शैघ्र्यं क्षिप्रकारिता । अमर्षः अपकाराणां कथमप्यविस्मरणम् । शौर्यं अभीरुत्वम् । एतदुत्साहलक्षणमिति अनेन उत्साहो लक्ष्यत इति । गुणैः आभिगामिकैरात्मसंपदुक्तैरनन्तरोक्तबुद्ध्युत्साहगुणैः उपेतः अन्वितः राजा भवितुमर्हति, महाराजत्वयुक्तो भवतीत्यर्थः । उनि.

स्वामिनस्त्रयो महागुणाः

**त्यागः सत्यं च शौर्यं च त्रय एते महागुणाः ।**
**प्राप्नोति हि गुणान् सर्वानेतैर्युक्तो महीपतिः ॥**

(१) त्यागः सत्यं च शौर्यं चेति । एवं मन्यते– त्यागादाश्रयेप्सुभिस्तावदभिगम्यते, सत्यव्रतत्वात् स्वमण्डलस्य पालयिता, शौर्याच्च लब्धप्रतापः परमण्डलस्य विजेता इति सर्वमुपपन्नम् । यतः परिशिष्टानां गुणानामेतावदेव प्रयोजनम् । जम.

(२) एतेषां मध्ये गुणत्रयस्य प्राधान्यं दर्शयन्नाह– त्याग इति । स्थूललक्ष्यतालक्षणः त्यागः । सत्यं शौर्यं च यथोक्तम् । एते त्रयो महागुणाः, महागुणफलसंपादकत्वात् । एभिस्त्रिभिरेव गुणैर्युक्तः सर्वान् गुणान् प्राप्नोति । यत् सर्वैर्गुणैः कर्तव्यं तत् गुणत्रयमेव संपादयति । तथा च– 'त्यागेन विक्रमादित्यस्तथा शौर्येण शूद्रकः । सत्याद्युधिष्ठिरो राज्यं श्रूयते प्राप्तवानिति ॥' इति । उनि.

## शुक्रनीतिः

स्वामिनः सप्त गुणाः

**'अङ्गानां क्रमशो वक्ष्ये गुणान् भूतिप्रदान् सदा ।**
**यैर्गुणैस्तु सुसंयुक्ता वृद्धिमन्तो भवन्ति हि ॥**

क्रमशः अङ्गानां सदा भूतिप्रदान् शुभावहान् गुणान् वक्ष्ये । यैः गुणैः सुसंयुक्ता राजानः वृद्धिमन्तः उन्नतिशालिनः भवन्ति हि । हिशब्दः अवधारणे । शुनीटी.

(१) शुनी. १।६३.

*'पिता माता गुरुर्भ्राता बन्धुर्वैश्रवणो यमः ।
नित्यं सप्तगुणैरेषां युक्तो राजा न चान्यथा ॥
गुणसाधनसंदक्षः स्वप्रजायाः पिता यथा ।
क्षमयित्र्यपराधानां माता पुष्टिविधायिनी ॥
हितोपदेष्टा शिष्यस्य सुविद्याध्यापको गुरुः ।
स्वभागोद्धारकृद्भ्राता यथाशास्त्रं पितुर्धनात् ॥
आत्मस्त्रीधनगुह्यानां गोप्ता बन्धुस्तु मित्रवत् ।
धनदस्तु कुबेरः स्याद्यमः स्याच्च सुदण्डकृत् ॥
प्रवृद्धिमति संराज्ञि निवसन्ति गुणा अमी ।
एते सप्त गुणा राज्ञा न हातव्याः कदाचन ॥
क्षमते योऽपराधं स शक्तः सुदमने क्षमी ।
क्षमया तु विना भूपो न भात्यखिलसद्गुणैः ॥
स्वान् दुर्गुणान्परित्यज्य ह्यतिवादांस्तितिक्षते ।
दानैर्मानैश्च सत्कारैः स्वप्रजारञ्जकः सदा ॥

स्वामी द्विविधः देवतांशकः रक्षोंशश्च

दान्तः शूरश्च शस्त्रास्त्रकुशलोऽरिनिषूदनः ।
अस्वतन्त्रश्च मेधावी ज्ञानविज्ञानसंयुतः ॥
नीचहीनो दीर्घदर्शी वृद्धसेवी सुनीतियुक् ।
गुणिजुष्टस्तु यो राजा स ज्ञेयो देवतांशकः ॥

दान्तः इन्द्रियदमनशीलः । शूरः बलवान् । शस्त्रास्त्रकुशलः संग्रामविदित्यर्थः । अरिनिषूदनः शत्रुतापनः । अस्वतन्त्रः अस्वेच्छाचारी, नीतिशास्त्रानुवर्तीत्यर्थः । मेधावी बुद्धिमान् । ज्ञानविज्ञानाभ्यां सामान्यविशेषरूपाभ्यां संयुतः । नीचहीनः हीनसंसर्गरहितः । दीर्घदर्शी बहुदर्शी । वृद्धसेवी अभिज्ञजनमतानुवर्ती । सुनीतियुक् सुनयसंपन्नः । तथा गुणिभिः विद्वद्भिः जुष्टः सेवितः भवति । स राजा देवतांशकः देवांशेनावतीर्ण इत्यर्थः, ज्ञेयः । शुनीटी.

विपरीतस्तु रक्षोंशः स वै नरकभाजनः ॥

उक्तविपरीतस्तु नृपः रक्षोंशः राक्षसांशेनावतीर्णः, स वै स एव नरकभाजनः निरयभागी भवति । शुनीटी.

गुणाः पूज्यन्ते स्वामिनः, न कुलम्

*'बलवान् बुद्धिमान् शूरो यो हि युक्तपराक्रमी ।
वित्तपूर्णां महीं भुङ्क्ते स भूपो भूपतिर्भवेत् ॥
पराक्रमो बलं बुद्धिः शौर्यमेते वरा गुणाः ।
एभिर्हीनोऽन्यगुणयुङ् महीभुक्सधनोऽपि च ॥
महीं स्वल्पां नैव भुङ्क्ते द्राव राज्याद्विनश्यति ।
महाधनाच्च नृपतेर्विभात्यल्पोऽपि पार्थिवः ॥
अव्याहताज्ञस्तेजस्वी एभिरेव गुणैर्भवेत् ।
राज्ञः साधारणास्त्वन्ये न शक्ता भूप्रसाधने ॥
पूज्यस्त्वेभिर्गुणैर्भूपो न भूपः कुलसंभवः ।
न कुले पूज्यते यादृग् बलशौर्यपराक्रमैः ॥

मन्त्रिभिः स्वच्छन्दस्वामिनियमनं दुर्घटम्

'नापि व्याघ्रगजाः शक्ता मृगेन्द्रं शासितुं यथा ।
न तथा मन्त्रिणः सर्वे नृपं स्वच्छन्दगामिनम् ॥
‡निभृताधिकृतास्तेन निःसारत्वं हि तेष्वतः ।
गजो निबध्यते नैव तूलभारसहस्रकैः ॥

यथा व्याघ्रा गजाश्च मृगेन्द्रं सिंहं शासितुं न शक्ताः, तथा तेन नृपेण निभृतेषु निर्जनेषु अधिकृताः अपि सर्वे मन्त्रिणः स्वच्छन्दगामिनं स्वेच्छाचारिणं तं नृपं शासितुं न शक्ता इत्यर्थः । अतः अस्मात्कारणात् तेषु मन्त्रिषु निःसारत्वं अक्षमत्वमित्यर्थः । राज्ञः स्वेच्छाचारित्वात् मन्त्रिणामक्षमत्वं सुतरामायातमिति भावः । तूलानां कार्पासानां भारसहस्रकैः सहस्रैरपि भारैरित्यर्थः, गजः नैव निबध्यते । शुनीटी.

---

* एतदादीनां सप्तानां श्लोकानां व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ७६४) द्रष्टव्यम् ।

(१) शुनी. १।७८–८७.

* एतदादीनां पञ्चानां श्लोकानां व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११४२) द्रष्टव्यम् ।

‡ अत्र निभृतशब्दो मन्त्रवाचकः । तथा च निभृते मन्त्रे अधिकृताः बुद्धिसचिवाः इत्यर्थः ।

(१) शुनी. १।१७५–१७८, १८२.

(२) शुनी. ४।७।४१३–४१७.

उद्धर्तुं द्रागगजः शक्तः पङ्कलग्नं गजं बली ।
नीतिभ्रष्टनृपं त्वन्यनृप उद्धरणक्षमः ॥

बली प्रबलः गजः पङ्कलग्नं कर्दमपतितं गजं द्राक् झटिति उद्धर्तुं शक्तः । तु तथेत्यर्थः, अन्यनृपः नीतिभ्रष्टं नृपं उद्धरणक्षमः । अत्र नृपमिति कृद्योगे षष्ठ्यभाव आर्षः । शुनीटी.

बलवन्नृपभृत्येऽल्पेऽपि श्रीस्तेजो यथा भवेत् ।
न तथा हीननृपतौ तन्मन्त्रिष्वपि नो तथा ॥

बलवतः नृपस्य भृत्ये अल्पे क्षुद्रे अपि यथा श्रीः तेजश्च भवेत्, हीननृपतौ दुर्बले राजनि तथा न । तस्य मन्त्रिषु अपि तथा नो भवेदित्यर्थः । शुनीटी.

बहूनामैकमत्यं तु नृपतिबलात् बलवत्तरम्

बहूनामैकमत्यं हि नृपतेर्बलवत्तरम् ।
बहुसूत्रकृतो रज्जुः सिंहाद्याकर्षणक्षमः ॥

बहूनां ऐकमत्यं नृपतेः राज्ञः अपि बलवत्तरं अधिकबलवत् हि । तथाहि बहुसूत्रकृतः बहुभिः सूत्रैः निर्मितः रज्जुः सिंहादीनां आकर्षणे क्षमः शक्तः । शुनीटी.

## योगयात्रा

स्वामिगुणाः

[1]मेधावी मतिमानदीनवचनो
दक्षः क्षमावानृजु-
र्धर्मात्माऽप्यनसूयको लघुकरः
षाड्गुण्यविच्छक्तिमान् ।
उत्साही पररन्ध्रवित्कृतधृति-
र्वृद्धिक्षयस्थानवि-
च्छूरो न व्यसनी स्मरत्युपकृतिं
वृद्धोपसेवी च यः ॥

[2]परीक्ष्यकारी न विकत्थनश्च
दृढप्रतिज्ञोऽतिदृढप्रहारी ।
जितेन्द्रियः स्याज्जितकोपलोभ-
निद्रालसस्थानपरिग्रहश्च ॥

(१) योया. २।१० ; नीम. ३६ कृतिं (कृतं).
(२) योया. २।११-१२ ; नीम. ३७.

त्यागी विनीतः प्रियदर्शनश्च
व्यपेतमोहः प्रतिपत्तियुक्तः ।
देशस्य कालस्य च भागविज्ञः
स्वयं च यः स्याद्व्यवहारदर्शी ॥

[1]शब्दार्थविन्यासपटुः प्रगल्भः
सङ्ग्रामविद्याकुशलोऽभिजातः ।
स्मिताभिभाषी मितसत्यवक्ता
दैवान्वितो यश्च स धाम लक्ष्म्याः ॥

## नीतिवाक्यामृतम्

स्वामिपदार्थः

[2]राज्ञः शरीरं धर्मः कलत्रमपत्यानि च स्वामिशब्दार्थः ॥

अथ स्वामिशब्दस्य लक्षणमाह– राज्ञ इति । एते चत्वारः पदार्थाः स्वामिशब्दं लभन्ते । एकं तावत् राज्ञः शरीरम्, तथा धर्मः, तथा कलत्रम्, तथा अपत्यानि । गतार्थमेतत् । नीवाटी.

राजपदार्थः

[3]योऽनुकूलप्रतिकूलयोरिन्द्रयमस्थानं स राजा ॥

अथ राजा यादृशो भवति तदाह– य इति । अनुकूले मित्रस्वरूपः प्रतिकूले शत्रुस्वरूपः । तयोर्द्वयोः शक्रधर्मराजस्थानं यथासंख्येन भवति स राजा, नान्यः । तथा च भार्गवः– ' वर्तते योऽरिमित्राभ्यां यमेन्द्राभः स भूपतिः । अभिषेको व्रणस्यापि व्यजनं पट्टमेव वा ॥ ' । नीवाटी.

स्वामिलक्षणानि स्वामिदोषाश्च

[4]अदुष्टस्य दूषणं सुप्तव्यालप्रबोधनमिव ॥

अथ अदुष्टस्य दूषणेन कृतेन यद्भवति तदाह– अदुष्टस्येति । दोषरहितस्य पुरुषस्य यत् मूर्खेण दूषणं दीयते । तत्किमिव ? सुप्तव्यालप्रबोधनमिव । सुप्तस्य

(१) योया. २।१३ ; नीम. ३७ विन्यास (विज्ञान).
(२) नीवा. १८।११.
(३) नीवा. ५।१.
(४) नीवा. १०।११०-१४६.

सर्पस्य व्याघ्रस्य वा बोधनं बोधयितुः मरणाय भवति। तथा च गुरुः— 'सुखसुप्तमहिं मूर्खो व्याघ्रं वा यः प्रबोधयेत्। स साधोर्दूषणं दद्यान्निर्दोषस्याऽऽत्ममृत्यवे ॥'। नीवाटी.

**सकृद्विघटितं चेतः स्फटिकवलयमिव कः संधातुमीश्वरः ॥**

अथ वैरं कृत्वा वैरिणा सह संधानं करोति तस्य यद्भवति तदाह— सकृद्विघटितमिति। क ईश्वरः कः समर्थो भवति? किं कर्तुम्? संधातुम्। किं तत्? चेतः मनः सकृद्विघटितम्। किमिव? स्फटिकवलयमिव पाषाणकङ्कणमिव। यथा पाषाणवलयस्य भग्नस्य संधिर्न भवति। तथा च जैमिनिः— 'पाषाणघटितस्यात्र संधिर्भग्नस्य नो यथा। कङ्कणस्येव चित्तस्य तथा वै दूषितस्य च ॥'। नीवाटी.

**न महताऽप्युपकारेण चित्तस्य तथाऽनुरागो यथा विरागो भवत्यल्पेनाप्यपकारेण ॥**

अथ चित्तविरागो महान् यथा भवति तदाह—नेति। चित्तस्य मनसः तथा महताऽप्युपकारेण दानादिना अनुरागः स्नेहः न भवति, यथा स्वल्पेनापि अपकारेण विरुद्धेन कृतेन विरागः स्नेहनाशः भवति। विरुद्धं स्वल्पमपि कस्यापि नाऽऽचरणीयम्। तथा च बादरायणः— 'न तथा जायते स्नेहः प्रभूतैः सुकृतैर्बहुः। स्वल्पेनाप्यपकारेण यथा वैरं प्रजायते ॥'। नीवाटी.

**सूचीमुखसर्प इव नापकृत्य विरमन्त्यपराधाः ॥**

न विरमन्ति न तिष्ठन्ति। के? अपराधाः। किं कृत्वा? अपकृत्य यावन्न वैरनिर्गमः कृतः। क इव? सूचीमुखसर्प इव। सूचीमुखाः दृष्टिविषाः। तथा च भृगुः— 'यथा दृष्टिविषः सर्पो दृष्टस्तु विकृतिं भजेत्। तथाऽपराधिनः सर्वे न स्युर्विकृतिवर्जिताः ॥'। नीवाटी.

**अतिवृद्धः कामस्तन्नास्ति यन्न करोति ॥**

अथ अतिवृद्धस्य कामस्य स्वरूपमाह— अतिवृद्ध इति। कामः कामदेवः शरीरे अतिवृद्धिं गतः सन् तन्नास्त्यकृत्यं यन्न करोति। अपि तु सर्वं करोतीत्यर्थः। नीवाटी.

**श्रूयते हि किल कामपरवशः प्रजापतिरात्मदुहितरि हरिर्गोपवधूषु हरः शान्तनुकलत्रेषु सुरपतिर्गौतमभार्यायां चन्द्रश्च बृहस्पतिपत्न्यां मनश्चकारेति ॥**

एतत्कामचेष्टितं देवानां पुराणेषु श्रोतव्यमिति। नीवाटी.

**अर्थेषूपभोगरहितास्तरवोऽपि साभिलाषाः किं पुनर्मनुष्याः ॥**

अथ पुरुषाः साभिलाषा यथा भवन्ति तथाऽऽह— अर्थेषूपभोगेति। अर्थेषु धनेषु साभिलाषाः सानन्दाः तरवोऽपि वृक्षा अपि भवन्ति, येषां उपभोगः विलासः न भवति। किं पुनर्मनुष्याः ये विलासज्ञाः? कथं तरवोऽर्थेषु साभिलाषा भवन्ति? उक्तं च यतो वातशास्त्रे विश्वकर्मणा— 'बिल्वादथ पलाशाद्वा निधानं चेदधो भवेत्। अधोमुखाः प्ररोहाः स्युर्नाभ्यां गच्छन्ति तत्र यत् ॥'। तथा च जैमिनिः— 'अर्थं तेऽपि च वाञ्छन्ति ये वृक्षा आत्मचेतसा। उपभोगैः परित्यक्ताः किं पुनर्मनुष्या(?जा)श्च ये ॥'। नीवाटी.

**कस्य न धनलाभाल्लोभः प्रवर्तते ॥**

तथा लोभस्वरूपमाह— कस्येति। कस्य न धनलाभसकाशात् लोभो भवति? अपि तु सर्वस्यापि जनस्य भवतीत्यर्थः। तथा च वर्गः— 'तावन्न जायते लोभो यावल्लाभो न विद्यते। मुनिर्यदि वनस्थोऽपि दानं गृह्णाति नान्यथा ॥'। नीवाटी.

**स खलु प्रत्यक्षं दैवं यस्य परस्वेष्विव परस्त्रीषु निःस्पृहं चेतः ॥**

अथ जितेन्द्रियो यादृग् भवति तदाह— स खल्विति। यस्य पुरुषस्य परवित्ते दृष्टे परस्त्रीषु दृष्टासु निःस्पृहं चेतो भवति, स मानवो न भवति, प्रत्यक्षं दैवं देवतास्वरूपम्। तथा च वर्गः— 'परद्रव्ये कलत्रे च यस्य दृष्टे महात्मनः। न मनो विकृतिं याति स देवो न च मानवः ॥'। नीवाटी.

**समायव्ययः कार्यारम्भो राभसिकानाम् ॥**

अथ राभसिकानां कार्यारम्भो यादृग् भवति तथाऽऽह– समायव्यय इति । ये राभसिकाः पुरुषा भवन्ति आनन्देन कार्यं कुर्वन्ति । यदि कार्ये कृते आयव्ययौ समौ भवतः सोऽप्यानन्दस्तेषाम् । तथा च हारीतः– 'आयव्ययौ समौ स्यातां यदि कार्यो विनश्यति । ततस्तोषेण कुर्वन्ति भूयोऽपि न त्यजन्ति तम् ॥' । नीवाटी.

**बहुक्लेशेनाल्पफलः कार्यारम्भो महामूर्खाणाम् ॥**

अथ महामूर्खाणां यथा कार्यारम्भो भवति तमाह– बहुक्लेशेनेति । ये महामूर्खा भवन्ति ते बहुक्लेशेन अल्पफलमपि कार्यारम्भं कुर्वन्ति, न निर्वेदं यान्ति । तथा च वर्गः– 'बहुक्लेशानि कृत्यानि स्वल्पभावानि च क्रतुः ( ? ) । महामूर्खतमा येऽत्र न निर्वेदं व्रजन्ति च ॥' । नीवाटी.

**दोषभयान्न कार्यारम्भः कापुरुषाणाम् ॥**

अथ कापुरुषाणां कार्यारम्भः प्रोच्यते– दोषेति । ये कापुरुषा भवन्ति ते दोषभयात् कार्यारम्भं न कुर्वन्ति । 'एतेन कृतेन एष दोषो भविष्यति, अनेन कृतेन पुनरन्यतमो दोषो भविष्यति' एवं चिन्तयमानाः कापुरुषा निरुद्यमा भवन्ति सदा ( कापुरुषाः ? ) । तथा च वर्गः– 'कार्यदोषान् विचिन्वन्तो नराः कापुरुषाः स्वयम् । शुभं भाव्यान्यपि त्रस्ता न कृत्यानि प्रचक्रतुः ( ? ) ॥' । नीवाटी.

**मृगाः सन्तीति किं कृषिर्न क्रियते ॥**

**अजीर्णभयात्किं भोजनं परित्यज्यते ॥**

अथ भूयोऽपि कापुरुषानुद्दिश्य अन्यापदेशेन सूत्रद्वयमाह– मृगा इति । गतार्थमेतत् । नीवाटी.

**स खलु कोऽपीहाभूदस्ति भविष्यति वा यस्य कार्यारम्भेषु प्रत्यवाया न भवन्ति ॥**

अथ कार्यारम्भमुद्दिश्य प्रोच्यते– स खल्विति । अपि भवन्तीति निश्चयः । तथा च भागुरिः– 'यस्योद्यमो भवति तं समुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥' । नीवाटी.

**आत्मसंशयेन कार्यारम्भो व्यालहृदयानाम् ॥**

अथ दुष्टाशयानां कार्यारम्भो यादृग् भवति तमाह– आत्मसंशयेनेति । ये व्यालहृदया भवन्ति । व्यालौ श्वापदभुजंगौ । तौ स्वभावेन दुष्टौ भवतः । ताभ्यां सदृशं हृदयं यस्य सः । आत्मसंदेहेन कार्यारम्भो भवति । एवमुक्तम्– सर्वे श्वापदाः क्षुधार्ता भयं त्यक्त्वा सुरक्षितमपि पदार्थं भक्षयन्ति ततः कदाचिद्वधमाप्नुयुः, एवमन्येऽपि ये दुष्टहृदया भवन्ति (तेषां) तानि कानिचिद्दुष्टकर्माणि भवन्ति येषु व्यालानामिव आत्मसंदेहो भवति । तथा च शुक्रः– 'ये व्यालहृदया भूपास्तेषां कर्माणि यानि च । आत्मसंदेहकारीणि तानि स्युर्निखिलानि च ॥' । नीवाटी.

**दुर्भीरुत्वमासन्नशूरत्वं रिपौ प्रति(?) महापुरुषाणाम् ॥**

अथ महापुरुषाणां यो गुणस्तमाह– दुर्भीरुत्वेति । ये महापुरुषा भवन्ति तेषां दूरस्थे रिपौ न या प्रयाद् ( ? ) भीरुत्वं भवति । उक्तं च यतो नीतौ– 'युद्धं परित्यजेद्धीमानुपायैः सामपूर्वकैः । कदाचिज्जायते दैवाद्धीनेनापि बलाधिकः ॥' । तथा आसन्नशूरत्वं आसन्ने तु पुनः बलं शूरत्वं भवति महापुरुषाणाम् । उक्तं च यतो नीतौ– 'तावत्परस्य भेतव्यं यावन्नो दर्शनं भवेत् । दर्शने तु पुनर्जाते प्रहर्तव्यमशङ्कितैः ॥' । नीवाटी.

**जलवन्मार्दवोपेतः पृथूनपि भूभृतो भिनत्ति ॥**

अथ मार्दवयुक्तानां यद्भवति तदाह– जलवदिति । भिनत्ति विदारयति । कान् ? भूभृतः राज्ञः । किंविशिष्टान् ? पृथूनपि महतोऽपि । कथम् ? जलवत् । यथा जलं कोमलमपि भूभृतः पर्वतानपि भिनत्ति, एवं राजाऽपि । तथा च गुरुः– 'मार्दवेनापि सिध्यन्ति कार्याणि सुगुरूण्यपि । यतो जलेन भिद्यन्ते पर्वता अपि निष्ठुराः ॥' । नीवाटी.

**प्रियंवदः शिखीव द्विषत्सर्पानुच्छादयति ॥**

अथ मधुरवादिनो नृपस्य यद्भवति तदाह– प्रियंवद इति। यो राजा प्रियंवदो भवति। स किं करोति? स द्विषन्तं उच्छादयति नाशं नयति। क इव? शिखीव सर्पान्। यथा शिखी मयूरः सर्पान् सदर्पानपि मधुरस्वरात् नाशयति, तथा राजाऽपि मधुरः सदर्पानपि शत्रून् नाशयति। तथा च शुक्रः– 'यो राजा मृदुवाक्यः स्यात्सदर्पानपि विद्विषः। स निहन्ति न संदेहो मयूरो भुजगानिव॥'। नीवाटी.

**नाविज्ञाय परेषामर्थमनर्थं वा स्वहृदयं प्रकाशयन्ति महानुभावाः ॥**

अथ महानुभावा यथा स्वहृदयं न प्रकटयन्ति तथाऽऽह– नाविज्ञायेति। ये महानुभावाः उत्तमपुरुषाः भवन्ति ते न प्रकाशयन्ति। किं तत्? आत्मीयहृदयम्। किं कृत्वा? अविज्ञाय अज्ञात्वा। कम्? अर्थं प्रयोजनं अनर्थं वा। केषाम्? परेषां अन्यलोकानाम्। तथा च भृगुः– 'अज्ञात्वा परकार्यं च शुभं वा यदि वाऽशुभम्। अन्येषां न (? तु) प्रकाशेयुः सन्तो नैव निजाशयम्॥'। नीवाटी.

**क्षीरवृक्षवत्फलसंपादनमेव महतामालापः ॥**

अथ महापुरुषाणामालापो यादृग्भवति तादृगाह– क्षीरवृक्षवदिति। महतां महापुरुषाणां योऽसौ आलापः सः फलसंपादनं करोति। क इव? क्षीरवृक्ष इव। यथा क्षीरवृक्षः फलसंपादनं करोति तथा महापुरुषाणामालाप एव। तथा च वर्गः– 'आलापः साधुलोकानां फलदः स्यादसंशयम्। अचिरेणैव कालेन क्षीरवृक्षो यथा तथा॥'। नीवाटी.

**दुरारोहपादप इव दण्डाभियोगेन फलप्रदो भवति नीचप्रकृतिः ॥**

अथ नीचप्रकृतेः स्वरूपमाह– दुरारोहेति। नीचा निकृष्टा प्रकृतिः स्वभावः यस्यासौ नीचप्रकृतिः, स फलप्रदो भवति दण्डाभियोगेन लगुडप्रहारेण। क इव? दुरारोहपादप इव दुःखारोहवृक्ष इव, कण्टकाकीर्ण इवेति यावत्। स यथा लगुडाहतः फलानि प्रयच्छति तथा नीचप्रकृतिरपि। तथा च भागुरिः– 'दण्डाहतो यथाऽऽरातिर्दुरारोहो महीरुहः। तथा फलप्रदो नूनं नीचप्रकृतिरत्र यः॥'। नीवाटी.

**स महान् यो विपत्सु धैर्यमवलम्बते ॥**

अथ महान् पुरुषो यादृशो भवति तदाह– स इति। सः पुरुषः महत्त्वमाप्नोति। यः किम्? य आलम्बते आश्रयति। किं तत्? धैर्यं पौरुषम्। कासु? आपत्सु व्यसनात्मिकासु। तथा च गुरुः– 'आपत्कालेऽत्र संप्राप्ते धैर्यमालम्बते हि यः। स महत्त्वमवाप्नोति पार्थिवः पृथिवीतले॥'। नीवाटी.

**उत्तापकत्वं हि सर्वकार्येषु सिद्धीनां प्रथमोऽन्तरायः ॥**

अथ सर्वकृत्येषु पार्थिवस्य यथाऽन्तरायत्वं तदाह– उत्तापकत्वमिति। यत् उत्तापकत्वं व्याकुलत्वं पुरुषस्य। तत् किंविशिष्टम्? अन्तरायः विघ्नम्। केषु? सर्वकार्येषु निखिलप्रयोजनेषु। कासाम्? सिद्धीनाम्। हि स्फुटम्। तथा च गुरुः– 'व्याकुलत्वं हि लोकानां सर्वकृत्येषु विघ्नकृत्। पार्थिवानां विशेषेण येषां कार्याणि भूरिशः॥'। नीवाटी.

**शरद्घना इव न खलु वृथालापा गलगर्जितं कुर्वन्ति सत्कुलजाताः ॥**

अथ कुलीनानां स्वरूपमाह– शरद्घनेति। कुलीना ये भवन्ति ते वृथालापाः अयुक्तालापाः न हि भवन्ति। क इव? शरद्घना इव शरत्काले मेघा इव। यथा ते वृथा गर्जितं प्रचुरं कुर्वन्ति, न वृष्टिम्, तथा कुलीना वृथा गलगर्जितं न कुर्वन्ति। तथा च गौतमः– 'वृथालापैर्न भाव्यं न (? च) भूमिपालैः कदाचन। यथा शरद्घना कुर्युस्तोयवृष्टिविवर्जिताः॥'। नीवाटी.

**न स्वभावेन किमपि वस्तु सुन्दरमसुन्दरं वा यस्य यदेव प्रतिभाति तस्य तदेव सुन्दरम् ॥**

अथ सुन्दरासुन्दरं यद्वस्तु भवति तदाह– नेति। अस्मिन् किमपि वस्तु स्वभावेन सुन्दरं उत्तमं नास्ति, असुन्दरं निकृष्टं वा नास्ति। किंतु यदेव प्रतिभाति तदेव तस्य सुन्दरं तन्निकृष्टमपि। यन्न मनसः प्रतिभाति

तत्सुन्दरमपि निकृष्टम् । तथा च जैमिनिः—'सुन्दरासुन्दरं लोके न किंचिदपि विद्यते । निकृष्टमपि तच्छ्रेष्ठं मनसः प्रतिभाति यत् ॥' । नीवाटी.

**न तथा कर्पूरेण प्रीतिः केतकीनां यथाऽमेध्येन ॥**

अथोक्तसूत्रापेक्षया दृष्टान्तमाह— नेति । केतकीनां पुष्पजातिविशेषाणां तथा प्रीतिः वृद्धिः न भवति यथा अमेध्येन दोहदेन दत्तेन । गतार्थमेतत् । नीवाटी.

**अतिक्रोधनस्य प्रभुत्वमग्नौ पतितं लवणमिव शतधा विशीर्यते ॥**

अथातिक्रोधनस्य यद्भवति तदाह— अतिक्रोधनस्येति । अतिक्रोधनस्य पुरुषस्य प्रभुत्वं ऐश्वर्यम् । किंविशिष्टं भवति ? शीर्यते विनाशं याति । कथम् ? शतधा अनेकधा । किमिव ? लवणमिव । किंविशिष्टम् ? पतितं अग्नौ वैश्वानरे । यथा वैश्वानरे पतितं लवणं शतधा विनाशमुपयाति । तथा च ऋषिपुत्रकः— 'अतिक्रोधो महीपालः प्रभुत्वस्य विनाशकः । लवणस्य यथा वह्निमध्ये निपतितस्य च ॥' । तस्मादीश्वरेणातिकोपो न कार्यः । नीवाटी.

**सर्वान् गुणान् निहन्त्यनुचितज्ञः ॥**

अथ सर्वान् गुणान् यथा पुरुषो निहन्ति तदाह— सर्वानिति । न उचितं योग्यं जानाति अनुचितज्ञः । स किं करोति ? निहन्ति । कान् ? गुणान् । किंविशिष्टान् ? सर्वान् समस्तान् । यः पुरुषो यत् यस्मिन् काले उचितं योग्यं कृत्यं न जानाति स सर्वान् गुणान् आत्मीयान् हन्ति । तथा च नारदः— 'गुणैः सर्वैः समेतोऽपि वेत्ति कालोचितं न च । वृथा तस्य गुणाः सर्वे यथा षण्ढस्य योषितः ॥' । नीवाटी.

**परस्परं मर्मकथनमात्मविक्रम एव ॥**

अथ परस्परं मर्मकथनेन यद्भवति तदाह— परस्परमिति । परस्परं कलहायमानैर्यन्मर्मकथनं क्रियते जनैः । तत्किमित्याह— तदात्मविक्रम एव क्रियते । एतदुक्तं भवति— यथा कलहायमानः कश्चित्परस्य मर्माणि कथयति * । तथा च जैमिनिः— 'परस्य मर्मभेदं च कुरुते कलहाश्रयः । तस्य सोऽपि करोत्येव तस्मान्मर्म न भेदयेत् ॥' । नीवाटी.

**तदजाकृपाणीयं यः परेषु विश्वासः ॥**

अथ परस्य विश्वस्तानां यद्भवति तदाह— तदजाकृपाणीयमिति । परेषु शत्रुषु विश्वासः क्रियते । स किंविशिष्टः स्यात् ? अजाकृपाणीयम्, स्ववधाय भवतीत्यर्थः । यथाऽजाकृपाणीयं कथ्यते— केनापि पान्थेन मार्गावस्थितेन क्षुधार्तेनाटव्यां छागयूथं रक्षि(?क्षा)पालसहितं भ्रमदालोकितम् । ततः स मृदुपल्लवान् प्रचुरतरान् गृहीत्वा स्तोकान् स्तोकान् छागस्यैकस्य मुखे योजितवान् । छागोऽपि तल्लौल्यात् तस्य पृष्ठलग्नः । सोऽपि विशस्त्रः अन्यानपि भक्षयतः तस्याग्रे परिक्षिप्य तद्वधार्थं किंचित्काष्ठं पाषाणं वा अन्वेष्टुमारब्धः । तथा छागश्च मृदुपल्लवान् भक्षयन् सानन्दः पादाग्रेण भूमिमखनत् । अथ तस्य खनतः केनापि प्राक् तत्स्थाने स्थापितः खड्गः प्रकटीभूतः । स तेन पथिकेन शस्त्ररहितेन तमेव खड्गमादाय छागो व्यापादितो भक्षितश्च । एतदजाकृपाणीयम् । अन्योऽपि यो लौल्यात् शत्रोर्विश्वासं यच्छति स केनाप्युपायेन तेन हन्यते । तस्माद्विश्वासः शत्रोर्न कार्यः । तथा च चाणिक्यः— 'न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥' । नीवाटी.

**क्षणिकचित्तः किंचिदपि न साधयति ॥**

अथ क्षणिकचित्तस्य यद्भवति तदाह— क्षणिकेति । क्षणिकं चित्तं यस्यासौ क्षणिकचित्तः, सदैव चलितं इत्यर्थः । स पुरुषः किंचिदपि स्तोकमपि प्रयोजनं न साधयति । तस्य किंचित्प्रयोजनं सिद्धिं न गच्छतीत्यर्थः । तथा च हारीतः— 'चलचित्तस्य नो किंचित् कार्यं किंचित्प्रसिध्यति । सुसूक्ष्ममपि तत्तस्मात्स्थिरं कार्यं यशोर्थिभिः ॥' । नीवाटी.

**स्वतन्त्रः सहसाकारित्वात्सर्वं विनाशयति ॥**

अथ स्वतन्त्रस्य राज्ञो यद्भवति तदाह— स्वतन्त्र इति । यो राजा स्वतन्त्रः केवलं भवति, सचिवान् न करोति, स सहसाकारित्वादात्माहं कृत्वा कुर्वाणोऽनर्हाणि

* अत्र व्याख्यानांशः त्रुटित इति प्रतिभाति ।

सर्वं राज्यं विनाशयति । तस्माद्राज्ञा स्वतन्त्रेण न भाव्यम् । तथा च नारदः– 'यः स्वतन्त्रो भवेद्राजा सचिवान्न च पृच्छति । स्वयं कृत्यानि कुर्वाणः स राज्यं नाशयेद् ध्रुवम् ॥' । नीवाटी.

**अलसः सर्वकर्मणामनधिकारी ॥**

अथाऽऽलस्यसमेतस्य यद्योग्यं तदाह– अलस इति । यः पुरुषः सदैवाऽऽलस्योपहतो भवति स सर्वेषु कृत्येषु राज्ञामनधिकारी अयोग्यः स्यात् । तस्याधिकारः सूक्ष्मोऽपि न दीयते इति । तथा च राजपुत्रः– 'आलस्योपहतान् योऽत्र विदधात्यधिकारिणः । सूक्ष्मेष्वपि च कृत्येषु न सिध्येत्तानि तस्य हि ॥' । नीवाटी.

**प्रमादवान् भवत्यवश्यं विद्विषां वशः ॥**

अथ प्रमादिनो नृपस्य यद्भवति तदाह– प्रमादवानिति । यो राजा कृत्येषु प्रमादवान् भवति सः अवश्यं निश्चयेन वश्यो भवति । केषाम् ? विद्विषां शत्रूणाम् । तस्माद्भूभुजा सूक्ष्मेष्वपि कृत्येषु शैथिल्यं न कार्यम् । तथा च जैमिनिः– 'सुसूक्ष्मेष्वपि कृत्येषु शैथिल्यं कुरुतेऽत्र यः । स राजा रिपुवश्यः स्यात् प्रभूतयोगसोऽपि(?) सन् ॥' । नीवाटी.

**कमप्यात्मनोऽनुकूलं प्रतिकूलं न कुर्यात् ॥**

भूभुजा यत्कृत्यं तदाह– कमप्यात्मन इति । कमप्यात्मनोऽनुकूलं मित्रत्वेन वर्तमानं प्रतिकूलं शत्रुं न कुर्यात् एष निश्चयः । तथा च राजपुत्रः– 'मित्रत्वे वर्तमानं यः शत्रुरूपं क्रियान्नृपः । स मूर्खो भ्रम्यते राजा अपवादं च गच्छति ॥' । नीवाटी.

**प्राणादपि प्रत्यवायो रक्षितव्यः ॥**

अथ भूभुजा यत् कृत्यं तदाह– प्राणादपीति । अत्र प्रत्यवायशब्देन गुह्यमुच्यते । तत् गुह्यं प्राणादपि जीवितव्यादपि रक्षणीयम् । यतः सूक्ष्ममपि छिद्रं विज्ञाय शत्रवः प्रविशन्ति । तस्मात् तत् रक्षणीयम् । तथा च भागुरिः– 'आत्मच्छिद्रं प्ररक्षेत जीवादपि महीपतिः । यतस्तेन प्रलब्धेन प्रविश्य घ्नन्ति शत्रवः ॥' । नीवाटी.

**युक्तमुक्तं वचो बालादपि गृह्णीयात् ॥**

अन्यदपि भूभुजा यत्कर्तव्यं तदाह– युक्तमुक्तमिति । ग्राह्यम् । किं तत् ? युक्तमुक्तं न्यायगर्भं वचः । कस्मात् ? बालादपि शिशोरपि । एतदुक्तं भवति– बालोऽपि यदि युक्तं व्याहरति तत् ग्राह्यम्, न च बालप्रलपितमिति तद्वचस्त्याज्यम् । तथा च विदुरः– 'लघुं मत्वा प्रलपेत बालाच्चापि विशेषतः । यत्सारं भवति तद्ग्राह्यं शिलाहारी शिलं यथा ॥' । नीवाटी.

**रवेरविषये किं न दीपः प्रकाशयति ॥**

अथ एतदपि प्रलपितं दृष्टान्तद्वारेण द्रढयन्नाह– रवेरविषय इति । रवेः आदित्यस्य अविषये सूर्ये अस्तमिते किं न प्रकाशयति प्रकटीकरोति ? कोऽसौ ? दीपः ज्योतिष्कः । अनेन दृष्टान्तेन बालेनापि युक्तमुक्तं गृह्णीयात् । तथा च वल्लभदेवः– 'तेजसा संप्रयुक्तस्यातेनासौ नापि सिध्यति (?) । कार्यं सूर्ये प्रणष्टे तु ज्योतिष्केण यथा निशि ॥' । नीवाटी.

**अल्पमपि वातायनविवरं बहूनुपलम्भयति ॥**

अथ भूयोऽपि बालप्रलपितप्रतिष्ठार्थं दृष्टान्तमाह– अल्पमिति । (वातायनविवरं) गवाक्षलक्षणं लघ्वपि बहूनुपलम्भयति प्रचुरं प्रकटं करोति । एवं बालोऽपि यत्किंचिद्वदति नयगर्भं तद्ग्राह्यमिति । तथा च हारीतः– 'गवाक्षविवरं सूक्ष्मं यद्यपि स्याद्विलोकितम् । प्रकाशयति यद्भूरि तद्वद्बालप्रजल्पितम् ॥' । नीवाटी.

**पतिंवरा इव परार्थाः खलु वाचस्ताश्च निरर्थकं प्रकाश्यमानाः शपयन्त्यवश्यं जनयितारम् ॥**

अथ निरर्थकं प्रोच्यमाना वाचो यत्कुर्वन्ति तदाह– पतिंवरेति । निरर्थकं व्यर्थं प्रकाश्यमानाः प्रोच्यमानाः खलु निश्चयेन शपयन्ति वाच्यतां नयन्ति । कम् ? जनयितारं वक्तारम् । का इव ? पतिंवरा इव । पतिर्वृतो *यकाभिः पतिंवराः अभीष्टनरदत्तात्मशरीराः । पुनरपि

---

* अकच्प्रत्यययुक्तः आबन्तो यकाशब्दः ।

(१) नीवा. १०।१५४–१६०, १६४–१७१.

किंविशिष्टाः ? परार्थाः अन्यदेयाः । इति कृत्वा ताः सत्यो यथा तं जनयितारं शपयन्ति अनिष्टवचनैर्निर्भर्त्सयन्ति तथा पुरुषोऽपि यो व्यर्थं वदति तं वाचः गिरः शपयन्ति हास्यतां वा नयन्तीत्यर्थः । तथा च वर्गः— 'वृथालापं च यः कुर्यात् स पुमान् हास्यतां व्रजेत् । पतिंवरापिता यद्वदन्यस्यार्थे वृथादनु (?) ॥' । नीवाटी.

**तत्र युक्तमप्ययुक्तमनुक्तसमं यो न विशेषज्ञः ॥**

अथ मूर्खस्याग्रे जल्पितं यद्भवति तदाह— तत्रेति । यः पुरुषः विशेषं न जानाति एतत् ममानेन हितमुक्तम्, तस्याग्रे यत् प्रोच्यते तत् अयुक्तं युक्तमपि भवति । अथवा अनुक्तसमं तत्किल न जल्पितम् । तस्मात् मूर्खस्योपदेशो न देयः । तथा च वर्गः— 'अरण्यरुदितं तत्स्यात् यन्मूर्खस्योपदिश्यते । हिताहितं न जानाति जल्पितं न कदाचन ॥' । नीवाटी.

**स खलु पिशाचकी वातकी वा यः परेऽनर्थिनि वाचमुदीरयति ॥**

अथ अश्रोतुः पुरतो वदन् यथा पुरुषो जनैर्मन्यते तदाह— स खल्विति । परे जने अनर्थिनि अश्रोतुकामे यः उदीरयति वदति । काम् ? वाचं वाणीम् । स किंविशिष्टो जनैर्मन्यते ? खलु निश्चयेन पिशाचकी संजातभूतग्रहः, वातकी वा संनिपातयुक्तो वा । तस्मात् अश्रोतुः पुरतो विदुषा न वक्तव्यम् । तथा च भागुरिः— 'अश्रोतुः पुरतो वाक्यं यो वदेदविचक्षणः । अरण्यरुदितं सोऽत्र कुरुते नात्र संशयः ॥' । नीवाटी.

**विध्यायतः प्रदीपस्येव नयहीनस्य वृद्धिः ॥**

अथ नयहीनस्य या वृद्धिस्तस्याः स्वरूपमाह—विध्यायत इति । नयहीनस्य पुरुषस्य चौर्यादिभिरकृत्यैर्या वृद्धिर्भवति सा किंविशिष्टा ? प्रदीपस्येव । किंविशिष्टस्य ? विध्यायतः विनाशं गच्छतः । यथा दीपस्य विनाशकाले अधिका वृद्धिर्भवति तथा पुरुषस्यापि अन्यायोपार्जिता समद्धिः । तथा च नारदः— 'चौर्यादिभिः समृद्धिर्या पुरुषाणां प्रजायते । ज्योतिष्कस्येव सा भूतिर्नाशकाल उपस्थिते ॥' । नीवाटी.

प्रकृतिविषये राज्ञा पालनीया निषेधाः

**क्षयलोभविरागकारणानि प्रकृतीनां न कुर्यात् ॥**

अथ प्रकृतीनां नृपेण यत्कर्तव्यं तदाह— क्षयलोभेति । न कुर्यात् । कानि ? क्षयलोभविरागकारणानि । कासाम् ? प्रकृतीनां अमात्यादीनां सदा सेवकानाम् । क्षयकारणं विनाशकारणम् । लोभकारणं तासां सकाशात् लोभेन किंचिद् बाह्यम् ( ? न किंचिद् ग्राह्यम् ) । तथा तासां विरागकारणं न कार्यम्, येन विरागो भवतीति । तथा च वशिष्ठः— 'क्षयो लोभो विरागश्च प्रकृतीनां न शस्यते । यतस्तासां प्रदोषे न राज्यवृद्धिः प्रजायते ॥' । नीवाटी.

**सर्वकोपेभ्यः प्रकृतिकोपो गरीयान् ॥**

अथ प्रकृतीनां कोपो यादृग्भवति तदाह— सर्वकोपेभ्य इति । ये चान्ये कोपाः शत्रुपूर्वकास्तेषां सकाशात् प्रकृतिकोपो गरीयान् कष्टतरः । तथा च राजपुत्रः— 'राज्ञां छिद्राणि सर्वाणि विदुः प्रकृतयः सदा । निवेद्य तानि शत्रुभ्यस्ततो नाशं नयन्ति तम् ॥' । नीवाटी.

**अचिकित्स्यदोषदुष्टान् खनिदुर्गसेतुबन्धाकरकर्मान्तेषु क्लेशयेत् ॥**

अथ ये दोषे कृतेऽप्यवध्यास्तेषां यत्क्रियते तदाह— अचिकित्स्येति । येषां दोषाः अपराधाः अचिकित्स्याः वधबन्धवर्जिताः तेन ( ? तैः ) दोषेण ( ? दोषैः ) ये दुष्टाः द्रोहितारः, तेषां किं कार्यम् ? तान् क्लेशयेत् व्यसनाभिभूतान् कारयेत् । केषु ? खनिदुर्गसेतुबन्धाकरकर्मान्तरेषु । खनिशब्देन तडागादिखातमुच्यते । दुर्गं प्रसिद्धम् । सेतुबन्धः नदीपूरबन्धः । आकरः धातूनामुत्पत्तिस्थानम् । एतेषां यानि कर्माणि तेषां मध्ये नियोजयेत् । तत्र स्थिता द्रोहादिकं न कुर्वन्ति । तथा च शुक्रः— 'अवध्या ज्ञातयो ये च बहुदोषा भवन्ति च । कर्मान्तेषु नियोज्यास्ते येन स्युर्व्यसनान्विताः ॥' । नीवाटी.

**अपराध्यैरपराधकैश्च सह गोष्ठीं न कुर्यात् ॥**

अथ यैः सह गोष्ठीसुखं न कुर्यात्तानाह— अपराध्यैरिति । ये पुरुषाः अपराध्या भवन्ति येषां अपराधः

कार्यः तैः सह कथां गोष्ठीं न कुर्यात् । तथा च नारदः— 'परिभूता नरा ये च कृतो यैश्च पराभवः । न तैः सह क्रियाद्गोष्ठीं य इच्छेद्भूतिमात्मनः ॥' । नीवाटी.

**ते हि गृहप्रविष्टसर्पवत्सर्वव्यसनानामागमनद्वारम् ॥**

अथ तैः सह गोष्ठीसुखेन कृतेन यद्भवति तदाह— ते हीति । ते पूर्वोक्ता अपराध्या अपराधकाः सर्वव्यसनानि प्रयच्छन्तीत्यर्थः । हिशब्दः यस्मादर्थे स्फुटार्थे वा । कथं सर्वव्यसनानामागमनद्वारमित्याह— गृहप्रविष्टसर्पवत् । यथा गृहप्रविष्टसर्पो व्यसनप्रदो भवति तथा तेऽपि गृहप्रविष्टाः सन्तः । तथा च शुक्रः— 'यथाहिर्मन्दिराविष्टः करोति सततं भयम् । अपराध्याः सदोषाश्च तथा तेऽपि गृहागताः ॥' । नीवाटी.

**न कस्यापि क्रुद्धस्य पुरतस्तिष्ठेत् ॥**

अथ यस्य पुरुषस्य नाग्रतस्तिष्ठेत्तमाह— नेति । क्रुद्धस्य पुरुषस्य कस्यापि पुरो न तिष्ठेत्, एषा नीतिः । यतः क्रोधान्धधीः पुरुषो यं कमपि पुरः स्थितं पश्यति तं व्यापादयति । तथा च गुरुः— 'यथाऽन्धः कुपितो हन्यात् यच्चैवाग्रे व्यवस्थितम् । क्रोधान्धोऽपि तथैवात्र तस्मात्तं दूरतस्त्यजेत् ॥' । नीवाटी.

**क्रुद्धो हि सर्प इव यमेवाग्रे पश्यति तत्रैव रोषविषमुत्सृजति ॥**

अथ क्रुद्धस्य पुरतः स्थितस्य यद्भवति तदाह— क्रुद्ध इति । सर्प इव यथा सर्पः कुपितोऽपराधरहितेऽपि प्राणिनि विषमुत्सृजति । तस्माच्च दूरतस्त्यजेत् । गतार्थमेतत् । नीवाटी.

**अप्रतिविधातुरागममादूरमनागमनम् ॥**

अथ येन गृहायातेन न किंचित्सिध्यति तदर्थमाह— अप्रतीति । अप्रतिविधातुः अकार्यसाधकस्य पुरुषस्य यद्गृहागमनं तद्वरमनागमनं वरमसमायातः, केवलमुपक्षयः स्यात् । तथा च भारद्वाजः— 'प्रयोजनार्थमानीतो यः कार्यं तन्न साधयेत् । आनीतेनापि किं तेन व्यर्थोपक्षयकारिणा ॥' । नीवाटी.

स्वामिलक्षणानि

**[1]धार्मिकः कुलाभिजनाचारविशुद्धः प्रतापवान्नयानुगतवृत्तिश्च स्वामी ॥**

अधुना स्वामिसमुद्देशो व्याख्यायते । तत्राऽऽदावेव स्वामिनो लक्षणमाह— धार्मिक इति । यः स्वामी राजा भवति स किंविशिष्टः ? धार्मिकस्तावत् । तथा कुलाचाराभिजनविशुद्धः स्वकुले योऽसौ आचारः व्यवहारः तेन यदभिजनत्वं कुलीनत्वं तेन विशुद्धः निर्मलः । तथा प्रतापवान् पूर्वपुण्यसंपन्नः । तथा नयानुगतवृत्तिः, नयः नीतिः, तदनुगा तदनुयायिनी वृत्तिः वर्तनं यस्येति । तथा च शुक्रः— 'धार्मिको यः कुलाचारैर्विशुद्धः पुण्यवान्नयी । स स्वामी कुरुते राज्यं विशुद्धं राज्यकण्टकैः ॥' । नीवाटी.

**कोपप्रसादयोः स्वतन्त्रः ॥**

अथ भूयोऽपि स्वामिना यादृशेन भाव्यं तदाह— कोपप्रसादयोरिति । तथा यः स्वामी स्वतन्त्रः स्वायत्तः कस्यचिन्न परवशः । कयोः ? कोपप्रसादयोः । यः स्वमतेन कुपितः पापानां निग्रहं करोति, तुष्टस्तु साधूनामुपकारं करोति, स स्वामी प्रोच्यते । तथा च गर्गः— 'स्वायत्तः कुरुते यश्च निग्रहानुग्रहौ जने । पापे साधुसमाचारे स स्वामी नेतरः स्मृतः ॥' । नीवाटी.

**आत्मातिशयं धनं वा यस्यास्ति स स्वामी ॥**

अथ भूयोऽपि स्वामिलक्षणमाह— आत्मातिशयमिति । यस्य आत्मातिशयं आत्ममानं अस्ति धनं वा विद्यते स स्वामी । तथा च गुरुः— 'आत्मा च विद्यते यस्य धनं वा विद्यते बहु । स स्वामी प्रोच्यते लोकैर्नेतरोऽत्र कथंचन ॥' । नीवाटी.

स्वामी मूलं प्रकृतीनाम्

**स्वामिमूलाः सर्वाः प्रकृतयोऽभिप्रेतयोजनाय भवन्ति नास्वामिकाः ॥**

अथ प्रकृतीनां स्वरूपमाह— स्वामिमूला इति । स्वामी मूलं आद्यं यासां ताः स्वामिमूलाः । किमर्थम् ? अभिप्रेत-

(१) नीवा. १७।१-६२.

योजनाय अभिप्रेताः ये वाञ्छिताधिकाराः तेषु योजनाय अधिकारयोजनाय । नास्वामिकाः न स्वामिरहितास्ताः स्वकीयमधिकारं लभन्ते । तथा च गर्गः– 'स्वामिना विद्यमानेन स्वाधिकारानवाप्नुयात् । सर्वाः प्रकृतयो नैव विना तेन समाप्नुयुः ॥' । नीवाटी.

**अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरीतुं न शक्नुवन्ति ॥**

**उच्छिन्नमूलेषु तरुषु किं कुर्यात्पुरुषप्रयत्नः ॥**

अथामूलानां प्रकृतीनां यद्भवति तदाह– उच्छिन्नेति । यदा छिन्नमूला वृक्षा भवन्ति तदा तेषु किं कुर्यात् पुरुषप्रयत्नः ? पुरुषाणां प्रयत्नः पुष्पफलार्थः । एवं च स्वामिरहिते राज्ये किं कुर्यात्प्रकृतिपुरुषाणां स्वाधिकारार्थं प्रयत्नः ? तथा च भागुरिः– 'छिन्नमूलेषु वृक्षेषु यथा नो पल्लवादिकम् । तथा स्वामिविहीनानां प्रकृतीनां न वाञ्छितम् ॥' । नीवाटी.

स्वामिदोषाः

**असत्यवादिनो नश्यन्ति सर्वे गुणाः ॥**

अथासत्यवादिनो यद्भवति तदाह– असत्येति । असत्यवादिनः पुरुषस्य ये भवन्ति गुणाः शीलकुलविद्यादयः ते सर्वे नश्यन्ति, तस्मादसत्यं न ब्रूयात् । तथा च रैभ्यः– 'कुलशीलोद्भवा ये च गुणा विद्यादयोऽपराः । ते सर्वे नाशमायान्ति ये मिथ्यावचनात्मकाः ॥' । नीवाटी.

**वञ्चकेषु न परिजनो नापि चिरायुः ॥**

अथ वञ्चकेषु यद्भवति तदाह– वञ्चकेष्विति । ये पुरुषाः परवञ्चका भवन्ति तेषां परिजनः परिग्रहः न भवति । तथा चिरायुः चिरजीवितं न स्यात् । तस्मात्परवञ्चनं न कार्यम् । तथा च भागुरिः– 'यः पुमान् वञ्चनासक्तस्तस्य न स्यात्परिग्रहः । न चिरं जीवितं तस्मात्सद्भिस्त्याज्यं हि वञ्चनम् ॥' । नीवाटी.

**स प्रियो लोकानां योऽर्थं ददाति ॥**

अथ यथा लोकस्य पुमान् प्रियो भवति तदाह– स इति । सः पुरुषः प्रियः वल्लभः भवति । केषाम् ? लोकानाम् । किंविशिष्टः ? यो ददाति । कम् ? अर्थम् । अन्त्यजोऽपि । तथा चात्रिः– 'अन्त्यजोऽपि च पापोऽपि लोकबाह्योऽपि निर्दयः । लोकानां वल्लभः सोऽत्र यो ददाति निजं धनम् ॥' । नीवाटी.

**स दाता महान् यस्य नास्ति प्रत्याशोपहतं चेतः ॥**

अथ दातृस्वरूपमाह– स इति । स दाता महान् उत्तमः । यस्य नास्ति । किं तत् ? चेतः । किंविशिष्टम् ? प्रत्याशोपहतं पुनस्तस्य पार्श्वाद्योऽसौ लाभस्तेन उपहतं दूषितमिति । तथा च ऋषिपुत्रकः– 'दत्त्वा दानं पुनर्योऽत्र तस्माल्लाभं प्रवाञ्छति । प्रग्रहीतुः सकाशाच्च तद्दानं व्यर्थतां व्रजेत् ॥' । नीवाटी.

**प्रत्युपकर्तुरुपकारः सवृद्धिकोऽर्थन्यास इव । तज्जन्मान्तरेषु च न केषामृणं येषामप्रत्युपकारमनुभवनम् ॥**

अथ प्रत्युपकारेण कृतेन यद्भवति तदाह– प्रत्युपकर्तुरिति । प्रत्युपकर्तुः संबन्धी यः उपकारः स कथंभूतः ? सवृद्धिकोऽर्थन्यास इव । यावन्न प्रत्युपकारं करोति कालान्तरेण वर्धते । येषां अप्रत्युपकारं प्रत्युपकाररहितं अनुभवनम् । ये परोपकारं अनुभवन्ति सेवन्ते तेषां तद्दणं जन्मान्तरेषु न जन्मः प्राप्नुयात् (?) । तथा च ऋषिपुत्रकः– 'उपकारं गृहीत्वा यः प्रकरोति पुनर्न वा । जन्मान्तरेषु तत्तस्य वृद्धिं याति कुसीदवत् ॥' । नीवाटी.

**किं तया गवा या न क्षरति क्षीरम् ॥**

**किं तेन स्वामिप्रसादेन यो न पूरयत्याशाम् ॥**

गतार्थमेतत् सूत्रद्वयम् । नीवाटी.

**क्षुद्रपरिषत्कः सर्पाश्रय इव न कस्यापि सेव्यः ॥**

क्षुद्रपरिवारस्य नृपस्य यद्भवति तदाह– क्षुद्रेति । परिषच्छब्देन सभा उच्यते । तस्यां यस्य क्षुद्राः दुर्जनाः अमात्या भवन्ति, तस्यां सभायां य उपविशति स राजा न कस्य सेव्यो भवति । क इव ? सर्पाश्रय इव । यत्र गृहे सर्पा भवन्ति तत्र यथा कोऽपि प्रवेशं न करोति तथा तस्यापि पार्श्वे न कोऽपि गच्छति । तथा च गुरुः– 'हंसाकारोऽपि चेद्राजा गृध्राकारैः सभासदैः ।

असेव्यः स्यात्स लोकस्य ससर्प इव संश्रयः ॥ ' ।

नीवाटी.

**अकृतज्ञस्य व्यसनेषु न सहन्ते सहायाः ॥**

अथाकृतज्ञस्य नृपतेर्यद्भवति तदाह— अकृतज्ञस्येति । न सहन्ते न सहायत्वं कुर्वन्ति । के ते ? सहायाः प्रधानसेवकाः । केषु ? व्यसनेषु आपत्कालेषु । कस्य ? अकृतज्ञस्य । यः कृत्यं न जानाति तस्य व्यसनेषु सहायाः सेवकाः सहायतां न कुर्वन्ति । तस्मात्कृतज्ञेन भूभुजा भाव्यम् । तथा च जैमिनिः— ' अकृतज्ञस्य भूपस्य व्यसने समुपस्थिते । साहाय्यं न करोत्येव कश्चिदासोऽपि मानवः ॥ ' ।

नीवाटी.

**अविशेषज्ञो विशिष्टैर्नाऽऽश्रीयते ॥**

अथाविशेषज्ञस्य नृपतेर्यद्भवति तदाह— अविशेषज्ञ इति । नाऽऽश्रीयते न सेव्यते । कैः ? विशिष्टैः साधुभिः । कोऽसौ ? अविशेषज्ञो राजा । तथा च शुक्रः— ' काचं मणिं मणिं काचं यो वेत्ति पृथिवीपतिः । सामान्योऽपि न तं सेवेत्किं पुनर्विबुधो जनः ॥ ' ।

नीवाटी.

**आत्मंभरिः परित्यज्यते कलत्रेणापि ॥**

अथ कदर्यस्य राज्ञो यद्भवति तदाह— आत्मंभरिरिति । परित्यज्यते । केन ? कलत्रेणापि । कोऽसौ ? आत्मंभरिः । आत्मानं केवलं बिभर्ति पोषयति, यो न कस्यचित्किंचिद्ददाति, स आत्मंभरिः कथ्यते । तथा च गुरुः— ' उपार्जितं यो न दद्यात्कस्यचिद्भक्षयेत्स्वयम् । आत्मंभरिः स विज्ञेयस्त्यज्यते भार्ययाऽपि च ॥ ' ।

नीवाटी.

**अनुत्साहः सर्वव्यसनानामागमनद्वारम् ॥**

अथानुत्साहस्य स्वरूपमाह— अनुत्साह इति । अनुत्साहः आलस्योपहतिः, स सर्वव्यसनानां सर्वापदां योऽसौ आगमः आगतिः तस्य द्वारम् । तेन द्वारेण सर्वव्यसनानि समायान्ति । तथा च बादरायणः— 'आलस्योपहतो यस्तु पुरुषः संप्रजायते । व्यसनानि न तं क्वापि संत्यजन्ति कथंचन ॥ ' ।

नीवाटी.

उत्साहगुणाः स्वामिनः

**शौर्यममर्षः शीघ्रकारिता तत्कर्मप्रवीणत्वमुत्साहगुणाः ॥**

अथोत्साहगुणानाह— शौर्यमिति । उत्साहः उद्यमः, तस्य तावच्छौर्यं गुणः, तथा अमर्षः परापकारे कृते कोपः, तथा शीघ्रकारिता सर्वेषु कर्मसु अमन्दता, तथा तत्कर्मप्रवीणत्वमिति सर्वे उत्साहगुणाः । तथा च शौनकः— ' शौर्यं कार्यार्थिकोपश्च शीघ्रता सर्वकर्मसु । तत्कर्मणः प्रवीणत्वमुत्साहस्य गुणाः स्मृताः ॥ ' ।

नीवाटी.

स्वामिदोषाः

**अन्यायप्रवृत्तस्य न चिरं संपदो भवन्ति ॥**

अथान्यायप्रवृत्तस्य यद्भवति तदाह— अन्यायेति । यः पुमानन्यायेन वर्तते तस्य चिरं प्रभूतकालं न संपदः लक्ष्म्यः भवन्ति । तथा चात्रिः— ' अन्यायेन प्रवृत्तस्य न चिरं सन्ति संपदः । अपि शौर्यसमेतस्य प्रभूतविभवस्य च ॥ ' ।

नीवाटी.

**यत्किंचनकारी स्वैः परैर्वाऽभिहन्यते ॥**

अथ स्वेच्छाचारिणः पुरुषस्य यद्भवति तदाह— यत्किंचनेति । यत्किंचनकारी यः स्वेच्छया वर्तते, न कमपि पृच्छति, न कस्यचिद्वचनं शृणोति, स हन्यते व्यापाद्यते । कैः ? परैः शत्रुभिः, स्वैर्वा वध्यते । तथा चात्रिः— ' स्वेच्छया वर्तते यस्तु न वृद्धान् परिपृच्छति । स परैर्हन्यते नूनमात्मीयैर्वा निरङ्कुशः ॥ ' ।

नीवाटी.

राजाज्ञा श्रेष्ठा

**आज्ञाफलमैश्वर्यम् ॥**

अथैश्वर्यस्य स्वरूपमाह— आज्ञेति । यत् ऐश्वर्यं प्रभुता तस्य फलम् । काऽसौ ? आज्ञा आदेशः, नान्यत् । तथा च वल्लभदेवः— ' स एव प्रोच्यते राजा यस्याऽऽज्ञा सर्वतः स्थिता । अभिषेको व्रणस्यापि व्यजनं पट्टमेव च ॥ ' ।

नीवाटी.

**दत्तभुक्तफलं धनम् ॥**

**रतिपुत्रफला दाराः ॥**

**राजा(ज्ञा ? ) हि सर्वेषामलङ्घ्यः प्राकारः ॥**

अथ राज्ञः स्वरूपमाह— राजेति । योऽसौ राजा भवति स किंविशिष्टः ? सर्वेषां मर्त्यानां अलङ्घ्यः अनतिक्रमणीयः । क इव ? प्राकार इव । तथा च गुरुः— 'अलङ्घ्यो यो भवेद्राजा प्राकार इव मानवैः । यमादेशमसौ दद्यात्कार्य एव हि स ध्रुवम् ॥ ' । नीवाटी.

**आज्ञाभङ्गकारिणं पुत्रमपि न सहेत ॥**

अथ भूयोऽपि राजा यादृग् भवति तदाह— आज्ञेति । न सहेत नं क्षमेत । कम् ? पुत्रमपि । किंविशिष्टम् ? आज्ञाभङ्गकारिणम् । य आज्ञाभङ्गं करोति स पुत्रोऽपि त्याज्यः । यतः आज्ञाप्रधानो राजा । तथा च नारदः— 'आज्ञाभङ्गो नरेन्द्राणामशस्त्रो वध उच्यते । प्राणार्थिभिर्न कर्तव्यस्तस्मात्सोऽत्र कथंचन ॥ ' । नीवाटी.

**कस्तस्य चित्रगतस्य च विशेषो यस्याऽऽज्ञा नास्ति ॥**

भूयोऽपि भूपस्वरूपमाह— कस्तस्येति । यस्य राज्ञः आज्ञाभङ्गो जनैः क्रियते तस्य चित्रगतस्य चित्रलिखितस्य च को विशेषः ? यथा चित्रलिखितो राजा नाऽऽज्ञां प्रयच्छति तथा सोऽपि मन्तव्यः । तथा च गुरुः — 'यस्याऽऽज्ञा नैव कुर्वन्ति भूमौ भूपस्य मानवाः । आलेख्यगः स मन्तव्यो न मनुष्यः कथंचन ॥ ' । नीवाटी.

**रा(जा ? )ज्ञावरुद्धस्य तदाज्ञां न भजेत् ॥**

अथ राजावरुद्धस्य यत्कर्तव्यं तदाह— रा(जा ? )ज्ञेति । न भजेत् न कारयेत् । काम् ? आज्ञां आदेशम् । कस्य ? राज्ञाऽवरुद्धस्य । यो राज्ञ आज्ञां न करोति तस्याऽऽज्ञा न कार्येति नीतिः । तथा च भारद्वाजः— 'विरुद्धो वर्तते यस्तु भूपतेः सह मानवः । तस्याऽऽज्ञां कुरुते यस्तु स दण्डार्हो भवेन्नरः ॥ ' । नीवाटी.

**परमर्माकार्यमश्रद्धेयं च न भाषेत ॥**

अथ पुरुषेण यत्कर्तव्यं तदाह— परेति । न भाषेत न वक्तव्यम् । किं तत् ? परमर्म परगुह्यम् । कथं न भाषेत ? अकार्यं प्रयोजनरहितम्, तथा अश्रद्धेयं यन्न घटते इति । तथा च भागुरिः— 'परमर्म न वक्तव्यं कार्यबाह्यं कथंचन । अश्रद्धेयं च विज्ञेयं य इच्छेद्धितमात्मनः ॥ ' । नीवाटी.

**वेषमाचारं वाऽनभिजातं न भजेत् ॥**

**विकारिणि प्रभौ को नाम न विरज्यते ॥**

अथ विकारिणि प्रभौ यद्भवति तदाह— विकारिणीति । विकारिणि प्रभौ विकारयुक्ते स्वामिनि को नामाहो न विरज्यते न विरक्तिं करोति ? अपि तु सर्वोऽपि जनो विरक्तो भवति । तस्मात्स्वामिना विकृतिर्न कार्या । यथा च हारीतः— 'विकारान् कुरुते योऽत्र प्रकृत्या नैव तिष्ठति । प्रभोस्तस्य विरज्यन्ते निजा अपि च बन्धवः ॥ ' । नीवाटी.

**अधर्मपरे राज्ञि को नाम नाधर्मपरः ॥**

अथाधर्मपरे राज्ञि यद्भवति तदाह— अधर्मपर इति । यत्र राजा अधर्मपरो भवति तत्र को नामापरोऽन्यो नाधर्मपरो भवति ? अपि तु सर्वोऽपि जनः पापानुरक्तो भवति । तथा च व्यासः— 'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ' । नीवाटी.

**राज्ञाऽवज्ञातो यः स सर्वैरवज्ञायते ॥**

अथ राज्ञाऽवज्ञातस्य यद्भवति तदाह— राज्ञेति । राज्ञा यः पुरुषोऽवज्ञातो भवति स सर्वैरपि अवज्ञायते । तस्य न कोऽप्यादरं करोति । तथा च नारदः—'अवज्ञातस्तु यो राज्ञा स विद्वानपि मानवैः । अवज्ञायेत मूर्खोऽपि पूज्यते नृपपूजितः ॥ ' । नीवाटी.

**पूजितं पूजयन्ति लोकाः ॥**

तमेव द्रढयति— पूजितमिति । गतार्थमेतत् । नीवाटी.

प्रजाकार्यं स्वामिना स्वयं द्रष्टव्यम्

**प्रजाकार्यं स्वयमेव पश्येत् ॥**

अथ राज्ञा यत्कर्तव्यं तदाह— प्रजाकार्यमिति । यत् प्रजानां कार्यं प्रजाप्रयोजनं तत् स्वयं पश्येत् विचारयेत्, नान्यैः । यतोऽन्येऽधिकृता उत्कोचया विचारयन्ति । तथा च देवलः— 'ये स्युर्विचारका राज्ञामुत्कोचां

प्राप्य तेऽन्यथा । विचारयन्ति कार्याणि तत्पापं नृपतेर्यतः ॥ ' । नीवाटी.

स्वामिनो दुर्दर्शत्वं दोषः

**यथावसरमसङ्गं द्वारं कारयेत् ॥**

तथा भूयोऽपि राज्ञा यत्कर्तव्यं तदाह— यथावसरमिति । यथावसरं प्रस्तावमनतिक्रम्य कुर्यात् । किं तत् ? द्वारं राजद्वारम् । किंविशिष्टं कुर्यात् ? असङ्गम् । यथा कश्चित्प्रविशति तथा कार्यम् । तथा च गर्गः— ' मुक्त्वाऽवसरमेकं च द्वारं गुप्तं प्रकारयेत् । प्रस्तावेऽपि परिज्ञातो न द्रष्टव्यो महीभुजा ॥ ' । नीवाटी.

**दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते द्विषतामतिसंधानीयश्च भवति ॥**

अथ दुर्दर्शस्य भूपतेर्यद्भवति तदाह— दुर्दर्श इति । यो राजा केनापि सह दर्शनं न करोति, एकान्तशीलोऽस्ति, तस्य कार्यते काराप्यते । कम् ? कार्याकार्यविपर्यासं व्यत्ययम् । कैः ? आसन्नैः सचिवाद्यैः । तस्मादवसरः कार्यः । यथा च राजपुत्रः— ' ज्ञानिनं धनिनं दीनं योगिनं चाऽऽर्तिसंयुतम् । द्वारस्थं य उपेक्षेत स श्रिया समुपेक्ष्यते ॥ ' । न केवलं स राजा कार्याकार्यविपर्यासं काराप्यते, अपरमतिसंधानीयो भवति संधानरहितो भवति । केषाम् ? द्विषतां शत्रूणाम् । ये तस्य शत्रवो भवन्ति ते संधानं तेन कृतं यत्पूर्वमासीत् तत् परित्यजन्ति । तथा च गर्गः— ' स्त्रीसमासक्तचित्तो यः क्षितिपः संप्रजायते । वामतां सर्वकृत्येषु सचिवैर्नीयतेऽरिभिः ॥ ' । नीवाटी.

राजपुरुषाः स्वामिव्यसनजीविनः

**वैद्येषु श्रीमतां व्याधिवर्धनादिव नियोगिषु भर्तृव्यसनादपरो नास्ति जीवनोपायः ॥**

अथ नियोगिनां यथा जीवनोपायो भवति तदाह— वैद्येष्विति । नास्ति न विद्यते । कोऽसौ ? जीवनोपायः वर्तनम् । किंविशिष्टः ? अपरः द्वितीयः । केषु ? नियोगिषु । केष्विव ? वैद्येष्विव । कस्मात् ? व्याधिवर्धनात् । यथा जीवनोपायो वैद्यानां भवति तथा नियोगिनां स्वामिव्यसने वृद्धे जीवनोपायः । तथा च रैभ्यः— ' ईश्वराणां यथा व्याधिर्वैद्यानां निधिरुत्तमः । नियोगिनां तथा ज्ञेयः स्वामिव्यसनसंभवः ॥ ' । नीवाटी.

लञ्चग्रहणदोषाः

**कार्यार्थिनः पुरुषान् लञ्चलुञ्चानिशाचराणां भूतबलीन् न कुर्यात् ॥**

अथ कार्यार्थिनां विषये भूभुजा यत्कर्तव्यं तदाह— कार्यार्थिन इति । न कुर्यात् न विधीयीत (? विदधीत) पुरुषान् । किंविशिष्टान् ? कार्यार्थिनः समायातान् । केषां भूतबलीन् ? लञ्चलुञ्चानिशाचराणाम् । लञ्चशब्देन उत्कोचः, लुञ्चाशब्देन बलात्कारः, एत एव निशाचराः राक्षसाः । एतदुक्तं भवति— ये भूतबल्यो दीयन्ते ते काकादीनां दीयन्ते, न निशाचराणाम् । निशाचराणां दत्तैरेभिः श्रेयो न भवति । एवं लञ्चलुञ्चादिभिः चाटैः कार्यार्थिनो ये गृह्यन्ते ते तावन्निर्द्रव्या भवन्ति, राज्ञः कोशक्षितिर्भवति । तस्मात्तैः सह दर्शनं कृत्वा कार्यसाधना स्वयं कर्तव्या । तथा च शुक्रः— ' कार्यार्थिनः समायातान् यश्च भूपो न पश्यति । स चाटैर्गृह्यते तेषां दत्तं कोशे न जायते ॥ ' । नीवाटी.

**लञ्चलुञ्चा हि सर्वपातकानामागमनद्वारम् ॥**

अथ लञ्चलुञ्चास्वरूपमाह— लञ्चेति । योऽसौ लञ्चलुञ्चाव्यवहारः स हि स्फुटं सर्वपातकानां आगमनद्वारं स्यात् तन्न कार्यम् । यतस्तद्द्वारेण सर्वपातकानि समागच्छन्ति । तथा च वसिष्ठः— ' लञ्चलुञ्चानको यस्य चाटकर्मरतो नरः । तस्मिन् सर्वाणि पापानि संश्रयन्तीह सर्वदा ॥ ' । नीवाटी.

**मातुः स्तनमपि लुञ्चन्ति लञ्चोपजीविनः ॥**

अथ लञ्चोपजीविनो यत्कुर्वन्ति तदाह— मातुरिति । लञ्चोपजीविनो येऽत्र ते जनन्यास्तनमपि भक्षयन्ति, काऽन्येषां कथा ? तथा च भारद्वाजः— ' लञ्चोपजीविनो येऽत्र जनन्या अपि च स्तनम् । भक्षयन्ति सुनिस्त्रिंशा अन्यलोकस्य का कथा ॥ ' । नीवाटी.

**लञ्चेन कार्यकारिभिरुरभ्रवत्स्वामी विक्रीयते ॥**

अथ लञ्चेन कार्यकारिभिः स्वामिनो यत् क्रियते तदाह— लञ्चेनेति । विक्रीयते परवशः क्रियते । कोऽसौ ?

स्वामी प्रभुः । कैः ? कार्यकारिभिः । केन कृत्वा ? लञ्चेन चाटक्रियया । तथा च भृगुः— 'लञ्चेन कर्मणा यत्र कार्यं कुर्वन्ति भूपतेः । विक्रीतमपि चाऽऽत्मानं नो जानाति स मूढधीः ॥'। नीवाटी.

**प्रासादध्वंसनेन लोहकीलकलाभ इव लञ्चेन राज्ञोऽर्थलाभः ॥**

अथ लञ्चालाभेन यो नृपस्य लाभो भवति तत्स्वरूपमाह— प्रासादेति । योऽर्थलाभो भवति । कस्य ? भूपतेः । केन कृत्वा ? लञ्चेन बलात्कारग्रहणेन । स किंविशिष्टो लाभः ? लोहकीलकलाभ इव । कस्मिन् कृते ? प्रासादविध्वंसने कृते । यथा लोहकीलकार्थे प्रासादविध्वंसः क्रियते एवं बलात्कारेण यो लाभः स तावन्मात्रः । तथा च गर्गः— 'लञ्चद्वारेण यो लाभो भूमिपानां स कीदृशः । लोहकीलकलाभस्तु यथा प्रासादध्वंसने ॥'। नीवाटी.

**राज्ञो लञ्चेन कार्यकरणे कस्य नाम कल्याणम् ॥**

अथ लञ्चेन कर्मणा कृतेन राज्ञो यद्भवति तदाह— राज्ञ इति । नामाहो कस्य कल्याणं शुभं भवति ? कस्मिन् ? लञ्चेन कार्यकरणे बलात्कारेण हरणे । कस्य ? राज्ञः भूपस्य । समुत्था ( ? ) किमपि कोऽपि यदि बलात्कारं करोति तत्कल्याणं न भवति । तथा च भागुरिः— 'लञ्चनद्वारमाश्रित्य यो राजोत्थधनं हरेत् । न तस्य किंचित् कल्याणं कदाचित्संप्रजायते ॥'। नीवाटी.

**देवताऽपि यदि चौरेषु मिलति कुतः प्रजानां कुशलम् ॥**

अथ राजाऽपि लुञ्चद्वारेण वित्तमुपार्जयति तदा यद्भवति तदाह— देवताऽपीति । देवता दुर्गाऽपि सा चोराणां मिलति साहाय्यं करोति, तदा प्रजानां कुतः कल्याणं क्षेमम् ? न कस्मादपि भवतीत्यर्थः । एवं यदा राजाऽपि लञ्चासक्तो भवति तदा प्रजानां कुतः कल्याणं स्यात् ? तथा च अत्रिः— 'राज्ञो लुञ्चाप्रवृत्तस्य कीदृक् स्याज्जनतासुखम् । यथा दुर्गाप्रसादेन चौरोपरि कृतेन च ॥'। नीवाटी.

**लुञ्चेनार्थोपाश्रयं दर्शयन् देशं कोशं मित्रं तन्त्रं च भक्षयति ॥**

अथ लुञ्चेनार्थदर्शनेन यद्भवति तदाह— लुञ्चेनेति । लुञ्चेन यो राजा अर्थोपाश्रयं दर्शयति स किं करोति ? नाशं नयति । कम् ? देशम्, कोशं भाण्डागारम्, तथा मित्रं इष्टं च, तथा तन्त्रं सैन्यम् । सर्वमेतन्नाशयति । तस्माल्लुञ्चार्थदर्शनं न कार्यमिति । तथा च भागुरिः— 'दर्शनं लुञ्चनार्थस्य यः करोति महीपतिः । स देशकोषमित्राणां तन्त्रस्य च क्षयंकरः ॥'। नीवाटी.

स्वामिकर्तव्यं न्यायतः परिपालनम्

**राज्ञोऽन्यायकरणं समुद्रस्य मर्यादालङ्घनमादित्यस्य तमःपोषणं मातुः स्वापत्यभक्षणमिति कलिकालविजृम्भितानि ॥**

अथ राज्ञोऽन्यायकरणस्य यद्भवति तदाह— राज्ञ इति । राजा कलिकालकृतस्य च कारणम् । नीवाटी.

**न्यायतः परिपालके राज्ञि प्रजानां कामदुघा भवन्ति सर्वा दिशः ॥**

अथ न्यायतः परिपालके राज्ञि प्रजानां यद्भवति तदाह— न्यायत इति । यदि राजा न्यायेन परिपालनं करोति तत् प्रजानां सर्वा दिशः कामदुघा भवन्ति । कार्यैः कृषिवाणिज्यकुसीदकरणादिभिः सर्वलोकः सर्वासु दिक्षु वाञ्छितं प्राप्नोतीत्यर्थः । तथा च— 'राज्ञि चिन्तापरे देशे स्वार्थसिद्धिः प्रजायते । क्षेमेण कर्षकाः सस्यं प्राप्नुयुर्धनिनो धनम् ॥'। नीवाटी.

**काले वर्षति मघवान्, सर्वाश्चेतयः प्रशाम्यन्ति, राजानमनुवर्तन्ते सर्वेऽपि लोकपालाः ॥**

अथान्यदपि यद्भवति तदाह— काल इति । ये लोकपालाः शक्रप्रभृतयः ते राजानमनुवर्तन्ते । यदि राजा परिपालको भवति तत् लोकपाला अपि तस्य राष्ट्रे वृष्ट्यादिभिः प्रजासौख्यं कुर्वन्ति । यदि पुनः राजा लञ्चादिभिः पीडयति * । तथा च गुरुः— 'इन्द्रादिलोकपाला ये पार्थिवे परिपालके । पालयन्ति च तद्राष्ट्रं वामे वामं च कुर्वते ॥'। नीवाटी.

---

* अतः परः ग्रन्थांशः प्रभ्रष्टः इति प्रतीयते ।

**तेन मध्यममप्युत्तमं लोकपालं राजानमाहुः ॥**

अथ राजा मध्यमोऽप्युत्तमो येन भवति तदाह— तेनेति । तेन कारणेन आहुः कथयन्ति स्म । के ? जनाः लोकाः । कम् ? राजानम् । किंविशिष्टम् ? उत्तमम् । किंविशिष्टमपि ? मध्यममपि । कथंभूतम् ? लोकपालं प्रजारक्षणतत्परम् । तथा च रैभ्यः— ‘ लब्धादिविरतो राजा मध्यमोऽप्यथ मानवैः । श्लाघ्यते यस्तु लोकानां सम्यक् स्यात्परिपालकः ॥ ’ । नीवाटी.

स्वामी विश्वकुटुम्बी

**अव्यसनेन क्षीणधनान् मूलधनप्रदानेन संभावयेत् ॥**

अथ राज्ञा लोकस्य यत्कर्तव्यं तदाह— अव्यसनेनेति । उद्धारकवित्तप्रदानेन । तथा च शुक्रः— ‘ प्रतिकं च शतं वृद्धया देयं राज्ञा कुटुम्बिने । सीदमानाय नो देयं द्यूताद्यैर्निर्धनाय च ॥ ’ । नीवाटी.

**राज्ञो हि समुद्रावधिर्मही कुटुम्बम्, कलत्राणि च वंशवर्धनक्षेत्राणि ॥**

अथ राज्ञः पृथिवी यादृशी भवति तदाह— राज्ञो हीति । गतार्थमेतत् । नीवाटी.

केचित् संकीर्णाः राजधर्माः

**अर्थिनामुपायनमप्रतिकुर्वाणो न गृह्णीयात् ॥**

अथ राज्ञाऽर्थिनां यत्कृत्यं तदाह— अर्थिनामिति । न गृह्णीयात् तेषां यदि कार्यार्थिनां कार्यं न साधयति । असिद्धे च तस्मिन् ढौकनीयं तेषामर्पणीयमिति । तथा च नारदः— ‘ उपायनं न गृह्णीयाद्यदि कार्यं न साधयेत् । अर्थिनां पृथिवीपालो नो चेद्याति स वाच्यताम् ॥ ’ । नीवाटी.

**आगन्तुकैरसहनैश्च सह नर्म न कुर्यात् ॥**

अथान्यदपि राज्ञा यत्कर्तव्यं तदाह— आगन्तुकैरिति । न कुर्यात् न कर्तव्यम् । किम् ? नर्म हास्यम् । कथम् ? सह सार्धम् । कैः ? आगन्तुकैः बाह्यैः, तथा असहनैः ये नर्मक्रीडां न सहन्ते । तथा च शौनकः— ‘ हास्यकेलिं न कुर्वीत भूपः सार्धं समागतैः । ये चापि न सहन्ते स्म दोषोऽयं हि यतोऽपरः ॥ ’ । नीवाटी.

**पूज्यैः सह नाधिकं वदेत् ॥**

अथ भूयोऽपि राज्ञो यत्कर्तव्यं तदाह— पूज्यैरिति । पूज्यैः नमस्कृत्यैः सह न अधिकं वदेत् न विवादं कुर्यात् । तथा च शुक्रः— ‘ पूज्यैः सह विवादं यः कुरुते मतिवर्जितः । स निन्दां लभते लोके परत्र नरकं व्रजेत् ॥ ’ । नीवाटी.

**भर्तुमशक्यमप्रयोजनं च जनं नाऽऽशया परिक्लेशयेत् ॥**

अथ भूभुजा भूयोऽपि यत्कर्तव्यं तदाह— भर्तुमिति । न परिक्लेशयेत् न कष्टभाजं कुर्यात् । कम् ? अप्रयोजनं कार्यरहितम् । कम् ? जनं लोकम् । किंविशिष्टम् ? अशक्यम् । किं कर्तुम् ? भर्तुं पोषयितुं पुष्टिं नेतुम् । यो जनो भर्तुं न शक्यते तमाशया व्यर्थया प्रयोजनबाह्यं न क्लेशयेदिति । तथा च शुक्रः— ‘ पुष्टिं नेतुं न शक्येत यो जनः पृथिवीभुजा । वृथाऽऽशया न संक्लेश्यो विशेषान्निष्प्रयोजनः ॥ ’ । नीवाटी.

**पुरुषस्य पुरुषो न दासः किंतु धनस्य ॥**

अथ पुरुषस्य पुरुषो यथा दासो न भवति तदाह— पुरुषस्येति । यत्पुरुषस्य पुरुषो दासः भृत्यतां गच्छति सामान्यहस्तपादादिगात्रविभवः तन्न तस्य दासः । किंतु धनस्य दासतां याति लब्धेन निर्वाहो भवति । तथा च गुरुः— ‘ पुमान् सामान्यगात्रोऽपि न चान्यस्य स कर्मकृत् । यत्करोति पुनः कर्म दासवत्तद्धनस्य च ॥ ’ । नीवाटी.

**को नाम धनहीनो न भवेल्लघुः ॥**

अथ धनहीनः पुमान्यथा भवति तदाह— को नामेति । नाम अहो को न स्यात् लघुः लघुतायुक्तः ? किंविशिष्टः ? धनहीनः विभवरहितः । तथा च कालिदासः— ‘ रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ ’ ( मेघदूते १।२० ) । नीवाटी.

**पराधीनेषु नास्ति शर्मसंपत्तिः ॥**

**सर्वधनेषु विद्यैव धनं प्रधानमहार्यत्वात्सहानुयायित्वाच्च ॥**

अथ विद्याधनस्य माहात्म्यमाह— सर्वधनेष्विति। सर्वेषां धनानां सुवर्णादीनां प्रधानं उत्तमम्। किं तत्? विद्याधनम्। कस्मात्? अहार्यत्वात्। कैः? चौरादिभिः। तथा सहानुयायित्वाच्च सहगमनात्। यो येन शताद्यपि यद्धनं तथा चौरादयोऽपहरन्ति, तथा मृतस्य गृहे न तिष्ठति (?)। तस्माद्विद्याधनं कार्यम्। तथा च नारदः— 'धनानामेव सर्वेषां विद्याधनमनुत्तमम्। ह्रियते यन्न केनापि प्रस्थितेन समं व्रजेत्॥'। नीवाटी.

**सरित्समुद्रमिव नीचोपगताऽपि विद्या दुर्दर्शमपि राजानं संगमयति ॥**

अथ भूयोऽपि विद्यामाहात्म्यमाह— सरिदिति। कमिव? सरित् समुद्रमिव। यथा सरित् नदी नीचमार्गोपगताऽपि समुद्रसङ्गं प्राप्नोति, तथा नीचादपि उपार्जिता विद्या दुर्दर्शनेनापि राज्ञा सह दर्शनं कारयति। तथा च गुरुः— 'नीचादपि च यो विद्यां प्राप्नुयाद्बुद्धिमान्नरः। दुर्दर्शमपि राजानं तत्प्रभावात्स पश्यति॥'। नीवाटी.

**परं तु भाग्यानां व्यापारः ॥**

अथ राज्ञा सह दर्शनेन विज्ञस्यापि यद्भवति तदाह— परमिति। राज्ञा सह दर्शने जाते परं तु भाग्यानां पुण्यानां तस्य विज्ञस्य व्यापारो व्यवसायः। यदि तस्य विज्ञस्य भाग्यं पूर्वकृतं सुकृतं भवति ततः प्रभूतलाभो भवति, अशुभं वा स्यात् तत्र किंचिद्भवति। तत्र विषये विद्यायाः प्रभुत्वम्। तथा च गुरुः— 'दुर्दर्शमपि राजानं विद्या दर्शयति ध्रुवम्। आत्मप्रभावतो लोके तस्य (? ततो) भाग्यानि केवलम्॥'। नीवाटी.

लोकव्यवहारज्ञानं विद्याप्रयोजनम्

**सा खलु विद्या विदुषां कामधेनुर्यतो भवति समस्तजगत्स्थितिपरिज्ञानम् ॥**

अथ भूयोऽपि विद्याया माहात्म्यमाह— सा खल्विति। सा विद्या खलु निश्चयेन कामधेनुर्भवति। केषाम्? विदुषाम्। तस्या यतो भवेत् समस्तजगत्स्थितिपरिज्ञानं सर्वस्मिन्नपि जगति स्थितिः स्थानं भवति, तथा परिज्ञानं भवति। तथा च शुक्रः— 'विद्या कामदुघा धेनुर्विज्ञानं संप्रजायते। यतस्तस्याः प्रभावेन पूज्या स्युः सर्वतो दिशः॥'। नीवाटी.

**लोकव्यवहारज्ञो हि सर्वज्ञोऽन्यस्तु प्राज्ञोऽप्यवज्ञायत एव ॥**

अथ लोकव्यवहारज्ञस्य यद्भवति तदाह— लोकेति। लोकव्यवहारज्ञः यो लोकव्यवहारं जानाति स मन्दमतिरपि सर्वज्ञकल्पो भवति। यस्तु पुनरन्यो लोकव्यवहारं न जानाति स प्राज्ञोऽपि पण्डितोऽपि अवज्ञायते अवज्ञां लभते जनात्। तथा च नारदः— 'लोकानां व्यवहारं यो विजानाति स पण्डितः। मूर्खोऽपि योऽथवाऽन्यस्तु स विज्ञोऽपि यथा जडः॥'। नीवाटी.

प्रज्ञाप्रयोजनं परप्रतिबोधनम्

**ते खलु प्रज्ञापारमिताः पुरुषा ये कुर्वन्ति परेषां प्रतिबोधनम् ॥**

अथ प्रज्ञापारंगतानां लक्षणमाह— ते खल्विति। पुरुषाः इताः गताः खलु निश्चयेन। कम्? प्रज्ञापारं मतिपर्यन्तम्। ये कुर्वन्ति प्रतिबोधनम्। केषाम्? परेषां अन्येषाम्। तथा च जैमिनिः— 'अथ विज्ञाः प्रकुर्वन्ति येऽन्येषां प्रतिबोधनम्। सर्वज्ञास्ते परे मूर्खा यत्ते स्युर्घटदीपवत्॥'। नीवाटी.

**अनुपयोगिना किं महताऽपि जलनिधिजलेन ॥**

अथ ये प्रतिबोधं न जनयन्ति विज्ञास्तानुद्दिश्याऽऽह— अनुपयोगिनेति। जलनिधिजलेन समुद्रोदकेन महताऽपि प्रभूतेनापि किं तेन अनुपयोगिना अपेयेन? एवं प्रभूतया विद्यया किं तया ययाऽन्येषां प्रतिबोधो न क्रियते? तथा च शुक्रः— 'किं तया विद्यया कार्यं या न

बोधयते परान् । प्रभूतैश्चापि किं तोयैर्जलधेर्व्यर्थतां गतैः ॥'। नीवाटी.

## युक्तिकल्पतरुः

स्वामिनः उत्साहलक्षणानि

[1]वीतव्यसनमश्रान्तं महोत्साहं महामतिम् ।
प्रविशन्ति महाराजमपांपतिमिवाऽऽपगाः ॥
अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् ।
प्रमदेव वृद्धपतिं नेच्छत्युपग्रहीतुं कमला ॥
उत्साहाच्छ्रियमाप्नोति उत्साहाच्च महद्यशः ।
तस्मात्सर्वोपधाशुद्धमुत्साहं नित्यमाचरेत् ॥
अमर्षश्चैव शौर्यं च शीघ्रकारित्वमेव च ।
तत्कर्मणि प्रवीणत्वमित्युत्साहगुणा मताः ॥
व्यसनस्याऽऽगमद्वारमनुत्साहो महीपतेः ॥

## मानसोल्लासः

स्वामिनः प्राप्तराज्यस्थिरीभावकारणानि

[2]राज्यप्राप्तिनिमित्तानि कथितानीह विंशतिः ।
तत्स्थिरीभावमुद्दिश्य कारणानि वदाम्यहम् ॥
सत्यं सत्त्वं कुलं शीलं तारुण्यं च सुरूपता ।
दाक्षिण्यमविसंवादो वृद्धसेवा कृतज्ञता ॥
अक्षुद्रपरिवारत्वं बुद्धिर्दैवसहायता ।
वश्यसामन्तता शक्तिर्दक्षत्वं क्षिप्रकारिता ॥
शौर्यं धैर्यं क्षमौदार्यं शुचित्वं प्रियवादिता ।
उद्योगित्वमनिर्वेदः सर्वदा धर्मकारिता ॥
जनानुरागः सौभाग्यं शास्त्रशस्त्रास्त्रनैपुणम् ।
विवेको दृढचित्तत्वं कलाकुशलता धनम् ॥
दोषानुरूपदण्डत्वं सर्वसत्त्वहितैषिता ।
दयालुत्वं प्रसन्नत्वं भृत्यानां सुखदर्शिता ॥
आर्जवं तत्त्वदर्शित्वं सदोत्साहो नयज्ञता ।
मङ्गलाचार इत्येतैर्गुणैर्युक्तो वरो नृपः ॥
सत्यं शौर्यं क्षमा दानं पञ्चमी स्याद्गुणज्ञता ।
अवश्यं भाविनः पञ्च गुणास्त्वेते महीभुजाम् ॥

(१) युक. पृ. १४१९५–९९.
(२) मासो. २।१–९.

विभूतिं च तथा कीर्तिं धर्मं च विजयं सुखम् ।
यशश्चेत्सततं राजा गुणानेतान् विधारयेत् ॥

स्वामी त्रिविधः आत्मायत्तः द्व्यायत्तः सचिवायत्तश्च

[1]आत्मायत्तो नृपः श्रेष्ठो द्व्यायत्तस्तु मध्यमः ।
कनिष्ठः सचिवायत्त इति नीतिविदो विदुः ॥
मदधीनमिदं राज्यं राजा च वशगो मम ।
मया यत्क्रियते कार्यं तत्कार्यं केन लङ्घ्यते ॥
इत्यात्मगर्वेणाऽऽध्मातः सचिवो यत्र जल्पति ।
कनिष्ठं तत्र तद्राज्यं सचिवायत्तमुच्यते ॥
विज्ञप्तं यन्मया कार्यमवश्यं मन्यते प्रभुः ।
इत्यारोप्य द्वयोः साम्यं सचिवो यत्तु भाषते ॥
सुखासुखप्रदं चैवमुभयाधीनसिद्धितः ।
तद्राज्यमुभयायत्तं मध्यमं परिकीर्तितम् ॥
प्रभोराज्ञां विना नाहं समर्थः कार्यसिद्धये ।
इति भीत्या नृपे भक्त्या सचिवो यत्र वक्त्यलम् ॥
यत्तु राज्यं भयापेतं सुखदं सर्वसिद्धिदम् ।
श्रेष्ठं स्थिरतरं सम्यगात्मायत्तं प्रकीर्तितम् ॥

प्रभुशक्तिः उत्साहशक्तिश्च

अनुग्रहे निग्रहे च दाने चाऽऽदानकर्मणि ।
प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा ॥
स्वयं समर्थो यो राजा स्वाज्ञा चैव निरर्गला ।
निजशक्त्या समायुक्तः स प्रभुः प्रभुरुच्यते ॥
आज्ञारूपेण या शक्तिः सर्वेषां मूर्धनि स्थिता ।
प्रभुशक्तिर्हि सा ज्ञेया सप्रभा महिमोदया ॥
[2]भूमिं द्रव्यं गजानश्वान् रत्नानि विजयं तथा ।
ग्रहीतुमुद्यतोऽरीणां विक्रमोपचितो नृपः ॥
प्रारब्धं यत्स्वयं कार्यं दैवाद्यदि न सिध्यति ।
न सीदति च तत्कर्तुमुत्साही च पुनः पुनः ॥
यस्य स्यादुद्यमे नित्यं चित्तमुत्साहसंयुतम् ।
उत्साहशक्तिः सा ज्ञेया नृपाणां भूतिमिच्छताम् ॥

(१) मासो. २।६८७–६९६.
(२) मासो. २।७२२–७२४.

## गौतमः

गुणवदमात्यसंग्रहणम्

*[1]गुणवत्सहायोपायसंपन्नः ॥

## हारीतः

अमात्यानां गुणाः कर्तव्यानि च

[2]कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च ।
आज्ञां न वितथां कुर्याद्यथाशक्ति महीपतेः ॥
अल्पेच्छो धृतिमान् प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेद्यः स राजवसतिं वसेत् ॥

लक्षणमुखेनामात्यधर्मानाहतुर्नारदहारीतौ— क इत्यादिना । अल्पेच्छः नातिधनाकाङ्क्षी । छायेवानुगतः मन्त्रादिकार्यकाले, न तु रहस्यकर्मादौ, निषेधश्रवणात् ।

रार. १२

दूरादेवेक्षणे हासः संप्रश्नेष्वादरो भृशम् ।
परोक्षेऽपि गुणः श्लाघ्यः स्मरणं प्रियवस्तुषु ॥
अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥

पेशलाः प्रवीणाः । समे निम्नोन्नतानीवेति । यथा चित्रलेखकाः पटादौ लिखनकौशलेन समे निम्नमुन्नतं दर्शयन्ति, तथैव प्रवीणमन्त्रिणः चातुर्येणातथ्यानि अप्रतीकार्याणि सप्रतीकाराणि दर्शयन्ति । तथा च यस्य प्रतीकारोत्तरादि नास्ति तस्य तत् संपादयन्तीत्याशयः ।

रार. १२-१३

नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि प्रियम् ।
कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥

आपदि प्रियमपृष्टमपि कुर्वीतेत्यर्थः । रार. १३

* व्याख्यासंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः— स्वामी' इत्यस्मिन् प्रकरणे ( पृ. ११७१ ) द्रष्टव्यः ।

(१) गौध. ११।४.

(२) रार. १२. षट् श्लोकाः.

स चामात्यः सदा श्रेयान् काकिनीमपि वर्धयेत् ।
कोषं प्राहुर्यतः प्राणान् ततः प्राणाः स भूपतेः ॥

काकिनी वराटकसंख्या । प्राणाः प्राणतुल्याः ।

रार. १३

## वसिष्ठः

हंससदृशो राजा इष्टः अगृध्रपरिवारश्च

*[1]वेधसो वा राजा श्रेयान् गृध्रपरिवारः स्यात् ॥
गृध्रपरिवारो वा राजा श्रेयान् ॥
गृध्रपरिवारः स्यान्न गृध्रो गृध्रपरिवारः स्यात् ॥
परिवाराद्धि दोषाः प्रादुर्भवन्ति ॥
स्तेयहारविनाशनं च ॥
तस्मात्पूर्वमेव परिवारं पृच्छेत् ॥

## विष्णुः

अमात्यानां शौचादिगुणाः

[2]शुचीनलुब्धानवहितान्छक्तिसंपन्नान् सर्वार्थेषु च सहायान् ॥

## शङ्खः

गृध्रसदृशस्य राज्ञोऽपि हंससदृशा अमात्या इष्टाः, न गृध्रसदृशाः

‡ [3]न हंसो गृध्रपरिवारः कामं तु गृध्रो हंसपरिवारः स्यात् ॥

* एतानि सूत्राणि अशुद्धिबहुलानि । एतदर्थबोधनसाहाय्यार्थं शङ्खशङ्खलिखितवचनानि द्रष्टव्यानि ।

‡ गृध्रगृध्नुशब्दौ लुब्धार्थकौ, हंसशब्दो निर्लोभार्थकः ।

(१) वस्मृ. १६।१९-२१.

(२) विस्मृ. ३।७१.

(३) विश्व. १।३०५.

## शङ्खलिखितौ

अमात्यगुणाः राजकुलरक्षणकोशपालनादीनि

अमात्यकर्तव्यानि अमात्यपरीक्षा च

[1]न गृध्नुपरिवारः स्यात् । कामं गृध्नू राजा श्रेयान् हंसपरिवारः । न हंसो गृध्नुपरिवारः । परिवाराद्धि दोषाः प्रादुर्भवन्ति । तेऽलं विनाशाय । तस्मात्पूर्वमेव तत्परिवारं लिप्सेत श्रुतशीलान्वयोपपन्नम् ॥

[2]सर्वेषां राजकुलरक्षणं कोशपरिपालनं गोब्राह्मणपरित्राणं सांपरायिकं क्रियासाधारणत्वादनुजीविनाम् । विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्पास्तत्प्रयोजनत्वात् । प्रत्यक्षा परोक्षा वृत्तिस्तस्य राज्ञो भवेत् । एकान्ततो हि दोषः । तस्माद् भृत्यपक्षाः क्रोधलोभमानभयदोषोपहताः संलपिता विमानिताभ्याख्याता दानमानस्थानव्यवरोपिता हृतसर्वस्वाः स्वदोषोपहतादयः सततं प्रत्यवेक्षितव्याः । धर्मार्थहितेष्वेतेषां यतेत । स्वविषयाश्रावः परविषयभेदः सामादिभिरुपायैः । मन्त्रह्वेषु मन्त्रकर्मकरेषु दण्डकर्मवीराः, महत्त्वात्मनि च धर्मनित्याः, संग्रहेष्वलुब्धाः, प्रत्यन्तेषु मौलाः, शुचयोऽर्थकृत्येष्वन्येषु यथानुरूपं नियोज्याः ॥

(१) सर्वेषां अमात्यानाम् । संपरायः युद्धम्, तदुपयोगि सांपरायिकम् । क्रियासाधारणत्वात् राज्यरक्षणरूपैकक्रियत्वात् । चारः जनपदचरितज्ञानाय प्रच्छन्नचारी । तच्चरितज्ञः प्रच्छन्नः प्रतिचारः । मन्त्रप्रणिधयः राज्ञो मन्त्रान्वेष्टारः । एते परराजसंबन्धिनः सर्पाः शङ्कनीया इत्यर्थः । तत्प्रयोजनत्वात् यतस्तदेव चरितज्ञानं चारादीनां प्रयोजनम् । प्रत्यक्षा वृत्तिः स्वयं कार्यदर्शनम् । परोक्षा चारैः चरितज्ञानम् । एकान्ततः अन्यतरवृत्तिमात्राश्रयेण । भृत्यपक्षाः भृत्याः । पूर्वं संमानिताः पश्चात् विमानिताः । अभ्याख्यानं आभिमुख्येन गुणाख्यानम् । दानमानस्थानव्यवरोपिताः दानेन व्यवरोपिताः मानेन व्यवरोपिताः स्थानेन व्यवरोपिताः । स्वदोषोपहताः आत्मदोषदूषिताः । एवमादयः सततं प्रत्यवेक्षितव्याः । तेन कारणेन एतेषां संबन्धिषु धर्मादिषु यतेत । स्वविषयाश्रावः स्वविषयस्य मन्त्रस्य अश्रावणं अप्रकाशनं कार्यम् । महत्सु कार्येषु स्वात्मनि च रक्षितव्याः । धर्मनित्याः धार्मिकाः । संग्रहेषु अर्थस्येति शेषः । प्रत्यन्तेषु स्वमण्डलप्रत्यन्तदेशेषु । मौलाः तद्देशजाताः । राक. ३१–३२

(२) भृत्यपक्षाः भृत्यैः पूर्वं संमानिताः । परविषयभेदः परविषयाणां शत्रुसंबन्धिनाममात्यादीनां भेदः । सामादिभिरुपायैः कार्य इति शेषः । कर्मकरेषु कर्मकरणाधिकृतेषु । दण्डकर्म अपराधनिश्चये कार्यमिति शेषः ।

* राप्र. १८६

## महाभारतम्

अमात्यगुणाः, कुलक्रमागता अमात्या नियोज्याः

[1]एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥
[2]अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥

अप्रियस्यापि पथ्यस्य वक्ता अमात्यः इष्टः

[3]यस्तु धर्मे पराभस्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥

---

(१) राक. ३० हंसपरिवारः (न सपरिवारः) (न हंसो गृध्नुपरिवारः०) (श्रुतशीलान्वयोपपन्नम् ०); राप्र. १८५ श्रेयान् (प्रेवान्) लिप्सेत (लिखेत्).

(२) राक. ३०–३१ संलपिता विमानिताभ्याख्याता (संमानितविमानिता अभ्याख्याता) इति पाठो व्याख्यानात् प्रतीयते; राप्र. १८५–१८६ मन्त्रकर्मकरेषु दण्डकर्मवीराः (मन्त्रकर्म दण्डकर्म कर्मकरेषु वीराः) शेषः पाठभेदः राकवत् स्यादिति प्रतिभाति.

* शेषो राकानुवादः ।

(१) भा. २।५।२६ ; भामु. २।५।३७ ; राक. १५० पूर्वार्धे (एकोऽपि शास्त्रवित् प्राज्ञो गुरूणां पर्युपासितः ।) ; राप्र. १३२ पूर्वार्धे (एकोऽपि शास्त्रवित् प्राज्ञो गुरूणां पर्युपासिता ।).

(२) भा. २।५।३३ ; भामु. २।५।४३.

(३) भा. २।५७।१८ ; भामु. २।६४।१७.

[1]सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

[2]यो हि धर्मं व्यपाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥

कृत्यपरिसंख्यानं आयव्ययानुरूपवृत्तिनिर्णयं च
कृत्वा अमात्यसंग्रहणम्

[3]कृत्यानि पूर्वं परिसंख्याय सर्वा-
ण्यायव्ययावनुरूपां च वृत्तिम् ।
संगृह्णीयादनुरूपान् सहायान्
सहायसाध्यानि हि दुष्कराणि ॥

कृत्यानि परिसंख्याय साध्यासाध्यनिश्चयं कृत्वा, तथा वृत्तिं भृत्यजीविकां आयव्ययानुरूपां कृत्वेत्यर्थः । दुष्कराणि परराष्ट्रग्रहणादीनि । नीटी.

[4]सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।
अन्योन्यबन्धनावेतौ विनाऽन्योन्यं
न सिध्यतः ॥

पञ्चविधबलानां द्वितीयं बलं अमात्याः

[5]बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥

अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
धनलाभस्तृतीयं तु बलमाहुर्जिगीषवः ॥

यत्त्वस्य सहजं राजन् पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥

(१) भा. ५।३७।१४ ; भामु. ५।३७।१५.

(२) भा. ५।३७।१५ ; भामु. ५।३७।१६ व्यपाश्रित्य ( समाश्रित्य ).

(३) भा. ५।३७।२२ ; भामु. ५।३७।२४ व्ययावनु ( व्यये चानु ).

(४) भा. ५।३७।३४ ; भामु. ५।३७।३८.

(५) भा. ५।३७।४८–५१ ; भामु. ५।३७।५२–५५ धनलाभ ...... जिगीषवः ( तृतीयं धनलाभं तु बलमाहुर्मनीषिणः ॥ ).

येन त्वेतानि सर्वाणि संगृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥

अभिजातबलं कुलबलम् । नीटी.

परीक्ष्य अमात्यसंग्रहणम्

[1]नापरीक्ष्य महीपालः कुर्यात्सचिवमात्मनः ॥
[2]अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥

अमात्यगुणाः शौर्यविद्यालोकज्ञानधर्मादयः

[3]शूरान् भक्तानसंहार्यान् कुले जातानरोगिणः ।
शिष्टान् शिष्टाभिसंबन्धान्मानिनो नावमानिनः ॥

[4]विद्याविदो लोकविदः परलोकान्ववेक्षकान् ।
धर्मेषु निरतान् साधूनचलानचलानिव ॥

[5]सहायान् सततं कुर्याद्राजा भूतिपुरस्कृतः ॥

अमात्यप्रयोजनम् , मित्रं अमात्यः कर्तव्यः , अमात्यगुणाः , प्रतिरूपकर्मसु अमात्यनियुक्तिः , परस्परसहायैरेव अमात्यैः भवितव्यम्

युधिष्ठिर उवाच–
[6]यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं पितामह ॥

एवं स्वामिसंपदं विविच्यामात्यसंपदं विविनक्ति–यदपीत्यादिना । नीटी.

(१) भामु. ५।३८।१९.

(२) भा. ५।३८।१८ ; भामु. ५।३८।२०.

(३) भा. १२।५७।२३ ; भामु. १२।५७।२३ नो नाव ( नोऽनव ).

(४) भा. १२।५७।२४; भामु.

(५) भा. १२।५७।२५ ; भामु. १२।५७।२५ पुरस्कृतः ( परिष्कृतः ).

(६) भा. १२।८१।१ ; भामु. १२।८०।१ राज्यं ( राज्ञा ).

किंशीलः किंसमाचारो राज्ञोऽर्थसचिवो भवेत् ।
कीदृशे विश्वसेद्राजा कीदृशे नापि विश्वसेत् ॥
यज्ञवद्राज्यमपि एकाकिना कर्तुमशक्यमतः ऋत्विजामिव सचिवानामपि परीक्षाऽवश्यं कर्तव्येत्यर्थः ।
नीटी.

भीष्म उवाच-
चतुर्विधानि मित्राणि राज्ञां राजन्भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥
धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ॥
यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत् ।
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ॥
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथाऽपरौ ।
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥
यं मन्येत ममाभावादस्याभावो भवेदिति ।
तस्मिन् कुर्वीत विश्वासं यथा पितरि वै तथा ॥
तं शक्त्या वर्धमानश्च सर्वतः परिबृंहयेत् ।
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ॥
व्यसनान्नित्यभीतोऽसौ समृद्ध्यामेव तृप्यते ।
यत्स्यादेवंविधं मित्रं तदात्मसममुच्यते ॥
रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ।

ऋत्विग्वा यदि वाऽऽचार्यः सखा वाऽत्यन्तसंस्तुतः ।
गृहे वसेदमात्यस्ते यः स्यात्परमपूजितः ॥
कीर्तिप्रधानो यश्च स्याद्यश्च स्यात्समये स्थितः ।
समर्थान्यश्च न द्वेष्टि समर्थान्कुरुते च यः ॥
समये नीतिमर्यादायाम् । नीटी.

यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः ॥
प्रत्यनन्तरः प्रतिनिधिः प्रधान इति यावत् ।
नीटी.

शूरश्चाऽऽर्यश्च विद्वांश्च प्रतिपत्तिविशारदः ।
कुलीनः शीलसंपन्नस्तितिक्षुरनसूयकः ॥
प्रतिपत्तिविशारदः कार्याकार्यविवेककुशलः । नीटी.

एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः ।
पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः ॥
स्वनुष्ठिताः सुष्ठु अनुष्ठितं कर्तव्यं येषां ते ।
नीटी.

कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु ।
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्ति च ॥
[illegible] यथा स्यात्तथा । विनिक्षिप्ताः

[1]यदर्थं चाप्यपहृतं येन यच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ॥

तस्य गोमायोः तद्विदितं तेन च तन्मर्षितम्, कारणार्थे स्वस्य बन्धविच्छेदो भवत्विति हेतोरित्यर्थः । नीटी.

[2]समयोऽयं कृतस्तेन साचिव्यमुपगच्छता ।
नोपघातस्त्वया ग्राह्यो राजन्मैत्रीमिहेच्छता ॥
[3]क्षुधितस्य मृगेन्द्रस्य भोक्तुमभ्युत्थितस्य च ॥
[4]भोजने चोपहर्तव्ये तन्मांसं न स्म दृश्यते ।
मृगराजेन चाऽऽज्ञप्तं मृग्यतां चोर इत्युत ॥
[5]कृतकैश्चापि तन्मांसं मृगेन्द्रायोपवर्णितम् ।
सचिवेनोपनीतं ते विदुषा प्राज्ञमानिना ॥
[6]सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम् ।
बभूवामर्षितो राजा वधं चास्याभ्यरोचयत् ॥
[7]छिद्रं तु तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः ।
सर्वेषामेव सोऽस्माकं वृत्तिभङ्गेषु वर्तते ॥
[8]निश्चित्यैव पुनस्तस्य ते कर्माण्यपि वर्णयन् ॥

(१) भा. १२।११२।४६ ; भामु. १२।१११।४६ यच्चैव ( तच्चैव ).

(२) भा. १२।११२।४७ ; भामु. १२।१११।४७ ग्राह्यो ( कार्यो ).

(३) भामु. १२।१११।४८ 'भीष्म उवाच' इत्यादौ पठितम् .

(४) भा. १२।११२।४८; भामु. १२।१११।४८–४९ पूर्वार्धे ( भोजनायोपहर्तव्यं तन्मांसं नोपदृश्यते । ) मृग्यतां ( दृश्यतां ).

(५) भा. १२।११२।४९; भामु. १२।१११।४९–५० नोप ( नाप ).

(६) भा. १२।११२।५०; भामु. १२।१११।५०–५१ चास्याभ्य ( चास्य व्य ).

(७) भा. १२।११२।५१; भामु. १२।१११।५१–५२ भङ्गेषु ( भङ्गे प्र ).

(८) भामु. १२।१११।५२.

वर्णयन् अवर्णयन् । नीटी.

[1]इदं चास्येदृशं कर्म वाल्लभ्येन तु रक्ष्यते ।
श्रुतश्च स्वामिना पूर्वं यादृशो नैष तादृशः ॥
[2]वाङ्मात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः ।
धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः ।
कार्यार्थं भोजनार्थेषु व्रतेषु कृतवाञ्श्रमम् ॥
[3]यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते ।
तन्मांसं चैव गोमायोस्तैः क्षणादाशु ढौकितम् ॥

गोमायोर्गृहे ढौकितं प्रवेशितं मांसं प्रदर्शयामासुरित्यर्थः । नीटी.

[4]मांसापनयनं ज्ञात्वा व्याघ्रस्तेषां तु तद्वचः ।
आज्ञापयामास तदा गोमायुर्वध्यतामिति ॥
[5]शार्दूलवचनं श्रुत्वा शार्दूलजननी ततः ।
मृगराजं हितैर्वाक्यैः संबोधयितुमागमत् ॥
[6]पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंवृतम् ।
कर्मसंघर्षजैर्दोषैर्दुष्यत्यशुचिभिः शुचिः ॥

कर्म न ग्राह्यमित्युत्तरश्लोकेन संबन्धः । संघर्षजैः स्पर्धोत्थैः । नीटी.

[7]नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते ॥

(१) भा. १२।११२।५२; भामु. १२।१११।५३ पूर्वार्धे ( इदं तस्येदृशं कर्म किं तेन न कृतं भवेत् । ) नैष ( नैव ).

(२) भा. १२।११२।५३; भामु. १२।१११।५४–५५.

(३) भामु. १२।१११।५५–५६.

(४) भा. १२।११२।५४ ; भामु. १२।१११।५६–५७ घ्रस्तेषां तु ( घ्रः श्रुत्वा च ).

(५) भा. १२।११२।५५ ; भामु. १२।१११।५७–५८ लवचनं ( लस्य वचः ).

(६) भा. १२।११२।५६ ; भामु. १२।१११।५८–५९ संवृतम् ( संयुतम् ) दुष्यत्य ( दुष्येता ).

(७) भा. १२।११२।५७ ; भामु. १२।१११।५९–६०.

प्रक्रिया प्रकृष्टं कर्म । नीटी.

[1]मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पाद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥

[2]लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ।
अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपकाः ॥

[3]बहवः पण्डिता लुब्धाः सर्वे मायोपजीविनः ।
कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि ॥

[4]शून्यात्तच्च गृहान्मांसं यदद्यापहृतं तव ।
नेच्छते दीयमानं च साधु तावद्विमृश्यताम् ॥

[5]असत्याः सत्यसंकाशाः सत्याश्चासत्यदर्शिनः ।
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥

[6]तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि न खद्योते हुताशनः ॥

तलवत् अवाङ्मुखकटाहगर्भवत् । नीटी.

[7]तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम् ।
परीक्ष्य ज्ञापयन्ह्यर्थान्न पश्चात्परितप्यते ॥

[8]न दुष्करमिदं पुत्र यत्प्रभुर्घातयेत्परम् ।
श्लाघनीया च वर्या च लोके प्रभवतां क्षमा ॥

(१) भामु. १२।१११।६०–६१.

(२) भा. १२।११२।५८ ; भामु. १२।१११।६१–६२ सुरूपकाः ( सुरूपिणः ).

(३) भा. १२।११२।५९ ; भामु. १२।१११।६३ लुब्धाः सर्वे ( मूर्खा लुब्धा ).

(४) भा. १२।११२।६० ; भामु. १२।१११।६४ यदद्याप ( यद्यप्यप ).

(५) भा. १२।११२।६१ ; भामु. १२।१११।६५ पूर्वार्धे ( असभ्याः सभ्यसंकाशाः सभ्याश्चासभ्यदर्शनाः । ).

(६) भा. १२।११२।६२ ; भामु. १२।१११।६६ न खद्योते ( खद्योते न ).

(७) भा. १२।११२।६३ ; भामु. १२।१११।६७ युक्तमर्थः ( युक्तो ह्यर्थः ) यन्ह्यर्था ( यन्नर्था ).

(८) भा. १२।११२।६४ ; भामु. १२।१११।६८ च वर्या ( यशस्या ).



प्रभवतां प्रभूणाम् । नीटी.

[1]स्थापितोऽयं पुत्र त्वया सामन्तेष्वधि विश्रुतः ।
दुःखेनाऽऽसाद्यते पात्रं धार्यतामेष ते सुहृत् ॥

[2]दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम् ।
स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति ॥

[3]तस्मादथारिसंघाताद्गोमायोः कश्चिदागतः ।
धर्मात्मा तेन चाऽऽख्यातं यथैतत्कपटं कृतम् ॥

गोमायोः चारः । नीटी.

[4]ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः ।
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः ॥

[5]अनुज्ञाप्य मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित् ।
तेनामर्षेण संतप्तः प्रायमासितुमैच्छत ॥

प्रायं मरणार्थमुपवेशनं आसितुं आचरितुम् । नीटी.

[6]शार्दूलस्तत्र गोमायुं स्नेहात्प्रस्रुतलोचनः ।
अवारयत्स धर्मिष्ठं पूजया प्रतिपूजयन् ॥

[7]तं स गोमायुरालोक्य स्नेहादागतसंभ्रमम् ।
बभाषे प्रणतो वाक्यं बाष्पगद्गदया गिरा ॥

[8]पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः ।
परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि ॥

(१) भा. १२।११२।६५ ; भामु. १२।१११।६९ पुत्र त्वया ( त्वया पुत्र ) ष्वधि ( ष्वपि ).

(२) भा. १२।११२।६६ ; भामु. १२।१११।७०.

(३) भा. १२।११२।६७ ; भामु. १२।१११।७१ दथारि ( दप्यरि ).

(४) भा. १२।११२।६८ ; भामु. १२।१११।७२ चारित्रः ( चरितः ).

(५) भा. १२।११२।६९ ; भामु. १२।१११।७३.

(६) भा. १२।११२।७० ; भामु. १२।१११।७४ स्तत्र ( स्तं तु ) त्प्रस्रुत ( त्प्रोत्फुल्ल ).

(७) भा. १२।११२।७१ ; भामु. १२।१११।७५ बभाषे ( उवाच ).

(८) भा. १२।११२।७२ ; भामु. १२।१११।७६.

[1]स्वसंतुष्टाश्च्युताः स्थानान्मानात्प्रत्यवरोपिताः ।
स्वयं चोपहृता भृत्या ये चाप्युपहृताः परैः ॥

उपहिताः वञ्चिताः । नीटी.

[2]परिक्षीणाश्च लुब्धाश्च क्रूराः काराभितापिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ॥

-प्रतारिताः क्षारिताः । नीटी.

[3]संतापिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।
अन्तर्हिताः सोपहिताः सर्वे ते परसाधनाः ॥

अपरसाश्च अधनाश्चेति अपरसाधनाः, प्रीतिशून्या निर्धनाश्चेत्यर्थः । नीटी.

[4]अवमानेन युक्तस्य स्थापितस्य च मे पुनः ।
कथं यास्यसि विश्वासमहमेष्यामि वा पुनः ॥

[5]समर्थ इति संगृह्य स्थापयित्वा परीक्ष्य च ।
कृतं च समयं भित्त्वा त्वयाऽहमवमानितः ॥

[6]प्रथमं यः समाख्यातः शीलवानिति संसदि ।
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥

[7]एवं चावमतस्येह विश्वासं किं प्रयास्यसि ।
त्वयि चैव ह्यविश्वासे ममोद्वेगो भविष्यति ॥

(१) भा. १२।११२।७३ ; भामु. १२।१११।७७ स्वसंतुष्टा ( असंतुष्टा ) चोप (चाप) प्युपहृताः (प्युपहिताः).

(२) भा. १२।११२।७४ ; भामु. १२।१११।७८ क्रूराः काराभितापिताः ( क्रुद्धा भीताः प्रतारिताः ) त्यक्तोपात्ता ( त्यक्तादाना ).

(३) भा. १२।११२।७५ ; भामु. १२।१११।७९ सर्वे ते पर ( ते सर्वेऽपर ).

(४) भा. १२।११२।७६ ; भामु. १२।१११।८० स्थापितस्य च मे ( स्थानभ्रष्टस्य वा ) हमेष्यामि वा पुनः ( हं तिष्ठामि वा कथम् ).

(५) भा. १२।११२।७७ ; भामु. १२।१११।८१ परीक्ष्य च ( परीक्षितः ).

(६) भा. १२।११२।७८ ; भामु. १२।१११।८२.

(७) भा. १२।११२।७९ ; भामु. १२।१११।८३ किं प्रयास्यसि ( मे न यास्यसि ) चैव ह्य (चापेत ).

[1]शङ्कितस्त्वमहं भीतः परे छिद्रानुदर्शिनः ।
अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥

[2]दुःखेन श्लेष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्तते ॥

[3]कश्चिदेव हि भीतस्तु दृश्यते न परात्मनोः ।
कार्यापेक्षा हि वर्तन्ते भावाः स्निग्धास्तु दुर्लभाः ॥

कश्चिदेव कश्चिदपि भर्तुर्हिते न दृश्यते, किंतु वाणिज्यवदुभयार्थः स्नेहः, न केवलं भर्तुः कार्यार्थं इत्यर्थः । नीटी.

[4]सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम् ।
समर्थो वाऽप्यशक्तो वा शतेष्वेकोऽधिगम्यते ॥

पुरुषज्ञानं सुदुःखं दुर्लभम् । यतः एषां नृपाणां चित्तं चलाचलं अस्थिरं गम्यते ज्ञायते । सुपुरुषज्ञानं दुर्घटमित्यर्थः । नीटी.

[5]अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम् ।
शुभाशुभे महत्त्वं च प्रकर्तुं बुद्धिलाघवात् ॥

प्रक्रिया महीकरणम् । अकस्मात्कर्तुं बुद्धेर्लाघवं तुच्छत्वमेव हेतुः । नीटी.

[6]एवं बहुविधं सान्त्वमुक्त्वा धर्मार्थहेतुमत् ।
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥

(१) भा. १२।११२।८० ; भामु. १२।१११।८४ परे ( पर ).

(२) भा. १२।११२।८१ ; भामु. १२।१११।८५ श्लेष्यते ( श्लिष्यते ) भिन्नश्लिष्टा ( भिन्ना श्लिष्टा ).

(३) भा. १२।११२।८२ ; भामु. १२।१११।८६ हि भीतस्तु ( हिते भर्तुः ) भावाः स्निग्धास्तु दुर्लभाः ( भावस्निग्धाः सुदुर्लभाः ).

(४) भा. १२।११२।८३ ; भामु. १२।१११।८७ प्यशक्तो ( प्यशङ्को ).

(५) भा. १२।११२।८४ ; भामु. १२।१११।८८ लाघवात् ( लाघवम् ).

(६) भा. १२।११२।८५ ; भामु. १२।१११।८९ पूर्वार्धे ( एवंविधं सान्त्वमुक्त्वा धर्मकामार्थहेतुमत् । ).

प्रसादयित्वा प्रसाद्य । नीटी.

[1]अगृह्यानुनयं तस्य मृगेन्द्रस्य स बुद्धिमान् ।
गोमायुः प्रायमासीनस्त्यक्त्वा देहं दिवं ययौ ॥

अगृह्य अगृहीत्वा । नीटी.

सहायसंग्रहणं राज्ञः कर्तव्यम्

[2]गुप्तमन्त्रश्रुतवतः सुसहायस्य चानघ ॥

[3]परीक्ष्यकारिणोऽर्थाश्च तिष्ठन्तीह युधिष्ठिर ।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम् ॥

अमात्यगुणाः, अमात्यानां मुख्यकर्मसु योजनम्

[4]अमात्यानुपधातीतान् पितृपैतामहाञ्शुचीन् ।
दान्तान् कर्मसु सर्वेषु मुख्यान्मुख्येषु योजयेः ॥

कर्मसु पुण्यान् जन्मना च पुण्यान् । नीटी.

## वाल्मीकिरामायणम्

एकोऽपि पण्डितोऽमात्यः श्रेयान् अपण्डितसहस्रेभ्यः,

अमात्यगुणाः

[5]कच्चिन्मूर्खसहस्रेणाप्येकं क्रीणासि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु ब्रूयान्निःश्रेयसं वचः ॥

(१) भा. १२।११२।८६ ; भामु. १२।१११।९० स ( च ) मासीनस्त्य ( मास्थाय त्य ).

(२) भा. १२।११३।१९ ; भामु. १२।११२।१९ गुप्तमन्त्र ( गुह्यं मन्त्रं ).

(३) भा. १२।११३।२० ; भामु. १२।११२।२० ऽर्थाश्च ति ( ह्यर्थास्ति ).

(४) भा. १५।९।१४; भामु. १५।५।१४ सर्वेषु मुख्यान् मुख्येषु ( पुण्यांश्च पुण्यान् सर्वेषु ); रार. १२ उत्तरार्धे (दान्तान् कर्मसु पुण्यांश्च मुख्यान् कर्मसु योजयेत् ॥ ).

(५) वारा. २।११४।१७; वाराकु. २।१००।२३ पूर्वार्धे ( कच्चित् सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम् । ) ब्रूया ( कुर्या ) वचः ( महत् ).

[1]सहस्रैरपि मूर्खाणां यो नृपः पर्युपास्यते ।
तथैवाप्ययुतैस्तस्य नास्ति तेषु सहायता ॥

[2]एको ह्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥

[3]अमात्यानुपधातीतान् पितृपैतामहाञ् शुचीन् ।
ज्येष्ठाञ् ज्येष्ठेषु कच्चिच्च नियोजयसि कर्मसु ॥

अमात्यदोषाः

[4]बुद्धाः खलु न बुध्यन्ते सचिवास्तव रावण ।
ये त्वामत्यर्थमापन्नं विनयन्ति न शाश्वताः ॥

[5]अमात्यैः कामवृत्तो हि राजा विषयमाश्रितः ।
निग्राह्यः सर्वथा स त्वं निग्राह्यान् न निगृह्यसे ॥

[6]धर्ममर्थं च कामं च यशश्च विपुलं भुवि ।
स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर ॥

[7]विपर्यये हि तिष्ठन्तो मन्त्रिणो धनदानुज ।
वृजिनं स्वामिवैकल्ये प्राप्नुवन्ति सबान्धवाः ॥

(१) वारा. २।११४।१८ ; वाराकु. २।१००।२४ ( सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः । अथवाऽप्ययुतान्येव नास्ति तेषु सहायता ॥ ).

(२) वारा. २।११४।१९ ; वाराकु. २।१००।२५ एको ह्य ( एकोऽप्य ) दान्तो ( दक्षो ) राजपुत्रं (राजमात्रं).

(३) वारा. २।११४।३५; वाराकु. २।१००।२७ उत्तरार्धे ( श्रेष्ठाञ् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ ).

(४) वारा. ३।४४।६ ; वाराकु. ३।४१।६ ( वध्याः खलु न हन्यन्ते सचिवास्तव रावण । ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ).

(५) वारा. ३।४४।७; वाराकु. ३।४१।७ विषय ( कापथ ) स त्वं निग्राह्यान् न ( सद्भिर्न निगृह्यो ).

(६) वारा. ३।४४।८ ; वाराकु. ३।४१।८ विपुलं भुवि ( जयतां वर ).

(७) वारा. ३।४४।९ ; वाराकु. ३।४१।९ ( विपर्यये तु तत्सर्वं व्यर्थं भवति रावण । व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ).

[1]राजमूलो हि विजयो जयश्च जयतां वर।
तस्मात्सर्वास्ववस्थासु रक्षितव्यो नराधिपः॥

गुणोत्तमाः सहायाः

[2]विगुणोऽपि हि चेद्राजा सहायाः स्युर्गुणोत्तमाः।
तत्रापि युक्त्या निवसेद्गुणापेक्षो न संशयः॥

## कौटिलीयमर्थशास्त्रम्

आचार्या अमात्या वा राजमर्यादा

[3]मर्यादां स्थापयेदाचार्यानमात्यान् वा, य एनमपायस्थानेभ्यो वारयेयुः, छायानालिकाप्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः॥

मूर्धाभिषिक्तराजर्षिवृत्तमाह– मर्यादामिति। आचार्यान् गुरून् अमात्यान् मन्त्रिणो वा मर्यादां स्थापयेत् सीमां परिकल्पयेत्। ताद्धर्म्यात् ताच्छब्द्यम्। सीमामिवालङ्घनस्थानमात्मनो विदध्यादित्यर्थः। ते कीदृशाः? ये एनं राजानं अपायस्थानेभ्यो वारयेयुः अनर्थकारणानुष्ठानेभ्यो निवर्तयेयुः। रहसि प्रमाद्यन्तं अन्तःपुरादावतिप्रसजन्तमेनम्। छायानालिकाप्रतोदेन। छाया त्रिपौरुष्यादिरूपं छायाप्रमाणं अतीतघटिकावेदकं राजप्रणिधिप्रकरणे वक्ष्यमाणम्। नालिका घटिकाप्रमाणम्। तदुभयरूपेण प्रतोदेन कार्यान्तरकालातिपातसूचनद्वारा प्रसक्तेष्टकर्मप्रत्यूहजनकतया मनोऽन्यथाकारित्वात् प्रतोदतुल्येन। पुनः पुनश्छायानालिकानिवेदनेनेत्यर्थः। अभितुदेयुर्वा परिव्यथयेयुश्च प्रमादभङ्गार्थम्। श्रीमूला.

सहायसाध्यं राजत्वं चक्रमेकं न वर्तते।
कुर्वीत सचिवांस्तस्मात्तेषां च शृणुयान्मतम्॥

किमर्थं यथोक्तसचिवस्थापनेनाऽऽत्मा परतन्त्रतां नीयते इति चेत् तत्राऽऽह– सहायेत्यादि। सहायसाध्यं सहायनिर्वाह्यम्, न त्वेकाकिनाऽऽत्मना निर्वाह्यम्। तत्र दृष्टान्तः– चक्रमेकं न वर्तेत इति। शकटादौ युक्तं एकं चक्रान्तरसहायरहितं चक्रं न परिभ्रमति। सचिवान् आचार्यानमात्यांश्च। शृणुयाच्च श्रुत्वाऽनुतिष्ठेच्च। श्रीमूला.

अमात्यनियुक्तिविवेकः

[1]सहाध्यायिनोऽमात्यान् कुर्वीत, दृष्टशौचसामर्थ्यत्वादिति भारद्वाजः। ते ह्यस्य विश्वास्या भवन्तीति॥

के तावदमात्यपदमर्हन्तीत्यपेक्षायां भारद्वाजादयः सप्ताऽऽचार्याः सप्तधा वर्णयन्ति। तत्र भारद्वाजस्य पक्षमाह– सहाध्यायिन इत्यादि। दृष्टशौचसामर्थ्यत्वात्। शौचं हृदयशुद्धिः, तच्च सामर्थ्यं कार्यनैपुण्यं च दृष्टं सहाध्ययनकाले प्रत्यक्षितं येषां तेषां भावस्तत्त्वम्, तस्मात्। विश्वास्याः विश्वासयोग्याः। श्रीमूला.

नेति विशालाक्षः। सहक्रीडितत्वात् परिभवन्त्येनम्। ये ह्यस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत, समानशीलव्यसनत्वात्। ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति॥

तं पक्षं विशालाक्षः प्रतिषेधति– नेतीत्यादि। परिभवन्ति अवजानन्ति। के तर्ह्यमात्याः कार्यास्तत्राऽऽह– ये हीति। गुह्यसधर्माणः गुह्यं शीलच्युतिः पारदारिकत्वादि, तत्र समानाः। तथाविधानाममात्यीकरणे गुणमाह– ते हीति। ते हि मर्मज्ञभयात् अस्मन्मर्मज्ञो राजेति भयात् अस्य नापराध्यन्ति अपराधं न कुर्वन्ति। यत्नेन शीलसौष्ठवमासाद्य स्वकर्म सम्यगनुतिष्ठन्तीत्यर्थः। श्रीमूला.

साधारण एष दोष इति पराशरः। तेषामपि मर्मज्ञभयात्कृताकृतान्यनुवर्तेत॥

पराशरमतमाह– साधारण इति। एष दोषः दुःशीलत्वं साधारणः गुह्यसधर्मणां राज्ञश्च समानः। अस्तु, को दोष इति चेदाह– मर्मज्ञभयात् अमात्या मन्मर्मज्ञा इति भयात् तेषामपि अमात्यानामपि कृताकृतानि असुष्ठुकृतानि कर्माणि अनुवर्तेत अनुसरेत्, अर्थात् राजा। श्रीमूला.

---

(१) वारा. ३।४४।१०; वाराकु. ३।४१।१० विजयो (धर्मश्च) रक्षितव्यो नराधिपः (रक्षितव्या नराधिपाः).

(२) वारा. ५।९०।७६.

(३) कौ. १।७.

(१) कौ. १।८.

**यावद्भ्यो गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः।
अवशः कर्मणा तेन वश्यो भवति तावताम् ॥**

अस्मिन्नर्थे श्लोकमाह— यावद्भ्य इत्यादि । गुह्यं आचष्टे स्वं शीलभ्रंशं प्रकाशयति । अवशः अधीरः । एवं च गुह्यसधर्मणोऽमात्यान् न कुर्यादित्यभिप्रायः । श्रीमूला.

**य एनमापत्सु प्राणाबाधयुक्तास्वनुगृह्णीयुस्तानमात्यान् कुर्वीत दृष्टानुरागत्वादिति ॥**

कांस्तर्हि कुर्यादित्यत्राऽऽह— य एनमिति । अनुगृह्णीयुः उपकुर्युः । श्रीमूला.

**नेति पिशुनः । भक्तिरेषा न बुद्धिगुणः । संख्यातार्थेषु कर्मसु नियुक्ता ये यथादिष्टमर्थं सविशेषं वा कुर्युस्तानमात्यान् कुर्वीत, दृष्टगुणत्वादिति ॥**

उक्तं पक्षं खण्डयति— नेतीति । पिशुनः नारदः । तत्र हेतुरुच्यते— भक्तिरेषा न बुद्धिगुणः । स्वशरीरनैरपेक्ष्येण राजरक्षणप्रवृत्तिर्नामायं सेवाधर्मः, न तु बुद्धिगुणः । बुद्धिगुणसंपन्नश्चामात्यो भवितुमर्हतीत्याशयः । संख्यातेत्यादि । ये संख्यातार्थेषु परिगणितद्रव्योत्पत्तिषु कर्मसु नियुक्ताः अर्थं यथादिष्टं सविशेषं वा कुर्युः द्रव्यं क्लृप्तसंख्यानूनं क्लृप्तसंख्याधिकसंख्यं वा भावयेयुः । श्रीमूला.

**नेति कौणपदन्तः । अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहानमात्यान् कुर्वीत, दृष्टापदानत्वात् । ते ह्येनमपचरन्तमपि न त्यजन्ति, सगन्धत्वात् । अमानुषेष्वपि चैतद् दृश्यते— गावो ह्यसगन्धं गोगणमतिक्रम्य सगन्धेष्वेवावतिष्ठन्त इति ॥**

नारदपक्षं कौणपदन्तो निराचष्टे— नेति कौणपेत्यादि । अन्यैर्गुणैः धनभावनातिरिक्तैर्विश्वास्यत्वानुरक्तत्वादिभिर्गुणैः । पितृपैतामहान् पितृपितामहक्रमागतान् । दृष्टापदानत्वात् । दृष्टं साक्षादनुभूतं अपदानं पूर्ववृत्तं येषां ते दृष्टापदानाः, तेषां भावस्तत्त्वम्, तस्मात् । एतेन पूर्वपुरुषशीलप्रत्येयगुणत्वमुक्तम् । गुणान्तरमाह— ते हीति । अपचरन्तमपि एनं आत्मापकारिणमपि स्वामिनम् । सगन्धत्वात् संबन्धित्वात् परिचितत्वात् । संबन्धसामान्यवचन इह गन्धशब्दः । पशुदृष्टान्तमाह— अमानुषेष्विति । एतत् परिचयस्य परिचितात्यागकारणत्वम् । असगन्धं अपरिचितम् । श्रीमूला.

**नेति वातव्याधिः । ते ह्यस्य सर्वमवगृह्य स्वामिवत्प्रचरन्तीति । तस्मान्नीतिविदो नवानमात्यान् कुर्वीत । नवास्तु यमस्थाने दण्डधरं मन्यमाना नापराध्यन्तीति ॥**

उक्तं पक्षं वातव्याधिर्नानुमन्यत इत्याह— नेति वातेत्यादि । वातव्याधिः उद्धवः श्रीकृष्णमन्त्री । ते कुलक्रमागता अमात्याः अस्य सर्वमवगृह्य स्वामिनः समस्तं विभवमवष्टभ्य स्वामिवत् प्रचरन्ति स्वतन्त्रवृत्तयो भवेयुः । के तर्ह्यमात्याः कार्या इत्याह— तस्मादित्यादि । नवान् पूर्वसंबन्धरहितान् । दण्डधरं यमस्थाने मन्यमानाः राजानं यमवदुग्रदण्डं बुध्यमानाः । श्रीमूला.

**नेति बाहुदन्तीपुत्रः । शास्त्रविददृष्टकर्मा कर्मसु विषादं गच्छेत् । अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तानमात्यान् कुर्वीत, गुणप्राधान्यादिति ॥**

इममपि पक्षं बाहुदन्तीपुत्रो न सहत इत्याह— नेति बाहिति । कुत इत्यत्राऽऽह— शास्त्रेत्यादि । नीतिशास्त्रग्रन्थनिष्णातस्तदर्थानुष्ठानपरिचयविकलः अमात्यकर्मसु अवसादं प्राप्नुयात्, अनिर्वाही स्यादित्यर्थः । कांस्तर्हि अमात्यान् कुर्वीतेत्यत्राऽऽह— अभिजनेत्यादि । अभिजनः वंशशुद्धिः, प्रज्ञा बुद्ध्यतिशयः, शौचं उपधाशुद्धिः, शौर्यं उत्साहशक्तिः, अनुरागः स्वामिभक्तिः, एतैर्युक्ता ये पुरुषाः तान् अमात्यान् कुर्वीत । कुतः ? गुणप्राधान्यात् गुणानामेव प्रधानत्वात् । श्रीमूला.

**सर्वमुपपन्नमिति कौटल्यः, कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते । सामर्थ्यतश्च—**

**विभज्यामात्यविभवं देशकालौ च कर्म च ।
अमात्याः सर्व एवैते कार्याः स्युर्न तु मन्त्रिणः ॥**

स्वमतमाह— सर्वमिति । सर्वं उपपन्नं शौचसामर्थ्यादयो गुणाः स्वामिपरिभवादिदोषाश्च पूर्वोक्ताः सहाध्यायि-

प्रभृतिषु न्याय्याः। कुतः? हि यस्मात् कारणात् पुरुषसामर्थ्ये पुरुषस्य तत्तदधिकारपदयोग्यता कार्यसामर्थ्यात् सामर्थ्यतश्च कार्याणां सहाध्ययनक्रीडादीनां शक्त्या सामर्थ्याच्च प्रज्ञाशास्त्रसंस्कारशौर्यादितारतम्ययोगित्वलक्षणात् कल्प्यते व्यवस्थाप्यते इत्यर्थः। गुणदोषोभयोपपन्नत्वं वदता चार्थादिदमुक्तं भवति– सहाध्यायिप्रभृतयो न हेयाः, विश्वास्यत्वादिगुणयोगात्। नापि मन्त्रिपदे कर्तव्याः, परिभवादिदोषयोगात्। पारिशेष्यात् तु कर्मसचिवपदे कर्तव्याः। तत्तद्गुणापेक्षेषु च कर्मसु देशकालानुरोधेन नियोक्तव्या इति। एतदर्थक्रमध्यायप्रान्ते श्लोकमाह– विभज्येत्यादि। अमात्यविभवं विश्वास्यत्वाद्यमात्यगुणसंपदं विभज्य यस्मिन् देशे यस्मिन् काले यस्य कर्मणः सुष्ठु निष्पत्तये यो गुणोऽपेक्ष्यते तं तं यथायथं विविच्येत्यर्थः। सर्व एवैते तत्तद्गुणवन्तः सहाध्याय्यादयः सर्वेऽपि अमात्याः कर्मसचिवाः कार्याः, मन्त्रिणस्तु न कार्याः मन्त्रिपदे तु न निवेश्याः। श्रीमूला.

उपधाभिः शौचाशौचज्ञानममात्यानाम्

**[1]मन्त्रिपुरोहितसखः सामान्येष्वधिकरणेषु स्थापयित्वाऽमात्यानुपधाभिः शौचयेत् ॥**

मन्त्रिपुरोहितसखः मन्त्रिपुरोहितसमुपेतः। सामान्येषु अधिकरणेषु साधारणेषु अप्रधानेषु अधिकारपदेषु। उपधाभिः छलैर्वक्ष्यमाणैः। शौचयेत् शोधयेत्। श्रीमूला.

**पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजाऽवक्षिपेत्। स सत्त्रिभिः शपथपूर्वमेकैकममात्यमुपजापयेत्– अधार्मिकोऽयं राजा, साधु धार्मिकमन्यमस्य तत्कुलीनमवरुद्धं कुल्यमेकप्रग्रहं सामन्तमाटविकमौपपादिकं वा प्रतिपादयामः। सर्वेषामेतद्रोचते, कथं वा तवेति। प्रत्याख्याने शुचिरिति धर्मोपधा ॥**

छलप्रयोगमाह– पुरोहितमिति। राजा अयाज्ययाजनाध्यापने याजयितुमनर्हस्य वृषलीपत्यादेर्याजने अध्यापने च नियुक्तं चोदितं अमृष्यमाणं अधर्मनियोजनेन कुप्यन्तं पुरोहितं अवक्षिपेत् अवमन्येत स्वपदादवरोपयेत् वा। सः अवक्षिप्तः पुरोहितः सत्त्रिभिः, स्त्रीपुरुषलक्षणनिमित्तादिशास्त्राभिज्ञापदेशचारिणः संचारविशेषाः सत्त्रिणः गूढपुरुषप्रणिधौ वक्ष्यमाणाः, तैः प्रयोज्यकर्तृभिः एकैकं अमात्यं शपथपूर्वं उपजापयेत् भेदयेत्। उपजापस्य शपथपूर्वत्वमनुद्भेदार्थम्। उपजापनप्रकारमाह– अधार्मिक इत्यादिना। अधार्मिकः अधर्मप्रवृत्तः। धार्मिकमिति तत्कुलीनादिषु सर्वत्र संबध्यते। तत्कुलीनं प्रकृतराजवंशभवम्। अवरुद्धं अवरुध्य रक्ष्यमाणं तत्पुत्रादिकम्। कुल्यं राजभावार्हकुलोत्पन्नम्। एकप्रग्रहं एकः तुल्यः सर्वैरविशेषं क्रियमाणः प्रग्रहः पूजा यस्य तम्, सर्वपूजितमित्यर्थः। सामन्तं विषयान्तरं राजानम्। आटविकं अटवीपतिम्। औपपादिकं उपपादं प्रत्यन्तपर्वतसमीपे भवः तम्। अथवा औपपादिकमिति अस्माभिः संभूय संप्रधारणीयमित्यर्थः। उपपादं समर्थनमर्हतीति ठक्। अस्य प्रतिपादयामः अस्य स्थाने निवेशयामः। एतत् उपन्यस्तं मतम्। कथं वा तव? मतमिति गम्यम्। प्रत्याख्याने शुचिः, इत्थमुपजापितोऽमात्यः 'नाहमीदृशं कुर्याम्' इति यदि निरस्येत् तर्हि शुद्ध इत्यर्थः। इति धर्मोपधा धर्मस्थापनवाचोयुक्त्या छलनम्। स एष धर्मप्रधानेषु शोधनप्रकारः। श्रीमूला.

**सेनापतिरसत्प्रग्रहेणावक्षिप्तः सत्त्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशाय— सर्वेषामेतद् रोचते, कथं वा तवेति। प्रत्याख्याने शुचिरित्यर्थोपधा ॥**

अर्थोपधामाह– सेनापतिरित्यादि। असत्प्रग्रहेण अवक्षिप्तः अपूज्यपूजनेन निमित्तेन परिभूतः। अपूज्यपूजने राज्ञा चोदितस्तदकुर्वन्नर्थमानाभ्यां ह्रापित इत्यर्थः। लोभनीयेन उपजाप्यपुरुषकाम्येन। राजविनाशायेत्युपजापफलमुच्यते। तदनुकूल उपजापप्रकारस्तु– अपथप्रवृत्तोऽयं राजा, साधु सत्पथवर्तिनमन्यमस्य स्थाने तत्कुलीनमवरुद्धं वा प्रतिपादयाम इत्येवमादिरूपो गम्यः।

(१) कौ. १।१०.

सर्वेषामित्यादिकं तच्छेषवाक्यम् । लुब्धेष्वेव शोधनप्रकारः । श्रीमूला.

**परिव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा महामात्रमेकैकमुपजपेत्— राजमहिषी त्वां कामयते कृतसमागमोपाया । महानर्थश्च भविष्यतीति । प्रत्याख्याने शुचिरिति कामोपधा ॥**

स्त्रैणेषु प्रयोज्यां कामोपधामाह— परिव्राजिकेत्यादि । परिव्राजिका भिक्षुकी । कृतसत्कारा राजमहिषीभिः पूजिता । अर्थश्च धनादिकं च । श्रीमूला.

**प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत् । तेनोद्वेगेन राजा तानवरुन्ध्यात् । कापटिकश्छात्रः पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्— असत्प्रवृत्तोऽयं राजा, साध्वेनं हत्वाऽन्यं प्रतिपादयिष्यामः । सर्वेषामेतद् रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरिति भयोपधा ॥**

भयोपधामाह— प्रवहणेत्यादि । प्रवहणनिमित्तम् । प्रवहणं नौविशेषः कर्णीरथश्च । तेन जलस्थलयात्राक्रीडोद्यानभोजनादिकं गोष्ठीकौतुकं लक्ष्यते । तदर्थमित्यर्थः । आवाहयेत् आनीय मेलयेत् । तेनोद्वेगेन तन्निमित्तेन उद्वेगेन अक्षमया तान् अमात्यान् अवरुन्ध्यात् अर्थमानापहारादिनाऽपकुर्यात् । कापटिक इति । पूर्वावरुद्धः राज्ञा पूर्वमपकृतः छात्रः कापटिकः अध्यापकाध्येतृवृत्तिः कापटिकाख्यः गूढपुरुषविशेषः तेषां अमात्यानां मध्ये अर्थमानावक्षिप्तं अर्थमानाभ्यां हापितं एकैकममात्यं उपजपेत् राजसकाशात् भेदयेत् । उपजापप्रकारकथनम्— असत्प्रवृत्त इत्यादिना । असत्प्रवृत्तः अशोभनकर्मप्रवृत्तः । इयमुपधा भीरुविषया । श्रीमूला.

**तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत् । अर्थोपधाशुद्धान् समाहर्तृसंनिधातृनिचयकर्मसु । कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु । भयोपधाशुद्धानासन्नकार्येषु राज्ञः । सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् । सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत् ॥**

उपधाशुद्धानां यथायथं विनियोगस्थानान्याह— तत्रेत्यादि । तत्र उपधाचतुष्टयशोधितेषु मध्ये । धर्मस्थीयकण्टकशोधनेषु धर्मस्थानुबन्धिषु कर्मसु कण्टकशोधनेषु च वक्ष्यमाणेषु । स्थापयेत् नियुञ्जीत । समाहर्तृसंनिधातृनिचयकर्मसु समाहर्तृकर्मसु धनोत्थापनादिलक्षणेषु संनिधातृनिचयकर्मसु च धनरक्षणलक्षणेषु । बाह्याभ्यन्तरविहाररक्षासु बाह्याभ्यन्तरा ये विहाराः कामक्रीडाः अर्थात् विहारसाधनभूता नृपस्त्रियः तद्रक्षणकर्मसु । तत्र बाह्या भोगिन्यः आभ्यन्तर्यस्तु देव्य इति ज्ञेयम् । आसन्नकार्येषु शरीररक्षणादिकर्मसु । सर्वेति । सर्वोपधाशुद्धान् चतसृष्वप्युपधासु दृष्टशौचान् । सर्वत्रेति सर्वासु उपधासु अशुचीन् । खनिद्रव्यहस्तिवनकर्मान्तेषु । खनिः सुवर्णरजताद्युत्पत्तिस्थानम् , द्रव्यवनं दारुयोग्यवृक्षप्रायं वनम्, हस्तिवनं गजोत्पत्तिवनम् , एतत्संबन्धिषु कर्मान्तेषु व्यापारस्थानेषु उपयोजयेत् अर्थात् कायायासकर्मणि । श्रीमूला.

**त्रिवर्गभयसंशुद्धानमात्यान् स्वेषु कर्मसु ।**
**अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः ॥**

तदिदमाचार्याणां मतमित्यर्थकं श्लोकमाह— त्रिवर्गेत्यादि । त्रिवर्गभयसंशुद्धान् त्रिवर्गभयैः धर्मार्थकामभयोपधाभिः दृष्टशौचान् अधिकुर्यात् नियोजयेत् यथाशौचं तत्तच्छुद्ध्यानुगुण्येन । श्रीमूला.

**न त्वेव कुर्यादात्मानं देवीं वा लक्ष्यमीश्वरः ।**
**शौचहेतोरमात्यानामेतत्कौटल्यदर्शनम् ॥**

उक्तमाचार्यमतम् । स्वमतं तु नैवम्, किंतु अमात्यशुद्धिपरीक्षार्थे स्वात्मानं देवीं च विषयं नैव राजा कुर्यादित्येवंरूपमित्याह— न त्वेवेत्यादि । श्रीमूला.

**न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत् ।**
**कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥**

कुत आत्मानं देवीं च न लक्षं कुर्यादित्यत्राऽऽह— न दूषणमिति । अदुष्टस्य स्वभावात् दोषशून्यस्य अमात्यादेः प्रतीकारसमर्थस्यापि दूषणं उपधया वञ्चनं अम्भसः विषेण दूषणमिव अम्भसः स्वभावतो जीवनहेतोर्जलस्य एकान्तमरणहेतुना विषेण दूषणमिव न चरेत् न कुर्यात् ।

सति प्रतीकारसामर्थ्ये दूषणेन को दोष इत्यत्राऽऽह— कदाचिदित्यादि । अयमर्थः— अदुष्टोऽपि यद्युपधावशात् कदाचित् प्रकर्षेण दुष्टान्तःकरणो भवेत् तदानीं अशक्यप्रतीकारस्तत्सकाशादनर्थं आपतेदिति । श्रीमूला.

कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा ।
नागत्वाऽन्तं निवर्तेत स्थिता सत्त्ववतां धृतौ ॥

उपधादूषिता च धीराणां बुद्धिर्यतमाना स्वाध्यवसितार्थसिद्धिमप्राप्य नैव विरमतीत्याह— कृता चेत्यादि । श्रीमूला.

तस्माद्बाह्यमधिष्ठानं कृत्वा चार्ये चतुर्विधे ।
शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ॥

कथं तर्ह्यमात्याः शोधनीया इत्याकाङ्क्षायामाह— तस्मादिति । तस्मात् राजा चतुर्विधे चार्ये उपधाप्रयोगे बाह्यं बहिरङ्गं दूष्यं अधिष्ठानं लक्ष्यं कृत्वा अमात्यानां शौचाशौचं सत्रिभिः सत्रिद्वारेण मार्गेत परीक्षेत । श्रीमूला.

## नारदः

अमात्यगुणाः अमात्यकर्तव्यानि च

*[1]कोऽत्रेत्यहमिति ब्रूयाः सम्यगादेशयेति च ।
आज्ञां न वितथां कुर्याद्यथाशक्ति महीपतेः ॥
अल्पेच्छो धृतिमान् प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेत्यः स राजवसतिं वसेत् ॥
दूरादेवेक्षणे हासः संप्रश्नेष्वादरो भृशम् ।
परोक्षेऽपि गुणः श्लाघ्यः स्मरणं प्रियवस्तुषु ॥
अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥
नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि प्रियम् ।
कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥
स चामात्यः सदा श्रेयान् काकिनीमपि वर्धयेत् ।
कोषं प्राहुर्यतः प्राणान् ततः प्राणाः स भूपतेः ॥

* 'कोऽत्रेत्यहमिति' इत्यादेः श्लोकषट्कस्य व्याख्यानं अस्मिन्नेव प्रकरणे हारीतवचनेषु द्रष्टव्यम् ।

(१) रार. १२ षट् श्लोकाः.

## मत्स्यपुराणम्

शौर्यधर्मास्तिक्यादिगुणवदमात्यवरणं राजकर्तव्यं यथायोग्यकर्मसु अमात्यनियोजनं च

मनुरुवाच—

[1]राज्ञोऽभिषिक्तमात्रस्य किं नु कृत्यतमं भवेत् ।
एतन्मे सर्वमाचक्ष्व सम्यग्वेत्ति यतो भवान् ॥

मत्स्य उवाच—

[2]अभिषेकार्द्रशिरसा राज्ञा राज्यावलोकिना ।
सहायवरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥

अभिषेकानन्तरं राज्ञा किं कर्तव्यमित्यपेक्षायामाह— राज्ञ इति । पृ. १७४

अत्र मात्रपदेन तमपा च अभिषेकानन्तरमेव प्रजापालनं तदङ्गसंपत्तिश्च संपादनीयेति गम्यते । तदुक्तं तत्रैव— अभिषेकेति । सहायाः अमात्यादयः । राप्र. १३-१४

[3]यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं महोदयम् ॥
[4]तस्मात्सहायान्वरयेत्कुलीनान्नृपतिः स्वयम् ।
शूरान्कुलीनजातीयान्बलयुक्तान् श्रियाऽन्वितान् ॥

(१) मत्स्य. २१५।१; विध. २।२४।१ सम्यग् (सर्वं); राप्र. १३, १७४.

(२) मत्स्य. २१५।२; विध. २।२४।२ राज्यावलोकिना (राजीवलोचन); राप्र. १३-१४: १७४ विधवत्.

(३) मत्स्य. २१५।३; विध. २।२४।३ प्येकेन (प्यैकेन) किमु (किं नु) महोदयम् (महत्पदम्); राप्र. १७४.

(४) मत्स्य. २१५।४; विध. २।२४।४ न्कुलीन (न्नुत्तम) श्रियाऽ(श्रुता); राक. २३; राप्र. १७४-१७५.

[1]रूपसत्त्वगुणोपेतान्सज्जनान्क्षमयाऽन्वितान् ।
क्लेशक्षमान्महोत्साहान्धर्मज्ञांश्च प्रियंवदान् ॥
[2]हितोपदेशकालज्ञान् स्वामिभक्तान् यशोर्थिनः ।
एवंविधान् सहायांश्च शुभकर्मसु योजयेत् ॥
[3]गुणहीनानपि तथा विज्ञाय नृपतिः स्वयम् ।
कर्मस्वेव नियुञ्जीत यथायोग्येषु भागशः ॥

अत्रायं वाक्यार्थः— यदि मौलाः कुलीना अपि तथा पितृपैतामहपदयोग्यगुणहीनाः तांस्तथाविधगुणहीनानपि विज्ञाय यथायोग्येष्वेव कर्मसु स्वयं भागशः कर्मविभागेन नियुञ्जीत, न तु तत्तत्पितृपैतामहपदेषु, तत्र तत्र तेषामयोग्यत्वात् । यथायोग्येषु कर्मसु नियुञ्जीतैवेति वा वाक्यार्थः । तेषामवश्यभरणीयानामभरणे तेषां च राजान्तराश्रयणे महादोषः स्यात् । भृत्यानामवश्यं परीक्षा कार्येत्युक्तं गरुडपुराणेऽपि– 'यथा चतुर्भिः कनकं परीक्ष्यते तुलाकषच्छेदनतापनेन । तथा चतुर्भिर्भृतकः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥' (१।११२।३) इत्यादिवचनैः । परीक्षितास्तत्तत्कर्मसु नियोज्याः । एत एव च सहाया इति व्यपदिश्यन्ते । ते च द्विविधाः— राज्याङ्गोपकारकाः राजाङ्गोपकारकाश्च । ते च प्रत्येकं द्विविधाः— दृष्टार्थाः अदृष्टार्थाश्च । दृष्टद्वारकोपकारकारित्वेन दृष्टार्थत्वम्, अदृष्टद्वारकोप(कार)कारित्वेन चादृष्टार्थत्वं द्रष्टव्यम् । यद्यप्युभयाङ्गोपकारित्वेन चोभयत्रापि त्रैविध्यं वक्तुमुचितं तथापि 'भूयस्त्वात्तद्व्यपदेशः' इति न्यायेन द्वैविध्यमेव न्याय्यम् । अन्यथा वक्ष्यमाणानाममात्यादीनां राजाङ्गोपकारित्वेन द्वैविध्यमपि न स्यात् । न चेष्टापत्तिः, उपधेयसंकरेऽप्युपाधेरसंकरात् । तत्र राज्याङ्गोपकारका दृष्टार्थाः अमात्यसेनापतिप्रभृतयः, अदृष्टार्थाश्च वक्ष्यमाणब्राह्मणामात्यप्रभृतयः । राजाङ्गोपकारकाश्च दृष्टार्थाः प्रतीहारसूदप्रभृतयः, अदृष्टार्थाश्च पुरोहितप्रभृतयः । एते च यथायथं स्वस्वबुद्ध्या परिच्छिद्य पृथक्पृथक् निरूपणीयाः ।

राप्र १७६–१७७

## विष्णुधर्मोत्तरपुराणम्

### आस्तिकामात्यवरणमेव राज्ञः श्रेयस्करम्

पुष्कर उवाच–

[1]दुर्गमायुधसंघातं कुञ्जरांस्तुरगांस्तथा ।
पुरुषैश्च विना राम सर्वमेतदपार्थकम् ॥
तस्मात्प्रयत्नं कुर्वीत पुरुषाणां समर्जने ।
तेषां चैवाऽऽन्तरज्ञाने मूलमेतद्यतः श्रियः ॥
सुसहायार्थसंपन्नं बलं यस्य महीपतेः ।
सङ्ग्रामे तुमुले राम नूनं तस्य जयो भवेत् ॥
सकृद्येन कृतं पापं तस्य राजा न विश्वसेत् ।
पापं तु सुकरं तस्य सुकृतं चास्य दुष्करम् ॥
यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
तथा चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥
राजा न वेशयेत्कार्ये जनो यो नास्तिको भवेत् ।
आस्तिका अपि तत्सङ्गात्प्राप्नुयुः संशयं द्विज ॥
अनाहार्यप्रभस्यापि त्रैलोक्योद्भासितात्मनः ।
कृष्णता राहुसंसर्गात्किं न सूर्यस्य वा भवेत् ॥
अकार्यमित्यकार्याणि कुर्यात्कार्यवशेन यः ।
विचिकित्सुर्ध्रुवं राम पश्चादपि निवर्तते ॥
कार्यं बुद्ध्वा त्वकार्याणि यः करोति नराधमः ।
अकार्यकरणे श्रद्धा तस्य भूयोऽभिवर्धते ॥
लोकः सर्वो महाभाग परलोकनिबन्धनः ।
निरपेक्षस्य तत्रान्या का गतिः स्यान्निबन्धने ॥

---

(१) मत्स्य. २१५।५ ; विध. २।२४।५ पूर्वार्धे ( रूपसत्त्वगुणौदार्यसंयुक्तान् क्षमया युतान्। ); राक. २३ ; राप्र. १७५ सज्जनान् ( संयतान् ).

(२) मत्स्य. २१५।६ ; विध. २।२४।६ देशकालज्ञान् ( देशिकान् प्राज्ञान् ) श्च शुभकर्मसु ( स्तु शुभकर्मणि); राक. २३ देशकालज्ञान् ( देशकान् राज्ञः ) यशोर्थिनः ( सुवत्सलान् ) यांश्च ( यांस्तु ) ; राप्र. १७५ यशोर्थिनः ( श्रियाऽन्वितान् ) शेषं राकवत्.

(३) मत्स्य. २१५।७ ; विध. २।२४।७ भागशः ( भार्गव ) ; राप्र. १७६.

(१) विध. २।५१।११–१५.

[1]यदर्थं चाप्यपहृतं येन यच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ॥

तस्य गोमायोः तद्विदितं तेन च तन्मर्षितम्, कारणार्थं स्वस्य बन्धविच्छेदो भवत्विति हेतोरित्यर्थः । नीटी.

[2]समयोऽयं कृतस्तेन साचिव्यमुपगच्छता ।
नोपघातस्त्वया ग्राह्यो राजन्मैत्रीमिहेच्छता ॥

[3]क्षुधितस्य मृगेन्द्रस्य भोक्तुमभ्युत्थितस्य च ॥

[4]भोजने चोपहर्तव्ये तन्मांसं न स्म दृश्यते ।
मृगराजेन चाऽऽज्ञप्तं मृग्यतां चोर इत्युत ॥

[5]कृतकैश्चापि तन्मांसं मृगेन्द्रायोपवर्णितम् ।
सचिवेनोपनीतं ते विदुषा प्राज्ञमानिना ॥

[6]सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम् ।
बभूवामर्षितो राजा वधं चास्याभ्यरोचयत् ॥

[7]छिद्रं तु तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः ।
सर्वेषामेव सोऽस्माकं वृत्तिभङ्गेषु वर्तते ॥

[8]निश्चित्यैव पुनस्तस्य ते कर्माण्यपि वर्णयन् ॥

वर्णयन् अवर्णयन् । नीटी.

[1]इदं चास्येदृशं कर्म वाङ्भयेन तु रक्ष्यते ।
श्रुतश्च स्वामिना पूर्वं यादृशो नैष तादृशः ॥

[2]वाङ्मात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः ।
धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः ।
कार्यार्थं भोजनार्थेषु व्रतेषु कृतवाञ्श्रमम् ॥

[3]यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते ।
तन्मांसं चैव गोमायोस्तैः क्षणादाशु ढौकितम् ॥

गोमायोर्गृहे ढौकितं प्रवेशितं मांसं प्रदर्शयामासुरित्यर्थः । नीटी.

[4]मांसापनयनं ज्ञात्वा व्याघ्रस्तेषां तु तद्वचः ।
आज्ञापयामास तदा गोमायुर्वध्यतामिति ॥

[5]शार्दूलवचनं श्रुत्वा शार्दूलजननी ततः ।
मृगराजं हितैर्वाक्यैः संबोधयितुमागमत् ॥

[6]पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंवृतम् ।
कर्मसंघर्षजैर्दोषैर्दुष्यत्यशुचिभिः शुचिः ॥

कर्म न ग्राह्यमित्युत्तरश्लोकेन संबन्धः । संघर्षजैः स्पर्धोत्थैः । नीटी.

[7]नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते ॥

---

(१) भा. १२।११२।४६ ; भामु. १२।१११।४६ यच्चैव ( तच्चैव ).

(२) भा. १२।११२।४७ ; भामु. १२।१११।४७ ग्राह्यो ( कार्यो ).

(३) भामु. १२।१११।४८ 'भीष्म उवाच' इत्यादौ पठितम्.

(४) भा. १२।११२।४८; भामु. १२।१११।४८–४९ पूर्वार्धे ( भोजनायोपहर्तव्यं तन्मांसं नोपदृश्यते । ) मृग्यतां ( दृश्यतां ).

(५) भा. १२।११२।४९; भामु. १२।१११।४९–५० नोप ( नाप ).

(६) भा. १२।११२।५०; भामु. १२।१११।५०–५१ चास्याभ्य ( चास्य व्य ).

(७) भा. १२।११२।५१; भामु. १२।१११।५१–५२ भङ्गेषु ( भङ्गे प्र ).

(८) भामु. १२।१११।५२.

(१) भा. १२।११२।५२; भामु. १२।१११।५३ पूर्वार्धे ( इदं तस्येदृशं कर्म किं तेन न कृतं भवेत् । ) नैष ( नैव ).

(२) भा. १२।११२।५३; भामु. १२।१११।५४–५५.

(३) भामु. १२।१११।५५–५६.

(४) भा. १२।११२।५४ ; भामु. १२।१११।५६–५७ घ्रस्तेषां तु ( घ्रः श्रुत्वा च ).

(५) भा. १२।११२।५५ ; भामु. १२।१११।५७–५८ लवचनं ( लस्य वचः ).

(६) भा. १२।११२।५६ ; भामु. १२।१११।५८–५९ संवृतम् ( संयुतम् ) दुष्यत्य ( दुष्येता ).

(७) भा. १२।११२।५७ ; भामु. १२।१११।५९–६०.

प्रक्रिया प्रकृष्टं कर्म । नीटी.

[1]मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पाद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥

[2]लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ।
अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपकाः ॥

[3]बहवः पण्डिता लुब्धाः सर्वे मायोपजीविनः ।
कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि ॥

[4]शून्यात्तच्च गृहान्मांसं यदद्यापहृतं तव ।
नेच्छते दीयमानं च साधु तावद्विमृश्यताम् ॥

[5]असत्याः सत्यसंकाशाः सत्याश्चासत्यदर्शिनः ।
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥

[6]तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि न खद्योते हुताशनः ॥

तलवत् अवाङ्मुखकटाहगर्भवत् । नीटी.

[7]तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम् ।
परीक्ष्य ज्ञापयन्ह्यर्थान्न पश्चात्परितप्यते ॥

[8]न दुष्करमिदं पुत्र यत्प्रभुर्घातयेत्परम् ।
श्लाघनीया च वर्या च लोके प्रभवतां क्षमा ॥

---

(१) भामु. १२।१११।६०–६१.

(२) भा. १२।११२।५८ ; भामु. १२।१११।६१–६२ सुरूपकाः ( सुरूपिणः ).

(३) भा. १२।११२।५९ ; भामु. १२।१११।६३ लुब्धाः सर्वे ( मूर्खा लुब्धा ).

(४) भा. १२।११२।६० ; भामु. १२।१११।६४ यदद्याप ( यद्यप्यप ).

(५) भा. १२।११२।६१ ; भामु. १२।१११।६५ पूर्वार्धे ( असभ्याः सभ्यसंकाशाः सभ्याश्चासभ्यदर्शनाः । ).

(६) भा. १२।११२।६२ ; भामु. १२।१११।६६ न खद्योते ( खद्योते न ).

(७) भा. १२।११२।६३ ; भामु. १२।१११।६७ युक्तमर्थः ( युक्तो ह्यर्थः ) यन्ह्यर्था ( यन्नर्था ).

(८) भा. १२।११२।६४ ; भामु. १२।१११।६८ च वर्या ( यशस्या ).



प्रभवतां प्रभूणाम् । नीटी.

[1]स्थापितोऽयं पुत्र त्वया सामन्तेष्वधि विश्रुतः ।
दुःखेनाऽऽसाद्यते पात्रं धार्यतामेष ते सुहृत् ॥

[2]दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम् ।
स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति ॥

[3]तस्मादथारिसंघाताद्गोमायोः कश्चिदागतः ।
धर्मात्मा तेन चाऽऽख्यातं यथैतत्कपटं कृतम् ॥

गोमायोः चारः । नीटी.

[4]ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः ।
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः ॥

[5]अनुज्ञाप्य मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित् ।
तेनामर्षेण संतप्तः प्रायमासितुमैच्छत ॥

प्रायं मरणार्थमुपवेशनं आसितुं आचरितुम् । नीटी.

[6]शार्दूलस्तत्र गोमायुं स्नेहात्प्रस्रुतलोचनः ।
अवारयत्स धर्मिष्ठं पूजया प्रतिपूजयन् ॥

[7]तं स गोमायुरालोक्य स्नेहादागतसंभ्रमम् ।
बभाषे प्रणतो वाक्यं बाष्पगद्गदया गिरा ॥

[8]पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः ।
परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि ॥

---

(१) भा. १२।११२।६५ ; भामु. १२।१११।६९ पुत्र त्वया ( त्वया पुत्र ) ष्वधि ( ष्वपि ).

(२) भा. १२।११२।६६ ; भामु. १२।१११।७०.

(३) भा. १२।११२।६७ ; भामु. १२।१११।७१ दथारि ( दप्यरि ).

(४) भा. १२।११२।६८ ; भामु. १२।१११।७२ चारित्रः ( चरितः ).

(५) भा. १२।११२।६९ ; भामु. १२।१११।७३.

(६) भा. १२।११२।७० ; भामु. १२।१११।७४ स्तत्र ( स्तं तु ) त्प्रस्रुत ( त्प्रोत्फुल्ल ).

(७) भा. १२।११२।७१ ; भामु. १२।१११।७५ बभाषे ( उवाच ).

(८) भा. १२।११२।७२ ; भामु. १२।१११।७६.

[१]स्वसंतुष्टाश्च्युताः स्थानान्मानात्प्रत्यवरोपिताः ।
स्वयं चोपहृता भृत्या ये चाप्युपहृताः परैः ॥

उपहिताः वञ्चिताः । नीटी.

[२]परिक्षीणाश्च लुब्धाश्च क्रूराः काराभितापिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ॥

-प्रतारिताः क्षारिताः । नीटी.

[३]संतापिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।
अन्तर्हिताः सोपहिताः सर्वे ते परसाधनाः ॥

अपरसाश्च अधनाश्चेति अपरसाधनाः, प्रीतिशून्या निर्धनाश्चेत्यर्थः । नीटी.

[४]अवमानेन युक्तस्य स्थापितस्य च मे पुनः ।
कथं यास्यसि विश्वासमहमेष्यामि वा पुनः ॥

[५]समर्थ इति संगृह्य स्थापयित्वा परीक्ष्य च ।
कृतं च समयं भित्त्वा त्वयाऽहमवमानितः ॥

[६]प्रथमं यः समाख्यातः शीलवानिति संसदि ।
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥

[७]एवं चावमतस्येह विश्वासं किं प्रयास्यसि ।
त्वयि चैव ह्यविश्वासे ममोद्वेगो भविष्यति ॥

---

(१) भा. १२।११२।७३ ; भामु. १२।१११।७७ स्वसंतुष्टा ( असंतुष्टा ) चोप (चाप) प्युपहृताः (प्युपहिताः).

(२) भा. १२।११२।७४; भामु. १२।१११।७८ क्रूराः काराभितापिताः ( क्रुद्धा भीताः प्रतारिताः ) त्यक्तोपात्ता ( त्यक्तादाना ).

(३) भा. १२।११२।७५; भामु. १२।१११।७९ सर्वे ते पर ( ते सर्वेऽपर ).

(४) भा. १२।११२।७६ ; भामु. १२।१११।८० स्थापितस्य च मे ( स्थानभ्रष्टस्य वा ) हमेष्यामि वा पुनः ( हं तिष्ठामि वा कथम् ).

(५) भा. १२।११२।७७ ; भामु. १२।१११।८१ परीक्ष्य च ( परीक्षितः ).

(६) भा. १२।११२।७८ ; भामु. १२।१११।८२.

(७) भा. १२।११२।७९; भामु. १२।१११।८३ किं प्रयास्यसि ( मे न यास्यसि ) चैव ह्य (चापेत ).

[१]शङ्कितस्त्वमहं भीतः परे छिद्रानुदर्शिनः ।
अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥

[२]दुःखेन श्लेष्यते भिन्नं श्लिष्टं दुखेन भिद्यते ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्तते ॥

[३]कश्चिदेव हि भीतस्तु दृश्यते न परात्मनोः ।
कार्यापेक्षा हि वर्तन्ते भावाः स्निग्धास्तु दुर्लभाः ॥

कश्चिदेव कश्चिदपि भर्तुर्हिते न दृश्यते, किंतु वाणिज्यवदुभयार्थः स्नेहः, न केवलं भर्तुः कार्यार्थे इत्यर्थः । नीटी.

[४]सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम् ।
समर्थो वाऽप्यशक्तो वा शतेष्वेकोऽधिगम्यते ॥

पुरुषज्ञानं सुदुःखं दुर्लभम् । यतः एषां नृपाणां चित्तं चलाचलं अस्थिरं गम्यते ज्ञायते । सुपुरुषज्ञानं दुर्घटमित्यर्थः । नीटी.

[५]अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम् ।
शुभाशुभे महत्त्वं च प्रकर्तुं बुद्धिलाघवात् ॥

प्रक्रिया महीकरणम् । अकस्मात्कर्तुं बुद्धेर्लाघवं तुच्छत्वमेव हेतुः । नीटी.

[६]एवं बहुविधं सान्त्वमुक्त्वा धर्मार्थहेतुमत् ।
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥

---

(१) भा. १२।११२।८० ; भामु. १२।१११।८४ परे ( पर ).

(२) भा. १२।११२।८१ ; भामु. १२।१११।८५ श्लेष्यते ( श्लिष्यते ) भिन्नश्लिष्टा ( भिन्ना श्लिष्टा ).

(३) भा. १२।११२।८२ ; भामु. १२।१११।८६ हि भीतस्तु ( हिते भर्तुः ) भावाः स्निग्धास्तु दुर्लभाः ( भावास्निग्धाः सुदुर्लभाः ).

(४) भा. १२।११२।८३ ; भामु. १२।१११।८७ प्यशक्तो ( प्यशङ्को ).

(५) भा. १२।११२।८४ ; भामु. १२।१११।८८ लाघवात् ( लाघवम् ).

(६) भा. १२।११२।८५ ; भामु. १२।१११।८९ पूर्वार्धे ( एवंविधं सान्त्वमुक्त्वा धर्मकामार्थहेतुमत् । ).

प्रसादयित्वा प्रसाद्य। नीटी.

[1]अगृह्यानुनयं तस्य मृगेन्द्रस्य स बुद्धिमान्।
गोमायुः प्रायमासीनस्त्यक्त्वा देहं दिवं ययौ॥

अगृह्य अगृहीत्वा। नीटी.

सहायसंग्रहणं राज्ञः कर्तव्यम्

[2]गुप्तमन्त्रश्रुतवतः सुसहायस्य चानघ॥

[3]परीक्ष्यकारिणोऽर्थाश्च तिष्ठन्तीह युधिष्ठिर।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम्॥

अमात्यगुणाः, अमात्यानां मुख्यकर्मसु योजनम्

[4]अमात्यानुपधातीतान् पितृपैतामहाञ्शुचीन्।
दान्तान् कर्मसु सर्वेषु मुख्यान्मुख्येषु योजयेः॥

कर्मसु पुण्यान् जन्मना च पुण्यान्। नीटी.

## वाल्मीकिरामायणम्

एकोऽपि पण्डितोऽमात्यः श्रेयान् अपण्डितसहस्रेभ्यः,

अमात्यगुणाः

[5]कच्चिन्मूर्खसहस्रेणाप्येकं क्रीणासि पण्डितम्।
पण्डितो ह्यर्थकृच्छ्रेषु ब्रूयान्निःश्रेयसं वचः॥

(१) भा. १२।११२।८६; भामु. १२।१११।९० स (च) मासीनस्त्य (मास्थाय त्य).

(२) भा. १२।११३।१९; भामु. १२।११२।१९ गुप्तमन्त्र (गुह्यं मन्त्रं).

(३) भा. १२।११३।२०; भामु. १२।११२।२० ऽर्थाश्च ति (ह्यर्थास्ति).

(४) भा. १५।९।१४; भामु. १५।५।१४ सर्वेषु मुख्यान् मुख्येषु (पुण्यांश्च पुण्यान् सर्वेषु); रार. १२ उत्तरार्धे (दान्तान् कर्मसु पुण्यांश्च मुख्यान् कर्मसु योजयेत्॥).

(५) वारा. २।११४।१७; वाराकु. २।१००।२३ पूर्वार्धे (कच्चित् सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम्।) ब्रूया (कुर्या) वचः (महत्).

[1]सहस्रैरपि मूर्खाणां यो नृपः पर्युपास्यते।
तथैवाप्ययुतैस्तस्य नास्ति तेषु सहायता॥

[2]एको ह्यमात्यो मेधावी शूरो दान्तो विचक्षणः।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम्॥

[3]अमात्यानुपधातीतान् पितृपैतामहाञ् शुचीन्।
ज्येष्ठाञ् ज्येष्ठेषु कच्चित्त्व नियोजयसि कर्मसु॥

अमात्यदोषाः

[4]बुद्धाः खलु न बुध्यन्ते सचिवास्तव रावण।
ये त्वामत्यर्थमापन्नं विनयन्ति न शाश्वताः॥

[5]अमात्यैः कामवृत्तो हि राजा विषयमाश्रितः।
निग्राह्यः सर्वथा स त्वं निग्राह्यान् न निगृह्यसे॥

[6]धर्ममर्थं च कामं च यशश्च विपुलं भुवि।
स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर॥

[7]विपर्यये हि तिष्ठन्तो मन्त्रिणो धनदानुज।
वृजिनं स्वामिवैकल्ये प्राप्नुवन्ति सबान्धवाः॥

(१) वारा. २।११४।१८; वाराकु. २।१००।२४ (सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः। अथवाऽप्ययुतान्येव नास्ति तेषु सहायता॥).

(२) वारा. २।११४।१९; वाराकु. २।१००।२५ एको ह्य (एकोऽप्य) दान्तो (दक्षो) राजपुत्रं (राजमात्रं).

(३) वारा. २।११४।३५; वाराकु. २।१००।२७ उत्तरार्धे (श्रेष्ठाञ् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु॥).

(४) वारा. ३।४४।६; वाराकु. ३।४१।६ (वध्याः खलु न हन्यन्ते सचिवास्तव रावण। ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः॥).

(५) वारा. ३।४४।७; वाराकु. ३।४१।७ विषय (कापथ) स त्वं निग्राह्यान् न (सद्भिर्न निगृह्यो).

(६) वारा. ३।४४।८; वाराकु. ३।४१।८ विपुलं भुवि (जयतां वर).

(७) वारा. ३।४४।९; वाराकु. ३।४१।९ (विपर्यये तु तत्सर्वं व्यर्थं भवति रावण। व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः॥).

¹राजमूलो हि विजयो जयश्च जयतां वर ।
तस्मात्सर्वास्ववस्थासु रक्षितव्यो नराधिपः ॥

गुणोत्तमाः सहायाः

²विगुणोऽपि हि चेद्राजा सहायाः स्युर्गुणोत्तमाः ।
तत्रापि युक्त्या निवसेद्गुणापेक्षो न संशयः ॥

## कौटिलीयमर्थशास्त्रम्

आचार्या अमात्या वा राजमर्यादा

³मर्यादां स्थापयेदाचार्यानमात्यान् वा, य एनमपायस्थानेभ्यो वारयेयुः, छायानालिकाप्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः ॥

मूर्धाभिषिक्तराजर्षिवृत्तमाह— मर्यादामिति । आचार्यान् गुरून् अमात्यान् मन्त्रिणो वा मर्यादां स्थापयेत् सीमां परिकल्पयेत् । ताद्धर्म्यात् ताच्छब्द्यम् । सीमामिवालङ्घनस्थानमात्मनो विदध्यादित्यर्थः । ते कीदृशाः ? ये एनं राजानं अपायस्थानेभ्यो वारयेयुः अनर्थकारणानुष्ठानेभ्यो निवर्तयेयुः । रहसि प्रमाद्यन्तं अन्तःपुरादावतिप्रसजन्तमेनम् । छायानालिकाप्रतोदेन । छाया त्रिपौरुष्यादिरूपं छायाप्रमाणं अतीतघटिकावेदकं राजप्रणिधिप्रकरणे वक्ष्यमाणम् । नालिका घटिकाप्रमाणम् । तदुभयरूपेण प्रतोदेन कार्यान्तरकालातिपातसूचनद्वारा प्रसक्तेष्टकर्मप्रत्यूहजनकतया मनोऽन्यथाकारित्वात् प्रतोदतुल्येन । पुनः पुनश्छायानालिकानिवेदनेनेत्यर्थः । अभितुदेयुर्वा परिव्यथयेयुश्च प्रमादभङ्गार्थम् । श्रीमूला.

सहायसाध्यं राजत्वं चक्रमेकं न वर्तते ।
कुर्वीत सचिवांस्तस्मात्तेषां च शृणुयान्मतम् ॥

किमर्थं यथोक्तसचिवस्थापनेनाऽऽत्मा परतन्त्रतां नीयते इति चेत् तत्राऽऽह— सहायेत्यादि । सहायसाध्यं सहायनिर्वाह्यम्, न त्वेकाकिनाऽऽत्मना निर्वाह्यम् । तत्र दृष्टान्तः— चक्रमेकं न वर्तेत इति । शकटादौ युक्तं एकं चक्रान्तरसहायरहितं चक्रं न परिभ्रमति । सचिवान् आचार्यानमात्यांश्च । शृणुयाच्च श्रुत्वाऽनुतिष्ठेच्च । श्रीमूला.

अमात्यनियुक्तिविवेकः

¹सहाध्यायिनोऽमात्यान् कुर्वीत, दृष्टशौचसामर्थ्यत्वादिति भारद्वाजः । ते ह्यस्य विश्वास्या भवन्तीति ॥

के तावदमात्यपदमर्हन्तीत्यपेक्षायां भारद्वाजादयः सप्ताऽऽचार्याः सप्तधा वर्णयन्ति । तत्र भारद्वाजस्य पक्षमाह— सहाध्यायिन इत्यादि । दृष्टशौचसामर्थ्यत्वात् । शौचं हृदयशुद्धिः, तच्च सामर्थ्यं कार्यनैपुण्यं च दृष्टं सहाध्ययनकाले प्रत्यक्षितं येषां तेषां भावस्तत्त्वम्, तस्मात् । विश्वास्याः विश्वासयोग्याः । श्रीमूला.

नेति विशालाक्षः । सहक्रीडितत्वात् परिभवन्त्येनम् । ये ह्यस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत, समानशीलव्यसनत्वात् । ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति ॥

तं पक्षं विशालाक्षः प्रतिषेधति— नेतीत्यादि । परिभवन्ति अवजानन्ति । के तर्ह्यमात्याः कार्यास्तत्राऽऽह— ये हीति । गुह्यसधर्माणः गुह्यं शीलच्युतिः पारदारिकत्वादि, तत्र समानाः । तथाविधानाममात्यीकरणे गुणमाह— ते हीति । ते हि मर्मज्ञभयात् अस्मन्मर्मज्ञो राजेति भयात् अस्य नापराध्यन्ति अपराधं न कुर्वन्ति । यत्नेन शीलसौष्ठवमासाद्य स्वकर्म सम्यगनुतिष्ठन्तीत्यर्थः । श्रीमूला.

साधारण एष दोष इति पराशरः । तेषामपि मर्मज्ञभयात्कृताकृतान्यनुवर्तेत ॥

पराशरमतमाह— साधारण इति । एष दोषः दुःशीलत्वं साधारणः गुह्यसधर्मणां राज्ञश्च समानः । अस्तु, को दोष इति चेदाह— मर्मज्ञभयात् अमात्या मन्मर्मज्ञा इति भयात् तेषामपि अमात्यानामपि कृताकृतानि असुष्ठुकृतानि कर्माणि अनुवर्तेत अनुसरेत्, अर्थात् राजा । श्रीमूला.

---

(१) वारा. ३।४४।१० ; वाराकु. ३।४१।१० विजयो ( धर्मश्च ) रक्षितव्यो नराधिपः ( रक्षितव्या नराधिपाः ).

(२) वारा. ५।९०।७६.

(३) कौ. १।७.

(१) कौ. १।८.

**यावद्भ्यो गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः।**
**अवशः कर्मणा तेन वश्यो भवति तावताम् ॥**

अस्मिन्नर्थे श्लोकमाह— यावद्भ्य इत्यादि । गुह्यं आचष्टे स्वं शीलभ्रंशं प्रकाशयति । अवशः अधीरः । एवं च गुह्यसधर्मणोऽमात्यान् न कुर्यादित्यभिप्रायः । श्रीमूला.

**य एनमापत्सु प्राणाबाधयुक्तास्वनुगृह्णीयुस्तानमात्यान् कुर्वीत दृष्टानुरागत्वादिति ॥**

कांस्तर्हि कुर्यादित्यत्राऽऽह— य एनमिति । अनुगृह्णीयुः उपकुर्युः । श्रीमूला.

**नेति पिशुनः । भक्तिरेषा न बुद्धिगुणः । संख्यातार्थेषु कर्मसु नियुक्ता ये यथादिष्टमर्थं सविशेषं वा कुर्युस्तानमात्यान् कुर्वीत, दृष्टगुणत्वादिति ॥**

उक्तं पक्षं खण्डयति— नेतीति । पिशुनः नारदः । तत्र हेतुरुच्यते— भक्तिरेषा न बुद्धिगुणः । स्वशरीरनैरपेक्ष्येण राजरक्षणप्रवृत्तिर्नामायं सेवाधर्मः, न तु बुद्धिगुणः । बुद्धिगुणसंपन्नश्चामात्यो भवितुमर्हतीत्याशयः । संख्यातेत्यादि । ये संख्यातार्थेषु परिगणितद्रव्योत्पत्तिषु कर्मसु नियुक्ताः अर्थं यथादिष्टं सविशेषं वा कुर्युः द्रव्यं क्लृप्तसंख्यानूनं क्लृप्तसंख्याधिकसंख्यं वा भावयेयुः । श्रीमूला.

**नेति कौणपदन्तः । अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहानमात्यान् कुर्वीत, दृष्टापदानत्वात् । ते ह्येनमपचरन्तमपि न त्यजन्ति, सगन्धत्वात् । अमानुषेष्वपि चैतद् दृश्यते— गावो ह्यसगन्धं गोगणमतिक्रम्य सगन्धेष्वेवावतिष्ठन्त इति ॥**

नारदपक्षं कौणपदन्तो निराचष्टे— नेति कौणपेत्यादि । अन्यैर्गुणैः धनभावनातिरिक्तैर्विश्वास्यत्वानुरक्तत्वादिभिर्गुणैः । पितृपैतामहान् पितृपितामहक्रमागतान् । दृष्टापदानत्वात् । दृष्टं साक्षादनुभूतं अपदानं पूर्ववृत्तं येषां ते दृष्टापदानाः, तेषां भावस्तत्त्वम्, तस्मात् । एतेन पूर्वपुरुषशीलप्रत्येयगुणत्वमुक्तम् । गुणान्तरमाह— ते हीति । अपचरन्तमपि एनं आत्मापकारिणमपि स्वामिनम् । सगन्धत्वात् संबन्धित्वात् परिचितत्वात् । संबन्धसामान्यवचन इह गन्धशब्दः । पशुदृष्टान्तमाह— अमानुषेष्विति । एतत् परिचयस्य परिचितात्यागकारणत्वम् । असगन्धं अपरिचितम् । श्रीमूला.

**नेति वातव्याधिः । ते ह्यस्य सर्वमवगृह्य स्वामिवत्प्रचरन्तीति । तस्मान्नीतिविदो नवानमात्यान् कुर्वीत । नवास्तु यमस्थाने दण्डधरं मन्यमाना नापराध्यन्तीति ॥**

उक्तं पक्षं वातव्याधिर्नानुमन्यत इत्याह— नेति वातेत्यादि । वातव्याधिः उद्धवः श्रीकृष्णमन्त्री । ते कुलक्रमागता अमात्याः अस्य सर्वमवगृह्य स्वामिनः समस्तं विभवमवष्टभ्य स्वामिवत् प्रचरन्ति स्वतन्त्रवृत्तयो भवेयुः । के तर्ह्यमात्याः कार्या इत्याह— तस्मादित्यादि । नवान् पूर्वसंबन्धरहितान् । दण्डधरं यमस्थाने मन्यमानाः राजानं यमवदुग्रदण्डं बुध्यमानाः । श्रीमूला.

**नेति बाहुदन्तीपुत्रः । शास्त्रविददृष्टकर्मा कर्मसु विषादं गच्छेत् । अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तानमात्यान् कुर्वीत, गुणप्राधान्यादिति ॥**

इममपि पक्षं बाहुदन्तीपुत्रो न सहत इत्याह— नेति बाह्विति । कुत इत्यत्राऽऽह— शास्त्रेत्यादि । नीतिशास्त्रग्रन्थनिष्णातस्तदर्थानुष्ठानपरिचयविकलः अमात्यकर्मसु अवसादं प्राप्नुयात्, अनिर्वाही स्यादित्यर्थः । कांस्तर्हि अमात्यान् कुर्वीतेत्यत्राऽऽह— अभिजनेत्यादि । अभिजनः वंशशुद्धिः, प्रज्ञा बुद्ध्यतिशयः, शौचं उपधाशुद्धिः, शौर्यं उत्साहशक्तिः, अनुरागः स्वामिभक्तिः, एतैर्युक्ता ये पुरुषाः तान् अमात्यान् कुर्वीत । कुतः ? गुणप्राधान्यात् गुणानामेव प्रधानत्वात् । श्रीमूला.

**सर्वमुपपन्नमिति कौटल्यः, कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते । सामर्थ्यतश्च—**

**विभज्यामात्यविभवं देशकालौ च कर्म च ।**
**अमात्याः सर्व एवैते कार्याः स्युर्न तु मन्त्रिणः ॥**

स्वमतमाह— सर्वमिति । सर्वं उपपन्नं शौचसामर्थ्यादयो गुणाः स्वामिपरिभवादिदोषाश्च पूर्वोक्ताः सहाध्यायि-

प्रभृतिषु न्याय्याः । कुतः ? हि यस्मात् कारणात् पुरुषसामर्थ्ये पुरुषस्य तत्तदधिकारपदयोग्यता कार्यसामर्थ्यात् सामर्थ्यतश्च कार्याणां सहाध्ययनक्रीडादीनां शक्त्या सामर्थ्याच्च प्रज्ञाशास्त्रसंस्कारशौर्यादितारतम्ययोगित्वलक्षणात् कल्प्यते व्यवस्थाप्यते इत्यर्थः । गुणदोषोभयोपपन्नत्वं वदता चार्थादिदमुक्तं भवति– सहाध्यायिप्रभृतयो न हेयाः, विश्वास्यत्वादिगुणयोगात् । नापि मन्त्रिपदे कर्तव्याः, परिभवादिदोषयोगात् । पारिशेष्यात् तु कर्मसचिवपदे कर्तव्याः । तत्तद्गुणापेक्षेषु च कर्मसु देशकालानुरोधेन नियोक्तव्या इति । एतदर्थं क्रमध्यायप्रान्ते श्लोकमाह– विभज्येत्यादि । अमात्यविभवं विश्वास्यत्वाद्यमात्यगुणसंपदं विभज्य यस्मिन् देशे यस्मिन् काले यस्य कर्मणः सुष्ठु निष्पत्तये यो गुणोऽपेक्ष्यते तं तं यथायथं विविच्येत्यर्थः । सर्व एवैते तत्तद्गुणवन्तः सहाध्याय्यादयः सर्वेऽपि अमात्याः कर्मसचिवाः कार्याः, मन्त्रिणस्तु न कार्याः मन्त्रिपदे तु न निवेश्याः । श्रीमूला.

उपधाभिः शौचाशौचज्ञानममात्यानाम्

'मन्त्रिपुरोहितसखः सामान्येष्वधिकरणेषु स्थापयित्वाऽमात्यानुपधाभिः शौचयेत् ॥

मन्त्रिपुरोहितसखः मन्त्रिपुरोहितसमुपेतः । सामान्येषु अधिकरणेषु साधारणेषु अप्रधानेषु अधिकारपदेषु । उपधाभिः छलैर्वक्ष्यमाणैः । शौचयेत् शोधयेत् । श्रीमूला.

**पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजाऽवक्षिपेत् । स सत्रिभिः शपथपूर्वमेकैकममात्यमुपजापयेत्– अधार्मिकोऽयं राजा, साधु धार्मिकमन्यमस्य तत्कुलीनमवरुद्धं कुल्यमेकप्रग्रहं सामन्तमाटविकमौपपादिकं वा प्रतिपादयामः । सर्वेषामेतद्रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरिति धर्मोपधा ॥**

छलप्रयोगमाह– पुरोहितमिति । राजा अयाज्ययाजनाध्यापने याजयितुमनर्हस्य वृषलीपत्यादेर्याजने अध्यापने च नियुक्तं चोदितं अमृष्यमाणं अधर्मनियोजनेन कुप्यन्तं पुरोहितं अवक्षिपेत् अवमन्येत स्वपदादवरोपयेत् वा । सः अवक्षिप्तः पुरोहितः सत्रिभिः, स्त्रीपुरुषलक्षणनिमित्तादिशास्त्राभिज्ञापदेशचारिणः संचारविशेषाः सत्रिणः गूढपुरुषप्रणिधौ वक्ष्यमाणाः, तैः प्रयोज्यकर्तृभिः एकैकं अमात्यं शपथपूर्वं उपजापयेत् भेदयेत् । उपजापस्य शपथपूर्वत्वमनुद्भेदार्थम् । उपजापनप्रकारमाह– अधार्मिक इत्यादिना । अधार्मिकः अधर्मप्रवृत्तः । धार्मिकमिति तत्कुलीनादिषु सर्वत्र संबध्यते । तत्कुलीनं प्रकृतराजवंशभवम् । अवरुद्धं अवरुध्य रक्ष्यमाणं तत्पुत्रादिकम् । कुल्यं राजभावार्हकुलोत्पन्नम् । एकप्रग्रहं एकः तुल्यः सर्वैरविशेषं क्रियमाणः प्रग्रहः पूजा यस्य तम्, सर्वपूजितमित्यर्थः । सामन्तं विषयान्तरं राजानम् । आटविकं अटवीपतिम् । औपपादिकं उपपादं प्रत्यन्तपर्वतसमीपे भवः तम् । अथवा औपपादिकमिति अस्माभिः संभूय संप्रधारणीयमित्यर्थः । उपपादं समर्थनमर्हतीति ठक् । अस्य प्रतिपादयामः अस्य स्थाने निवेशयामः । एतत् उपन्यस्तं मतम् । कथं वा तव ? मतमिति गम्यम् । प्रत्याख्याने शुचिः, इत्थमुपजापितोऽमात्यः 'नाहमीदृशं कुर्याम्' इति यदि निरस्येत् तर्हि शुद्ध इत्यर्थः । इति धर्मोपधा धर्मस्थापनवाचोयुक्त्या छलनम् । स एष धर्मप्रधानेषु शोधनप्रकारः । श्रीमूला.

**सेनापतिरसत्प्रग्रहेणावक्षिप्तः सत्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशाय– सर्वेषामेतद् रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरित्यर्थोपधा ॥**

अर्थोपधामाह– सेनापतिरित्यादि । असत्प्रग्रहेण अवक्षिप्तः अपूज्यपूजनेन निमित्तेन परिभूतः । अपूज्यपूजने राज्ञा चोदितस्तदकुर्वन्नर्थमानाभ्यां हापित इत्यर्थः । लोभनीयेन उपजाप्यपुरुषकाम्येन । राजविनाशायेत्युपजापफलमुच्यते । तदनुकूल उपजापप्रकारस्तु– अपथप्रवृत्तोऽयं राजा, साधु सत्पथवर्तिनमन्यमस्य स्थाने तत्कुलीनमवरुद्धं वा प्रतिपादयाम इत्येवमादिरूपो गम्यः ।

(१) कौ. १।१०.

सर्वेषामित्यादिकं तच्छेषवाक्यम् । लुब्धेष्वेष शोधनप्रकारः । श्रीमूला.

**परिव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा महामात्रमेकैकमुपजपेत्– राजमहिषी त्वां कामयते कृतसमागमोपाया । महानर्थश्च भविष्यतीति । प्रत्याख्याने शुचिरिति कामोपधा ॥**

स्त्रैणेषु प्रयोज्यां कामोपधामाह– परिव्राजिकत्यादि । परिव्राजिका भिक्षुकी । कृतसत्कारा राजमहिषीभिः पूजिता । अर्थश्च धनादिकं च । श्रीमूला.

**प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत् । तेनोद्वेगेन राजा तानवरुन्ध्यात् । कापटिकश्छात्रः पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्– असत्प्रवृत्तोऽयं राजा, साध्वेनं हत्वाऽन्यं प्रतिपादयिष्यामः । सर्वेषामेतद् रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरिति भयोपधा ॥**

भयोपधामाह– प्रवहणेत्यादि । प्रवहणनिमित्तम् । प्रवहणं नौविशेषः कर्णीरथश्च । तेन जलस्थलयात्राक्रीडोद्यानभोजनादिकं गोष्ठीकौतुकं लक्ष्यते । तदर्थमित्यर्थः । आवाहयेत् आनीय मेलयेत् । तेनोद्वेगेन तन्निमित्तेन उद्वेगेन अक्षमया तान् अमात्यान् अवरुन्ध्यात् अर्थमानापहारादिनाऽपकुर्यात् । कापटिक इति । पूर्वावरुद्धः राज्ञा पूर्वमपकृतः छात्रः कापटिकः अध्यापकाध्येतृवृत्तिः कापटिकाख्यः गूढपुरुषविशेषः तेषां अमात्यानां मध्ये अर्थमानावक्षिप्तं अर्थमानाभ्यां हापितं एकैकममात्यं उपजपेत् राजसकाशात् भेदयेत् । उपजापप्रकारकथनम्– असत्प्रवृत्त इत्यादिना । असत्प्रवृत्तः अशोभनकर्मप्रवृत्तः । इयमुपधा भीरुविषया । श्रीमूला.

**तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत् । अर्थोपधाशुद्धान् समाहर्तृसंनिधातृनिचयकर्मसु । कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु । भयोपधाशुद्धानासन्नकार्येषु राज्ञः । सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् । सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत् ॥**

उपधाशुद्धानां यथायथं विनियोगस्थानान्याह– तत्रेत्यादि । तत्र उपधाचतुष्टयशोधितेषु मध्ये । धर्मस्थीयकण्टकशोधनेषु धर्मस्थानुबन्धिषु कर्मसु कण्टकशोधनेषु च वक्ष्यमाणेषु । स्थापयेत् नियुञ्जीत । समाहर्तृसंनिधातृनिचयकर्मसु समाहर्तृकर्मसु धनोत्थापनादिलक्षणेषु संनिधातृनिचयकर्मसु च धनरक्षणलक्षणेषु । बाह्याभ्यन्तरविहाररक्षासु बाह्याभ्यन्तरा ये विहाराः कामक्रीडाः अर्थात् विहारसाधनभूता नृपस्त्रियः तद्रक्षणकर्मसु । तत्र बाह्या भोगिन्यः आभ्यन्तर्यस्तु देव्य इति ज्ञेयम् । आसन्नकार्येषु शरीररक्षणादिकर्मसु । सर्वेति । सर्वोपधाशुद्धान् चतसृष्वप्युपधासु दृष्टशौचान् । सर्वत्रेति सर्वासु उपधासु अशुचीन् । खनिद्रव्यहस्तिवनकर्मान्तेषु । खनिः सुवर्णरजताद्युत्पत्तिस्थानम्, द्रव्यवनं दारुयोग्यवृक्षप्रायं वनम्, हस्तिवनं गजोत्पत्तिवनम्, एतत्संबन्धिषु कर्मान्तेषु व्यापारस्थानेषु उपयोजयेत् अर्थात् कायायासकर्मणि । श्रीमूला.

**त्रिवर्गभयसंशुद्धानमात्यान् स्वेषु कर्मसु ।**
**अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः ॥**

तदिदमाचार्याणां मतमित्यर्थकं श्लोकमाह– त्रिवर्गेत्यादि । त्रिवर्गभयसंशुद्धान् त्रिवर्गभयैः धर्मार्थकामभयोपधाभिः दृष्टशौचान् अधिकुर्यात् नियोजयेत् यथाशौचं तत्तच्छुद्ध्यानुगुण्येन । श्रीमूला.

**न त्वेव कुर्यादात्मानं देवीं वा लक्ष्यमीश्वरः ।**
**शौचहेतोरमात्यानामेतत्कौटल्यदर्शनम् ॥**

उक्तमाचार्यमतम् । स्वमतं तु नैवम्, किंतु अमात्यशुद्धिपरीक्षार्थे स्वात्मानं देवीं च विषयं नैव राजा कुर्यादित्येवंरूपमित्याह– न त्वेवेत्यादि । श्रीमूला.

**न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत् ।**
**कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥**

कुत आत्मानं देवीं च न लक्षं कुर्यादित्यत्राऽऽह– न दूषणमिति । अदुष्टस्य स्वभावात् दोषशून्यस्य अमात्यादेः प्रतीकारसमर्थस्यापि दूषणं उपधया वञ्चनं अम्भसः विषेण दूषणमिव अम्भसः स्वभावतो जीवनहेतोर्जलस्य एकान्तमरणहेतुना विषेण दूषणमिव न चरेत् न कुर्यात् ।

सति प्रतीकारसामर्थ्ये दूषणेन को दोष इत्यत्राऽऽह– कदाचिदित्यादि । अयमर्थः– अदुष्टोऽपि यद्युपधावशात् कदाचित् प्रकर्षेण दुष्टान्तःकरणो भवेत् तदानीं अशक्यप्रतीकारस्तत्सकाशादनर्थं आपतेदिति । श्रीमूला.

कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा ।
नागत्वाऽन्तं निवर्तेत स्थिता सत्त्ववतां धृतौ ॥

उपधादूषिता च धीराणां बुद्धिर्यतमाना स्वाध्यवसितार्थसिद्धिमप्राप्य नैव विरमतीत्याह– कृता चेत्यादि । श्रीमूला.

तस्माद्बाह्यमधिष्ठानं कृत्वा चार्ये चतुर्विधे ।
शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ॥

कथं तर्ह्यमात्याः शोधनीया इत्याकाङ्क्षायामाह– तस्मादिति । तस्मात् राजा चतुर्विधे चार्ये उपधाप्रयोगे बाह्यं बहिरङ्गं दूष्यं अधिष्ठानं लक्ष्यं कृत्वा अमात्यानां शौचाशौचं सत्रिभिः सत्रिद्वारेण मार्गेत परीक्षेत । श्रीमूला.

## नारदः

अमात्यगुणाः अमात्यकर्तव्यानि च

*[1]कोऽत्रेत्यहमिति ब्रूयाः सम्यगादेशयेति च ।
आज्ञां न वितथां कुर्याद्यथाशक्ति महीपतेः ॥
अल्पेच्छो धृतिमान् प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेयः स राजवसतिं वसेत् ॥
दूरादेवेक्षणे हासः संप्रश्नेष्वादरो भृशम् ।
परोक्षेऽपि गुणः श्लाघ्यः स्मरणं प्रियवस्तुषु ॥
अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥
नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि प्रियम् ।
कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥
स चामात्यः सदा श्रेयान् काकिनीमपि वर्धयेत् ।
कोषं प्राहुर्यतः प्राणान् ततः प्राणाः स भूपतेः ॥

* 'कोऽत्रेत्यहमिति' इत्यादेः श्लोकषट्कस्य व्याख्यानं अस्मिन्नेव प्रकरणे हारीतवचनेषु द्रष्टव्यम् ।

(१) रार. १२ षट् श्लोकाः.

## मत्स्यपुराणम्

शौर्यधर्मास्तिक्यादिगुणवदमात्यवरणं राजकर्तव्यं यथायोग्यकर्मसु अमात्यनियोजनं च

मनुरुवाच–

[1]राज्ञोऽभिषिक्तमात्रस्य किं नु कृत्यतमं भवेत् ।
एतन्मे सर्वमाचक्ष्व सम्यग्वेत्ति यतो भवान् ॥

मत्स्य उवाच–

[2]अभिषेकार्द्रशिरसा राज्ञा राज्यावलोकिना ।
सहायवरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥

अभिषेकानन्तरं राज्ञा किं कर्तव्यमित्यपेक्षायामाह– राज्ञ इति । पृ. १७४

अत्र मात्रपदेन तमपा च अभिषेकानन्तरमेव प्रजापालनं तदङ्गसंपत्तिश्च संपादनीयेति गम्यते । तदुक्तं तत्रैव– अभिषेकेति । सहायाः अमात्यादयः । राप्र. १३–१४

[3]यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं महोदयम् ॥
[4]तस्मात्सहायान्वरयेत्कुलीनान्नृपतिः स्वयम् ।
शूरान्कुलीनजातीयान्बलयुक्तान् श्रियाऽन्वितान् ॥

(१) मत्स्य. २१५।१; विध. २।२४।१ सम्यग् (सर्वं); राप्र. १३, १७४.

(२) मत्स्य. २१५।२; विध. २।२४।२ राज्यावलोकिना (राजीवलोचन); राप्र. १३–१४ : १७४ विधवत्.

(३) मत्स्य. २१५।३; विध. २।२४।३ प्येकेन (थैकेन) किमु (किं नु) महोदयम् (महत्पदम्); राप्र. १७४.

(४) मत्स्य. २१५।४; विध. २।२४।४ न्कुलीन (नुत्तम) श्रियाऽ(श्रुता); राक. २३; राप्र. १७४–१७५.

[1]रूपसत्त्वगुणोपेतान्सज्जनान्क्षमयाऽन्वितान् ।
क्लेशक्षमान्महोत्साहान्धर्मज्ञांश्च प्रियंवदान् ॥
[2]हितोपदेशकालज्ञान् स्वामिभक्तान् यशोर्थिनः ।
एवंविधान् सहायांश्च शुभकर्मसु योजयेत् ॥
[3]गुणहीनानपि तथा विज्ञाय नृपतिः स्वयम् ।
कर्मस्वेव नियुञ्जीत यथायोग्येषु भागशः ॥

अत्रायं वाक्यार्थः— यदि मौलाः कुलीना अपि तथा पितृपैतामहपदयोग्यगुणहीनाः तांस्तथाविधगुणहीनानपि विज्ञाय यथायोग्येष्वेव कर्मसु स्वयं भागशः कर्मविभागेन नियुञ्जीत, न तु तत्तत्पितृपैतामहपदेषु, तत्र तत्र तेषामयोग्यत्वात् । यथायोग्येषु कर्मसु नियुञ्जीतैवेति वा वाक्यार्थः । तेषामवश्यभरणीयानामभरणे तेषां च राजान्तराश्रयणे महादोषः स्यात् । भृत्यानामवश्यं परीक्षा कार्येत्युक्तं गरुडपुराणेऽपि– 'यथा चतुर्भिः कनकं परीक्ष्यते तुलाकषच्छेदनतापनेन । तथा चतुर्भिर्भृतकः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥' (१।११२।३) इत्यादिवचनैः । परीक्षितास्तत्तत्कर्मसु नियोज्याः । एत एव च सहाया इति व्यपदिश्यन्ते । ते च द्विविधाः— राज्याङ्गोपकारकाः राजाङ्गोपकारकाश्च । ते च प्रत्येकं द्विविधाः— दृष्टार्थाः अदृष्टार्थाश्च । दृष्टद्वारकोपकारकारित्वेन दृष्टार्थत्वम्, अदृष्टद्वारकोप(कार)कारित्वेन चादृष्टार्थत्वं द्रष्टव्यम् । यद्यप्युभयाङ्गोपकारित्वेन चोभयत्रापि त्रैविध्यं वक्तुमुचितं तथापि 'भूयस्त्वात्तद्व्यपदेशः' इति न्यायेन द्वैविध्यमेव न्याय्यम् । अन्यथा वक्ष्यमाणानाममात्यादीनां राजाङ्गोपकारित्वेन द्वैविध्यमपि न स्यात् । न चेष्टापत्तिः, उपधेयसंकरेऽप्युपाधेरसंकरात् । तत्र राज्याङ्गोपकारका दृष्टार्था अमात्यसेनापतिप्रभृतयः, अदृष्टार्थाश्च वक्ष्यमाणब्राह्मणामात्यप्रभृतयः । राजाङ्गोपकारकाश्च दृष्टार्थाः प्रतीहारसूदप्रभृतयः, अदृष्टार्थाश्च पुरोहितप्रभृतयः । एते च यथायथं स्वस्वबुद्ध्या परिच्छिद्य पृथक्पृथक् निरूपणीयाः ।

राप्र १७६–१७७

(१) मत्स्य. २१५।५ ; विध. २।२४।५ पूर्वार्धे ( रूपसत्त्वगुणौदार्यसंयुक्तान् क्षमया युतान् । ); राक. २३ ; राप्र. १७५ सज्जनान् ( संयतान् ).

(२) मत्स्य. २१५।६ ; विध. २।२४।६ देशकालज्ञान् ( देशिकान् प्राज्ञान् ) श्च शुभकर्मसु ( स्तु शुभकर्मणि); राक. २३ देशकालज्ञान् ( देशकान् राज्ञः ) यशोर्थिनः ( सुवत्सलान् ) यांश्च ( यांस्तु ) ; राप्र. १७५ यशोर्थिनः ( श्रियाऽन्वितान् ) शेषं राकवत्.

(३) मत्स्य. २१५।७ ; विध. २।२४।७ भागशः ( भार्गव ) ; राप्र. १७६.



## विष्णुधर्मोत्तरपुराणम्

आस्तिकामात्यवरणमेव राज्ञः श्रेयस्करम्

पुष्कर उवाच–

[1]दुर्गमायुधसंघातं कुञ्जरांस्तुरगास्तथा ।
पुरुषैश्च विना राम सर्वमेतदपार्थकम् ॥
तस्मात्प्रयत्नं कुर्वीत पुरुषाणां समर्जने ।
तेषां चैवाऽऽन्तरज्ञाने मूलमेतद्यतः श्रियः ॥
सुसहायार्थसंपन्नं बलं यस्य महीपतेः ।
सङ्ग्रामे तुमुले राम नूनं तस्य जयो भवेत् ॥
सक्ष्द्येन कृतं पापं तस्य राजा न विश्वसेत् ।
पापं तु सुकरं तस्य सुकृतं चास्य दुष्करम् ॥
यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
तथा चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥
राजा न वेशयेत्कार्ये जनो यो नास्तिको भवेत् ।
आस्तिका अपि तत्सङ्गात्प्राप्नुयुः संशयं द्विज ॥
अनाहार्यप्रभस्यापि त्रैलोक्योद्भासितात्मनः ।
कृष्णता राहुसंसर्गात्किं न सूर्यस्य वा भवेत् ॥
अकार्यमित्यकार्याणि कुर्यात्कार्यवशेन यः ।
विचिकित्सुर्ध्रुवं राम पश्चादपि निवर्तते ॥
कार्यं बुद्ध्वा त्वकार्याणि यः करोति नराधमः ।
अकार्यकरणे श्रद्धा तस्य भूयोऽभिवर्धते ॥
लोकः सर्वो महाभाग परलोकनिबन्धनः ।
निरपेक्षस्य तत्रान्या का गतिः स्यान्निबन्धने ॥

(१) विध. २।५११।१–१५.

महापातकिनो येऽपि तेभ्योऽपि च महत्तरः ।
पापकृन्नास्तिको लोकस्तस्मात्तं परिवर्जयेत् ॥
आस्तिकानां च साधूनां संग्रहः शस्यते सदा ।
ते सहाया नरेन्द्राणां तथा ये राम पण्डिताः ॥
न पण्डितो मतो राम बहुपुस्तकधारणात् ।
परलोकभयं यस्य तमाहुः पण्डितं बुधाः ॥
अग्निहोत्रफला वेदाः दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥
शीलोपपन्नो नृपतिः सहायैः
शूरैस्तथाऽल्पैरपि संप्रयुक्तः ।
प्रभूतनागाश्वबलोत्कटानां
करोत्यरीणां कदनं रणेषु ॥

## अग्निपुराणम्

अमात्यगुणाः

पुष्कर उवाच—
[1]सोऽभिषिक्तः सहामात्यो जयेच्छत्रून्नृपोत्तमः ॥
[2]प्रख्यातवंशमक्रूरं लोकसंग्राहिणं शुचिम् ।
कुर्वीताऽऽत्महिताकाङ्क्षी परिचारं महीपतिः ॥

## कालिकापुराणम्

अमात्या भार्यापुत्रादयश्च उपधाशुद्धाः कर्तव्याः,
मुमुक्षुः अमात्यो वर्ज्यः

[3]अमात्यानुपधाशुद्धान् भार्याः पुत्रांस्तथैव च ॥
प्रकुर्यात्सततं भूपः संप्रसादं समाचरन् ।
धर्मार्थकाममोक्षैश्च प्रत्येकं परिशोधनैः ॥
उपेत्य धीयते यस्मादुपधा सा प्रकीर्तिता ।
अर्थकामोपधाभ्यां तु भार्यापुत्रांश्च शोधयेत् ॥
धर्मोपधाभिर्विप्रांस्तु सर्वाभिः सचिवान् पुनः ।
एभिर्यज्ञैस्तथा दानैरिहैव नृपतिर्भवेत् ॥
तस्माद्भवांस्तु राज्यार्थी धर्ममेवं समाचरेत् ।
अनेनैवाभिचारेण यज्ञैर्वा पार्थिवो ह्ययम् ॥
प्राणांस्त्यजति राजा त्वं भविष्यसि न संशयः ।
इति धर्मो नृपस्यैव अश्वमेधादिकश्च यः ॥
स्वयं न कुरुते भूपस्तस्मात्त्वं कुरुसत्तम ।
एवं मन्त्रैर्मन्त्रयित्वा नृपः कार्यान्तिकाद्द्विजात् ॥
तैरज्ञातान् स्वयं ज्ञात्वा गृह्णीयात्तस्य तैर्मनः ।
यदि राज्याभिलाषेण सचिवो धर्ममाचरेत् ॥
नृपतौ वाऽधिकं कुर्याद्धर्मं तं हीनतां नयेत् ।
आभिचारिकमत्यर्थं कुर्वाणं तु विघातयेत् ॥
प्रवासयेद्ब्राह्मणं तु पार्थिवश्चाभिचारिकम् ।
एषा धर्मोपधा ज्ञेया तैरमात्यान् स ताञ्जयेत् ॥
एतादृशीं तथैवान्यामुपधां धर्मतश्चरेत् ।
कोषाध्यक्षान्समामन्त्र्य राजाऽमात्यान्प्रतारयेत् ॥
पुत्रानन्यान्प्रति तथा मन्त्रसंवरणाक्षमान् ।
अयं हि प्रचुरः कोषो मदायत्तो नरोत्तम ॥
आनये तव संमत्या तद्यदि त्वं प्रतीच्छसि ।
तवार्थलम्भादस्माकं जीवनं च भविष्यति ॥
त्वं चापि प्रचुरैः कोषैः किं किं वा न करिष्यसि ।
एवमन्यैः कोषगतैरुपायैर्नृपसत्तमः ॥
पुत्रामात्यादिकान् सर्वान् सततं परिशोधयेत् ।
कोषदोषकरान् हन्यात्कर्तुमिच्छून्विवासयेत् ॥
द्वैधचित्तान् विमन्येत कुर्याद्वै कोषरक्षणम् ।
दासीश्च शिल्पिनीर्वृद्धा मेधाधृतिमतीः स्त्रियः ॥
अन्तर्बहिश्च या यान्ति विदिताः सचिवादिभिः ।
ता राजा रहसि स्थित्वा भार्यादिभिरलक्षितः ॥
अभिमन्त्र्याथ संमन्त्र्य प्रेषयेत्सचिवान् प्रति ।
ता गत्वा हृदयं बुद्ध्वा स्त्रियो विज्ञानतत्पराः ॥
महिषीप्रमुखा राज्ञस्त्वां वै कामयते शुभाः ।
तत्राहं योजयिष्यामि यदि ते विद्यते स्पृहा ॥
सचिवस्त्वां कामयते त्वद्योग्यो वरवर्णिनि ।
तं संगमयितुं शक्ता यदि श्रद्धा तवास्त्यहम् ॥
इत्यनेन प्रकारेण नानोपायैस्तथोत्तरैः ।
भार्याः पुत्रदुहित्रीश्च स्नुषाश्च प्रस्नुषास्तथा ॥

(१) अग्नि. २२०।१.
(२) अग्नि. २३९।५-६.
(३) कालिका. ८७।७५-९९.

शोधयेत्सचिवान्पुत्रान्पौत्रादीन्सेवकांस्तथा ।
कामोपधाऽविशुद्धांस्तु घातयेदविचारयन् ।
स्त्रियस्तु योज्या दण्डेन ब्राह्मणांस्तु प्रवासयेत् ॥
मोक्षमार्गावसक्तं तु हिंसापैशुन्यवर्जितम् ।
क्षमैकसारं नृपतिः सचिवं परिवर्जयेत् ॥
मोक्षमार्गविषक्तांस्तु दण्ड्यानपि न दण्डयेत् ।
समबुद्धिस्तु सर्वत्र तस्मात्तं परिवर्जयेत् ॥
इति सूत्रं चोपधानामुपधा बहुधा पुनः ।
विवेचिता चोशनसा तच्छास्त्रे तत्र बोधयेत् ॥

## कामन्दकीयनीतिसारः

अदुष्टगुणिसचिववरणं राजकर्तव्यम्

*[1]प्रख्यातवंशमक्रूरं लोकसंग्राहिणं शुचिम् ।
कुर्वीताऽऽत्महिताकाङ्क्षी परिवारं महीपतिः ॥
दुष्टोऽपि भोग्यतामेति परिवारगुणैर्नृपः ।
न दुष्टपरिवारस्तु व्यालाक्रान्त इव द्रुमः ॥
निरुन्धानाः सतां मार्गं भक्षयन्ति महीपतिम् ।
दुष्टात्मानस्तु सचिवास्तस्मात्सुसचिवो भवेत् ॥

## नीतिवाक्यामृतम्

अमात्यवरणं राजकर्तव्यम्, अमात्यलक्षणानि, अमात्यकर्तव्यानि, अमात्यपरीक्षा, वर्ज्या अमात्याः

[2]चतुरङ्गेऽस्ति द्यूते नानमात्योऽपि राजा किं पुनरन्यः ॥

अथामात्यसमुद्देशो व्याख्यायते । तत्रादावेवामात्यमाहात्म्यमाह— चतुरङ्गेऽस्तीति । नास्ति न विद्यते । कोऽसौ ? राजा । किंविशिष्टः ? अनमात्यः अमात्यवर्जितः । क्व ? चतुरङ्गे द्यूतेऽपि । किं पुनरन्यः पृथिवीपतिः ? तथा च गुरुः— 'चतुरङ्गेऽपि नो द्यूते मन्त्रिणा परिवर्जितः । स्वराज्यं कर्तुमीशः स्यात्किं पुनः पृथिवीपतिः ॥' । नीवाटी.

नैकस्य कार्यसिद्धिरस्ति ॥

न ह्येकं चक्रं परिभ्रमति ॥

अथ मन्त्रिरहितस्य राज्ञो यद्भवति तदाह— नैकस्येति । नीवाटी.

किमवातः सेन्धनोऽपि वह्निर्ज्वलति ॥

वह्निः वैश्वानरः किं ज्वलति ? अपि तु न ज्वलति । किंविशिष्टः ? सेन्धनोऽपि । पुनरपि कथंभूतः ? अवातः वातरहितः । एवं राजाऽपि मन्त्रिरहितो राज्यं कर्तुं न शक्नोति । तथा च वल्लभदेवः— 'किं करोति समर्थोऽपि राजा मन्त्रिविवर्जितः । प्रदीप्तोऽपि यथा वह्निः समीरणविनाकृतः ॥' । नीवाटी.

स्वकर्मोत्कर्षापकर्षयोर्दानमानाभ्यां सहोत्पत्तिविपत्ती येषां तेऽमात्याः ॥

अथामात्यानां लक्षणमाह—स्वकर्मेति । दानमानाभ्याम् । कयोः ? स्वकर्मोत्कर्षापकर्षयोः स्वकर्मणि योऽसौ उत्कर्षः उत्साहः तथा यः अपकर्षः विरागता तयोर्विषये सह दानमानाभ्यां लाभालाभौ भवतः । तथा च शुक्रः— 'अप्रसादे प्रसादे च येषां च समता स्थितिः । अमात्यास्ते हि विज्ञेया भूमिपालस्य संमताः ॥' । नीवाटी.

आयो व्ययः स्वामिरक्षा तन्त्रपोषणं चामात्यानामधिकारः ॥

अमात्यानां येऽधिकारा भवन्ति तदाह— आयो व्यय इति । अमात्यानां मन्त्रिणां एते चत्वारोऽधिकाराः भवन्ति । आयः स्वागतिरर्थस्य, तथा व्ययः यत्किंचित्कस्यचिद्दीयते, तथा स्वामिरक्षा राजपरिपालनम्, तथा तन्त्रपोषणम् । तन्त्रशब्देन हस्त्यश्वप्रभृत्यादि, तस्य पोषणं पुष्टिकरणम् । तथा च शुक्रः— 'आगतिर्व्ययसंयुक्ता तथा स्वामिप्ररक्षणम् । तन्त्रस्य पोषणं कार्यं मन्त्रिभिः सर्वदैव हि ॥' । नीवाटी.

आयव्ययमुखयोर्मुनिकमण्डलुर्निदर्शनम् ॥

अथाऽऽयव्ययमुखयोर्निदर्शनमाह— आयव्ययेति । निदर्शनं दृष्टान्तः । कयोः ? आयव्ययमुखयोः । आगतेर्विना (?) आगमो मुखम्, व्ययस्य त्यागादिकं मुखम् ।

---

* व्याख्याने 'प्रकृतयः— स्वामी' इत्यस्मिन् प्रकरणे (पृ. ११८५) द्रष्टव्यम् ।

(१) कानी. ४।१०–१२.

(२) नीवा. १८।१–६२.

तयोर्निदर्शनं मुनिकमण्डलुः । क्षरणकोदकपात्रं यथा हेलया पूर्यते शनैर्व्ययेत् । तथा च गुरुः– ' आयोऽनल्पतरः कार्यो व्ययान्नित्यं च मन्त्रिभिः । विपरीतो व्ययो यस्य स राज्यस्य विनाशकः ॥ ' । नीवाटी.

**आयो द्रव्यस्योत्पत्तिर्मुखम् ॥**

अथाऽऽय( व्यय ? )स्य मुखम्– आय इति । आयः आगतिः । स किंविशिष्टः ? द्रव्योत्पत्तिर्मुखम् । नीवाटी.

**यथास्वामिशासनमर्थस्य विनियोगो व्ययः ॥**

अथ व्ययस्य मुखमाह– यथेति । गतार्थमेतत् । नीवाटी.

**आयमनालोच्य व्ययमानो वैश्रवणोऽप्यवश्यं श्रमणायते ॥**

अथानालोक्याऽऽगतिं यो व्ययं करोति तस्य यद्भवति तदाह– आयमनालोच्येति । श्रमणायते निर्ग्रन्थो भवति । कोऽसौ ? वैश्रवणोऽपि धनदोऽपि । श्रमण इवाऽऽचरति क्षपणकसदृशो भवति । किं कुर्वाणः ? व्ययमानः व्ययं कुर्वन् । किं कृत्वा ? आयं द्रव्योत्पत्तिमुखं अनालोच्य अविचार्य । असंख्यधनो धनदोऽपि भिक्षुको भवति, किं पुनः ससंख्यधनं पार्थिवमात्रम् ? तथा च शुक्रः– ' आगमे यस्य चत्वारि व्यये चैवोर्ध्वपञ्च च । कुबेरोऽपि भवेन्नूनं निर्धनः किमु भूपतिः ॥ ' । नीवाटी.

**राज्ञः शरीरं धर्मः कलत्रमपत्यानि च स्वामिशब्दार्थः ॥**

अथ स्वामिशब्दस्य लक्षणमाह– राज्ञ इति । एते चत्वारः पदार्थाः स्वामिशब्दं लभन्ते । एकं तावत् राज्ञः शरीरम्, तथा धर्मः, तथा कलत्रम्, तथा अपत्यानि । गतार्थमेतत् । नीवाटी.

**तन्त्रं चतुरङ्गबलम् ॥**

अथ तन्त्रस्य स्वरूपमाह– तन्त्रमिति । गतार्थमेतत् । नीवाटी.

**तीक्ष्णं बलवत्पक्षमशुचिं व्यसनिनमशुद्धाभिजनं शक्यप्रत्यावर्तनमतिव्ययशीलमन्यदेशायातमतिचिक्कणं चामात्यं न कुर्वीत ॥**

अथामात्यनिषेधमाह– तीक्ष्णमिति । तीक्ष्णं अतिकोपनम्, तथा अशुचिं अपवित्रम्, व्यसनिनं व्यसनाभिभूतम्, अशुद्धाभिजनं अकुलीनम्, तथा शक्यप्रत्यावर्तनं एकग्राहिकम्, तथा अतिव्ययशीलं व्ययाधिकम्, तथा अन्यदेशायातं परदेशागतम्, तथा चिक्कणं कृपणम्, ईदृशममात्यं भूपतिर्न कुर्यात्, एतेषामष्टदोषाणामेकेनापि यो युक्तः । तथा च शुक्रः– ' तीव्रं क्षुद्रं दुराचारमकुलीनं विदेशजम् । एकग्राहं व्ययप्रायं कृपणं मन्त्रिणं त्यजेत् ॥ ' । नीवाटी.

**तीक्ष्णोऽभियुक्तो म्रियते मारयति वा स्वामिनम् ॥**

अतितीक्ष्णप्रभृतयो मन्त्रिणो यादृशा भवन्ति तदाह– तीक्ष्ण इति । तीक्ष्णो मन्त्री अपराधे कृते अभियुक्तः विग्रहितः म्रियते स्वयम्, वा अथवा मारयति स्वामिनम् । अशुचिः स्पर्शेन दूषयति । व्यसनी कार्याकार्यं न विन्दति । अकुलीनो विक्रियां गच्छति । अशक्यप्रत्यावर्तनो न कथंचित् बुध्यते । अतिव्ययशीलः स्वार्थत्रुटौ राजवित्तं भक्षयति । अन्यदेशायातः स्थैर्यं न बध्नाति । चिक्कणः कंचिदपि प्रत्युपकारं न करोति । नीवाटी.

**बलवत्पक्षो नियोगाभियुक्तः कल्लोल इव समूलं नृपाङ्घ्रिपमुन्मूलयति ॥**

अथ बलवत्पक्षमन्त्रिणा कृतेन यद्भवति तदाह– बलवत्पक्ष इति । उन्मूलयति विनाशं नयति । कोऽसौ ? मन्त्री । किंविशिष्टः ? नियोगाभियुक्तः मन्त्रिपदे स्थापितः । पुनरपि कथंभूतः ? बलवत्पक्षः बलवान् पक्षो मातृकः पैतृकश्च यस्य सः, प्रभूतपुरुष इत्यर्थः । स मन्त्री इत्थंभूतः उन्मूलयति । कम् ? नृपाङ्घ्रिपं पार्थिववृक्षम् । अङ्घ्रिशब्देन वृक्षस्य जटाः कडाः कथ्यन्ते, ताः परिपालयति यस्तस्मादङ्घ्रिपो वृक्षः कथ्यते । क इव ? बलवान् कल्लोल इव । यथा कल्लोलः तरङ्गः नदीतटस्थं वृक्षं समूलमुत्पाटयति तथा सचिवोऽपि बलवत्पक्षः पार्थिवमुन्मूलयति । तथा च शुक्रः– ' बलवत्पक्षभाग्मन्त्री उन्मूलयति पार्थिवम् । कल्लोलो बलवान् यद्वत्तटस्थं च महीरुहम् ॥ ' । नीवाटी.

**अल्पायतिर्महाव्ययो भक्षयति राजार्थम् ॥**

अथाल्पायेन महाव्ययेन मन्त्रिणा कृतेन यद्भवति तदाह– अल्पेति। यो मन्त्री अल्पायतिः अल्पलाभः भवति महाव्ययं करोति स भक्षयति। कम्? राजार्थम्। तस्माद्भूभुजा अल्पायतिर्महाव्ययो मन्त्री न कर्तव्यः। तथा च गुरुः– 'मन्त्रिणं कुरुते यस्तु स्वल्पलाभं महाव्ययम्। आत्मवित्तस्य भक्षार्थे स करोति न संशयः॥'। नीवाटी.

**अल्पायमुखो जनपदपरिग्रहौ पीडयति ॥**

अल्पायमुखेन मन्त्रिणा कृतेन यद्भवति तदाह– अल्पायमुख इति। यो मन्त्री अल्पायमुखः स्वल्पागमः स पीडयति। कौ? जनपदपरिग्रहौ। तस्मादल्पायमुखो मन्त्री न कर्तव्यः। तथा च गर्गः– 'अल्पायमुखमेवात्र मन्त्रिणं प्रकरोति यः। तस्य राष्ट्रं क्षयं याति तथा चैव परिग्रहः॥'। नीवाटी.

**नाऽऽगन्तुकेष्वर्थाधिकारः प्राणाधिकारो वा देयः (यतस्ते स्थित्वाऽपि गन्तारोऽपकर्तारो वा)॥**

अथाऽऽगन्तुकानां सेवकानां भूभुजा यत्कर्तव्यं तदाह –नेति। न देयः न दातव्यः। कोऽसौ? अर्थाधिकारः अर्थोत्पत्तिस्थानम्, तथा प्राणाधिकारः अङ्गरक्षणं अन्यदेशागतेषु न देयम्। तथा च शुक्रः– 'अन्यदेशागतानां च योऽधिकारं धनोद्भवम्। ददाति गात्ररक्षां वा सोऽर्थप्राणैर्वियुज्यते॥'। नीवाटी.

**स्वदेशजेष्वर्थः कूपपतित इव कालान्तरादपि लब्धुं शक्यते ॥**

अथ स्वदेशजानामर्थाधिकारे प्रदत्ते यद्भवति तदाह– स्वदेशजेष्विति। स्वदेशजः पुरुषोऽर्थाधिकारी, तेन योऽर्थो गृहीतः स लब्धुं शक्यः। कस्मात्? कालान्तरादपि। कथंभूत इव? पतित इव। कस्मिन्? कूपे। यथा कूपे पतितोऽर्थः कालान्तरेण लभ्यते तथा स्वदेशजाधिकारिणा गृहीतोऽर्थो नाशं न याति। तस्मात्स्वदेशजोऽधिकारी कार्यः। तथा च नारदः– 'अर्थाधिकारिणं राजा यः करोति स्वदेशजम्। तेन द्रव्यं गृहीतं यदनष्टं कूपवद्गतम्॥'। नीवाटी.

**चिक्कणादर्थलाभः पाषाणाद्वल्कलोत्पाटनमिव ॥**

अथ चिक्कणेनार्थाधिकारिणा कृतेन यद्भवति तदाह —चिक्कणेति। चिक्कणः कृपणः, तेन योऽर्थो गृहीतस्तस्य लाभः किंविशिष्ट इव? पाषाणाद्वल्कलोत्पाटनमिव। यथा पाषाणस्य वल्कलोत्पाटनम्। यदि पाषाणस्य वल्कलोत्पाटनं भवति तत्कृपणेन गृहीतोऽर्थो लभ्यत एव। तथा चात्रिः– 'वल्कलं दृषदो यद्वत् कृपणेन हृतं धनम्। यतस्तन्न प्रलभ्येत तस्मात्तं दूरतस्त्यजेत्॥'। नीवाटी.

**सोऽधिकारी यः स्वामिना सति दोषे सुखेन निग्रहीतुं शक्यते ॥**

अथाधिकारिणः सलक्षणमाह– सोऽधिकारीति। अधिकारिणां मध्ये 'सोऽधिकारी सदा शस्यः कृत्वा दोषं महीभुजे। ददाति याचितो वित्तं साम्नायसमवल्गुना॥'। नीवाटी.

**ब्राह्मणक्षत्रियसंबन्धिनो न कुर्यादधिकारिणः ॥**

अथाधिकारिणो यान्न कुर्यात्तानाह– ब्राह्मणेति। गतार्थमेतत्। नीवाटी.

**ब्राह्मणो जातिवशात्सिद्धमप्यर्थं कृच्छ्रेण प्रयच्छति न प्रयच्छति वा ॥**

**क्षत्रियो नियुक्तो याचितः खड्गं दर्शयति ॥**

**संबन्धी ज्ञातिभावेनाऽऽक्रम्य सामवायिकान् सर्वमप्यर्थं ग्रसते ॥**

अथ तेषां त्रयाणां दोषमाह– ब्राह्मण इत्यादिना। बन्धुः प्रकृतिपुरुषान् मेलयित्वा समकर्मधर्मिणश्च सर्वमर्थं ग्रसते। नीवाटी.

**स बन्धुस्त्रिविधः श्रौतो मौखो यौनश्च ॥**

**सहदीक्षितः सहाध्यायी वा श्रौतः ॥**

**मुखेन परिज्ञातो मौखः ॥**

**योनेर्जातो यौनः ॥**

**वाचिकसंबन्धे नास्ति संबन्धान्तरानुवृत्तिः ॥**

बन्धुर्योऽसौ संबन्धी प्रोक्तस्तस्य संबन्धस्त्रिविधः– श्रौतो मौखो यौनश्च। योऽसौ श्रौतः संबन्धः स कथंभूतः? गुरुशिष्यन्यायेन यस्य पार्श्वे श्रुतं कृतं न

तमधिकारेऽर्थस्य नियोजयेत् । तेन गृहीतोऽर्थो याचितुमपि न शक्यते । मुखोद्भवो मौख्यः । प्रतिपन्नतया सैवाधिकः प्रोच्यते । तस्य यत्कृत्यं तदुच्यते– वाचिकेति । यो वाचिकसंबन्धो भवति तस्य संबन्धानुवृत्तिः अन्यथा करणं नास्ति । यतः स्ववचनस्याप्रतिष्ठा स्यात् । तथा च यौनः । योनेः सकाशादुत्पन्नो यौनः भ्रातृपितृव्यादिलक्षणः । तथापि यौनं नार्थाधिकारे नियोजयेत् । यतस्तस्य स्वरूपं पूर्वमाख्यातमेव । एवं त्रिविधः संबन्धः । नीवाटी.

**न तं कमप्यधिकुर्यात्सत्यपराधे यमुपहत्यानुशयीत ॥**

अथ यं नाधिकारिणं कुर्याद्भूयोऽपि तमाह– नेति । किं बहुना ? एतेषां त्रयाणां पूर्वोक्तानां कर्मण्येकमपि नाधिकुर्यात् नाधिकारे नियोजयेत् । यं उपहत्य हत्वा अनुशयीत च पश्चात्तापं कुर्यात् । तथा च गुरुः– 'संबन्धिनां त्रयाणां च न चैकमपि योजयेत् । अर्थाधिकारे तं चापि यं हत्वा दुःखमाप्नुयात् ॥' । नीवाटी.

**मान्योऽधिकारी राजाज्ञामवज्ञाय निरवग्रहश्चरति ॥**

अथ मान्येनाधिकारिणा कृतेन यद्भवति तदाह– मान्योऽधिकारीति । यो मान्यः पूज्यः भवति सोऽधिकारी न क्रियते । कस्मात् ? स आत्मानं नृपतेः पूज्यं मत्वा गतशङ्कः उच्छृङ्खलतया चरति पर्यटति । तथा च नारदः– 'मान्योऽधिकारी मान्योऽहमिति मत्वा न शङ्कते । भक्षयन्नृपवित्तानि तस्मात्तं परिवर्जयेत् ॥' । नीवाटी.

**चिरसेवको नियोगी नापराधेष्वाशङ्कते ॥**

अथ चिरसेवकेनाधिकृतेन यद्भवति तदाह– चिरसेवक इति । चिरसेवकः प्रभूतकालसेवकः न शङ्कते न काञ्चिच्छङ्कां करोति । कस्मिन् सति ? अपराधे कृते सति । तस्माच्चिरसेवकं नार्थाधिकारे नियोजयेत् । तथा च देवलः– 'चिरभृत्यं च यो राजा वित्तकृत्येषु योजयेत् । स वित्तं भक्षयन् शङ्कां न करोति कथंचन ॥' । नीवाटी.

**उपकर्ताऽधिकारस्थ उपकारमेव ध्वजीकृत्य सर्वमवलुम्पति ॥**

अथोपकारिणाऽर्थाधिकारिणा कृतेन यद्भवति तदाह– उपेति । यो राजा उपकारिणमर्थाधिकारे नियोजयेत् सोऽधिकारी सर्वं यत्प्राप्नोति तद्विलुम्पति भक्षयति । किं कृत्वा ? ध्वजीकृत्य प्रकटीकृत्य । कम् ? उपकारमेव पूर्वोपकारो यत्कृतः । तस्मात्पूर्वोपकारिणमर्थाधिकारे न योजयेत् । तथा च वशिष्ठः– 'पूर्वोपकारिणं भूयो नाधिकारे नियोजयेत् । स तं कीर्तयमानस्तु सर्वं वित्तं प्रभक्षयेत् ॥' । नीवाटी.

**सहपांशुक्रीडितोऽमात्योऽतिपरिचयात्स्वयमेव राजायते ॥**

अथ सहपांशुक्रीडितेनामात्येन कृतेन यद्भवति तदाह– सहेति । योऽमात्यः सहपांशुक्रीडितो भवति बाल्यात्प्रभृति सदानुगो भवति, स किं करोति ? राजायते राजेवाऽऽचरति अहं राजेति मन्यते । कस्मात् ? अतिपरिचयात् । तस्मात् सहपांशुक्रीडितममात्यं न कुर्वीत । तथा च जैमिनिः– 'बाल्यात्प्रभृति यः सार्धं क्रीडितो भूभुजा सदा । स च स्यान्मन्त्रिणः स्थाने तन्नूनं पार्थिवायते ॥' । नीवाटी.

**अन्तर्दुष्टो नियुक्तः सर्वमनर्थमुत्पादयति ॥**

अथान्तर्दुष्टेन मन्त्रिणा यद्भवति तदाह– अन्तर्दुष्ट इति । उत्पादयति जनयति । किं तत् ? अनर्थं दुःखप्रदम् । कोऽसौ ? हृदयात्क्रूरः । पुनः कथंभूतः ? नियुक्तः अमात्यस्थाने स्थापितः । तस्मादन्तर्दुष्टं नामात्यस्थाने स्थापयेत् । तथा च गर्गः– 'अन्तर्दुष्टममात्यं यः कुरुते पृथिवीपतिः । सोऽनर्थान्नित्यशः कृत्वा सर्वराज्यं विनाशयेत् ॥' । अन्तर्दुष्टस्यामात्यस्य विषये शकुनिसकटालौ निदर्शनम्, ताभ्यां यन्निदर्शनं तद्बृहत्कथायां ज्ञेयम् । नीवाटी.

**सुहृदि नियोगिन्यवश्यं भवति धनमित्रनाशः ॥**

अथ सुहृदाऽमात्येन कृतेन यद्भवति तदाह– सुहृदीति । यो राजा सुहृदं मित्रं नियोगिनं करोति । तस्य किं स्यात् ? धनमित्रनाशो भवति । यः सुहृद्भवति स

मित्रं मत्वा भूपालवित्तं भक्षयति । वित्ते भक्षिते तदर्थं तं व्यापादयति, स राजा ततो मित्रवधान्नरकं याति । तस्मान्मित्रं नियोगिनं न कारयेत् । तथा च रैभ्यः— 'नियोगे संनियुक्तस्तु सुहृद्वित्तं प्रभक्षयेत् । स्नेहाधिक्येन निःशङ्कस्ततो वधमवाप्नुयात् ॥' । नीवाटी.

**मूर्खस्य नियोगो भर्तुर्धर्मार्थयशसां संदेहो निश्चितमनर्थनरकपातौ ॥**

अथ मूर्खेण नियोगिना कृतेन यद्भवति तदाह— मूर्खस्येति । मूर्खस्य जडात्मकस्य योऽसौ नियोगाऽधिकारः स किंविशिष्टः ? संदेहः कृच्छ्रप्राप्तिः । केषाम् ? धर्मार्थयशसाम् । धर्मसंदेहः धर्मविषये निश्चयो न भवति । तथाऽर्थप्राप्तिः कृच्छ्रेण स्यात् । तथा यशः कृच्छ्रेण स्यात् । एतत्त्रयं तावत् संदिग्धम् । द्वौ पदार्थौ पुनर्निश्चयेन भवतः । अनर्थः आपत्प्राप्तिः, तत्कर्म करोति येनाऽऽपत्प्राप्नोति । तत्कर्म करोति येन स्वामिनो नरकपातो भवति । तस्मान्मूर्खं नियोगिनं न कुर्यात् । तथा च नारदः— 'मूर्खे नियोगयुक्ते तु धर्मार्थयशसां सदा । संदेहोऽत्र पुनर्नूनमनर्थो नरके गतिः ॥' । नीवाटी.

**सोऽधिकारी चिरं नन्दति स्वामिप्रसादो नोत्सेकयति ॥**

अथाधिकारिणः वृद्धिर्यथा भवति तदाह— सोऽधिकारीति । सोऽधिकारी नन्दति चिरं प्रभूतकालं अधिकारस्थो वृद्धिं याति । न कदाचिदधिकारात् भ्रश्यते । यं अधिकारिणं नोत्सेकयति न सगर्वतां याति (? नयति) । कोऽसौ ? स्वामिप्रसादः । योऽसावधिकारी स्वामिप्रसादे स्थितः न कदाचित्सगर्वत्वं वहते आत्मानं न बहु मन्यते स चिरं नन्दतीति । तथा च शुक्रः— 'स्वामिप्रसादमासाद्य न गर्वं कुरुतेऽत्र यः । स नन्दति चिरं कालं भ्रश्यते नाधिकारतः ॥' । नीवाटी.

**किं तेन परिच्छदेन यत्राऽऽत्मक्लेशेन कार्यं सुखं वा स्वामिनः ॥**

अथ परिच्छदस्य स्वरूपमाह— किमिति । किं तेन परिच्छदेन नियोगिनां परिग्रहेण ? यत्र यस्मिन् विद्यमाने स्वामी स्वयं कृत्यानि सुखं वा करोति । नियोगिनां स गुणो येन नृपकार्यं साधयित्वा दर्शयति, तथा येन स्वामिनः सुखं भवति अक्लेशेन । तथा च नारदः— 'स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः । नरेन्द्राश्च गजेन्द्राश्च प्रायः सीदन्ति केवलाः ॥' (?) । नीवाटी.

**का नाम निर्वृतिः स्वयमूढतृणभोजिनो गजस्य ॥**

अथ गजदृष्टान्तेन राज्ञः आत्मकृत्यकरणे निषेधमाह— का नामेति । गजस्य हस्तिनः नाम अहो का निर्वृतिः का योग्यता ? किंविशिष्टस्य गजस्य ? स्वयमूढतृणभोजिनः स्वयं ऊढानि आहृतानि तृणानि यानि तान्येव भुङ्क्ते । एवं राजाऽपि यः स्वयं कृत्यानि करोति तस्य को महिमा ? तस्मात् भृत्यानां सकाशात्कार्याणि कारापणीयानि । उक्तं च यतः— 'स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः । नरेन्द्राश्च गजेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥' । नीवाटी.

**अश्वसधर्माणः पुरुषाः कर्मसु नियुक्ता विकुर्वते ॥**

अथ स्वेच्छानां नियोगिनां स्वरूपमाह— अश्वेति । विकुर्वते विक्रियां कुर्वते । के ? एते पुरुषाः । किंविशिष्टाः ? नियुक्ताः अधिकारे नियोजिताः । किंविशिष्टाः पुनः ? अश्वसधर्माणः । यथा अश्वाः सैन्धवाश्वाः योग्यतां नीता दान्ता विकृतिं दर्शयन्ति तथा नियोगिनोऽपि । तथा बादरायणः— 'अश्वा यथा विकुर्वन्ति दान्ता अपि च सैन्धवाः । तथाप्यपुरुषा (?) ज्ञेया येऽधिकारे नियोजिताः ॥' । नीवाटी.

**तस्मादहन्यहनि तान्परीक्षेत ॥**

अथाधिकारिणां यत्कर्तव्यं तदाह— तस्मादिति । तस्मात् कारणात् तान् अधिकारिणः परीक्षेत परीक्षान्वितान् कुर्यात् । अहन्यहनि नित्यं नित्यमिति । तथा च भृगुः— 'परीक्षा भूभुजा कार्या नित्यमेवाधिकारिणाम् । यस्मात्ते विकृतिं यान्ति प्राप्य संपदमुत्तमाम् ॥' । नीवाटी.

**मार्जारेषु दुग्धरक्षणमिव नियोगिषु विश्वासकरणम् ॥**

अथ नियोगिनां विषये यादृक्संभावना नृपतेस्तामाह– मार्जारेष्विति । ननु कस्मात् नित्यमेव परीक्षा क्रियते ? यतस्तेषां विषये यद्विश्वासकरणं तद्विश्वासस्थानं न भवति । मार्जारेषु दुग्धरक्षणं यथा तथा नियोगिष्वपि । तथा च भारद्वाजः– 'मार्जारेष्विव विश्वासो यथा नो दुग्धरक्षणे । नियोगिनां नियोगेषु तथा कार्यो न भूभुजा ॥' । नीवाटी.

**ऋद्धिश्चित्तविकारिणी नियोगिनामिति सिद्धानामादेशः ॥**

अथ नियोगिनां ऋद्धेः स्वरूपमाह– ऋद्धीति । आदेश इति वचनम् । केषाम् ? सिद्धानां सिद्धपुरुषाणाम् । किंविशिष्टः आदेशः ? चित्तविकारिणी भवति । काऽसौ ? ऋद्धिः संपत् । केषाम् ? नियोगिनाम् । तथा च नारदः– 'तावन्न विकृतिं याति पुरुषोऽपि कुलोद्भवः । यावत्समृद्धिसंयुक्तो न भवेदत्र भूतले ॥' । नीवाटी.

**सर्वोऽप्यतिसमृद्धोऽधिकारी भवत्यायत्यामसाध्यः कृच्छ्रसाध्यः स्वामिपदाभिलाषी वा ॥**

अथ समृद्धस्याधिकारिणः स्वरूपमाह– सर्वोऽपीति । असाध्यो भवति । कोऽसौ ? अधिकारी । किंविशिष्टः ? अतिसमृद्धः लक्ष्मीवान् । कस्मिन् काले ? आयत्यां आगामिकाले । किंविशिष्टोऽधिकारी ? सर्वोऽपि । अथवा कृच्छ्रसाध्यो भवति, अथवा स्वामिपदमभिलषति । तस्मादधिकारी अतिसमृद्धो न कर्तव्यः । तथा च नारदः– 'अतिसमृद्धिसंयुक्तो नियोगी यस्य जायते । असाध्यो भूपतेः स स्यात्तस्यापि पदवाञ्छकः ॥ तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् । आत्मनोऽभ्यधिकं भृत्यं यो न हन्यात्स हन्यते ॥' । तथा च गुरुः– 'प्रेष्याः कर्मसु पटवः पूर्णा अलसा भवन्ति ये भृत्याः । तेषां जलौकसामिव पूर्णा नैवात्र ऋद्धता न्याय्या ॥' । नीवाटी.

**भक्षणमुपेक्षणं प्रज्ञाहीनत्वमुपरोधः प्राप्तार्थाप्रवेशो द्रव्यविनिमयश्चेत्यमात्यदोषाः ॥**

अथामात्यस्य दोषानाह– भक्षणमिति । एते षट् दोषा यस्यामात्यस्य भवन्ति तं सचिवं न कुर्यात् । के एते दोषाः ? भक्षणं तावत् यो राजद्रव्यं भक्षयति, तथा उपेक्षणं यो राजवित्तं विनाशयति उपेक्षते अवज्ञां करोति, प्रज्ञाहीनत्वं यस्य बुद्धेर्विनाशो भवति, तथा उपरोधो यस्य भवति, अन्येन राजद्रव्यं भक्ष्यमाणं दृष्ट्वा तस्योपरोधान्न किंचिद्भवति, तथा प्राप्तार्थाप्रवेशः समायातो योऽसौ राजार्थस्तं कोशे न क्षिपति, तथा द्रव्यविनिमयः द्रव्यस्य समायातस्य राजकीयस्य उत्तमस्य यो विनिमयं करोति, हीनं संचारयति उत्कृष्टं नाणकादिकं गृह्णाति । तथा च शुक्रः– 'योऽमात्यो राजकीयं स्वं बहुधा विप्रकारयेत् । सदैव दुष्टभावेन स त्याज्यः सचिवो नृपैः ॥' । नीवाटी.

**बहुमुख्यमनित्यं च करणं स्थापयेत् ॥**

अथ भूभुजा यादृशं करणं कार्यं तदाह– बहुमुख्यमिति । स्थापयेत् कुर्यात् । किं तत् ? करणं पञ्चकुलम् । किंविशिष्टम् ? बहुमुख्यं बहवो मुख्याः प्रधाना यत्र तद्बहुमुख्यम् । पुनरपि किंविशिष्टम् ? अनित्यं न नित्यं अशाश्वतमिति । अनित्यं अन्यपुरुषैः कार्यम् । तथा च गुरुः– 'अशाश्वतं प्रकर्तव्यं करणं क्षितिपालकैः । बहुशिष्टं च यस्मात्तदन्यथा वित्तभक्षकम् ॥' । नीवाटी.

**स्त्रीष्वर्थेषु च मनागप्यधिकारे न ज्ञातिसंबन्धः ॥ परदेशजं चापेक्ष्य नित्यश्चाधिकारः (?) ॥**

अथ नित्याधिकारस्य स्वरूपमाह– स्त्रीष्वर्थेष्विति । अनित्यः विनाशी । कोऽसौ ? अधिकारः । किंविशिष्टः ? मनागपि स्तोकोऽपि । कासु विषये ? स्त्रीषु तथाऽर्थेषु संबन्धो न कार्यः । तथा विदेशजानां विषये नित्योऽधिकारः । तथा च गुरुः– 'स्त्रीष्वर्थेषु च विज्ञेयो नित्योऽयं जातिसंभवः । बन्धस्य नाधिकारोऽत्र तथा नित्यो विदेशजे ॥' (?)। नीवाटी.

**आदायकनिबन्धकप्रतिबन्धकनीवीग्राहकराजाध्यक्षाः करणानि ॥**

अथ पञ्चकुलस्य स्वरूपमाह— आदायकेति । करणशब्देन पञ्चकुलमभिधीयते । तत्र प्रथमस्तावदादायकः यो राजद्रव्यं समायातं गृह्णाति । द्वितीयो निबन्धको यो वहिकायां लिखति । तृतीयः प्रतिबन्धको यो मुद्रां ददाति । चतुर्थो नीवीग्राहको यो भाण्डागारे क्षिपति । पञ्चमो राजाध्यक्षो यश्चतुष्टयमेतत्स्वयं दृष्टं करोति । एतैः पञ्चभिः करणमुच्यते । नीवाटी.

**आयव्ययविशुद्धं द्रव्यं नीवी ॥**

अथ नीवीलक्षणमाह— आयव्ययेति । यद्द्रव्यं आयव्ययविशुद्धं भाण्डागारे पतति सा नीवी प्रोच्यते । नीवाटी.

**नीवीनिबन्धकपुस्तकग्रहणपूर्वकमायव्ययौ विशोधयेत् ॥**

अथाऽऽयव्ययविशुद्धा नीव्यो यथा क्रियन्ते तथाऽऽह— नीवीति । विशोधयेत् विशुद्धौ कुर्यात् । कौ ? आयव्ययौ । कस्याः ? नीव्याः । नीवीनिबन्धकस्य यत्पुस्तकग्रहणं वहिकालक्षणं यदस्ति तत्सर्वम् ( ? तत्पूर्वकम् ) । तत्र प्रथमं लिखित्वा तत आयव्ययविशुद्धिः क्रियते । तथा च— 'शुद्धपुस्तकहस्ते यत्पुस्तकं समवस्थितम् । आयव्ययौ च तत्रस्थौ यौ तौ वित्तस्य शुद्धिदौ ॥ ' । नीवाटी.

**आयव्ययविप्रतिपत्तौ कुशलकरणकार्यपुरुषेभ्यस्तद्विनिश्चयः ॥**

अथाऽऽयव्ययविप्रतिपत्तौ पञ्चकुलस्य निश्चयो यथा भवति तदाह— आयेति । यदा आयव्ययविप्रतिपत्तिः पञ्चकुलस्य भवति तदा किं कार्यं भूभुजा ? तदा कुशलकरणकार्यपुरुषेभ्यस्तद्विनिश्चयः कार्यः । कुशलकरणे ये कार्यपुरुषाः प्रधानपुरुषाः । कुशलानि अलोलुपानि करणानि इन्द्रियाणि येषां ते कुशलकरणाः, विशिष्टा इत्यर्थः । तेभ्यः सकाशात् तद्विनिश्चयो विप्रतिपत्तिविषये निश्चयः कार्यः । तथा च शुक्रः— 'यदा विप्रतिपत्तिश्च करणस्य प्रजायते । प्रवेशे निश्चये वाऽपि साधुभ्यो निश्चयं क्रियात् ॥ ' । नीवाटी.

**नित्यपरीक्षणं कर्मविपर्ययः प्रतिपत्तिदानं नियोगिष्वर्थोपायाः ॥**

अथ राज्ञो नियोगिनां पार्श्वाद्यथाऽर्थागमोपाया भवन्ति तानाह— नित्यपरीक्षणमिति । नियोगिनां सकाशाद्राज्ञ एते त्रयोऽर्थोपायाः । एकं तावन्नित्यपरीक्षणं चरैः कृत्वा एतेषां छिद्रं विज्ञाय दण्डनीयाः । तथाऽन्यो द्वितीयः कर्मविपर्यासः अधिकारस्फेटनम्, ततो भयात् येन वित्तं प्रददते । तथा प्रतिपत्तिदानं तृतीयोऽर्थोपायः । नियोगिने छत्रचामराद्यं दीयते तेन सुप्रहृष्टः मनसा अर्थं ददाति । तथा च गुरुः— 'छिद्रान्वेषणतो लाभो नियोगिजनसंभवः । अधिकारविपर्यासात्प्रतिपत्तेस्तथाऽपरः ॥ ' । नीवाटी.

**नापीडिता नियोगिनो दुष्टव्रणा इवान्तःसारमुद्गिरन्ति ॥**

अथ नियोगिनो राज्ञां यथा सर्वस्वमपि यच्छन्ति तदाह— नापीडिता इति । यन्नियोगिनां पीडा न क्रियते ताडनबन्धनादिभिस्तावत्ते अन्तःसारं गृहमध्यगतं प्रधानद्रव्यं नोद्गिरन्ति न प्रयच्छन्ति । क इव ? दुष्टव्रणा इव । यथा दुष्टव्रणा अपीडिता अन्तःसारं पूतिरक्तं नोद्गिरन्ति तथा नियोगिनोऽपि । तथा च चाणक्यः— 'शान्त्याऽधिकारिणो वित्तमन्तःसारं वदन्ति नो । निपीड्यन्ते न ते यावद्गाढं दुष्टव्रणा इव ॥ ' । नीवाटी.

**पुनःपुनरभियोगे नियोगिषु महीपतीनां वसुधाराः ॥**

अथ महीपतीनां नियोगिनां सकाशाद्यथा धनलाभो भवति तथाऽऽह— पुनरिति । पुनःपुनः वारंवारं नियोगिनां योऽसावभियोगः स्फेटनं स्थापनं स किंविशिष्टः ? महीपतीनां वसुधाराः द्रव्यप्रवाहाः । नीवाटी.

**सकृन्निपीडितं हि स्नानवस्त्रं किं जहाति स्निग्धताम् ॥**

यथा स्नानवस्त्रं सकृन्निपीडितं एकवारं प्रक्षालितं स्निग्धत्वं मलं न जहाति, तथा नियोगिनोऽपि भूयोभूयस्ताडिताः दण्डिताः द्रव्यं प्रयच्छन्ति । तथा च

शुक्रः– 'यथा हि स्नानजं वस्त्रं सकृत्प्रक्षालितं न हि। निर्मलं स्यान्नियोगी च सकृद्दण्डे न शुध्यति॥'। नीवाटी.

**देशमपीडयन् बुद्धिपुरुषकाराभ्यां पूर्वनिबन्धमधिकं कुर्वन्नर्थमानौ लभते॥**

अथाधिकारी स्वामिनः सकाशाद्यथाऽर्थमानौ लभते तथाऽऽह– देशमिति। पूर्वनिबन्धं पूर्वव्यवहारं अधिकं प्रचुरं कुर्वन्। काभ्याम्? बुद्धिपौरुषाभ्याम्। पुनः किं कुर्वन्? अपीडयन् सानन्दं कुर्वन्। कम्? देशं राष्ट्रम्। योऽधिकारी देशमपीडयन् निबन्धान् सर्वव्यवहारान् वृद्धिं नयति स स्वामिनः सकाशादर्थं मानं च प्राप्नोति। तथा च गुरुः– 'यो देशं रक्षयन् यत्नात् स्वबुद्ध्या पौरुषेण च। निबन्धान् वर्धयेद्राज्ञः स वित्तं मानमाप्नुयात्॥'। नीवाटी.

**यो यत्र कर्मणि कुशलस्तं तत्र नियोजयेत्॥**

अथ भूभुजां नियोगिषु विषये यत्कृत्यं तदाह– य इति। यः अधिकारी यस्मिन् कर्मणि कुशलः प्रवीणः तत्कर्माधिकारं तस्य नियोजयेत्। अस्य सूत्रस्यार्थमागमिकसूत्रे वदिष्यन्ति। नीवाटी.

**न खलु स्वामिप्रसादः सेवकेषु कार्यसिद्धिनिबन्धनं किंतु बुद्धिपुरुषकारौ वा॥**

**शास्त्रविदप्यदृष्टकर्मा कर्मसु विषादं गच्छेत्॥**

अथाकुशलेन कर्मण्यधिकृतेन यद्भवति तदाह– शास्त्रेति। विषादं गच्छेत् मुह्यतीत्यर्थः। कोऽसौ? अदृष्टकर्मा। केषु? कर्मसु। कथंभूतः? शास्त्रविदपि। येन तत्कर्म कृतं न भवति तस्मिन् कर्मणि नियोजितो मोहं याति। तथा च भृगुः– 'येन यन्न कृतं कर्म स तस्मिन्योजितो नृपैः। नियोगी मोहमायाति यद्यपि स्याद्विचक्षणः॥'। नीवाटी.

**अनिवेद्य भर्तुर्न कंचिदारम्भं कुर्यादन्यत्राऽऽपत्प्रतीकारेभ्यः॥**

अथ नियोगिना यत्कर्तव्यं तदाह– अनिवेद्येति। नियोगी न कंचित्स्वल्पमपि आरम्भं कृत्यं कुर्यात्। किं कृत्वा? अनिवेद्य अकथयित्वा। कस्य? भर्तुः स्वामिनः। किं सर्वम्? नेत्याह– अन्यत्र मुक्त्वा। कम्? आपत्प्रतीकारम्। व्यसनमसह्यं मुक्त्वा। सङ्ग्रामादिकाले यदा कदाचिदापद्भवति तदा तस्याः प्रतीकारः नाशः यथा भवति तथा कार्यं अपृष्टेनापि। केन? नियोगिना। कदाचिदेव कोऽपि कार्यारम्भः स्वामिनमपृष्ट्वा न कर्तव्यः। सङ्ग्रामादिकाले तु न स्वामी प्रष्टव्यः। तथा च भागुरिः– 'न स्वामिवचनाद् बाह्यं कर्म कार्यं नियोगिना। अपि स्वल्पतरं यच्च मुक्त्वा शत्रुसमागमम्॥'। नीवाटी.

**[1]परस्परकलहो नियोगिषु भूभुजां निधिः॥**

अथ परस्परविवादेन नियोगिनां भूपस्य यद्भवति तदाह– परस्परकलह इति। निधिः निधानम्। कोऽसौ? परस्परकलहः अन्योन्यविवादः। केषाम्? नियोगिनां अधिकारिणाम्। केषां निधिः? महीभुजाम्। तथा च गुरुः– 'नियोगिनां मिथो वादो राज्ञां पुण्यैः प्रजायते। यतस्तेषां विवादे च लाभः स्याद्भूपतेर्बहुः॥'। नीवाटी.

**नियोगिषु लक्ष्मीः क्षितीश्वराणां द्वितीयः कोशः॥**

अथ नियोगिनि या लक्ष्मीः यथा भूम्यां (? भूभुजां) कोशो भवति तदाह– नियोगिष्विति। द्वितीयः कोशः अपरो भाण्डागारः। केषाम्? क्षितीश्वराणाम्। काऽसौ? लक्ष्मीः। केषु? नियोगिषु अधिकारिषु। नियोगिनां याऽसौ लक्ष्मीः सा नृपाणां भाण्डागारो द्वितीयः। तथा च नारदः– 'यैव भृत्यगता संपत् सैव संपन्महीपतेः। यतः कार्ये समुत्पन्ने निःशेषं तां समानयेत्॥'। नीवाटी.

**[2]जीवोत्सर्गः स्वामिपदमभिलषतामेव॥**

अथ स्वामिपदमभिलषतां भृत्यानां यद्भवति तदाह– जीवोत्सर्ग इति। स्वामिनः पदं स्वामिस्थानं अभिलषतां वाञ्छतां जीवोत्सर्ग एव विनाश एव। तस्मात्स्वामिनः पदं नाभिलषणीयम्। तथा च नारदः– 'स्वामिस्थानं च यो मूर्खो वाञ्छति स्वसमृद्धये। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥'। नीवाटी.

---

(१) नीवा. १८।६४–६५.

(२) नीवा. १०।१६१–१६३.

**बहुदोषेषु क्षणदुःखप्रदोऽपायोऽनुग्रह इव ॥**

अथ बहुदोषेषु विनाशे कृते यद्भवति तदाह— बहुदोषेष्विति । बहुदोषेषु पुरुषेषु अवध्येषु यः अपायः विनाशः । स किंविशिष्टः ? क्षणदुःखप्रदः मुहूर्तदुःखप्रदः भवति, पश्चादनुग्रह इव श्रेयसे इव स मान्यः । यतस्तेषां सकाशात् वृद्धिर्भवति । तथा च हारीतः— 'अवध्या अपि वध्यास्ते ये तु पापा निजा अपि । क्षणदुःखे च तेषां च पश्चात्तच्छ्रेयसे भवेत् ॥' । नीवाटी.

**स्वामिदोषस्वदोषाभ्यामुपहतवृत्तयः क्रुद्धभीतलुब्धमानिनः कृत्याः ॥**

अथ स्वामिदोषयुक्तानां यत्कृत्यं तदाह— स्वामिदोषेति । येऽमात्याः स्वामिदोषस्वदोषाभ्यां उपहतवृत्तयो भवन्ति स्वामिना क्रुद्धेनोपहतवृत्तयो भवन्ति, किंवा स्वदोषतो वा तैः कश्चित्स्वामिनोऽपराधः कृतो भवति, ततश्च स्फेटितवृत्तयो भवन्ति । किंविशिष्टास्ते ? कृत्याः कृत्यास्वरूपा भवन्ति । कृत्याशब्देनाऽऽथर्वणमन्त्रैर्होमे कृते यद्भूतमुत्पद्यते वैश्वानरात् सा कृत्येत्युच्यते वध्यात्मकम् । स्फेटितवृत्तयोऽमात्या अपि तादृक्स्वरूपा वध्यात्मका भवन्ति । तत्कथं ते उपचरणीयाः ? ते चतुर्विधाः— क्रुद्धलुब्धानां त्यागः, भीतानामभयप्रदानम्, मानिनां सत्कृतिः पूजेति तेषामेते वशोपायाः तस्मात्कार्या नीतिमता, नोपेक्षणीयाः । तथा च नारदः— 'नोपेक्षणीयाः सचिवाः साधिकाराः कृताश्च ये । योजनीयाः स्वकृत्ये ते न चेत्स्युर्वधकारिणः ॥' । नीवाटी.

## युक्तिकल्पतरुः

अमात्यगुणाः

[1]शान्तो विनीतः कुशलः सत्कुलीनः शुभान्वितः ।
शास्त्रार्थतत्त्वगोऽमात्यो भवेद्भूमिभुजामिह ॥

(१) युक. ३।१८.

---

### वसिष्ठः

मन्त्रिभिर्नागरैश्च सह राज्ञा कार्याणि निर्वर्तनीयानि

[1]ततोऽन्यथा राजा मन्त्रिभिः सह नागरैश्च कार्याणि कुर्यात् ॥

### महाभारतम्

शुचित्वादिगुणसंपन्ना मन्त्रिणो वरणीयाः

[2]कच्चिदात्मसमा बुद्ध्या शुचयो जीवितक्षमाः ।
कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः ॥

[3]कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
धर्मनित्यं स्थितं स्थित्यां मन्त्रिणं पूजयेन्नृपः ॥

[4]दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम् ।
शूरमक्षुद्रकर्माणं निषिद्धजनमाश्रयेत् ॥

निषिद्धजनं अहमेक एवेदं कार्यं करिष्यामि, किमितरैरिति वादिनं एकाङ्गवीरम् । नीटी.

सर्वराजकार्यसमर्थाः परीक्षितगुणा मन्त्रिणो वरणीयाः

[5]अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणान् ।
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः ॥

भूमिपः परिक्षेतेति योजना । नीटी.

[6]संबद्धाः पुरुषैराप्तैरभिजातैः स्वदेशजैः ।
अहार्यैरव्यभीचारैः सर्वतः सुपरीक्षितैः ॥

अभिजातैः कुलीनैः । अहार्यैः लञ्चादिना वशीकर्तुमशक्यैः । संबन्धिपुरुषैः येषां संबन्धोऽस्ति तादृशैः । नीटी.

[1]योधाः स्त्रौवास्तथा मौलास्तथैवान्येऽप्यवस्कृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूषता ॥

यौनाः उत्तमयोनयः । श्रौताः वेदपथगाः । मौलाः परंपरागताः । अनहंकृताः अगर्वाः । कर्तव्याः, मन्त्रिणः इति शेषः । नीटी.

[2]येषां वैनयिकी बुद्धिः प्रकृता चैव शोभना ।
तेजो धैर्यं क्षमा शौचमनुरागः स्थितिर्धृतिः ॥

प्रकृतिः पूर्वकर्मजः संस्कारः शोभना सत्यार्जवादिमती । तेजः पराभिभवसामर्थ्यम् । धैर्यं महत्यामप्यापदि चित्तस्यानवसादः । क्षमा महत्यप्यपकारे सहिष्णुत्वम् । शौचं बाह्यमान्तरं च निष्कापट्यम् । अनुरागः स्वामिनि प्रीतिः । स्थितिः अव्यभिचारिता । धृतिः धारणसामर्थ्यम् । नीटी.

[3]परीक्षितगुणान्नित्यं प्रौढभावान् धुरंधरान् ।
पञ्चोपधाव्यतीतांश्च कुर्याद्राजाऽर्थकारिणः ॥

* पञ्च मन्त्रिणः इति तृतीयेनान्वयः । उपधा छलम्, तद्व्यतीतान् । नीटी.

---

(१) वस्मृ. १६।१८.

(२) भा. २।५।१६ ; भामु. २।५।२६–२७ पूर्वार्धे (कच्चिदात्मसमा वृद्धाः शुद्धाः संबोधनक्षमाः । ).

(३) भा. १२।६८।५६ ; भामु. १२।६८।५६ स्थित्यां (नीत्यां); राप्र. १७७ भामुवत्.

(४) भा. १२।६८।५७ ; भामु.

(५) भा. १२।८४।१६ ; भामु. १२।८३।१८ गुणान् (गुणम्).

(६) भा. १२।८४।१७ ; भामु. १२।८३।१९ संबद्धाः (संबन्धि) सर्वतः (सर्वशः).

* इदं नीलकण्ठव्याख्यानं भ्रममूलकम् । उपधानामेव पञ्चत्वसंख्याऽत्र विवक्षिता, न तु मन्त्रिणाम्, ' संविनीय मदक्रोधौ ' ( भामु. १२।८३।५२ ) इत्यादिश्लोके ' पञ्चोपधातीतैः मन्त्रयेत् सह मन्त्रिभिः ' इति उपधानामेव सुस्पष्टं

(१) भा. १२।८४।१८ ; भामु. १२।८३।२० पूर्वार्धे (यौनाः श्रौतास्तथा मौलास्तथैवाप्यनहंकृताः । ).

(२) भा. १२।८४।१९ ; भामु. १२।८३।२१ प्रकृता (प्रकृतिः).

(३) भा. १२।८४।२० ; भामु. १२।८३।२२ परीक्षित (परीक्ष्य च).

[1]पर्याप्तवचनान् वीरान् प्रतिपत्तिविशारदान् ।
कुलीनान् सत्यसंपन्नानिङ्गितज्ञाननिष्ठुरान् ॥

पर्याप्तं कृत्स्नस्य विविदिसितस्यार्थस्य निर्वाहकं वचनं येषां तान् । नीटी.

[2]देशकालविधानज्ञान् भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः ॥

[3]हीनतेजा ह्यसंहृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकर्मसु संशयान् ॥

वर्ज्यानाह– हीनेत्यादिना । हीनतेजसा मित्रेण अभिसंसृष्टः संबद्धः न व्यवस्यति न कर्तव्याकर्तव्ये निश्चिनोति । नीटी.

[4]एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।
धर्मार्थकामयुक्तोऽपि नालं मन्त्रं परीक्षितुम् ॥

बहुगुणयुक्तोऽपि किंचिद्दोषयुक्तस्त्याज्य इत्याह– एवमिति । नीटी.

[1]तथैवानभिजातोऽपि काममस्तु बहुश्रुतः ।
अनायक इवाचक्षुर्मुह्यत्यणुषु कर्मसु ॥

अणुषु सूक्ष्मेषु । नीटी.

[2]यो वा ह्यस्थिरसंकल्पो बुद्धिमानागतागमः ।
उपायज्ञोऽपि नालं स कर्म यापयितुं चिरम् ॥

प्रापयितुं समापयितुम् । नीटी.

[3]केवलात्पुनराचारात्कर्मणो नोपपद्यते ।
परिमर्शो विशेषाणामश्रुतस्येह दुर्मतेः ॥

आरम्भशूरोऽपि मूर्खः कर्मणः फलविशेषान् ज्ञातुं न शक्नोतीत्यर्थः । नीटी.

[4]मन्त्रिण्यननुरक्ते तु विश्वासो न हि विद्यते ।
तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् ॥

[5]व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः ।
मारुतोपहतच्छिद्रैः प्रविश्याग्निरिव द्रुमम् ॥

[6]संक्रुध्यत्येकदा स्वामी स्थानाच्चैवापकर्षति ।
वाचा क्षिपति संरब्धस्ततः पश्चात्प्रसीदति ॥

[7]तानि तान्यनुरक्तेन शक्यान्यनुतितिक्षितुम् ।
मन्त्रिणां च भवेत्क्रोधो विस्फूर्जितमिवाशनेः ॥

---

पञ्चत्वसंख्यानिर्देशात् । 'तस्मात् सर्वैः' ( भामु. १२।८३।४७ ) इत्यादिश्लोके 'मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवराः' इति मन्त्रिणां त्र्यवरत्वसंख्यानिर्देशाच्च । तासां च पञ्चत्वमेवमूह्यम्– धर्मार्थकाममयोपधाख्याः चतस्रस्तु कौटिलीयार्थशास्त्रादौ सुप्रसिद्धा एव । कालिकापुराणे तु धर्मार्थकाममोक्षैः उपधायाः चातुर्विध्यमभिहितम् । तद्यथा– 'धर्मार्थकाममोक्षैश्च प्रत्येकं परिशोधनैः । उपेत्य धीयते यस्मादुपधा परिकीर्तिता ॥' ( कालिका. ८७।७६-७७ ) इति । एवं च एकत्रानुक्तस्य भयस्य मोक्षस्य वा अन्यत्रोक्तेः चतुर्भिः सह समुच्चये सति उपधानां पञ्चविधता सूपपादा । भामु. १२।८३।५२ इतिश्लोकव्याख्याने नीलकण्ठेनापि उपधानामेव पञ्चविधत्वमन्यथोपपादितम् ।

(१) भा. १२।८४।२१ ; भामु. १२।८३।२३ सत्य ( सत्त्व ).

(२) भा. १२।८४।२२ ; भामु. १२।८३।२४ राजा ( राजन् ).

(३) भा. १२।८४।२३ ; भामु. १२।८३।२५ तेजा ह्यसंहृष्टो ( तेजोऽभिसंसृष्टो ) संशयान् ( संशयम् ).

(४) भा. १२।८४।२४ ; भामु. १२।८३।२६ युक्तोऽपि ( संयुक्तो ).

(१) भा. १२।८४।२५ ; भामु. १२।८३।२७ स्थूलेषु ( त्वणुषु ).

(२) भा. १२।८४।२६ ; भामु. १२।८३।२८ यापयितुं ( प्रापयितुं ).

(३) भा. १२।८४।२७ ; भामु. १२।८३।२९ राचारा ( रादाना ) परि ( परा ).

(४) भा. १२।८४।२८ ; भामु. १२।८३।३० न हि विद्यते ( नोपपद्यते ).

(५) भा. १२।८४।२९ ; भामु. १२।८३।३१ हत ( हित ).

(६) भा. १२।८४।३० ; भामु. १२।८३।३२ क्रुध्यत्येक ( क्रुद्धश्चैक ) ब्धस्ततः ( ब्धः पुनः ).

(७) भा. १२।८४।३१ ; भामु. १२।८३।३३ शक्यान्यनु ( शक्यानि हि ).

[1]यस्तु संहरते तानि भर्तुः प्रियचिकीर्षया ।
समानसुखदुःखं तं पृच्छेदर्थेषु मानवम् ॥

अनुरक्तलक्षणमाह त्रिभिः— संक्रुद्ध इति । संक्रुद्धः स्वामी कदाचिदाश्वासितमपि अधिकारच्युतं करोति, कदाचित् परुषमुक्त्वाऽप्यनुगृह्णाति । तच्चानुरक्तेनापि मन्त्रिणा सोढुमशक्यम् । मन्त्रिकोपश्च वज्रपाततुल्यः । अतो नित्यं राजहितार्थी यस्तानि सोढुं शक्नुयात् स एवानुरक्तः, तमेव राजा पृच्छेदित्यर्थः । नीटी.

अनृजुस्त्वनुरक्तोऽपि संपन्नश्चेतरैर्गुणैः ।
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥

[2]योऽमित्रैः सह संबद्धो न पौरान् बहु मन्यते ।
स सुहृत्तादृशो राज्ञो न मन्त्रं श्रोतुमर्हति ॥

[3]अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः ।
स सुहृत्क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ॥

[4]आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः ।
सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति ॥

आगन्तुः नूतनः, सोऽप्यविश्वास्य इत्यर्थः । नीटी.

[5]विधर्मतो विप्रकृतः पिता यस्याभवत्पुरा ।
सत्कृतः स्थापितः सोऽपि न मन्त्रं श्रोतुमर्हति ॥

विधर्मतः अन्यायेन । नीटी.

[6]यस्त्वल्पेनापि कार्येण सकृदाक्षारितो भवेत् ।
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ॥

आक्षारितः धनग्रहणेन रिक्तः कृतः । नीटी.

(१) भा. १२।८४।३२–३३ ; भामु. १२।८३। ३४–३५.

(२) भा. १२।८४।३४ ; भामु. १२।८३।३६ स सुहृ ( असुहृ ) राज्ञो ( ज्ञेयो ).

(३) भा. १२।८४।३५ ; भामु. १२।८३।३७ स सुहृ ( असुहृ ).

(४) भा. १२।८४।३६ ; भामु. १२।८३।३८.

(५) भामु. १२।८३।३९.

(६) भा. १२।८४।३७ ; भामु. १२।८३।४० यस्त्वल्पे ( यः स्वल्पे ) सकृदा ( सुहृदा ).

[1]कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः ।
सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति ॥

उपादेयानाह— कृतप्रज्ञ इति । जानपदः स्वदेशजः । नीटी.

ज्ञानविज्ञानसंपन्नः प्रकृतिज्ञः परात्मनोः ।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ॥

परस्य शत्रोः आत्मनः च प्रकृतीः स्वाम्यमात्यादिकाः जानातीति प्रकृतिज्ञः । नीटी.

सत्यवाक्शीलसंपन्नो गम्भीरः सत्रपो मृदुः ।
पितृपैतामहो यः स्यात्स मन्त्रं श्रोतुमर्हति ॥

गम्भीरः मन्त्रगोपनसमर्थः । नीटी.

संतुष्टः संमतः सत्यः शौटीरो द्वेष्यपापकः ।
मन्त्रवित्कालविच्छूरः स मन्त्रं श्रोतुमर्हति ॥

शौटीरः प्रगल्भः । द्वेष्यवत् हेयं पापं यस्य सः द्वेष्यपापकः । नीटी.

[2]सर्वलोकं समं शक्तः सान्त्वेन कुरुते वशे ।
तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप ॥

आधित्सता आधातुमिच्छता । नीटी.

[3]पौरजानपदा यस्मिन् विश्वासं धर्मतो गताः ।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥
तस्मात्सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः ।
मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः ॥

पञ्चानामभावे त्र्यवराः । त्रिभ्यो न्यूना न कार्याः । नीटी.

[4]स्वासु प्रकृतिषु च्छिद्रं लक्षयेरन् परस्य च ।
मन्त्रिणो मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते ॥

(१) भा. १२।८४।३८–४१ ; भामु. १२।८३।४१–४४.

(२) भा. १२।८४।४२ ; भामु. १२।८३।४५ लोकं समं ( लोकमिमं ).

(३) भा. १२।८४।४३–४४ ; भामु. १२।८३।४६–४७.

(४) भा. १२।८४।४५ ; भामु. १२।८३।४८ मन्त्रिणो ( मन्त्रिणां ).

प्रकृतिषु स्वाम्यमात्यादिषु । मन्त्रिणां छिद्रं अयथोक्तकारित्वाभावेन परस्यावसरदानम् । नीटी.

[1]नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥

रक्षेत् गोपयेत् पिदध्यात् । विवरं छिद्रम् । नीटी.

उपधातीताः कार्यशक्तिशुचित्वादिगुणसंपन्ना अष्टसंख्याका ब्राह्मणशूद्रादयो मन्त्रिणो वरणीयाः, मन्त्रणविधिः

युधिष्ठिर उवाच—

[2]कीदृशं व्यवहारं तु कैश्च व्यवहरेन्नृपः ।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥

कीदृशैः किंस्वरूपैः । कैः व्यवहारनिर्णायकैः । व्यवहरेत् निर्णयं कुर्यात् । नीटी.

[3]ये चैते पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन् पुरुषे ह्येते विद्यन्त इति मे मतिः ॥

भीष्म उवाच—

[4]एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान् ।
दुर्लभः पुरुषः कश्चिदेभिर्गुणगणैर्युतः ॥

[5]किंतु संक्षेपतः शीलं प्रयत्ने नेह दुर्लभम् ।
वक्ष्यामि तु यथाऽमात्यान्यादृशांश्च करिष्यसि ॥

[6]चतुरो ब्राह्मणान्वैद्यान्प्रगल्भान्सात्त्विकाञ्शुचीन् ॥

(१) भा. १२।८४।४६ ; भामु. १२।८३।४९.

(२) भा. १२।८६।३ ; भामु. १२।८५।३ कीदृशं व्यवहारं तु ( कीदृशैर्व्यवहारैस्तु ).

(३) भा. १२।८६।४ ; भामु. १२।८५।४ चैते पूर्व ( चैव पूर्व ).

(४) भा. १२।८६।५ ; भामु. १२।८५।५ बुद्धिमान् ( बुद्धिमन् ) देभिर्गुणगणैर्युतः ( देभिर्युक्तो गुणैः शुभैः ).

(५) भा. १२।८६।६ ; भामु. १२।८५।६ त्ने नेह ( त्नेनेह ).

(६) भा. १२।८६।७ ; भामु. १२।८५।७ सात्त्विका ( स्नातका ).

*क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः ।
वैश्यान् वित्तेन संपन्नानेकविंशतिसंख्यया ॥
त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके ॥

पूर्वके नित्ये । नीटी.

[1]अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं चरेत् ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥

अष्टाभिर्गुणैः शुश्रूषा श्रवणं ग्रहणं धारणमूहनमपोहनं विज्ञानं तत्त्वज्ञानं चेति, तैः । पञ्चाशद्वर्षवयसमित्येकैकस्य विशेषणम् । नीटी.

[2]मतिस्मृतिसमायुक्तं विनीतं समदर्शनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥

[3]विवर्जितानां व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥

सप्तभिः— मृगयाऽक्षाः स्त्रियः पानमिति चतुर्भिः कामजैः, दण्डपातनं वाक्पारुष्यं अर्थदूषणमिति त्रिभिः क्रोधजैरिति सप्तभिः । अष्टानां ब्राह्मणचतुष्टयं शूद्रत्रयं सूतश्चेति, तेषाम् । नीटी.

[4]मतिमान्धृतिमान्धीमान् रहस्यविनिगूहिता ।
कुलीनः सत्यसंपन्नः शक्तोऽमात्यः प्रशंसितः ॥

* 'अष्टानां मन्त्रिणाम्' इति मूलेन तट्टीकया च विरोधादयं श्लोकः प्रक्षिप्त इति निर्णीयते ।

(१) भामु. १२।८५।७–८.

(२) भा. १२।८६।७ ; भामु. १२।८५।८.

(३) भा. १२।८६।८ ; भामु. १२।८५।९ चरेत् ( तथा ).

(४) भा. १२।८६।९ ; भामु. १२।८५।१० मति ( श्रुति ) दर्शनम् ( दर्शिनम् ).

(५) भा. १२।८६।१० ; भामु. १२।८५।११ विवर्जितानां ( वर्जितं चैव ).

(६) भा. १२।८६।२९–३० ; भामु. १२।८५।३०–३१ धीमान् ( ह्रीमान् ) सत्य ( सत्त्व ) शक्तो ( शुक्लो ) प्रशंसितः ( प्रशस्यते ).

[1]मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः ।
नृपतेर्मतिदाः सन्ति संबन्धज्ञानकोविदाः ॥

असंहार्याः उत्कोचादिना अभेद्याः । नीटी.

[2]अनागतविधातारः कालज्ञानविशारदाः ।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥

सचिवगुणाः, गुणवत्सचिववरणं राजकर्तव्यम्

[3]कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम् ।
सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ॥

[4]कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम् ।
अलुब्धं लब्धसंतुष्टं स्वामिमित्रबुभूषकम् ॥

स्वामिनो मित्राणां बुभूषकं ऐश्वर्यलिप्सुम् । नीटी.

[5]सचिवं देशकालज्ञं सर्वसंग्रहणे रतम् ।
सत्कृतं युक्तमनसं हितैषिणमतन्द्रितम् ॥

(१) सत्त्वसंग्रहणे प्राणिमात्ररञ्जने । नीटी.

(२) सत्त्वं द्रव्यम् । राकौ. २५३

[6]युक्ताचारं स्वविषये संधिविग्रहकोविदम् ।
राज्ञस्त्रिवर्गवेत्तारं पौरजानपदप्रियम् ॥

[7]खातकव्यूहतत्त्वज्ञं बलहर्षणकोविदम् ।
इङ्गिताकारतत्त्वज्ञं यात्रायानविशारदम् ॥

खातकाः परसैन्यावदारका ये व्यूहादयः तेषां तत्त्वज्ञम् । नीटी.

[1]हस्तिशिक्षासु तत्त्वज्ञमहंकारविवर्जितम् ।
प्रगल्भं दक्षिणं दान्तं बलिनं युक्तकारिणम् ॥

[2]चोक्षं चोक्षजनाकीर्णं सुवेषं सुखदर्शनम् ।
नायकं नीतिकुशलं गुणषष्ट्या समन्वितम् ॥

(१) चौक्षं शुद्धम् । नीटी.

(२) धौक्ष्यं तीक्ष्णम् । राकौ. २५३

[3]अस्तब्धं प्रश्रितं शक्तं मृदुवादिनमेव च ।
धीरं श्लक्ष्णं महर्द्धिं च देशकालोपपादकम् ॥

(१) प्रसृतं सूक्ष्मार्थगामिनम् । नीटी.

(२) श्लक्ष्णं स्निग्धम् । राकौ. २५४

[4]सचिवं यः प्रकुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥

[5]धर्मान्वितेषु विज्ञातो मन्त्री गुप्तश्च पाण्डव ।
आप्तो राजन् कुलीनश्च पर्याप्तो राज्यसंग्रहे ॥

धर्मान्वितेषु ब्राह्मणमण्डलेषु विज्ञाता ज्ञाततत्त्वः । राजसंग्रहे सामन्तवशीकरणे । नीटी.

[6]मन्त्रिणश्चैव कुर्वीथा द्विजान् विद्याविशारदान् ।
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् ॥

---

(१) भा. १२।११६।१५ ; भामु. १२।११५।१६ सन्ति ( सन्तः ).

(२) भा. १२।११६।१६ ; भामु. १२।११५।१७.

(३) भा. १२।११८।७ ; भामु. १२।११८।७ कोविदम् ( पारगम् ) ; राकौ. २५३ भामुवत्.

(४) भा. १२।११८।८ ; भामु. ; राकौ. २५३ लब्ध ( लघु ).

(५) भा. १२।११८।९ ; भामु. १२।११८।९ सर्व ( सत्त्व ) सत्कृतं ( सततं ) ; राकौ. २५३ भामुवत्.

(६) भा. १२।११८।१० ; भामु. ; राकौ. २५३.

(७) भा. १२।११८।११ ; भामु. १२।११८।११ यान ( ज्ञान ); राकौ. २५३ यात्रायान ( पात्रापात्र ) उत्त.

(१) भा. १२।११८।१२; भामु.; राकौ. २५३ हस्तिशिक्षासु ( हस्त्यश्वशिक्षा ) प्रगल्भं ( प्रगण्डं ) दान्तं ( कान्तं ).

(२) भा. १२।११८।१३ ; भामु. १२।११८।१३ चोक्षं चोक्ष ( चौक्षं चौक्ष ) सुवेषं ( सुमुखं ) षष्ट्या ( चेष्टा ) ; राकौ. २५३ पूर्वार्धे ( धौक्ष्यं धौक्षसमाकीर्णं सर्वेषां सुखदर्शनम् । ) षष्ट्या ( चेष्टा ).

(३) भा. १२।११८।१४ ; भामु. १२।११८।१४ प्रश्रितं शक्तं ( प्रसृतं श्लक्ष्णं ) श्लक्ष्णं ( शूरं ) ; राकौ. २५४ प्रश्रितं शक्तं ( प्रसृतं श्लक्ष्णं ).

(४) भा. १२।११८।१५ ; भामु.; राकौ. २५४ राज्यं ( राष्ट्रं ).

(५) भा. १२।१२०।४८ ; भामु. १२।१२०।५० विज्ञातो ( विज्ञाता ) राजन् ( राजा ) राज्य ( राज ).

(६) भा. १५।९।२० ; भामु. १५।५।२०–२१ ; रार. ११.

[1]तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिः सह ।
समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् ॥

उक्तलक्षणान् ब्राह्मणान् मन्त्रेषु योजयेत्, बहुभिः सह न मन्त्रयेत्, अपि मन्त्रयेत्तदा केनचित् व्यपदेशेनेत्यर्थः । रार. १२

[2]मन्त्रनिश्चयतत्त्वज्ञषाड्गुण्यगुणवेदिनः ।
शक्तान्कुलोचितान् भक्ताननाक्षारितपूर्वकान् ॥

( १ ) अनाक्षारितपूर्वकान् वाचाऽनवमानितान् । राक. १०४
( २ ) अनाक्षारितपूर्वकान् अनपकृतपूर्वान् । राप्र. ३११

[3]नीतिज्ञान् व्यवहारज्ञानितिहासार्थकोविदान् ।
इङ्गितज्ञानुपायज्ञाञ्शूरान्वीरान्कुलोद्गतान् ॥
सर्वकार्येषु निपुणानिष्वस्त्रविधिपारगान् ।
दुर्गयन्त्रविधानज्ञान् धर्मशास्त्रार्थपारगान् ॥
अक्षुद्रान् क्षमिणः प्राज्ञाननागतविधायिनः ।
आयत्यां प्रतिकारज्ञांस्तदात्वे दृढनिश्चयान् ॥

[4]द्विषन्मित्राद्युदासीनभावज्ञान् संशितव्रतान् ।
स्वभावगुप्तानचलानचलानिव भारत ॥

[5]धर्मशीलानकृपणांस्तथा सर्वोपधातिगान् ।
धिया सर्वान् संपरीक्ष्य राजा कुर्वीत मन्त्रिणः ॥

( १ ) सर्वोपधातिगान् सर्वच्छद्मवर्जितान् । राक. १०४
( २ ) उपधा छद्म । राप्र. ३११

येऽस्य राजधुरं वोढुं समर्थाः सद्गवा इव ।
तैः समेत्य महीपालो गुप्तमन्त्रो जितेन्द्रियः ॥

[6]विधानां दर्शने यत्नमातिष्ठेद्भरतर्षभ ॥

(१) भा. १५।१।२१ ; भाम. १५।५।२१–२२ ; रार. १२.
(२) राक. १०३–१०४ तत्त्वज्ञ ( तत्त्वज्ञं ) ; राप्र. ३१०–३११.
(३) राक. १०४ ; राप्र. ३११.
(४) राक. १०४ ; राप्र. ३११ संशित ( शंसित ).
(५) राक. १०४ ; राप्र. ३११.
(६) राक. १०४ ; राप्र. ३११ विधानां ( विधानां ).



## वाल्मीकिरामायणम्

### राज्ञो दशरथस्य राजशास्त्रज्ञा गुणान्विता अष्ट मन्त्रिणः ऋत्विजः ऋषयश्च

[1]मन्त्रिणावृत्विजौ चैव तस्याऽऽस्तामृषिसत्तमौ ।
वसिष्ठो वामदेवश्च वेदवेदाङ्गपारगौ ॥

(१) वारा. १।७।१–१९ ; वाराकु. १।७।१–२४ पाठभेदबाहुल्यात् संपूर्णः सर्गोऽत्र समुद्ध्रियते– ( तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः । मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः । शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः । अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ऋत्विजौ द्वावभिमतौ तस्याऽऽस्तामृषिसत्तमौ । वसिष्ठो वामदेवश्च मन्त्रिणश्च तथाऽपरे ॥ सुयज्ञोऽप्यथ जाबालिः काश्यपोऽप्यथ गौतमः । मार्कण्डेयस्तु दीर्घायुस्तथा कात्यायनो द्विजः । एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः ॥ विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः । परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः । श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ॥ कीर्तिमन्तः प्रणिहिता यथावचनकारिणः । तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ॥ क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ तेषामविदितं किंचित्स्वेषु नास्ति परेषु वा । क्रियमाणं कृतं वाऽपि चारेणापि चिकीर्षितम् ॥ कुशला व्यवहारेषु सौहृदेषु परीक्षिताः । प्राप्तकालं तु ते दण्डं धारयेयुः सुतेष्वपि ॥ कोशसंग्रहणे युक्ता बलस्य च परिग्रहे । अहितं वाऽपि पुरुषं न विहिंस्युरदूषकम् ॥ वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः । शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन् । सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् । नाऽऽसीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥ कश्चिन्न दुष्टस्तत्राऽऽसीत्परदाररतो नरः । प्रशान्तं सर्वमेवाऽऽसीद्राष्ट्रं पुरवरं च तत् ॥ सुवाससः सुवेषाश्च ते च सर्वे सुशीलिनः । हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे । विदेशेष्वपि विज्ञाताः सर्वतो बुद्धिनिश्चयात् ॥ अभितो गुणवन्तश्च न चाऽऽसन् गुणवर्जिताः । संधिविग्रहतत्त्वज्ञाः

अष्टावन्ये बभूवुश्च तस्यामात्या महीपतेः ।
शुचयश्चानुरक्ताश्च नित्यं प्रियहिते रताः ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थोऽथार्थसाधकः ।
अशोको धर्मपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥
ह्रीमन्तो विनयोपेता नीतिज्ञा विजितेन्द्रियाः ।
मतिमन्तः सावहिता राजनिर्देशकारिणः ॥
तेजःक्षमावयःप्राप्ताः स्मितपूर्वाभिभाषिणः ।
अलुब्धा धृतिमन्तश्च सत्यधर्मपरायणाः ॥
नैषामविदितं किंचित्स्वेषु चैव परेषु च ।
चिकीर्षितं भवेद्राज्ञो मित्रोदासीनविद्विषाम् ॥
धर्माचारविवेकज्ञाः सर्वत्र समदर्शिनः ।
कोशसंग्रहणे युक्तास्तथा बलपरिग्रहे ॥
पुत्रेऽपि च प्राप्तदोषे धर्मतो दण्डपातिनः ।
अद्रोग्धारश्च धर्मेण शत्रोरप्यकृतागसः ॥
प्रागतज्ञानविज्ञाना पितृपैतामहोचिताः ।
रक्षितारश्च वर्णानां नित्यं विषयवासिनाम् ॥
कोशसंग्रहणे युक्ता ब्रह्मस्वस्याविहिंसकाः ।
अतीक्ष्णचण्डा नेतारः परार्थबलपौरुषाः ॥
परस्परेणाविरुद्धाः प्रीतिमन्तः प्रियंवदाः ।
प्रापवादविरता गुणाढ्या न च गर्विताः ॥
आर्यवेषाः सुमनसो न च संदिग्धनिश्चयाः ।
नरेन्द्रवचनासक्ताश्चेतसा तत्परायणाः ॥
सुगुणेषु परिख्याता नामरूपगुणान्वयैः ।
परराज्येऽपि विख्याता नयबुद्धिगुणांशुभिः ॥
आसंस्तदाऽनुसंरक्ताः सर्वे वर्णाः स्वकर्मभिः ।
नाऽऽसीत्पुरे वा राष्ट्रे वा तस्करो नाऽशुचिव्रतः ॥
न दुष्टः कश्चिदप्यासीत्परदाराभिमर्षकः ।
कृत्स्नमासीदनुद्विग्नं राष्ट्रं तैः परिपालितम् ॥
प्रशस्तमेवमासीत्तद्राष्ट्रं पुरवनानि च ।
अमात्यैरीदृशैस्तैस्तु राजा दशरथोऽन्वितः ॥
धर्मतः पालयामास पृथिवीमनुरञ्जयन् ।
अवेक्षमाणश्चारेण महीं सूर्य इवांशुभिः ॥
नाध्यगच्छत्कचित्कंचिदैक्ष्वाकः शत्रुमात्मनः ॥

तैर्मन्त्रिभिर्भर्तृहितैर्निविष्टै-
विद्वद्भिराप्तैः कुशलैः समर्थैः ।
स पार्थिवो दीप्तिमवाप युक्त-
स्तेजोमयैर्गोभिरिवाम्बरेऽर्कः ॥

जितेन्द्रियत्वादिगुणान्विता मन्त्रिणः

[1]कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः ।
कृतज्ञाश्चोर्जितज्ञाना भक्तास्ते तात मन्त्रिणः ॥
[2]सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

राजा कामवृत्तो निग्राह्यः

[3]अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः ।
निग्राह्यः सर्वथा सद्भिर्न निग्राह्यो निगृह्यसे ॥
[4]धर्ममर्थं च कामं च यशश्च विपुलं भुवि ।
स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर ॥

---

प्रकृत्या संपदाऽन्विताः । मन्त्रसंवरणे शक्ताः श्लक्ष्णाः सूक्ष्मासु बुद्धिषु ॥ नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः । ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः । उपपन्नो गुणोपेतैरन्वशासद्वसुंधराम् ॥ अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन् । प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन् ॥ विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसंगरः । स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः । मित्रवान्नतसामन्तः प्रतापहतकण्टकः ॥ स शशास जगद्राजा दिवं देवपतिर्यथा ॥ तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तैर्वृतोऽनुरक्तैः कुशलैः समर्थैः । स पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ ).

(१) वारा. २।११४।१० ; वाराकु. २।१००।१६ कृतज्ञाश्चोर्जितज्ञाना भक्ता ( कुलीनाश्चेङ्गितज्ञाश्च कृता ).

(२) वारा. ३।४०।२ पूर्वार्धे ( सुलभा वै महाराज पुरुषाः प्रियवादिनः । ) स्य तु ( स्य सु ): ५।९०।७२ ; वाराकु. ३।३७।२, ६।१६।२२ ; राक. १०६ स्य तु ( स्य च ) ; राप्र. ३११ राकवत्.

(३) वारा. ३।४४।७ कापथ ( विषय ) सद्भिर्न निग्राह्यो ( स त्वं निग्राह्यान्न ) ; वाराकु. ३।४१।७.

(४) वारा. ३।४४।८ ; वाराकु. ३।४१।८ विपुलं भुवि ( जयतां वर ).

[1]विपर्यये हि तिष्ठन्तो मन्त्रिणो धनदानुज ।
वृजिनं स्वामिवैकल्ये प्राप्नुवन्ति सबान्धवाः ॥
[2]ये तीक्ष्णमन्त्राः सचिवा भज्यन्ते सह तेन वै ।
विषमे तुरगाः शीघ्रा मन्दसारथयो यथा ॥

राज्ञे हितं मन्त्रिणा वक्तव्यम्, मन्त्रिलक्षणम्

[3]सुग्रीवेणैवमुक्तस्तु हनुमान् हरिपुंगवः ।
उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥
[4]नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् ।
अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥
[5]हितं मन्त्रयते राज्ञस्तेन मन्त्री निगद्यते ॥

कार्याकार्याणि सततं राजा राज्ये करोति वै ।
तानि सर्वाणि कार्याणि मन्त्रिभिः सततोत्थितैः ।
अन्विष्यान्विष्य चिन्त्यानि तेन राजा सहायवान् ॥
मन्त्रिभिः सर्वकार्यार्थाः कार्या नित्यमसंशयम् ॥

## कौटिलीयमर्थशास्त्रम्

अमात्यगुणसंपत् गुणपरीक्षाविधिः अमात्यकर्म च

[6]जानपदोऽभिजातः स्ववग्रहः कृतशिल्पश्चक्षुष्मान् प्राज्ञो धारयिष्णुर्दक्षो वाग्ग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिर्मैत्रो दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितः संप्रियो वैराणामकर्तेत्यमात्यसंपत् । अतः पादार्धगुणहीनौ मध्यमावरौ ॥

इत्यमात्यसंपदिति । अमात्यस्य मन्त्रिणो गुणवैभवं एवंप्रकारम् । जानपदत्वादयस्तु गुणप्रकाराः । तत्र जानपदः विजिगीषुराष्ट्रभवः । अभिजातः विशुद्धान्वयः । स्ववग्रहः शोभनबन्धुरिति सांप्रदायिकाः, सुखेनावग्रहीतुं प्रामादिकाकार्यप्रवृत्तेर्वारयितुं शक्यः । कृतशिल्पः कृतं शिक्षितं गजाश्वारोहणरथयुद्धायुधगान्धर्वविद्यादिकं येन स तथा । चक्षुष्मान् अर्थशास्त्रं चक्षुः तदभिज्ञः । प्राज्ञः सहजबुद्धिसंपन्नः । धारयिष्णुः अविस्मरणशीलः । दक्षः क्षिप्रकारी । वाग्ग्मी मधुरोपपन्नवक्ता । प्रगल्भः प्रौढः । प्रतिपत्तिमान् प्रतिकर्तुं प्रतिवक्तुं च समर्थः, इतिकर्तव्यतानिश्चयवान् वा । उत्साहप्रभावयुक्तः । उत्साहयुक्तः पुरुषकारवान्, प्रभावयुक्तः प्रभुशक्तिमान् । क्लेशसहः जितश्रमः । शुचिः चतुर्विधोपधाशुद्धः । मैत्रः सर्वत्र स्निग्धव्यवहर्ता । दृढभक्तिः अविचाल्यराजानुरागः । शीलबलारोग्यसत्त्वसंयुक्तः । शीलं सद्वृत्तम्, बलं देहशक्तिः, आरोग्यं निर्व्याधित्वम्, सत्त्वं धैर्यम्, एतैर्युक्तः । स्तम्भचापल्यवर्जितः । स्तम्भवर्जितः विगर्वः प्रणतिशीलो वा, चापल्यवर्जितः स्थिरप्रकृतिः । संप्रियः सौम्यदर्शनः । वैराणामकर्ता स्त्रीभूम्यादिनिमित्तानां वैराणामनुत्पादकः शमयिता च । एभिः पञ्चविंशतिगुणैः संपन्न उत्तमो मन्त्री । अत इति । अतः एभ्यो गुणेभ्यः पादार्धगुणहीनौ मध्यमावरौ । चतुर्थांशगुणहीनो मध्यमः, अर्धगुणविहीनोऽधम इत्यर्थः । श्रीमूला.

तेषां जनपदमवग्रहं चाऽऽप्यतः परीक्षेत । समानविद्येभ्यः शिल्पं शास्त्रचक्षुष्मत्तां च । कर्मारम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यं च । कथायोगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्त्वं च । आपद्युत्साहप्रभावौ क्लेशसहत्वं च । संव्यवहाराच्छौचं मैत्रतां दृढभक्तित्वं च । संवासिभ्यः शीलबलारोग्यसत्त्वयोगमस्तम्भमचापल्यं च । प्रत्यक्षतः संप्रियत्वमवैरित्वं च ॥

जानपदत्वादिज्ञानोपायानाह— तेषामित्यादि । तेषां जानपदत्वादीनां मध्ये अथवा उत्तममध्यमाधमानां मन्त्रिणाम् । आप्यतः आप्तियोग्यात् प्रत्येतव्यात् विश्वास-

(१) वारा. ३।४४।९ ; वाराकु. ३।४१।९ ( विपर्यये तु तत्सर्वं व्यर्थं भवति रावण । व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ).

(२) वाराकु. ३।४१।१२.

(३) वारा. ४।२५।९ मुक्तस्तु ( मुक्ते तु ) स्वेन तर्केण ( श्लक्ष्णया वाचा ) ; वाराकु. ४।३२।९.

(४) वारा. ४।२५।१९ अत एव ( अतस्तव ) म्यवधृतं ( म्येष हितं ) ; वाराकु. ४।३२।१८.

(५) वारा. ५।१००।८–१०.

(६) कौ. १।९.

योग्यादित्यर्थः । 'आप्तिः प्रत्ययितत्वे स्याल्लाभसंबन्धयोरपि' इति केशवः । आप्तश्च यथादृष्टार्थवादी । परीक्षेत परीक्ष्य जानीयात् । समानविद्येभ्यः तुल्यविद्याविद्भ्यः । कर्मारम्भेषु कार्यानुष्ठानेषु । कथायोगेषु कार्यकथनप्रसङ्गेषु । प्रतिभानवत्त्वं नवनवप्रज्ञोन्मेषशालित्वम् । संव्यवहारात् समाचरणात् । संवासिभ्यः सहवासिभ्यः । प्रत्यक्षतः स्वयमनुभवात् । श्रीमूला.

**प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः । स्वयंदृष्टं प्रत्यक्षम् । परोपदिष्टं परोक्षम् । कर्मसु कृतेनाकृतावेक्षणमनुमेयम् । यौगपद्यात्तु कर्मणामनेकत्वादनेकस्थत्वाच्च देशकालात्ययो मा भूदिति परोक्षममात्यैः कारयेदित्यमात्यकर्म ॥**

कस्मात् पुनर्जानपदत्वादिगुणज्ञाने प्रत्यक्षं आप्तवाक्यमनुमानमिति त्रीणि प्रमाणानि आश्रयणीयानि ? न पुनरेकमेवाऽऽश्रीयेतेत्याशङ्कायामाह— प्रत्यक्षपरोक्षानुमेयेत्यादि । राजवृत्तिः दण्डनीतिप्रतिपाद्यो राजव्यवहारः । परोपदिष्टं आप्तवाक्यावगतम् । कृतेन अकृतावेक्षणमनुमेयम् । अनुष्ठितेन कर्मांशेन करिष्यमाणांशपरिणामोत्प्रेक्षणमनुमानायत्तमित्यर्थः । एवं च यतो राजवृत्तिस्त्रिप्रमाणावसेया ततस्त्रिप्रमाणप्रदर्शनमित्यभिप्रायः । किमर्थं महता प्रयासेन परीक्ष्यैवामात्याः कर्तव्या इति चेत् तत्राऽऽह— यौगपद्यादित्यादि । अयं भावः— कर्माणि खलु नाम राजकीयानि बहूनि बहुप्रकाराणि बहुप्रदेशस्थानि सद्यःकरणीयानि च भवन्ति । तानि सर्वाणि साक्षादेव राज्ञा स्वयमनुष्ठातुं न शक्यन्त इति यथादेशकालं तेषामनुष्ठानसिद्ध्यर्थममात्या एव तत्र राज्ञा नियोक्तव्याः । एषितव्याश्च ते गुणवन्त एव कर्मानुष्ठानसम्यक्त्वायेत्यावश्यकं तेषां महता प्रयासेन गुणपरीक्षणमिति । इत्यमात्यकर्मेति । एष मन्त्र्युत्पत्तिप्रकार उक्त इत्यर्थः । श्रीमूला.

राज्ञा स्थापनीयमन्त्रिपरिषद्विचारः मन्त्रिसंख्याविचारश्च

**[1]सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् ॥**

(१) कौ. १।१०.

सर्वोपधाशुद्धान् चतसृष्वप्युपधासु दृष्टशौचान् । श्रीमूला.

**[1]नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः । प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः । अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयबलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत् । तस्माद्बुद्धिवृद्धैः सार्धमासीत मन्त्रम् ॥**

तदिदं भारद्वाजमतमाक्षिप्य विशालाक्षः प्रत्यवतिष्ठते इत्याह— नैकस्येत्यादि । प्रत्यक्षपरोक्षेत्यादिवाक्येन राजकर्मणः सर्वस्य सहायसापेक्षत्वं मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्तं स्मारयति । अज्ञातस्य ज्ञानम्, ज्ञातस्य निश्चयेन दृढीकरणम्, इदमदो वेत्यर्थयोर्द्विधाभवने संदेहनिवर्तनम्, अंशेनोपलब्धस्यांशान्तरानुमितिरित्येवंजातीयं कार्यं मन्त्रिसाध्यमित्याह— अनुपलब्धस्येत्यादिना । तस्मादिति । तस्मात् राजवृत्तेः सहायसापेक्षत्वनियमात् बुद्धिवृद्धैः बुद्धिप्रशस्तैः सार्धं मन्त्रं आसीत मन्त्रमुद्दिश्याऽऽसीत । मन्त्रशब्दस्य भावार्थत्वाद्वा 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वक्तव्यम्' इति कर्मसंज्ञायां द्वितीया । श्रीमूला.

**मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः । षोडशेति बार्हस्पत्याः । विंशतिमित्यौशनसाः । यथासामर्थ्यमिति कौटल्यः ॥**

अथ राजनिर्णीतकार्यजातानुष्ठानराजनिर्णेतव्यनवनवकार्यजातोल्लेखनादिसर्वराष्ट्रकर्मनिर्वहणप्रधाना मन्त्रिपरिषन्नाम काचित् राज्ञो भवति । तस्यां राज्ञा कति मन्त्रिणः पारिषदाः कर्तव्या इत्याकाङ्क्षायां द्वादशेति मनुशिष्याणां षोडशेति बार्हस्पत्यानां विंशतिरित्यौशनसानां कार्यानुष्ठातृपुरुषसामर्थ्यानुगुण्येन यथोक्तसंख्यास्तन्न्यूनसंख्यास्तदधिकसंख्या वेत्यात्मनश्च मतमित्याह— मन्त्रिपरिषदमित्यादि । श्रीमूला.

**ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः । अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसंपदं च कर्मणां कुर्युः । आसन्नैः सह कार्याणि पश्येत् ।**

(१) कौ. १।१५.

अनासन्नैः सह पत्रसंप्रेषणेन मन्त्रयेत । इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम् । स तच्चक्षुः । तस्मादिमं व्यक्षं सहस्राक्षमाहुः ॥

पारिषदानां व्यापारमाह— ते हीत्यादि । स्वपक्षं परपक्षं च चिन्तयेयुः स्वपक्षगतं परपक्षगतं च कार्यं समीक्षापूर्वमनुतिष्ठेयुः । कर्मणां मध्ये अकृतारम्भं अकृतस्य कर्मणोऽनुष्ठानोपक्रमम्, आरब्धानुष्ठानं उपक्रान्तस्य परिसमापनम्, अनुष्ठितविशेषं परिसमापितस्य संस्कारं परिनिष्ठितप्रासादादिशोभार्थंसुधालेपचित्रार्पणादिजातीयम्, नियोगसंपदम्— नियोगाः तत्तत्कर्मकराधिकाराः, तेषां संपदं गुणवत्तां बाहुल्यं च कुर्युः । मन्त्रिपरिषत्संभ्येषु आसन्नानासन्नेषु विषये राजा कथं व्यवहरेदित्येतदाह— आसन्नैरित्यादि । पत्रसंप्रेषणेन लिखितसकलार्थस्य लेखस्य प्रेषणेन । इत्थं बहुमन्त्रिबुद्धिसाहाय्येनार्थदर्शनस्य महाफलतयाऽऽत्मसमर्थितस्य स्तुत्यर्थं सहस्राक्षपदनिर्वचनभङ्ग्याऽर्थवादमाह— इन्द्रस्य हीति । सः इन्द्रः तच्चक्षुः तत् ऋषिसहस्रं मन्त्रिपरिषदात्मकं चक्षुः कार्यतत्त्वदर्शनसाधनं यस्य सः । द्व्यक्षमिति विशेषणेन वस्तुतः पुरुषान्तरवत् द्विनयन एवासौ सहस्राक्ष इत्युपचर्यते इति दर्शितम् । श्रीमूलाः

आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाऽऽहूय ब्रूयात् । तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत्कुर्यात् ॥

प्राणापायशङ्कावहे कार्ये पूर्वोक्तान् मन्त्रिणः मन्त्रिपरिषदं चेमां मेलयित्वा तत्त्वं पृच्छेदित्याह— आत्ययिक इत्यादि । तत्र भूयिष्ठाः बहुतमाः यत् ब्रूयुः तत् कुर्यात् अनुतिष्ठेत्, अथवा यत् कार्यसिद्धिकरं ब्रूयुः, अर्थात् अभूयिष्ठा अपि, तत् कुर्यात् । श्रीमूला.

मन्त्रिणां कर्तव्यानि

[१]मन्त्रो मन्त्रफलावाप्तिः कर्मानुष्ठानमायव्ययकर्म दण्डप्रणयनममित्राटवीप्रतिषेधो राज्यरक्षणं व्यसनप्रतीकारः कुमाररक्षणमभिषेकश्च कुमाराणामायत्तममात्येषु । तेषामभावे तदभावः । छिन्नपक्षस्येव राज्ञश्चेष्टानाशः ॥

अमात्यव्यसनगरीयस्त्वे भारद्वाजोक्तां युक्तिमाह— मन्त्र इति । मन्त्रः कार्याकार्यविमर्शनम्, मन्त्रफलावाप्तिः कार्यनिर्धारणम्, कर्मानुष्ठानं निर्धारितकार्यकरणम्, आयव्ययकर्म हिरण्याद्युत्पादनमुत्पादितहिरण्यविनियोगश्च, दण्डप्रणयनं सैन्यसमुत्थापनयथास्थानस्थापनादि, अमित्राटवीप्रतिषेधः अमित्राणामाटविकानां च स्वदेशहिंसनात् वारणम्, राज्यरक्षणं निजप्रजायोगक्षेमवहनम्, व्यसनप्रतीकारः दैवमानुषविपत्प्रतिक्रिया, कुमाररक्षणं कुमारेभ्यो नृपस्य रक्षणम्, कुमाराणामभिषेकश्च यौवराज्ये नवार्जितराज्ये वाऽभिषेचनं च अमात्येषु आयत्तं अमात्यैकसाध्यम् । तेषां अमात्यानां अभावे तदभावः मन्त्राद्यभावः । ततश्च छिन्नपक्षस्येव छिन्नपक्षस्य पक्षिण इव राज्ञः चेष्टानाशः प्रवृत्तिलोपः, स्यादिति शेषः । श्रीमूला.

## चाणक्यसूत्राणि

मन्त्रिवरणप्रयोजनम्

[१]संपाद्याऽऽत्मानमन्विच्छेत्सहायवान्(? यान्) ॥

नासहायस्य मन्त्रनिश्चयः ॥

नैकं चक्रं परिभ्रमयति ॥

सहायः समसुखदुःखः ॥

मानी प्रतिमानिनमात्मनि द्वितीयं मन्त्रमुत्पादयेत् ॥

अविनीतं स्नेहमात्रेण न मन्त्रे कुर्वीत ॥

श्रुतवन्तमुपधाशुद्धं मन्त्रिणं कुर्वीत ॥

## चाणक्यनीतिदर्पणः

मन्त्रिवरणप्रयोजनम्

[२]नदीतीरे च ये वृक्षाः परगेहेषु कामिनी ।
मन्त्रिहीनाश्च राजानः शीघ्रं नश्यन्त्यसंशयम् ॥

(१) कौ. ८।१.

(१) चासू. १५–२१.
(२) चाद. २।१५ ; लचा. २।१५.

## चाणक्यराजनीतिशास्त्रम्

मन्त्रिवर्गलक्षणानि

[1]अदीर्घसूत्रः स्मृतिमान् कृतज्ञो नीतिशास्त्रवित् ।
धीमानायतिदर्शी च मन्त्री राज्ञः सुसंनिधिः ॥

मन्त्रिवर्गस्य सारोऽयं दृशि नित्यं प्रसन्नता ।
मुखे वहति माधुर्यं हृदये कार्यनिश्चयम् ॥

## मनुः

राज्ञः कर्तव्यं मन्त्रिवरणम् , मन्त्रिसंख्याविचारः

मन्त्रिलक्षणानि मन्त्रिप्रयोजनं मन्त्रणपद्धतिश्च

[2]मन्त्रयेत्सह मन्त्रिभिः ॥

मन्त्रयेत् सह मन्त्रिभिः किं कर्तव्यमिति । * मेधा.

[3]मौलाञ्छास्त्रविदः शूराँल्लब्धलक्षान् कुलोद्भवान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥

( १ ) पितृपितामहान्वयागता बहुसुतधनबान्धवाः प्रकटगोभूमिधनाः तद्देशवासिनो मौलाः । मूलं प्रतिष्ठा, तत्र भवा मौलाः । शास्त्रविदः । शास्त्रं शासनं भृत्यविज्ञानम् । तेनान्येऽपि गुणा गृह्यन्ते । तद्यथा– 'प्राज्ञः दृढकारी धारयिष्णुर्दक्षः वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिर्दानशीलः योग्यसत्त्वयुक्तः स्तम्भचापलहीनः प्रियो वैरिणामकर्ता' ( कौ. १।९ ) इति । शूरशब्देन राजकार्ये शरीरकलत्रापत्यधनादिष्वपि निरपेक्ष उच्यते, तथा मरणेऽभीरुः, युद्धोत्साही, एक एव परिभवभयात् बहुभिर्विरुध्यते, दृढप्रहारी बलवान् । लब्धलक्षाः । परिदृष्टकर्मतामनेनाऽऽह । दृष्टखड्गव्यापाराः कृतार्थाधिकाराः अनुभूतमन्त्रिभूमयः । कुलोद्गतान् कुलाङ्कुशनिगृहीता ह्यकार्ये न वर्तन्ते । सचिवान् सहायान् । नित्यमेते राज्ञः पार्श्ववर्तिनो भवेयुः । सप्त वाऽष्टौ वा । नियमोऽयम् । येन चाल्पे एकचित्ता भवन्ति, ततश्च राजमन्त्र उद्घाटितः स्यात् । बहूनामपि मन्त्रभेदः । तस्मादेतावन्त एव कर्तव्याः । सुपरीक्षितान् धर्मार्थकामभयोपधाभिः । सेयं परीक्षोच्यते– पुरोहितः स्वकार्ये राज्ञा व्याजेनाधिक्षिप्तः बहुनाऽर्थसंप्रदानेनाऽऽप्तपुरुषैः एकैकममात्यमुपजपेत् राजविनाशाय– 'एतच्च सर्वमन्त्रिभ्यो रोचते, अथ कथं भवते ?' इति । प्रत्याख्याने धर्मोपधाशुद्धः । सेनापतिः केनचित् अपदेशेन पूर्ववदधिक्षिप्तः बहुना च संप्रदानेनाऽऽप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय– 'एतच्च सर्वमन्त्रिभ्यो रोचते, अथ कथं भवते ?' इति । प्रत्याख्याने अर्थोपधाशुद्धः । परिव्राजिका अन्तःपुरे लब्धविश्वासा एकैकममात्यमुपजपेत्– 'सा राजमहिषी भवन्तं कामयते कृतसमागमोपाया' इति । प्रत्याख्याने कामोपधाशुद्धः । राजप्रयुक्ता एव केचित् पुरुषाः प्रवादमाविष्कुर्युः– 'कृतसमयैः अमात्यै राजा हन्यते' इति । उपलब्धप्रवादः पुरोहितस्याऽऽप्तः कश्चित् अमात्येषु मन्त्रं श्रावयेत्– 'इमं प्रवादमुपश्रुत्य भवतां निग्रहो राज्ञा क्रियते' इति । तेषामेव चान्यतमः पूर्वमेव कृतसंवित्कः प्रत्येकं राजामात्येषूत्साहयेत् । तत्र ये प्रत्याचक्षते ते भयोपधाशुद्धाः । अथवा मौलांस्तावत् कुर्यादर्थसमाहर्तृसंनिधातॄन् । ये अर्थं ग्रामेभ्यः समाहरन्ति समाहृतं च रक्षन्ति विनियुञ्जते च । सर्वथाऽर्थव्यवहारिणो मौलाः कर्तव्या इत्युक्तं भवति । शास्त्रविदः बुद्धिसचिवाः मन्त्रिणः । शूरान् बलाध्यक्षान् । लब्धलक्षानित्यादि सर्वेषां विशेषणम् । एकैकस्य

---

* अन्ये ग्रन्थाः मेधावत् ।

(१) चाशा. ५।१५,२७.

(२) मस्मृ. ७।१४६ ; पमा. ४१० ; राप्र. १५९ ; नीम. ३८.

(३) मस्मृ. ७।५४ ; मेधा. लोद्भवान् ( लोद्गतान् ) प्रकुर्वीत ( कुर्वीत सु ) ; मिता. १।३१२ प्रकुर्वीत ( कुर्वीत सु ); राक. २२ लक्षान् ( लक्ष्यान् ) लोद्भवान् (लोद्गतान्) : १०५ चाष्टौ ( वाऽष्टौ ) शेषं पूर्ववत् ; मवि. मितावत् ; रार. १० लोद्भवान् ( लोद्गतान् ) ; पमा. ४०५ रारवत् ; वीक. १।३१२ शूराँ ( शुद्धाँ ) लोद्भवान् ( लोद्गतान् ) चाष्टौ ( वाऽष्टौ ) ; मच. मेधावत् ; वीमि. १।३१२ मितावत् , उत्त. ; राप्र. १७७ मितावत् ; नीम. ४९ मितावत्.

समुदितपरीक्षा च योक्ता * राजविषया राजामात्यें-भूत्साहनमिति, सा न युक्तेति मन्यन्ते । एष एव हि बुद्धिभेदो भवेदमात्यानाम् । तस्मादन्या काचित् स्त्री साध्वी प्रयोज्या अन्यश्च विनाशविषय उदाहार्यः ।
† मेधा.

( २ ) पित्राद्यन्वयायातान् स्नेहातिशयेनाव्यभिचारार्थम् । दृष्टादृष्टार्थशास्त्रज्ञान् दृष्टादृष्टमर्यादानुल्लङ्घनार्थम् । विक्रान्तान् शरीरानपेक्षं प्रभुवृत्त्यर्थम् । पुनः कृतराजकार्यान् असंमोहेन कर्मसंपत्त्यर्थम् । कुलीनान् कुलाभिमानेन अव्यभिचारार्थम् । धर्मार्थकामभयविषये चारप्रयोगादिद्वारेण कृतपरीक्षान् शुद्धान् सप्त चाष्टौ वाऽमात्यान् सहायभूतान् मन्त्रादेः कुर्वीत । गोरा.

( ३ ) लब्धलक्षान् युद्धादिप्रवेशेन दृष्टशस्त्रशास्त्रज्ञानशक्तितया गृहीतसंवादान् । ¶ मवि.

(४) मौलान् पितृपितामहक्रमेण सेवकान्, तेषामपि द्रोहादिना व्यभिचारात् दृष्टादृष्टार्थशास्त्रज्ञान्, विक्रान्तान्, लब्धलक्षान् लक्षादप्रच्युतशरशल्यादीन्, आयुधविद इत्यर्थः, विशुद्धकुलभवान्, देवतास्पर्शादिनियतान् अमात्यान् सप्ताष्टौ वा मन्त्रादौ कुर्वीत । $ ममु.

( ५ ) 'सुसहायेन' ( मस्मृ. ७।३१ ) इत्युक्तम्, तत्र विशेषणविशिष्टान् सहायानाह— मौलानिति । पितृपितामहक्रमेण सेवकाः मौलाः, विख्यातपितृपितामहाः वा । शास्त्रविदः नीतिशास्त्रविदः । शूरानिति शूरहीनं राज्यं परैराक्रम्यते यतः, भीरूणां साहाय्यानुपपत्तेश्च । कुलोद्गतान् सत्कुलजान् । मौलत्वेऽपि संकरजारजादिव्यावृत्त्यर्थम् । सुपरीक्षितान् देवतादिस्पर्शकृतशपथान् स्त्रीधनादिलोभोत्तीर्णान् वा । सचिवान् सहायान् । साचिव्यं यत् कृतं स्मृतं तत् (१)।

सप्त चाष्टौ वेति विकल्पो बहुविषयाद्यपेक्षया ।
* मच.

( ६ ) लब्धलक्षान् चतुरान् । ‡ नीम. ४९

( ७ ) अथामात्यलक्षणमाह— मौलानिति । लब्धलक्षान् सर्वकालेषु सिद्धफलान् । नन्द.

**'अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ।**
**विशेषतोऽसहायेन किमु राज्यं महोदयम् ॥**

( १ ) यत् सामान्यं गृहस्थस्य गृहकृत्यं गोऽश्वादिपालनं सुकरमिति स्थितम् । स एव गां पालयति स एव दोग्धि, न शक्यमेतदेकेन कर्तुम् । तदप्येकेन दुष्करं विशेषतोऽसहायेन । दुष्करं अशक्तेन न शक्यं कर्तुम् । कथं ह्येको गां चारयतु कथं च भार्यां रक्षतु । राज्यं तु प्रतिमहारम्भमुदयकर्म, तद्योगः फलवांश्च । अपेक्षमाणस्य महत् फलमुदेति । न चैकेन षाड्गुण्यं वेदितुं शक्यम् । तस्मादात्मसमाः परीक्षिताः सहायास्तेषु तेषु कार्येषु कर्तव्याः । § मेधा.

( २ ) यदपि कर्म कर्तुं शक्यते तदप्येकस्य दुःसाध्यं भवति । विशेषेण राज्यं यन्महाफलं तत् कथमसहायेन कर्तुं शक्यते ? गोरा.

( ३ ) अमात्यकरणे हेतुमाह— सुखेनेति ।
† रार. १०

( ४ ) एकाकिना किमिति न क्रियेत तत्राऽऽह— अपीति । अपिः संभावनायाम् । सुकरं गोदोहनशिबिकोद्वहनादि । महोदयं महत्कार्यं महत ऐश्वर्यादेः शत्रुजयादेर्वा उदयो यस्मात्तत् । मच.

---

* अत्र 'राजमहिषीविषया राजविषया च' इति पाठेन उत्तरग्रन्थानुसारिणा भाव्यम् ।

† राक., राप्र. मेधागतम् ।

¶ शेषं मेधागतम् ।

$ रार., भाच. ममुगतम् ।

* शेषं ममुवत् ।

‡ शेषं ममुगतम् ।

§ मवि, ममु., मेधागतं गोरागतं च ।

† नन्द, रारवत् ।

(१) मस्मृ. ७।५५ ; विश्व. १।३०७ ; मेधा. किमु (किं नु) ; राक. २३ ; रार. १० अपि यत्सुकरं कर्म (सुखेनापि यत्क्रियते) किमु (किंच) ; राप्र. १७७–१७८.

(५) अपि निश्चयेन । * माच.

[1]अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।
सम्यगर्थसमाहर्तॄनमात्यान् सुपरीक्षितान् ॥

(१) यदुक्तं 'सप्त चाष्टौ वा' (मस्मृ. ७।५४) इति, तस्यायमपवादः । अर्थसमाहर्तॄन् संनिधातॄन् ¶ सुपरीक्षितानुपधाभिः कुर्यात् । मेधा.

(२) अन्यानपि भृत्यान् अर्थादिशुद्धान् प्रज्ञावतः स्थिरान् चारादिद्वारेण कृतार्थादिशुद्धिपरीक्षान् आकरस्थानेभ्यः सम्यगर्थोत्पादनशीलानर्थाधिगतान् कुर्यात् । ‡ गोरा.

(३) अमात्यान् कर्मसचिवान् । † ममु.

(४) किंच, अष्टातिरिक्तानपि कुर्यादित्याह— अन्यानिति द्वाभ्याम् । अवस्थितान् अभीरून् । सम्यगर्थसमाहर्तॄन् अव्याजेनार्थहारकान् । अमात्यान् यैः अमा सह दुष्कराण्यपि कार्याण्यत्येति तान् । मच.

(५) एवं मन्त्रसहाया उक्ताः, अधुना कार्यसहायानाह— अन्यानिति । अवस्थितान् व्यवस्थितान् । अर्थसमाहर्तॄन् कार्यकरान् । प्रकुर्वीत अधिकुर्वीत । नन्द.

(६) अनवस्थितान् चञ्चलान् । § भाच.

[2]निर्वर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥

(१) सर्वे एते मन्त्रज्ञा विचक्षणाः विद्वांसश्चाधिकारिकाः कर्तव्याः । दक्षान् भयसंनिधाववसादहेतावप्युत्साहवन्तः । अतन्द्रितान् अनलसान् । उक्तं चाध्यक्षप्रचारे— 'बुद्धिमाननुरक्तश्च युक्तो धर्मार्थकोविदः । शुचिर्दक्षः कुलीनश्च मन्त्री यस्य स राज्यभाक् ॥ तस्मिन्निक्षिप्य कार्याणि भोगसङ्गी न नश्यति । राजवश्यविधिस्तेन दानानुग्रहणैरिति ॥' । * मेधा.

(२) अस्य राज्ञः कर्मजातं यत् कर्तव्यं तत् यत्संख्याकैर्मनुष्यैः संपद्यते तत्संख्यान् अनलसान् चतुरान् तत्कर्मज्ञान् कुर्वीत । ¶ गोरा.

(३) अतन्द्रितान् प्रमादशून्यान् । इतिकर्तव्यता कार्यम् । मवि.

(४) अनिन्दितान् प्रशस्तान् । † नन्द.

## याज्ञवल्क्यः

राज्ञः कर्तव्यं मन्त्रिवरणम्, मन्त्रिगुणसंपत्, ब्राह्मणप्राधान्यं मन्त्रणे, मन्त्रणपद्धतिः

[1]स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान्स्थिरान्शुचीन् ।
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥

(१) एवंगुणोऽपि किममात्येनेति नैवमतिमानी स्यात्, किं तर्हि ? एवंगुण एव यः— स मन्त्रिण इति । तथा च मनुः— 'अपि यत् सुकरं कर्म तदप्येकेन दुष्करम् । विशेषतोऽसहायेन किमु राज्यं महोदयम् ॥' (मस्मृ. ७।५५) इति । मन्त्रिवचनं च सर्वसचिवोपलक्षणार्थम् । तथा चाऽऽह— 'निर्वर्तेतास्य

* शेषं गोरागतम् ।

¶ कौटिलीयार्थशास्त्रानुसारेण समाहर्तृसंनिधात्रोः नैक्यम् । अतोऽत्र समुच्चयार्थकः चकारः आवश्यकः इति प्रतीयते ।

‡ मवि. गोरागतम् ।

† शेषं गोरागतम् ।

§ शेषं मचगतम् ।

(१) **मस्मृ.** ७।६० ; **राक.** ३० सम्यग (आप्तान) ; **मवि.** 'अवस्थितान्' इत्यत्र 'कुलोद्गतान्' इत्यपि पाठः ; **राप्र.** १८५ राकवत् ; **नीम.** ४२ नमात्यान् (न्सामान्यान्).

(२) **मस्मृ.** ७।६१ ; **विश्व.** १।३०७ ; **गोरा.** निर्वर्ते (निवर्ते) ; **राक.** ३० गोरावत् ; **मच.** गोरावत् ; **राप्र.** १८५ गोरावत् ; **नीम.** ४२ गोरावत् ; **नन्द.** तन्द्रितान् (निन्दितान्) ; **भाच.** गोरावत्.

* मच. मेधागतं गोरागतं च ।

¶ ममु., भाच. गोरागतम् ।

† शेषं गोरागतम् ।

(१) **यास्मृ.** १।३१२ ; **विश्व.** १।३०७ द्राज्यं (त्कार्यं) ; **मिता.** ; **अप.** १।३१०-३११ ; **राक.** २२ स मन्त्रिणः (सन्मन्त्रिणः) ; **रार.** १० स मन्त्रिणः (मन्त्रिणस्तु) ; **पमा.** ४०५ स मन्त्रिणः (सुमन्त्रिणः) ; **वीमि.** ; **राप्र.** १७७ ; **नीम.** ४९.

यावद्भिरितिकर्तव्यता नृभिः। तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥' (मस्मृ. ७।६१) इति। प्रधानमन्त्र्यर्थं चैतद्वचनम्। कार्यतस्त्वन्यकरणाविरोधः। दृष्टार्थत्वाचान्यमन्त्र्यभाव एव करणम्। यस्तु पैतृकादिकमन्यदीयं वा राज्यमवाप्नुयात् स यदि तद्राज्ययोग्यं पूर्वामात्यानामात्मविशिष्टमधिकं वाऽन्यं मन्येत ततः प्रकृत्यकोपक्रमेण सर्वान्नेवैवंगुणानन्यान् मन्त्रिणः कुर्यात्। प्रशब्दश्चोक्तन्यायेन प्रकर्षालोचनार्थः। ते च प्राज्ञाः विवेकिनः। मौलाश्च मूलं राज्यं तदर्हाः मौलाः, राज्यविस्तारक्षमा इत्यर्थः। मूलतो वा ज्ञाताः महाकुलीनाः। मूलक्रमागताः वा, ते ह्यधिकारात् प्रच्याविता अपि सत्येव सामर्थ्येऽनुरागातिरेकात् कुलाङ्कुशोपग्रहात् वा विरोधानारम्भकाः। स्थिराः सर्वापत्सहिष्णवः अनन्यगामिनः साध्वारम्भकाश्च। शुचयः धर्मार्थकामभयोपधाशुद्धाः। प्रदर्शनार्थं चैतत्। सर्वथा लोकतः शास्त्रतश्च आलोच्य यथार्हं स्वाधिकारानुसारेण सचिवसंनिवेशः कार्यः। यथाऽऽह बृहस्पतिः— 'स्वधर्मविदनुरक्तः शुचिरनुद्धत उद्युक्तो देशकालविन्नीतिनिगमेतिहासकुशलोऽव्यसनी मृदुरर्थशास्त्रकृतयोग्यो हस्त्यश्वपुरुषाचाराहोरात्रयामनिर्गमविनिश्चितमतिश्च स्वपरबलाबलज्ञो बलाधिकृतः सेनापतिः स्यात्। कुलाढ्य उद्युक्तो मृदुरुदात्तः समरचित्तः शूरोऽनुरक्तोऽभेद्यः पत्तिविशेषज्ञ इङ्गिताकारकुशलः प्रतिहारः स्यात्। वनकुलकालजातिसात्म्यगुणवयःशीलायुरादानगमनकल्पनावान् व्यपगतभयो विजयोर्जितमना हस्त्यध्यक्षः स्यात्। क्षेत्रजातिसात्म्यगुणलक्षणवाहनास्त्रज्ञः अत्यर्थसमर्थः शुचिरनुद्धतोऽनुरूपोऽश्वाध्यक्षः स्यात्। संधिभेदसंधानस्थानज्ञोऽनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालज्ञो दर्शनीयो नीतिगतिज्ञः प्राज्ञो वाग्मी दूतः स्यात्। उभयत उत्तमवंशप्रभवः शुद्धो मनुबृहस्पत्युशनःशास्त्रवित् दण्डनीत्यादिकुशलोऽशठोऽजिह्मः संमानासंमानाविकृतो विगतभीः कार्याकार्यविनिश्चितमतिरहार्यः सर्वोपधाशुद्धो गूढमन्त्रो मन्त्री स्यात्। अविकार्योऽविकलेन्द्रियः प्रतापवान् सुभगः सुमुखोऽकृपणोऽप्रमादी दक्षो दाक्षिण्यचारित्ररक्षणार्थमधिकरणसंदिग्धविवेकक्रुदुपरिकः स्यात्।' इति। एवं च भाण्डागारान्तःपुरमहानसशय्याग्रहाद्यधिकृता यथार्हं विविच्य व्याकरणीयाः। एवं बृहस्पत्युशनःशास्त्रमतेन सर्वसचिवान् यथार्थं राजा कृत्वा तैः सार्धं यथार्हं सामान्यं च मन्त्रयित्वा व्यस्तसमस्ताभिप्रायं च विविच्य पश्चात् परमरहस्यगामिना महामन्त्रिसंप्रयुक्तेन विदुषा ब्राह्मणेन सह षाड्गुण्ययुक्तं महोदयं चित्रफलं नयबीजं मन्त्रयेत्। ततस्तद्विश्वासात् स्वयं च तदेव निपुणतोऽपररात्रोत्थितः सम्यग्विविच्यादीर्घसूत्र्येव क्षिप्रमनुतिष्ठेत्। एवमखिलोन्नतिबीजं समासतोऽभिहितं विविच्य विस्तरेण व्याख्येयम्। इत्यलं प्रसङ्गेन।

* विश्व.

(२) एवमभिषेकयुक्तस्यान्तरङ्गान् धर्मानभिधाय इदानीं बहिरङ्गानाह— स मन्त्रिण इति। मौलान् स्ववंशपरम्परायातान्। स्थिरान् महत्यपि हर्षविषादस्थाने विकाररहितान्। ते च सप्ताष्टौ वा कार्याः। यथाऽऽह मनुः— 'मौलाञ्छास्त्रविदः शूराँल्लब्धलक्षान् कुलोद्भवान्। सचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान् ॥' (मस्मृ. ७।५४) इति। एवं मन्त्रिणः पूर्वं कृत्वा तैः सार्धं राज्यं संधिविग्रहादिलक्षणं कार्यं चिन्तयेत् समस्तैः व्यस्तैश्च। अनन्तरं तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचारकुशलेन ब्राह्मणेन पुरोहितेन सह कार्यं विचिन्त्य ततः स्वयं बुद्ध्या कार्यं चिन्तयेत्।

† मिता.

(३) मन्त्रिणः कार्याकार्यविदः प्राज्ञान् ऊहापोहसमर्थान् स्थिरान् स्वामिहितेष्वचञ्चलान् प्रकुर्वीत प्रयत्नादुपाददीत। अथ तैः सह राज्यं राजकर्म षाड्गुण्यं तदङ्गानि च स्वाम्यादीनि चिन्तयेत् हेयोपादेयतया विचारयेदित्यर्थः। अथ षाड्गुण्यविदा पुनर्विप्रेण सह विचारयेत्। पुनश्च स्वयं तमेवार्थं साधकबाधकप्रमाणवत्तया निश्चिनुयात्।

$ अप.

* दीक. विश्वगतं मितागतं च।

† शेषं विश्वगतम्। राक., रार., पमा. मितागम्।

$ शेषं मितागतम्। राप्र. अपानुवादप्रायं शेषं च मितागतम्।

( ४ ) एवं राज्ञोऽन्तरङ्गान् धर्माननिभधाय अमात्यं राज्याङ्गं दर्शयन्नेव बहिरङ्गानाह 'विनीय स्थापयेत् पथि' ( यास्मृ. १।३६१ ) इत्यन्तेन– स मन्त्रिण इति। मन्त्रिण इति बहुवचनेन सप्ताष्टौ वा मन्त्रिणः कार्या इत्युक्तम्। * वीमि.

## बृहस्पतिः

मन्त्रिगुणसंपत्, मन्त्रिणः कार्याकार्यविवेकः

[1]उभयत उत्तमवंशप्रभवः शुद्धो मनुबृहस्पत्युशनः-शास्त्रविद्दण्डनीत्यादिकुशलोऽशठोऽजिह्मः संमानासंमानाविकृतो विगतभीः कार्याकार्यविनिश्चितमतिरहार्यः सर्वोपधाशुद्धो गूढमन्त्रो मन्त्री स्यात् ॥

## बार्हस्पत्यसूत्रम्

मन्त्रिवरणं मन्त्रणविधिश्च

[2]आत्मवन्तं मन्त्रिणमापादयेत् ॥

[3]मन्त्रिणा स्वामिनोऽभिमतमुत्सृज्य कार्यं वक्तव्यम् ॥

[4]नमो ( ? यो ) मन्त्रिभिर्निरूप्य कार्यते ॥

बुद्धिजीवनैरमात्यैः सह कार्यमकार्यं च निरूपयेत् ॥

अहितमपि कार्यं यस्य प्रतिभाति स मन्त्रयोग्यः ॥

## कात्यायनः

प्रशस्तमन्त्रिवरणम्; न्याय्यमन्त्रणे राज्ञा कोपो न कार्यः

[5]एतैरेव गुणैर्युक्तममात्यं कार्यचिन्तकम्।
ब्राह्मणं तु प्रकुर्वीत नृपभक्तं कुलोद्भवम् ॥

[1]मन्त्रिणो यत्र सभ्याश्च वैद्याश्च प्रियवादिनः।
राज्याद्धर्मात्सुखात्तत्र क्षिप्रं हीयेत पार्थिवः ॥

( १ ) मन्त्रिणो राजकृत्येषु। सभ्याः प्रायश्चित्तादौ। वैद्याः चिकित्सायाम्। राक. २४

( २ ) प्रियवादिनः असत्यप्रियवादिनः। मन्त्रिणः यत्र राज्यकृत्येषु प्रियवादिनः तत्र पार्थिवो राज्याद्धीयेत। सभ्याः प्रायश्चित्तादौ, तत्र धर्मात्। वैद्याश्चिकित्सायाम्, तत्र सुखात्। राप्र. १७८

न तस्य वचने कोपमेतेषां तु प्रवर्तयेत्।
यस्मादेतैः सदा वाच्यं न्याय्यं सुपरिनिष्ठितम् ॥

तस्य न्याय्यस्य। राप्र. १७८

## व्यासः

मन्त्रिगुणसंपत्

[2]स्मृतिस्तत्परमार्थेषु वितर्के ज्ञाननिश्चयः।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुरुः ॥

मन्त्रिण इत्यार्षत्वादेकवचनम्। रार. ११

## बृहत्पराशरः

मन्त्रिवरणं मन्त्रिसंमानश्च

[3]अमात्यान्मन्त्रिणो दूतान्यथोदितपुरोहितान्।
प्राड्विवाकं सभास्तारान् हितानारक्षकानपि ॥

पाराशरे 'अमात्यान्०' इत्यादिना* – सप्त पञ्च वा यथोक्तगुणविशिष्टा मौला अमात्याः कर्तव्याः। एकश्च राजगुणसमानगुणो ब्राह्मणोऽमात्यः कर्तव्यः। एते चामात्या मन्त्रिपदव्यपदेशभाजोऽपि– इत्युक्तम्। राप्र. १७८

[4]अमात्यमन्त्रियोद्धॄणां संमानं नित्यशोऽपि च ॥

---

* शेषं विश्वगतं मितागतं अपगतं च।

(१) विश्व. १।३०७.
(२) बासू. १।२.
(३) बासू. २।४२.
(४) बासू. ६।४–६.
(५) राक. २४ लोद्भवम् ( लोद्गतम् ); राप्र. १७८.

* आदिपदग्राह्याः श्लोकाः पाराशरस्मृतौ नोपलभ्यन्ते।

(१) राक. २४; राप्र. १७८.
(२) रार. ११.
(३) बृपसं. १२।११ उत्तरार्धे ( प्राड्विवाकान् समस्तान् वा हितांश्च रक्षकानपि ॥ ); राप्र. १७८ पाराशरः.
(४) बृपसं. १२।१७.

## आश्वलायनः

मन्त्रिगुणसंपत् मन्त्रिवरणं च

[1]तस्माच्छीलकुलाचारवयोशील(?)गुणान्वितम् ।
सर्वविद्यासु निष्णातं कुर्यादादौ पुरोहितम् ॥
तादृशांश्च तथाऽमात्यान्मन्त्रिणः प्रणिधीनपि ॥
[2]मौलानाढ्यानृजून्देश्यान्दान्तान्सत्यपराञ्शुचीन् ।
चौक्षान् पुत्रादिभिर्मुक्तानमात्यादींश्च कारयेत् ॥

## विष्णुधर्मोत्तरम्

मन्त्रिगुणसंपत्, मन्त्रिणः कार्याकार्यविवेकः

पुष्कर उवाच–

[3]सर्वलक्षणलक्षण्यो मन्त्री राज्ञस्तथैव च ।
ब्राह्मणो वेदतत्त्वज्ञो विनीतः प्रियदर्शनः ॥
[4]स्थूललक्षो महोत्साहः स्वामिभक्तः प्रियंवदः ।
बृहस्पत्युशनःप्रोक्तां नीतिं जानाति सर्वतः ॥
[5]रागद्वेषेण यत्कार्यं न वदन्ति महीक्षितः ।
लोकापवादाद्राजार्थे भयं यस्य न जायते ॥
[6]क्लेशक्षमस्तथा यश्च विजितात्मा जितेन्द्रियः ।
गूढमन्त्रश्च दक्षश्च प्राज्ञो भक्तजनप्रियः ॥
[7]इङ्गिताकारतत्त्वज्ञ ऊहापोहविशारदः ।
शूरश्च कृतविद्यश्च न च मानी विमत्सरः ॥

(१) आश्व. ८।३१–३२.

(२) आश्व. ८।३३–३४.

(३) विध. २।६।१ ; राकौ. २५१ थैव च ( था भवेत् ).

(४) विध. २।६।२ ; राकौ. २५१ लक्षो महोत्साहः ( लक्ष्यो महात्मा च ) 'महोत्साहः' इत्यपि पाठः.

(५) विध. २।६।३ ; राकौ. २५१ यत्कार्यं न वदन्ति ( यः कार्यं न च हन्ति ).

(६) विध. २।६।४ ; राकौ. २५१ स्तथा यश्च ( स्तु धर्मात्मा ).

(७) विध. २।६।५ ; राकौ. २५१.

[1]चारप्रचारकुशलः प्रणिधिप्रणयात्मवान् ।
षाड्गुण्यविधितत्त्वज्ञ उपायकुशलस्तथा ॥

उपायाश्च सामदानभेददण्डाः, तेषु कुशलः यथायोग्यं तत्प्रयोगसमर्थः । राकौ. २५१

[2]वक्ता विधाता कार्याणां नैव कार्यातिपातिता ।
समश्च राजभृत्यानां तथैव च गुणप्रियः ॥
[3]कालज्ञः समयज्ञश्च कृतज्ञश्च जनप्रियः ।
कृतानामकृतानां च कर्मणां चान्ववेक्षिता ॥

कालज्ञः शकुनगणिताद्युपायैर्भविष्यत्कार्यकालवेलाभिज्ञः । समयज्ञः कार्योचितावसरज्ञः । कृतज्ञः * । कृतानामकृतानां च कर्मणामन्वहं वेदिता ।
राकौ. २५२

[4]यथानुरूपमर्हाणां पुरुषाणां नियोजिता ।
राज्ञः परोक्षे कार्याणि संपराये भृगूत्तम ॥

संपराये परराष्ट्रप्रवासे । राकौ. २५२

[5]कृत्वा निवेदिता राजन् कर्मणां गुरुलाघवम् ।
शत्रुमित्रविभागज्ञो विग्रहास्पदतत्त्ववित् ॥
[6]स राज्ञः सर्वकार्याणि कुर्याद् भृगुकुलोद्वह ।
विदितानि यथा कुर्यान्नाज्ञातानि महीक्षिता ॥

* अत्र व्याख्यानं प्रभ्रष्टमिति प्रतीयते ।

(१) विध. २।६।६ ; राकौ. २५१ प्रणिधिप्रणयात्मवान् ( प्राणिभिः प्रणयात्मकः ) ज्ञ उपाय ( ज्ञश्चोपाय ).

(२) विध. २।६।७ ; राकौ. २५२ वक्ता विधाता ( वेत्ता विधानात् ).

(३) विध. २।६।८ ; राकौ. २५२ पू., उत्तरार्धं प्रभ्रष्टमिति व्याख्यानात्प्रतीयते.

(४) विध. २।६।९ ; राकौ. २५२ परोक्षे ( परीक्षेत् ).

(५) विध. २।६।१० ; राकौ. २५२ राजन् (राज्ञे) विग्रहास्पद ( विग्रहस्य च ).

(६) विध. २।६।११ ; राकौ. २५१ पू. : २५२ विदितानि यथा ( विज्ञातानि तथा ) क्षिता ( क्षितः ).

[1]अज्ञातानि नरेन्द्रस्य कृत्वा कार्याणि भार्गव ।
अचिरेणापि विद्वेषं स मन्त्री त्वधिगच्छति ॥
[2]करोति यस्तु कार्याणि विविधानि महीपते ।
भेदो नो तस्य भवति कदाचिदपि भूभुजा ॥
[3]एवंगुणो यस्य भवेच्च मन्त्री
वाक्ये च तस्याभिरतस्य राज्ञः ।
राज्यं स्थिरं स्याद्विपुला च लक्ष्मी-
र्वंशश्च दीप्तो भुवनत्रयेऽपि ॥
[4]सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः ॥
[5]राजा विभूतिमाप्नोति चिरं यशसि तिष्ठति ।
त एनं मृगयासक्तं धारयन्ति विपश्चितः ॥
[6]स्त्रीषु माने तथाऽक्षेषु वृथा ज्यायांश्च ( ? वृथा-
टयायां च ) भार्गव ।
करप्रणयने सक्तं हिंसायां च नराधिपम् ॥
तथा परोक्षनिन्दायां बलवद्विग्रहेऽपि च ।
अन्येषु चाप्यनर्थेषु प्रसक्तं वारयन्ति तम् ॥

## अग्निपुराणम्

मन्त्रिवरणम्, मन्त्रिगुणसंपत्

[7]मन्त्रिणश्चाखिलात्मज्ञान् ( राजा वृणुयात् ) ॥
[8]कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः ॥

---

(१) विध. २।६।१२; राकौ. २५२ स मन्त्री त्वधि ( मन्त्री समाधि ).

(२) विध. २।६।१३; राकौ. २५२ विविधानि महीपते ( विदितानि महीपतेः ).

(३) विध. २।६।१४; राकौ. २५३ पूर्वार्धे ( एवंगुणो यस्तु भवेत्तु मन्त्री कार्ये वचस्यभिरतः स राज्ञः। ) र्वंशश्च दीप्तो ( र्यशश्च दीप्तिः ).

(४) विध. २।१५१।२७; राप्र. ३१२ सांवत्सराणां ( सञ्चराणां च ).

(५) विध. २।१५१।२८; राप्र. ३१२ पू.

(६) विध. २।१५१।२९–३०.

(७) अग्नि. २१८।४.

(८) अग्नि. २३९।११–२३.

दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः ।
सुविग्रहो जानपदः कुलशीलकलान्वितः ॥
वाग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान् ।
स्तम्भचापलहीनश्च मैत्रः क्लेशसहः शुचिः ॥
सत्यसत्त्वधृतिस्थैर्यप्रभावारोग्यसंयुतः ।
कृतशिल्पश्च दक्षश्च प्रज्ञावान् धारणान्वितः ॥
दृढभक्तिरकर्ता च वैराणां सचिवो भवेत् ।
स्मृतिस्तत्परताऽर्थेषु चित्तज्ञो ज्ञाननिश्चयः ॥
दृढता मन्त्रगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिता ॥

मन्त्रिगुणपरीक्षा

साधुतैषाममात्यानां तद्विद्यैः सह बुद्धिमान् ॥
चक्षुष्मत्तां च शिल्पं च परीक्षेत गुणद्वयम् ।
स्वजनेभ्यो विजानीयात्कुलं स्थानमवग्रहम् ॥
परिकर्मसु दक्षं च विज्ञानं धारयिष्णुताम् ।
गुणत्रयं परिक्षेत प्रागल्भ्यं प्रीततां तथा ॥
कथायोगेषु बुध्येत वाग्मित्वं सत्यवादिताम् ।
उत्साहं च प्रभावं च तथा क्लेशसहिष्णुताम् ॥
धृतिं चैवानुरागं च स्थैर्यं चाऽऽपदि लक्षयेत् ।
भक्तिं मैत्रीं च शौचं च जानीयाद्व्यवहारतः ॥
संवासिभ्यो बलं सत्त्वमारोग्यं शीलमेव च ।
अस्तब्धतामचापल्यं वैराणां चाप्यकीर्तनम् ॥
प्रत्यक्षतो विजानीयाद्भद्रतां क्षुद्रतामपि ।
फलानुमेयाः सर्वत्र परोक्षगुणवृत्तयः ॥

## कालिकापुराणम्

मन्त्रिगुणसंपत्

[1]मन्त्रिणस्तु नृपः कुर्याद्विप्रान् विद्याविशारदान् ।
विनयज्ञान् कुलीनांश्च धर्मार्थकुशलानृजून् ॥

## कामन्दकीयनीतिसारः

मन्त्रिसंख्याविचारः

[2]द्वादशेति मनुः प्राह षोडशेति बृहस्पतिः ।
उशना विंशतिरिति मन्त्रिणां मन्त्रिमण्डलम् ॥

---

(१) कालिका. ८७।१०२.

(२) कानी. १२।४८–४९.

(१) यतो मन्त्रज्ञानं तन्मन्त्रिमण्डलम् । तत्र वृत्तं चतुर्भिः श्लोकैराह– द्वादशेत्यादि । उत्तरमन्त्रिव्यतिरेकेणेयं चिन्ता । तत्रोत्तरमन्त्रिणस्त्रयश्चत्वारो वा कर्तव्याः । तद्व्यतिरेकेणान्ये द्वादशराजकेतिकर्तव्यतापरिज्ञानाय द्वादश मन्त्रिणः स्युः । षोडशेति । एते चान्ये चारिविजिगीषु-मध्यमोदासीनेषु चतुर्षु मण्डलेषु द्रव्यप्रकृतिपञ्चकस्वरूप-विदश्चत्वार इति । विंशतिरिति । दशराजके तत्स्वरूप-विदो दश द्रव्यप्रकृतिविशेषविदश्च दशेति । जम.

(२) त्रिचतुःसंख्यमहामन्त्रिव्यतिरिक्तं मन्त्रिमण्डल-माह– द्वादशेतीति । मन्त्रिमण्डलं मनुः मन्त्रिणां द्वादशेति बृहस्पतिः षोडशेति उशना विंशतिरिति प्राह । मनुमतेन द्वादशमन्त्रिपरिकल्पितं बृहस्पतिमतेन षोडश-मन्त्रिपरिकल्पितं उशनसो मतेन विंशतिमन्त्रिपरिकल्पितं मन्त्रिमण्डलमिति तात्पर्यम् । उनिसा.

**याथासंभवमित्यन्ये ............ ॥**

(१) अन्ये कौटिलीयाः । यस्य यावन्तो गुरु-लघुकार्यापेक्षया संभवन्ति तस्य तावन्तः स्युः । तस्यैव कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं प्रकल्प्यते । जम.

(२) यदि मन्त्रिगुणसंपन्ना बहवो मन्त्रिणो भवन्ति, तेषां कार्यं च पर्याप्तं तदा बहुकल्पितमेव मण्डलमिष्यते । तथा च कौटिल्यः– ' इन्द्रस्य हि परिषदृषीणां सहस्रं समभवत्, तच्च तच्चक्षुः, तस्मादिन्द्रं सहस्राक्षमाहुः ' (कौ. १।१५) इति । एतदेवाऽऽह– यथासंभवमित्यन्य इति । अन्ये यथासंभवमिति, मन्त्रिमण्डलमाहुरिति शेषः । उनिसा.

**[1]एकत्र पञ्च सप्तापि वैषम्यक्रियया युताः ।**
**मन्त्रिणो भूभुजा कार्या इति केचिद्वदन्ति वै ॥**

मन्त्रिनियोगरीतिमाह– एकत्रेति । भूभुजा एकत्र एकस्मिन् कर्तव्ये देशविशेषस्य शासने वा विपक्षविशेषेण संधिविग्रहादौ वा खनिजद्रव्यानुसंधाने वा करसंग्रहे वा प्रजानां धनधान्यादिरक्षणे वा वैषम्यक्रियया युताः कार्याणामवान्तरभेदात् पृथक् पृथक् कार्यचिन्तने नियुक्ता इत्यर्थः, पञ्च सप्तापि, अपिशब्दात् अधिका अपि मन्त्रिणः कार्याः । एकैकस्मिन् कार्ये भिन्नभिन्नविषयेषु पृथक् पृथक् मन्त्रिणः नियोज्या इति भावः । इति केचित् वदन्ति । श्लोकोऽयमपि मुद्रिते पुस्तके न धृतः । उनिसा.

(१) कानी. १२।४९ इत्यस्यानन्तरं उपाध्यायनिरपेक्षा-नुसारिण्यामधिकोऽयं श्लोकः ।

मन्त्रिगुणसंपत्, मन्त्रिपरीक्षणम्

**[1]कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः ।**
**दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः ॥**

(१) अमात्यसंपदमाह चतुर्विंशत्या श्लोकैः– कुलीना इत्यादि । तत्रान्यगुणाभावेऽपि कुलीनत्वादिभिः षड्भिर्गुणैर्युक्ता अमात्याः स्युः । अनुरागिणः स्वामिनि । दण्डनीतेः प्रयोक्तार इति । शेषविद्याव्यापाराणामत्रैव प्रतिष्ठानात् साक्षात् तद्वचनम् । जम.

(२) स्वामिगुणसंपदमभिधाय अमात्यगुणसंपदमभि-धातुं तावत् कर्मामात्यमन्त्रिपर्षदमात्यादीनां यथासंभवं गुणानाह– कुलीना इति । कुलीनाः शुद्धोभयकुल-समुत्पन्नाः । शुचयः इति स्वभावेन शौचपराः । शूराः अभीरवः । श्रुतवन्तः आन्वीक्षिक्यादि श्रुतं विद्यते येषां ते इति, ज्ञातारः । अनुरागिणः स्वामिन्यनुरागवन्तः । दण्डनीतेः प्रयोक्तारः अस्यैव नीतिशास्त्रस्य प्रयोक्तारः । सचिवाः विचिन्वन्ति स्वामिना सहार्थानिति अमात्याः । स्युः भवेयुः । महीपतेः विजिगीषोः । कौटिल्येनैतदुक्तम्– ' अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तान् अमात्यान् कुर्वीत ' (कौ. १।८) इति । उनि.

**[2]उपधाशोधिताः सम्यगीहमानाः फलोदयम् ।**
**तेऽस्य सर्वं परीक्षेरन् सानुरागाः कृताकृतम् ॥**

(१) ते च राज्ञः किं कुर्युरित्याह– उपधाशोधिता इति । शुचयोऽप्युपधाभिः परीक्षणीयाः । उक्तं च– ' चित्तानित्यत्वान्मनुष्याणाम् । अश्वसधर्माणो हि मनुष्याः कर्मसु नियुक्ता विकुर्वते ' (कौ. २।९) इति । ईहमानाः फलोदयं राज्ञः । कृताकृतं कार्यम् । जम.

(२) शुचीनामप्युपधाशोधनं सूचयन्नाह– उपधेति । चतस्र उपधाः– धर्मोपधा अर्थोपधा कामोपधा

(१) कानी. ४।२४ ; नीम. ४९.
(२) कानी. ४।२५–२७.

भयोपधा चेति । तद्यथा– ' अधार्मिकोऽयं राजा साध्वेनं हत्वा अन्यमुपपादयामः ' इति । प्रत्याख्याने शुचिः । इति धर्मोपधा । ' लुब्धोऽयं न ददाति, अतो वञ्चनीयः ' इति । प्रत्याख्याने शुचिः । इत्यर्थोपधा । ' राजमहिषी त्वां कामयते कृतसमागमोपाया ' इति । प्रत्याख्याने शुचिः । इति कामोपधा । एकोऽमात्यः सर्वानावाहयेत् । तेनोद्वेगेन किल राजा तानवरुन्ध्यात् । कापटिकश्छात्रः पूर्वावरुद्धः तेषामेकैकममात्यं भयदर्शनेन राजवधार्थमुपनयेत् । तत्प्रत्याख्याने शुचिः । इति भयोपधा । तत्र कौटिल्यमतम्– ' न त्वेव कुर्यादात्मानं देवीं वा लक्ष्यमीश्वरः । शौचहेतोरमात्यानामेतत् कौटिल्यदर्शनम् ॥ ' ( कौ. १।१० ) इति । एवमुपधाशोधिताः सम्यगीहमानाः फलोदयम् । अस्येति स्वामिनः सर्वं तन्त्रावापगतं कार्यं परीक्षेरन् निरूपयेयुः । सानुरागाः कृतदानत्वादनुरागयुक्ताः । कृताकृतं किं कृतं वा न कृतमिति । उनि.

**उपेत्य धीयते यस्मादुपधेति ततः स्मृता ।**
**उपाय उपधा ज्ञेया तयाऽमात्यान् परीक्षयेत् ॥**

( १ ) केयमुपधेत्याह– उपेत्य धीयत इति । भावपरीक्षणार्थमुपेत्य धीयते स्फटिकमणिवत् रागेणोपधीयत इत्युपधा उपायः धर्माद्यालम्बना उपजापक्रिया । तया अमात्यान् परिक्षेत सामान्येष्वधिकरणेषु स्थापयित्वा । तथा चोक्तम्– ' मन्त्रिपुरोहितसखः सामान्येष्वधिकरणेषु स्थापयित्वाऽमात्यानुपधाभिः शोधयेत् । पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजाऽवक्षिपेत् । स सत्रिभिः शपथपूर्वमेकैकममात्यमुपजापयेत्– अधार्मिकोऽयं राजा, साधु धार्मिकमन्यमस्य कुलीनमवरुद्धं कुल्यमेकप्रग्रहं सामन्तमाटविकमौपपादिकं वा प्रतिपादयामः । सर्वेषामेतद्रोचते । कथं वा तवेति । प्रत्याख्याने शुचिः । इति धर्मोपधा । सेनापतिरसत्प्रग्रहणोपक्षिप्तः सत्रिभिः शपथपूर्वमेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशाय– सर्वेषामेतद्रोचते । कथं वा तवेति । प्रत्याख्याने शुचिः । इत्यर्थोपधा । प्रव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा महामात्रमेकैकमुपजापयेत्– राजमहिषी त्वां कामयते कृतसमागमोपाया । महानर्थश्च ते भविष्यतीति । प्रत्याख्याने शुचिः । इति कामोपधा । प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत् । तेनोद्वेगेन राजा तानवरुन्ध्यात् । कापटिकश्छात्रः पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजापयेत्– असत्प्रवृत्तोऽयं राजा, सहसैनं हत्वाऽन्यं प्रतिपादयामः । सर्वेषामेतद्रोचते । कथं वा तवेति । प्रत्याख्याने शुचिः । इति भयोपधा ' ( कौ. १।१० ) इति । जम.

( २ ) उपधाशब्दस्य निरुक्तिमभिधातुमाह– उपेत्येति । उप समीपं एत्य धीयते ढौक्यते यस्मादुपधेति ततः स्मृता । उपायः उपजापप्रयोगः उपधा ज्ञेया । तयाऽमात्यान् परीक्षयेत् । उनि.

**स्ववग्रहो जानपदः कुलशीलबलान्वितः ।**
**वाग्ग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान् ॥**

( १ ) स्ववग्रह इत्यादिना समुचितगुणानाह । जानपदः न अटव्यां भवः अनार्यकर्मा । स्वजनपदप्रभवो वा, न परजनपदप्रभवः । स हि संवासात्तत्प्रतिपादनशीलो भवति । कुलान्वितः ब्राह्मणोऽन्यो वा कुलपुत्रत्वान्न व्यभिचरति । चक्षुष्मानिति । चक्षुः शास्त्रम्, तद्वान् विशुद्धदर्शनत्वात् नोत्पथं प्रतिपद्यते । प्रतिपत्तिमान् भयस्खलितेष्वाशु प्रतिविधाता । जम.

( २ ) सामान्यतः अमात्यानां गुणसंपदमभिधाय मन्त्रिसंपदमभिधातुमाह– स्ववग्रह इति । उन्मार्गप्रवृत्तममात्यं येऽवगृह्णन्ति प्रभविष्णुतया विधृत्य निवारयन्ति बन्धुप्रभृतयस्तेऽवग्रहाः । शोभनतरा अवग्रहा यस्यासौ स्ववग्रहः, शोभनतरशृङ्खलक इत्यर्थः । स तद्भयात् नाकर्तव्ये प्रवर्तते । जानपद इति विजिगीषुजनपदभवः स्वजन्मभूमिवात्सल्यात् तद्विरुद्धं न समाचरति । कुलं आभिजात्यम्, शीलं सुस्वभावता, बलं च कायबलम्, तेनान्वितः । वाग्ग्मी प्रशस्तवाक् । प्राशस्त्यं च वाचां स्वल्पैरक्षरैरतिमनोहरैरनल्पार्थप्रतिपादनम् । प्रगल्भः अपरिषद्भीरुः । चक्षुष्मान् शास्त्रमेव चक्षुः, तद्युक्तः । उत्साही गुणत्रययुक्तेनोत्साहेनान्वितः । तथा च कौटिल्यः– ' शौर्यममर्षो दाक्ष्यं चोत्साहगुणाः '

( कौ. ६।१ ) इति। प्रतिपत्तिः उत्पन्नप्रतिभा, तथा युक्तः। उनि.

[1]स्तम्भचापलहीनश्च मैत्रः क्लेशसहः शुचिः।
सत्यसत्त्वधृतिस्थैर्यप्रभावारोग्यसंयुतः॥

( १ ) मैत्र इति मित्रेषु कुशलः, मित्रार्जनकुशल इत्यर्थः। क्लेशसहः शीतोष्णादिदुःखसहः। धृतिः सौमनस्यम्। स्थैर्यं अन्यत्रागमनम्। प्रभावः प्रभुत्वम्। आरोग्यं दोषधातूनां साम्यं कर्माङ्गम्। जम.

( २ ) स्तम्भः स्तब्धता, चापलं अप्रतिष्ठितत्वम्, ताभ्यां हीनः। मैत्रः मित्रहितः, स बहुमित्रो भवतीति। क्लेशसहः क्षुत्तृडादिक्लेशान् सहत इति। शुचिः चतुरुपधाशुद्धः। सत्त्वं व्यसनेऽभ्युदये यदविकारि। सत्यं अमृषावादः। धृतिः अविषादित्वम्। स्थैर्यं स्थितेरविचलत्वम्। प्रभावः प्रभुता। आरोग्यं नीरोगता। तैः संयुतः। उनि.

[2]कृतशिल्पश्च दक्षश्च प्रज्ञावान् धारणान्वितः।
दृढभक्तिरकर्ता च वैराणां सचिवो भवेत्॥

( १ ) धारणान्वितः धारयिष्णुः। तस्याः प्रज्ञागुणत्वात् पुनरुपादानं प्राधान्यार्थम्। अकर्ता वैराणां प्रतिकर्ता विरोधानाम्। शेषाः पूर्वं व्याख्याताः। जम.

( २ ) कृतशिल्पः अभ्यस्तसकलकलाकलापः। दक्षः शीघ्रकारी। प्रज्ञावान् अष्टगुणबुद्धियुक्तः। धारणं अविस्मरणम्, तदन्वितः। दृढभक्तिः अचलानुरागः। अकर्ता वैराणामिति स्वामिकृतवैराणामपि प्रशमयिता। सचिवः मन्त्री भवेत्। उनि.

[3]स्मृतिस्तत्परताऽर्थेषु वितर्को ज्ञाननिश्चयः।
दृढता मन्त्रगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिता॥

( १ ) एते गुणा बुद्धिसचिवानां कर्मसचिवानां च साधारणाः। बुद्धिसचिवस्य तु प्राधान्येन विशेषमाह– स्मृतिरित्यादिना। स्मृतिः अनेकवर्षान्तरितेष्वप्यविस्मरणम्। तत्परताऽर्थेषु दुर्गादिषु संध्यादिषु च कार्येष्वैदंपर्यम्। वितर्कः विचारः। सर्वज्ञाननिश्चयः एवमेवैतन्नान्यथेति। दृढता यत् कार्यं प्रस्तुतं तत्र दाढर्यम्। मन्त्रगुप्तिः आ कार्यसिद्धेः। जम.

( २ ) तथाऽन्यानपि मन्त्रिगुणानाह– स्मृतिरिति। स्मृतिः धारणा। धारणान्वित इत्युक्तोऽपि गुणः पुनरुच्यते आदरप्रदर्शनार्थम्। तत्परताऽर्थेषु रत्नादिष्वितितात्पर्यम्। वितर्को बुद्धिगुणमध्ये पठितोऽपीह पुनरुच्यते आदरार्थम्। ज्ञानं यथार्थरूपम्, तन्निश्चयः। दृढता दृढमतिता। दृढभक्तित्वेन प्रतिपादिताऽपि पुनरुच्यते आदरार्थम्। मन्त्रगुप्तिः पञ्चाङ्गमन्त्रगोपनम्। इति मन्त्रिसंपत् प्रकीर्तिता एभिर्मन्त्री संपद्यत इति। उनि.

[1]साधु तेषाममात्यानां तद्विद्येभ्यस्तु बुद्धिमान्।
चक्षुष्मत्तां च शिल्पं च परीक्षेत गुणद्वयम्॥

( १ ) कथममात्यगुणा ज्ञेया इति चेत् प्रमाणत्रयात्। राज्ञां हि प्रत्यक्षपरोक्षानुमानानि त्रीणि प्रमाणानि। यथोक्तम्– 'प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। स्वयं दृष्टं प्रत्यक्षम्। परोपदिष्टं परोक्षम्। कर्मसु कृतेनाकृतावेक्षणमनुमेयम्।' (कौ. १।९) इति। तदेव दर्शयति– साधु तेषाममात्यानामित्यादि। तद्विद्येभ्यस्तु बुद्धिमानिति। तद्विद्येभ्यः तुल्यशास्त्रशिल्पविद्येभ्यः। स्वयमपि तद्विद्यः चक्षुष्मत्तां शिल्पं च परीक्षेत गुणद्वयम्, समानविद्येभ्य आगमयेदित्यर्थः। जम.

( २ ) अमात्यगुणपरीक्षामभिधातुमाह– साध्विति। तेषामिति अनन्तरोक्तानां सर्वेषां कर्मामात्यबुद्ध्यमात्यादीनाम्। साधु यथा भवति तथा। तद्विद्येभ्य इति। सा एव विद्या परीक्षितुमारब्धा येषां ते तद्विद्याः, तैः सह स्वामी बुद्धिमान् अष्टगुणबुद्धियुक्तः चक्षुष्मत्तां शास्त्रदर्शित्वम्, शिल्पं चित्रादिकर्म कौशलं कलायुक्तमिति द्वयं परीक्षेत। उनि.

---

(१) कानी. ४।२८ ; उनि. सत्यसत्त्व ( सत्त्वसत्य ).
(२) कानी. ४।२९.
(३) कानी. ४।३० ; नीम. ४९.

(१) कानी. ४।३२–३८.

**स्वजनेभ्यो विजानीयात्कुलं स्थानमवग्रहम् ।**
**परिकर्मसु दाक्ष्यं च विज्ञानं धारयिष्णुताम् ॥**

( १ ) स्वजनेभ्यो विजानीयात् कुलं स्थानमवग्रहमिति । स्थानं जनपदः । स्वजना हि विशेषेण कुलादीन् जानन्ति । एभ्य एवाऽऽगमयेदित्यागमप्रदर्शनमेतत् । परिकर्मसु दाक्ष्यं च विज्ञानं धारयिष्णुतां गुणत्रयं परीक्षेतेति संबन्धः । दाक्ष्यं दुर्गादिकर्मस्वनालस्यम् । विज्ञानं प्रज्ञयाऽपूर्वव्युपादनम् । धारयिष्णुता इदं कृतमिदं कार्यं चेति । अतोऽन्यदनुभवादेव, न तु तर्कागमाभ्यां जानीयात् । जम.

( २ ) परीक्ष्य गोत्रजेभ्यो जानीयात् । कुलं आभिजात्यम् । ( आसन्नतरेभ्यः ? ) स्थानं जन्म जनपदं वा । नियामकं च बन्धुवर्गम् । एतत् गुणत्रयम् । तथा परिकर्मसु दुर्गादिकरेषु दाक्ष्यं कौशल्यम् , विज्ञानं विविधं ज्ञानम्, धारयिष्णुतां अवधारणशीलताम् । उनि.

**गुणत्रयं परीक्षेत प्रागल्भ्यं प्रतिभां तथा ।**
**कथायोगेषु बुध्येत वाग्मित्वं सत्यवादिताम् ॥**

( १ ) प्रागल्भ्यं प्रतिभां तथा । कथायोगेषु बुध्येत वाग्मित्वं सत्यवादितामिति । कथाप्रस्तावेषु प्रागल्भ्यादीन् अनुभवादेव जानीयादिति प्रत्यक्षं दर्शनमेतत् । जम.

( २ ) एतच्च गुणत्रयं परीक्षेत इति पूर्वेण संबन्धः । कथायोगेषु स्वामिना पृष्टेषु । प्रागल्भ्यं परिषदभीरुता, प्रतिभा उत्पन्नमतिता, वाग्मित्वं वचनकौशलम्, सत्यवादिता च । एतत् गुणचतुष्टयं कथायां जानीयात् । उनि.

**उत्साहं च प्रभावं च तथा क्लेशसहिष्णुताम् ।**
**धृतिं चैवानुरागं च स्थैर्यं चाऽऽपदि लक्षयेत् ॥**

( १ ) आपदि लक्षयेदिति । आपत्काले उत्साहादींस्तर्कयेत् । तद्यथा- योऽस्यामापदि न विषीदति, न मन्दप्रभावः क्लेशांश्च सहते, सोऽन्यदाऽपि कर्माण्यारभत इति । धृतिं चैवानुरागं च स्थैर्यं चापदीति । अनुरागः प्रागुद्दिष्टः ' सानुरागाः कृताकृतम् ' ( कानी. ४।२५ ) इत्यत्र । अन्तरे यो न स्यात् दुर्मनाः, न विरज्यते, न त्यजति, सोऽन्यदाऽपि सुतरां तथैवेति । जम.

( २ ) उत्साहं शौर्यादिगुणयुक्तत्वम् । प्रभावं ... । क्लेशसहिष्णुतां पीडासहत्वम् । धृतिं अविषण्णत्वम् । अनुरागं स्वामिक्लेशखिन्नस्याप्यविरक्तत्वम् । स्थैर्यं अभङ्गुरत्वम् । इत्येतदपि सङ्ग्रामाध्वदुर्भिक्षकोशक्षयादिकार्यात् लक्षयेत् जानीयादिति । उनि.

**भक्तिं मैत्रीं च शौचं च जानीयाद् व्यवहारतः ।**
**संवासिभ्यो बलं सत्त्वमारोग्यं शीलमेव च ॥**

( १ ) व्यवहारत इति । संव्यवहारात् दृढभक्तित्वादीनि तर्कयेत् । यथेह महत्सु कार्येषु यो न भ्रश्यति, न द्वेष्टि, नार्थशीलो वा भवति, तस्यैते गुणा इत्यनुमानसंदर्शनम् । संवासिभ्य इति । तत्सहोषितेभ्यो बलादीन्यतर्कणीयान्यागमयेत् । जम.

( २ ) भक्तिं स्वामिनि । मैत्रीं बहुमित्रताम् , व्यवहारे कश्चिदपि शत्रुर्न भवतीति । शौचं अर्थधर्मादिविषयम् । एतज्जानीयात् व्यवहारतः । संवासिभ्य इति सम्यक् समं वासो यैस्तेभ्यः बलं कायबलम्, सत्त्वं सुसंधता, आरोग्यम्, शीलम्, एवं जानीयात् । उनि.

**अस्तब्धतामचापल्यं वैराणां चाप्यकर्तृताम् ।**
**प्रत्यक्षतो विजानीयाद्भद्रतां क्षुद्रतामपि ॥**

( १ ) अस्तब्धतामचापल्यं च संवासिभ्य एव इति आगमप्रदर्शनम् । वैराणां अकर्तृतां अकरणम् , भद्रतां लोकप्रियतां प्रत्यक्षत एव जानीयात् । भद्रतागुणश्च ' अक्षुद्रपरिवारता ' ( कानी ४।७ ) इत्यत्र समुद्दिष्टः । तद्विपर्ययेण क्षुद्रताऽपीह निर्दिष्टा । स हि प्रधानत्वात् अन्वयव्यतिरेकाभ्यां परीक्षणीय इति । जम.

( २ ) ' अस्तब्धतामचापल्यं वैराणां चाप्यकर्तृताम् ' इति प्रतीतम् । ' स्वजनेभ्यो विजानीयात् ' इति परोक्षस्य परोपदिष्टत्वात् प्रत्यक्षतो विजानीयात् भद्रतामित्यादि । उनि.

**कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः ।**
**तस्मात्परोक्षवृत्तीनां फलैः कर्म विभावयेत् ॥**

( १ ) परोक्षगुणवृत्तय इति । येषां गुणवृत्तिरन्यतः श्रुता तेषां स्वनिश्चयार्थं पुनः कर्मभिरनुमातव्या, कर्म फलैरिति । जम.

(२) एवं प्रमाणद्वयेन परीक्षामुक्त्वा अनुमानेनाप्यभिधातुमाह— कर्मेति । परोक्षगुणवृत्तय इति । परोक्षाः अप्रत्यक्षाः गुणस्य रामणीयकत्वादिकस्य वृत्तयः । येनैवं केयूराद्याभरणं कृतं सोऽन्यदपि रमणीयं करोतीत्यनुमीयते इति कर्मानुमेयाः परोक्षगुणवृत्तयः । यत एवं तस्मात् परोक्षवृत्तीनां कर्मणां फलैः निष्पत्तिलक्षणैः अनिष्पन्नं कर्म विभावयेत् अनुमिन्वीत । तथा च कौटिल्यः— 'प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः । तत्र स्वयं दृष्टं प्रत्यक्षम् । परोपदिष्टं परोक्षम् । कर्मणा कृतेनाकृतावेक्षणमनुमेयम् ।' (कौ. १।९) इति । प्रमाणाश्रयेण सर्वं परीक्ष्यमिति भावः । उनि.

मन्त्रिणो राजगुरवः, मन्त्रिणां अकार्यकृद्राजनिरोधनं कर्तव्यम्

[१]सज्जमानमकार्येषु निरुन्ध्युर्मन्त्रिणो नृपम् ।
गुरूणामपि चैतेषां शृणुयान्नृपतिर्वचः ॥

(१) अत्र बुद्धिसचिवस्य प्राधान्यात् तद्व्यापारमाह— नवभिः श्लोकैः सज्जमानमित्यादिभिः । निरुन्ध्युः वारयेयुः । एतेषां वचः शृणुयात् । अन्यथा तान् किमर्थं संगृह्णीयात् ? जम.

(२) मन्त्रिणां स्वामिनश्च विधेयमाह— सज्जमानमिति । अकार्येषु शास्त्रनिषिद्धत्वात् व्यसनादिषु सज्जमानं आसक्तिं गच्छन्तं निरुन्ध्युः प्रतिषेधयेयुः आक्रम्य मन्त्रिणो नृपमिति मन्त्रिणां कर्म । गुरूणामिव इहलोकपरलोकदायि जनकाचार्यादीनामिवैतेषां मन्त्रिणां शृणुयात् । श्रवणमत्रानुष्ठानपर्यन्तं ग्राह्यम् । पृथिवीपतिः स्वामी । उनि.

[२]नरेश्वरे जगत्सर्वं निमीलति निमीलति ।
सूर्योदय इवाम्भोजं तत्प्रबोधे प्रबुध्यते ॥

(१) यदि ते न निरुन्ध्युः तदा को दोष इत्याह— नरेश्वर इत्यादि । अकार्यान्धीकृतत्वात् राज्ञि निमीलति सति जगन्निमीलति, अनुष्ठाने सीदतीत्यर्थः । तत्प्रबोध इति । राज्ञः कार्याकार्यालोचनेन प्रबोधे सति प्रबुध्यते स्वधर्मकर्मसु प्रवर्तत इत्यर्थः । जम.

(२) जगतो विनाशाभ्युदययोर्नरेश्वरविनाशाभ्युदयौ हेतू भवत इति दर्शयन्नाह— नरेश्वर इति । नरेश्वरे विजिगीषौ निमीलति विनश्यति जगत् सर्वं मात्स्यन्यायात् क्षयं याति । सूर्योदयेऽम्भोजमिव तत्प्रबोधे नरेश्वरस्याभ्युदये प्रबुध्यते जागर्ति । उनि.

[१]तद्बोधयेज्जगन्नाथं संबुध्येत यथा तथा ।
धीसत्त्वोद्योगसंपन्नैस्तत्कार्यं तदुपाश्रितैः ॥

(१) तद्बोधयेदिति । तस्मात् राजानं बोधयेत् । मन्त्रिगण इति शेषः । संबुध्येत यथा राजा तथा कार्यमिति संबन्धः । धीसत्त्वोद्योगसंपन्नैः अन्यगुणविकलैरपि । तदिति कार्ये प्रवर्तनमकार्यात् व्यावर्तनं चेत्यर्थः । जम.

(२) तस्मात् बोधयेत् व्युत्पादयेत् अमात्यादिः जगन्नाथं भुवनेश्वरम् । सः स्वामी बुध्येत यथा येन प्रकारेण पञ्चतन्त्रकथादिभिरपि बोधयेत् । धीसत्त्वोद्योगसंपन्नैः पुरुषैः । तत् कार्यं तन्त्रगतमावापगतं वा । तदाश्रितैः विशेषतः सेवकैः करणभूतैः । उनि.

[२]नृपस्य ते हि सुहृदस्त एव गुरवो मताः ।
य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥

(१) एवं चानुतिष्ठमानाः परेऽपि त एव सुहृदो गुरवश्चास्य भवन्ति । यदाह— नृपस्य ते हीत्यादि । अनिवारिताः स्वतन्त्राः । जम.

(२) मन्त्रिणां जगन्नाथबोधकानां प्रशंसामभिधातुमाह— नृपस्येति । नृपस्य जगन्नाथस्य ते हि यस्मात् मन्त्र्यादयः सुहृदः बान्धवाः, त एव गुरवः अभ्यर्हिततराः आचार्याः मताः शास्त्रकारमताः । एनं नृपं ये

---

(१) कानी. ४।३९ ; उनि. मपि (मिव); नीम. ४९ उत्तरार्धे (गुरूणामिव चैतेषां शृणुयाद्वचनं नृपः।).

(२) कानी. ४।४०.

(१) कानी. ४।४१ ; उनि. संबुध्येत (स बुध्येत) स्तत्कार्यं तदुपा (स्तत्तत्कार्यं तदा).

(२) कानी. ४।४२ ; रार. ४३ यन्त्यनि (यन्ति नि) उत्त. ; नीम. ४९.

उत्पथगतं शास्त्रनिषिद्धमार्गप्रवृत्तं वारयन्ति अनिवारिताः केनापि अनिषिद्धाः । उनि.

**[1]सज्जमानमकार्येषु सुहृदो वारयन्ति ये ।**
**सत्यं न ते हि सुहृदो गुरवो गुरवो हि ते ॥**

( १ ) गुरवो गुरव इति । तदानीं मित्रपदादपरं गुरुपदं प्राप्नुवन्ति । तच्च महदित्यर्थः । जम.

( २ ) एतदेव द्रढयितुमाह– सज्जमानमिति । अकार्येषु निषिद्धाचरणादिषु । सज्जमानमकार्येषु आसक्तिं यान्तमनाचारेषु सुहृदः अनुरक्तहृदयाः शुद्धहृदया वा बान्धवाः वारयन्ति ये ते सत्यं सुहृदो न भवन्ति, गुरवः आचार्याः । किं सामान्या गुरव इति ? न, गुरवः महान्त इति । उनि.

**[2]कृतविद्योऽपि बलिना व्यक्तं रागेण रज्यते ।**
**रागोपरक्तचित्तः सन् किं न कुर्यादसांप्रतम् ॥**

( १ ) कथमकार्येषु राजा सज्जत इत्याह– कृतविद्योऽपीति । किमुताकृतविद्य आत्मना रक्तचित्तः? रागेण कामेन । असांप्रतं अयुक्तम्, अकार्यमिति यावत् । किं न कुर्यात् पश्यन्नपि रागान्धत्वात् ? जम.

( २ ) उत्तमो विनययुक्तः कथमकार्येषु सक्तो भवति इत्याशङ्क्याऽऽह– कृतविद्य इति । कृतविद्योऽपि बलिना अतिबलवता व्यक्तं स्पष्टतरं रागेण विषयानुरागेण रज्यते तन्मयो भवति । रागोपरक्तचित्तः सन् किं नाम न कुर्यात् ? अपि तु सर्वमेव कुर्यात् । असांप्रतमिति अयुक्तं शास्त्रनिषिद्धमिति । उनि.

**[3]पश्यन्नपि भवत्यन्धः पुमान् रागावृतेक्षणः ।**
**सुहृद्वैद्याश्चिकित्सन्ति निर्मलैर्विनयाञ्जनैः ॥**

( १ ) यदाह– पश्यन्नपि भवत्यन्ध इति । जम.

( २ ) रागसामर्थ्यं सहायसामर्थ्यं च दर्शयन्नाह– पश्यन्निति । पुमान् पश्यन्नपि लोचनाभ्यां सूर्याद्यवलोके सति यद्यपि तथापि भवत्यन्धः, लोकद्वयाविरुद्धकार्याणामदर्शनात् । तदिदमान्ध्यं नीलीसंज्ञकान्ध्यसमानम् । रागावृतेक्षणः रागोपरक्तनयनः । सुहृदः सचिवाः एव वैद्याः चिकित्सन्ति आन्ध्यमपनयन्ति । निर्मलैः आधिहारिभिः विनयाञ्जनैः इन्द्रियजयोपदेशाञ्जनैरिति । उनि.

**[1]रागमानमदान्धस्य स्खलतः पृथिवीपतेः ।**
**हस्तावलम्बो भवति सुहृत्सचिवचेष्टितम् ॥**

( १ ) यथा रागोऽन्धीकरोति तथा मानमदावपीत्याह– रागमानमदान्धस्येत्यादि । अरिषड्वर्गोपलक्षणमेतत् । स्खलतः स्वमार्गात् । हस्तावलम्बः हस्तावष्टम्भः । सुहृत्सचिवचेष्टितं स्निग्धमन्त्रिप्रतिसमाधानम् । जम.

( २ ) तदेव दर्शयन्नाह– रागेति । रागमानमदैरन्धस्य । रागः विषयेष्वनुरक्तता । मानः आत्मसंभावना । मदः यौवनवसुशौर्यादिकृतः । तैरन्धस्य कार्यमपश्यतः स्खलतः शत्रुकृतापदि पततः हस्तावलम्बो भवति । स्खलन्तो यथा हस्तावलम्बेन धार्यन्ते तद्वत्, सुहृत्सचिवचेष्टितं मन्त्रिचेष्टितम्, तेन स्वामी स्खलन् धार्यत इति । उनि.

**[2]मदोद्वृत्तस्य नृपतेः संकीर्णस्येव दन्तिनः ।**
**गच्छन्त्यन्यायवृत्तस्य नेतारः खलु वाच्यताम् ॥**

( १ ) नन्वनयगामिनृपवारणे प्राणसंदेहस्तदा कथं निवारित (? यंत) इति । सत्यमेतत् । परंतु श्रुतिस्मृत्यादौ नित्यत्वाद्धर्मस्यैव निरुपेक्षितत्वात् लोकेऽपि वाच्यत्वप्रसङ्गाच्च । तदाह– मदोन्मत्तस्येति । रार. ४४

---

(१) कानी. ४।४३ ; रार. ४३ सज्ज ( मज्ज ) ये ( हि ) ; नीम. ४९ न ते हि ( तेनैव ).

(२) कानी. ४।४४ ; रार. ४४ व्यक्तं ( रक्तो ) किं न ( न किं ) ; नीम. ४९ व्यक्तं ( व्यक्त ) रागोप ( रागानु ).

(३) कानी. ४।४५ ; रार. ४३–४४ पुमान् रागावृतेक्षणः ( यस्माद् रागावृतः पुमान् ).

(१) कानी. ४।४६ ; रार. ४४.

(२) कानी. ४।४७ ; उनि. मदोद्वृत्तस्य ( मदोद्धतस्य ) ; रार. ४४ मदोद्वृत्तस्य ( मदोन्मत्तस्य ).

( २ ) यदि च ते स्खलन्तं न प्रतिसमादधति तदा लोके वचनीयतामापद्यन्ते। यदाह— मदोद्वृत्तस्येत्यादि। संकीर्णस्य अविशुद्धजातेः। नेतारः मन्त्रिणः, अन्यत्र शिक्षाग्राहकाः। जम.

( ३ ) ये तु स्वामिनः स्खलितान्युपेक्षन्ते तेषां दोषान् दर्शयन्नाह— मदोद्धतस्येति। मदेनोद्धतस्य उन्मार्गप्रवृत्तस्य नृपतेः विजिगीषोः। संकीर्णस्येव दन्तिनः, न भद्रस्य। भद्रः स्वभावत एव विनीतो भवति। गच्छन्त्यन्यायवृत्तस्य शास्त्रोक्तवृत्तरहितस्य नेतारः मन्त्र्यादयः ये नैव निवारयन्ति ते वाच्यतां निन्द्यतां खलु निश्चयेन गच्छन्ति। स्वामी स्खलन् रक्ष्य इत्यपि मन्त्रिगुणो द्रष्टव्यः। एवं च मन्त्रिगुणसंपत् संपूर्णा भवतीति भावः। उनि.

मन्त्रिणः कर्तव्यानि

**[१]मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः।**
**आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम्॥**

( १ ) तत्र षट्त्रिंशता श्लोकैः प्रकृतिकर्माऽऽह— मन्त्र इत्यादि। बहुत्वात् स्वामिकर्म प्रकृतिकर्मणः पश्चाद्वक्ष्यति। मन्त्रः कार्यनिश्चयः मन्त्र्यायत्तः। मन्त्रफलावाप्तिः दूरादेवामित्रानुत्सार्य या साध्यस्य फलस्य प्राप्तिर्दूतायत्ता। कार्यानुष्ठानं दुर्गादिकर्मप्रवर्तनमध्यक्षाधीनम्। आयतिः प्रभावः अमात्यैः क्रियते। आयव्ययौ अक्षपटलिकाधीनौ। दण्डनीतिः वधादीनां दण्डसाध्येषु यथार्हं नयनं धर्मस्थायत्तम्। अमित्रप्रतिषेधनं मित्राधीनम्। जम.

( २ ) बहुवक्तव्यत्वात् स्वामिकर्म तद्व्यसनं च पश्चाद्वक्ष्यति, सूचीकटाहन्यायेन अमात्यकर्म तद्व्यसनं चाऽऽह— मन्त्र इति। अमात्यस्य मन्त्रः पञ्चाङ्गः। अलब्धलाभादिकस्य सूचनावधि प्रयोगपर्यन्तं कर्म मन्त्रशब्देन गृह्यते। मन्त्रफलावाप्तिः पृथिवीलाभपालनादिरूपा। कार्यानुष्ठानं एतदेव कार्यं क्रियतामित्येवं प्रेरणम्। आयतिः आगामिनि काले यद्भविष्यति तस्य शुभाशुभफलनिरूपणम्। आयः धनागमनिरूपणम्। व्ययः यथायोग्यस्थाने धनवितरणम्। दण्डनीतिः अपराधिनो दण्डार्हस्य यथाशास्त्रमर्थदण्डादिसाधनम्। अमित्रप्रतिषेधनं नीतिबलेन शत्रुदमनम्। उनिसा.

**व्यसनस्य प्रतीकारो राजराज्याभिरक्षणम्।**
**इत्यमात्यस्य कर्मेदं हन्ति तद्व्यसनान्वितः॥**

( १ ) व्यसनस्य प्रकृतीनां प्रतीकारो मन्त्रिपुरोहिताधीनः। तथा राजराज्याभिरक्षणं मन्त्रिपुरोहिताधीनमेव। जम.

( २ ) व्यसनस्य दुःखमूलस्य दुर्भिक्षादेः प्रतीकारः निवारणम्। राजराज्याभिरक्षणं बुद्धिबलेन राज्ञो राज्यस्य च अभिरक्षणं परिपालनम्, तयोरनिष्टापातनिवारणमिति भावः। इति अमात्यस्य कर्म। सः मन्त्री व्यसनेन वक्ष्यमाणलक्षणेन अन्वितः इदं सर्वं हन्ति। व्यसनिनो मन्त्रिणः कर्तव्यं कर्म किमपि न सिध्यतीति भावः। उनिसा.

## शुक्रनीतिः

बहुमन्त्रिसंमतं स्वीकार्यम्, मन्त्रिप्रयोजनम्

**[१]यद्यप्यल्पतरं कर्म तदप्येकेन दुष्करम्।**
**पुरुषेणासहायेन किमु राज्यं महोदयम्॥**

यद्यपि कर्म कार्यं अल्पतरं सामान्यमित्यर्थः, तदपि असहायेन एकेन पुरुषेण दुष्करं कर्तुमशक्यम्, महोदयं महोन्नतं राज्यं किमु किं वक्तव्यमित्यर्थः। शुनीटी.

**सर्वविद्यासु कुशलो नृपो ह्यपि सुमन्त्रवित्।**
**मन्त्रिभिस्तु विना मन्त्रं नैकोऽर्थं चिन्तयेत्कचित्॥**

सर्वविद्यासु कुशलः सुमन्त्रवित् शोभनमन्त्रविज्ञः अपि नृपः एकः एकाकी सन् मन्त्रिभिः विना क्वचित् मन्त्रं मन्त्ररूपं अर्थं न चिन्तयेत्। तुशब्दोऽवधारणे। शुनीटी.

**सभ्याधिकारिप्रकृतिसभासत्सुमते स्थितः।**
**सर्वदा स्यान्नृपः प्राज्ञः स्वमते न कदाचन॥**

---

(१) कानी. १४।२३–२४.

(१) शुनी. २।१–११.

प्राज्ञः प्रकृष्टज्ञानवान् नृपः सभ्यानां अधिकारिणां कर्मचारिणां प्रकृतीनां प्रधानपुरुषाणां सभासदां च सुमते सुनिरूपितमन्त्रविषये सर्वदा स्थितः स्यात्, कदाचन स्वमते न, तिष्ठेदिति शेषः। शुनीटी.

**प्रभुः स्वातन्त्र्यमापन्नो ह्यनर्थायैव कल्पते।**
**भिन्नराष्ट्रो भवेत्सद्यो भिन्नप्रकृतिरेव च॥**

स्वातन्त्र्यमापन्नः स्वेच्छाधीनः प्रभुः अनर्थाय एव कल्पते। हि यतः भिन्नप्रकृतिः प्रकृतीनां अमतवर्तीत्यर्थः, प्रभुः सद्यः झटिति भिन्नराष्ट्रः राज्यच्युतः भवेत्। शुनीटी.

**पुरुषे पुरुषे भिन्नं दृश्यते बुद्धिवैभवम्।**
**आप्तवाक्यैरनुभवैरागमैरनुमानतः॥**
**प्रत्यक्षेण च सादृश्यैः साहसैश्च च्छलैर्बलैः।**
**वैचित्र्यं व्यवहाराणामौन्नत्यं गुरुलाघवैः॥**

आप्तवाक्यैः विश्वस्तवचनैः अनुभवैः आगमैः शास्त्रानुशीलनैः अनुमानतः अनुमानप्रमाणेन च पुरुषे पुरुषे प्रतिपुरुषमित्यर्थः, बुद्धिवैभवं भिन्नम्। तथा प्रत्यक्षेण प्रमाणेन सादृश्यैः साहसैः छलैः बलैश्च व्यवहाराणां आचाराणां वैचित्र्यं विभिन्नत्वम्, गुरुलाघवैः औन्नत्यं च कस्य वा गुर्वी उन्नतिः कस्य लघ्वीत्येवमित्यर्थः, दृश्यते। शुनीटी.

**न हि तत्सकलं ज्ञातुं नरेणैकेन शक्यते।**
**अतः सहायान् वरयेद्राजा राज्यविवृद्धये॥**
**कुलगुणशीलवृद्धान् शूरान् भक्तान् प्रियंवदान्।**
**हितोपदेशकान् क्लेशसहान् धर्मरतान् सदा॥**
**कुमार्गगं नृपमपि बुद्ध्योद्धर्तुं क्षमाञ् शुचीन्।**
**निर्मत्सरान् कामक्रोधलोभहीनान्निरालसान्॥**

तत् सकलं पूर्वोक्तं प्रतिपुरुषीयबुद्धिविभवादि एकेन नरेण ज्ञातुं न शक्यते। अतः अस्मात् कारणात् राजा राज्यविवृद्धये राज्यस्य अभ्युदयाय कुलगुणशीलवृद्धान् कुलीनान् गुणिनः सुशीलानित्यर्थः, शूरान् बलिनः अभीरूनित्यर्थः, भक्तान् अनुरक्तान्, प्रियंवदान् हितोपदेशकान्, क्लेशसहान् सहिष्णूनित्यर्थः, सदा धर्मरतान्, कुमार्गगं कुपथप्रवृत्तमपि नृपं बुद्ध्या उद्धर्तुं कुपथात् निवारयितुं क्षमान्, शुचीन् शुद्धचरितान्, निर्मत्सरान् विद्वेषरहितान्, कामक्रोधलोभहीनान्, तथा निरालसान् आलस्यरहितान् सहायान् वरयेत् नियुञ्ज्यात्। शुनीटी.

**हीयते कुसहायेन स्वधर्माद्राज्यतो नृपः।**
**कुकर्मणा प्रनष्टास्तु दितिजाः कुसहायतः॥**

कुसहायेन मन्दसचिवेन नृपः स्वधर्मात् राज्यतः राज्याच्च हीयते भ्रश्यति। दितिजाः दैत्याः कुसहायतः कुकर्मणा कुमन्त्रिपरामर्शेन कुकार्यकरणादित्यर्थः, प्रनष्टाः निधनं गताः। तुशब्दोऽवधारणे। शुनीटी.

**नष्टा दुर्योधनाद्यास्तु नृपाः शूरा बलाधिकाः।**
**निरभिमानो नृपतिः सुसहायो भवेदतः॥**

शूराः विक्रमशीलाः बलाधिकाः समधिकबलसंपन्नाः दुर्योधनाद्या नृपाः नष्टाः, कुसहायत इति शेषः। अतः अस्मात्कारणात् नृपतिः निरभिमानः स्वयं सर्वं जानामीत्यभिमानवर्जितः सन् सुसहायः शोभनसहायसंपन्नः भवेत्। शुनीटी.

**[1]युवराजोऽमात्यगणो भुजावेतौ महीभुजः।**
**तावेव नयने कर्णौ दक्षसव्यौ क्रमात्स्मृतौ॥**

युवराजः राजकर्मणि अभिषिक्तः पुत्रादिः अमात्यगणः सचिववर्गश्च एतौ महीभुजः राज्ञः भुजौ बाहुस्वरूपौ। तौ एव क्रमात् दक्षसव्यौ दक्षिणवामौ नयने कर्णौ च स्मृतौ कथितौ, राज्ञ इति शेषः। शुनीटी.

**[2]बाहुकर्णाक्षिहीनः स्याद्विना ताभ्यामतो नृपः।**
**योजयेच्चिन्तयित्वा तौ महानाशाय चान्यथा॥**

ताभ्यां युवराजामात्याभ्यां विना नृपः बाहुकर्णाक्षिहीनः भुजश्रोत्रनेत्ररहितः स्यात्। अतः अस्मात्कारणात् चिन्तयित्वा विविच्य तौ युवराजामात्यौ योजयेत्। अन्यथा महानाशाय, भवतीति शेषः। शुनीटी.

---

(१) शुनी. २।१२; नीम. ४८ पूर्वार्धे (अमात्यो युवराजश्च भुजावेतौ महीपतेः।) पू.

(२) शुनी. २।१३.

राज्ञः पुरोधःप्रतिनिधिप्रधानसचिवमन्त्रिप्राड्विवाक-
पण्डितसुमन्त्रामात्यदूताः दश पुरोधोदूतवर्जिता
अष्टौ वा प्रकृतयः, तेषां लक्षणानि
कर्तव्यानि च

‡[1]समासतः पुरोधादिलक्षणं यत्तदुच्यते ।
पुरोधाश्च प्रतिनिधिः प्रधानः सचिवस्तथा ॥
मन्त्री च प्राड्विवाकश्च पण्डितश्च सुमन्त्रकः ।
अमात्यो दूत इत्येता राज्ञः प्रकृतयो दश ॥

पुरोधादिलक्षणं यत्, अस्तीति शेषः, तत् समासतः संक्षेपेण उच्यते । पुरोधाः पुरोहितः, प्रतिनिधिः प्रधानः सचिवः मन्त्री प्राड्विवाकः पण्डितः सुमन्त्रकः अमात्यः दूतश्च एताः दश राज्ञः प्रकृतयः । शुनीटी.

दशमांशाधिकाः पूर्वं दूतान्ताः क्रमशः स्मृताः ।
अष्टप्रकृतिभिर्युक्तो नृपः कैश्चित्स्मृतः सदा ॥

दूतान्ताः पुरोहितादिदूतपर्यन्ताः प्रकृतयः क्रमशः दशमांशाधिकाः दशमेन अंशेन अधिकाः स्मृताः कथिताः । अयं भावः— * पुरोहितस्य या भृतिः प्रतिनिधेस्ततः दशमांशाधिका । प्रतिनिधेर्या भृतिः प्रधानस्य ततः दशमांशाधिका । प्रधानस्य या भृतिः सचिवस्य ततो दशमांशाधिका । सचिवस्य या भृतिः मन्त्रिणस्ततो दशमांशाधिका । मन्त्रिणो या भृतिः प्राड्विवाकस्य ततो दशमांशाधिका । प्राड्विवाकस्य या भृतिः पण्डितस्य ततो दशमांशाधिका । पण्डितस्य या भृतिः सुमन्त्रस्य ततो दशमांशाधिका । सुमन्त्रस्य या भृतिः अमात्यस्य ततो दशमांशाधिका । अमात्यस्य या भृतिः दूतस्य ततो दशमांशाधिका इति । कैश्चित् पण्डितैः नृपः अष्टप्रकृतिभिः सदा युक्तः स्मृतः कथितः । शुनीटी.

सुमन्त्रः पण्डितो मन्त्री प्रधानः सचिवस्तथा ।
अमात्यः प्राड्विवाकश्च तथा प्रतिनिधिः स्मृतः ॥
एता भृतिसमास्त्वष्टौ राज्ञः प्रकृतयः सदा ।
इङ्गिताकारतत्त्वज्ञो दूतस्तदनुगः स्मृतः ॥

सुमन्त्रः पण्डितः मन्त्री प्रधानसचिवः अमात्यः प्राड्विवाकः प्रतिनिधिः । * तथा इङ्गिताकारतत्त्वज्ञः । ( इङ्गितं हृद्गतभावः, ) 'इङ्गितं हृद्गतो भावः' इति कोषात्, आकारः शरीरक्रिया, तयोस्तत्त्वज्ञः, तदनुगः तेषां सुमन्त्रादीनां तस्य राज्ञः वा अनुगामी स्मृतः कथितः दूतश्च । एता अष्टौ राज्ञः प्रकृतयः सदा भृतिसमाः भृत्या वेतनेन समाः तुल्याः तुल्यवेतना इत्यर्थः । इदं च मतभेदेनोक्तम्, पूर्वविरोधादिति विभाव्यम् । शुनीटी.

पुरोधाः प्रथमं श्रेष्ठः सर्वेभ्यो राजराष्ट्रभृत् ।
तदनु स्यात्प्रतिनिधिः प्रधानस्तदनन्तरम् ॥
सचिवस्तु ततः प्रोक्तो मन्त्री तदनु चोच्यते ।
प्राड्विवाकस्ततः प्रोक्तः पण्डितस्तदनन्तरम् ॥
सुमन्त्रस्तु ततः ख्यातो ह्यमात्यस्तु ततः परम् ।
दूतस्ततः क्रमादेते पूर्वश्रेष्ठा यथा गुणाः ॥

पुरोधाः पुरोहितः प्रथमं अग्रतः सर्वेभ्यः प्रतिनिध्यादिभ्यः श्रेष्ठः सन् राज्ञः राष्ट्रं बिभर्तीति राजराष्ट्रभृत् राज्यरक्षणकारीत्यर्थः । वैधक्रियया राष्ट्रविघ्ननाश-

‡ अग्रे पुरोहितादीनां मन्त्रणसंबन्धोक्तेरत्र तेषां संग्रहः कृतः ।

* जीवानन्दविद्यासागरस्येदं व्याख्यानमत्यन्तमप्रामाणिकं पूर्वापरग्रन्थसंदर्भानवलोकजन्यं च । व्याख्यानावसरे 'पूर्वम्' इति मूलपदं कुतो न व्याख्यातम् ? अत्र तावत् पूर्वपूर्वप्रकृतेरेव भृतौ दशमांशेनाधिक्यं विवक्षितम्, न तूत्तरोत्तरप्रकृतीनाम् । 'पुरोधाः प्रथमं श्रेष्ठः' इत्यारभ्य 'पूर्वश्रेष्ठा यथा गुणाः' (शुनी. २।७४-७७) इत्यन्तैः श्लोकैः निरूपितं पूर्वपूर्वप्रकृतेः श्रेष्ठत्वमपि एतदनुगुणमेवेति युक्तमुत्पश्यामः ।

(१) शुनी. २।६९-९०.

* इदं व्याख्यानं प्रामादिकम् । अत्र जीवानन्दः 'प्रधानः सचिवः' इत्यत्र 'प्रधानसचिवः' इति एकपदत्वं प्रकल्प्य दूतेनाष्टत्वसंख्यां पूरयति । इयमेकपदत्वकल्पना पूर्वापरग्रन्थविरुद्धा सर्वथा अनुचितैव । अष्टत्वसंख्यापूरणं तु दूतेन नैव विवक्षितम्, 'दूतस्तदनुगः स्मृतः' इत्यत्र तदनुगत्वविशेषणेन दूतस्य भृतौ सुमन्त्रादिप्रकृत्यपेक्षया न्यूनतायाः स्पष्टमभिधानात् ।

दिति भावः । प्रतिनिधिः तदनु तस्य पश्चात्, तदपेक्षया न्यून इत्यर्थः, स्यात् । तदनन्तरं प्रधानः, ततः सचिवः प्रोक्तः कथितः । तदनु तत्पश्चात् मन्त्री उच्यते, ततो न्यूनतयेत्यर्थः । ततः प्राड्विवाकः विचारपतिः प्रोक्तः कथितः । तदनन्तरं पण्डितः । ततः अनन्तरं सुमन्त्रः ख्यातः कथितः । ततः परं अमात्यः । ततः परं दूतः, न्यूनतया कथित इति शेषः । एते पुरोहितादयः क्रमात् यथाक्रमं यथागुणाः गुणानुसारेण पूर्वश्रेष्ठाः पूर्वः पूर्वः श्रेष्ठो येषां तथोक्ताः, भवन्तीति शेषः । शुनीटी.

**मन्त्रानुष्ठानसंपन्नस्त्रैविद्यः कर्मतत्परः ।**
**जितेन्द्रियो जितक्रोधो लोभमोहविवर्जितः ॥**
**षडङ्गवित्साङ्गधनुर्वेदविच्चार्थधर्मवित् ।**
**यत्कोपभीत्या राजाऽपि धर्मनीतिरतो भवेत् ॥**
**नीतिशस्त्रास्त्रव्यूहादिकुशलस्तु पुरोहितः ।**
**सैवाऽऽचार्यः पुरोधा यः शापानुग्रहयोः क्षमः ॥**

पुरोहितलक्षणमाह– मन्त्रेत्यादि । यः मन्त्रस्य अनुष्ठानेन यथाविधानेन संपन्नः, यथाविहितमन्त्रानुरूपकार्यकारीत्यर्थः । त्रैविद्यः तिसृणां विद्यानां त्रिवेदानां पारदर्शीत्यर्थः । कर्मतत्परः कार्यानुष्ठाने त्वरावान् । जितेन्द्रियः, जितक्रोधः, लोभमोहविवर्जितः । षडङ्गवित् षट् अङ्गानि वेदाङ्गानि व्याकरणशिक्षाकल्पनिरुक्तच्छन्दोज्योतिषाख्यानि वेत्तीति तथाभूतः । साङ्गान् अङ्गसहितान् धनुर्वेदान् वेत्तीति तादृशः । तथा अर्थश्च धर्मश्च तौ वेत्तीति तथाभूतः, धर्मशास्त्रार्थशास्त्रकुशल इत्यर्थः । यस्य कोपभीत्या क्रोधभयेन राजाऽपि, किमन्य इति भावः, धर्मनीतिरतः यथा धर्मनीतितत्परः भवेत् । यश्च नीतिशस्त्रास्त्रव्यूहादिकुशलः नीतिशास्त्रे शस्त्रविद्यायां अस्त्रविद्यायां तथा व्यूहादिकर्मणि सुनिपुण इत्यर्थः । शापानुग्रहयोः अभिसंपातप्रसादयोः क्षमः समर्थश्च । सः पुरोहितः । यश्च पुरोधाः पुरोहितः स एव आचार्यः । 'सैवाऽऽचार्यः' इति संधिरार्षः * । शुनीटी.

* वामनातिरिक्तवैयाकरणानां मते तु 'सोऽचि लोपे चेत्पादपूरणम्' (पा. ६।१।१३४) इति सूत्रेण लौकिक एव संधिः ।

**विना प्रकृतिसन्मन्त्राद्राज्यनाशो भवेद्ध्रुवम् ।**
**रोधनं न भवेत्तस्माद्राज्ञस्ते स्युः सुमन्त्रिणः ॥**

प्रकृतीनां पूर्वोक्तानां पुरोहितादीनां सन्मन्त्रात् सुनिश्चितात् मन्त्रणात् विना ध्रुवं निश्चितं राज्यनाशः भवेत् । एवं राज्ञः रोधनं अपथात् निवर्तनं न भवेत् । तस्मात् ते पुरोहितादयः सुमन्त्रिणः स्युः भवेयुः । शुनीटी.

**न बिभेति नृपो येभ्यस्तैः स्यात्किं राज्यवर्धनम् ।**
**यथाऽलंकारवस्त्राद्यैः स्त्रियो भूष्या-**
**स्तथा हि ते ॥**

येभ्यः पुरोहितादिभ्यः नृपः न बिभेति तैः पुरोहितादिभिः किं राज्यस्य वर्धनं वृद्धिः अभ्युदय इत्यर्थः, स्यात् ? नैवेत्यर्थः । यथा अलंकारवस्त्राद्यैः स्त्रियः भूष्याः अलंकार्याः, ते पुरोहितादयः तथा हि तादृशा एव । पुरोहितादयः केवलं राज्ञः परिच्छदाः न भवन्ति, अपितु तादृशाः यादृशेभ्यः भयात् राजाऽपि न कुपथगामी भवेदिति भावः । शुनीटी.

**राज्यं प्रजा बलं कोशः सुनृपत्वं न वर्धितम् ।**
**यन्मन्त्रतोऽरिनाशस्तैर्मन्त्रिभिः किं प्रयोजनम् ॥**

येषां मन्त्रतः मन्त्रणात् राज्यं प्रजा बलं सैन्यं कोशः धनं तथा सुनृपत्वं सौराज्यं न वर्धितं न वृद्धिं प्राप्तम् । तथा अरिनाशश्च शत्रुक्षयश्च, न भवतीति शेषः । तैः मन्त्रिभिः किं प्रयोजनम् ? न किमपीत्यर्थः । शुनीटी.

**कार्याकार्यप्रविज्ञाता स्मृतः प्रतिनिधिस्तु सः ।**
**सर्वदर्शी प्रधानस्तु सेनावित्सचिवस्तथा ॥**

प्रतिनिध्यादीनां लक्षणानि निरूपयति– कार्याकार्येत्यादिना । यः कार्यस्य अकार्यस्य च परिज्ञाता प्रकर्षेण विज्ञानवान् सः प्रतिनिधिः स्मृतः कथितः । यः सर्वदर्शी सः प्रधानः । यश्च सेनावित् सैन्यविज्ञानवान् स सचिवः । शुनीटी.

**मन्त्री तु नीतिकुशलः पण्डितो धर्मतत्त्ववित् ।**
**लोकशास्त्रनयज्ञस्तु प्राड्विवाकः स्मृतः सदा ॥**

यः नीतौ नीतिशास्त्रे तदनुष्ठाने च कुशलः स मन्त्री । यः धर्मस्य तत्त्वं याथार्थ्ये वेत्तीति तथोक्तः सः पण्डितः । यश्च सदा लोकशास्त्रनयज्ञः लोकं लोकाचारं शास्त्रनयं च जानातीति तथाभूतः प्राड्विवाकः स्मृतः कथितः ।
शुनीटी.

देशकालप्रविज्ञाता ह्यमात्य इति कथ्यते ।
आयव्ययप्रविज्ञाता सुमन्त्रः स च कीर्तितः ॥

यश्च देशस्य कालस्य च प्रविज्ञाता अस्मिन् देशे एवं व्यवहर्तव्यं अस्मिन् काले च एवमिति अभिज्ञानवान् सः हि अमात्य इति कथ्यते । यश्च आयस्य अर्थागमस्य व्ययस्य अर्थक्षयस्य च प्रविज्ञाता विज्ञानवान्, आयव्ययकर्मनिपुण इत्यर्थः, सः सुमन्त्रः कीर्तितः ।
शुनीटी.

इङ्गिताकारचेष्टाज्ञः स्मृतिमान् देशकालवित् ।
षाड्गुण्यमन्त्रविद्वाग्ग्मी वीतभीर्दूत इष्यते ॥

यः इङ्गितं अन्तर्भावं आकारं चेष्टां च जानातीति तथोक्तः, स्मृतिमान् मेधावी, देशकालवित् देशकालानुरूपकार्यवेत्ता, षाड्गुण्यानां संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां मन्त्रज्ञानवान्, वाग्ग्मी वचनपटुः, तथा वीतभीः निर्भयः, सः दूतः इष्यते ।
शुनीटी.

अहितं चापि यत्कार्यं सद्यः कर्तुं यदोचितम् ।
अकर्तुं यद्धितमपि राज्ञः प्रतिनिधिः सदा ।
बोधयेत्कारयेत्कुर्यान्न कुर्यान्न प्रबोधयेत् ॥
सत्यं वा यदि वाऽसत्यं कार्यजातं च यत्किल ।
सर्वेषां राजकृत्येषु प्रधानस्तद्विचिन्तयेत् ॥
गजानां च तथाऽश्वानां रथानां पदगामिनाम् ।
सुदृढानां तथोष्ट्राणां वृषाणां सद्य एव हि ॥
[१]वाद्यभाषासुसंकेतव्यूहाभ्यसनशालिनाम् ।
प्राक्प्रत्यग्गामिनां राज्यचिह्नशस्त्रास्त्रधारिणाम् ॥

(१) शुनी. २।९१ ; शुनीटी. वाद्य ( वाह्य ) सुसंकेत ( सु संकेत ).

परिचारगणानां हीनमध्योत्तमकर्मणाम् ।
अस्त्राणामस्त्रजातीनां संघः स्वतुरगीगणः ॥
[२]कार्यक्षमश्च प्राचीनः साद्यस्कः कति विद्यते ।
कार्यासमर्थः कत्यस्ति शस्त्रगोलाग्निचूर्णयुक् ॥
साङ्ग्रामिकश्च कत्यस्ति संभारस्तान् विचिन्त्य च ।
सचिवश्चापि तत्कार्यं राज्ञे सम्यङ् निवेदयेत् ॥
साम दानं च भेदश्च दण्डः केषु कदा कथम् ।
कर्तव्यः किं फलं तेभ्यो बहु मध्यं तथाऽल्पकम् ।
एतत्संचिन्त्य निश्चित्य मन्त्री सर्वं निवेदयेत् ॥

संप्रति प्रतिनिध्यादिमन्त्रिपर्यन्तानां कार्याणि क्रमेणाऽऽह– अहितमित्यादि । प्रतिनिधिः सदा यत् कार्यं अहितमपि सद्यः अविलम्बेनैवेत्यर्थः, यदा कर्तुमुचितम्, यच्च हितमपि अकर्तुं यदा उचितं तत् राज्ञः बोधयेत् निवेदयेत् कारयेत् कुर्याच्च । तथा न कुर्यात् न प्रबोधयेत् न निवेदयेच्च । कर्तुमुचितस्य निवेदनं करणं च अनुचितस्य अनिवेदनं अकरणं च विधेयं प्रतिनिधेरिति फलितार्थः । प्रधानः सर्वेषां राजकृत्येषु मध्ये यत् कार्यजातं सत्यं यदि वा असत्यं किल निश्चितं भवेत् तत्सर्वं विचिन्तयेत् विशेषेण पर्यालोचयेत् । सचिवः गजानां अश्वानां रथानां पदगामिनां पदातीनां सुदृढानां उष्ट्राणां वृषाणां बाह्यभाषासु अपरभाषासु यः संकेतः इङ्गितबोधनं व्यूहः बलरचना च तत्र अभ्यसनशालिनां कृताभ्यासानां प्राक्प्रत्यग्गामिनां पूर्वपश्चिमदेशगामिनां मध्यमोत्तमकर्मणां मध्यविधकर्मचारिणां उत्तमकर्मचारिणां राजचिह्नशस्त्रास्त्रधारिणां राजचिह्नधारिणां शस्त्रास्त्रधारिणां च परिचारगणानां भृत्यवर्गाणां अस्त्राणां *अस्त्रपातानां

* 'अस्त्रजातीनाम्' इत्यत्र 'अस्त्रपातानाम्' इति व्याख्यानपाठः । पुस्तकान्तरेषु तु 'अस्त्रपातीनाम्' इत्येव पाठः समुपलभ्यते । अस्त्रपातिशब्दस्तु इकारान्तः पुंसि शस्त्रसंरक्षकार्थे विद्यते । अस्त्राणां पातिः अस्त्रपातिः इति विग्रहः । रक्षणार्थकात्

(१) शुनी. २।९२ ; शुनीटी. हीनमध्यो ( हि मध्यमो ) जातीनां ( पातानां ).

(२) शुनी. २।९३–९५.

-च, नियमानिति शेषः, विचिन्त्य, तथा कार्यक्षमः प्राचीनः पुरातनः साद्यस्कः नूतनो वा स्वतुरगीगणः अश्वारोहवर्गः कति विद्यते ? कार्यासमर्थः कार्याक्षमश्च कति अस्ति ? तथा शस्त्रगोलाग्निचूर्णयुक् शस्त्राणि गोला-ग्रयः गोलाकाराग्निपिण्डाः चूर्णानि वारुदेति प्रसिद्धानि, तैः युक् युक्तः साङ्ग्रामिकः संभारः द्रव्यसमूहः कति अस्ति ? तान् एतान् पूर्वोक्तान् सर्वान् विचिन्त्य च राज्ञे एतत्कार्यं तत्तद्विषयकार्यजातं सद्यः सम्यक् याथा-तथ्येन निवेदयेत्। मन्त्री केषु विषयेषु कदा कथं केन प्रकारेण साम संधिः दानं त्यागः भेदः उपजापः तथा दण्डः विग्रहः कर्तव्यः प्रयोक्तव्यः ? तेभ्यश्च सामा-दिभ्यः किं फलम् ? तच्च फलं बहु मध्यं अल्पकं वा एतत्सर्वं संचिन्त्य निर्णीय च निवेदयेत्, राज्ञे इति शेषः। शुनीटी.

[1]साक्षिभिर्लिखितैर्भोगैश्छलैर्भूतैश्च मानुषान्।
स्वेनोत्पादितसंप्राप्तव्यवहारान् विचिन्त्य च ॥
[2]दिव्यसंसाधनाद्वाऽपि केषु किं साधनं परम्।
युक्तिप्रत्यक्षानुमानोपमानैर्लोकशास्त्रतः ॥
[3]बहुसंमतसंसिद्धान् विनिश्चित्य सभास्थितः।
ससभ्यः प्राड्विवाकस्तु नृपं संबोधयेत्सदा ॥

प्राड्विवाककार्यमाह— साक्षिभिरित्यादि। सभास्थितः प्राड्विवाकः विचारपतिः ससभ्यः सभ्यैः परिवृतः सन् साक्षिभिः लिखितैः भोगैः सत्यभूतैः छलभूतैः अलीकैश्च मानुषान् स्वेन स्वयं स्वेच्छयेत्यर्थः, उत्पादिताः वा संप्राप्ताः याथार्थ्येन उपस्थिताः व्यवहाराः विवादाः येषां तान् मिथ्याकल्पितविवादान् सत्यविवादान् वा इत्यर्थः, विचिन्त्य समालोच्य तेषु च कांश्चित् दिव्य-संसाधनान् दिव्यमात्रसाधनान्, साक्षिलेख्यादिरहित-त्वादिति भावः, कांश्चिद्वा बहुसंमतसिद्धान्तान् अनेक-विचारसंमतान् इत्यर्थः, विनिश्चित्य केषु विवादेषु परं श्रेष्ठं साधनं प्रमाणं किम् ? एतत्सर्वं युक्त्या प्रत्यक्षतः अनुमानेन उपमानेन दृष्टान्तेन, लोकतः शास्त्रतश्च सुनिश्चित्य सदा नृपं संबोधयेत् निवेदयेत्। शुनीटी.

पाधातोः 'पातेरतिः' (उ. ५।५) इति सूत्रेण औणादिकः अतिप्रत्ययः। पातिशब्दः प्रभौ स्वामिनि वा प्रसिद्धः।

(१) शुनी. २।९६; शुनीटी. श्छलैर्भूतै (श्छलभूतै).
(२) शुनी. २।९७; शुनीटी. धनाद्वा (धनान्वा).
(३) शुनी. २।९८–१०४.

वर्तमानाश्च प्राचीना धर्माः के लोकसंश्रिताः।
शास्त्रेषु के समुद्दिष्टा विरुध्यन्ते च केऽधुना ॥
लोकशास्त्रविरुद्धाः के पण्डितस्तान्विचिन्त्य च।
नृपं संबोधयेत्तैश्च परत्रेह सुखप्रदैः ॥

पण्डितकार्यमाह— वर्तमाना इति, लोकेति च। पण्डितः के प्राचीनाः के च वर्तमानाः धर्माः लोकेषु संश्रिताः ? लोकाः कान् प्राचीनान् वा वर्तमानान् नव्यान् धर्मानाश्रित्य व्यवहरन्तीत्यर्थः, के धर्माः शास्त्रेषु समु-द्दिष्टाः विहिताः, अधुना इदानीं विरुध्यन्ते च ? शास्त्र-निर्दिष्टा अपि नाऽऽद्रियन्ते इत्यर्थः, के च धर्माः लोके प्रचलिताः, अथ च शास्त्रविरुद्धाः ? तान् विचिन्त्य परत्र इह च सुखप्रदैः तैः धर्मैः नृपं संबोधयेत्। शुनीटी.

इयच्च संचितं द्रव्यं वत्सरेऽस्मिन् तृणादिकम्।
व्ययीभूतमियच्चैव शेषं स्थावरजङ्गमम्।
इयदस्तीति वै राज्ञे सुमन्त्रो विनिवेदयेत् ॥
पुराणि च कति ग्रामा अरण्यानि च सन्ति हि।
कर्षिता कति भूः केन प्राप्तो भागस्ततः कति ॥
भागशेषं स्थितं कस्मिन् कत्यकृष्टा च भूमिका।
भागद्रव्यं वत्सरेऽस्मिन् शुल्कदण्डादिजं कति ॥
अकृष्टपच्यं कति च कति चारण्यसंभवम्।
कति चाऽऽकरसंजातं निधिप्राप्तं कतीति च ॥
[1]अस्वामिकं कति प्राप्तं नाष्टिकं तस्कराहृतम्।
संचितं तु विनिश्चित्यामात्यो राज्ञे निवेदयेत् ॥
[2]समासाल्लक्षणं कृत्यं प्रधानदशकस्य च।
उक्तं तल्लिखितैः सर्वं विन्द्यात्तदनुदर्शिभिः ॥

(१) शुनी. २।१०५; शुनीटी. संचितं (संचिन्त्य).
(२) शुनी. २।१०६–१०७; शुनीटी. दर्शिभिः (दर्शितैः).

**परिवर्त्य नृपो ह्येतान् युञ्ज्यादन्योन्यकर्मणि ॥**

सुमन्त्रामात्ययोः कार्याण्याह– इयदित्यादि । सुमन्त्रः अस्मिन् वत्सरे इयत् एतत्परिमितं तृणादिकं स्थावर-जङ्गमं स्थायि अस्थायि च द्रव्यं संचितं संगृहीतम्, इयत् एतत्परिमितं व्ययीभूतम्, इयच्च शेषं अवशिष्टं अस्तीति राज्ञे विनिवेदयेत् विशेषेण ज्ञापयेत् । अमात्यः कति पुराणि नगराणि, कति ग्रामाः, कति अरण्यानि सन्ति विद्यन्ते ? हिशब्दोऽवधारणे । कति कियत्परिमिता भूः कर्षिता कृषीबलैः कृतकर्षणा, केन ततः कृष्टभूमेः कति कियत्परिमाणः भागः, शस्यानामिति भावः, प्राप्तः ? कति वा तस्मिन् क्षेत्रे भागशेषं स्थितम् ? अकृष्टा च भूमिका भूखण्डं कति ? अस्मिन् विषये वत्सरे प्रतिवर्षमित्यर्थः, शुल्कदण्डादिजं शुल्कं राजप्राप्यांशः, दण्डः दोषिणां शासनेन लब्धं धनम्, तदादिजं तत्प्रभृतिजनितं भागद्रव्यं कति ? अकृष्टपच्यं विना कर्षणेन क्षेत्रोत्पन्नशस्यादिकं कति ? अरण्यसंभवं वनजातं द्रव्यं कति ? आकरसंजातं खनिजं द्रव्यजातं कति ? निधिप्राप्तं रथ्यादौ पतितादि अनिर्णीतस्वामिकं वस्तु कति ? अस्वामिकं स्वामिहीनं उत्तराधिकारिरहितं च द्रव्यं कति ? नाष्टिकं नष्टप्राप्तं हारितद्रव्यमित्यर्थः, तथा तस्करेभ्यः चौरेभ्यः आहृतं तेषां दण्डनेन प्राप्तं वा कति ? एतत्सर्वं संचिन्त्य सम्यक् चिन्तयित्वा विनिश्चित्य विशेषेण निर्णीय च राज्ञे निवेदयेत् । समासात् संक्षेपात् प्रधानदशकस्य दशानां पुरोहितादीनां प्रकृतीनाम् । 'प्रधानं प्रकृतिः स्त्रियाम्' इत्यमरः । लक्षणं कृत्यं कार्यं च उक्तं कथितम् । नृपः तदनुदर्शितैः तत्तल्लक्षणकार्येषु दर्शितैः कथितैः तल्लिखितैः तेषां पुरोहितादीनां लिखितैः सर्वं विन्द्यात् । एवं एतान् परिवर्त्य अन्योन्यकर्मणि परस्परकार्ये सुमन्त्रं अमात्यकर्मणि अमात्यं च सुमन्त्र-कर्मणि इत्येवं विनिमये नियुञ्ज्याच्च । शुनीटी.

**[१]न कुर्यात्स्वाधिकबलान् कदाऽपि ह्यधिकारिणः ।**
**परस्परं समबलाः कार्याः प्रकृतयो दश ॥**

(१) शुनी. २।१०८.
ध. को. १५९

अधिकारिणः कार्यकारिणः कदाऽपि स्वाधिकबलान् निजक्षमताधिकक्षमताशालिनः न कुर्यात् । हिशब्दोऽवधारणे । तथा दश प्रकृतयः पुरोहितादयः परस्परं समबलाः तुल्यक्षमताशालिनः कार्याः । शुनीटी.

**[१]दश प्रोक्ताः पुरोधाद्या ब्राह्मणाः सर्व एव ते ।**
**अभावे क्षत्रिया योज्यास्तदभावे तथोरुजाः ॥**

पुरोधाद्याः पुरोहितप्रभृतयः । संधिरार्षः । ये दश प्रकृतय इत्यर्थः, प्रोक्ताः कथिताः ते सर्वे एव ब्राह्मणाः भवेयुरित्यर्थः । अभावे, ब्राह्मणानामिति शेषः, क्षत्रियाः । तदभावे क्षत्रियाभावे ऊरुजाः वैश्याः इत्यर्थः, योज्याः, तत्तत्कर्मणीति शेषः । शुनीटी.

**नैव शूद्रास्तु संयोज्या गुणवन्तोऽपि पार्थिवैः ॥**

शूद्रास्तु गुणवन्तोऽपि पार्थिवैः नैव संयोज्याः, तत्तत्प्रकृतिकर्मणीति शेषः । शुनीटी.

**[२]हिताहितं न शृणोति राजा मन्त्रिमुखाच्च यः ।**
**स दस्यू राजरूपेण प्रजानां धनहारकः ॥**

यश्च राजा मन्त्रिमुखात् हिताहितं न शृणोति सः राजरूपेण प्रजानां धनहारकः दस्युः । दस्युर्यथा प्रजानां धनहारकस्तथा स इत्यर्थः । शुनीटी.

**सुपृष्टव्यवहारा ये राजपुत्रैश्च मन्त्रिणः ।**
**विरुध्यन्ति च तैः साकं ते तु प्रच्छन्नतस्कराः ॥**

ये मन्त्रिणः राजपुत्रैः सुपृष्टः व्यवहारः येभ्यः तथोक्ताः सन्तः तैः राजपुत्रैः साकं सह विरुध्यन्ति विरोधं कुर्वन्ति ते तु प्रच्छन्नतस्कराः गूढचौराः । शुनीटी.

**बाला अपि राजपुत्रा नावमान्यास्तु मन्त्रिभिः ॥**

राजपुत्राः बालाः शिशवोऽपि मन्त्रिभिः न अव-मान्याः नावज्ञेयाः । शुनीटी.

**[३]राजाऽनु युवराजस्तु मान्योऽमात्यादिकैः सदा ।**
**तन्न्यूनामात्यनवकं तन्न्यूनाधिकृतो गणः ॥**

(१) शुनी. २।४२६–४२७.
(२) शुनी. २।२५७–२५९.
(३) शुनी. २।२६६.

राजा अमात्यादिकैः सदा मान्यः । युवराजस्तु अनु राजापेक्षया न्यूनतया मान्य इत्यर्थः । अमात्यनवकं अमात्यादयः नव प्रकृतयः तन्न्यूनाः युवराजापेक्षया न्यूनतया मान्याः, अनुजीविभिरिति शेषः । तन्न्यूनाधिकृतो गणः अधिकारिवर्गः तदपेक्षया न्यूनतया मान्य इत्यर्थः । शुनीटी.

[1]न क्रीडयेद्राजसमं क्रीडिते तं विशेषयेत् ।
नावमान्या राजपत्नी कन्या ह्यपि च मन्त्रिभिः ॥

राजसमं राज्ञा सहितं न क्रीडयेत् न विहरेत् । क्रीडिते सति तं राजानं विशेषयेत् न पराजितं कुर्यात् । तेन सह क्रीडने तदवमाननं न कुर्यादिति भावः । राजपत्नी कन्या च, राज्ञ इति शेषः, मन्त्रिभिः न अवमान्या नावज्ञेया । शुनीटी.

राजसंबन्धिनः पूज्याः सुहृदश्च यथार्हतः ॥

राजसंबन्धिनः सुहृदश्च, राज्ञ इति शेषः, यथार्हतः यथायोग्यं पूज्याः, भृत्यैरिति शेषः । शुनीटी.

[2]कुमन्त्रिभिर्नृपो रोगी कुवैद्यैः कुनृपैः प्रजा ।
कुसंतत्या कुलं चाऽऽत्मा कुबुद्ध्या हीयतेऽनिशम् ॥

कुमन्त्रिभिः नृपः, कुवैद्यैः रोगी, कुनृपैः प्रजा, कुसंतत्या कुपुत्रेण कुलम्, तथा कुबुद्ध्या आत्मा अनिशं निरन्तरं हीयते हीनो भवति । शुनीटी.

[3]तथा लेखकषट्कं हि मन्त्रित्रितयमेव च ।
धारयेन्नृपतिः सम्यग् वत्सरे लक्षकर्षभाक् ॥

वत्सरे लक्षकर्षभाक् लक्षमुद्रागमवान् नृपतिः राजा ··· लेखकषट्कं षट् लेखकान् तथा मन्त्रित्रितयं त्रीन् मन्त्रिणः सम्यक् यथा तथा धारयेत् रक्षेत् । शुनीटी.

(१) शुनी. २।२६७–२६८.
(२) शुनी. ३।२८७.
(३) शुनी. ४।७।२४.

## योगयात्रा

मन्त्रिवचनं राज्ञा ग्राह्यम्

[1]दैवज्ञमन्त्रिसुहृदाप्तवचांसि राजा
योे नाऽऽद्रियेत मतिचेष्टितदुष्टबुद्धिः ।
सोऽग्रेसरेण रहितोऽन्ध इवाचिरेण
हास्यत्वमेति पतितो विषये रिपूणाम् ॥

## नीतिवाक्यामृतम्

मन्त्रिप्रयोजनम्

[2]मन्त्रिपुरोहितसेनापतीनां यो युक्तमुक्तं करोति स आहार्यबुद्धिः ॥

अथ मन्त्रिसमुद्देश आरभ्यते । तत्रादावेव राजा यथा आहार्यबुद्धिर्भवति तदाह– मन्त्रीति । यो राजा मन्त्रिपुरोहितसेनापतीनां युक्तं धमार्थलक्षणं कथितं करोति स आहार्यबुद्धिः कथ्यते । तस्मात् भूभुजा त्रयाणामप्येतेषां वचनं कार्यं राज्यविवृद्धये । तथा च गुरुः– ‘यो राजा मन्त्रिपूर्वाणां न करोति हितं वचः । स शीघ्रं नाशमायाति यथा दुर्योधनो नृपः ॥’ । नीवाटी.

असुगन्धमपि सूत्रं कुसुमसंयोगात्किं नाऽऽरोहति देवशिरांसि ॥

अथ भूपतेर्महापुरुषवाक्यं कुर्वाणस्य यद्भवति तदाह– असुगन्धमिति । यस्तेषां वाक्यं करोति । सत्यं राजा प्रधानो बहुमतिः परं षाड्गुण्यं चिन्तयमानस्य विलासासक्तचेतसो बुद्धिभ्रमो भवति । अमात्यादीनां पुनस्तदेव तस्य राज्यं चिन्तयमानानां बुद्धिविकासो भवति । तेन ते प्रष्टव्याः । तैः पृष्टे (? ष्टैः) विभ्रमयुक्ताऽपि मतिः तद्बुद्धिः मिश्रा सती योग्या भवति । कैः केव ? पुष्पैर्मिश्रा सूत्रततिरिव । यथा पुष्पैर्मिश्रा सूत्रपङ्क्तिर्देवैरपि निर्गन्धाऽपि शिरसि धार्यते, एवं भूपस्यापि बुद्धिर्विलासासक्तस्य नष्टाऽपि सती प्रश्नात् प्रकटा भवतीति । तथा च वल्लभो देवः– ‘उत्तमानां प्रसङ्गेन लघवो यान्ति

(१) योया. २।९.
(२) नीवा. १०।१–२१, २४.

गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ ' । नीवाटी.

**महद्भिः पुरुषैः प्रतिष्ठितोऽश्माऽपि भवति देवः किं पुनर्मनुष्यः ॥**

अथाग्रेसरसूत्रेणामुमेवार्थं दृढीकुर्वन्नाह— महद्भिरिति । ये महापुरुषाः उत्तमपुरुषाः भवन्ति तैः प्रतिष्ठितोऽश्माऽपि पाषाणोऽपि देवो भवति, किं पुनर्मनुष्यः ? तस्माद्राज्ञा महापुरुषाः प्रष्टव्यास्तेषां वाक्यं कर्तव्यमिति । तथा च हारीतः— ' पाषाणोऽपि विबुधः स्थापितो यैः प्रजायते । उत्तमैः पुरुषैस्तैस्तु किं न स्यान्मानुषोऽमरः ॥ ' । नीवाटी.

**तथा चानुश्रूयते विष्णुगुप्तानुग्रहादनधिकृतोऽपि किल चन्द्रगुप्तः साम्राज्यपदमवापेति ॥**

अथ तमेवार्थं दृढीकुर्वन्नाह— तथा चेति । विष्णुगुप्तः चाणिक्यः, तस्यानुग्रहात् प्रसादात् मतिमतः अनधिकृतोऽपि अनधिकार्यपि मौरिककुलोत्पन्नोऽपि नन्दराजः साम्राज्यपदमवाप । तथा च शुक्रः— ' महामात्यं वरो राजा निर्विकल्पं करोति यः । एकशोऽपि महीं लेभे हीनोऽपि वृषलो यथा ॥ ' । नीवाटी.

मन्त्रिगुणसंपत्

**ब्राह्मणक्षत्रियविशामेकतमं स्वदेशजमाचाराभिजनविशुद्धमव्यसनिनमव्यभिचारिणमधीताखिलव्यवहारतन्त्रमस्त्रज्ञमशेषोपाधिविशुद्धं च मन्त्रिणं कुर्वीत ॥**

अथ राज्ञा यादृक्षोऽमात्यः कर्तव्यस्तस्य लक्षणमाह— ब्राह्मणेति । एवंविधो ज्ञातामात्यमाहात्म्येन राज्ञा मन्त्री कर्तव्यः । तत्र तावद्ब्राह्मणक्षत्रियविशामेकतमं प्रधानभूतम् । किंविशिष्टं तम् ? स्वदेशजं स्वजनपदे जातम् । आचाराभिजनविशुद्धम् । आचारः आचरणं अनुष्ठानम्, अभिजनशब्देन कुलीनता कथ्यते, ताभ्यां शुद्धं निष्कलङ्कम् । यस्य नाकृत्यप्रवर्तनं तथा चाभिजनत्वं मातृपितृपक्षविशुद्धिर्यस्य । तथा चाव्यसनिनं द्यूतस्त्रीमांसासक्तिवर्जितम् । तथा चाव्यभिचारिणं कदाचिदेव येन न व्यभिचारः द्रोहः कृतः । तथाधीताखिलव्यवहारतन्त्रं अधीतानि अखिलानि समस्तानि मनुयाज्ञवल्क्यादिप्रोक्तव्यवहाराणां तन्त्राणि रहस्यानि येन तम् । तथा अस्त्रज्ञं अस्त्रविद्याकुशलम् । तथा च अशेषोपाधिविशुद्धम्, उपाधिशब्देन शत्रुचेष्टिता वारं वेति (?), एतैर्विशुद्धम् । अष्टभिः पदार्थैः मन्त्रिणं कुर्वीत । नीवाटी.

**समस्तपक्षपातेषु स्वदेशपक्षपातो महान् ॥**

अथ पक्षपातस्य स्वरूपमाह— समस्तेति । राज्ञो यः प्रोक्तोऽष्टगुणो मन्त्री तेषां मध्यात् स्वदेशपक्षपातः महान् उत्तमः सर्वेषां पक्षपातानां सकाशात् । उक्तं च यतो हारीतेन— ' स्वदेशजममात्यं यः कुरुते पृथिवीपतिः । आपत्काले तु संप्राप्ते न स तेन विमुच्यते ॥ ' । नीवाटी.

मन्त्रिदूषणानि

**विषनिषेक इव दुराचारः सर्वान् गुणान् दूषयति ॥**

अथ दुराचारस्वरूपमाह— विषेति । यो मन्त्री दुराचारः कुत्सितानुष्ठानः सर्वानन्यान् षड्गुणान् विद्यमानानपि दूषयति नाशयतीत्यर्थः । क इव ? विषनिषेक इव विषभक्षणमिव । यथा विषेण भक्षितेन सर्वे शरीरजा गुणा नाशं यान्ति तद्वद्देशपक्षपातादिकाः सर्वे गुणा नश्यन्ति । तस्माद्दुराचारो मन्त्री न कर्तव्यः । तथा चात्रिः— ' दुराचारममात्यं यः कुरुते पृथिवीपतिः । भूपार्हास्तस्य मन्त्रेण गुणान् सर्वान् प्रणाशयेत् ॥ ' । नीवाटी.

**दुष्परिजनो मोहेन कुतोऽप्यप (? तोऽप) कृत्य (न ?) जुगुप्सते ॥**

अथाकुलीनस्य स्वरूपमाह— दुष्परिजन इति । दुष्परिजनशब्देनाकुलीनः कथ्यते । दुष्परिजनो मन्त्री, कुतः कस्मात् जुगुप्सते लज्जां करोति ? किं कृत्वा ? अपकृत्य द्रोहं कृत्वा । कस्य ? राज्ञः । अपि तु न लज्जते । यतः कुलीनस्य लज्जा भवति, नाकुलीनस्य । तथा च यमः— ' अकुलीनस्य नो लज्जा स्वामिद्रोहे कृते सति ।

मन्त्रिणं कुलहीनस्य( ? हीनं तु ) तस्माद्विद्वान्न कारयेत् ॥ ’ । नीवाटी.

**सव्यसनसचिवो राजाऽऽरूढव्यालगज इव नासुलभोऽपायः( ? भापायः ) ॥**

अथ सव्यसनस्य स्वरूपमाह– सव्यसनेति । यो राजा सव्यसनसचिवः द्यूतस्त्रीपानव्यसनाभिभूतेन मन्त्रिणा सह वर्तते । तस्य किं स्यात् ? न असुलभः, अपि तु सुलभः, शीघ्रं स्यात् । कोऽसौ ? अपायः विनाशः । क इव ? आरूढव्यालगज इव । योऽपि व्यालो दुष्टगजे आरोहणं करोति सोऽपि शीघ्रं नश्यतीति । तथा च नारदः– ‘ द्यूतं यो यमदूताभं हालां हालाहलोपमाम् । पश्यनाकारोपमानुदारान् राजार्हः स्यात्स मन्त्रयित् ( ? ) ॥ ’ । नीवाटी.

**किं तेन केनापि यो विपदि नोपतिष्ठते ॥**

अथ व्यभिचारिणो मन्त्रिणः स्वरूपमाह– किमिति । किं तेन केनापि मन्त्रिणा अन्येनापि सामान्येन ? यः स्वामिनो नोपतिष्ठते नागच्छति व्यभिचरतीत्यर्थः । कस्याम् ? आपदि । तथा च शुक्रः– ‘ किं तेन मन्त्रिणा योऽत्र व्यसने समुपस्थिते । व्यभिचारं करोत्येव गुणैः सर्वैर्युतोऽपि वा ॥ ’ । नीवाटी.

**भोज्येऽसंमतोऽपि हि सुलभो लोकः ॥**

अथ तमेवार्थं समर्थयन्नाह– भोज्येऽसंमतोऽपीति । भोज्ये भोजनकाले असंमतोऽपि यः समागच्छति स सुलभः सुखेन लभ्यते प्रभूत इत्यर्थः । असंमतोऽपि अपूर्वोऽपि यो व्यसने साहाय्यं करोति स मन्त्री सामान्योऽपि । हिशब्दो यस्मादर्थे स्फुटार्थः । तथा च वल्लभो देवः– ‘ समृद्धिकाले संप्राप्ते परोऽपि स्वजनायते । अकुलीनोऽपि चामात्यो दुर्लभः स महीभृताम् ॥ ’ । नीवाटी.

**किं तस्य भक्त्या यो न वेत्ति स्वामिनो हितोपायमहितप्रतीकारं वा ॥**

अथाधीताखिलव्यवहारस्य शुभकस्य मन्त्रिणो दूषणमाह– किमिति । यो न वेत्ति न चिन्तयति । किम् ? हितोपायं येन राज्ञो वृद्धिर्भवति । तथा अहितप्रतीकारं शत्रुनाशम् । तथा च गुरुः– ‘ किं तस्य व्यवहारार्थैर्विज्ञातैः शुभकैरपि । यो न चिन्तयते राज्ञो धनोपायं रिपुक्षयम् ॥ ’ । नीवाटी.

**किं तेन सहायेनास्त्रज्ञेन मन्त्रिणा यस्याऽऽत्मरक्षणेऽप्यस्त्रं न भवति ॥**

अथास्त्रज्ञस्य मन्त्रिणो दोषमाह– किमिति । अत्राऽऽचार्येणास्त्रज्ञो मन्त्री सहायः प्रोक्तः । किं तेन सहायेनास्त्रज्ञेन मन्त्रिणा खड्गचापादिविद्यान्वितेन ? य आत्मनो रक्षणं न करोति । स शस्त्रज्ञोऽप्यशस्त्रज्ञः । तथा च शुक्रः– ‘ भार्गवोत्थां च यो वेद शस्त्रविद्यां कुशैरपि । स मन्त्री पूजितो राज्ञा योऽन्यः शस्त्रात्मरक्षकः ॥ ’ । नीवाटी.

उपधालक्षणम्

**धर्मार्थकामभयेषु व्याजेन परचित्तपरीक्षणमुपधा ॥**

अथोपधास्वरूपमाह– धर्मार्थकामेति । या ( उपधा ) सा किंविशिष्टा ? परचित्तपरीक्षणकारी( ? कारिणी ) । परः शत्रुः, तस्य ज्ञायते चित्तं यया । केन कृत्वा ? व्याजेन कपटेन । कैः ? गुप्तचरैः । केषु पदार्थेषु ? धर्मार्थकामभयेषु । पश्चात्परीक्ष्य संधिर्विग्रहो वा स्वामिनो मन्त्रिणा कारापणीयः । तत्र धर्मवेत्ता गुप्तचरः प्रेष्यः तत्पुरोधसा सह मित्रत्वे नियोक्तव्यः । स तद्द्वारेण धर्मबुद्धिं यथा वेत्ति कार्यं किं वा अकृत्यं अधर्मः त्वया ज्ञात्वा मम वाच्यः । ततश्च यदि कृत्यं धर्मो भवति स ततः स्वामिविग्रहे तेन सह नियोज्यः, अकृत्यं अधर्मः भवति तत्संधेयः, ‘ यतो धर्मस्ततो जयः ’ इति च ज्ञात्वा । अथार्थोपधा– बहुभाण्डं नियोज्यः प्रेष्यः । स गत्वा कोशपेन सह मैत्रीभावेन नियोक्तव्यः । तद्द्वारेण यथा कोशशुद्धिं वेत्ति यस्तथा वाच्यः । * स कञ्चुकिना सह मैत्रीं कृत्वा कामशुद्धिं वेत्ति । द्यूतस्त्रीव्यसनेन जितः तद्योद्धव्यः, अथवा संधेयः । भयोपधा

* अत्र कश्चित् ग्रन्थस्त्रुटित इति प्रतीयते ।

न्यथा— तत्र यः शूरः स प्रहेतव्यः । स च सेनापतिना सह मैत्रीं विधाय सभयं निर्भयं वेत्ति । तद्यदि सभयस्तद्योद्धव्यः, अथवा संधेयः । एताश्चतस्र उपधा इति । तथा च शुक्रः— 'ज्ञात्वा चरैर्यः कथितोऽरिगम्यो धर्मार्थहीनो विषयी सुभीरुः । पुरोहितार्थाधिपतेः सकाशात् स्त्रीरक्षकात्सैन्यपतेः स कार्यः ॥' । नीवाटी.

**अकुलीनेषु नास्त्यपवादाद्भयम् ॥**

अथाकुलीनेषु मन्त्रिषु यद्भवति तदाह— अकुलीनेष्विति । नास्ति न विद्यते । किं तत् ? भयम् । केषु ? अकुलीनेषु । कस्मात् ? अपवादात् अपकीर्तेः । तथा च वल्लभदेवः— 'कथंचिदपवादस्य न वेत्ति कुलवर्जितः । तस्मात्तु भूभुजा कार्यो मन्त्री न कुलवर्जितः ॥' । नीवाटी.

**अलर्कविषवत्कालं प्राप्य विकुर्वते विजातयः ॥**

अथ भूयोऽप्यकुलीनानां मन्त्रिणां स्वरूपमाह— अलर्केति । ये मन्त्रिणो विजातयः कुलहीनाः भवन्ति ते कालं आपल्लक्षणं दृष्ट्वा प्राप्य भूपतेरपकुर्वते विरुद्धा भवन्ति । कथम् ? अलर्कविषवत् । अलर्कशब्देन वाताभिभूतः श्वा प्रोच्यते । तस्य दंष्ट्राविषमपि प्राप्ते काले प्रावृषि भूयोऽपि दंष्ट्राप्ररूढव्रणमपि नूतनं करोति । तद्वत् विजातयो मन्त्रिणः कथमप्यपराधं भूपालकारितं प्रशान्तमपि प्रकटतां नयन्तीति । तस्माद्विजातयो मन्त्रिणस्त्याज्याः । तथा च बादरायणः— 'अमात्या कुलहीना ये पार्थिवस्य भवन्ति ते । आपत्काले विरुध्यन्ते स्मरन्तः पूर्वदुष्कृतम् ॥' । नीवाटी.

**तदमृतस्य विषत्वं यः कुलीनेषु दोषसंभवः ॥**

अथ कुलीनानां मन्त्रिणां स्वरूपमाह— तदमृतस्येति । दोषसंभवं दुर्जनाः कथयन्ति । किं तत् ? अमृतस्य विषत्वम् । कदाचित्तेषां न भवति खलु निश्चयेन । तथा च रैभ्यः— 'यदि स्याच्छीतलो वह्निः सोष्णस्तु रजनीपतिः । अमृतं च विषं भावि तत् कुलीनेषु विक्रिया ॥' । नीवाटी.

**घटप्रदीपवत्तज्ज्ञानं मन्त्रिणो यत्र न परप्रतिबोधः ॥**

अथ ज्ञानिनो मन्त्रिणो ज्ञानं यथा वृथा स्यात्तदाह— घटप्रदीपेति । यत्र ज्ञाने शरीरस्थे परप्रतिबोधो न भवति अन्यस्य प्रतिबोधः कर्तुं न शक्यते । तज्ज्ञानं किंविशिष्टम् ? घटप्रदीप इव । यथा घटमध्ये विधृतः प्रज्वलितोऽपि दीपो बाह्यप्रदेशप्रकाशं न करोति तथा सर्वगुणयुक्तोऽपि मन्त्री भूपतिं प्रतिबोधयितुं न शक्नोति । तस्य ते सर्वेऽपि गुणा निष्फला इति । तथाऽन्यस्यापि सामान्यस्य यज्ज्ञानं तद्यदि अन्यस्य संक्रामयितुं न शक्यते तद्घटप्रदीप इव । तथा च वर्गः— 'सुगुणाढ्योऽपि यो मन्त्री नृपं शक्तो न बोधितुम् । नान्योन ... वत्यन्ते गुणा घटदीपवत् ॥' । नीवाटी.

**तेषु शस्त्रमिव शास्त्रमपि निष्फलं येषां प्रतिपक्षदर्शनाद्भयमन्वयन्ति चेतांसि ॥**

अथ शास्त्रस्य निष्फलत्वं यथा भवति तथाऽऽह— तेष्विति । तेषु मन्त्रिषु पण्डितेषु वा व्यर्थं शस्त्रमिव शास्त्रमपि । येषां किम् ? येषां अन्वयन्ति आश्रयन्ति । कानि ? चेतांसि । किं तत् ? भयम् । कस्मात् ? विपक्षदर्शनात् प्रतिवादिदर्शनात् । सायुधस्य नरस्य भयविशिष्टे चेतसि तदायुधं निष्फलमिति । तथा च बादरायणः— 'शस्त्रज्ञस्य यथा शस्त्रं व्यर्थं रिपुकृताद्भयात् । शास्त्रज्ञस्य तथा शास्त्रं प्रतिवादिभयाद्भवेत् ॥' । नीवाटी.

**तच्छस्त्रं शास्त्रं वाऽऽत्मपरिभवाय यन्न हन्ति परेषां प्रसरम् ॥**

अथ शास्त्रस्य शस्त्रस्य च यथा निष्फलत्वं भवति तदाह— तच्छस्त्रमिति । यच्छत्रूणां प्रसरं वेगं न हन्त्यागच्छमानानां तच्छस्त्रं शास्त्रं वाऽऽत्मपरिभवाय भवति । एतदुक्तं भवति— शस्त्रेण विद्यमानेन शत्रोरागच्छमानस्य यो न प्रहरति स तेन वध्यते । तथा शास्त्रं पठमानो यो वादिने न प्रत्युत्तरं प्रयच्छति, तूष्णीमास्ते, स लघुतां याति । तथा च नारदः— 'शत्रोर्वा वादिनो वाऽपि

शास्त्रेणैवाऽऽयुधेन वा । विद्यमानं न हन्यांचो वेगं स लघुतां व्रजेत् ॥ ' । नीवाटी.

**न हि गलिर्बलीवर्दो भारकर्मणि केनापि युज्यते ॥**

अथ कापुरुषस्य मूर्खस्य सुखं यद्भवति तदाह– नेति । यः कापुरुषो भवति शस्त्रं न गृह्णाति तथा मूर्खो भवति तं कश्चित्स्वामी युद्धाय न प्रेरयति मूर्खं च वादाय (न) नियोजयति । तथाऽत्र दृष्टान्तेन तदर्थं प्रतिपादयति– न हि गलिर्बलीवर्दो भारकर्मणि युज्यते, नाऽऽरोपितः सुखी स्यात् । तथा च वल्लभदेवः– ' गुणानामेव दौर्जन्याद् धुरि धुर्यो नियुज्यते । असंजातकिणस्कन्धः सुखं याति ( ? स्वपिति ) गौर्गलिः ॥ ' । नीवाटी.

मन्त्रिकर्तव्यानि

**अकृतारम्भमारब्धस्याप्यनुष्ठानमनुष्ठितविशेषं विनियोगसंपदं च ये कुर्युस्ते मन्त्रिणः ॥**

अथ मन्त्रिणां लक्षणमाह– अकृतारम्भेति । अकृतस्य पदार्थस्य ये मन्त्रशक्त्याऽऽरम्भं कुर्युः, तथाऽऽरब्धस्यानुष्ठानं कर्मवृद्धिः ( ? द्धिम् ), अनुष्ठितस्य विशेषम्, विनियोगसंपदं च कर्म कुर्युस्ते मन्त्रिणः कथ्यन्ते । तथा च शुक्रः– ' दर्शयन्ति विशेषं ये सर्वकर्मसु भूपतेः । स्वाधिकारप्रभावं च मन्त्रिणस्तेऽन्यथा परे ॥ ' । नीवाटी.

**[1]मन्त्रिणो राजद्वितीयहृदयत्वान्न केनचित्सह संसर्गं कुर्युः ॥**

अथ मन्त्रिभिर्यत्कृत्यं तदाह– मन्त्रिण इति । न कस्यचित् तैर्मिलनीयम् । तथा च शुक्रः– ' मन्त्रिणः पार्थिवेन्द्राणां द्वितीयं हृदयं ततः । ततोऽन्येन न संसर्गस्तैः कार्यो नृपवृद्धये ॥ ' । नीवाटी.

**राज्ञोऽनुग्रहविग्रहावेव मन्त्रिणामनुग्रहविग्रहौ ॥**

तथा राज्ञां मन्त्रिणा सह यद्भवति तदाह– राज्ञ इति । यः राज्ञः अनुग्रहः समृद्धिभावः सः मन्त्रिणामपि अनुग्रहः समृद्धिलक्षणः । यश्च पुंसा राज्ञः विग्रहः व्यसनं तत् मन्त्रिणामपि । तथा च हारीतः– ' राज्ञः पुष्ट्या भवेत्पुष्टिः सचिवानां महत्तरा । व्यसनं व्यसनेनापि तेन तस्य हिताश्च ये ॥ ' । नीवाटी.

मन्त्रिसंख्याविचारः

**[1]एको मन्त्री न कर्तव्यः ॥**

अथ मन्त्रिणमुद्दिश्याऽऽह– एको मन्त्रीति । गतार्थमेतत् । नीवाटी.

**एको हि मन्त्री निरवग्रहश्चरति मुह्यति च कार्येषु कृच्छ्रेषु ॥**

अथ एकस्य मन्त्रिणो दूषणमाह– एको हीति । हि यस्मात् एको हि मन्त्री निरवग्रहः स्वेच्छया चरति, न शङ्कां करोति, तथा कार्येषु कृच्छ्रेषु प्रयोजनसंदेहेषु मुह्यति कर्तव्यं न जानातीत्यर्थः । तथा च नारदः– ' एको मन्त्री कृतो राज्ञा स्वेच्छया परिवर्तते । न करोति भयं राज्ञः कृत्येषु परिमुह्यति ॥ ' । नीवाटी.

**द्वावपि मन्त्रिणौ न कार्यौ ॥**

अथ मन्त्रियुगलस्य यत् कृत्यं तदाह– द्वावपीति । गतार्थमेतत् । नीवाटी.

**द्वौ मन्त्रिणौ संहतौ राज्यं विनाशयतः ॥**

अथ मन्त्रियुगलस्य दूषणमाह– द्वाविति । द्वौ मन्त्रिणौ संहतौ मिलितौ राज्यं विनाशयतः । तस्मान्न कार्यौ । तथा च नारदः– ' मन्त्रिणां द्वितयं चेत्स्यात् कथंचित् पृथिवीपतेः । अन्योन्यं मन्त्रयित्वा तु कुरुते विभवक्षयम् ॥ ' । नीवाटी.

**निगृहीतौ तौ तं विनाशयतः ॥**

अथ मन्त्रियुगलस्य यदि निग्रहं करोति तस्य यद्भवति तदाह– निगृहीताविति । तौ मन्त्रिणौ निगृहीतौ निगृह्यमाणौ विनाशयतः राज्यविनाशं कुरुतः । यतो नृपपरिग्रहः सचिवायत्तो भवति । तथा च गुरुः– ' भूपतेः सेवका ये स्युस्ते स्युः सचिवसंमताः । तैस्तैः सहायतां नीतैर्हन्युस्तं प्रणयाद्भयात् ॥ ' । नीवाटी.

**त्रयः पञ्च सप्त वा मन्त्रिणस्ते कार्याः ॥**

---

(१) नीवा. १०।५५–५६.

(१) नीवा. १०।६६–७३.

अथ यत्प्रमाणाः मन्त्रिणः कार्याः तत्प्रमाणमाह— त्रय इति । गतार्थमेतत् । नीवाटी.

विषमपुरुषसमूहे दुर्लभमैकमत्यम् ॥

अथ सस्पर्धमन्त्रिमेलापके एकमतं यादृक् (न) भवति तदाह— विषमेति । विषमपुरुषाः सस्पर्धाः मन्त्रिणः, तेषां समूहे मेलापके ऐकमत्यं एकमतं दुर्लभं भवतीति । तस्मात् सस्पर्धाः मन्त्रिणः ( न ? ) कार्याः । तथा च राजपुत्रः— ' मिथः संस्पर्धमानानां नैकं संजायते मतम् । स्पर्धाहीनाः ( ? स्पर्धमानाः ) ततः कार्या मन्त्रिणः पृथिवीभुजा ॥ ' । नीवाटी.

बहवो मन्त्रिणः परस्परं ( सस्पर्धाः ) स्वमतीरुत्कर्षयन्ति ॥

अथ बहुभिर्मन्त्रिभिर्यद्भवति तदाह— बहव इति । बहवो मन्त्रिणः कृताः स्वमतीः उत्कर्षयन्ति प्रमाणतां नयन्ति । किंविशिष्टाः सन्तः ? परस्परं सस्पर्धाः । तथा च रैभ्यः— ' बहूंश्च मन्त्रिणो राजा सस्पर्धान् ( न ) करोति यः । घ्नन्ति ते नृपकार्यं यत् स्वमन्त्रस्य कृता ( ? स्यात्कृता ) वराः ॥ ' । नीवाटी.

[1]यथोक्तगुणसमवायिन्येकस्मिन्युगले वा मन्त्रिणि न कोऽपि दोषः ॥

अथ यादृक् मन्त्रिणो दोषो न स्यात् तमाह— यथोक्तेति । यद्यपि प्रागेको मन्त्री निषिद्धः द्वावपि निषिद्धौ तथापि यद्येकस्मिन् युगले वा यथोक्तगुणसमवायिनि, कोऽर्थः ? युक्ते तत्र कोऽपि दोषः कार्य इति । नीवाटी.

न हि महानप्यन्धसमुदायो रूपमुपलभेत ॥

अथ बहूनां मन्त्रिणां मूर्खाणां निषेधे दृष्टान्तमाह— नेति । हि यस्मात्कारणात् महानपि प्रौढोऽपि अन्धसमुदायः मेलापकः न रूपं उपलभेत जानातीति । नीवाटी.

अवार्यवीर्यौ धुर्यौ किं न महति भारे नियुज्येते ॥

(१) नीवा. १०।७७–१०९.

अथ मन्त्रियुगलस्य दोषपरिहारार्थं दृष्टान्तमाह— अवार्येति । अवार्यं असंख्यं वीर्यं बलं ययोः तौ अवार्यवीर्यौ । तौ द्वावपि किं न नियुज्येते ? कस्मिन् ? महति भारे । एवं मन्त्रिणौ द्वावपि यथोक्तगुणसमवायिनौ, द्वावपि मन्त्रयोग्यावित्यर्थः । नीवाटी.

बहुसहाये राज्ञि प्रसीदन्ति सर्वे एव मनोरथाः ॥

अथ बहुसहाये राज्ञि यद्भवति तदाह— बहुसहाय इति । यो बहुसहायो राजा भवति तस्य सर्वे मनोरथाः हृदयस्थिता अभिष्टाः पदार्थाः प्रसीदन्ति सिद्धिं यान्ति । तथा च वर्गः— ' मदहीनो यथा नागो दंष्ट्राहीनो यथोरगः । असहायस्तथा राजा तत्कार्या बहवश्च ते ॥ ' । नीवाटी.

एको हि पुरुषः केषु नाम कार्येष्वात्मानं विभजते ॥

अथैकस्य मन्त्रिणो यद्भवति तदाह— एको हीति । हि यस्मात्कारणात् एको नामाहो केषु कार्येषु आत्मानं विभजते आत्मानं नियोजयति ? यतो भूपनीनां बहूनि कार्याणि भवन्ति । तस्माद्राज्ञा बहवो मन्त्रिणः कार्याः । तथा च जैमिनिः— ' एकं यः कुरुते राजा मन्त्रिणं मन्दबुद्धिमान् । तस्य भूरीणि कार्याणि सीदन्ति च तदाश्रयात् ॥ ' । नीवाटी.

किमेकशाखस्य शाखिनो महती भवति च्छाया ॥

अथैकमन्त्रिणो निषेधार्थं दृष्टान्तमाह— किमिति । महावृक्षोऽपि यद्येकशाखो भवति तत् किं तस्य छाया महती भवति ? अपि तु न भवतीत्यर्थः । एवं मन्त्रिणाऽप्येकेन कार्यं न सिध्यतीत्यर्थः । तथा चात्रिः— ' यथैकशाखवृक्षस्य नैव च्छाया प्रजायते । तथैकमन्त्रिणा राज्ञः सिद्धिः कृत्येषु नो भवेत् ॥ ' । नीवाटी.

मन्त्रिवरणं कार्यपुरुषलक्षणं च

कार्यकाले दुर्लभः पुरुषसमुदायः ॥

अथ कार्ये समुत्पन्ने सहायसमुदायो यादृग्भवति तदाह— कार्यकाल इति । कार्यकाले आपल्लक्षणे दुर्लभः पुरुषसमुदायः । तस्मात्पूर्वमेव सहायाः कर्तव्याः । उक्तं च—

'अग्रे अग्रे प्रकर्तव्याः सहायाः सुविवेकिभिः। आपन्नाशाय ते यस्माद्दुर्लभा व्यसने स्थिते॥'। नीवाटी.

**दीप्ते गृहे कीदृशं कूपखननम्॥**

अथानागतैर्न कृतैः सहायैर्यद्भवति तदाह– दीप्त इति। यदा गृहं प्रदीप्तं भवति तदा तोयार्थं कूपखननं न युक्तम्। किं तत्काले कूपो भवति? एवं यः सहायान् पूर्वं न करोति तस्याऽऽपत्काले न भवन्ति। तस्मात्सहायाः पूर्वमेव कार्याः। तथा च चाणिक्यः– 'विपदानां प्रतीकारं पूर्वमेव प्रचिन्तयेत्। न कूपखननं युक्तं प्रदीप्ते सहसा गृहे॥'। नीवाटी.

**न धनं पुरुषसंग्रहाद्बहु मन्तव्यम्॥**

अथ पुरुषधनाभ्यां विशेषमाह– न धनमिति। न बहु मन्तव्यं नोत्कृष्टं ज्ञेयम्। किं तत्? धनम्। कस्मात्? पुरुषसंग्रहसकाशात्। तस्माद्धनार्थिभिः पुरुषसंग्रहो भूपैः कार्यः। तथा च शुक्रः– 'न बाह्यं पुरुषेन्द्राणां धनं भूपस्य जायते। तस्माद्धनार्थिना कार्यः सर्वदा वीरसंग्रहः॥'। नीवाटी.

**सत्क्षेत्रे बीजमिव पुरुषेषूप्तं कार्यं शतशः फलति॥**

अथ सत्पुरुषे दत्ते धने यद्भवति तदाह– सत्क्षेत्र इति। अनेकधा फलं प्रयच्छति। किं तत्? कार्यं प्रयोजनम्। किंविशिष्टम्? उप्तं क्षिप्तम्। केषु? सत्पुरुषेषु। किमिव? बीजमिव। किंविशिष्टम्? उप्तम्। क्व? सत्क्षेत्रे उत्तमभूभागे। यथा संख्यया हीनमन्नं भवति कार्यं प्रयोजनं धनलक्षणं तथा फलति। तथा च जैमिनिः– 'सन्नरे योजितं कार्यं धनं च शतधा भवेत्। सुक्षेत्रे वापितं यद्वत्सस्यं तद्वदसंशयम्॥'। नीवाटी.

**बुद्धावर्थे युद्धे च ये सहायास्ते कार्यपुरुषाः॥**

अथ कार्यपुरुषाः यादृशा भवन्ति तानाह– बुद्धावर्थ इति। ये बुद्धौ बुद्धिं प्रयच्छन्ति, तथा अर्थे अर्थे कृत्ये जाते धनं प्रयच्छन्ति, तथा युद्धे शत्रुभिः संजाते सहायत्वं कुर्वन्ति, ते कार्यपुरुषा उच्यन्ते। तथा च शौनकः– 'मोहे यच्छन्ति ये बुद्धिमर्थे कृच्छ्रं तथा धनम्। वैरिसंघे सहायत्वं ते कार्यपुरुषा मताः॥'। नीवाटी.

**खादनवारायां को नाम न सहायः॥**

अथ यस्मिन् काले यः सहायो भवति तदर्थमाह– खादनवारायामिति। खादनवारायां भोजनसमये को नाम अहो न सहायः? यदा संपद्भवति तदा सर्वोऽपि जनः सहायः स्यात्। तथा च वर्गः– 'यदा स्यान्मन्दिरे लक्ष्मीस्तदान्योऽपि सुहृद्भवेत्। वित्तक्षये तथा बन्धुस्तत्क्षणाद्दुर्जनायते॥'। नीवाटी.

त्याज्या मन्त्रिणः

**श्राद्ध इवाश्रोत्रियस्य न मन्त्रे मूर्खस्याधिकारोऽस्ति॥**

अथ यादृक्पुरुषस्य नाधिकारो भवति तमाह– श्राद्धेति। (मन्त्रे मूर्खस्य मन्त्रिणो नाधिकारोऽस्ति। कस्येव?) श्राद्धे अश्रोत्रियस्येव। एतदुक्तं भवति– यथा ब्रह्मानुष्ठानवर्जितस्य ब्राह्मणस्य श्राद्धकर्मणि अनर्हत्वं तथा मन्त्रे मूर्खो मन्त्री (? मूर्खस्य मन्त्रिणः) महीभृताम्। नीवाटी.

**किं नामान्धः पश्येत्॥**

अथ मूर्खमन्त्रिणो दोषमाह– किमिति। नाम अहो जनः किं अन्धः चक्षुर्विकलः पश्येत् निरीक्षेत? अपि तु न किंचित्। एतदुक्तं भवति– अन्धेन सदृशो मूर्खो भवति। तद्यदि घटपटादीन् अन्धः पश्यति तत् मूर्खो मन्त्री मन्त्रम्। तथा च शौनकः– 'यद्यन्धो वीक्षते किंचिद् घटं वा पटमेव च। तदा मूर्खोऽपि यो मन्त्री मन्त्रं पश्येत् स भूभृताम्॥'। नीवाटी.

**किमन्धेनाऽऽकृष्यमाणोऽन्धः समं पन्थानं प्रतिपद्यते॥**

अथ मूर्खनृपतेर्मूर्खमन्त्रिणो यद्भवति तदाह– किमिति। किं प्रतिपद्यते किं पश्यति? कम्? पन्थानं मार्गम्। किंविशिष्टम्? समं गर्तपाषाणादिरहितम्। कोऽसौ? अन्धः। किंविशिष्टः? आकृष्यमाणः नीयमानः। केन?

अन्धेन। यदि मूर्खो राजा मूर्खेण मन्त्रिणा सह मन्त्रं करोति तत् किं मन्त्रसाध्यानि प्रयोजनानि जानाति ? इत्यर्थः। तथा च शुक्रः– 'अन्धेनाऽऽकृष्यमाणोऽत्र चेदन्धो मार्गवीक्षकः। भवेत्तन्मूर्खभूपोऽपि मन्त्रं चेत्यज्ञ-( ? वेत्यज्ञ )मन्त्रिणः ॥'। नीवाटी.

**तदन्धवर्तकीयं काकतालीयं वा यन्मूर्खमन्त्रात्कार्यसिद्धिः ॥**

अथ मूर्खमन्त्रिणः सकाशात् कार्यसिद्धिर्यादृक् भवति तदाह– तदन्धेति। मूर्खमन्त्राद्यदि तावत् कार्यसिद्धिर्भवति ( न यदि कथंचित् पुनर्भवति ? ) तदन्धवर्तकीयम्। कोऽर्थः ? वर्तकाशब्देन चटिकाऽभिधीयते। सा अन्धस्य शिरसि चटति। तां सोऽपि भुजाभ्यां गृह्णाति किमेतन्मम शिरसि पतितमिति मत्वा। यथा तस्य तस्या ग्रहण-मन्धस्यापि ( तथा चक्षुष्मतः ? ) तथा मूर्खमन्त्रस्यापि दैवयोगात् कार्यसिद्धिः। अथवा काकतालीयं यन्मूर्ख-मन्त्रात् कार्यसिद्धिः। कोऽर्थः ? तालवृक्षस्य तावद्वर्षशतेन फलं भवति। काकश्च सर्वेषां पक्षिणां सकाशात् अतीव अविश्वासी भवति। स तस्याधो गच्छन् तत्फलेन पतता यदि हन्येत तत् मूर्खमन्त्रात् सिद्धिरिति। तथा च गुरुः– 'अन्धवर्तीयमेवैतत् काकतालीयमेव च। यन्मूर्खमन्त्रतः सिद्धिः कथंचिदपि जायते ॥'। नीवाटी.

**स घुणाक्षरन्यायो यन्मूर्खेषु मन्त्रपरिज्ञानम् ॥**

अथ मूर्खमन्त्रिणोऽपि यन्मन्त्रपरिज्ञानं तत्स्वरूपमाह– स इति। घुणः कृमिविशेषः। स शनैः काष्ठं भक्षयति। तेन तस्य भक्ष्यमाणस्य विचित्राः रेखाः भवन्ति। तासां मध्यात् काचिद्रेखा अक्षराकारा भवति। एवं मूर्खेषु मन्त्रपरिज्ञानं घुणाक्षरन्यायवत् कदाचित् सिद्धिं याति। तथा च गुरुः– 'यन्मूर्खेषु परिज्ञानं जायते मन्त्रसंभवम्। स हि घुणाक्षरन्यायो. न तज्ज्ञानं प्रकीर्तितम् ॥'। नीवाटी.

**अनालोकं लोचनमिवाशास्त्रं मनः कियत्पश्येत् ॥**

अथ शास्त्ररहितस्य मनसो यद्भवति तदाह– अना-लोकमिति। अशास्त्रं यन्मनो भवति जडात्मकं तन्मनः कियत् पश्यति ? न किंचिदपि मन्त्रविषये। किमिव ? लोचनमिव नेत्रमिव। किंविशिष्टम् ? आलोकरहितम्। ज्योतीरहितं घटपटाद्यं यथा न पश्यति। तस्मात् शास्त्रविन्मन्त्रिणः कार्याः। तथा च गर्गः– 'आलोकरहितं नेत्रं यथा किंचिन्न पश्यति। तथा शास्त्रविहीनं यन्मनो मन्त्रं न पश्यति ॥'। नीवाटी.

**स्वामिप्रसादः संपदं जनयति, न पुनराभि-जात्यं पाण्डित्यं वा ॥**

अथ मन्त्रिणामन्येषां वा यः संपदं जनयति तथाऽऽह– स्वामिप्रसाद इति। मन्त्रिणामन्येषां स्वामिप्रसादः संपदं जनयति, न आभिजात्यं कुलीनताम्, न पाण्डित्यं बहुश्रुतत्वम्। एतदुक्तं भवति– यस्य राजप्रसादः तस्य सर्वोऽपि जनः पूजां करोति येनैष राज्ञे विज्ञप्तिकाविषयं साहाय्यं करोति। न कुलीनस्य पण्डितस्य वा कश्चित् पूजां करोति। तथा च शुक्रः– 'कुलीना पण्डिता दुःस्था दृश्यन्ते बहवो जनाः। मूर्खाः कुलविहीनाश्च धनाढ्या राजवल्लभाः ॥'। नीवाटी.

**हरकण्ठलग्नोऽपि कालकूटः काल एव ॥**

अथ मूर्खमन्त्रिणः स्वरूपमाह– हरकण्ठेति। यद्यपि महेश्वरस्य कण्ठे श्वेततरे लग्नः तथापि कालकूटः विषसंज्ञः कालः एव, कृष्णत्वात् पुनः शुक्लत्वं न जनयति, एवं यद्यपि मूर्खो मन्त्री भूपेन गुरुस्थानं निरूपितः तथापि मूर्ख एव, विद्वान्न भवति। तस्मा-न्मूर्खो मन्त्री न कार्यः। तथा च सुन्दरसेनः– 'स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा। सुतप्तान्यपि तोयानि पुनर्गच्छन्ति शीतताम् ॥'। नीवाटी.

**स्ववधाय कृत्योत्थापनमिव मूर्खेषु राज्यभारा-रोपणम् ॥**

अथ मूर्खमन्त्रिषु राज्यभारेणार्पितेन यद्भवति तदाह– स्ववधायेति। यत् भूपेन मूर्खमन्त्रिषु राज्यकारभारः समर्प्यते तत् कृत्योत्थापनम्। कृत्याशब्देन आथर्वणमन्त्रैः पावके होमविधानेन कृतेन पुरुषो यो निष्कामति स कर्तुः शत्रुं व्यापादयति। यदि वा शत्रुर्बलवान् भवति जपहोमदानैः, तदा सा येन उत्थापिता तमेव विनाश-यति। तद्यथा तस्याः कृत्यायाः स्ववधाय आत्म-

वधाय उत्थापनं क्रियते तथा मूर्खमन्त्रिषु राज्य-भारावरोपणम् । तथा च शुक्रः– 'मूर्खमन्त्रिषु यो भारं राज्योत्थं संप्रयच्छति । आत्मनाशाय कृत्यां स उत्थापयति भूमिपः ॥' । नीवाटी.

**अकार्यवेदिनः किं बहुना शास्त्रेण ॥**

अथ अकार्यवेदिनः भूपस्य यद्योग्यं तदाह– अकार्यवेदिन इति । यो राजा अकार्यवेदी स्यात् न कार्यं वेत्ति तस्य किं प्रभूतेनापि शास्त्रेण ? व्यर्थं तत् भस्मनि हुतमिव । तथा च रैभ्यः– 'न कार्यं यो निजं वेत्ति शास्त्राभ्यासेन तस्य किम् । बहुनाऽपि वृद्धात्येण (?) यथा भस्महुतेन च ॥' । नीवाटी.

**गुणहीनं धनुः पिञ्जनादपि कष्टम् ॥**

अथ गुणहीनस्य राज्ञो यद्भवति तदाह– गुणहीनमिति । गुणशब्देन ज्या अभिधीयते । यस्मिन् धनुषि ज्या न भवति तत् पिञ्जनादपि व्यर्थं कष्टमिति । एवं राजाऽपि यः शारीरिकगुणैर्युक्तो न भवति स कापुरुषवत् कष्टः व्यर्थमित्यर्थः । तथा च जैमिनिः– 'गुणहीनश्च यो राजा स व्यर्थश्चापयष्टिवत् । यथा कापुरुष ······ राभूमेः परं पदे ॥' । नीवाटी.

**चक्षुष इव मन्त्रिणोऽपि यथार्थदर्शनमेवाऽऽत्मगौरवहेतुः ॥**

अथ मन्त्रिणः स्वरूपमाह– चक्षुषेति । मन्त्रिणः अमात्यस्य किं आत्मनो गुरुत्वे हेतुः कारणम् ? यथार्थदर्शनं प्रयोजनविषये यथार्थदर्शनं कार्यसाधिका मन्त्रिदृष्टिः । तदा नृपपूज्यो भवति । कस्येव गौरवहेतुर्भवति ? लोचनस्येव । यथा पुरुषो (? चक्षुषो) यथार्थदर्शनं पदार्थस्य । तथा च गुरुः– 'सूक्ष्मालोकस्य नेत्रस्य यथा शंसा प्रजायते । मन्त्रिणोऽपि सुमन्त्रस्य तथा सा नृपसंभवा ॥' । नीवाटी.

**शस्त्राधिकारिणो न मन्त्राधिकारिणः स्युः ॥**

अथ यादृशा मन्त्रिणः कार्यास्तानाह– शस्त्राधिकारिण इति । न स्युः न भवेयुः । के ? एते शस्त्राधिकारिणः क्षत्रियाः । किंविशिष्टा न स्युः ? मन्त्राधिकारिणः मन्त्रस्थानिनः । तथा च जैमिनिः– 'मन्त्रस्थाने न कर्तव्याः क्षत्रियाः पृथिवीभुजा । यतस्ते केवलं मन्त्रं प्रपश्यन्ति रणोद्भवम् ॥' । नीवाटी.

**क्षत्रियस्य परिहरतोऽप्यायात्युपरि * भण्डनम् ॥**

अथ क्षत्रियो येन कारणेन मन्त्री न क्रियते तदाह– क्षत्रियस्येति । यः क्षत्रियो भवति तस्य परिहरतोऽपि त्यजतोऽपि अवश्यं निश्चितं आयाति आगच्छति । किं तत् ? भण्डनं कलहमिति । एतेन कारणेन क्षत्रियाः मन्त्रिणो न कार्याः । तथा च वर्गः– 'म्रियमाणमपि प्रायः क्षात्रं तेजो विवर्धते । युद्धार्थं तेन संत्याज्यः क्षत्रियो मन्त्रकर्मणि ॥' । नीवाटी.

**शस्त्रोपजीविनां कलहमन्तरेण भक्तमपि भुक्तं न जीर्यति ॥**

अथ शस्त्रोपजीविनां स्वरूपमाह– शस्त्रोपजीविनामिति । तस्मात् ते मन्त्रिणो न कार्या एतत्तात्पर्यमिति । तथा च भागुरिः– 'शस्त्रोपजीविनामन्नमुदरस्थं न जीर्यति । यावत् केनापि नो युद्धं साधुनाऽपि समं भवेत् ॥' । नीवाटी.

**मन्त्राधिकारः स्वामिप्रसादः शस्त्रोपजीवनं चेत्येकैकमपि पुरुषमुत्सेकयति किं पुनर्न समुदायः ॥**

अथ पुरुषस्य ये पदार्था गर्वं जनयन्ति तानाह– मन्त्राधिकार इति । मन्त्राधिकारः, स्वामिप्रसादः, शस्त्रजीवनं एतेषां त्रयाणां एकोऽपि पदार्थः संजातः पुरुषं उत्सेकयति सगर्वं करोति । किं पुनः सर्वेषां समवायः मेलापकः नोत्सेकयति ? तथा च शुक्रः– 'नृपप्रसादो मन्त्रित्वं शस्त्रजीव्यं स्मयं क्रियात् । एकैकोऽपि नरस्यात्र किं पुनर्यत्र ते त्रयः ॥' । नीवाटी.

**नालम्पटोधिऽकारी ॥**

अथ अधिकारिणः स्वरूपमाह– नेति । यः अलम्पटो भवति निःस्पृहः स्यात् सः अधिकारं न करोति । तथा च वल्लभदेवः– 'निःस्पृहो नाधिकारी स्यान्नाकामी

---

* व्याख्यानानुसारेण 'उपरि' इत्यत्र 'अवश्यम्' इति पाठः प्रतीयते ।

मण्डनप्रियः । नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः ॥ ' । नीवाटी.

**मन्त्रिणोऽर्थग्रहणलालसायां मतौ न राज्ञः कार्यमर्थो वा ॥**

अथ मन्त्रिणि अर्थलुब्धे यद्राज्ञो भवति तदाह— मन्त्रिण इति । मन्त्रिणः सचिवस्य यस्य अर्थग्रहणलालसा लम्पटा मतिर्भवति तदा तस्य यो राजा तस्य कार्यसिद्धिर्न भवति, अर्थो न भवति । तथा च गुरुः— ' यस्य संजायते मन्त्री वित्तग्रहणलालसः । तस्य कार्यं न सिध्येत भूमिपस्य कुतो धनम् ॥ ' । नीवाटी.

**वरणार्थं प्रेषित इव यदि कन्यां परिणयति तदा वरयितुस्तप एव शरणम् ॥**

अथ भूयोऽपि वित्तग्रहणलालसस्य मन्त्रिणः स्वरूपं निरूपयन्नाह दृष्टान्तद्वारेण— वरणार्थमिति । कन्यावरणार्थं प्रेषितो दूतः स्वयमेव कन्यां परिणयति तदा परिणयितुः येन प्रेषितः तस्य तपश्चरणं शरणं स्थानम् । यतः कलत्रं विना तपः कार्यम् । एवं यदि मन्त्री ग्रहणलम्पटो भवति तत्पार्थिवस्यापि तपश्चरणं शरणम् । यतो वित्तबाह्यं राज्यं न भवति । वित्तं पुनर्मन्त्रिद्वारेण स्यात् । तथा च शुक्रः— ' निरुणद्धि सतां मार्गं स्वयमाश्रित्य शङ्कितः । श्वाकारः सचिवो यस्य तस्य राज्यस्थितिः कुतः ॥ ' । नीवाटी.

**स्थाल्येव भक्तं चेत् स्वयमश्नाति कुतो भोक्तुर्भुक्तिः ॥**

पुनरपि मन्त्रस्वरूपमन्यदृष्टान्तेनाऽऽह— स्थाल्येवेति । स्थालीशब्देन उषा उच्यते । साऽपि भक्तं अन्नं स्वयं अश्नाति भक्षयति, तत् भोक्तुः भोजनार्थिनः कुतो भुक्तिः भोजनं भवतीत्यर्थः । एवं यो मन्त्री राजद्रव्यलम्पटो भवति तस्य स्वामिनः कुतो राज्यकृत्यानि स्युः ? तथा च विदुरः— ' दुग्धमाक्रम्य चान्येन पीतं वत्सेन गां यदा । तदा तक्रं कुतस्तस्याः स्वामिनस्तृप्तये भवेत् ॥ ' । नीवाटी.

**तावत्सर्वोऽपि शुचिर्निःस्पृहो यावन्न परवरस्त्रीदर्शनमर्थागमो वा ॥**

अथ पुरुषाणां स्वरूपमाह— तावदिति । सर्वोऽपि जनः तावत् शुचिः निर्मलः यावत् परनारीं नावलोकयति, तावच्च निःस्पृहः यावत् परवित्तं न पश्यति । तथा च वर्गः— ' तावच्छुचिरलोभः स्याद्यावन्नेक्षेत्परस्त्रियम् । वित्तं च दर्शनात्ताभ्यां द्वितीयं तत्प्रणश्यति (१) ॥ ' । नीवाटी.

## युक्तिकल्पतरुः

मन्त्रिगुणसंपत्

'तथा बुद्धिमतां श्रेष्ठो धार्मिकः शास्त्रवित्तमः ।
हीनश्चाप्युपरोधेन भूपमन्त्री प्रकीर्तितः ॥

## मानसोल्लासः

सचिवानां नीतिशास्त्रज्ञानजनसंमतत्वादिः गुणसंपत्, अमार्गगामिनृपनिवर्तनादीनि सचिवकर्तव्यानि, सचिवानां परीक्षा सचिवसंख्या च

²कुलीनाः श्रुतसंपन्नाः शुचयश्चानुरागिणः ।
शूरा धीराश्च नीरोगा नीतिशास्त्रविशारदाः ॥
प्रगल्भा वाग्मिनः प्राज्ञा रागद्वेषविवर्जिताः ।
वैराणां चाप्यकर्तारः सचिवाः स्युर्विभूतये ॥
सत्यसंधा महात्मानो दृढचित्ता निरामयाः ।
जनानां संमता दक्षाः सचिवा नृपसंपदे ॥
संगता राजकार्येषु रागद्वेषविवर्जिताः ।
आयव्यये च निपुणा सचिवाः कोशवृद्धये ॥
अमार्गे वर्तमानस्य नृपस्य प्रतिकूलगाः ।
बोधयन्तः प्रियैर्वाक्यैः सचिवाः स्युर्नृपर्द्धये ॥
अन्वयादागतान् शुद्धानुपधाभिः परीक्षितान् ।
सचिवान् सप्त वाऽष्टौ वा कुर्वीत मतिमान् नृपः ॥
स्वदेशजाताः सत्प्रज्ञा ऊहापोहविचक्षणाः ।
देशकालविदो धीराः साध्यासाध्यविवेकिनः ॥

---

(१) युक्. ३।१९.
(२) मासो. २।५२–५९.

परेङ्गितज्ञा धीमन्तः स्वाकारस्य निगूहकाः।
मन्त्रसंरक्षकाश्चाऽऽप्ता मन्त्रिणः स्युर्महीपतेः॥

## अनिर्दिष्टकर्तृकवचनानि

नियोज्या अनियोज्याश्च मन्त्रिणः

[1]बुद्धिमाननुरक्तश्च युक्तो धर्मार्थकोविदः।
शुचिर्दक्षः कुलीनश्च मन्त्री यस्य स राज्यभाक्॥

तस्मिन्निक्षिप्य कार्याणि भोगसङ्गी न नश्यति।
राजवश्यविधिस्तेन दानानुग्रहणैरिति॥

[2]धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः।
अनीतिपवनोत्क्षिप्तः कार्याब्धौ स निमज्जति॥

येषां राज्ञा सह स्यातामुपचयापचयौ ध्रुवम्।
अमात्या इति तान् राजा नावमन्येत्कदाचन॥

(१) मेधा. ७।६१.

(२) रार. १३.

महीभुजो मदान्धस्य विषमे कार्यसागरे।
स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम्॥

मूर्खे नियुज्यमाने तु त्रयो दोषा महीपतेः।
अयशोऽर्थविनाशश्च नरके पतनं तथा॥

प्राज्ञे नियुज्यमाने च सन्ति राज्ञस्त्रयो गुणाः।
यशः स्वर्ग्यविलासश्च पुष्कलश्च धनागमः॥

धूर्तस्त्रीबालमूर्खाः न मन्त्रिणः कार्याः, प्राज्ञा एव मन्त्रिणः कार्याः। अत्रापि स्वोपचयापचयफलभागिनः प्रथमतो मन्त्रिणः कार्याः, उक्तदोषगुणश्रवणात्। पुष्कलः सकलः। ननु प्रथमोक्तलक्षणबालस्य कथमत्र निषेधो युक्त इति चेत्सत्यम्, परंतु वयोधर्मस्य सर्वगुणेषु प्राबल्यात् तेन तत्कृतान्यायशङ्कां निरस्तु(? रसितु)-मशक्यत्वात्। अत एव मनुः— 'मत्तोन्मत्तार्ताध्यधीनै-र्बालेन स्थविरेण वा।' (मस्मृ. ८।१६३), नारदः— 'यद्बालः कुरुते कार्यम्' (नासं. २।३५) इत्यादि।

रार. १३

# प्रधानमन्त्री

---

## वसिष्ठः

राज्यसदसः कर्माणि प्रधानमन्त्रिणः

[1]राजमन्त्री सदःकार्याणि कुर्यात् ॥

## महाभारतम्

प्रधानमन्त्री एकः कार्यः, तस्य गुणाः कर्माणि च

[2]रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ।
कुलीनः शीलसंपन्नः स ते स्यात्प्रत्यनन्तरः ॥

[3]मेधावी स्मृतिमान्दक्षः प्रकृत्या चाऽऽनृशंसवान् ।
यो मानितोऽमानितो वा न संदूष्येत् कदाचन ॥

[4]ऋत्विग्वा यदि वाऽऽचार्यः सखा वाऽत्यन्त-संस्तुतः ।
गृहे वसेदमात्यस्ते यः स्यात्परमपूजितः ॥

[5]स ते विद्यात्परं मन्त्रं प्रकृतिं चार्थधर्मयोः ।
विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥

तत्रार्थप्रकृतिर्धर्मप्रकृतिरर्थधर्मप्रकृतिश्चेति त्रेधा प्रकृतिः, ताम् । तत्राऽऽद्या– 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जर-बन्धनम् । खन्याकरकरादानं शून्यानां च निवेशनम् । अष्टौ संधानकर्माणि प्रयुक्तानि मनीषिभिः ॥' (कानी. ५।७७) इति । संधानं अर्थप्राप्तिः । तथा– 'दुर्गाध्यक्षो बलाध्यक्षो धर्माध्यक्षश्चमूपतिः । पुरोधा वैद्यदैवज्ञौ सप्त प्रकृतयस्त्विमाः ॥' इति । तत्र धर्माध्यक्षो धर्मप्रकृतिः । अन्ये अर्थधर्मप्रकृतय इति विवेकः । नीटी.

[1]नैव द्वौ न त्रयः कार्या न मृष्येरन् परस्परम् ।
एकार्थादेव भूतानां भेदो भवति सर्वदा ॥

एकार्थे एकस्मिन् प्रयोजने एक एवाध्यक्षः कार्यः, चारैस्तु तद्गुणदोषान् संकलयेत्, न तु एकार्थे द्वावध्यक्षौ कार्यावित्याह– एकार्थ इति । नीटी.

[2]कीर्तिप्रधानो यश्च स्याद्यश्च स्यात्समये स्थितः ।
समर्थान् यश्च न द्वेष्टि समर्थान् कुरुते च यः ॥

समये नीतिमर्यादायाम् । नीटी.

[3]यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनः स ते स्यात् प्रत्यनन्तरः ॥

प्रत्यनन्तरः प्रतिनिधिः, प्रधानः इति यावत् । नीटी.

[4]शूरश्चाऽऽर्यश्च विद्वांश्च प्रतिपत्तिविशारदः ।
कुलीनः शीलसंपन्नस्तितिक्षुरनसूयकः ॥

प्रतिपत्तिविशारदः कार्याकार्यविवेककुशलः । नीटी.

[5]श्रेयसो लक्षणं ह्येतद्विक्रमो यस्य दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ॥

श्रेयसः साधोः । नीटी.

[6]समर्थान् पूजयेद्यश्च नास्पर्ध्यैः स्पर्धते च यः ।
न च कामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् ॥

---

(१) वस्मृ. १६।२.

(२) भा. १२।८१।२१ ; भामु. १२।८०।२१ शील (कुल) ते स्याद् (तस्माद्).

(३) भा. १२।८१।२२ ; भामु. १२।८०।२२ नृशंस (नृशंस्य) संदूष्येद् (च दुष्येत्).

(४) भा. १२।८१।२३ ; भामु. १२।८०।२३ यः स्याद् (स स्यात्).

(५) भा. १२।८१।२४ ; भामु. १२।८०।२४.

(१) भा. १२।८१।२५ ; भामु. १२।८०।२५ एकार्था-देव (एकार्थे ह्येव).

(२) भा. १२।८१।२६ ; भामु. १२।८०।२६ नो यश्च (नो यस्तु) द्वेष्टि समर्थान् (द्वेष्टि नानर्थान्).

(३) भा. १२।८१।२७ ; भामु. १२।८०।२७.

(४) भा. १२।८१।२८ ; भामु. १२।८०।२८ रनसूयकः (रविकत्थनः) श्लोकार्धे व्यत्यासेन पठिते.

(५) भा. १२।८४।११ ; भामु. १२।८३।१३ ह्येत (चैत).

(६) भा. १२।८४।१२ ; भामु. १२।८३।१४.

[1]अमानी सत्यवाक् शक्तो जितात्मा मान्यमानिता ।
स ते मन्त्रसहायः स्यात्सर्वावस्थं परीक्षितः ॥
[2]कुलीनः सत्यसंपन्नस्तितिक्षुर्दक्ष आत्मवान् ।
शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणम् ॥

सत्यः सत्यवान् । नीटी.

[3]तस्यैवं वर्तमानस्य पुरुषस्य विजानतः ।
अमित्राः संप्रसीदन्ति ततो मित्रीभवन्त्यपि ॥

## कौटिलीयमर्थशास्त्रम्

राज्ञि आसन्नमरणे मुख्यामात्येन अनुष्ठेया राज्यबाधानिवारणोपायाः, अमात्ययुवराजराजकन्यामहिष्याद्यन्यतमानां अधिकारिताविवेकः

[4]राजव्यसनमेवममात्यः प्रतिकुर्वीत । प्रागेव मरणाबाधभयाद्राज्ञः प्रियहितोपग्रहेण मासद्विमासान्तरं दर्शनं स्थापयेत् 'देशपीडापहममित्रापहमायुष्यं पुत्रीयं वा कर्म राजा साधयति' इत्यपदेशेन । राजव्यञ्जनमनुरूपवेलायां प्रकृतीनां दर्शयेन्मित्रामित्रदूतानां च । तैश्च यथोचितां संभाषाममात्यमुखो गच्छेत् । दौवारिकान्तर्वंशिकमुखश्च यथोक्तं राजप्रणिधिमनुवर्तयेत् । अपकारिषु च हेडं प्रसादं वा प्रकृतिकान्तं दर्शयेत् । प्रसादमेवोपकारिषु ॥

राज्ञो व्यसनं अस्वास्थ्यं एवं अनेन वक्ष्यमाणेन प्रकारेण प्रतिकुर्वीत । मरणाबाधभयात् प्रागेव राज्ञः प्रियहितोपग्रहेण प्रियहितजनोपसंग्रहेण प्रियहितवचनेन च मासद्विमासान्तरं मासव्यवहितं द्विमासव्यवहितं च दर्शनं दिदृक्षुदर्शनावसरदानं स्थापयेत् नियमयेत् । केनापदेशेन स्थापयेत् ? देशपीडापहं अमित्रापहं आयुष्यं आयुष्करं पुत्रीयं पुत्रोत्पत्त्यर्थं वा कर्म राजा साधयति इत्यपदेशेन । राजव्यञ्जनं राजचिह्नयुक्तं कमप्याप्तजनं कृत्वा अनुरूपवेलायां प्रकृतिदर्शनयोग्ये समये प्रकृतीनां मित्रामित्रदूतानां च दर्शयेत् । तैः सहावश्यकार्यतया प्रसक्तां संभाषां मन्त्रिमुखेन राजा कुर्यान्मौनव्रतमपदिश्येत्याह— तैश्च यथोचितामित्यादि । दिवसाष्टभागकरणीयतया पूर्वमुक्तं राज्ञो व्यापारं द्वाराधिकृतान्तःपुराधिकृतमुखेनानुष्ठापयेदित्याह— दौवारिकेत्यादि । अपकारिष्विति । तेषु हेडं अनादरं कोपं प्रसादं वा प्रकृतिकान्तं प्रकृतिसंमतं दर्शयेत् । प्रसादमेव, न तु हेडम्, उपकारिषु दर्शयेत् ।

श्रीमूला.

आप्तपुरुषाधिष्ठितौ दुर्गप्रत्यन्तस्थौ वा कोशदण्डावेकस्थौ कारयेत्कुल्यकुमारमुख्यांश्चान्यापदेशेन ॥

दुर्गगतौ प्रत्यन्तभूमिगतौ च कोशदण्डावाप्तपुरुषरक्षितौ कृत्वा केनचित् व्याजेनैकस्थानगतौ कारयेत्, तथा कुलीनान् राजकुमारान् राज्यमुख्यांश्चैकस्थान् कारयेदित्याह— आप्तपुरुषाधिष्ठितावित्यादि । श्रीमूला.

यश्च मुख्यः पक्षवान् दुर्गाटवीस्थो वा वैगुण्यं भजेत तमुपग्राहयेद्बह्वाबाधां वा यात्रां प्रेषयेन्मित्रकुलं वा ॥

यश्च मुख्यः पक्षवान् सहायवान् दुर्गाटवीस्थो वा दुर्गस्थोऽटवीस्थो वा वैगुण्यं विक्रियां भजेत तं उपग्राहयेत् अनुकूलयेत्, बह्वाबाधां वा यात्रां बह्वपायदेशसाधनार्थां यात्रां वा प्रेषयेत् कारयेत्, मित्रकुलं वा प्रेषयेत् मित्रकुलं प्रति वा तत्साहाय्यार्थं प्रहिणुयात् । श्रीमूला.

यस्माच्च सामन्तादाबाधं पश्येत्तमुत्सवविवाहहस्तिबन्धनाश्वपण्यभूमिप्रदानापदेशेनावग्राहयेत्स्वमित्रेण वा । ततः संधिमदूष्यं कारयेत् ॥

इत्थं स्वविषये कर्तव्यमुक्त्वा परविषये कर्तव्यमाह— यस्माच्चेति । यस्माच्च सामन्तात् भूम्यनन्तरात् आबाधं पश्येत् संभावयेत् तं उत्सवविवाहहस्तिबन्धनाश्वपण्यभूमिप्रदानापदेशेन उत्सवादिपञ्चकान्यतमव्याजेन अवग्राहयेत्

---

(१) भा. १२।८४।१३; भामु. १२।८३।१५ सत्यवाक्शक्तो (सत्यवान्क्षान्तो) मान्यमानिता (मानसंयुतः) स्सर्वावस्थं (स्सर्वावस्था).

(२) भा. १२।८४।१४; भामु. १२।८३।१६ सत्य (कुल).

(३) भा. १२।८४।१५; भामु. १२।८३।१७ ततो (तथा).

(४) कौ. ५।६.

आनाय्यानुकूलयेत्, स्वमित्रेण वा स्वमित्रद्वारेण वा तं अनुग्राहयेत्। ततः तन्मुखेन संधिं अदूष्यं कारयेत्।

श्रीमूला.

**आटविकामित्रैर्वा वैरं ग्राहयेत्। तत्कुलीनमवरुद्धं वा भूम्येकदेशेनोपग्राहयेत्॥**

आटविकैरमित्रैश्च वा वैरं ग्राहयेत् पूर्वोक्तस्य सामन्तस्य। तत्कुलीनं सामन्तकुलोत्पन्नं अवरुद्धं वा भूम्येकदेशेन भूम्येकदेशदानेन उपग्राहयेत् अर्थात् तद्द्वारेण तं सामन्तं दमयेत्। श्रीमूला.

**कुल्यकुमारमुख्योपग्रहं कृत्वा वा कुमारमभिषिक्तमेव दर्शयेत्। दाण्डकर्मिकवद्वा राज्यकण्टकानुद्धृत्य राज्यं कारयेत्॥**

त एते राज्ञि म्रियमाणे व्यापाराः। मृते तु कर्तव्यमाह— कुल्यकुमारमुख्योपग्रहमिति। राजकुल्यानां राजकुमाराणां राष्ट्रमुख्यानां चोपग्रहं कृत्वा वा कुमारं अभिषिक्तमेव दर्शयेत्। दाण्डकर्मिकवद्वा दाण्डकर्मिकोक्तरीत्या वा राज्यकण्टकान् उद्धृत्य राज्यं कारयेत्। श्रीमूला.

**यदि वा कश्चिन्मुख्यः सामन्तादीनामन्यतमः कोपं भजेत तं 'एहि, राजानं त्वा करिष्यामि' इत्यावाहयित्वा घातयेत्। आपत्प्रतीकारेण वा साधयेत्॥**

इत्थं स्वविषये कर्तव्यमुक्तम्। परविषये कर्तव्यमाह— यदि वेत्यादि। सामन्ताद्यन्यतमः कश्चिन्मुख्यो यदि कुप्येत् तदा 'बालोऽयं राज्यानर्हः प्रकृतिक्षोभपरिहारार्थं केवलमभिषिक्तः। तत् आगच्छ, त्वामेवाभिषेक्ष्यामः' इत्युक्त्वा तमानाय्य घातयेत्। यदि स नाऽऽगच्छेत् तदा आपत्प्रतीकारोक्तकल्पेन तं साधयेत्। श्रीमूला.

**युवराजे वा क्रमेण राज्यभारमारोप्य राजव्यसनं ख्यापयेत्॥**

उक्तमविद्यमाने युवराजे। यदि स विद्येत तर्हि तस्मै राज्यभारं जीवत्येव राज्ञि अर्पयित्वा पश्चात् राजमरणं ख्यापयेदित्याह— युवराजे वेत्यादि। श्रीमूला.

**परभूमौ राजव्यसने मित्रेणामित्रव्यञ्जनेन शत्रोः संधिमवस्थाप्यापगच्छेत्। सामन्तादीनामन्यतमं वाऽस्य दुर्गे स्थापयित्वाऽपगच्छेत्। कुमारमभिषिच्य वा प्रतिव्यूहेत। परेणाभियुक्तो वा यथोक्तमापत्प्रतीकारं कुर्यात्॥**

इत्थं स्वभूमौ राजमरणे राज्यप्रतिसंधानमुक्त्वा परभूमावाह— परेत्यादि। परभूमौ राजव्यसने अमित्रव्यञ्जनेन मित्रेण सह शत्रोः संधिं अवस्थाप्य स्थापयित्वा, इत्थं परविषयगतकोशदण्डरक्षार्थं संविधानं कृत्वेत्यर्थः, अपगच्छेत्। सामन्तादीनां अन्यतमं वा दुर्गे परकीये स्थापयित्वा कोशदण्डरक्षार्थं नियुज्य अपगच्छेत्। पश्चात्कोपाद्यपदेशेनेत्यार्थम्। कुमारं युवराजं अभिषिच्य वा प्रतिव्यूहेत शत्रुं प्रतियुध्येत। परेण शत्रुणा अभियुक्तो वा यथोक्तं 'बाह्याभ्यन्तराश्चाऽऽपदः' 'दूष्यशत्रुसंयुक्ताः' 'अर्थानर्थसंयुक्ताः' इत्यभियास्यत्कर्माधिकरणगतसूत्रत्रयोक्तं आबलीयसोक्तं च आपत्प्रतीकारं कुर्यात्। इति राज्यप्रतिसंधानं व्याख्यातम्। श्रीमूला.

**एवमेकैश्वर्यममात्यः कारयेदिति कौटल्यः॥**

अथैकैश्वर्यमुच्यते। राज्यप्रतिसंधानमधस्तादुक्तम्। अमात्यस्यैश्वर्यप्रसङ्गे राजपुत्रस्यैव तत्कर्तव्यमित्यधुनाऽभिधीयते— एवमिति। अनेन प्रकारेण अमात्यः एकैश्वर्यं कारयेत् अर्थात् राजपुत्रस्य। इति कौटल्यः।

श्रीमूला.

**नैवमिति भारद्वाजः। प्रम्रियमाणे वा राजन्यमात्यः कुल्यकुमारमुख्यान् परस्परं मुख्येषु वा विक्रामयेत्। विक्रान्तं प्रकृतिकोपेन घातयेत्। कुल्यकुमारमुख्यानुपांशुदण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात्। राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग पुनरमात्यप्रकृतिर्ह्येकप्रग्रहो राज्यस्य? तत्स्वयमुपस्थितं नावमन्येत। स्वयमारूढा हि स्त्री त्यज्यमानाऽभिशपतीति लोकप्रवादः॥**

अमात्यो राजपुत्रमेकैश्वरं न कुर्यादिति भारद्वाजो मन्यते। तर्हि स किं कुर्यात् तत्राऽऽह— प्रम्रियमाणे वेत्यादि। अयमर्थः— आसन्नमरणे राज्ञि कुल्यान् कुमारं राष्ट्रमुख्यांश्च परस्परं वा मुख्येषु वा विक्रमयेत् योधयेत्।

विक्रान्तं प्रकृतिकोपेन घातयित्वा कुल्यकुमारमुख्यांस्तूष्णीं दण्डेन वा घातयित्वा स्वयं राज्यं निष्कण्टकं हरेदमात्यः। कुतः? राज्यहेतोर्हि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमुतामात्यो राज्यैकनियामकः? तस्मात् स्वयमुपनतं राज्यममात्यो न प्रत्याचक्षीत। रन्तुं स्वयमुपगता हि स्त्री प्रत्याख्यायमाना पुरुषमभिशपतीति लोकवाददृष्टान्तेन श्रीरपि स्वयमुपस्थिता नोपेक्षणीयेति। श्रीमूला.

**कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम्।**
**दुर्लभः स पुनस्तस्य कालः कर्म चिकीर्षतः॥**

अस्मिन्नर्थे श्लोकमप्युदाहरति— कालश्चेत्यादि। कर्मकरणाय चिरात् प्रतीक्ष्यमाणं कालं पुरुषः सकृदेव लभते, लब्धमुपेक्षितं तु पुनर्न लभते इत्यतः स सर्वथा नोपेक्षणीय इत्यर्थः। श्रीमूला.

**प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतदिति कौटल्यः। राजपुत्रमात्मसंपन्नं राज्ये स्थापयेत्। संपन्नाभावे व्यसनिनं कुमारं राजकन्यां गर्भिणीं देवीं वा पुरस्कृत्य महामात्रान् संनिपात्य ब्रूयात् –अयं वो निक्षेपः, पितरमस्यावेक्षध्वं सत्त्वाभिजनमात्मनश्च, ध्वजमात्रोऽयम्, भवन्त एव स्वामिनः, कथं वा क्रियतामिति॥**

तदिदं भारद्वाजमतं प्रतिक्षिपति— प्रकृतिकोपकमिति। प्रकृतिकोपकरं अधर्मिष्ठं धर्मापेतं अनैकान्तिकं नियमेन कार्यासाधकं च एतत् कुल्यकुमारमुख्यविक्रमणादिकमिति कौटल्यः। किं तर्ह्यमात्यः कुर्यादित्याह— राजपुत्रमात्मसंपन्नमित्यादि। व्यसनिनं पानादिप्रसक्तमपि। महामात्रान् राष्ट्रमहत्तरान् युक्तमहत्तरांश्च। संनिपात्य एकत्र मेलयित्वा। निक्षेपः रक्षणीयपदार्थः। सत्त्वाभिजनं पराक्रमं कुलं च। ध्वजमात्रः पताकास्थानीयः।

श्रीमूला.

**तथा ब्रुवाणं योगपुरुषा ब्रूयुः– कोऽन्यो भवत्पुरोगादस्माद्राज्ञश्चातुर्वर्ण्यमर्हति पालयितुमिति। तथेत्यमात्यः कुमारं राजकन्यां गर्भिणीं देवीं वाऽधिकुर्वीत बन्धुसंबन्धिनां मित्रामित्रदूतानां च दर्शयेत्॥**

योगपुरुषाः संमेलिताः श्राविताः पुरुषाः। भवत्पुरोगात् त्वदधिष्ठातृकात्। तथेति योगपुरुषानुमतिं स्वीकृत्य। अधिकुर्वीत अभिषिञ्चेत्। बन्धुसंबन्धिनां बन्धूनां संबन्धिनां च। श्रीमूला.

**भक्तवेतनविशेषममात्यानामायुधीयानां च कारयेत्। भूयश्चायं वृद्धः करिष्यतीति ब्रूयात्। एवं दुर्गराष्ट्रमुख्यानाभाषेत यथार्हं च मित्रामित्रपक्षम्। विनयकर्मणि च कुमारस्य प्रयतेत। कन्यायां समानजातीयादपत्यमुत्पाद्य वाऽभिषिञ्चेत्। मातुश्चित्तक्षोभभयात्कुल्यमल्पसत्त्वं छात्रं च लक्षण्यमुपनिदध्यात्। ऋतौ चैनां रक्षेत्। न चाऽऽत्मार्थं कंचिदुत्कृष्टमुपभोगं कारयेत्। राजार्थं तु यानवाहनाभरणवस्त्रस्त्रीवेश्मपरिवापान् कारयेत्॥**

भक्तस्य वेतनस्य च विशेषं पूर्वापेक्षयाऽऽधिक्यं अमात्यानां आयुधीयानां च कारयेत्। भूयश्च बहुतरं च अयं कुमारः वृद्धः प्राप्तव्यवहारः करिष्यतीति ब्रूयात् तदुत्साहार्थम्। एवं दुर्गराष्ट्रमुख्यान् दुर्गमुख्यान् राष्ट्रमुख्यांश्च आभाषेत, यथार्हं च यथोचितं च मित्रामित्रपक्षं आभाषेत। विनयकर्मणि च विद्याशिक्षणव्यापारे च कुमारस्य प्रयतेत। कन्यायां राज्याभिषिक्तायां समानजातीयात् पुरुषात् अपत्यं पुमपत्यं उत्पाद्य वा अभिषिञ्चेत्। मातुरिति। कुमारमातुः चित्तक्षोभभयात् कुल्यं कुलीनं अल्पसत्त्वं अल्पौजसं छात्रं च लक्षण्यं सौम्यलक्षणं उपनिदध्यात् मातुः समीपे निदध्यात्, अर्थात् देवतार्चनपरिकर्मपुराणश्रावणाद्यर्थे। ऋतौ च एनां रक्षेत्। न च आत्मार्थं कंचित् उत्कृष्टं अमात्यपदक्लृप्ताभ्यधिकं उपभोगं कारयेत्। राजार्थे तु यानवाहनाभरणवस्त्रस्त्रीवेश्मपरिवापान् यानादिषट्कं परिवापं शयनासनादिकं च कारयेत्। श्रीमूला.

**यौवनस्थं च याचेत विश्रमं चित्तकारणात्।**
**परित्यजेदतुष्यन्तं तुष्यन्तं चानुपालयेत्॥**

प्राप्तयौवनं सन्तं कुमारं चित्तकारणात् तदभिप्रायज्ञानार्थं विश्रमं आत्मनोऽमात्यकर्मविश्रान्तिं याचेत।

अतुष्यन्तं परित्यजेत् याचितं तं 'याहि' इति वदन्तं त्यक्त्वा गच्छेत्। तुष्यन्तं चानुपालयेत् 'मा याहि' इति वदन्तं भूयोऽप्युपासीत। श्रीमूला.

**निवेद्यपुत्ररक्षार्थं गूढसारपरिग्रहान्।**
**अरण्यं दीर्घसत्रं वा सेवेतारुच्यतां गतः॥**

पुत्ररक्षार्थं गूढसारपरिग्रहान् गूढपुरुषान् मूलबलं आपदर्थे पितृपितामहादिस्थापितं निधिपरिग्रहं च निवेद्य राजपुत्राय ज्ञापयित्वा अरण्यं सेवेत तपसे। दीर्घसत्रं वा दीर्घकालनिर्वर्त्यं यज्ञं वा सेवेत अनरण्ये। कथंभूतः? अरुच्यतां गतः अमात्यवृत्तौ अरुचिमत्त्वं प्राप्तः, अथवा राजानं प्रति द्वेष्यतां गतः। श्रीमूला.

**मुख्यैरवगृहीतं वा राजानं तत्प्रियाश्रितः।**
**इतिहासपुराणाभ्यां बोधयेदर्थशास्त्रवित्॥**

राजमातुलादिभिः अवगृहीतं वा स्वायत्तीकृतं च राजानं तत्प्रियाश्रितः तत्प्रियानेवाऽऽश्रितः इतिहासपुराणाभ्यां बोधयेत्। धर्मार्थतत्त्वमित्यार्थम्। कीदृशो बोधयेत्? अर्थशास्त्रवित् पुरुषार्थप्रतिपादकशास्त्राभिज्ञः। श्रीमूला.

**सिद्धव्यञ्जनरूपो वा योगमास्थाय पार्थिवम्।**
**लभेत लब्ध्वा दूष्येषु दाण्डकर्मिकमाचरेत्॥**

तथा बोधयितुमशक्ये राज्ञि का गतिस्तत्राऽऽह— सिद्धव्यञ्जनरूपो वेति। सिद्धवेषधारी वा योगं आस्थाय वर्णकेशान्यथाकरणलक्षणं कपटमाश्रित्य पार्थिवं राजानं लभेत वशे कुर्यात्। लब्ध्वा वशे कृत्वा दूष्येषु मातुलादिषु दाण्डकर्मिकं तत्प्रकरणोपदिष्टं दण्डकर्म आचरेत्। श्रीमूला.

## मनुः

कार्येक्षणासने ब्राह्मणं धर्मज्ञत्वादिगुणोपेतमुख्यामात्यस्थापनं राजकर्तव्यम्

**[1]अमात्यमुख्यं धर्मज्ञं प्राज्ञं दान्तं कुलोद्गतम्।**
**स्थापयेदासने तस्मिन् खिन्नः कार्येक्षणे नृणाम्॥**

(१) प्रजानां संबन्धिनि कार्यदर्शने खिन्नः श्रान्तः। धर्मज्ञानादिगुणयुक्तं सर्वसहममात्यं तस्मिन् कार्येक्षणे नियुञ्जीत, न पुनस्तस्मिन्नेव सिंहासने। मेधा.

(२) भृत्यविषये कार्यदर्शने राजा खिन्नः सन् प्रधानामात्यं धर्मज्ञं प्राज्ञं यतेन्द्रियं कुलीनं तस्मिन् कार्यदर्शनस्थाने विनियुञ्जीत। * गोरा.

(३) अमात्येषु मुख्यमुक्तलक्षणमेकं मानार्थं पृथगासने स्थापयेत्। रार. ११

(४) यत्र स्वयमसमर्थः तत्रामात्यं नियोजयेदित्याह— अमात्येति। धर्मज्ञमित्यनेन प्रभौ विक्रियाराहित्यं सूचितम्। दान्तं लोभाद्यनभिभूतत्वेन प्रजासु। कुलोद्गतं कुलीनम्। आसने स्थित्वा यत्र कार्येक्षणे कार्यदर्शने खिन्नः खेदयुक्तः असमर्थः तत्रैवंविधममात्यं प्रयोजयेदित्यन्वयः। मच.

(५) खिन्नः बहुकार्यवेक्षणात् परिश्रान्तः। स्वस्मिन्नासने स्वमिन् कृत्ये। नन्द.

(६) राजा नृणां कार्याणामीक्षणे स्वयं खिन्नः ज्वरादिना युक्तश्चेत् तदा एतादृशममात्यमासने कार्यावेक्षणे स्थापयेदित्यर्थः। भाच.

**[1]सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता।**
**मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥**

(१) विपश्चिता विदुषा अर्थशास्त्रज्ञेन परं मन्त्रं अत्यन्तं गोपनीयं मन्त्रयेत् षाड्गुण्ययुक्तम्। अधिकतरप्रज्ञो हि ब्राह्मणः, धार्मिकत्वाच्च विश्वसनीयः। मेधा.

(२) एषामेव सर्वेषां मध्यादन्यतमेन गुणातिशयवता अत्यन्तविदुषा ब्राह्मणेन सह संधिविग्रहादिवक्ष्यमाण-

---

(१) मस्मृ. ७।१४१; रार. १० द्गतम् (व्रतम्); मच. तस्मिन् (स्वस्मिन्).

* मवि., ममु. गोरागतम्।

(१) मस्मृ. ७।५८; राक. २३ विशिष्टेन (विशेषेण); १०५; रार. ११; पमा. ४०६ षाड्गुण्य (सामान्य); वीक. १।३१२; राप्र. १७८; नीम. ४२ मन्त्रयेत् परमं (मन्त्रयीत परं).

गुणषट्कयुक्तं प्रकृष्टमन्त्रं राजा विचारयेत् ।

* गोरा.

(३) सर्वेषां सर्वेभ्यः । मवि.

(४) पूर्वोक्तेन ब्राह्मणेन परमं मन्त्रं निर्गलितार्थं षाड्गुण्यं राजा मन्त्रयेदित्यन्वयः । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः' (अमर. २।८।१८) इति कोषः । तद्भावः षाड्गुण्यमित्यर्थः । रार. ११

(५) सर्वेषां मध्ये विशिष्टेन स्वभावतोऽकुटिलादि-गुणवता । कार्याणां च षाड्गुण्यं वक्ष्यमाणम् । 'आत्म-बुद्धिः सुखकरी गुरुबुद्धिर्विशेषतः' इति न्यायात् ।

मच.

(६) परमं कार्यनिर्णयकरम् । षाड्गुण्यसंयुतं षाड्गुण्यविषयम् । षड्गुणा एव षाड्गुण्यम् । नन्द.

---

* ममु. गोरानुवादः । भाच. गोरागतं रारगतं च ।

**[1]नित्यं तस्मिन् समाश्वस्तः सर्वकार्याणि निक्षिपेत् ।
तेन सार्धं विनिश्चित्य ततः कर्म समारभेत् ॥**

(१) तादृशि ब्राह्मणे सर्वराष्ट्रमण्डलं निक्षिप्य विश्वस्तो राज्यसुखं भुञ्जीत च । तेन सह विनिश्चित्य यानासनादि, कर्म व्यवहारसंग्रहादि समाचरेत् । मेधा.

(२) तस्मिन् ब्राह्मणे सम्यक् निर्विशङ्कः संजात-विश्वासो भूत्वा सर्वदा सर्वकार्याणि समर्पयेत् । यद्यपि चाऽऽत्मना कुर्यात्तदपि तेन सह निश्चयीकृत्य ततो-ऽनुतिष्ठेत् । * गोरा.

(३) आरम्भणीयं च कर्म देशविशेषे दुर्ग-संपादनम् । पमा. ४०६

(४) तत्रापि ब्राह्मणमेव महीकरोति– नित्यमिति । तेन विपश्चिता ब्राह्मणेन । अण्वपि कार्यमविचारितं न कुर्यादित्यर्थः । मच.

---

* मवि., ममु., नन्द., भाच. गोरागतम् ।

(१) मस्मृ. ७।५९; मेधा. समारभेत् (समाचरेत्); राक. २३ कर्म समारभेत् (कार्यं समाचरेत्) : १०५ समाश्वस्तः (समाश्वासः) कर्म (कार्यं); रार. ११ निक्षिपेत् (निःक्षिपेत्); पमा. ४०६ रारवत्; राप्र. १७८ कर्म समारभेत् (कार्यं समाचरेत्); भाच. तस्मिन् (अस्मिन्).

# मित्रम्

## महाभारतम्

पितृवद्विश्वास्यः असंबन्धोऽपि मित्रम्

[1]न तन्मित्रं यस्य कोपाद्बिभेति
यद्वा मित्रं शङ्कितेनोपचर्यम् ।
यस्मिन् मित्रे पितरीवाऽऽश्वसीत
तद्वै मित्रं संगतानीतराणि ॥

प्रकृतमाह– न तदिति । तव तु शङ्काकुलस्य मय्यपि मित्रत्वबुद्धिर्नास्तीति भावः । संगतानि संबन्धमात्राणि । नीटी.

[2]यदि चेदप्यसंबन्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥

मूर्खस्य तु दुर्योधनादेः कुलशीलादिभिरसंबद्धोऽपि कर्णादिः मित्रभावेन अस्ति इत्याशयेनाऽऽह– य इति । बन्धुः संबन्धी । मित्रं उपकारकृत् । नीटी.

चलचित्तस्य न मित्रसंग्रहपात्रता

[3]चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ॥

पारिप्लवमतेः चलबुद्धेः । नीटी.

[4]चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समतिवर्तन्ते हंसाः शुष्कं सरो यथा ॥

समभिवर्तन्ते सम्यगभित एव वर्तन्ते, न तु स्पृशन्ति । समतिवर्तन्त इत्यपि पठन्ति । नीटी.

---

(१) भा. ५।३६।३५ ; भामु. ५।३६।३७.

(२) भा. ५।३६।३६ ; भामु. ५।३६।३८ यदि चेदप्यसंबन्धो ( यः कश्चिदप्यसंबद्धो ).

(३) भा. ५।३६।३७ ; भामु. ५।३६।३९.

(४) भा. ५।३६।३८ ; भामु. ५।३६।४० समति ( समभि ).

[1]अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥

अभ्रं मेघः । नीटी.

मित्रसंग्रहे यत्नः कर्तव्यः , मित्रलक्षणं अमित्रलक्षणं च

सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥

मित्राणां हितायेति शेषः । नीटी.

[2]अर्थयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्थयन्विजानाति मित्राणां सारफल्गुताम् ॥

अनर्थयन् प्रार्थनाशून्यः लुब्धस्तु मित्राणां सारफल्गुत्वे न जानाति इत्यतः स कार्यार्थी वणिक्तुल्यो न तु मित्रम् । नीटी.

[3]मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाऽथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥

मत्या मननेन युक्तिभिरनुचिन्तनेन । जात्येति पाठे कुलीनत्वेन । बुद्ध्या स्वानुभवेन संपाद्य कार्ययोग्यतां निश्चित्य । श्रुत्वा परतः, दृष्ट्वा स्वयमाकृत्या ज्ञात्वा, विज्ञाय पुनःपुनर्विशेषेण ज्ञात्वा प्राज्ञताम् । नीटी.

[4]प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम् ।
मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ॥

वैद्यं विद्यावन्तम् । नीटी.

दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनशताद्वरः ॥

---

(१) भा. ५।३६।३९–४० ; भामु. ५।३६।४१–४२.

(२) भा. ५।३६।४१ ; भामु. ५।३६।४३ अर्थये ( अर्चये ) विजानाति ( प्रजानाति ).

(३) भामु. ५।३९।४२–४३.

(४) भामु. ५।३९।४६–४८.

[1]ययोश्चित्तेन वा चित्तं नैभृतं नैभृतेन वा ।
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यते ॥

चित्तं ज्ञानमात्रम् । निभृतं गुढाचारप्रवृत्तं मन्त्रयन्त्रादि । प्रज्ञा विशेषतोऽर्थोन्नयनक्षमता । नीटी.

[2]दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च ।
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ॥

रौद्राः कोपनाः, साहसिकाः अविमृश्यकारिणः, तेषु । नीटी.

कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् ।
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥
[3]ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन मध्यस्थं न तन्मित्रं विदुर्बुधाः ॥

नाभिपद्यते नोपकरोति । नीटी.

मित्रप्रकाराश्चत्वारः

भीष्म उवाच—
[4]चतुर्विधानि मित्राणि राज्ञां राजन् भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥

उत्तरमाह— चतुर्विधानीति । सहार्थः अयं शत्रुरुभाभ्यामुन्मूलनीयः, अस्य राज्यमुभाभ्यां विभज्य ग्राह्यमिति पणपूर्वकृतः । भजमानः पितृपैतामहक्रमागतः । सहजः मातृष्वस्रीयादिः । कृत्रिमः धनादिना आवर्जितः । नीटी.

[5]धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ॥

(१) भा. ५।३९।३४ ; भामु. ५।३९।४८–४९ नैभृतं नैभृतेन ( निभृतं निभृतेन ) जीर्यते ( जीर्यति ).

(२) भा. ५।३९।३५–३७ ; भामु. ५।३९।४९–५२.

(३) भा. ५।९१।१५ ; भामु. ५।९३।१५ मध्य ( माध्य ).

(४) भा. १२।८१।३ ; भामु. १२।८०।३.

(५) भा. १२।८१।४ ; भामु. १२।८०।४ पञ्चमं मित्रं स तु ( पञ्चमश्चापि मित्रं ) स्यान्मध्य ( स्याद्धर्म ).

नैकस्येति पक्षपातशून्यः । न द्वयोरिति उभयवेतनत्वेन कपटकारी ( न ) । यः अप्रार्थितोऽपि धर्मपक्षपाती भवति तस्य उदासीनत्वे तु यो धर्मस्थः स तमाश्रयेदित्यर्थः । नीटी.

[1]यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत् ।
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ॥

अर्थो धर्मापेतत्वात् स्वयमपि सोऽर्थस्त्याज्य इत्याशङ्क्याऽऽह— धर्मेति । केवलेन धर्मेण जिगीषवो न सिध्यन्तीत्यर्थः । नीटी.

[2]मित्राणां प्रकृतिर्नास्ति त्वमित्राणां च भारत ।
उपकाराद्भवेन्मित्रमपकाराद्भवेदरिः ॥
यस्यैव हि मनुष्यस्य नरो मरणमिच्छति ।
तस्य पर्यागते काले पुनर्जीवितमिच्छति ॥
[3]चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथाऽपरौ ।
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥

मध्यमौ भजमानसहजौ । अपरौ सहार्थकृत्रिमौ । आद्यः फलप्राप्तिकाले बलवांश्चेत् सर्वमपजिहीर्षतीति शङ्क्य एव । कृत्रिमो विशेषधनलाभात् परकीयो भविष्यतीति सोऽपि शङ्क्य एव । सर्वे पञ्चापि । प्रत्यक्षं कार्यमुद्दिश्य । मन्त्रितमपि दुष्टामात्यनिग्रहादिकं कार्यं पञ्चानामपि समक्षं न कुर्यादित्यर्थः । नीटी.

मित्रतामस्थिरां विचिन्त्य मित्रसंग्रहः कर्तव्यः

न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥

कुमित्रं सर्वथा हन्तव्यमेवेत्यर्थः । नीटी.

असाधुः साधुतामेति साधुर्भवति दारुणः ।
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ॥
अनित्यचित्तः पुरुषस्तस्मिन्को जातु विश्वसेत् ।
तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ॥

(१) भा. १२।८१।५ ; भामु. १२।८०।५.

(२) भा. १२।८१।५ इत्येतच्छ्लोकानन्तरं टिप्पण्यां समुद्धृतावेतौ श्लोकौ.

(३) भा. १२।८१।६–९ ; भामु. १२।८०।६–९.

यस्मात् नृणां चलचित्तत्वाद्विपर्यासो मित्रादीनां दृश्यते, तस्मात् क्वचिदपि विश्वासमकृत्वा कोशदुर्गादिसंरक्षणं स्वप्रत्यक्षमेव कुर्याद्राजेत्याह द्वाभ्याम्— असाधुरिति । नीटी.

[1]एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ।
अविश्वासश्च सर्वत्र मृत्युना न विशिष्यते ॥
[2]अकालमृत्युर्विश्वासो विश्वसन् हि विपद्यते ।
यस्मिन् करोति विश्वासमिच्छतस्तस्य जीवति ॥
[3]तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्मीश्चैव सनातनी ॥

अत्यन्तं विश्वासाविश्वासावपि विरुद्धावित्याह त्रिभिः— एकान्तेनेति । नीटी.

अमित्रलिङ्गानि

[4]यं मन्येत ममाभावादिममर्थागमः स्पृशेत् ।
नित्यं तस्माच्छङ्कितव्यममित्रं तं विदुर्बुधाः ॥

अविश्वासस्थानान्याह— यमिति । मयि मृतेऽयं राजा भविष्यतीति यं मन्येत प्रतिवंशी भ्राता वा पुत्रो वाऽस्तु तस्माच्छङ्कितव्यमेवेत्यर्थः । नीटी.

[5]यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन् सर्वसेतवः ॥
तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति ।
यमेवंलक्षणं विद्यात्तममित्रं विनिर्दिशेत् ॥

अमित्रस्य लक्षणान्तरमाह— यस्येति द्वाभ्याम् । यथा महातटाकसेतुसमीपे यस्य क्षेत्रं स चेत् सेतुं रक्षति तर्हि ततोऽर्वाचीनानि क्षेत्राणि समोदकानि सम्यक् फलन्ति । स चेत् सेतुं भिनत्ति तदाऽतिजलप्रवाहात् क्षेत्राणामुपघातो भवति । एवं महति शत्रौ सीमान्तपालः सम्यक् सीमां पालयति तदा परराष्ट्रात् उत्तमपण्यागमेन स्वराष्ट्रं सुखभाक् भवति । स चेत् सीमां भिनत्ति तदा स्वं राज्यं विपक्षप्रवेशात् नश्यति । तत्र यस्मात् सीमान्तपालात् भयं संभावितं स शत्रुः इति ज्ञेयम् । यदधीनौ शत्रुप्रकोपौ सः अन्तपालः अपि अविश्वसनीयः इत्यर्थः । अक्षरार्थः स्पष्टः । नीटी.

उत्तममित्रलक्षणानि

[1]यः समृद्ध्या न तुष्येत क्षये दीनतरो भवेत् ।
एतदुत्तममित्रस्य निमित्तमभिचक्षते ॥

[2]यं मन्येत ममाभावादस्याभावो भवेदिति ।
तस्मिन् कुर्वीत विश्वासं यथा पितरि वै तथा ॥

मित्रलक्षणमाह— यस्त्विति । 'वृद्ध्या न तृप्येत' 'एतदुक्तम्' इति च पाठान्तरे इदमेवामित्रलक्षणम्, अदीनेति च छेदः । यत् मित्रं कर्तुं । नीटी.

[3]तं शक्त्या वर्धमानश्च सर्वतः परिबृंहयेत् ।
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ॥

क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम् ।
ये तस्य क्षतमिच्छन्ति ते तस्य रिपवः स्मृताः ॥

[4]व्यसनान्नित्यभीतोऽसौ समृद्ध्यामेव तृप्यते ।
यस्यादेवंविधं मित्रं तदात्मसममुच्यते ॥ *

---

(१) भा. १२।८१।१० ; भामु. १२।८०।१० न (च).

(२) भा. १२।८१।११; भामु. १२।८०।११.

(३) भा. १२।८१।१२ ; भामु. १२।८०।१२ लक्ष्मीश्चै (लक्ष्या चै).

(४) भा. १२।८१।१३ ; भामु. १२।८०।१३ गमः (गमं) तं (तद्).

(५) भा. १२।८१।१४–१५ ; भामु. १२।८०।१४–१५.

---

* मित्रविषयकः अधिको विचारः 'राजमण्डलम्' इत्यस्मिन् प्रकरणे महाभारते द्रष्टव्यः ।

(१) भा. १२।८१।१६ ; भामु. १२।८०।१६ यः समृद्धया न तुष्येत (यस्तु वृद्धया न तृप्येत) मभि (मिति).

(२) भा. १२।८१।१७ ; भामु. १२।८०।१७ यं म (यन्म).

(३) भा. १२।८१।१८–१९ ; भामु. १२।८०। १८–१९.

(४) भा. १२।८१।२० ; भामु. १२।८०।२० ऽसौ समृद्ध्यामेव तृप्यते (यः समृद्धया यो न दुष्यति).

हितकर्ता सुहृत् दुर्लभः

युधिष्ठिर उवाच–

[1]पितामह महाप्राज्ञ कुरूणां कीर्तिवर्धन ।
प्रश्नं कंचित्प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ॥

यद्यपि सर्वे यथाप्रज्ञमुपदेशार्थं गृह्णन्ति तथाऽपि सन्मित्रलाभः सर्वासां संपदां हेतुः दुर्मित्रसंबन्धः सर्वासामापदां हेतुरिति सर्वपुरुषसाधारणोऽर्थः कृत्स्नाया राजनीतेश्च सारभूत इति तमेव व्युत्पादयति प्रश्नोत्तरमुखेन– पितामह महाप्राज्ञेत्यादिना । नीटी.

[2]कीदृशा मानवाः सौम्याः
कैः प्रीतिः परमा भवेत् ।
आयत्यां च तदात्वे च
के क्षमास्तान् वदस्व मे ॥

आयत्यां परिणामकाले तदात्वे च वर्तमानकाले क्षमाः, हितायेति शेषः । नीटी.

न हि तत्र धनं स्फीतं न च
संबन्धिबान्धवाः ।
तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्मम ॥

मित्रस्यार्थादिभ्योऽन्तरङ्गत्वमाह– न हीति । नीटी.

दुर्लभो हि सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
एतद्धर्मभृतां श्रेष्ठ सर्वं व्याख्यातुमर्हसि ॥

मित्रत्वेन संधेया असंधेयाश्च

भीष्म उवाच–

संधेयान्पुरुषान् राजन्नसंधेयांश्च तत्त्वतः ।
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥

संधेयान् मित्रीकर्तुं योग्यान् । नीटी.

[3]लुब्धः क्रूरस्त्यक्तधर्मा निकृतः शठ एव च ।
क्षुद्रः पापसमाचारः सर्वशङ्की तथाऽलसः ॥

(१) भा. १२।१६२।१; भामु. १२।१६८।१ कीर्ति (प्रीति).

(२) भा. १२।१६२।२–५; भामु. १२।१६८।२–५.

(३) भा. १२।१६२।६; भामु. १२।१६८।६ निकृतः (निकृतिः).

[1]दीर्घसूत्रोऽनृजुः कष्टो गुरुदारप्रधर्षकः ।
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ॥

अलसः अनुद्योगी । दीर्घसूत्रः चिरकारी । कुष्टः लोकनिन्दितः । नीटी.

[2]सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः ।
संप्रकीर्णेन्द्रियो लोके यः कामनिरतश्चरेत् ॥

[3]असत्यो लोकविद्विष्टः समये चानवस्थितः ।
पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥

[4]दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा ।
मित्रैरर्थकृती नित्यमिच्छत्यर्थपरश्च यः ॥

[5]वहतश्च यथाशक्ति यो न तुष्यति मन्दधीः ।
अमित्रमिव यो भुङ्क्ते सदा मित्रं नरर्षभ ॥

[6]अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी ॥

अयुक्तः अनवहितः । नीटी.

[7]अल्पेऽप्यपकृते मूढस्तथाऽज्ञानात्कृतेऽपि च ।
कार्योपसेवी मित्रेषु मित्रद्वेषी नराधिप ॥

अज्ञानात् कृतेऽपकृते कार्यार्थमेव सेवते, न तु धर्मार्थमिति कार्यसेवी । नीटी.

(१) भा. १२।१६२।७; भामु. १२।१६८।७ कष्टो (कुष्टो).

(२) भा. १२।१६२।८; भामु. १२।१६८।८ काम (कामं).

(३) भा. १२।१६२।९; भामु. १२।१६८।९.

(४) भा. १२।१६२।१०; भामु. १२।१६८।१० उत्तरार्धे (मित्रैरपकृतिर्नित्यमिच्छतेऽर्थं परस्य यः ॥).

(५) भा. १२।१६२।११; भामु. १२।१६८।११ वहतश्च (ददतश्च) अमित्रमिव (अधैर्यमपि) भुङ्क्ते (युङ्क्ते).

(६) भा. १२।१६२।१२; भामु. १२।१६८।१२ पूर्वार्धे (अस्थानक्रोधनोऽयुक्तो यश्चाकस्माद्विरुध्यते ।).

(७) भा. १२।१६२।१३; भामु. १२।१६८।१३ कार्योपसेवी (कार्यसेवी च).

[1]शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोभनः ।
न रज्यति च कल्याणे यस्त्यजेत्तादृशं नरम् ॥

विलोचनः विपरीतदृष्टिः ।　　　　नीटी.

[2]पानपो द्वेषणः क्रूरो निर्घृणः परुषस्तथा ।
परोपतापी मित्रध्रुक् तथा प्राणिवधे रतः ॥

[3]कृतघ्नश्चाधमो लोके न संधेयः कथंचन ।
छिद्रान्वेषी न संधेयः संधेयानपि मे शृणु ॥

[4]कुलीना वाक्यसंपन्ना ज्ञानविज्ञानकोविदाः ।
मित्रज्ञाश्च कृतज्ञाश्च सर्वज्ञाः शोकवर्जिताः ॥

[5]माधुर्यगुणसंपन्नाः सत्यसंधा जितेन्द्रियाः ।
व्यायामशीलाः सततं भृतपुत्राः कुलोद्गताः ॥

[6]रूपवन्तो गुणोपेतास्तथाऽलुब्धा जितश्रमाः ।
दोषैर्वियुक्ताः प्रथितैस्ते ग्राह्याः पार्थिवेन ह ॥

[7]यथाशक्तिसमाचाराः सन्तस्तुष्यन्ति हि प्रभो ।
नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥

---

(१) भा. १२।१६२।१४ ; भामु. १२।१६८।१४ लोभनः ( लोचनः ) रज्यति च ( विरज्यति ) यस्त्यजेत् ( यः कुर्यात् ).

(२) भा. १२।१६२।१५ ; भामु. १२।१६८।१५ क्रूरो ( क्रोधी ).

(३) भा. १२।१६२।१६ ; भामु. १२।१६८।१६ कथं ( कदा ) धी न सं ( धी ह्यसं ).

(४) भा. १२।१६२।१७ ; भामु. १२।१६८।१७, १८ मित्रज्ञाश्च ( सन्मित्राश्च ) शोक ( लोभ ).

(५) भा. १२।१६२।१८ ; भामु. १२।१६८।१८ –१९ भृत ( कुल ) कुलोद्गताः ( कुलोद्वहाः ).

(६) भा. १२।१६२।१९ ; भामु. १२।१६८।१७, १९ उत्तरार्धे ( दोषैः प्रमुक्ताः प्रथितास्ते ग्राह्याः पार्थिवैर्नराः ॥ ).

(७) भा. १२।१६२।२० ; भामु. १२।१६८।२० सन्तस्तु ( संप्रतु ).

[1]विरक्ताश्च न रुष्यन्ति मनसाऽप्यर्थकोविदाः ।
आत्मानं पीडयित्वाऽपि सुहृत्कार्यपरायणाः ।
न विरज्यन्ति मित्रेभ्यो वासो
रक्तमिवाऽऽविकम् ॥

वासो रक्तमिवाऽऽविकं मेषकम्बलः ।　　　　नीटी.

[2]दोषांश्च लोभमोहादीनर्थेषु युवतिष्वथ ।
न दर्शयन्ति सुहृदां विश्वस्ता बन्धुवत्सलाः ॥

अनर्थे निर्धने क्रोधाद्विरागं न दर्शयन्ति, युवतीषु च लोभमोहाभ्यां विरागं न दर्शयन्तीति योजना । विरज्यन्ति इति पूर्वश्लोकात् विपरिणामेनानुषज्यते । 'दोषांश्च लोभमोहादीनर्थेषु युवतीषु च' इति पाठान्तरं तु स्पष्टार्थम् ।　　　　नीटी.

[3]लोष्टकाञ्चनतुल्यार्थाः सुहृत्स्वशठबुद्धयः ।
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः ।
संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ॥

अभिमानानि सर्वतः प्रमाणानि शास्त्रादीनि सृष्टार्थं प्रारब्धकर्मप्रापितं चार्थं चरन्ति अनुसरन्ति अनुषङ्गिणः आत्ममानरहिताः ।　　　　नीटी.

[4]ईदृशैः पुरुषश्रेष्ठैः संधिं यः कुरुते नृपः ।
तस्य विस्तीर्यते राष्ट्रं ज्योत्स्ना ग्रहपतेरिव ॥

[5]शास्त्रनित्या जितक्रोधा बलवन्तो रणप्रियाः ।
क्षान्ताः शीलगुणोपेताः संधेयाः पुरुषोत्तमाः ॥

---

(१) भा. १२।१६२।२१ ; भामु. १२।१६८।२१ रुष्यन्ति ( दुष्यन्ति ) न विरज्यन्ति ( विरज्यन्ति न ).

(२) भा. १२।१६२।२२ ; भामु. १२।१६८।२२ पूर्वार्धे ( क्रोधाच्च लोभमोहाभ्यां नानर्थे युवतीषु च । ) सुहृदां ( सुहृदो ) बन्धु ( धर्म ).

(३) भा. १२।१६२।२३ ; भामु. १२।१६८।२३ –२४ लोष्ट ( लोष्ठ ) त्स्वशठ ( त्सु दृढ ) द्वितीयार्धे ( ये चरन्त्यभिमानानि सृष्टार्थमनुषङ्गिणः । ).

(४) भा. १२।१६२।२४ ; भामु. १२।१६८।२४ –२५ संधिं यः ( यः संधिं ) राष्ट्रं ( राज्यं ).

(५) भा. १२।१६२।२५ ; भामु. १२।१६८।२५ –२६ रणप्रियाः ( रणे सदा ) क्षान्ताः ( जन्म ).

[1]ये च दोषसमायुक्ता नराः प्रोक्ता मयाऽनघ ।
तेषामप्यधमो राजन् कृतघ्नो मित्रघातकः ।
त्यक्तव्यः स दुराचारः सर्वेषामिति निश्चयः ॥

कृतमुपकारं घ्नन्ति वाचाऽपलापेन वा ते कृतघ्नाः, ते एव उपकर्तुर्नाशकराः मित्रद्रुहः । नीटी.

## वाल्मीकिरामायणम्

सुग्रीवस्य अग्निसाक्षिका रामसख्यप्राप्तिः

[2]परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः ।
लक्ष्मणस्याग्रजं राममिदं वचनमब्रवीत् ॥
[3]सर्वथाऽहमनुग्राह्यो देवतानां न संशयः ।
उपपन्नो गुणोपेतः सखा यस्य भवान् मम ॥
[4]शक्यं ननु भवेद्वीर सहायेन त्वया मम ।
परराज्यमपि प्राप्तुं स्वराज्यं किं पुनः सखे ॥
[5]सोऽहं सभाग्यो बन्धूनां सुहृदां च ततो भृशम् ।
यथाऽग्निसाक्षिकं सख्यं लब्धं मे राघव त्वया ॥
[6]अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
न तु वक्तुं समर्थोऽहं स्वयमेवाऽऽत्मनो गुणान् ॥

(१) भा. १२।१६२।२६; भामु. १२।१६८।२६–२७ प्यधमो (प्यधमा) घ्नो (घ्ना) घातकः (घातकाः) त्यक्तव्यः स दुराचारः (त्यक्तव्यास्तु दुराचाराः).

(२) वारा. ४।६।११; वाराकु. ४।८।११ स्याग्रजं (स्याग्रतो).

(३) वारा. ४।६।१२; वाराकु. ४।८।१२ तानां न (तानाम) पन्नो (पन्न).

(४) वारा. ४।६।१३; वाराकु. ४।८।१३ ननु (खलु) वीर(द्राम) मम(ऽनघ) पर(सुर) सखे(प्रभो).

(५) वारा. ४।६।१४; वाराकु. ४।८।१४ भाग्यो (भाज्यो) च ततो भृशम् (चैव राघव) यथाऽ (यस्या) सख्यं (मित्रं) मे राघव त्वया (राघववंशजम्).

(६) वारा. ४।६।१५; वाराकु. ४।८।१५ मेवाऽऽत्मनो (मात्मगतान्).

[1]महात्मनां हि भूयिष्ठं त्वद्विधानां कृतात्मनाम् ।
निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥
[2]रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च ।
अविभक्तानि साधूनामवगच्छन्ति साधवः ॥
आढ्यो वाऽपि दरिद्रो वा दुःखितः सुखितोऽपि वा ॥
[3]निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ।
धनत्यागः सुखत्यागो देहत्यागोऽपि वा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥
[4]प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव ।
उपकारफलं मित्रमपकारोऽरिलक्षणम् ॥

मित्रसंग्रहकर्तव्यता

[5]हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् ॥
[6]राज्यं प्राप्तं यशः स्फीतं बलात्ताराऽऽत्मसात्कृता ।
स्वजनः पूजितः सम्यक् प्रकृतीश्चानुरञ्जिताः ॥
[7]शत्रवस्ते प्रतापेन नाममात्रावशेषिताः ।
मित्राणां संग्रहः शेषस्तं भवान्कर्तुमर्हति ॥

(१) वारा. ४।६।६; वाराकु. ४।८।६ हि (तु).

(२) वाराकु. ४।८।७–८.

(३) वारा. ४।६।७ निर्दोषो वा सदोषो वा (निर्दोषश्च क्षमश्चैव) सुख (सुहृद) देहत्यागोऽपि (देशत्यागोऽथ); वाराकु. ४।८।८–९.

(४) वारा. ४।६।१७–१८ प्रत्युवाच स (अभ्यभाषत) मित्रमपकारोऽरिलक्षणम् (मित्र विदितं ते महाकपे); वाराकु. ४।८।२०–२१.

(५) वारा. ४।२२।७; वाराकु. ४।२९।८ हनू (हनु).

(६) वारा. ४।२२।८; वाराकु. ४।२९।९ (राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ।) पू.

(७) वारा. ४।२२।९ उत्तरार्धे (मित्राणां चैव समयस्तवबुद्ध्या ननु मन्यताम् ॥); वाराकु. ४।२९।९ उत्त.

[1]यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ।
तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ॥

[2]यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ।
समवेतानि सर्वाणि स राज्यं महदश्नुते ॥

[3]तद्भवान् वृत्तसंपन्नः स्थितः पथि निरत्यये ।
मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ॥

[4]संत्यज्य सर्वकर्माणि मित्रार्थे योऽनुवर्तते ।
संभ्रमाद्धि कृतोत्साहः सोऽनर्थैर्नावरुध्यते ॥

[5]यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते ।
स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते ॥

[6]मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥

[7]सर्वथा सुकरं मित्रं दुष्करं परिपालनम् ।
अनित्यत्वाच्च चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥

[8]धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः ।
अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥

(१) वारा. ४।२२।१० काल ( मित्र ) साधु (चानु) प्रताप ( प्रभाव ) ; वाराकु. ४।२९।१०.

(२) वारा. ४।२२।११ ( यस्य दण्डश्च कोशश्च मित्राण्यात्मा पुरं जनः । पूर्णान्येतानि सर्वाणि स राज्यफलमश्नुते ॥ ) ; वाराकु. ४।२९।११.

(३) वारा. ४।२२।१२ वृत्त ( मित्र ) उत्तरार्धे ( मित्राणामुपनीतस्त्वं यथावत् कर्तुमर्हसि ॥ ) ; वाराकु. ४।२९।१२.

(४) वाराकु. ४।२९।१३.

(५) वारा. ४।२२।१३ यस्तु कालव्य (यो हि कालाद्य) मित्रार्थेन ( मित्रार्थेषु ) ; वाराकु. ४।२९।१४.

(६) वारा. ४।२५।६ ; वाराकु. ४।३२।६.

(७) वारा. ४।२५।७ ( दुष्करं सर्वथा मित्रं कृतं दुरनुपालनम् । अनित्यत्वात्तु चित्तस्य प्रीतिरल्पेन भिद्यते ॥ ) ; वाराकु. ४।३२।७.

(८) वाराकु. ४।३३।४७–४८.



मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् ।
तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥

[1]वसेत्सह सपत्नेन क्रुद्धेनाऽऽशीविषेण वा ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥

## कौटिलीयमर्थशास्त्रम्

### मित्रगुणसंपत् अमित्रदोषसंपच्च

[2]पितृपैतामहं नित्यं वश्यमद्वैध्यं महल्लघुसमुत्थमिति मित्रसंपत् ॥

मित्रसंपदमाह— पितृपैतामहमिति । तथाभूतम् , नित्यं अकृतकम् , वश्यम् , अद्वैध्यम् , महत् प्रभुमन्त्रोत्साहशक्तियुक्तम् , लघुसमुत्थं काले सद्यःसाहाय्योद्यतम् , इति मित्रसंपत् । श्रीमूला.

[3]अराजबीजी लुब्धः क्षुद्रपरिषत्को विरक्तप्रकृतिरन्यायवृत्तिरयुक्तो व्यसनी निरुत्साहो दैवप्रमाणो यत्किंचनकार्यगतिरननुबन्धः क्लीबो नित्यापकारी चेत्यमित्रसंपत् । एवंभूतो हि शत्रुः सुखः समुच्छेत्तुं भवति ॥

मित्रसंपत्प्रसङ्गादमित्रसंपदमाह— अराजबीजीत्यादि । अराजबीजी अराजवंश्यः , लुब्धः , क्षुद्रपरिषत्कः दुष्टपरिवारः , विरक्तप्रकृतिः , अन्यायवृत्तिः अयथाशास्त्रानुष्ठानः , अयुक्तः अनुत्थानः , व्यसनी, निरुत्साहः , दैवप्रमाणः पुरुषकारशून्यः , यत्किंचनकारी अविवेकानुष्ठानः , अगतिः उच्छिन्नतायामशरणः , अननुबन्धः असहायः , क्लीबः धैर्यहीनः , नित्यापकारी च स्वजनपरजनयोः , इत्यरिसंपत् । एवंभूतो हीति । यथोक्तचतुर्दशगुणयुक्तो हि शत्रुः समुच्छेत्तुं सुखः अनायासेन शक्यः भवति । श्रीमूला.

(१) वारा. ५।९०।३० तु मित्रप्रवादेन ( चामित्रप्रतिष्ठेन ) ; वाराकु. ६।१६।२.

(२) कौ. ६।१.

(३) कौ. ६।१ ; विश्व. १।३०६ परिषत्को ( पर्षत्को ) ( दैवप्रमाणो० ) ( क्लीबो० ).

मित्रप्रकाराः

**तत्रैतद्भवति—**

**'नित्यं वश्यं लघूत्थानं पितृपैतामहं महत् ।**
**अद्वैध्यं चेति संपन्नं मित्रं षड्गुणमुच्यते ॥**

अथ मित्रस्य गुणभेदकृतान् भेदान् वक्तुमाह— तत्रेति । तत्र मित्रलाभसंधौ एतत् वक्ष्यमाणं मित्रनिरूपणं भवति । मित्रस्य गुणानाह— नित्यमित्यादि । मित्रसंपदुपेतं मित्रं नित्यत्ववश्यत्वादिभिः षड्भिर्गुणैर्युक्तमुच्यते इति श्लोकस्यार्थः । श्रीमूला.

**ऋते यदर्थं प्रणयाद्रक्ष्यते यच्च रक्षति ।**
**पूर्वोपचितसंबन्धं तन्मित्रं नित्यमुच्यते ॥**

गुणान् क्रमेण लक्षयति— ऋत इत्यादि । पूर्वप्ररूढयौनादिसंबन्धनिमित्तस्नेहत्वमात्रात् विनैवार्थसंबन्धं यत् रक्ष्यते, यच्च कर्तृ रक्षति, तदुभयमन्योन्यं प्रति नित्यं मित्रमित्यर्थः । 'यदर्थप्रणयात्' इति समस्तपाठोऽप्यस्ति । श्रीमूला.

**सर्वचित्रमहाभोगं त्रिविधं वश्यमुच्यते ।**
**एकतो भोग्युभयतः सर्वतोभोगि चापरम् ॥**

वश्यमाह— सर्वचित्रमहाभोगमित्यादि । वश्यं मित्रं सर्वचित्रमहाभोगं त्रिविधं सर्वभोगं चित्रभोगं महाभोगमिति त्रिविधम् । तत्र दण्डकोशभूमिभिरुपकारकं सर्वभोगम् । दण्डकोशाभ्यां प्रभूतमुपकुर्वत् महाभोगम् । रत्नसारफल्गुकुप्यद्रव्यवनादिना उपकारकं चित्रभोगम् । इदमर्थप्राप्तिलक्षणोपकारप्रयुक्तं त्रैविध्यम् । अनर्थपरिहारलक्षणोपकारनिमित्तं त्रैविध्यमुत्तरार्धेनोच्यते— एकतोभोगि उभयतोभोगि सर्वतोभोगीति च । एकतो यत् अमित्रप्रतिकारकं तदाद्यम्, यत् अमित्रतदासारोभयप्रतिकारकं तत् द्वितीयम्, यत् अमित्रासारप्रतिरोधकाटविकप्रतिकारकं तत् तृतीयमिति बोद्धव्यम् । श्रीमूला.

**आदातृ वा दातृपि वा जीवत्यरिषु हिंसया ।**
**मित्रं नित्यमवश्यं तद्दुर्गाटव्यपसारि च ॥**

अथ नित्यं वश्यत्वहीनं भवति, वश्यं च नित्यत्वहीनम् । तत्राऽऽद्यमाह— आदातृ वेत्यादि । यद्विजिगीष्वनुपकारकमपि शत्रुषु लुण्टनाद्यपकारैरादानं दानं वा कुर्वदुपजीवति, दुर्गाटव्यपसरणशीलतया चाऽऽत्मानं रक्षच्छत्रोरग्राह्यं भवति, तत् वश्यत्वरहितं नित्यं मित्रमित्यर्थः । श्रीमूला.

**अन्यतो विगृहीतं यल्लघुव्यसनमेव वा ।**
**संधत्ते चोपकाराय तन्मित्रं वश्यमध्रुवम् ॥**

द्वितीयमाह— अन्यत इति । यत् अन्यतः शत्रुणा विगृहीतं लघुव्यसनमेव वा अल्पव्यसनयुक्तं वा सत् उपकाराय संधत्ते विजिगीषुणा सह संधिं करोति तत् मित्रं वश्यम्, उपकारकत्वात्, अध्रुवं अनित्यम्, आत्मोपकारकालमात्रावस्थायिमैत्रत्वात् । श्रीमूला.

**एकार्थानर्थसंबन्धमुपकार्यविकारि च ।**
**मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि ॥**

अयत्नकरणीयसैन्यसंनाहत्वलक्षणं लघूत्थानत्वं पितृपितामहक्रमानुवृत्तमैत्रबन्धत्वलक्षणं पितृपैतामहत्वं प्रमाणप्रतापगरिष्ठसैन्ययुक्तत्वलक्षणं महत्त्वं च सुबोधत्वान्न लक्षणीयमिति मन्वानः तान्यतिक्रम्य अद्वैध्यं लक्षयति— एकार्थानर्थसंबन्धमिति । समानसुखदुःखसंबन्धं उपकारि अविकारि च अव्यभिचारि च मित्रं आपदि अद्वैध्यम्, द्वैध्यं भेदः, तद्रहितत्वात् तदाख्यम् । अत एव एतत् मित्रं मित्रभावि मित्रभावनित्ययोगित्वान्मित्रभावि इत्यपि आख्यायते इत्यर्थः । श्रीमूला.

**मित्रभावाद्ध्रुवं मित्रं शत्रुसाधारणाच्चलम् ।**
**न कस्यचिदुदासीनं द्वयोरुभयभावि तत् ॥**

मित्रभाविविपरीतं उभयभाव्यप्यस्ति । तच्चोभयभावित्वं शत्रुविजिगीषूभयानुपकारकत्वात् तदुभयोपकारकत्वात् दुर्बलतया तदुभयसेवित्वाद्वा त्रिप्रकारं भवति । तत्र यदाद्यमुभयभावि तत् मित्रभावस्य शत्रुविजिगीषूभयातिरिक्तविषयत्वाभावेन असाधारणतया नित्यत्वात् शत्रुविजिगीषूभयसाधारणत्वेन अनित्यत्वाच्च नित्यानित्योभयरूपम् । तदेतदाह— मित्रभावाद्ध्रुवं मित्रमित्यादि । मित्रभावात् शत्रुमित्रातिरिक्तागोचरत्वेन असाधारणादित्यार्थम् । न कस्यचित्, उपकारकमिति शेषः । तदिदं शक्तत्वेऽपि अनभिनिवेशात् उभयानुपकारकम् । श्रीमूला.

(१) कौ.७।९.

**विजिगीषोरमित्रं यन्मित्रमन्तर्धितां गतम् ।**
**उपकारे निविष्टं वाऽशक्तं वाऽनुपकारि तत् ॥**

उपकाराभिनिविष्टमपि शक्तिविरहात् उभयानुपकारकं उभयभाव्याह— विजिगीषोरमित्रमिति । विजिगीषोर्भूम्यनन्तरत्वात् शत्रुभूतम् , अन्तर्धितां गतं मित्रं शत्रुविजिगीष्वोर्मध्यस्थो दुर्बलः अन्तर्धिः, तत्तां गतं अत एव विधेयत्वान्मित्रशब्दितम्, उपकारे निविष्टं वा अशक्तं वा उभयोरुपकारकरणे साभिनिवेशं च शक्तिहीनं च यत् अनुपकारि तत्, उभयभावीत्यनुवर्तते । 'अमित्रम्' इति क्लीबनिर्देश आर्षः । श्रीमूला.

**प्रियं परस्य वा रक्ष्यं पूज्यसंबन्धमेव वा ।**
**अनुगृह्णाति यन्मित्रं शत्रुसाधारणं हि तत् ॥**

उभयानुग्राहकमुभयतोभाव्याह— प्रियमिति । यत् मित्रं परस्य शत्रोः प्रियं रक्ष्यं वा पूज्यसंबन्धमेव वा स्वपूजनीयगुर्वादिसंबद्धं वा अनुगृह्णाति तत् शत्रुसाधारणं शत्रुमित्रोभयसमानं उभयतोभावीति यावत् । श्रीमूला.

**प्रकृष्टभौमं संतुष्टं बलवच्चालसं च यत् ।**
**उदासीनं भवत्येतद्व्यसनादवमानितम् ॥**

अथ कीदृशं मित्रमुपकारकर्तव्यतादशायामुदासीनं स्यादित्याह— प्रकृष्टभौममिति । विप्रकृष्टभूमिस्थितं संतुष्टं अपूर्वलाभनिःस्पृहं स्थितार्थपरितृप्तं बलवत् शौर्यगर्वादनुपजातद्वेषं अलसं व्यसनादवमानितं च द्यूतादिव्यसनदोषादवज्ञातं च एतत् ईदृशं मित्रं उदासीनं भवति । श्रीमूला.

**अरेर्नेतुश्च यद्वृद्धिं दौर्बल्यादनुवर्तते ।**
**उभयस्याप्यविद्विष्टं विद्यादुभयभावि तत् ॥**

दुर्बलत्वादुभयसेवकमुभयभाव्याह— अरेर्नेतुश्चेति । शत्रोर्विजिगीषोश्च वृद्धिं यत् मित्रं दौर्बल्यात् अनुवर्तते तामभिनन्दत् तावाश्रयतीत्यर्थः । कथंभूतम् ? उभयस्यापि शत्रुमित्रयोरपि अविद्विष्टम् । तत् उभयभावि उभयानुवर्ति उभयभावि विद्यात् । तदेवं मित्रविशेषा निरूपिताः। श्रीमूला.

**कारणाकरणध्वस्तं कारणाकरणागतम् ।**
**यो मित्रं समपेक्षेत स मृत्युमुपगूहति ॥**

मित्रसामान्यविषयं विधिमाह— कारणाकरणध्वस्तमिति । कारणानुत्पादे अपगतं कारणाकरणागतं कारणानुत्पादे पुनरायातं मित्रं यः समपेक्षेत स्वीकुर्यात् सः मृत्युं उपगूहति आलिङ्गति । श्रीमूला.

## चाणक्यसूत्राणि

मित्रलक्षणम्

**[1]आपत्सु स्नेहसंयुक्तं मित्रम् ॥**
**मित्रसंग्रहणे बलं संपद्यते ॥**
**बलवानलब्धलाभे प्रयतते ॥**

## चाणक्यनीतिदर्पणः

मित्रं परीक्ष्य वर्तितव्यम्

**[2]परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।**
**वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥**
**[3]न विश्वसेत्कुमित्रे च मित्रे चापि न विश्वसेत् ।**
**कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥**

## चाणक्यनीतिशास्त्रम्

मित्रं परीक्ष्य वर्तितव्यम्

**[4]सकृद्दुष्टं च मित्रं यः पुनः संधातुमिच्छति ।**
**स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥**

---

(१) चासू. ३५–३७.

(२) चाद. २।५; वृचा. २।५; चानी. १६; चासा. ३।६०; चाशा. ८।४९ तादृशं (कुटिलं).

(३) चाद. २।६; वृचा. २।६ कुमित्रे च (कुमित्रस्य) सर्वं गुह्यं (सर्वगुह्यं); चानी. १८ कुमित्रे च (दविश्वस्ते) गुह्यं (दोषं); चासा. ३।४६ कुमित्रे च (दमित्रस्य) सर्वं गुह्यं (सर्वगुह्यं); चाशा. ७।२८ कुमित्रे च (दमित्रस्य) मित्रे चापि (मित्रस्यापि).

(४) चानी. १७; चाशा. ३।१५ च मित्रं यः (तु यो मित्रं).

[1]न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा ॥

### चाणक्यसारसंग्रहः

मित्रं परीक्ष्य वर्तितव्यम्

[2]न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

### चाणक्यराजनीतिशास्त्रम्

मित्रं परीक्ष्य वर्तितव्यम्

[3]न विश्वसेत्पूर्वपराजितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णां
काकप्रणीतेन हुताशनेन ॥

### मनुः

मित्रलक्षणम्

[4]धर्मज्ञं च कृतज्ञं च तुष्टप्रकृति चैव यत् ।
अनुरक्तं स्थिरारम्भं लघु मित्रं प्रशस्यते ॥

(१) धर्मज्ञं उपकारस्य दक्षं अनुरक्तामात्यं सानुरागं स्थिरकार्ये दक्षं यत् तन्मित्रमतिशयेनेष्यते । गोरा.

(२) तुष्टप्रकृतिकं तोषितस्वप्रकृति । स्थिरारम्भं अचलचित्तम् । लघु लघ्वपि, क्षुद्रमित्यर्थः । मवि.

(३) धर्मज्ञं कृतोपकारस्य स्मर्तृ सानुरागं अनुरक्तं स्थिरकार्यारम्भं प्रीतिमत्प्रकृतिकं यत् तन्मित्रमतिशयेन शस्यते । ममु.

(४) तत्र मित्रं लक्षयति– धर्मज्ञमिति । कृतज्ञं कृतोपकारस्मर्तारम् । तुष्टप्रकृतिः तुष्टाः अधि( ? वि )-कारिणः प्रकृतयः अमात्यादयः यस्य । लघ्विति अनायाससाध्यता स्वस्मान्न्यूनत्वं वा । अधार्मिकादेर्मित्रता दुःसंपाद्येति भावः । मच.

(५) लघुः शीघ्रकारी । * नन्द.

### याज्ञवल्क्यः

मित्रलाभः श्रेष्ठः

[1]हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ॥

(१) यदि तु मित्रेण सह तुल्यफलायां यात्रायामवरुद्धो रिपुरशक्तो भूम्यादि प्रयच्छेत् तदा किं मित्रमतिसंधाय स्वकार्यं न क्रियते ? उक्तं हि मनुनाऽपि– 'यथैनं नातिसंदध्युर्मित्रोदासीनशत्रवः' (मस्मृ. ७।१८०) इत्यादि, 'विदध्याद्धितमात्मनः' (मस्मृ. ७।५७) इति च । धर्मेतरविवेकाकुशल, मैवम्– हिरण्येति । समाहितः लोकद्वयहिताभिज्ञः । विश्व.

(२) लाभाय परराष्ट्रं गन्तव्यमित्युक्तम् । लाभश्च त्रिविधः– हिरण्यलाभो भूमिलाभो मित्रलाभश्चेति । तेषु मित्रलाभो ज्यायान् । ततस्तत्प्राप्त्युपाये यत्नो विधातव्यः । तत्प्राप्त्युपायश्च सत्यवचनमित्याह– हिरण्येति । यस्मात् हिरण्यभूमिलाभेभ्यो मित्रलब्धिः वरा उत्कृष्टा, तस्मात्तत्प्राप्त्यै यतेत यत्नं कुर्यात् सामादिभिः । सत्यं च रक्षेत् समाहितः सावधानः, सत्यमूलत्वान्मित्रलाभस्य । मिता.

(३) सामादीनामुपायानां परस्परविरुद्धानेकफलोदयप्रसङ्गे यत् ग्राह्यं तदाह– हिरण्येति । सामादीनुपायान् प्रति उपेयतयाऽवस्थितानां हिरण्यभूमिमित्रलाभानां

---

(१) **चानी.** २१ ; **चासा.** १।७७ उत्तरार्धे (कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥) ; **चाशा.** ७।१ कारणेन हि जानाति (अवस्थातः प्रजायन्ते) शेषं चासावत्.

(२) **चासा.** ३।४७ ; **चाशा.** ७।४२.

(३) **चाशा.** ७।४३.

(४) **मस्मृ.** ७।२०९ ; **राक.** ९६ ; **रार.** ४३ ; **दीक.** १।३५२ ; **राप्र.** २७७. दीपकलिकातिरिक्तेषु सर्वेषु स्मृतिनिबन्धपुस्तकेषु 'प्रकृतिमेव च' इति पाठो मुद्रितः.

* शेषं मचगतम् ।

(१) **यास्मृ.** १।३५२ ; **विश्व.** १।३४८ त्प्राप्त्यै (त्प्राप्तौ) रक्षेत् सत्यं (सत्यं रक्षेत्) ; **मिता.** ; **अप.** ३५०–३५१ लाभेभ्यो (लाभेषु) त्प्राप्त्यै (त्प्राप्तौ) ; **राक.** ९६; **रार.** ४४ वरा यतः (वैरायते) हितः (हितम्) ; **वीमि.** त्प्राप्त्यै (त्प्राप्तौ) ; **राप्र.** २७७ ; **भाच.** ७।२०८ द्वितीयचरणः.

मध्ये मित्रलब्धिः वरा श्रेष्ठा, अतो मित्रप्राप्तिविषयो यत्नः कार्यः। मैत्रीकरणकाले कृतस्य सत्यस्यारक्षणे मित्रमप्यमित्रं भवेत्। अतः सत्यरक्षणे समाधिर्विधेयः। एतच्च सामादिसाध्यात् हिरण्यभूमिलाभादधिकलाभहेतोर्मित्रस्य प्राप्तौ वेदितव्यम्, अन्यदा तु हिरण्यलाभ एव बलवान्। अप.

(४) मित्ररूपराज्याङ्गं दर्शयन्नेव तत्संग्रहावश्यकर्तव्यत्वमाह— हिरण्येति। हिरण्यलाभात् भूमिलाभाच्च मित्रलब्धिः वरा, अतः तत्प्राप्तौ मित्रत्वविशिष्टस्य प्राप्तौ यतेत। तत्र मुख्यं व्यापारमाह— समाहितः सावधानः सन् मित्रायोक्तं वचनं सत्यं रक्षेत् सत्यत्वविशिष्टं कुर्यात्। उक्तविसंवादो न कार्य इति यावत्। भूमिलाभेभ्य इति बहुवचनमाद्यर्थकममात्यादिलाभप्राप्त्यर्थकम्। वीमि.

## गरुडपुराणम्

मित्रं परीक्ष्य वर्तितव्यम्, मित्रप्रयोजनम्

सूत उवाच—

[१]न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः।
कारणादेव जायन्ते मित्राणि रिपवस्तथा॥
शोकत्राणं भयत्राणं प्रीतिविश्वासभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्॥
न मातरि न दारेषु न सोदर्ये न चाऽऽत्मजे।
विश्वासस्तादृशः पुंसां यादृङ् मित्रे स्वभावजे॥
न विश्वसेदविश्वस्ते मित्रस्यापि न विश्वसेत्।
कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत्॥
[२]परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं मायामयमरिं तथा(?यथा)॥

## अग्निपुराणम्

मित्रगुणसंपत्, मित्रलक्षणम्, चतुर्विधं मित्रम्

[३]योगविज्ञानसत्त्वाढ्यं महापक्षं प्रियंवदम्।
आयतिक्षममद्वैधं मित्रं कुर्वीत सत्कुलम्॥
दूरादेवाभिगमनं स्पष्टार्थहृदयानुगा।
वाक् सत्कृत्य प्रदानं च त्रिविधो मित्रसंग्रहः॥
धर्मकामार्थसंयोगो मित्रात्तु त्रिविधं फलम्।
औरसं तत्र संनद्धं तथा वंशक्रमागतम्॥
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्।
मित्रे गुणाः सत्यताद्याः समानसुखदुःखता॥

(१) गरुड. १।११४।१–२, ४,२२.
(२) गरुड. १।११५।४८.
(३) अग्नि. २३९।३४–३७.

## कामन्दकीयनीतिसारः

मित्रगुणसंपत् मित्रलक्षणं मित्रफलं मित्रभेदाश्च

[१]त्यागविज्ञानसत्त्वाढ्यं महापक्षं प्रियंवदम्।
आयतिक्षममद्वैध्यं मित्रं कुर्वीत सत्कुलम्॥

(१) सत्कुलं कुलीनम्, तत एव मैत्री निर्वहति इति युक्तिः। रार. ४४

(२) मित्रसंपदमाह— त्यागेत्यादिना श्लोकाष्टकेन। महापक्षं महाश्रयत्वात् अनुच्छेद्यम्। आयतिक्षमं स्थिरत्वात् आगामिकालं सहत इत्यर्थः। अद्वैध्यं लोकस्य। जम.

(३) मित्रप्रकृतेर्गुणसंपदमभिधातुमाह— त्यागेति। त्याग इत्यलुब्धता। विज्ञानमिति सर्वशास्त्रप्रवीणता। सत्त्वमिति व्यसनेऽभ्युदये यदविकारि। महापक्षमिति बहुबन्ध्वादिवर्गम्। प्रियंवदमिति प्रियहितवादि। आयतिक्षममिति आगामिकालेऽव्यभिचारि साधु। अद्वैध्यं नेतरि शत्रौ चेति द्विधाभावरहितम्। मित्रं एवंविधं कुर्वीत। सत्कुलं सत्कुलोत्पन्नम्। सदित्युभयपक्षेऽपि व्यभिचारो नास्ति, तत्कदाचिदपि न व्यभिचरतीति। उनि.

[२]आदौ तन्व्यो बृहन्मध्या विस्तारिण्यः पदे पदे।
यायिन्यो न निवर्तिन्यः सतां मैत्र्यः सरित्समाः॥

(१) कानी. ४।६६; उनि. मद्वैध्यं (मद्वैधं); रार. ४४ (=) सत्त्वाढ्यं (मन्त्राढ्यं) नीम. ४२ सत्त्वाढ्यं (सत्याढ्यं) क्षम (क्षेम).
(२) कानी. ४।६६ इति श्लोकादनन्तरं उपाध्यायनिरपेक्षायाम्.

मैत्रीस्वरूपमभिधातुमाह— आदाविति । सतां सत्पुरुषाणां मैत्र्यः मित्रताः सरित्समाः नदीसमाः । कथमित्याह— आदौ तन्व्यः, जलप्रदेशस्यादावल्पत्वात् । बृहन्मध्याः, मध्यप्रदेशे बहुजलत्वात् । विस्तारिण्यः पदे पदे स्थाने स्थाने । यायिन्य इति निर्वहणशीलाः । न निवर्तिन्यः न निवर्तनशीलाः भवन्ति, प्रतिपन्ननिर्वहणशीलत्वात् सताम् । एवंविधा मैत्री यत्र तदेव मित्रमिति । उनि.

[1]समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसंशयम् ।
दर्शयत्यच्छहृदयः कुलीनश्चतुरस्रताम् ॥

(१) सत्कुलमित्यस्य प्रयोजनमाह— समुत्पन्नेष्वित्यादि । चतुरश्रतां अवक्रताम् । जम.

(२) सत्कुलस्य गुणं दर्शयन्नाह— समुत्पन्नेष्विति । कृच्छ्रेष्विति आपत्सु । दारुणेष्विति अप्रतिविधेयेषु । दर्शयति अच्छहृदयः सुजनः मित्रतां गतः चतुरस्रतां एकरूपताम् । उनि.

[2]पितृपैतामहं नित्यमद्वैध्यं हृदयानुगम् ।
महल्लघुसमुत्थानं मित्रं कार्यार्थमिष्यते ॥

(१) मा तावन्मित्रं सामान्येन कुर्वीत मित्रकार्यार्थम् । तत्र यदिष्यते तदाह— पितृपैतामहमित्यादिना । नित्यं अन्यत्रागमनात्, हृदयानुगं यथोक्तकारित्वात्, महत् तन्त्रबाहुल्यात्, लघुसमुत्थानं अव्यासङ्गात्, कार्यकालं नातिपातयति । जम.

(२) पितृपैतामहमिति क्रमायातम् । अद्वैध्यं शत्रुसंगत्या द्वैधीभावं न गच्छति । हृदयानुगं हृदयहारिस्वभावादेव । महदिति शक्तित्रयोपचितम् । लघुसमुत्थानं विजिगीषुकार्यं प्रति शीघ्रमुत्तिष्ठति । एवंविधं मित्रं कार्यार्थमिष्यते विजिगीषुणेति । उनि.

[3]दूरादेवाभिगमनं स्पष्टार्था हृदयानुगा ।
वाक् सत्कृत्य प्रदानं च त्रिविधो मित्रसंग्रहः ॥

(१) अभिगमनं अभ्युत्थानम् । स्पष्टार्थहृदयानुगा अच्छद्ममधुरा वाणी । सत्कृत्य दानं इष्टकरणम् । इति त्रिविधः मैत्रीरक्षणोपायः । रार. ४४

(२) मित्रसंग्रहोपायमाह— दूरादेवेत्यादिना । स्पष्टार्था यथावस्थितार्थाविष्करणात् । हृदयानुगा अपरुषत्वात् । जम.

(३) त्रिभिः प्रकारैर्मित्राणि भवन्तीति दर्शयन्नाह— दूरादिति । मित्रे समागते दूरादेवाभिमुखं गमनम् । स्पष्टार्थहृदयानुगा वागिति । कपटवर्जितः स्पष्टोऽर्थः हृदयानुगश्च यस्याः सा तादृग्भूता वाक्, प्रयोक्तव्येति शेषः । सत्कृत्य सत्कारं कृत्वा प्रदानं देयवस्तूनामिति । त्रिविधो मित्रसंग्रह इति । अनेनानन्तरोक्तेन त्रितयेन मित्राणि संगृह्यन्ते मित्राणि भवन्तीत्यर्थः । उनि.

[1]धर्मकामार्थसंयोगो मित्रात्तु त्रिविधं फलम् ।
यस्मादेतत्त्रयं नास्ति तत्सेवेत न पण्डितः ॥

(१) मित्रात्त्रिविधं फलमिति । संगृहीतात् मित्रात् । जम.

(२) मित्रात्फलमभिधातुमाह— धर्मेति । धर्मः अर्थश्च कामश्च येन सहायेन संयुज्यते प्राप्यते मित्रेण, तदिदं मित्रात् त्रिविधं फलम् । यस्मिन्नेतत् त्रयं व्यस्तं समस्तं वा नास्ति, न तत्सेवेत पण्डितः विवेकीति । उनि.

[2]औरसं मैत्रसंबद्धं तथा देशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥

(१) औरसमत्र जन्मना संबन्धि, कृतसंबन्धं पाणिग्रहणादिना संबन्धि, वंशक्रमागतं पित्रादिमित्रम्, व्यसनेभ्यः रक्षितम्, चतुर्विधमिदं मित्रमिति । न च

---

(१) कानी. ४।६७; नीम. ४९.

(२) कानी. ४।६८.

(३) कानी. ४।६९; उनि. र्था ह (र्थह); रार. ४४ (=) उनिवत्.

(१) कानी. ४।७०; उनि. यस्मादे (यस्मिन्ने); रार. ४५ (=) धर्मकामार्थ (धर्मार्थकाम) मित्रात्तु (मित्राच्च) यस्मादे (यस्मिन्ने) तत्सेवेत न (तन्न सेवेत); नीम. ४९ धर्मकामार्थ (धर्मार्थकाम) नास्ति तत्सेवेत न (न स्यात्तन्न सेवेत).

(२) कानी. ४।७१; उनि. मैत्र (तन्त्र) देश (वंश); रार. ४५ (=) मैत्र (कृत) देश (वंश).

औरसपदेन पुत्रः, मातापितृभ्रातृबान्धवादीनां तथात्वात् ।
रार. ४५

(२) मित्रभेदानाह– औरसमित्यादिना । तत्र कौटिल्येन त्रिविधं मित्रमुक्तम्– सहजं प्राकृतं कृत्रिमं च । इह तु शास्त्रकारेण सहजस्य द्विविधसंबन्धख्यापनार्थं चतुर्विधमुक्तम् । तत्र यत् मातापितृसंबद्धं तत् सहजम् । तदेवाऽऽन्तरेण संबन्धेन संबद्धं औरसं भवति, बाह्येन मैत्रीसंबन्धेन वंशक्रमागतं मैत्रसंबद्धम् । तथा देशक्रमागतमिति तत्संबद्धं भूम्येकान्तरितत्वात् स्वराज्यप्रतिबद्धं प्रकृतिमित्रं भवति । रक्षितं व्यसनेभ्यः जीवितहेतोराश्रितत्वात् कृत्रिमम् । जम.

(३) कारणैरपि मित्रभेदानभिधातुमाह– औरसमिति । औरसमिति सोदर्यं भूत्वा स्वभावत एव स्निग्धम् । सोदर्याः अस्निग्धाः शत्रवोऽपि दृश्यन्ते । अतः स्निग्धमौरसं मित्रं भवति । तन्त्रसंबद्धमिति । तन्त्रं मण्डलम्, तेन कृतसंबन्धम् । भूम्येकान्तरं मित्रमिति । तथा वंशक्रमागतं पितृपैतामहमिति । रक्षितं व्यसनेभ्यः आपद्भ्यः । मित्रमेवं चतुर्विधं कारणचतुष्टयेन मित्रं भवतीति । उनि.

**[1]शुचिता त्यागिता शौर्यं समानसुखदुःखता ।**
**अनुरागश्च दाक्ष्यं च सत्यता च सुहृद्गुणाः ॥**

(१) एषां गुणानाह– शुचितेत्यादिना । समानसुखदुःखता एकार्थानर्थसंबद्धत्वम् । जम.

(२) भूयोऽपि मित्रगुणानभिधातुमाह– शुचितेति । शुचिता अर्थव्यये । त्यागिता संव्यवहारविषये अलुब्धत्वम् । शौर्यं विजिगीषोः साहाय्यदाने अभीरुत्वम् । समानसुखदुःखता विजिगीषुणा सह सुखी दुःखी वा । अनुरागश्च विजिगीषौ । दाक्ष्यं च विजिगीषुकार्याणां संपादने । सत्यता च अमृषावादश्च । एते सुहृद्गुणाः, एभिर्गुणैर्युक्तः सुहृद्भवतीति । उनि.

(१) कानी. ४।७२; रार. ४५ (=); नीम. ४९.

**[1]तदर्थेहाऽनुरागश्च संक्षिप्तं मित्रलक्षणम् ।**
**यस्मिन्नेतन्न तन्मित्रं तत्राऽऽत्मानं न निक्षिपेत् ॥**

(१) न निक्षिपेत् न विश्वसेदित्यर्थः । नीम. ४९

(२) तदर्थेहाऽनुरागश्चेति । यत् राजार्थे चेष्टते, चेष्टमानं च न विरज्यते, तदेव मित्रं ज्ञेयमित्यर्थः । जम.

(३) विस्तरेण मित्रसंपदमभिधाय संक्षेपेणाभिधातुमाह– तदर्थेहेति । तदर्था विजिगीषुनिमित्ता ईहा यत्किंचिदीहते तत्सर्वं विजिगीषुहितार्थमेवेति । अनुरागश्च तद्विषय एव । वाङ्मनःकायकर्मभिरपि विजिगीषुहितकारित्वमित्यर्थः । एतत् संक्षिप्तं मित्रलक्षणम् । गुणद्वयमेव मित्रत्वे लिङ्गमित्यर्थः । यस्मिन् मित्रे एतत् गुणद्वयं तदेव मित्रम् । तत्राऽऽत्मानं विनिक्षिपेत् । तत्राऽऽत्मसमर्पणं कर्तव्यमिति । उनि.

***प्रायो मित्राणि कुर्वीत सर्वावस्थानि भूपतिः ।**
**बहुमित्रो हि शक्नोति वशे स्थापयितुं रिपून् ॥**
**न तत्र तिष्ठति भ्राता न तथाऽन्योऽपि वा जनः ।**
**पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥**
**[1]संस्तम्भयति मित्राणि शत्रूनुत्सादयत्यपि ।**
**भूकोशदण्डैर्व्रजति प्राणैश्चाप्युपकारिताम् ॥**

(१) मित्रकर्माऽऽह– संस्तम्भयतीति । संस्तम्भयति मित्राणि विजिगीषोर्यानि बलाधिकान्यरिमित्राणि भवन्ति, विजिगीषुभयाद्वा अमित्रानाश्रयन्ति । प्राणैः पराभियोगकाले । जम.

(२) मित्राणि विकलत्वात् विचलन्ति संस्तम्भयति, अमित्रान् विजिगीषून् नाशयत्यपि । मित्रमिति कर्तृपद-

* 'प्रायो मित्राणि कुर्वीत' इत्यादिश्लोकद्वयस्य व्याख्यानसंग्रहः राजमण्डलप्रकरणे द्रष्टव्यः ।

(१) कानी. ४।७३; उनि. न्नैतन्न (न्नेतत्तु) न निक्षि (विनिक्षि); रार. ४५ (=) न्नैतन्न (न्नेतद्धि) न निक्षि (विनिःक्षि); नीम. ४९.

(२) कानी. ८।८६–८७.

(३) कानी. १४।३८; उनिसा. द्वितीयचरणे (अमित्रान्नाशयत्यपि) 'अमित्रम्' इत्यपि पाठः, कारिताम् (कारिणे) इत्यपि पाठः.

मूढम् । भूकोषदण्डैः प्राणैश्चापि उपकारितां व्रजति । भूमिधनदानादिना प्राणव्ययेनापि च उपकारं करोतीति भावः । 'अमित्रान्' इत्यत्र 'अमित्रम्' इति, 'उपकारिताम्' इत्यत्र 'उपकारिणे' इति च क्वचित्पाठः । उनिसा.

[1]तत्तत्करोति च बहिर्मित्रं स्नेहनिबन्धनम् ।
तस्मिन् व्यसनमापन्ने मित्रकर्म न विद्यते ॥

(१) तत्तत् करोति यद्यत् विजिगीषोरनुकूलम् । स्नेहनिबन्धनं तद्ध्युपकारनिरपेक्षं भवति । जम.

(२) ततः स्नेहनिबन्धनं परस्परप्रीतिजनितं सुबहु मित्रं करोति साधयति । तस्मिन् मित्रे व्यसनमापन्ने सति मित्रकर्म मित्रसाध्यं कार्यं न विद्यते न सिध्यतीत्यर्थः । 'ततः करोति' इत्यत्र 'तत्तत्करोति' इति पाठान्तरम् । उनिसा.

[2]उपकारादृतेऽप्याशु मित्रं श्रेयसि तिष्ठति ।
मित्रवान्साधयत्यर्थान् दुःसाधानप्यनादरात् ॥

(१) तदेव स्फुटयन्नाह– उपकारादृत इति । श्रेयसि विजिगीषुहिते । जम.

(२) उपकारादृते प्रत्युपकारं विनाऽपि मित्रं श्रेयसि श्रेयस्करकार्ये तिष्ठति, शुभं संपादयतीत्यर्थः । मित्रवान् राजा दुःसाध्यानपि अर्थान् विषयान् अनादरात् अनायासेन साधयति । उनिसा.

## शुक्रनीतिः

मित्रगुणसंपत्, मित्रद्वैविध्यम्, मित्रता अस्थिरा, सहजमित्रलक्षणानि

*[3]लक्षणं सुहृदादीनां समासाच्छृणुताधुना ॥

मित्रः शत्रुश्चतुर्धा स्यादुपकारापकारयोः ।
कर्ता कारयिता चानुमन्ता यश्च सहायकः ॥
यस्य सुद्रवते चित्तं परदुःखेन सर्वदा ।
इष्टार्थे यततेऽन्यस्याप्रेरितः सत्करोति यः ॥
आत्मस्त्रीधनगुह्यानां शरणं समये सुहृत् ।
प्रोक्तोत्तमोऽयमन्यश्च द्वित्र्येकपदमित्रकः ॥
[1]शूरस्योत्थानशीलस्य बलनीतिमतः सदा ।
सर्वेऽमित्रा गूढवैरा नृपाः कालप्रतीक्षकाः ॥
भवन्तीति किमाश्चर्यं राज्यलुब्धा न ते हि किम् ।
न राज्ञो विद्यते मित्रं राजा मित्रं न कस्य वै ॥
प्रायः कृत्रिममित्रे तौ भवतश्च परस्परम् ।
केचित्स्वभावतो मित्राः शत्रवः सन्ति सर्वदा ॥
माता मातृकुलं चैव पिता तत्पितरौ तथा ।
पितृपितृव्यात्मकन्या पत्नी तत्कुलमेव हि ॥
पितृमात्रात्मभगिनी कन्यकासंततिश्च या ।
प्रजापालो गुरुश्चैव मित्राणि सहजानि हि ॥
विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुर्वर्तयन्ति हि तैर्बुधाः ॥

## नीतिवाक्यामृतम्

मित्रलक्षणम्, नित्यसहजकृत्रिमाणि त्रिविधानि मित्राणि, मित्रगुणसंपत्, मित्रदोषाः

[2]यः संपदीव विपद्यपि मेद्यति तन्मित्रम् ॥

अथ मित्रसमुद्देशो व्याख्यायते । तत्र तावन्मित्रलक्षणमाह– य इति । यः पुरुषः संपदीव समृद्धकालवत् तथा विपद्यपि आपत्कालेऽपि मेद्यति स्नेहं करोति तन्मित्रम् । तथा च जैमिनिः– 'यत्समृद्धौ क्रियात्स्नेहं यद्वत्तद्वत्तथाऽऽपदि । तन्मित्रं प्रोच्यते सद्भिर्वैपरीत्येन वैरिणः ॥' । नीवाटी.

यः कारणमन्तरेण रक्ष्यो रक्षको वा भवति तन्नित्यं मित्रम् ॥

---

* 'लक्षणं सुहृदादीनाम्' इत्यादिसार्धश्लोकनवकस्य व्याख्यानं राजमण्डलप्रकरणे द्रष्टव्यम् ।

(१) कानी. १४।३९; उनिसा. प्रथमचरणे (ततः करोति सुबहु), 'तत्तत्करोति' इत्यपि पाठः.

(२) कानी. १४।४०; उनिसा. दुःसाधा (दुःसाध्या).

(३) शुनी. ४।१।१–४.

(१) शुनी. ४।१।८–१३.

(२) नीवा. २३।१–११.

अथ नित्यमित्रस्य लक्षणमाह— य इति। यः पुरुषः कारणं विना प्रयोजनं विना रक्ष्यः रक्ष्यते, वा विकल्पेन रक्षको भवति, तन्नित्यं मित्रमुच्यते। तथा च नारदः— 'रक्ष्यते वध्यमानस्तु अन्यैर्निष्कारणं नरः। रक्षेद्वा वध्यमानं यत्तन्नित्यं मित्रमुच्यते ॥'। नीवाटी.

**तत्सहजं मित्रं यत्पूर्वपुरुषपरंपरायातः संबन्धः ॥**

अथ सहजमित्रलक्षणमाह— तदिति। यस्य मित्रस्य पूर्वपुरुषपरंपरायातः संबन्धो भवति तत्सहजं मित्रमुच्यते। पूर्वपुरुषाः पितृपितामहाः, द्वाभ्यामपि ताभ्यां यः संबन्धस्तेन यः समायातः तत्सहजं मित्रम्। तथा च भागुरिः— 'संबन्धः पूर्वजानां यस्तेन योऽत्र समाययौ। मित्रत्वं कथितं तच्च सहजं मित्रमेव हि ॥'। नीवाटी.

**यद्वृत्तिजीवितहेतोराश्रितं तत्कृत्रिमं मित्रम् ॥**

अथ कृत्रिममित्रस्य लक्षणमाह— यदिति। यः पुरुषो जीवितहेतोर्वृत्तिं गृह्णाति, स्नेहं दर्शयति, तत्कृत्रिमं मित्रमुच्यते। यतो वृत्तेरभावान्मैत्रीं त्यजति। तथा च भारद्वाजः— 'वृत्तिं गृह्णाति यः स्नेहं नरस्य कुरुते नरः। तन्मित्रं कृत्रिमं प्राहुर्नीतिशास्त्रविदो जनाः ॥'। नीवाटी.

**व्यसनेषूपस्थानमर्थेष्वविकल्पः स्त्रीषु परमं शौचं कोपप्रसादविषये वाऽप्रतिपक्षत्वमिति मित्रगुणाः ॥**

अथ मित्रगुणानाह— व्यसनेष्विति। यन्मित्रं व्यसनेषु आपत्कालेषु उपस्थानं करोति समागच्छत्यनाहूतोऽपि। किंविशिष्टः? अविकल्पः विकल्परहितः। केषु? अर्थेषु प्रयोजनेषु। तथा स्त्रीषु विषये यः करोति परमं शौचम्। मित्रस्त्रीषु विषये निःस्पृहत्वं करोतीत्यर्थः। तथा कोपप्रसादविषये वाऽप्रतिपक्षत्वं कोपे समुत्थिते अप्रतिपक्षत्वं प्रसादनं नापेक्षते, स्वयमागच्छति। इति मित्रगुणाः। तथा च नारदः— 'आपत्काले च संप्राप्ते कार्ये च महति स्थिते। कोपे प्रसादनं नेच्छेन्मित्रस्येति गुणाः स्मृताः ॥'। नीवाटी.

**दानेन प्रणयः स्वार्थपरत्वं विपद्युपेक्षणमहितसंप्रयोगो विप्रलम्भनगर्भप्रश्रयश्चेति मित्रदोषाः ॥**

अथ मित्रस्य दोषस्वरूपमाह— दानेनेति। (दानेन प्रणयः किंचिद्दत्त्वा स्नेहकरणम्। स्वार्थपरत्वं स्वार्थे नियुक्तता।) विपद्युपेक्षणं आपत्कालेऽसाहाय्यम्। तथा अहितसंप्रयोगः शत्रुमेलनम्। तथा विप्रलम्भनगर्भप्रश्रयः विप्रलम्भनं विप्लवः, तेन गर्भः मिश्रः प्रश्रयः यस्य इति मित्रदोषाः। तथा च रैभ्यः— 'दानस्नेहो निजार्थत्वमुपेक्षा व्यसनेषु च। वैरिसङ्गोऽप्रशंसा च मित्रदोषाः प्रकीर्तिताः ॥'। नीवाटी.

**स्त्रीसंगतिर्विवादोऽभीक्ष्णयाचनमप्रदानमर्थसंबन्धः परोक्षदोषग्रहणं पैशून्याकर्णनं च मैत्रीभेदकारणानि ॥**

अथ मैत्रीभेदकारणान्याह— स्त्रीसंगतिरिति। स्त्रीसंगतिस्तावत् मित्रभार्यासंगमः सदैवाऽऽस्ते, विवादं यः करोति, तथाऽभीक्ष्णं याचनम्, तथा अप्रदानं न किंचित्कदाचिदपि ददाति, तथा अर्थसंबन्धः अर्थव्यवहारः, तथा परोक्षे दोषग्रहणम्, तथा पैशून्याकर्णनं च यदि कश्चिन्मित्रपैशून्यं करोति तदा तदाकर्णयति। एतानि सप्त वस्तूनि मैत्रीभेदकारणानीति। तथा च शुक्रः— 'स्त्रीसंगतिर्विवादोऽथ सदाऽर्थित्वमदानता। स्वसंबन्धस्तथा निन्दा पैशून्यं मित्रवैरिता ॥'। नीवाटी.

**न क्षीरात्परं महदस्ति यत्संगतिमात्रेण करोति नीरमात्मसमम् ॥**

अथ क्षीरस्य प्रशंसामाह— न क्षीरादिति। क्षीरात् अन्यत् द्वितीयं न महदस्ति न विद्यते। यत् किं कुर्यात्? यत् संगतिमात्रेणैव करोति। किं तत्? नीरं पानीयम्। किंविशिष्टम्? आत्मसमं आत्मतुल्यम्। तस्मात्तेन सह संगतिः क्रियते मिलनमात्रेणैव येन गुणरहितोऽप्यात्मगुणाढ्यः संभाव्यते जनैः। तथा च गौतमः— 'गुणहीनोऽपि चेत्सङ्गं करोति गुणिभिः सह। गुणवान्मन्यते लोकैर्दुग्धाढ्यं कं यथा पयः ॥'। नीवाटी.

**न नीरात्परं महदस्ति यन्मिलितमेव संवर्धयति रक्षति च स्वक्षयेण क्षीरम् ॥**

अथ पानीयमाहात्म्यमाह— न नीरादिति । न नीरात् पानीयात् परं अन्यत् द्वितीयं मित्रमस्ति न विद्यते । कस्माद्धेतोः ? यन्मिलितमात्रमेव संवर्धयति वृद्धिं नयति तत् क्षीरं दुग्धम् । न केवलं संवर्धयति, रक्षति च । केन कृत्वा ? स्वक्षयेण आत्मविनाशेन । एतदुक्तं भवति— यस्य पानीयस्य मिलितं दुग्धं वृद्धिं याति सर्वोऽपि जनो वेत्ति यदेतत्क्षीरम् । तथा रक्षति च यथा आत्मक्षयेण आत्मविनाशेन अदर्शनेन । पानीयं कश्चिन्न पश्यति । यदि पुनरास्वादयति तद्दुग्धं मत्वा तदा विरसत्वान्न पिबति । एवं रक्षा भवति । तथा च भागुरिः— 'न पानीयात्परं मित्रं विद्यते येन मिश्रितम् । दुग्धं वृद्धिं समायाति रक्षते च निजक्षयात् ॥' । नीवाटी.

**येन केनाप्युपकारेण तिर्यञ्चोऽपि प्रत्युपकारिणो व्यभिचारिणश्च न पुनः प्रायेण मनुष्याः ॥**

अथ तिर्यञ्चोऽपि यथोपकारिणो भवन्ति मनुष्या अपि यथाऽनुपकारिणो भवन्ति तदाह— येनेति । एताभ्यां (?) व्याख्यानं बृहत्कथायां ज्ञातव्यम् । नीवाटी.

**तथा चोपाख्यानकम्— * अटव्यां किलान्धकूपे पतितेषु कपिसर्पसिंहाक्षशालिकसौवर्णिकेषु कृतोपकारः कङ्कायननामा कश्चित्पान्थो विशालायां पुरि तस्मादक्षशालिकाद्व्यापदमवाप नाडीजङ्घश्च गौतमादिति ॥**

* 'कस्मिंश्चित् प्रदेशे (अन्धकूपे) केनचिद्दुष्टेन तृणादिभिः पिहितमुखे यदृच्छया देवचोदिताः कपिसर्पसिंहाक्षशालिकाः पतयांबभूवुः । एवमन्धकूपे विपद्यमानास्ते कङ्कायननाम्ना केनचिद् दयालुना पान्थेन तस्मादन्धकूपाद्बहिः निःसारिताः । तेषु च कपिसिंहसर्पास्त्रयस्तिर्यञ्चः तस्मै उपकर्त्रे कङ्कायनाय स्वात्मसमर्पणं कृत्वा तेनानुज्ञाता यथेष्टं देशं जग्मुः । मानवोऽक्षशालिकस्तु कपटोक्तिशतैस्तं तोषयित्वा तस्य मित्रत्वमापन्नः तेन सह नगरग्रामादिषु पर्यटन् तस्य धनमपजिहीर्षुः विशालायां पुरि शून्ये देवालये शयानं तं रात्रौ जघान इति श्रूयते । तथैव नाडीजङ्घनामा कश्चन उपकर्ताऽपि गौतमान्मरणमवापेति बहून्याख्यानानि श्रूयन्ते । मुद्रितपुस्तकस्थमिदं टिप्पणम् ।' इत्यस्मदादर्शपुस्तके टिप्पणी ।

## मानसोल्लासः

कुलीनत्वादिगुणसंपन्नं मित्रं वरणीयम्

**[1]कुलीनं च सुशीलं च सुखे दुःखे च संमतम् ।
अमायं दृढचित्तं च धनैः प्राणैरवञ्चकम् ॥**

**नीतिज्ञं शौचसंपन्नं व्यसनेष्वपराङ्मुखम् ।
कुर्वीत नृपतिर्मित्रं धर्मार्थं सुखसिद्धये ॥**

## अनिर्दिष्टकर्तृकवचनानि

सुमित्रमहिमा

**[2]अधनं स्वर्णादिधनं धनमधनं च वाणिज्यम् ।
अतिधनमेतत्त्रितयं विद्या भूमिः सुमित्रमिति ॥**

मित्रविवेकः

**[3]कस्य राजा भवेन्मित्रं कानि मित्राणि राजनि ॥
[4]राजा मित्रं केन दृष्टं श्रुतं वा ॥**

(१) मासो. २।६८५–६८६.

(२) मच. ७।२०८.

(३) मेधा. ७।१०; राप्र १८.

(४) राप्र. १८.

—०—

## गौतमः

कृषिपशुहिरण्यपण्योद्यानवनेभ्योऽशतः बलिशुल्कादानपरिमाणम्

[1]राज्ञे बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा ॥

( १ ) अधुना रक्षणनिमित्तामस्य वृत्तिमाह— राज्ञ इति । नियुक्ताय देयमिति राजग्रहणम् । प्रतिसंवत्सरं देयमिति बलिग्रहणम् । दानम्, कर्तव्यमिति शेषः । कर्षकैः यावन्तः कृषिजीविनः, न तु वैश्येनैव । दशमं वा अष्टमं वा षष्ठं वा । अधममध्यमोत्तमभूभागक्रमेण व्यवस्थितविकल्पो द्रष्टव्यः । मभा.

( २ ) अस्य राज्ञः कर्षकैः क्षेत्रे यल्लब्धं तद्रक्षणनिमित्ता वृत्तिरेषा । * गौमि.

[2]पशुहिरण्ययोरप्येके पञ्चाशद्भागः ॥

( १ ) पशुपालनेनोपजीवतः सकाशात् पशूनां पञ्चाशद्भागं गृह्णीयात् । हिरण्यं वार्धुषिकसकाशात् । ‘ समार्घं धनमुद्धृत्य महार्घं यः प्रयच्छति । स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥ ’ ( वस्मृ. २।४६ ) इति वार्धुषिकस्य प्रतिषेधादेवास्याभावः प्राप्नोति इति चेत्, नैष दोषः, ‘ कामं परिलुप्तकृत्याय पापीयसे दद्याताम् ’ ( वस्मृ. २।४७ ) इति वसिष्ठेन प्रकारान्तरेणाभ्यनुज्ञानात् । एकेग्रहणान्न तु गौतमः । तत्र येषामप्रतिप्रसवः तेषु न गृह्णीयात्, येषां प्रतिषेधाभावादेव वार्धुषिकत्वं स्यात् तेषु गृह्णीयादित्येवं द्रष्टव्यम् । मभा.

( २ ) यस्य पञ्चाशत् पशवः सन्ति स प्रतिसंवत्सरमेकं पशुं राज्ञे दद्यात्, यस्य वा पञ्चाशन्निष्कैर्वृद्धिप्रयोगः स प्रतिसंवत्सरमेकैकं निष्कं राज्ञे बलिरूपेण दद्यादिति । * गौमि.

[3]विंशतिभागः शुल्कः पण्ये ॥

( १ ) पण्यं पणनीयं यद्वणिग्भिर्विक्रीयते हिंग्वादि, तेषु विंशतिभागं गृह्णीयात् । शुल्कग्रहणं संज्ञार्थम् । ततश्च ‘ प्रातिभाव्यवणिक्शुल्क ’ ( गौध.१२।३८ ) इत्यादौ व्यवहारसिद्धिः । $ मभा.

( २ ) शुल्कप्रदेशाः प्रातिभाव्यं वणिक् शुल्कमित्यादयः । * गौमि.

( ३ ) वणिग्भिर्यच्चन्दनादि विक्रीयते तत्पण्यम् । तस्य मूलाधिकाया वृद्धेर्विंशतितमो भागो राज्ञे देयः । तस्य दीयमानस्य शुल्कसंज्ञा । अयं च विंशतितमो भागः परदेशपण्ये, स्वदेशपण्ये तु दशमोंऽशः । तथा च विष्णुः— ‘ स्वदेशपण्याच्च शुल्कांशं दशममादद्यात् । परदेशपण्याच्च विंशतितमम् । ’ ( विस्मृ. ३।२९–३० ) इति । राप्र. २६४

[4]मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षाष्टः ॥

---

* शेषं मभागतम् ।

(१) गौध. १०।२३ ; मभा. ; गौमि. १०।२४ राज्ञे ( राज्ञो ); राप्र. २६२ गौमिवत्.

(२) गौध. १०।२४; मभा. ; गौमि. १०।२५ ; राप्र. २६० द्भागः ( द्भागम् ).

* शेषं मभागतम् ।

$ उ. मभागतम् ।

(३) गौध. १०।२५ ; मभा. ; गौमि. १०।२६ ; उ. २।२६।९ ; राप्र. २६४ ; बौवि.१।१८।१५.

(४) गौध.१०।२६ षाष्टः ( षाष्ठ्यः ) ; मभा. ; गौमि. १०।२७ ; उ. २।२६।९ षध ( षधि ) षाष्टः ( षाष्टिक्यम् ); राप्र.२६१ नानां ( नादीनां ) ; बौवि. १।१८।१५ षाष्टः ( षाष्ठ्यम् ). ‘ षाष्ठ्यः, षाष्ठ्यम् ’ इति पाठयोः टकारस्थाने ठकारः प्रामादिक इति संगतिबलात् व्याख्यानाच्च निर्णीयते.

( १ ) मूलं हरिद्रादि, फलं मरीचादि, पुष्पं कुसुम्भादि, औषधं अभयादि, तृणं यत्किंचित्कटादि। शेषाः प्रसिद्धाः । मभा.

( २ ) एतेषु पण्येषु षष्टितमो भागो राज्ञे देयो विक्रेत्रा । * गौमि.

( ३ ) षष्टितमं षाष्टयम् । बौवि. १।१८।१५

[1]तद्रक्षणधर्मित्वात् ॥

कस्मात् पुनरेतद्राज्ञो देयमित्यत आह– तद्रक्षणेति। तेषां करदायिनां रक्षणं तद्रक्षणम्, स एव धर्मः यस्यासौ तद्रक्षणधर्मी, तस्य भावस्तद्रक्षणधर्मित्वम्, तस्मात् तद्रक्षणधर्मित्वात् । तच्छीलत्वादित्यर्थः । वचनगम्येऽर्थे हेतुवचनं देशकालापेक्षया उक्तपरिमाणादप्यल्पतरभाग-ग्रहणार्थम्, इतरथा सर्वमेव राजा रक्षतीति साधारणोऽयं हेतुः स्यादिति । तथा चाऽऽहोशना– 'देशकाललाभानु-रूपतः करान् प्रकल्पयेत् ।' इति । † मभा.

[2]तेषु तु नित्ययुक्तः स्यात् ॥

( १ ) तेषु तु बल्यादानेषु सर्वदा सत्यपि कार्यव्यग्रत्वे तत्परो भवेत् । तुशब्दो विशेषवाची । अन्येष्वपि द्रव्यार्जनोपायेषु धर्मादनपेतेषु तत्परो भवेत्, अत्र विशेषतः इति । मभा.

( २ ) तेषु कर्षकादिषु नित्ययुक्तः स्यात् रक्षणे नित्यमवहितः स्यात् । अपर आह– तेषु बल्यादिषु नित्ययुक्तः स्यात् । तात्पर्येणाऽऽददीत शुल्कम्, हि अस्यैतद्धनमिति । गौमि.

[3]अधिके न वृत्तिः ॥

( १ ) स्यादिति शेषः। कुटुम्बपोषणादधिकं यत्कोश-रूपेणानुप्रविष्टं तस्मिन् कोशे वृत्तिर्न स्यात्। कुटुम्ब-पोषणार्थमन्यत्राऽऽपदः तस्मिन् न गृह्णीयादित्यर्थः । तथा च व्याघ्रः– 'कुटुम्बपोषणं कुर्यान्नित्यं कोशं च वर्धयेत् अन्यत्राऽऽपत्तितः कोशं न गृह्णीयात् कदाचन ॥' इति। केचिद्व्याचक्षते– अधिकेन रक्षणद्वारागतेन जीवनं स्यादिति । तत्र 'राज्ञोऽधिकम्' ( गौध. १०।७ ) इत्यनेन पुनरुक्तप्रसङ्गोऽस्ति उत नास्तीति निरूपणीयम् । मभा.

( २ ) 'राज्ञोऽधिकं रक्षणम्' ( गौध. १०।७ ) इति यदुक्तं तद्द्वारेण यदागतं धनं तदधिकम्, तेना-ऽऽत्मनः पोष्यवर्गस्य च हस्त्यश्वादीनां च वृत्तिः स्यात्, न तु पूर्वैर्यत्संचित्य खातं कोशरूपेण तेन जीवेत्। आपदि तु तेनापि जीवेत्। तथा च व्याघ्रः– 'कुटुम्ब ...... कदाचन ॥' इति। * गौमि.

शिल्प्यात्मोपजीविनौ चक्रिवद्धयः प्रतिमासं ऐकाह्निकं कर्मैव वणिग्भ्यश्चैकं पण्यं शुल्कमादेयम्

[1]शिल्पिनो मासि मास्येकैकं कर्म कुर्युः ॥

( १ ) शिल्पिनः लोहकारादयः। मासि ( मासि ) एकैकं अहः आत्मानुरूपं राज्ञः कर्म कुर्युः। नान्यत्तेभ्यो ग्राह्यम् । राक. ९२

( २ ) तदेव तेषां शुल्कम्, नान्यत्किंचिदिति । † मभा.

( ३ ) एकेनाह्ना साध्यमेकं कर्म । † गौमि.

[2]एतेनाऽऽत्मोपजीविनो व्याख्याताः ॥

( १ ) आत्मोपजीविनः भारवाहनटनर्तकादयः। राक. ९२

( २ ) आत्मोपजीविनः नटनर्तकादयः । तेऽप्येक-महो राज्ञः कर्म कुर्युरिति । 'शिल्प्यात्मोपजीविनः' इति वक्तव्ये पृथग्ग्रहणं आत्मोपजीविनामल्पोपकारित्वा-

* शेषं मभागतम् । राप्र. गौमिव्याख्यानुवादः ।

† गौमि. मभागतम् ।

(१) गौध. १०।२७ ; मभा.; गौमि. १०।२८.

(२) गौध. १०।२८ ; मभा. ; गौमि.१०।२९.

(३) गौध. १०।२९ ; मभा. ; गौमि. १०।३० के न ( केन ) ; राप्र. २७१ गौमिवत्.

* राप्र. गौमिवत् ।

† शेषं राकगतम् ।

(१) गौध. १०।३० ; राक. ९२ स्येकैकं ( स्येकं ) ; मभा. ; गौमि. १०।३१.

(२) गौध. १०।३१ ; राक. ९२ ; मभा. ; गौमि. १०।३२ ; राप्र. २७५.

-दनित्यत्वार्थम् । 'आत्मोपजीविनश्च' इत्येवमपि न कृतं स्मृत्यन्तरेऽपि शिल्पिनो यद्यदुक्तं तस्य सर्वस्याप्यनुप्रवेशार्थम् । यथाऽऽह उशना— 'शिल्पिनो मासि मासि कर्मैकं प्रोक्तम् । तदभावे कार्षापणं वा दद्यात् ।' इति । मभा.

(३) आत्मोपजीविनः ये शरीरायासेन जीवन्ति काष्ठवाहादयस्तेऽप्येतेन शिल्पिषूक्तप्रकारेण व्याख्याताः मासि मास्येकैकं कर्म कुर्युरिति । नर्तकादिष्वप्येषैव गतिः । गौमि.

(४) एतेन प्रतिमासमेकाहकर्मकरणेन । † राप्र. २७५

[१]नौचक्रीवन्तश्च ॥

(१) नौचक्रिवन्तः नौशकटव्यवहारिणः । * राक. ९२

(२) चक्रं शकटम् । नौचक्राभ्यां य उपजीवन्ति । बहुवचनात् वर्धकिनापितादयः । चकारात् वन्यमृगघातकादयः । पूर्ववदनित्यता मा भूदिति पृथग्ग्रहणम् । मभा.

(३) नौश्च चक्रं च नौचक्रे । चक्रशब्देन तद्वच्छकटं लक्ष्यते । तद्वन्तः नौचक्रीवन्तः । 'आसन्दीवदष्ठीवत्' (पा. ८।२।१२) इत्यादिना कथंचिद्रूपसिद्धिः । नौवन्तः नौजीविनः । चक्रवन्तः शकटजीविनः । तेऽपि राज्ञ एकमहः तत्कर्म कुर्युः । गौमि.

[२]भक्तं तेभ्यो दद्यात् ॥

(१) तेभ्यः शिल्पिप्रभृतिभ्यः भक्तं भोजनं शुल्कं दद्यात् । तद्ग्रहणमनन्तराणामेव मा भूदिति । मभा.

(२) 'शिल्पिनो मासि मासि' इत्यारभ्य येऽनुक्रान्ताः तेभ्यः कर्म कुर्वद्भ्यः भक्तं अन्नं दिवा भोजनं दद्यात् राजा । * गौमि.

[१]पण्यं वणिग्भिरर्घापचयेन देयम् ॥

(१) 'मासि मास्येकैकम्' इत्यनुवर्तते । शुल्कादधिकमिदम् । अर्घापचयः अर्घावरमूल्यम् । तथा च बृहस्पतिः— 'शुल्कं दद्यात्ततो मासमेकैकं पण्यमेव च । अर्घार्घावरमूल्येन वणिजस्ते पृथक् पृथक् ॥' इति । ¶ मभा.

(२) 'विंशतिभागः शुल्कः पण्ये' इत्युक्तम् । ततः शुल्कादधिकमिदं मासि मास्येकं पण्यं अर्घापचयेन प्राप्तस्य मूल्यस्य किंचिन्न्यूनतां कल्पयित्वा वणिजो राज्ञे दद्युः । गौमि.

प्रनष्टस्वामिकधननिध्यधिगमानपत्यब्राह्मणधनानां व्यवस्था

[२]प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः ॥

(१) प्रनष्टं स्वामिसकाशादपगतम् । अस्वामिकं अविज्ञायमानस्वामिकम् । ज्ञायमानस्वामिकं तु स्वामिन एव कथयेत् । अधिगम्य लब्ध्वा राज्ञे, न अमात्यादिभ्यः, प्रब्रूयुः प्रशब्दादमायया कथयेयुः— 'इदमस्मिन्देशे एवं चाऽऽसादितम्, अन्विष्यतां कस्यैतत्' इति । बहुवचनप्रयोगात् सामन्तादिभिरपि वक्तव्यमेवेति । मभा.

(२) अधिगम्य भूमौ पतितमुपलभ्य जनपदपालने नियुक्ता एते राज्ञे प्रब्रूयुः । अन्ये वा ये केचित् दृष्टवन्तस्तेऽपि ब्रूयुः । § गौमि.

---

† शेषं राकवत् ।

* राप्र. राकवत् ।

(१) गौध. १०।३२ ; राक. ९२ चक्री (चक्रि) ; मभा. ; गौमि. १०।३३ ; राप्र. २७५ राकवत्.

(२) गौध. १०।३३ ; राक. ९२ तेभ्यो (तेभ्योऽपि) ; मभा. ; गौमि. १०।३४ ; राप्र. २७५ राकवत्.

* शेषं मभागतम् । राप्र. गौमिगतम् ।

¶ राप्र. मभागतम् ।

§ शेषं मभागतम् ।

(१) गौध. १०।३४ ; मभा. ; गौमि. १०।३५ रर्घा (र्घा) ; राप्र. २७३.

(२) गौध. १०।३५ ; मभा. ; गौमि. १०।३६ ; राप्र. २६६ ष्टमस्वा (ष्टस्वा) (राज्ञे प्रब्रूयुः०) ; वीवि. १।१८।१६ नष्टमस्वा (णष्टस्वा).

[1]विख्याप्य संवत्सरं राज्ञा रक्ष्यम् ॥

(१) एवं कथितं विख्याप्य पटहकेनावघुष्य 'अमुकजातीयं वस्त्वासादितम्, यस्यैतत् स स्वयमुपतिष्ठताम्' इति, संवत्सरं निरुपद्रवं रक्ष्यं पालनीयम्। प्राक् संवत्सराद्यदि स्वाम्यागच्छति तस्मै देयम्। रक्षणस्य तदायत्तत्वात् अधिकाराच्च लब्धस्यापि राजशब्दस्योपन्यासः तद्रक्षणे अत्याप्ता नियोक्तव्या इति। तथा चाऽऽह उशना– 'विद्याभिजनयुक्तान् पूर्वदृष्टप्रमाणान् वृद्धान्निधिपालने नियुञ्ज्यात्' इति। मभा.

(२) प्राक् चेत्संवत्सरात्स्वाम्यागच्छति ततो लक्षणानि पृष्ट्वा स्वाम्यं चेत् तत्तस्मै देयम्। वैषम्ये स दण्ड्यः। तथा च याज्ञवल्क्यः– 'प्रनष्टाधिगतं देयं नृपेण धनिने धनम्। विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥' (यास्मृ. २।३३)। एवमधिगम्य अप्रब्रुवन्तो दण्ड्याः। * गौमि.

(३) अत्र संवत्सरमित्युपलक्षणम्, 'राजा त्र्यब्दं निधापयेत्' (मस्मृ. ८।३०) इति मनुस्मरणात्। राप्र. २६६

[2]ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषः ॥

संवत्सरात् परतो येनाऽऽख्यातं तस्मै चतुर्थम्, राज्ञः शेषम्। आख्यातुश्चतुर्थं दत्त्वा शेषं स्वयं गृह्णीयात् उत नियुक्ताय देयमिति संदेहः स्यात् इति तन्निराकरणार्थं शेषं राज्ञः इत्युक्तम्। ‡ मभा.

[3]निध्यधिगमो राजधनम् ॥

(१) प्रनष्टाधिगतादधिगन्तुश्चतुर्थमुक्तं तद्विशिनष्टि– निध्यधीति। निधेः पूर्वनिहितस्य अधिगमः लाभः सः राज्ञ एव, न ततोऽधिगन्तुश्चतुर्थः। एवं च निधेरन्यत् द्रव्यं यत् तस्मादेव चतुर्थांश इति द्रष्टव्यम्। ननु च निधेर्यदन्यत् द्रव्यं राज्ञः कथं तत्प्राप्तिः? अधिगमस्य साधारणत्वेनोक्तत्वात्, येन पूर्वमधिगम्यते तेनैव तस्य गृह्यमाणत्वादिति। अत्रोच्यते– यस्मिन्ननुभूतचिह्नानि दृश्यन्ते तद्राज्ञे कथयेत्, इतरत् स्वयं गृह्णीयादिति। एवं चानुभूतचिह्नानि मुषित्वा गृह्णतो दोषः। यथाऽऽह लोकाक्षिः– 'अनुभूतचिह्नानि मुषित्वा गृह्णतः पूर्वसाहसं दण्डः, तद्द्रव्यद्विगुणं च राजा हरेत्' इति। असति धनग्रहणे 'निध्यधिगमो राज्ञः' इत्युक्ते 'अराज्ञः' इति प्रतिषेधोऽप्याशङ्क्येत। मभा.

(२) अथ प्रनष्टाधिगताधिगन्तुश्चतुर्थमित्यस्यापवादमाह– निध्यधिगम इति। निधिश्चेदधिगतः तद्राजधनमेव भवति। अधिगन्त्रेऽनुग्रहानुरूपं किंचित् देयमिति। गौमि.

[1]न ब्राह्मणस्याभिरूपस्य ॥

(१) अभिरूपः षट्कर्मनिरतः। तथा च वसिष्ठः– 'ब्राह्मणश्चेदधिगच्छेत् षट्सु कर्मसु वर्तमानो न राजा हरेत्' (वस्मृ. ३।१५) इति। तस्य कर्मसाधनत्वात्। मभा.

(२) अभिरूपः षट्कर्मनिरतः। तस्य ब्राह्मणस्य चेन्निध्यधिगमः न तद्राजधनम्। किं तर्हि? अधिगन्तुर्ब्राह्मणस्यैवेति। गौमि.

[2]अब्राह्मणोऽप्याख्याता षष्ठं लभेतेत्येके ॥

अब्राह्मणः क्षत्रियादिः आख्याता पूर्वं ज्ञापयिता षष्ठमंशं लभेत इति एके मन्यन्ते, चारित्रक्लेशफलं हि

---

* शेषं मभागतम्।

‡ गौमि. मभागतम्।

(१) गौध. १०।३६; मभा.; गौमि. १०।३७; राप्र. २६६ (विख्याप्य०); बौवि. १।१८।१६.

(२) गौध. १०।३७; मभा. शेषः (शेषम्); गौमि. १०।३८; राप्र. २६६ र्थं राज्ञः शेषः (र्थोऽशो राज्ञः शेषम्); बौवि. १।१८।१६.

(३) गौध. १०।४२; मभा.; गौमि. १०।४३; राप्र. २६७.

(१) गौध. १०।४३; मभा.; गौमि. १०।४४ (न०); राप्र. २६७.

(२) गौध. १०।४४; मभा.; गौमि. १०।४५; राप्र. २६७ षष्ठं (षष्ठमंशं).

तदिति । एक इति वचनान्न तु गौतमः, अपरिमितसारत्वान्निधीनाम् । अतो यत्किंचिदस्य देयमिति, न तु षष्ठ एवांश इति । अपिशब्दात् ब्राह्मणोऽप्यनभिरूप इति । † मभा.

[1]**श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन् ॥**

श्रोत्रियाः त्रैविद्यवृद्धाः, न तु छन्दोमात्राध्यायिनः । तथाऽऽह मनुः— ' त्रैविद्याः शुचयो दान्ताः ' ( मस्मृ. ९।१८८ ) इत्यादि । अनपत्यस्य अविद्यमानपुत्रस्य धनभाज इत्यर्थः । राज्ञाऽनुज्ञाता रिक्थं भजेरन्, उत्तरत्र राजग्रहणात् । † मभा.

**राजेतरेषाम् ॥**

क्षत्रियादीनां राजैव हरेत् सर्वाभावे । † मभा.

## हारीतः

षष्ठांशो राज्ञः

[2]**षड्भागार्हः सदा नृपः ॥**

## वृद्धहारीतः

धनस्य षष्ठांशः धान्यस्य च तृतीयांशः करः

[3]**न्यायेन पालयेद्राजा धर्मात्षड्भागमाहरेत् ।**
**त्रिभागमाहरेद्धान्याद्धनात्षड्भागमेव च ॥**

## बौधायनः

षष्ठांशो राज्ञः

*[4]**षड्भागभृतो राजा रक्षेत्प्रजाम् ॥**

† गौमि. मभागतम् ।

* व्याख्याने ' राजकर्तव्यानि ' इत्यस्मिन् प्रकरणे ( पृ. १०२७ ) द्रष्टव्यम् ।

(१) गौध. २८।४२–४३ ; मभा. ; गौमि. २८।३९–४०.

(२) हास्मृ २।३.

(३) वृहास्मृ. ७।२।१२.

(४) बौध. १।१८।१.

सामुद्रासामुद्रशुल्कपरिमाणम्

[1]**सामुद्रः शुल्कः ॥**

( १ ) सामुद्रपण्यशुल्के तु विशेष उक्तः— सामुद्र इत्यादिना । राप्र. २६५

( २ ) ' षड्भागभृतो राजा ' इत्युक्तम् । तस्य क्वचित् अपवादमाह— सामुद्र इति । राज्ञो भवतीति शेषः । द्वीपान्तरादाहृतं सामुद्रं वस्तु, तत्संबन्धी सामुद्रः शुल्कः पणद्रव्यम् । बौवि.

[2]**वरं रूपमुद्धृत्य दशपणं शतम् ॥**

( १ ) वरं बहुमूल्यं मुक्तादिष्वेकं उद्धृत्य धनस्वामिने दत्त्वा अवशिष्टस्य दशांशं गृह्णीयात् । राप्र. २६५

( २ ) तस्मिन् भागः कियानित्यत आह– वरमिति । गृह्णीयाद्राजा इति शेषः । वरं उत्कृष्टद्रव्यरूपं ( ? वरं उत्कृष्टं रूपं ) रत्नादिद्रव्यं स्वामिने प्रदाय शेषं शतधा विभज्य दशपणं गृह्णीयात् । अनेन सामुद्रे दशभागः शुल्क इत्युक्तं भवति । बौवि.

[3]**अन्येषामपि सारानुरूप्येणानुपहत्य धर्मं प्रकल्पयेत् ॥**

( १ ) अन्येषां सांयात्रिकातिरिक्तानामपि सारभूतमेकमुद्धृत्य धर्म्यं यथोचितं शुल्कं प्रकल्पयेत् । राप्र. २६५

( २ ) असामुद्राणामपि द्रव्याणां सारफल्गुत्वापेक्षया वरं रूपमनुपहत्यैव धर्मं प्रकल्पयेत् आत्मार्थम् । तत्र सारफल्गुविभागो गौतमेनोक्तः— ' विंशतिभागः शुल्कः पण्ये । मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षाष्ठ्य( ? ष्ठ )म् । ' ( गौध. १०।२५–२६ ) इति । बौवि.

(१) बौध. १।१८।१३ ; राप्र. २६५ ( = ).

(२) बौध. १।१८।१४ ; राप्र. २६५ ( = ) शतम् ( स्मृतम् ).

(३) बौध. १।१८।१५ ; राप्र. २६५ ( = ) रूप्येणानुपहत्य ( रूपमुद्धृत्य ) धर्मं ( धर्म्यं ).

प्रनष्टस्वामिकद्रव्यव्यवस्था

**[1]अब्राह्मणस्य प्रनष्टस्वामिकं रिक्थं संवत्सरं परिपाल्य राजा हरेत् ॥**

असावस्य द्रव्यस्य प्रभुरित्यज्ञानमात्रे प्रनष्टशब्दः। ब्रह्मस्वमिति तु विज्ञाते ब्राह्मण एवाऽऽददीत । उक्तं चैतच्छौचाधिष्ठानाध्याये– 'न तु कदाचिद्राजा ब्राह्मणस्य स्वमाददीत' (बौध. १।११।१३) इति । आह च मनुः– 'प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् । अर्वागब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ॥' (मस्मृ. ८।३०) इति । गौतमोऽपि– 'प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । विख्याप्य संवत्सरं राज्ञा रक्ष्यम् । ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषः ।' (गौध. १०।३५-३७) इति । बौवि.

## आपस्तम्बः

शुल्कं धार्म्यं ग्राह्यम्

**[2]धार्म्यं शुल्कमवहारयेत् ॥**

तत्र गौतमः– 'विंशतिभागः शुल्कः पण्ये' (गौध. १०।२५) इति । यद्वणिग्भिर्विक्रीयते हिङ्ग्वादि तस्य विंशतितमं भागं राजा गृह्णीयात् । तस्य शुल्क इति संज्ञा । एष धार्म्यः धर्म्यः शुल्कः । तमधिकृतैरेव अवहारयेत् ग्राहयेदिति । मूलादिषु विशेषः तेनैवोक्तः– 'मूलफलपुष्पौषधिमधुमांसतृणेन्धनानां षाष्टिक्यम्' (गौध. १०।२६) इति । उ.

अकरा जनाः श्रोत्रियादयः

**[3]अकरः श्रोत्रियः ॥**

श्रोत्रियः करं न दाप्यः । अन्ये दाप्याः । उ.

**[4]सर्ववर्णानां च स्त्रियः ॥**

अकराः । वर्णग्रहणात् प्रतिलोमादिस्त्रियो दाप्याः । उ.

**[1]कुमाराश्च प्राग् व्यञ्जनेभ्यः ॥**

(१) व्यञ्जनानि श्मश्रुप्रभृतीनि । * राक. ९१

(२) व्यञ्जनानि श्मश्र्वादीनि । यावत्तानि नोत्पद्यन्ते तावदकराः । उ.

**[2]ये च विद्यार्था वसन्ति ॥**

विद्यामुद्दिश्य ये गुरुषु वसन्ति ते जातव्यञ्जना अपि असमाप्तवेदा अकराः । उ.

**तपस्विनश्च ये धर्मपराः ॥**

तपस्विनः कृच्छ्रचान्द्रायणादिप्रवृत्ताः । धर्मपराः अफलाकाङ्क्षिणः नित्यनैमित्तिकधर्मनिरताः । धर्मपरा इति किम्? ये अभिचारकामा मन्त्रसिद्धये तपस्तप्यन्ते ते अकरा मा भूवन्निति । उ.

**शूद्रश्च पादावनेक्ता ॥**

यस्त्रैवर्णिकानां पादावनेक्ता स शूद्रोऽप्यकरः । उ.

**[3]अन्धमूकबधिररोगाविष्टाश्च ॥**

एतेऽप्यकराः यावदान्ध्यादि । उ.

**[4]ये व्यर्था द्रव्यपरिग्रहैः ॥**

(१) व्यर्थाः द्रव्यपरिग्रहैः अर्थसंग्रहे विगतप्रयोजनाः । * राक. ९१

(२) ये च परिव्राजकादयः द्रव्यपरिग्रहैः व्यर्थाः निष्प्रयोजनाः शास्त्रतो येषां द्रव्यपरिग्रहः प्रतिषिद्धः

---

(१) बौध. १।१८।१६.

(२) आध. २।२६।९.

(३) आध. २।२६।१० ; राक. ९१ ; राप्र. २७३.

(४) आध. २।२६।११ ; राक. ९१ ; राप्र. २७३ (च०).

* राप्र. राकवत् ।

(१) आध. २।२६।१२ ; राक. ९१ राश्च (रश्च) ; राप्र. २७३ राकवत्.

(२) आध. २।२६।१३–१५ ; राक. ९१ ; राप्र. २७३.

(३) आध. २।२६।१६ ; राक. ९१ बधिररोगा (बधिरा रोगा) ; राप्र. २७३ मूकबधिररोगा (बधिरमूका रोगा).

(४) आध. २।२६।१७ ; राक. ९१ ; राप्र. २७३ व्यर्था (वृथा) ग्रहैः (ग्रहे).

तेऽप्यकराः । तथा च वसिष्ठः– 'अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रशान्ताः' (वस्मृ. १९।१५) इति । उ.

## वसिष्ठः

अब्राह्मणधनस्य षष्ठांशो राज्ञः करः, पण्यस्य नौकायाश्च करग्रहणव्यवस्था

(१)राजा तु धर्मेणानुशासत्षष्ठं षष्ठं धनस्य हरेत् ॥

(२)अन्यत्र ब्राह्मणात् ॥

(३)इष्टापूर्तस्य तु षष्ठमंशं भजतीति ह ब्राह्मणो वेदमाद्यं करोति, ब्राह्मण आपद उद्धरति, तस्माद् ब्राह्मणोऽनाद्यः ॥

(४)सोमोऽस्य राजा भवतीति ह प्रेत्य चाऽऽभ्युदयिकमिति ह विज्ञायते ॥

इष्टं वर्णसामान्याधिकारावष्टम्भेन विहितो ज्योतिष्टोमादिः । पूर्तं साधारणो धर्मः सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननमित्यादि । बौवि. १।१८।१

(५)अधिष्ठानान्निर्हारः सार्थानामर्घमानमानमूल्यमात्रं नैर्हारिकं स्यात् ॥

महामहयोस्त्वनत्ययः स्यादभयं च ॥

अधिष्ठानात् पत्तनादेः यः निर्हारः निष्कृष्य हरणम् । सार्थानां पण्यपूर्णानां हरणपक्षे अर्घमानं मूल्यमात्रं मानं भाण्डं तन्मूल्यं यत् तेन मात्रा परिमाणं यस्येति व्यधिकरणेऽपि बहुव्रीहिः । तेन भाण्डस्य पत्तनादेर्निर्हारपक्षे तन्मूल्यानुसारेण राजशुल्कं देयम् । नैर्हारिकं निर्हारसंबन्धि । महामहयोः महोत्सवयोः राज्ञः पुत्रजन्मादीन्द्रमहादिरूपयोः तु इत्थमपि निर्हारं कुर्वतः अनत्ययः अदण्डः स्यात्, अभयं अताडनं चेत्यर्थः ।

विर. ३०३–३०४

(१)संयाने दशवाहवाहिनी द्विगुणकरणा स्याद्दशपुरुषवती ॥

संयात्यनेनेति व्युत्पत्त्या संयानशब्दो नदीपरः । तत्र वाहिनी नौः । वाहयन्तीति वाहाः, ते दश यस्यां सा दशवाहा, सा चासौ वाहिनी चेति दशवाहा(?ह)-वाहिनी । द्विगुणकरणा द्विगुणानि (करणानि) अरित्रादीनि यस्याः सा नौः तथा । एक(?वं)विधा नौः कार्या । तथा दशपुरुषवती वाहकात्(?केभ्यः) अन्ये दश पुरुषाः । विर. ६३९

(२)प्रत्येकं प्रपाः स्युः ॥

तेषां प्रयोजनमाह– ¶ त एव प्रपाः स्युः । त एव दश वाहानां प्रपाः प्रकर्षेण परिपालकाः स्युः ।

विर. ६३९

(३)पुंसां चावरार्धं वाहं वहेदध्यर्धाः स्त्रियः स्युः ॥

अस्यां नावि यावान् भार आरोप्यस्तमाह– पुंसामित्यादिना । सा नौर्यावन्तं भारं वहति तदपेक्षया अवरार्धं अवरं न्यूनं अर्धं यस्मिन् वाहे स वाहः भारः । तेन यावतः पुरुषानसौ परमविधुरा वहति तावत्, न तु समधिकमारोप्यमित्यर्थः । अध्यर्धाः स्त्रियः, पुरुषापेक्षया तासामतिभीरुत्वात् । विर. ६३९

(४)तरोऽष्टौ माषाः शरमध्याया अशरमध्यायाः पादः कार्षापणस्य निरुदकस्तरो माष्यः ॥

---

(१) वस्मृ. १।४३ ; बौवि. १।१८।१ शासत्षष्ठं षष्ठं (शासन् षष्ठं).

(२) वस्मृ. १।४४ ; बौवि. १।१८।१.

(३) वस्मृ. १।४५ ; बौवि. १।१८।१ 'इष्टा... भजति' एतावन्मात्रम्.

(४) वस्मृ. १।४६.

(५) वस्मृ. १९।१०–११ (अधिष्ठानान्न नीहारः स्वार्थानां मानमूल्यमात्रं नैहारिकं स्यात् ॥ महामहयोः स्थानात् पथः स्यात् ॥) ; विर. ३०३.

¶ विरव्याख्यानपाठस्तु 'प्रत्येकम्' इत्यत्र 'त एव' इति स्यादिति प्रतीयते ।

(१) वस्मृ. १९।१२ करणा (कारिणी) (दशपुरुषवती०) ; विर. ६३८ वाह (वाहा).

(२) वस्मृ. १९।१३ ; विर. ६३८.

(३) वस्मृ. १९।१४ (पुंसां शतावराध्यं चाऽऽहवयेदध्यर्धाः स्त्रियः स्युः) ; विर. ६३८–६३९.

(४) वस्मृ. १९।१५ (कराष्ठीला माषः शरमध्याप: पादः कार्षापणाः स्युर्निरुदकस्तरो मोष्यः) ; विर. ६३९.

तरः शुल्कः । माषः पुराणस्य विंशतितमो भागः । शरमध्यायाः यस्यां नद्यां धनुष्मता क्षिप्तः शरो मध्ये पतति तस्याः । अशरमध्यायाः यां शरो लङ्घयति तस्याः । पादः कार्षापणस्य चतुर्भागः । निरुदकः अल्पोदकः । माष्यः माषपरिमाणः ।

विर. ६३९

अकरा जनाः

[1]अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रजाताः प्रागमिकः कुमार्यो मृतपत्न्यश्च ॥

राजा । पुमाननाथश्च स्वजनरहितः रोगार्तो वा । तरुणप्रजाताः अचिरप्रसूताः । प्रागमिकः लेखहारकादिः । मृतपत्यः विधवाः ।

विर. ६४१

[2]बाहुभ्यामुत्तरञ्छतगुणं दद्यात् ॥

[3]नदीकक्षवनदाहशैलोपभोगा निष्कराः स्युस्तदुपजीविनो वा दद्युः ॥

वनदाहः दग्धवनम् । तदुपजीविनः तानेव ये उपजीवन्ति । सैव तेषां वृत्तिः ।

‡ राक. ९२

[4]प्रतिमासमुद्वाहकरं त्वागमयेत् ॥

[5]शुल्के चापि मानवं श्लोकमुदाहरन्ति—

'न भिन्नकार्षापणमस्ति शुल्के
न शिल्पवृत्तौ न शिशौ न दूते ।
न भैक्षलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे ॥ इति ॥

भिन्नः न्यूनः कार्षापणः मूल्यं यस्य तत् भिन्नकार्षापणं पण्यम् । तन्निमित्तः शुल्कोऽपि भिन्नकार्षापणः । तेन कार्षापणादर्वाक् यस्य मूल्यं तत्र वस्तुनि शुल्को न ग्राह्य इत्यर्थः । न शिल्पवृत्तौ न शिल्पिना शिल्पित्वात् प्राप्तवित्ते । शिशौ विक्रय्यगवादिवत्सादौ । दूते दूतवस्तुनि । कृतावशेषे वणिजः शेषवस्तुनि । यज्ञे यज्ञार्थमानीयमाने द्रव्ये । हलायुधस्तु शिशुशिल्पिदूतान् बुद्धिस्थीकृत्य 'एवं न शिशुप्रभृतिभ्यो वणिग्भ्यः क्वचिदपि शुल्कद्रव्यं ग्राह्यम्' इति अत्र वाक्ये प्राह ।

विर. ३०५–३०६

अस्वामिकधनव्यवस्था

[1]अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदाय ॥

[2]ब्राह्मणश्चेदधिगच्छेत्षट्कर्मसु वर्तमानो न राजा हरेत् ॥

[3]प्रहीणद्रव्याणि राजगामीनि भवन्ति ॥

## विष्णुः

षष्ठांशकराहाणि धान्यादीनि, पशुहिरण्यपण्यानां करांशाः

[4]प्रजाभ्यो बल्यर्थं संवत्सरेण धान्यतः षष्ठमंशमादद्यात् ॥

[5]सर्वसस्येभ्यश्च ॥

---

‡ राप्र. राकानुवादः ।

(१) वस्मृ. १९।१५ राजा पुमाननाथः प्रव्रजितो बाल (राजपुमाननाथप्रव्रजितबाल) प्रागमिकः (प्राग्गामिकाः); उ. २।२६।१७ प्रजाताः (प्रशान्ताः) (प्रागमिकः .... पत्न्यश्च ०); विर. ६४० पत्न्यश्च (पत्यश्च).

(२) वस्मृ. १९।१६.

(३) वस्मृ. १९।१७ ; राक. ९२ निष्कराः (विष्कराः); राप्र. २७४.

(४) वस्मृ. १९।१८; राक. ९२; राप्र. २७४ (उद्वाहकरं त्वागमयेत् ०).

(५) वस्मृ. १९।२४ ; विर. ३०५ हरन्ति (हरति).

(१) वस्मृ. १९।२५ ; विर. ३०५ शुल्के (शुल्कं) हृता (कृता) (इति० ).

(२) वस्मृ. ३।१४ ; राप्र. २६७ प्रदाय (प्रदद्यात्).

(३) वस्मृ. ३।१५ ; मभा. १०।४३ षट्कर्मसु (षट्सु कर्मसु).

(४) वस्मृ. १६।१७.

(५) विस्मृ. ३।२२–२३ ; राक. ९० ; राप्र. २६२.

( १ ) इदं तु उत्कृष्टभूविषयम् । अत्र धान्यपदं व्रीहिपरम्, 'सर्वसस्येभ्यश्च' इति पृथगन्यसस्यग्रहणात् । सस्यं व्रीह्यतिरिक्तमन्नजातम् । राप्र. २६२

( २ ) सस्यानि वार्षिकाणि श्यामाकादीनि । वै.

[1]द्विकं शतं पशुहिरण्येभ्यो वस्त्रेभ्यश्च ॥

द्विकं शतं शते द्वौ भागावित्यर्थः । अर्थात् पञ्चाशद्भाग एव । राप्र. २६०

[2]मांसमधुघृतौषधिगन्धपुष्पमूलफलरसदारुपत्राजिनमृद्भाण्डाश्मभाण्डवैदलेभ्यः षष्ठभागम् ॥

रसदारुपत्रेति क्वचित् पाठः । वैदलानि विदलीकृतवंशनिर्मितानि शूर्पादीनि । दारूणि काष्ठानि । षष्ठ एव षाष्ठः, तम् । अयं च भागः संवत्सरे संवत्सरे ग्राह्यः । तथा च विष्णुधर्मोत्तरे— 'गन्धौषधिरसानां च पुष्पमूलफलस्य च । पत्रशाकतृणानां च वत्सरेण च चर्मणाम् ॥ वैणवानां च भाण्डानां सर्वस्याश्ममयस्य च । षड्भागमेव चाददयात् ॥' ( विध. २।६१।६२—६३ ) इति । अयं तु विना द्रव्यव्ययेन कायक्लेशादिना निष्पादितानां मांसादीनामेकप्रकरणपठितानाम्, कर्षकैस्तुल्यन्यायत्वात् । द्रव्यव्ययेन क्रीतानां तु षष्टितमो भागो ग्राह्यः । तथा च गौतमः 'पण्ये' इत्यनुवर्तमाने— 'मूलफलपुष्पौषधमधुमांसतृणेन्धनादीनां षाष्टः' ( गौध. १०। २६ ) इति । अत्र हरदत्तः— 'षाष्टः षष्टितमो भागः, विक्रेत्रा राज्ञे देयः इति । यदि पण्यशब्दो द्रव्यव्ययेन अर्जिते अन्यथा वाऽर्जिते रूढ इत्याग्रहस्तथापि विरोधादित्थमेव व्यवस्था युक्ता । यत्तु मनुनोक्तम्— 'आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् । गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥ पत्रशाकतृणानां च चर्मणां वैणवस्य च । मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥' ( मस्मृ. ७।१३१—१३२ ) इति, तत्तु पूर्वो(क्तो ?)दाहृतविष्णुधर्मोत्तरोक्तसमानार्थम् । केचित्तु गौतमवाक्ये षाष्ठ इति पदं षष्ठ एव षाष्ठ इति व्याख्याय मनुवाक्यविरोधेन हरदत्तव्याख्यां दूषयन्ति, तत्तु पूर्वोक्तव्यवस्थासंभवेन अभियुक्तव्याख्यादूषणस्य कर्तुमशक्यत्वादयुक्तम् । राप्र. २६१—२६२

धर्मकरदा ब्राह्मणा अकराः

[1]ब्राह्मणेभ्यः करादानं न कुर्यात् ॥

[2]ते हि राज्ञो धर्मकरदाः ॥

( १ ) क्वचित् करग्रहणस्यापवादमाह— ब्राह्मणेभ्य इति । ब्राह्मणेभ्यः कर्षकेभ्यो व्यवहर्तृभ्यः श्रोत्रियेभ्यश्च । तथा च मनुः— 'म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम् । न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥' ( मस्मृ. ७।१३३ ) इति । ते हि राज्ञो धर्मकराः । ते पूर्वोक्ताः ब्राह्मणाः सम्यग्रक्षिताः स्वधर्मषष्ठांशं ददतीत्यर्थः । मनुरपि— 'स रक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् । तेनाऽऽयुर्वर्धते तस्य द्रविणं राष्ट्रमेव च ॥' (मस्मृ. ७।१३६) इति । विष्णुधर्मोत्तरेऽपि 'न गृह्णीयात्' इत्युपक्रम्य— 'ब्राह्मणेभ्यस्तथा करम् । तेभ्यस्तद्धर्मलाभेन राज्ञो लाभः परं भवेत् ॥' ( विध. २।६१।६३—६४) इति । राप्र. २७२

( २ ) करविषयेऽपि राज्ञो धर्मं निजाचारसंपन्नं करत्वेन ददति । वै.

प्रजासुकृतदुष्कृतषष्ठांशभाक् राजा

[3]राजा च प्रजाभ्यः सुकृतदुष्कृतषष्ठांशभाक् ॥

स्वदेशपण्याद्दशमांशस्य परदेशपण्याद्विंशांशस्य चाऽऽदानम्

[4]स्वदेशपण्याच्च शुल्कांशं दशममादद्यात् ॥

---

(१) विस्मृ. ३।२४ ; राक. ९० हिरण्येभ्यो ( हिरण्ययोः ) ; राप्र. २६०.

(२) विस्मृ. ३।२५ ; राक. ९० ( फल० ) दारु ( शाक ) वैदलेभ्यः ( वैणवेभ्यः ) ; राप्र. २६१ दारु ( शाक ) श्मभाण्ड ( श्म ) षष्ठ ( षाष्ठ ).

(१) विस्मृ. ३।२६ ; राक. ९० ; राप्र. २७२.

(२) विस्मृ. ३।२७ ; राक. ९० राज्ञो ( राज्ञां ) ; राप्र. २७२ करदाः ( कराः ).

(३) विस्मृ. ३।२८; राप्र. २७१ दुष्कृत (दुष्कृतेभ्यः ).

(४) विस्मृ. ३।२९ ; राप्र. २६४.

[2]परदेशपण्याच्च विंशतितमम् ॥

यत् स्वदेशे क्रीत्वा स्वदेश एव विक्रीयते तस्मात् लाभद्रव्यदशांशम्। परदेशपण्याच्च विंशतितमम्। यत् पण्यं देशान्तरे क्रीत्वा देशान्तरे विक्रीयते तस्माद्विंशतितमम्। अत्रापि लाभस्यैव। यत्तु मनौ– 'शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः। कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत्॥' (मस्मृ. ८।३९८) इति मूलसहितस्य विंशांशः प्रतीयते, तथापि अर्घे कृते मूलाधिकस्यैव विंशांशो ग्राह्यः। मूलद्रव्यांशग्रहणे तु वणिजां लाभो न स्यात्, तदभावे च वणिजां व्यवहारोच्छेद एव स्यात्। विष्णुधर्मोत्तरे तु– 'स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज' (विध. २।६१।५३) इति स्वदेशपण्येऽपि विंशतितमो भाग उक्तः, स तु क्लेशबाहुल्यविषयः तेषामापद्विषयो वा। अस्मिन्नेव विषये परदेशपण्येऽपि तत्रैवोक्तम्– 'शुल्कांशं परदेशाच्च निबोध गदतो मम। क्षयव्ययप्रवासांश्च यथायासं द्विजोत्तम॥ व्ययशुल्कप्रवासादि लङ्घयित्वा तथा द्विज। विंशांशं भागमादद्युर्दण्डनीया अतोऽन्यथा॥' (विध. २।६१। ५३–५४,५६) इति। राप्र. २६४–२६५

शुल्कस्थानादपक्रामतः सर्वापहारः

[2]शुल्कस्थानादपक्रामन् सर्वापहारमाप्नुयात्॥

(१) इदं राजयोग्यबहुमूल्यहस्त्यश्वादिविषयं राजप्रतिषिद्धं दुर्भिक्षेऽन्नं देशान्तरे न नेयमित्येतद्विषयं वा। यथोक्तं मनुना– 'राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च। तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः॥' (मस्मृ. ८।३९९) इति। तथाऽन्यत्र– 'शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी। मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम्॥' (मस्मृ. ८।४००) इति। राप्र. २७४

(२) अपक्रामन् अपसरन् अन्यमार्गेण गच्छन् वणिक् सर्वपण्यापहारमाप्नुयात्। वै.

(१) विस्मृ. ३।३०.

(२) विस्मृ. ३।३१; राप्र. २७४ दप (दपा).

शिल्पि–कर्मजीविनां प्रतिमासं ऐकाह्निकं कर्म शुल्कम्

[1]शिल्पिनः कर्मजीविनश्च शूद्राश्च मासेनैकं राज्ञः कर्म कुर्युः॥

शिल्प्यादिविषये मासिककरमाह– शिल्पिन इति। शिल्पिनः लोहकारादयः। कर्मोपजीविनः कारवो वर्धक्यादयः। चकारादन्योपजीविनः। मनुरपि– 'कारुकाञ्छिल्पिनश्चैव शूद्रांश्चाऽऽत्मोपजीविनः। एकैकं कारयेत्कर्म प्रतिमासं महीपतिः॥' (मस्मृ. ७।१३८) इति। एतेनैतेभ्योऽन्यत् न ग्राह्यम्, एष एवैषां शुल्कः। * राप्र. २७४

आकरोत्पन्नं सर्वं राज्ञः

[2]आकरेभ्यः सर्वमादद्यात्॥

आकरेषु विशेषमाह– आकरेभ्य इति। आकराः सुवर्णरत्नाद्युत्पत्तिस्थानानि। राप्र. २६९

निधिलाभव्यवस्था

[3]निधिं लब्ध्वा तदर्धं ब्राह्मणेभ्यो दद्यात्॥

द्वितीयमर्धं कोशे प्रवेशयेत्॥

तच्छब्दात् यस्य स्वर्णादेरर्धीकरणं संभवति तस्यैवार्धं दद्यात्, न रत्नादेः, तस्य तु मूल्यकल्पनया दद्यात् इत्येवमर्थः। तदुक्तं मनुना– 'निधीनां हि पुराणानां धातूनामेव च क्षितौ। अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः॥' (मस्मृ. ८।३९) इति। 'द्वितीयमर्धं कोशे प्रवेशयेत्' इति पृथक्सूत्रकरणं कोशे स्थापनविधानार्थम्, स्वामिन्यागते तद्दानावश्यंभावात्। राप्र. २६७

[4]$ निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात्॥

* वै. राप्रानुवादः।

$ एतदादिसूत्रचतुष्टयस्य व्याख्यानं 'राजा लब्ध्वा निधिं०' इति याज्ञवल्क्यवचने द्रष्टव्यम्।

(१) विस्मृ. ३।३२; राप्र. २७४ कर्मजीवि (कर्मोपजीवि) (शूद्राश्च०) (राज्ञः०).

(२) विस्मृ. ३।५५; राप्र. २६९.

(३) विस्मृ. ३।५६–५७; राप्र. २६७.

(४) विस्मृ. ३।५८; राप्र. २६७.

[1]क्षत्रियश्चतुर्थमंशं राज्ञेऽपरं चतुर्थमंशं ब्राह्मणेभ्योऽर्धमादद्यात् ॥

[2]वैश्यस्तु चतुर्थमंशं राज्ञे दद्याद्ब्राह्मणेभ्योऽर्धमंशमादद्यात् ॥

[3]शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान् राज्ञे दद्यात्पञ्चांशान् ब्राह्मणेभ्योऽशद्वयमादद्यात् ॥

[4]अनिवेदितविज्ञातस्य सर्वमपहरेत् ॥

[5]स्वनिहिताद्राज्ञे ब्राह्मणवर्जं द्वादशमंशं दद्युः ॥

[6]परनिहितं स्वनिहितमिति ब्रुवंस्तत्समं दण्डमावहेत् ॥

परकीयं निधिं स्वीयमिति वदन् राज्ञा तन्निधिसमं दण्डनीय इत्युक्तम्— परेति । इति ब्रुवन् स्वनिहितमिति ब्रुवन् इत्यर्थः । राप्र.२६९

चौरहृतधनव्यवस्था

[7]चौरहृतं धनमवाप्य सर्वमेव सर्ववर्णेभ्यो दद्यात् ॥
अनवाप्य च स्वकोशादेव दद्यात् ॥

## महाभारतम्

अर्थप्रयोजनम्

[8]अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवाऽऽपगाः ॥

अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्रा हि लोकस्य विनाऽर्थं न प्रसिध्यति ॥

मुमुक्षूणां प्राणयात्राऽप्यर्थाधीनेति मोक्षोऽप्यर्थादेव भवतीत्याशयः । नीटी.

अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥
अधनेनार्थकामेन नार्थः शक्यो विवित्सता ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥
धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥
धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्तते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलाद्गिरिनदी यथा ॥

[1]अर्थे सर्वे समारम्भाः समायत्ता न संशयः ॥

कोशवर्धनाय पशुहिरण्यधान्यानां करांशपरिमाणम्, शास्त्रविहित एव मालाकारन्यायेन करो ग्राह्यः

[2]पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च ।
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ॥

[3]आददीत बलिं चैव प्रजाभ्यः कुरुनन्दन ।
षड्भागममितप्रज्ञस्तासामेवाभिगुप्तये ॥

[4]दशधर्मगतेभ्यो यद्वसु बह्वल्पमेव च ।
तन्नाऽऽददीत सहसा पौराणां रक्षणाय वै ॥

प्रजाभ्यः स्वाभ्यः । दशधर्मगताः मत्तोन्मत्तादयः, तेभ्यो दण्ड्येभ्यो यद्वसु ग्राह्यं तत् पौराणां रक्षणाय भवति । अदण्डितास्ते पुरं बाधेरन्निति भावः । नीटी.

---

(१) विस्मृ. ३।५९ ; राप्र.२६७ राज्ञेऽपरं ( राज्ञे दद्यात् ).

(२) विस्मृ. ३।६० ; राप्र. २६७ भ्योऽर्धं ( भ्योऽर्धं चतुर्थं ).

(३) विस्मृ. ३।६१ ; राप्र. २६८ भ्योऽश ( भ्यो दत्त्वाऽवशिष्टमंश ).

(४) विस्मृ. ३।६२ ; राप्र. २६९.

(५) विस्मृ. ३।६३ ; राप्र २६९ ( राज्ञे० ).

(६) विस्मृ. ३।६४ ; राप्र. २६९ ( स्वनिहितम्० ).

(७) विस्मृ. ३।६६–६७.

(८) भा. १२।८।१६–२३. शेषः स्थलादिनिर्देशः 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ५५९–५६०) द्रष्टव्यः.

(१) भा. १२।१५।४८ ; भामु.

(२) भा. १२।६७।२३ ; भामु. १२।६७।२३–२४.

(३) भा. १२।६९।२४ ; भामु. १२।६९।२५ चैव ( चापि ) षड्भागममितप्रज्ञ ( स षड्भागमपि प्राज्ञ ).

(४) भा. १२।६९।२५ ; भामु. १२।६९।२६ तन्नाऽऽददीत ( तदाददीत ).

[1]बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।
शास्त्रनीतेन लिप्सेथा वेतनेन धनागमम् ॥

बलिः राजदेयम्, तदेव सस्यादेः षष्ठांशः, तेन बलिषष्ठेन शुक्तेन शुद्धेन, गणनादनाधिकेनेत्यर्थः । 'शुक्तं पूताम्लनिष्ठुरे' इति मेदिनी । वेतनेन, पथि रक्षितैर्वणिग्भिर्यद्दत्तं तद्राज्ञो वेतनं सेवाधनम्, तेन च धनागमं लिप्सेत राजा । नीटी.

[2]दापयित्वा करं धर्म्यं राष्ट्रं नित्यं यथाविधि ।
अशेषान् कल्पयेद्राजा योगक्षेमानतन्द्रितः ॥

धान्यादेः षष्ठांशे हृते शेषेण प्रजानां यदि वार्षिको ग्रासो न भवेत्तदा राजैव तासां योगक्षेमं कल्पयेदित्याह — दापयित्वेति । नीटी.

[3]गोपायितारं दातारं धर्मनित्यमतन्द्रितम् ।
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः ॥

[4]मा स्माधर्मेण लाभेन लिप्सेथास्त्वं धनागमम् ।
धर्मार्थावध्रुवौ तस्य योऽपशास्त्रपरो भवेत् ॥

[5]अपशास्त्रपरो राजा संचयान्नाधिगच्छति ।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति ॥

धर्मसहितानर्थान् धर्मार्थान् । नीटी.

[6]अर्थमूलोऽपहिंसां च कुरुते स्वयमात्मनः ।
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन् प्रजाः ॥

ऊधश्छिन्द्याद्धि यो धेन्वाः क्षीरार्थी न लभेत्पयः ।
एवं राष्ट्रमयोगेन पीडितं च विवर्धते ॥

अर्थमूलोऽर्थार्थी प्रजाः पीडयन् आत्मानमेव हिनस्तीत्युक्तम्, तत्र दृष्टान्तमाह— ऊध इति । नीटी.

[2]यो हि दोग्ध्रीमुपास्ते तु स नित्यं लभते पयः ।
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् ॥

[3]अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम् ।
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर ॥

[4]दोग्धि धान्यं हिरण्यं च प्रजा राज्ञि सुरक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ॥

दोग्ध्री पूरयित्री । नीटी.

[5]मालाकारोपमो राजन् भव माऽऽङ्गारिकोपमः ।
तथा युक्तश्चिरं राष्ट्रं भोक्तुं शक्यसि पालयन् ॥

आङ्गारिकः इङ्गालकर्ता । नीटी.

[6]परचक्राभियानेन यदि ते स्याद्धनक्षयः ।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥

अब्राह्मणेभ्यः अश्रोत्रियब्राह्मणेभ्यश्चापि करग्रहणं विहितम्

युधिष्ठिर उवाच—

[7]स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥

---

(१) भा. १२।७२।१० ; भामु. १२।७१।१० शुल्केन (शुक्तेन) शास्त्र (शास्त्रा).

(२) भा. १२।७२।११ ; भामु. १२।७१।११ नित्यं (नीत्या) अशेषान् (तथैतं) क्षेमान (क्षेमम).

(३) भा. १२।७२।१२ ; भामु. १२।७१।१२.

(४) भा. १२।७२।१३ ; भामु. १२।७१।१३ स्माधर्मेण लाभेन (स्म लोभेनाधर्मेण) योऽप (यो न).

(५) भा. १२।७२।१४ ; भामु. १२।७१।१४ अप (अर्थ) संचया (धर्मार्था).

(६) भा. १२।७२।१५ ; भामु. १२।७१।१५ ऽप (ऽपि).

(१) भा. १२।७२।१६ ; भामु. १२।७१।१६ द्धि यो (तु यो).

(२) भा. १२।७२।१७ ; भामु. १२।७१।१७ तु (च) लभते (विन्दते).

(३) भा. १२।७२।१८ ; भामु. १२।७१।१८.

(४) भा. १२।७२।१९ ; भामु. १२।७१।१९ दोग्धि (दोग्ध्री) प्रजा राज्ञि (मही राज्ञा).

(५) भा. १२।७२।२० ; भामु. १२।७१।२० राष्ट्रं (राज्यं) शक्यसि (शक्ष्यसि).

(६) भा. १२।७२।२१ ; भामु. १२।७१।२१.

(७) भा. १२।७७।१ ; भामु. १२।७६।१.

भीष्म उवाच–

[1]विद्यालक्षणसंपन्नाः सर्वत्राऽऽम्नायदर्शिनः ।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः ॥

लक्षणानि 'शमो दमस्तपः शौचम्' इत्यादीनि । नीटी.

[2]ऋत्विगाचार्यसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥

[3]ऋत्विक्पुरोहितो मन्त्री दूतोऽथार्थानुशासकः ।
एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥

[4]अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ॥

[5]जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥

जन्मकर्म जन्मोचितकर्म, तेन विहीनाः । नीटी.

अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः ।
तान्सर्वान्धार्मिको राजा बलिं विष्टिं च कारयेत् ॥

बलिं करदानम् । विष्टिं विना वेतनं राजसेवाम् । नीटी.

[6]आह्वायका देवलका नक्षत्रग्रामयाजकाः ।
एते ब्राह्मणचण्डाला महापथिकपञ्चमाः ॥

आह्वायकाः धर्माधिकारिणः । देवलकाः वेतनेन देवपूजाकर्तारः । महापथिकः समुद्रे नौयानेन गच्छन्, यद्वा महापथि शुल्कग्राहकः । नीटी.

(१) भा. १२।७७।२ ; भामु. १२।७६।२ त्राऽऽम्नाय (त्र सम).

(२) भा. १२।७७।३ ; भामु. १२।७६।३ ऋत्विगाचार्य (ऋग्यजुःसाम).

(३) भा. १२।७७।४ ; भामु. १२।७६।७ ऽथार्थानुशासकः (वार्तानुकर्षकः).

(४) भा. १२।७७।५ ; भामु. १२।७६।८.

(५) भा. १२।७७।६–७ ; भामु. १२।७६।४–५.

(६) भा. १२।७७।८ ; भामु. १२।७६।६ नक्षत्रग्रा (नाक्षत्रा ग्रा) चण्डाला (चाण्डाला).

[1]एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः ।
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥

अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥

[2]विकर्मस्थास्तु नोपेक्ष्या जातु राज्ञा कथंचन ।
नियम्याः संविभज्याश्च धर्मानुग्रहकाम्यया ॥

युधिष्ठिर उवाच–

[3]केषां राजा प्रभवति वित्तस्य भरतर्षभ ।
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह ॥

भीष्म उवाच–

[4]अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥

रक्ष्यः अर्थोत्पादकः कोशविलोपकामात्यज्ञापकश्च

भीष्म उवाच–

[5]एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत ।
यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानवः ॥

एवममात्यान् मृष्टान्नदानतितिक्षार्जवमार्दवपूजाभिर्मानयेदित्युक्तम्, कोशवृद्धिकरं तु ततोऽप्यधिकतरं मानयेद्रक्षेच्चेत्याह– एषेति । नीटी.

[6]ह्रियमाणममात्येन भृतो वा यदि वाऽभृतः ।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥

(१) भा. १२।७७।९–१० ; भामु. १२।७६।९–१०.

(२) भा. १२।७७।११ ; भामु. १२।७६।११ स्थास्तु (स्थाश्च) जातु (विप्रा) काम्यया (कारणात्).

(३) भा. १२।७८।१ ; भामु. १२।७७।१ राजा प्रभवति (प्रभवते राजा).

(४) भा. १२।७८।२ ; भामु. १२।७७।२.

(५) भा. १२।८३।१ ; भामु. १२।८२।१ स मानवः (सदा नरः) ; नीम. ४९ उत्त.

(६) भा. १२।८३।२ ; भामु. १२।८२।२ भृतो (भृत्यो) ; राक. ८७ युधिष्ठिर (नराधिपे) उत्त. ; राप्र. २५९ राकवत् ; नीम. ४९ उत्त.

[1]श्रोतव्यं तस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।
अमात्या ह्युपहन्तारं भूयिष्ठं घ्नन्ति भारत ॥
उपहर्तारं राज्ञे निवेदयितारम् । नीम. ५०

[2]राजकोशस्य गोप्तारं राजकोशविलोपकाः ।
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥
अनुधावन्ति मारयितुं धावन्तीत्यर्थः । नीम. ५०

अर्थप्रशंसा

[3]अर्थे सर्वं जगद्बद्धमर्थेन च निबध्यते ।
अर्थे दर्पो मनुष्याणां तस्मादर्थं विरोचय ॥

अनापदि वणिक्शिल्पिभ्यः उच्चावचकरादानम्, स्वमूलं परमूलं च रक्ष्यम्

[4]विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजः कारयेत्करान् ॥
कारयेत् दापयेत् । नीटी.

[5]उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् ।
शिल्पप्रतिकरानेव शिल्पिनः प्रति कारयेत् ॥

[6]उच्चावचकरा न्याय्याः पूर्वराज्ञां युधिष्ठिर ।
यथा यथा न हीयेरंस्तथा कुर्यान्महीपतिः ॥

[7]फलं कर्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत् ।
फलं कर्म च निर्हेतु न कश्चित्संप्रवर्तयेत् ॥
फलं धान्यधनवृद्ध्यनुरूपः करः कल्प्य इत्यर्थः । नीटी.

[8]यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ।
समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः ॥

[9]नोच्छिन्द्यादात्मनो मूलं परेषां वाऽपि तृष्णया ।
ईहाद्वाराणि संरुध्य राजा संप्रीतिदर्शनः ॥
आत्मनो मूलं राष्ट्रम् । परेषां मूलं कृष्यादि । ईहा लोभः । नीटी.

[10]प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् ।
प्रद्विष्टस्य कुतः श्रेयः संप्रियो लभते प्रियम् ॥
अतिखादिनं बहुभक्षम् । नीटी.

[11]वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
भृतो वत्सो जातबलः पीडां सहति भारत ॥

[12]न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् ॥

[13]यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृपः ।
संजातमुपजीवन् स लभते सुमहत्फलम् ॥

---

(१) भा. १२।८३।३; भामु. १२।८२।३ तस्य (अस्य) ह्युपहन्तारं (ह्यपहर्तारो); राक. ८७ पू.; राप्र. २५९ पू.; नीम. ५० तस्य (अस्य) हन्तारं भूयिष्ठं (हर्तारं ज्ञातिं वा).

(२) भा. १२।८३।४; भामु. १२।८२।४; नीम. ५० कोशविलोपकाः (कोशाधिगोपकाः) समेत्य सर्वे बाधन्ते (सर्वे तमनुधावन्ति).

(३) भा. १२।८३।५९ इत्यस्यानन्तरं टिप्पणीस्थः.

(४) भा. १२।८८।११; भामु. १२।८७।१३–१४ व्ययम् (च्छदम्) वणिजः (वणिजां); नीम. ५०.

(५) भा. १२।८८।१२; भामु. १२।८७।१४–१५ शिल्प (शिल्पं) नेव (नेवं); नीम. ५० चासकृत् (वाऽसकृत्) शिल्प (शिल्पं).

(६) भा. १२।८८।१३; भामु. १२।८७।१५–१६ न्याय्याः पूर्वराज्ञां (दाप्या महाराज्ञां) हीयेरंस्त (सीदेरंस्त); नीम. ५० यथा यथा (तथा पन्था) रंस्तथा (रन्प्रजाः) उत्त.

(१) भा. १२।८८।१४; भामु. १२।८७।१६–१७ वर्तयेत् (वर्तते).

(२) भा. १२।८८।१५; भामु. १२।८७।१७–१८ समवेक्ष्य (संवेक्ष्य तु).

(३) भा. १२।८८।१६; भामु. १२।८७।१८–१९ वाऽपि (चापि) प्रीति (प्रीत).

(४) भा. १२।८८।१७; भामु. १२।८७।१९–२० संप्रियो (नाप्रियो) प्रियम् (फलम्); नीम. ५० प्रद्विषन्ति (संत्यजन्ति) पू.

(५) भा. १२।८८।१८; भामु. १२।८७।२०–२१.

(६) भा. १२।८८।१९; भामु. १२।८७।२१–२२; नीम. ५१.

(७) भा. १२।८८।२०; भामु. १२।८७।२२–२३ गृह्य (रक्षन्); नीम. ५१.

[1]आपदर्थं हि निचयान् राजान इह चिन्वते ।
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा ॥

निर्यातं दत्तम् । इह राष्ट्रे । नीटी.

[2]पौरजानपदान् सर्वान् संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्वानभ्यन्तरानपि ॥

संश्रिताः साक्षादाश्रिताः, उपाश्रिताः व्यवहिताः । नीटी.

[3]बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् ।
एवं न संप्रकुप्यन्ते जनाः सुखितदुःखिताः ॥

आटविको दस्युसंघः बाह्यजनः, तं यूयमुपतिष्ठध्वमिति भेदयित्वा मध्यमः ग्रामीणजनः भोक्तव्यः, ततो बहुलं धनमादद्यादित्यर्थः । नीटी.

आपदि करादानपद्धतिः

[4]प्रागेव तु करादानमनुभाष्य पुनः पुनः ।
संनिपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् ॥

तत्र प्रकारमाह— प्रागिति । चोरनिग्रहार्थं कटकबन्धः कर्तव्यः, तदर्थं धनमपेक्षितमिति पूर्वमेव आभाष्य सूचनां कृत्वा ततः संनिपत्य तेषु तेषु ग्रामेषु गत्वा भयं दर्शयेत् । नीटी.

[5]इयमापत्समुत्पन्ना परचक्रभयं महत् ।
अपि नान्ताय कल्पेत वेणोरिव फलागमः ॥

(१) भा. १२।८८।२१ ; भामु. १२।८७।२३–२४ पूर्वार्धे ( आपदर्थं च निर्यातं धनं त्विह विवर्धयेत् । ).

(२) भा. १२।८८।२२ ; भामु. १२।८७।२४ नभ्यन्तरा (न्स्वल्पधना) ; नीम. ५१ पौर (पौरान्) नभ्यन्तरा (नप्यधना).

(३) भा. १२।८८।२३ ; भामु. १२।८७।२५ न संप्रकुप्यन्ते ( नास्य प्रकुप्यन्ति ).

(४) भा. १२।८८।२४ ; भामु. १२।८७।२६ करा (धना) पुनः पुनः ( ततः पुनः ).

(५) भा. १२।८८।२५ ; भामु. १२।८७।२७ नान्ताय कल्पेत ( चान्ताय कल्पन्ते ) गमः ( गमाः ).

[1]अरयो मे समुत्थाय बहुभिर्दस्युभिः सह ।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् ॥

आत्मवधायेति प्रजासु स्वसामर्थ्यं द्योत्यते । नीटी.

[2]अस्यामापदि घोरायां संप्राप्ते दारुणे भये ।
परित्राणाय भवतां प्रार्थयिष्ये धनानि वः ॥

[3]प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये ।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥

[4]कलत्रमादितः कृत्वा नश्येत्स्वं स्वयमेव हि ।
अपि चेत्पुत्रदारार्थमर्थसंचय इष्यते ॥

[5]नन्दामि वः प्रभावेन पुत्राणामिव चोदये ।
यथाशक्त्यनुगृह्णामि राष्ट्रस्यापीडया च वः ॥

[6]आपत्स्वेव च वोढव्यं भवद्भिः सद्गवैरिव ।
न वः प्रियतरं कार्यं धनं कस्यांचिदापदि ॥

[7]इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद्युगमादाय कालवित् ॥

पुङ्गवैः बलीवर्दैः । न च प्रियतरमित्यादिः सार्धः । एवं चाऽऽलेख्येन सुदीक्षितान् मुक्तांश्च स्वरश्मीन् स्वस्य रश्मिभूतान् पदातीन् अधिकारिणः प्रजासु धनमुद्ग्रहीतुं अभ्यवसृजेत् प्रेरयेत् । योगं धनग्रहणोपायं आधाय प्रजासु प्रयोज्य, धनं गृह्णीयादिति शेषः । नीटी.

(१) भा. १२।८८।२६ ; भामु. १२।८७।२८.

(२) भा. १२।८८।२७ ; भामु. १२।८७।२९ भवतां ( भवतः ).

(३) भा. १२।८८।२८ ; भामु. १२।८७।३०.

(४) भा. १२।८८।२९ ; भामु. १२।८७।३१ द्वितियचरणे ( सर्वं वो विनशेदिति ).

(५) भा. १२।८८।३० ; भामु. १२।८७।३२.

(६) भा. १२।८८।३१ ; भामु. १२।८७।३३ सद्गवै ( पुङ्गवै ) वः ( च ).

(७) भा. १२।८८।३२ ; भामु. १२।८७।३४ युगमादाय ( योगमाधाय ).

वैश्येभ्यः करादानं तेषां हिते करविनियोगश्च

[1]प्रचारं भृत्यभरणं व्ययं गोग्रामतो भयम् ॥
योगक्षेमं च संप्रेक्ष्य गोमिनः कारयेत्करान् ॥

गोमिनः वैश्यान् भाषायां ' चारणाः ' इति प्रसिद्धान् प्राकारादीन् कर्तव्यान् प्रेक्ष्य संदर्शयित्वा ' इदं कार्यमुपस्थितमत्यावश्यकम् ' इत्युक्त्वा करं कारयेत् । नीटी.

[2]उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः ।
तस्मात्तेषु विशेषेण मृदुपूर्वं समाचरेत् ॥

[3]सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः ।
गोमिनां पार्थ कर्तव्यं संविभागाः प्रियाणि च ॥

[4]अजस्रमुपयोक्तव्यं फलं गोमिषु सर्वतः ।
प्रभावयति राष्ट्रं च व्यवहारं कृषिं तथा ॥

[5]तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान् संप्रणयन् मृदून् ॥

[6]सर्वत्र क्षेममचरणं सुलभं तात गोमिभिः ।
न ह्यतः सदृशं किंचिद्धनमस्ति युधिष्ठिर ॥

(१) भा. १२।८८।३३ ; भामु. १२।८७।३५ प्रचारं ( प्राकारं ) गोग्रामतो ( संग्रामतो ) त्करान् ( त्करम् ) ; नीम. ५१ व्ययं गो ( व्यसनं ) त्करान् ( त्करम् ).

(२) भा. १२।८८।३४ ; भामु. १२।८७।३६.

(३) भा. १२।८८।३५ ; भामु. १२।८७।३७ कर्तव्यं संविभागाः ( कर्तव्यः संविभागः ).

(४) भा. १२।८८।३६ ; भामु. १२।८७।३८ सर्वतः ( भारत ) वयति ( वयन्ति ).

(५) भा. १२।८८।३७ ; भामु. १२।८७।३९ ; नीम. ५१ प्रणयन् ( प्रणयेन् ) उत्त.

(६) भा. १२।८८।३८ ; भामु. १२।८७।३९ तात ( नाम ) धन ( दर ).

भ्रमरकृतमधुदोह—धेनुदोह—जलौकारक्तहरण—व्याघ्रीपुत्रहरणादिवत् मृदूपायेन प्रजाभ्यः करग्रहणं न्याय्यम्

युधिष्ठिर उवाच—
[1]यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते ।
कथं प्रवर्तेत तदा तन्मे ब्रूहि पितामह ॥
भीष्म उवाच—
[2]यथादेशं यथाकालमपि चैव यथाबलम् ।
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः ॥
[3]यथा तासां च मन्येत श्रेय आत्मन एव च ।
तथा धर्म्याणि सर्वाणि राजा राष्ट्रे प्रवर्तयेत् ॥
[4]मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न विपातयेत् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥
विकुट्टयेत् शोषयेत् । नीम. ४९
[5]जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिप ।
व्याघ्रीव च हरेत्पुत्रमदष्ट्वा मा पतेदिति ॥
[6]यथा शल्यकवानाखुः पदं धूनयते सदा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥

(१) भा. १२।८९।१ ; भामु. १२।८८।१.

(२) भा. १२।८९।२ ; भामु. १२।८८।२ लमपि चैव ( लं यथाबुद्धि ).

(३) भा. १२।८९।३ ; भामु. १२।८८।३ धर्म्याणि ( कर्माणि ).

(४) भा. १२।८९।४ ; भामु. १२।८८।४ द्वितियचरणे ( भ्रमरा इव पादपम् ) ; पमा. ४०४ विपातयेत् ( प्रवासयेत् ) उत्तरार्धे ( न चेक्षुवत् पीडयेत स्तनांश्चैव विकुट्टयेत् ॥ ) ; नीम. ४९.

(५) भा. १२।८९।५ ; भामु. १२।८८।५ धिप ( धिपः ) उत्तरार्धे ( व्याघ्रीव च हरेत् पुत्रान् संदशेन्न च पीडयेत् ॥ ) ; पमा. ४०४ धिप ( धिपः ) उत्तरार्धे ( व्याघ्रीवदुद्धरेत् पुत्रं न दंशेन्न च पीडयेत् ॥ ).

(६) भामु. १२।८८।६ ; पमा. ४०४ ( यथा च लेखकः पर्णमाखुः पादत्वचं यथा । अतीक्ष्णेनाप्युपायेन वर्धमानं प्रदापयेत् ॥ ).

शल्यकवान् तीक्ष्णतुण्डः आखुविशेषः । स हि निद्रितस्य मनुष्यस्य पादतलस्थं मांसं अतीक्ष्णेनैवोपायेन भक्षयति । शयानस्तु ईषद्वेदनया पदं किंचित् धूनयते कम्पयते, न तु तीव्रवेदनया प्रबुध्यन् आखुं निवारयति । तद्वद्राष्ट्रं समापिबेत् । नीटी.

[१]अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः कामं वृद्धिं समाचरेत् ॥

प्रत्यब्दं शततमेनाधिकेन वांऽशेन वर्धमानं करं प्रदापयन् ग्रामद्रव्यस्य वृद्धिं कुर्यादित्याह– अल्पेनेति । नीटी.

[२]कोशाक्षपटलं यस्य कोशवृद्धिकरैर्जनैः ।
आप्तैस्तुष्टैश्च सततं धार्यते स नृपोत्तमः ॥

पटलं समूहम् । नीटी.

[३]कोष्ठागारमसंहार्यैराप्तैः संचयतत्परैः ।
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणीभवेत् ॥

कोष्ठागारं धान्यादिसामग्रीगृहम् । गुणीभवेत् बहुगुणिभावं गच्छेत् । नीटी.

[४]कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशमूलकरो भव ॥

[५]कोष्ठागारं च ते नित्यं स्फीतं धान्यैः सुसंचितम् ।
सदाऽस्तु सत्सु संन्यस्तं धनधान्यपरो भव ॥

(१) भा. १२।८९।६ ; भामु. १२।८८।७ कामं ( क्रम ) ; पमा. ४०४ कामं ( क्रमात् ) उत्त.

(२) भा. १२।११६।१९ ; भामु. १२।११५।२० कोशाक्ष ( कोशाख्य ) जनैः ( नरैः ) धार्यते ( चीयते ) ; राक. ८७ जनैः ( नरैः ) आप्तैस्तुष्टै ( पात्रभूतै ) ; राप्र. २५९ राकवत्.

(३) भा. १२।११६।२० ; भामु. १२।११५।२१.

(४) भा. १२।११९।१६ ; भामु. १२।११९।१६ चतुर्थचरणे ( कोशो वृद्धिकरो भवेत् ).

(५) भा. १२।११९।१७ ; भामु. १२।११९।१७ स्फीतं ( स्फीतैः ) चितम् ( वृतम् ).

धनसंचयपद्धतिः

[१]कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।
अहन्यहनि संदुह्यान्महीं गामिव बुद्धिमान् ॥

न अर्थं प्रसूचयेत् अर्थवत्तां न ज्ञापयेत् । नीटी.

[२]यथा क्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत संचयम् ॥

[३]यद्धि गुप्तावशिष्टं स्यात्तद्वितं धर्मकामयोः ।
संचयानुविसर्गी स्याद्राजा शास्त्रविदात्मवान् ॥

संचयान्न विसर्गी स्यात् कोशाद्धनं न दद्यात्, अपि तु उपर्याहृतमेवेत्यर्थः । नीटी.

अष्ट धनसमिन्धनानि

[४]नाल्पमर्थं परिभवेन्नावमन्येत शात्रवान् ।
बुद्ध्याऽवबुध्येदात्मानं न चाबुद्धिषु विश्वसेत् ॥

[५]धृतिर्दाक्ष्यं संयमो बुद्धिरग्र्या
धैर्यं शौर्यं देशकालोऽप्रमादः ।
स्वल्पस्य वा महतो वाऽपि वृद्धौ
धनस्यैतान्यष्ट समिन्धनानि ॥

आत्मा देहः । देशे काले वा अप्रमाद इत्येकम् । नीटी.

(१) भा. १२।१२०।३१ ; भामु. १२।१२०।३३ काल ( कालं ).

(२) भा. १२।१२०।३२ ; भामु. १२।१२०।३४.

(३) भा. १२।१२०।३३ ; भामु. १२।१२०।३५ त्तद्वितं ( त्तद्वित्तं ) यानुवि ( यान्न वि ).

(४) भा. १२।१२०।३४ ; भामु. १२।१२०।३६ नाल्पमर्थं ( नार्थमल्पं ) बुद्ध्याऽव ( बुद्ध्या तु ).

(५) भा. १२।१२०।३५ ; भामु. १२।१२०।३७ रग्र्या ( रात्मा ) कालोऽप्र ( कालाप्र ) तृतीयचरणे ( अल्पस्य वा बहुनो वा विवृद्धौ ).

¹अग्निस्तोको वर्धते ह्याज्यसिक्तो
बीजं चैकं बहुसाहस्रमेति ।
क्षयोदयौ विपुलौ संनिशाम्य
तस्मादल्पं नावमन्येत विद्वान् ॥

क्षीणे कोशे अधर्ममार्गेणापि बलाद् धनिनां धनहरणं आपद्धर्मः

युधिष्ठिर उवाच–
²मित्रैः प्रहीयमाणस्य बहुमित्रस्य का गतिः ।
राज्ञः संक्षीणकोशस्य बलहीनस्य भारत ॥

मित्रैरित्यध्यायो वक्ष्यमाणानामापद्धर्माणां सूत्रभूतः । तत्र सर्वप्रकारैः आपद्यागतायां अधर्मेण प्रजापीडनजेनापि कोशवृद्धिः कर्तव्या, तेनैव सर्वा आपदस्तरतीत्यध्यायार्थः । नीटी.

³दुष्टामात्यसहायस्य स्रुतमन्त्रस्य सर्वतः ।
राज्यात्प्रच्यवमानस्य गतिमन्यामपश्यतः ॥

सर्वतः सर्वैः । नीटी.

⁴परचक्राभियातस्य दुर्बलस्य बलीयसा ।
असंविहितराष्ट्रस्य देशकालावजानतः ॥
⁵अप्राप्यं च भवेत्सान्त्वं भेदो वाऽप्यतिपीडनात् ।
जीवितं चार्थहेतोर्वा तत्र किं सुकृतं भवेत् ॥

परस्य चक्रं राष्ट्रं प्रति अभियातस्य । बलीयसा सार्धम् । असंविहितं असम्यग्रक्षितं राष्ट्रं येन तस्य । अतिपीडनात् परकीयामात्यादीनां भेदोऽप्यप्राप्यः । तत्र अर्थसाध्यं जीवितं वा सुकृतम् ? अर्थश्चामार्गेणापि ग्राह्यः ? उतार्थं विना मरणं वा श्रेयः ? इति सार्धेन प्रश्नः । नीटी.

भीष्म उवाच–
¹गुह्यं मा धर्ममप्राक्षीरतीव भरतर्षभ ।
अपृष्टो नोत्सहे वक्तुं धर्ममेनं युधिष्ठिर ॥

मा मां अप्राक्षीः पृष्टवानसि । नीटी.

²धर्मो ह्यणीयान् वचनाद्बुद्धेश्च भरतर्षभ ।
श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ॥

वचनात् शास्त्रात् । धर्मं श्रुत्वा उपास्य च क्वचिद्देशे कश्चिदेव साधुर्भवति । नीटी.

³कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः ।
तादृशोऽयमनुप्रश्नः स व्यवस्यस्त्वया धिया ॥

आपत्काले धनार्थं प्रजाः कर्षन्नपि धनं लभते चेदापदं निस्तीर्य प्रजा अनुकम्पयेत्, न वा लभते चेत् स्वस्य प्रजानां च नाशो भवतीति विचार्य स्वस्य प्रश्नस्योत्तरं स्वयमेव चिन्तनीयमित्यर्थः । नीटी.

⁴उपायं धर्मबहुलं यात्रार्थं शृणु भारत ।
नाहमेतादृशं धर्मं बुभूषे धर्मकारणात् ।
दुःखादान इहाऽऽढ्येषु स्यात्तु पश्चात्क्षमो मतः ॥
⁵अनुगम्य गतीनां च सर्वासामेव निश्चयम् ।
यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते ।
तथा तथा विजानाति विज्ञानं चास्य रोचते ॥

---

(१) भा. १२।१२०।३६; भामु. १२।१२०।३८ ह्याज्य (ऽप्याज्य) बहुसा (रोहस) क्षयोदयौ (आयव्ययौ) विद्वान् (वित्तम्).

(२) भा. १२।१२८।१; भामु. १२।१३०।१.

(३) भा. १२।१२८।२; भामु. १२।१३०।२ स्रुत (च्युत) मन्या (मन्त्र्या).

(४) भा. १२।१२८।३; भामु. १२।१३०।३–४ परचक्राभियातस्य + (परराष्ट्राणि मृद्नतः । विग्रहे वर्तमानस्य).

(५) भा. १२।१२८।४; भामु. १२।१३०।४ चार्थहेतो (त्वर्थहेतु).

(१) भा. १२।१२८।५; भामु. १२।१३०।५ मा धर्मम (धर्मज मा) मेनं (मेतं).

(२) भा. १२।१२८।६; भामु. १२।१३०।६ बुद्धेश्च (बुद्धिश्च).

(३) भा. १२।१२८।७; भामु. १२।१३०।७ स व्यवस्यस्त्वया (संव्यवस्यः स्वया).

(४) भा. १२।१२८।८; भामु. १२।१३०।८–९ इहाऽऽढ्येषु (इह लोप) क्षमो मतः (क्षयोपमः).

(५) भा. १२।१२८।९; भामु. १२।१३०।९–१० प्रथमार्धे (अभिगम्यमतीनां हि सर्वासामेव निश्चयः ।) चास्य (नमथ).

यात्रार्थे राज्ञां व्यवहारनिर्वाहार्थम्, धर्मः राज्ञामापद्धर्मः, तदर्थत्वेन बहुलमुपायं शृणु । अहं तु न बुभूषे इति तस्य शब्दैरनादरणीयत्वं दर्शितम् । बुभूषे प्राप्तुमिच्छामि । एष उपायः दुःखादानः प्रजानां दुःखेन आदीयते अङ्गीक्रियते, अत एव पश्चात् क्षयोपमः मरणतुल्यः, 'प्रजापीडनसंतापात् समुद्भूतो हुताशनः । राज्ञः प्राणान् बलं कोशं नादग्ध्वा विनिवर्तते ॥' (यास्मृ. १।३४१) इति । अभिगम्याश्च ताः मतयश्च तासां सर्वासां प्रजानामिति वा । नीटी.

[1]अविज्ञानादयोगश्च पुरुषस्योपजायते ।
अविज्ञानादयोगो हि योगो भूतिकरः पुनः ॥

अयोगः उपायाभावः । नीटी.

[2]अशङ्कमानो वचनमनसूयुरिदं शृणु ।
राज्ञः कोशक्षयादेव जायते बलसंक्षयः ॥

[3]कोशं संजनयेद्राजा निर्जलेभ्यो यथा जलम् ।
कालं प्राप्यानुगृह्णीयादेष धर्मोऽत्र सांप्रतम् ॥

[4]उपायधर्मं प्राप्यैनं पूर्वैराचरितं जनैः ।
अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारत ॥

अनुगृह्णीयात्, प्राक् कर्षिताः प्रजा इति शेषः । उपायधर्मं उपधर्मं अमुख्यधर्ममिति यावत् । साधः । नीटी.

[1]प्राक्कोशः प्रोच्यते धर्मो बुद्धिर्धर्माद्गरीयसी ।
धर्मं प्राप्य न्यायवृत्तिमबलीयान्न विन्दति ॥

[2]यस्माद्धनस्योपपत्तिरेकान्तेन न विद्यते ।
तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः ॥

प्राक् कोशात् विनाऽपि कोशं तपआदिना धर्मः । वृत्तिः जीवनम् । तल्लोपप्रसक्तौ तु कोशसंचयविरोधी धर्मो नाऽऽदर्तव्य इत्यर्थः । नबलीयान् । नैकधेतिवत्समासः । दुर्बलः धर्मं प्राप्य अनुरुध्य न्यायवृत्तिं न्यायोपेतां श्रेष्ठां जीविकां न विन्दति । यस्मात् 'यत्नाच्चावश्यं बलं भवति' इति नियमो नास्ति यस्मात् तस्मादापदि अधर्मोऽपि कर्तव्यत्वेन श्रूयते । तत्र च यः अधर्म( ? धर्म )-लक्षणो धर्मः ( ? अधर्मः ) सः अधर्मः ( ? धर्मः ) एव भवतीति शास्त्रमर्यादेति श्लोकद्वयार्थः । प्रजाकर्षणादिरधर्मोऽप्यापदि धर्म एव, अकृतश्चेत् स एवाधर्म इति भावः । नीटी.

[3]अधर्मो जायते यस्मिन्निति वै कवयो विदुः ।
अनन्तरः क्षत्रियस्य इति वै विचिकित्ससे ॥

[4]यथाऽस्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा ।
तत्कर्तव्यमिहेत्याहुर्नाऽऽत्मानमवसादयेत् ॥

अनन्तरं आपन्निवृत्त्युत्तरं तत्र पूर्वोक्ताधर्मे किं विचिकित्स्यते ? प्रायाश्चित्तादिकं कराग्रहणादिकं च विधीयते दोषपरिहारार्थमित्यर्थः । फलितमाह– यथेति । नीटी.

---

(१) भा. १२।१२८।१० ; भामु. १२।१३०।११ योगश्च ( योगो हि ) उत्तरार्धे ( विज्ञानादपि योगश्च योगो भूतिकरः परः ॥ ).

(२) भा. १२।१२८।११ ; भामु. १२।१३०।१२.

(३) भा. १२।१२८।१२ ; भामु. १२।१३०।१३ संजन ( च जन ) धर्मोऽत्र सांप्रतम् ( धर्मः सनातनः ).

(४) भा. १२।१२८।१३ ; भामु. १२।१३०।१३–१४ प्यैनं ( प्येमं ).

(१) भा. १२।१२८।१४ ; भामु. १२।१३०।१४–१५ शः प्रोच्यते ( शात् प्राप्यते ) बुद्धि (वृत्ति) त्तिमबली ( त्तिं नबली ).

(२) भा. १२।१२८।१५ ; भामु. १२।१३०।१५–१६ द्धन ( द्बल ) धधर्मो ( त्स्वधर्मौ ).

(३) भा. १२।१२८।१६ ; भामु. १२।१३०।१६–१७ यस्मि ( तस्मि ) उत्तरार्धे ( अनन्तरं क्षत्रियस्य तत्र किं विचिकित्स्यते ॥ ).

(४) भा.१२।१२८।१७ ; भामु. १२।१३०।१७.

[1]सन्नात्मा नैव धर्मस्य न परस्य न चाऽऽत्मनः ।
सर्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः ॥

धर्मस्येति कर्मणि षष्ठी । परस्य धर्मं नोज्जिहीर्षेत् नापि आत्मनो धर्ममुज्जिहीर्षेत्, अपि तु आत्मानमेव उज्जिहीर्षेत् । स्वपरधर्मलोपेऽप्यात्मानमेवोद्धर्तुमिच्छेदित्यर्थः । नीटी.

[2]तत्र धर्मविदां तात निश्चयो धर्मनैपुणे ।
उद्यमो जीवनं क्षत्रे बाहुवीर्यादिति श्रुतिः ॥

[3]क्षत्रियो वृत्तिसंरोधे कस्य नाऽऽदातुमर्हति ।
अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत ॥
यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत् ।
अभोज्यान्नानि चाश्नीयात्तथेदं नात्र संशयः ॥

[4]पीडितस्य किमद्वारमुत्पथो निधृतस्य वा ।
अद्वारतः प्रद्रवति यदा भवति पीडितः ॥

विधृतस्य निरुद्धस्य कः उत्पथः ? न कोऽपि, किंतु यथाऽपथेनापि प्रद्रवति तथा यतितव्यमिति शेषः । नीटी.

[5]तस्य कोशबलज्यान्या सर्वलोकपराभवः ।
भैक्षचर्या न विहिता न च विट्शूद्रजीविका ॥

[6]स्वधर्मानन्तरा वृत्तिर्याऽन्याननुपजीवतः ।
वहतः प्रथमं कल्पमनुकल्पेन जीवनम् ॥

न विहिता यस्य इत्यनुषज्यते । स्वधर्मः विजयेन क्षत्रियस्य धनार्जनम् । तस्य अनन्तरा प्रत्यासन्ना स्वपरराष्ट्रावमर्देन धनार्जनम्, तेन वृत्तिः, तस्य विहितेत्यनुषङ्गः । अन्यान् सजातीयान्, अनुपजीवतः अयाचमानस्य नित्यं प्रथमं कल्पं वहतोऽपि आपदि अनुकल्पेन जीवनं युक्तमित्यर्थः । नीटी.

[1]आपद्गतेन धर्माणामन्यायेनोपजीवनम् ।
अपि ह्येतद्‍ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ॥

अन्यायेन विपर्ययेण । 'बुभुक्षितस्त्र्यहं विप्रो धान्यमब्राह्मणाद्धरेत्' (यास्मृ. ३।४३) इति प्रतिग्रहालाभे ब्राह्मणस्य यथा चौर्यं विहितम् । नीटी.

[2]क्षत्रिये संशयः कः स्यादित्येतन्निश्चितं सदा ।
आददीत विशिष्टेभ्यो नावसीदेत्कथंचन ॥

एवं क्षत्रियोऽप्यापदि शिष्टेभ्यो बलादाददीतेत्यत्र संदेह एव न युक्त इत्यर्थः । नीटी.

[3]हन्तारं रक्षितारं च प्रजानां क्षत्रियं विदुः ।
तस्मात्संरक्षता कार्यमादानं क्षत्रबन्धुना ॥
अन्यत्र राजन् हिंसाया वृत्तिर्नेहास्ति कस्यचित् ।
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः ॥

अस्यापवादमाह– अन्यत्रेति । अन्यत्र हिंसायाः कृशजनपीडामकृत्वेत्यर्थः । इह हिंसायाम् । कस्यचिदपि वृत्तिः हिंसापूर्विका न हिताऽस्तीति नेत्यर्थः । अरण्यसमुत्थस्य वने एव तिष्ठतः । नीटी.

[4]न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम् ।
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता ॥

शङ्खे ललाटास्थ्नि लिखितां वृत्तिम् । दिष्टमात्रावलम्बिना राज्ञा जीवितुं न शक्यम् । 'शङ्खः कम्बु

---

(१) भा. १२।१२८।१८; भामु. १२।१३०।१८ सन्नात्मा नैव (सर्वात्मनैव).

(२) भा. १२।१२८।१९; भामु. १२।१३०।१९ नैपुणे (नैपुणम्) जीवनं क्षत्रे (नैपुणं क्षात्रे).

(३) भा.१२।१२८।२०–२१; भामु. १२।१३०। २०–२१.

(४) भा. १२।१२८।२२; भामु. १२।१३०।२२ किमद्वार (किमु द्वार) निधृ (विधृ).

(५) भा. १२।१२८।२३; भामु. १२।१३०।२३ तस्य (यस्य) ज्यान्या (ग्लान्या) भैक्ष (भैक्ष्य).

(६) भा. १२।१२८।२४; भामु. १२।१३०।२४ र्योऽन्या (र्ज्यात्या).

(१) भा. १२।१२८।२५; भामु. १२।१३०।२५.

(२) भा. १२।१२८।२६; भामु. १२।१३०।२६ कः स्यादित्येतन्नि (कस्मादित्येवं नि).

(३) भा. १२।१२८।२७–२८; भामु. १२।१३०। २७–२८.

(४) भा. १२।१२८।२९; भामु. १२।१३०।२९ मीप्सता (मीप्सया).

ललाटास्थि ' इति विश्वलोचनः । ईप्सया औत्कण्ठ्येन प्रजापालनम्, चिकीर्षतेति शेषः । नीटी.

[1]परस्पराभिसंरक्षा राज्ञा राष्ट्रेण चाऽऽपदि ।
नित्यमेवेह कर्तव्या एष धर्मः सनातनः ॥

[2]राजा राष्ट्रं यथाऽऽपत्सु द्रव्यौघैः परिरक्षति ।
राष्ट्रेण राजा व्यसने परिरक्ष्यस्तथा भवेत् ॥

[3]कोशं दण्डं बलं मित्रं यदन्यदपि संचितम् ।
न कुर्वीतान्तरं राष्ट्रे राजा परिगते क्षुधा ॥

अन्तरं दूरतः । नीटी.

[4]बीजं भक्तेन संपाद्यमिति धर्मविदो विदुः ।
अत्रैतच्छम्बरस्याऽऽहुर्महामायस्य दर्शनम् ॥

बीजं भक्तेनासंपादितं चेदग्रे भक्तदौर्बल्यं यथा भवति एवमल्पधनो राजा प्रजाभिर्न रक्षितो नश्यति । नष्टे च तस्मिन् सर्वाः प्रजा अपि नश्यन्तीत्यर्थः । एतत् पूर्वार्धोक्तम् । दर्शनं शास्त्रम् । नीटी.

[5]धिक् तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति ।
अवृत्त्याऽन्त्यमनुष्योऽपि यो वै वेद शिबेर्वचः ॥

अवृत्त्या जीविकाया अभावेन यस्य राष्ट्रमवसीदति, यो वा अन्यमनुष्यः । 'अल्प' इति पाठे अल्पपरीवारः । यो वा वैदेशिकः देशान्तरोपजीवी । तस्य राज्ञो जीवितं धिक् । नीटी.

[6]राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम् ।
तन्मूलं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः ॥

(१) भा. १२।१२८।३० ; भामु. १२।१३०।३० स्पराभि ( स्परं हि ) मेवेह ( मेव हि ).

(२) भा. १२।१२८।३१ ; भामु. १२।१३०।३१ घैः परि ( घैरपि ) परिरक्ष्य ( रक्षितव्य ).

(३) भा. १२।१२८।३२ ; भामु. १२।१३०।३२ गते ( गतः ).

(४) भा. १२।१२८।३३ ; भामु. १२।१३०।३३.

(५) भा. १२।१२८।३४ ; भामु. १२।१३०।३४ राष्ट्रे ( राष्ट्रं ) त्याऽन्त्य ( त्याऽन्य ) वै वेद शिबेर्वचः ( वैदेशिक इत्यपि ).

(६) भा. १२।१२८।३५ ; भामु. १२।१३०।३५.

राज्ञो मूलं दीर्घकारणं कोशो बलं च । तत्रापि कोशो बलस्य मूलम् । तत् बलं धर्माणां मूलम् । धर्मश्च प्रजानां मूलम् । अतः सर्वस्य मूलभूतं कोशं वर्धयेत् । नीटी.

[1]नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम् ।
तदर्थं पीडयित्वा च दोषं न प्राप्तुमर्हति ॥

[2]अकार्यमपि यज्ञार्थं क्रियते यज्ञकर्मसु ।
एतस्मात्कारणाद्राजा न दोषं प्राप्तुमर्हति ॥

कारणात् दृष्टान्तात् राजा रक्षार्थं प्रजाः कर्षन्न दोषं प्राप्नोति । नीटी.

[3]अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थलक्षणम् ।
एवं बुद्ध्या संप्रपश्येन्मेधावी कार्यनिश्चयम् ॥

अन्यत् आपदि प्रजापीडनमपि अर्थार्थं भवति । अपरं अपीडनं विपरीतं अनर्थार्थं भवति । यदपि अन्यत् अनर्थार्थं अर्थाभावार्थं कुञ्जरपालनादि भवति तदेवेहार्थस्य कारणं उत्पादकं भवति । एवमेतदपीत्याहार्धेन– एवमिति । सार्धः । नीटी.

[4]यज्ञार्थमन्यद्भवति यज्ञे नार्थस्तथाऽपरः ।
यज्ञस्यार्थार्थमेवान्यत्तत्सर्वं यज्ञसाधनम् ॥

यथा पश्वादिकं यज्ञार्थं यज्ञश्च चित्तसंस्कारार्थः पश्वादिकं यज्ञः संस्कारश्चेति त्रयं अर्थार्थं मोक्षार्थं भवति, एवं दण्डः कोशार्थं कोशो बलार्थः बलं शत्रुपराभवार्थं कोशो बलं जयश्चेति त्रयं राष्ट्रपुष्ट्यर्थमिति भावः । नीटी.

[5]उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीम् ।
यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ॥

(१) भा. १२।१२८।३६ ; भामु. १२।१३०।३६ न प्राप्तुम ( प्राप्तुं न सोऽ ).

(२) भा. १२।१२८।३७ ; भामु. १२।१३०।३७.

(३) भा. १२।१२८।३८ ; भामु. १२।१३०।३८ लक्षणम् ( कारणम् ).

(४) भा. १२।१२८।३९ ; भामु. १२।१३०।३९ यज्ञे नार्थ ( यज्ञोऽन्यार्थ ).

(५) भा. १२।१२८।४० ; भामु. १२।१३०।४०.

[1]द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि ।
ते चापि निपतन्तोऽन्यान्निघ्नन्ति
च वनस्पतीन् ॥

सामन्ताः प्रतिपक्षभूताः । नीटी.

[2]एवं कोशस्य महतो ये नराः परिपन्थिनः ।
तानहत्वा न पश्यामि सिद्धिमत्र परंतप ॥
धनेन जयते लोकावुभौ परमिमं तथा ।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा ॥

'यथा नास्त्यधनस्तथा' इति जीवन्मृतत्वमधनस्योक्तम् । नीटी.

सर्वोपायैराददीत धनं यज्ञप्रयोजनम् ।
न तुल्यदोषः स्यादेवं कार्याकार्येषु भारत ॥

यज्ञार्थं धनं सर्वैरप्यनिषिद्धैरुपायैराददीत । परंतु कार्याकार्येषु विहितनिषिद्धेषु आपदि प्रजापीडनं विहितम्, तदेवानापदि निषिद्धम् । तथाभूतेष्वर्थेषु तुल्यदोषो न स्यात् । देशकालानुसारेण कार्यमप्यकार्यं भवति, अकार्यमपि कार्यं भवति, तत्र विपरीतं न प्रतिपद्येतेति भावः । नीटी.

[3]नैतौ संभवतो राजन् कथंचिदपि भारत ।
न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥

एतौ धनसंग्रहत्यागौ एकस्मिन् पुरुषे न संभवतः युगपत् तयोर्वृत्तिः न सिध्यति, विरक्तेषु संग्रहासंभवात् । नीटी.

[4]यदिदं दृश्यते वित्तं पृथिव्यामिह किंचन ।
ममेदं स्यान्ममेदं स्यादित्ययं काङ्क्षते जनः ॥

---

(१) भा. १२।१२८।४१; भामु. १२।१३०।४१ घ्नन्ति च ( घ्नन्त्येव ).

(२) भा. १२।१२८।४२–४४; भामु. १२।१३०। ४२–४४.

(३) भा. १२।१२८।४५; भामु. १२।१३०।४५ भारत ( पार्थिव ).

(४) भा. १२।१२८।४६; भामु. १२।१३०।४६ दित्यय ( दित्येवं ).

---

अन्येषु त्यागासंभवमाह– यदिदमिति । तस्मात् अविरक्तत्वात् राज्ञो धनमेष्टव्यमेवेति भावः । नीटी.

[1]न च राज्यसमो धर्मः कश्चिदस्ति परंतप ।
धर्मं शंसन्ति ते राज्ञामापदर्थमितोऽन्यथा ॥

ननु किं पापमूलेन धनेन ? किंच तन्मूलेन राज्येन ? इत्याशङ्क्याऽऽह– न चेति । अनापद्येव राज्ञो बहुकरादानं पापमूलम् । आपदि तु न तत्तथा भवति । अतो न पापमूलं धनम्, नापि तन्मूलराज्यस्य हेयत्वम्, अपि तु धर्महेतुत्वादवश्यं कर्तव्यत्वमेवेत्यर्थः । नीटी.

[2]दानेन कर्मणा चान्ये तपसाऽन्ये तपस्विनः ।
बुद्ध्या दाक्ष्येण चाप्यन्ये चिन्वन्ति
धनसंचयान् ॥

[3]अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत् ।
सर्वं धनवतः प्राप्यं सर्वं तरति कोशवान् ।
कोशाद्धर्मश्च कामश्च परो लोकस्तथाऽप्ययम् ॥
[4]तं च धर्मेण लिप्सेत नाधर्मेण कदाचन ॥

मध्यममार्गेण बलात् कोशसंचयः कर्तव्यः

भीष्म उवाच–

[5]स्वराष्ट्रात्परराष्ट्राच्च कोशं संजनयेन्नृपः ।
कोशाद्धि धर्मः कौन्तेय राज्यमूलः प्रवर्तते ॥

---

(१) भा. १२।१२८।४७; भामु. १२।१३०।४७ धर्मं शंसन्ति ते. ( धर्मः संशब्दितो ) मितो ( मतो ).

(२) भा. १२।१२८।४८; भामु. १२।१३०।४८ चाप्यन्ये चिन्वन्ति ( चैवान्ये विन्दन्ति ).

(३) भा. १२।१२८।४९; भामु. १२।१३०।४९–५० धनवतः ( धनवता ) तृतीयार्धे ( कोशेन धर्मः कामश्च परलोकस्तथा ह्ययम् ॥ ); राक. ८७ धनवतः प्राप्यं (बलवतः पथ्यं ); राप्र. २५९ कोशवान् ( कोशवत् ) शेषं राकवत्.

(४) भामु. १२।१३०।५०.

(५) भा. १२।१३१।१; भामु. १२।१३३।१ मूलः प्रवर्तते ( मूलं च वर्धते ).

[1]तस्मात्संजनयेत्कोशं संहृत्य परिपालयेत् ।
परिपाल्यानुगृह्णीयादेष धर्मः सनातनः ॥

राजधर्मान्ते उक्तस्याऽऽपन्नस्य यायिन उक्तां स्थितिं दृढीकर्तुमयमध्यायः । अनुतनुयात् अनुगृह्णीयात् । नीटी.

[2]न कोशः शुद्धशौचेन न नृशंसेन जायते ।
पदं मध्यममास्थाय कोशसंग्रहणं चरेत् ॥
[3]अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम् ।
अबलस्य कुतो राज्यमराज्ञः श्रीः कुतो भवेत् ॥
[4]उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा ।
तस्मात्कोशं बलं मित्राण्यथ राजा विवर्धयेत् ॥
[5]हीनकोशं हि राजानमवजानन्ति मानवाः ।
न चास्याल्पेन तुष्यन्ति कार्यमभ्युत्सहन्ति च ॥

उच्चैर्वृत्तेः महतः । कार्यमपि कर्तुं नोत्सहन्ति । नीटी.

[6]श्रियो हि कारणाद्राजा सत्क्रियां लभते पराम् ।
साऽस्य गूहति पापानि वासो गुह्यमिव स्त्रियाः ॥
[7]ऋद्धिमस्यानुवर्तन्ते पुरा विप्रकृता जनाः ।
शालावृका इवाजस्रं जिघांसूनिव विन्दति ।
ईदृशस्य कुतो राज्ञः सुखं भरतसत्तम ॥

विप्रकृताः कृतविरोधाः शालावृकवत् जिघांसुमेनमेव विन्दन्ति आश्रयन्ति कपटेन हन्तुम् । प्राप्त्यर्थस्य विन्दतेः रूपम् । आर्षो वचनव्यत्ययः । नीटी.

भीष्म उवाच-

[1]अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
येन मार्गेण राजानः कोशं संजनयन्ति च ॥
[2]न धनं यज्ञशीलानां हार्यं देवस्वमेव तत् ।
दस्यूनां निष्क्रियाणां च क्षत्रियो हर्तुमर्हति ॥
[3]इमाः प्रजाः क्षत्रियाणां रक्ष्याश्चाऽऽद्याश्च भारत ।
धनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ॥
[4]तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।
अभोग्या ह्योषधीश्छित्त्वा भोग्या एव पचन्त्युत ॥

औषधीश्छित्त्वा ताभिः इन्धनीकृताभिः भोग्या व्रीह्याद्याः । दुष्टान् हिंसित्वा साधून् पालयेदिति भावः । नीटी.

[5]यो वै न देवान्न पितॄन्न मर्त्यान् हविषाऽर्चति ।
आनन्तिकां तां धनितामाहुर्वेदविदो जनाः ॥
[6]हरेत्तद्द्रविणं राजन् धार्मिकः पृथिवीपतिः ।
न हि तत्प्रीणयेल्लोकान्न कोशं तद्विधं नृप ॥

---

(१) भा. १२।१३१।२ ; भामु. १२।१३३।२ संहृत्य ( सत्कृत्य ) गृह्णी ( तनु ).

(२) भा. १२।१३१।३ ; भामु. १२।१३३।३ जायते ( जातुचित् ) पदं मध्यम ( मध्यमं पद ).

(३) भा. १२।१३१।४ ; भामु. १२।१३३।४ कुतो भवेत् ( भवेत् कुतः ).

(४) भा. १२।१३१।५ ; भामु. १२।१३३।५ मित्राण्यथ ( मित्रमथ ).

(५) भा. १२।१३१।६ ; भामु. १२।१३३।६ मभ्यु ( मप्यु ).

(६) भा. १२।१३१।७ ; भामु. १२।१३३।७.

(७) भा. १२।१३१।८ ; भामु. १२।१३३।८-९ वर्तन्ते ( तप्यन्ते ) जनाः ( नराः ) सूनिव ( सुमेव ) भरतसत्तम ( भवति भारत ).

(१) भा. १२।१३४।१; भामु. १२।१३६।१ राजानः ( राजा वै ) यन्ति च ( यत्युत ).

(२) भा. १२।१३४।२ ; भामु. १२।१३६।२ तत् ( च ).

(३) भा. १२।१३४।३ ; भामु. १२।१३६।३ रक्ष्याश्चाऽऽद्याश्च ( राज्यभोगाश्च ) स्येह ( स्यैव ).

(४) भा. १२।१३४।४ ; भामु. १२।१३६।४ मेव वा ( मेव च ) ह्योष ( श्चौष ).

(५) भा. १२।१३४।५ ; भामु. १२।१३६।५ उत्तरार्धे ( अनर्थकं धनं तत्र प्राहुर्धर्मविदो जनाः ॥ ).

(६) भा. १२।१३४।६ ; भामु. १२।१३६।६ त्तद्द्र ( त द्र ) उत्तरार्धे (ततः प्रीणयते लोकं न शोकं तद्विधं नृपः ॥ ).

[1]असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा मन्ये धर्मविदेव सः ॥
[2]तथा तथा जयेल्लोकाञ्शक्त्या चैव यथा यथा ॥
[3]औद्भिज्जा जन्तवः केचिद्युक्तवाचो यथा तथा ।
अनिष्टतः संभवन्ति तथाऽयज्ञः प्रतायते ॥

द्वितीया उपमा– शुक्लजीवाः वल्मीसंज्ञाः उद्भिद्य भुवं जायन्ते इति उद्भिज्जाः पिपीलिकादयः यथा शनैर्दूरमपि गच्छन्ति एवं परलोकमाक्रमेत् । अयशः इति छेदः । नीटी.

[4]यथैव दंशमशकं यथा चाण्डपिपीलिकम् ।
सैव वृत्तिरयज्ञेषु तथा धर्मो विधीयते ॥

यथा दंशाद्या गवादिभ्योऽपोह्यन्ते एवं राष्ट्रादयज्ञा अपि अपोह्याः । अयमेव धर्म इति भावः । नीटी.

[5]यथा ह्यकस्माद्भवति भूमौ पांसुतृणोलपम् ।
तथैवेह भवेद्धर्मः सूक्ष्मः सूक्ष्मतरोऽपि च ॥

विलोलितः शिलायां शिलया पिष्टः सूक्ष्मः सूक्ष्मतरश्च भवति, एवं धर्मोऽपि । नीटी.

अनापदि न्यायेनैव कोशसंचयः कर्तव्यः

[6]कोशस्य संचये यत्नं कुर्वीथा न्यायतः सदा ।
द्विविधस्य महाराज विपरीतं विवर्जयेः ॥

(१) भा. १२।१३४।७; भामु. १२।१३६।७ भ्यो निरा ( भ्योऽर्थमा ) मन्ये ( कृत्स्न ).

(२) भामु. १२।१३६।८.

(३) भा. १२।१३४।८; भामु. १२।१३६।८–९ पूर्वार्धे ( उद्भिज्जा जन्तवो यद्वच्छुक्लजीवा यथा यथा । ) अनिष्टतः ( अनिमित्ताद् ) प्रतायते ( प्रजायते ).

(४) भा. १२।१३४।९; भामु. १२।१३६।१० तथा ( यथा ).

(५) भा. १२।१३४।१०; भामु. १२।१३६।११ पांसुतृणोलपम् ( पांसुर्विलोलितः ) तरोऽपि च ( तरस्तथा ).

(६) भा. १५।१०।९; भामु. १५।५।३६–३७ संचये ( निचये ) द्विविध ( विविध ); रार. ३२ द्विविध ( विविध ) विवर्जयेः ( विपर्ययात् ).

[1]धर्मार्जितो महान् कोशो यस्य स्यात्पृथिवीपतेः ।
सोऽत्यल्पपरिवारोऽपि पृथिवीमधितिष्ठति ॥

धर्म्यैकरग्रहणे फलमुक्तम्– धर्मार्जित इति । राप्र. २७६

## वाल्मीकिरामायणम्

पात्रेषु कोशव्ययः कर्तव्यः

[2]आयस्ते विपुलः कच्चित्कच्चित्स्वल्पतरं व्ययः ।
अपात्रेषु न ते कच्चित्कोशो गच्छति राघव ॥
[3]देवतार्थेषु पितृषु ब्राह्मणाभ्यागतेषु च ।
योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥

अर्थप्रयोजनम्

*[4]अर्थेभ्यो हि विवृद्धेभ्यः समृद्धेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवाऽऽपगाः ॥
[5]अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥
[6]पुरुषोऽर्थपरित्यक्तः सुखकामः सुदुःखितः ।
पापमारभते कर्तुं क्रियादोषो हि जायते ॥

* अत्रोद्धृताः केचन श्लोकाः महाभारते १२।८ इत्यत्रापि समुपलभ्यन्ते ।

(१) राक. ९४; राप्र. २७६ परिवारोऽपि ( प्रवरोऽप्यत्र ).

(२) वारा. २।१०४।५५; वाराकु. २।१००।५५ स्वल्पतरं ( दल्पतरो ).

(३) वारा. २।१०४।५६; वाराकु. २।१००।५६ षु पितृषु ( च पित्रर्थे ).

(४) वारा. ६।६१।२९; वाराकु. ६।८३।३२ समृद्धे ( संवृत्ते ).

(५) वारा. ६।६१।३०; वाराकु. ६।८३।३३ विहीनस्य ( वियुक्तस्य ) मेधसः ( तेजसः ) विच्छि ( व्युच्छि ).

(६) वारा. ६।६१।३१; वाराकु. ६।८३।३४ ( सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः । पापमारभते कर्तुं ततो दोषः प्रवर्तते ॥ ).

¹यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥

²यस्यार्थाः स महाभागो
यस्यार्थाः स गुणान्वितः ।
यस्यार्थाः स च विक्रान्तो
यस्यार्थाः स च संमतः ॥

³अधनेनार्थकामेन नार्थाः शक्या उपार्जितुम् ।
येनार्थेन तु लोकोऽयं चरते धर्मकारणम् ॥
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ।
ते नार्थास्त्वयि दृश्यन्ते दुर्दिनेषु ग्रहा इव ॥

⁴धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
विशेषं नाधिगच्छामि निर्धनस्य मृतस्य च ॥

⁵चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशौ मम ।
चाण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥

⁶त्वयि प्रव्रजिते वीर पितर्युपरते तथा ।
रक्षसाऽपहृता भार्या प्राणेभ्योऽपि गरीयसी ॥

⁷अर्थस्यैते परित्यागाद्दोषाः प्रव्याहृता मया ।
राज्यमुत्सृजता वीर न तद्बुद्धं तदा त्वया ॥

(१) वारा. ६।६१।३२ ; वाराकु. ६।८३।३५.

(२) वारा. ६।६१।३३ ; वाराकु. ६।८३।३६ ( यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् । यस्यार्थाः स महाभागो यस्यार्थाः स महागुणः ॥ ).

(३) वारा. ६।६१।३४–३५ ; वाराकु. ६।८३।३८, ४० ( यस्यार्थो धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् । अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥ येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् । तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥ ).

(४) वारा. ६।६१।३६ ; रार.३२ पू.

(५) वारा. ६।६१।३७.

(६) वारा. ६।६१।३८ ; वाराकु. ६।८३।४१ ( त्वयि प्रव्राजिते वीर गुरोश्च वचने स्थिते । रक्षसाऽपहृता भार्या प्राणैः प्रियतरा तव ॥ ).

(७) वारा. ६।६१।३९ ; वाराकु. ६।८३।३७ त्यागाद्दो ( त्यागे दो ) चतुर्थचरणे ( येन बुद्धिस्त्वया कृता ).

¹धर्मः कामश्च दर्पश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते न संशयः ॥

## कौटिलीयमर्थशास्त्रम्

### करः राज्ञो भृतिः

²मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे । धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः । तेन भृता राजानः प्रजानां योगक्षेमवहाः । तेषां किल्बिषं दण्डकरा हरन्ति, योगक्षेमवहाश्च प्रजानाम् । तस्मादुञ्छषड्भागमारण्यका अपि निवपन्ति तस्यैतद्भागधेयं योऽस्मान् गोपायतीति ॥

मनुं वैवस्वतं मनुनामानं विवस्वतः सूनुम् । धान्यषड्भागं धान्यस्य षष्ठमंशम् । पण्यदशभागं पण्यादीनां वस्त्रादीनां विक्रेयद्रव्याणां दशमांशम् । हिरण्यं यथादेशप्रसिद्धम् । भागधेयं अंशम् । तेन भृताः यथोक्तभागधेयरूपभृतिग्राहिणः सन्तः प्रजानां योगक्षेमवहाः पौरजानपदानां योगक्षेमवहनरूपकर्मकराः । पौरजानपदान् दण्डकराभ्यां पीडयतीति यत् दूषणमुद्भावितं तत्र समाधिमाह — तेषामिति । तेषां दण्डकराः तत्संबन्धिनो दण्डकराः, राजभिः प्रजासु प्रयुज्यमाना दण्डाः प्रजाभ्यो गृह्यमाणाः कराश्चेत्यर्थः । प्रजानां किल्बिषं हरन्ति पापं चौर्यादिजनितमपनुदन्ति योगक्षेमवहाश्च योगक्षेमसाधकाश्च भवन्ति । तत्र दण्डानां किल्बिषहरत्वं दण्डानुभवस्य प्रायश्चित्तानुष्ठानस्थानीयत्वात् बोद्धव्यम् , योगक्षेमवहत्वं च स्वधर्मव्यतिक्रमभयोत्पादनेन सन्मार्गप्रवर्तकत्वात् । कराणां योगक्षेमवहत्वं तु जनहितेषु पूर्तादिकर्मसु विनियुज्यमानत्वात् स्पष्टमेव । तस्मादिति । तस्मात् कराणां रक्षाभृतिरूपत्वात् आरण्यका अपि ऋषयोऽपि उञ्छषड्भागं उञ्छस्य कणश आत्तस्य धान्यादेः षष्ठमंशं

(१) वारा. ६।६१।४० ; वाराकु. ६।८३।३९ धर्मः ( हर्षः ) हर्षः ( धर्मः ) श्रुतं ( शमो ) न संशयः ( नराधिप ).

(२) कौ. १।१३.

निवपन्ति वितरन्ति । किं कृत्वा ? यः अस्मान् रक्षति तस्यैतद्भागधेयमिति मत्वा । श्रीमूला.

कृषिकर्तारः कोशवृद्ध्यर्थं द्रव्येण अनुग्राह्याः

¹अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातिकौ वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते ॥

एभ्यः कृषिकर्तृभ्यः अनुग्रहपरिहारौ च, स्वस्थ-( ? स्वास्थ्य )वृद्ध्यर्थं दीयमानं द्रव्यमनुग्रहः, दौस्थ्य-परिहारेण स्वास्थ्यसिद्ध्यर्थं दीयमानं द्रव्यं परिहारः, तौ कोशवृद्धिकरौ दद्यात् आत्मकोशवर्धने यथा पर्यवस्येतां तथा दद्यात् । कोशोपघातिकौ कोशक्षयफलौ अनुग्रह-परिहारौ वर्जयेत् । कुतः ? हि यतः अल्पकोशः राजा पौरजानपदानेव ग्रसते पीडयति स्वकोशपूरणार्थम् । श्रीमूला.

कोशपण्यादिगृहनिर्माणविधिः, कोशगतद्रव्यरक्षणोपायाः

* ²संनिधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् । चतुरश्रां वापीमनुदकोपस्नेहां खानयित्वा पृथु-शिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सारदारु-पञ्जरं भूमिसमत्रितलमनेकविधानं कुट्टिमदेशस्थान-तलमेकद्वारं यन्त्रयुक्तसोपानं देवतापिधानं भूमि-गृहं कारयेत् । तस्योपर्युभयतोनिषेधं सप्रग्रीवमैष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत्प्रासादं वा । जनपदान्ते ध्रुवनिधिमापदर्थमभित्यक्तैः पुरुषैः कारयेत् । पक्वेष्टकास्तम्भं चतुःशालमेक-द्वारमनेकस्थानतलं विवृतस्तम्भापसारमुभयतः पण्यगृहं कोष्ठागारं च दीर्घबहुलशालं कक्ष्यावृत-कुड्यमन्तः कुप्यगृहम् ॥

* व्याख्यानं ' राज्ञः सहायाः ' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कौ. २।१.

(२) कौ. २।५.

तज्जातकरणाधिष्ठितः पुराणं नवं च रत्नं सारं फल्गु कुप्यं वा प्रतिगृह्णीयात् । तत्र रत्नोपधावु-त्तमो दण्डः कर्तुः कारयितुश्च, सारोपधौ मध्यमः, फल्गुकुप्योपधौ तच्च तावच्च दण्डः । रूपदर्शक-विशुद्धं हिरण्यं प्रतिगृह्णीयात् । अशुद्धं छेदयेत् । आहर्तुः पूर्वः साहसदण्डः । शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात् । विपर्यये मूल्यद्विगुणो दण्डः ॥

कोशाधिष्ठितस्य कोशावच्छेदे घातः । तद्वैया-वृत्त्यकाराणामर्धदण्डः । परिभाषणमविज्ञाते । चोराणामभिप्रधर्षणे चित्रो घातः । तस्मादाप्त-पुरुषाधिष्ठितः संनिधाता निचयाननुतिष्ठेत् ॥

कोशस्य प्रयोजनं वृद्धिक्षयहेतवश्च

¹कोशपूर्वाः सर्वारम्भाः । तस्मात्पूर्वं कोशम-वेक्षेत । प्रचारसमृद्धिश्चरित्रानुग्रहश्चोरग्रहो युक्त-प्रतिषेधः सस्यसंपत्पण्यबाहुल्यमुपसर्गप्रमोक्षः परि-हारक्षयो हिरण्योपायनमिति कोशवृद्धिः । प्रति-बन्धः प्रयोगो व्यवहारोऽवस्तारः परिहापणमुप-भोगः परिवर्तनमपहारश्चेति कोशक्षयः ॥

²आकारप्रभवः कोशः कोशाद्दण्डः प्रजायते ।
पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा ॥

क्षीणकोशेन राज्ञा अनुष्ठेया विशिष्टोपाया धर्म्या अधर्म्याश्च

³कोशमकोशः प्रत्युत्पन्नार्थकृच्छ्रः संगृह्णीयात् ॥

तं अकोशः अल्पकोशः प्रत्युत्पन्नार्थकृच्छ्रः प्रत्युत्पन्नं अतर्कितोपनतं अर्थकृच्छ्रं अर्थचिकित्सनीयः क्लेशः यस्य स तथाभूतः संगृह्णीयात् अर्थसंग्रहणेन वर्धयेत् । श्रीमूला.

जनपदं महान्तमल्पप्रमाणं वा देवमातृकं प्रभूत-धान्यं धान्यस्यांशं तृतीयं चतुर्थं वा याचेत, यथासारं मध्यमवरं वा ॥

(१) कौ. २।८.

(२) कौ. २।१२.

(३) कौ. ५।२.

जनपदं लक्षणया जानपदान् देवमातृकं वृष्ट्यम्बुसंवर्धितसस्यजीवनम्, अदेवमातृकमिति पदच्छेदे तद्भिन्नं सदाजलसमृद्धनदीसरःसंवर्धितसस्यजीवनम्, प्रभूतधान्यं समृद्धनिष्पन्नधान्यं याचेत याचित्वा गृह्णीयात्, न तु प्रसह्य गृह्णीयात्। यथासारं तत्तद्धान्यपरिमाणानुसारेण मध्यं अवरं वा जनपदम्। श्रीमूला.

**दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मोपकारिणं प्रत्यन्तमल्पप्रमाणं वा न याचेत ॥**

अयाच्यांशानाह— दुर्गसेत्वित्यादि। दुर्गकर्मसेतुकर्मादिभिः सप्तभिरुपकारिणं सप्तप्रकारं न याचेत, अर्थात् कर्मविघ्नभयात्। प्रत्यन्तं विषयसीमावासिनं न याचेत, विषयानन्तरवासिशत्रुपक्षप्रवेशभयात्। अल्पप्रमाणं अल्पधनप्रमाणं न याचेत। श्रीमूला.

**धान्यपशुहिरण्यादि निविशमानाय दद्यात्। चतुर्थमंशं धान्यानां बीजभक्तशुद्धं च हिरण्येन क्रीणीयात् ॥**

अर्थकृच्छ्रावस्थायामपि राज्ञा नवकुलनिवेशकविषये कर्तव्यमाह— धान्यपशुहिरण्यादीति। धान्यं पशुं हिरण्यमित्येवमादिकं कृषिसाधनं निविशमानाय नवं कुलं स्थापयते कृषकाय दद्यात्। धान्यानां तत्कृषिनिष्पन्नानां चतुर्थमंशं हिरण्येन क्रीणीयात् निविशमानसकाशात् क्रयेणाधिगच्छेत्, न तु सामान्यजानपदादिव बलित्वेन गृह्णीयात्। बीजभक्तशुद्धं च बीजभोजनार्थोपयोक्तव्यावशिष्टं च धान्यं हिरण्येन क्रीणीयात्। श्रीमूला.

**अरण्यजातं श्रोत्रियस्वं च परिहरेत्। तदप्यनुग्रहेण क्रीणीयात् ॥**

वनोत्पन्नं धान्यं वरकादि श्रोत्रियस्वं च छान्दसव्रीह्यादिकं च परिहरेत्, न तु विभजेत्। तदपि धान्यं अनुग्रहेण बीजभक्तार्थापेक्षितपरिहारेण क्रीणीयात्। श्रीमूला.

**तस्याकरणे वा समाहर्तृपुरुषा ग्रीष्मे कर्षकाणामुद्वापं कारयेयुः। प्रमादावस्कन्नस्यात्ययं द्विगुणमुदाहरन्तो बीजकाले बीजलेख्यं कुर्युः। निष्पन्ने हरितपक्कादानं वारयेयुरन्यत्र शाककटभङ्गमुष्टिभ्यां देवपितृपूजादानार्थं गवार्थं वा। भिक्षुकग्रामभृतकार्थं च राशिमूलं परिहरेयुः ॥**

श्रोत्रियेण कृष्यकरणे। 'आकारणे' इति पाठे श्रोत्रियेणाऽऽह्वाने, अभ्यनुज्ञाने कृते इत्यर्थः। समाहर्तृपुरुषाः ग्रीष्मे कर्षकाणां उद्वापं उद्वपनकर्म कारयेयुः। प्रमादावस्कन्नस्य कर्षकानवधानविनष्टस्य द्विगुणं अत्ययं दण्डं उदाहरन्तः संविल्लेख्ये कथयन्तः बीजकाले बीजावापकाले बीजलेख्यं बीजसंबद्धं लेख्यं कुर्युः। निष्पन्ने फलिते बीजे हरितपक्कादानं आमस्य पक्वस्य च फलस्य ग्रहणं वारयेयुः, अर्थात् कर्षकाणाम्। तत्रापवादः— अन्यत्र शाककटभङ्गमुष्टिभ्यामित्यादि। शाकमुष्टिः हरितमुष्टिः। कटभङ्गमुष्टिः हस्तच्छिन्नधान्यमुष्टिः। देवपितृपूजादाननिमित्ते गोनिमित्ते च यच्छाकमुष्टिग्रहणं यच्च कटभङ्गमुष्टिग्रहणं तदुभयमपहाय। भिक्षुकग्रामभृतकार्थे चेति। भिक्षुकार्थे ग्रामभृतकार्थे च राशिमूलं राश्यधस्तलगतं धूलिधान्यं परिहरेयुः प्रकल्पयेयुः। श्रीमूला.

**स्वसस्यापहारिणः प्रतिपातोऽष्टगुणः। परसस्यापहारिणः पञ्चाशद्गुणः सीतात्ययः स्ववर्गस्य, बाह्यस्य तु वधः ॥**

स्वकृष्यमाणक्षेत्रसस्यहर्तुः प्रतिपातः दण्डः अष्टगुणः अपहृतसस्यमूल्यादष्टावृत्तिः, कार्य इति शेषः। परसस्यापहारिणः अनन्तरक्षेत्रगतसस्यहर्तुः पञ्चाशद्गुणः सीतात्ययः क्षेत्रसस्यापहारनिमित्तो दण्डः स्ववर्गस्य स्वग्रामस्थस्य सतः। बाह्यस्य तु ग्रामान्तरवासिनः पुनः परसस्यापहारिणः वधः। श्रीमूला.

**चतुर्थमंशं धान्यानां षष्ठं वन्यानां तूललाक्षाक्षौमवल्ककार्पासरौमकौशेयकौषधगन्धपुष्पफलशाकपण्यानां काष्ठवेणुमांसवल्लूराणां च गृह्णीयुः। दन्ताजिनस्यार्धम्। अनिसृष्टं विक्रीणानस्य पूर्वः साहसदण्डः ॥**

धान्यानां अनूननिष्पन्नानां चतुर्थमंशं गृह्णीयुः। षष्ठं अंशं वन्यानां वनभवधान्यानां तूलादीनां द्वादशानां

काष्ठादीनां चतुर्णां च गृह्णीयुः। तत्र शाकं दशविधमुक्तचरम्। वल्लूरं शुष्कमांसम्। शेषं प्रसिद्धम्। दन्ताजिनस्य गजदन्तस्य गवादित्वचश्च अर्धं गृह्णीयुः। अनिसृष्टं स्वच्छन्दविनियोगानर्हम्, राजभोगमित्यर्थः, विक्रीणानस्य पूर्वः साहसदण्डः। श्रीमूला.

इति कर्षकेषु प्रणयः॥

अनेन प्रकारेण कर्षकविषया प्रार्थना व्याख्याता। श्रीमूला.

**सुवर्णरजतवज्रमणिमुक्ताप्रवालाश्वहस्तिपण्याः पञ्चाशत्कराः। सूत्रवस्त्रताम्रवृत्तकंसगन्धभैषज्यशीधुपण्याश्चत्वारिंशत्कराः। धान्यरसलोहपण्याः शकटव्यवहारिणश्च त्रिंशत्कराः। काचव्यवहारिणो महाकारवश्च विंशतिकराः। क्षुद्रकारवो बन्धकीपोषकाश्च दशकराः। काष्ठवेणुपाषाणमृद्भाण्डपक्वान्नहरितपण्याः पञ्चकराः। कुशीलवा रूपाजीवाश्च वेतनार्धं दद्युः। हिरण्यकरमकर्मण्यानाहारयेयुः। न चैषां कंचिदपराधं परिहरेयुः। ते ह्यपरगृहीतमभिनीय विक्रीणीरन्॥**

सुवर्णरजताद्यष्टपण्याः पञ्चाशत्कराः पञ्चाशद्भागकराः। सूत्रवस्त्रताम्राद्यष्टकपण्याः चत्वारिंशत्कराः चत्वारिंशद्भागकराः। धान्यरसलोहपण्या इत्यादि। व्रीहिशाल्यादि धान्यं तैलघृतादिं रसं अयस्ताम्रादिकं लोहं च शकटवाह्यं कृत्वा क्रयविक्रयानुष्ठानं कुर्वन्तः त्रिंशद्भागकराः। काचव्यवहारिणः विजातिमणिव्यवहरणवृत्तयः महाकारवश्च सुवर्णकारुमहानौकारुप्रभृतयश्च विंशतिकराः विंशतिभागकराः। क्षुद्रकारवः तक्षायस्काररजकादयः बन्धकीपोषकाश्च, वेश्यातुल्याः कुलस्त्रियः बन्धक्यः, तत्पोषकाश्च दशकराः स्वार्जितदशभागकराः। काष्ठेत्यादि। काष्ठादिषट्कपण्याः पञ्चकराः। कुशीलवाः नटनर्तकादयः रूपाजीवाश्च वेश्याश्च वेतनार्धं स्वार्जितस्यार्धं दद्युः। हिरण्येत्यादि। अकर्मण्यान् वाणिज्यादिकर्मसु अव्यापृतान् वणिगादीन् हिरण्यकरं एकवराटकलक्षणं करं प्रातिशीर्षिकं आहारयेयुः दापयेयुः। न चैषां कंचिदपराधं परिहरेयुरिति। वणिक्तक्षादीनां अव्यापारलक्षणमपराधं नैवोपेक्षेरन्। स्वकर्मसु अव्यापारो नाम नोपेक्षणीयोऽर्थः, किंतु तमपराधपक्षे निक्षिप्य तद्दण्डत्वबुद्ध्या वा हिरण्यकरस्तेभ्यो ग्राह्य एवेत्यभिप्रायः। न च तेषामव्यापारः प्रत्यययोग्य इत्याह– ते ह्यपरगृहीतमभिनीय विक्रीणीरन्निति। ते हि स्वीयमेव पण्यं अस्वीयमित्यपदिश्य विक्रीणीरन्। श्रीमूला.

इति व्यवहारिषु प्रणयः॥

एवंप्रकारा क्रयविक्रयानुष्ठायिविषया करप्रार्थना। श्रीमूला.

**कुक्कुटसूकरमर्धं दद्यात्। क्षुद्रपशवः षड्भागम्। गोमहिषाश्वतरखरोष्ट्राश्च दशभागम्। बन्धकीपोषका राजप्रेष्याभिः परमरूपयौवनाभिः कोशं संहरेयुः॥**

अथ तिर्यग्योनिपोषकेषु प्रणयमाह– कुक्कुटसूकरमिति। कुक्कुटसूकरशब्दौ तत्पोषकोपलक्षकौ। कुक्कुटपोषकः सूकरपोषकश्च अर्धं स्ववर्धितानां कुक्कुटसूकराणां अर्धभागं दद्यात्। क्षुद्रपशवः अजाविप्रभृतिपोषकाः षड्भागं अजाव्यादीनां षष्ठं भागं दद्युः। गोमहिषाश्वतरखरोष्ट्राश्च गोमहिषवेसरगर्दभक्रमेलकपोषकाश्च दशभागं दद्युः। बन्धकीपोषकाः राजप्रेष्याभिः परमरूपयौवनाभिः स्वपोषिताभिर्द्वारभूताभिः कोशं संहरेयुः संचिनुयुः। श्रीमूला.

इति योनिपोषकेषु प्रणयः॥

व्याख्यात इति शेषः। श्रीमूला.

**सकृदेव न द्विः प्रयोज्यः। तस्याकरणे वा समाहर्ता कार्यमपदिश्य पौरजानपदान् भिक्षेत। योगपुरुषाश्चात्र पूर्वमतिमात्रं दद्युः। एतेन प्रदेशेन राजा पौरजानपदान् भिक्षेत। कापटिकाश्चैनानल्पं प्रयच्छतः कुत्सयेयुः। सारतो वा हिरण्यमाढ्यान् याचेत। यथोपकारं वा स्ववशा वा यदुपहरेयुः। स्थानच्छत्रवेष्टनविभूषाश्चैषां हिरण्येन प्रयच्छेत्। पाषण्डसंघद्रव्यमश्रोत्रियभोग्यं देवद्रव्यं वा कृत्यकराः प्रेतस्य दग्धगृहस्य वा हस्ते न्यस्तमित्युपहरेयुः॥**

स चायं करप्रणयः सकृदेव प्रयोक्तव्यः, न तु द्विः, प्रजाकोपभयादित्याह– सकृदेव न द्विः प्रयोज्य इति। तस्याकरणे वेति। तथा प्रणयस्य करणायोगपक्षे समाहर्ता विषयबलाधिकृतः कार्यमपदिश्य अमुककार्यं साधनीय-मस्तीति व्यपदिश्य पौरजानपदान् भिक्षेत याचेत। योगपुरुषाश्च कृतव्याजसंकेताः समाहर्तृपुरुषाश्च अत्र समाहर्तृव्यपदिष्टे कार्ये विषये पूर्वं अतिमात्रं अमितं धनं दद्युः। एतेन प्रदेशेन प्रकारेण राजा पौरजानपदान् भिक्षेत। कापटिकाश्च गूढपुरुषभेदाः एनान् पौरजान-पदान् अल्पं धनं प्रयच्छतः कुत्सयेयुः निन्दयेयुः। सारतो वा तत्तद्धनबलानुसारेण वा हिरण्यं धनं आढ्यान् धनिनः याचेत। यथोपकारं वा उपकारानुगुण्येन वा स्ववशा वा यत् उपहरेयुः, तत् गृह्णीयादिति वाक्यशेषः। स्थानच्छत्र-वेष्टनविभूषाश्चेति। स्थानं अध्यक्षपदम्, छत्रं श्वेतातपत्रम्, वेष्टनं उष्णीषम्, विभूषा कनकवलयादिः, इत्येताश्च बहुमानचिह्नभूताः एषां आढ्यानां हिरण्येन धनग्रहणेन प्रयच्छेत्। पाषण्डसंघद्रव्यमिति। पाषण्डद्रव्यं संघद्रव्यं च अश्रोत्रियभोग्यं श्रोत्रियभोग्यव्यतिरिक्तं देवद्रव्यं वा रक्षणीयं कृत्यकराः प्रेतस्य दग्धगृहस्य वा हस्ते न्यस्त-मिति यस्य हस्ते रक्षणाय निक्षिप्तं स प्रमीतः अथवा तस्य गृहं दग्धमिति, वदन्त इति शेषः, उपहरेयुः यत्नादुपलभ्य राजान्तिकेऽर्पयेयुः। श्रीमूला.

**देवताध्यक्षो दुर्गराष्ट्रदेवतानां यथास्वमेकस्थं कोशं कुर्यात्। तथैव चाऽऽहरेत्। दैवतचैत्यं सिद्धपुण्यस्थानभौमवादिकं वा रात्रावुत्थाप्य यात्रा-समाजाभ्यामाजीवेत्। चैत्योपवनवृक्षेण वा देव-ताभिगमनमनार्तवपुष्पफलयुक्तेन ख्यापयेत्। मनुष्यकरं वा वृक्षे रक्षोभयं प्ररूपयित्वा सिद्ध-व्यञ्जनाः पौरजानपदानां हिरण्येन प्रतिकुर्युः। सुरुङ्गायुक्ते वा कूपे नागमनियतशिरस्कं हिरण्योप-हारेण दर्शयेन्नागप्रतिमायामन्तश्छिद्रायाम्। चैत्य-च्छिद्रे वल्मीकच्छिद्रे वा सर्पदर्शन आहारेण प्रति-बद्धसंज्ञं कृत्वा श्रद्दधानानादर्शयेत्। अश्रद्दधाना-नामाचमनप्रोक्षणेषु रसमवपाय्य देवताभिशापं ब्रूयात्। अभित्यक्तं वा दंशयित्वा। योगदर्शन-प्रतीकारेण वा कोशाभिसंहरणं कुर्यात्॥**

देवताध्यक्ष इति। स वा दुर्गराष्ट्रदेवतानां दुर्गगतदेव-तानां राष्ट्रगतदेवतानां च कोशं धनं यथास्वं यथायथं एकस्थं परचक्रभयाद्यपदेशेनैकस्थानगतं कुर्यात्। तथैव चाऽऽहरेत् राजान्तिकेऽर्पयेत्। दैवतचैत्यं दैवतवेदिं सिद्धपुण्यस्थानभौमवादिकं वा सिद्धे प्रतीते पुण्यस्थाने भौमवादिकं भूमिमुद्भिद्याऽऽविर्भूतं स्वयंभूलिङ्गमिति वादेन युक्तं रात्रौ विजने उत्थाप्य रचयित्वा यात्रासमा-जाभ्यामाजीवेत्। तत्रोत्सवकरणेन जनमेलकप्रवर्तनेन च धनं दैवार्थमुपहारयन्नपहरेत्। चैत्यादिषु देवसांनिध्य-विश्वासार्थमद्भुतकल्पनमाह– चैत्योपवनवृक्षेण वेत्यादि। चैत्यारामगते वृक्षविशेषे कस्मिंश्चित् पुष्पं फलं च प्रयत्नादनृतावुत्पादितं दर्शयित्वा देवतासांनिध्यमहिम-कृतमिदमिति प्रख्यापयेत्। मनुष्यकरं वा वृक्षे रक्षोभय-मित्यादि। सिद्धव्यञ्जनाः रात्रौ पितृवनादिगते वृक्षे रक्षोवेषेण स्थित्वा 'मह्यं मनुष्य एकैको दिने दिने करत्वेन दातव्यः, अन्यथा सर्वान् युगपत् खादेयम्' इत्येवं स्वयं श्रावयित्वा रक्षसा श्रावितमिति प्रख्याप्य निर्दिष्टमनुष्यबलिकस्य तथाविधस्य रक्षोभयस्य प्रती-कारार्थं पौरजानपदेभ्यः प्रभूतं हिरण्यमुत्थाप्य राज्ञ उपहरेयुः। सुरुङ्गायुक्ते वेति। भूविवरयुक्ते कूपे नागं अनियतशिरस्कं त्रिशीर्षपञ्चशीर्षादिं सर्पं कृत्रिमं हिरण्योपहारेण अद्भुतनागदर्शनार्थं द्रष्टृदेयतया स्वकल्पि-तस्य हिरण्यकस्य ग्रहणेन दर्शयेत् दिदृक्षुभ्यः। कुत्र दर्शयेत्? नागप्रतिमायां अन्तश्छिद्रायां सत्यसर्पावस्थान-योग्यान्तःसुषिरवत्याम्। चैत्यच्छिद्रे वल्मीकच्छिद्रे वा देवचैत्यभित्त्यादिगते रन्ध्रे तद्गतवल्मीकविवरे वा सर्पदर्शने यदृच्छोपजाते सति तं सर्पं आहारेण, आहारः आहरणं आयत्तीकरणम्, तत्साधनभूतेन मन्त्रेणौषधेन वा प्रतिबद्धसंज्ञं निरुद्धगतिं कृत्वा श्रद्दधानान् आदर्शयेत्, अर्थात् देवतासांनिध्यप्रभावकृतमिदमगमनं सर्पस्येति ब्रुवन्। अश्रद्दधानानां आचमनप्रोक्षणेषु प्राशनस्नानेषु रसं अवपाय्य तन्मोहोत्पादनपर्याप्तमात्रं विषं उपयोज्य

देवताभिशापं ब्रूयात् नागदेवताकोपकृतं तन्मोहनं ख्यापयेत् । अभित्यक्तं वेति । वधयोग्यं देवनिन्दकं वा दंशयित्वा रात्रौ सर्पेण दष्टं कारयित्वा देवताभिशापं ब्रूयादिति संबध्यते । योगदर्शनप्रतीकारेण वा औपनिषदिकोक्तविषचिकित्सारम्भेण वा कोशाभिसंहरणं कुर्यात् । दष्टपक्षात् धनं गृहीत्वेत्यार्थम् । श्रीमूला.

**वैदेहकव्यञ्जनो वा प्रभूतपण्यान्तेवासी व्यवहरेत । स यदा पण्यमूल्ये निक्षेपप्रयोगैरुपचितः स्यात्तदैनं रात्रौ मोषयेत् ॥**

वैदेहकव्यञ्जनो वेति । स वा प्रभूतपण्यान्तेवासी प्रचुरपण्यः प्रचुरान्तेवासी च व्यवहरेत क्रयविक्रयानुष्ठानं कुर्यात् । स यदा पण्यमूल्ये वाणिज्यधने निक्षेपप्रयोगैः आढ्यविस्रम्भादन्यकृतैर्धननिक्षेपैर्वृद्ध्यर्थकृणार्पणैश्च उपचितः प्रवृद्धः स्यात् तदा एनं वैदेहकव्यञ्जनं रात्रौ मोषयेत् चोरमुषितं कुर्यात्, मोषणच्छलेन राजा तदीयं धनमपहरेदित्यर्थः । श्रीमूला.

**एतेन रूपदर्शकः सुवर्णकारश्च व्याख्यातौ ॥**

एवं रूपदर्शने रूपदर्शकेन सुवर्णपरीक्षणादौ सुवर्णकारेण च छलं कारयित्वा धनाभिसंहरणं कुर्यादित्याह—एतेन रूपदर्शक इत्यादि । श्रीमूला.

**वैदेहकव्यञ्जनो वा प्रख्यातव्यवहारः प्रवहणनिमित्तं याचितकमवक्रीतकं वा रूप्यसुवर्णभाण्डमनेकं गृह्णीयात् । समाजे वा सर्वपण्यसंदोहेन प्रभूतं हिरण्यसुवर्णमृणं गृह्णीयात्, प्रतिभाण्डमूल्यं च । तदुभयं रात्रौ मोषयेत् ॥**

वैदेहकव्यञ्जनो वा प्रख्यातव्यवहार इति । स वा प्रतीतक्रयविक्रयानुष्ठानः प्रवहणनिमित्तं तुष्टिभोजननिमित्तं याचितकं अवक्रीतकं वा रूप्यसुवर्णभाण्डं रूप्यभाण्डं सुवर्णभाण्डं च अनेकं गृह्णीयात् । समाजे वा जनसमुदायसंनिधाने वा सर्वपण्यसंदोहेन सकलपण्यभाण्डसमूहप्रदर्शनेन प्रभूतं हिरण्यसुवर्णं ऋणं गृह्णीयात्, अर्थात् पण्यसंदोहमिमं विक्रीय प्रत्यर्पयिष्यामीत्युक्त्वा । प्रतिभाण्डमूल्यं च गृह्णीयात् प्रतिपण्यस्य श्वोऽर्पयिष्यमाणस्य मूल्यं च प्रतिपण्यक्रेतृभ्यो गृह्णीयात् । तदुभयं गृहीतं द्वयं रात्रौ मोषयेत् मोषणच्छलेनापहरेत् । श्रीमूला.

**साध्वीव्यञ्जनाभिः स्त्रीभिर्दूष्यानुन्मादयित्वा तासामेव वेश्मस्वभिगृह्य सर्वस्वान्याहरेयुः ॥**

साध्वीव्यञ्जनाभिः स्त्रीभिः दूष्यान् राजद्वेषित्वेन हेतुना दूषणार्हान् जनान् उन्मादयित्वा रञ्जयित्वा तासामेव वेश्मसु गृहेषु अभिगृह्य सर्वस्वानि आहरेयुः । श्रीमूला.

**दूष्यकुल्यानां वा विवादे प्रत्युत्पन्ने रसदाः प्रणिहिता रसं दद्युः । तेन दोषेणेतरे पर्यादातव्याः ॥**

दूष्यकुल्यानां वेति । तेषां विवादे दायप्रभृतिविषये प्रत्युत्पन्ने रसदाः प्रणिहिताः सूदादिवेषेण प्रयुक्ताः रसं दद्युः विवदमानेष्वन्यतमाय । तेन दोषेण रसदानदोषारोपेण इतरे रसमारितादन्ये दूष्याः पर्यादातव्याः सर्वस्वं हारयितव्याः । श्रीमूला.

**दूष्यमभित्यक्तो वा श्रद्धेयापदेशं पण्यं हिरण्यनिक्षेपमृणप्रयोगं दायं वा याचेत । दासशब्देन वा दूष्यमालम्बेत । भार्यामस्य स्नुषां दुहितरं वा दासीशब्देन भार्याशब्देन वा । तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्— हतोऽयमित्थं कामुक इति । तेन दोषेणेतरे पर्यादातव्याः ॥**

अभित्यक्तो वा वध्यो वा दूष्यं श्रद्धेयापदेशं लोकप्रत्यययोग्यसंबन्धव्यपदेशं पण्यं हिरण्यनिक्षेपं ऋणप्रयोगं दायं वा याचेत । दासशब्देन वा दूष्यं आलम्बेत मम दास इति वा दूष्यं व्यपदिशेत् । भार्या अस्य दूष्यस्य, स्नुषां दुहितरं वा दासीशब्देन भार्याशब्देन वा आलम्बेत । तं यथोक्तमभित्यक्तं दूष्यगृहप्रतिद्वारि रात्रौ उपशयानं अन्यत्र वा वसन्तं तीक्ष्णः हत्वा ब्रूयात् प्रख्याप्यापसरेत् । किमिति ? हतोऽयं इत्थं कामुक इति । तेन दोषेण तीक्ष्णकृतेनाभित्यक्तवधदोषेणारोपितेनेत्यर्थः, इतरे दूष्याः पर्यादातव्याः सर्वस्वं हारयितव्याः । श्रीमूला.

**सिद्धव्यञ्जनो वा दूष्यं जम्भकविद्याभिः प्रलोभयित्वा ब्रूयात्— अक्षयं हिरण्यं राजद्वारिकं स्त्रीहृदयमरिव्याधिकरमायुष्यं पुत्रीयं वा कर्म जानामीति । प्रतिपन्नं चैत्यस्थाने रात्रौ प्रभूतसुरामांसगन्धमुप-**

**हारं कारयेत्, एकरूपं चात्र हिरण्यं पूर्वनिखातम्। प्रेताङ्गं प्रेतशिशुर्वा यत्र निहितः स्यात्ततो हिरण्यमस्य दर्शयेदत्यल्पमिति च ब्रूयात्। 'प्रभूतहिरण्यहेतोः पुनरुपहारः कर्तव्य इति, स्वयमेवैतेन हिरण्येन श्वोभूते प्रभूतमौपहारिकं क्रीणीहि' इति। तेन हिरण्येनौपहारिकक्रये गृह्येत ॥**

सिद्धव्यञ्जनो वेति। स वा दूष्यं जंभकविद्याभिः मायाविद्याभिः प्रलोभयित्वा ब्रूयात्। किमिति ? अक्षयं हिरण्यं निधिदर्शनम्, राजद्वारिकं राजवशीकरणम्, स्त्रीहृदयं स्त्रीहृदयाकर्षणम्, अरिव्याधिकरम्, आयुष्यं आयुष्करम्, पुत्रीयं वा पुत्रोत्पत्तिनिमित्तं वा कर्म जानामि इति। प्रतिपन्नं तद्वाक्यविश्वस्तं दूष्यं चैत्यस्थाने श्मशानादौ रात्रौ प्रभूतसुरामांसगन्धं उपहारं देवताबलिदानं कारयेत्। एकरूपं च अत्र चैत्यस्थाने हिरण्यं पूर्वनिखातं पूर्वं निखाय निवेशितं कारयेत्। प्रेताङ्गं प्रेतशिशुर्वा यत्र निहितः स्थापितः स्यात् ततः तस्मिन् प्रदेशे हिरण्यं अस्य दूष्यस्य दर्शयेत्, अत्यल्पमिति च ब्रूयात् अत्यल्पोपहारेणात्यल्पं हिरण्यमेकरूपात्मकं लब्धमिति च कथयेत्। प्रभूतहिरण्यहेतोः पुनरुपहारः भूयः प्रभूतबलिः कर्तव्यः इति अतः कारणात् स्वयं एतेन हिरण्येन श्वोभूते प्रभूतं औपहारिकं उपहारार्थं द्रव्यं क्रीणीहि इति ब्रूयात्। तेन हिरण्येन औपहारिकक्रये, क्रियमाणे इति शेषः, गृह्येत, अर्थात् दूष्यो राजपुरुषैः। तेन दोषेण सर्वस्वहरणादिकं तु समानं पूर्वेण। श्रीमूला.

**मातृव्यञ्जनया वा 'पुत्रो मे त्वया हतः' इत्यवरूपितः स्यात्। संसिद्धमेवास्य रात्रियागे वनयागे वनक्रीडायां वा प्रवृत्तायां तीक्ष्णा विशस्याभित्यक्तमतिनयेयुः ॥**

मातृवेषया वा 'पुत्रो मे त्वया हतः' इति अवरूपितः मिथ्यादर्शितः स्यात्, अर्थात् दूष्यः। अपराधलिङ्गार्थमाह— संसिद्धमेवेति। अस्य दूष्यस्य रात्रियागे वनयागे वनक्रीडायां वा प्रवृत्तायां तीक्ष्णाः संसिद्धमेव अभित्यक्तं मरणसज्जितमेव वध्यं विशस्य मारयित्वा अतिनयेयुः दूष्यप्रवर्तितरात्रियागादिप्रदेशे निदध्युः। तेन दोषेण दूष्यमारणादिकमार्थम्। एवमुत्तरत्रापि। श्रीमूला.

**दूष्यस्य वा भृतकव्यञ्जनो वेतनहिरण्ये कूटरूपं प्रक्षिप्य प्ररूपयेत् ॥**

दूष्यस्य वेति। तस्य वा भृतकव्यञ्जनः वेतनहिरण्ये कूटरूपं कपटपणादिकं प्रक्षिप्य स्वयं क्षिप्त्वा प्ररूपयेत् स्वामिनं कूटरूपप्रक्षेपारं निरूपयेत्। श्रीमूला.

**कर्मकारव्यञ्जनो वा गृहे कर्म कुर्वाणः स्तेनकूटरूपकारकोपकरणमपनिदध्यात्। चिकित्सकव्यञ्जनो वा गरमगरापदेशेन ॥**

कर्मकारवेषो वा गृहे कर्म कुर्वाणः स्तेनकूटरूपकारकोपकरणं चोरकपटनाणकनिर्मापकोपकरणं अपनिदध्यात् प्रच्छन्नं निदध्यात्, अर्थात् दूष्यस्य गृहे। उपनिदध्यादित्यपि पाठः। चिकित्सकव्यञ्जनो वेति। भिषग्वेषो वा गरं विषं अगरापदेशेन विषहरौषधव्याजेन उपनिदध्यात्, अर्थात् दूष्यस्य हस्ते। गदमगदापदेशेनेति पाठे रोगहेतुमौषधापदेशेनेत्यर्थः। श्रीमूला.

**प्रत्यासन्नो वा दूष्यस्य सत्री प्रणिहितमभिषेकभाण्डममित्रशासनं च कापटिकमुखेनाऽऽचक्षीत कारणं च ब्रूयात् ॥**

दूष्यस्य बन्धुर्वा सत्री गूढपुरुषविशेषः प्रणिहितं दूष्यस्य गृहे अपनिहितं अभिषेकभाण्डं अमित्रशासनं च शत्रुलेख्यं च कापटिकमुखेन कापटिकाख्यगूढपुरुषविशेषमुखेन आचक्षीत कथयेत्, कारणं च ब्रूयात्— 'हत्वा राजानं तच्छत्रुं राज्येऽभिषेक्तुमयं यतते' इत्येवंरूपम्। श्रीमूला.

**एवं दूष्येष्वधार्मिकेषु च वर्तेत। नेतरेषु ॥**

त एते कोशाभिसंहरणोपायाः दूष्येषु अधार्मिकेषु च प्रयोक्तव्याः, न तु धार्मिकेष्वित्याह— एवं दूष्येष्वित्यादि। श्रीमूला.

पक्वं पक्वमिवाऽऽरामात्फलं राज्यादवाप्नुयात् ।
आत्मच्छेद्भयादामं वर्जयेत्कोपकारकम् ॥

अध्यायान्ते श्लोकमाह– पक्वमिति । आरामात् पक्वं परिणतं फलमिव राज्यात् पक्वं फलं दोषपरिपाकयुक्तं अर्थात् दुष्टजनस्वामिकं धनं अवाप्नुयात् । आत्मच्छेद-भयात् आमं अपक्वं अदोषयुक्तं धनं वर्जयेत् । कुतः ? कोपकारकं यस्मात् तादृशं धनं प्रकृतिकोपहेतुः । श्रीमूला.

कोशगुणसंपत्

[1]धर्माधिगतः पूर्वैः स्वयं वा हेमरूप्यप्रायश्चित्र-स्थूलरत्नहिरण्यो दीर्घामप्यापदमनायतिं सहेतेति कोशसंपत् ॥

कोशसंपदमाह– धर्माधिगत इति । न्यायार्जितः धान्यषड्भागपण्यदशभागादिभिः शास्त्रविहितैरुपचित इति यावत् । कैः ? पूर्वैः स्वयं वा पूर्वभूपतिभिः आत्मना वा । हेमरूप्यप्रायः सुवर्णरजतप्रचुरः, चित्रस्थूलरत्न-हिरण्यः बहुविधानि बृहन्ति च रत्नानि हिरण्यानि च नाणकाश्च यस्मिन् सः, दीर्घामप्यापदं अनायतिं चिरकालानुवृत्तमपि दुर्भिक्षं धनानागमं च सहेत, अर्थात् कोशः । इति कोशसंपत् । श्रीमूला.

## चाणक्यसूत्राणि

अर्थप्रयोजनम्

[2]अर्थमूलौ धर्मकामौ ॥
अर्थमूलं कार्यम् ॥
यदल्पप्रयत्नात् कार्यसिद्धिर्भवति ॥
[3]अमरवदर्थजातमार्जयेत् ॥
अर्थवान् सर्वलोकस्य बहुमतः ॥
महेन्द्रमप्यर्थहीनं न बहु मन्यते लोकः ॥
दारिद्र्यं खलु पुरुषस्य जीवितं मरणम् ॥
विरूपोऽर्थवान् सुरूपः ॥
अदातारमप्यर्थवन्तमर्थिनो न त्यजन्ति ॥
[2]अधनस्य बुद्धिर्न विद्यते ॥
हितमप्यधनस्य वाक्यं न गृह्यते ॥
अधनः स्वभार्ययाऽप्यवमन्यते ॥
पुष्पहीनं सहकारमपि नोपासते भ्रमराः ॥
[3]नास्ति धनवतां सुकर्मसु श्रमः ॥

## चाणक्यराजनीतिशास्त्रम्

भ्रमरकृतमधुदोहन्यायेन कोशकरणम्

[3]यथा क्रमेण गृह्णाति पुष्पेभ्यो मधु षट्पदः ।
तथा वित्तमुपादाय राजा कुर्वीत संचयम् ॥

## मनुः

सामान्यतः करः सांवत्सरिको ग्राह्यः

*[4]सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्याचाऽऽम्नायपरो लोके वर्तेत पितृवन्नृषु ॥

धनविषयाणि कर्तव्यानि

[5]अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ।
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥

(१) न क्षत्रियः संतुष्टः स्यात् ब्राह्मणवत्, किंत्व-लब्धार्जने यत्नं कुर्यात् । अर्जितं च धनं रक्षेत् । रक्षितं न वर्धयेत् । कोशसंचयं कुर्यात् । ततः पात्रेभ्यो दद्यात् । न यथायं व्ययं कुर्यात् । तदुक्तम्– ' आयादल्पतरो व्ययः ' इति । मेधा.

---

(१) कौ. ६।१.
(२) चासू. ९१–९३.
(३) चासू. २५४–२५९.

* श्लोकस्यास्य व्याख्यानसंग्रहः ' राजकर्तव्यानि ' इत्यस्मिन् प्रकरणे ( पृ. ११०८ ) द्रष्टव्यः ।

(१) चासू. २९१–२९४.
(२) चासू. ३५४.
(३) चाशा. ५।३७.
(४) मस्मृ. ७।८० ; राक. ३२ स्याच्चाऽऽम्नाय ( स्यादाश्रय ) ; पमा. ४०७ ; राप्र. १८७ राकवत्.
(५) मस्मृ. ७।९९ ; रार. ७ निक्षि ( निःक्षि ) ; पमा. ४१३ रक्षेत्प्र ( रक्षेच्च ) निक्षि ( निःक्षि ) ; राप्र. १३१ रक्षेत्प्र ( रक्षेच्च ).

(२) अर्जितं भूहिरण्यसुवर्णादि जेतुं यत्नं कुर्यात्। जितं च यत्नतो रक्षेत्। रक्षितं च वृद्धिं नयेत्। एवमस्य महाधनत्वात् स्वपरपरिभवो न भवति। वर्धितं च पात्रेभ्यो दद्यात्। तथा सति परलोकाभ्युदयोऽप्यस्य भवति। * गोरा.

(३) ननु राज्ञः परिपूर्णधनत्वात् किमित्यायोधनोद्धारं गृह्णात्यत आह— अलब्धमिति। लिप्सेत जयकरादिना। वर्धयेल्लभ्यादिना। एतदर्थमेव क्षीणवृत्तिः वणिक् रक्षितः। पात्रेषु ब्राह्मणेषु निक्षिपेत् दद्यात्। मच.

[1]एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्।
अस्य नित्यमनुष्ठानं सम्यक् कुर्यादतन्द्रितः॥

(१) पुरुषस्य येऽर्थास्तेषां प्रयोजनं चतुर्विधम्। चतस्र एताः क्रियास्तत्र प्रयोज्याः— अर्जनरक्षणवर्धनदानानि। उपकारवचनोऽर्थशब्दः। पुरुषार्थसिद्ध्यर्थमेतत् प्रयोजनम्। तस्य चतुर्विधस्य प्रसक्तस्य नित्यमनुष्ठानं कुर्यात्। मेधा.

(२) एतदर्जनरक्षणवर्धनदानात्मकं चतुःप्रकारं पुरुषकारस्य प्रयोजनं जानीयात्। अतोऽस्यानलसः सर्वदाऽनुष्ठाने यत्नं कुर्यात्। गोरा.

(३) चतुर्विधं अलब्धलाभादि। पुरुषार्थः धर्मादिः प्रयोजनं यस्य तत्तथा। † मवि.

(४) एतच्चतुःप्रकारं पुरुषार्थो यः स्वर्गादिः तत् प्रयोजनं यस्मात् एवंरूपं जानीयात्। अतोऽनलसः सन् सर्वदाऽनुष्ठानं कुर्यात्। ममु.

(५) पुरुषार्थो धर्मादिः प्रयोजनं यस्य तत् पुरुषार्थप्रयोजनं एतत् अलब्धमित्यादि चतुर्विधं विद्यात्। अस्य पुरुषार्थस्य अनुष्ठानं विधानं अतन्द्रितः सन् सम्यग्यथा स्यात्तथा कुर्यात्। भाच.

* ममु. गोरागतम्।

† मच. मविगतम्।

(१) मस्मृ. ७।१००; रार. ७ नित्यमनुष्ठानं सम्यक् (सम्यगनुष्ठानं नित्यं); राप्र. १३१ च्चतुर्विधं (च्चतुष्टयं) शेषं रारवत्.

[1]अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया।
रक्षितं वर्धयेद्वृद्ध्या वृद्धं पात्रेषु निक्षिपेत्॥

(१) अनर्जितं हस्त्यश्वरथपदात्यात्मकेन दण्डेन जेतुमिच्छेत्। जितं च शास्त्रदृष्टेन प्रत्यवेक्षणेन रक्षेत्। रक्षितं च वृद्ध्यर्थैरुपायैः स्थलपथादिभिः वर्धयेत्। वर्धितं च यदधिकं तत् परलोकार्थं पात्रेभ्यो दद्यात्। गोरा.

(२) इच्छेत् दण्डेन ग्रहीतुं शत्रुतः, वैश्यादेस्तु कुटुम्बिनः साम्नैव। मवि.

(३) वृद्धं शास्त्रीयविभागेन पात्रेभ्यो दद्यात्। * ममु.

(४) केन किं संपादयामीत्यपेक्षां पूरयति— अलब्धमित्यादि। साधनचतुष्टयं विधत्ते— अलब्धमिच्छेदिति। दण्डेनेति शुल्कादेरुपलक्षणम्। वृद्ध्या वाणिज्यादिना। दद्यात् निक्षेपयेत् उत्तरकाले प्राप्त्यै। मच.

(५) दण्डेन सैन्येन। अवेक्षया अनुसंधानेन। नन्द.

वणिक्कृषिकरादिभ्यः वार्षिकी करादानरीतिः
जलौकोवत्सभ्रमरवत्

[2]क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम्।
योगक्षेमं च संप्रेक्ष्य वणिजो दापयेत्करान्॥

(१) करग्रहणविधिः। कियता मूल्येन क्रीतमेतत्, कियच्च विक्रीयमाणं लभते, कियता च कालेन विक्रीयते, कियत्प्रतिभावेन नश्यति, अथ न? इत्येवमादिरूपक्रयविक्रयपरीक्षा। अध्वानं चिराचिरगमनप्राप्यताम्। भक्तं सक्त्वोदनादिमूल्यम्। परिव्ययः तदुपकरणं सर्पिःसूपशाकादि धनादि च। योगक्षेमं अरण्ये कान्तारे वा गच्छतो राजभयं चौरभयं निश्चौरता वा इत्यादि।

* शेषं गोरागतम्।

(१) मस्मृ. ७।१०१.

(२) मस्मृ. ७।१२७; मेधा. 'वणिजः' इत्यत्र 'वणिग्भिः' इति पाठो युक्तः इत्युक्तम्; राक. ८८; पमा. ४०४ योगक्षेमं (योगं क्षेमं); राप्र. २५९ 'वणिग्भिः' इति वा पाठः इत्युक्तम्.

एतदपेक्ष्य वणिग्भ्यः करा आदातव्याः । 'वणिग्भिर्दापयेत्करान्' इति पाठो युक्तः, गत्यादिनियमेन कर्मसंज्ञाया अभावात् । दण्डवचनो वा धातुः, तदा दण्डिवत् द्विकर्मकत्वम् । * मेधा.

(२) परिव्ययं ताम्बूलव्यञ्जनादिपरिकरार्थे व्ययम् । योगं अलब्धलाभं वणिजामायासानुरूपम् । क्षेमं रक्षणम् । एतावति देशेऽमीषामस्माभिः कृतमिति विज्ञायेत्यर्थः । करान् शुल्कम् । † मवि.

(३) कियता मूल्येन क्रीतमिदं वस्त्रलवणादिद्रव्यम्, विक्रीयमाणं चात्र कियल्लभ्यते, कियद्दूरादानीतम्, किमस्य वणिजो भक्तव्ययेन शाकसूपादिना परिव्ययेण लग्नम्, किमस्यारण्यादौ चौरादिभ्यो रक्षारूपेण क्षेमप्रतिविधानेन गतम्, कोऽस्येदानीं लाभयोगः ? इत्येतदवेक्ष्य वणिजः करान् दापयेत् । ममु.

(४) वणिक्करादानमाह– क्रयेति । करान् शुल्कानि दापयेत् । हट्टादिकृते स्वयं गृह्णीयाद्वा । $ मच.

(५) एवं धनार्जनस्याऽऽवश्यकत्वे तद्धनार्जनं राज्ञा केन प्रकारेण कर्तव्यमित्यपेक्षिते आह– क्रयेति । § राप्र. २५९

(६) भक्तं वणिग्भिः कर्मकारादिभ्यो देयम् । परितो व्ययः परिव्ययः शुल्कादिकः । ‡ नन्द.

**[१]यथा फलेन युज्येत राजा कर्ता च कर्मणाम् ।**
**तथाऽवेक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान् ॥**

(१) * एतदेवाऽऽह– कर्मणां कर्ता वाणिजकः राजा च फलेन युज्येत तथा करान् कल्पयेत् । न परिमाणनियमकारणमस्ति । यत्र महान् लाभः तत्राधिकमप्युक्तपरिमाणातिक्रमेण ग्रहीतव्यम् । ‡ मेधा.

(२) यथा राज्ञो वणिक्कर्षकादेश्च कर्मकर्तुः फलसंबन्धो भवति तथा पर्यालोच्य राजा सर्वदा राष्ट्रे करान् कल्पयेत् । गोरा.

(३) फलेन फल( ? करफल )प्राप्त्या राजा, कर्ता च कर्मणां कृष्यादीनां फलेन धान्यादिना युज्येत । लाभदर्शनाद्धि पुनः प्रवर्तते । मवि.

(४) यथा राजा अवेक्षणादिकर्मणः फलेन, यथा च कार्षिकवणिगादयः कृषिवाणिज्यादिकर्मणां फलेन संबध्यन्ते तथा निरूप्य राजा सर्वदा राष्ट्रे करान् गृह्णीयात् । ममु.

(५) † नृप इति नॄन् प्रति अनुकूलः । ¶ मच.

(६) सामान्यतः करपरिकल्पनस्य लक्षणमाह– यथेति । नन्द.

**[१]यथाऽल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः ।**
**तथाऽल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञा-**
**ऽऽब्दिकः करः ॥**

(१) क्षीणकृषेर्न्यूनः करो ग्रहीतव्य इत्येवमर्थमेतत् । वार्योकसः जलौकसः । षट्पदाः भ्रमराः । यथा ते स्वल्पमाददानाः परिपुष्टा भवन्ति तथा राज्ञा मूलच्छेदो न कर्तव्यः । मेधा.

---

* गोरा. मेधागतम् ।

† शेषं मेधागतम् । भाच. मविगतम् ।

$ शेषं ममुगतम् ।

§ शेषं ममुव्याख्यानुवादः ।

‡ शेषं मेधागतम् ।

(१) मस्मृ. ७।१२८ ; राक. ८८ तथाऽवेक्ष्य ( तथा वीक्ष्य ) ; पमा. ४०४ ; राप्र. २६०, २६४ राकवत्.

* मेधातिथ्यभिमतश्लोकक्रमस्य भेदात् 'यथाऽल्पाल्पम्०' इतिश्लोकार्थ एतच्छब्देन परामृश्यते ।

‡ राप्र. मेधागतं ममुगतं च ।

† श्लोके नृपपदेन 'नॄन् पातीति नृपः' इति व्युत्पत्तिबलात् प्रजानामनुपरोधेनैव राज्ञा कराः परिकल्प्याः इति सूचितमिति राघवानन्दवचनस्य गूढाभिसंधिः ।

¶ शेषं ममुगतम् ।

(१) मस्मृ. ७।१२९ ; राक. ८८ ; पमा. ४०४ न्याद्यं ( न्त्यद्यं ) ; राप्र. २६० ; नन्द. कोवत्स ( कवत्स ).

( २ ) अत्र दृष्टान्तमाह— यथा जलौकोवत्सभ्रमराः शनैः शनैः स्तोकं स्तोकं अदनीयं असृक्क्षीरमकरन्दं अदन्ति, एवं मूलमच्छिन्दता राज्ञा सांवत्सरिकः करः अल्पोऽल्पो ग्रहीतव्यः । * गोरा.

( ३ ) करमपि देशकालसंपत्त्यनुरूपेणाऽऽदद्यादिति सदृष्टान्तमाह— यथेति । वार्योकाः जलौकाः । अल्पाल्पं क्रियाविशेषणम् । स यथा गात्राद्रक्तमल्पमादत्ते । यद्वा मत्स्यः गन्धवारिचरः अपां बहूनां यथेष्टतत्पाने उपजीव्यजलनाशे स्वनाशशङ्कया अल्पोदकं पिबति । वत्सोऽपि सर्वदुग्धपाने गोपस्य क्षतिः स्यादित्याशङ्कयाऽल्पं चोषति । भ्रमरस्यापि सर्वमधुपाने फलानुत्पत्तेः तज्जपुष्पान्तराभावात् स्वनाशशङ्का । एवं राजन्यप्यूहनीयम् । प्रजानां मूलानुच्छेदादिति भावः । आब्दिकः अब्दसमाप्यः । मच.

( ४ ) वार्योकाः वार्योकसः । ऋषिनिपातनादकारान्तत्वम् । $ नन्द.

द्रव्यभेदेन करांशभेदाः

**'पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।**
**धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥**

( १ ) मूल्याधिकयोः पशुहिरण्ययोः पञ्चाशद्भागो ग्राह्यः । धान्यानां भागविशेषः सुकरदुष्करापेक्षया मन्तव्यः । पञ्चाशत्पूरणः पञ्चाशः । 'विंशत्यादिभ्यः०' ( पा. सू. ५।२।५६ ) इति पक्षे तमट् । पञ्चाशद्भाग इति पाठे द्विभागादिवत् संख्यान्तरम् । मेधा.

( २ ) मूलाधिकयोः पशुहिरण्ययोः पञ्चाशत्तमो भागो राज्ञा ग्राह्यः । एवं धान्यानां षष्ठः अष्टमः द्वादशो वा कर्षकक्लेशापेक्षया ग्राह्यः । गोरा.

( ३ ) पञ्चाशद्भाग इत्यादिना जनपदानां वार्षिककरग्रह उक्तः । हिरण्यपदं रूप्यादेरप्युपलक्षणम् । द्वादशेति ( अधमे ) फले, अष्टमो मध्यमे, उत्तमे षष्ठः । मवि.

( ४ ) भूम्युत्कर्षापकर्षापेक्षया कर्षणादिक्लेशलाघवगौरवापेक्षश्चायं बह्वल्पग्रहणविकल्पः । * ममु.

( ५ ) द्रव्यविशेषे विशेषतः करमल्पमाह— पञ्चाशदिति । पशुहिरण्ययोः तज्जीविभ्य आदेयः । पञ्चाशद्भागः । एकोनपञ्चाशद्भागो द्रव्यस्वामिना ग्राह्यः, राज्ञा त्वेकोऽवशिष्टो भागः । * मच.

(६) वस्तुविशेषविषये वाचनिकान् करानाह— पञ्चाशद्भाग इति । ये पशुभिः जीवन्ति, ये च हिरण्यस्य प्रयोगेण वार्धुषिकाः, तेभ्यः पञ्चाशद्भागो वृद्धेर्ग्राह्यः । अयं च पञ्चाशद्भागो वस्त्राणामपि । तथा च विष्णुः— 'द्विकं शतं पशुहिरण्येभ्यो वस्त्रेभ्यश्च' ( विस्मृ. ३।२४ ) इति । पृ. २६०

धान्यविषये आह— धान्यानामिति । अष्टमः षष्ठो द्वादश इति विकल्पो भूम्युत्कर्षापकर्षक्लेशलाघवगौरवापेक्षया द्रष्टव्यः । धान्यानां व्रीहियवादीनाम् । अयं च भागः कर्षकेभ्य एव ग्राह्यः । तथा च गौतमः— 'राज्ञो बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा' ( गौध. १०।२३ ) इति ।

विष्णुस्तु षष्ठांशमेवाऽऽह— 'प्रजाभ्यो बल्यर्थं संवत्सरेण धान्यतः षष्ठमंशमादद्यात्' ( विस्मृ. ३।२२ ) इति । इदं तूत्कृष्टभूविषयम् । अत्र धान्यपदं व्रीहिपरम् । 'सर्वसस्येभ्यश्च' ( विस्मृ. ३।२३ ) इति पृथगन्यसस्यग्रहणात् । सस्यं व्रीह्यतिरिक्तमन्नजातम् । इयं भूम्युत्कर्षादिना व्यवस्था जीर्णानाम् । वस्तुतस्तु धान्यविशेषेणेयं व्यवस्था । तथा च विष्णुधर्मोत्तरे— 'शूकधान्येषु षड्भागं शिम्बीधान्येष्वथाष्टमम् । राजा बल्यर्थमादद्यात् देशकालानुरूपतः ॥' ( विध. २।६१।६०–६१ ) इति । शूकशिम्ब्यतिरिक्ते धान्ये मनुगौतमोक्तो द्वादशो

---

* राक., मवि., ममु., राप्र., भाच. गोरागतम् ।

$ शेषं गोरागतम् ।

(१) **मस्मृ.** ७।१३० ; **मेधा.** पञ्चाशद्भाग ( पञ्चाशभाग ) 'पञ्चाशद्भागः' इत्यपि पाठः ; **राक.** ८८ वा ( च ) ; **ममु.** ७।११८ निर्देशमात्रम् ; **राप्र.** २६० पू. : २६२ वा ( च ) उत्त.

* शेषं गोरागतम् ।

दशमो वा भागः । तथा च बृहस्पतिः— 'दशाष्टषष्ठं नृपतेर्भागं दद्यात् कृषीवलः । खिलाद्वर्षावसन्ताच्च कृष्यमाणाद्यथाक्रमम् ॥ ' इति । अस्यार्थः— खिलात् चिरकालमकर्षणेनानुत्पन्नसस्यात् । वर्षावसन्तात् वर्षाकाले उत्पन्नात् वसन्तकाले चोत्पन्नात् । कृष्यमाणात् प्रतिवर्षं कृष्यमाणात् । इदं च वर्षावसन्तादित्यनेनान्वितम् । अयमर्थः— खिलाद्यदुत्पन्नं तत्र दशममंशं वर्षाकालोत्पन्नादष्टमं वसन्तकालोत्पन्नात् षष्ठमंशमादद्यादिति । बृहस्पतिविष्णुधर्मोत्तरयोरेकवाक्यतया शूकधान्यं यवगोधूमादि वसन्तोत्पन्नम्, तत्र षष्ठमंशमादद्यादित्यादि सिद्धम् । राप्र. २६२–२६३

(७) द्रव्यविशेषेष्वादेयं भागविशेषं श्लोकत्रयेणाऽऽह— पञ्चाशद्भाग इति । सर्वत्र व्ययव्यतिरिक्तलाभविषया भागकल्पना । * नन्द.

[1]आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ।
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥
[2]पत्रशाकतृणानां च चर्मणां वैदलस्य च ।
मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥

(१) द्रुमशब्देन वृक्षा उच्यन्ते । शेषं प्रसिद्धम् । एतेषां षष्ठो भागो लाभात् ग्रहीतव्यः । † मेधा.

(२) वृक्षमांसमाक्षिकघृतकर्पूरादिगन्धानां गुडूच्याद्योषधीनां लवणादिरसानां पुष्पमूलफलपत्रशाकतृणचर्मवेणुमयमृन्मयाश्ममयानां षड्भागं गृह्णीयात् । ¶ गोरा.

(३) द्रुमाणां स्वयमर्जितानां वनाहृतानां च । एवं रसानां लवणादीनाम् । पत्रं तालीपत्रादि । वैदलं वंशादिविदलकृतभाण्डादि । मृन्मयानां कुलालादिकृतानाम् । मवि.

(४) किंचान्यदाददीतेति द्वाभ्याम् । द्रुः काष्ठाद्यर्थो वृक्षः । तदाद्यश्ममयान्तानां सप्तदशानां तदुत्पादकेभ्यः तद्विक्रयिभ्यश्च षड्भागमेवाऽऽददीतेत्यन्वयः । मांसं मांसमत्स्यौ । द्रुमाणामिति पाठो मेधातिथेः । वैदलस्य शूर्पादेः । * मच.

अकरः श्रोत्रियः

‡[1]म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् ।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥

निकृष्टजनादपि कश्चित् करो ग्राह्यः

[2]यत्किंचिदपि वर्षस्य दापयेत्करसंज्ञितम् ।
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥

(१) कृषिधनप्रयोगक्रयविक्रयादिव्यवहारेण जीवन्तं पृथग्जनं ब्राह्मणाच्छ्रोत्रियादन्यं करं दापयेत् । करसंज्ञा संजाताऽस्य करसंज्ञितम् । मेधा.

(२) तद्राष्ट्रे क्रयविक्रयादिजीविनमापूपिकादिकं निकृष्टजनं यत्किंचित् स्वल्पमपि कराख्यं वर्षे राजा दापयेत् । $ गोरा.

(३) अन्येनापि कर्मणा वाणिज्यादिव्यवहारेण जीवन्तं पृथग्जनं अब्राह्मणं किंचिद्दण्यमपि दापयेत् । न तु किंचिदाददीत । † मवि.

(४) शाकपर्णादिस्वल्पमूल्यवस्तुविक्रयक्रयादिना जीवन्तम् । ¶ ममु.

---

* शेषं ममुगतम् ।

† ममु. मेधागतम् ।

¶ राप्र. गोरागतम् ।

(१) मस्मृ. ७।१३१ ; मेधा. द्रुमांस ( द्रुमाणां ) ; राक. ८८ दीताथ ( द्याच्चाथ ) ; मवि. मेधावत् ; राप्र. २६१ ; माच. नां च ( नां तु ).

(२) मस्मृ. ७।१३२ ; राक. ८९ चर्मणां वैदलस्य ( कर्मणां वैणवस्य ) ; राप्र. २६१ वैदलस्य ( वैणवस्य ).

* माच. मचगतम् ।

‡ व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च ' राजनीतेः सामान्यसिद्धान्ताः० ' इत्यस्मिन् प्रकरणे (पृ. ६९५) द्रष्टव्यः ।

$ मच. गोरागतम् ।

† नन्द. मविगतम् ।

¶ शेषं गोरागतम् ।

(१) मस्मृ. ७।१३३.

(२) मस्मृ. ७।१३७.

(५) पृथग्जनं सामान्यजनं कारुकादिकं यत्किंचिदपि करं दापयेत् । भाच.

कारुकादीनां प्रतिमासं ऐकाह्निकं कर्म करः

**'कारुकाञ्छिल्पिनश्चैव शूद्रांश्चाऽऽत्मोपजीविनः ।**
**एकैकं कारयेत्कर्म मासि मासि महीपतिः ॥**

(१) शिल्पमात्रोपजीविनः तान् मासं मासं एकमहः कर्म कारयेत् । आत्मोपजीविनश्च शूद्राः वेशभारवाहादयः । मेधा.

(२) कारून् सूपकारादीन् शिल्पिनः चर्मकारादीन् शूद्रांश्च कायक्लेशजीविनो भारिप्रभृतीन् मासि मासि एकैकमहोरात्रं कर्म कारयेत् । * गोरा.

(३) कारुकान् वर्धक्यादीन् । शिल्पिनः नटादीन् । आत्मोपजीविनः भक्तार्थे नित्यं परस्य कर्म कृत्वा तल्लब्धभक्तेन जीवतः । मवि.

(४) कारुकान् सूपकारादीन् शिल्पिभ्य ईषदुत्कृष्टान् । शिल्पिनश्च लोहकारादीन् । † ममु.

(५) दुःखजीविनो विष्ट्यादिना नातिपीडनीया इत्याह— कारुकानिति । ¶ मच.

(६) एतैनैतेभ्योऽन्यत् न ग्राह्यम्, एष एवैषां शुल्कः । राप्र.२७४

आत्मपरमूलानुच्छेदेनैव करग्रहणम्

**'नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया ।**
**उच्छिन्दन्ह्यात्मनो मूलमात्मानं तांश्च पीडयेत् ॥**

(१) करशुल्कादेरग्रहणं आत्मनो मूलच्छेदः, अतिबहुग्रहणं परेषाम् । तच्च तृष्णया भवति इत्यनुवादः । आत्मनो मूलच्छेदेनाऽऽत्मपीडा भवति, कोशक्षयात् । अतस्तेऽपि पीड्यन्ते । उपस्थिते विग्रहे क्षीणकोशशक्तिः अरिभिरपरुद्धोद्धरणेऽवश्यं ( ? रुद्ध उद्धरणेऽवशो ) भवेत् । सा च तेषां महती पीडा । यत्तु सार्वकालिकं करग्रहणं तत्संपादयतो न खेदिता भवति । * मेधा.

(२) राजा अतिस्नेहेन कराद्यग्रहणे सति आत्मनः कोशक्षयात् राज्यविनाशाख्यं मूलच्छेदं न कुर्यात् । तथाऽतिलोभवान् आसां प्रजानामपि न च मूलच्छेदं कुर्यात् । तस्मादात्ममूलच्छेदेन राजा पराक्रमणे सति आत्मानं प्रजाश्च पीडयेत् । † गोरा.

(३) प्रजास्नेहात् करशुल्कादेरग्रहणं आत्मनो मूलच्छेदः, अतिलोभेन प्रचुरकरादिग्रहणं परेषां मूलोच्छेदः, एतदुभयं न कुर्यात् । यस्मात् आत्मनो मूलमुच्छिद्य कोशक्षयात् आत्मानं पीडयेत् । पूर्वार्धात् परेषां चेत्यपि संबध्यते । परेषां मूलमुच्छिद्य तांश्च पीडयेत् । ममु.

(४) स्वस्यान्येषां च मूलं कृषिगोरक्षवाणिज्यादिकं करोत्पत्तिस्थानम् । अतितृष्णया शास्त्रविरुद्धैः करैः नोच्छिन्द्यात् । तत्र कोऽनर्थ इत्यपेक्षायामुक्तमुत्तरार्धे— उच्छिन्द्याद्ध्यात्मनो मूलमिति । अत्र परेषामित्यनुपादानं कृष्यादिकस्य राजमूलत्वसारज्ञापनार्थम् । तानन्यांश्च पीडयेत् दरिद्रयेत् । नन्द.

(५) आत्मनः मूलं मूलधनं प्रजारूपं करग्रहेण नोच्छिन्द्यात् उच्छिन्नं न कुर्यात् । च पुनः परेषां ग्रामनिवासिनां प्रजानां अतितृष्णया अतिकरग्रहणेन । च पुनः आत्मनः मूलमुच्छिन्दन् हि निश्चयेन आत्मानं च प्रजाश्च पीडयेत् । तस्मात् मूलधनं नोच्छिन्द्यात् । भाच.

---

* नन्द., भाच. गोरागतम् ।

† शेषं गोरागतम् ।

¶ शेषं ममुगतम् ।

(१) **मस्मृ.** ७।१३८; **राप्र.** २७४ मासि मासि ( प्रतिमासं ).

(२) **मस्मृ.** ७।१३९; **राक.** ९३ न्ह्यात्मनो (त्र्यात्मनो) पीडयेत् ( नाशयेत् ); **राप्र.** २७५ राकवत्; **नन्द.** न्दन्ह्या ( न्याद्ध्या ).

* राक., राप्र. मेधागतम् ।

† मवि., मच. गोरागतम् ।

प्रनष्टस्वामिकद्रव्यव्यवस्था

***'प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।**
**अर्वाक् त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ॥**

( १ ) यत् द्रव्यं स्वामिनो नष्टं प्रमादात् कथंचित् पथि गच्छतो भ्रष्टम्, अरण्ये कान्तारे वा स्थापयित्वा (?) अरण्यपालैरन्यैर्वा राजपुरुषैर्लब्धं राजसकाशमानीतम्, तत् राज्ञा रक्षां कृत्वा राजद्वारे राजमार्गे वा प्रकाशं स्थापयितव्यम्, पटहघोषणेन वा कस्य किं हारितमिति प्रकाशयितव्यम्, यतः प्रदेशाल्लब्धं तस्मिन्नेव प्रदेशे रक्षिपुरुषाधिष्ठितं कर्तव्यम् । एवं त्रीणि वर्षाणि स्थापयितव्यम् । तत्रार्वाक् त्रिभ्यो वर्षेभ्यो यः कारणत आत्मीयं ज्ञापयेत् तस्योद्धृतवक्ष्यमाणषड्भागादिभागकं समर्पयितव्यम् । परतः स्वकोष्ठे प्रवेशनीयमिति । प्रनष्टः स्वामी यस्य रिक्थस्य तत् प्रनष्टस्वामिकम् । प्रनष्टः अविज्ञातः । रिक्थं धनम् । त्रयाणामब्दानां समाहारः त्र्यब्दम् । त्रिवर्षवत् त्र्यब्दे ङीब्भावः । अब्दशब्दः संवत्सरपर्यायः । निधापयेत् स्थापयेत् । अर्वाक् त्र्यब्दात् पूर्वं त्रिभ्यो वर्षेभ्यः हरेत् स्वामी स्वीकुर्यात् । अर्वाक्शब्दः अवधौ दिग्देशादिकात् पूर्वमाह । अन्ये तु ' नृपतिर्हरेत् ' इति भोगानुज्ञानमपहारमाहुः । न हि ऊर्ध्वमपि त्रिभ्यो वर्षेभ्यः परकीयस्य द्रव्यस्य अपहारो युक्तः । तस्मात् त्रिभ्यो वर्षेभ्य ऊर्ध्वमनागच्छति स्वामिनि राज्ञा भोक्तव्यम् । तैरयं श्लोकः कथं व्याख्यानीयः ' यत् किंचित् दश वर्षाणि ' ( मस्मृ. ८।१४७ ) इति ? यदि च परकीयस्यापहारो न युक्त इत्युच्यते भोगोऽपि नैव युक्तः । परकीयं वस्त्रादिवत् भुज्यमानं नश्यत्येव । तत्रापहारोपचारो युक्तः, भुक्तेरेवापहारफलस्य सद्भावात् । गजतुरगादेस्तु कीदृशो भोग इति वाच्यम् । तस्मान्न यथाश्रुतार्थत्यागे कारणमस्ति । हरतिश्च गृह्णात्यर्थे असकृत् दृष्टप्रयोगः ' ऋक्थं हरेत् ' इत्यादौ । तस्मात् परेण नृपतिर्हरेत् स्वीकुर्यादित्ययमेवार्थः । † मेधा.

( २ ) ऊर्ध्वं पुनर्नृपतिर्गृह्णीयात् यावत् स्वाम्यागच्छति तावदपहरेत्, एवं परकीयस्य धर्मतो वर्षशतैरपि स्वापहारस्यान्याय्यत्वात् ( प्रनष्ट इत्यादि सोऽर्वाक् ? ) । § गोरा.

( ३ ) परेण नृपतिर्हरेत् रक्षकभागमात्रं वक्ष्यमाणम् । § मवि.

( ४ ) अब्राह्मणस्वविषयमेतत्, ' ब्रह्मस्वं ब्राह्मणान् श्रयेत् ' इति स्मृत्यन्तरानुरोधात् । नन्द.

( ५ ) प्रनष्टः देशान्तरगतः । भाच.

**'ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि ।**
**संवाद्य रूपसंख्यादीन् स्वामी तद्द्रव्यमर्हति ॥**

( १ ) कथं पुनः स्वामी प्रनष्टे धने स्वामित्वं ज्ञापयेदत आह– ममेदमिति । यः कश्चिदागत्य ममेदं स्वं द्रव्यमिति ब्रूयात् सोऽनुयोज्यो यथाविधि । अनुयोज्यः प्रष्टव्य इत्यर्थः । कोऽसावनुयोगविधिः ? को भवान् ? किं द्रव्यं हारितम् ? किंरूपम् ? किंपरिमाणम् ? किंसंख्याकम् ? संपतितमपतितं वा ? यदि पतितं कस्मिन्देशे ? तथा कुत आगमितं त्वया ? इत्येवं पर्यनुयोगः कर्तव्यः । स यदि संवादयति रूपसंख्यादीन् । रूपं प्राणिवस्त्रादिविषयं शुक्लं वस्त्रं ( शुक्ला ) गौर्वेत्येवमादि । तथा संख्या दश गावो वा युगानि वा । आदिग्रहणाद्धस्तादिप्रमाणं सुवर्णादिपरिमाणं प्रकीर्णरूपकं वा । एतत्सर्वं संवादयति तदाऽसौ स्वामी भवति । अतस्तद्द्रव्यमर्हति स्वीकर्तुम् । संवाद उच्यते यादृशमेकेन प्रमाणेन परिच्छिन्नं तादृशमेव यद्यन्येन परिच्छिद्यते । रूपसंख्यादिग्रहणं च प्रदर्शनार्थं स्वामित्वकारणानामन्येषामपि साक्ष्यादीनाम् । $ मेधा.

---

* राप्रव्याख्यानं 'आददीताथ' इत्याद्यग्रिमश्लोके द्रष्टव्यम् ।

(१) मस्मृ. ८।३० ; राप्र. २६६ परेण ( परतो ) ; बौधि. १।१८।१६ त्र्यब्दं (त्वब्दं) र्वाक् त्र्यब्दा ( र्वागब्दा ).

† ममु., मच. मेधागतम् । § शेषं मेधागतम् ।

$ गोरा., मवि., ममु., मच. मेधागतम् ।

(१) मस्मृ. ८।३१–३२.

(२) सभ्यैः संवाद्य सभ्यानां सम्यक् वेदयित्वा। * नन्द.

**अवेदयानो नष्टस्य देशं कालं च तत्त्वतः।**
**वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ॥**

(१) मिथ्या प्रवर्तमानस्य दण्डोऽयमुच्यते। यो न ज्ञापयति नष्टस्य धनस्य देशं कालं चास्मिन्देशे काले वा हारितम्। तत्त्वतः परमार्थतः। वर्णं शुक्लादिकम्। रूपं पटी शाटकयुगं वेत्यादिकमाकारम्। प्रमाणं पञ्चहस्तायामं सप्तहस्तमात्रं वा। अवेदयानस्तदा तत्समं यावति द्रव्ये मिथ्याप्रवृत्तस्तत्तुल्यं दण्डमर्हति। † मेधा.

(२) प्रमाणं संख्यां साक्ष्यादि वा। मच.

**'आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः।**
**दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥**

(१) आददीत गृह्णीयात् षष्ठं भागं दशमं द्वादशं वा प्रनष्टलब्धात् द्रव्यात्। अवशिष्टं स्वामिनेऽर्पयेत्। तत्र प्रथमे वर्षे द्वादशो भागः, द्वितीये दशमः, तृतीये षष्ठ इति। अथवा रक्षाक्लेशक्षयापेक्षो भागविकल्पः। सतां धर्ममनुस्मरन् शिष्टानामेष समाचार इति जानानः। § मेधा.

(२) अ(? त्र्य)ब्दात् परं यत् ग्राह्यं तदाह— आददीतेति। अतिनिर्गुण( गुण )वदतिगुणवदपेक्षया विकल्पः। सतां धर्ममिति, व्यवहारसिद्धं यावत् तावद्धेत्यर्थः। मवि.

(३) प्रनष्टाधिगते तु विशेषमाह— आददीतेति। प्रनष्टं स्वामिसकाशात् भ्रष्टं यत् शौल्किकस्थानपालादिभिरधिगतं राज्ञे समर्पितम्, तस्मात् नृपः प्रथमवर्षे स्वामिने सर्वं दद्यात्। द्वितीयवर्षे च तस्मात् द्वादशम्, तृतीयवर्षे दशमम्, चतुर्थवर्षप्रभृति षष्ठं भागमादद्यात्। तदुक्तं याज्ञवल्क्येन— 'शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्। अर्वाक् संवत्सरात् स्वामी हरेत परतो नृपः ॥' (यास्मृ. २।१७३) इति। अत्र च 'अर्वाक् संवत्सरात् स्वामी हरेत' इत्यनेन प्रथमवर्षे स्वामिना सर्वमेव ग्राह्यम्। 'हरेत परतो नृपः' इत्यनेनाविशेषोक्तावपि राजा द्वितीयवर्षादौ संरक्षणनिमित्तं किंचित् गृह्णीयात्। तत्र च औचित्येन द्वितीयवर्षे द्वादशम्, तृतीयवर्षे दशमम्, चतुर्थप्रभृति षष्ठं भागं गृह्णीयात्। अत एव मनुना— 'प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्। अर्वाक् त्र्यब्दाद्धरेत् स्वामी परतो नृपतिर्हरेत् ॥' (मस्मृ. ८।३०) इति त्र्यब्दपर्यन्तं रक्षणं स्वामिने दानं वोक्तम्। तदेव याज्ञवल्क्यैकवाक्यतया अर्वाक् संवत्सरात् स्वामिने दानं किमप्यगृहीत्वैव, परतस्तु कंचिद्भागं गृहीत्वैवेति सिद्धम्। त्र्यब्दपर्यन्तावस्थापनं तु यथास्थितद्रव्यस्यैव। परतो हरणं तु व्ययीकरणानुमतिपरम्। स्वामिन्यागते तु तत्समसंख्यं स्वांशं गृहीत्वा दातव्यम्। तत्रापि स्वांशमध्ये चतुर्थोंऽशोऽधिगन्त्रे देयः। तदुक्तं गौतमेन— 'प्रनष्टस्वामिकमधिगम्य... संवत्सरं राज्ञा रक्ष्यम्। ऊर्ध्वमधिगन्तुश्चतुर्थोंऽशो राज्ञः शेषम्।' (गौध. १०।३५–३७) इति। अत्र संवत्सरमित्युपलक्षणम्, 'राजा त्र्यब्दं निधापयेत्' (मस्मृ. ८।३०) इति मनुस्मरणात्। राप्र.२६५–२६६

(४) स्वामिगुणापेक्षया रक्षणादिकार्यापेक्षया (वा) षड्भागादिविकल्पव्यवस्था। * नन्द.

(५) पूर्वं प्रनष्टः देशान्तरं गतः, आगतः पश्चात् अधिगतः। तस्मात् पुरुषात् राजा षड्भागमाददीत स्वीकुर्यात्। भाच.

निधिलाभे व्यवस्था

**'ममायमिति यो ब्रूयान्निधिं सत्येन मानवः।**
**तस्याऽऽददीत षड्भागं राजा द्वादशमेव वा ॥**

(१) निखातायां भूमौ गुप्तं स्थापितं धनं निधिरुच्यते। वर्षशतिका वर्षसहस्रिकाश्च निधयो भवन्ति। तत्र यदि भूमेर्विदार्यमाणायाः कथंचित् केनचिन्निधिरासाद्यते

---

* शेषं मेधागतम्।

† गोरा., मवि., ममु., भाच. मेधागतम्।

§ गोरा., मच., नन्द. मेधागतम्। ममु. मेधागतं मविगतं च।

(१) मस्मृ. ८।३३; राप्र. २६५.

* शेषं मेधागतम्।

(१) मस्मृ. ८।३५; राप्र. २६९.

स तु राजधनम्। तथा च गौतमः– 'निध्यधिगमो राजधनम्' (गौध. १०।४२) इति। एतच्चास्मर्यमाणनिधातृके निधौ द्रष्टव्यम्। तस्य आख्याता षष्ठं लभेत इत्युक्तम्*। अयं तु श्लोको यत्राऽऽख्यातैव निधाता तत्पुरुषो वा पितृपितामहादिः तद्विषयो द्रष्टव्यः। ममायं निधिरिति यो ब्रूयात् सत्येन प्रमाणेन ज्ञापयेदित्यर्थः। तस्याऽऽददीत षड्भागमिति। निश्चिते तत्स्वामिकत्वे राज्ञः षष्ठादिभागग्रहणम्। विकल्पश्चाऽऽख्यातृगुणापेक्षया। मेधा.

(२) एवं च 'ममायम्०' इत्ययमविद्वद्ब्राह्मणविषयः क्षत्रियादिविषयश्च। + गोरा. ८।३७

(३) निधिं स्वपित्रादिनिहितं स्वयमेवोद्धृतं परेण वोद्धृतं ममेति यो ब्रूयात्। षड्भागं क्षत्रियादेः। द्वादशं ब्राह्मणस्य विदुषः। मवि.

(४) यो मानुषः स्वयं निधिं लब्ध्वा अन्येन वा निधौ प्राप्ते ममायं निधिरिति वदति सत्येन प्रमाणेन च स्वसंबन्धं बोधयति, तस्य पुरुषस्य निर्गुणत्वसगुणत्वापेक्षया ततो निधानात् षड्भागं द्वादशभागं वा राजा गृह्णीयात्। अवशिष्टं तस्यार्पयेत्। × मंमु.

(५) यदा निधेः स्वामी आगत्य रूपसंख्यादिभिः स्वत्वं विभावयति तदा तस्मै निधिं दद्यात्। षष्ठं द्वादशं वांऽशं राजा गृह्णीयात्। यथाऽऽह मनुः– ममायमिति। षष्ठं द्वादशं वा इति विकल्पस्तु धनस्वामिनः सगुणत्वनिर्गुणत्वापेक्षया कालापेक्षया वा द्रष्टव्यः। इदं च भागग्रहणं ब्राह्मणभिन्नादेव। यथाऽऽह विष्णुः– 'स्वनिहिताद्ब्राह्मणवर्जं द्वादशमंशं दद्युः' (विस्मृ. ३।६३) इति। केचित्तु विष्णुवाक्यात् क्षत्रियादयो द्वादशम्, ब्राह्मणः षष्ठं दद्यादित्याहुः, तच्चिन्त्यम्। यदा राजा निधिस्वामिन्यागते निधिं परावृत्य दद्यात् तदा ब्राह्मणाय दत्तं निध्यर्थं परावृत्य गृह्णीयात्। यथाऽऽह बृहस्पतिः– 'अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत्' इति। रामं.२६९

'अनृतं तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम्।
तस्यैव वा निधानस्य संख्यायाल्पीयसीं कलाम्॥

(१) यस्तु मयाऽयं निहितो मत्पूर्वजेन वेति प्रतिज्ञां न साधयति सोऽसत्यवादी दण्ड्यः। यावत्तस्य वित्तमस्ति ततोऽष्टमं भागं तस्यैव वा निधानस्याल्पीयसीं कलां मात्रां भागमित्यर्थः, न तु तदेव द्रव्यं सुवर्णादिकं दापयेत्, किंतु तत्परिमाणमन्यद्वा सममूल्यं यया धनमात्रया दण्डितोऽवसादं न गच्छेद्विनयं वा ग्राह्येत। अनुबन्धादिविशेषापेक्षया पुरुषगुणापेक्षया च विकल्प आश्रयणीयः। आतिशयनिकात्पूर्वदण्डात्स्वल्पो दण्ड इति ज्ञापयति। तेन यस्य बहु वित्तं स्वल्पो निधिः तत्र निध्यपेक्षां मात्रामष्टमांशं अर्थादीनां दण्ड्यः। सा ह्यल्पीयसी भवति। * मेधा.

(२) तस्यैवेति ब्राह्मणस्य दण्डः। तस्य निधानस्य शततमो भागो यावान् भागस्तावतीमल्पीयसीं कलां अंशम्। संख्याय व्यवस्थाप्य। मवि.

(३) स्ववित्तस्याष्टममंशं दण्ड्यः। वा पक्षान्तरम्। तस्यैव निधानस्य द्रव्यपूर्णकुम्भस्य संख्यायाल्पीयसीं कलां तुच्छककलाम्। 'कला तु षोडशो भागः' इत्यमरः। षोडशीं गृह्णीयादित्यर्थः। भाच.

विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्वोपनिहितं निधिम्।
अशेषतोऽप्याददीत सर्वस्याधिपतिर्हि सः॥

(१) यदा विद्वान् ब्राह्मणः पूर्वैः पित्रादिभिरुपहितं निधिं यदा पश्येत्तदा सर्वमेवाऽऽददीत, न राज्ञे पूर्वोक्तं भागं दद्यात्। अस्यार्थवादः– सर्वस्याधिपतिर्हि सः। तथा चोक्तम्– 'सर्वस्वं ब्राह्मणस्येदम्' इति। एतच्चाशेषतो ग्रहणं यो ब्राह्मणस्वामिक एव निधिः। यस्त्वविज्ञातस्वामिकः तस्मिन् विद्वद्ब्राह्मणदृष्टेऽप्यस्त्येव राज्ञो

---

* 'अब्राह्मणोऽप्याख्याता षष्ठं लभेतेत्येके' (गौध. १०।४४) इति गौतमवचनस्य अंशतोऽर्थानुवादोऽयम्।

+ प्रकृतश्लोकव्याख्यानं अशुद्धिसंदेहान्नोद्धृतम्। तच्च ममुगतम्।

× मच., नन्द. ममुगतम्।

* गोरा., ममु., मच., नन्द. मेधागतम्।

(१) मस्मृ. ८।३६–३७.

भागः । यतो वक्ष्यति— ' निधीनां तु पुराणानाम् ' इति । ¶ मेधा.

( २ ) विद्वान्पुनर्ब्राह्मणः पूर्वमुपनिहितं निधिं दृष्ट्वा सर्वं गृह्णीयात्, न षड्भागं दद्यात् । यस्मात्सर्वस्य धनजातस्य प्रभुः । अत एवोक्तम्— ' सर्वस्वं ब्राह्मणस्येदम् ' इति । तस्मात् परनिहितविषयमेतद्वचनम् । तथा च नारदः— ' परेण निहितं लब्ध्वा राजा ह्यपहरेन्निधिम् । राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ॥ ' । याज्ञवल्क्योऽप्याह— ' राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः । विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥ ' । अतो यन्मेधातिथिगोविन्दराजाभ्यां ' ममायमिति यो ब्रूयात् ' इत्युक्तराजदेयार्थनिरासार्थं पित्रादिनिहितविषयत्वमेवास्य वचनस्य व्याख्यातं तदनार्षं नारदादिमुनिव्याख्याविपरीतं स्वकल्पितं न मेधातिथिगोविन्दराजव्याख्यानमाद्रिये । * ममु.

**'यं तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ ।**
**तस्माद्द्विजेभ्यो दत्त्वाऽर्धमर्धं कोशे प्रवेशयेत् ॥**

( १ ) यो राज्ञा स्वयं निधिरधिगतः तस्मान्निधेरयं ब्राह्मणेभ्यो दाननियमो राज्ञः । कोशशब्देन वित्तसंचयस्थानमुच्यते । ' पुराणं निहितं क्षितौ ' इति निधिरूपानुवादः । मेधा.

( २ ) यं पुनः चिरंतनं अस्वामिकं भूमिप्रक्षिप्तं निधिं लभेत तस्मादर्धं ब्राह्मणेभ्यो दत्त्वा अर्धमात्मनोऽर्थागारे प्रवेशयेत् । + गोरा.

(३) संपश्येत् स्वपुरुषैरन्येन चोद्धृतम् । पुराणं अज्ञातनिधातृकम् । मवि.

**'निधीनां तु पुराणानां धातूनामेव च क्षितौ ।**
**अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥**

(१) अन्येनापि दृष्टस्य निधेः राज्ञा भागः पूर्वोक्तो ग्रहीतव्य इत्यस्य विधेरर्थवादोऽयम्— निधीनां हि पुराणानामिति । ' धातूनामेव च क्षितौ ' अयं त्वप्राप्तविधिः । सुवर्णरूप्यादिबीजं मृदः सिन्दूरकालाञ्जनाद्याश्च धातवः । सुवर्णाद्याकरभूमीर्यः खनति यो वा पर्वतादिषु गैरिकादिधातूनुपजीवति तेनापि पूर्ववद्राज्ञे भागो दातव्यः । अर्धभागिति । अर्धशब्दोंऽशमात्रवचनः, समासनिर्देशात् । यथा ग्रामार्धो नगरार्धमिति ( ? र्ध इति ) । नपुंसकलिङ्गस्तु समप्रविभागः । इह तु समासे लिङ्गविशेषप्रतिपत्त्यभावात् पूर्वस्यैव षड्दशद्वादशादेर्भागस्य प्रकृतत्वात् तद्वचनो विज्ञायते । अर्धं भजते एकदेशं गृह्णातीत्यर्थः । अत्र हेतुः— रक्षणादिति । यद्यपि क्षितौ निहितस्य केनचिदज्ञानान्न राजकीयरक्षोपयुज्यते, तथापि तस्य बलवताऽपहारः संभाव्यते । अतोऽस्त्येव रक्षाया अर्थवत्त्वम् । एतदर्थमेवाऽऽह— भूमेरधिपतिर्हि सः । प्रभुरसौ भूमेः । तदीयायाश्च भुवो यल्लब्धं तत्र युक्तं तस्य भागदानम् । मेधा.

( २ ) चिरंतनानां निधीनां अस्वामिकानां अन्येनापि लब्धानां भूमिगतानां च सुवर्णानां अर्धहरो राजा । यस्मात् रक्षणादसौ भूमिस्वामीति । * गोरा.

( ३ ) धातूनां हेमादीनां आकरस्थानाम्, चकारात् रत्नानां च । रक्षणादिति भूमेरधिपतिरिति च हेतुद्वयम् । मवि.

( ४ ) विद्वद्ब्राह्मणेतरनिधिलाभे राजा अंशभाक् इत्याह— निधीनामिति । हिः हेतौ । निधीनां अस्वामिकानां पुराणानां अस्वकीयानां धातूनां सुवर्णाद्युत्पत्तिस्थानिनां च, भूमेरधिपतिरिति लिङ्गात् । अर्धशब्दोऽत्र षष्ठांशवाची, समासनिविष्टत्वात् । तथा च याज्ञवल्क्यः— ' इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् । अनावेदितविज्ञातो दाप्यस्तं दण्डमेव च ॥ ' ( यास्मृ. २।३५ ) इति । अनावेदितविज्ञातः मया प्राप्तमित्यनुक्तो यदि राज्ञा विज्ञात इत्यर्थः । मच.

(५) अर्धग्रहणे हेतुमाह— निधीनां हीति । धातूनां हेमरूप्यादिलोहगणानां मृत्तिकाविशेषाणाम् । नन्द.

---

¶ गोरा., मवि. मेधागतम् । * मच. ममुगतम् ।
+ ममु. गोरानुवादः । मच., नन्द. गोरागतम् ।
(१) मस्मृ. ८।३८ ; मवि. तु पश्ये ( संपश्ये ).
(२) मस्मृ. ८।३९ ; मेधा. तु ( हि ) ; मच. मेधावत् ; राप्र. २६७ मेधावत् ; नन्द. मेधावत्.

* ममु. गोरागतं मविगतं च ।

अनादेयादानं निषिद्धम्

**'अनादेयं नाऽऽददीत परिक्षीणोऽपि पार्थिवः ।**
**न चाऽऽदेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥**

(१) करदण्डशुल्कादि शास्त्रविहितं वर्जयित्वा अन्यत् पौरधनं अनादेयं राज्ञः क्षीणकोशस्यापि । यत्तु शास्त्रन्यायागतं रक्षानिर्वेशधनं तत् सूक्ष्मं कार्षापणमात्रमपि न त्यजेत् । तदुक्तम्– 'वल्मीकपथवद्राजा कोशवृद्धिं तु कारयेत्' इति । * मेधा.

(२) अतो यत् कर्तव्यं नृपेण तदाह– अनादेयमिति । यतो धर्मतोऽपि परवित्तग्रहणेन उपचीयते नृपः, तस्मात् अनादेयं अशास्त्रीयं नाऽऽददीत । मवि.

(३) प्रजास्नेहेन राजा करादि न व्यापादयेदिति सार्थवादमाह– अनादेयमिति चतुर्भिः । † मच.

(४) एवं बलात् कृतं सर्वं राज्ञा निवर्तनीयमित्युक्तम्, अधुना स्वयमपि राज्ञा बलात्कारो न कार्य इत्याह –अनादेयमिति । परिक्षीणोऽपि असमृद्धोऽपि । अनादेयं अदण्ड्यस्यार्थं सूक्ष्ममपि बलान्नाऽऽददीत । समृद्धोऽपि दण्ड्यस्यार्थं सूक्ष्ममपि बलान्नोत्सृजेत् । नन्द.

**'अनादेयस्य चाऽऽदानादादेयस्य च वर्जनात् ।**
**दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ॥**

(१) अनादानार्हं अनादेयम् । अर्हे कृत्यः । तच्च दर्शितम् । दौर्बल्यं ख्याप्यते प्रकृतिभिः– अस्मान् दण्डयति, स्तेनाटविकसामन्तादीन्न शक्तो विजेतुमिति । परेष्वशक्तिं प्रथयन्ति राष्ट्रीयाः । अतस्तैरभिषेण्यमानो¶ विरक्तप्रकृतिरिह नश्यति, आदानात्, इह प्रेत्य च अधर्मदण्डनात् । § मेधा.

(२) अग्राह्यग्रहणात् ग्राह्यपरित्यागाच्च 'अशक्तानसद्दण्डे योजयति, शक्तानां पुनः प्रकृतमप्युपेक्षते भीरुतया' इत्येवं पौरैर्दौर्बल्यं राज्ञः प्रकाश्यते । स चानादेयादानेन अधर्मोत्पादप्रकृतिकोपाभ्यां आदेयवर्जनेन च क्षीणकोशतया राज्यविनाशादिहलोकपरलोकयोः विनश्यति । * गोरा

(३) अनादेयादानात् 'दरिद्रोऽयम्' इति लोके अख्यातिरधर्मश्च दौर्बल्यहेतुः जायते । अतः प्रेत्येह च नाशः । एवमादेयवर्जनात् 'अशक्तोऽयम्' इत्यपकीर्तिः प्रजानामधर्माचरणेनाधर्मश्च । मवि.

(४) ततः किं तत्राऽऽह– अनादेयस्येति । ज्ञानतो वर्जनात् स्वधनस्य दौर्बल्यं ख्याप्यते गृह्यते । अयमर्थः– नीतिशास्त्रानभिज्ञोऽयम्, यतोऽनादेयमादत्ते अपरिपूर्णधनोऽयमित्याक्रमणीयः । यतः आदेयमपि नाऽऽदत्ते आदातुमसमर्थो वेति । अनादेयस्य आदानात् प्रेत्य नश्यति । मच.

प्रजाया अरक्षणे करशुल्कादिग्रहणे नाधिकारः

**'योऽरक्षन् बलिमादत्ते करं शुल्कं च पार्थिवः ।**
**प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत् ॥**

(१) बलिप्रभृतीनि राजग्राह्यकरनामानि देशभेदे सूपमाणवकवत्प्रसिद्धानि । तत्र बलिः धान्यादेः षष्ठो भागः । करः द्रव्यादानम् । शुल्कं वणिक्प्राप्यभागः । प्रतिभागं फलभरणिकाद्युपायनम् । राजैतत् गृह्णाति, चौरेभ्यश्च न रक्षति, स सद्य आयुःक्षयान्नरकं गच्छेत् । गृहीत्वा राजभागं रक्षा कर्तव्या, नरकायुःक्षयभयादिति श्लोकतात्पर्यम् । मेधा.

---

* गोरा., ममु., भाच. मेधागतम् ।

† शेषं मेधागतम् ।

¶ अभिषेणनपदार्थः 'यत्सेनयाऽभिगमनमरौ तदभिषेणनम्' इत्यमरादनुसंधेयः ।

§ ममु. मेधागतं गोरागतं च ।

(१) मस्मृ. ८।१७० ; राक. ९३ ; राप्र. २७५.

(२) मस्मृ. ८।१७१ ; राक. ९४ च नश्यति ( विनश्यति ) ; राप्र. २७५ राकवत्.

* भाच. गोरागतम् ।

(१) मस्मृ. ८।३०७ ; गोरा. प्रतिभागं ( भूतिभोगं ) सद्यो ( सत्यं ) ; राक. ८६ करं शुल्कं ( करशुल्कं ) ; मवि. प्रतिभागं ( प्रतिभोगं ) 'प्रीतिभोगं' इत्यपि पाठः ; ममु. ७।२ निर्देशमात्रम् ; पमा. ३९७ प्रतिभागं ( प्रीतिभोगं ) ; मच. प्रतिभागं ( प्रीतिभोगं ) ; राप्र. २५५ प्रतिभागं ( प्रतिभोगं ) ; नन्द. मचवत् ; भाच. मचवत्.

(२) यो राजा प्रजासंरक्षणमकुर्वन् (बलिं) धान्यादेः षड्भागादिकम्, करं गुल्मदास्या(? या)दिकम्, (शुल्कं) स्थलपथादिजीविभ्यो गतागतिभ्यः, भूतेर्भोगं फलं फलकुसुमाद्युपायनम्, (शुल्कं ?) दण्डं व्यवहारादौ गृह्णाति, स आयुःक्षयेण सत्यमेव नरकं याति। * गोरा.

(३) करं तत्तद्भूमिनियतं देयं हिरण्यम्। शुल्कं तरादिदेयम्। प्रतिभोगं फलाद्युपायनमुपढौकितम्। प्रीतिभोगमिति क्वचित् पाठः। तत्र प्रीत्योपढौकितं फलादीत्यर्थः। दण्डं अपराधनिमित्तग्राह्यम्। मवि.

(४) (करं) ग्रामवासिभ्यः प्रतिमासं वा भाद्रपौषनियमेन ग्राह्यम्। + ममु.

(५) तस्यैव स्वधर्मस्याकरणे दोषमाह– य इति त्रिभिः। प्रीतिभोगं पुष्पशाकाद्युपायनं प्रतिदिनं ग्राह्यम्। × मच.

(६) रत्नहारित्वेन यद्राष्ट्रात् पशुधान्यादिकं विशिष्टमाच्छाद्य राज्ञा भुज्यते वस्तु तद्बलिरित्युच्यते। ¶ नन्द.

**[1]अरक्षितारं राजानं बलिषड्भागहारिणम्।**
**तमाहुः सर्वलोकस्य समग्रमलहारकम्॥**

(१) पूर्वस्य शेषोऽयं निन्दार्थवादः। न रक्षति। अत्ता उपजीविता प्रजानां राजभागग्रहणेन। एतदेव स्पष्टयति– बलिषड्भागहारिणम्। तं तादृशं राजानमाहुः शिष्टाः सर्वलोकस्य सर्वस्याः प्रजायाः समग्रं मलं पापं तस्य हारकं स्वीकर्तारम्। सर्वेण प्रजापापेन दूष्यते इत्यर्थः। † मेधा.

(२) अत्तारं अतिशयितकरग्रहेण खादकमिव। राजानमिति क्वचित् पाठः, सोऽनाकरः। बलिरूपो यो धान्यादेः षड्भागः षष्ठो भागः तद्धारिणम्। मलं पापम्। पूर्वमरक्षणात् पापषष्ठभागित्वमुक्तम्। अत्र तु अत्तृत्वेनाधिकेन सर्वपापग्रहणमिति। सर्वत्र चात्र तावत् पापान्तरक(? ध)र्मान्तरोत्पत्तौ तात्पर्यम्, न तु तत्पापधर्मयोरेव प्रतिसंक्रम इत्यर्थो ग्राह्यः। मवि.

(३) उक्तबल्यादिं गृहीत्वाऽप्यरक्षितारं समग्रमलहारकं मन्वादयस्तमाहुरित्यन्वयः। अग्रं फलम्, तेन सह वर्तते समग्रम्। फलदानोन्मुखस्य मलस्य हर्तारं सर्वेषां पापहर्तारम्। तथा च अनलसेन वर्तितव्यमात्मनो हितं कुर्वतेत्यन्वयः (? त्यर्थः)। मच.

(४) अत्र बलिशब्दः करवचनः। नन्द.

**[1]अनवेक्षितमर्यादं नास्तिकं विप्रलुम्पकम्।**
**अरक्षितारमत्तारं नृपं विद्यादधोगतिम्॥**

(१) मर्यादा शास्त्रशिष्टसमाचारनिरूढा धर्मव्यवस्था, सा अनवेक्षिता अतिक्रान्ता येन। नास्ति परलोको नास्ति दत्तं नास्ति हुतमिति (मतिरस्येति) नास्तिकः। प्रथमो रागादिना त्यक्तधर्मः। (द्वितीयः) नास्ति वस्त्विति विपरीताभिनिवेशः। वि(प्र)लुम्पति हरति धनान्यसद्दण्डैः प्रजानाम्। तत्तुल्योऽरक्षिता। तमधोगतिं विद्यात् नरकपतितमधोगतं विद्यात् नरकपतितमेवाचिरात्। पाठान्तरम् –'असत्यं च नृपं त्यजेत्'। अन्यदुक्त्वाऽन्यत् करोति यस्तं त्यजेत् तद्विषये नाऽऽसीत। * मेधा.

(२) अत्तारं करबल्यादेर्भक्षयितारम्। + गोरा.

(३) विप्रलोपकं विच्छेदकम्, वृत्त्यादीनामिति शेषः। अत्तारं भोक्तारम्। × राक. ८६

---

* माच. प्रीतिभोगपदार्थः मचवत्, शेषं गोरावत्।

\+ शेषं मेधागतम्।

× शेषं मेधागतं ममुगतं च।

¶ शेषं ममुगतं मचगतं च।

† गोरा., ममु. मेधागतम्।

(१) मस्मृ. ८।३०८; मेधा. तारं राजानं (तारमत्तारं); राक. ८६; मवि. मेधावत्, 'राजानम्' इत्यपि पाठः; राप्र. २५५.

* ममु. मेधागतं गोरागतं च। मच., माच. मेधागतम्।

\+ शेषं मेधागतम्।

× राप्र. राकगतं मविगतं च।

(१) मस्मृ. ८।३०९; मेधा. चतुर्थपादे (असत्यं च नृपं त्यजेत्) इत्यपि पाठः; राक. ८६ वेक्षित (पेक्षित) लुम्प (लोप); ममु. वेक्षित (पेक्षित); मच. ममुवत्; राप्र. २२५ लुम्प (लोप).

(४) विप्रलुम्पकं विप्राणां लोपकं अपचयहेतुम् ।

* मवि.

(५) विप्रलुम्पकं ब्राह्मणपरित्यागिनम् नन्द.

'यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्करः ॥

अकरा जनाः

'अन्धो जडः पीठसर्पी सप्तत्या स्थविरश्च यः ।
श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित्करम् ॥

(१) सप्तत्या स्थविरः । प्रकृत्या विरूप इतिवत्तृतीया । सप्ततिर्वर्षाणि यस्य जातस्य स एवमुच्यते । श्रोत्रियेषु वेदाध्यायिषु उपकुर्वन् पादशुश्रूषादिना कारुकर्मणा वा । एते न केनचित् 'शिल्पिनो मासि मासि' इत्यादि दाप्याः । क्षीणकोशेनापि न दाप्या इति केनचिद्ग्रहणम् । मेधा.

(२) जडः विकलवागादिः । पीठसर्पी पीठद्वयेन गच्छन् खञ्जः । श्रोत्रियेषूपकुर्वन् तेषां परिचर्यापरः शूद्रादिः । करं निवासनिमित्तकम् । + मवि.

(३) अन्धः, बधिरः, पङ्गुः, संपूर्णसप्ततिवर्षः । सप्तत्येति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । श्रोत्रियेषु धनधान्यशुश्रूषादिनोपकारकाः । केनचिदपि क्षीणकोशेनापि राज्ञा त्वनुग्राह्याः करं न दापनीयाः । × ममु.

(४) दण्डप्रसङ्गेन करादानं बुद्धिस्थं क्वचिन्निवर्तयति– अन्ध इति । जडः बधिरः । पीठसर्पी पङ्गुः परायत्तगमनेन पीठवत् सर्पुं शीलमस्येति । सप्तत्या स्थविरः सप्तत्युत्तरवयाः । एतांश्चतुरः शुश्रूषया धनैर्वोपकुर्वन्न करं दाप्य इत्यन्वयः (?) । श्रोत्रियेष्विति विषयसप्तमी । केनचित् राज्ञा । करपदं दण्डशुल्कयोरुपलक्षणम् । मच.

(५) अब्राह्मणा अप्येते करं न दाप्याः । * नन्द.

'श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिंचनम् ।
महाकुलीनमार्यं च राजा संपूजयेत्सदा ॥

(१) संपूजनं अनुग्रहः, अनेकार्थत्वाद्धातूनाम् । न हि बालादीनामन्या पूजोपपद्यते । श्रोत्रियोऽत्र ब्राह्मण एवेति स्मरन्ति । आर्तः प्रियवियोगादिना । अकिंचनः दुर्गतः । महाकुलीनः । ख्यातिधनविद्याशौर्यादिगुणे कुले जातः महाकुलीनः । आर्यः ऋजुप्रकृतिः अवक्रः । एतेषां दानमानादिभिरनुग्रहः कर्तव्यः । केचिदकिंचनं महाकुलीनविशेषणं व्याचक्षते । मेधा.

(२) श्रोत्रियं अध्ययनानुष्ठानवन्तं ब्राह्मणम् ।

+ गोरा.

(३) आर्तं शोकेन । अकिंचनं दरिद्रम् । आर्यं आर्यप्रधानम् । संपूजयेदर्थदानेन । × मवि.

(४) श्रोत्रियं विद्याचारवन्तं ब्राह्मणम् । आर्यं उदारचरितम् । + ममु.

(५) न केवलमनादानम्, यदि ते निःस्वास्तेभ्यः प्रत्युतान्धादिद्वादशेभ्यो दानमेवेत्याह– श्रोत्रियमिति ।

+ मच.

(६) संपूजयेत् स्वयं दानादिना पूजयेत् । अनेन तेभ्योऽपि न किंचित् गृह्णीयादिति । राप्र. २७३

(७) पुनर्वृद्धग्रहणमादरातिशयार्थम् । संपूजयेत् करं नाऽऽदद्यात् । + नन्द.

---

* शेषं मेधागतम् ।

+ भाच. मविगतं ममुगतं च ।

× गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । गोरा., राप्र. ममुगतम् ।

(१) राक. ८६ ; राप्र. २५५.

(२) मस्मृ. ८।३९४ ; राक. ९१–९२ सप्तत्या (सप्तत्याः) पूप (पु प्र) दाप्याः (दाप्यः) ; मच. दाप्याः (दाप्यः); राप्र. २७२ मचवत्.

* शेषं ममुगतम् ।

+ शेषं मेधागतम् ।

× भाच. मविगतम् ।

(१) मस्मृ. ८।३९५ ; राक. १६९–१७० ; राप्र. १४० किंचनम् (किंचनौ) : २७२–२७३.

पण्यार्घस्य विंशोंऽशः करः

*[1]शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥

यानतरादिविषयकाः ग्राह्याग्राह्याः करांशाः

[2]पणं यानं तरे दाप्यं पौरुषोऽर्धपणं तरे।
पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥

(१) नदीतीरे यानं गन्त्रीशकटादि तरे पणं दाप्यम्। भाण्डपूर्णानामुत्तरत्रोपदेशात् रिक्तभाण्डानां यानानां यानद्रव्यानयनार्थमुत्तार्यमाणानामयं राजभागः। पौरुषवाह्यो भारः द्रव्यानयनार्थमानीयमानः अर्धपणं दाप्यः। पशुः गोमहिष्यादिः पादं स्त्री च। रिक्तकः न किंचित् यो गृहीतवान् भारं स पुमान् पादार्धं दाप्यः। रिक्तस्य पुंसो नदीलङ्घनसामर्थ्यसंभावनया लाघवात् अल्पमादानम्। स्त्री अशक्तत्वात् स्वयं तरणे बहु दाप्यते। तरे तरनिमित्तम्। + मेधा.

(२) नद्याद्युत्तरणे दाशादिद्वारा शुल्कविभागमाह— पणमिति। पशुयोषितोर्भारवहनाप्रसिद्धेः प्रसिद्धौ वा तन्मात्रमेव, वचनबलात्। × मच.

(३) तरे नावि। पणं पणमितं रिक्थं दाप्यम्। रिक्थं शुल्कम्। × नन्द.

(४) पणस्वरूपमाह— 'वराटकानां दशकद्वयं च सा काकिणी ताश्च पणश्चतस्रः', 'वराटकानामशीतिः पणः' इति लीलावत्याम्। × भाच.

[3]भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः।
रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः ॥

* व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राज्ञः सहायाः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

+ गोरा., मवि., ममु., राप्र. मेधागतम्।

× शेषं मेधागतम्।

(१) मस्मृ. ८।३९८.

(२) मस्मृ. ८।४०४ ; राप्र. २७० यानं तरे दाप्यं (यानतरे दाप्यः) पौरुषो (पौरुषे).

(३) मस्मृ. ८।४०५ ; राप्र. २७०.

(१) भाण्डं द्रव्यं वस्त्रव्रीह्यादि, तेन पूर्णानि यानानि सारतः तार्यं तारार्थं दाप्यानि। यदि महार्घं वस्त्रादि तत्र बह्वारोपितं तदा बहु दाप्यानि, अथ व्रीह्यादिना नातिभारेण, तदाऽल्पम्। एवं नद्याः सुतरदुस्तरत्वेन कल्पना कर्तव्या। रिक्तभाण्डानि यानानि यत्किंचित् पणपादानि(? दि)। भाण्डशब्दोऽत्र घनवचनः। ये चापरिच्छदाः ते न पादार्धम्, अपि तु यत्किंचित्ततोऽधिकं न्यूनं वा। अत्र न शक्यो नियमः, अतः कल्पनैव शास्त्रार्थः। मेधा.

(२) पण्यपूर्णानि गन्त्र्यादीनि द्रव्यगतोत्कर्षापकर्षगुरुलघुभावापेक्षया तरमूल्यं दाप्यानि। पुमांसश्च परिच्छदार्हाः वणिक्प्रभृतयोऽपि अपरिच्छदाः आयाताः यत्किंचित् दापनीयाः। अन्यस्य पुंसः 'पादार्धं रिक्तकः पुमान्' इत्युक्तम्। अत्र नियमस्य कर्तुमशक्यत्वादेतावदेवोपदेशार्थम्। एवं द्रव्यरहितानि मञ्जूषादीनि भाण्डानि यत्किंचित् स्वल्पं दाप्यानि। * गोरा.

(३) रिक्तभाण्डानि चर्मभाण्डादीनि। अपरिच्छदाः परिकरशून्याः। अत्र यानादीनां दापनं तन्नेतृपुरुषदापनपरम्। + मवि.

(४) द्रव्यरहितानि च गोणीकम्बलादीनि यत्किंचित् स्वल्पं तार्यं दाप्यानि। अपरिच्छदाः दरिद्राः उक्तपदार्थ(? पादार्ध)दानापेक्षया यत्किंचित् दापनीयाः। + ममु.

(५) रिक्तभाण्डानि घटादिशून्यस्वतन्त्राणि(?), शून्ययानं प्रति पणमात्रस्योक्तत्वात्। × मच.

(६) (रिक्त)भाण्डानि भाररहितानि यानानि यत्किंचित् द्रव्यं तत्कालसंनिहितं तार्यं दाप्यानि, परिहित(? अपरिच्छदाः)यत्किंचित् ताम्बूलादिकं तार्यं दाप्याः। + नन्द.

* राप्र., भाच. गोरागतं ममुगतं च।

+ शेषं गोरागतम्।

× शेषं गोरागतं ममुगतं च।

'दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् ।
नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥

(१) पारावारोत्तारणे पूर्वे दानम् । अयं नावा ग्रामान्तरगमने । दीर्घाध्वनि योजनादिपरिमाणेन गन्तव्ये । यथादेशं यस्मिन् देशे यत्तरिदानं नाविकैः स्थापितं तदेव । यथाकालम् । कालो वर्षादिः बहूदकः, तत्रान्यन्मूल्यम् । स्वल्पोदकायां सरिति चिरेण ग्रामप्राप्तौ नाविकानामधिकतरायासवतामधिकमूल्यम् । तरमूल्ये कारणे कार्यशब्दः 'तरो भवेत्' इति । यावद्यावद्दीर्घो देशः तावत्तावत्तरपणो वर्धते । एतच्च नदीतीरेषु विद्यात् । समुद्रे सागरे नास्ति तरलक्षणम् । न शक्यते लक्षयितुं कति योजनानि नौर्व्यूढा, येन तदनुसारेण मूल्यं कल्प्येत । नदनदीषु शक्यते ज्ञातुमयं पन्था योजनमात्रो द्वियोजन इति । तत्र हि तत्र ग्रामाः परिमाणचिह्नम् । तत्रैकयोजनेऽध्वनि यन्मूल्यं तत् द्विगुणं द्वियोजने । समुद्रे तु बहुवाह्या नौः । न च सुष्ठु शक्यते योजनादिपरिच्छेदः कर्तुम् । अत एवोक्तम्— समुद्रे नास्ति लक्षणमिति । मेधा.

(२) पारावारतरणार्थं पूर्वमुक्तम् । दूराध्वनि पुनः नदीमार्गेण नावादिना यातव्ये स्खलनाद्युपलाद्युपेतदूरदेशापेक्षया ग्रीष्महेमन्तादिकालापेक्षया तरमूल्यं कल्पयितव्यम् । एतच्च नदीतीरेषु बोद्धव्यम् । समुद्रे पुनर्वातवशतः पोतादिवहनात् आयत्तत्वाभावे सति तरमूल्यविशेषज्ञापकं नदीवत् (वि ?)योजनादिकं नास्ति । अतोऽत्रोचितमेव शुल्कं ग्राह्यम् । * गोरा.

(३) यथादेशं क्रोशमात्रं नदीपात्रमित्याद्यनुरूपेण । यथाकालं अल्पवर्मत्वेऽपि स्रोतसा विलम्बादिना । नदीतीरेषु तद्विद्यादिति । एतत् द्वयं नदीतीरेष्वेवेत्यर्थः । नास्ति लक्षणं नियामकं तत्र विलम्बादि न नियन्तुं शक्यम् । अतः तत्तरे अधिकग्रहोऽपि न दोषाय । मवि.

(४) 'पणं यानम्' इत्यादिनोक्तस्य विषयमुत्तरार्धेन नियच्छति । लक्षणं शुल्कनिर्णयम् । * नन्द.

'गार्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥

(१) द्वाभ्यां मासाभ्यामृतुदर्शनस्य व्यक्तगर्भा स्त्री भवति । तस्या अनुग्राह्यत्वात् तरपणो न ग्राह्यः । प्रव्रजितः चतुर्थाश्रमी । मुनिः तापसः । ब्राह्मणाः । लिङ्गिनः ब्रह्मचारिणः । ब्राह्मणग्रहणं विशेषणम् । तेन बाह्यप्रव्रज्यालिङ्गधारिणां नैष विधिः । तरप्रयोजनं तारिकं पणादि तरनिमित्तं न दाप्याः । वृत्तानुरोधात् तारिकमिति सिद्धे तरग्रहणम् । मेधा.

(२) गृहीतगर्भा स्त्री मासद्वयादूर्ध्वम्, प्रव्रजितः भिक्षुः, मुनिः वानप्रस्थः, ब्राह्मणाश्च लिङ्गिनः ब्रह्मचारिणः तरमूल्यं तरे न दाप्याः । + गोरा.

(३) मुनिः वनस्थः । लिङ्गिनः ब्रह्मचारिणः । तारिकं तरशुल्कम् । मवि.

(४) रिक्तपुरुषयोषितोस्तार्यत्वमुक्तम्, तद्विशेषे तन्निषेधति— गार्भिणीति । लिङ्गिनः ब्रह्मचारिणः, प्रव्रजितपदेन संन्यासिनो ग्रहणात् । * मच.

(५) लिङ्गिनः तीर्थयात्रादिपराः । ब्राह्मणग्रहणेन सिद्धेऽपि प्रव्रजितग्रहणं क्षत्रियस्य क्वचित् स्मृत्यन्तरे संन्यासो भवेदिति । * नन्द.

(६) प्रव्रजितः यतिः । मुनिः वानप्रस्थः । लिङ्गिनो गैरिकादिना । तरे कैवर्ते तारिकं मौल्यं न दाप्याः न दातुं योग्याः । भाच.

अनादेयं धनम्

'नाऽऽददीत नृपः साधुर्महापातकिनो धनम् ।
आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥

---

* मभु., मच., राप्र., भाच. गोरागतम् ।

(१) मस्मृ. ८।४०६ ; राप्र. २७०.

* शेषं गोरागतम् ।

+ मभु. गोरावत् ।

(१) मस्मृ. ८।४०७ ; राप्र. २७३ विष्णुधर्मोत्तरे.

(२) मस्मृ. ९।२४३ ; मच. 'दोषेण' इत्यत्र 'पापेन' इत्यपि पाठः .

( १ ) ननु धनेन दण्डनं राज्ञां वृत्तिरिति स्थापितम्। कथमिह तद्धनस्याग्रहणम् ? उक्तम्– 'राजभिर्धृतदण्डाः' ( मस्मृ. ८।३१८ ) इत्यत्रान्तरे । मेधा.

( २ ) धनं दण्डरूपमपि । मवि.

( ३ ) धार्मिको राजा महापातकसंबन्धिधनं दण्डरूपं न गृह्णीयात् । लोभात् पुनस्तत् गृह्णन् महापातकदोषेण संयुज्यते । * ममु.

( ४ ) दोषेण तत्तुल्यप्रायश्चित्तेन परलोकनाशेन वा लिप्यते संबध्यते । पापेनेति क्वचित् पाठः । + मच.

**'अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् ।**
**श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥**

( १ ) 'वरुणायेदम्' इति मनसा ध्यायन् अप्सु दद्यात् अप्सु निक्षिपेत् । ब्राह्मणाय वा विद्याशीलसंपन्नाय दद्यात् । × मेधा.

( २ ) का तर्हि दत्तधनस्य प्रतिपत्तिरित्येतदर्थमाह– अप्स्विति । ¶ ममु.

( ३ ) तं दण्डं दण्डधनम् । नन्द.

**'ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः ।**
**ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥**

( १ ) पूर्वस्य प्रतिपत्तिविधेरर्थवादोऽयम् । महापातकिनो दण्डस्य वरुण ईष्टे । यतो राज्ञां स दण्डधरः नेता ईशिता इति यावत् । एवं ब्राह्मणोऽपि तद्धनस्येशः, ( अतः ) अनेन ग्राह्यः । $ मेधा.

( २ ) महापातकिदण्डधनस्य वरुणः स्वामी यस्माद्राज्ञामपि दण्डधारित्वात्प्रभुः । तथा ब्राह्मणः समस्तवेदाध्यायी सर्वस्य जगतः प्रभुः । अतः प्रभुत्वात्तौ दण्डधनमर्हतः । ममु.

* नन्द०, भाच. , ममुगतम् ।

+ शेषं ममुगतम् ।

× मवि. , मच. मेधागतम् ।

¶ शेषं मेधागतम् ।

$ मवि. मेधागतम् ।

(१) मस्मृ. ९।२४४.

(२) मस्मृ. ९।२४५.



( ३ ) तद्धनस्य (वरुण)ब्राह्मणार्पणे व्रीहियववद्विकल्पद्योतकार्थवादमाह– ईश इति । वस्तुतस्तु वरुणाय संकल्प्य विप्रायोपपादयेत् । अत एव तद्धनं स्वीकर्तुर्विप्रस्य प्रायश्चित्तमाह याज्ञवल्क्यः– 'आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी मता' ( यास्मृ. ३।२५० ) इति । मच.

( ४ ) अत्र कारणमाह– ईशो दण्डस्य वरुणो राज्ञामिति । दण्डधर इत्येतत् ब्राह्मणेऽपि योजनीयम् । तस्मात्तद्धनं राज्ञा न स्वीकार्यम्, तयोरन्यतरस्मै तद्देयमिति । नन्द.

**'यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् ।**
**तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥**

( १ ) प्रसिद्धाविमावप्यर्थवादश्लोकौ । कालेन जायन्ते इति वर्तमानजन्म विवक्षितम् । जातं जनिष्यमाणं च (?)। मेधा.

( २ ) कालेन संपूर्णे गर्भे । मवि.

( ३ ) यत्र देशे प्रकृतं महापातकिधनं राजा न गृह्णाति तत्र परिपूर्णेन कालेन मनुष्या उत्पद्यन्ते, दीर्घायुषश्च भवन्ति । ममु.

( ४ ) पापिनां धनस्य राज्ञामनात्मसात्करणे हेतुतयाऽर्थवादमाह– यत्रेति द्वाभ्याम् । वर्जयते न गृह्णीयात् । दीर्घजीविनः शतोर्ध्वजीविनः । मच.

( ५ ) दण्डधनवर्जने राज्ञः फलं श्लोकद्वयेनाऽऽह– यत्र वर्जयते राजेति । धनागमः दण्डधनस्वीकारः । नन्द.

**'निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक् ।**
**बालाश्च न प्रमीयन्ते विकृतं न च जायते ॥**

(१) विकृतिः कर्णाक्षिविहानम् । मेधा.

(२) 'बाला न मीयन्ते' इति दीर्घजीवित्वस्य सार्वत्रिकत्वमुक्तम् । बालपदं गर्भपरमित्यन्ये । विकृतं अन्धत्वपङ्गुत्वादि । मवि.

(१) मस्मृ. ९।२४६.

(२) मस्मृ. ९।२४७ ; मेधा. विकृतं न ( विकृतिर्न ).

(३) वैश्यानां च यथैव धान्यादिसस्यान्युप्तानि तथैव पृथक् पृथक् जायन्ते। अकाले न बाला म्रियन्ते। दीर्घजीविन इत्युक्तेऽप्यादरार्थं बालानां पुनर्वचनम्। व्यङ्गं च न किंचिद्भूतमुत्पद्यते। ममु.

(४) विकृतम्– 'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥' इतीतयः दुर्भिक्षादि वा। * मच.

क्षीणकोशेन राज्ञा आपदि अधिकः करो ग्राह्यः

[1]चतुर्थमाददानोऽपि क्षत्रियो भागमापदि।
प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते॥

(१) राज्ञः क्षीणकोशस्य षड्भागग्रहणापवादः चतुर्थभागः अभ्यनुज्ञायते। परिशिष्टः अर्थवादः। परमिति क्रियाविशेषणम्। परया रक्षयेत्यर्थः। मेधा.

(२) इदानीं राज्ञ आपद्धर्मानाह– चतुर्थमिति। राजा आपदि धान्यादेश्चतुर्थमपि भागं करार्थं गृह्णन्, यथाऽनापदि 'धान्यानामष्टमो भागः' (मस्मृ. ७।१३०) इत्याद्युक्तम्, परया शक्त्या प्रजाः रक्षन् अधिककरग्रहणपापेन न संबध्यते। + गोरा.

(३) यत्र धान्ये अष्टमो भागो ग्राह्यः तत्र आपदि कोशक्षये रक्षार्थं चतुर्थं भागं गृह्णन् परं अत्यर्थं रक्षां कुर्वन् पापात् अधिककरादानजन्यात् प्रतिमुच्यते। मवि.

धर्म्य एव करो ग्राह्यः

[2]स्वधर्मो विजयस्तस्य नाऽऽहवे स्यात्पराङ्मुखः।
शस्त्रेण वैश्यान् रक्षित्वा धर्म्यमाहारयेद्बलिम्॥

(१) विजयशब्देन विजयफलं युद्धं स्वधर्मतया विधीयते। तथा च आहवे न स्यात् पराङ्मुखः। भये उपस्थिते पराङ्मुखो युद्धे न स्यादित्यर्थः। अनेन प्रकारेण प्रजाः रक्षित्वा वैश्यात् बलिः हारयितव्यः। वैश्या महाधना भवन्ति। ततः तथा हरणे नियुक्ताः कृतापराधाः न हन्यन्ते। मेधा.

(२) कस्मात् पुनरापद्यपि रक्षणमुच्यते? यस्मात् –स्वधर्म इति। राज्ञः शत्रुपराजयः स्वधर्मः। प्रजारक्षणप्रवृत्तस्य च यदि कुतश्चिद्भयं स्यात् तदा न युद्धपराङ्मुखः स्यात्। एवं च शस्त्रेण वैश्यान् क्षत्रियो दस्युभ्यो रक्षित्वा तेभ्यः धर्मादनपेतं आप्तपुरुषैः बलिं आहारयेत्। * गोरा.

(३) विजयः युद्धे परहिंसा स्वधर्मः असाधारणो धर्महेतुः। अतो न तत्र दोषः। धर्म्यं अनापदि वक्ष्यमाणम्। मवि.

(४) वैश्येतराणां भागमुक्त्वा राज्ञे वैश्यविषयकतद्विशेषमाह– स्वधर्म इति सार्धेन। + मच.

(५) क्षत्रियस्य मुख्या वृत्तिरेषेति श्लोकाभ्यामाह– स्वधर्म इति। + नन्द.

[1]धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम्।
कर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा॥

(१) धान्यव्यवहारिणां लाभात् अष्टमो भागो ग्रहीतव्यः। विट्शब्दः प्रजावचनः। हिरण्यव्यवहारिणां विंशतितमः। शूद्राः कर्मोपकरणाः कर्म उपकरणं उपकारः येषां न ते किंचिद्दापयितव्याः। एवं शिल्पिनः, कारवः। तदेवमुक्तं प्राक्– 'शिल्पिनो मासि मासि×' इत्यादि। अधिकभागग्रहणार्थोऽयं श्लोकः। मेधा.

(२) विशां वैश्यानां अष्टमम्, शूद्राणां चतुर्थमेव शुल्कं भागम्। विंशत्कार्षापणमिति। धान्यान्येषु

---

* शेषं ममुगतम्।

+ ममु., मच., नन्द., भाच. गोरागतम्।

(१) मस्मृ. १०।११८; राक. ८९ नोऽपि (नो हि); राप्र. २६३ राकवत्.

(२) मस्मृ. १०।११९; मेधा. वैश्यान् (वैश्यात्); राक. ८९ यस्त (ये त) नाऽऽहवे (न भये); राप्र. २६३ यस्त (ये त).

* ममु. गोरावत्।

+ शेषं गोरागतम्।

× 'कारुकाञ्छिल्पिनश्चैव' (मस्मृ. ७।१३८) इत्यादिमनुवचनार्थानुवादः।

(१) मस्मृ. १०।१२०; मेधा. ७।११८ प्रतीकमात्रम्; राक. ८९; मवि. विंशं (विंशत्) 'त्रिंशत्' इत्यपि पाठः; राप्र. २६३ कर्मो (धर्मो).

विंशत् विंशतिकार्षापणमूल्यम् । तादृशालाभे कार्षापण एको राज्ञा ग्राह्य इत्यवरः पक्षः । संभवे त्वधिकमपि ग्राह्यमित्यर्थः । कर्मोपकरणाः कर्मभिः विश्वमुपकुर्वन्तः तन्तुवायादयः शूद्राः, कारवः वर्णग्राह्याः नटचित्रकाराद्याः, शिल्पिनश्च रथकाराद्याः । तेऽपि कर्म कृत्वा भृतित्वेऽपि ( ? भृतित्वेन ) विंशतिकार्षापणालाभे कार्षापणावरं शुल्कम्, दद्युरिति शेषः । 'त्रिंशत्कार्षापणावरम्' इति क्वचित् पाठः । मवि.

(३) कोऽसौ बलिस्तमाह— धान्य इति । धान्यविषये उपचये वैश्यानामष्टमं भागं शुल्कमाहारयेत् । धान्यानां द्वादशोऽपि भाग उक्तः । आपदि अयमष्टम उच्यते । अत्यन्तापदि प्रागुक्तश्चतुर्थो वेदितव्यः । तत्रापि विंशं ग्राह्यम् ( ? ) । तथा हिरण्यादीनां कार्षापणान्तानां विंशतितमं भागं शुल्कं गृह्णीयात् । तत्रापि 'पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः' (मस्मृ. ७।१३०) इत्यनापदि पञ्चाशद्भाग उक्तः । आपद्ययं विंश उच्यते । तथा शूद्राः, कारवः सूपकारादयः, शिल्पिनः तक्षादयः कर्मणैवोपकुर्वन्ति, न तु तेभ्य आपद्यपि करो ग्राह्यः । * ममु.

( ४ ) धर्म्यं बलिमाह— धान्य इति । अनापदि विंशं धान्यानां द्वादश भाग उक्तः, हिरण्यादिकार्षापणानां तु पञ्चाशद्भागः, अत्र तु तेषां संकोच उक्तः— 'धान्यानामष्टमो भागः षष्ठो द्वादश एव वा' (मस्मृ. ७।१३०) इत्युक्तत्वात् । तत्र विंशं प्रति षष्ठांशग्रहणे सपादाढकत्रयम्, द्वादशांशग्रहणे किंचिदधिकसार्धाढकम्, चतुर्थांशग्रहे त्वाढकपञ्चकम् । एवं च सुवर्णादिषु विंशं प्रति तोलकमन्यत्रैवम् । परिचारककारुशिल्पिनां तु विशेषमाह— कर्मेति । कर्मोपकरणाः कर्मैव उपकरणं करः येषां ते तथा । तेषामपि विंशं प्रति एकैकः स्वकर्मणि प्रयोक्तव्यः । अनापद्यपि ते करदा इत्यर्थः । मच.

( ५ ) विंशां कार्षापणावरं यः शुल्कः धान्यव्यतिरिक्तेषु विंशो भागः पूर्वमुक्तः स पणः कार्षापणावरः कार्षापणात् न्यूनतरः चेत् न ग्राह्यः । कर्मोपकरणाः कर्मोपकारिणः । करार्थे कर्मैव शूद्रादीन् कारयेत्, नार्थं दापयेदित्यर्थः । नन्द.

* गोराख्यानमशुद्धिसंदेहान्नोद्धृतम् । तच्च ममुगतम् । भाच. ममुगतम् ।

## याज्ञवल्क्यः

### धनार्जनपालनदानविधिः

**'अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ।**
**पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥**

(१) किं पूर्वार्जितमापदर्थे स्थितं भाण्डागारादेव दातव्यम् ? नेत्युच्यते— धर्मेणेति । स्पष्टार्थः श्लोकः । विश्व.

(२) वसूनि विप्रेभ्यो दद्यादित्युक्तम्, कया परिपाट्या दद्यादित्याह— अलब्धमिति । अलब्धलाभाय धर्मशास्त्रानुसारेण यतेत । यत्नेन लब्धं तत् परिपालयेत् स्वयमवेक्षया रक्षेत् । पालितं तत्परतया रक्षितं नीत्या वणिक्पथादिकया वृद्धिं नयेत् । वृद्धं च पात्रेषु त्रिविधेषु धर्मार्थकामपात्रेषु निक्षिपेत् दद्यात् । मिता.

(३) एवं दीयमानं धनं यतोऽत्यन्तोपकारकं भवत्यतस्तदर्जनादिकं यथा कार्यं तदाह— अलब्धमिति । अलब्धं अप्राप्तं धर्मेण ईहेत लिप्सेत । आत्मसात्कृतं यत्नेन तत्प्रणिधानेन पालयेत् रक्षयेत् ( ? क्षेत्) । पालितं च नीत्या शास्त्रोक्तेन प्रकारेण वर्धयेत् उपचयं गमयेत् । विवृद्धं च पात्रेषु विद्यातपोवृत्तसंपन्नेषु निक्षिपेत् दद्यात् । अप.

( ४ ) धनागमसमीहाधनपालनवर्धनानि कुर्यात् । पात्रेषु विश्वासपात्रेषु निःक्षिपेत् । धर्मेणेति सर्वत्रान्वयः । धर्मेण दण्डविजयकरादिना । वृद्धं भोगाद्युर्वरितम्, 'धनं

(१) **यास्मृ.** १।३१७ ; **विश्व.** १।३१३ प्रथमचरणे ( धर्मेण लब्धुमीहेत ) न्नीत्या ( न्नित्यं ) ; **मिता.** ; **अप.** १।३१५–३१६ प्रथमचरणे ( धर्मेणालब्धमीहेत ) इति पाठो व्याख्यानान्निष्पद्यते ; **राक.** १४८ प्रथमचरणे ( धर्मेणालब्धमीहेत ) न्नीत्या ( न्नित्यं ) ; **रार.** ७ न्नीत्या ( न्नित्यं ) निक्षि ( निःक्षि ) ; **वीक.** प्रथमचरणे ( धर्मेणार्जितुमीहेत) ; **वीमि.** प्रथमचरणे ( धर्मेण लब्धुमीहेत ).

दानाय भुक्तये' इति स्मृतेः। 'वृद्धं व्यावहारिकधनात्' इति नीतिकल्पतरुः। रार. ७-८

(५) अर्जितुं धर्मेण जेतुं ईहेत। जितं यत्नतो रक्षेत्। * दीक.

(६) ब्राह्मणसंप्रदानस्य चरमफलत्वमभिदधान एव न्यायोपार्जितधनस्य दानाङ्गत्वमाह– धर्मेणेति। धर्मेण धर्मोपायेन धनं लब्धुं स्वीकर्तुमीहेत चेष्टेत। + वीमि.

भाण्डागारेषु हिरण्यस्य निक्षेप एव

×[1]हिरण्यं व्यापृतानीतं भाण्डागारेषु निक्षिपेत्॥

(१) एवं स्वपरराष्ट्रव्यवस्थया द्रव्यार्जनविधिरुक्तः। तत् पुनर्द्रव्यं किमुत्पन्नमेव पात्रे समर्पणीयम्, तदर्थत्वादुत्पादनस्य? एवमिति प्राप्ते आह– हिरण्यमिति। सर्वाधिकारव्यापृतैराहृतमात्रं भाण्डागार एव न्यसेत्, न दद्यात्। तत एव हेतोः 'वृद्धं पात्रेषु निक्षिपेत्' इति। विश्व.

(२) व्यापृतानीतं नियुक्तैः आनीतम्। कोषस्य भाण्डागारादयो भेदाः, अत्र बहुवचननिर्देशात्। तदाह राजनीतौ महाभारते च– 'कोषस्य संचये यत्नं कुर्वीथा न्यायतः सदा। विविधस्य महाराज विपरीतं विपर्ययात्॥' (भा. १५।१०।९), नीतौ– 'संवर्धयेत्सदा कोषमाप्तैस्तज्ज्ञैरधिष्ठितम्। काले चास्य व्ययं कुर्यात्त्रिवर्गपरिवृद्धये॥' (कानी. ५।८६)। रार. ३२

अन्यायेन कोशवृद्धिर्निषिद्धा

‡[2]अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत्।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः॥

निधिलाभे नष्टापहृतलाभे च व्यवस्था

*[1]प्रनष्टाधिगतं देयं नृपेण धनिने धनम्।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति॥
[2]राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः॥

(१) यत्तूत्सन्नस्वामिकं निध्यादिकं तत्र का कथा? उच्यते– राजेति। 'स सर्वस्य प्रभुः' इत्यनेन प्रतिग्रहाद्यभावेऽपि स्वत्वसंबन्धोऽस्तीति ज्ञापयति। विश्व.

(२) रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ चिरनिखातस्य सुवर्णादेः निधिशब्दवाच्यस्याधिगमे विधिमाह– राजेति। उक्तलक्षणं निधिं राजा लब्ध्वा अर्धं ब्राह्मणेभ्यो दत्त्वा शेषं कोशे निवेशयेत्। ब्राह्मणस्तु विद्वान् श्रुताध्ययनसंपन्नः सदाचारो यदि निधिं लभेत तदा सर्वमेव गृह्णीयात्। यस्मादसौ सर्वस्य जगतः प्रभुः। + मिता.

(३) अस्वामिकनिधिसमधिगमविषयमिदानीमाह– राजेति। निधिं हिरण्यादिकं क्षितेरन्तर्हितं अप्रज्ञायमानस्वामिकम्। × अप.

(४) परनिहितविषयमप्येतत्। यथा भारद्वाजः– 'परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम्। राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते॥'। × दीक.

(५) निधौ तु विशेषमाह– राजेति। द्विजः ब्राह्मणः क्षत्रियो वैश्यश्च श्रुताध्ययनसंपन्नः सदाचारः निधिं लब्ध्वा तं राज्ञे निवेद्य सर्वं गृह्णीयात्। अविदुषामेतेषां विशेष उक्तो विष्णुना– 'निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात्। क्षत्रियश्चतुर्थमंशं राज्ञे दद्याच्चतुर्थमंशं ब्राह्मणेभ्योऽर्धमा-

---

* शेषं अपगतम्।

+ शेषं मितागतम्।

× अवशिष्टव्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९५३) द्रष्टव्यः।

‡ व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः– राष्ट्रम्' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(१) यास्मृ. १।३२८.

(२) यास्मृ. १।३४०.

* व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ७१७) द्रष्टव्यः।

+ वीमि. मितागतम्।

× शेषं मितागतम्।

(१) यास्मृ. २।३३.

(२) यास्मृ. २।३४; विश्व. २।३६; मिता.; अप.; वीमि.; राप्र. २६६.

दद्यात् । वैश्यस्तु चतुर्थमंशं राज्ञे दद्यात् ब्राह्मणेभ्योऽर्धं चतुर्थमंशमादद्यात् ।' ( विस्मृ. ३।५८–६० ) इति । अत्र 'ब्राह्मणः' इति सामान्यवचनात् योगीश्वरवाक्ये ब्राह्मणांशे विद्वत्त्वमविवक्षितम् । इतरेण शूद्रेण लब्धे निधौ राजा तस्मै षष्ठमंशं दद्याच्छेषं गृह्णीयादिति व्याख्येयम्, 'अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदद्यात्' ( वस्मृ. ३।१४ ) इति वसिष्ठस्मरणात्, 'निध्यधिगमो राजधनम् । न ब्राह्मणस्याभिरूपस्य । अब्राह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येके ।' ( गौध. १०।४२–४४ ) इति गौतमस्मरणाच्च । तथा च शूद्राय षष्ठं दत्त्वा शेषं ग्राह्यमिति सिद्धम् । स्वयंगृहीतादर्धं ब्राह्मणेभ्यो दद्यादित्याह विष्णुः— 'शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान् राज्ञे दद्यात् । पञ्चांशान् ब्राह्मणेभ्यो दत्त्वाऽवशिष्टमंशद्वयमादद्यात् ।' ( विस्मृ. ३।६१ ) इति । इति विष्णुयाज्ञवल्क्यवाक्ययोर्व्यवस्थां केचिदाहुः ।

परे तु द्विजशब्दो ब्राह्मणवचनः, सामान्यशब्दस्य विशेषपरत्वात् । तच्च शक्त्या लक्षणया वेत्यन्यदेतत् । विष्णुवाक्यानुरोधाचात्र विद्वत्त्वमविवक्षितम् । एवमितरपदमपि शूद्रपरमेव, भवतामपि वसिष्ठवाक्ये यत्पदस्य गौतमवाक्ये च अब्राह्मणपदस्य विशेषपरत्वावश्यकत्वात् । इत्थं च क्षत्रियवैश्ययोः साधारण्येन विष्णूक्ता व्यवस्थेत्याहुः ।

यत्तु विज्ञानेश्वरेण— द्विजपदं ब्राह्मणपरम्, इतरपदं चाविद्वद्ब्राह्मणक्षत्रियादिपरमित्युक्तम्, तच्च विष्णुस्मृत्यदर्शननिबन्धनम् । विज्ञानेश्वरानुयायिनस्तु विज्ञानेश्वरव्याख्याततात्पर्यकयोगीश्वरविष्णुस्मृत्योर्विकल्पमाहुः । ते श्रद्धामन्दधिय उपेक्ष्याः ।

अपरार्कस्तु इतरपदं अविद्वद्ब्राह्मणपरमिति प्राह । तस्यायमाशयः— अविद्वद्ब्राह्मणपरं गोरक्षकादिब्राह्मणपरम्, तथा चैते षष्ठांशभागिन इत्यर्थः, 'गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥' ( मस्मृ. ८।१०२ ) इति स्मरणात् । अत्र विप्रपदं नीचकर्मकर्तृक्षत्रियवैश्ययोरप्युपलक्षकम् । इत्थं च विद्वत्क्षत्रियवैश्ययोर्विष्णूक्ता व्यवस्थेति । विज्ञानेश्वरोक्तमप्येवमर्थकत्वे साधु संगच्छते इति दिक् ।

अनिवेदित इति कर्तरि निष्ठा । तथा चायमर्थः— यो निधिं लब्ध्वा राज्ञे न निवेदितवान्, राज्ञा च निध्यधिगन्तृत्वेन विज्ञातः, स तं निधिं दाप्यः शक्त्यपेक्षया दण्डं चेति । तथा च विष्णुः— 'अनिवेदितविज्ञातस्य सर्वमपहरेत्' ( विस्मृ. ३।६२ ) इति । अनुलोमजानां मूर्धावसिक्तादीनां क्षत्रियादिवन्निर्णयः, मातृसमानधर्मत्वात् । प्रतिलोमजानां तु शूद्रवत्, शूद्रसमानधर्मत्वादिति । * राप्र. २६६–२६९

**†इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।**
**अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ॥**

( १ ) इतरेण ब्राह्मणेनैव अनभिरूपेणेत्यर्थः । गौतमीयं त्वब्राह्मणविषयं 'निध्यधिगमो राजधनम्' ( गौध. १०।४२ ) इति । यावान् निध्यधिगमः स सर्वो राजधनमित्यर्थः । तथा च 'न ब्राह्मणस्याभिरूपस्य' इत्युक्त्वाऽऽह— 'अब्राह्मणोऽप्याख्याता षष्ठं लभेतेत्येके' ( गौध. १०।४३–४४ ) इति । अनाख्याय तु गृह्णन् ब्राह्मणोऽपि सर्वमादाय शक्त्यनुरूपेण दण्ड्यः स्यात् । विद्वांस्तु 'स सर्वस्य प्रभुः' इति वचनात् अनाख्यायापि गृह्णन् न दोषभागित्यर्थः । विश्व.

( २ ) इतरेण तु राजविद्वद्ब्राह्मणव्यतिरिक्तेन अविद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं स्वयमाहरेत् । यथाऽऽह वसिष्ठः— 'अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेत् षष्ठमंशमधिगन्त्रे दद्यात्' (वस्मृ. ३।१४) इति । गौतमोऽपि— 'निध्यधिगमो राजधनं भवति । न ब्राह्मणस्याभि-

---

* शेषं मितागतम् ।

† राप्रव्याख्यानं 'राजा लब्ध्वा' इत्यादिपूर्वश्लोके संगृहीतम् ।

(१) **यास्मृ.** २।३५ ; **विश्व.** २।३७ स्तं द (स्तद्); **मिता.**; **अप.**; **वीमि.**; **राप्र.** २६६.

रूपस्य । अब्राह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येके । ' ( गौध. १०।४२-४४ ) इति । अनिवेदित इति कर्तरि निष्ठा । अनिवेदितश्चासौ विज्ञातश्च राज्ञेऽप्य( ? ज्ञेत्य )-निवेदितविज्ञातः । यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान् विज्ञातश्च राज्ञा, स सर्वं निधिं दाप्यो दण्डं च शक्त्यपेक्षया । अथ निधेरपि स्वाम्यागत्य रूप-संख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं दत्वा षष्ठं द्वादशं वांऽशं स्वयमाहरेत् । यथाऽऽह मनुः— ' ममायमिति यो ब्रूयान्निधिं सत्येन मानवः । तस्या-ऽऽददीत षड्भागं राजा द्वादशमेव वा ॥ ' ( मस्मृ. ८।३५ ) इति । अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः । मिता.

(३) विद्वद्व्यतिरिक्तेन निधौ दृष्टे आह— इतरेणेति । इतरेण अविदुषा ब्राह्मणेन निधौ लब्धे प्राप्ते तस्य षष्ठमंशं राजा जनपदपालकः आहरेत् अधिगच्छेत् । यः पुनः अनिवेदितविज्ञातः । निवेदनमत्र निधिलाभ-कथनम् । तदेव निवेदितम् । तत् अस्य न विद्यते इति अनिवेदितः । स चासौ विज्ञातश्च इति अनिवेदित-विज्ञातः । स तं निधिं दण्डं च दाप्यः । एतदुक्तं भवति— निधिं लब्ध्वा यः राज्ञे न निवेदयति ततः निधिः दण्डश्च राज्ञा ग्राह्य इति । अप.

( ४ ) ब्राह्मणेन अविदुषा क्षत्रियादिना च स्वकीय-निधौ लब्धे राजा षष्ठमंशं गृह्णीयात् । मन्वादौ अल्प-भागग्रहणं अधिगन्तृगुणवत्त्वापेक्षया ज्ञेयम् । अस्वकीय-निधौ तु निधिहर्त्रे षष्ठभागं दत्वा अवशिष्टं राजा गृह्णी-यात् । अस्वामिकं ज्ञातस्वामिकं च यदा अनिवेदितं राज्ञा ज्ञातं तदा तद्धनं दण्डं च निधिहर्ता दाप्यः । तथा नारदः— ' ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत् । तेन दत्तं तु भुञ्जीत स्तेनः स्यादनिवे-दयन् ॥ ' ( नास्मृ. ८।७ ) इति । दीक.

( ५ ) ' दाप्य एव ' इत्येवकारेण स्वल्पमपि निधि-भागं न ग्राहणीय इति दर्शितम् । चकारः पूर्वार्धान्वयी द्वादशांशाहरणादिसमुच्चयार्थः । तदाह मनुः— ' ममाय-मिति यो ब्रूयान्निधिं सत्येन मानवः । तस्याऽऽददीत षड्भागं राजा द्वादशमेव वा ॥ ' ( मस्मृ. ८।३५ ) इति । द्वादशमिति सगुणपरम् । * वीमि.

†शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक् संवत्सरात्स्वामी हरेत परतो नृपः ॥

( १ ) अर्वाक् संवत्सरात् स्वामी गृह्णीयात्, परतो नृपतिर्गृह्णीयात् । विश्व.

( २ ) राजपुरुषानीतं प्रत्याह— शौल्किकैरिति । यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपार्श्वे प्रत्यानीतं तदा संवत्सरादर्वाक् प्राप्तश्चेत् नाष्टिकः तत् द्रव्यमवाप्नुयात् । ऊर्ध्वं पुनः संवत्सरात् राजा गृह्णीयात् । स्वपुरुषानीतं च द्रव्यं जनसमूहेषूद्घोष्य यावत् संवत्सरं राज्ञा रक्षणीयम् । यथाऽऽह गौतमः— ' प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । विख्यातं संवत्सरं राज्ञा रक्ष्यम् । ' ( गौध. १०।३५-३६ ) इति । यत् पुनर्मनुना विध्यन्तरमुक्तम्— ' प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्धरेत् स्वामी परतो नृपतिर्हरेत् ॥ ' ( मस्मृ. ८।३० ) इति, तत् श्रुतवृत्त-संपन्नब्राह्मणविषयम् । रक्षणनिमित्तषड्भागादिग्रहणं च तेनैवोक्तम्— ' आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः । दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥ ' ( मस्मृ. ८।३३ ) इति । तृतीयद्वितीयप्रथमसंवत्सरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः । प्रपञ्चितं चैतत् पुरस्तात् । ¶ मिता.

( ३ ) मन्वादिभिः ' प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ' ( मस्मृ. ८।३० ) इति त्र्यब्दं यावत् राज्ञा रक्षणीयमिति यदुक्तं तत् सुवर्णादिस्थास्नुद्रव्यपरम् । * दीक.

---

* शेषं मितागतम् ।

† राप्रव्याख्यानमस्मिन् प्रकरणे ' आददीताथ ' (मस्मृ. ७।१३१ ) इत्यादिमनुश्लोके द्रष्टव्यम् ।

¶ वीमि. मितागतम् ।

(१) यास्मृ. २।१७३ ; विश्व. २।१७७ हरेत ( लभेत ) ; मिता. २।३३, १७३ ; अप. ; वीमि. ; राप्र. २६५.

[1]पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

(१) पारितोषिकान् राज्ञे— पणानिति । विश्व.

(२) मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषेऽपवादमाह— पणानिति । एकशफे अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान् दद्यात् । मानुषे मनुष्यजातीये द्रव्ये पञ्च पणान् । महिषोष्ट्रगवां रक्षणनिमित्तं प्रत्येकं द्वौ द्वौ पणौ । अजाविके पुनः प्रत्येकं पादं पादम् । दद्यादिति सर्वत्रानुषज्यते । अजाविकमिति समासनिर्देशेऽपि पादं पादमिति वीप्साबलात् प्रत्येकं संबन्धोऽवगम्यते । * मिता.

(३) द्रव्यविशेषं प्रति यावदधिगमे देयं तदाह— पणानिति । अश्वादि एकशफम्, तस्मिन्नधिगते अधिगन्त्रे स्वामी चतुरः कार्षापणान् दत्त्वा तदाददीत । अजासु अविकेषु च प्रत्येकं कार्षापणस्य पादम् । एतच्च प्रतिव्यक्ति देयम्, न तु प्रतिजाति । $ अप.

(४) प्रनष्टद्रव्यरक्षानिबन्धनां भृतिमाह— पणानिति । $ वीमि.

धूतस्य करांशग्रहणम्

‡ [2]ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥
स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ॥

व्यवस्थापितपण्यार्घे करांशः, राज्ञा प्रतिषिद्धं राजयोग्यं च राजगामि

[3]अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।
व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥

* दीक. मितानुवादः । $ शेषं मितागतम् ।

‡ व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राज्ञः सहायाः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) यास्मृ. २।१७४ ; विश्व. २।१७८ ; मिता. ; अप. ; वीमि.

(२) यास्मृ. २।१९९-२००.

(३) यास्मृ. २।२६१ ; विश्व. २।२६६ द्विंशं भागं शुल्कं (च्छुल्कं विंशद्भागं) ; मिता. ; अप. ; वीमि.

(१) इदानीं राजभाव्यं निरूपयति— अर्घेति । योऽर्घः राज्ञा प्रक्षिप्तः स्थापितः तत एवार्घस्थापनात् विक्रीतानां विंशतिभागो राजभाव्यः शुल्कः क्रेतृविक्रेतृभ्यामुभाभ्यामन्योन्यमिच्छयाऽन्यतरेण वा देयः । यच्च राज्ञा व्यासिद्धं राजयोग्यं च हस्त्यादिद्रव्यं राजन्यनावेद्य अनाख्याय विक्रीतं तत् राजगाम्येव सर्वमित्यवसेयम् । विश्व.

(२) इयतः पण्यस्येयन्मूल्यमित्यर्घः, तस्य प्रक्षेपणात् राजतो निरूपणाद्धेतोः असौ मूल्यात् विंशतितममंशं शुल्कार्थं गृह्णीयात् । यत् पुनः व्यासिद्धं अन्यत्र न विक्रेयमिति राज्ञा प्रतिषिद्धम्, यच्च राजयोग्यं मणिमाणिक्यादि अप्रतिषिद्धमपि, तत् राज्ञे अनिवेद्य लाभलोभेन विक्रीतं चेत् राजगामि । मूल्यदाननिरपेक्षं तत् सर्वं पण्यं राजाऽपहरेदित्यर्थः । * मिता

(३) केचित्तु राज्ञा भागो न ग्राह्यः, किंतु पण्यमेव तन्मूल्यं वा संपूर्णं राज्ञा ग्राह्यमित्याहुः । $ वीमि.

## नारदः

वणिक्शुल्कः

[1]शुल्कस्थानं वणिक् प्राप्तः शुल्कं दद्याद्यथोपगम् ।
न तद्व्यतिहरेद्राज्ञां बलिरेष प्रकल्पितः ॥

शुल्कस्थानं प्राप्तो वणिक् यथाप्राप्तं शुल्कं दद्यात् । न शुल्कं व्यतिहरेत् । व्यतिहरणं अदानम् । दद्यादेव । यतो राज्ञां भाग एष प्रकल्पितः । 'प्रवर्तितः' इत्यन्यः पाठः । नाभा.

अस्वामिकधनस्य निधेश्च व्यवस्था

[2]अस्वामिकमदायादं दशवर्षोषितं ततः ।
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥

* अप., दीक., मितागतम् ।

$ शेषं मितागमम् ।

(१) नासं. ४।१२ ; नास्मृ. ६।१२ पगम् (दितम्) राज्ञां (राज्ञो) प्रकल्पितः (प्रकीर्तितः).

(२) नासं. ४।१६ ; नास्मृ. ६।१८ वर्षोषितं (वर्षस्थितं).

अस्वामिकं विनष्टस्वामिकं अविद्यमानदायादबन्धुज्ञातिकं दशवर्षस्थितं ततः ऊर्ध्वं राजा तत् द्रव्यं आत्मसात् कुर्यात् । एवं धर्मो न हीयते । ऊर्ध्वं यदि कश्चिदागच्छेत् इच्छातो दानमदानं वेति । नाभा.

[1]परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् ।
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ॥

परेण निहितं निधिं यो लभेत स राज्ञे ढौकयेत् । अत्र हेतुमाह— अस्वामिकं राजगामि यतः सर्वं तस्मात् तस्योपहरेत् ब्राह्मणवर्जम् । तेन यल्लब्धं तदात्मन एव । इतरो यत् राजा तुष्टो ददाति तदेव लभते इति । नाभा.

[2]सभिकः कारयेद्द्यूतं दद्याद्देयं च तत्कृतम् ॥

सभिकः देवयिता । स कारयेत् । तन्निमित्तं च देयं राजकुले । नाभा.

षष्ठांशातिरिक्तं ब्राह्मणाय दत्तं राज्ञाऽनुमन्तव्यम्

[3]यदा च कश्चित्स्वं द्रव्यं ब्राह्मणेभ्यः प्रयच्छति ।
तद्राज्ञाऽप्यनुमन्तव्यमेष धर्मः सनातनः ॥

[4]अन्यत्र कारादुचिताद्भूमेः षड्भागसंज्ञितात् ।
बलिः स तस्य विहितः प्रजापालनवेतनः ॥

राज्ञाऽनुमन्तव्यमित्युक्तम् । तत्र कारात्, कारः करः, उचितात् षड्भागात् धनान्ना(? धनादन्यत्रा)नुमन्तव्यम् । विहितो बलिः वृत्तिः स तस्य प्रजापालनवृत्तिः । तस्मात् राज्ञा नानुमन्तव्यम् । नाभा.

(१) नासं. ८।६ ; नास्मृ. १०।६.

(२) नासं. १८।२ ; नास्मृ. १९।२ दद्याद्देयं च ( देयं दद्याच्च ).

(३) नासं. १९।४४ ; नास्मृ. २०।४७ यदा च ( य एव ) स्वं द्र ( स्वद्र ).

(४) नासं. १९।४५ ; नास्मृ. २०।४८ त्र कारा ( प्रकारा ) वेतनः ( वेतनम् ).

## बृहस्पतिः

कृषिवलवणिग्भ्यः करादानरीतिः

[1]*दशाष्टषष्ठं नृपतेर्भागं दद्यात्कृषीवलः ।
खिलाद्वर्षावसन्ताच्च कृष्यमाणाद्यथाक्रमम् ॥

[2]देशस्थित्या बलिं दद्युर्भूतं षण्मासवार्षिकम् ।
एष धर्मः समाख्यातः कीनाशानां पुरातनः ॥

भूतं यथाव्यवस्थितम् । कीनाशः कृषीवलः । ‡ राक. ९०

[3]शुल्कं दद्युस्ततो मास एकैकं पण्यमेव च ।
अर्घावरं च मूल्येन वणिजस्ते पृथक् पृथक् ॥

[4]शुल्कस्थानं वणिक् प्राप्तः शुल्कं दद्याद्यथोचितम् ।
न तद्व्यभिचरेद्राज्ञां बलिरेष प्रकीर्तितः ॥

## बार्हस्पत्यसूत्रम्

अर्थप्रयोजनम्

[5]अर्थमार्जयेत् ॥

यस्यार्थराशिरस्ति तस्य मित्राणि धर्मश्च विद्या च गुणविक्रमौ च बुद्धिश्च ॥

अधनेनार्थमार्जयितुं न शक्यते गजोऽगजेनेव ॥

धनमूलं जगत् ॥

सर्वाणि तत्र सन्ति ॥

निर्धनो मृतश्चण्डालश्च ॥

* राप्रव्याख्यानं 'पञ्चाशद्भाग०' ( मस्मृ. ७।१३० ) इत्यादिमनुश्लोके अस्मिन्नेव प्रकरणे द्रष्टव्यम् ।

‡ राप्र. राकवत् ।

(१) राक. ८९ ; राप्र. २६३ वलः ( वलम् ).

(२) राक. ९० ; राप्र. २६३.

(३) मभा. १०।३४ ( शुल्कं दद्यात्ततो मासमेकैकं पण्यमेव च । अर्घार्घावरमूल्येन वणिजस्ते पृथक्पृथक् ॥ ) ; गौमि. ११।२५ दद्यु ( दद्यु ) मास ए ( मासमे ) अर्घा ( अर्घा ) ; राप्र. २७३.

(४) अप. २।२६२.

(५) बासू. ६।७–१२.

## कात्यायनः

षष्ठांशः करः

[1]भूस्वामी तु स्मृतो राजा नान्यद्रव्यस्य सर्वदा।
तत्फलस्य हि षड्भागं प्राप्नुयान्नान्यथैव तु ॥
[2]भूतानां तन्निवासित्वात्स्वामित्वं तेन कीर्तितम्।
तत्क्रियाबलिषड्भागं शुभाशुभनिमित्तजम् ॥

राज्ञा कर्षकवणिगादिभ्यः किमिति करो ग्राह्य इत्यपेक्षिते आह— भूस्वामीति। अस्यार्थः— राजा भुवः स्वामी स्मृतः। अन्यद्रव्यस्य भूमिसंबद्धद्रव्यस्य न स्वामी। अन्यथा भूमिस्वाम्याभावे। भूतानां प्राणिनां तन्निवासित्वात् भूनिवासित्वात् स्वामित्वम्, राज्ञ इति शेषः। इत्यतः तत्क्रियाबलिषड्भागं प्राप्नुयात्। राप्र. २७०–२७१

अन्यायेन लोभेन करादानं निषिद्धम्

[3]अन्यायेन हि यो राष्ट्रात्करं दण्डं च पार्थिवः।
सस्यभागं च शुल्कं चाप्याददीत स पापभाक् ॥
[4]एवं प्रवर्तते यस्तु लोभं त्यक्त्वा नराधिपः।
तस्य पुत्राः प्रजायन्ते राष्ट्रं कोशश्च वर्धते ॥

## उशना

करप्रकल्पनविवेकः

[5]देशकाललाभानुरूपतः करान् प्रकल्पयेत् ॥
[6]शिल्पिनो मासि मासि कर्मैकं प्रोक्तम्। तदभावे कार्षापणं वा दद्यात् ॥
[7]विद्याभिजनयुक्तान् पूर्वदृष्टप्रमाणान् वृद्धान् निधिपालने नियुञ्ज्यात् ॥

(१) राक. ९० नान्यद्र (नान्यद्द्र); राप्र. २७१.
(२) राक. ९०; राप्र. २७१.
(३) राक. ९३; राप्र. २७६.
(४) राक. ९४; राप्र. २७६.
(५) मभा. १०।२७.
(६) मभा. १०।३१.
(७) मभा. १०।३६.

## यमः

अकरा जनाः

[1]वानप्रस्थाः परिव्राजः श्रोत्रियाश्चाऽऽहिताग्नयः।
षड्भागस्य प्रदातारो नैते राज्ञो हिरण्यदाः ॥

(१) षड्भागस्य पुण्यषड्भागस्य। राक. ८५
(२) षड्भागस्य, स्वकृतस्य श्रेयस इति शेषः। राप्र. २५५

## व्याघ्रः

कोशवृद्धिरीतिः

[2]कुटुम्बपोषणं कुर्यान्नित्यं कोशं च वर्धयेत्।
आपदोऽन्यत्र तं कोशं न गृह्णीयात्कदाचन ॥

## पराशरः

राज्ञः षष्ठांशः करः

[3]राज्ञे दत्त्वा तु षड्भागं देवानां चैकविंशकम्।
विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते ॥

दातव्यस्य धान्यस्य परिमाणमाह— राज्ञ इति। षट्सु भागेषु एको भागः षड्भागः। एकविंशतिसंख्यकेषु भागेषु अन्यतमो भागः एकविंशकः। तद्वत् त्रिंश-(त्संख्य)केषु भागेषु अन्यतमो भागः त्रिंशः इति ज्ञेयम्। देववत्पितृभ्योऽपि देयः। तदुक्तं कूर्मपुराणे— 'देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम्। त्रिंशद्भागं तु विप्राणां कृषिं कुर्वन्न दोषभाक् ॥' इति। पमा. ४३४

## बृहत्पराशरः

कृषीवलात् सस्यभागः ग्राह्यः न कृषिकर्तुः ब्राह्मणात्

[4]ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः ॥

(१) राक. ८५; राप्र. २५५.
(२) मभा. १०।२९ आपदोऽन्यत्र तं (अन्यत्राऽऽपत्तितः); गौमि. १०।३० वर्ध (धार) तं कोशं (कोशात्तु); राप्र. २७२.
(३) पस्मृ. २।१७.
(४) बृपसं. ५।१४९–१५८.

सस्यभागः प्रदातव्यो यतस्तौ कृषिभागिनौ ।
ब्राह्मणस्तु कृषिं कुर्वन् वाहयेदिच्छया धराम् ॥
न किंचित्कस्यचिद्द्यात्स सर्वस्य प्रभुर्यतः ।
ब्रह्मा वै ब्राह्मणं चाऽऽस्यात्प्रभुत्व-
सृजदादितः ॥
तद्रक्षणाय बाहुभ्यामसृजत्क्षत्रियानपि ।
पशुपाल्याशनोत्पत्त्यै ऊरुभ्यां च तथा विशः ॥
द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत् ।
यत्किंचिज्जगतीहात्र भूगेहाश्च गजादिकम् ॥
स्वभावेन हि विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किंचित्प्रजाधर्माभिरक्षणे ।
तस्मान्न ब्राह्मणो दद्यात्कुर्वाणो धर्मतः कृषिम् ॥

कृषिप्रयोजनानि

ग्रामेशस्य नृपस्यापि कियन्तमप्यसौ बलिम् ।
अथान्यत्संप्रवक्ष्यामि कृषिकृच्छुद्धिकारणम् ॥
संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वसत्त्वोपकाराय सर्वयज्ञोपसिद्धये ॥
नृपस्य कोशवृद्ध्यर्थं जायते कृषिकृन्नरः ।
कुर्यात्कृषिं प्रयत्नेन सर्वसत्त्वोपजीविनीम् ॥

यतस्ततोऽपि अर्थार्जनं राज्ञः कर्तव्यम्

[1]मत्वा चार्थवतः सर्वान् युक्तानप्यर्थकृद्भवेत् ।
सार्थकांश्च नियुञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
प्रविशन्तीव तोयानि सर्वाण्यपि हि सागरे ॥
नृपस्याऽऽपदि जातायां देवद्रव्याणि कोशवत् ।
आदाय रक्षेदात्मानं पुनस्तत्र च निःक्षिपेत् ॥
वित्तं वार्धुषिकाणां तु कदर्यस्यापि यद्धनम् ।
पाषण्डिगणिकावित्तं हरन्नार्तो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणका गणिकादयः ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
यथा वह्निश्च गोमांसं दहन्नपि न पातकी ।
आददानस्तथा राजा धनमार्तो न किल्बिषी ॥

(१) बृपसं. १२।५९–६५.

गृह्णीयात्सर्वदा राजा करानपीडयन् प्रजाः ।
स्तोके स्तोकान् पृथक्साम्ना स
भुङ्क्ते सुचिरं धराम् ॥

अन्यायेन करादानं निषिद्धम्

[1]अन्यायतो ये तु जनं नरेशाः
संपीड्य वित्तानि हरन्ति लोभात् ।
तत्क्रोधवह्नौ परिदग्धदेहा
गतायुषस्ते तु भवन्ति भूपाः ॥
यः शास्त्रदृष्टेन पथा नरेशो
दण्डं विदध्याद्विधिवत्करांश्च ।
सोऽतीव कीर्तिं वितनोति गुर्वी-
मायुश्च दीर्घं दिवि देवभोगान् ॥

## भारद्वाजः

निधिलाभे व्यवस्था

[2]परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् ।
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ॥

## आश्वलायनः

न्यायेन प्रजापालनार्थं करग्रहणम्, अकरो ब्राह्मणः

[3]सर्वोद्योगेन नृपतिर्नित्यं कोशं प्रवर्धयेत् ।
ग्रासमात्रविहीनोऽपि ब्राह्मणान्नाऽऽहरेत्करान् ॥
षड्भागमाहरेद्राजा करान्न्यायेन पालयन् ।
विप्रादन्येभ्य एवेह प्रतिवर्षं सुयन्त्रितः ॥
करमाहारयेद्यस्तु न्यायेन परिपालयन् ।
स्वर्गं च कोशवृद्धिं च प्राप्नोति प्रेत्य चेह च ॥
अपालयन् प्रजा यस्तु करमाहरते नृपः ।
सुदुष्कीर्तिश्च नरके क्लिश्नात्याचन्द्रतारकम् ॥
करं च नाऽऽहरेद्राजा दैवतब्राह्मणोर्धनात् ॥
धर्मार्थे कल्पिताच्चापि सीदन्नपि कदाचन ।
क्षीणाकारस्तु याचित्वा विप्रान्
सान्त्वेन वाऽऽपदि ॥

(१) बृपसं. १२।८१, ८५.

(२) वीक. २।३४.

(३) आश्वस्मृ. ८।६५–६८, ९३–९६.

परचक्रादिपीडासु रक्षेद्राष्ट्रं जनेश्वरः।
सीदमाने नृपे विप्रैर्दातव्यं वसुमत्तरैः ॥
परचक्रादिपीडासु यदि राज्ञोऽप्ययाचितैः ॥

## मार्कण्डेयपुराणम्

वणिक्कृषीवलादिभ्यः करग्रहणप्रयोजनम्

[1]पण्यानां द्वादशं भागं भूपालाय वणिग्जनः।
दत्त्वाऽऽत्मरक्षिभिर्मार्गे रक्षितो याति दस्युतः ॥
गोपाश्च घृततक्रादेः षड्भागं च कृषीवलाः ॥

दत्त्वाऽन्यद् भूभुजे दद्युर्यदि भागं ततोऽधिकम्।
पण्यादीनामशेषाणां वणिजो गृह्णतस्ततः ॥

इष्टापूर्तविनाशाय तद्राज्ञश्चौरकर्मिणः।
यदन्यैः पाल्यते लोकस्तद् वृत्त्यन्तरसंश्रितः ॥

गृह्णतो बलिषड्भागं नृपतेर्नरको ध्रुवम्।
निरूपितमिदं राज्ञः पूर्वं रक्षणवेतनम् ॥

## विष्णुधर्मोत्तरम्

अर्थप्रयोजनम्, धर्मेण कृत एव कोशो राज्यतरोर्मूलम्

[2]रिपुघातसमर्थः स्याद्वित्तवानेव पार्थिवः।
परचक्रोपमर्देषु वित्तवानेव मुच्यते ॥

[3]वित्तवानेव सहति सुदीर्घमपि विग्रहम्।
बहुदण्डानपि परांस्तथा भिन्द्याद्धनाधिपः ॥

बहुदण्डान् बहु दण्डयन्ति ते तथाविधाः, तान् दण्डार्जितबहुतरकोशान्। अत्र दण्डस्य बहुत्वं स्मृत्युक्तदण्डापेक्षया आधिक्यम्। तेनान्यायार्जितधनान् जयतीति व्याख्येयम्। तेन धनाधिकः बहुतरधनवान् न्यूनधनान् जयति इत्येतदर्थकं वचनमनर्थकं न भवति। वस्तुतस्तु दण्डः बलं इति यथाश्रुतमेव सम्यक्। राप्र. २५७

[1]अन्नप्राणाः प्रजाः सर्वा धने तच्च प्रतिष्ठितम्।
धनवान् धर्ममाप्नोति धनवान् काममश्नुते ॥
[2]यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवाः।
यस्यार्थः स पुमाँल्लोके यस्यार्थः सोऽपि पण्डितः ॥
[3]अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥
[4]विशेषो नास्ति लोकेषु पतितस्याधनस्य च।
पतितानां न गृह्णन्ति दरिद्रो न प्रयच्छति ॥
[5]धनहीनस्य भार्याऽपि नैव स्याद्वशवर्तिनी।
गुणौघमपि चैवास्य नैव कश्चित्प्रकाशयेत् ॥
[6]बान्धवा विनिवर्तन्ते धनहीनात्तथा नरात्।
यथा पुष्पफलैर्हीनाच्छकुन्ता द्विज पादपात् ॥
द्विज इति रामसंबोधनम्। राप्र. २५८
[7]दारिद्र्यमरणे चोभे केषांचित्सदृशे मते।
सत्यं हासाद्दरिद्रश्च मृतः श्रेयान् मतो मम ॥
[8]कोशं राज्यतरोर्मूलं तस्माद्यत्नं तदर्जने।
धर्मेणैव ततः कुर्यान्नाधर्मेण कथंचन ॥

---

(१) मार्क. १६।१२०–१२२, १२५–१२६.

(२) विध. २।६१।८; राप्र. २५७ नेव मुच्यते (नैव मुह्यति).

(३) विध. २।६१।९; राप्र. २५७ सहति (सहते) धिपः (धिकः).

(१) विध. २।६१।१० अन्न (अन्ने); अग्नि. २२३।५ उत्त.; राप्र. २५७.

(२) विध. २।६१।११; राप्र. २५७ सोऽपि (स च).

(३) विध. २।६१।१२; अग्नि. २२३।५ उत्तरार्धे (उच्छिद्यन्ते विना ह्यर्थैः क्रिया ग्रीष्मे सरिद्यथा ॥) उत्त.; राप्र. २५७.

(४) विध. २।६१।१३; अग्नि. २२३।६ पतितानां न (पतितान्न तु); राप्र. २५७ पतितानां न (पतिता न तु) प्रयच्छति ॥ + (इत्यतो नानुगृह्णन्ति दरिद्रं पतितं जनाः ॥).

(५) विध. २।६१।१४; अग्नि. २२३।७ पू.; राप्र. २५७–२५८.

(६) विध. २।६१।१५; राप्र. २५८.

(७) विध. २।६१।१६ द्रश्च (द्रस्य) मतो (मते); राप्र. २५८.

(८) विध. २।६१।१७; राप्र. २५८.

[1]धनैरधर्मसंप्राप्तैर्यद्दृढं हि पिधीयते ।
तदेव याति विस्तारं विनाशाय दुरात्मनाम् ॥
[2]सुकृतस्य पुराणस्य बलेन बलिनां वर ।
यद्यधर्मात्फलं शीघ्रं नाऽऽप्नुवन्ति दुरात्मनः ॥
पुराणस्य जन्मान्तरकृतस्य । राप्र. २५८
[3]तथाऽपि पूर्वकर्मान्ते तेन पापेन कर्मणा ।
विनश्यन्ति समूलास्ते सपुत्रधनबान्धवाः ॥
[4]नरकेषु तथा तेषां यातना विविधाः स्मृताः ।
बहून्यब्दसहस्राणि ये नृपा राष्ट्रपीडकाः ॥
[5]शास्त्रोक्तं बलिमादद्याद्धर्म्यं तत्तस्य जीवितम् ॥
[6]तस्य संत्यजनं राजा न समृद्धोऽपि कारयेत् ।
आकराणि च सर्वाणि शुल्कं शास्त्रोदितो बलिः ॥
[7]दण्डं विनयनाद्राज्ञो धर्म्यं तत्तस्य जीवितम् ।
धर्ता कराणां सर्वेषां प्रभुरुक्तो महीपतिः ॥

प्राप्तनिधिव्यवस्था प्रनष्टस्वामिकधनव्यवस्था च

[8]निधिं पुराणं संप्राप्य कोशेऽर्धं तु प्रवेशयेत् ।
अर्धं ब्राह्मणसात्कुर्याद्धर्मकामो महीपतिः ॥
[9]निधिं द्विजोत्तमः प्राप्य गृह्णीयात्सकलं तथा ।
जगतोऽस्य समग्रस्य प्रभुरुक्तो द्विजोत्तमः ॥
निधिं ज्ञात्वा पुराणं तु क्षत्रविट्शूद्रयोनयः ।
निवेदयेयुर्भूपाय राजा लब्ध्वाऽपि तं निधिम् ॥

(१) विध. २।६१।१८; राप्र. २५८ दृढं हि पि (राष्ट्रमपि).
(२) विध. २।६१।१९; राप्र. २५८.
(३) विध. २।६१।२०; राप्र. २५८ मूला (भूता) धन (पशु).
(४) विध. २।६१।२१; राप्र. २५८.
(५) विध. २।६१।३१ द्धर्म्यं (द्धर्मं); राप्र. २५६.
(६) विध. २।६१।३२.
(७) विध. २।६१।३३; राप्र. २७० धर्ता कराणां (धात्वाकराणां) उत्त.
(८) विध. २।६१।३४ कोशेऽर्धं (केशवं) अर्धं (अर्थं); राप्र. २७०.
(९) विध. २।६१।३५–४५.

चतुर्थमष्टमं चांशं तथा षोडशमं द्विज ।
वर्णक्रमेण विसृजेदाख्यातं धर्मकारणम् ॥
तेऽपि लब्ध्वा तदा तेन संविभज्य द्विजोत्तमान् ।
शेषेण कुर्युः कामार्थौ विदितौ पृथवीपतेः ॥
प्रकाशविभवो लोके यस्य राज्ञः स भूपतिः ।
अप्रकाशधनो यस्तु नरकं तस्य मन्दिरम् ॥
ममेदमिति यो ब्रूयान्निधिं सत्येन मानवः ।
तस्याऽऽददीत नृपतिर्भागमब्राह्मणस्य तु ॥
चतुर्विंशतिकं राम द्वादशं षष्ठमेव च ।
क्षत्रियाश्च तथा वैश्याः शूद्राश्च भृगुनन्दन ॥
अनृतं च वदन्दण्ड्यः स्ववित्तस्यांशमष्टकम् ।
प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ॥
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ।
ममेदमिति यो ब्रूयादनुयुक्तो यथाविधि ॥
संपाद्य रूपं द्रव्यादीन् स्वामी तद्द्रव्यमर्हति ।
अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ॥
वर्णरूपं प्रमाणं च तत्समं दण्डमर्हति ।
निधिवद्भागमादद्यात्प्रनष्टाधिगतान्नृपः ॥

वणिजः सकाशात् शुल्कादानविधिः

[1]स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज ।
शुल्कांशं परदेशाच्च निबोध गदतो मम ॥
[2]क्षयव्ययप्रवासांश्च यथायामं द्विजोत्तम ।
ज्ञात्वा तु कल्पयेत्तत्र शुल्कांशं पृथवीपतिः ॥
[3]तथा कार्यं यथा लाभं वणिजः समवाप्नुयुः ।
पुण्यच्छेदश्च नैव स्यात्स्वदेशे पृथवीपतेः ॥
[4]व्ययं शुल्कप्रवासादि लङ्घयित्वा तथा द्विज ।
विंशांशभागमादद्युर्दण्डनीया अतोऽन्यथा ॥

(१) विध. २।६१।५३; राप्र. २६४–२६५.
(२) विध. २।६१।५४; राप्र. २६५ यामं (यासं) पू.
(३) विध. २।६१।५५.
(४) विध. २।६१।५६; राप्र. २६५ व्ययं (व्यय) विंशांश (विंशांशं).

[1]दिशि दिश्येकमेव स्याच्छुल्कस्थानं नृपस्य तु ।
तदतिक्रमतो द्रव्यं राजगामि विधीयते ॥

शुल्कस्थानान्युक्तानि— दिशीति । तदतिक्रमे दोष उक्तः— तदिति । तत् शुल्कस्थानं हट्टघट्टादि । राप्र. २७३–२७४

नौकाशुल्कग्रहणविधिः

[2]दूतानां ब्राह्मणानां च राजाज्ञागामिनां तथा ।
स्त्रीणां प्रव्रजितानां च तारशुल्कं विवर्जयेत् ॥

धान्यपशुहिरण्यगन्धौषधिरसपुष्पमूलफलवैदलभाण्डादिषु करपरिमाणम्

[3]भिन्नकार्षापणं शुल्कं न ग्राह्यं पृथिवीक्षिता ।
तारेषु दाशदोषेण नष्टं दाशात्प्रदापयेत् ॥
[4]दैवदोषविनष्टं च नष्टं यस्यैव तस्य तत् ।
शूकधान्येषु षड्भागं शिम्बीधान्येष्वथाष्टकम् ॥
[5]राजा बल्यर्थमादद्याद् देशकालानुरूपकम् ।
राजांशभागमादद्याद्राजा पशुहिरण्ययोः ॥
[6]गन्धौषधिरसानां च पुष्पमूलफलस्य च ।
पत्रशाकतृणानां च वत्सरेण च चर्मणाम् ॥
[7]वैदलानां च भाण्डानां सर्वस्याश्ममयस्य च ।
*षड्भागमेव चाऽऽदद्याद्ब्राह्मणेभ्यस्तथा करम् ॥

तेभ्यस्तद्धर्मलाभेन राज्ञो लाभः परं भवेत् ॥

शिल्पिकर्मकराणां प्रतिमासं ऐकाह्निकं कर्म करः

[1]कर्म कुर्युर्नरेन्द्रस्य मासेनैकं च शिल्पिनः ।
भक्तमात्रेण ये चान्ये स्वशरीरोपजीविनः ॥

आत्मीयपरकीययोर्मूलस्यानुच्छेदेन वाणिज्यधान्यपशुहिरण्यादिषु करप्रकल्पनम्

[2]आयद्वारांश्च नोच्छिन्द्याद्विशेषद्वारकानपि ।
सम्यग्बलिं च गृह्णीयान्मालाकारोपमो नृपः ॥
क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजो दापयेत्करम् ॥
यथा फलेन युज्येत राजा कर्ता च कर्मणाम् ।
तथाऽवेक्ष्य नरो राष्ट्रे कल्पयेत्सततं करम् ॥
पञ्चाशद्भाग आदेयो राज्ञां पशुहिरण्ययोः ।
धान्यानां च तथा षष्ठं सस्यानां च महीक्षिता ॥
षष्ठमेव तथा भागं माषाणां मधुसर्पिषाम् ।
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥
पत्रशाकतृणानां च चर्मणां वैदलस्य च ।
मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥
यत्किंचिदपि वर्षस्य दापयेत्करसंज्ञितम् ।
व्यवहारेण जीवन्तं राष्ट्रे राज्यं पृथक्पृथक् ॥
राजदूतकरेभ्यश्च गृह्णीयातपञ्चकं शतम् ।
पञ्चपञ्चशतं तत्र सभिकः प्राप्तुमर्हति ॥
कारुकान् शिल्पिनश्चैव शूद्रधर्मोपजीविनः ।
एकैकं कारयेत्कर्म मासि मासि महीपतिः ॥

स्वदेशविदेशपण्यशुल्कव्यवस्था

स्वदेशपण्याच्छुल्कांशं गृह्णीयाद्दशमं नृपः ।
विदेशपण्याच्च तथा देयं पञ्चशतं समम् ॥

---

* अत्र कश्चन ग्रन्थो भ्रष्ट इति प्रतीयते । स तु 'षड्भागमेव चाऽऽदद्यान्मधुमांसस्य सर्पिषः । प्रियं चापि न वाऽऽदद्याद् ब्राह्मणेभ्यस्तथा करम् ॥' (अग्नि. २२३।२९–३०) इत्यनेन अग्निपुराणवचनेन साम्यपर्यालोचनात् ऊहितुं शक्यः ।

(१) विध. २।६१।५७ ; राप्र. २७३–२७४ क्रमतो (क्रामतो).

(२) विध. २।६१।५८ ; राप्र. २७३ तार (तर).

(३) विध. २।६१।५९.

(४) विध. २।६१।६० शिम्बी (शिम्बि) ; राप्र. २६२ ष्टकम् (ष्टमम्) उत्त.

(५) विध. २।६१।६१ ; राप्र. २६२ रूपकम् (रूपतः) पू.

(६) विध. २।६१।६२ ; राप्र. २६१.

(७) विध. २।६१।६३ ; राप्र. २६१ वैदलानां (वैणवानां) पू. : २७२ चतुर्थचरणमात्रम्.

(१) विध. २।६१।६४ ; राप्र. २७२.

(२) विध. २।६१।६८ ; राप्र. २७५ नैकं च (नैकेन).

(३) विध. ३।३२३।३५–४६.

शुल्कस्थानं भवेदेकं न द्वितीयं कथंचन ।
शुल्कं भूयस्तु गृह्णीत(? ह्णान )श्चौरस्या-
ऽऽप्नोति किल्बिषम् ॥

अकरा जनाः

न भिन्नकार्षापणमस्ति शुल्कं
न शिल्पवृत्तौ न शिशौ न दूते ।
न भैक्ष्यलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे ॥

## गरुडपुराणम्

आत्मरक्षाद्विजरक्षादि अर्थप्रयोजनम्, भ्रमरकृत-
मधुदोह-धेनुदोहवत् करग्रहणम्

[1]एतदर्थं हि कुर्वन्ति राजानो धनसंचयम् ।
रक्षयित्वा तु चाऽऽत्मानं यद्धनं तद्द्विजातये ॥
ओंकारशब्दो विप्राणां येन राष्ट्रं प्रवर्धते ।
स राजा वर्धते योगाद्व्याधिभिश्च न बध्यते ॥
असमर्थाश्च कुर्वन्ति मुनयो द्रव्यसंचयम् ।
किं पुनस्तु महीपालः पुत्रवत्पालयन् प्रजाः ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥

त्यजन्ति मित्राणि धनैर्विहीनं
पुत्राश्च दाराश्च सुहृज्जनाश्च ।
ते चार्थवन्तं पुनराश्रयन्ति
ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥

[2]मधुहेव दुहेत्सारं कुसुमं च न घातयेत् ।
वत्सापेक्षी दुहेत्क्षीरं भूमिं गां चैव पार्थिवः ॥
यथा क्रमेण पुष्पेभ्यश्चिनुते मधु षट्पदः ।
तथा वित्तमुपादाय राजा कुर्वीत संचयम् ॥
वल्मीकं मधुजालं च शुक्लपक्षे तु चन्द्रमाः ।
राजद्रव्यं च भैक्षं च स्तोकं स्तोकं प्रवर्धते ॥

(१) गरुड. १।१११।१४–१८.
(२) गरुड. १।११३।५–७.

## अग्निपुराणम्

कोशप्रयोजनम्, निधिप्रनष्टस्वामिकधनव्यवस्था

[1]दुष्टसंमर्दनं कुर्याच्छास्त्रोक्तं करमाददेत् ॥
कोषे प्रवेशयेदर्धं नित्यं चार्धं द्विजे ददेत् ।
निधिं द्विजोत्तमः प्राप्य गृह्णीयात्सकलं तथा ॥
चतुर्थमष्टमं भागं तथा षोडशमं द्विजः ।
वर्णक्रमेण दद्याच्च निधिं पात्रे तु धर्मतः ॥
अनृतं तु वदन् दण्ड्यः सुवित्तस्यांशमष्टमम् ।
प्रनष्टस्वामिकं ऋक्थं राजा त्र्यब्दं निधापयेत् ॥
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ।
ममेदमिति यो ब्रूयात्सोऽर्थयुक्तो यथाविधि ॥
संपाद्य रूपसंख्यादीन् स्वामी तद्द्रव्यमर्हति ॥

स्वदेशपरदेशपण्येषु नौकायां धान्यपशुहिरण्यगन्धौषधि-
रसादिषु शिल्पिषु च शुल्ककरव्यवस्था

[2]स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज ॥
शुल्कांशं परदेशाच्च क्षयव्ययप्रकाशकम् ।
ज्ञात्वा संकल्पयेच्छुल्कं लाभं वणिग्यथा-
ऽऽप्नुयात् ॥
विंशांशं लाभमादद्याद्दण्डनीयस्ततोऽन्यथा ।
स्त्रीणां प्रव्रजितानां च तरशुल्कं विवर्जयेत् ॥
तरेषु दासदोषेण नष्टं दासात्तु दापयेत् ।
शूकधान्येषु षड्भागं शिम्बिधान्ये तथाऽष्टमम् ॥
राजा वन्यार्थमादद्याद्देशकालानुरूपकम् ।
पञ्चषड्(? पञ्चाशद्)भागमादद्याद्राजा
पशुहिरण्ययोः ॥
गन्धौषधिरसानां च पुष्पमूलफलस्य च ।
पत्रशाकतृणानां च वंशवैणवचर्मणाम् ॥
वैदलानां च भाण्डानां सर्वस्याश्ममयस्य च ।
षड्भागमेव चाऽऽदद्यान्मधुमांसस्य सर्पिषः ॥
म्रियं चापि न वाऽऽदद्याद्ब्राह्मणेभ्य-
स्तथा करम् ॥

(१) अग्नि. २२३।१३–१८.
(२) अग्नि. २२३।२३–३०.

[1]कर्म कुर्युर्नरेन्द्रस्य मासेनैकं च शिल्पिनः ।
भुक्तमात्रेण ये चान्ये स्वशरीरोपजीविनः ॥
[2]ईप्सितद्रव्यसंपूर्णः पितृपैतामहोचितः ।
धर्मार्जितो व्ययसहः कोषो धर्मादिवृद्धये ॥

विविधानि रत्नानि तेषां लक्षणानि च

अग्निरुवाच–
[3]रत्नानां लक्षणं वक्ष्ये रत्नं धार्यमिदं नृपैः ।
वज्रं मरकतं रत्नं पद्मरागं च मौक्तिकम् ॥
इन्द्रनीलं महानीलं वैदूर्यं गन्धशस्यकम् ।
चन्द्रकान्तं सूर्यकान्तं स्फटिकं पुलकं तथा ॥
कर्केतनं पुष्परागं तथा ज्योतीरसं द्विज ।
स्फटिकं राजपट्टं च तथा राजमयं शुभम् ॥
सौगन्धिकं तथा गञ्जं शङ्खब्रह्ममयं तथा ।
गोमेदं रुधिराक्षं च तथा भल्लातकं द्विज ॥
धूलीं मरकतं चैव तुत्थकं सीसमेव च ।
पीलुं प्रवालकं चैव गिरिवज्रं द्विजोत्तम ॥
भुजङ्गममणिं चैव तथा वज्रमणिं शुभम् ।
टिट्टिभं च तथा पिण्डं भ्रामरं च तथोत्पलम् ॥
सुवर्णप्रतिबद्धानि रत्नानि श्रीजयादिके ।
अन्तःप्रभत्वं वैमल्यं सुसंस्थानत्वमेव च ॥
सुधार्या नैव धार्यास्तु निष्प्रभा मलिनास्तथा ।
खण्डाः सशर्करा ये च प्रशस्तं वज्रधारणम् ॥
अम्भस्तरति यद्वज्रमभेद्यं विमलं च यत् ।
षट्कोणं शक्रचापाभं लघु चार्कनिभं शुभम् ॥
शुकपक्षनिभः स्निग्धः कान्तिमान् विमलस्तथा ।
स्वर्णचूर्णनिभैः सूक्ष्मैर्मरकतश्च बिन्दुभिः ॥
स्फटिकाः पद्मरागाः स्यू रागवन्तोऽतिनिर्मलाः ।
जातरङ्गा भवन्तीह कुरुविन्दसमुद्भवाः ॥
सौगन्धिकोत्थाः काषाया मुक्ताफलास्तु शुक्तिजाः ।
विमलास्तेभ्य उत्कृष्टा ये च शङ्खोद्भवा मुने ॥
नागदन्तभवाश्चाग्र्याः कुम्भसूकरमत्स्यजाः ।
वेणुनागभवाः श्रेष्ठा मौक्तिकं मेघजं वरम् ॥
वृत्तत्वं शुक्लता स्वाच्छ्यं महत्त्वं मौक्तिके गुणाः ।
इन्द्रनीलः शुभः क्षीरे राजते भ्राजतेऽधिकम् ॥
रञ्जयेत्स्वप्रभावेण तममूल्यं विनिर्दिशेत् ।
नीलरक्तं तु वैदूर्यं श्रेष्ठं हारादिकं भजेत् ॥

(१) अग्नि. २२३।३३–३४.
(२) अग्नि. २३९।३०.
(३) अग्नि. २४६।१–१५.

## कालिकापुराणम्

कोशसंचयः रक्षा च

[1]कोषस्य संचयं रक्षां सततं सम्यगाचरेत् ॥

## कामन्दकीयनीतिसारः

कोशगुणसंपत्

[2]बह्वादानोऽल्पनिःस्रावः ख्यातः पूजितदैवतः ।
ईप्सितद्रव्यसंपूर्णो हृद्यः स्वाप्तैरधिष्ठितः ॥

(१) आदानं अत्र निःक्षेपः । निःस्रावः निष्कासनम् । स्वाप्तैः अतिप्रत्यायितैः अधिष्ठितः रक्षितः ।
रार. ३१

(२) कोशसंपदमाह– बह्वादान इत्यादिना श्लोकत्रयेण । बह्वादानः, आयद्वाराणां बहुत्वात् । अल्पनिःस्रावः, व्ययद्वाराणामल्पत्वात् । ख्यातः लोके नाम्नैव परं भवति । पूजितदैवतः, यत् तत्राधिदैवतं धनदादि तत् प्रत्यहं पूज्यमानं वर्धयति । ईप्सितद्रव्यसंपूर्णः कार्यकालं नातिपातयति । एवं च हृद्यः, ईप्सितार्थसंपन्नत्वात् । स्वाप्तैः अधिष्ठितः स्वपरैः न ह्रियते । जम.

(३) कोशप्रकृतेर्गुणसंपदमभिधातुमाह– बह्वादान इति । बह्वादानः बहु आदानं आयः यस्य, अल्पनिःस्रावः अल्पव्ययः इत्युभयं न्यायेनैव इति भावः । ख्यात इति निःशेषविषयव्यवहारार्हः । पूजितानि श्रीधनदादीनि दैवतानि यस्मिन् । तत्पूजया क्षयो न भवतीति भावः । ईप्सितद्रव्यसंपूर्ण इति सुवर्णादीप्सितधनसंपन्नः ।

(१) कालिका. ८७।१०१.
(२) कानी. ४।६०; रार. ३१; नीम. ५० बह्वादानो ( वर्धमानो ) स्वाप्तै ( आप्तै ).

हृद्य इति मनोरमः, महार्हालंकारसंपन्नत्वात् । स्वातैरधिष्ठित इति । सुष्ठु अर्थोपधाशुद्धत्वात् ये आप्ताः विश्वास्याः तैः अधिष्ठितः रक्षितः । उनि.

[1]मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः ।
धर्मार्जितो व्ययसहः कोशः कोशज्ञसंमतः ॥

(१) पितृपैतामहं उचितं यत्र इति समासः । धर्मार्जितः, राज्ञः प्रजापालनं धर्मः, तेनार्जितः । आपदि व्ययेऽपि नाऽऽकुलः । ननु प्रजापालनमदृष्टफलजनकम्, कथं तेनार्जितम् ? इति चेन्न, प्रजापालनस्यापि परंपरयाऽर्थनिमित्तत्वात् । धर्मात् वृद्धिः इत्यन्ये । रार. ३१

(२) मुक्ताकनकरत्नाढ्यः तेषां महार्घाणामतिबाहुल्यात् अक्षयः । पितृपैतामहोचितः पूर्वक्रमागतत्वात् अक्लेशोपात्तः । धर्मार्जितः धान्यषड्भागादिना । स हि परेषामनामिषभूतो भवति अक्षयश्च । व्ययसहः दीर्घासु अपि आपत्सु । एवंविधो निर्दोषत्वात् कोशज्ञानां संमतः । जम.

(३) मुक्ताकनकरत्नाढ्य इति प्रतीतं पुनरुच्यते आदरदर्शनार्थम् । पितृपैतामहोचित इति । पितुरपि पैतामहः इति न्यायोपार्जितत्वात् उचितः । विजिगीषोः धर्मार्जितत्वात् व्ययसह इति । प्राचुर्यात् व्ययं सहते, नैव क्षीयते इत्यर्थः । कोशः एवंविधः कोशज्ञानां संमतः अनुमतः । उनि.

कोशस्य प्रयोजनानि

धर्महेतोस्तथाऽर्थाय भृत्यानां भरणाय च ।
आपदर्थं च संरक्ष्यः कोशः कोशवता सदा ॥

(१) आपदर्थमिति । धनेन विपत्तिप्रतीकार इत्याशयः । संरक्ष्य इति सर्वत्रान्वयः । रार. ३१

(२) तस्य च पञ्च प्रयोजनानि । यदाह– धर्महेतोरित्यादि । अर्थाय अर्थान्तराय । कामः अर्थप्राप्तः । जम.

(३) कोशविनियोगमभिधातुमाह– धर्महेतोरिति । कोशस्योपार्जनं धर्महेतोः धर्मनिमित्तम्, तथा अर्थाय अर्थनिमित्तम्, भृत्यानां भरणार्थम् । आपदर्थे च रक्ष्यः । कोशः कोशवता सदा इति प्रतीतम् । उनि.

[2]पुत्रादपि हि संरक्ष्यो भार्यायाः सुहृदस्तथा ॥
* [3]कोष्ठागारेऽभियुक्तः स्यात्तदायत्तं हि जीवितम् ।
नात्यायं च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वहम् ॥
कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ।
खन्याकरो वनादानं शून्यानां च निवेशनम् ॥
अष्टवर्गमिमं साधु स्वस्थवृत्तं विवर्धयेत् ॥
आददीत फलं काले त्रिवर्गपरिवृद्धये ॥
यथा गौः पाल्यते काले दुह्यते च तथा प्रजा ।
सिच्यते चीयते चैव लता पुष्पप्रदा यथा ॥
संवर्धयेत्तथा कोशमाप्तैस्तज्ज्ञैरधिष्ठितम् ।
काले चास्य व्ययं कुर्यात्त्रिवर्गप्रतिपत्तये ॥
धर्मार्थं क्षीणकोशस्य कृशत्वमपि शोभते ।
सुरैः पीतावशेषस्य शरद्धिमरुचेरिव ॥
[3]धर्मसंरक्षणपरो धर्मायार्थं विवर्धयेत् ॥

(१) यथायथं लोकस्येज्याध्ययनादिको धर्मः संरक्ष्यः । धर्मायेति । आत्मनो राजसूयादिप्रवर्तनार्थम् । विवर्धयन्, अर्जयन् इति अर्थप्राप्तम् । जम.

(२) वर्णानामाश्रमाणां च स्वधर्मसंरक्षणपरः, धर्मसंकरनिषेधात् । धर्मायार्थं विवर्धयेत्, अर्थस्यार्जनं वर्धनं च धर्माभिसंधिनैव । उनि.

‡ [4]भृत्यानां भरणं दानं भूषणं वाहनक्रियाः ।
स्थैर्यं परोपजापश्च दुर्गसंस्कार एव च ॥

---

(१) कानी. ४।६१–६२ ; रार. ३१ ; नीम. ५०.

* एतदादीनां षण्णां श्लोकानां व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'स्वाम्यनुजीविवृत्तम्' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

‡ एतदादीनां चतुर्णां श्लोकानां व्याख्यानसंग्रहः 'प्रकृतिव्यसनानि' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) नीम. ५०.
(२) कानी. ५।७६–७८, ८२–८३, ८६–८७.
(३) कानी. ६।६ ; जम. वर्धयेत् ( वर्धयन् ).
(४) कानी. १४।३१–३४.

सेतुबन्धो वणिक्कर्म प्रजामित्रपरिग्रहः ।
धर्मकामार्थसिद्धिश्च कोशादेतत्प्रवर्तते ॥
कोशमूलो हि राजेति प्रवादः सार्वलौकिकः ।
एतत्सर्वं जहात्याशु कोशव्यसनवान् नृपः ॥
क्षीणं बलं वर्धयति स्वतो गृह्णाति च प्रजाः ।
कोशवान् पृथिवीपालः परैरप्युपजीव्यते ॥
[1]चतुरङ्गं बलं मुक्त्वा कोशो मन्त्रश्च युध्यते ।
तत्साधुमन्त्रो मन्त्रेण कोशेन च जयेदरीन् ॥

(१) कुत्र कमुपायमादौ निक्षिपेदित्याह— चतुरङ्गमित्यादि । कोशो मन्त्रश्च युध्यते प्रथमम् । हस्त्यश्वरथपदातिभिः व्यायामयुद्धं अन्त्यावस्थायां क्रियते । तस्मात् प्रथमं मन्त्रेण सामभेदात्मकेन, कोशेन कृतेन, जयेदरीन् । साधुमन्त्रः, कृतपञ्चाङ्गविनिर्णयत्वात् । जम.

(२) कस्मात् प्रकारात् युद्धं मुक्त्वा उपायप्रक्षेपोऽभिधीयत इति चेदाह— चतुरिति । यतः साधुमन्त्रः सम्यङ्मन्त्रणासंपन्नः, विजिगीषुरिति शेषः । मन्त्रेण कोशेन च अरीन् यातव्यशत्रून् जयेत्, तत् तस्मात् चतुरङ्गबलं हस्त्यश्वरथपदातिरूपं मुक्त्वा त्यक्त्वा कोशः मन्त्रः मन्त्रिभिः सह निर्णीता बुद्धिश्च युध्यते युद्धं करोति । उनिसा.

## शुक्रनीतिः

सदासंचयवान् कोशः कार्यः

[2]न यथेष्टव्ययायालं संचितं तु धनं भवेत् ।
सदागमाद्विना कस्य कुबेरस्यापि नाञ्जसा ॥

कस्यापि जनस्य संचितं धनं सदागमात् नित्यधनलाभं विना यथेष्टव्ययाय अलं समर्थं न भवेत् । कुबेरस्यापि अञ्जसा तत्त्वतः न, अन्यस्य किं पुनरिति भावः । यथेच्छव्यये सति संचितं धनं अचिरात् क्षीयते, यादृग्व्ययः तादृशश्चेत् सर्वदा आगमो न स्यादिति फलितार्थः । शुनीटी.

(१) कानी. १८।२.
(२) शुनी. १।१८१.
ध. को. १७१

कोशस्य विषयभेदेन व्ययव्यवस्था

*[1]त्रिभिरंशैर्बलं धार्यं दानमर्धांशकेन च ॥
अर्धांशेन प्रकृतयो ह्यर्धांशेनाधिकारिणः ।
अर्धांशेनाऽऽत्मभोगश्च कोशोंऽशेन स रक्ष्यते ॥
आयस्यैवं षड्विभागैर्व्ययं कुर्यात्तु वत्सरे ।
सामन्तादिषु धर्मोऽयं न न्यूनस्य कदाचन ॥

कोशप्रयोजनानि

[2]अथ कोशप्रकरणं ब्रुवे मिश्रे द्वितीयकम् ।
एकार्थसमुदायो यः स कोशः स्यात्पृथक्पृथक् ॥

अथ अनन्तरं मिश्रे अध्याये द्वितीयकं कोशप्रकरणं ब्रुवे कथयामि । एकेषां कतिपयानां अर्थानां समुदायः समष्टिः यः सः पृथक्पृथक् विविधप्रकारः कोशः स्यात् । शुनीटी.

येन केन प्रकारेण धनं संचिनुयान्नृपः ।
तेन संरक्षयेद्राष्ट्रं बलं यज्ञादिकाः क्रियाः ॥

नृपः येन केन प्रकारेण धनं संचिनुयात् संगृह्णीयात् । तेन च धनेन राष्ट्रं राज्यरक्षार्थपुरुषं बलं सैन्यं यज्ञादिकाः क्रियाश्च संरक्षेत् । शुनीटी.

बलप्रजारक्षणार्थं यज्ञार्थं कोशसंग्रहः ।
परत्रेह च सुखदो नृपस्यान्यश्च दुःखदः ॥

बलानां सैन्यानां प्रजानां च रक्षणार्थे यज्ञार्थे च कोशसंग्रहः धनसंचयः नृपस्य परत्र परकाले इह च अस्मिन् काले च सुखप्रदः । अन्यः तद्व्यतिरिक्त इत्यर्थः, धनसंचयः दुःखदः । शुनीटी.

स्त्रीपुत्रार्थं कृतो यश्च स्वोपभोगाय केवलम् ।
नरकायैव स ज्ञेयो न परत्र सुखप्रदः ॥

केवलं स्त्रीपुत्रार्थे भार्यासुतभरणार्थे स्वस्य आत्मनः उपभोगाय च यः संचयः कृतः स नरकाय एव ज्ञेयः परत्र न सुखप्रदश्च । शुनीटी.

* अस्य सार्धश्लोकद्वयस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११४६) द्रष्टव्यम् ।
(१) शुनी. १।३१५–३१७.
(२) शुनी. ४।२।१–१७.

अपात्रात् अधार्मिकनृपतिकपरराष्ट्राद्वा धनहरणमनिषिद्धम्

**अन्यायेनार्जितो यस्मायेन तत्पापभाक् च सः ।**
**सुपात्रतो गृहीतं यद्दत्तं वा वर्धते च तत् ॥**

येन जनेन यः अर्थः अन्यायेन उपार्जितः स्यात् स जनः तस्य अन्यायोपार्जनस्य पापभाक् भवति । यत् धनं सुपात्रतः साधोः सकाशात् गृहीतं वा दत्तम्, सुपात्रे इति शेषः, तत् वर्धते वृद्धिं प्राप्नोति । शुनीटी.

**स्वागमी सद्व्ययी पात्रमपात्रं विपरीतकम् ।**
**अपात्रस्य हरेत्सर्वं धनं राजा न दोषभाक् ॥**

स्वागमी सुष्ठु आगमवान्, न्यायोपार्जक इत्यर्थः, तथा सद्व्ययी सत्कार्ये व्ययशीलः जनः पात्रम् । तस्य विपरीतकं अपात्रम् । राजा अपात्रस्य सर्वं धनं हरेत् । तत्र न दोषभाक्, भवतीति शेषः । शुनीटी.

**अधर्मशीलनृपतेः सर्वतः संहरेद्धनम् ।**
**छलाद्बलाद्दस्युवृत्त्या परराष्ट्राद्धरेत्तथा ॥**

लोकः अधर्मशीलनृपतेः धनं सर्वतः सर्वैः प्रकारैः छलात् बलात् दस्युवृत्त्या वा हरेत् । तथा परराष्ट्रात् शत्रुराज्यात् हरेत्, राजेति शेषः । शुनीटी.

अनापदि प्रजापीडां विनैव धनसंचयो युक्तः, अस्य आपत्कालस्तु अपवादः

**त्यक्त्वा नीतिबलं स्वीयप्रजापीडनतो धनम् ।**
**संचितं येन तत्तस्य सराज्यं शत्रुसाद्भवेत् ॥**

येन नीतिबलं त्यक्त्वा स्वीयप्रजानां पीडनतः पीडनात् धनं संचितं तस्य तत् धनं सराज्यं राज्यसहितं शत्रुसाद्भवेत् शत्रुहस्तगतं भवेत् । शुनीटी.

**दण्डभूभागशुल्कानामाधिक्यात्कोशवर्धनम् ।**
**अनापदि न कुर्वीत तीर्थदेवकरग्रहात् ॥**

अनापदि अविपन्नावस्थायां दण्डानां भूभागानां शुल्कानां च आधिक्यात् वृद्धिकरणात्, तथा तीर्थानां पुण्यक्षेत्राणां गयादीनां देवानां जगन्नाथादीनां करस्य दर्शनादिषु देयत्वेन निर्दिष्टस्य धनस्य ग्रहात् ग्रहणात् कोशवर्धनं धनवृद्धिं न कुर्वीत, राजेति शेषः । अनापदीत्यभिधानात् आपदि ग्रहणे न दोष इति सूचितम् । शुनीटी.

**यदा शत्रुविनाशार्थं बलसंरक्षणोद्यतः ।**
**विशिष्टदण्डशुल्कादि धनं लोकात्तदा हरेत् ॥**

यदा शत्रुविनाशार्थं बलानां सैन्यानां संरक्षणाय उद्यतः भवति तदा लोकात् विशिष्टं वर्धितं दण्ड-शुल्कादि धनं आहरेत् गृह्णीयात् । शुनीटी.

**धनिकेभ्यो भृतिं दत्त्वा स्वापत्तौ तद्धनं हरेत् ।**
**राजा स्वापत्समुत्तीर्णस्तत्स्वं दद्यात्सवृद्धिकम् ॥**

राजा स्वस्य आपत्तौ आपदि भृतिं वृद्धिं दत्त्वा दास्यामीति प्रतिज्ञायेत्यर्थः, धनिकेभ्यः यत् धनं हरेत् ऋणरूपेण गृह्णीयात्, स्वस्य आपदः समुत्तीर्णः सन् तत् स्वं धनं सवृद्धिकं वृद्धिसहितं दद्यात्, तेभ्य इति शेषः । शुनीटी.

**प्रजाऽन्यथा हीयते च राज्यं कोशो नृपस्तथा ।**
**हीना प्रबलदण्डेन सुरथाद्या नृपा यतः ॥**

अन्यथा धनाभावात्, बलसंरक्षणे अकृते इत्यर्थः, प्रजा राज्यं कोशः धनं तथा नृपः प्रबलदण्डेन शत्रुणा हीयते । यतः सुरथाद्याः अपि नृपाः हीनाः । प्रबलदण्डेनेत्यपि अत्र योज्यम् । शुनीटी.

स्वप्रजारक्षणक्षमः कोशः

**दण्डभूभागशुल्कैस्तु विना कोशाद्बलस्य च ।**
**संरक्षणं भवेत्सम्यग्यावद्विंशतिवत्सरम् ।**
**तथा कोशस्तु संधार्यः स्वप्रजारक्षणक्षमः ॥**

दण्डभूभागशुल्कैः दण्डैः दण्डलब्धैः, भूभागैः भूमिविभागलब्धैः करैः, तथा शुल्कैः वाणिज्यादि-लब्धैः राजकरैः विना, एतान् अगृहीत्वेत्यर्थः, कोशात्, यादृशादिति शेषः, यावद्विंशतिवत्सरं विंशतिवर्षपर्यन्तं सम्यक् बलस्य सैन्यस्य संरक्षणं भवेत्, तथा तादृशः स्वप्रजानां रक्षणे क्षमः कोशः धनराशिः संधार्यः संचेयः । शुनीटी.

कोशमूलकं बलम्

बलमूलो भवेत्कोशः कोशमूलं बलं स्मृतम् ।
बलसंरक्षणात्कोशराष्ट्रवृद्धिररिक्षयः ॥

कोशः बलं मूलं यस्य तथाभूतः । बलानामेव सामर्थ्यात् कोशसंचय इति भावः । बलं च कोशमूलं धनमूलं स्मृतम् । धनेनैव तेषां रक्षणादिति भावः । बलानां संरक्षणात् कोशानां धनानां राष्ट्राणां च वृद्धिः अरीणां शत्रूणां क्षयश्च, भवतीति शेषः । शुनीटी.

जायते तत्त्रयं स्वर्गः प्रजासंरक्षणेन वै ॥

प्रजानां संरक्षणेन सम्यक् पालनेन तत् त्रयं कोशानां राष्ट्राणां वृद्धिः अरिक्षयश्च एतत्त्रयं स्वर्गश्च जायते । वैशब्दः अवधारणार्थः । शुनीटी.

यज्ञार्थं द्रव्यमुत्पन्नं यज्ञः स्वर्गसुखायुषे ।
अर्यभावो बलं कोशो राष्ट्रवृद्ध्यै त्रयं त्विदम् ॥

यज्ञार्थं यागानुष्ठानार्थं द्रव्यं धनं उत्पन्नम् । यज्ञः स्वर्गाय सुखाय आयुर्वर्धनाय च भवति । अर्यभावः शत्रोरभावः बलं सैन्यं कोशः धनं इदं त्रयं तु राष्ट्रस्य वृद्ध्यै, भवतीति शेषः । शुनीटी.

तद्वृद्धिर्नीतिनैपुण्यात्क्षमाशीलनृपस्य च ।
जायतेऽतो यतेतैव यावद्बुद्धिबलोदयम् ॥

क्षमाशीलस्य नृपस्य नीतिनैपुण्यात् तद्वृद्धिः तेषां अर्यभावादीनां वृद्धिः जायते । अतः अस्मात्कारणात् यावद्बुद्धिबलोदयं बुद्धिबलोदयानुसारेण यतेत एव, तद्वृद्धये इति शेषः । शुनीटी.

उत्तममध्यमाधमाः कोशवृद्ध्युपायाः

[1]मालाकारस्य वृत्त्यैव स्वप्रजारक्षणेन च ।
शत्रुं हि करदीकृत्य तद्धनैः कोशवर्धनम् ॥
[2]करोति स नृपः श्रेष्ठो मध्यमो वैश्यवृत्तितः ।
अधमः सेवया दण्डतीर्थदेवकरग्रहैः ॥

यः मालाकारस्य वृत्त्या व्यवहारेण इव स्वप्रजारक्षणेन शत्रुं करदीकृत्य अकरदान् करदान् कृत्वा, अधीनीकृत्येत्यर्थः, तस्य धनैः कोशवर्धनं करोति स नृपः श्रेष्ठः । यः वैश्यवृत्तितः व्यवसायादिना इत्यर्थः, कोशवर्धनं करोति सः मध्यमः । अधमः सेवया भृत्यभावेन दण्डदेयानां तीर्थदेयानां देवदर्शनदेयानां कराणां ग्रहैः ग्रहणैः कोशवर्धनं करोतीत्यर्थः । शुनीटी.

अधनमध्यमोत्तमधनाः त्रिविधाः प्रजाः त्रिविधं धनं च

प्रजा हीनधना रक्ष्या भृत्या मध्यधनाः सदा ।
यथाऽधिकृत्प्रतिभुवोऽधिकद्रव्यास्तथोत्तमाः ॥

हीनधनाः तथा मध्यधनाः प्रजाः भृत्या वेतनादिना सदा रक्ष्याः पालनीयाः । अधिकद्रव्याः महाधनाः उत्तमास्तु प्रजाः अधिकृत् प्रभुः यथा स्वामीव प्रतिभुवः कृत्वा रक्ष्याः, राज्ञेति शेषः । शुनीटी.

धनिकाश्चोत्तमधना न हीना नाधिका नृपैः ॥

उत्तमधनाः धनिकाः धनवन्तश्च नृपैः न हीनाः न च अधिकाः । नृपतुल्या इत्यर्थः । भवन्तीति शेषः । शुनीटी.

द्वादशाब्दप्रपूरं यद्धनं तन्नीचसंज्ञकम् ।
पर्याप्तं षोडशाब्दानां मध्यमं तद्धनं स्मृतम् ॥
त्रिंशदब्दप्रपूरं यत्कुटुम्बस्योत्तमं धनम् ॥

यत् धनं कुटुम्बस्य परिवारस्य द्वादशाब्दप्रपूरं द्वादशवर्षव्ययोपयुक्तं तत् नीचसंज्ञकं अधममित्यर्थः । यत् षोडशाब्दानां पर्याप्तं व्ययोपयुक्तं तत् मध्यमम् । यच्च त्रिंशदब्दप्रपूरं त्रिंशद्वत्सरव्ययोपयुक्तं तत् उत्तमं स्मृतम् । शुनीटी.

क्रमादर्थं रक्षयेद्वा स्वापत्तौ नृप एषु वै ॥

नृपः स्वस्य आपत्तौ आपदि एषु पूर्वोक्तेषु धनिकेषु क्रमात् अर्थं रक्षयेत् स्थापयेद्वा । वाशब्दः विकल्पार्थः । शुनीटी.

वाणिज्ये क्रयविक्रयरीतिः

मूलैर्व्यवहरन्त्यर्घैर्न वृद्ध्या वणिजः क्वचित् ।
विक्रीणन्ति महार्घे तु हीनार्घे संचयन्ति हि ॥

वणिजः व्यवसायिनः क्वचित् कदाचित् अर्घैः मूल्यभूतैः मूलैः मूलधनैः व्यवहरन्ति क्रयविक्रय-

(१) शुनी. ४।२।१८.
(२) शुनी. ४।२।१९-१३०.

व्यवहारान् कुर्वन्ति । न वृद्धया न लाभेनेत्यर्थः । किंच, महार्घे महामूल्ये विक्रीणन्ति । हीनार्घे अल्पमूल्ये संचयन्ति क्रीणन्तीत्यर्थः । हिशब्दश्च अवधारणार्थः ।
शुनीटी.

वैश्यधनं व्यवहारे धृतं न आहार्यम्

**व्यवहारे धृतं वैश्यैस्तद्धनेन विना सदा ।**
**अन्यथा स्वप्रजातापो नृपं दहति सान्वयम् ॥**

व्यवहारे वाणिज्यायेत्यर्थः, यत् वैश्यैः वणिग्भिः धृतं वस्तु तत् धनेन मूल्येन विना सदा कदाचिदपीत्यर्थः । न ग्रहणीयं बलात् राज्ञेति पदत्रयमध्याहार्यम् । अन्यथा बलात् हरणे इत्यर्थः, स्वस्य प्रजानां वणिजामित्यर्थः, तापः मनःक्षोभः सान्वयं सवंशं नृपं दहति ।
शुनीटी.

धान्यसंग्रहविधिः

**धान्यानां संग्रहः कार्यो वत्सरत्रयपूर्तिदः ।**
**तत्तत्काले स्वराष्ट्रार्थं नृपेणाऽऽत्महिताय च ।**
**चिरस्थायी समृद्धानामधिको वाऽपि चेष्यते ॥**

नृपेण आत्महिताय स्वस्य राष्ट्ररक्षार्थे तत्तत्काले यथायथसमये वत्सरत्रयपूर्तिदः त्रिवर्षव्ययोपयुक्तः धान्यानां संग्रहः संचयः कार्यः । वाऽपि अपि वा अथवा इत्यर्थः, समृद्धानां ऐश्वर्यशालिनां चिरस्थायी ततोऽपि अधिककालस्थायी अधिकः धान्यसंग्रहः इष्यते ।
शुनीटी.

**सुपुष्टं कान्तिमज्जातिश्रेष्ठं शुष्कं नवीनकम् ।**
**ससुगन्धवर्णरसं धान्यं संवीक्ष्य रक्षयेत् ।**
**सुसमृद्धं चिरस्थायि महार्घमपि नान्यथा ॥**

सुपुष्टम्, कान्तिमत् उज्ज्वलम्, जातिश्रेष्ठं उत्कृष्टजातिकम्, शुष्कम्, नवीनकं नूतनम्, ससुगन्धवर्णरसं सौरभवर्णरसयुक्तम्, सुसमृद्धं सुचारु, चिरस्थायि सुदीर्घकालेऽपि अनश्वरमित्यर्थः, संवीक्ष्य सम्यक् परीक्ष्य महार्घं महामूल्यमपि रक्षयेत् । अन्यथा एतद्वैपरीत्ये न ।
शुनीटी.

**विषवह्निहिमव्याप्तं कीटजुष्टं न धारयेत् ।**
**निःसारतां न हि प्राप्तं व्यये तावन्नियोजयेत् ॥**

विषेण गरलेन वह्निना अग्निना हिमेन च व्याप्तं प्राप्तं कीटदुष्टं कीटाक्रान्तं च न धारयेत् । किंच, निःसारतां असारतां प्राप्तं असारमित्यर्थः, धान्यं व्यये न नियोजयेत् ।
शुनीटी.

**व्ययीभूतं तु यद्दृष्ट्वा तत्तुल्यं तु नवीनकम् ।**
**गृह्णीयात्सुप्रयत्नेन वत्सरे वत्सरे नृपः ॥**

यत् व्ययीकृतं तत् दृष्ट्वा राजा तत्तुल्यं तत्सदृशं नवीनकं नूतनं वत्सरे वत्सरे प्रतिवर्षं सुप्रयत्नेन गृह्णीयात् ।
शुनीटी.

ओषधिधातुतृणकाष्ठादिद्रव्याणां संग्रहविधिः

**ओषधीनां च धातूनां तृणकाष्ठादिकस्य च ।**
**यन्त्रशस्त्रास्त्राग्निचूर्णभाण्डादेर्वाससां तथा ॥**
**यद्यच्च साधकं द्रव्यं यद्यत्कार्ये भवेत्सदा ।**
**संग्रहस्तस्य तस्यापि कर्तव्यः कार्यसिद्धिदः ॥**

ओषधीनां धान्यादीनां धातूनां तैजसानां खनिजद्रव्याणामित्यर्थः, तृणकाष्ठादिकस्य यन्त्राणां शस्त्राणां अस्त्राणां अग्निचूर्णानां भाण्डादेः स्थाल्यादेः तथा वाससां वस्त्राणां मध्ये यद्यत् साधकं कार्योपयोगीत्यर्थः, यद्यच्च द्रव्यं सदा कार्ये भवेत् कार्यसाधनार्थं भवति तस्य तस्यापि कार्यसिद्धिदः संग्रहः संचयः कर्तव्यः ।
शुनीटी.

**संरक्षयेत्प्रयत्नेन संगृहीतं धनादिकम् ।**
**आर्जने तु महद्दुःखं रक्षणे तच्चतुर्गुणम् ॥**

संगृहीतं धनादिकं प्रयत्नेन संरक्षयेत् । आर्जने उपार्जने तु महत् दुःखं, अस्ति, परं रक्षणे तस्य आर्जनदुःखस्य चतुर्गुणं दुःखम्, भवतीति शेषः ।
शुनीटी.

**क्षणं चोपेक्षितं यत्तद्विनाशं द्राक् समाप्नुयात् ॥**

यत् धनं क्षणं उपेक्षितं तत् द्राक् झटिति विनाशं समाप्नुयात् ।
शुनीटी.

आर्जकस्यैव दुःखं स्यात्तथाऽर्जितविनाशने ।
स्त्रीपुत्राणामपि तथा नान्येषां तु कथं भवेत् ॥

आर्जकस्य उपार्जकस्य, अर्जने इति शेषः, दुःखम्, तथा अर्जितस्य विनाशनेऽपि दुःखं स्यात् । स्त्रीपुत्राणामपि विनाशेन यथा दुःखं भवेत् तथा अन्येषां वस्तूनां विनाशनेऽपि कथं न भवेत्? अपि तु भवेदेवेत्यर्थः । शुनीटी.

स्वकार्ये शिथिलो यः स्यात्किमन्ये न भवन्ति हि ।
जागरूकः स्वकार्ये यस्तत्सहायाश्च तत्समाः ॥

यः स्वस्य कार्ये शिथिलः अलसः स्यात् तस्य अन्ये अनुगामिनो लोकाः किं कथं शिथिलाः न भवन्ति? अपि तु भवन्त्येव । यः स्वकार्ये जागरूकः अशिथिल इत्यर्थः, तस्य सहायाश्च तस्य समाः कार्यतत्पराः भवन्तीत्यर्थः । शुनीटी.

यो जानात्यर्जितुं सम्यगर्जितं न हि रक्षितुम् ।
नातः परतरो मूर्खो वृथा तस्यार्जनश्रमः ॥

यः अर्जितुं उपार्जयितुमित्यर्थः, जानाति, परं अर्जितं धनं सम्यक् रक्षितुं न हि जानाति, अतः अस्मात् जनात् परतरः श्रेष्ठतरः मूर्खः न, अस्तीति शेषः । यतः तस्य अर्जनश्रमः उपार्जनपरिश्रमः वृथा निष्फल इत्यर्थः । शुनीटी.

एकस्मिन्नधिकारे तु यो द्वावधिकरोति सः ।
मूर्खो जीवद्द्विभार्यश्च ह्यतिविस्रम्भवांस्तथा ॥
महाधनाशो ह्यलसः स्त्रीभिर्निर्जित एव हि ।
तथा यः साक्षितां पृच्छेच्चोरजाराततायिषु ॥

यः एकस्मिन्नधिकारे द्वौ अधिकरोति सः, एकाधिकारस्यैव रक्षणस्य दुःसाध्यत्वादिति भावः, यः जीवन् सन् विभार्यः भार्यया शून्यः, अथवा जीवन्त्यौ द्वे भार्ये यस्य सः, यः अतिविश्रम्भवान् अतिविश्वस्तः सर्वेषां सतामसतां च वचसि कृतविश्वासः सः, यश्च महाधनाशः अधिकधनस्पृहः अथ च अलसः, स्त्रीभिः निर्जितः अधीनीकृतश्च सः, तथा यः चोरजाराततायिषु तस्करेषु उपपतिषु आततायिषु महापराधेषु विषयेषु साक्षितां पृच्छेत् स च मूर्खः । शुनीटी.

धनरक्षणव्ययादिविवेकः

संरक्षयेत्कृपणवत्काले दद्याद्विरक्तवत् ।
मूर्खत्वमन्यथा याति स्वधनव्ययतोऽपि च ॥

कृपणवत् धनं संरक्षयेत् । काले यथासमये विरक्तवत् दद्यात् । अन्यथा एतद्वैपरीत्ये स्वधनानां व्ययतः व्ययेन मूर्खत्वं याति प्राप्नोति । शुनीटी.

उच्चावचानि नव रत्नानि सलक्षणानि तेषां परीक्षा च

वस्तुयाथात्म्यविज्ञाने स्वयमेव यतेत्सदा ।
परीक्षकैः स्वयं राजा रत्नादीन् वीक्ष्य रक्षयेत् ॥

वस्तूनां द्रव्याणां याथात्म्यस्य स्वरूपस्य विज्ञाने विशेषज्ञाने सदा स्वयमेव यतेत् । राजा स्वयं परीक्षकैश्च रत्नादीन् वीक्ष्य परीक्ष्य रक्षयेत् गृह्णीयादित्यर्थः । शुनीटी.

वज्रं मुक्ता प्रवालं च गोमेदश्चेन्द्रनीलकः ।
वैदूर्यं पुष्परागश्च पाचिर्माणिक्यमेव च ।
महारत्नानि चैतानि नव प्रोक्तानि सूरिभिः ॥

वज्रं हीरकम्, मुक्ता मौक्तिकम्, प्रवालम्, गोमेदः, इन्द्रनीलः, वैदूर्यम्, पुष्परागः पद्मरागः, पाचिः मरकतम्, तथा माणिक्यम्, एतानि नव सूरिभिः विद्वद्भिः महारत्नानि प्रोक्तानि कथितानि । शुनीटी.

रवेः प्रियं रक्तवर्णं माणिक्यं त्विन्द्रगोपरुक् ।
रक्तपीतसितश्यामच्छविर्मुक्ता प्रिया विधोः ॥

इन्द्रगोपस्य कीटविशेषस्य रुक् कान्तिरिव कान्तिर्यस्य तादृशं रक्तवर्णं माणिक्यं रवेः सूर्यस्य प्रियम् । रक्ता पीता सिता श्यामा च छविः कान्तिः यस्याः तथाभूता मुक्ता विधोः चन्द्रस्य प्रिया । शुनीटी.

सपीतरक्तरुग्भौमप्रियं विद्रुममुत्तमम् ।
मयूरचाषपत्राभा पाचिर्बुधहिता हरित् ॥

पीतया रक्तया च रुचा कान्त्या सहितं उत्तमं विद्रुमं प्रवालं भौमस्य मङ्गलस्य प्रियम् । मयूरस्य चाषस्य पक्षिभेदस्य च पत्रस्य पक्षस्येव आभा यस्याः तथोक्ता हरित् हरितवर्णा पाचिः मरकतं बुधस्य हिता प्रिया । शुनीटी.

**स्वर्णच्छविः पुष्परागः पीतवर्णो गुरुप्रियः ।**
**अत्यन्तविशदं वज्रं तारकाभं कवेः प्रियम् ॥**

स्वर्णस्येव छविः कान्तिः यस्य तथोक्तः पीतवर्णः पुष्परागः गुरोः बृहस्पतेः प्रियः । अत्यन्तविशदं अतिस्वच्छं तारकाभं तारासदृशं वज्रं हीरकं कवेः शुक्रस्य प्रियम् । शुनीटी.

**हितः शनेरिन्द्रनीलो ह्यसितो घनमेघरुक् ।**
**गोमेदः प्रियकृद्राहोरीषत्पीतारुणप्रभः ॥**

घनस्य निबिडस्य मेघस्येव रुक् कान्तिः यस्य तादृशः असितः श्यामलः इन्द्रनीलः शनेः हितः प्रियः । ईषत्पीता अरुणा रक्ता प्रभा यस्य तथाभूतः गोमेदः राहोः प्रियकृत् । शुनीटी.

**ओत्वक्ष्याभश्चलत्तन्तुर्वैदूर्यः केतुप्रीतिकृत् ॥**

ओतोः बिडालस्य अक्ष्णः इव आभा यस्य तथाभूतः चलन् तन्तुः शिखा यस्य तथोक्तः वैदूर्यः केतोः ग्रहस्य प्रीतिकृत् । शुनीटी.

**रत्नश्रेष्ठतरं वज्रं नीचे गोमेदविद्रुमे ।**
**गारुत्मतं तु माणिक्यं मौक्तिकं श्रेष्ठमेव हि ।**
**इन्द्रनीलं पुष्परागो वैदूर्यं मध्यमं स्मृतम् ॥**

वज्रं रत्नेषु श्रेष्ठतरं सर्वश्रेष्ठम् । गोमेदविद्रुमे नीचे सर्वरत्नाधमे । गारुत्मतं पाचिः, माणिक्यम्, तथा मौक्तिकं श्रेष्ठम् । इन्द्रनीलं पुष्परागः तथा वैदूर्यं मध्यमं स्मृतं कथितम् । शुनीटी.

**रत्नश्रेष्ठो दुर्लभश्च महाद्युतिरहेर्मणिः ॥**

अहेः सर्पस्य मणिः महाद्युतिः अत्युज्ज्वलः रत्नश्रेष्ठः दुर्लभश्च । शुनीटी.

**अजालगर्भं सद्वर्णं रेखाबिन्दुविवर्जितम् ।**
**सत्कोणं सुप्रभं रत्नं श्रेष्ठं रत्नविदो जगुः ॥**

अजालगर्भं सद्वर्णं रेखाभिः बिन्दुभिश्च विवर्जितं सत्कोणं उत्तमकोणविशिष्टं सुप्रभं समुज्ज्वलं रत्नं रत्नविदः रत्नतत्त्वज्ञा जनाः श्रेष्ठं जगुः गीतवन्तः । शुनीटी.

**शर्कराभं दलाभं च चिपिटं वर्तुलं हि तत् ।**
**वर्णाः प्रभाः सिता रक्ताः पीत-**
**कृष्णास्तु रत्नजाः ॥**

तत् रत्नं शर्कराभं शर्कराच्छवि, दलाभं पत्रकान्ति, चिपिटं चिपिटाकारम्, तथा वर्तुलं च । रत्नजाः मणिजाः वर्णाः प्रभाश्च सिताः श्वेताः रक्ताः पीताः कृष्णाश्च । शुनीटी.

**यथावर्णं यथाच्छायं रत्नं यद्दोषवर्जितम् ।**
**श्रीपुष्टिकीर्तिशौर्यायुःकरमन्यदसत्स्मृतम् ॥**

यद्रत्नं यथावर्णं वर्णेषु, यथाच्छायं कान्तिषु, दोषवर्जितं निर्दोषम्, तत् श्रीपुष्टिकीर्तिशौर्यायुःकरं श्रीवृद्धिकरं पुष्टिवर्धनं कीर्तिकरं शौर्यस्य आयुषश्च वर्धकम् । अन्यत् तद्भिन्नं असत् मन्दं स्मृतम् । शुनीटी.

**वर्णमाक्रमते छाया प्रभा वर्णप्रकाशिनी ॥**

छाया कान्तिः वर्णं आक्रमते उज्ज्वलयति प्रभा च कान्तिश्च वर्णप्रकाशिनी भवति । शुनीटी.

**पद्मरागस्तु मणिक्यभेदः कोकनदच्छविः ।**
**न धारयेत्पुत्रकामा नारी वज्रं कदाचन ॥**

पद्मरागस्तु माणिक्यस्य भेदः विशेषः । स च कोकनदच्छविः रक्तोत्पलकान्तिः । 'रक्तोत्पलं कोकनदम्' इत्यमरः । पुत्रकामा पुत्रार्थिनी नारी कदाचन वज्रं हीरकं न धारयेत् । शुनीटी.

**कालेन हीनं भवति मौक्तिकं विद्रुमं धृतम् ।**
**गुरुत्वात्प्रभया वर्णाद्विस्तारादाश्रयादपि ॥**

मौक्तिकं विद्रुमं च धृतं परिहितं कालेन समयक्रमेण गुरुत्वात् प्रभया वर्णात् विस्तारात् तथा आश्रयात् उत्कृष्टाधारात् हीनं भवति । शुनीटी.

**आकृत्या चाधिमूल्यं स्याद्रत्नं यद्दोषवर्जितम् ।**
**नायसोल्लिख्यते रत्नं विना मौक्तिकविद्रुमात् ।**
**पाषाणेनापि च प्राय इति रत्नविदो जगुः ॥**

यत् रत्नं आकृत्या आकारेण दोषवर्जितं तत् अधिमूल्यं अधिकमूल्यं स्यात् भवति । किंच, विद्रुमात् मौक्तिकाच्च विना विद्रुममौक्तिकभिन्नमित्यर्थः, रत्नं अयसा लौहेन पाषाणेन च प्रायो न उल्लिख्यते उद्घृष्यते

इति रत्नविदः जनाः जगुः गायन्ति स्म । शुनीटी.

**मूल्याधिक्याय भवति यद्रत्नं लघुविस्तृतम् ।**
**गुर्वल्पं हीनमौल्याय स्याद्रत्नं त्वपि सद्गुणम् ॥**

यत् रत्नं लघु अथ च विस्तृतं विशालं तत् मूल्याधिक्याय अधिकमूल्याय भवति । यच्च गुरु भारवत् अथ च अल्पं क्षुद्रं तत् सद्गुणं उत्कृष्टगुणमपि हीनमौल्याय अल्पमूल्यत्वाय स्यात् । शुनीटी.

**शर्कराभं हीनमौल्यं चिपिटं मध्यमं स्मृतम् ।**
**दलाभं श्रेष्ठमूल्यं स्याद्यथाकामात्तु वर्तुलम् ॥**

शर्कराभं रत्नं हीनमूल्यम् । चिपिटं रत्नं मध्यमं मध्यममूल्यं स्मृतम् । दलाभं पत्रकान्ति रत्नं श्रेष्ठमूल्यं महामूल्यम् । तथा वर्तुलं यथाकामात् क्रेतुर्विक्रेतुश्च इच्छावशात् मूल्यवत् स्यात् । शुनीटी.

**न जरां यान्ति रत्नानि विद्रुमं मौक्तिकं विना ।**
**राजदौष्ट्याच्च रत्नानां मूल्यं हीनाधिकं भवेत् ॥**

विद्रुमं प्रवालं मौक्तिकं च विना विद्रुममौक्तिकभिन्नानि इत्यर्थः, रत्नानि जरां वार्धक्यं हीनावस्थामित्यर्थः, न यान्ति न प्राप्नुवन्ति । राज्ञः दौष्ट्यात् दोषात् रत्नानां मूल्यं हीनं अधिकं च भवेत् । शुनीटी.

**मत्स्याहिशङ्खवाराहवेणुजीमूतशुक्तितः ।**
**जायते मौक्तिकं तेषु भूरि शुक्त्युद्भवं स्मृतम् ॥**

मौक्तिकं मत्स्यात्, अहेः सर्पात्, शङ्खात्, वराहात्, वेणुतः वंशात्, जीमूतात् मेघात्, शुक्तितश्च जायते । तेषु मध्ये शुक्त्युद्भवं शुक्तिजं भूरि प्रचुरं स्मृतम् । शुनीटी.

**कृष्णं सितं पीतरक्तं द्विचतुःसप्तकञ्चुकम् ।**
**त्रिपञ्चसप्तावरणमुत्तरोत्तरमुत्तमम् ॥**

शुक्त्युद्भवं मौक्तिकं कृष्णं श्यामलम्, सितं शुभ्रम्, पीतरक्तं पीताभया युक्तलोहितवर्णम्, द्विचतुःसप्तकञ्चुकम्, कञ्चुकं आवरणविशेषः, द्विकञ्चुकं चतुःकञ्चुकं सप्तकञ्चुकम्, त्रिपञ्चसप्तावरणं त्रिकञ्चुकं पञ्चकञ्चुकं सप्तकञ्चुकं वा भवति । एतेषामुत्तरोत्तरं उत्तमम् । शुनीटी.

**कृष्णं सितं क्रमाद्रक्तं पीतं तु जरठं विदुः ।**
**कनिष्ठं मध्यमं श्रेष्ठं क्रमाच्छुक्त्युद्भवं विदुः ॥**

शुक्त्युद्भवं शुक्तिजं मौक्तिकं क्रमात् कृष्णं सितं रक्तं पीतं तथा जरठं विदुः जानन्ति, मौक्तिकज्ञा इति शेषः । तच्च कनिष्ठं मध्यमं श्रेष्ठं च क्रमात् विदुः । शुनीटी.

**तदेव हि भवेद्वेध्यमवेध्यानीतराणि च ।**
**कुर्वन्ति कृत्रिमं तद्वत्सिंहलद्वीपवासिनः ॥**

तदेव मौक्तिकमेव वेध्यं वेधनीयम्, इतराणि अन्यानि अवेध्यानि । सिंहलद्वीपवासिनः जनाः तद्वत् यथार्थसदृशं कृत्रिमं मौक्तिकं कुर्वन्ति । शुनीटी.

**तत्संदेहविनाशार्थं मौक्तिकं सुपरीक्षयेत् ।**
**उष्णे सलवणस्नेहे जले निश्युषितं हि तत् ॥**

**व्रीहिभिर्मर्दितं नेयाद्वैवर्ण्यं तदकृत्रिमम् ।**
**श्रेष्ठाभं शुक्तिजं विद्यान्मध्याभं त्वितरद्विदुः ॥**

तेषु संदेहविनाशार्थं मौक्तिकं सुपरीक्षयेत् । यत् मौक्तिकं उष्णे उत्तप्ते सलवणस्नेहे लवणतैलसमन्विते जले निशि रात्रौ उषितं निक्षिप्तं पश्चात् व्रीहिभिः धान्यैः मर्दितं सत् वैवर्ण्यं वर्णविकृतिं न इयात् तत् श्रेष्ठाभं उज्ज्वलप्रभं अकृत्रिमं शुक्तिजं विद्यात् । मध्याभं मध्यविधप्रभायुक्तं इतरत् कृत्रिमं विदुः जानन्ति । शुनीटी.

**तुलाकल्पितमूल्यं स्याद्रत्नं गोमेदकं विना ॥**

गोमेदकं रत्नं विना अन्यत् रत्नं तुलया तुलादण्डेन कल्पितं मूल्यं यस्य तथाभूतं स्यात् । तुलया अन्येषां मूल्यं कल्पनीयमित्यर्थः । शुनीटी.

**क्षुमाविंशतिभी रक्ती रत्नानां मौक्तिकं विना ।**
**रक्तित्रयं तु मुक्तायाश्चतुःकृष्णलकैर्भवेत् ॥**

मौक्तिकं विना अन्येषां रत्नानां क्षुमाविंशतिभिः विंशतिक्षुमाभिरित्यर्थः, रक्तिः स्यात् । चतुःकृष्णलकैः चतुर्भिः कृष्णलकैः परिमाणविशेषैः मुक्तायाः रक्तित्रयं भवेत् । शुनीटी.

चतुर्विंशतिभिस्तामी रत्नटङ्कस्तु रक्तिभिः ।
टङ्कैश्चतुर्भिस्तोलः स्यात्स्वर्णविद्रुमयोः सदा ॥

चतुर्विंशतिभिः ताभिः रक्तिभिः रत्नटङ्कः, भवेदिति शेषः । चतुर्भिः टङ्कैः सदा स्वर्णस्य विद्रुमस्य च तोलः स्यात् । शुनीटी.

एकस्यैव हि वज्रस्य त्वेकरक्तिमितस्य च ।
सुविस्तृतदलस्यैव मूल्यं पञ्चसुवर्णकम् ॥

एकरक्तिमितस्य सुविस्तृतदलस्य एकस्यैव वज्रस्य हीरकस्य मूल्यं पञ्चसुवर्णकं सुवर्णानां अशीतिरक्तिकस्वर्णानां पञ्चकम् । शुनीटी.

रक्तिकादलविस्ताराच्छ्रेष्ठं पञ्चगुणं यदि ।
यथा यथा भवेन्न्यूनं हीनमौल्यं तथा तथा ॥

यदि रक्तिकादलविस्तारात् रक्तिकायाः दलात् विस्ताराच्च श्रेष्ठं वज्रं भवति तदा पञ्चगुणं पूर्वोक्तात् पञ्चगुणं मूल्यं भवति । किंच, यथा यथा न्यूनम्, रक्तिकादलविस्तारादिति भावः, तथा तथा हीनमौल्यं मूल्यहानिर्भवेदित्यर्थः । शुनीटी.

अत्राष्टरक्तिको माषो दशमाषैः सुवर्णकः ।
स्वर्णस्य तत्पञ्चमूल्यं राजताशीतिकर्षकम् ॥

अत्र रत्नतोलनविषये अष्टरक्तिकः माषः भवेत् । दशभिः माषैः सुवर्णकः । राजताशीतिकर्षकं अशीतिकर्षपरिमितरजतं स्वर्णस्य सुवर्णस्य तत् प्रसिद्धं पञ्चमूल्यं पञ्चानां सुवर्णानां मूल्यमित्यर्थः । शुनीटी.

यथा गुरुतरं वज्रं तन्मूल्यं रक्तिवर्गतः ।
तृतीयांशविहीनं तु चिपिटस्य प्रकीर्तितम् ॥

वज्रं यथा यादृशं गुरुतरं तन्मूल्यं तस्य मूल्यं रक्तिवर्गतः रक्तिगणनया, वेदितव्यमिति शेषः । चिपिटस्य चिपिटाकारस्य वज्रस्य मूल्यं तृतीयांशेन विहीनं प्रकीर्तितम् । शुनीटी.

अर्धं तु शर्कराभस्य चोत्तमं मूल्यमीरितम् ।
रक्तिकायाश्च द्वे वज्रे तदर्धं मूल्यमर्हतः ॥

शर्कराभस्य वज्रस्य उत्तमं मूल्यं अर्धम्, उत्कृष्टवज्रमूल्यादिति भावः, ईरितं कथितम् । द्वे वज्रे रक्तिकाया हेतुना एकरक्तिपरिमिते इत्यर्थः, तस्य उत्कृष्टस्य वज्रस्य अर्धं मूल्यं अर्हतः । शुनीटी.

तदर्धं बहवोऽर्हन्ति मध्या हीना यथागुणैः ।
उत्तमार्धं तदर्धं वा हीरका गुणहानतः ॥

यथागुणैः उपयुक्तगुणैरित्यर्थः, मध्याः मध्यमाः हीनाश्च बहवः हीरकाः तदर्धं तस्य मूल्यस्य अर्धं अर्हन्ति । हीरकाः गुणहानतः गुणह्रासात् उत्तमार्धं उत्तममूल्यं तदर्धं तस्य उत्तमस्य अर्धं वा, अर्हन्तीति शेषः । शुनीटी.

वर्गरक्तिषु संधार्यं कलानां नवकं पृथक् ।
तथांऽशपञ्चकं पूर्वं त्रिंशद्भिस्तद्भजेत्ततः ॥
लब्धं कलासु संयोज्यं कलानां षोडशांशकैः ।
मुक्तानां कल्पयेन्मूल्यं हीनमध्योत्तमं यथा ॥

वर्गरक्तिषु समद्विहतासु रक्तिषु पृथक् पृथक् कलानां नवकं नवकला इत्यर्थः, तथा अंशपञ्चकं संधार्यं रक्ष्यम् । तत्र पूर्वं कलानवकमित्यर्थः, त्रिंशद्भिः भजेत् विभक्तं कुर्यात् । ततः लब्धं विभागलब्धं कलासु संयोज्यम् । कलानां षोडशांशकैः षोडशभिः अंशैः मुक्तानां हीनमध्योत्तमं यथा हीनमध्योत्तमानुसारेणेत्यर्थः, मूल्यं कल्पयेत् । शुनीटी.

सहस्रादधिके मुक्तारक्तिवर्गशते शते ।
कलात्रिंशतकं त्यक्त्वा शेषान्मूल्यं प्रकल्पयेत् ॥

मुक्तारक्तीनां यो वर्गः समद्विघातः, तस्य शते शतगुणिते तस्मिन्नित्यर्थः, सहस्रादधिके शते सति कलानां त्रिंशतकं त्यक्त्वा, तस्मादिति भावः, शेषात् अवशिष्टात् मूल्यं प्रकल्पयेत् । शुनीटी.

शतादूर्ध्वं रक्तिवर्गाद्ध्रसो विंशतिरक्तिकाः ।
प्रतिशतात्तु वज्रस्य सुविस्तृतदलस्य च ।
तथैव चिपिटस्यापि विस्तृतस्य च ह्रासयेत् ॥
शर्कराभस्य पञ्चाशच्चत्वारिंशच्च वैकतः ॥

ह्रसः ह्रासपद्धः जनः सुविस्तृतदलस्य वज्रस्य शतात् रक्तिवर्गात् रक्तीनां वर्गात् समभि( ? द्वि)घातात् ऊर्ध्वं विंशतिरक्तिकाः, विस्तृतस्य चिपिटस्य चिपिटाकारस्य वज्रस्य प्रतिशतादूर्ध्वं पञ्चाशद्रक्तिकाः, तथा शर्कराभस्य शकरासदृशस्य वज्रस्य प्रतिशतात् एकतः चत्वारिंशत् एकाधिकचत्वारिंशत् रक्तिकाः ह्रासयेत् न्यूनयेत् । शुनीटी.

रत्नं न धारयेत्कृष्णरक्तबिन्दुयुतं सदा ॥

कृष्णैः श्यामलैः रक्तैश्च बिन्दुभिर्युतं रत्नं सदा न धारयेत् । शुनीटी.

गारुत्मतं तूत्तमं चेन्माणिक्यं मूल्यमर्हतः ।
सुवर्णं रक्तिमात्रं चेद्यथा रक्तिस्तथा गुरु ॥

रक्तिमात्रं रक्तिपरिमितं गारुत्मतं माणिक्यं च रत्नं उत्तमं चेत्तदा सुवर्णं मूल्यं अर्हतः । यथा यावती रक्तिः तथा गुरु मूल्यं भवेदित्यर्थः । शुनीटी.

रक्तिमात्रः पुष्परागो नीलः स्वर्णार्घमर्हतः ।
चलत्त्रिसूत्रो वैदूर्यश्चोत्तमं मूल्यमर्हति ॥

रक्तिमात्रः रक्तिपरिमितः पुष्परागः नीलश्च स्वर्णस्य अर्घं मूल्यं अर्हतः । चलन्ति त्रीणि सूत्राणि यस्य तादृशः वैदूर्यः उत्तमं मूल्यं अर्हति । शुनीटी.

प्रवालं तोलकमितं स्वर्णार्धं मूल्यमर्हति ।
अत्यल्पमूल्यो गोमेदो नोन्मानं तु यतोऽर्हति ॥

तोलकमितं तोलकपरिमितं प्रवालं स्वर्णस्य अर्धं मूल्यं अर्हति । गोमेदः अत्यल्पमूल्यः, यतः उन्मानं तोलनं न अर्हति । शुनीटी.

संख्यातः स्वल्परत्नानां मूल्यं स्याद्धीरकाद्विना ।
अत्यन्तरमणीयानां दुर्लभानां च कामतः ।
भवेन्मूल्यं न मानेन तथाऽतिगुणशालिनाम् ॥

हीरकाद्विना स्वल्पानां क्षुद्राणां रत्नानां संख्यातः गणनया मूल्यं स्यात् । अत्यन्तरमणीयानां दुर्लभानां च रत्नानां कामतः इच्छानुसारेण मूल्यं स्यात् । किंच, अतिगुणशालिनां रत्नानां मानेन परिमाणेन मूल्यं न भवेत् । शुनीटी.

व्यङ्घ्रिश्चतुर्दशहतो वर्गो मौक्तिकरक्तिजः ।
चतुर्विंशतिभिर्भक्तो लब्धान्मूल्यं प्रकल्पयेत् ॥

मौक्तिकरक्तिजः वर्गः व्यङ्घ्रिः पादहीनः चतुर्दशभिर्हतः गुणितः तथा चतुर्विंशतिभिः भक्तः सन् यो लब्धो भवेत् तस्मात् लब्धात् मूल्यं प्रकल्पयेत् । शुनीटी.

उत्तमं तु सुवर्णार्घमूनमूनं यथागुणम् ॥

उत्तमं मौक्तिकं सुवर्णार्घं स्वर्णमूल्यम् । ऊनं ततः अपकृष्टम्, मध्यममित्यर्थः, पुनश्च ऊनं ततोऽप्यपकृष्टम्, अधममित्यर्थः, यथागुणं गुणानुसारेण मूल्यवदित्यर्थः । शुनीटी.

रक्तं पीतं वर्तुलं चेन्मौक्तिकं चोत्तमं सितम् ।
अधमं चिपिटं शर्कराभमन्यत्तु मध्यमम् ॥

रक्तं पीतं तथा सितं श्वेतवर्णं मौक्तिकं वर्तुलं चेत् उत्तमम् । चिपिटं चिपिटाकारं तथा शर्कराभं मौक्तिकं अधमम् । अन्यत् एतद्व्यतिरिक्तं तु मध्यमम् । शुनीटी.

सप्तधातुपरीक्षा

रत्ने स्वाभाविका दोषाः सन्ति धातुषु कृत्रिमाः ।
अतो धातून् संपरीक्ष्य तन्मूल्यं कल्पयेद्बुधः ॥

रत्ने स्वाभाविकाः अकृत्रिमाः दोषाः सन्ति । किंतु धातुषु खनिजेषु द्रव्येषु तु कृत्रिमाः, सन्तीति शेषः । अतः अस्मात् कारणात् बुधः धातून् संपरीक्ष्य तेषां मूल्यं कल्पयेत् । शुनीटी.

सुवर्णं रजतं ताम्रं वङ्गं सीसं च रङ्गकम् ।
लोहं च धातवः सप्त ह्येषामन्ये तु संकराः ॥

धातूनाह— सुवर्णमिति । धातवः सप्त, यथा सुवर्णं रजतं ताम्रं वङ्गं सीसं रङ्गकं लोहं च । अन्ये एतद्व्यतिरिक्तास्तु संकराः मिश्राः । शुनीटी.

यथापूर्वं तु श्रेष्ठं स्यात्स्वर्णं श्रेष्ठतरं मतम् ।
वङ्गताम्रभवं कांस्यं पित्तलं ताम्ररङ्गजम् ॥

यथापूर्वं एषां पूर्वं पूर्वं श्रेष्ठं स्यात् । स्वर्णं तु श्रेष्ठतरं मतम् । कांस्यं वङ्गताम्रभवं वङ्गताम्राभ्यां मिश्राभ्यां जातम् । किंच, पित्तलं ताम्ररङ्गजं ताम्ररङ्गाभ्यां मिश्राभ्यां उत्पन्नमित्यर्थः । शुनीटी.

मानसममपि स्वर्णं तनु स्यात्पृथुलाः परे ॥

स्वर्णं मानेन परिमाणेन समं तुल्यमपि तनु स्वल्पं स्यात्, अन्यापेक्षयेति शेषः । परे अन्ये धातवः स्वर्णसमपरिमाणा अपि पृथुलाः स्थूलाः स्युः, स्वर्णापेक्षयेति भावः । शुनीटी.

**एकच्छिद्रसमाकृष्टे समखण्डे द्वयोर्यदा ।**
**धातोः सूत्रं मानसमं निर्दुष्टस्य भवेत्तदा ॥**

यदा द्वयोः धात्वोः समे तुल्ये खण्डे एकेन छिद्रेण समाकृष्टे भवतः तदा निर्दुष्टस्य दोषरहितस्य धातोः सूत्रं मानसमं परिमाणेन तुल्यं भवेत् । शुनीटी.

**यन्त्रशस्त्रास्त्ररूपं यन्महामूल्यं भवेदयः ।**
**रजतं षोडशगुणं भवेत्स्वर्णस्य मूल्यकम् ॥**

यन्त्ररूपं शस्त्ररूपं च अयः लोहं महामूल्यं महार्घं भवेत् । किंच, स्वर्णस्य मूल्यकं षोडशगुणं रजतं भवेत् । शुनीटी.

**ताम्रं रजतमूल्यं स्यात्प्रायोऽशीतिगुणं तथा ।**
**ताम्राधिकं सार्धगुणं वङ्गं वङ्गात्तथा परे ॥**

**रङ्गसीसे द्वित्रिगुणे ताम्राल्लोहं तु षड्गुणम् ।**
**मूल्यमेतद्विशिष्टं तु ह्युक्तं प्राङ्मूल्यकल्पनम् ॥**

प्रायः बाहुल्येन अशीतिगुणम्, रजतापेक्षयेति शेषः, ताम्रं रजतस्य मूल्यं स्यात् । सार्धगुणं अर्धसहितैकगुणितं वङ्गं ताम्राधिकं ताम्रस्य अधिकं मूल्यमित्यर्थः । तथा परे अन्ये धातवः वङ्गात् सार्धैकगुणितात्, मूल्यवन्तः इति शेषः । रङ्गसीसे रङ्गं सीसं चेत्यर्थः, ताम्रात् द्वित्रिगुणे-क्रमेण रङ्गं ताम्रस्य द्विगुणं सीसं ताम्रस्य त्रिगुणं ताम्रेण सममिति भावः । लोहं तु षड्गुणम्, ताम्रादिति शेषः । षड्गुणं लोहं एकगुणेन ताम्रेण सममिति भावः । एतत् मूल्यं विशिष्टं विशेषेण उक्तम्, प्राक् पूर्वं मूल्यकल्पनं उक्तम् । शुनीटी.

गवादिपशूनां मूल्यनिश्चयः

**सुशृङ्गवर्णा सुदुघा बहुदुग्धा सुवत्सका ।**
**तरुण्यल्पा वा महती मूल्याधिक्याय गौर्भवेत् ॥**

सुशृङ्गवर्णा शोभनशृङ्गा, सुवर्णा, सुदुघा अक्लेशदोहना, बहुदुग्धा समधिकदुग्धवती, सुवत्सका तरुणी अल्पा वा महती गौः मूल्याधिक्याय अधिकमूल्याय भवेत् । शुनीटी.

**पीतवत्सा *प्रष्ठदुग्धा तन्मूल्यं राजतं पलम् ।**
**अजायाश्च गवार्धं स्यान्मेष्या मूल्यमजार्धकम् ॥**

पीतवत्सा पीतवर्णवत्सवती गौः प्रष्ठदुग्धा प्रशंसनीयदुग्धा चेत् तदा तस्या मूल्यं राजतं पलं पलपरिमितरजतम् । अजायाः छाग्याः मूल्यं गवार्धं गोमूल्यार्धम्, तथा मेष्या मूल्यं अजाया मूल्यार्धकम् । शुनीटी.

**दृढस्य युद्धशीलस्य पलं मेषस्य राजतम् ।**
**दश वाऽष्टौ पलं मूल्यं राजतं तूत्तमं गवाम् ॥**

दृढस्य समर्थस्य, पुष्टदेहस्येत्यर्थः, युद्धशीलस्य मेषस्य मूल्यं राजतं पलम् । गवां तु उत्तमं मूल्यं दश वा अष्टौ राजतं पलम् । शुनीटी.

**पलं मेष्या अवेश्चापि राजतं मूल्यमुत्तमम् ।**
**गवां समं सार्धगुणं महिष्या मूल्यमुत्तमम् ॥**

मेष्याः अवेः मेषस्य च उत्तमं मूल्यं राजतं पलम् । महिष्या उत्तमं मूल्यं सार्धगुणं सार्धैकगुणितं गवां समम्, मूल्यसममित्यर्थः । शुनीटी.

**सुशृङ्गवर्णबलिनो वोढुः शीघ्रगमस्य च ।**
**अष्टतालवृषस्यैव मूल्यं षष्टिपलं स्मृतम् ॥**

सुशृङ्गस्य सुवर्णस्य बलिनः वोढुः वहनक्षमस्य शीघ्रगमस्य शीघ्रगामिनः अष्टतालवृषस्य मूल्यं षष्टिपलं स्मृतं कथितम् । शुनीटी.

**महिषस्योत्तमं मूल्यं सप्त चाष्टौ पलानि च ।**
**द्वित्रिचतुःसहस्रं वा मूल्यं श्रेष्ठं गजाश्वयोः ॥**

महिषस्य उत्तमं मूल्यं सप्त अष्टौ च पलानि । चशब्दो विकल्पार्थः । गजाश्वयोः गजस्य अश्वस्य च द्विसहस्रं त्रिसहस्रं चतुःसहस्रं वा श्रेष्ठं मूल्यम्, गुणानुसारेण वेदितव्यमिति शेषः । शुनीटी.

**उष्ट्रस्य माहिषसमं मूल्यमुत्तममीरितम् ॥**

उष्ट्रस्य उत्तमं मूल्यं माहिषेण महिषमूल्येन समं ईरितं कथितम् । शुनीटी.

---

* 'प्रष्ठदुग्धा' इत्यत्र 'प्रस्थदुग्धा' इति पाठान्तरं सम्यक् भाति ।

**योजनानां शतं गन्ता चैकेनाह्नाऽश्व उत्तमः ।**
**मूल्यं तस्य सुवर्णानां श्रेष्ठं पञ्च शतानि हि ॥**

एकेन अह्ना दिवसेन योजनानां शतं गन्ता गन्तुं समर्थः अश्वः उत्तमः । सुवर्णानां पञ्चशतानि तस्य श्रेष्ठं मूल्यं हि । हिशब्दः अवधारणार्थः । शुनीटी.

**त्रिंशद्योजनगन्ता वै उष्ट्रः श्रेष्ठस्तु तस्य वै ।**
**पलानां तु शतं मूल्यं राजतं परिकीर्तितम् ॥**

यः उष्ट्रः त्रिंशद्योजनगन्ता स श्रेष्ठः । तस्य मूल्यं पलानां राजतं शतं शतपलपरिमितराजतमित्यर्थः, परिकीर्तितम् । शुनीटी.

**बलेनोच्चेन युद्धेन मदेनाप्रतिमो गजः ।**
**यस्तस्य मूल्यं निष्काणां द्विसहस्रं प्रकीर्तितम् ॥**

यः गजः उच्चेन महता बलेन युद्धेन मदेन च अप्रतिमः असदृशः तस्य मूल्यं निष्काणां द्विसहस्रं प्रकीर्तितम् । शुनीटी.

**चतुर्माषमितं स्वर्णं निष्क इत्यभिधीयते ।**
**पञ्चरक्तिमितो माषो गजमौल्ये प्रकीर्तितः ॥**

चतुर्भिः माषैः मितं परिमितं स्वर्णं निष्कः इति अभिधीयते कथ्यते । गजमौल्ये हस्तिमूल्यविषये पञ्चरक्तिमितः पञ्चरक्तिपरिमाणः वस्तुविशेषः माषः प्रकीर्तितः कथितः । शुनीटी.

**रत्नभूतं तु तत्तस्याद्यद्यदप्रतिमं भुवि ।**
**यथादेशं यथाकालं मूल्यं सर्वस्य कल्पयेत् ॥**

भुवि पृथिव्यां यद्यद्वस्तु अप्रतिमं असदृशम्, असाधारणमित्यर्थः, तत्तत् रत्नभूतं रत्नस्वरूपम् । अतः यथादेशं देशानुसारेण यथाकालं कालानुसारेण सर्वस्य रत्नभूतस्य वस्तुनः मूल्यं कल्पयेत् । शुनीटी.

**न मूल्यं गुणहीनस्य व्यवहाराक्षमस्य च ।**
**नीचमध्योत्तमत्वं तु सर्वस्मिन् मूल्यकल्पने ।**
**चिन्तनीयं बुधैर्लोकाद्वस्तुजातस्य सर्वदा ॥**

गुणहीनस्य व्यवहाराक्षमस्य कार्यायोग्यस्य वस्तुनः मूल्यं नास्ति । किंच, बुधैः विद्वद्भिः सर्वस्मिन् मूल्यकल्पने लोकात् लोकपरम्परातः वस्तुजातस्य समस्तस्य वस्तुनः नीचमध्योत्तमत्वं अधमत्वं मध्यमत्वं उत्तमत्वं च सर्वदा चिन्तनीयम् । शुनीटी.

पण्ये शुल्कग्रहणविधिः

**विक्रेतृक्रेतृतो राजभागः शुल्कमुदाहृतम् ।**
**शुल्कदेशा हट्टमार्गाः करसीमाः प्रकीर्तिताः ॥**

विक्रेतुः क्रेतुश्च सकाशात् राजभागः राजप्राप्यांशः शुल्कं उदाहृतं कथितम् । विधेयप्राधान्यात् नपुंसकत्वं ज्ञेयम् । शुल्कदेशाः शुल्कग्रहणस्थानानि हट्टमार्गाः व्यवसायस्थानानि करसीमाः करस्य शुल्कस्य सीमाः निर्दिष्टा अवधयश्च प्रकीर्तिताः । शुनीटी.

**वस्तुजातस्यैकवारं शुल्कं ग्राह्यं प्रयत्नतः ।**
**क्वचिन्नैवासकृच्छुल्कं राष्ट्रे ग्राह्यं नृपैश्छलात् ॥**

नृपैः वस्तुजातस्य वस्तुसमूहस्य प्रयत्नतः प्रयत्नेन च एकवारं शुल्कं ग्राह्यम् । क्वचिद्राष्ट्रे छलात् छलमाश्रित्येति यावत्, असकृत् वारंवारं शुल्कं नैव ग्राह्यम् । शुनीटी.

**द्वात्रिंशांशं हरेद्राजा विक्रेतुः क्रेतुरेव वा ।**
**विंशांशं वा षोडशांशं शुल्कं मूल्याविरोधकम् ॥**

राजा विक्रेतुः क्रेतुः वा सकाशात् मूल्याविरोधकं मूल्याविरुद्धं यथा तथा द्वात्रिंशांशं विंशांशं षोडशांशं वा शुल्कं हरेत् गृह्णीयात् । विकल्पश्चैषः द्रव्यस्य मूल्यस्य च तारतम्यानुसारेण वेदितव्यः । शुनीटी.

**न हीनसममूल्याद्धि शुल्कं विक्रेतृतो हरेत् ।**
**लाभं दृष्ट्वा हरेच्छुल्कं क्रेतृतश्च सदा नृपः ॥**

विक्रेतृतः विक्रेतुः सकाशात् हीनात् क्रयमूल्यतः न्यूनात् समात् तुल्याच्च शुल्कं न हरेत् हि, नैव गृह्णीयादित्यर्थः । नृपः लाभं अल्पमूल्येन अधिकद्रव्यलाभं दृष्ट्वा क्रेतृतश्च क्रेतुः सकाशाच्च सदा शुल्कं हरेत् । शुनीटी.

फलानुसारेण कृषिभूमिकरतारतम्यनिश्चयः

**बहुमध्याल्पफलितां भुवं मानमितां सदा ।**
**ज्ञात्वा पूर्वं भागमिच्छुः पश्चाद्भागं विकल्पयेत् ॥**

सदा भागमिच्छुः शुल्कभागाकाङ्क्षी राजा, पूर्वं प्रथमं बहुफलां मध्यफलां वा अल्पफलां मानमितां परि-

माणेन कृतमानां भुवं भूमिं ज्ञात्वा पश्चात् भागम्, शुल्कस्येति शेषः, विकल्पयेत् विशेषेण निर्दिशेत्। शुनीटी.

**हरेच्च कर्षकाद्भागं यथा नष्टो भवेन्न सः।**
**मालाकार इव ग्राह्यो भागो नाङ्गारकारवत्॥**

यथा सः भूशुल्कदाता नष्टः क्षतिग्रस्तः न भवेत् कर्षकात् कृषीवलात् तथा भागं हरेत्। मालाकार इव माली यथा तरुलताभ्यः अल्पमल्पं पुष्पं चिनोति तथेति भावः। अङ्गारकारवत् अङ्गारकारेण तुल्यं यथा तथा भागः शुल्करूपांशः न ग्राह्यः। शुनीटी.

**बहुमध्याल्पफलतस्तारतम्यं विमृश्य च।**
**राजभागादिव्ययतो द्विगुणं लभ्यते यतः।**
**कृषिकृत्यं तु तच्छ्रेष्ठं तन्न्यूनं दुःखदं नृणाम्॥**

बहुमध्याल्पफलतः बहुफलानुसारेण मध्यफलानुसारेण अल्पफलानुसारेण च तारतम्यं भूमेर्गुणागुणमित्यर्थः, विमृश्य विविच्य यतः कृषिकृत्यात् कृषिकार्यात् राजभागादिव्ययतः राजदेयशुल्कादीनां व्ययात् द्विगुणं लभ्यते तत्तु तदेव कृषिकृत्यं श्रेष्ठम्। तस्मात् न्यूनम्, यत्किंचिल्लाभकरमित्यर्थः, कृषिकृत्यं नृणां दुःखदं दुःखदायकम्। शुनीटी.

**तडागवापिकाकूपमातृकाद्देवमातृकात्।**
**देशान्नदीमातृकात्तु राजाऽनुक्रमतः सदा॥**
**तृतीयांशं चतुर्थांशमर्धांशं तु हरेत्फलम्।**
**षष्ठांशमूषरात्तद्वत्पाषाणादिसमाकुलात्॥**

राजा सदा तडागवापिकाकूपमातृकात् सरोवरदीर्घिकाकूपजलैः संपाद्यकृषेः, देवमातृकात् वृष्टिजलसंपाद्यकृषेरित्यर्थः, नदीमातृकात् नदीजलैः संपाद्यकृषेश्च देशात् तृतीयांशं चतुर्थांशं तथा अर्धांशं अनुक्रमतः यथाक्रमेण, तद्वत् तथा ऊषरात् अनुर्वराद्वा पाषाणादिसमाकुलात् प्रस्तरप्रधानात् देशाच्च षष्ठांशं फलं हरेत्। शुनीटी.

**राजभागस्तु रजतशतकर्षमितो यतः।**
**कर्षकाल्लभ्यते तस्मै विंशांशमुत्सृजेन्नृपः॥**

यतः कर्षकात् कृषीवलात् रजतानां शतकर्षमितः शतरजतकर्षपरिमितः राजभागः लभ्यते, नृपः तस्मै कर्षकाय विंशांशं स्वप्राप्यात् विंशतिभागैकभागं उत्सृजेत् त्यजेत्। शुनीटी.

स्वर्णादिखनिजकरग्रहणविधिः

**स्वर्णादर्धं च रजतात्तृतीयांशं च ताम्रतः।**
**चतुर्थांशं तु षष्ठांशं लोहाद्वङ्गाच्च सीसकात्॥**
**रत्नार्धं चैव क्षारार्धं खनिजाद्व्ययशेषतः।**
**लाभाधिक्यं कर्षकादेर्यथा दृष्ट्वा हरेत्फलम्।**
**त्रिधा वा पञ्चधा कृत्वा सप्तधा दशधाऽपि वा॥**

व्ययशेषत इति सर्वत्र संबध्यते। खनिजात् व्ययशेषतः व्ययावशिष्टात् स्वर्णात् अर्धम्, रजतात् तृतीयांशम्, ताम्रतः ताम्रात् चतुर्थांशम्, लोहात् वङ्गात् सीसकाच्च षष्ठांशम्, रत्नानां हीरकादीनां अर्धम्, क्षाराणां लवणानां च अर्धम्, तथा कर्षकादेः लाभाधिक्यं दृष्ट्वा विविच्येत्यर्थः, त्रिधा पञ्चधा सप्तधा वा दशधा कृत्वा यथा यथोपयुक्तं फलं हरेत्, राजेति शेषः। शुनीटी.

वनजन्येषु तृणकाष्ठादिषु गोमहिष्यश्वादिषु कारुशिल्पिषु जलाशयनिर्मातृषु नवभूमिकर्षकेषु च करग्रहणविवेकः

**तृणकाष्ठादिहरकाद्विंशत्यंशं हरेत्फलम्।**
**अजाविगोमहिष्यश्ववृद्धितोऽष्टांशमाहरेत्।**
**महिष्यजाविगोदुग्धात्षोडशांशं हरेन्नृपः॥**

नृपः तृणकाष्ठादिहरकात् तृणकाष्ठानां आहरणकारिणः जनात् विंशत्यंशं फलं हरेत्। अजानां छागानां अवीनां मेषाणां गवां महिषीणां अश्वानां च वृद्धितः वृद्धेः अष्टांशं अष्टमं भागं हरेत्। तथा महिषीणां अजानां छागीनां अवीनां मेषीणां गवां च दुग्धात् षोडशांशं हरेत्। शुनीटी.

**कारुशिल्पिगणात्पक्षे दैनिकं कर्म कारयेत्।**
**तस्य वृद्ध्यै तडागं वा वापिकां कृत्रिमां नदीम्॥**
**कुर्वन्त्यन्यत्तद्विधं वा कर्षन्त्यभिनवां भुवम्।**
**तद्व्ययद्विगुणं यावन्न तेभ्यो भागमाहरेत्॥**

कारुगणान् शिल्पिगणांश्च पक्षे पञ्चदशदिनाभ्यन्तरे दैनिकं एकदिनसाध्यं कर्म कारयेत्। एतदेव तेषां

राजभागदानमिति भावः। ये च तस्य राज्ञः वृद्धयै राज्योन्नत्यै तडागं वापिकां दीर्घिकां वा कृत्रिमां नदीं अथवा अन्यत् तद्विधं तद्रूपं कर्म कुर्वन्ति, ये च अभिनवां नवोत्थितां भुवं कर्षन्ति कर्षणेन उर्वरां कुर्वन्तीत्यर्थः, यावत् तद्व्ययात् तस्य कर्मणः व्ययात् द्विगुणम्, लभ्यते इति शेषः, तावत् तेभ्यः कर्मकरेभ्यः भागं राजांशं न आहरेत्। द्विगुणातिरिक्ते तु आहरेदेवेत्यर्थः। शुनीटी.

करहरणे कालविलम्बो निषिद्धः, कर्षकाय भागपत्रदानं ग्रामपनियोजनं च

**भुवि भागं भृतिं शुल्कं वृद्धिमुत्कोचकं करम्।**
**सद्य एव हरेत्सर्वं न तु कालविलम्बनैः॥**

भुवि पृथिव्यां भागम्, भृतिं वेतनम्, शुल्कम्, वृद्धिं कुसीदम्, उत्कोचकं भाविहितकार्यकरणोत्साहदानार्थं देयं धनम्, तथा करं राजस्वम्, एतत्सर्वं सद्य एव हरेत्, कालविलम्बनैः न तु नैव। शुनीटी.

**दद्यात्प्रतिकर्षकाय भागपत्रं स्वचिह्नितम्।**
**नियम्य ग्रामभूभागमेकस्माद्धनिकाद्धरेत्॥**
**गृहीत्वा तत्प्रतिभुवं धनं प्राक् तत्समं तु वा।**
**विभागशो गृहीत्वाऽपि मासि मासि ऋतौ ऋतौ॥**

प्रतिकर्षकाय प्रत्येकं कृषिकारिणे इत्यर्थः, स्वचिह्नितं स्वाक्षरितं भागस्य राजांशस्य पत्रं लेख्यं दद्यात्। वा अथवा ग्रामभूभागं नियम्य निरूप्य, निर्धार्य इत्यर्थः, एकस्मात् धनिकात् धनवतः जनात् तस्य धनिकस्य प्रतिभुवं प्रतिरूपं गृहीत्वा वा तत्समं राजदेयधनसमानं धनं प्राक् लेख्यदानात् पूर्वं गृहीत्वा, किंवा मासि मासि प्रतिमासं ऋतौ ऋतौ प्रतिद्विमासं विभागशः विभागक्रमेण उक्तं ग्रामभुवो भागं राजस्वमित्यर्थः, हरेत् गृह्णीयात्। शुनीटी.

**षोडशद्वादशदशाष्टांशतो वाऽधिकारिणः।**
**स्वांशात्षष्ठांशभागेन ग्रामपान् संनियोजयेत्॥**

षोडशांशात् द्वादशांशात् दशांशात् अष्टांशाच्च स्वांशात् राजप्राप्यांशात् षष्ठांशभागेन यथायथषष्ठभागरूपेण वेतनेन ग्रामपान् ग्रामपालकान् अधिकारिणः भृत्यान् वा संनियोजयेत्। शुनीटी.

करार्हानर्हयोः करपरिमाणस्य च विवेकः

**गवादिदुग्धान्न फलं कुटुम्बार्थाद्धरेन्नृपः।**
**उपभोगे धान्यवस्त्रं क्रेतृतो नाऽऽहरेत्फलम्॥**

नृपः कुटुम्बार्थात् परिवारभरणार्थात् गवादीनां दुग्धात् फलं करं न हरेत्। तथा उपयोगे स्वव्यवहारार्थम्, न तु व्यवसायार्थमित्यर्थः, धान्यं वस्त्रं च क्रेतृतः क्रेतुः सकाशात् फलं शुल्कं नाऽऽहरेत्। शुनीटी.

**वार्धुषिकाच्च कौसीदाद्द्वात्रिंशांशं हरेन्नृपः।**
**गृहाद्याधारभूशुल्कं कृष्टभूमेरिवाऽऽहरेत्॥**

नृपः वार्धुषिकात् वृद्धिजीविनः कौसीदात् ऋणदातुः सकाशात् त्रिंशांशं करं हरेत्। तथा कृष्टभूमेरिव गृहादीनां आधारभुवः वासभूम्याः शुल्कं हरेत्। शुनीटी.

**तथा चाऽऽपणिकेभ्यस्तु पण्यभूशुल्कमाहरेत्।**
**मार्गसंस्काररक्षार्थं मार्गगेभ्यो हरेत्फलम्॥**

राजा आपणिकेभ्यः विपणिजीविभ्यः पण्यभूशुल्कं विक्रयस्थानशुल्कं आहरेत्। तथा मार्गगेभ्यः पथिकेभ्यः मार्गसंस्काररक्षार्थं फलं शुल्कं हरेत्। शुनीटी.

**सर्वतः फलभुग्भूत्वा दासवत्स्यात्तु रक्षणे।**
**इति कोशप्रकरणं समासात्कथितं किल॥**

राजा सर्वतः सर्वस्मात् जनात् रक्षणे रक्षणार्थे दासवत् भृत्यवत् फलभुक् राजस्वरूपवेतनभोगी स्यात्। इति अनेन प्रकारेण समासात् संक्षेपात् कोशप्रकरणं किल निश्चितं कथितम्। शुनीटी.

कोशधनव्ययविभागाः

***[1]..............वत्सरे लक्षकर्षभाक्॥**
**संभारदानभोगार्थं धनं सार्धसहस्रकम्।**
**लेखकार्थे शतं मासि मन्त्र्यर्थे तु शतत्रयम्॥**

* एतेषां व्याख्यानं 'प्रकृतयः— बलम्' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

(१) शुनी. ४।७।२४–२७.

त्रिशतं दारपुत्रार्थे विद्वदर्थे शतद्वयम् ।
साद्यश्वपदगार्थं हि राजा चतुःसहस्रकम् ॥
गजोष्ट्रवृषनालार्थं व्ययीकुर्याच्चतुःशतम् ।
शेषं कोशे धनं स्थाप्यं राज्ञा सार्धसहस्रकम् ॥

अर्थप्रयोजनम्

[1]अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ।
अर्थाद्धर्मश्च कामश्च मोक्षश्चापि भवेन्नृणाम् ॥

पुरुषः अर्थस्य दासः । अर्थस्तु न कस्यचित् दासः । अतः अस्मात् कारणात् यत्नमास्थितः यत्नवान् सन् सर्वदा अर्थाय यतेत एव । अर्थात् धनात् नृणां धर्मश्च कामश्च मोक्षश्च भवेत् । शुनीटी.

सैन्यधनिकभृतिः

[2]ये सैन्यधनिकास्तेभ्यो यथार्हां भृतिमावहेत् ।
पारदेश्यं च त्रिंशांशमधिकं तद्धनव्ययात् ॥
धनं संरक्षयेत्तेषां यत्नतः स्वात्मकोशवत् ।
संहरेद्धनिकान्सर्वं मिथ्याचाराद्धनं नृपः ॥

## योगयात्रा

कोशप्रयोजनम्

[3]कोशो हि राज्यतरुमूलमतोऽस्य शाखाः
पक्षी विपक्ष इव किं विधनः करोति ।
अन्नादिवेन्द्रियगणो वसुतस्तथाऽन्नं
तत्प्राप्तिरक्षणविवृद्धिषु यत्नवान् स्यात् ॥

[4]नीचाचिराढ्यनृपवल्लभतस्करेभ्यो
राष्ट्रं नृपेण परिरक्ष्यमतोऽस्य कोशः ।
काले करप्रणयनं च यथोचितानां
तन्नार्थयेद्भवति येन जनापवादः ॥

(१) शुनी. ५।३८.

(२) शुनी. ५।८९–९०.

(३) योया. ११।७ ; नीम. ४९ मतोऽस्य (मतो हि) विधनः ( निधनः ).

(४) योया. ११।८.

[1]दुष्टस्य दण्डः सुजनस्य पूजा
न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ॥

## नीतिवाक्यामृतम्

आयव्ययविवेकः

*आयव्ययमुखयोर्मुनिकमण्डलुर्निदर्शनम् ॥
आयस्य द्रव्योत्पत्तिर्मुखम् ॥
यथास्वामिशासनमर्थस्य विनियोगो व्ययः ॥
आयमनालोच्य व्ययमानो वैश्रवणोऽप्यवश्यं श्रमणायते ॥
+[2]सहसोपचितार्थो मूलधनमात्रेणावशेषयितव्यः ॥

अथ सहसोपचितार्थे भूभुजा यत् कर्तव्यं तदाह– सहसेति । अवशेषयितव्यः वृद्धिं नेयः । कोऽसौ ? अर्थः । किंविशिष्टः ? सहसोपचितः अकस्मादेव प्राप्नोति निधानादिकम् । केनावशेषयितव्यः ? मूलधनेन भाण्डागारवित्तेन, येन भाण्डागारो वृद्धिं याति तत्प्रभावात् । तथा च अत्रिः– 'अचिन्तितस्तु लाभो यो नियोगाद्यस्तु जायते । स कोशे संनियोज्यश्च येन तच्चाधिकं भवेत् ॥'। नीवाटी.

पण्ये करार्हो लाभः

[3]मूलधनाद्द्विगुणाधिको लाभो भाण्डोत्थो यो भवति स राज्ञः ॥

* 'आयव्ययमुखयोः' इत्यादिचतुःसूत्र्याः व्याख्यानं 'प्रकृतयः– अमात्याः' इत्यस्मिन् प्रकरणे (पृ. १२३१–१२३२) द्रष्टव्यम् ।

+ इदं सूत्रं 'आस्रावयेच्चोपचितान्' (कौ. २।९) इत्यनेन कौटिलीयवचनेन समानार्थकम् । अत्रस्थं व्याख्यानं सर्वथा भ्रममूलमेव । व्याख्यानमनुसृत्यैव इदं सूत्रं एतत्प्रकरणे संगृहीतम् ।

(१) योया. २।३३. (२) नीवा. १८।७–१०.

(३) नीवा. १८।६३.

(४) नीवा. १८।६३ इति सूत्रादूर्ध्वं टिप्पण्यां सव्याख्यपुस्तके च इदं सूत्रं समुद्धृतम्.

अथ वणिग्जनस्य द्विगुणलाभाधिके यत् राज्य(? ज)-कृत्यं तदाह— मूलेति । भाण्डविक्रये कृते मूलधनात् द्विगुणादभ्यधिको यदि लाभः स्यात् तदा स लाभः पार्थिवस्यार्पणीयः । तथा च शुक्रः— 'यदि मूलधनात् कश्चित् द्विगुणाभ्यधिकं लभेत् । तत्तस्य मूलद्विगुणं दत्त्वा शेषं नृपस्य हि ॥'। नीवाटी.

धान्यसंग्रहः संग्रहोत्तमः

**[1]सर्वसंग्रहेषु धान्यसंग्रहो महान् ॥**

**यतस्तन्निबन्धनं जीवितं सकलप्रयासश्च ॥**

अथ राज्ञः सर्वसंग्रहाणां मध्ये यः प्रधानसंग्रहस्तमाह— सर्वेति । सर्वेषां संग्रहाणां हस्त्यश्वप्रभृतीनां मध्ये योऽसौ धान्यसंग्रहः स महान् उत्तमः । ननु कथं स उत्तमः इत्याह— यज्जीवितनिबन्धनं सः जीवितव्यकारणं यतः । सकलप्रयासः तथा यस्य धान्यस्य कारणात् सकलः प्रयासः क्लेशः कृषिकर्मादिकः क्रियते । तथा च भृगुः— 'सर्वेषां संग्रहाणां च शस्योऽन्नस्य च संग्रहः । यतः सर्वाणि भूतानि क्लिश्यन्ति च तदर्थतः ॥'। नीवाटी.

**न खलु मुखे क्षिप्तः खरोऽपि द्रम्मः प्राणत्राणाय यथा धान्यम् ॥**

अथ भूयोऽपि धान्यमाहात्म्यमाह— नेति । न जायते । कोऽसौ ? द्रम्मः नाणकविशेषः । किंविशिष्टः ? खरोऽपि श्रेष्ठोऽपि । किंविशिष्टः ? क्षिप्तः । कस्मिन् ? मुखे । किमर्थं न भवति ? प्राणत्राणाय जीवनरक्षार्थम् । यथा किम् ? यथा अन्नम् । खलु निश्चयेन । तथा च गर्गः— 'प्रभूतैरपि नो द्रव्यैः प्राणत्राणं विधीयते । मुखे क्षिप्ते यथाऽन्नेन स्वल्पेनापि विधीयते ॥'। नीवाटी.

**सर्वधान्येषु चिरजीविनः कोद्रवाः ॥**

अथ सर्वधान्यानां यद्धान्यं निरुपद्रवं भवति तदाह — सर्वधान्येष्विति । ये एते कोद्रवाः धान्यविशेषास्ते किंविशिष्टाः ? चिरजीविनः चिरकालं तिष्ठन्ति, न कीटकैर्भक्ष्यन्ते । तस्मात्तेषां संग्रहः कार्यः । तथा च भारद्वाजः— 'तुषधान्यानि सर्वाणि कोद्रवप्रभृतीनि च । चिरजीवीनि तान्याहुस्तेषां युक्तः सुसंग्रहः ॥'। नीवाटी.

**अनवं नवेन वर्धयितव्यं व्ययितव्यं च ॥**

अथ धान्यस्य संगृहीतस्य यत्कर्तव्यं तदाह— अनवमिति । यस्य धान्यस्य संग्रहः कृतस्तदन्नं वृद्धिं नेयं व्याजेन देयम् । यत् व्याजेन प्राप्तं तस्य व्ययः कार्यः । तेन मूलहानिः न स्यात् । तथा च वशिष्ठः— 'अनवं यद्भवेत्सस्यं तन्नवेन विवर्धयेत् । वृद्ध्या प्राप्तो भवेद्यस्तु तस्य कार्यो व्ययो बुधैः ॥'। नीवाटी.

**लवणसंग्रहः सर्वरसानामुत्तमः ॥**

अथ सर्वरसानां योऽसौ प्रधानो रसस्तमाह— लवणसंग्रह इति । गतार्थमेतत् । नीवाटी.

**सर्वरसमयमप्यन्नमलवणं गोमयायते ॥**

अथ लवणरसस्य माहात्म्यमाह— सर्वेति । यतः सर्वरसमयमप्यन्नं अलवणं लवणवर्जितं गोमयायते गोमयसदृशं भवति । तथा च हारीतः— 'स्याद्रसैः पञ्चभिर्युक्तं लवणेनोज्झितं यदि । जिह्वा तद्गोमयास्वादं गृहीत्वा ... .... ॥'। नीवाटी.

कोशशब्दव्युत्पत्तिः कोशगुणाः कोशप्रयोजनं च

**[1]यो विपदि संपदि च स्वामिनस्तन्त्राभ्युदयं कोशयतीति कोशः ॥**

अथ कोशसमुद्देशो व्याख्यायते । तत्राऽऽदावेव कोशलक्षणमाह— यो विपदीति । कुश् आश्लेषणे । अर्थवृद्धिं करोतीत्यर्थः । कस्मिन् काले तन्त्रवृद्धिं सैन्यवृद्धिं करोति ? संपदि तथा विपदि च । स कोशः कथ्यते (यः) संपत्काले तन्त्रवृद्धिं करोति आपत्काले च । तथा च शुक्रः— 'आपत्काले च संप्राप्ते संपत्काले विशेषतः । तन्त्रं (वि?)वर्धयते राज्ञां स कोशः परिकीर्तितः ॥'। नीवाटी.

**सातिशयहिरण्यरजतप्रायो व्यावहारिकनाणकबहुलो महापदि व्ययसहश्चेति कोशगुणाः ॥**

अथ कोशगुणानाह— सातिशयेति । यस्मिन् कोशे सातिशयं अतिशयसहितं हिरण्यं सुवर्णं भवति, तथा

(१) नीवा. १८।६६–७२.

(१) नीवा. २१।१–१४.

रजतं रूप्यं प्रायः बाहुल्येन । व्यावहारिकाणि यानि नाणकानि द्रम्मात्मकानि, तैः बहुलः प्रचुरः । व्ययसहः प्रभूतव्ययसमर्थः । कस्याम् ? आपदि । स कोशः कथ्यते । तथा च गुरुः– 'आपत्काले तु संप्राप्ते बहुव्ययसहक्षमः । हिरण्यादिभिः संयुक्तः स कोशो गुणवान् स्मृतः ॥' । नीवाटी.

**कोशं वर्धयन्नुत्पन्नमर्थमुपयुञ्जीत ॥**

अथ कोशवृद्धिं कुर्वता भूभुजा यत्कर्तव्यं तदाह– कोशमिति । कोशं वृद्धिं नयन् उत्पन्नमर्थमुपयुञ्जीत । एतदुक्तं भवति– कोशस्थाने यदुत्पाद्यते धनं तत् वृद्ध्वा किंचित् किंचित् भक्षणीयम् , न कोशात्स्वल्पमपि ग्राह्यम् । तथा च वशिष्ठः– 'कोशवृद्धिः सदा कार्या नैव हानिः कथंचन । आपत्कालादृते प्राज्ञैर्यस्कोशो राज्यरक्षकः ॥' । नीवाटी.

**कुतस्तस्याऽऽयत्यां श्रेयांसि यः प्रत्यहं काकिण्याऽपि कोशं न वर्धयति ॥**

अथ कोशमवर्धयतो राज्ञो यद्भवति तदाह– कुतस्तस्येति । कुतस्तस्य आयत्यां परिणामे आगामिनि काले श्रेयांसि कल्याणानि पार्थिवस्य भवन्ति ? (कस्मान्न कदाचिदेव ?) यः किं करोति ? न वर्धयति न वृद्धिं नयति । कम् ? कोशम् । कया ? काकिण्याऽपि नित्यमेव । तस्मात् भूभुजा सदैव कोश आपद्विनाशनिमित्तं वृद्धिं नेयः । तथा च गुरुः– 'काकिण्याऽपि न वृद्धिं यः कोशं नयति भूमिपः । आपत्काले तु संप्राप्ते शत्रुभिः पीड्यते हि सः ॥' । नीवाटी.

**कोशो हि भूपतीनां जीवितं न प्राणाः ॥**

अथ कोशो महीपतीनां यादृशस्तमाह– कोश इति । योऽसौ कोशः स किंविशिष्टः ? जीवितम् । केषाम् ? महीपतीनाम् । यतस्तस्य क्षये संजाते वृत्त्यभावात् सेवकैर्मुच्यते, ततः शत्रुभिर्विध्यते इति । तथा च भागुरिः– 'कोशहीनं नृपं भृत्याः कुलीना अपि चोन्नतम् । संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥' । नीवाटी.

**क्षीणकोशो हि राजा पौरजनपदानन्यायेन ग्रसते । ततो राष्ट्रशून्यता स्यात् ॥**

अथ कोशहीनो राजा यत्करोति तदाह– क्षीणेति । ग्रसते दण्डयति । कोऽसौ ? राजा । कान् ? पौरजनपदान् । किंविशिष्टो राजा ? क्षीणकोशः गतभाण्डागारः । छलं विनाऽपि जनान् दण्डयति । ततो राष्ट्रशून्यता भवति । एवं ज्ञात्वा भूभुजा कोशवृद्धिः करणीया । तथा च गौतमः– 'कोशहीनो नृपो लोकान् निर्दोषानपि पीडयेत् । तेऽन्यदेशं ततो यान्ति ततः कोशं प्रकारयेत् ॥' । नीवाटी.

**कोशो राजेत्युच्यते न भूपतीनां शरीरम् ॥**

अथ कोशस्य माहात्म्यमाह– कोश इति । यः कोशः स राजोच्यते, न शरीरम् । तथा च रैभ्यः– 'राजा शब्दोऽत्र कोशस्य न शरीरे नृपस्य च । कोशहीनो नृपो यस्माच्छत्रुभिः परिपीड्यते ॥' । नीवाटी.

**यस्य हस्ते द्रव्यं स जयति ॥**

अथ द्वयोर्नृपयोः संग्रामकाले जाते यस्य जयो भवति तमाह– यस्येति । गतार्थमेतत् । नीवाटी.

**धनहीनः कलत्रेणापि परित्यज्यते किं पुनर्नान्यैः ॥**

अथ धनहीनस्य यद्भवति तदाह– धनहीन इति । गतार्थमेतत् । नीवाटी.

**न खलु कुलाचाराभ्यां पुरुषः सेव्यतामेति ॥**

अथ राजा कुलीनोऽपि न यथा सेव्यतामेति तदाह– न खलु ....... सेव्यतामेति । वृत्तिमलभमानानां सेवकानाम् । खलु निश्चयेन । एतदुक्तं भवति– धनहीनः कुलीनो वा* न सेव्यते केनापि । तथा आचारवानपि । अथ सर्वोऽपि पुरुषो यदि वित्तदो भवति सोऽकुलीनोऽपि आचारभ्रष्टोऽपि सेव्यते वृत्त्यर्थम् । तस्मात् वृद्धिं नेयः । तथा च व्यासः– 'अर्थस्य पुरुषो दासो नार्थो दासोऽत्र कस्यचित् । अर्थार्थे येन सेव्यन्ते नीचा अपि कुलोद्भवैः ॥' । नीवाटी.

---

* वाकारः अप्यर्थकः । कुलीनः सन्नपीत्यर्थः ।

**स खलु महान् कुलीनश्च यस्यास्ति धनमनूनम् ॥**

अथ धनस्य माहात्म्यमाह— स खल्विति । यस्य पुरुषस्य अस्ति विद्यते । किं तत् ? धनम् । किंविशिष्टम् ? अनूनं प्रचुरम् । स किंविशिष्टः ? महान् महत्त्वसहितः, तथा च कुलीनश्च ( निकृष्टोऽपि जराजतोऽपि ? ) । एवं ज्ञात्वा कोशो वृद्धिं नेयः । तथा च जैमिनिः— 'कुलिनोऽपि सुनीचोऽत्र यस्य नो विद्यते धनम् । अकुलीनोऽपि सद्वंश्यो यस्य सन्ति कपर्दिकाः ॥' । नीवाटी.

**किं तया कुलीनतया महत्तया वा या न संतर्पयति परान् ॥**

किं तया महत्तया माहात्म्येन व्यर्थेन ? तथा कुलीनतया व्यर्थया किम् ? या न संतर्पयति न पोषयति । कान् ? परान् समाश्रितान् । तथा च गर्गः— 'वृथा तद्धनिनां वित्तं यन्न पुष्टिं नयेत्परान् । कुलीनोऽपि किं तेन कृपणेन स्वभावतः ॥' । नीवाटी.

**तस्य किं सरसो महत्त्वेन यत्र न जलानि ॥**

क्षीणे कोशे कोशकरणरीतिः

**देवद्विजवणिजां धर्माध्वरपरिजनानुपयोगिद्रव्यभागैराढ्यविधवानियोगिग्रामकूटगणिकासंघपाखण्डिविभवप्रत्यादानैः समृद्धपौरजानपदद्रविणसंविभागप्रार्थनैरनुपक्षयश्रीकमन्त्रिपुरोहितसामन्तभूपालानुनयगृहागमनाभ्यां क्षीणकोशः कोशं कुर्यात् ॥**

अथ क्षीणकोशेन राज्ञा कोशः कर्तव्यो यथा तदाह— देवेति । एतैश्चतुर्भिः पदार्थैः कोशवृद्धिं कुर्यात् । कथम् ? देवद्विजवणिजां यद्वित्तं धनं अनुपयोगि अवशेषम् । केषाम् ? धर्माध्वरपरिजनानाम् । यथासंख्येन येन द्रव्येण धर्मक्रिया(दि) न भवति । तस्य धनस्य किं कार्यम् ? भूभुजा तस्य विभागः कार्यः । एतेन द्रव्येण एतेषां निर्वाहो भवति, शेषा ये विभागास्तैः कोशस्य वृद्धिं कुर्यात् । तथा आढ्या ये जनाः, तथा विधवा याः स्त्रियः, तथा नियोगिनः ये धर्माधिष्ठानकारिणः, तथा ग्रामकूटाः ये ग्रामव्यवहारिणः, तथा वेश्यासंघातः, तथा पाखण्डिजना ये स्युः, तेषां योऽसौ विभवः तस्य प्रत्यादानैः ग्रहणैः कोशवृद्धिं कुर्यात् । प्रत्यादानशब्देन नृपाणां अर्थादायः प्रोच्यते । तेषां मध्यात् कश्चिदर्थादायः तेषामाढ्यादीनां ग्रहणके आर्धो धर्तव्यः (?) । ततोऽर्थः ( ? ) तेभ्यः सकाशात् गृहीत्वा क्षीणकोशेन राज्ञा कोशवृद्धिः कार्येति । तथा समृद्धा ये पौराः पुरवासिनः, तथा जनपदाः कुटुम्बिनः समृद्धाः, तेषां यत् द्रविणं वित्तं तस्य संविभागप्रार्थनैः साम्ना कोशवृद्धिं कुर्यात् । अनुपहतश्रीकाः नोपक्षयं गता येषां श्रीः लक्ष्मीः ते मन्त्रिपुरोहितसेनापतिसामन्तभूपालाः, तेषां अनुनयगृहागमनाभ्यां वा याचित्वा द्रव्यं कोशेष्टवृद्धिं कुर्यात् । तथा च शुक्रः— 'देवद्विजातिशूद्राणामुपभोगाधिकं धनम् । क्षीणकोशेन संग्राह्यं प्रविचिन्त्य विभागतः ॥' । तथा च— 'पौराणां राष्ट्रजातानां ग्राह्यं साम्ना च नान्यथा । दर्शयित्वा तथादायां ग्राह्यं वित्तं ततो नृपैः ॥ तथा शाश्वतलक्ष्मीकान् पुरोहितसमन्त्रिणः । श्रोत्रियांश्चैव सामन्तान् सीमापालांस्तथैव च । गृहं गत्वा प्रयाचेत यथा (ते) तुष्टिमाययुः ॥' । नीवाटी.

देशानुरूपः करः आयव्ययौ च

[1]**देशानुरूपः करो ग्राह्यः ॥**

[2]**आयानुरूपो व्ययः कार्यः ॥**

अथ भूयोऽपि भूभुजा यत् कर्तव्यं तदाह— देशेति । नीवाटी.

## युक्तिकल्पतरुः

कोशप्रयोजनम्

[3]**कोषो महीपतेर्जीवो न तु प्राणाः कथंचन ॥**
**द्रव्यं हि राजा भूपस्य न शरीरमिति स्थितिः ।**
**धर्महेतोः सुखार्थाय भृत्यानां भरणाय च ॥**
**आपदर्थं च संरक्ष्यः कोषः कोषवता सदा ।**
**धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्तते ॥**

(१) नीवा. २१।४२.
(२) नीवा. २१।४४.
(३) युक. ५–६।३०–३९.

नाधनस्य भवेद्धर्मः कामाश्चैव कथंचन ।
अधर्मान्न धनं कुर्यात्तद्धनं गृह्यते परैः ॥
स्वयं पापस्य पात्रं स्यात्सिंहो हस्तिवधादिव ।
तादात्मि(? त्वि)को मूलहरः कदर्यस्त्रिविधो-ऽर्धकः (?) ॥
उत्पन्नार्थव्ययकरो यो भविष्यद्धनाशया ।
स तादात्मि(? त्वि)क आख्यातः कल्याणी तस्य नाऽऽयतिः ॥
यः पित्राद्यर्जितं वित्तमन्यायेन तु भक्षयेत् ।
स मूलहर आख्यातस्तदुदर्कोऽपि चाशुभः ॥
स कदर्यस्तु भृत्यात्मपीडनैरर्थसंचयी ।
तद्धनं राजदायादतस्कराणां निधिर्भवेत् ॥
भिक्षा च राजकोषश्च स्तोकस्तोकेन वर्धते ।
अञ्जनं च धनं चैव स्तोकस्तोकेन हीयते ॥
कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् ॥

## मानसोल्लासः

द्रव्यभेदेन करांशभेदः

[1]पञ्चाशत्तम आदेयो भागः पशुहिरण्ययोः ।
अष्टमो द्वादशो वाऽपि षष्ठो वा धान्यतो नृपैः ॥
फलक्षेत्रानुरूपेण गृह्णीयात्तत्करं नृपः ।
स्वीकुर्यादथ षड्भागं पण्ययोर्मधुसर्पिषोः ॥
रसगन्धौषधीनां च मूलपुष्पफलस्य च ।
तृणानां शाकपत्राणां कर्मणां चर्मणामपि ॥
मृत्तिकाकृतभाण्डानां भाण्डस्याश्मभवस्य च ।
आपत्स्थितोऽप्याददीत श्रोत्रियान्न करं नृपः ॥
[2]फलैर्मूलैस्तृणैः काष्ठैः शाकैस्तत्रोत्थितैर्नराः ।
जीवन्ति ये ततो ग्राह्यो दशमोंऽशो महीभुजा ॥

रत्नखनिरक्षणम्, निधिलाभः, संपदर्थं सामुद्रस्थानरक्षा

[3]रजतस्य सुवर्णस्य रत्नानां रक्षयेत्खनिम् ।
तत्संभूतेषु सर्वेषु करं राजा समाहरेत् ॥
द्रव्यं भूमिगतं विद्याद्विविधैर्लक्षणैर्नृपः ॥
[1]खन्यशास्त्रानुसारेण निजाङ्कक्षतरक्षणैः ॥
समुद्धरेन्निधिं राजा निजाध्यक्षपुरःसरम् ।
एवं सिध्यन्ति सर्वाणि निधानानि न संशयः ॥
धनानामीश्वरो राजा ब्रह्मणा परिकल्पितः ।
भूगतानां विशेषेण यतोऽसौ विबुधाधिपः ॥
मौक्तिकानां समुत्पत्तिः स्थाने स्थाने महोदधौ ।
तानि स्थानानि संरक्षेदाहरेच्च ततो धनम् ॥
[2]वेलापुरेषु सर्वेषु समीपस्थेषु वारिधेः ।
रक्षा विधेया यत्नेन राज्ञा संपदमिच्छता ॥
निजवेलातटस्थानां पोतवाहनकर्मणाम् ।
पोते प्रत्यागते तस्माद्दशमांशं हरेन्नृपः ॥
प्रतीपमारुतानीतपोतानां स्वेच्छया नृपः ।
स्वीकुर्यात्सकलं द्रव्यं किंचिद्दद्याच्च भूपतिः ॥

धातुभिः कोशवर्धनम्

धातुवादप्रयोगैश्च विविधैर्वर्धयेद्धनम् ॥
[3]सुवर्णै रजतै रत्नैर्वस्त्रैराभरणैस्तथा ।
पूर्णो व्ययसहः कार्यः कोशो नित्यं महीभुजा ॥
पुटीकृत्यानले तप्तं यत्स्वर्णं निरुपक्षयम् ।
तत्स्यात्षोडशवर्णाख्यं कोशे स्थाप्यं तदेव हि ॥
बालार्कद्युतिसंकाशं विद्युद्दीप्तिसमप्रभम् ।
शुद्धं भूषणयोग्यं स्यात्त्रिदशानां महीभुजाम् ॥
कृतं वा निष्करूपेण धनं वा पिण्डरूपकम् ।
भूषणत्वेन वा सिद्धं शुद्धं कोशे विधारयेत् ॥
धर्मस्यार्थस्य कामस्य साधकं जनरञ्जनम् ।
शुद्धं सुवर्णकोशस्थमायुर्लक्ष्मीप्रदं भवेत् ॥
धात्वन्तरसमायुक्तमशुद्धं नैव धारयेत् ।
अशक्तं स्वर्णकार्येषु गृहलक्ष्मीविनाशनम् ॥

---

(१) मासो. २।१६३–१६६. (२) मासो. २।१७०.
(३) मासो. २।३३२–३३३.

(१) मासो. २।३५९–३६२.
(२) मासो. २।३७४–३७७.
(३) मासो. २।३९४–४०२.

नागेन मिश्रितं रौप्यं वह्निना परिशोधितम् ।
चन्द्रमण्डलसंकाशं कोशे स्थाप्यं महीभुजा ॥
यशःसौभाग्यजननं श्रेष्ठं पुत्रप्रदायकम् ।
गृहे विधारितं रौप्यं मलिनं चासुखप्रदम् ॥

कोशे रत्नसंचयः

रत्नानि धारयेत्कोशे शुद्धानि गुणवन्ति च ।
संभवं च तथा जातिं गुणं तेषां परीक्ष्य च ॥
[1]एवं विचार्य रत्नानि कोशे संचिनुयान्नृपः ।
आयुर्लक्ष्मीं जयं कीर्तिं लभते रत्नसंग्रहात् ॥

कोशवृद्धिरीतिः

स्तोकस्तोकेन पूर्यन्ते तडागा जलबिन्दुभिः ।
मृत्तिकाकणसंघातैर्वल्मीकं वर्धते यतः ॥

(१) मासो. २।५३६–५४०.

क्षौद्रं च राजवित्तं च स्तोकस्तोकेन वर्धते ।
तस्माद्राज्ञा प्रयत्नेन कोशे द्रव्यस्य संचयः ॥

कोशद्रव्यविभागाः

राष्ट्रादायातवित्तस्य चतुर्भागान् प्रकल्पयेत् ।
धर्मार्थकामसिद्ध्यर्थं कुर्याद्भागत्रयं नृपः ॥
भागेनैकेन चावश्यं कार्यः कोशस्य संचयः ।
कोशवान् सुखमाप्नोति कोशहीनस्तु सीदति ॥

## अनिर्दिष्टकर्तृकवचने

[1]वल्मीकपथवद्राजा कोशवृद्धिं तु कारयेत् ॥
[2]आयादल्पतरो व्ययः ॥

(१) मेधा. ८।१७०.
(२) मेधा. ७।९९.

# राष्ट्रम्

## वृद्धहारीतः

राष्ट्रनिर्माणविधिः

[1]गोभूहिरण्यवासोभिर्धान्यरत्नविभूषणैः ।
पूजयेद्ब्राह्मणान् भक्त्या पोषयेच्च विशेषतः ॥
बिम्बानि स्थापयेद्विष्णोर्ग्रामेषु नगरेषु च ।
चैत्यान्यायतनान्यस्य रम्याण्येव तु कारयेत् ॥
वसुपुष्पोपहाराद्यं भूषेन्वादि समर्पयेत् ।
इतरेषां सुराणां च वैदिकानां जनेश्वरः ॥
धर्मतः कारयेच्छश्वच्चैत्यान्यायतनानि तु ।
वापीकूपतडागादि फलपुष्पवनानि च ॥
कुर्वीत सुविशालानि पूर्वकाण्यपि पालयेत् ॥
फलितं पुष्पितं वाऽपि वनं छिन्द्यात्तु यो नरः ।
तडागसेतुं यो भिन्द्यात्तं शूलेनानुरोहयेत् ॥
पितेव पालयेद्भृत्यान् प्रजाश्च पृथिवीपतिः ॥
उपजीव्योपसर्पेच्च रम्ये देशे नृपोत्तमः ।
दुर्गाणि तत्र कुर्वीत जनकोशात्मगुप्तये ॥

## आपस्तम्बः

राज्ञा परिहर्तव्यः सर्वथा प्रजावसादः

[2]न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वाऽवसीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥

अस्य राज्ञः विषये राष्ट्रे क्षुधा आहाराभावेन बुभुक्षया, रोगेण व्याधिना, हिमेन नीहारेण, वर्षादीनामप्युपलक्षणमेतत् । आतपः आदित्यरश्मितापः । एतैः प्रकारैरभावात् बुद्धिपूर्वं वा न कश्चित् अब्राह्मणोऽपि अवसीदेत् अवसन्नो न स्यात् । राज्ञो ह्ययमपराधो यदाहाराद्यभावेन कश्चिदवसन्नः स्यात् । बुद्धिपूर्वं वेत्यत्रोदाहरणम्– यदा कश्चित् करमृणं वा दाप्यो भवति तदा नासौ हिमातपयोरुपनिवेशयितव्यः भोजनाद्वा निरोद्धव्यः । तथा कुर्वाणं राजा दण्डयेदिति । उ.

(१) वृहास्मृ. ७।२१३–२१८, २२३,२३३.
(२) आध. २।२५।११,१५.

चोरभयनिवारणं प्रजारक्षणार्थमधिकृतनियुक्तिश्च

क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥

यस्य राज्ञः विषये ग्रामेऽरण्ये च चोरभयं नास्ति स एव राजा क्षेमकृत् क्षेमंकरः, न त्वन्यः शतं तुभ्यं शतं तुभ्यमिति ददानोऽपि । उ.

[1]ग्रामेषु नगरेषु चाऽऽर्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् ॥

आर्यान् शुचीन् सत्यशीलानिति व्याख्यातम् * । एवंभूतान् पुरुषान् ग्रामेषु नगरेषु च प्रजानां रक्षणार्थं निदध्यात् नियुञ्जीत । उ.

तेषां पुरुषास्तथागुणा एव स्युः ॥

तेषां नियुक्तानां ये पुरुषाः नियोज्याः तेऽपि तथागुणाः आर्यादिगुणाः एव स्युः । उ.

[2]सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥

सर्वतः सर्वासु दिक्षु योजनमात्रं नगरं तस्करेभ्यो रक्षणीयम् । रक्ष्यमित्यपपाठः । उ.

[3]क्रोशो ग्रामेभ्यः ॥

ग्रामेभ्यस्तु सर्वासु दिक्षु क्रोशो रक्ष्यः । ग्रामेभ्य इति 'यतश्चाध्वकालपरिमाणं तत्र पञ्चमी वक्तव्या' (वार्तिकम्) इति पञ्चमी । उ.

[4]तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥

* 'आर्याः द्विजातयः । शुचयः अर्थशुद्धाः । सत्यशीलाः सत्यवादिनः ।' (उ. २।२५।१३) ।

(१) आध. २।२६।४–५; राक. ७९; राप्र. २४९.

(२) आध. २।२६।६; राक. ७९; राप्र. २४९ योजनं नगरं (नगरं योजनं).

(३) आध. २।२६।७; राक. ७९; राप्र. २४९ ग्रामेभ्यः (ग्रामः).

(४) आध. २।२६।८.

तत्र योजनमात्रे क्रोशमात्रे वा यत् मुष्यते चोर्यते ते नियुक्ताः स्वामिभ्यः तत् प्रतिदद्युः, राज्ञा तैस्तत् प्रतिदाप्यम्, राजा तैः प्रतिदापयेदिति। प्रायेण दन्त्योष्ठ्यं वकारं पठन्ति (१)। उ.

## वसिष्ठः

पादपरक्षणं गार्हस्थ्याङ्गमानोन्मानरक्षणं च

[1]पुष्पफलोपगान् पादपान्न हिंस्यात्कर्षणकरणार्थं चोपहन्यात् ॥
गार्हस्थ्याङ्गानां च मानोन्माने रक्षिते स्याताम् ॥

## विष्णुः

स्वदेशगुणसंपत्, ग्रामाधिपानामध्यक्षाणां च नियुक्तिः

[2]राजा च जाङ्गलं पशव्यं सस्योपेतं देशमाश्रयेत् ॥
वैश्यशूद्रप्रायं च ॥
[3]तत्र स्वस्वग्रामाधिपान् कुर्यात् ॥

दुर्गे स्थितः एकैकस्मिन् ग्रामे ग्रामसमुदाये वा प्रजापालननियुक्तान् कुर्यात् । तदुक्तम्– तत्रेति । राप्र. २४८

दशाध्यक्षान् ॥
[4]शताध्यक्षान् ॥
देशाध्यक्षांश्च ॥
[5]ग्रामदोषाणां ग्रामाध्यक्षः परीहारं कुर्यात् ॥
[6]अशक्तो दशग्रामाध्यक्षाय निवेदयेत् ॥
[7]सोऽप्यशक्तः शताध्यक्षाय ॥
सोऽप्यशक्तो देशाध्यक्षाय ॥
देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात् ॥

सर्वात्मनेति स्वशक्त्यतिक्रमेणाप्येतदर्थम्, न तु 'स्वयमेव दोषमुच्छिन्द्यात्, न वा राज्ञे निवेदयेत्' इत्येवमर्थम्, 'शतेशो विषयेशाय सोऽपि राज्ञे निवेदयेत्' ( विध. २।६१।६ ) इति विष्णुधर्मोत्तरोक्तवचनविरोधात्। राप्र. २५१

## महाभारतम्

भूमिमाहिमा

[1]भूमौ हि जायते सर्वं भूमौ सर्वं प्रणश्यति ।
भूमिः प्रतिष्ठा भूतानां भूमिरेव परायणम् ॥
[3]यस्य भूमिस्तस्य सर्वं जगत्स्थावरजङ्गमम् ।
तत्राभिगृद्धा राजानो विनिघ्नन्तीतरेतरम् ॥

राजा हि सार्वभौमो राजसूयेनेष्ट्वा स्वाराज्यं प्राप्नोति, अश्वमेधेनेष्ट्वा क्रममुक्तिस्थानं प्राप्नोति, इति यस्य कृत्स्ना भूमिस्तस्य इदं सर्वं यज्ञद्वारा वशे भवति । तथा च वाजसनेयके श्रूयते– 'पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयं सर्वाणि भूतानि । अहमेवेदं सर्वं स्यामिति । स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्' ( शब्रा. १३।६।१।१ ) इत्यादिना । नीटी.

ग्रामाद्यधिपतीनां नियुक्तिः तेभ्यः प्रजारक्षणं च

युधिष्ठिर उवाच–
[4]राष्ट्रगुप्तिं च मे राजन्राष्ट्रस्यैव च संग्रहम् ।
सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥

---

(१) वस्मृ. १९।८–९.
(२) विस्मृ. ३।४–५.
(३) विस्मृ. ३।७–८ ; राप्र. २४८.
(४) विस्मृ. ३।९–१०.
(५) विस्मृ. ३।११ ; राक. ८१ परी ( परि ) ; राप्र. २५१ राकवत्.
(६) विस्मृ. ३।१२ ; राक. ८१ दशग्रामा ( दशा ); राप्र. २५१ अशक्तो ( अथाशक्तो ).
(७) विस्मृ. ३।१३ ; राप्र. २५१.

(१) विस्मृ. ३।१४–१५ ; राक. ८१ ; राप्र. २५१.
(२) भा. ६।५।२० ; भामु. ६।४।२० हि ( च ) प्रणश्यति ( विनश्यति ) परायणम् ( सनातनम् ).
(३) भा. ६।५।२१ ; भामु. ६।४।२१ तत्राभि ( तत्राति ).
(४) भा. १२।८८।१ ; भामु. १२।८७।१ स्यैव च ( स्यैव तु ).

राष्ट्रस्य गुप्तिः परिपालनं कथं कर्तव्यमिति पृच्छति, नगरगुप्तिश्रवणानन्तरं तस्या बुद्धिस्थाया उपस्थानात्— राष्ट्रेति । नीटी.

भीष्म उवाच–

[1]राष्ट्रगुप्तिं च ते सम्यग्राष्ट्रस्यैव च संग्रहम् ।
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥

[2]ग्रामस्याधिपतिः कार्यो दशग्राम्यस्तथाऽपरः ।
द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ॥

दशानां ग्रामाणां समाहारो दशग्रामी, तस्याः दशग्राम्याः, द्विगुणायाः विंशतिग्राम्याः, शतस्य, सहस्रस्य चाधिपतिं कारयेत् । नीटी.

[3]ग्रामे यान् ग्रामदोषांश्च ग्रामिकः परिपालयेत् ।
तान् ब्रूयाद्दशपायासौ स तु विंशतिपाय वै ॥

[4]सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ॥

[5]यानि ग्रामीणभोज्यानि ग्रामिकस्तान्युपाश्नुयात् ।
दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः ॥

[6]ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ।
महान्तं भरतश्रेष्ठ सुस्फीतजनसंकुलम् ।
तत्र ह्यनेकमायत्तं राज्ञो भवति भारत ॥

(१) भा. १२।८८।२ ; भामु. १२।८७।२ स्यैव च ( स्यैव तु ).

(२) भा. १२।८८।३ ; भामु. १२।८७।३ ग्राम्य ( ग्राम्या ).

(३) भा. १२।८८।४; भामु. १२।८७।४ परिपाल ( प्रतिभाव ).

(४) भा. १२।८८।५ ; भामु. १२।८७।५.

(५) भा. १२।८८।६ ; भामु. १२।८७।६ ग्रामीण ( ग्राम्याणि ) श्नुयात् ( श्रियात् ).

(६) भा. १२।८८।७ ; भामु. १२।८७।७–८ स्फीत ( स्फीतं ) नेकमा ( नेकपा ).

[1]शाखानगरमर्हस्तु सहस्रपतिरुत्तमम् ।
धान्यहैरण्यभोगेन भोक्तुं राष्ट्रिय उद्यतः ॥

तत्र राष्ट्रे शताधिपतिभोग्यं ग्रामं अनेकपायत्तं भवति । क्लीबत्वमार्षम् । सार्धः । अन्यथा तस्य तदायत्तत्वे धनलोभात् स कृत्स्नं ग्रामं पीडयेदिति भावः । सहस्रपतिः शाखानगरं तत्रत्यधान्यहैरण्यसंबन्धी यो भोगः धनं तेन स्वस्य वेतनेन भोक्तुं पालयितुमर्हः, तत्र क्षत्रियाणामभावात् । वैश्येभ्यो यः कर आयाति तदेव तस्य वेतनमित्यर्थः । नीटी.

[2]तथा यद्ग्रामकृत्यं स्याद्ग्रामिकृत्यं च ते स्वयम् ।
धर्मज्ञः सचिवः कश्चित्तत्प्रपश्येदतन्द्रितः ॥

[3]नगरे नगरे च स्यादेकः सर्वार्थचिन्तकः ।
उच्चैःस्थाने घोररूपो नक्षत्राणामिव ग्रहः ।
भवेत्स तान् परिक्रामेत्सर्वानेव सदा स्वयम् ॥

[4]तेषां वृत्तिं परिणयेत्कश्चिद्राष्ट्रेषु तच्चरः ।
जिघांसवः पापकामाः परस्वादायिनः शठाः ॥
रक्षाभ्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥

राष्ट्रोपघातकानां अमायिकोपायैर्दमनम्

[5]दमयन्निव दम्यानां शश्वद्द्वारं प्रवर्धयेत् ।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥

दम्यानि वत्सतरकुलानि यथा क्रमेण दमयेत् तद्वत्प्रजा अपीत्याह— दमयन्निवेति । अभ्यवहारयेत् ग्राहयेत् । नीटी.

(१) भा. १२।८८।८ ; भामु. १२।८७।८–९ रुत्तमम् ( रुत्तमः ) राष्ट्रिय उद्यतः ( राष्ट्रीयसंगतः ).

(२) भा. १२।८८।९ ; भामु. १२।८७।९–१० पूर्वार्धे ( तेषां सङ्ग्रामकृत्यं स्याद् ग्रामकृत्यं च तेषु यत् । ) त्प्रपश्ये ( त्तत्पश्ये ).

(३) भा. १२।८८।१० ; भामु. १२।८७।१०–११ च ( वा ) सदा स्वयम् ( सभासदः ).

(४) भामु. १२।८७।१२–१३.

(५) भा. १२।८९।७ ; भामु. १२।८८।८ दम्यानां ( दम्यानि ).

[1]सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः ।
उचितेनैव भोक्तव्यास्ते भविष्यन्ति यत्नतः ॥

सकृत् सद्यः पाशावकीर्णाः सन्तः न भविष्यन्ति मरिष्यन्ति, यतो दुर्दमाः । अतः उचितेन क्रमेण ते भोक्तव्याः दम्याः प्रजाश्च । नीटी.

[2]तस्मात्सर्वसमारम्भो दुर्लभः पुरुषव्रजः ।
यथामुख्यान्सान्त्वयित्वा भोक्तव्य इतरो जनः ॥

पुरुषं प्रतीत्यस्य प्रतिपुरुषमित्यर्थः । नीटी.

[3]ततस्तान् भेदयित्वाऽथ परस्परविवक्षितान् ।
भुञ्जीत सान्त्वयित्वैव यथासुखमयत्नतः ॥

ततः मुख्यद्वारा । तान् इतरान् । विवक्षितान् वोढुमिष्टान् । नीटी.

[4]न चास्थाने न चाकाले करानेभ्योऽनुपातयेत् ।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥

[5]उपायान् प्रब्रवीम्येतान्न ते माया विवक्षिता ।
अनुपायेन दमयन् प्रकोपयति वाजिनः ॥

[6]पानागाराणि वेशाश्च वेशप्रापणिकास्तथा ।
कुशीलवाः सकितवा ये चान्ये केचिदीदृशाः ॥

मद्यशालाः संदेशहराः कुट्टन्यः कुत्सितेन शीलेन वान्ति गच्छन्ति धर्मं हिंसन्ति वा कुशीलवाः विटाः कितवाः द्यूतकाराश्च निग्राह्या इत्याह– पानेति । नीटी.

(१) भा. १२।८९।८ ; भामु. १२।८८।९.
(२) भा. १२।८९।९ ; भामु. १२।८८।१० पुरुषव्रजः ( पुरुषं प्रति ).
(३) भा. १२।८९।१० ; भामु. १२।८८।११ त्वाऽथ ( त्वा तु ) यित्वैव ( यत्नेव ).
(४) भा. १२।८९।११ ; भामु. १२।८८।१२ करानेभ्योऽनु ( करांस्तेभ्यो नि ).
(५) भा. १२।८९।१२ ; भामु. १२।८८।१३.
(६) भा. १२।८९।१३ ; भामु. १२।८८।१४ पूर्वार्धे ( पानागारनिवेशाश्च वेश्याः प्रापणिकास्तथा । ).

[1]नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः ।
एते राष्ट्रे हि तिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः ॥

भद्रिकाः कल्याण्यः । नीटी.

[2]न केनचिद्याचितव्यः कश्चित्किंचिदनापदि ।
इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ॥

याचितव्यः, दत्तमृणं करं वेति शेषः । नीटी.

[3]सर्वे तथा न जीवेयुर्न कुर्युः कर्म चेदिह ।
सर्व एव त्रयो लोका न भवेयुरसंशयम् ॥

अनुजीवेयुः अनुसरेयुः । अन्यथा दोषमाह– नेति । नीटी.

[4]प्रभुर्नियमने राजा य एतान्न नियच्छति ।
भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः ॥
भोक्ता तस्य तु पापस्य सुकृतस्य यथा तथा ।
नियन्तव्याः सदा राज्ञा पापा ये स्युर्नराधिप ॥
कृतपापस्त्वसौ राजा य एतान्न नियच्छति ।
तथा कृतस्य धर्मस्य चतुर्भागमुपाश्नुते ॥

तथा, नियच्छन्निति शेषः । नीटी.

[5]स्थानान्येतानि संगम्य प्रसङ्गे भूतिनाशनः ।
कामप्रसक्तः पुरुषः किमकार्यं विवर्जयेत् ॥

स्थानानि मद्यादीनां वक्ष्यमाणानाम् । किमकार्यं विवर्जयेत् ? अपि तु सर्वमकार्यं कुर्यादेव । नीटी.

[6]मद्यमांसपरस्वानि तथा दारा धनानि च ।
आहरेद्रागवशगस्तथा शास्त्रं प्रदर्शयेत् ॥

(१) भा. १२।८९।१४ ; भामु. १२।८८।१५ राष्ट्रे हि ( राष्ट्रेऽपि ).
(२) भा. १२।८९।१५ ; भामु. १२।८८।१६.
(३) भा. १२।८९।१६ ; भामु. १२।८८।१७ तथा न ( तथाऽनु ) त्रयो ( इमे ).
(४) भा. १२।८९।१७ तृतीयचतुर्थपञ्चमार्धानि न सन्ति ; भामु. १२।८८।१८–२०.
(५) भा. १२।८९।१८ ; भामु. १२।८८।२१ संगम्य प्रसङ्गे ( संयम्य प्रसङ्गो ) काम ( कामे ).
(६) भामु. १२।८८।२२.

अकार्यमेवाऽऽह- मयेति । शास्त्रं आज्ञां प्रदर्शयेत् प्रवर्तयेत् । नीटी.

[1]आपद्येव तु याचेरन् येषां नास्ति परिग्रहः ।
दातव्यं धर्मतस्त्वेभ्यस्त्वनुक्रोशाद्दयार्थिना ॥

आपद्येव, न तु शाठ्यादिना अनापद्यपि । नीटी.

[2]मा ते राष्ट्रे याचनका मा ते भूयुश्च दस्यवः ।
इष्टादातार एवैते नैते भूतस्य भावकाः ॥

दातारः आच्छेत्तारः । नीटी.

[3]ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः ।
ते ते राष्ट्रे प्रवर्तन्तां मा भूतानामभावकः ॥

[4]दण्ड्यास्ते च महाराज धनादानप्रयोजनाः ।
प्रयोगं कारयेयुस्तान् यथा बलिकरांस्तथा ॥

धनेत्यधिकधनग्रहणं प्रयोजयन्तोऽधिकारिणो दण्ड्याः । अन्ये च अधिकारिणस्तान् यथावत् बलिकरानुद्दिश्य प्रयोगं कारयेयुः । नीटी.

सत्यार्जवपरेण राज्ञा कृषिगोरक्षवाणिज्यकारिणो धनिनश्च रक्षणीया माननीयाश्च

[5]कृषिगोरक्ष्यवाणिज्यं यच्चान्यत्किंचिदीदृशम् ।
पुरुषैः कारयेत्कर्म बहुभिः सह कर्मिभिः ॥

बहुभिः कारयेत्, अन्यथा कर्मभेदतः कर्मणो भेदः नाशः स्यादित्यर्थः । नीटी.

[6]नरश्चेत्कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः ।
संशयं लभते किंचित्तेन राजा विगर्ह्यते ॥

(१) भा. १२।८९।१९ ; भामु. १२।८८।२३ याचेरन् ( याचन्ते ) दयार्थिना ( ञ्चयान्न तु ).

(२) भा. १२।८९।२० ; भामु. १२।८८।२४ मा ते भूयुश्च ( ऽभूवन् मा चापि ) इष्टादा ( एषां दा ).

(३) भा. १२।८९।२१ ; भामु. १२।८८।२५ राष्ट्रे प्र ( राष्ट्रेषु ).

(४) भा. १२।८९।२२ ; भामु. १२।८८।२६ जनाः ( जकाः ).

(५) भा. १२।८९।२३ ; भामु. १२।८८।२७ सह कर्मिभिः ( कर्मभेदतः ).

(६) भा.१२।८९।२४; भामु.१२।८८।२८ रक्ष्यं (रक्ष्य).

संशयं चोरेभ्यो राजकीयेभ्यो वा भयात् । नीटी.

[1]धनिनः पूजयेन्नित्यं यानाच्छादनभोजनैः ।
वक्तव्याश्चानुगृह्णीध्वं पूजाः सह मयेति ह ॥

[2]अङ्गमेतन्महद्राज्ञां धनिनो नाम भारत ।
ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥

[3]प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च ।
तपस्वी सत्यवादी च बुद्धिमांश्चाभिरक्षति ॥

[4]तस्मादेतेषु सर्वेषु प्रीतिमान् भव पार्थिव ।
सत्यमार्जवमक्रोधमानृशंस्यं च पालय ॥

[5]एवं दण्डं च कोशं च मित्रं भूमिं च लप्स्यसे ।
सत्यार्जवपरो राजन् मित्रकोशसमन्वितः ॥

कर्तव्यं प्रजायाः शौचाशौचपरिज्ञानम्

[6]पौरजानपदानां च शौचाशौचं युधिष्ठिर ।
यथा स्याद्विदितं राजंस्तथा कार्यमरिंदम ॥

## कौटिलीयमर्थशास्त्रम्

जनपदगुणसंपत्

[7]मध्ये चान्ते च स्थानवानात्मधारणः परधारणश्चाऽऽपदि स्वारक्षः स्वाजीवः शत्रुद्वेषी शक्य-

(१) भा. १२।८९।२५ ; भामु. १२।८८।२९ याना ( पाना ) पूजाः ( प्रजाः ) ह ( वै ).

(२) भा. १२।८९।२६ ; भामु. १२।८८।३० द्राज्ञां ( द्राज्ये ).

(३) भा. १२।८९।२७ ; भामु. १२।८८।३१ श्चाभि ( श्चापि ).

(४) भा. १२।८९।२८ ; भामु. १२।८८।३२ देतेषु सर्वेषु ( त्सर्वेषु भूतेषु ).

(५) भा. १२।८९।२९ ; भामु. १२।८८।३३ लप्स्यसे ( लप्स्यासि ) सम ( बला ).

(६) भा. १५।९।२६ ; भामु. १५।५।२६–२७ शौचं ( शौचे ) कार्यमरिंदम ( कार्यं कुरूद्वह ).

(७) कौ. ६।१.

**सामन्तः पङ्कपाषाणोषरविषमकण्टकश्रेणीव्यालमृगाटवीहीनः कान्तः सीताखनिद्रव्यहस्तिवनवान् गव्यः पौरुषेयो गुप्तगोचरः पशुमानदेवमातृको वारिस्थलपथाभ्यामुपेतः सारचित्रबहुपण्यो दण्डकरसहः कर्मशीलकर्षकोऽबालिशस्वाम्यवरवर्णप्रायो भक्तशुचिमनुष्य इति जनपदसंपत् ॥**

जनपदसंपदमाह– मध्ये चान्ते च स्थानवानिति । मध्ये सीमायां च दुर्गवान् । आत्मधारणः परधारणश्च स्ववास्तव्यजनस्वदेशागन्तुकजनोभयभरणक्षमधान्यादिप्रसोता । आपदि स्वारक्षः विपत्समये शैलवननदीदुर्गवत्तया सुकररक्षः । स्वाजीवः अल्पायासनिष्पाद्यधान्यादिमान् । शत्रुद्वेषी राजशत्रुद्वेषणशीलजनयुक्तः । शक्यसामन्तः दुर्बलसामन्तः । पङ्कपाषाणोषरविषमकण्टकश्रेणीव्यालमृगाटवीहीनः पङ्काद्यष्टकरहितः । तत्र कण्टकाः चोरपारदारिकादयः क्षुद्रशत्रवः । श्रेणी राजप्रत्यनीकवृत्तिर्जनसंघः । शेषं प्रतीतम् । कान्तः वृक्षौषधिनदीसरस्तटाकारामादिरमणीयः । सीताखनिद्रव्यहस्तिवनवान् , सीता कृष्यभूमिः , खनिः वज्रादिमणिसुवर्णाद्याकरः , द्रव्यवनं शाकतिनिशजातीयसारदारूत्पत्तिस्थानम् , हस्तिवनं गजारण्यम् , तद्युक्तः । गव्यः गोहितः । पौरुषेयः पुरुषहितः । गुप्तगोचरः लुब्धकादिरक्षितभूमिः । पशुमान् गोच्छागादिबहुलः । अदेवमातृकः नद्यम्बुसंपद्यमानव्रीहिपालितः । वारिस्थलपथाभ्यां उपेतः जलमार्गस्थलमार्गयुक्तः । सारचित्रबहुपण्यः महार्घनानाजातीयबहुलक्रय्यवस्तुकः । दण्डकरसहः, दण्डः अपराधप्रायश्चित्तधनम् , करः राजभागः, तावुद्रिक्तावपि सहत इति तथाभूतः । कर्मशीलकर्षकः अनलसकृषीवलः । अबालिशस्वामी अबालिशाः बुद्धिमन्तः स्वामिनः स्वाम्यनिर्वाहकाः यस्मिन् स तथाभूतः । अवरवर्णप्रायः अधमवर्णबहुलः । भक्तशुचिमनुष्यः अनुरक्ताः शुद्धाश्च मनुष्याः यस्मिन् स तथाभूतः । इति एवं जनपदसंपत् ।

श्रीमूला.

सामान्यतः जनपदनिवेशनम् , विशेषतः ग्रामनगरान्तपालदुर्गश्रोत्रियकृषकाकरकर्मान्तवनव्रजपथपत्तननिवेशनम् ,
बालानाथादिभरणम् , व्याधिदुर्भिक्षादिपीडितदेशपरिहारः, वणिक्पथादीनां रक्षा

**[1]भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् ॥**

अथाध्यक्षप्रचाराख्यं द्वितीयमधिकरणमारभ्यते । यथोक्तगुणसंपन्नो राजा सर्वाणि कार्याणि तत्तदध्यक्षद्वारेणैवाध्यक्षयितुं प्रभवतीत्यतोऽध्यक्षांस्तद्व्यापारांश्च प्राधान्येनाभिधातुमिदमधिकरणम् । तत्रेदं प्रथमं सूत्रम्– ' जनपदनिवेशः ' इति । जनः चतुर्वर्णाश्रमजातिलक्षणः, पदं तस्य स्थानं स्थानीयद्रोणमुखकार्वटिकसंग्रहग्रामादिकम् , तस्य निवेशः रचनाऽत्राभिधीयते इति सूत्रार्थः । स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतिः इत्युक्तम् । तत्र स्वाम्यमात्यप्रकृती प्रतिपादिते । जनपदप्रकृतिरिदानीमभिधीयते ।

भूतपूर्वं पूर्वं स्थितं अभूतपूर्वं अभिनवं वा जनपदं परदेशापवाहनेन परदेशाज्जनानयनेन स्वदेशाभिष्यन्दवमनेन वा, अभिष्यन्दः अतिवृद्धिः, वमनं आहरणम् , स्वदेशे जनानामतिवर्धनादाधारापर्याप्तिदोषादन्यत्राऽऽहरणेन वा निवेशयेत् रचयेत् । श्रीमूला.

**शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् । नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषु सीम्नां स्थापयेत् ॥**

ग्रामं शूद्रकर्षकप्रायं शूद्रकृषीवलबहुलं कुलशतावरं गृहशतान्न्यूनं पञ्चशतकुलपरं पञ्चशतानधिकगृहयुक्तं क्रोशद्विक्रोशसीमानं क्रोशसीमानं द्विक्रोशसीमानं वा, एकस्मात् ग्रामात् ग्रामान्तरस्य क्रोशदूरव्यवधानं क्रोशद्वयव्यवधानं वा यथा भवेत् तथा क्लृप्तमित्यर्थः, अन्योन्यमारक्षतीत्यन्योन्यारक्षं परस्परसाहाय्यकरणक्षमं निवेशयेत् । नदीत्यादि । सीम्नां अन्तेषु नदी, शैलः शिलाकूटः, वनम् , गृष्टिः बदरा नामौषधिर्वृक्षविशेषो वा,

(१) कौ. २।१.

दरी श्वभ्रम्, सेतुबन्धः, शाल्मली स्थिरायुराख्यो वृक्षः, शमी सक्तुफला, क्षीरवृक्षः वटादिः, इत्येतान् स्थापयेत् सीमरक्षार्थम्। श्रीमूला.

**अष्टशतग्राम्या मध्ये स्थानीयम्, चतुःशतग्राम्या द्रोणमुखम्, द्विशतग्राम्याः कार्वटिकम्, दशग्रामीसंग्रहेण संग्रहणं स्थापयेत्॥**

अष्टशतग्राम्याः अष्टशतानां ग्रामाणां समूहस्य मध्ये स्थानीयं तदाख्यं तावद्ग्रामजनतायाः क्रयविक्रयादिकर्मणोपजीव्यं रमणीयं महाग्रामं स्थापयेत् निवेशयेत्। चतुःशतग्राम्याः मध्ये द्रोणमुखं तदाख्यं स्थानीयप्रत्यवरं ग्रामभेदं स्थापयेत्। द्विशतग्राम्याः मध्ये कार्वटिकं तदाख्यं कर्वटापरपर्यायं द्रोणमुखप्रत्यवरं स्थापयेत्। दशग्रामीसंग्रहेण ग्रामदशकसंग्रहणेन संग्रहणं तदाख्यं कर्वटादधमं महाद्रङ्गापरपर्यायं स्थापयेत्। श्रीमूला.

**अन्तेष्वन्तपालदुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत्। तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः॥**

अन्तेषु जनपदावसानेषु अन्तपालदुर्गाणि अन्तपालाधिष्ठितानि अन्तपालैरनुष्ठिताध्यक्ष्याणि जनपदद्वाराणि जनपदप्रवेशमार्गभूतानि च स्थापयेत्। तेषां अन्तराणि अन्तपालदुर्गाणामन्तरालदेशान् वागुरिकशबरपुलिन्दचण्डालारण्यचराः, वागुरिकाः मृगबन्धनजीविनः, शबराः शूद्रात् भिल्ल्यां जाताः, पुलिन्दाः निष्ट्यात् किरात्यां जाताः, चण्डालाः श्मशानपालाः, अरण्यचराः वनचारिणश्च रक्षेयुः। श्रीमूला.

**ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत्। अध्यक्षसंख्यायकादिभ्यो गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजङ्घाकरिकेभ्यश्च विक्रयाधानवर्जम्॥**

ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यः याजकाध्यापकपुरोधश्छांदसेभ्यः अदण्डकराणि, दण्डो नाम द्विःकृषिक्लृप्तौ त्रिःकृष्यनुष्ठानादिनिमित्तः कुल्यादिजलात्युपयोगादिनिमित्तो वा दमः, करः कृषिफलषष्ठांशः, तदुभयरहितानि अभिरूपदायकानि अभिरूपेभ्यः अर्हेभ्यः पुत्रादिभ्यो दायः दानं येषां तानि तथाभूतानि, वंशपारंपर्यभोग्यानीत्यर्थः, यथेच्छविनियोगयोग्यानीति वा, ब्रह्मदेयानि ब्राह्मणेभ्यो देयानि अर्थात् क्षेत्राणि प्रयच्छेत् दद्यात्। अध्यक्षेत्यादि। विक्रयाधानवर्जम्, मूल्यमादाय दानं विक्रयः, आधीकरणं आधानम्, तदुभयाधिकारवर्जम्, केवलोपभोगायेत्यर्थः, अध्यक्षसंख्यायकादिभ्यः, अध्यक्षाः सुवर्णाध्यक्षादयः, संख्यायकाः गणकाः, तत्प्रभृतिभ्यः, गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजङ्घाकरिकेभ्यश्च, गोपः दशग्रामीपञ्चग्राम्याद्यधिकारी, स्थानिकः नगरचतुर्भागाधिकारी, अनीकस्थः हस्तिशिक्षाविचक्षणः, चिकित्सकः वैद्यः, अश्वदमकः अश्वशिक्षाभिज्ञः, जङ्घाकरिकः जाङ्घिको दूरदेशगतागतजीवी, एतेभ्यश्च। क्षेत्रं प्रयच्छेदिति सामर्थ्यलभ्यम्। श्रीमूला.

**करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत्। अकृतानि कर्तृभ्यो नाऽऽदेयात्॥**

करदेभ्यः राजभागदायिभ्यः कृतक्षेत्राणि कृतानि क्षेत्राणि पूर्वसिद्धसौष्ठवान् व्रैहेयशालेयादीन् केदारान् ऐकपुरुषिकाणि एकेनैव ग्रहीतृपुरुषेण भोग्यानि प्रयच्छेत्। अकृतानि साध्यसौष्ठवानि अर्थात् क्षेत्राणि कर्तृभ्यो नाऽऽदेयात् सौष्ठवसाधकेभ्यः करदेभ्यो न गृह्णीयात्, सर्वविधस्वाम्येन तेष्वेव स्थापयेदित्यर्थः। इह 'आदेयात्' इत्यात्मनेपदाकरणमार्षम्। श्रीमूला.

**अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्। ग्रामभृतकवैदेहका वा कृषेयुः। अकृषन्तोऽवहीनं दद्युः। धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात्। तान्यनु सुखेन दद्युः॥**

अकृषतां कृषिमकुर्वताम्, क्षेत्राणीति शेषः, आच्छिद्य हृत्वा अन्येभ्यः प्रयच्छेत्। तदभावे ग्रामभृतकवैदेहकाः ग्रामाधिकारिणो वणिजश्च कृषेयुः। अकृषन्तः अभ्युपेत्य कृषिमकुर्वन्तः अवहीनं नष्टं दद्युः। अनुपायाच्चेदकर्षणं तदा कथमित्याह— धान्यपशुहिरण्यैश्च कृष्यनुष्ठानापेक्षितैः एनान् अभ्युपेतकृषीन् अनुगृह्णीयात्। अनु पश्चात्

कृषिफलप्राप्त्यनन्तरं तानि धान्यादीनि सुखेन आत्मवृत्त्य-पीडया दद्युः कर्षकाः राज्ञे । श्रीमूला.

**अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातिकौ वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ॥**

एभ्यः कृषिकर्तृभ्यः अनुग्रहपरिहारौ च, स्वस्थ-( ? स्वास्थ्य )वृद्ध्यर्थं दीयमानं द्रव्यमनुग्रहः, दौःस्थ्य-परिहारेण स्वास्थ्यसिद्ध्यर्थं दीयमानं द्रव्यं परिहारः, तौ कोशवृद्धिकरौ दद्यात् आत्मकोशवर्धने यथा पर्यवस्येतां तथा दद्यात् । कोशोपघातिकौ कोशक्षयफलौ अनुग्रह-परिहारौ वर्जयेत् । कुतः ? हि यतः अल्पकोशः राजा पौरजानपदानेव ग्रसते पीडयति स्वकोशपूरणार्थम् । निवेशेत्यादि । निवेशसमकालं परिहारम्, निवेशः इदं-प्रथमकुलस्थापनम्, तत्तुल्यकालं परिहारं तत्काले कलत्रो यः स्वास्थ्यसिद्ध्यर्थं उपकारस्तमित्यर्थः, दद्यात् । यथा-गतकं वा दद्यात् आगतानतिक्रमेण च दद्यात्, नवनवा-गतकुलेभ्योऽपि दद्यादित्यर्थः । निवृत्तेत्यादि । निवृत्त-परिहारान् प्रत्यर्पितपरिहारद्रव्यान् पितेव अनुगृह्णीयात् वृद्ध्यर्थमनुग्रहद्रव्यं दत्त्वोपकुर्यात् । श्रीमूला.

**आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् ॥**

आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान्, आ-करकर्मान्तः आकरव्यापारस्थानम्, द्रव्यवनं दारुचन्दन-निर्यासाद्युपकरणप्रसवक्षमं वनम्, हस्तिवनं गजवनम्, व्रजप्रचारः गोध्यक्षवक्ष्यमाणः, वणिक्पथप्रचारः वणिक्पथ-व्यापारः, एतान् वारिस्थलपथपण्यपत्तनानि च जलपथ-स्थलपथपण्यक्रयविक्रयस्थानानि च निवेशयेत् कारयेत् । पत्तनशब्दस्य क्रयविक्रयस्थानवाचित्वमाश्रित्येत्थं व्याख्या-तम् । नावैकगम्यपुरवाचित्वाश्रयणे तु पण्यपत्तनं पण्यप्रधानं नौमात्रगम्यं पुरमिति व्याख्येयम् । पट्टनशब्दपाठे पुनः पण्यपट्टनं पण्यप्रधानं पट्टनं शकटैरश्वैर्नौभिश्च गम्यं पुर-मित्यर्थः, ' पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च ' इति यादवाभिधानात् । श्रीमूला.

**सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्, पुण्यस्थानारामाणां च । संभूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः । व्ययकर्मणि च भागी स्यात्, न चांशं लभेत ॥**

सहोदकं नित्यप्रवृत्तोदकं नद्यादौ सेतुं वारणं बन्धयेत् कुल्यादिद्वारेण कृष्याद्यर्थम् । आहार्योदकं नद्यादितो वर्षासु तुङ्गस्थलेभ्यश्च समानेयजलं सेतुं वा बन्धयेत् । बध्नतां सेतुं रचयतां अन्येषां वा जनानां च भूमिमार्ग-वृक्षोपकरणानुग्रहं कुर्यात्, भूमिः प्रभूतजलावरोधयोग्यं स्थलम्, मार्गः जलप्रवेशनिर्गमसरणिः, वृक्षोपकरणं सारदार्वादिकम्, एतैः अनुग्रहं एतद्दानोपकारं कुर्यात् । पुण्यस्थानारामाणां च निर्मीयमाणानां विषये भूमिमार्ग-वृक्षोपकरणानुग्रहं कुर्यात् । संभूयेत्यादि । संभूयसेतु-बन्धात् जनैः संघीभूय क्रियमाणात् सेतुबन्धात् अपक्रामतः अपसरतः अनिच्छया स्वीयं कर्मांशमकुर्वतो जनस्य कर्मकरबलीवर्दाः भृत्याः उक्षाणश्च कर्म कुर्युः । राजा बलात् तैः कर्म कारयेदित्यभिप्रायः । अपक्रामतोऽन्यमपि दण्डमाह— व्ययकर्मणीति । व्ययकर्मणि च भागी अंश-भाक् स्यात्, अंशं च न लभेत, अर्थात् सेतुबन्धानन्तर-भवे तत्फले । श्रीमूला.

**मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् । दासाहितकबन्धूननशृण्वतो राजा विनयं ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्, स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ॥**

सेतुषु, उत्पद्यमानानामिति शेषः, मत्स्यप्लवहरित-पण्यानाम्, मत्स्याः प्रसिद्धाः, प्लवाः कारण्डवाः जलजलजविहारिणः, हरितानि पद्मोत्पलकशेरुकादीनि, एषां पण्यवस्तूनां स्वाम्यं स्वामित्वं राजा गच्छेत्, न तु संभूयसेतुकारिणोऽपि । दासेत्यादि । अनशृण्वतः स्वरक्षकनिदेशावधीरिणः दासाहितकबन्धून्, दासान्

गर्भदास–गृहजात–क्रीत–लब्ध–दायोपगतादीन्, आहितकान् स्वामिना धनग्रहणेनाऽऽधितां नीतान्, बन्धून् पुत्रादींश्च राजा विनयं प्रणतिं ग्राहयेत्। बालवृद्धव्याधितव्यसन्यनाथांश्च अनाथा ये बालादयः तांश्च बिभृयात् पोषयेत्। अप्रजातां वन्ध्यां स्त्रियं प्रजातायाः पुत्रांश्च बिभृयात्। सा च ते च यद्यनाथा इत्यर्थम्। श्रीमूला.

**बालद्रव्यं ग्रामवृद्धा वर्जयेयुरा व्यवहारप्रापणात्, देवद्रव्यं च ॥**

बालद्रव्यं बालस्य अप्राप्तव्यवहारस्य नाथहीनस्य द्रव्यं ग्रामवृद्धाः वर्जयेयुः नोपयुञ्जीरन्, तथैव स्थापयेयुः। वर्धनार्हं चेत् वर्धयेयुश्चेत्यभिप्रायः। कियन्तं कालम्? आ व्यवहारप्रापणात् व्यवहारप्राप्तिकालं यावत्। देवद्रव्यं च देवालयद्रव्यं च ग्रामवृद्धा वर्जयेयुः। अवधेरयोगान्नित्यम्। श्रीमूला.

**अपत्यदारान् मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः, अन्यत्र मातुः ॥**

अपत्यदारान् अपत्यं दारांश्च। दारमिति पाठे समाहारद्वन्द्वः। अप्राप्तव्यवहारान् भ्रातॄन् बालान् सोदर्यान्। कन्याः भगिनीः विधवा भगिनीश्च। शक्तिमतः रक्षणोपायवतः। पतितेभ्योऽन्यत्र पतितव्यतिरेकेण। अपत्यादीनामपतितानामेवारक्षणे दण्डः, न तु पतितानाम्। पतितेष्वपि प्रतिप्रसवमाह– अन्यत्र मातुरिति। माता तु पतिताऽपि रक्षणीयैवेत्यर्थः। श्रीमूला.

**पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वः साहसदण्डः, स्त्रियं च प्रव्राजयतः। लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थान्, अन्यथा नियम्येत ॥**

पुत्रदारमप्रतिविधाय प्रव्रजतः पुत्राणां दाराणां च जीवनोपायमदर्शयित्वा संन्यस्यतः स्त्रियं प्रव्राजयतश्च प्रव्रजन्तीं प्रयोजयतश्च पूर्वः साहसदण्डः प्रथमः साहसदण्डः 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः' (मस्मृ. ८।१३८) इति मनूक्तलक्षणः कर्तव्यः। लुप्तेत्यादि। लुप्तव्यवायः निःशेषनष्टमैथुनशक्तिः पुरुषः धर्मस्थान् धर्मशास्त्रानुसारेण व्यवहारनिर्णयेऽधिकृतान् प्राड्विवाकादीन् आपृच्छ्य अनुज्ञाप्य प्रव्रजेत् परिव्रजेत् संन्यस्येत्। अन्यथा नियम्येत अनेवंप्रव्रजन् कारागृहे निवेश्येत। श्रीमूला.

**वानप्रस्थादन्यः प्रव्रजितभावः, सुजातादन्यः संघः, सामुत्थायकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिविशेत ॥**

अथ जनपदवासानर्हानाह– वानेत्यादि। वानप्रस्थादन्यः प्रव्रजितभावः वैखानसादतिरिक्तः प्रव्रजितावस्थः अर्थाच्चतुर्थाश्रमी अस्य राज्ञो जनपदं नोपनिविशेत नाध्यासीत। प्रतिषेधनिमित्तं तु अभिशङ्कनीयशीलत्वमुक्तप्रायम्। सुजातादन्यः संघः सुष्ठु जातात् राजराज्यक्षेमायोत्पन्नात् जनसंघात् अन्यः दुर्जातः जनसंघः अस्य जनपदं नोपनिविशेत। सामुत्थायकादन्यः समयानुबन्धो वा, समुत्थायकाः संभूयसेतुबन्धादिराजप्रजानुकूलकर्मकारिणः, तेषां संबन्धी सामुत्थायकः, सामुत्थायकात् समयानुबन्धात् अन्यः राजजनपदद्रोहफलः समयानुबन्धः संकेतरचना च अस्य जनपदं नोपनिविशेत। श्रीमूला.

**न च तत्राऽऽरामा विहारार्थाः शालाः स्युः। नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः, निराश्रयत्वाद्ग्रामाणाम्, क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ॥**

तत्र जनपदे आरामाः विहारार्थाः सर्वजनविनोदस्थानान्युपवनानि शालाश्च प्रेक्षणीयप्रयोगशालाश्च न स्युः। आरामशालाप्रतिषेधस्य फलमाह– नटेत्यादि। नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा कर्मविघ्नं कृष्याद्यनुष्ठानविघ्नं न कुर्युः। नाट्यनृत्तगानवादनकथावर्णननर्मक्रियासु स्ववृत्तिषु न चेष्टेरन्निति भावः। कस्मात्? ग्रामाणां निराश्रयत्वात् नाट्यादिप्रयोगयोग्यशालारहितत्वात्। एवं च सिद्धं परमफलमाह– क्षेत्रेत्यादि। पुरुषाणां क्षेत्राभिरतत्वात् विनोदस्थानाभावेन स्वस्वकर्मस्थानासक्तत्वात् कोशविष्टिद्रव्यधान्यरसवृद्धिः

भवति कोशस्य, विष्टेः हठकारयितव्यस्य कर्मणः, द्रव्यस्य द्रुमवस्य दार्वादिपदार्थस्य, धान्यस्य, रसस्य तैलेक्षुरसादेश्च वृद्धिः भवति । इति एवंप्रकारं फलं उन्नेयमित्यर्थः । श्रीमूला.

परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं परिहरेद्राजा व्ययक्रीडाश्च वारयेत् ॥

राजा परचक्राटवीग्रस्तम्, परचक्रं शत्रुकपटः शत्रुसैन्यं वा, अटवी तात्स्थ्यात् अटवीपालः, ताभ्यां ग्रस्तं व्याधिदुर्भिक्षपीडितं देशं परिहरेत् परचक्रादिभ्यो दूरीकुर्यादित्यर्थः । व्ययक्रीडाश्च धनव्ययहेतुभूताः क्रीडाश्च वारयेत् । श्रीमूला.

दण्डविष्टिकराबाधै रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैर्व्याधिभिश्च पशुव्रजान् ॥

दण्डविष्टिकराबाधैः दण्डविष्टिकराणामतिरेचननिमित्ताभिः पीडाभिः उपहतां कृषिं रक्षेत् । युक्तदण्डविष्टिकरो भूत्वेत्यार्थम् । स्तेनव्यालविषग्राहैः व्याधिभिश्च उपहतान् पशुव्रजांश्च रक्षेत् स्तेनादिभिरुपघातो यथा न भवेत् तथा पालयेत् । श्रीमूला.

वल्लभैः कार्मिकैः स्तेनैरन्तपालैश्च पीडितम् ।
शोधयेत्पशुसंघैश्च क्षीयमाणं वणिक्पथम् ॥

वल्लभैः राजदयितैः, कार्मिकैः राजशुल्काधिकृतैः, स्तेनैः, अन्तपालैः, पशुसंघैश्च व्याघ्रादिसंघैश्च पीडितम्, अत एव क्षीयमाणं वणिक्प्रचारवैरल्यात्, वणिक्पथं शोधयेत् रक्षेत् वल्लभादिपीडापरिहारद्वारेण । श्रीमूला.

एवं द्रव्यद्विपवनं सेतुबन्धमथाऽऽकरान् ।
रक्षेत्पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥

स्पष्टार्थः श्लोकः । श्रीमूला.

विवीतवनद्रव्यवनहस्तिवनानां पालनं
हस्तिवनपालने विशेषश्च

[1]अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् । प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि, तपोवनानि च तपस्विभ्यो गोरुतपराणि प्रयच्छेत् । तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्रव्यालं मार्गायुकहरितहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत् ॥

भूमिच्छिद्रविधानमिति सूत्रम् । भूमिच्छिद्रं सस्याद्युत्पत्त्यनर्हा भूमिः, तस्य विधानं सफलत्वसंपादनप्रकारः उच्यते इति सूत्रार्थः । वणिक्पथप्रचारान् निवेशयेदित्युक्तमधस्तात्, निवेशनस्थानं त्वधुनाऽभिधीयते ।

अकृष्यायां भूमौ मालगर्तशैलशर्करिलप्रायतया कृषिरहितायां भूमौ पशुभ्यः गोमहिषमेषेभ्यः विवीतानि प्रयच्छेत् तृणजलवन्ति स्थलानि विसृजेत् । प्रदिष्टेत्यादि । किंच, प्रदिष्टाभयस्थावरजङ्गमानि दत्ताभयानि स्थावरजङ्गमानि स्थावराणि वृक्षलतादीनि जङ्गमानि सौम्यमृगादीनि च येषु तानि तथाभूतानि, गोरुतपराणि गव्यूतिपरमपरिमाणानि ब्रह्मसोमारण्यानि वेदाध्ययनसोमयागाद्यनुष्ठानार्थानि वनानि ब्राह्मणेभ्यः प्रयच्छेत् ब्राह्मणसमुदायोपयोगाय विसृजेत्, तपोवनानि च यथोक्तविशेषणानि तपस्विभ्यः प्रयच्छेत् । तावदिति । तावन्मात्रं गोरुतपरम्, एकद्वारम्, खातगुप्तं परिखापरिक्षिप्तम्, स्वादुफलगुल्मगुच्छं मनोज्ञफललताप्रतानस्तबकम्, अकण्टकिद्रुमं कण्टकशून्यवृक्षयुक्तम्, उत्तानतोयाशयं अगम्भीरजलाधारम्, दान्तमृगचतुष्पदं दान्ताः मनुष्यपरिचयविश्वस्ताः मृगाश्चतुष्पदाश्चान्ये यस्मिंस्तत् तथाभूतम्, भग्ननखदंष्ट्रव्यालं भग्ननखदंष्ट्राः उद्धृतनखदंष्ट्राः व्यालाः व्याघ्रादिमृगाः यस्मिंस्तत् तथाभूतम्, मार्गयुकहरितहस्तिनीकलभं मृगयुकर्मयोग्याः करिकरिणीकरिपोताः यस्मिंस्तत् तथाभूतं मृगवनं राज्ञः विहारार्थं कारयेत् । मार्गयुकशब्दः आर्हीयठगन्तः । मार्गायुकेति मातृकापाठेषु द्वितीयस्याचो दीर्घत्वं साध्यम् । श्रीमूला.

सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत् ॥

प्रत्यन्ते समीपे, भूमिवशेन वा योग्यभूम्युपलम्भानुसारेण अप्रत्यन्ते वा सर्वातिथिमृगं सर्वे अतिथिमृगाः

(१) कौ. २.२.

यस्मिन् देशान्तराल्लुब्धकोपद्रुता आगत्य वसन्ति तत् सर्वातिथिमृगं नाम अन्यत् मृगवनं निवेशयेत् ।
श्रीमूला.

**कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत्, द्रव्यवनकर्मान्तानटवीश्च द्रव्यवनापाश्रयाः ॥**

कुप्यप्रदिष्टानां कुप्याध्यक्षप्रकरणोक्तानां द्रव्याणां शाकतिनिशादिसारदारुवर्गस्य उटजचिमियादिवेणुवर्गस्य मालतीमूर्वादिवल्कवर्गस्य चेत्येषां एकैकशो वा वनं निवेशयेत् एकैकस्य एकैकं वनं कल्पयेत् । द्रव्यवनकर्मान्तान् अटवीश्च द्रव्यवनसंबद्धानि कर्माणि वनानि च द्रव्यवनापाश्रयाः द्रव्यवनोपजीविनः पुरुषाः निवेशयेयुरिति विपरिणामेन संबन्धः, विदध्युरित्यर्थः ।
श्रीमूला.

**प्रत्यन्ते हस्तिवनमटव्यारक्षं निवेशयेत् । नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्रवेशनिष्कसनं नागवनपालैः पालयेत् । हस्तिघातिनं हन्युः । दन्तयुगं स्वयंमृतस्याऽऽहरतः सपादचतुष्पणो लाभः ॥**

प्रत्यन्ते जनपदावसानदेशे हस्तिवनं नागवनं अटव्यारक्षं अटव्याः आरक्षाः परिरक्षकाः यस्मिंस्तत् तथाभूतं निवेशयेत् । नागवनाध्यक्षः पार्वतं नादेयं सारसं आनूपं च पर्वताश्रयं नद्याश्रयं सरोव्यपाश्रयं साम्बुदेशाश्रयं च नागवनं विदितपर्यन्तप्रवेशनिष्कसनं विज्ञातपरिसराभिगमनिर्गमं कृत्वा नागवनपालैः पालयेत् । हस्तिघातिनं शबरपुलिन्दादिं हन्युः । स्वयंमृतस्य अर्थात् हस्तिनः दन्तयुगं आहरतः उपनयतः वनेचरजनस्य सपादचतुष्पणो लाभः पारितोषिकम्, देय इति शेषः । श्रीमूला.

**नागवनपाला हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखा हस्तिमूत्रपुरीषच्छन्नगन्धा भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह चरन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं विद्युः ॥**

नागवनपालाः हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखाः, हस्तिपकः आधोरणः, पादपाशिकः पादपाशबन्धनकुशलः, सैमिकः सीमाधिकृतः, वनचरकः वनवासी, पारिकर्मिकः हस्तिपरिचरणचतुरः, एतैः सहिताः, हस्तिमूत्रपुरीषच्छन्नगन्धाः हस्तिमूत्रपुरीषगन्धन्यक्कृतगन्धान्तराः, भल्लातकीशाखाप्रतिच्छन्नाः अरुष्कराख्यवृक्षविटपावच्छादिताः, पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह गजबन्धनशिक्षिताभिर्वशाभिः सह चरन्तः सन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन शयनावस्थानपदपङ्क्तिविष्ठावप्राघातप्रदेशदर्शनेन हस्तिकुलपर्यग्रं गजयूथसंचारपरमावधिं विद्युः । श्रीमूला.

**यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्धमुक्तं च निबन्धेन विद्युः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः । हस्तिप्रधानो हि विजयो राज्ञाम् । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिन इति ॥**

यूथचरं यूथेनैव सह चरति, न त्वेकाकी यस्तम्, एकचरं एक एव चरति, न तु यूथेन सह यस्तम्, निर्यूथं यूथनिर्गतम्, यूथपतिम्, व्यालं क्रूरस्वभावम्, मत्तं प्रभिन्नम्, पोतं दशवर्षकम्, बद्धमुक्तं च हस्तिनं निबन्धेन विद्युः, यूथचरादिहस्तीयत्तादिकं गणनपुस्तके समारोप्य तेन जानीयुरित्यर्थः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिशिक्षाविचक्षणैः प्रमाणभूतैः श्लाघितलक्षणचर्यान् हस्तिनः गृह्णीयुः राजार्थे । हि यस्मात् कारणात् राज्ञां विजयः शत्रुजयः हस्तिप्रधानः हस्तिमुख्यसाधनकः । हस्तिनां मुख्यसाधनत्वं विशदयितुमाह—परेत्यादि । अतिप्रमाणशरीराः महाप्रमाणदेहाः अत एव प्राणहरकर्माणः हस्तिनः परानीकव्यूहदुर्गस्कन्धावारप्रमर्दनाः परेषां शत्रूणां सैन्यविन्यासस्य प्राकारादिदुर्गस्य राजधान्याश्च विध्वंसकाः खलु । इतिर्हेतुवचनः गृह्णीयुरित्यनेन संबन्धनीयः । श्रीमूला.

**कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेदिकरूशजाः ।**
**दाशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥**

**सौराष्ट्रिकाः पाञ्चनदास्तेषां प्रत्यवराः स्मृताः । सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥**

गजेषूत्तममध्यमाधमान् श्लोकाभ्यामाह— कलिङ्गेत्यादिना सौराष्ट्रिका इत्यादिना च । कलिङ्गाङ्गगजाः कलिङ्गाङ्गदेशोद्भवा गजाः । दाशार्णाः दशार्णदेशभवाः । आपरान्ताः पश्चिमदेशजाः । प्रत्यवराः अधमाः । श्रेष्ठादीनां त्रयाणां वीर्यवेगप्रतापाः क्रियया वर्धन्त इत्याह— सर्वेषामित्यादि । श्रीमूला.

दैवमहाभयेभ्यो जनपदरक्षणम्

**[१]दैवान्यष्टौ महाभयानि— अग्निरुदकं व्याधिर्दुर्भिक्षं मूषिका व्यालाः सर्पा रक्षांसीति । तेभ्यो जनपदं रक्षेत् ॥**

उपनिपातप्रतीकारः इति सूत्रम् । उपनिपाताः नाम दैव्योऽग्न्यादिनिमित्ताः विपदः, तेषां प्रतीकारोऽभिधीयत इति सूत्रार्थः । कण्टकास्तावत् द्विविधाः— मनुष्यकण्टकाः देवकण्टकाश्चेति । तत्र मनुष्यकण्टकाः कारुकादय उक्ताः, देवकण्टकास्त्वधुनोच्यन्ते ।

दैवान्यष्टावित्यादि स्पष्टार्थम् । श्रीमूला.

**ग्रीष्मे बहिरधिश्रयणं ग्रामाः कुर्युः । दशकुलीसंग्रहेणाधिष्ठिता वा । नागरिकप्रणिधावग्निप्रतिषेधो व्याख्यातः । निशान्तप्रणिधौ राजपरिग्रहे च ॥**

तेष्वष्टसु अग्नितो रक्षणप्रकारमाह— ग्रीष्म इति । तस्मिन् ग्रामाः अधिश्रयणं पाकस्थाल्याश्चुल्ल्यां निवेशनं बहिः गृहबहिर्देशे कुर्युः । दशकुलीसंग्रहेण दशकुलीरक्षकेण गोपनाम्ना, रक्षकेण इत्येव भाषापाठः, अधिष्ठिता वा 'इहाधिश्रयणं कर्तव्यम्' इति चोदिता वा कुर्युः । नागरिकप्रणिधौ अग्निप्रतिषेधः अग्निभयपरिहारविधिः व्याख्यातः 'अग्निप्रतीकारं च ग्रीष्मे' (कौ.२।३६) इत्यादिनोक्तः । निशान्तप्रणिधौ राजपरिग्रहे च व्याख्यातः 'मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति' (कौ. १।२०) इत्यादिनोपदिष्टः । श्रीमूला.

**बलिहोमस्वस्तिवाचनैः पर्वसु चाग्निपूजाः कारयेत् ॥**

पर्वसु पूर्णिमादिषु बलिहोमस्वस्तिवाचनैः भूतबलिभिः रक्षाहोमैः शान्तिकैः स्वस्तिवाचनैश्च अग्निपूजाः कारयेत् । श्रीमूला.

**वर्षारात्रमनूपग्रामाः पूरवेलामुत्सृज्य वसेयुः । काष्ठवेणुनावश्चावगृह्णीयुः ॥**

अथ जलप्रतिषेधमाह— वर्षारात्रमिति । वर्षाकालिकरात्रीः अनूपग्रामाः जलप्रायप्रदेशवासिनः पूरवेलां उत्सृज्य जलप्रवाहसंनिकृष्टं तटं परिहृत्य वसेयुः । इह वर्षापूर्वपदकात् रात्रिशब्दात् अच्प्रत्ययोऽन्वेष्यः । रात्रिमिति वा पाठः । काष्ठवेणुनावश्च काष्ठं वेणुं नावं च जलप्रवाहतरणार्थाः अवगृह्णीयुः संगृह्णीयुः । श्रीमूला.

**उह्यमानमलाबूदृतिगण्डिकावेणिकाभिस्तारयेयुः । अनभिसरतां द्वादशपणो दण्डोऽन्यत्र प्लवहीनेभ्यः ॥**

प्रवाहेण नीयमानं बाहुतरणाक्षमं अलाबूदृतिप्लवगण्डिकावेणिकाभिः, अलाबूः तुम्बीफलम्, दृतिः चर्ममस्त्रा, प्लवः उडुपम्, गण्डिका तरुप्रकाण्डकम्, वेणिका जलतरणसाधनभेदः, ताभिः तारयेयुः । अनभिसरतां तारयितुमनभिगच्छतां द्वादशपणो दण्डः । अन्यत्र प्लवहीनेभ्य इति । तरणसाधनहीनाश्चेदनभिसरन्तो नापराध्यन्तीत्यर्थः । श्रीमूला.

**पर्वसु च नदीपूजाः कारयेत् ॥**

अमावास्यादिषु नदीपूजाः कारयेत् जलविपत्प्रशमार्थम् । श्रीमूला.

**मायायोगविदो वेदविदो वर्षमभिचरेयुः ॥**

शैवादयो मान्त्रिकाः, वेदविदः अथर्ववेदनिपुणाः वर्षं अतिवृष्टिं अभिचरेयुः जपहोमादिना प्रशमयेयुः । श्रीमूला.

**वर्षावग्रहे शचीनाथगङ्गापर्वतमहाकच्छपूजाः कारयेत् ॥**

वृष्टिप्रतिबन्धे सति शचीनाथगङ्गापर्वतमहाकच्छपूजाः इन्द्रजाह्नवीशैलसमुद्रपूजाः कारयेत् । श्रीमूला.

(१) कौ. ४।३.

**व्याधिभयमौपनिषदिकैः प्रतीकारैः प्रतिकुर्युः। औषधैश्चिकित्सकाः, शान्तिप्रायश्चित्तैर्वा सिद्धतापसाः॥**

अथ व्याधिभयप्रतीकारः। व्याधिस्तावत् द्विविधः— कृत्रिमोऽकृत्रिमश्च। आद्यः औपनिषदिकोक्तविषधूमविषाम्ब्वादिदोषप्रभवः, द्वितीयो धातुदोषजः। तत्र कृत्रिमव्याधिभयं औपनिषदिकोक्तैर्विधानैः प्रतिकुर्युः, अकृत्रिमव्याधिभयं भिषज औषधैः सिद्धतापसाश्च शान्तिकर्मभिर्व्रतोपवासादिभिः प्रतिविदध्युरित्याह— व्याधिभयमित्यादि। श्रीमूला.

**तेन मरको व्याख्यातः। तीर्थाभिषेचनं महाकच्छवर्धनं गवां श्मशानावदोहनं कबन्धदहनं देवरात्रिं च कारयेत्॥**

उक्तेन व्याधिशमनप्रकारेण मरकः मारीनामा महाव्याधिः व्याख्यातः उक्तप्रतीकारः। विशेषं त्वाह— तीर्थाभिषेचनमिति। गङ्गादितीर्थस्नानम्, महाकच्छवर्धनं समुद्रपूजनम्, गवां श्मशानावदोहनं श्मशाने दोहनम्, कबन्धदहनं तण्डुलसक्तुनिर्मितस्य कबन्धस्य श्मशाने दहनम्, देवरात्रिं च देवं क्वचित् स्थानेऽर्चयित्वा रात्रिजागरणं च कारयेत्। श्रीमूला.

**पशुव्याधिमरके स्थानान्यर्थनीराजनं स्वदैवतपूजनं च कारयेत्॥**

पशूनां गजाश्वादीनां व्याधौ मरके च स्थानानि भिन्नस्थानस्थितीः अर्थनीराजनं नीराजनद्रव्यैर्नीराजनं स्वदैवतपूजनं च कारयेत्। तत्र गजस्य स्वदैवतं सुब्रह्मण्यः, अश्वस्य अश्विनौ, गोः पशुपतिः, महिषस्य वरुणः, वेसरस्य वायुः, अजस्य अग्निरिति बोद्धव्यम्। श्रीमूला.

**दुर्भिक्षे राजा बीजभक्तोपग्रहं कृत्वाऽनुग्रहं कुर्यात्। दुर्गसेतुकर्म वा भक्तानुग्रहेण। भक्तसंविभागं वा। देशनिक्षेपं वा। मित्राणि वा व्यपाश्रयेत। कर्शनं वमनं वा कुर्यात्॥**

दुर्भिक्षभयप्रतीकारमाह— दुर्भिक्ष इति। दुर्भिक्षसमये राजा बीजभक्तोपग्रहं प्रजानां बीजभक्ताभ्यामनुकूलाचरणं कृत्वा अनुग्रहं कुर्यात्। दुर्गसेतुकर्म वा दुर्गकर्म सेतुनिर्माणकर्म वा भक्तानुग्रहेण भक्तदानेन कुर्यात्। भक्तसंविभागं वा दुर्गसेतुकर्माभावेऽपि केवलान्नदानं कुर्यात्। देशनिक्षेपं वा अनन्तरदेशे तद्देशराजान्तिके 'प्रजा इमा मे कंचित् कालं रक्षित्वा प्रत्यर्पय' इत्युक्त्वा प्रजानिक्षेपणं वा कुर्यात्। मित्राणि वा धनदानाद्युपकारक्षमाणि व्यपाश्रयेत प्रजाभक्तार्थम्। कर्शनं निरुपयोगजनानां तत्काले देशान्तरप्रेषणेनाल्पत्वकरणं वमनं वा सुभिक्षविदेशप्रेषणं वा कुर्यात्। श्रीमूला.

**निष्पन्नसस्यमन्यविषयं वा सजनपदो यायात्। समुद्रसरस्तटाकानि वा संश्रयेत। धान्यशाकमूलफलावापान् सेतुषु कुर्वीत। मृगपशुपक्षिव्यालमत्स्यारम्भान् वा॥**

सस्यसमृद्धं अन्यविषयं वा अन्यदेशं वा सजनपदः जानपदसहितः यायात् उपजीवनार्थम्। समुद्रसरस्तटाकानि वा संश्रयेत मत्स्यपक्षिकूर्मादिजलचरजन्तुभक्षणेन जीवनार्थम्। धान्यशाकमूलफलावापान् सेतुषु कुर्वीत जलाधारान् निर्माय तत्र कुर्वीत। मृगपशुपक्षिव्यालमत्स्यारम्भान् वा मृगादीनां वधारम्भान् वा, कुर्वीतेति वर्तते। श्रीमूला.

**मूषिकभये मार्जारनकुलोत्सर्गः। तेषां ग्रहणहिंसायां द्वादशपणो दण्डः। शुनामनिग्रहे च अन्यत्रारण्यचरेभ्यः॥**

मूषिकप्रतीकारमाह— मूषिकभय इति। तस्मिन्नुत्पन्ने मार्जारनकुलोत्सर्गः मार्जाराणां नकुलानां चोत्सर्गः गृहेषु स्वैरसंचारघटना कर्तव्या। तेषां मार्जारनकुलानां ग्रहणहिंसायां ग्रहणे हिंसने वा द्वादशपणो दण्डः। शुनामनिग्रहे च परोपद्रवादनिवारणे च द्वादशपणो दण्डः। अन्यत्रारण्यचरेभ्य इति। वनेचराणां शुनामनिग्रहे दण्डाभावः। श्रीमूला.

**स्नुहिक्षीरलिप्तानि धान्यानि विसृजेत्। उपनिषद्योगयुक्तानि वा। मूषिककरं वा प्रयुञ्जीत। शान्तिं वा सिद्धतापसाः कुर्युः। पर्वसु च मूषिकपूजाः कारयेत्॥**

* स्नुहिक्षीरलिप्तानि धान्यानि विसृजेत् विकिरेत्, तानि हि भक्षयित्वा मूषिका म्रियेरन्निति । उपनिषद्योगयुक्तानि वा उपनिषदुक्तौषधयुक्तानि वा धान्यानि विसृजेत् । मूषिककरं वा प्रयुञ्जीत अमुकगृहे प्रतिदिनमेतावन्तो मूषिका देया इति मूषिकरूपं करं वा कल्पयेत् । शान्तिं वा मूषिकशमनार्थं जपहोमादिकर्म वा सिद्धतापसाः कुर्युः । पर्वसु च पूर्णिमादिषु च मूषिकपूजाः कारयेत् । श्रीमूला.

**तेन शलभपक्षिक्रिमिभयप्रतीकारा व्याख्याताः ॥**

उक्तरीत्या शलभभयपक्षिभयक्रिमिभयानां प्रतीकारा द्रष्टव्या इत्याह— तेन शलभेत्यादि । श्रीमूला.

**व्यालभये मदनरसयुक्तानि पशुशवानि प्रसृजेत् । मदनकोद्रवपूर्णान्यौदर्याणि वा ॥**

व्यालभयप्रतीकारमाह— व्यालभय इति । व्यालाः हिंस्रमृगाः व्याघ्रादयः, तत्कृते भये मदनरसयुक्तानि उपनिषदुक्तेन मदनरसेन युक्तानि पशुशवानि पशूनां गोमहिषमेषादीनां तद्भक्ष्याणां शवानि कुणपान् प्रसृजेत् तद्गोचरे क्षिपेत् । मदनकोद्रवपूर्णानि वनकोद्रवेण वरकेण च पूर्णानि औदर्याणि वा पशुकोष्ठान् वा प्रसृजेत् । व्याला हि तद्भक्षणान्म्रियन्ते । श्रीमूला.

**लुब्धकाः श्वगणिनो वा कूटपञ्जरावपातैश्चरेयुः । आवरणिनः शस्त्रपाणयो व्यालानभिहन्युः । अनभिसर्तुर्द्वादशपणो दण्डः । स एव लाभो व्यालघातिनः ॥**

व्याधाः श्वगणिनो वा श्वभिर्मृगान् ये ग्राहयन्ति ते वा कूटपञ्जरावपातैः कपटकुलायैः तृणादिच्छन्नैः पातनगर्तैश्च चरेयुः व्यवहरेयुः । आवरणिनः सावरणाः शस्त्रपाणयः तीक्ष्णाः व्यालान् अभिहन्युः । अनभिसर्तुरिति । व्यालेन द्रुह्यमाणं दृष्ट्वाऽनभिगच्छतः द्वादशपणो दण्डः । स एव लाभो व्यालघातिन इति । व्यालं हतवते द्वादशपणं पारितोषिकं देयम् । श्रीमूला.

* स्नुहिः वज्रद्रुमाख्यः वृक्षविशेषः ' शेरनिवडुंग ' इति भाषायां प्रसिद्धः ।

**पर्वसु च पर्वतपूजाः कारयेत् । तेन मृगपक्षिसंघग्राहप्रतीकारा व्याख्याताः ॥**

**सर्पभये मन्त्रैरोषधिभिश्च जाङ्गलीविदश्चरेयुः । संभूय वोपसर्पान् हन्युः । अथर्ववेदविदो वाऽभिचरेयुः । पर्वसु च नागपूजाः कारयेत् । तेनोदकप्राणिभयप्रतीकारा व्याख्याताः ॥**

सर्पप्रतीकारमाह— सर्पभय इति । तस्मिन् सति मन्त्रैः गारुडादिभिः ओषधिभिश्च विषघ्नीभिः जाङ्गलीविदः विषचिकित्सितकुशलाः चरेयुः प्रतीकारव्यवहारं कुर्युः । संभूय वा उपसर्पान् दृष्टिगोचरमुपगतान् सर्पान् हन्युः, अर्थात् पौराः । अथर्ववेदविदो वा अभिचारमन्त्राभिज्ञा वा अभिचरेयुः मन्त्रप्रयोगैः सर्पान् हन्युः । पर्वसु च नागपूजाः सर्पपूजाः कारयेत् । तेन उक्तप्रकारेण उदकप्राणिभयप्रतीकारा व्याख्याताः नक्रादिजलचरप्राणिभयस्य प्रतिविधय ऊह्याः । श्रीमूला.

**रक्षोभये रक्षोघ्नान्यथर्ववेदविदो मायायोगविदो वा कर्माणि कुर्युः । पर्वसु च वितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागोपहारैश्चैत्यपूजाः कारयेत् । ' चरुं वश्चरामः ' इत्येवं सर्वभयेष्वहोरात्रं चरेयुः ॥**

रक्षःप्रतीकारमाह— रक्षोभय इति । तस्मिन् सति अथर्ववेदविदो मायायोगविदो वा रक्षोघ्नानि रक्षोघातकराणि कर्माणि कुर्युः । पर्वसु च कृष्णचतुर्दश्यष्टम्यादिषु च वितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागोपहारैः, वितर्दिः वेदिका, छत्रं आतपत्रम्, उल्लोपिका भक्ष्यभेदः, हस्तपताका क्षुद्रध्वजः, छागोपहारः छागबलिदानम्, इत्येतैः चैत्यपूजाः चिताङ्के रक्षःपूजाः कारयेत् । ' चरुं वश्चरामः ' इति ' युष्मभ्यं हविः पचामः ' इत्येवं वदन्तः सन्तः सर्वभयेषु अहोरात्रं नक्तंदिवं चरेयुः संचरेयुः । श्रीमूला.

**सर्वत्र चोपहतान् पितेवानुगृह्णीयात् ॥**

सर्वेषु भयेषु उपहतान् पीडितान् जनान् पितेव अनुगृह्णीयात् राजा । श्रीमूला.

**मायायोगविदस्तस्माद्विषये सिद्धतापसाः ।**
**वसेयुः पूजिता राज्ञा दैवापत्प्रतिकारिणः ॥**

श्लोकमाह– मायेत्यादि । तस्मात् विपत्प्रतीकारकरणेन जनाः सर्वथाऽनुग्राह्या इत्येतस्मात् कारणात् । शेषं सुबोधम् । श्रीमूला.

राजराज्ययोः कण्टकशोधनम्

***[1]दुर्गराष्ट्रयोः कण्टकशोधनमुक्तम् । राजराज्ययोर्वक्ष्यामः ॥**

अथ योगवृत्ताख्यं पञ्चममधिकरणमारभ्यते । योगानां सत्रितीक्ष्णरसदादीनां वृत्तं अनुष्ठानं योगवृत्तम्, तत्प्रतिपादकत्वादस्याधिकरणस्य योगवृत्तमिति संज्ञा । यद्यपीदं दाण्डकर्मिकप्रकरणात्मना पर्यवस्यति तथाप्या समाप्तेर्योगवृत्तस्य प्रतिपादनात् तत्प्राधान्यादस्याधिकरणस्य हस्तिवनवत् योगवृत्तव्यपदेशः । दण्डकर्मप्रतिपादकत्वसामान्येऽपि च नेदं पूर्वाधिकरणे प्रवेशितम्, किंतु तस्मात् पृथक्कृतम्, कर्तृभेदात् कण्टकभेदात् उपायभेदाच्छोधनीयभेदाच्च । कण्टकशोधने हि प्रदेष्टृप्रभृतयः कर्तारः, कारुकवैदेहकादयः कण्टकाः, शङ्कारूपकर्माभिग्रहशुद्धचित्रवधादय उपायाः, दुर्गराष्ट्रे च शोधनीये । अत्र तु गूढपुरुषसहितो राजा कर्ता, राजावग्रहोपजीवनाः राष्ट्रमुख्यादयः कण्टकाः, उपांशुदण्ड उपायः, नृपतिरमात्याश्च शोधनीया इति ।

अथ प्रथमं सूत्रम्– दाण्डकर्मिकमिति । दण्डः उपांशुवधः, तस्य कर्म प्रयोगः दण्डकर्म, तदधिकृत्य प्रवृत्तमिति सूत्रार्थः । पूर्वस्मिन् प्रकरणे शुद्धचित्रवधादयः प्रकाशदण्डा विभज्य दर्शिताः, तत्प्रयोगाविषये अवश्यशोधने च प्रयोक्तव्यस्तूष्णींदण्ड इहाभिधीयत इति प्रकरणसंगतिः ।

अधिकरणसंगतिं सूचयन् प्रकरणार्थं वक्तुमारभते –दुर्गराष्ट्रयोरित्यादि । दुर्गं स्थानीयादि, राष्ट्रं जनपदादि, तयोः कण्टकशोधनं उक्तं गतेऽधिकरणे । राजराज्ययोः, राजा स्वामी, राज्यममात्यादि, तयोः कण्टकशोधनं वक्ष्यामः अस्मिन्नधिकरणे । श्रीमूला.

**राजानमवगृह्योपजीविनः शत्रुसाधारणा वा ये मुख्यास्तेषु गूढपुरुषप्रणिधिः कृत्यपक्षोपग्रहो वा सिद्धिर्यथोक्तं पुरस्तादुपजापोऽपसर्पो वा यथा च पारग्रामिके वक्ष्यामः ॥**

तत्राऽऽदौ राजकण्टकान् प्रस्तौति– राजानमिति । तं अवगृह्य अधःकृत्य उपजीविनः शत्रुसाधारणा वा उभयवेतनाश्च ये मुख्याः मन्त्रिपुरोहितसेनापतियुवराजादयः प्रधानपुरुषाः तेषु गूढपुरुषप्रणिधिः गूढपुरुषप्रणिधानं सिद्धिः छेदः शत्रुच्छेदहेतुत्वात् सिद्धिरित्याख्यायते । कृत्यपक्षोपग्रहो वा, कृत्याः शत्रोः क्रुद्धलुब्धभीतादयः, तेषां स्वीकारश्च सिद्धिः, शत्रूच्छेदहेतुत्वात् । तत्स्वीकारः कथं कर्तव्यः ? यथोक्तं पुरस्तात् पूर्वं गूढपुरुषप्रणिध्युक्तेन प्रकारेण कर्तव्यः । कोऽसौ ? उपजापोऽपसर्पो वा । यथा च पारग्रामिके वक्ष्याम इति । दुर्गलम्भाधिकरणीयपारग्रामिकप्रस्तावे उपजापापसर्पप्रणिधिप्रकरणयोः (कौ. १३।१, ३) यं प्रकारं वक्ष्यामस्तेन च प्रकारेणोपजापोऽपसर्पो वा कर्तव्यः । श्रीमूला.

**राज्योपघातिनस्तु वल्लभाः संहता वा ये मुख्याः प्रकाशमशक्याः प्रतिषेद्धुं दूष्यास्तेषु धर्मरुचिरुपांशुदण्डं प्रयुञ्जीत ॥**

राज्योपघातिन आह– राज्योपघातिनस्त्विति । राज्योपहन्तारः वल्लभाः अध्यक्षाः संहता वा मुख्याः संहत्यकृतैकमत्यसंकेता अमात्यादयः प्रधानपुरुषाश्च ये प्रकाशमशक्याः प्रतिषेद्धुं राज्योपघातकप्रवृत्तेः साक्षात् वारयितुमशक्याः अत एव दूष्याः कथमप्युपहन्तव्या भवन्ति, तेषु धर्मरुचिः उपघातकपरिहारेण राज्यक्षेमचिकीर्षुः उपांशुदण्डं तूष्णींदण्डं प्रयुञ्जीत । श्रीमूला.

**दूष्यमहामात्रभ्रातरं सत्कृतं सत्री प्रोत्साह्य राजानं दर्शयेत् । तं राजा दूष्यद्रव्योपभोगातिसर्गेण दूष्ये विक्रमयेत् । शस्त्रेण रसेन वा विक्रान्तं तत्रैव घातयेत् 'भ्रातृघातकोऽयम्' इति ॥**

* कौटिलीयार्थशास्त्रस्थं दुर्गराष्ट्रयोः कण्टकशोधनं व्यवहारकाण्डे संगृहीतं तत्रैव द्रष्टव्यम् ।

(१) कौ. ५।१.

उपांशुदण्डप्रयोगप्रकारमाह— दूष्यमहामात्रभ्रातरमित्यादि। दूषणीयस्य हस्त्यारोहाध्यक्षस्य भ्रातरमलब्धदायांशं सत्कारपूर्वं सत्री स्वभ्रातृसकाशात् भेदयित्वा 'कण्टकशोधनाधिकारं ते राजा दास्यति' इति प्रोत्साह्य राजानं दर्शयेत्। तमिति। तथा दर्शितं दूष्यद्रव्योपभोगातिसर्गेण दूष्यनिग्रहार्थशस्त्रभटाद्युपकरणद्रव्यदानेन दूष्ये विक्रमयेत् विक्रमाय प्रेरयेत्। शस्त्रेण रसेन वा विक्रान्तं भ्रातरि प्रयुक्तविक्रमं तं तत्रैव तस्मिन्नेवापराधे निमित्ते, भ्रातृघातकोऽयमिति प्रख्याप्येति शेषः, घातयेत्। श्रीमूला.

**तेन पारशवः परिचारिकापुत्रश्च व्याख्यातौ ॥**

उक्तेन प्रकारेण महामात्रस्यावरवर्णापुत्रं परिचारिकापुत्रं च प्रोत्साहितानीतं दूष्यद्रव्योपभोगातिसर्गेण पितरि विक्रान्तं कारयित्वा पितृघातकोऽयमिति प्रख्याप्य घातयेदित्यर्थः। श्रीमूला.

**दूष्यं महामात्रं वा सत्रिप्रोत्साहितो भ्राता दायं याचेत। तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्— हतोऽयं दायकामुक इति। ततो हतपक्षं परिगृह्येतरं निगृह्णीयात् ॥**

प्रकारान्तरमाह— दूष्यं महामात्रं वेत्यादि। अन्यत्र वा दूष्यगृहप्रतिद्वारातिरिक्तप्रदेशे वा। तीक्ष्णः हिंसाचारश्चारभेदः गूढपुरुषप्रणिध्युक्तः। हतपक्षं परिगृह्य हतस्य बन्धून् पुत्रमातुलादीन् आनाय्य इतरं निगृह्णीयात् महामात्रं घातयेत् भ्रातृघातक इति ख्यापयन्। श्रीमूला.

**दूष्यसमीपस्था वा सत्रिणो भ्रातरं दायं याचमानं घातेन परिभर्त्सयेयुः। तं रात्राविति समानम् ॥**

प्रकारान्तरमाह— दूष्येत्यादि। दूष्यसमीपस्थाः दूष्यसेवकलिङ्गाः। घातेन परिभर्त्सयेयुः 'दायमुपेक्षस्व, अन्यथा त्वां हनिष्यामः' इति वादेनोद्वेजयेयुः। तं रात्राविति समानमिति। 'तं रात्रौ दूष्यगृहप्रतिद्वारि उपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्— हतोऽयं दायकामुक इति। ततो हतपक्षं परिगृह्य महामात्रं निगृह्णीयात्' इत्येतत् पूर्वोक्तमिहापि तुल्यं द्रष्टव्यमित्यर्थः। श्रीमूला.

**दूष्यमहामात्रयोर्वा यः पुत्रः पितुः पिता वा पुत्रस्य दारानधिचरति भ्राता वा भ्रातुस्तयोः कापटिकमुखः कलहः पूर्वेण व्याख्यातः ॥**

दूष्यस्य महामात्रस्य वा यः पुत्रः पितुर्दारान् अधिचरति अधिगच्छति, पिता वा पुत्रस्य दारान् अधिगच्छति, भ्राता वा भ्रातुर्दारान् अधिगच्छति, तयोः पितापुत्रयोः भ्रात्रोर्वा कापटिकमुखः कलहः कापटिकाख्यचारप्रणिधानद्वारकः कलहः पूर्वेण पूर्वोक्तेन प्रकारेण व्याख्यातः। तत्रान्यतरेणान्यतरस्य वधे कृते शेषवधः प्राग्वत् द्रष्टव्य इत्यर्थः। श्रीमूला.

**दूष्यमहामात्रपुत्रमात्मसंभावितं वा सत्री 'राजपुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसि' इत्युपचरेत्। प्रतिपन्नं राजा रहसि पूजयेत्— प्राप्तयौवराज्यकालं त्वां महामात्रभयान्नाभिषिञ्चामीति। तं सत्री महामात्रवधे योजयेत्। विक्रान्तं तत्रैव घातयेत्— पितृघातकोऽयमिति ॥**

प्रकारान्तरमाह— दूष्यमहामात्रपुत्रमित्यादि। दूष्यस्य महामात्रस्य च पुत्रं आत्मसंभावितं शौर्यौदार्यादिगुणसंपन्नंमन्यं सत्री उपचरेत्। कथमिति? 'राजपुत्रस्त्वं शत्रुभयात् इह महामात्रे न्यस्तोऽसि' इति। प्रतिपन्नं सत्रिवचनमङ्गीकृत्याऽऽगतं राजा रहसि पूजयेत्। किमित्युक्त्वा? 'प्राप्तयौवराज्यकालं त्वां महामात्रभयात् महामात्रो राज्यकामुकस्त्वामभिषिक्तं सद्यो हन्यात् इति शङ्कया नाभिषिञ्चामि' इत्युक्त्वा। तं राजकृतोपजापप्रवणं सत्री महामात्रवधे योजयेत्। विक्रान्तं हतपितृकं तत्रैव तस्मिन्नेव निमित्ते घातयेत् राजा पितृघातकोऽयमिति, ख्यापयन्निति शेषः। हतेऽपि दूष्ये हन्तुर्वधोऽयमुपदिश्यते स कालान्तरे भूतार्थवेदी भूत्वा शत्रुर्मा भूदित्येतदर्थम्। श्रीमूला.

**भिक्षुकी वा दूष्यभार्यां सांवननिकीभिरोषधीभिः संवास्य रसेनातिसंदध्यात् । इत्याप्यप्रयोगः ॥**

भिक्षुकी वेति । सा वा चारभूता दूष्यभार्यां दूष्यस्य महामात्रादेर्भार्यां मन्दसौन्दर्यां सांवननिकीभिः संवननफलाभिः ओषधीभिः निमित्तभूताभिः, स्वगततथाविधौषधिप्रयोगनिपुणताख्यानेनेत्यर्थः, संवास्य आत्मपरिचयं कारयित्वा रसेन विषेण अतिसंदध्यात् वञ्चयेत् । संवननौषधव्याजेन विषं भार्याद्वारा ग्रासयित्वा दूष्यं हन्यादित्यर्थः । इत्याप्यप्रयोग इति । एवं क्रियमाणमतिसंधानं आप्यप्रयोगः इत्याख्यायते । श्रीमूला.

**दूष्यमहामात्रमटवीं परग्रामं वा हन्तुं कान्तारव्यवहिते वा देशे राष्ट्रपालमन्तपालं वा स्थापयितुं नागरस्थानं वा कुपितमवग्रहीतुं सार्थातिवाह्यं प्रत्यन्ते वा सप्रत्यादेयमादातुं फल्गु बलं तीक्ष्णयुक्तं प्रेषयेत् । रात्रौ दिवा वा युद्धे प्रवृत्ते तीक्ष्णाः प्रतिरोधकव्यञ्जना वा हन्युः– अभियोगे हत इति ॥**

दूष्यं महामात्रं अटवीं अटवीपालं परग्रामं वा पारग्रामिकान् वा हन्तुम्, कान्तारव्यवहिते वा देशे दुर्गमारण्यान्तरिते देशे वा राष्ट्रपालं स्थापयितुम्, अन्तपालं वा स्थापयितुम्, नागरस्थानं वा कुपितं अवग्रहीतुं नियन्तुम्, प्रत्यन्ते वा परराष्ट्रसंधौ वा सार्थातिवाह्यं सार्थातिवाहनयोग्यं स्थलं सप्रत्यादेयम्, प्रत्यादेयं परेण पूर्वं गृहीतं पुनः प्रतिग्रहीतव्यं स्थलम्, तत्सहितं आदातुं फल्गु बलं अल्पं सैन्यं तीक्ष्णयुक्तं तीक्ष्णैरुपेतं प्रेषयेत् । रात्रौ दिवा वा युद्धे प्रवृत्ते तीक्ष्णाः प्रतिरोधकव्यञ्जनाः चोरवेषास्तीक्ष्णाः हन्युः अभियोगे युद्धे हतः इति ख्यापयन्तः । अर्थात् पूर्वोक्तं हन्तव्यं जनम् । वाशब्दः प्रकारविकल्पे । श्रीमूला.

**यात्राविहारगतो वा दूष्यमहामात्रान् दर्शनायाऽऽह्वयेत् । ते गूढशस्त्रैस्तीक्ष्णैः सह प्रविष्टा मध्यमकक्ष्यायामात्मविचयमन्तःप्रवेशनार्थं दद्युः । ततो दौवारिकाभिगृहीतास्तीक्ष्णाः 'दूष्यप्रयुक्ताः स्मः' इति ब्रूयुः । ते तदभिविख्याप्य दूष्यान् हन्युः । तीक्ष्णस्थाने चान्ये वध्याः ॥**

उपायान्तरमाह– यात्राविहारगतो वेत्यादि । अयमर्थः– 'राजकुलमशस्त्रेण प्रवेष्टव्यम्' इत्याघोषणे स्थिते जातु प्रस्तुतयात्राविहारो दूष्यमहामात्रान् राजा दर्शनायाऽऽह्वयेत् । तैः सह राजकुलं निगूढशस्त्रास्तीक्ष्णाः राजदत्तपूर्वसंकेताः प्रविश्य प्रथमद्वारमतीत्य द्वितीयकक्ष्याद्वारं गताः द्वाराधिकृतैः सशस्त्राशस्त्रपरीक्षणं कुर्वद्भिः 'कुतो यूयं सशस्त्राः' इति पृष्टाः 'नृपतिवधाय महामात्रेण प्रेरिता वयम्' इति वदेयुः । ततस्तं दोषं प्रख्याप्य महामात्रान् राजा घातयेत् । तीक्ष्णानां स्थाने चान्यांस्तीक्ष्णापदेशेन घातयेदिति । श्रीमूला.

**बहिर्विहारगतो वा दूष्यान् आसन्नावासान् पूजयेत् । तेषां देवीव्यञ्जना वा दुःस्त्री रात्रावावासेषु गृह्येतेति समानं पूर्वेण ॥**

बहिर्विहारगतः दुर्गबाह्यग्रामनगरादिदर्शनार्थं गतः दूष्यान् आसन्नावासान् राजवासस्थानाभ्यर्णस्थानवासिनः पूजयेत् पौनःपुनिकसंदर्शनसंभाषणसंभोजनादिना सत्कुर्यात् स्नेहख्यापनार्थम् । स्नेहख्यापनं तु वक्ष्यमाणो वधप्रयोगः पारमार्थिकमहापराधनिमित्तः, न द्वेषनिमित्त इति लोकप्रत्ययार्थम् । तेषां देवीव्यञ्जना वा दुःस्त्री रात्रावावासेषु गृह्येतेति । पुंश्चलीं कांचित् राजभार्याव्यञ्जनां कृत्वा रात्रौ दूष्याणामावासेषु संप्रेष्य स्वगृहादर्शनसंरम्भाभिनयेन स्वनिवासासन्नगृहेषु सपदि स्वभटैः कारितान्वेषणां कृत्वा दूष्यगृहात् राजा ग्राहयेत् । इति समानं पूर्वेणेति । एवमादि पूर्वोक्तेन तुल्यम् । तच्च तमिमं देवीकामुकत्वदोषं ख्यापयन् दूष्यान् घातयेत् इत्येवंरूपम् । श्रीमूला.

**दूष्यमहामात्रं वा 'सूदो भक्षकारो वा ते शोभनः' इति स्तवेन भक्षभोज्यं याचेत, बहिर्वा क्वचिदध्वगतः पानीयम् । तदुभयं रसेन योजयित्वा प्रतिस्वादने तावेवोपयोजयेत् । तदभिविख्याप्य रसदाविति घातयेत् ॥**

प्रकारमन्यमाह— दूष्यमहामात्रमित्यादि । शोभनः सुष्ठुकारी । याचेत राजा । बहिर्वा मृगयाप्रदेशो वा । तदुभयं रसेन योजयित्वा महामात्रदत्तं भक्ष्यभोज्यं विषेण योजयित्वा पानीयं च विषेण योजयित्वा । प्रतिस्वादने अग्रग्रसने । तावेव भक्ष्यभोज्यदायिनं पानीयदायिनं च । रसदौ अर्थात् भक्ष्यभोज्यदापकः पानीयदापकश्चेत्येतौ । श्रीमूला.

**अभिचारशीलं वा सिद्धव्यञ्जनो गोधाकूर्मकर्कटककूटानां लक्षण्यानामन्यतमप्राशनेन मनोरथानवाप्स्यसीति ग्राहयेत् । प्रतिपन्नं कर्मणि रसेन लोहमुसलैर्वा घातयेत्कर्मव्यापदा हत इति ॥**

अभिचारशीलदूष्यनिग्रहोपायमाह— अभिचारशीलं वेत्यादि । तथाविधं दूष्यं सिद्धव्यञ्जनः गोधाकूर्मकर्कटककूटानाम्, गोधा निहाका, कूर्मकर्कटौ प्रसिद्धौ, कूटः भग्नशृङ्गमृगः, इत्येतेषां लक्षण्यानां लक्षणयुक्तानां अन्यतमप्राशनेन अन्यतमस्य श्मशानाग्निहुतावशिष्टस्य भक्षणेन मनोरथान् अवाप्स्यसि इति ग्राहयेत् बोधयेत् । प्रतिपन्नं तथेति कृताभ्युपगमं कर्मणि तथाविधहोमे वर्तमाने रसेन विषप्राशनेन लोहमुसलैर्वा घातयेत् कर्मव्यापदा हत इति कर्मवैगुण्येन पिशाचादिना हत इति ख्यापयन् । श्रीमूला.

**चिकित्सकव्यञ्जनो वा दौरात्मिकमसाध्यं वा व्याधिं दूष्यस्य स्थापयित्वा भैषज्याहारयोगेषु रसेनातिसंदध्यात् ॥**

दौरात्मिकं दुर्वृत्तकृतं असाध्यं अप्रतिकार्यं वा व्याधिं दूष्यस्य स्थापयित्वा भैषज्याहारयोगेषु औषधाभ्यवहारप्रयोगेषु रसेन विषेण अतिसंदध्यात् मारयेत् । श्रीमूला.

**सूदारालिकव्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसंदध्युः । इत्युपनिषत्प्रतिषेधः ॥**

सूदः मांसपाचकः, आरालिकः तण्डुलादिपाचकः, तद्व्यञ्जनाः प्रणिहिताः दूष्यं रसेन अतिसंदध्युः । इत्युपनिषत्प्रतिषेध इति । एवंप्रकार उपनिषदुक्तो दूष्यनिग्रहः । श्रीमूला.

**उभयदूष्यप्रतिषेधस्तु । यत्र दूष्यः प्रतिषेद्धव्यस्तत्र दूष्यमेव फल्गुबलतीक्ष्णयुक्तं प्रेषयेत् — 'गच्छामुष्मिन् दुर्गे राष्ट्रे वा सैन्यमुत्थापय हिरण्यं वा, वल्लभाद्वा हिरण्यमाहारय, वल्लभकन्यां वा प्रसह्याऽऽनय, दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मणामन्यतमं वा कारय, राष्ट्रपाल्यमन्तपाल्यं वा । यश्च त्वा प्रतिषेधयेन्न वा ते साहाय्यं दद्यात्स बन्धव्यः स्यात्' इति । तथैवेतरेषां प्रेषयेत्— 'अमुष्याविनयः प्रतिषेद्धव्यः' इति । तमेतेषु कलहस्थानेषु कर्मप्रतिघातेषु वा विवदमानं तीक्ष्णाः शस्त्रं पातयित्वा प्रच्छन्नं हन्युः । तेन दोषेणेतरे नियन्तव्याः ॥**

उभयोर्दूष्यपक्षयोर्निग्रह एकेन यत्नेन यथा सिध्येत् तथा कश्चित् प्रकार उच्यत इत्यर्थः । यत्रेति । यस्मिन् प्रदेशे दूष्यः प्रतिषेद्धव्यः निग्राह्यः, वसतीति शेषः, तत्र दूष्यमेवान्यं फल्गुबलतीक्ष्णयुक्तं अल्पसैन्येन तीक्ष्णेन च युक्तं प्रेषयेत् । किं कृत्वेत्याह— गच्छामुष्मिन्नित्यादि । इतीत्यनन्तरं उक्त्वेति शेषः । सैन्यमुत्थापय सेनासमवाययोग्यं जनं संगृह्णीष्व । वल्लभात् अध्यक्षात् । दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मणाम्, दुर्गसेतुवणिक्पथकर्माणि प्रतीतानि, शून्यनिवेशकर्म जाङ्गले नवगृहादिसंनिवेशनकर्म, खनिकर्म आकरकर्म, द्रव्यवनकर्म दार्वादिवनकर्म, हस्तिवनकर्म हस्तिवनाध्यक्षकर्म । तेषाम् । राष्ट्रपाल्यं राष्ट्रपालकर्म । अन्तपाल्यं अन्तपालकर्म । आन्तपाल्यमिति पठितुं युक्तम् । बन्धव्यः बद्ध्वा नेतव्यः । तथैवेतरेषां प्रेषयेदित्यादि । पूर्वोक्तो यत्र प्रेष्यते तत्रत्यानामपि 'अमुष्य प्रेष्यमाणस्योन्मर्यादाः प्रवृत्तयो वार्यन्ताम्' इति वाचिकं धैर्यप्रदं प्रेषयेत् । तमेतेष्वित्यादि । एतेषु सैन्यहिरण्योत्थापनादिषु कलहकारणेषु संदिष्टदूष्यपुरुषारब्धेषु कर्मविघ्नेषु वा विसंवादिनं पूर्वदूष्यं तीक्ष्णाः शस्त्रप्रयोगेण रहसि हन्युः । तं च नियुक्तराजपुरुषघातापराधं संदिष्टदूष्येष्वारोप्य तेऽपि हन्तव्याः । श्रीमूला.

**पुराणां ग्रामाणां कुलानां वा दूष्याणां सीमाक्षेत्रखलवेश्ममर्यादासु द्रव्योपकरणसस्यवाहनहिंसासु**

**प्रेक्षाकृत्योत्सवेषु वा समुत्पन्ने कलहे तीक्ष्णै-रुत्पादिते वा तीक्ष्णाः शस्त्रं पातयित्वा ब्रूयुः— 'एवं क्रियन्ते येऽमुना कलहायन्ते' इति। तेन दोषेणेतरे नियन्तव्याः ॥**

पुरग्रामकुलानां दूष्याणां च पुरादिसंधिक्षेत्रखलवेश्मसीमाविषये हिरण्यवस्त्रसस्ययानोपघातविषये नृत्तदर्शनविवाहाद्युत्सवसंबद्धे च कलहे संजाते तीक्ष्णनिष्पादिते वा तथाविधे कलहे तीक्ष्णाः प्रच्छन्नं कांश्चित् दूष्यान् शस्त्रेण हत्वा तदन्येषु दूष्येषु तं घातदोषं नामनिर्देशपूर्वमारोपयेयुः -'अमुनाऽमुना सह कलहायमानानां गतिरीदृशी' इति प्रवदन्तः। तद्दोषापदेशेन च तान् दूष्यान् राजा दण्डयेत्। श्रीमूला.

**येषां वा दूष्याणां जातमूलाः कलहास्तेषां क्षेत्रखलवेश्मान्यादीपयित्वा बन्धुसंबन्धिषु वाहनेषु वा तीक्ष्णाः शस्त्रं पातयित्वा तथैव ब्रूयुः— 'अमुना प्रयुक्ताः स्मः' इति। तेन दोषेणेतरे नियन्तव्याः ॥**

कलहमूलभूतानां दूष्याणां क्षेत्रखलवेश्मानि तीक्ष्णा वह्निना संदीप्य बन्धून् संबन्धिनो वाहनानि वा शस्त्रेण हत्वा प्रागुक्तरीत्या तं दोषमन्येषु दूष्येषु नामनिर्देशपूर्वमारोपयेयुः— 'अमुनाऽमुना सह कलहायमानानां गतिरीदृशी, वयं ह्यमुनाऽमुना प्रयुक्ता एवमकार्ष्म' इति। तद्दोषापदेशेन च तान् दूष्यान् राजा दण्डयेत्। तीक्ष्णदण्डस्तु 'तीक्ष्णस्थाने चान्ये वध्याः' इत्युक्तदिशाऽर्थात् सिद्ध इत्यत्र नोक्तः। श्रीमूला.

**दुर्गराष्ट्रदूष्यान् वा सत्त्रिणः परस्परस्याऽऽवेशनिकान् कारयेयुः। तत्र रसदा रसं दद्युः। तेन दोषेणेतरे नियन्तव्याः ॥**

दुर्गराष्ट्रवास्तव्यान् परस्परवैरिणो दूष्यान् संधिकरणेन परस्परं संगमय्य सत्त्रिपुरुषाः परस्परगृहातिथीन् कारयेयुः। भोजनप्रसङ्गे च विषं दापयित्वा दूष्यान् घातयेयुः। घातितानां प्रतिपक्षांस्तु दूष्यांस्तेनैव रसदानदोषेण राजा नियमयेत्। श्रीमूला.

**भिक्षुकी वा दूष्यराष्ट्रमुख्यं दूष्यराष्ट्रमुख्यस्य भार्या स्नुषा दुहिता वा कामयत इत्युपजपेत्। प्रतिपन्नस्याऽऽभरणमादाय स्वामिने दर्शयेत्— 'असौ ते मुख्यो यौवनोत्सिक्तो भार्यां स्नुषां दुहितरं वाऽभिमन्यते' इति। तयोः कलहो रात्राविति समानम् ॥**

भिक्षुकी दूष्यराष्ट्रमुख्यं दूष्यराष्ट्रमुख्यस्यान्यस्य भार्या स्नुषा दुहिता वा कामयत इति उपजपेत् मिथ्याबोधनं कुर्यात्। प्रतिपन्नस्य अङ्गीकृततदुपजापस्य दूष्यस्य आभरणं अभिगन्तव्यस्त्रीसत्कारार्थत्वापदेशेन गृहीत्वा स्त्रीसंबन्धिने दूष्यराष्ट्रमुख्याय दर्शयेत् 'अमुकनामा मुख्यो यौवनदृप्तस्त्वदीयां कामयते' इति वदन्ती। ततो रात्रौ तया स्त्रीगृहमानीते कामुके तस्य स्त्रीबन्धोश्च कलहः प्रवर्त्येत। कामुके च हते तेनापराधेन कामुकघातकं दूष्यं हन्यात्। श्रीमूला.

**दूष्यदण्डोपनतेषु तु युवराजः सेनापतिर्वा किंचिदपकृत्यापक्रान्तो विक्रमेत। ततो राजा दूष्यदण्डोपनतानेव प्रेषयेत्फल्गुबलतीक्ष्णयुक्तानिति समानाः सर्व एव योगाः। तेषां च पुत्रेष्वनुक्षिपत्सु यो निर्विकारः स पितृदायं लभेत। एवमस्य पुत्रपौत्राननुवर्तते राज्यमपास्तपुरुषदोषमिति ॥**

दण्डोपनताः बलतोऽधःकृताः दण्डोपनतवृत्तप्रकरणवक्ष्यमाणचरिताः, तेषु दूष्यभूतेषु विषये युवराजः सेनापतिर्वा किंचिदपकृत्य तज्जनपदोपघातमल्पं कृत्वा अपक्रान्तो विक्रमेत अनत्याक्रामन् विक्रमं दर्शयेत्। ततः तदनु राजा दूष्यदण्डोपनतानेव अन्यान् फल्गुबलतीक्ष्णयुक्तान् प्रेषयेत्। अर्थात् दूष्यैः सह संवित्करणार्थम्। इति सर्व एव योगाः एवंप्रायाः सर्वेऽभ्युपायाः समानाः पूर्वोक्ततुल्याः। संविन्निमित्तकलहप्रवर्तना, तीक्ष्णैर्दूष्याणां राजप्रेषितानां प्रच्छन्नवधः, तस्य संधेयदूष्यकृतत्वख्यापनम्, तेन निमित्तेन तेषां निग्रहणम्, इत्येवंजातीयमूहनीयमित्यभिप्रायः। तेषां चेति। तथा मारितानां दूष्याणां पुत्रेषु अनुक्षिपत्सु निन्दत्सु

मध्ये यो निर्विकारः द्रोहचिन्तनरहितः सः पितृदायं लभेत अर्थात् दूष्योद्धृतं्तद्राज्यप्रभविष्णुतां प्राप्तस्य राज्ञ इच्छया । न केवलं पुत्रः, तत्पुत्रपौत्रपरंपराऽपि निर्विकारतायामेव राज्यं लभेतेत्याह– एवमस्येत्यादि । अपास्तपुरुषदोषमिति क्रियाविशेषणम् । पुरुषदोषः पुरुषस्य सविकारत्वम् । तद्योगे तु राज्यं स्ववशे स्थापयेत् प्रभविष्णुरित्यर्थः । इतिशब्दः प्रकरणसमाप्तौ ।
श्रीमूला.

स्वपक्षे परपक्षे वा तूष्णींदण्डं प्रयोजयेत् ।
आयत्यां च तदात्वे च क्षमावानविशङ्कितः ॥

अध्यायान्ते श्लोकमाह– स्वपक्षे परपक्षे वेत्यादि । सुगमम् ।
श्रीमूला.

शत्रुकर्शने तज्जनपदाय अभयदानम्

[1]जनपदं यथानिविष्टमभये स्थापयेत् । उत्थितमनुग्रहपरिहाराभ्यां निवेशयेदन्यत्रापसरतः । समग्रमन्यस्यां भूमौ निवेशयेदेकस्यां वा वासयेत् । न ह्यजनो जनपदो राज्यमजनपदं वा भवतीति कौटल्यः ॥

कर्शने च शत्रोः क्रियमाणे जनपदो न पीडनीयः, किंतु रक्षणीय इति वक्तुमाह– जनपदमित्यादि । तं यथानिविष्टं यथापरनिवेशितरूपं अभये स्थापयेत् । अभयमित्यपि पाठः । उत्थितमिति । कृष्यादिप्रयासोद्यतं जनं अनुग्रहपरिहाराभ्यां धनदानकरमोक्षणाभ्यां निवेशयेत् । अपसरतोऽन्यत्र अपसरन्तं वर्जयित्वा । अपसरतोऽनुग्रहपरिहारौ न कार्यावित्यर्थः । समग्रमिति । अधिकं अन्यस्यां भिन्नभिन्नायां भूमौ निवेशयेत्, एकस्यां वा वासयेत् । 'एकस्थं वा' इत्यपि पाठः । किमर्थं जनस्थापनादिकं तात्पर्येणोपदिश्यते ? तत्राऽऽह– न ह्यजनो जनपद इत्यादि । जनरहितस्य जनपदव्यपदेशाभावात् जनपदरहितस्य राज्यव्यपदेशाभावाच्च जनस्थापनादिकमावश्यकमित्यर्थः ।
श्रीमूला.

(१) कौ. १३।४.

## चाणक्यसूत्राणि

अनुपद्रवं साधुजनबहुलं राष्ट्रं राज्ञा अधिष्ठेयम्

[1]अर्थस्य मूलं राज्यम् ॥
[2]अलब्धलाभादिचतुष्टयं राज्यतन्त्रम् ॥
राज्यतन्त्रायत्तं नीतिशास्त्रम् ॥
राज्यतन्त्रेष्वायत्तौ तन्त्रावापौ ॥
[3]अनुपद्रवं देशमावसेत् ॥
साधुजनबहुलो देशः ॥
[4]अप्रयत्नोदकं क्षेत्रम् ॥
[5]यत्र सुखेन वर्तते तदेव स्थानम् ॥
[6]चोरराजपुरुषेभ्यो वित्तं रक्षेत् ॥
दुर्दर्शना हि राजानः प्रजा नाशयन्ति ॥
सुदर्शना हि राजानः प्रजा रञ्जयन्ति ॥
न्याययुक्तं राजानं मातरं मन्यन्ते प्रजाः ॥
तादृशः स राजा इह सुखं ततः स्वर्गमाप्नोति ॥
[7]चोरांश्च कण्टकांश्च सततं विनाशयेत् ॥

## मनुः

साधुरक्षणमसाधुनिग्रहणं च राजकर्तव्यम्

[8]यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥

( १ ) ये राजानमभिद्रुह्यन्ति तेषां ये सुहृद्बान्धवाः संबन्धोपसर्पिणो वा न ते विनाशयितव्याः यदि न तत्कार्याभ्यन्तराः । य एव दुष्टास्त एव निग्राह्याः, न तत्संबन्धिनः इत्येतन्निर्दातृदृष्टान्तेन प्रतिपाद्यते । यथा

(१) चासू. ३.
(२) चासू. ४२–४४.
(३) चासू. ३६९–३७०.
(४) चासू. ४५१.
(५) चासू. ५२२.
(६) चासू. ५५६–५६०.
(७) चासू. ५६० इत्यस्यानन्तरं प्रक्षिप्तम्.
(८) मस्मृ. ७।११०; राक. ८३ बृहस्पतिः; रार. ६०; राप्र. २५३.

धान्यकक्षयोः सहोत्पन्नयोरत्यन्तसहितयोरपि नैपुण्येन धान्यं रक्षति कक्षमुद्धरति, एवं स्वराष्ट्रे यौ अत्यन्तसुहृदावपि तयोर्दोषवान्यः स एव निग्राह्यः, न यः सुसंगतोऽपि। अतः साध्वसाधुविवेकेन साधवो रक्ष्याः असाधवो निग्राह्याः। * मेधा.

(२) निर्दाता तृणच्छेत्ता। कक्षं तृणादि धान्यमध्यगतम्। उद्धरेत् उत्पाटयेत्। राष्ट्रं स्वराष्ट्रम्। परिपन्थिनः चौरादीन्। + मवि.

(३) अत्र दृष्टान्तमाह– यथेति। निर्दाता भूमेः खण्डयिता कुद्दालादिभिः, कृषीवल इति यावत्। परिपन्थिनः असाधून्। नन्द.

स्वराष्ट्रकर्षणे राजनाशः

**[1]मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया।**
**सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः॥**

(१) यस्तु राजा पूर्वोक्तविवेकमकृत्वा मोहेन अनवेक्षया स्वराष्ट्रं कर्शयति स दण्डैः सह (? दण्डैः स बान्धवैः सह) भ्रश्यति अचिरात् राज्यात् जनपदाननुरागेण प्रकृतिकोपेन जीविताच्च। साहसिकैरेकाकिभिरपि जीवितनिरपेक्षैर्हन्यते। मेधा.

(२) यो राजा हिताहिताविवेकेन प्रजाः पीडयति स क्षिप्रं प्रकृतिकोपादिना अधर्मभूयस्त्वेन राज्याज्जीविताच्च बन्धुसहितो नश्यत्यचिरात्। × गोरा.

(३) कर्शयति चौराद्युपघातैः क्षीणं करोति। मवि.

(४) यो राजा अनवेक्षया दुष्टशिष्टाज्ञानेन सर्वानेव स्वराष्ट्रीयजनानशास्त्रीयधनग्रहणमारणादिकष्टेन पीडयति स शीघ्रमेव जनपदवैराग्यप्रकृतिकोपाधर्मैः राजा राज्याज्जीविताच्च पुत्रादिसहितो भ्रश्यते। ममु.

(५) दण्डे क्रियमाणेऽपि राज्यं यथा न नश्यति तथा वर्तितव्यम्, अन्यथा सदृष्टान्तं दोषमाह– मोहादिति द्वाभ्याम्। कर्षयति लोभेनाधिकदण्डादिना पीडयति, ततः अनवेक्षया शास्त्रमर्यादोल्लङ्घनेन न केवलं राज्यात् भ्रश्यते, स्वयं भ्रष्टोऽपि तु जीवितात् आयुषः, नङ्क्ष्यतीत्यध्याहार्यम्। मच.

**[2]शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा।**
**तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्॥**

(१) स्वराष्ट्रेऽत्यन्तमवहितेनानुराग उत्पादनीयः। तद्धि शरीरस्थानीयम्। शरीरे कर्शितेऽपथ्यभोजनरूक्षभोजनादिभिर्यथा प्राणा उत्क्रामन्ति एवं राष्ट्रकर्शनादपि। * मेधा.

(२) यथा प्राणभृतां दीर्घाध्वगमनादिना प्राणाः क्षीयन्ते एव तथा राज्ञामपि राष्ट्रोपपीडनात् प्रकृतिकोपे सति प्राणा विनाशमुपयान्ति। + गोरा.

(३) तस्मात् स्वशरीरवत् राज्ञा राष्ट्रं रक्षणीयमित्युक्तम्। ¶ ममु.

राष्ट्रसंग्रहविधिः

**[1]राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत्।**
**सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते॥**

(१) संग्रहः रक्षाविधानम् (?)। सुसंगृहीतं रक्षाविधानेन वशीकृतं परिपालितं वा येन स्वराष्ट्रं स पार्थिवः सुखमेधते। × मेधा.

---

* गोरा., राक., ममु., मच., भाच. मेधागतम्।
+ रार., राप्र. मविगतम्।
× भाच. गोरागतं मविगतं च।

(१) मस्मृ. ७।१११; मेधा. कर्ष (कर्श); राक. ८३ राज्या (स्वाम्या); मवि. मेधावत्; रार. ६०; पमा. ४०९; राप्र. २५४ राकवत्; भाच. मेधावत्.

* मवि. मेधागतम्।
+ मच. गोरागतम्।
¶ शेषं गोरावत्।
× राप्र. मेधागतं मविगतं च।

(१) मस्मृ. ७।११२; मेधा. कर्षणा (कर्शना); गोरा. मेधावत्; राक. ८३; मवि. मेधावत्; रार. ६०; पमा. ४०९; राप्र. २५४.

(२) मस्मृ. ७।११३; गोरा. ७।५६ निर्देशमात्रम्; राक. ७९ राष्ट्रो (राष्ट्रे); ममु. ७।५६ गोरावत्; रार. ८ सुसं (स्वयं); राप्र. २४८.

( २ ) एवं चैतद्दोषपरिजिहीर्षयाऽऽह– राष्ट्रस्येति। राष्ट्रसंरक्षणे सर्वदा वक्ष्यमाणमुपायं कुर्यात्। यस्मात् सुसंरक्षितराष्ट्रो राजा अयत्नेन वर्धते। $ गोरा.

( ३ ) संग्रहे आत्मीयताकरणे। § मवि.

( ४ ) अतो राज्यरक्षणे यत्न आस्थेय इत्याह– राष्ट्रस्येति। राष्ट्रस्य स्वराष्ट्रस्य, प्रतियोग्यनपेक्षाश्रवणात्। इदमिति षड्भिः वक्ष्यमाणम्। सुसंगृहीतः ग्रामाध्यक्षादिना राष्ट्रो यस्य सः। † मच.

**'द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम्।**
**तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम्॥**

( १ ) द्वयोर्ग्रामयोर्मध्ये गुल्मं कुर्यात्। गुल्मः रक्षितृसमूहः। तेनैवाधिष्ठितं संग्रहं कुर्यात् तद्युक्तमधिष्ठातारं पुरुषं कुर्यात्। अधिकारिसंग्रह इहोच्यते। एवं त्रयाणां पञ्चानां च। अथवा राजभाव्यार्थग्रहणस्थानं संग्रहः। ※ मेधा.

(२) द्वयोर्ग्रामयोर्मध्ये त्रयाणां पञ्चानां बहूनां वा ग्रामशतानां देशकालाद्यपेक्षया आप्तपुरुषाधिष्ठितं राष्ट्रस्य संग्रहं रक्षाभूतं स्थानकं कुर्यात् ग्रामदोषाद्यवबोधार्थं करादिग्रहणार्थं च। + गोरा.

(३) द्वयोर्ग्रामयोरेकम्, अपरं त्रयाणाम्, अन्यत् पञ्चानां ग्रामाणाम्, अन्यत् ग्रामशतस्य, इति पूर्वपूर्वमुत्तरोत्तराशक्ये रक्ष्यस्य स्थानस्य रक्षकं गुल्मं स्तेनादिरक्षार्थं स्थापितं पदात्यादि। अधिष्ठितमिति। तदपि केनचिदधिष्ठितं कार्यमित्यर्थः। ग्रामशतानामिति। शतस्य पञ्चशतस्य सहस्रस्य चेति बहुवचनार्थः। एवं राष्ट्रस्य संग्रहं कुर्यादित्युपसंहारः। ¶ मवि.

( ४ ) अस्य लाघवगौरवाद्यपेक्षश्चोक्तविकल्पः। † ममु.

( ५) द्वयोरित्यादि दस्युलाघवगौरवापेक्षया विकल्पः। तत्फलं दस्युनिग्रहः। † मच.

( ६ ) द्वयोर्ग्रामशतयोः त्रयाणां पञ्चानां वा ग्रामशतानां मध्ये गुल्मं पदात्यादिसमूहं अवस्थितं कुर्यात् स्थापयेत्। 'राष्ट्रस्य संग्रहम्' इति पाठे संग्रहं रक्षास्थानं गुल्मं गुल्मसहितं अवस्थितं सत्यशीलपुरुषाधिष्ठितम्। § राप्र. २४८

( ७ ) व्यूढं सैन्यं गुल्मम्। † नन्द.

**'ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा।**
**विंशतीशं शतेशं च सहस्रपतिमेव च॥**

( १ ) एकैकस्मिन् ग्रामेऽधिपतिं कुर्यात्। तदुपरि दशग्रामपतिम्। एवं सर्वत्र। × मेधा.

( २ ) ग्रामस्याधिपतिं करग्रहाद्यर्थम्। ‡ मवि.

( ३ ) एकस्य दशानां विंशतेः शतस्य सहस्रस्य वा ग्रामाधिपतिमेकं कुर्यात्। लाघवगौरवापेक्ष उक्तविकल्पः। रार. ६०

( ४ ) ग्रामादीनां गुणदोषज्ञानप्रकारमाह– ग्रामस्येति त्रिभिः। विंशतीशं ग्रामाणां विंशतेः ईशं ईश्वरम्। एवमुत्तरत्र। + मच.

---

※ ममु. गोरावत्।
§ भाच. मविगतम्।
† नन्द. मचगतम्।
※ राक. मेधागतम्।
+ रार. गोरागतम्।

(१) मस्मृ. ७।११४; राक. ७९ मधिष्ठितम् (मवस्थितम्) संग्रहम् (गुप्तये); रार. ६० मधि (प्रति); राप्र. २४८ राकवत्, 'संग्रहम्' इत्यपि पाठः; नन्द. संग्रहम् (गुप्तये).

¶ भाच. मविगतम्।
† शेषं गोरागतम्।
§ शेषं मचगतम्।
× गोरा., ममु. मेधागतम्।
‡ भाच. मविगतं मचगतं च।
+ नन्द. मचगतम्।

(१) मस्मृ. ७।११५; राक. ७९ ग्रामपतिं (ग्रामाधिपं); रार. ६०; राप्र. २४८ राकवत्.

[1]ग्रामदोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम् ।
शंसेद्ग्रामदशेशाय दशेशो विंशतीशिने ॥

[2]विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ।
शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥

(१) ये ग्रामदोषाः एकग्रामाधिकृतेन न शक्यन्ते समाधातुं तान् दशेशाय निवेदयेत् । एवमशक्तौ यावत् सहस्रपतिः विज्ञाप्यः । * मेधा.

(२) दोषान् तद्ग्रामीयजनविद्रवादीन् । अत्र विंशतीशमित्यादि यावति रक्षिते ग्रामाणां रक्षा भवति तन्मात्रपरम् । विंशतिग्रामानीशितुं शीलमस्य विंशतीशी । तत् सर्वं दोषजातम् । मवि.

(३) ग्रामाधिपतिः चौरादिदोषान् ग्रामे संजातान् आत्मना प्रतिकर्तुमक्षमोऽनुत्कृष्टतया स्वयं दशग्रामाधिपतये कथयेत् । एवं दशग्रामा( द्य )धिपतयो विंशतिग्रामस्वाम्यादिभ्यः कथयेयुः । तथा च सति सम्यक् चौरादिकण्टकोद्धारो भवति । × ममु.

(४) शनकैरित्यनेन न हठात् । तेन स्वस्मिन्नपि दोषाशङ्का वारिता । स्वयमित्यनेनोद्धत्यं भेदकत्वं च निरस्तम् । तेन स्वयं गत्वा शंसेत् कथयेत् ग्रामदशेशायेत्यन्वयः । † मच.

(५) शनकैः अत्वरया याथातथ्यं निरूप्य । + नन्द.

---

* गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम्, तत् मेधागतं ममुगतं च । रार. मेधागतम् ।

× भाच. ममुगतम् ।

† शेषं मविगतम् ।

+ शेषं मविगतं मचगतं च ।

(१) मस्मृ. ७।११६; राक. ८०; रार. ६० ग्रामदो ( ग्रामे दो ); राप्र. २५०.

(२) मस्मृ. ७।११७; राक. ८०; रार. ६०; राप्र. २५०.

[1]यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ।
अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥

(१) एकग्रामाधिकृतस्य वृत्तिरियम् । ग्रामिकः ग्रामाधिकृतः तानि अवाप्नुयात् गृह्णीयात् (यानि) वृत्त्यर्थं राज्ञे प्रदातव्यानि ग्रामवासिभिः । अन्नादीनि तु धान्यादेः षष्ठाष्टमभागादिः । यथा वक्ष्यति– 'धान्येऽष्टमं विशाम्' (मस्मृ. १०।१२०) इत्यादि । * मेधा.

(२) राजप्रदेयानि एतावदत्र प्रत्यहं राजाधिकृतपुरुषाय भक्तार्थं देयमिति प्रागेव नियमितानि । आदिपदात्तैलादीनि । ग्रामिकः ग्रामाधिपतिः । × मवि.

(३) यान्यन्नपानेन्धनादीनि ग्रामवासिभिः प्रत्यहं राज्ञे देयानि, न त्वब्दकरं 'धान्यानामष्टमो भागः' (मस्मृ. ७।१३०) इत्यादिकम् । तानि ग्रामाधिपतिः वृत्त्यर्थं गृह्णीयात् । + ममु.

(४) किंच, प्रजाभी राज्ञे देयद्रव्यग्रहीतॄनाह– यानीति द्वाभ्याम् । इन्धनं काष्ठं पानं मध्वादि अवाप्नुयात् । ग्रामिकः एकग्रामाध्यक्षः । एकग्रामाध्यक्षस्येन्धनादीन्येव जीविका । मच.

(५) एतेषां वृत्तिमाह– यानीति । यानि राज्ञे प्रदेयानि अन्नादीनि तानि वृत्त्यर्थं ग्रामाधिपतिः गृह्णीयात्, न त्वाब्दिकं करम् । आब्दिकं तु करमासद्वारा राजैव गृह्णीयात् । तदुक्तं विष्णुधर्मोत्तरे– 'सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद् बलिम्' ( विध. २।६५।४९ ) इति । राप्र. २५०–२५१

(६) ग्रामाध्यक्षादीनां वृत्तिनियमं श्लोकद्वयेनाऽऽह– यानीति । अन्नपानेन्धनादिग्रहणेन पशुधान्यहिरण्यादीनां निषेधः । नन्द.

---

* गोरा., रार. मेधागतम् ।

× भाच. मविगतम् ।

+ शेषं मेधागतम् । राप्र. ममुगतम् ।

(१) मस्मृ. ७।११८; राक. ८०–८१; रार. ६१; राप्र. २५०.

'दशी कुलं तु भुञ्जीत विंशी पञ्च कुलानि च ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥

(१) दशसु ग्रामेष्वधिकृतो दशी । एवं विंशी । छान्दसः शब्दसंस्कारः । कुलं ग्रामैकदेशः क्वचित् हट्ट इति प्रसिद्धः क्वचिदुष्ट इति । एतदेव पञ्चगुणं विंशतिग्रामेष्वधिकृतः । सर्वं ग्रामशताध्यक्षः । पुरं नगरं सहस्रेशः । स्थानकर्मानुरूपेण वृत्तिं कल्पेतेत्येतत् सत्यम् । * मेधा.

(२) 'अष्टगवं धर्महलं षड्गवं जीविकार्थिनाम् । चतुर्गवं गृहस्थानां द्विगवं ब्रह्मघातिनाम् ॥' इति हारीतः । षड्गवं मध्यमं हलम्, तद्द्विगुणं कुलं मन्यन्ते । तेन मध्यमेन हलद्वयेन यावती भूर्वाह्यते तत्फलं दशाधिपतिः भृत्यर्थं भुञ्जीत । एवं विंशत्यधिपतिः पञ्च कुलानि, शताधिपतिः मध्यमं ग्रामम्, सहस्राधिपतिः मध्यमं पुरम् । † गोरा.

(३) कुलं ग्रामैकदेशः + पाटकाख्यः । राक. ८१

(४) 'हलं तु द्विगुणं कुलम्' इति वचनात् द्वाभ्यां हलाभ्यां या कृष्यते भूः तां भुञ्जीतेत्यर्थः । धर्महलं ग्राह्यं गृहस्थहलं वा । × मवि.

(५) '······ त्रिगवं ब्रह्मघातिनाम् ॥' । × ममु.

(६) ग्रामं मध्यमम् । तत्र ग्रामो भृगुप्रोक्तः— 'विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति ते । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च ॥' इति । पुरं राजधानीयोग्यं प्राकारशिल्पिवणिग्जनहट्टादियुक्तम् । $ मच.

* रार. मेधागतम् ।

† राप्र., भाच. गोरागतम् ।

+ राप्र. २५१ इत्यत्र कल्पतरोरनुवादे तु 'पादुकाख्यः' इति पाठः ।

× शेषं गोरावत् ।  $ शेषं गोरागतम् ।

(१) मस्मृ. ७।११९; राक. ८१; रार. ६१ कुलं (हलं) कुलानि (हलानि); राप्र. २५१.

(७) दशी दशग्रामाधिपतिः । कुलं गृहं एककृषीबलभागमित्यर्थः । ग्रामं कुलशतयुक्तम् । यथाऽऽह कौटिल्यः— 'कुलशतावरं पञ्चशतकुलावरं ग्रामं निवेशयेत्' (कौ. २।१) इति । नन्द.

'तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ।
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥

(१) तेषां ग्रामकार्येष्वितरेतरं विप्रतिपत्तिः । अन्यः स्वकार्ये(?) अन्यः सचिवः महत्तमः स्निग्धः रागद्वेषवर्जितः दर्शनाय नियोक्तव्यः । मेधा.

(२) एवं ग्रामाधिपतिप्रभृतीनां यानि ग्रामनिवासकार्याणि तदशक्यप्रतिसंधानानि, यानि च तेषां संबन्धीनि कृताकृतानि वाऽन्यान्यपि, राज्ञा नियुक्तः अनलसः भूत्वाऽवेक्षेत । गोरा.

(३) ग्राम्याणि ग्रामसंबन्धीनि कृत्यानि संकरादिविषयाणि । पृथक्कार्याणि अन्योन्यकलहादीनि । * मवि.

(४) तेषां ग्रामनिवासिप्रभृतीनां परस्परविप्रतिपत्तौ । ¶ ममु.

(५) अन्यः उक्तेभ्यः । स्निग्धः, पार्थिवे इति शेषः । यथा राज्ञः पापं न जायते तथा हितैषी । अतन्द्रितः राजभीतेः । ¶ मच.

(६) पृथक्कायानीति क्वचित् पाठः । तदा विप्रतिपन्नानीत्यर्थः । $ राप्र. २४९

'नगरे नगरे चैकं कुर्यात्सर्वार्थचिन्तकम् ।
उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥

* नन्द., भाच. मविगतम् ।

¶ शेषं गोरागतम् ।

$ शेषं मविगतम् ।

(१) मस्मृ. ७।१२०; राक. ८०; मवि. कार्याणि पृ (कृत्यानि पृ); रार. ६१ तन्द्रितः (तन्त्रितः); राप्र. २४९ 'पृथक्कार्याणि' इत्यत्र 'पृथक्कायानि' इत्यपि पाठान्तरम्.

(२) मस्मृ. ७।१२१; राक. ८० चैकं (चैव); रार. ६१; राप्र. २४९–२५०; भाच. चिन्तकम् (साधकम्).

(१) उच्चैःस्थानं प्रधानभूतमित्यर्थः, घोररूपं प्रतापवन्तं नक्षत्राणामिव ग्रहं अङ्गारकं हस्त्यश्वादिबलसंपन्नम्। मेधा.

(२) प्रतिनगरं एकैकं उच्चैःस्थानं महाकुलीनं घोररूपं छत्रालंकारहस्त्यश्वादिबलसामग्र्या भयानकाकारं मध्ये ग्रहमिव भास्कराकारं नगराधिपतिं कुर्यात्। गोरा.

(३) उच्चैःस्थानं तेभ्योऽधिकगृहपरिच्छदसंमानादिकम्। घोररूपं दण्डप्रणयनशक्तवेषधरम्। ग्रहं सोमम्। * मवि.

(४) नक्षत्रादिमध्ये भार्गवादिग्रहमिव तेजस्विनं कार्यद्रष्टारं नगराधिपतिं कुर्यात्। † ममु.

(५) नैतावता राज्ञः कृतकृत्यतेत्याह– नगर इति द्वाभ्याम्। सर्वार्थचिन्तकं हस्त्यश्वप्रजानुवृत्तादिचिन्तनानियुक्तम्। दण्डादौ अकृपालुत्वार्थमाह– घोररूपम्। $ मच.

(६) उच्चैःस्थानं कुलादिना महान्तम्, अथवा अत्युच्चोपवेशनस्थलम्। राप्र. २५०

(७) सर्वार्थचिन्तकं सर्वकार्यनिर्णायकम्। उच्चैःस्थानं महाप्रभावम्। घोररूपं ऐश्वर्यातिशयेन दुर्धर्षम्। नन्द.

**[१]स ताननुपरिक्रामेत्सर्वानेव सदा स्वयम्।**
**तेषां वृत्तं परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः॥**

(१) सः नगराधिकृतः तान् सर्वानपि पतीन् अनुपरिक्रामेत् स्वबलेन पूरयेत् सति प्रयोजने। तेषां सर्वेषामधिपतीनां तत् वृत्तं सम्यक् परिणयेत् सम्यग्रूपतया परिजानीयात्। कैः? राजचरैः कापटिकादिभिः। मेधा.

(२) सः नागरिकः एकग्रामाधिपत्यादीन् बलपूरणाय सति प्रयोजने सर्वदा स्वयं पश्चात् यायात्। तेषां नागरिकपर्यन्तानां राष्ट्रेषु यदाचरितं तद्विषयनियुक्तैः चारैः (यथा?) तत् राजा अवगमयेत् (? अवगच्छेत्)। * गोरा.

(३) अनुपरिक्रामेत् यदाऽन्यायिभिस्ते नियुक्ता अभिभूयन्ते तदा तान् स्वबलेन पूरयेदित्यर्थः। परिणयेत् प्रापयेत्। † राक. ८१

(४) अनुपरिक्रामेत् अनुसंदध्यात्। वृत्तिं चेष्टाम्। परिणयेत् प्रापयेत् राजसमीपम्। तच्चरैः नृपचारैः। मवि.

(५) अनुक्रामेत् अहर्निशं संचरेत्। तच्चरैः तत्र तत्र नगरेषु बहुकालवासिभिः। तैर्हि तत्रत्यानां भद्राभद्रं ज्ञायते। + मच.

(६) सः तान् सर्वान् ग्रामनिवासिनः अनुपरिक्रामेत् अनुसंदध्यात् सर्वोपरि तिष्ठेदित्यर्थः। तेषां ग्रामनिवासिनां वृत्तं तच्चेष्टाम्। तच्चरैः ग्रामचरैः नृपचरैर्वा। भाच.

भृत्येभ्यः प्रजारक्षणम्

**[१]राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः।**
**भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः॥**

(१) परस्वमादातुं शीलं येषां ते परस्वादायिनः शठाः असम्यक्कारिणः प्रायेणाधिकृताः सन्तो भवन्ति। प्राक् शुचयोऽपि रक्षन्ति(? भक्षयन्ति) वित्तानि। अतः प्राक्शुचित्वानुमानेन नोपेक्षणीयाः, यत्नतः प्रतिजागरितव्याः। तेभ्यो रक्षेदिमाः प्रजाः। न केवलं राजार्थनाशः अनवेक्षया, यावत् प्रजा अपि निर्धनीकुर्वन्ति। मेधा.

---

* भाच. मविगतं राप्रगतं च।

† शेषं गोरागतम्।

$ शेषं मेधागतम्।

(१) मस्मृ. ७।१२२; राक. ८० नेव सदा (नायुक्तकान्) वृत्तं (वृत्ते); मवि. वृत्तं (वृत्तिं); राप्र. २५० नेव सदा (नायुक्तकान्).

* ममु. गोरागतम्। नन्द. गोरागतं मविगतं च।

† राप्र. राकानुवादः मविगतं च।

+ शेषं गोरागतम्।

(१) मस्मृ. ७।१२३; राक. ८३ राज्ञो हि (राष्ट्रेषु) बृहस्पतिः; रार. ६१; दीक. १।३३६; राप्र. २५३ राकवत्.

(२) यस्मात् (ये) राज्ञो (भृत्याः ?) रक्षाधिकृताः भृत्याः ते बाहुल्येन परस्वग्रहणशीला वञ्चकाश्च भवन्ति, तस्मात् तेभ्यः आत्मीयाः प्रजा राजा रक्षेत्। * गोरा.

(३) अत्र हेतुमाह— राज्ञो हीति। रक्षेत् नगरे युक्तः। श्लोकाविमौ राजविषयौ वा। नन्द.

¹ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः।
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम्॥

(१) ये रक्षाधिकृताः कार्यिकेभ्यः व्यवहर्तृभ्यः व्यापारवद्भ्यो वा हल्लेशोद्देशिकया(?) दण्डयन्ति जनपदान्, तेषां सर्वस्वहरणप्रवासने राजा कुर्यात्। मेधा.

(२) ये राजाधिकृताः कार्यिकेभ्यः परस्वादायिरूपेण पापबुद्धयः अर्थं गृह्णीयुः तेषां सर्वस्वमपहृत्य देशान्निर्वासनं राजा कुर्यात्। + गोरा.

(३) कार्यार्थिभ्यः वादिप्रभृतिभ्यः उत्कोचरूपेणार्थमेव गृह्णीयुः, न राजकार्यं कुर्युः। † मवि.

भृत्येभ्यः प्रजारक्षणम्

²ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम्।
धनोष्मणा पच्यमानास्तान्निःस्वान् कारयेन्नृपः॥

(१) ये कार्यिणां अर्थिप्रत्यर्थिनां कार्येषु व्यवहारदर्शितादिषु नियुक्ताः अधिकृताः राजस्थानीयप्रभृतयः ते धनोष्मणा पच्यमानाः अन्यतरस्माद्धनं गृहीत्वा कार्याणि नाशयेयुः, तान् निःस्वान् कारयेत् सर्वस्वहरणं तेषां कार्यम्। सत्यानामभ्यासेन (?) वर्तमानानां सत्यपि वक्ष्यमाणदण्डान्तरविधावेष एव दण्डो न्याय्यः। येऽप्यन्ये सेनापतिप्रभृतयः कस्यचित् साहाय्यके नियुज्यन्ते ततश्चार्थं गृहीत्वा नाशयन्ति तेऽप्येवमेव दण्ड्याः।

अन्ये तु 'येऽनियुक्ताः' इत्यकारप्रश्लेषं पठन्ति। ये राजवल्लेख्यात् (? राजवाल्लभ्यात्) बलातिशयाद्वा अन्यस्य साहाय्यं कुर्वन्ति कार्यनाशनार्थं द्वितीयस्य, तेषामयं दण्डः। धनोष्मणेत्यविवक्षितम्। अनियुक्ता इत्येतदेव प्रधानम्। * मेधा.

(२) ये नियुक्ताः प्राड्विवाकाद्याः हन्युः उत्कोचग्रहणजितमप्यजितं कुर्वन्तः। धनोष्मणा पाकः 'किं नो भवति राजा चेज्जानीयात्? दण्डमात्रं ग्रहीष्यति' इति अतिघनतया निर्भयता। निःस्वान् अपहृतसर्वस्वान्। मवि.

(३) ये ये व्यवहारावेक्षणादिषु कार्येषु राज्ञा नियुक्ता उत्कोचधनतेजसा विकारं भजन्तः स्वाम्यादीनां कार्यं नाशयेयुः तान् गृहीतसर्वस्वान् राजा कारयेत्। ममु.

(४) धनोष्मणा धनलिप्साजनितेन संतापेन पच्यमानान् विक्रियमाणान्। † नन्द.

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान्।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा॥

(१) कूटशासनस्य कर्तारो यन्नैव राज्ञाऽऽदिष्टं तद्राजकृतमिति वदन्ति। शासनं राजादेशः। 'एतस्य गृहे न भोक्तव्यम्', 'अस्य चायं प्रसाद आज्ञातः, इयं वा स्थिती राज्ञा कृता', 'इति पत्रकं राजाधिकृतलेखकलिखितम्' इति शासनं राजादेशसंबन्धेन शासनम्। तत्कूटं कुर्वन्ति पालयन्ति। प्रकृतीनां क्रुद्धलुब्धानां दूषकाः भेदकाः। स्त्रीबालयोर्ब्राह्मणस्यापि हन्तारः। द्विट्सेविनः राजशत्रुसेविनः प्रच्छन्नं गतागतिकान्। मेधा.

(२) कूटशासनं मिथ्याराजाज्ञालेखनम्। दूषकान् अन्योन्यभेदकान्। हन्यात् घातयेत्। द्विट्सेविनः स्वयं पुष्टानपि स्वशत्रुसेविनः। मवि.

(३) प्रकृतीनां अमात्यानाम्। ¶ ममु.

---

* मवि., मच. गोरागतम्। ममु. गोरानुवादः।
+ ममु., मच., भाच. गोरागतं मविगतं च।
† नन्द. मविगतम्।

(१) मस्मृ. ७।१२४; रार. ६१ कार्यि (कार्षि) भेव (मेवं).
(२) मस्मृ. ९।२३१–२३२.

* मच. मेधागतं ममुगतं च। भाच. मेधागतम्।
† शेषं मेधागतम्।
¶ शेषं मेधागतम्। नन्द. ममुगतम्।

(४) द्विट्सेविनः स्वपक्षमनुकुर्वन्त एव शत्रुसेविनो ये तानपि। * मच.

(५) उपायान्तरेण रक्षणाशक्तौ हन्यात्। * भाच.

कण्टकशोधनम्, तस्करद्वैविध्यम्

$ [1]सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम्॥
रक्षणादार्यवृत्तानां कण्टकानां च शोधनात्।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः॥
अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते॥
निर्भयं तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम्।
तस्य तद्वर्धते नित्यं सिच्यमान इव द्रुमः॥

¶ [2]द्विविधांस्तस्करान् विद्यात्परद्रव्यापहारकान्।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः॥

चार एव चोरज्ञानहेतुत्वात् चक्षुरिव यस्यासौ राजा चारैरेव प्रकटतया गूढतया (च) द्विप्रकारानन्यायेन परधनग्राहिणो जानीयात्। ममु.

प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥

तेषां पुनश्चौरादीनां मध्यात् ये तुलाप्रतिमानोपचयापचयादिना हिरण्यादिपण्यविक्रयिणः परधनमनुचितेन गृह्णन्ति ते प्रकाशवञ्चकाः, (ये) स्तेनाः चौराः सद्वि(?संधि)च्छेदादिना गुप्ताटव्याश्रयाश्च परधनं गृह्णन्ति ते प्रच्छन्नवञ्चकाः। ममु.

उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह॥
असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः।
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः॥
एवमादीन् विजानीयात्प्रकाशाँल्लोककण्टकान्।
निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः॥

उत्कोचकाः ये कार्यिभ्यो धनं गृहीत्वा कार्यमयुक्तं कुर्वन्ति। औपधिकाः भयदर्शनात् ये धनमुपजीवन्ति। वञ्चकाः ये सुवर्णादि द्रव्यं गृहीत्वा परद्रव्यप्रक्षेपेण वञ्चयन्ति। कितवाः द्यूतसमाह्वयदेविनः। धनपुत्रलाभादिमङ्गलमादिश्य ये वर्तन्ते ते मङ्गलादेशवृत्ताः। भद्राः कल्याणाकारप्रच्छन्नपापा ये धनग्राहिणः। ईक्षणिकाः हस्तरेखाद्यवलोकनेन शुभाशुभफलकथनजीविनः। महामात्राः हस्तिशिक्षाजीविनः। चिकित्सकाः चिकित्साजीविनः। असम्यक्कारिण इति महामात्रचिकित्सकविशेषणम्। शिल्पोपचारयुक्ताः चित्रलेखाद्युपायजीविनः। तेऽप्यनुपजीव्यमानशिल्पोपायप्रोत्साहनेन धनं गृह्णन्ति। पण्यस्त्रियश्च परवशीकरणकुशलाः। इत्येवमादीन् प्रकाशं लोकवञ्चकांश्चारैर्जानीयात्। अन्यानपि प्रच्छन्नचारिणः शूद्रादीन् ब्राह्मणादिवेषधारिणो धनग्राहिणो जानीयात्। ममु.

तान् विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः।
चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्॥

तान् उक्तान् वञ्चकान् सभ्यैः प्रच्छन्नैः तत्कर्मकारिभिः वणिजां स्तेये वणिग्भिरित्येवमादिभिः पुरुषैः, एतद्व्यतिरिक्तैः सप्तमाध्यायोपदिष्टकापटिकादिभिश्चारैः अनेकस्थानस्थैः ज्ञात्वा प्रोत्साद्य स्ववशान् कुर्यात्। ममु.

तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः।
कुर्वीत शासनं राजा सम्यक्सारापराधतः॥

तेषां प्रकाशाप्रकाशतस्कराणां स्वकर्मणि चौर्यादौ ये पारमार्थिकाः दोषाः संधिच्छेदादयः तान् लोके प्रख्याप्य

---

* शेषं मेधागतं ममुगतं च।

$ एतदादिश्लोकचतुष्टयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः ०' इत्यस्मिन् प्रकरणे (पृ. ७०९–७१०) द्रष्टव्यः।

¶ 'द्विविधांस्तस्करान्' इत्यादीनां द्वादशानां श्लोकानां शेषव्याख्यानसंग्रहः व्यवहारकाण्डे स्तेयप्रकरणे (पृ. १६९३–१६९६) द्रष्टव्यः।

(१) मस्मृ. ९।२५२–२५५.

(२) मस्मृ. ९।२५६–२६७.

तद्गतधनशरीरादिसामर्थ्यापेक्षया अपराधापेक्षया च राजा दण्डं कुर्यात् । ममु.

**न हि दण्डादृते शक्यः कर्तुं पापविनिग्रहः ।**
**स्तेनानां पापबुद्धीनां निभृतं चरतां क्षितौ ॥**

यस्मात् चौराणां पापाचरणबुद्धीनां विनीतवेषेण पृथिव्यां चरतां दण्डव्यतिरेकेण पापक्रियायां नियमनं कर्तुमशक्यं अत एषां दण्डं कुर्यात् । ममु.

**सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।**
**चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ॥**
**जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ।**
**शून्यानि चाप्यगाराणि वनान्युपवनानि च ॥**
**एवंविधान् नृपो देशान् गुल्मैः स्थावरजङ्गमैः ।**
**तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥**

सभा ग्रामनगरादौ नियतं जनसमूहस्थानम्, प्रपा जलदानगृहम्, अपूपविक्रयवेश्म, पण्यस्त्रीगृहम्, मद्यान्नविक्रयस्थानानि, चतुष्पथाः, प्रख्यातवृक्षमूलानि, जनसमूहस्थानानि, जीर्णवाटिकाः, अटव्यः, शिल्पगृहाणि, शून्यगृहाणि, आम्रादिवनानि, कृत्रिमोद्यानानि, एवंप्रकारान् देशान् सैन्यैः पदातिसमूहैः स्थावरजङ्गमैः एकस्थानस्थितैः प्रचारिभिश्च अन्यैश्चारैः तस्करनिवारणार्थं चारयेत् । प्रायेणैवंविधे देशेऽन्नपानस्त्रीसंभोगस्वप्रहर्त्राद्यन्वेषणार्थं तस्करा अवतिष्ठन्ते । ममु.

**तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः ।**
**विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः ॥**

तेषां साहाय्यं प्रतिपद्यमानैः तच्चरितानुवृत्तिभिः संधिच्छेदादिकर्मानुष्ठानवेदिभिः पूर्वचौरैः चाररूपैः चारमार्गनिपुणैः तस्करान् जानीयात् उत्सादयेच्च । ममु.

### याज्ञवल्क्यः

प्रजारक्षणे धर्मषड्भागहरो राजा

**(१)पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ।**
**सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥**

(१) कस्मात् पुनरेतदेवम् ? यस्मात्— पुण्यादिति । कस्मात् ? – सर्वेति । विश्व.

(२) प्रजापालनफलमाह— पुण्यादिति । यस्मात् न्यायेन शास्त्रोक्तमार्गेण प्रजाः परिपालयन् परिपालितप्रजोपचितपुण्यात् षड्भागं षष्ठं भागमादत्ते, यस्माच्च सर्वेभ्यो भूम्यादिदानेभ्यः प्रजानां परिपालनमधिकफलम्, तस्मात् प्रजासु यथा पिता तथैव स्यादिति गतेन संबन्धः । मिता.

(३) सर्वेभ्योऽपि दानेभ्यः प्रजानां परिपालनमभयदानात्मकमधिकं यस्मात्तस्मादुपपन्नः पुण्यषड्भागलाभः । एवं प्रजापालनं च धनप्राप्तौ हेतुर्यथा ब्राह्मणस्य प्रतिग्रहादिः । * अप.

(४) षड्भागमुपलक्षणम्, यावता प्रजानां पीडा न स्यात्तावदेव, प्रजापालनस्याऽऽवश्यकत्वात् । यद्यप्यर्थशास्त्रे 'त्रिवर्गेणाभिसंधत्ते' इत्यनेन पुरुषार्थेषु प्रथमोपात्तत्वात् + 'आत्मानं सततं रक्षेत्' इत्यादिना च यावता आयुः(? आत्मायुः)परिपालनं तावदिति वक्तुमुचितम्, तथापि प्रजापालनस्योभयलोकेष्टसाधनत्वात् प्रजापालनमेव प्रथमतः कार्यम् । अत एव नारदः— 'यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः । अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥' (नास्मृ. १।३९)। याज्ञवल्क्यः— 'स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥' (यास्मृ. २।२१) । विप्रतिपत्तिः विरोधः । इदमुभयोर्निरवकाशत्वेऽन्यथासिद्धमेव तस्यैवोक्तत्वात् (?) । तथा च प्रजापालनं स्वरक्षणं रणानिवर्तित्वं ब्राह्मणशुश्रूषेति राज्ञामसाधारणो धर्म इति प्राञ्चः । नव्यास्तु— प्रथमत आत्मरक्षणम्, दृष्टमुख्यफलकत्वात्, 'सर्वत आत्मानं गोपायीत' इति श्रुतेश्च । अत एव स्पष्टमाह मनुः— 'एवं सर्वं विधायेदमितिकर्तव्यमात्मनः । युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥' (मस्मृ. ७।१४२)। एवं उक्तप्रकारेण सर्वमात्मनः कार्यजातं संपाद्य युक्तः

(१) यास्मृ. १।३३५; विश्व. १।३३१ स्प्रजानां (न्यायेन); मिता.; अप. १।३३३–३३४ पुण्यात् (पुण्य); रार. ५५; वीक.; वीमि.; राप्र. २७१ पू.

* शेषं मितागतम् ।

+ 'आत्मानमथ च प्रजाः' इत्यात्मनः प्रथमोपात्तत्वादित्यर्थः ।

प्रमादरहितः आत्मीयाः प्रजा रक्षेदिति मन्वर्थ इति । रार.५५–५६

(५) आदत्ते गृह्णीयात् । * दीक.

(६) प्रजापालनस्य राजधर्मेषु प्राधान्यं दर्शयितुमुक्ते एव प्रजापालने फलातिशयमाह– पुण्यादिति । परि सर्वतोभावे । हिताचरणेनानिष्टवारणेन च पालयन् । यतश्च प्रजानां परिपालनं सर्वदानेभ्यः तुलापुरुषदानादिभ्यः अधिकं अधिकफलप्रदं तस्मात् चाटादिभिर्विशेषतश्च राजाधिकृतैः लेखकैः कायस्थैः पीड्यमानाः प्रजा रक्षेत् पीडारहिताः कुर्वीत । महासाहसिकाः परप्राणोपरोधिसाहसकारिणः । आदिपदेन 'उत्कोचकाश्चोपधिकाः' (मस्मृ. ९।२५८) इति मनूक्तादीनां संग्रहः । चकारात् गणनाधिकृतसमुच्चयः । एतेन ¶ जनपदेन वक्ष्यमाणं राष्ट्ररूपं राज्याङ्गं दर्शितम् । वीमि.

कण्टकेभ्यः प्रजारक्षणविधिः, अरक्षणे अर्धपापभाक् राजा, अधिकृतेषु साधूनां रक्षणमसाधूनां निग्रहश्च राजकर्तव्यम्

**†[1]चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।**
**पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥**

(१) केन पुनः प्रजाः पीड्यन्ते, येनायं प्रयत्नः ? उच्यते– चाटेति । कायस्थाः रोगादयः । लेखका इत्यन्ये । विश्व.

(२) चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति । प्रच्छन्नापहारिणः तस्कराः । दुर्वृत्ताः इन्द्रजालिककितवादयः । सहः बलम्, सहसा बलेन कृतं साहसम्, महच्च तत् साहसं च महासाहसम्, तेन वर्तन्ते इति महासाहसिकाः प्रसह्यापहारिणः । आदिशब्दात् मौलिककुहकदुर्वृत्तयः । एतैः पीड्यमानाः बाध्यमानाः प्रजाः रक्षेत् । कायस्थाः लेखकाः गणकाश्च, तैः पीड्यमाना विशेषतो रक्षेत्, तेषां राजवल्लभतया अतिमायावित्वाच्च दुर्निवारत्वात् । मिता.

(३) चाटादिभ्यो दुःखकारिभ्यः प्रजाः रक्षेत् । पूर्वश्लोकैः स्वयं न पीडयेत् इति अर्थादुक्तम्, अत्र तु यथा परो न पीडयेत्तथा कुर्यादित्युच्यते । चाटः पिशुनः । तस्करः प्रसिद्धः । दुर्वृत्तः परदारहारकादिः । महासाहसिकः मनुष्यमारणबन्दिग्रहादिकारी । आदिशब्देन कूटमानकूटसुवर्णादिकारिणो लक्ष्यन्ते । कायस्थाः कराधिकृताः । अप.

(४) ननु अनुजीव्याद्यविश्वास एव तदा संदिग्धार्थनिश्चयो न स्यात् । तत् (न), 'नातिविश्वसेत्' इत्यादिवाक्यात् तस्यातिविश्वासाभावपरत्वात् । तथा च राजा परविश्वासेन न समो (?) भवेदित्यर्थः । * रार. ५४

(५) चारः पराभिभवकारी । महासाहसिकः हठान्मारकः । आदिना उत्कोचकैश्च । कायस्थैः राजसंबन्धात् प्रभविष्णुभिः । दीक.

**[1]अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।**
**तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥**

(१) यदि तु एवमादिभ्यो राजा रक्षां न कुर्यात् ततः– अरक्ष्यमाणा इति । स्यादिति शेषः । कस्मात् ?– यस्मादिति । विश्व.

(२) अरक्ष्यमाणाः प्रजाः यत्किंचित् किल्बिषं चौर्यपरदारगमनादि कुर्वन्ति तस्मात् पापात् अर्धं

---

* शेषं मितागतम् ।

¶ 'स्वाम्यमात्या जनो दुर्गम्' (यास्मृ. १।३५३) इत्यस्मिन् श्लोके जनशब्देन वक्ष्यमाणमित्यर्थः ।

† श्लोकस्यास्य वीमिव्याख्यानम् 'पुण्यात्षड्भागम्' इत्यादिपूर्वश्लोके द्रष्टव्यम् ।

(१) यास्मृ. १।३३६; विश्व. १।३३२ रक्षेत (रक्ष्याः); मिता.; अप. १।३३४–३३५; राक. ८३ स्थैश्च (स्थेभ्यो); रार. ५४ स्थैश्च (स्थैस्तु); दीक. चाट (चार); वीमि.; राप्र. २५३; नीम. ५० उत्त.

* शेषं मितागतम् ।

(१) यास्मृ. १।३३७; विश्व. १।३३३; मिता.; अप. १।३३५–३३६; वीमि.; राप्र. २५३, २७१; नीम. ५०.

नृपतेर्भवति । यस्मादसौ राजा रक्षणार्थं प्रजाभ्यः करान् गृह्णाति । मिता.

(३) प्रजानामरक्षणे दोषगौरवमाह– अरक्ष्यमाणा इति । अरक्ष्यमाणाः नृपेणापाल्यमानाः अधर्मादनिवार्यमाणाः । अत्रापि पापार्धसंमितं पापं राज्ञो भवतीति मन्तव्यम् । न ह्यन्यकृतमदृष्टमन्यस्य भवति । ※ अप.

(४) (तस्मादिति) पञ्चमी षष्ठ्यर्थे । तुशब्देन पुण्यात् षड्भागो व्यवच्छिद्यते । ननु पुण्यस्य षड्भागं पापस्यार्धं नृपतिराप्नोतीति वैषम्यं कृतमित्यत आह– यस्मादसौ राजा रक्षणार्थं करान् गृह्णाति तस्मादुचितमेवार्धपापसंक्रमणम् । पुण्ये तु राज्ञः परिपालनरूपव्यापारेऽपि द्रव्यदानाभावात् षड्भागपुण्यसंक्रमणमेवेति । + वीमि.

**[1]ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।**
**साधून् संमानयेद्राजा विपरीतांस्तु घातयेत् ॥**

(१) कथं पुनः पीडाः प्रजाभ्यो विजानीयात् राजा ? ननूक्तं (यास्मृ. १।३२२) तत्र तत्र च निष्णातानध्यक्षान् कुर्यादिति । एत एव यदा विकुर्युस्तदा कथम् ? इति चेत्, उच्यते– ये राष्ट्राधिकृता इति । विश्व.

(२) राष्ट्रे राष्ट्राधिकारेषु ये नियुक्ताः तेषां विचेष्टितं चरितं चारैः उक्तलक्षणैः सम्यक् ज्ञात्वा साधून् सुचरितान् संमानयेत् दानमानसत्कारैः पूजयेत्, विपरीतान् दुष्टचरितान् सम्यक् विदित्वा घातयेत् अपराधानुसारेण । मिता.

(३) ये राष्ट्रे करादानाय प्रजापालनाय च अधिकृताः नियुक्ताः तेषां विचेष्टितं विविधं व्यापारजातम् । × अप.

(४) घातयेत् हन्यात् । एतच्च वधार्हापराधे । अन्यत्र त्वपराधानुसारेण दण्डयेदिति तात्पर्यम् । अत एव तुशब्दस्तेषां घातनव्यवच्छेदायेति । ※ वीमि.

**[1]उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ।**
**सदानमानसत्कारान् श्रोत्रियान् वासयेत्सदा ॥**

(१) यदा तु दुष्टजना सहाध्यक्षैरेकीभूय लुब्धा साधुजनं खलीकुर्युः ततस्तानपि– उत्कोचजीविन इति । ये तु साधवः तान्– सदानमानसत्कारैरिति । श्रोत्रियवचनं दृष्टान्तार्थम् । यद्वा, दानादिभिरपि श्रोत्रियानेव वासयेत्, न करदानप्यविनीतानित्यर्थः । विश्व.

(२) ये पुनरुत्कोचजीविनस्तान् द्रव्यरहितान् कृत्वा स्वराष्ट्रात् प्रवासयेत् । श्रोत्रियान् सद्दानमानसत्कारैः सहितान् कृत्वा स्वराष्ट्रे स्वदेशे सदैव वासयेत् । मिता.

(३) कार्यार्थे कार्यिणो धनादानं उत्कोचः । मानः पूजा । सत्कारः साधुत्वख्यापको व्यापारः । ‡ अप.

(४) उत्कोचः खतीति प्रसिद्धः । दीक.

(५) उत्कोचः व्यवहारदर्शनादिकार्येषु अन्यायेन धनग्रहणम्, तेन जीविनः तदुपजीविनः अधिकृतान् सर्वस्वहीनान् कृत्वा प्रवासयेत् स्वराष्ट्रान्निष्कासयेत् । श्रोत्रियान् शाखाध्येतॄन् संमानादिभिः सदा वासयेत् । संमानः अभ्युत्थानाभिवादनानुगमनादिभिः प्रीणनम् । सत्कारः यज्ञादौ वरणादिरूपः । वीमि.

---

※ शेषं मितागतम् ।

+ शेषं मितागतं अपगतं च ।

× शेषं मितागतम् । राप्र. अपगतम् ।

(1) **यास्मृ.** १।३३८ ; **विश्व.** १।३३४ द्राजा (नित्यं) ; **मिता.** तांस्तु (तांश्च) ; **अप.** ३३६–३३७ ; **वीमि.** ; **राप्र.** २४९ मितावत्.

※ शेषं मितागतं अपगतं च ।

‡ शेषं मितागतम् । राप्र. अपगतम् ।

(1) **यास्मृ.** १।३३९ ; **विश्व.** १।३३५ सत्कारान् (सत्कारैः) ; **मिता.** सदान (सद्दान) ; **अप.** १।३३७–३३८ ; **वीमि.** विवा (प्रवा) सदान (सद्दान) सत्कारान् (सत्कारैः) ; **राप्र.** २४९ द्रव्यहीनान् (हीनद्रव्यान्).

राष्ट्रकर्शनात् राजनाशः

[1]अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत् ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥

(१) यतश्चैतदेवमत आह– अन्यायेनेति । विश्व.

(२) यः असौ राजा स्वराष्ट्रादन्यायेन द्रव्यमादाय स्वकोशमभिवर्धयेत् सः अचिरात् शीघ्रमेव विगतश्रीकः विनष्टलक्ष्मीकः बन्धुभिः सह नाशं प्राप्नोति । * मिता.

(३) अन्यायेन प्रतिषिद्धमार्गेण । + अप.

(४) अन्यायेन प्रजाभ्यो धनं राजा न गृह्णीयादित्यभिप्रेत्याऽऽह– अन्यायेनेति । अन्यायेन अदण्ड्यदण्डनाधिककरग्रहणादिना । + वीमि.

[2]प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा न निवर्तते ॥

(१) कस्मात् पुनरेतदेवम् ? यस्मात्– प्रजेति । अल्पपराधादेकलोष्टवधेनाप्येनं हन्युरित्यभिप्रायः । दण्डकोशाद्युच्छित्तिस्तु तन्मूलत्वान्नियतैव । विश्व.

(२) प्रजानां तस्करादिकृतपीडनेन यः संतापस्तस्मादुद्भूतो हुताशन इव । संतापकारित्वात् अपुण्यराशिर्हुताशनशब्देनोच्यते । सः राज्ञः कुलं श्रियं प्राणांश्च अदग्ध्वा नाशमनीत्वा न निवर्तते नोपशाम्यति । मिता.

(३) प्रजानां पीडनात् अन्यायेन धनादानात् यः संतापः दुःखातिशयः तस्मात् । * अप.

(४) प्रजापीडनं अशास्त्रीयधनदण्डादिना । संतप्यतेऽनेनेति संतापः । पीडनविशेषणम् । * दीक.

(५) राजा बन्धनताडनादिना प्रजा न पीडयेदित्यभिप्रेत्याऽऽह– प्रजापीडनेति । प्रजानां बन्धनताडनादिना पीडनेन यः संतापः दुःखं तेन समुद्भूतः अतिप्रौढः सन् उत्पन्नः हुताशनः प्रजाक्रोधरूपो नृपाधर्मरूपो वा । * वीमि.

* दीक. मितागतम् ।

+ शेषं मितागतम् ।

(१) यास्मृ. १।३४० ; विश्व. १।३३६ ; मिता. ; अप. १।३३८–३३९ वर्धयेत् ( रक्षति ) ; राक. ९३ ; रार. ६ ; वीमि. ; राप्र. २५४ अपवत् : २७६.

(२) यास्मृ. १।३४१ ; विश्व. १।३३७ संतापात्स ( संतापस ) णांश्चा ( णान्ना ) न नि ( विनि ) ; मिता. ; अप. १।३३९–३४० उत्तरार्धे ( राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ ) ; राक. ९३ णांश्चा ( णान्ना ) न नि ( विनि ) ; वीमि. अपवत् ; राप्र. २५४ राज्ञः ( राज्ञां ) शेषं अपवत् : २७६ राकवत् .

## बृहस्पतिः

त्रिविधं प्रजापालनम्

[1]तत्प्रजापालनं प्रोक्तं त्रिविधं न्यायवेदिभिः ।
परचक्राच्चौरभयाद्बलिनोऽन्यायवर्तिनः ॥
[2]परानीकस्तेनभयमुपायैः शमयेन्नृपः ।
बलवत्परिभूतानां प्रत्यहं न्यायदर्शनैः ॥

## बार्हस्पत्यसूत्रम्

दण्डनीतिविषयो भारतखण्डः तस्य प्रदेशाश्च

[3]पञ्चाशत्कोटियोजना पृथिवी ॥
सप्तद्वीपवती च ॥
सप्तसमुद्रावृता च ॥
कर्मभोगातिभोगदिव्यशृङ्गारसिद्धकैवल्या इति द्वीपाभिधानाः ॥
मध्यः कर्मभूमिः ॥
तन्मध्ये मेरोराजम्बूः ॥
तत्रोत्तरे हिमवान् ॥
तस्य दक्षिणे नवसाहस्री भूः ॥
तत्र दाक्षिणात्यो भारतः खण्डः ॥

* शेषं मितागतम् ।

(१) राक. ८५ वर्तिनः ( वेदिनः ) ; राप्र. २५४.

(२) राक. ८५ ; राप्र. २५५.

(३) बासू. ३।६४–१४८.

तत्र साक्षाद्धर्माधर्मफलाः सिध्यन्ति ॥

तत्र दण्डनीतिः ॥

पूर्वभारतीयैः पठितव्यो भविष्यैर्वर्तमानैश्च चातुर्वर्णिकैश्च ॥

दण्डनीत्या भगवान् भानुर्नृपतिः ॥

वायुश्च सर्वे देवाश्च ॥

जन्तवश्च ॥

सहस्रयोजना बदरिकासेत्वन्ता ॥

द्वारकादिपुरुषोत्तमसालग्रामान्ता सप्तशतयोजना ॥

तत्रापि रैवतकविन्ध्यसह्यकुमारमलयश्रीपर्वतपारियात्राः सप्त कुलाचलाः ॥

गङ्गासरस्वतीकालिन्दीगोदावरीकावेरीताम्रपर्णीघृतमालाः कुलनद्यश्च ॥

अष्टादश विषयाश्च ॥

अष्टादश सागरा नृपाः ॥

अष्टादश पार्वतीयाः ॥

रामसृष्टिश्चत्वारिंशत्, शतं दक्षिणोत्तरे, आसह्यं द्वादश, विश्वामित्रसृष्टिरेकादश ॥

नेपालं चतुःशतम् ॥

पूर्वसमुद्रतीरे वरुणतः समुद्रान्तमष्टयोजना ॥

पञ्चशतद्वितयमुत्तरलाटं पूर्वलाटं च ॥

काशीपाञ्चालद्वितयमशीतिः ॥

केकयसृञ्जयं षष्टिः ॥

मात्स्यमागधं शतम् ॥

मालवशकुन्तमशीतिः ॥

कोसलावन्तिः षष्टिः ॥

सैह्यवैदर्भद्वितयं शतद्वितयम् ॥

वैदेहकौरवं शतम् ॥

काम्बोजदशार्णमशीतिः ॥

एते महाविषयाः ॥

एते खलु चतुरश्राः ॥

आरट्टबाह्लीकौ दक्षिणोत्तरतः शतमात्रौ पूर्वपश्चाद्द्वादशौ ॥

शाकसौराष्ट्रौ चतुरश्रौ चत्वारिंशत् ॥

अङ्गवङ्गकलिङ्गाः शतमात्राश्चतुरश्राश्च ॥

काश्मीरहूणाम्बष्ठसिन्धवः शतमात्राश्चतुरश्राश्च ॥

किरातसौवीरचोलपाण्ड्या उत्तरे दक्षिणे स्थिताः शतात्परं षष्टिमात्राः ॥

यादवकाञ्चीविषयं चत्वारिंशच्छतमात्रम् ॥

एते उपविषयाः ॥

सप्तकोङ्कणाश्चतुःशतमात्रा द्वादश षट्राष्ट्रौ च (?) ॥

एते अनूपाः ॥

सह्याद्रौ चत्वारो गिरिविषयाः ॥

श्रीपर्वते द्वयम् ॥

रैवतक एकः ॥

विन्ध्ये पञ्च ॥

कुमार एकम् ॥

महेन्द्रे त्रयम् ॥

पारियात्रे त्रयम् ॥

सर्वे दक्षिणोत्तरतः पञ्चाशन्मात्राः पूर्वतःपश्चात् पञ्चयोजनाः समाः ॥

म्लेच्छे यवनविषयाः पार्वतीयाः ॥

ग्रामनगरोद्यानादिभिरलंकृताः पुण्यक्षेत्रादिभिश्च ॥

अष्ट वैष्णवक्षेत्राः ॥

बदरिकासालग्रामपुरुषोत्तमद्वारकाबिलवाचलानन्तसिंहश्रीरङ्गाः ॥

अष्टौ शैवाः ॥

अविमुक्तकगङ्गाद्वारशिवक्षेत्ररामेयमुनाशिवसरस्वतीमध्यशार्दूलगजक्षेत्राः ॥

शाक्ता अष्टौ च ॥

ओढ्घीणजालपूर्णकामकोलश्रीशैलकाञ्चीमहेन्द्राः ॥

एते महाक्षेत्राः ॥

सर्वसिद्धिकराश्च ॥

वन्ध्याश्च ॥

विन्ध्ये नित्यं वसति दुर्गा भद्रकाली च ॥

कुमारे कुमारो वसति नित्यम् ॥
सह्ये गणपतिः ॥
रैवतके शास्ता ॥
महेन्द्रे गरुडः ॥
पारियात्रे क्षेत्रपालः ॥
कर्मभूमौ भारते मनुष्यैर्बहवो देवाः ॥
सुरासुरयक्षराक्षसभूतप्रेतविनायककूश्माण्डा विकृताननाः ॥
निरुद्धा भारवेषाः ॥
सौम्यभैरवा योगिन्यश्च नागाश्च मानवैः सह रूपरमा असंख्याताः संचरन्ति ॥
मानवैः कृतपालनाश्च ॥
तस्मिन्नमृतमया औषधाः सन्ति ॥
अत्र युगसंख्या कृतत्रेताद्वापरतिष्याश्च ॥
कृते ज्ञानिनः ॥
दण्डनीतिकोविदाः ॥
त्रेतायां कर्मिणो नीतिविशारदाः ॥
द्वापरे तान्त्रिकानुसारा घनारसाश्च ॥
नीतिकोविदाश्च ॥
तिष्ये पादे ज्ञानकर्मा घना दण्डनीतिकोविदा नराः ॥
तदुत्तरं विरुद्धधर्मवर्णवेषा दण्डनीतिवर्जिताः ॥
पश्यन्ति प्रजा अनृतवादतत्पराश्चेत्याहाऽऽचार्यः ॥

## कात्यायनः

साधुभिर्निवसनार्हो देशः

[1]यत्र कर्माणि नृपतिः स्वयं पश्यति धर्मतः ।
तत्र साधुसमाचारा निवसेयुः सुखं प्रजाः ॥
[2]प्रजानां रक्षणं नित्यं कण्टकानां च शोधनम् ।
द्विजानां पूजनं चैव एतदर्थं कृतो नृपः ॥

(१) राक. ८४ ; राप्र. २५४.
(२) राक. ८५ ; राप्र. २५४.

## बृहत्पराशरः

राष्ट्ररक्षणविधिः

[1]अत्राप्युपद्रवं राजा तस्करादिसमुद्भवम् ।
संरक्षेत्सर्वतो यत्नाद्यस्माद् गृह्णात्यसौ करान् ॥
[2]पीड्यमानां प्रजां रक्षेत्कायस्थैश्चोरतस्करैः ॥

## आश्वलायनः

राष्ट्ररक्षणविधिः

[3]स्वराष्ट्रं सर्वदा रक्षेद्राष्ट्राज्जनपदान्नृपः ॥
तस्मादतीव ग्रामांश्च ग्रामादप्यात्मनः पुरम् ।
पुरादन्तःपुरं यत्नाद्रक्षेत्तस्मात्स्वयोषितः ॥
पितेव पालयेत्पुत्रान् प्रजा राष्ट्रं च सर्वदा ॥
[4]जीर्णानुद्धारयेत्स्थानान् देवतानां नृपोत्तमः ॥
परीक्ष्य तेषां वृत्तिं च कारयेच्च तदुत्सवान् ।
तन्नाथान् दण्डयेत्सम्यक् तद्वृत्तिमपहारिणः ॥
तत्कल्पितस्य विप्राणां चाऽऽददीत धनान्न ( ? ) वै ॥
पुरोहितानुगो नित्यं चारचक्षुर्द्विजप्रियः ।
यो रक्षति महीं राजा सोऽत्यन्तं श्रियमृच्छति ॥
[5]यथा राष्ट्रप्रजाः सर्वाः सर्वबाधाविवर्जिताः ।
तथा रक्षेन्महीं राजा सर्वज्ञः प्रियदर्शनः ॥
[6]देशाधिकारिणः सर्वान् जानीयादेव सर्वदा ॥
पुरग्रामाधिपांश्चैव दुर्दान्तांस्तांस्तु दण्डयेत् ।
न मोचयेद्विप्रमपि स्तेनं वसुविलुम्पकम् ॥
मोचयेत्कृपया राजा स्वयं दोषेण युज्यते ।
अटवीं पुरवत्कुर्यात्सदा दस्युवधान्नृपः ॥
व्याघ्रादीनां च राष्ट्रस्य वृद्धये यशसे श्रियै ।
तटाकानां च सेतूनामाश्रमाणां मठस्य च ॥

(१) बृपसं. ५।१३१.
(२) बृपसं. १२।२४.
(३) आश्वस्मृ. ८।३७–३८, ६४.
(४) आश्वस्मृ. ८।९१–९३,९६–९७.
(५) आश्वस्मृ. ८।९८–९९.
(६) आश्वस्मृ. ८।१०३–१०९.

नद्यां प्रतरणानां च योगक्षेमं वहेन्नृपः ।
अपुत्राणां च वृद्धानां स्त्रीणां द्रव्यस्य भूपतिः ॥
अनाथानां तथाऽन्धानां योगक्षेमपरो भवेत् ।
कण्टकान् शोधयेन्नित्यं पुरस्यान्तःपुरस्य च ॥
दुर्गस्य च स्वराष्ट्रस्य परीक्ष्यान्योन्यमात्मवान् ॥
[1]चोरान् म्लेच्छांश्च सीमान्तानुन्मार्गा-
नुगतान् बलात् ।
विश्वास्य बलवन्तोऽपि हन्यादेव नृपोत्तमः ॥
[2]वणिग्वृत्तीन् सार्थवाहान् जलयानपरान्नृपः ।
विदेश्यांश्च स्वदेश्यांश्च पालयेत्सुप्रयत्नतः ॥

## मत्स्यपुराणम्

### राज्ञा अधिष्ठेयं राष्ट्रं राष्ट्ररक्षणविधिश्च

मत्स्य उवाच–
[3]राजा सहायसंयुक्तः प्रभूतयवसेन्धनम् ।
रम्यमानतसामन्तं मध्यमं देशमावसेत् ॥
[4]वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः ।
किंचिद्ब्राह्मणसंयुक्तं बहुकर्मकरं तथा ॥
[5]अदेवमातृकं रम्यमनुरक्तजनान्वितम् ।
करैरपीडितं चापि बहुपुष्पफलं तथा ॥
[6]अगम्यं परचक्राणां तद्वासगृहमापदि ।
समदुःखसुखं राज्ञः सततं प्रियमास्थितम् ॥

(१) आश्वस्मृ. ८।१५२.

(२) आश्वस्मृ. ८।१५४–१५५.

(३) मत्स्य. २१७।१ ; विध. २।२६।१ न्तं मध्यमं ( न्तः पशव्यं ).

(४) मत्स्य. २१७।२ ; विध. २।२६।२ ; अग्नि. २२२।१–२ प्रायमनाहार्यं ( प्रायो ह्यनाहार्यः ) युक्तं ( युक्तो ) करं ( करः ).

(५) मत्स्य. २१७।३ ; विध. २।२६।३ रम्यमनु ( कर्मस्वनु ) न्वितम् ( चितम् ) पुष्प ( पुष्पं ) ; अग्नि. २२२।२–३ ( अदेवमातृको भक्तजलो देशः प्रशस्यते । परैरपीडितः पुष्पफलधान्यसमन्वितः ॥ ).

(६) मत्स्य. २१७।४ ; विध. २।२६।४ सगृह ( दसह ) प्रियमा ( च प्रिये ) ; अग्नि. २२२।३ ( अगम्यः परचक्राणां व्यालतस्करवर्जितः । ) पू.

[1]सरीसृपविहीनं च व्याघ्रतस्करवर्जितम् ।
एवंविधं यथालाभं राजा विषयमावसेत् ॥
[2]यथा न स्यात्कृशीभावः प्रजानामनवेक्षया ॥
तथा राज्ञा प्रकर्तव्यं स्वराष्ट्रं परिरक्षता ।
मोहाद्राजा स्वराष्ट्रं यः कर्शयत्यनवेक्षया ॥
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च
सबान्धवः ।
भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत् ॥
तथा राष्ट्रं महाभाग भृतं कर्मसहं भवेत् ।
यो राष्ट्रमनुगृह्णाति राज्यं स परिरक्षति ॥
संजातमुपजीवेत्तु विन्दते स महत्फलम् ।
राष्ट्राद्धिरण्यं धान्यं च महीं राजा सुरक्षिताम् ॥
महता तु प्रयत्नेन स्वराष्ट्रस्य च रक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ॥

## विष्णुधर्मोत्तरपुराणम्

### राज्ञा अधिष्ठेयं राष्ट्रं राष्ट्रसंग्रहविधिश्च

[3]राजा सहायसंपन्नः पशव्यं जाङ्गलं शिवम् ।
वैश्यशूद्रजनप्रायमरोगं देशमावसेत् ॥
[4]राजधर्मव्रतं श्रेष्ठं कृत्वा पुरुषविग्रहम् ।
पुरुषान् विनियुञ्जीत चोत्तमाधमकर्मसु ॥
[5]ग्रामस्याधिपतिं कुर्याद्दशग्रामाधिपं तथा ।
शतग्रामाधिपं चापि तथैव विषयेश्वरम् ॥

(१) मत्स्य. २१७।५ ; विध. २।२६।५ व्याघ्र ( व्याधि ).

(२) मत्स्य. २२०।३९–४४.

(३) विध. ३।३२३।१४–१५.

(४) विध. २।६१।१ ; राप्र. २४९ राजधर्मव्रतं श्रेष्ठं ( राजा धर्मभृतां श्रेष्ठः ) चोत्तमा ( उत्तमा ).

(५) विध. २।६१।२ ; अग्नि. २२३।१ तथा (नृपः) चापि ( चान्यं ) ; राप्र. २४९ चापि ( वाऽपि ).

[1]तेषां भागविभागश्च भवेत्कर्मानुरूपतः ।
नित्यमेव तथा कार्यं तेषां चारैः परीक्षणम् ॥

[2]ग्रामदोषान् समुत्पन्नान् ग्रामेशः प्रशमं नयेत् ।
अशक्तौ दशपालस्य स तु गत्वा निवेदयेत् ॥

[3]श्रुत्वा तु दशपालोऽपि तत्र युक्तिमुपाचरेत् ।
सोऽप्यशक्तः शतेशाय यथावद्विनिवेदयेत् ॥

[4]शतेशो विषयेशाय सोऽपि राज्ञे निवेदयेत् ।
अशक्तौ शक्तिमान् राम स्वयं युक्तिमुपाचरेत् ॥

[5]राजा सर्वात्मना कुर्याद्विषये राम रक्षणम् ।
वित्तमाप्नोति धर्मज्ञ विषयाच्च सुरक्षितात् ॥

[6]नरकेषु तथा तेषां यातना विविधाः स्मृताः ।
बहून्यब्दसहस्राणि ये नृपा राष्ट्रपीडकाः ॥

[7]नित्यं राज्ञा तथा भाव्यं गर्भिणीसहधर्मिणा ।
यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत् ॥

[8]गर्भिणी तद्वदेवेह भाव्यं भूपतिना सदा ।
प्रजासुखं तु कर्तव्यं सुखमुद्दिश्य चाऽऽत्मनः ॥

(१) विध. २।६१।१३ क्षणम् ( क्षयेत् ) ; अग्नि. २२३।२ भाग ( भोग ); राप्र. २४९ भाग ( भागो ) नुरूपतः ( नुसारतः ).

(२) विध. २।६१।१४ ; अग्नि. २२३।३ ग्राम (ग्रामे) अशक्तौ ( अशक्तो ) ; राप्र. २५०.

(३) विध. २।६१।१५ ; अग्नि. २२३।४ तु ( ऽपि ) पू. ; राप्र. २५० उत्त.

(४) विध. २।६१।१६ ; राप्र. २५०.

(५) विध.२।६१।१७ ; अग्नि. २२३।४ (वित्ताद्याप्नोति राजा वै विषयात्तु सुरक्षितात् ॥ ) उत्त. ; राप्र. २५० याच्च ( यात्त ).

(६) विध. २।६१।२१ ; अग्नि. २२३।७ ( राष्ट्रपीडाकरो राजा नरके वसते चिरम् ॥ ) एतावदेव ; राप्र. २५८.

(७) विध. २।६१।२२ ; अग्नि. २२३।८ गर्भिणीसहधर्मिणा ( गर्भिणी सहधर्मिणी ) ; राप्र. २५८.

(८) विध. २।६१।२३ ; राप्र. २५५ उत्त. : २५८.

[1]किं यज्ञैस्तपसा तस्य प्रजा यस्य सुरक्षिताः ।
सुरक्षिताः प्रजा यस्य स्वर्गस्तस्य गृहोपमः ॥

[2]अरक्षिताः प्रजा यस्य नरकं तस्य मन्दिरम् ।
राजा षड्भागमादत्ते सुकृताद्दुष्कृतादपि ॥

[3]धर्मभागं महाभाग सम्यग्रक्षणतत्परः ।
अरक्षिता तथा सर्वं पापमाप्नोति भार्गव ॥

[4]नैव किंचिदवाप्नोति पुण्यभाक् पृथिवीपतिः ।
आपन्नमपि धर्मिष्ठं प्रजा रक्षत्यथाऽऽपदि ॥

[5]तस्माद्धर्मार्थकामेन प्रजा रक्ष्या महीक्षिता ।
सुभगैश्चाथ दुर्वृत्तराजवल्लभतस्करैः ॥

[6]भक्ष्यमाणाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः ।
रक्षितास्तद्भयेभ्यस्तु प्रजा राज्ञां भवन्ति ताः ॥

सुभगा अतिप्रिया स्त्री वेश्या वा । चाटाः बहुभाषिणः । राप्र. २५६

(१) विध. २।६१।२४ प्रजा यस्य ( प्रजास्तस्य ) ; अग्नि. २२३।९ यस्य सु ( यस्य न ) ; राप्र. २५५–२५६ रक्षिताः ( रक्षिता ) : २५८.

(२) विध. २।६१।२५ ; अग्नि. २२३।१० ; राप्र. २५६ राजा ( राम ) : २५८ पू.

(३) विध. २।६१।२६ धर्मभागं ( धर्मो नाम ) सम्यग्र ( संपद्र ) क्षिता ( क्षितः ) ; अग्नि. २२३।११ ( धर्मागमो रक्षणाच्च पापमाप्नोत्यरक्षणात् । ) पू. ; राप्र. २५६.

(४) विध. २।६१।२७ ; राप्र. २५६ नैव ( न वै ) रक्षत्यथा ( रक्षन्त्यथा ).

(५) विध. २।६१।२८ ; अग्नि. २२३।११ सुभगैश्चाथ दुर्वृत्त ( सुभगा विटभीतेव ) उत्त. ; राप्र. २५६ क्षिता ( भृता ) गैश्चाथ ( गाचाट ).

(६) विध. २।६१।२९ ; अग्नि. २२३।१२ उत्तरार्धे ( रक्षिता तद्भयेभ्यस्तु राज्ञो भवति सा प्रजा ॥ ) ; राप्र. २५६ उत्तरार्धे (रक्षिता तद्भयेभ्यस्तु राज्ञा भवति सा प्रजा ॥).

[1]अरक्षिता सा भवति तेषामेवेह भोजनम् ।
साधुसंरक्षणार्थाय राजा दुष्टनिबर्हणम् ॥
[2]तृणानामिव निर्माता सदा कुर्याज्जितेन्द्रियः ।
शास्त्रोक्तं बलिमादद्याद्धर्मं तत्तस्य जीवितम् ॥
[3]दुर्गस्थश्च नियुञ्जीत ग्रामे ग्रामे च पालकान् ।
दशग्रामाधिपांश्चान्यान् शतग्रामाधिपांस्तथा ॥
देशेश्वरांस्तथा कुर्यान्नगरस्थान् विशेषतः ।
ग्रामदोषान् समुत्पन्नान् ग्रामपालः शमं नयेत् ॥
अशक्तश्च दशेशाय स तु गत्वा निवेदयेत् ।
शतेशाय दशेशस्तु शतेशो देशपाय च ॥
ग्रामादिपालकानां तु शौचाशौचं नराधिपः ।
चारैः सुविदितं कुर्याज्ज्ञात्वा दुष्टांश्च घातयेत् ॥
राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेद्वसुंधराम् ॥
तथा च रक्षाधिकृताननुरूपेण योजयेत् ।
विभवेन द्विजश्रेष्ठाः परीक्ष्य च पुनः पुनः ॥

## गरुडपुराणम्

परराष्ट्रनीतिः स्वराष्ट्ररक्षणविधिश्च

[4]राज्यं पालयते नित्यं सत्यधर्मपरायणः ।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥
पुष्पात्पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारण्ये न यथाऽङ्गारकारकः ॥
दोग्धारः क्षीरभुञ्जाना विकृतं तन्न भुञ्जते ।
परराष्ट्रं महीपालैर्भोक्तव्यं न च दूषयेत् ॥
नोधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी लभते पयः ।
एवं राष्ट्रं प्रयोगेण पीड्यमानं न वर्धते ॥

(१) विध. २।६१।३० ; अग्नि., २२३।१३ उत्तरार्धे ( दुष्टसंमर्दनं कुर्याच्छास्त्रोक्तं करमाददेत् ॥ ) ; राप्र. २५६ मेवेह भोजनम् ( मेव हि भाजनम् ).

(२) विध. २।६१।३१ ; राप्र. २५६ मिव ( मपि ) द्धर्मं ( द्धर्म्यं ).

(३) विध. ३।३२३।२८–३३.

(४) गरुड. १।१११।२–७.

तस्मात्सर्वप्रयत्नेन पृथिवीमनुपालयेत् ।
पालकस्य भवेद्भूमिः कीर्तिरायुर्यशो बलम् ॥
अभ्यर्च्य विष्णुं धर्मात्मा गोब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः पार्थिवो विजितेन्द्रियः ॥

## अग्निपुराणम्

राज्ञा अधिष्ठेयं राष्ट्रम्

[1]सस्याकरवती पुण्या खनिद्रव्यसमन्विता ।
गोहिता भूरिसलिला पुण्यैर्जनपदैर्युता ॥
रम्या सकुञ्जरबला वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूरिभूतये ॥
शूद्रकारुवणिक्प्रायो महारम्भः कृषीवलः ।
सानुरागो रिपुद्वेषी पीडासहकरः पृथुः ॥
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् बली ।
ईदृग्जनपदः शस्तोऽमूर्खव्यसनिनायकः ॥

## कामन्दकीयनीतिसारः

राज्ञा अधिष्ठेयं राष्ट्रं राष्ट्रसंग्रहविधिश्च

[2]भूगुणैर्वर्धते राष्ट्रं तद्वृद्धिर्नृपवृद्धये ।
तस्माद्गुणवतीं भूमिं भूत्यै नृपतिरावसेत् ॥

(१) दुर्गकरणार्थं भुवमाह— भूगुणैरिति । नीम. ५१

(२) राष्ट्रसंपदमाह सप्तभिः श्लोकैः— भूगुणैरित्यादि । राष्ट्रं जनपदः । तद्वृद्धिर्नृपवृद्धये, जनपदस्य सर्वकर्मयोनित्वात् । जम.

(३) स्वामिप्रकृतेरमात्यप्रकृतेश्च गुणसंपदमभिधाय राष्ट्रप्रकृतेरभिधेया । राष्ट्रं च द्विधाऽवस्थितम्— भूमिः जनपदश्च । तत्र भूमेरेव तावत् गुणसंपन्नायाः सामर्थ्यं दर्शयन्नाह— भूगुणैरिति । भूगुणैः वक्ष्यमाणलक्षणैः वर्धते राष्ट्रं जनपदः । तद्वृद्धिर्नृपवृद्धये राष्ट्रवृद्ध्या कोशवृद्धिः, तयैव तस्य दण्डस्य वृद्धिः, तया मण्डलान्तरग्रहणात्

(१) अग्नि. २३९।२४–२७.

(२) कानी. ४।४८ ; उनि. नृपतिरावसेत् ( भूपतिराविशेत् ) ; नीम. ५१ नृपतिरावसेत् ( भूपस्तु कारयेत् ).

नृपस्य वृद्धिरिति । तस्मात् गुणवतीं भूमिं भूत्यै भूपतिराविशेदिति प्रतीतम् । उनि.

[1]सस्याकरवती पण्यखनिद्रव्यसमन्विता ।
गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ॥

(१) भूमिगुणानाह– सस्याकरवतीत्यादिना । सस्यानां आकरः क्षेत्रम्, तद्वतीत्यर्थः । पण्यं व्यवहर्तव्यं जलजं स्थलजम् । खन्यते इति खनिः सुवर्णरजताद्याकरः । द्रव्यं सारदार्वादि नौरथाद्युपयोगि । पुण्यैः आर्यैः । जम.

(२) भूमिगुणानेवाभिधातुमाह– सस्याकरवतीति । सस्यानि अष्टादशापि धान्यानि पूर्वमध्यावरबीजवापानि । आकराः सुवर्णाद्युत्पत्तिस्थानानि । पण्यानि कुङ्कुमागरुजीरकादीनि, खनयः वज्रमणिमुक्ताद्युत्पत्तिस्थानानि, द्रव्याणि शाकतिनिशादिदुर्गाद्युपयोगिसारवृक्षवनानि, तैः अन्विता । गोहिता गवां क्षीरवृद्धिविधायिनी । भूरिसलिला प्रचुरजला । पुण्यैः धार्मिकैः जनपदैः वर्णाश्रमिभिः युता । उनि.

[2]रम्या सकुञ्जरवना वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूर्विभूतये ॥

(१) कुञ्जरवनं यत्र हस्तिन उत्पद्यन्ते । वारिपथः नावादिना । स्थलपथः खरोष्ट्रादिना । तदुभयं वाणिज्यनिबन्धनम् । अदेवमातृका यत्र सेतुबन्धनप्रायत्वात् वर्षनिरपेक्षा सस्यनिष्पत्तिः । जम.

(२) रम्या रमणीया । सकुञ्जरवना हस्तिवनोपेता । वारिस्थलपथाभ्यां युक्ता जलमार्गस्थलमार्गाभ्यां युक्ता । अदेवमातृका, देवः पर्जन्यः एव मातृका यस्याः सा देवमातृका, पर्जन्यसस्येत्यर्थः, तद्विपरीता अदेवमातृका । भूरिसलिलत्वेन सरित्सरःसहस्रसंकुलत्वेनापर्जन्यसस्या इत्यर्थः । एवंप्रकारा शस्यते भूः, विभूतये भवतीत्यर्थः । उनि.

(१) कानी. ४।४९ ; नीम. ५१ पण्य (पुण्या).
(२) कानी. ४।५० ; नीम. ५१.

[1]सशर्करा सपाषाणा साटवी नित्यतस्करा ।
रूक्षा सकण्टकवना सव्याला चेति भूरभूः ॥

(१) निषिद्धभूमिमाह– सशर्करेति । रूक्षा अन्यदेशापेक्षया चतुर्गुणपञ्चगुणादिजलसेकेन सस्यजननी । नीम, ५१

(२) दोषद्वारेण गुणानाह– सशर्करेत्यादिना । साटवी, अटवीशब्देन तात्स्थ्यादाटविकानाह । नित्यतस्करा चोरप्राया । रूक्षा मरुप्राया । सकण्टकवना श्वदंष्ट्रिव्याघ्र्यादियुक्तत्वात् । जम.

(३) भूदोषानभिधातुमाह– शर्करेति । शर्कराः प्रस्तरशकलानि, ऊषरः क्षारमृत्तिका यत्र बीजादि न प्ररोहति, पाषाणाः शिलासमूहाः, तैः सह वर्तत इति । अटवी तात्स्थ्यादाटविकाः, तैर्युता । नित्यचौरा प्रतिरोधकादिभिरविरहिता । रूक्षा स्निग्धत्वरहिता । सकण्टकवना कण्टकवनान्विता । सव्याला व्याघ्रसिंहसर्पवती । भूः अभूः, सा भूरेव न भवति, बहुदोषत्वात् । उनि.

[2]स्वाजीवो भूगुणैर्युक्तः सानूपः पर्वताश्रयः ।
शूद्रकारुवणिक्प्रायो महारम्भकृषीवलः ॥

(१) जनपदगुणानाह– स्वाजीव इत्यादिना । स्वाजीवः, सर्वप्रकारवार्तासंभवात् । सानूप इति भूगुणयोगित्वात् सिद्धमेव । तत्र हि भूरिसलिलेति पठ्यते । पुनरुपादानं प्राधान्यार्थं उदकप्रतिबद्धत्वात् सर्वारम्भाणामिति । पर्वताश्रयः तदाश्रयत्वान्न परेणाभिभूयते । शूद्रकारुवणिक्प्रायः कोशं वर्धयति । महारम्भकृषीवलः सस्यबाहुल्यात् दुर्भिक्षव्यसनं हन्ति । जम.

(२) जनपदगुणानभिधातुमाह– स्वाजीव्य इति । सुखमाजीव्यते श्रेण्यादिभिः अविरहितत्वात् । भूगुणैः अनन्तरोक्तैः युक्त इति । भूमिः भूमिनिविष्टो जनपदश्च

(१) कानी. ४।५१ ; उनि. सशर्करा स (शर्करोषर); नीम. ५१.

(२) कानी. ४।५२ ; उनि. जीवो (जीव्यो) ; नीम. ५१ उनिवत्.

राष्ट्रशब्देनात्र गृह्यते । सानूपः सजलभूमियुतः, इक्षुशाल्यादिप्रभवत्वात् । पर्वताश्रय इति तृणकाष्ठादिसौकर्यसंपादनात् । शूद्रकारुवणिक्प्राय इति विधेयत्वाद्यथेष्टभोग्यो भवति । महारम्भः( ? रम्भकृषीवलः ) महान्तः कृष्याद्यारम्भाः कृषीवलानां कर्षकाणां यत्र स तथा । उनि.

[1]सानुरागो रिपुद्वेषी पीडाकरसहः पृथुः ।
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान्धनी ॥

( १ ) सानुरागः स्वामिप्रियत्वादापत्स्वपि न परवशमुपैति । रिपुद्वेषी न परेणातिसंधास्यते । पीडा दण्डः । करः उचितादेयम् । पृथुः विस्तीर्णः । नानादेश्यैः समाकीर्णः राज्ञः कोशवृद्धिं स्ववृद्धिं च जनयति । धार्मिकः यथास्वधर्माचारादनुच्छेद्यः । पशुमान् गोमहिष्यादिसंपन्नत्वात् कर्षणाद्यङ्गमावहति । धनी स्फीतः । जम.

( २ ) सानुरागः स्वामिनि । रिपुद्वेषी स्वामिशत्रौ द्वेषवान् । पीडाकरसह इति स्वचक्रकृतां पीडामल्पकोशत्वादधिकमपि करमाततं सहत इति । पृथुः विस्तीर्णः । नानादेश्यैः सकलदेशजनैः वाणिज्यायातैः आकीर्णः, पण्यप्राचुर्यकरत्वात् । धार्मिक इति धर्मस्य षष्ठांशदानेनोपकरोतीति । पशुमान् क्षीरघृतादिभिरुपकरोतीति । धनी धनित्वात् करादिभिर्न पीड्यत इति । उनि.

[2]ईदृग्जनपदः शस्तो *मूर्खव्यसनिनायकः ।
तं वर्धयेत्प्रयत्नेन तस्मात्सर्वं प्रवर्तते ॥

( १ ) मूर्खव्यसनिनायक इति । नायकः महत्तरः, स मूर्खो व्यसनी च यत्र । स हि यथाज्ञातकारित्वात् यथेष्टभोग्यो भवति । तस्मात् सर्वं प्रवर्तत इति । सर्वकर्मणां योनित्वाज्जनपदस्येति । जम.

( २ ) ईदृगिति अभिहितस्वरूपः । जनपदः राष्ट्रम् । शस्तः सद्भिः कृताशंसः । मूर्खाः बुद्धिरहिताः व्यसनिनः विषयासक्ताः नायकाः प्रजासु मुख्याः यस्य । सोऽतिसंधानपरो न भवति अतिसंधातुं च शक्यते । तं तादृग्भूतं जनपदं वर्धयेत् वृद्धिं नयेत् प्रयत्नेन । तस्मात् जनपदात् सर्वं सर्वाङ्गमपि राज्यं वर्धते वृद्धिं यातीति । उनि.

*[1]कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ।
खन्याकरो वनादानं शून्यानां च निवेशनम् ॥
[2]अष्टवर्गमिमं साधु स्वस्थवृत्तं विवर्धयेत् ।
जीवनार्थमिहाऽऽजीव्यैः कारयेत्करणान्वितैः ॥
[3]यया ययेह वर्धेत वृत्त्या क्षीणोऽपि पार्थिवः ।
तस्यां तस्यां न संरोधं कुर्यात्पण्योपजीविनाम् ॥
सुसंरक्षेत निपुणः सस्यं कण्टकशाखया ।
फलाय लगुडः कार्यो दस्युभोग्यमिदं जगत् ॥
आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् ।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥
पञ्चप्रकारमप्येतदपोह्य नृपतिर्भयम् ।
आददीत फलं काले त्रिवर्गपरिवृद्धये ॥
यथा गौः पाल्यते काले दुह्यते च तथा प्रजा ।
सिच्यते चीयते चैव लता पुष्पप्रदा यथा ॥
[4]लोके वेदे च कुशलः कुशलैः परिवारितः ।
आद्दतश्चिन्तयेद्राज्यं सबाह्याभ्यन्तरं नृपः ॥

---

* कौटिलीयार्थशास्त्रोक्तायां ( कौ. ६।१ ) कामन्दकीयेन समानार्थप्रायायां जनपदसंपदि 'अबालिशस्वामी' इति अकारप्रश्लेषसहितं पदं स्वीकृत्य श्रीमूलायां व्याख्यातम् । तद्वदेवात्रापि 'अमूर्खव्यसनिनायकः' इति अकारप्रश्लेषसहितं पदं स्वीकर्तुं शक्यम् । व्याख्याकृद्भ्यां तु न तथा स्वीकृतम् ।

(१) कानी. ४।५३ ; नीम. ५१.

(२) कानी. ४।५४ ; नीम. ५१ उत्त.

* एतदादीनां सप्तानां श्लोकानां व्याख्यानं 'स्वाम्यनुजीविवृत्तम्' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कानी. ५।७७ ; नन्द. ७।१५४ करो ( कर ) दानं शू ( दाने सै ).

(२) कानी. ५।७८ ; नन्द. ७।१५४ साधु ( साधुः ) वृत्तं विवर्ध ( चित्तो विचिन्त ) पू.

(३) कानी. ५।७९–८३.

(४) कानी. ६।१–२.

(१) एवमनुगतैः परितोषितैश्चानुजीविभिः परिवारितः सबाह्याभ्यन्तरं राष्ट्रं निरूपयेत् यथा स्वपरैर्नोपहन्यत इति । तदुपघातप्रतिविधानाय सर्गद्वयमुच्यते । तदेवाऽऽद्यश्लोकेन दर्शयति– लोके वेदे च कुशल इति । दृष्टव्यवहारो दृष्टशास्त्रश्चेत्यर्थः । स हि पापान्निघ्नन्नपि न संक्लिष्टचित्तो भवति । कुशलैः अनुजीविभिः । जम.

(२) प्रकृतिसंपत्प्रकरणे स्वामिप्रकृत्याभिगामिकात्मसंपत्तिगुणसंपादनेनाऽऽत्मा लब्धः । अमात्यादिप्रकृतीनां च स्वस्वगुणसंपादनेनाऽऽत्मलाभः संपन्नः । एवं सप्ताङ्गराज्यस्याऽऽत्मलाभः संपन्नः । पालनं च वाच्यम् । तदिहाभिधातुमाह– लोक इति । लोके लोकव्यवहारे । लोकव्यवहारश्च देशबलात् कालबलाच्चान्योऽन्यश्च भवति । तद्यथा मध्यदेशेऽन्यो धर्मः पारसिकादिषु चान्यः । तथा कृतयुगेऽन्यः त्रेतादिषु युगेषु चान्यः । इति लोकव्यवहारे कुशलः । वेदे च कुशल इत्यनेन लोकव्यवहारं वेदोक्तं च वीक्ष्य उभयाविरुद्धं व्यवहरेदिति भावः । तथा लोके वेदे च कुशलैः अनुजीविभिः परिवारित इति । आदृतः आदरपरः चिन्तयेत् पालनार्थं चिन्तां कुर्यात् । सबाह्याभ्यन्तरं बाह्याभ्यन्तरविभागेनावस्थितं राज्यम् । नृपः विजिगीषुः । उनि.

**आभ्यन्तरं शरीरं स्वं बाह्यं राष्ट्रमुदाहृतम् ।**
**अन्योन्याधारसंबन्धादेकमेवेदमिष्यते ॥**

(१) शरीरं स्वमिति । स्वामिप्रकृतिरित्यर्थः । बाह्यं राष्ट्रमुदाहृतं अमात्यादिकम् । राज्यशब्दः समुदायवृत्तिरप्यवयवेषु वर्तते देहपदवत् । बाह्याभ्यन्तरभावेन कल्पितमप्येकमेवेदमिष्यते अन्योन्याश्रयाश्रयिभावात् रथवत् । जम.

(२) राज्यस्य बाह्यान्तरविभागं दर्शयन्नाह– आभ्यन्तरमिति । आभ्यन्तरं राज्यं विजिगीषोः शरीरमेव स्वम् । तथा च कौटिल्यः– ‘ राजा राज्यमिति प्रकृतिसंक्षेपः ’ (कौ. ८।२) इति । बाह्यं राष्ट्रमेवोदाहृतं शेषाः प्रकृतयो राष्ट्रादेवोत्पद्यन्त इति । अन्योन्याधारसंबन्धादिति । राज्ञा विना न राष्ट्रम्, न राष्ट्रं विना राजा वर्तत इति । तस्मादेकमेवेदमिष्यत इति । उनि.

**[1]राज्याङ्गानां तु सर्वेषां राष्ट्राद्भवति संभवः ।**
**तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं प्रसाधयेत् ॥**

(१) अभिषिक्तः प्रथमं राष्ट्रमेव साधयेत्, पश्चात् तदङ्गानि, तदाह शुक्रः (? कामन्दकः) – राज्याङ्गानामिति । प्रसाधयेत् व्यवहारदर्शनादिभिः । रार. ७७

(२) तत्र बाह्यं राष्ट्रं प्रधानम्, शेषाणां तत उत्पत्तेरित्याह– राज्याङ्गानामिति । उक्तं च– ‘ कोशो दण्डः कुप्यं विष्टिर्वाहनं निचयाश्च जनपदादुत्तिष्ठन्ते । तेषामभावो जनपदाभावे । स्वाम्यमात्ययोश्चानन्तरः । ’ (कौ. ८।१) इति । तस्मात् सर्वप्रयत्नेन राष्ट्रमेव प्रसाधयेत् कण्टकोद्धरणेन । जम.

(३) एतदेव दर्शयन्नाह– राज्याङ्गेति । राज्याङ्गानां तु सर्वेषां अमात्यादीनां राष्ट्राद्भवति संभवः । राष्ट्रात् कोशः, कोशाच्चतुरङ्गो दण्डः, राष्ट्रस्य भूम्येकान्तरं मित्रम्, राष्ट्र एव स्थानीयं दुर्गम्, राष्ट्रादेव जानपदादयोऽमात्याः । तस्मात् सर्वप्रयत्नेन राजा राष्ट्रं प्रसाधयेत् । राष्ट्रलाभं पालनं च कुर्यादित्यर्थः । उनि.

**[2]लोकानुग्रहमन्विच्छन् शरीरमनुपालयेत् ।**
**राज्ञः संरक्षणं धर्मः शरीरं धर्मसाधनम् ॥**

(१) स्वशरीरसंरक्षणं चास्य लोकसंरक्षणार्थमेवेत्याह – लोकानुग्रहमित्यादि । लोकानुग्रहं लोकपालनम् । शरीरमनुपालयेत्, तस्य ह्यसंरक्षतो दूष्यैः शरीरोपघातात् । यद्येवं तर्हि किं लोकसंरक्षणेनेत्याह– राज्ञः संरक्षणं धर्म इति । स च शरीरसाध्य इत्यानुषङ्गिकं शरीरपालनम् । तस्मात् प्रधानत्वात् राष्ट्र एव कण्टकशोधनमस्मिन् सर्गेऽभिधीयते इति प्रकरणक्रमः । जम.

(२) अनेनाभिसंधिना शरीरपालनमपि राज्ञो धर्माय भवति । राज्ञः संरक्षणं प्रजासंरक्षणमेव धर्मः, नान्यः । तथा च कौटिल्यः– ‘ राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् । दक्षिणा वृत्तिसाम्यं तु दीक्षा तस्याभि-

(१) कानी. ६।३ ; रार. ७७ तु (च) शुक्रः ; नीम. ५०.

(२) कानी. ६।४.

षेचनम् ॥' (कौ. १।१९) । एवंभूतस्य धर्मस्य शरीरमेव साधनमिति धर्मार्थिना विजिगीषुणा स्वं शरीरं यत्नेन रक्षणीयमित्यर्थः । उनि.

**[1]धर्म्यामारेभिरे हिंसामृषिकल्पा महीभुजः ।**
**तस्मादसाधून् पापिष्ठान् निघ्नन् दोषैर्न लिप्यते ॥**

( १ ) तत्रापि हिंसा काचित् क्रियमाणा धर्मार्हा भवतीत्याह— धर्म्यामित्यादि । धर्मादनपेतां हिंसां पश्वालम्भनवत् । ऋषिकल्पाः मन्वादयो राजानः । असाधून् प्रजाबाधकान् । पापिष्ठान् असाधुतयैव । दोषैर्न लिप्यते, तेषां निग्रहेण भूयसो जनस्यानुग्रहात् व्याघ्रादिघातवत् । जम.

( २ ) प्रजारक्षणं चोरादिहिंसां विना न भवतीति तद्धिंसां प्रति शङ्कितान् प्रत्याह—धर्म्यामिति । धर्मादनपेतां धर्म्यां हिंसां पापिनां हननं आरेभिरे आरब्धवन्तः ऋषिकल्पाः ऋषिसमा एव राजानः । यथा महर्षयो यज्ञेषु पश्वालम्भनलक्षणं धर्मं कुर्वन्ति तथा राजर्षयोऽपि चोरादिनिग्रहरूपां धर्म्यामेव हिंसां कुर्वन्ति । तस्मात् असाधून् चोरपारदारिकादीन् अन्यानपि पापिष्ठान् स्वामिद्रोहकरादीन् हिंसन् दोषैर्न लिप्यत इत्यर्थः । उनि.

**[2]धर्मसंरक्षणपरो धर्मायार्थं विवर्धयेत् ।**
**ये ये प्रजाः प्रबाधेरंस्तांस्तान्हन्यान्महीपतिः ॥**

( १ ) कान् पुनस्तान् हन्यादित्याह— धर्मसंरक्षणपर इत्यादि । यथायथं लोकस्येज्याध्ययनादिको धर्मः संरक्ष्यः । धर्मायेति । आत्मनो राजसूयादिप्रवर्तनार्थम् । विवर्धयन्, अर्जयन्नित्यर्थप्राप्तम् । ये ये प्रजाः प्रबाधेरन्निति । अप्रबाधकशासने तु स्यादेव दोषलेपनमिति भावः । जम.

( २ ) वर्णानामाश्रमाणां च स्वधर्मसंरक्षणपरः, धर्मसंकरनिषेधात् । धर्मायार्थं विवर्धयेत् अर्थस्यार्जनं वर्धनं च धर्माभिसंधिनैव । ये ये प्रजाविरोद्धारस्तांस्तान् हन्यात् महीपतिः । एवं हिंसा दोषाय न भवतीत्यर्थः । उनि.

(१) कानी. ६।५ ; नीम. ५० दोषै ( पापै ) उत्त.

(२) कानी. ६।६ ; जम. र्धयेत् ( र्धयन् ) ; उनि. प्रजाः प्रबाधेरं ( प्रजाविरोद्धार ) ; नीम. ५० हन्या ( छिन्द्या ).

**[1]यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।**
**स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥**

( १ ) ननु शिष्टसंरक्षणं तावद्धर्मो युज्यते, अशिष्टनिग्रहस्तु कथम्? इति चेत्, आगमप्रामाण्यात् । यदाह— यमार्या इत्यादि । यमिति अशिष्टनिग्रहम् । आर्याः ये उपायविकल्पे कृतक्षणाः । यं विगर्हन्ति शिष्टनिग्रहम् । जम.

( २ ) धर्मस्वरूपमभिधातुमाह— यमिति । यं आर्याः साधवः आगमवेदिनः आगमज्ञाः शंसन्ति विधिनिषेधरूपमनुष्ठानं स धर्मः । एवं च देशकालजातिभेदेषु विरुद्धं यं धर्मं विगर्हन्ति तमधर्मं प्रचक्षत इति । उनि.

**धर्माधर्मौ विजानन् हि शासनेऽभिरतः सताम् ।**
**प्रजा रक्षेन्नृपः साधु हन्याच्च परिपन्थिनः ॥**

( १ ) धर्माधर्मौ विजानन्निति सद्भिः शंसितगर्हितावेतौ विजानन् । शासनेऽभिरतः सतां 'करणीयमिदम्, नेदम्' इत्यस्मिन् वृद्धानुशासने स्थितः । परिपन्थिनः चोरादिकण्टकान् । जम.

( २ ) धर्माधर्मौ देशकालानुलोमप्रतिलोमतः प्रणिहितौ अवधारयन् हि स्फुटं शासने उपदेशे आभिमुख्येन रतः सतां आचार्याणाम्, प्रजाः साधु यथा भवति तथा रक्षेत् उपद्रवेभ्यः, हन्याच्च परिपन्थिनः प्रजोपद्रवकरानिति । उनि.

**[2]राज्योपघातं कुर्वीरन् ये पापा राजवल्लभाः ।**
**एकैकशः संहता वा तान् दूष्यान् परिचक्षते ॥**

( १ ) दूष्या अपि राज्यतोदनात् कण्टका हन्तव्या इत्युपदिशन्नाह— राज्योपघातमित्यादि । राजवल्लभाः

(१) कानी. ६।७–८ ; नीम. ५०.

(२) कानी ६।९ ; नीम. ५० राज्यो ( राष्ट्रो ) संहता ( संहतान् ) तान् दूष्यान् ( दूष्यांस्तान् ).

प्रागेव दोषोत्पत्तेः, दोषोत्पत्तौ तु राज्ञो दूषणार्हा दूष्याः। जम.

( २ ) दूष्यलक्षणमभिधातुमाह– राज्येति । परिचक्षते, पूर्वाचार्या इति शेषः । उनि.

[1]दूष्यानुपांशुदण्डेन हन्याद्राजाऽविलम्बितम् ।
प्रदूष्य वा प्रकाशं हि लोकविद्वेषमागतान् ॥

( १ ) ते तु दृढभक्तिताख्यापनार्थं प्रकाशं न हन्तव्या इत्याह– दूष्यानुपांशुदण्डेनेति । विषशस्त्रादिना हन्यादेवाविलम्बितम्, अन्यथा त एवैनं प्रतीपं हन्युः । प्रदूष्य वेति । दोषेण लोकविद्विष्टान् कृत्वा प्रकाशं वा हन्यात् । जम.

( २ ) दूष्येषु कर्तव्यमभिधातुमाह– दूष्यानिति । उपांशुदण्डश्च प्रच्छन्नवधः गुप्तविषदानयोगकृतः । अथ च प्रदूष्य उपायैर्दोषयुक्तान् कृत्वा लोकविद्वेषमागतान् । उनि.

[2]राजा रहसि दूष्यं हि दर्शनायोपमन्त्रयेत् ।
गूढशस्त्रा विशेयुस्तं पश्चादासज्जिता नराः ॥

(१) तद्दूषणोपायमाह– राजेत्यादि । रहसि विविक्ते दर्शनाय उपमन्त्रयेत् आह्वयेत् । गूढशस्त्राः अदृश्यशस्त्राः विशेयुः । तमिति रहोदेशम् । राजप्रणिहिताः पश्चादासज्जिताः दूष्यस्य पृष्ठतः संश्लिष्टाः । जम.

( २ ) रहसि एकान्ते मध्यमकक्षायामित्यर्थः, दूष्यान् उक्तलक्षणान् दर्शनाय उपमन्त्रयेत् आह्वयेत् । गूढशस्त्राः प्रच्छादितशस्त्रकाः, पश्चात् तेषां आसंज्ञिताः (?) राज्ञैव प्रागेव तैर्दूष्यैः संहतिं नीताः तदीयत्वेन ख्यापिताः तान् अनु प्रविशेयुरिति । उनि.

---

(१) कानी. ६।१० ; नीम. ५० उत्तरार्धे ( अदृश्यं वा प्रकाशं वा लोकद्वेषं समाश्रितान् ॥ ).

(२) कानी. ६।११ ; उनि. दूष्यं ( दूष्यान् ) स्तं ( स्तान् ) सज्जिता ( संज्ञिता ).

[1]विश्वस्ता हि विचिन्वीयुर्द्वाःस्थाः कक्ष्यान्तरागतान् ।
ते शस्त्रग्राहिणो ब्रूयुः प्रयुक्ताः स्म इति स्फुटम् ॥

( १ ) प्रतीहारकार्यमाह– विश्वस्ता इति । विश्वस्तान् यद्गमनेन न स्वामिभयादि तान् पक्षान्तरं गतान् प्रत्यर्थिपक्षोपगतान् विचिन्वीरन् एकमन्तर्गमयेयुः एकं द्वारेऽवरुन्धन्ति( ? रुन्ध्युः ) । ते चास्मिन्नर्थे वयं नियुक्ता इति ब्रूयुः । समागतसज्जनमानायेत्यभिप्रायः । रार. ४३

( २ ) विश्वस्ता इति गूढशस्त्रैः प्राक् कृतसंधाना दौवारिकाः विचिन्वीयुः अन्तःप्रवेशाय शोधयेयुः । कक्ष्यान्तरागतान् मध्यमकक्ष्याप्राप्तान् । प्रयुक्ताः स्म इति दूष्येण भर्त्रा राजवधार्थम् । जम.

( ३ ) विशत इति । तान् गूढशस्त्रान् विचिन्वीयुः शोधयेयुः द्वास्थाः प्रतीहाराः कक्षान्तरागतान् मध्यमकक्षान्तरप्राप्तान् । ते च शस्त्रग्राहिणोऽपि पृष्टाः सन्तः संकेतात् ब्रूयुः– प्रयुक्ताः स्मो दूष्यैः स्वामिवधायेति स्फुटम् । उनि.

[2]इत्यादि दूष्यान् संदूष्य प्रजानामभिवृद्धये ।
विनयञ् श्रियमुत्कर्षं राजा शल्यं समुद्धरेत् ॥

( १ ) संदूष्य प्रजानामभिवृद्धये । एवं च नामादुष्टदूषणं नाधर्माय । विनयन् विविधप्रकारेणोत्कर्षं नयन् । श्रियं आत्मनः प्रजायाश्च । शल्यमुद्धरेत् दण्डेन, अन्यथा कण्टकशालितया प्रजा क्षीयमाणा कथं फलाय स्यात् ? जम.

---

(१) कानी. ६।१२ ; उनि. विश्वस्ता हि ( विशतस्तान् ) कक्ष्या ( कक्षा ) ; रार. ४३ पूर्वार्धे (विश्वस्तांस्तान्विचिन्वीरन् द्वास्थाः पक्षान्तरं गतान् । ) ग्राहिणो ( वाहका ).

(२) कानी. ६।१३ ; उनि. विनयञ् श्रिय ( निनीषुः पद ).

(२) इत्येवमादिकैः प्रयोगैः दूष्यान् स्वामिद्रोहसंपन्नान् संदूष्य हत्वा प्रजावृद्धये, न द्वेषात्, निनीषुः नेतुमिच्छुः पदं राज्यं महदुत्कर्षं अभिवृद्धिं राजा शल्यं दूष्यादिकं समुद्धरेत् छेदयेत्। उनि.

[1]यथा बीजाङ्कुरः सूक्ष्मः परिपुष्टोऽभिरक्षितः।
काले फलाय भवति साधु तद्वदियं प्रजा॥

(१) तदेव प्रतिपादयन्नाह— यथेत्यादि। तद्वदिति अभिरक्षिता परिपुष्टा च। जम.

(२) प्रजावृद्धिः फलाय भवतीति दर्शयन्नाह— यथेति। सम्यक् बीजाङ्कुरः सूक्ष्मो यथाऽभिरक्षितः निष्पत्तिकाले फलाय भवति साधु, तद्वदियं प्रजा साधु रक्षिता काले फलाय भवतीति। उनि.

[2]उद्वेजयति तीक्ष्णेन मृदुना परिभूयते।
तस्माद्यथाऽर्हतो दण्डं नयेत्पक्षमनाश्रितः॥

(१) तत्रापि यथापराधदण्डप्रणयनेनैवाभिरक्ष्यते, नान्यथेति प्रागुक्तमप्यर्थं पुनर्दृढीकरणार्थमाह— उद्वेजयतीत्यादि। पक्षमनाश्रितः इच्छाद्वेषावपास्य। जम.

(२) प्रजारक्षणं दुष्टदण्डात् भवति। तच्च शास्त्रोक्तं श्रेय इति दर्शयन्नाह— उद्वेजयतीति। तीक्ष्णेन न्यायादधिकेन दण्डेन उद्वेजयति, प्रजा इति शेषः। मृदुना च अनुकम्पया प्रमाणहीनेन परिभूयते, भयाभावात्। तस्मात् तेन कारणेन यथाऽर्हतो दण्डं यो यं दण्डमर्हति तस्य तं नयेत् पक्षं पक्षपातं अनाश्रितः। तथा च कौटिल्यः— 'तीक्ष्णदण्डो भूतानामुद्वेजनीयो भवति। मृदुदण्डः परिभूयते। यथार्हदण्डः प्रजा अर्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वा वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान्?' (कौ. १।४) इति। उनि.

(१) कानी. ६।१४; उनि. यथा (सम्यक्); नीम. ५० साधु (साधुः).

(२) कानी. ६।१५; नीम. ५०.

## शुक्रनीतिः

### भूमहिमा

*[1]राज्ञः साधारणास्त्वन्ये न शक्ता भूप्रसाधने॥
खनिः सर्वधनस्येयं देवदैत्यविमर्दिनी।
भूम्यर्थे भूमिपतयः स्वात्मानं नाशयन्त्यपि॥
उपभोगाय च धनं जीवितं येन रक्षितम्।
न रक्षिता तु भूर्येन किं तस्य धनजीवितैः॥

### भूमाननिर्णयः

[2]भवेत्क्रोशात्मको ग्रामो रूप्यकर्षसहस्रकः।
ग्रामार्धकं पल्लिसंज्ञं पल्ल्यर्धं कुम्भसंज्ञकम्॥

क्रोशात्मकः क्रोशैकपरिच्छिन्नः रूप्यकर्षसहस्रकः सहस्ररौप्यमुद्राराजस्वः भूभागः ग्रामो भवेत्। ग्रामार्धकं अर्धग्रामः पल्लिसंज्ञं पल्लीति नाम्ना प्रसिद्धम्। तथा पल्ल्यर्धं अर्धपल्ली कुम्भसंज्ञकं कुम्भनाम्ना प्रसिद्धम्। शुनीटी.

करैः पञ्चसहस्रैर्वा क्रोशः प्रोक्तः प्रजापतेः।
हस्तैश्चतुःसहस्रैर्वा मनोः क्रोशस्य विस्तरः॥

पञ्चसहस्रैः करैः हस्तैः परिच्छिन्नः भूभागः क्रोशः प्रजापतेः प्रोक्तः कथितः। प्रजापतेरिति वर्तमानक्तप्रत्यययोगे कर्तरि षष्ठी। चतुःसहस्रैः हस्तैः क्रोशस्य विस्तरः परिमाणं मनोः, प्रोक्त इति अध्याहार्यम्। अत्रापि मनोरिति कर्तरि षष्ठी। शुनीटी.

सार्धद्विकोटिहस्तैश्च क्षेत्रं क्रोशस्य ब्रह्मणः।
पञ्चविंशशतैः प्रोक्तं क्षेत्रैस्तद्धि निवर्तनम्॥

सार्धद्विकोटिहस्तैः क्रोशस्य क्षेत्रं क्रोशमिता भूरिति, तथा पञ्चविंशशतैः क्षेत्रैः क्रोशमितभूभागैः तत् हि प्रसिद्धं निवर्तनं नाम ब्रह्मणः प्रोक्तम्। ब्रह्मण इति कर्तरि षष्ठी। शुनीटी.

मध्यमामध्यमपर्वदैर्घ्यं यच्च तदङ्गुलम्।
यवोदरैरष्टभिस्तद्दैर्घ्यं स्थौल्यं तु पञ्चभिः॥

* अस्य सार्धश्लोकद्वयस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११४३) द्रष्टव्यम्।

(१) शुनी. १।१७८–१८०.

(२) शुनी. १।१९३–२१२.

मध्यमाया अङ्गुल्याः मध्यमं यत्पर्व तस्य दैर्घ्ये दीर्घपरिमाणं तत् अङ्गुलम्, उक्तमिति शेषः। तथा अष्टभिः यवानां उदरैः मध्यभागैः दैर्घ्ये दैर्घ्ये परिमितम्, तथा पञ्चभिः यवोदरैः स्थौल्यं स्थूलत्वे परिच्छिन्नमित्यर्थः, यत् तदपि अङ्गुलमिति केषांचिन्मतमिति भावः। शुनीटी.

**चतुर्विंशत्यङ्गुलैस्तैः प्राजापत्यः करः स्मृतः।**
**स श्रेष्ठो भूमिमाने तु तदन्यास्त्वधमा मताः॥**

तैः चतुर्विंशत्या अङ्गुलैः प्राजापत्यः प्रजापतिसंमतः करः हस्तः स्मृतः। भूमिमाने भूपरिमाणे तु सः करः श्रेष्ठः, तदन्यास्तु कराः अधमा मताः कथिताः। शुनीटी.

***चतुःकरात्मको दण्डो लघुः पञ्चकरात्मकः।**
**तदङ्गुलं पञ्चयवैर्मानवं मानमेव तत्॥**

चतुःकरात्मकः चतुर्हस्तमितः परिमाणविशेषः दण्डः। पञ्चकरात्मकस्तु लघुः लघुसंज्ञया कथितः। तस्य दण्डस्य लघोर्वा अङ्गुलं पञ्चभिर्यवैः, परिच्छिन्नमिति शेषः। तत् मानवं मनुसंमतं मानं परिमाणम्। अथवा मानवं मनुष्यसंबन्धीत्यर्थः। शुनीटी.

**वसुषण्मुनिसंख्याकैर्यवैर्दण्डः प्रजापतेः।**
**यवोदरैः षट्शतैस्तु मानवो दण्ड उच्यते॥**

वसुषण्मुनिसंख्याकैः (७६८) अष्टषष्ट्यधिकसप्तशतसंख्यैरित्यर्थः, यवैः एकैकशः स्थापितैः परिच्छिन्नः परिमाणविशेषः (दण्डः), भवतीति शेषः। इति प्रजापतेर्मतमित्यर्थः। षट्शतैः यवानां उदरैः मध्यभागैः, एकैकशः स्थापितैरिति भावः, परिच्छिन्नः परिमाणविशेषः मानवः दण्ड उच्यते। शुनीटी.

***पञ्चविंशतिभिर्दण्डैरुभयोस्तु निवर्तनम्।**
**त्रिंशच्छतैरङ्गुलैर्यवैस्त्रिपञ्चसहस्रकैः॥**
**सपादशतहस्तैश्च मानवं तु निवर्तनम्।**
**ऊनविंशतिसाहस्रैर्द्विशतैश्च यवोदरैः॥**
**चतुर्विंशशतैरेव ह्यङ्गुलैश्च निवर्तनम्।**
**प्राजापत्यं तु कथितं शतैश्चैव करैः सदा॥**

उभयोः दैर्घ्यस्थौल्ययोः यथाक्रमं त्रिंशता शतैः दैर्घ्ये त्रिंशच्छताङ्गुलपरिमितैरित्यर्थः, स्थौल्ये च त्रिपञ्चसहस्रकैः यवैः त्रिपञ्चसहस्रयवपरिमितैः पञ्चविंशतिभिः दण्डैः निवर्तनं भवति।

सपादशतहस्तैः पञ्चविंशत्यधिकशतहस्तैः वा ऊनविंशतिसाहस्रैः द्विशतैश्च द्विशताधिकैकोनविंशतिसहस्रैः यवोदरैः एकशः स्थापितैः यवमध्यभागैः मानवं मनुप्रोक्तं निवर्तनं परिमाणविशेष इत्यर्थः, भवति।

चतुर्विंशशतैः चतुर्विंशतिशतैरङ्गुलैः एव, अथवा एवशब्दोऽत्र विकल्पवाचीति शतैः करैः हस्तैः प्राजापत्यं ब्रह्मप्रोक्तं निवर्तनं सदा कथितम्। हस्तस्य चतुर्विंशत्यङ्गुलपरिमाणत्वादिति भावः। शुनीटी.

**सपादषट्शता दण्डा उभयोश्च नि(? योः परि)वर्तने।**
**निवर्तनान्यपि सदोभयोर्वै पञ्चविंशतिः॥**

* चतुःकरात्मको दण्डः प्राजापत्यः। तदपेक्षया पञ्चकरात्मको मानवो दण्डो लघुः अल्पीयानिति प्रथमार्धार्थः। मानवदण्डे करसंख्याधिक्येऽपि मानवकरस्य प्राजापत्यकरापेक्षयाऽल्पीयस्त्वान्मानवदण्डस्याल्पीयस्त्वमुपपन्नम्। तदेवोत्तरश्लोके स्पष्टीकरिष्यते। जीवानन्दस्तु भ्रान्तः।

* पञ्चविंशत्या इति वक्तव्ये पञ्चविंशतिभिरिति आर्षत्वात् साधु। तथा 'शतेनैव करैः' इति वक्तव्ये 'शतैश्चैव करैः' इत्यप्यार्षम्। पञ्चविंशत्या दण्डैः निवर्तनाख्यः परिमाणविशेषो मनुप्रजापत्युभयमतेन संपद्यते इत्यर्थः। तत्राऽऽदौ मनुमते निवर्तनपरिमाणं क्रमेण अङ्गुलयवहस्ताख्यपरिमाणैः विशदीकरोति— त्रिंशेत्यादिना। त्रिसहस्रसंख्याकैरङ्गुलैः पञ्चदशसहस्रैर्यवैः सपादशतसंख्याकैर्हस्तैर्वा मनुमते निवर्तनाख्यं परिमाणं भवतीत्यर्थः। इदानीं प्रजापतिसंमतं निवर्तनाख्यं परिमाणं क्रमेण यवाङ्गुलकरैः विवृणोति— ऊनेत्यादिना सार्धेन। द्विशताधिकैकोनविंशतिसहस्रैर्यवैः चतुर्विंशतिशतैरङ्गुलैः शतसंख्याकैः करैर्वा प्रजापतिमते निवर्तनाख्यं परिमाणं संपद्यते इत्यर्थः। अत्रत्यं जीवानन्दव्याख्यानं तु भ्रममूलम्। एवमन्येऽपि भ्रमा उन्नेयाः।

उभयोश्च मनुप्रजापत्योः संबन्धिनी निवर्तने, कथिते इति शेषः । सपादषट्शताः पञ्चविंशत्यधिकषट्शताः दण्डाः पूर्वोक्तमानविशेषाः उभयोरेव मतयोः पञ्चविंशतिः निवर्तनानि सदा भवन्ति । शुनीटी.

**पञ्चसप्ततिसाहस्रैरङ्गुलैः परिवर्तनम् ।**
**मानवं षष्टिसाहस्रैः प्राजापत्यं तथाऽङ्गुलैः ॥**

पञ्चसप्ततिसाहस्रैः अङ्गुलैः मानवं परिवर्तनं मानविशेषः, तथा षष्टिसाहस्रैः अङ्गुलैः प्राजापत्यं परिवर्तनम्, भवतीति शेषः । शुनीटी.

**पञ्चविंशाधिकैर्हस्तैरेकत्रिंशच्छतैर्मनोः ।**
**परिवर्तनमाख्यातं पञ्चविंशशतैः करैः ॥**

**प्राजापत्यं पादहीनचतुर्लक्षयवैर्मनोः ।**
**अशीत्यधिकसाहस्रचतुर्लक्षयवैः परम् ॥**

पंञ्चविंशाधिकैः एकत्रिंशच्छतैः हस्तैः मनोः संबन्धीत्यर्थः, परिवर्तनम्, तथा पञ्चविंशशतैः करैः प्राजापत्यं ब्रह्मसंमतं परिवर्तनं आख्यातं कथितम् । किंच, पादहीनचतुर्लक्षयवैः चतुर्थांशन्यूनचतुर्लक्षयवैः मनोः, संमतमिति शेषः, परिवर्तनम् । तथा अशीतिसहस्राधिकचतुर्लक्षयवैः परं अन्यत् प्राजापत्यमित्यर्थः, परिवर्तनं आख्यातं कथितम् । शुनीटी.

**निवर्तनानि द्वात्रिंशन्मनुमानेन तस्य वै ।**
**चतुःसहस्रहस्ताः स्युर्दण्डाश्चाष्टशतानि हि ॥**

तस्य मनोरित्यर्थः, संबन्धिनः संमता इत्यर्थः, अष्टशतानि दण्डाः चतुःसहस्राः हस्ताश्च चतुःसहस्रहस्ताधिकाष्टशतदण्डा इत्यर्थः, मनुमानेन मनोः परिमाणेन द्वात्रिंशत् निवर्तनानि स्युः भवेयुः । शुनीटी.

**पञ्चविंशतिभिर्दण्डैर्भुजः स्यात्परिवर्तने ।**
**करैरयुतसंख्याकैः क्षेत्रं तस्य प्रकीर्तितम् ॥**

परिवर्तने पूर्वोक्ते परिमाणविशेषे विषये पञ्चविंशतिभिः दण्डैः भुजः स्यात् । तस्य भुजस्य अयुतसंख्याकैः दशसहस्रैः करैः, परिच्छिन्नं स्थानमिति शेषः, क्षेत्रं प्रकीर्तितं कथितम् । शुनीटी.

प्रजास्वामिकभूभागहरणविधिनिषेधविवेकः

**चतुर्भुजैः समं प्रोक्तं कष्टभूपरिवर्तनम् ।**
**प्राजापत्येन मानेन भूभागहरणं नृपः ॥**

**सदा कुर्याच्च स्वापत्तौ मनुमानेन नान्यथा ।**
**लोभात्संकर्षयेद्यस्तु हीयते सप्रजो नृपः ॥**

कष्टः क्लेशजनकं भूपरिवर्तनं भुवः भूमेः परिवर्तनं तदाख्यमानविशेषः चतुर्भुजैः समं प्रोक्तं कथितम् । शतदण्डपरिमितमित्यर्थः । नृपः प्राजापत्येन पूर्वोक्तेन मानेन स्वापत्तौ स्वस्य आपत्तौ बाधायां सत्यां क्षतिसंभवे इत्यर्थः, मनुमानेन भूभागहरणं भूमिपरिच्छेदं सदा कुर्यात्, अन्यथा न । यस्तु नृपः लोभात् संकर्षयेत् भूभागनिर्णयेन प्रजाः पीडयेत् स तु सप्रजः ससंतानः हीयते भ्रश्यति । शुनीटी.

**न दद्याद्व्यङ्गुलमपि भूमेः स्वत्वनिवर्तनम् ।**
**वृत्त्यर्थं कल्पयेद्वाऽपि यावद्ग्राहस्तु जीवति ॥**

राजा भूमेः द्व्यङ्गुलमपि अङ्गुलद्वयपरिमितामपि भूमिमित्यर्थः, न दद्यात्, कस्मैचिदपीति शेषः । वाऽपि अथवा गृह्णातीति ग्राहः ग्रहीता यावज्जीवति तावत्तस्य वृत्त्यर्थं जीविकार्थं स्वत्वनिवर्तनं स्वत्वस्य त्यागं कल्पयेत् । अयमर्थः– अल्पामपि भूमिं कस्मैचिन्न दद्यात्, यदि दद्यात् तदा ग्रहीतुर्जीवनावधिस्तत्स्वत्वत्याग इति । शुनीटी.

**गुणी तावद्देवतार्थं विसृजेच्च सदैव हि ।**
**आरामार्थं गृहार्थं वा दद्याद् दृष्ट्वा कुटुम्बिनम् ॥**

गुणी नृपः देवतार्थं देवालयस्थापनार्थं सदैव विसृजेत् दद्यात्, भूमिमिति शेषः । तथा कुटुम्बिनं गृहिणं दृष्ट्वा विविच्य तस्य आरामार्थं उद्यानार्थं वा गृहार्थं गृहनिर्माणार्थं दद्याद्वा । वाशब्दोऽवधारणे । दानं च जीवनावधीति बोद्धव्यम्, अन्यथा पूर्ववाक्यविरोधादिति । शुनीटी.

राष्ट्रसंग्रहविधिः नियोज्यानां भृत्यानां अमात्या-
दीनां गुणदोषाश्च

*[1]सर्वविद्याकलाभ्यासे शिक्षयेद्भृतिपोषितान् ॥
समाप्तविद्यं संदृष्ट्वा तत्कार्ये तं नियोजयेत् ।
विद्याकलोत्तमान् दृष्ट्वा वत्सरे पूजयेच्च तान् ॥
विद्याकलानां वृद्धिः स्यात्तथा कुर्यान्नृपः सदा ।
पृष्ठाग्रगान् क्रूरवेषान्नतिनीतिविशारदान् ॥
सिद्धास्त्रनग्रशस्त्रांश्च भटानारान्नियोजयेत् ।
पुरे पर्यटयेन्नित्यं गजस्थो रञ्जयन् प्रजाः ॥
राजयानारूढितः किं राज्ञा श्वा न समोऽपि च ।
शुना समो न किं राजा कविभिर्भाव्यतेऽञ्जसा ॥
अतः स्वबान्धवैर्मित्रैः स्वसाम्यप्रापितैर्गुणैः ।
प्रकृतिभिर्नृपो गच्छेन्न नीचैस्तु कदाचन ॥
मिथ्यासत्यसदाचारैर्नीचः साधुः क्रमात्स्मृतः ।
साधुभ्योऽतिस्वमृदुत्वं नीचाः संदर्शयन्ति हि ॥
ग्रामान् पुराणि देशांश्च स्वयं संवीक्ष्य वत्सरे ।
अधिकारिगणैः काश्च रञ्जिताः काश्च कर्षिताः ॥
प्रजास्ताः साधुभूतेन व्यवहारं विचिन्तयेत् ।
न भृत्यपक्षपाती स्यात्प्रजापक्षं समाश्रयेत् ॥
प्रजाशतेन संद्विष्टं संत्यजेदधिकारिणम् ।
अमात्यमपि संवीक्ष्य सकृदन्यायगामिनम् ॥
एकान्ते दण्डयेत्स्पष्टमभ्यासागस्कृतं त्यजेत् ।
अन्यायवर्तिनां राज्यं सर्वस्वं च हरेन्नृपः ॥
+[2]साहसाधिपतिं चैव ग्रामनेतारमेव च ।
भागहारं तृतीयं तु लेखकं च चतुर्थकम् ।
शुल्कग्राहं पञ्चमं च प्रतिहारं तथैव च ॥
षट्कमेतन्नियोक्तव्यं ग्रामे ग्रामे पुरे पुरे ॥

* अस्याः सार्धदशश्लोक्या व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे ( पृ. ११४८–११४९ ) द्रष्टव्यम् ।

\+ एतदादेः सार्धनवश्लोक्याः व्याख्यानं 'राज्ञः सहायाः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) शुनी. १।३६७–३७७.
(२) शुनी. २।१२०–१२१.

[1]प्रजा नष्टा न हि भवेत्तथा दण्डविधायकः ।
नातिक्रूरो नातिमृदुः साहसाधिपतिश्च सः ॥
आधर्षकेभ्यश्चौरेभ्यो ह्यधिकारिगणात्तथा ।
प्रजासंरक्षणे दक्षो ग्रामपो मातृपितृवत् ॥
वृक्षान् संपुष्य यत्नेन फलं पुष्पं विचिन्वति ।
मालाकार इवात्यन्तं भागहारस्तथाविधः ॥
गणनाकुशलो यस्तु देशभाषाप्रभेदवित् ।
असंदिग्धमगूढार्थं विलिखेत्स च लेखकः ॥
शस्त्रास्त्रकुशलो यस्तु दृढाङ्गश्च निरालसः ।
यथायोग्यं समाहूयात्प्रणम्रः प्रतिहारकः ॥
यथा विक्रयिणां मूलधननाशो भवेन्न हि ।
तथा शुल्कं तु हरति शौल्किकः स उदाहृतः ॥
[2]भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः ।
ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा ॥
शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः ॥
*[3]मद्यपः कितवः स्तेनो जारश्चण्डश्च हिंसकः ।
त्यक्तवर्णाश्रमाचारो नास्तिकः शठ एव हि ॥
मिथ्याभिशापकः कर्णेजपार्यदेवदूषकौ ।
असत्यवाङ् न्यासहारी तथा वृत्तिविघातकः ॥
अन्योदयासहिष्णुश्च ह्युत्कोचग्रहणे रतः ।
अकार्यकर्ता मन्त्राणां कार्याणां भेदकस्तथा ॥
अनिष्टवाक् परुषवाग्जलारामप्रबाधकः ।
नक्षत्रसूची राजद्विट् कुमन्त्री कूटकार्यवित् ॥
कुवैद्योऽमङ्गलाशौचशीलो मार्गनिरोधकः ।
कुसाक्ष्युद्धतवेषश्च स्वामिद्रोही व्ययाधिकः ॥
अग्निदो गरदो वेश्यासक्तः प्रबलदण्डकृत् ।
तथा पाक्षिकसभ्यश्च बलाल्लिखितग्राहकः ॥
अन्यायकारी कलहशीलो युद्धे पराङ्मुखः ।
साक्ष्यलोपी पितृमातृसतीस्त्रीमित्रद्रोहकः ॥

* एतदादीनां 'नृपोऽपि विनश्यति' इत्यन्तानां श्लोकानां व्याख्यानं 'उपायाः– दण्डः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) शुनी. २।१७०–१७५.
(२) शुनी. २।४२८–४२९.
(३) शुनी. ४।१।९८–११४.

असूयकः शत्रुसेवी मर्मभेदी च वञ्चकः ।
स्वकीयद्विड्गुप्तवृत्तिर्वृषलो ग्रामकण्टकः ॥
विना कुटुम्बभरणात्तपोविद्यार्थिनः सदा ।
तृणकाष्ठादिहरणे शक्तः सन् भैक्ष्यभोजकः ॥
कन्याया अपि विक्रेता कुटुम्बवृत्तिह्रासकः ।
अधर्मा सूचकश्चापि राजानिष्टमुपेक्षकः ॥
कुलटा पतिपुत्रघ्नी स्वतन्त्रा वृद्धनिन्दिता ।
गृहकृत्योज्झिता नित्यं दुष्टाचाराप्रियस्नुषा ।
स्वभावदुष्टानेतान् हि ज्ञात्वा राष्ट्राद्विवासयेत् ॥
द्वीपे निवासितव्यास्ते बद्ध्वा दुर्गोदरेऽथवा ।
मार्गसंस्करणे योज्याः कदन्नन्यूनभोजनाः ॥
तत्तज्जात्युक्तकर्माणि कारयीत च तैर्नृपः ॥
एवंविधानसाधूंश्च संसर्गेण च दूषितान् ।
दण्डयित्वा च सन्मार्गे शिक्षयेत्तान्नृपः सदा ॥
राज्ञो राष्ट्रस्य विकृतिं तथा मन्त्रिगणस्य च ।
इच्छन्ति शत्रुसंबन्धाद्ये तान् हन्याद्धि द्राङ्नृपः ॥
नेच्छेच्च युगपद्ग्रासं गणदौष्ट्ये गणस्य च ।
एकैकं घातयेद्राजा वत्सोऽश्नाति यथा स्तनम् ॥
अधर्मशीलो नृपतिर्यदा तं भीषयेज्जनः ।
धर्मशीलातिबलवद्रिपोराश्रयतः सदा ॥
यावत्तु धर्मशीलः स्यात्स नृपस्तावदेव हि ।
अन्यथा नश्यते लोको द्राङ्नृपोऽपि विनश्यति ॥

[1]अथ मिश्रे तृतीयं तु राष्ट्रं वक्ष्ये समासतः ।
स्थावरं जङ्गमं चापि राष्ट्रशब्देन गीयते ॥

अथ अनन्तरं मिश्रे अध्याये तृतीयं राष्ट्रं राज्यप्रकरणं समासतः संक्षेपेण वक्ष्ये कथयिष्यामि । राष्ट्रशब्देन स्थावरं स्थितिशीलं वृक्षपर्वतादि जङ्गमं गोमनुष्यादिकं च गीयते कथ्यते । शुनीटी.

यस्याधीनं भवेद्यावत्तद्राष्ट्रं तस्य वै भवेत् ॥

यस्य राज्ञः यावत् यत्परिमितं राज्यं अधीनं तस्य तत् राष्ट्रं भवेत् । शुनीटी.

(१) शुनी. ४।३।१–२.



वर्णजात्याश्रमविवेकः

[1]चतुर्धा भेदिता जातिर्ब्रह्मणा कर्मभिः पुरा ।
तत्तत्सांकर्यासांकर्यात्प्रतिलोमानुलोमतः ।
जात्यानन्त्यं तु संप्राप्तं तद्वक्तुं नैव शक्यते ॥

पुरा पूर्वकाले ब्रह्मणा कर्मणा तत्तज्जातिविशेषनिष्ठकार्येण चतुर्धा जातिः भेदिता ब्राह्मणक्षत्रियवैश्यशूद्ररूपेण विभक्ता । तेषां तेषां च सांकर्यासांकर्यात् परस्परमिश्रणामिश्रणात् तथा प्रतिलोमानुलोमतः प्रातिलोम्येन आनुलोम्येन च जात्यानन्त्यं जातीनामानन्त्यं असंख्यत्वं संप्राप्तं जातम् । तत् वक्तुं कथयितुं नैव शक्यते । शुनीटी.

मन्यन्ते जातिभेदं ये मनुष्याणां तु जन्मना ।
त एव हि विजानन्ति पार्थक्यं नामकर्मभिः ॥

ये जन्मना जननानुसारेण मनुष्याणां जातिभेदं मन्यन्ते त एव नामकर्मभिः नामभिः कर्मभिश्च, मनुष्याणामिति शेषः, पार्थक्यं विभिन्नतां विजानन्ति हि । शुनीटी.

जरायुजाण्डजा स्वेदोद्भिज्जा जातिः सुसंग्रहात् ।
उत्तमो नीचसंसर्गाद्भवेन्नीचस्तु जन्मना ॥

जातिः सुसंग्रहात् सुसंक्षेपात् जरायुजा अण्डजा स्वेदजा तथा उद्भिज्जा इति चतुर्धा, भवतीति शेषः । उत्तमः उत्कृष्टजातिः नीचसंसर्गात् जन्मना उत्पत्त्या नीचस्तु नीच एव भवेत् । शुनीटी.

नीचो भवेन्नोत्तमस्तु संसर्गाद्वाऽपि जन्मना ।
कर्मणोत्तमनीचत्वं कालतस्तु भवेद्गुणैः ।
विद्याकलाश्रयेणैव तन्नाम्ना जातिरुच्यते ॥

नीचस्तु संसर्गात् जन्मना वा उत्तमः न भवेत् । कर्मणा कार्येण उत्तमनीचत्वं उत्कर्षापकर्षभावः, क्षिप्रमिति शेषः, तथा गुणैः विद्याविद्यादिभिस्तु कालतः कालक्रमेण उत्तमनीचत्वं भवेत् । किंच, विद्यानां कलानां संगीतादीनां च आश्रयेण एव तन्नाम्ना तत्तद्विद्याकलानां नाम्ना जातिः उच्यते कथ्यते । यथा अयं

(१) शुनी. ४।३।१२–२३.

दार्शनिकः, अयं नैयायिकः, अयं गायक इत्यादि ।

शुनीटी.

**इज्याध्ययनदानानि कर्माणि तु द्विजन्मनाम् ।**
**प्रतिग्रहोऽध्यापनं च याजनं ब्राह्मणेऽधिकम् ॥**

द्विजन्मनां द्विजानां ब्राह्मणक्षत्रियवैश्यानाम्, 'संस्काराद्द्विज उच्यते' इति वचनेन ब्राह्मणादिवर्णत्रयस्य द्विजत्वेनाभिधानात्, इज्याध्ययनदानानि इज्या यज्ञानुष्ठानं अध्ययनं दानं च एतानि त्रीणि कर्माणि । ब्राह्मणे तु प्रतिग्रहः ग्रहणं अध्यापनं तथा याजनं परार्थे यज्ञकरणं एतत्त्रयमधिकम् । शुनीटी.

**सद्रक्षणं दुष्टनाशः स्वांशादानं तु क्षत्रिये ।**
**कृषिगोगुप्तिवाणिज्यमधिकं तु विशां स्मृतम् ॥**

क्षत्रिये तु सद्रक्षणं सतां साधूनां रक्षणम्, दुष्टनाशः दुष्टानां दमनम्, तथा स्वांशस्य राजलभ्यांशस्य आदानं ग्रहणं च, एतत्त्रयमधिकम् । विशां वैश्यानां तु कृषिः, गोगुप्तिः गवां पशूनां गुप्तिः पालनम्, तथा वाणिज्यम्, एतत्त्रयं अधिकं स्मृतम् । शुनीटी.

**दानं सेवैव शूद्रादेर्नीचकर्म प्रकीर्तितम् ॥**

शूद्रादेः शूद्रस्य तत्तत्समानजातेश्च, दानम्, सेवा दासवृत्तिः, तथा नीचकर्म निकृष्टकार्यं पदसेवागृहमार्जनादिकं च प्रकीर्तितम् । शुनीटी.

**क्रियाभेदैस्तु सर्वेषां भृतिवृत्तिरनिन्दिता ।**
**सीरभेदैः कृषिः प्रोक्ता मन्वाद्यैर्ब्राह्मणादिषु ॥**

क्रियाणां कार्याणां भेदैः प्रभेदैः सर्वेषां ब्राह्मणादीनां भृतिवृत्तिः भरणार्थे निर्दिष्टा वृत्तिः जीवनोपायः अनिन्दिता । यथा मन्वाद्यैः मुनिभिः सीराणां लाङ्गलानां भेदैः विशेषैः ब्राह्मणादिषु कृषिः प्रोक्ता कथिता ।

शुनीटी.

**ब्राह्मणैः षोडशगवं चतुरूनं यथा परैः ।**
**द्विगवं वाऽन्त्यजैः सीरं दृष्ट्वा भूमार्दवं तथा ॥**

ब्राह्मणैः, कृषिजीविभिरिति भावः, षोडशगवं षोडशभिः गोभिः वाह्यं सीरम्, तथा परैः अन्यैः क्षत्रियादिभिरित्यर्थः, क्रमशः चतुरूनं क्षत्रियैः द्वादशगवम्, वैश्यैः षड्(? अष्ट)गवम्, शूद्रैः चतुर्गवमित्यर्थः, सीरम्, तथा अन्त्यजैः चाण्डालादिभिः भूमार्दवं भुवः भूमेः मार्दवं मृदुत्वं दृष्ट्वा द्विगवं सीरम्, कर्तव्यमिति शेषः । शुनीटी.

**ब्राह्मणेन विनाऽन्येषां भिक्षावृत्तिर्विगर्हिता ॥**

ब्राह्मणेन विना अन्येषां क्षत्रियादीनां भिक्षावृत्तिः विगर्हिता विशेषेण निन्दिता । शुनीटी.

**तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।**
**वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥**

द्विजन्मना द्विजेन विविधैः विधिचोदितैः विहितैः तपोविशेषैः व्रतैश्च सरहस्यः उपनिषत्सहितः कृत्स्नः समग्रः वेदः अधिगन्तव्यः वेदितव्यः । शुनीटी.

**योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत् ।**
**न च जात्याऽनधीतो यो गुरुर्भवितुमर्हति ॥**

यः अधीतविद्यः तथा सकलः कलाभिः लौकिकविद्यादिभिः सहितः सः सर्वेषां गुरुः भवेत् । यस्तु अनधीतः अकृतविद्यः सः जात्या, केवलयेति शेषः, गुरुः भवितुं न अर्हति । शुनीटी.

**[1]ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिः क्रमात् ।**
**चत्वार आश्रमाश्चैते ब्राह्मणस्य सदैव हि ।**
**अन्येषामन्त्यहीनाश्च क्षत्रविट्शूद्रकर्मणाम् ॥**

ब्रह्मचारी गृहस्थः वानप्रस्थः तथा यतिः एते चत्वार आश्रमाः ब्राह्मणस्य सदैव । हिशब्दः पादपूरणार्थः । अन्येषां क्षत्रियाणां विशां शूद्राणां च अन्त्येन यत्याश्रमेण हीनाः त्रयः ब्रह्मचार्यादयः आश्रमाः, वेदितव्या इति शेषः । शुनीटी.

**विद्यार्थं ब्रह्मचारी स्यात्सर्वेषां पालने गृही ।**
**वानप्रस्थः संदमने संन्यासी मोक्षसाधने ॥**

विद्यार्थं विद्योपार्जनार्थं ब्रह्मचारी, सर्वेषां पालने पालनार्थमित्यर्थः, गृही, संदमने सम्यक् इन्द्रियदमनार्थं वानप्रस्थः, तथा मोक्षसाधने मुक्तिलाभार्थं संन्यासी स्यात् । शुनीटी.

**वर्तयन्त्यन्यथा दण्ड्या या वर्णाश्रमजातयः ॥**

(१) शुनी. ४।४।१–४.

याः वर्णानां ब्राह्मणादीनां आश्रमाणां च जातयः अन्यथा अन्येन प्रकारेण, शास्त्रबाह्यमार्गेणेत्यर्थः, वर्तयन्ति व्यवहरन्ति ताः दण्ड्याः, राज्ञेति शेषः। शुनीटी.

**कुलान्यकुलतां यान्ति ह्यकुलानि कुलीनताम्।**
**यदि राज्ञोपेक्षितानि दण्डतोऽशिक्षितानि च॥**

यदि राज्ञा उपेक्षितानि तथा दण्डतः दण्डेन अशिक्षितानि तदा कुलानि अकुलतां तथा अकुलानि कुलीनतां यान्ति प्राप्नुवन्ति। सर्वे यथेच्छचारिणो भवन्तीत्यर्थः। शुनीटी.

**'स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितः सदा।**
**तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः॥**

यः पूर्वैः पूर्वपुरुषैः स्वस्वजातिविहितः धर्मः आचरितः सा जातिः तज्जातीयो नरः सदा तं धर्ममाचरेत्। अन्यथा नृपैः दण्ड्या दण्डनीया स्यात्। शुनीटी.

**जातिवर्णाश्रमान्सर्वान्पृथक् चिह्नैः सुलक्षयेत्।**
**यन्त्राणि धातुकाराणां संरक्षेद्वीक्ष्य सर्वदा॥**

पृथक् चिह्नैः जातीनां संकीर्णानां वर्णानां ब्राह्मणादीनां आश्रमाणां ब्रह्मचारिप्रभृतीनां सर्वान् धर्मान्(?) सुलक्षयेत्। तथा धातुकाराणां स्वर्णादिशिल्पकराणां यन्त्राणि वीक्ष्य परीक्ष्य सर्वदा संरक्षेत्, नृप इति शेषः। शुनीटी.

**कारुशिल्पिगणान् राष्ट्रे रक्षेत्कार्यानुमानतः।**
**अधिकान् कृषिकृत्ये वा भृत्यवर्गे नियोजयेत्॥**

कार्यानुमानतः कार्याणां अनुमानेन गौरवलाघवविवेचनेनेत्यर्थः, राष्ट्रे राज्ये कारुशिल्पिगणान् रक्षेत् वासयेत्। तथा कृषिकृत्ये भूमिकर्षणादिकार्ये वा भृत्यवर्गे भृत्यवर्गसाध्ये कर्मणि निमित्ते अधिकान् जनान् नियोजयेत्, राजेति शेषः। शुनीटी.

**चौराणां पितृभूतास्ते स्वर्णकारादयस्त्वतः।**
**गञ्जागृहं पृथग्ग्रामात्तस्मिन् रक्षेत्तु मद्यपान्॥**

(१) शुनी. ४।४।३९–६५.

स्वर्णकारादयः चौराणां पितृभूताः पितृस्थानीयाः। पितृवत् चौरान् पालयन्तीत्यर्थः। अतः ते ग्रामात् पृथक् रक्षणीयाः, राज्ञा इति शेषः। यच्च तस्मिन् ग्रामात् पृथक्प्रदेशे इत्यर्थः, गञ्जागृहं मदिरागृहं अस्ति तस्मिन् मद्यपान् रक्षेत्, राजेति शेषः। शुनीटी.

**न दिवा मद्यपानं हि राष्ट्रे कुर्याद्धि कर्हिचित्॥**

राष्ट्रे राज्ये कर्हिचित् दिवा दिवसे मद्यपानं न हि कुर्यात्। शुनीटी.

### वृक्षवनोद्यानवापीकूपनदीसेतुदेवप्रासादादिनिर्माणपुरःसरं राष्ट्रनिर्माणम्

**ग्रामे ग्राम्यान् वने वन्यान् वृक्षान्**
**संरोपयेन्नृपः।**
**उत्तमान् विंशतिकरैर्मध्यमांस्तिथिहस्ततः॥**
**सामान्यान् दशहस्तैश्च कनिष्ठान् पञ्चभिः करैः।**
**अजाविगोशकृद्भिर्वा जलैर्मांसैश्च पोषयेत्॥**

नृपः ग्रामे ग्राम्यान् वने वन्यान् वृक्षान् संरोपयेत्। तेषु उत्तमान् वृक्षान् विंशतिहस्तैः, मध्यमान् वृक्षान् तिथिहस्ततः पञ्चदशकरैरित्यर्थः, सामान्यान् ततो निकृष्टान् दशहस्तैः, तथा कनिष्ठान् अधमान् वृक्षान् पञ्चभिः करैः, विच्छिद्य वासयेदिति शेषः। तांश्च अजानां छागानां अवीनां मेषाणां गवां च शकृद्भिः पुरीषैः जलैः मांसैश्च पोषयेत् पुष्टिं नयेत्। शुनीटी.

**उदुम्बराश्वत्थवटचिञ्चाचन्दनजम्भलाः।**
**कदम्बाशोकबकुलबिल्वामृतकपित्थकाः॥**
**राजादनाम्रपुंनागतूदकाष्ठाम्लचम्पकाः।**
**नीपकोकाम्रसरलदाडिमाक्षोटभिःसटाः॥**
**शिंशपाशिम्भुबदरनिम्बजम्बीरक्षीरिकाः।**
**खर्जूरदेवकरजफल्गुतापिच्छसिम्भलाः॥**
**कुद्दालो लवली धात्री क्रमुको मातुलुङ्गकः।**
**लकुचो नारिकेलश्च रम्भाऽन्ये सत्फला द्रुमाः।**
**सुपुष्पाश्चैव ये वृक्षा ग्रामाभ्यर्णे नियोजयेत्॥**

उदुम्बराः अश्वत्थाः वटाः चिञ्चाः चन्दनाः जम्भलाः कदम्बाः अशोकाः बकुलाः बिल्वाः अमृताः कपित्थकाः

राजादनाः आम्राः पुन्नागाः तूदकाष्ठाः अम्लाः चम्पकाः नीपाः कोकाम्राः सरलाः दाडिमाः अक्षोटाः मिःसटाः शिंशपाः शिम्भवः बदराः निम्बाः जम्बीराः क्षीरिकाः खर्जूराः देवकरजाः फल्गवः तापिञ्छाः सिम्भलाः कुद्दालः लवली धात्री क्रमुकः मातुलुङ्गकः लकुचः नारिकेलः रम्भा तथा अन्ये ये सत्फलाः उत्तमफलशालिनः सुपुष्पाश्च वृक्षाः सन्ति तान् ग्रामाभ्यर्णे ग्रामसमीपे नियोजयेत् रोपयेत् । शुनीटी.

**वामभागेऽथवोद्यानं कुर्याद्वासगृहे शुभम् ।**
**सायंप्रातस्तु घर्मान्ते शीतकाले दिनान्तरे ।**
**वसन्ते पञ्चमेऽह्नस्तु सेच्या वर्षासु न क्वचित् ॥**

वामभागे, वासगृहस्येति शेषः, अथवा वासगृहे वासभूम्यन्तरे इत्यर्थः, शुभं उद्यानं कुर्यात् । किंच, घर्मान्ते निदाघावसाने सायं प्रातश्च, शीतकाले दिनान्तरे दिनावसाने, वसन्ते अह्नः दिवसस्य पञ्चमे, मुहूर्ते इति शेषः, सेच्याः, उद्यानवृक्षा इति शेषः । वर्षासु क्वचिदपि न, सेच्या इति शेषः । शुनीटी.

**फलनाशे कुलुत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः ।**
**शृतशीतपयःसेकः फलपुष्पाय सर्वदा ॥**

फलानां नाशे, वृक्षस्येति शेषः, कुलुत्थैः माषैः मुद्गैः यवैः तिलैर्वा सह शृतशीतपयोभिः उष्णीकृतैः पश्चात् शीतलैः पयोभिः जलैः सेकः सर्वदा फलपुष्पाय फलानां पुष्पाणां च अनाशाय भवति । शुनीटी.

**मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनाम् ॥**

मत्स्याम्भसा मत्स्यक्षालनजलेन सेकेन शाखिनां वृक्षाणां वृद्धिः भवति । शुनीटी.

**आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ।**
**गोमांसमुदकं चेति सप्तरात्रं निधापयेत् ।**
**उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः ॥**

आविकाजानां मेषच्छागलानां यानि शकृन्ति पुरीषाणि तेषां चूर्णं यवचूर्णं तिलानि गोमांसं उदकं च सप्तरात्रं निधापयेत् वृक्षमूलेषु दद्यादित्यर्थः । उत्सेकः उक्तचूर्णादिदानं सर्वेषां वृक्षाणां फलानां पुष्पाणां च वृद्धिदः वर्धकः । शुनीटी.

**ये च कण्टकिनो वृक्षाः खदिराद्यास्तथाऽपरे ।**
**आरण्यकास्ते विज्ञेयास्तेषां तत्र नियोजनम् ॥**

ये वृक्षाः कण्टकिनः कण्टकावृताः, तथा अपरे खदिराद्याश्च, ते आरण्यकाः वन्याः विज्ञेयाः । तेषां वृक्षाणां तत्र अरण्ये नियोजनं रोपणम्, कार्यमिति शेषः । शुनीटी.

**खदिराश्मन्तशाकाग्निमन्थश्योनाकबब्बुलाः ।**
**तमालशालकुटजधवार्जुनपलाशकाः ॥**
**सप्तपर्णशमीतुन्नदेवदारुविकङ्कताः ।**
**करमर्देङ्गुदीभूर्जविषमुष्टिकरीरकाः ॥**
**शल्लकी काश्मरी पाठा तिन्दुको बीजसारकः ।**
**हरीतकी च भल्लातः शम्पाकोऽर्कश्च पुष्करः ॥**
**अरिमेदश्च पीतद्रुः शाल्मलिश्च विभीतकः ।**
**नरवेलो महावृक्षोऽपरे ये मधुकादयः ॥**
**प्रतानवत्यः स्तम्बिन्यो गुल्मिन्यश्च तथैव च ।**
**ग्राम्या ग्रामे वने वन्या नियोज्यास्ते प्रयत्नतः ॥**

खदिरः अश्मन्तशाकः अग्निमन्थः श्योनाकः बब्बुलः तमालः शालः कुटजः धवः अर्जुनः पलाशः सप्तपर्णः शमी तुन्नः देवदारुः विकङ्कतः करमर्दः इङ्गुदी भूर्जः विषमुष्टिः करीरकः शल्लकी काश्मरी पाठा तिन्दुकः बीजसारकः हरीतकी भल्लातः शम्पाकः अर्कः पुष्करः अरिमेदः पीतद्रुः शाल्मलिः विभीतकः नरवेलः महावृक्षः तथा मधूकादयः अपरे ये वृक्षाः याश्च प्रतानवत्यः विस्तारवत्यः स्तम्बिन्यः गुच्छवत्यः गुल्मिन्यः मूलवत्यश्च लताः ते ताश्च ग्राम्याश्चेत् ग्रामे वन्याश्चेत् वने प्रयत्नतः नियोज्याः रोपणीयाः । शुनीटी.

**कूपवापीपुष्करिण्यस्तडागाः सुगमास्तथा ।**
**कार्याः खाताद्द्वित्रिगुणविस्तारपदधानिकाः ।**
**यथा तथा ह्यनेकाश्च राष्ट्रे स्याद्विपुलं जलम् ॥**

कूपाः वाप्यः दीर्घिकाः पुष्करिण्यः तडागाश्च तथा कार्याः यथा खातात् द्वित्रिगुणाः विस्तारा यासां तादृश्यः, पदधानिकाः पादसंचारस्थानानि येषां यासां वा तादृशाः तादृश्यश्च सुगमाश्च अनेकाश्च स्युः । तथा सति राष्ट्रे विपुलं प्रचुरं जलं स्यात् । शुनीटी.

नदीनां सेतवः कार्या विबन्धाः सुमनोहराः ।
नौकादिजलयानानि पारगानि नदीषु च ॥

नदीनां विविधाः सुमनोहराः सेतवः कार्याः । तथा नदीषु पारगानि पारगमनसाधनानि नौकादिजलयानानि, रक्षणीयानीति शेषः । शुनीटी.

यज्जातिपूज्यो यो देवस्तद्विद्यायाश्च यो गुरुः ।
तदालयानि तज्जातिगृहपङ्क्तिमुखे न्यसेत् ॥

यो देवः यज्जातिपूज्यः यस्याः जातेः पूजनीयः तद्विद्यायाः तद्देवसंबन्धिन्याः विद्यायाः यो गुरुः तदालयानि तस्य गृहाणि तज्जातीनां गृहपङ्क्तिमुखे गृहश्रेणीसंमुखे न्यसेत् कुर्यात् । शुनीटी.

शृङ्गाटके ग्राममध्ये विष्णोर्वा शंकरस्य च ।
गणेशस्य रवेर्देव्याः प्रासादान् क्रमतो न्यसेत् ॥

शृङ्गाटके चतुष्पथे वा ग्राममध्ये विष्णोः शंकरस्य गणेशस्य रवेः सूर्यस्य देव्याश्च प्रासादान् भवनानि क्रमात् न्यसेत् कुर्यात् । शुनीटी.

मेर्वादिषोडशविधलक्षणान् सुमनोहरान् ।
वर्तुलांश्चतुरश्रान् वा यन्त्राकारान् समण्डपान् ॥
प्राकारगोपुरगणयुतान् द्वित्रिगुणोच्छ्रितान् ।
यथोक्तान्तःसुप्रतिमाञ्जलमूलान्विचित्रितान् ॥ *

प्रासादान् विशिनष्टि– मेर्वादीति । मेरुः आदिः येषां तादृशानि षोडशविधानि लक्षणानि येषां तान्, सुमनोहरान्, वर्तुलान् गोलाकृतीन्, चतुरस्रान् चतुष्कोणान्, यन्त्राकारान्, समण्डपान् सगृहान्, प्राकारैः प्राचीरैः गोपुरैः पुरद्वारैः गणैः परिचारकवर्गैश्च युतान्, द्वित्रिगुणोच्छ्रितान्, दैर्घ्यविस्तारापेक्षयेति शेषः, $यथोक्तान्तः यथोक्तानामन्तः मध्ये शोभना प्रतिमा येषां तान्, जलमूलान् जलयुक्तान्, तथा विचित्रितान् विशेषेण चित्रितान् प्रासादानिति पूर्वेणान्वयः । शुनीटी.

एवंविधान् नृपो राष्ट्रे देवान् संस्थापयेत्सदा ।
प्रतिसंवत्सरं तेषामुत्सवान् सम्यगाचरेत् ॥

नृपः राष्ट्रे सदा एवंविधान् देवान् संस्थापयेत् । तथा प्रतिसंवत्सरं तेषां देवानां उत्सवांश्च सम्यगाचरेत् अनुतिष्ठेत् । शुनीटी.

देवालये मानहीनां मूर्तिं भग्नां न धारयेत् ।
प्रासादांश्च तथा देवान् जीर्णानुद्धृत्य यत्नतः ॥
देवतां तु पुरस्कृत्य नृत्यादीन् वीक्ष्य सर्वदा ।
न मनः स्वोपभोगार्थं विदध्याद्यत्नतो नृपः ॥

नृपः देवालये मानहीनां अप्रमाणां तथा भग्नां मूर्तिं न धारयेत् न रक्षेत् । तथा जीर्णान् प्रासादान् देवांश्च यत्नतः उद्धृत्य संस्कृत्य सर्वदा देवतां पुरस्कृत्य संपूज्य नृत्यादीन् उत्सवादिव्यापारान् वीक्ष्य दृष्ट्वा मनः चित्तं स्वोपभोगार्थं स्वस्य उपभोगाय यत्नतः यत्नेन न विदध्यात् न नियुञ्ज्यात् । भोगासक्तं न कुर्यादित्यर्थः । शुनीटी.

प्रजाभिर्विधृता ये ये ह्युत्सवास्तांश्च पालयेत् ।
प्रजानन्देन संतुष्येत्तद्दुःखैर्दुःखितो भवेत् ॥

प्रजाभिश्च ये ये उत्सवा विधृताः कृताः तांश्च पालयेत् रक्षेत् । प्रजानामानन्देन संतुष्येत् संतुष्टो भवेत् । तथा तासां दुःखैश्च दुखितः भवेत् । शुनीटी.

दुष्टनिग्रहणं धनिककृषीवलयोः समुद्धरणं च

दुष्टनिग्रहणं कुर्याद्व्यवहारानुदर्शनैः ।
स्वाज्ञया वर्तितुं शक्ता स्वाधीना च सदा प्रजा ॥

व्यवहाराणां विवादविषयाणां अनुदर्शनैः सम्यक् दर्शनैः दुष्टानां निग्रहं कुर्यात् । प्रजा स्वाधीना चेत् स्वाज्ञया निजाज्ञया स्वेच्छया इत्यर्थः, सदा वर्तितुं व्यवहर्तुं शक्ता भवति । तस्मात् प्रजा यथा स्वेच्छया न व्यवहरेयुः तथा कार्यमिति भावः । शुनीटी.

स्वेष्टहानिकरः शत्रुर्दुष्टः पापप्रचारवान् ।
इष्टसंपादनं न्याय्यं प्रजानां पालनं हि तत् ॥

दुष्टः पापप्रचारवान् पापाशयः शत्रुः स्वस्य इष्टहानिकरः । इष्टस्य अभिलषितस्य च संपादनं सम्यक्

* अतः परे प्रासादप्रतिमादिनिर्माणपराः श्लोका अत्र न संगृहीताः ।

$ वस्तुतस्तु यथोक्ता इति प्रतिमाविशेषणम् । वक्ष्यमाणप्रकारा इति तदर्थः ।

(१) शुनी. ४।४।२०२–२०५.

(२) शुनी. ४।५।१–३.

साधनं न्याय्यं न्यायादनपेतम्, राज्ञ इति शेषः। यथा शत्रुभिरिष्टनाशो न क्रियते तथा कार्यमिति भावः। तद्धि तदेव इष्टसंपादनमेव प्रजानां पालनम्। शुनीटी.

शत्रोरनिष्टकरणान्निवृत्तिः शत्रुनाशनम्।
पापाचारनिवृत्तिर्यैर्दुष्टनिग्रहणं हि तत्॥

शत्रोः अनिष्टकरणान्निवृत्तिः शत्रुनाशनम्। पापाचारात् निवृत्तिश्च, शत्रोरिति शेषः, तद्धि तदेव दुष्टनिग्रहणम्। शुनीटी.

[1]उक्तं राष्ट्रप्रकरणं समासात्पञ्चमं तथा।
अत्रानुक्ता गुणा दोषास्ते ज्ञेया लोकशास्त्रतः॥

पञ्चमं राष्ट्रप्रकरणं समासात् संक्षेपेण उक्तम्। अत्र प्रकरणे गुणा दोषाश्च अनुक्ताः अकथिताः ते गुणदोषाः लोकशास्त्रतः लोकतः शास्त्रतश्च ज्ञेयाः। शुनीटी

[2]लोकेऽधिकारिप्रत्यक्षं विक्रीतं दत्तमेव वा।
वस्त्रभाण्डादिकं क्रीतं स्वचिह्नैरङ्कयेच्चिरम्॥

लोके जगति विक्रीतं दत्तं वा क्रीतं वस्त्रभाण्डादिकं वसनं पात्रादिवस्तु च अधिकारिणां विक्रेतॄणां दातॄणां क्रेतॄणां च प्रत्यक्षं स्वचिह्नैः आत्मचिह्नैः चिरं स्थायिरूपं यथा तथा अङ्कयेत् अङ्कितं कुर्यात्। भाविविसंवादनिराकरणार्थमिति भावः। शुनीटी.

स्तेनकूटनिवृत्त्यर्थं राजज्ञातं समाचरेत्।
जडान्धबालद्रव्याणां दद्याद्वृद्धिं नृपः सदा॥

स्तेनानां चौराणां कूटस्य कपटस्य निवृत्त्यर्थं निवारणाय सर्वं क्रीतादिकं राजज्ञातं समाचरेत्। राज्ञः ज्ञातसारेण क्रीतादिकं कुर्यादित्यर्थः। नृपः जडानां अन्धानां बालानां शिशूनां च यानि द्रव्याणि धनानि, राजनि न्यस्तानीति भावः, तेषां सदा वृद्धिं दद्यात्। शुनीटी.

(१) शुनी. ४।५।३३९.
(२) शुनी. ५।६४–६५.

[1]सत्याचारास्तु धनिका व्यवहारे हृता यदि।
राजा समुद्धरेत्तांस्तु तथाऽन्यांश्च कृषीवलान्॥

सत्याचाराः सत्यपथावलम्बिनः धनिकाः यदि व्यवहारे वाणिज्यादौ हृताः विनष्टाः क्षतिग्रस्ता इत्यर्थः, भवेयुः तदा राजा तान् तथा अन्यान् तथाविधान् कृषीवलान् कृषिजीविनश्च समुद्धरेत्। शुनीटी.

[2]संहरेद्धनिकात्सर्वं मिथ्याचाराद्धनं नृपः॥

किंच, नृपः मिथ्याचारात् मायाव्यवहारिणः धनिकात् सर्वं धनं संहरेत्। शुनीटी.

यदा चतुर्गुणा वृद्धिर्गृहीता धनिकेन च।
अधमर्णान्न दातव्यं धनिने तु धनं तदा॥

यदा धनिकेन उत्तमर्णेन अधमर्णात् चतुर्गुणा वृद्धिः गृहीता तदा धनिने तस्मै उत्तमर्णाय धनं मूलमित्यर्थः, न दातव्यम्, अधमर्णेनेति शेषः। शुनीटी.

## योगयात्रा

राष्ट्ररक्षणविधिः

[3]नीचाचिराढ्यनृपवल्लभतस्करेभ्यो
राष्ट्रं नृपेण परिरक्ष्यमतोऽस्य कोशः।
काले करप्रणयनं च यथोचितानां
तन्नार्थयेद्भवति येन जनापवादः॥

## नीतिवाक्यामृतम्

राष्ट्रदेशविषयजनपदलक्षणानि, जनपददोषाः, जनपदाभिवृद्धिविधिः

[4]पशुधान्यहिरण्यसंपदा राजते इति राष्ट्रम्॥

अथ राष्ट्रसमुद्देशो व्याख्यायते। तत्राऽऽदावेव राष्ट्रलक्षणमाह– पशुधान्येति। तथा च भागुरिः– 'पशुभिर्विविधैर्धान्यैः कुप्यभाण्डैः पृथग्विधैः। राजते येन लोकेऽत्र तद्राष्ट्रमिति कीर्त्यते॥'। नीवाटी.

(१) शुनी. ५।८८.
(२) शुनी. ५।९०–९१.
(३) योया. १।१८.
(४) नीवा. १९।१–२५.

**भर्तुर्दण्डकोशवृद्धिं दिशतीति देशः ॥**

अथ देशो येन कथ्यते तदाह— भर्तुरिति । भर्तुः स्वामिनः दिशति ददाति दण्डकोशवृद्धिमिति देशोऽभिधीयते । तथा च शुक्रः— 'स्वामिनः कोशवृद्धिं च सैन्यवृद्धिं तथा परम् । यस्माद्दिशति नित्यं स तस्माद्देश उदाहृतः ॥' । नीवाटी.

**विविधवस्तुप्रदानेन स्वामिनः सद्मनि गजान् वाजिनश्च सिनोति बध्नातीति विषयः ॥**

अथ सोऽपि यथा विषयः प्रोच्यते तथाऽऽह— विविधेति । तथा च शुक्रः— 'विविधान् वाजिनो गाश्च स्वामिसद्मनि नित्यशः । सिनोतिं च यतस्तस्माद्विषयः प्रोच्यते बुधैः ॥' । नीवाटी.

**सर्वकामधुक्त्वेन पतिहृदयं मण्डयति भूषयतीति मण्डलम् ॥**

अथ सोऽपि विषयो येन कारणेन मण्डलं प्रोच्यते तदाह— सर्वेति । तथा च शुक्रः— 'सर्वकामसमृद्धया च नृपतेर्हृदयं यतः । मण्डनेन समायुक्तं कुरुतेऽनेन मण्डलम् ॥' । नीवाटी.

**जनस्य वर्णाश्रमलक्षणस्य द्रव्योत्पत्तेर्वा पदं स्थानमिति जनपदः ॥**

अथ तदेव मण्डलं येन कारणेन जनपदः कथ्यते तदाह— जनस्येति । तथा च शुक्रः— 'वर्णाश्रमाणां सर्वेषां द्रव्योत्पत्तेश्च वा पुनः । यस्मात्स्थानं भवेत्सोऽत्र तस्माज्जनपदः स्मृतः ॥' । नीवाटी.

**निजपतेरुत्कर्षजनकत्वेन शत्रुहृदयानि दारयति भिनत्तीति दारकम् ॥**

अथ दारकस्य स्वरूपमाह— निजेति । * दारकाः उष्ट्राः, तेषां समूहो दारकम् । तथा च जैमिनिः— 'भर्तुरुत्कर्षदानेन शत्रूणां हृदयं यतः । दारका दारयन्ति स्म प्रभूता दारकं ततः ॥' । नीवाटी.

* दारकशब्दस्य उष्ट्रवाचकत्वं क्वचिदपि कोशादौ नोपलभ्यते । प्रकरणविरुद्धं चैतदकस्मादुष्ट्रनिरूपणम् ।

**आत्मसमृद्धया स्वामिनं सर्वव्यसनेभ्यो निर्गमयतीति निर्गमः * ॥**

अथ निर्गमस्य गुणानाह (? स्वरूपमाह)— आत्मसमृद्धयेति । निर्गमो नियोगविशेषः कथ्यते । यो निर्गमयति । कम्? स्वामिनम् । केभ्य? व्यसनेभ्यः आपद्भ्यः । कया कृत्वा? आत्मसमृद्धया निजवित्तेन । तथा च शुक्रः— 'मोचापयति यो वित्तैर्निजैः स्वामिनमात्मनः । व्यसनेभ्यः प्रभूतेभ्यो निर्गमः स इहोच्यते ॥' । नीवाटी.

**अन्योन्यरक्षाखन्याकरद्रव्यनागधनवान् नातिवृद्धनातिहीनग्रामो बहुसारविचित्रधान्यहिरण्यपण्योत्पत्तिरदेवमातृकः पशुमनुष्यहितः श्रेणिशूद्रकर्षकप्राय इति जनपदस्य गुणाः ॥**

अथ राष्ट्रगुणानाह— अन्योन्येति । राष्ट्रं देशः, तस्य एते पूर्वोक्ता गुणाः । यत्र यस्मिन् देशे अन्योन्यरक्षा भवति परस्परं रक्षा भवति (रक्षकाः ?), यत्र खन्यो भवन्ति वसुपण्यादीनाम्, तथा आकरं लवणादीनामुत्पत्तिस्थानम्, तथा नाणकानि द्रव्याणि यत्र, तथा नागधनवान् हस्तिधनयुक्तः, नातिवृद्धग्रामो नातिलघुग्रामः, तथा बहुसारः बहवः साराः उत्तमपदार्थाः यत्र, तथा विचित्रधान्यः विचित्राणि अनेकप्रकाराणि धान्यानि यत्र, तथा हिरण्यं सुवर्णं यत्र, पण्यं वणिग्व्यवहारः तस्योत्पत्तिर्यत्र, अदेवमातृकः न देवमातृकः अदेवमातृकः अरघट्टबहुलः, पशवः चतुष्पदाः, मनुष्याः प्रसिद्धाः, तेषां हितः अनुकूलः सुखावह इत्यर्थः, यः श्रेणिशूद्रकर्षकप्रायः श्रेणयः कुलानि, शूद्राः वर्णविशेषाः, कर्षकाः हालिकाः, तैः प्रायः बहुलः यः स गुणवान् देशः कथ्यत इति । नीवाटी.

**विषतृणोदकोषरपाषाणकण्टकगिरिगर्तगह्वरप्रायभूमिर्भूरिवर्षाजीवनो व्याधिलुब्धकम्लेच्छबहुलः स्वल्पसस्योत्पत्तिस्तरुफलाधार इति देशदोषाः ॥**

* निगम इति पाठान्तरम् । कोशे निगशब्दो देशवाचकः निगमशब्दो नगरवाचकश्च समुपलभ्यते ।

अथ देशदोषानाह– विषेति। इति देशदोषा भवन्ति। क एते दोषाः ? योऽसौ देशो विषतृणोदको भवति विषसदृशानि कटुकानि तृणानि उदकानि च यत्र, ऊषरः यत्र किंचित् तृणं सस्यं वा न संजायते, तथा गह्वराणि कुब्जप्राया भूमिर्यत्र, तथा प्रभूतवृष्ट्या यत्र जीवितव्यता, न स्तोकवृष्ट्या, तथा व्याधिबहुलो म्लेच्छबहुलश्च, तथा स्वल्पसस्योत्पत्तिः, तथा तरुफलाधारः वृक्षफलजीवनः, न सस्यं यत्र। नीवाटी.

**तत्र सदा दुर्भिक्षमेव यत्र जलदजलेन सस्योत्पत्तिरकृष्टभूमिकश्चाऽऽरम्भः ॥**

तथाऽन्यानपि देशदोषानाह– तत्रेति। यत्र यस्मिन् देशे मेघतोयेन सस्यम्, अरघट्टा न भवन्ति, तत्र सदैव दुर्भिक्षम्। तथा अकृष्टभूमिकश्चारम्भः अन्योन्यारम्भाः क्रियन्ते प्रजाभिः न कृष्टभूमिः कच्छारम्भाः कर्षणं न क्रियत इति। तथा च गुरुः– 'मेघजेनाम्भसा यत्र सस्यं च (? चापि) न ग्रैष्मिकम्। सदैव तत्र दुर्भिक्षं कृष्यारम्भो न यत्र च ॥'। नीवाटी.

**क्षत्रियप्रायग्रामाः स्वल्पास्वप्याबाधासु प्रतियुज्यन्ते ॥**

अथ क्षत्रियप्राया ग्रामा यादृशा भवन्ति तानाह– क्षत्रियेति। ये ग्रामाः क्षत्रियप्रायाः क्षत्रियबहुलाः भवन्ति, वणिग्जनब्राह्मणा न सन्ति। ते किंविशिष्टाः ? प्रतियुध्यन्ते परस्परं युद्धं कुर्वन्ति। कासु ? आबाधासु पीडासु परिभवजासु। किंविशिष्टासु ? स्वल्पास्वपि। अपि क्षात्रा अर्थवसात् (?)। तथा च शुक्रः– 'वसन्ति क्षत्रिया येषु ग्रामेष्वतिनिर्गलाः। स्वल्पापराधतोऽप्येव तेषु युद्धं न शाम्यति ॥'। नीवाटी.

**म्रियमाणोऽपि द्विजलोको न खलु सान्त्वेन सिद्धमप्यर्थं प्रयच्छति ॥**

अथ द्विजलोकस्य स्वरूपमाह– म्रियमाणोऽपीति। योऽसौ द्विजलोकः ब्राह्मणजनः स म्रियमाणोऽपि प्राणात्ययेऽपि योऽर्थो गृहीतस्तं न प्रयच्छति। केन ? सान्त्वेन साम्ना, यावद्दण्डो न दर्शितः। तथा च शुक्रः– 'ब्राह्मणैर्भक्षितो योऽर्थो न स सान्त्वेन लभ्यते। यावन्न दण्डपारुष्यं तेषां च क्रियते नृपैः ॥'। नीवाटी.

**स्वभूमिकं भुक्तपूर्वमभुक्तं वा जनपदं स्वदेशाभिमुखं दानमानाभ्यां परदेशादावहेद्वासयेच्च ॥**

अथ राज्ञा स्वदेशोत्थस्य जनस्य परदेशं गतस्य यत्क्रियते तदाह– स्वभूमिकमिति। आवहेत् आनयेत्। कम् ? जनपदम्। कस्मात् ? परदेशात्। वासयेच्च। कम् ? जनपदं लोकम्। किंविशिष्टम् ? भुक्तपूर्वं यं पुरा भुक्तं गृहीतकरं तं यदि परदेशगतं भवति (?)। अभुक्तं वा आनयेत् आत्मीयदेशीयं (त्वा ?) यस्य करो न गृहीतस्तमप्यानयेत्। कथम् ? स्वदेशाभिमुखो यथा भवति। काभ्यां आनयेत् ? दानमानाभ्याम्। तथा च शुक्रः– 'परदेशं गतं लोकं निजदेशे समानयेत्। भुक्तपूर्वमभुक्तं वा सर्वदैव महीपतिः ॥'। नीवाटी.

**स्वल्पोऽप्यादायेषु प्रजोपद्रवो महान्तमर्थं नाशयति ॥**

अथ स्वल्पोऽप्युपद्रवो यत् करोति तदाह– स्वल्पोऽपीति। नाशयति नाशं नयति। किं तत् ? अर्थम्। किंविशिष्टम् ? महान्तं प्रभूतमपि। कोऽसौ ? उपद्रवः अन्यायेनार्थग्रहणम्। किंविशिष्टम् ? स्वल्पमपि। कासाम् ? प्रजानाम्। केषु ? आदायेषु आदायस्थानेषु आगतिस्थानेषु। स्वल्पोऽपि योऽत्रा उपद्रवः अन्यायकरणं प्रभूतस्यार्थस्य नाशं करोति। कथं न (? चन) तत्र स्थाने व्यवहारेणा( ? री नाऽऽ)गच्छति। ततः किं न भवति ? तथा च गुरुः– 'शुल्कस्थानेषु योऽन्यायः स्वल्पोऽपि च प्रवर्तते। तत्र नाऽऽगच्छते कश्चिद्व्यवहारी कथंचन ॥'। नीवाटी.

**क्षीरिषु कणिशेषु सिद्धादायो जनपदमुद्वासयति ॥**

अथ क्षीरिषु कणिशेषु यद्भवति तदाह– क्षीरिष्विति। उद्वासयति देशान्तरं प्रेषयति। कोऽसौ ? सिद्धादायः परिपच्यमानग्रहणम्। कम् ? जनपदम्। केषु ? क्षीरिषु कणिशेषु। क्षीरिणः कणिशाः यवगोधूमादयः, तेषां यत् ग्रहणं राजा करोति। एतदुक्तं भवति– अपरिपक्वेषु यवगोधूमेषु पक्वा(?) यो दण्डस्तस्य ग्रहणं स्वेच्छया

करोति तज्जनपदमुद्वासयति । तथा च शुक्रः— 'क्षीरयुक्तानि धान्यानि यो गृह्णाति महीपतिः । कर्षकाणां करोत्यत्र विदेशगमनं हि सः ॥' । नीवाटी.

**लवनकाले सेनाप्रचारो दुर्भिक्षमावहति ॥**

अथ लवनकाले यस्य सेनाप्रचारो भवति तस्मिन् देशे यत्स्यात्तदाह— लवनकाल इति । परिपक्वसस्यकाले योऽसौ सेनाप्रचारः स किं करोति ? दुर्भिक्षमावहति तस्मिन् देशे दुर्भिक्षं जनयति । एतदुक्तं भवति— पक्वमानेन सकस्तै श्रुवतिः कस्मात् (?) तत्र परदेशे सैन्यप्रचारः कर्तव्यः, न स्वदेशे । तथा च जैमिनिः— 'सस्यानां परिपक्वानां समये यो महीपतिः । सैन्यं प्रचारयेत्तच्च दुर्भिक्षं प्रकरोति सः ॥' । नीवाटी.

***सर्वबाधा प्रजानां कोशं पीडयति ॥**

अथ प्रजानां पीडनेन कोशस्य यद्भवति तदाह— सर्वबाधेति । पीडयति रिक्ततां नयति । कम् ? कोशं भाण्डागारम् । काः पीडयन्ति ? सर्वबाधाः सर्वपीडनानि । कासाम् ? प्रजानाम् । (प्रजानां) यानि पीडनानि तैर्भूपालस्य भाण्डागारेऽर्थो न प्रविशति । तथा गर्गः— 'प्रजानां पीडनाद्वित्तं न प्रभूतं प्रजायते । भूपतीनां ततो ग्राह्यं प्रभूतं येन तद्भवेत् ॥' । नीवाटी.

**दत्तपरिहारमनुगृह्णीयात् ॥**

अथ स्वयं दत्तस्य राज्ञा यत्कर्तव्यं तदाह— दत्तेति । अनुगृह्णीयात् । कथम् ? दत्तपरिहारं यथा भवति । ये अकराः कृतास्तेषां करो न ग्राह्यः । तथा च नारदः— 'अकरा ये कृताः पूर्वं तेषां ग्राह्यः करो न हि । निजवाक्यप्रतिष्ठार्थं भूभुजा कीर्तिमिच्छता ॥' । नीवाटी.

**मर्यादातिक्रमेण फलवत्यपि भूमिर्भवत्यरण्यानी ॥**

अथ मर्यादातिक्रमेण यादृग्भूमिर्भवति तदाह— मर्यादेति । अरण्यानी भवति अरण्यं भवति । काऽसौ ? भूमिः । किंविशिष्टाऽपि ? फलवत्यपि समृद्धाऽपि । केन कृत्वा ? मर्यादातिक्रमेण व्यवहारलङ्घनेन । तथा च गुरुः— 'मर्यादातिक्रमो यस्यां भूमौ राज्ञः प्रजायते । समृद्धाऽपि च सा द्रव्यैर्जायतेऽरण्यसंनिभा ॥' । नीवाटी.

**क्षीणजनसंभावनं तृणशलाकाया अपि स्वयमग्रहः कदाचित्किंचिदुपजीवनमिति परमः प्रजानां वर्धनोपायः ॥**

अथ प्रजानां वर्धनोपायो यथा भवति तदाह— क्षीणेति । वर्धनोपायः वृद्धिकारी उपायः । कासाम् ? प्रजानाम् । क्षीणजनसंभावनं तावत् क्षीणः दुर्बलः यः कुटुम्बी (तस्य) संभावनं उद्धारकदानं प्रतिशतकवृद्ध्या । तथा अग्रहः अग्रहणम् । कस्याः ? तृणशलाकाया अपि । आस्तां तावत्, कदाचित् कस्मिन् काले किंचिदुपजीवनं दण्डग्रहं स्तोकं ग्राह्यम्, येन स्वयमुपजीवनं निर्वाहणं भवति । इत्यनेन त्रिविधेन परमः उत्कृष्टः वर्धनोपायः प्रजानामिति । तथा च नारदः— 'चिन्तनं क्षीणवृत्तानां स्वग्राहस्य विवर्जनम् । युक्तदण्डं च लोकानां परमं वृद्धिकारणम् ॥' । नीवाटी.

**न्यायेन रक्षिता पण्यपुटभेदिनी पिण्ठा राज्ञां कामधेनुः ॥**

अथ न्यायेन रक्षिता पिण्ठा राज्ञो यादृग्भवति तदाह — न्यायेनेति । कामधेनुर्भवति वाञ्छितप्रदात्री भवति । काऽसौ ? पिण्ठा शुल्कस्थानम् । किंविशिष्टा पिण्ठा ? पण्यपुटभेदिनी पण्यानि वणिग्जनानां कुङ्कुमहिङ्गुवस्त्रादीनि क्रयाणकानि, तेषां पुटाः स्थानानि भिद्यन्ते यस्यां सा पण्यपुटभेदिनी । किंविशिष्टा सती स्यात्कामधेनुः ? (रक्षिता) परिपालिता सती । केन कृत्वा ? न्यायेन नीत्या । किंविशिष्टं रक्षणम् ? तस्याः अधिकशुल्काग्रहणम्, तथा चौरादिभिर्यत् गृह्यते तस्यां तत्स्वयमेव दातव्यम् । तथा च शुक्रः— 'ग्राह्यं नैवाधिकं शुल्कं चौरैर्यच्चाऽऽहृतं भवेत् । पिण्ठायां भूभुजा देयं वणिजां तत्स्वकोशतः ॥' । नीवाटी.

---

* 'सर्वबाधा पीडयति' इत्यत्र टीकाकारमते एकवचनान्तः पाठो बहुवचनान्तो वेति निर्णेतुं न शक्यते ।

**राज्ञां चतुरङ्गबलाभिवृद्धये भूयांसो भक्तग्रामाः ॥**

अथ राज्ञां चतुरङ्गबलहेतवो ये भवन्ति तानाह— राज्ञामिति । राज्ञः भूपस्य चतुरङ्गबलाभिवृद्धये भवन्ति चतुरङ्गं यद्बलं हस्त्यश्वरथपदातिसंज्ञं (तस्य) वृद्धिहेतवः वृद्धिकारणानि एते भक्तग्रामाः येषु भक्तं धान्यं उत्पद्यते । किंविशिष्टास्ते ? भूयांसः बहवः । कस्यचित् ते न देयाः । तथा च शुक्रः— ‘चतुरङ्गबलं येषु भक्तग्रामेषु तृप्यति । वृद्धिं याति न देयास्ते कस्यचित्स्यदा यतः ॥’ । नीवाटी.

**सुमहच्च गोमण्डलं हिरण्याय युक्तं शुल्कं कोशवृद्धिहेतुः ॥**

अथ राज्ञः कोशहेतुर्यद्भवति तदाह— सुमहच्चेति । यस्य राज्ञो देशे गोमण्डलं प्रचुरगावः भवन्ति । कस्मै ? द्रव्याय हिरण्याय भवति । तद्भू(प)तेर्युक्तं (?) तथा शुल्कं च । शुल्कशब्देन वणिग्जनस्य पण्यस्य युक्तं यदर्थग्रहणं तत् (शुल्कं ?) उच्यते । तेन कोशो वृद्धिं याति । तथा च गुरुः— ‘प्रभूता धेनवो यस्य राष्ट्रे भूपस्य सर्वदा । हिरण्याय तथा शुल्कं युक्तं कोशाभिवृद्धये ॥’ । नीवाटी.

**देवद्विजप्रदेया गोरुतप्रमाणा भूमिर्दातुरादातुश्च सुखनिर्वाहा ॥**

देवद्विजानां विबुधब्राह्मणानां या देया भूमिः सा किंप्रमाणा ? गोरुतप्रमाणा । गोरुतं गोशब्दः यावन्मात्रायां भूमौ श्रूयते तावन्मात्रा देया । ननु कस्मादभ्यधिका न दीयते ? यतस्तावन्मात्रा दत्ता भवति सुखावहा (दातुः) आदातुश्च प्रतिग्रहयुक्तस्य । स्तोकं मत्वा न कश्चिल्लोपं नयति । तथा च गौतमः— ‘देवद्विजप्रदत्ता भूः प्रभूता लोपमाप्नुयात् । दातुश्च ब्राह्मणस्यापि शुभा गोशब्दमात्रका ॥’ । नीवाटी.

**क्षेत्रवप्रखण्डगृहधर्मायतनानामुत्तरः पूर्वं बाधितः (? धते) (न) पुनरुत्तरं पूर्वः ॥**

अथान्येषां भूदानानां स्वरूपमाह— क्षेत्रेति । एतेषां पञ्चप्रकाराणां भूदानानां योऽयं स्याद्भूदानविषयस्योत्तरः द्वितीयः स पूर्वं प्रथमं आबाधयेत् लघुतां नयेदित्यर्थः । न प्रथमो द्वितीयम् । एतदुक्तं भवति— क्षेत्रदानात्परं तडागदानं तस्मात्खण्डदानं तस्माद्गृहदानं तस्माद्धर्मायतनदानम् । (तत्सारदानां देवायतनकरमित्यर्थः । तथा नोत्तरात् पूर्वम् । सर्वेषामुत्तरः प्रासादः तस्मादत्यर्थगृहं ताप्या तस्मात्खण्डं तस्माद्वप्रः तस्मात्कोलघुः वाशब्दः समुच्चये । ?) । नीवाटी.

## युक्तिकल्पतरुः

राष्ट्राभिवृद्धिविधिः

[१]कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् ।
भूगुणैर्वर्धते राष्ट्रं तद्वृद्धिर्नृपवृत्ततः ॥
राज्ञोपायेन संरक्ष्या ग्रामे ग्रामे कृषीवलाः ।
तेभ्यः कृषिस्ततश्चार्था अर्थेभ्यः सर्वसंपदः ॥
शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा वर्षेषु वर्षेषु कर्षणाद्भूगुणक्षयः ॥
एकस्यां गुणहीनायां कृषिमन्यत्र कारयेत् ॥

## मानसोल्लासः

राज्ञा अधिष्ठेयं राष्ट्रम्, राष्ट्राभिवृद्धिविधिः राष्ट्रसंग्रहविधिश्च

[२]वर्धते भूगुणैर्देशो देशवृद्धिर्नृपर्द्धये ।
भूमिं गुणवतीं तस्मादावसेद् भूतये नृपः ॥
सर्वसस्यवती सेव्या खनिद्रविणगर्भिणी ।
पशव्या बहुपानीया पुण्यवद्भिर्जनैर्युता ॥
स्तम्बेरमवनोपेता बहूद्याता सुशोभना ।
भूर्नदीमातृका शस्ता सर्वदा धरणीभुजाम् ॥
ईदृग्भूमियुतं राष्ट्रं महापत्तनभासितम् ।
पालनाद्वर्धयेद्राजा स्वकोशस्याभिवृद्धये ॥
स्वराष्ट्रे पालयेद्राजा प्रजाः पुत्रानिवौरसान् ।
चौरेभ्योऽमात्यकेभ्यश्च तथैवाधिकारितः ॥
चोरैः साहसिकैश्चाटैर्दुराचारैस्तथा परैः ।
विशेषेण च कायस्थैः पिडिताः पालयेत्प्रजाः ॥

---

(१) युक. ७।३९–४२.
(२) मासो. २।१५१–१६२.

स्वराष्ट्रं यो नृपो मोहात्पीडयेदनवेक्षया ।
राज्यात्स च्यवते शीघ्रं प्राणेभ्यः सह बन्धुभिः ॥
यथैव प्राणिनां प्राणा हीयन्ते देहपीडनात् ।
तथैव भूभुजां प्राणा हीयन्ते देशपीडनात् ॥
एकग्रामप्रभुं कुर्याद्दशग्रामप्रभुं तथा ।
ग्रामाणां विंशतेः कुर्यात्प्रभुं शतसहस्रयोः ॥
ग्रामे दोषं समुत्पन्नमशक्तः शासितुं यदि ।
दशग्रामेशिनं शंसेद्दशेशो विंशतीश्वरे ॥
विंशतीशः शतेशाय तत्सर्वं विनिवेदयेत् ।
ब्रूयाद्ग्रामशतस्वामी सहस्रस्वामिनेऽखिलम् ॥
उत्पन्नांस्तु तथा दोषान् ग्रामादाशु निवेदितान् ।
ज्ञात्वा तत्र स्थिताः सर्वे कुर्युस्तेषां प्रतिक्रियाम् ॥

[1]भूप्रदेशमकृष्टं तु गवां चाराय कल्पयेत् ।
देवोद्यानं सुप्रतिष्ठं मुनिभ्यो वितरेन्नृपः ॥

मृगसंघातसंपन्नं क्रूरसत्त्वैर्विवर्जितम् ।
वनमात्मविहारार्थं पालयेत्पुरपार्श्वगम् ॥

प्रत्यन्तदेशसंभूतं वनं गिरिदरीयुतम् ।
सर्वेषां गृहकृत्यर्थं पार्थिवः प्रतिपादयेत् ॥

[2]द्वीपिजन्मवनं श्रेष्ठं वर्तमानगजं च यत् ।
अटवीवर्तिभिर्लोके रक्षणीयं क्षमाभुजा ॥

(१) मासो. २।१६७–१६९.
(२) मासो. २।१७१.

# दुर्गम्

—०—

## वृद्धहारीतः

जनकोशात्मगुप्त्यर्थं रम्ये देशे दुर्गनिर्माणं
तत्राध्यक्षस्थापनं च

[1]उपजीव्योपसर्पेच्च रम्ये देशे नृपोत्तमः ।
दुर्गाणि तत्र कुर्वीत जनकोशात्मगुप्तये ॥
तत्र कर्मसु निष्णातान्कुशलान् धर्मनिष्ठितान् ।
सत्यशौचयुताञ्शुद्धानध्यक्षान् स्थापयेन्नृपः ॥

## आपस्तम्बः

पुरवेश्मामन्त्रणसभानिर्माणम् , तत्राग्निस्थापना, आमन्त्रण-
मतिथिवासार्थम्, सभा अधिदेवनार्थम्

[2]दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥

वेश्म गृहम्, पुरं नगरम्, तदुभयमपि दक्षिणाद्वारं मापयेत् कारयेत् स्थपत्यादिभिः । दक्षिणपार्श्वे द्वारं यस्य तत्तथोक्तम् । उ.

अन्तरस्यां पुरि वेश्म ॥

सर्वेषामेव प्राकाराणां मध्ये या पूः तस्यां अन्तरस्यां पुरि वेश्म मापयेदात्मनः । उ.

तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥

तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः । एत्य वसन्त्यस्मिन्नित्यावसथः आस्थानमण्डपः । तस्याऽऽमन्त्रणमिति संज्ञा । तत्र हि अतिथय आमन्त्र्यन्ते । उ.

दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं संदृश्येत बहिरन्तरं चेति ॥

दक्षिणेनेति एनबन्तम् । पुरमिति 'एनपा द्वितीया' ( पा. २।३।३१ ) इति द्वितीयान्तम् । पुरस्य दक्षिणतः अदूरे सभा कारयितव्या । दक्षिणोदग्द्वारा दक्षिणस्यामुत्तरस्यां च दिशि द्वारं यस्याः सा तथोक्ता । किमर्थमुभयत्र द्वारमिति चेत् , यद्बहिर्वृत्तं यच्चाऽऽभ्यन्तरं तदुभयमपि यथा दृश्येतेत्येवमर्थमिति । सैषा द्यूतसभा, तस्यां द्यूतार्थिनः प्रविशन्तीति । तदायस्थानं राज्ञः । उ.

*[1]सर्वेष्वेवाजस्रा अग्नयः स्युः ॥
अग्निपूजा च नित्या यथा गृहमेधे ॥
आवसथे श्रोत्रियावरार्ध्यानतिथीन् वासयेत् ॥
तेषां यथागुणमावसथाः शय्याऽन्नपानं च विदेयम् ॥

[2]सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेद्युग्मान् वैभीतकान् यथार्थान् ॥

पूर्वोक्तायाः सभाया मध्ये अधिदेवनम् । यस्योपरि कितवा अक्षैः दीव्यन्ति तत् स्थानं अधिदेवनम् । तत् पूर्वं काष्ठादिना उद्धन्ति । उद्धत्यावोक्षति । अवोक्ष्य तत्राक्षान् युग्मसंख्याकान् वैभीतकान् विभीतकवृक्षस्य विकारभूतान् यथार्थान् यावद्भिर्द्यूतं निर्वर्तते तावतो निवपति । कः ? यस्तत्र राज्ञा नियुक्तः सभिको नाम । उ.

आर्याः शुचयः सत्यशीला दीवितारः स्युः ॥

आर्याः द्विजातयः । शुचयः अर्थशुद्धाः । सत्यशीलाः सत्यवादिनः । एवंभूता एव पुरुषास्तत्र दीवितारः देवितारः स्युः । त एव तत्र दीव्येयुरित्यर्थः । ते च तत्र देवित्वा यथाभावितं पणं सभिकाय दत्त्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमासं प्रतिसंवत्सरं वा दद्यात् । स एव च स्थानान्तरे दीव्यतो दण्डयेत् , सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः– 'ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् । गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥

---

* एतदादीनां चतुर्णां सूत्राणां व्याख्यानं शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १०२८) द्रष्टव्यः ।

(१) वृहास्मृ. ७।२३३–२३४.
(२) आध. २।२५।२–५.

(१) आध. २।२५।६–९.
(२) आध. २।२५।१२–१३.

स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् । जितमुद्ग्राहयेज्जैत्रं दद्यात् सत्यं वचः क्षमी ॥' ( यास्मृ. २।१९९--२०० ) इति । उ.

## विष्णुः

वैश्यशूद्रप्रायेऽर्थसंपन्ने देशे षड्विधदुर्गान्यतमो दुर्गं आश्रयणीयो राज्ञा

[1]'राजा च जाङ्गलं पशव्यं सस्योपेतं देशमाश्रयेत् ॥

वैश्यशूद्रप्रायं च ॥

[2]'तत्र धन्वनृमहीवारिवृक्षगिरिदुर्गाणामन्यतमं दुर्गमाश्रयेत् ॥

महिदुर्गं मह्यामेवेष्टकापाषाणादिनिमिचं ( ? निर्मितं ) दुर्गम् । मह्यैवोचावचप्रदेशप्रचुर( ? रा )दुर्गमित्यन्ये । वै.

## महाभारतम्

राज्ञा आस्थापनीया षड्विधा दुर्गाः, नरदुर्गस्योत्तमत्वम्, दुर्गसंपन्नपुरनिर्माणविधिः

[3]'दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वेषु तेषु मन्यन्ते नरदुर्गं सुदुस्तरम् ॥

( १ ) एतस्य ( बलदुर्गस्य ) प्रशंसाऽप्युक्ता महाभारते– 'दुर्गेषु च .... ॥' इति । अन्योन्यसंश्लिष्टहस्तमानुषमण्डलं नृदुर्गमिति केचित् । तन्न हृदयंगमम्, एतादृशदुर्गस्य दुस्तरत्वाभावात् । राकौ.११६

( २ ) षट्सु मरुजलपृथिवीवनपर्वतनरमयेषु । नीटी.

[1]'एकाङ्गेनापि संभूतः शत्रुर्दुर्गसमाश्रितः ।
तं तं तापयते देशमपि राज्ञः समृद्धिनः ॥

एकाङ्गेन हस्त्यश्वरथपादातानामन्यतमेनापि संभूतः संपन्नः । समृद्धिनः समृद्धिमतः । नीटी.

युधिष्ठिर उवाच–

[2]'कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥

भीष्म उवाच–

'यत्र कौन्तेय वस्तव्यं सपुत्रभ्रातृबन्धुना ।
न्याय्यं तत्र परिप्रष्टुं गुप्तिं वृत्तिं च भारत ॥

[3]'तस्मात्ते वर्तयिष्यामि दुर्गकर्म विशेषतः ।
श्रुत्वा तथा विधातव्यमनुष्ठेयं च यत्नतः ॥

[4]'षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् ।
सर्वसंपत्प्रधानं यद्बाहुल्यं वाऽपि संभवेत् ॥

[5]'धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गमब्दुर्गं वनदुर्गं च तानि षट् ॥

( १ ) बन्धुदुर्गं सोदरादिबन्धूनां राजगृहस्य परितः स्थानानि । तत्र बन्धुदुर्गमनुष्यदुर्गयोः पृथग्ग्रहणं गोबलीवर्दन्यायेन । अन्तरङ्गत्वात् शूरत्वाच्च बन्धूनां पृथङ्निर्देशः । तथा यावद्बन्धुदुर्गं संभवति तावदितरमनुष्यदुर्गं न कुर्वीतेति । नीम. ५१

---

(१) विस्मृ. ३।४–५.

(२) विस्मृ. ३।६ ; राकौ. ११७ ( वृक्ष० ).

(३) भा. १२।५६।३५ ; भामु. १२।५६।३५ सर्वेषु तेषु ( सर्वदुर्गेषु ) ; राप्र. २०१ सर्वेषु तेषु मन्यन्ते ( सर्वे दुर्गेषु शस्यन्ते ) ; राकौ. ११६ षट्सु ये ( ध्रुवेऽर्हं ) सर्वेषु तेषु मन्यन्ते ( सर्वदुर्गेषु शस्यन्ते ).

(१) भा. १२।५८।१८ ; भामु. १२।५८।१८ एकाश्वे ( एकाङ्गे ) समा ( श्रुपा ) तं तं ( सर्वं ).

(२) भा.१२।८७।१ ; भामु. १२।८६।१.

(३) भा. १२।८७।२ ; भामु. १२।८६।२ पूर्वार्धे ( वस्तव्यं यत्र कौन्तेय सपुत्रज्ञातिबन्धुना । ) गुप्तिं वृत्तिं ( वृत्तिं गुप्तिं ).

(४) भा. १२।८७।३ ; भामु. १२।८६।३.

(५) भा. १२।८७।४ ; भामु. १२।८६।४ वाऽपि ( चापि ).

(६) भा. १२।८७।५ ; भामु. १२।८६।५ र्गमब्दु ( र्गं मृद्दु ) ; नीम. ५१ 'धन्वदुर्गम्' इत्यत्र 'बन्धुदुर्गम्' इति व्याख्यानानुसारी पाठः.

(२) अथ दुर्गाणामाश्रयेण पुराणि महानगराणि निवेशयेत्। धन्वा निर्जलदेशः, तदेव परितश्च दुर्गं धन्वदुर्गम्। महीदुर्गं कोटः। नीटी.

[1]यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम्।
दृढप्राकारपरिखं हस्त्यश्वरथसंकुलम्॥

दुर्गेण महीदुर्गेण संपन्नम्। अत एव दृढप्राकारपरिखम्। नीटी.

[2]विद्वांसः शिल्पिनो यत्र निचयाश्च सुसंचिताः।
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः॥

[3]ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम्।
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम्॥

[4]सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम्।
शूराढ्यजनसंपन्नं ब्रह्मघोषानुनादितम्॥

सानुनादं गीतवादित्रध्वनिमत्। नीटी.

[5]समाजोत्सवसंपन्नं सदापूजितदैवतम्।
वश्यामात्यबलो राजा तत्पुरं स्वयमावसेत्॥

[6]तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत्।
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत्॥

[1]भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत्।
निचयान् वर्धयेत्सर्वांस्तथा यन्त्रगदागदान्॥

निचयान् धान्यादिसंग्रहान्। नीटी.

[2]काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान्।
मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च॥

[3]शणं सर्जरसं धान्यमायुधानि शरांस्तथा।
चर्म स्नायु तथा वेत्रं मुञ्जवल्बजधन्वनान्॥

दन्ध्वनान् ध्वनिमतो निःसाणादीन्। 'बन्धनान्' इति पाठान्तरे स्पष्टोऽर्थः। नीटी.

[4]आशयाश्चोदपानाश्च प्रभूतसलिला वराः।
निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः॥

आशयाः निपानानि। उदपानाः कूपाः। निरोद्धव्याः रक्षणीयाः। नीटी.

[5]एष ते लक्षणोद्देशः संक्षेपेण प्रकीर्तितः।
यादृशं नगरं राजा स्वयमावस्तुमर्हति॥

[6]पुरं च ते सुगुप्तं स्याद्दृढप्राकारतोरणम्।
अट्टाट्टालकसंबाधं षट्पथं सर्वतोदिशम्॥

[7]तस्य द्वाराणि कार्याणि पर्याप्तानि बृहन्ति च।
सर्वतः सुविभक्तानि यन्त्रैरारक्षितानि च॥

---

(१) भा. १२।८७।६; भामु. १२।८६।६; पमा. ४०७ उत्त.

(२) भा. १२।८७।७; भामु. १२।८६।७ दाक्ष्यमु (दाक्ष्य उ).

(३) भा. १२।८७।८; भामु. १२।८६।८; पमा. ४०७ ऊर्जस्विनरनागाश्वं (ऊर्जस्विननागरं च ?).

(४) भा. १२।८७।९; भामु. १२।८६।९; पमा. ४०७ उत्तरार्धे (शूराढ्यं प्राज्ञसंपूर्णं तत्पुरं स्वयमाविशेत्॥) उत्त.; नीम. ५२ राढ्य (रान्य) उत्त.

(५) भा. १२।८७।१०; भामु. १२।८६।१० वसेत् (विशेत्); नीम. ५२ भामुवत्, उत्त.

(६) भा. १२।८७।११; भामु. १२।८६।११; नीम. ५२ पू.

(१) भा. १२।८७।१२; भामु. १२।८६।१२ यन्त्रगदागदान् (यन्त्रायुधालयान्).

(२) भा. १२।८७।१३; भामु. १२।८६।१३.

(३) भा. १२।८७।१४; भामु. १२।८६।१४ स्नायु (स्नायुं) वल्वजधन्वनान् (वल्वजदन्ध्वनान्).

(४) भा. १२।८७।१५; भामु. १२।८६।१५ ला वराः (लाकराः).

(५) भा. १२।८७।३३; भामु. १२।८६।३२ शं नगरं (शे नगरे).

(६) भा. १५।९।१६; भामु. १५।५।१६ पथं (पदं); रार. २६ ते (तैः) संबाधं (संवेधं).

(७) भा. १५।९।१७; भामु. १५।५।१७ कार्याणि (सर्वाणि); रार. २६ द्वाराणि (दुर्गाणि).

अट्टाः दुर्गोपरिभागे संचारस्थानानि । षट्पदं षड्भिः पदैः पदनीयैः स्थानैर्युक्तम् । तेन सप्तप्राकारमिति गम्यते। तत्र सप्तमस्यान्तःपुरत्वात् षडेवान्येषां पदनीयानि स्थानानि। नीटी.

[1]अदुर्गो विषयः कस्य नारेः परिभवास्पदः ।
अदुर्गो नाऽऽश्रयो राजा पोतच्युतमनुष्यवत् ।
दुर्गं कुर्यान्महाखातमुच्चप्राकारसंयुतम् ॥

## वाल्मीकिरामायणम्

दशरथपालिता मनुनिर्मिता दुर्गरूपा अयोध्यापुरी

[2]कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे पशुधान्यसमृद्धिमान् ॥
[3]अयोध्या नाम तत्राऽऽसीन्नगरी लोकविश्रुता ।
मनुना मानवेन्द्रेण यत्नेन परिनिर्मिता ॥
[4]आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा नानासंस्थानशोभिता ॥
[5]सुविभक्तान्तरद्वारा सुविभक्तमहापथा ।
शोभिता राजमार्गेण जलसंसिक्तरेणुना ॥
नानावणिग्जनोपेता नानारत्नविभूषिता ।
महाशालान्विता दुर्गा उद्यानप्रवरैर्युता ॥
दुर्गगम्भीरपरिखा नानायुधसमन्विता ।
कपाटतोरणयुता उपेता धन्विभिः सदा ॥
राजा दशरथो नाम महात्मा राष्ट्रवर्धनः ।
तां पुरीं पालयामास स्वपुरीं मघवानिव ॥
दृढद्वारप्रतोलीकां सुविभक्तान्तरापणाम् ।
नानायन्त्रायुधवतीं नानाशिल्पिगणैर्युताम् ॥
शतघ्नीपरिखोपेतामुच्छ्रितध्वजतोरणाम् ।
नानारत्नचयाकीर्णां धनधान्यसमन्विताम् ॥
देवतायतनैश्चैव विमानैरिव शोभिताम् ।
सभोद्यानप्रपाभिश्च रुचिराभिरलंकृताम् ॥
प्रविभक्तमहाहर्म्यां नरनारीगणान्विताम् ।
बृहच्छूरार्यपुरुषैराकीर्णाममरोपमैः ॥
प्ररोहमिव रत्नानां प्रतिष्ठानमिव श्रियः ।
महाप्रासादशिखरैः शैलाग्रैरिव शोभिताम् ॥
विमानचयसंबाधामिन्द्रस्येवामरावतीम् ।
अष्टापदपदालेख्यै रम्यामालिखितामिव ॥

---

(१) रार. २६.

(२) वारा. १।५।५; वाराकु. १।५।२ पशुधान्य-समृद्धिमान् (प्रभूतधनधान्यवान्).

(३) वारा. १।५।६; वाराकु. १।५।६ तत्राऽऽसीन्नगरी (नगरी तत्राऽऽसीत्) यत्नेन परिनिर्मिता (या पुरी निर्मिता स्वयम्).

(४) वारा. १।५।७; वाराकु. १।५।७ नानासंस्थान-शोभिता (सुविभक्तमहापथा).

(५) वारा. १।५।८–२३; वाराकु. १।५।८–२३ (राजमार्गेण महता सुविभक्तेन शोभिता । मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ तां तु राजा दशरथो महाराष्ट्रविवर्धनः । पुरीमावासयामास दिवं देवपतिर्यथा ॥ कवाटतोरणवतीं सुविभक्तान्तरापणाम् । सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् । उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् । उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ दुर्गगम्भीरपरिघां दुर्गामन्यैर्दुरासदाम् । वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ सामन्तराजसंघैश्च बलिकर्मभिरावृताम् । नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् । कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ चित्रामष्टापदाकारां वरनारीगणैर्युताम् । सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् । शालितण्डुल-संपूर्णामिक्षुकाण्डरसोदकाम् ॥ दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा । नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ विमानमिव सिद्धानां तपसाऽधिगतं दिवि । सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् । शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ सिंहव्याघ्रवराहाणां मत्तानां नर्दतां वने । हन्तारो निशितैः शस्त्रैर्बलाद् बाहुबलैरपि ॥ तादृशानां सहस्रैस्तामभिपूर्णां महारथैः । पुरीमावासयामास राजा दशरथस्तदा ॥ तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः । सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैरृषिभिश्च केवलैः ॥ ).

नानारत्नचयाच्छन्नां हृष्टपुष्टजनायुताम् ।
अविच्छिन्नान्तरगृहां समभूमिनिवेशिताम् ॥
मृदङ्गवेणुवीणानां रम्यैः शब्दैर्विनादिताम् ।
नित्योत्सवसमाजाढ्यां नित्यहृष्टजनायुताम् ॥
ब्रह्मघोषस्वनवतीं धनुःस्वनविनादिताम् ।
वरान्नपानसलिलां शालितण्डुलभोजनाम् ॥
धूपमाल्यहविर्गन्धैर्हृद्यैश्चैवाधिवासिताम् ।
लोकपालोपमैः शूरैः सर्वशास्त्रार्थपारगैः ॥
गुप्तां योधशतैश्चापि नागैर्भोगवतीमिव ।
स्वयं चैवेन्द्रकल्पेन पुरीं देवपुरोपमाम् ।
गुप्तामिक्ष्वाकुनाथेन राज्ञा दशरथेन च ॥
वराग्निवद्भिर्गुणवद्भिरन्वितां
द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रशैः सत्यतपोदमान्वितै-
र्महर्षिकल्पैर्यतिभिर्यतात्मभिः ॥
[1]हृष्टपुष्टजने तस्मिन् पुरे नैवाबहुश्रुतः ।
कश्चिदासीन्नरो नापि कश्चिदन्यायवृत्तिमान् ॥
न चाल्पविभवः कश्चिदासीत्तत्र जनः पुरे ।
न चाप्यासीदसंतुष्टः कुटुम्बी तत्र कश्चन ॥
न कदर्यः कश्चिदासीन्नानृती न शठोऽपि वा ।
न मानी न च संरम्भी न नृशंसो न कुत्सितः ॥
नामहात्मा न पिशुनो न परस्वोपजीवकः ।
न चावर्षसहस्रायुर्न दीनो नाबहुप्रजः ॥
नराः स्वदारनिरता नार्यश्चाऽऽसन् पतिव्रताः ।
सुव्रता वृत्तिमन्तश्च नरा आसंस्तथा स्त्रियः ॥
नाकुण्डली नामुकुटी नास्रग्वी नाविलेपनी ।
तत्र दुष्प्रकृतिर्नाऽऽसीद्दरिद्रो वा पुरोत्तमे ॥
नामृष्टभूषणधरो न चाप्यासीदनिष्कधृक् ।
नाहस्ताभरणोपेतो नानृती न च नास्तिकः ॥
नानाहिताग्निर्नायज्वा विप्रो नाप्यसहस्रदः ।
कश्चिन्नाऽऽसीदयोध्यायां सद्वृत्तरहितो जनः ॥
स्वकर्मनिरताश्चाऽऽसन्सर्वे तत्र द्विजातयः ।
यज्ञाध्ययननिष्ठाश्च विरताश्च प्रतिग्रहात् ॥

---

(१) वारा. १।६।६–२९ ; वाराकु. १।६।६–२८ ( तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः । नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ नाल्पसन्निचयः कश्चिदासीत्तस्मिन् पुरोत्तमे । कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् । द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः । उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् । नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् । नाहस्ताभरणो वाऽपि दृश्यते नाप्यनात्मवान् ॥ नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः । कश्चिदासीदयोध्यायां न च निर्वृत्तसंकरः ॥ स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः । दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ न नास्तिको नानृतको न कश्चिदबहुश्रुतः । नासूयको न वाऽशक्तो नाविद्वान् विद्यते तदा ॥ नाषडङ्गविदत्राऽऽसीन्नाव्रतो नासहस्रदः । न दीनः क्षिप्रचित्तो वा व्यथितो वाऽपि कश्चन ॥ कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् । द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः । कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः । सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ क्षत्रं ब्रह्ममुखं चाऽऽसीद्वैश्याः क्षत्रमनुव्रताः । शूद्राः स्वधर्मनिरतास्त्रीन् वर्णानुपचारिणः ॥ सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता । यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ योधानामग्निकल्पानां पेशलानाममर्षिणाम् । संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ काम्भोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः । वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि । मदान्वितैरतिबलैर्मातङ्गैः पर्वतोत्तमैः ॥ ऐरावतकुलीनैश्च महापद्मकुलैस्तथा । अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा । भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी । नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः ॥ सा योजने च द्वे भूयः सत्यनामा प्रकाशते । यस्यां दशरथो राजा वसञ्जगदपालयत् ॥ तां पुरीं स महातेजा राजा दशरथो महान् । शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥ तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् । पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥ ).

न नास्तिको नास्तिकवाङ् न कश्चित्क्रोधनो नरः ।
न सूचको न चाशक्तो नाशुचिस्तत्र चाप्यभूत् ॥
नामृष्टभुङ् न चादाता नास्रग्गन्धो न चानृजुः ।
न दुःखी पुरुषः कश्चिन्न चाऽऽसीदनलंकृतः ॥
चारुचातुर्यमाधुर्यशीलाचारगुणान्विताः ।
नार्यश्चाऽऽसन्नयोध्यायां मृष्टाभरणभूषिताः ॥
नानात्मवान्न च क्रूरो न विरूपो न चालसः ।
कश्चिदासीदयोध्यायां नाश्रीमान् नामहात्मवान् ॥
न दीनो नापि चोद्विग्नो नाऽऽतुरो न भयाकुलः ।
द्रष्टुं शक्यो ह्ययोध्यायां नापि राजन्यभक्तिमान् ॥
वर्णश्रेष्ठान्पूजयन्तः पितॄन्देवातिथींस्तथा ।
आसन् दीर्घायुषस्तत्र नराः सत्यपरायणाः ॥
ब्रह्म पर्यचरत्क्षत्रं वैश्याः क्षत्रमनुव्रताः ।
शूद्राश्चैवापि वर्णांस्त्रीन् शुश्रूषन्तोऽनसूयवः ॥
आसीत्क्षत्रं ब्रह्ममुखं विट्शूद्रं राजभक्तिमत् ।
न योनिसंकरश्चापि तत्र नाऽऽचारसंकरः ॥
एवमिक्ष्वाकुनाथेन पालिता साऽभवत्पुरी ।
यथा पुरस्तान्मनुना मानवेन्द्रेण भूरियम् ॥
योधानामग्निवर्णानां संयुगेष्वनिवर्तिनाम् ।
गुप्ता पुरी सहस्रैः सा सिंहैरिव गिरेर्गुहा ॥
काम्भोजदेशजैश्चापि हयैर्हरियमोपमैः ॥
विन्ध्यपर्वतजैश्चापि गजैर्हैमवतैस्तथा ।
सत्त्ववीरगुणोपेतैः शूरैर्व्यालचेष्टितैः ॥
पद्माञ्जनकुलोद्भूतैर्भद्रमन्द्रमृगान्वयैः ।
सा पुरी बहुभिः कीर्णा तथाऽऽसीद्गन्धहस्तिभिः ॥
सा योजनद्वयं भूमेः सत्यनामा प्रकाशते ।
सा पुरी यत्र राजाऽऽसीद्राजा दशरथस्तथा ॥

तां सत्पथां वै दृढतोरणार्गलां
महर्द्धिभिर्वेश्मशतैरलंकृताम् ।
पुरीं सभोद्यानवतीमनुत्तमां
स कोशलेन्द्रो नृपतिर्व्यपालयत् ॥



दुर्गस्वरूपम्

[1]कच्चित्सदा ते दुर्गाणि धनधान्यायुधादिकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥

## कौटिलीयमर्थशास्त्रम्

परिखावप्रप्राकारराजगृहहर्म्याट्टालिकाप्रतोलिकादेवमार्गादि-सहितानां प्रत्येकं द्विविधानां चतुर्णां दुर्गाणां निर्माणम्

[2]चतुर्दिशं जनपदान्ते सांपरायिकं दैवकृतं दुर्गं कारयेत् । अन्तर्द्वीपं स्थलं वा निम्नावरुद्धमौदकम् । प्रास्तरं गुहां वा पार्वतम् । निरुदकस्तम्बमिरिणं वा धान्वनम् । खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम् । तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानम्, धान्वनवनदुर्गमटवीस्थानमापद्यपसारो वा ॥

दुर्गविधानमिति सूत्रम् । दुर्गरचनोच्यत इति सूत्रार्थः । जनपदप्रकृतिरुक्ता, दुर्गप्रकृतिरधुनाऽभिधीयते ।

जनपदान्ते चतुर्दिशं चतसृषु दिशासु व्यापकं सांपरायिकं युद्धोचितं दैवकृतं दुर्गं कारयेत् स्वभावविषमस्थलं दुर्गत्वेनाऽऽश्रयेत् । किंरूपं तत् कारयेदित्यत्राऽऽह– अन्तरित्यादि । अन्तर्द्वीपं मध्यगतद्वीपं अर्थात् समन्तान्नदीपरिवेष्टनमित्येकम्, निम्नावरुद्धं स्थलं वा निम्नैः सरोभिः समन्तात् वेष्टितं स्थलं वेत्यपरं औदकं जलपरिवेष्टनदुर्गमत्वादौदकपदव्यपदेश्यं दुर्गम् । प्रास्तरं गुहां वा, पर्वतप्रस्तरमयमित्येकम्, देवखातबिलात्मकं वेत्यपरं पार्वतं पर्वतकृतं दुर्गम् । निरुदकस्तम्बं इरिणं वा, जलतृणसंघातशून्यमित्येकम्, ऊषरं वेत्यपरं धान्वनं धन्वकृतं दुर्गम् । खञ्जनोदकं खञ्जनं पङ्किलत्वात् गतिवैकल्यकरमुदकं यस्मिंस्तत् तथाभूतमित्येकम्, स्तम्बगहनं वा अप्रकाण्डद्रुमदुष्प्रवेशं वेत्यपरं वनदुर्गं तदाख्यम् । तदेवमौदकाद्येकैकद्वैविध्यादष्टौ दुर्गाणि सिद्धानि । तेषामिति । तेषां दुर्गाणां मध्ये नदीपर्वतदुर्गे नदीदुर्गं पर्वतदुर्गं च आपदि जनपदारक्षस्थानं जनपदस्य

---

(१) वारा. २।११४।५४ ; वाराकु. २।१००।५४ त्सदा ते (त्सर्वाणि) धादिकैः (धोदकैः).

(२) कौ. २।३.

रक्षाहेतुः भवति। धान्वनवनदुर्गे अटवीस्थानं धान्वनदुर्गे वनदुर्गे च आटविकरक्षास्थानमापदि। अपसारो वा आपदि अपसरणस्थानं वा, अर्थात् राज्ञः। श्रीमूला.

**जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेद्वास्तुकप्रशस्ते देशे नदीसंगमे ह्रदस्य वाऽविशोषस्याङ्के सरसस्तटाकस्य वा वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन प्रदक्षिणोदकं पण्यपुटभेदनमंसवारिपथाभ्यामुपेतम्। तस्य परिखास्तिस्रो दण्डान्तराः कारयेच्चतुर्दश द्वादश दशेति दण्डान् विस्तीर्णा विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूला मूले चतुरश्राः पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा तोयान्तिकीरागन्तुतोयपूर्णा वा सपरिवाहाः पद्मग्राहवतीः॥**

दुर्गविधानमुक्त्वा स्थानीयादिकमाह– जनपदेत्यादि। जनपदमध्ये समुदयस्थानं धनोत्पत्तिस्थानभूतं स्थानीयं महाग्रामादिकं पूर्वोक्तं निवेशयेत्। कीदृशे प्रदेशे? वास्तुकप्रशस्ते वास्तुविद्याभिज्ञनिर्दिष्टे देशे, नदीसंगमे नद्युपश्लेषे, अविशोषस्य सदाजलस्य ह्रदस्य सरसः तटाकस्य पद्माकरस्य वा अङ्के समीपे वा। कीदृशं निवेशयेत्? वास्तुकवशेन वास्तुस्थित्यनुसारेण वृत्तं वर्तुलाकारं दीर्घं चतुरश्रं वा प्रदक्षिणोदकं प्रदक्षिणवाहिसलिलम्, पण्यपुटभेदनं पण्यपुटानां पण्यकरण्डानां तत्तत्पण्योत्पत्तिस्थानेभ्यः प्रहितानां भेदनं बन्धविस्रंसनं अनन्यत्रकार्यतया संकेतितं यस्मिंस्तत् तथाभूतम्, अंसवारिपथाभ्यामुपेतं स्थलमार्गजलमार्गाभ्यां गम्यम्। तस्येति। तस्य स्थानीयस्य तिस्रः प्रथममध्यमतृतीयाः परिखाः कारयेत्। कीदृशीः? दण्डान्तराः द्विचत्वारिंशदङ्गुल एको हस्त इति गणनया देशकालमानप्रकरणोक्तया चत्वारो हस्ता एको दण्डः दण्डमितं अन्तरं परस्परव्यवधानं यासां ताः तथोक्ताः, चतुर्दशदण्डान् द्वादशदण्डान् दशदण्डान् इत्येवंक्रमेण विस्तीर्णाः, विस्तारात् विस्तारपरिमाणात् पादोनं चतुर्भागहीनं अर्धं वा अवगाधाः निम्नाः। तदुभयानुपपत्तावाह– त्रिभागमूला वा विस्तारत्रिभागमानं मूलं अधस्तलं निम्नत्वं यासां तास्तथाभूताः। मूले चतुरश्राः सम्यग्बद्धाः, पाषाणोपहिताः शिलारचिताः पाषाणेष्टकाबद्धपार्श्वा वा, तोयान्तिकीः आजलोदयदेशखाताः, स्वतःसंपन्नजला इत्यर्थः, आगन्तुतोयपूर्णा वा नद्याद्यागतजलसंभृता वा, सपरिवाहाः जलनिर्गममार्गोपेताः, पद्मग्राहवतीः नलिननक्रयुक्ताः। श्रीमूला.

**चतुर्दण्डावकृष्टं परिखायाः षड्दण्डोच्छ्रितमवरुद्धं तद्द्विगुणविष्कम्भं खाताद्वप्रं कारयेदूर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा हस्तिभिर्गोभिश्च क्षुण्णं कण्टकिगुल्मविषवल्लीप्रतानवन्तम्। पांसुशेषेण वास्तुच्छिद्रं वा पूरयेत्॥**

वप्रविधानमाह– चतुर्दण्डावकृष्टमिति। खातात् वप्रं कारयेत् परिखाखातादुद्धृतया मृदा प्राकाराधारभूतं चयं निर्मापयेत्। कथंभूतम्? परिखायाः चतुर्दण्डावकृष्टं षोडशहस्तविप्रकृष्टम्, षड्दण्डोच्छ्रितं चतुर्विंशतिहस्तोन्नतम्, अवरुद्धं मृद्गलनं यथा न भवेत् तथाऽधस्तात् कृतसंरोधम्, तद्द्विगुणविष्कम्भं उच्छ्रयद्विगुणविस्तारम्, ऊर्ध्वचयं अधःस्थूलोपरिकृशं ऊर्ध्वचयाख्यम्, मञ्चपृष्ठं उपर्यधस्ताच्च तुल्यवैपुल्यं मञ्चपृष्ठाख्यम्, कुम्भकुक्षिकं वा ऊर्ध्वाधःकृशं मध्यस्थूलं कुम्भकुक्षिकाख्यं वा, हस्तिभिर्गोभिश्च क्षुण्णं प्रघातदृढीकृतम्, कण्टकिगुल्मविषवल्लीप्रतानवन्तं कण्टकवद्भिस्तृणसंघातैः विषलताप्रतानैश्च युक्तम्। पांस्वित्यादि। पांसुशेषेण वप्रविनियुक्तावशिष्टया मृदा वास्तुच्छिद्रं नगरवास्तुगर्तं राजवास्तुगर्तं च पूरयेद्वा पूरयेच्च। श्रीमूला.

**वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजं युग्मं वाऽऽ चतुर्विंशतिहस्तादिति कारयेत्। रथचर्यासंचारं तालमूलमुरजकैः कपिशीर्षकैश्चाऽऽचिताग्रं पृथुशिलासंहितं वा शैलं कारयेत्, न त्वेव काष्ठमयम्। अग्निरवहितो हि तस्मिन् वसति॥**

प्राकारविधानमाह– वप्रस्येति। विष्कम्भद्विगुणोत्सेधं स्वविस्तारद्विगुणोच्छ्रयम्, ऐष्टकं पक्वेष्टकचितम्। उत्सेधमानं विशदयन्नाह– द्वादशहस्तादूर्ध्वं ओजं युग्मं वा त्रयोदशपञ्चदशादिविषमसंख्यहस्तप्रमाणोत्सेधं चतुर्दश-

षोडशादिसमसंख्यहस्तप्रमाणोत्सेधं वेत्यर्थः। उत्सेधमानस्य परमावधिमाह— आ चतुर्विंशतिहस्तात् चतुर्विंशतिहस्तोत्तमपरिमाणोत्सेधमित्यर्थः। उत्सेधं केचित् विषमसंख्यमिच्छन्ति, समसंख्यमपरे, तत्रान्यतरनिर्बन्धोऽकिंचित्कर इत्योजयुग्मोभयोक्त्या सूचयति। इति एवंप्रकारं प्राकारं वप्रस्योपरि कारयेत्। अनुक्तविशेषणकथनपूर्वं प्राकारस्य प्रकारान्तरमाह— रथेत्यादि। रथचर्यासंचारं रथचर्यया रथगत्या संचारः रथिगतागतं यस्मिन् तं तथाभूतम्। उपरि रथगतागतपर्याप्तविस्तारयुक्तत्वमनेनोक्तम्। तालमूलमुरजकैः कपिशीर्षकैश्च आचिताग्रं तालवृक्षमूलप्रतिकृतिभिर्मुरजप्रतिकृतिभिः कपिशीर्षप्रतिकृतिभिश्च शिलेष्टकाचूर्णनिर्मिताभिः समन्विताग्रम्, पृथुशिलासंहितं शैलं वा विपुलशिलाबद्धं ऐष्टकविलक्षणं शिलामयं वा कारयेत्, अर्थात् प्राकारम्। काष्ठमयं तु प्राकारं नैव कारयेत्। कुतः? हि यतः तस्मिन् काष्ठमये अग्निः अवहितः सन् वसति। श्रीमूला.

**विष्कम्भचतुरश्रमट्टालकमुत्सेधसमावक्षेपसोपानं कारयेत्त्रिंशद्दण्डान्तरं च ॥**

अट्टालकं प्राकाराग्रे रणगृहं कारयेत्। कीदृशम्? विष्कम्भचतुरश्रं विस्तारस्यानुरूपं अर्थादायामे चोत्सेधे च, उत्सेधसमावक्षेपसोपानं उत्सेधानुरूपावरोहसोपानम्, त्रिंशद्दण्डान्तरं च त्रिंशद्दण्डप्रमाणमिथोऽव्यवधानं च। श्रीमूला.

**द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलामध्यर्धायामां प्रतोलीं कारयेत् ॥**

द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलाम्, हर्म्यं धवलगृहमिति ख्यातमैष्टकं गृहम्, तेन तदीयेन च द्वितलेन संहिताम्, अध्यर्धायामां विस्तारात् सार्धगुणपरिमाणदैर्घ्याम्, प्रतोलीं गृहविशेषं कारयेत्। श्रीमूला.

**अट्टालकप्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सापिधानच्छिद्रफलकसंहितमितीन्द्रकोशं कारयेत् ॥**

अट्टालकप्रतोल्योर्मध्ये इन्द्रकोशं खट्वाविशेषं कारयेत्। कथंभूतम्? त्रिधानुष्काधिष्ठानं त्रयाणां धानुष्काणां धन्विनां स्थितिपर्याप्तम्, सापिधानच्छिद्रफलकसंहितं सापिधानानि अवच्छादसाधनोपेतानि छिद्राणि यस्मिंस्तेन तथाभूतेन फलकेन संहितं कृतसंधानं च। श्रीमूला.

**अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायाममनुप्राकारमष्टहस्तायतं देवपथं कारयेत् ॥**

अनुप्राकारं अन्तरेषु अट्टालकप्रतोलीन्द्रकोशानामन्तरालेषु द्विहस्तविष्कम्भं द्विहस्तविस्तारम्, पार्श्वे अर्थात् प्राकारस्य चतुर्गुणायामं अष्टहस्तायतमित्यर्थः, देवपथं देवपथ इव देवपथः रहस्यमार्गः, तं कारयेत्। मातृकायां 'अष्टहस्तायतम्' इत्यपि पठ्यते। तत्तु पुनरुक्तं द्रष्टव्यम्। श्रीमूला.

**दण्डान्तरा द्विदण्डान्तरा वा चार्याः कारयेदग्राह्ये देशे प्रधावितिकां निष्कुहद्वारं च ॥**

दण्डान्तराः दण्डप्रमाणविष्कम्भाः द्विदण्डान्तरा वा चार्याः आरोहावरोहभूमीः कारयेत्। अग्राह्य इति। अग्राह्ये ग्रहणायोग्ये देशे प्रधावितिकां प्रतिपक्षैर्बाणे प्रयुज्यमाने तद्गोचरपरिहारेण भटस्य सुखतिरोधानार्थः क्षुद्रो वरणः प्रधावितिका, तां कारयेत् प्राकारोपरि। निष्कुहद्वारं च कोटरविवरं च प्राकारबहिर्वर्तिप्रतिपक्षचेष्टितगूढदर्शनार्थं कारयेत् प्रधावितिकान्तिके। श्रीमूला.

**बहिर्जानुभञ्जनीत्रिशूलप्रकरकूपकूटावपातकण्टकप्रतिसराहिपृष्ठतालपत्रशृङ्गाटकश्वदंष्ट्रार्गलोपस्कन्दनपादुकाम्बरीषोदपानकैः छन्नपथं कारयेत् ॥**

बहिः परिखाबहिर्भूमिषु जानुभञ्जनीत्रिशूलप्रकरकूपकूटावपातकण्टकप्रतिसराहिपृष्ठतालपत्रशृङ्गाटकश्वदंष्ट्रार्गलोपस्कन्दनपादुकाम्बरीषोदपानकैः छन्नपथं कारयेत्। जानुभञ्जन्यः जानुमात्रीनामधेया दारुमया यन्त्रकीलाः। त्रिशूलप्रकरः सारदारुलोहनिर्मितानां तीक्ष्णत्रिशृङ्गाणामायुधविशेषाणां समूहः। कूपाः अन्धवः। कूटाः अयःशलाकाः। अवपाताः तृणादिच्छन्ना गर्ताः। कण्टकप्रतिसराः आयसाः कण्टकाचिता रज्जुविशेषाः। अहिपृष्ठानि निर्मांससर्पपृष्ठास्थिसदृशाकाराण्ययोमयानि तीक्ष्णाग्राणि। तालपत्राणि तथाविधान्येव तालपत्राकाराणि।

शृङ्गाटकानि त्रिकोटिकानि लौहयन्त्राणि । श्वदंष्ट्राः तदाकारा यन्त्रभेदाः । अर्गलानि विष्कम्भाकाराणि यन्त्राणि । उपस्कन्दनानि स्खलनार्थानि काष्ठानि । पादुकाः एकपादमात्रपातपर्याप्ताः पङ्कपूरिता गर्ताः । अम्बरीषाणि अग्निसंभृततप्तभ्राष्ट्रगर्भा गर्ताः । उदपानकानि दुष्पीतोदकाः कुपुष्करिण्यः । एतैश्छन्नं पन्थानं कारयेत् । श्रीमूला.

**प्राकारमुभयतो मण्डपकमध्यर्धदण्डं कृत्वा प्रतोलीषट्तलान्तरं द्वारं निवेशयेत्पञ्चदण्डादेकोत्तरवृद्ध्याऽष्टदण्डादिति चतुरश्रम् । द्विदण्डं वा । षड्भागमायामादधिकमष्टभागं वा ॥**

इत्थं परिखावप्राकाराणां विधानमुक्त्वा द्वारविधानमाह— प्राकारमुभयत इत्यादि । अस्यार्थः— यत्र द्वारं निर्मित्सितं तत्र प्राकारोभयभागयोः अध्यर्धदण्डविस्तारं मण्डपं परिकल्प्य प्रतोलीषट्तलैरवच्छादितं तदाधारभूतैः षड्भिस्तोरणस्तम्भैर्युक्तं द्वारं निवेशयेत् कारयेत् । पञ्चदण्डात् प्रभृति एकोत्तरवृद्ध्या अष्टदण्डपरमावधिकेन विस्तारेण प्राकारानुरूपेण युक्तं चतुरश्रं निवेशयेदिति । द्विदण्डं वेति । दण्डद्वयविस्तारयुक्तं वा द्वारं निवेशयेत् । इदमेकीयपक्षे । पक्षान्तरमाह— षड्भागमिति । आयामात् दैर्ध्येण षड्भागमष्टभागं वाऽधिकं आश्रितविस्तारमानापेक्षया तदीयषष्ठांशाधिकं तदीयाष्टमांशाधिकं वा निवेशयेत् । इदमेवं विवृण्वन्ति— पञ्चदण्डचतुरश्रस्य षड्भागः साष्टाङ्गुलं हस्तत्रयम्, अष्टभागस्तु सार्धं हस्तद्वयम्, चतुर्विंशत्यङ्गुलः एको हस्तः हस्तचतुष्टयमेको दण्ड इति चाऽऽश्रयणादिति । एवं षड्दण्डचतुरश्रादिषून्नेयम् । श्रीमूला.

**पञ्चदशहस्तादेकोत्तरमष्टादशहस्तादिति तुलोत्सेधः ॥**

एतत् व्याचक्षते— द्वादशहस्तोत्सेधस्य प्राकारसभागृहस्य पञ्चदशहस्तोत्सेधांस्तुलास्तम्भान् कुर्यात् । एवं तद्धस्तचतुर्भागाश्रयेण एकोत्तरवृद्ध्या अष्टादशहस्तपर्यन्तमुत्सेधं कुर्यात् । स एष तुलोत्सेध इति । ‘ तलोत्सेधः ’ इति पाठे उक्तमानैस्तुलास्तम्भैरुपलक्षितस्याऽऽदितलस्योच्छ्रय इत्यर्थः । श्रीमूला.

**स्तम्भस्य परिक्षेपाः षडायामा द्विगुणो निखातश्चूलिकायाश्चतुर्भागः ॥**

स्तम्भस्य परिक्षेपाः परिधयः षडायामाः स्तम्भोत्सेधषड्भागदीर्घाः । पञ्चदशहस्तोत्सेधस्य स्तम्भस्य परिधिमानं सार्धद्विहस्तं कल्पनीयमिति भावः । निखातो द्विगुणः स्तम्भस्य निखातायामः परिक्षेपायामद्विगुणः । पञ्चदशहस्तोत्सेधस्य पञ्चहस्त इति भावः । चूलिकायाश्चतुर्भागः, चूलिका नाम स्तम्भशिखा, तस्या आयामः परिक्षेपायामचतुर्भाग इत्यर्थः । श्रीमूला.

**आदितलस्य पञ्च भागाः शाला वापी सीमागृहं च । दशभागिकौ समत्तवारणौ द्वौ प्रतिमञ्चावन्तरमाणिः । हर्म्यं च समुच्छ्रयादर्धतलं स्थूणावबन्धश्च । आर्धवास्तुकमुत्तमागारं त्रिभागान्तरं वा, इष्टकावबद्धपार्श्वम्, वामतः प्रदक्षिणसोपानं गूढभित्तिसोपानमितरतः ॥**

अयमर्थः— प्रतोलिकात्रितलेषु मध्ये प्रथमतलं पञ्चधा विभज्य तेषु पञ्चसु भागेषु शाला वापी सीमागृहं च कार्याणीति । इदं विवृण्वन्ति— मध्यमे भागे वापीम्, वापीप्रान्तभागयोः दीर्घचतुरश्रे द्वे शाले, शालाप्रान्तयोः सीमागृहं च कारयेदिति । सीमागृहं नाम शालाद्वयप्रान्तयुगलगते पञ्चभागे क्रियमाणं चतुष्कोणं कोष्ठगृहमित्याहुः । दशभागिकाविति । दशभागिकौ शालादशभागविस्तारौ समत्तवारणौ निर्यूहयुक्तौ द्वौ प्रतिमञ्चौ मञ्चप्रतिकृती ऐष्टकौ संनिवेशविशेषौ कार्यौ, अर्थाच्छालायाः प्रान्ततः । अन्तरं शालासीमागृहयोरन्तरालं कार्यम् । आणिः कार्यः । स च क्षुद्रं द्वारमित्याहुः । हर्म्यं चेति । हर्म्यं उपरितलं चन्द्रशाला । तच्च समुच्छ्रयादर्धतलं उत्सेधेन प्रथमतलस्यार्धं प्रथमतलोत्सेधापेक्षयाऽर्धोत्सेधं कार्यम् । ‘ आणिहर्म्यम् ’ इति पाठे आणिः सीमा, तत्रत्यं हर्म्यं सीमागृहवदुपरितले सीमनिर्मिता चन्द्रशालेत्यर्थः । स्थूणावबन्धश्च क्षुद्रस्तम्भनिवेशश्च अर्थात् द्वितीयतले । आर्धवास्तुकमिति । उत्तमागारं तृतीयतलं आर्धवास्तुकं ‘ त्रिदण्ड एको वास्तुः ’ इति परिभाषया वास्तोरर्धं सार्धदण्डः तत्प्रमाणकं कार्यम् । अर्थात्

पञ्चदण्डचतुरश्रस्य द्वारस्य। त्रिभागान्तरं वा पञ्चदण्डत्रिभागः अन्तरं अवकाशः यस्य तत् तथाभूतं वा उत्तमागारं कार्यम्। इह वाशब्दात् त्रिभागद्वयान्तरपक्षार्धान्तरपक्षयोरपि संग्रह इत्याहुः। इष्टकावबद्धपार्श्वं वामतः प्रदक्षिणसोपानं इतरतः दक्षिणतः गूढभित्तिसोपानं च कार्यम्। तृतीयतलविधिरयमधस्तलेऽपि योज्यः। श्रीमूला.

**द्विहस्तं तोरणशिरः, त्रिपञ्चभागिकौ द्वौ कवाटयोगौ, द्वौ द्वौ परिघौ, अरत्निरिन्द्रकीलः, पञ्चहस्तमणिद्वारम्, चत्वारो हस्तिपरिघाः॥**

तोरणशिरः द्वारशीर्षं द्विहस्तं कार्यम्। त्रिपञ्चभागिकौ त्रयः पञ्चभागा अनयोरिति तथाभूतौ द्वौ कवाटयोगौ कार्यौ। द्वौ द्वौ परिघौ अर्गले कार्यौ। इन्द्रकीलः कवाटधारणार्थः प्रधानः कीलविशेषः अरत्निः निष्कनिष्ठमुष्टिकहस्तदीर्घः कार्यः। अणिद्वारं क्षुद्रद्वारं अर्थात् महाकवाटमध्यगं पञ्चहस्तं कार्यम्। हस्तपरिघाश्चत्वारः गजार्गलानि लक्षणया गजगतिद्वाराणि चत्वारि कार्याणि। कृत्स्नो द्वारमण्डपावकाशश्चतुर्गजप्रवेशपर्याप्तः कार्य इत्यभिप्रायः। श्रीमूला.

**निवेशार्धं हस्तिनखो मुखसमः। संक्रमोऽसंहार्यो वा भूमिमयो वा निरुदके॥**

हस्तिनखः दुर्गावतरणार्थः क्रमनिम्नो हस्तिनखाभो मृत्कूटः निवेशार्धं द्वारसंनिवेशस्यार्धमानः पञ्चदण्डचतुरश्रस्य सार्धद्विदण्डोत्सेधमान इत्यर्थः, मुखसमः द्वारसमानविस्तारश्च कार्यः। संक्रम इति। संक्रमः दुर्गसंचरः असंहार्यः स्थिरः दार्वादिमय इत्यर्थः, तथाविधो वा निरुदके भूमिमयो वा कार्यः। श्रीमूला.

**प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत्। प्राकारमध्ये कृत्वा वापीं पुष्करिणीद्वारम्, चतुःशालमध्यर्धान्तराणिकं कुमारीपुरम्, मुण्डहर्म्यं द्वितलं मुण्डकद्वारम्, भूमिद्रव्यवशेन वा। त्रिभागाधिकायामा भाण्डवाहिनीः कुल्याः कारयेत्॥**

इत्थं महाद्वारविधानमभिधाय द्वारान्तरविकल्पमाह—प्राकारेत्यादि। प्राकारसमं मुखमवस्थाप्य प्राकारतुल्यमानं निःसरणं परिकल्प्य त्रिभागगोधामुखं त्रिभागः विस्तारतृतीयांशः तत्प्रमाणं गोधामुखं गोधामुखाकारं द्वारं यस्य तत् तथाभूतं गोपुरं पुरद्वारं कारयेत्। प्राकारमध्य इति। प्राकारमध्ये वापीं कृत्वा पुष्करिणीद्वारं वापीयोगवशेन पुष्करिण्याख्यं द्वारं कारयेत्। अध्यर्धान्तराणिकं अन्तरं अणिश्च पूर्वोक्तादध्यर्धाधिकं यस्य तत् तथाभूतं चतुःशालं शालाचतुष्टयं कृत्वा कुमारीपुरं कुमारीपुराख्यं द्वारं कारयेत्। अर्थात् यथोक्तचतुःशालयुक्तं द्वारमेव कुमारीपुरसंज्ञं बोद्धव्यम्। द्वितलं द्विभूमं(? भौमं) मुण्डहर्म्यं निःशृङ्गं हर्म्यम्, वृत्तमालिकामित्यन्ये, कृत्वा मुण्डकद्वारं मुण्डहर्म्ययोगान्मुण्डकाख्यं द्वारं कारयेत्। भूमिद्रव्यवशेन वा भूमिद्रव्यसंपदनुरोधेन वा कारयेत्, अर्थात् यथोक्तमेकैकं द्वारम्। त्रिभागेत्यादि। त्रिभागाधिकायामाः त्रिभागाधिकः स्वविस्तारमानापेक्षया तृतीयांशाभ्यधिकमानः आयामः दैर्घ्यं यासां तास्तथाभूताः भाण्डवाहिनीः कर्मोपकरणगतागतव्यवहारार्थाः कुल्याः कारयेत्। श्रीमूला.

**तासु पाषाणकुद्दालकुठारीकाण्डकल्पनाः।**
**मुसृण्ठिमुद्गरा दण्डचक्रयन्त्रशतघ्नयः॥**
**कार्याः कार्मारिकाः शूलवेधनाग्राश्च वेणवः।**
**उष्ट्रग्रीव्योऽग्निसंयोगाः कुप्यकल्पे च यो विधिः॥**

कुल्यासु निवेशनीयानि भाण्डानि श्लोकद्वयेनाऽऽह—तास्वित्यादि कार्या इत्यादि च। काण्डः बाणः। कल्पना गजोपकरणम्। मुसृण्ठिः गदा सायःकीला दारुमयी। मुद्गरः दीर्घगदाकारं स्थूलाग्रमायुधम्। दण्डः क्षेपणीयो लगुडविशेषः। चक्रं सारवृत्तमायुधम्। यन्त्रं जामदग्न्यभैमादि। शतघ्निः लोहकण्टकाचितं चतुस्तालप्रमाणमायुधम्। कार्मारिकाः, कर्मारः अयस्कारः, तच्छिल्पसाध्याः तोमरादयः। उष्ट्रग्रीव्यः उष्ट्रग्रीवाकाराः शरव्यः। अग्निसंयोगाः अग्निः संयुज्यते विपक्षदाहार्थमेषु इति अग्निसंयोगाः गुलगुलुमदनसर्जरसश्रीवेष्टगन्धपाषाणादयः। कुप्यकल्पे च यो विधिः कुप्याध्यक्षप्रकरणे (कौ. २।१७) यो

विधीयते स च तासु कुल्यासु कार्यः । स तु शाकतिनिशादिदारुवर्गः उटजचिमियादिवेणुवर्गः गोधासेरकद्वीपिप्रभृतिचर्मवसादिश्चेति बोद्धव्यम् । स्पष्टमन्यत् ।
श्रीमूला.

राजभवनसहितायाः दुर्गरूपायाः राजधान्याः निर्माणम्

**[1]त्रयः प्राचीना राजमार्गास्त्रय उदीचीना इति वास्तुविभागः । स द्वादशद्वारो युक्तोदकभूमिच्छन्नपथः ॥**

दुर्गनिवेश इति सूत्रम् । दुर्गे परिखावप्रप्राकाराट्टालप्रतोलीन्द्रकोशदेवपथादिकं यथोक्तम्, तस्मिन् निवेशः राजमार्गादिविभजनपूर्वं योग्यदेशरचनीयं राजामात्यादिदुर्गान्तर्निवासिप्रकृतिभवनसंस्थानम्, तदिहोच्यते इति सूत्रार्थः ।

राजमार्गाः प्राक्प्रत्यगायतास्त्रयो दक्षिणोत्तरायतास्त्रय इत्येवं षोढा वास्तुर्विभक्तव्य इत्याह– त्रय इत्यादि । स इति । सः वास्तुविभागः द्वादशद्वारः दिशि दिशि द्वारत्रिकक्रमेण द्वादशभिर्द्वारैर्युक्तः । युक्तोदकभूमिच्छन्नपथः, उदकं वापीकूपादि, भूमिः जलनिर्गममार्गः, छन्नपथः गूढसुरुङ्गामार्गः, ते युक्ताः वास्तुविस्तारानुरूपाः यस्मिन् स तथाभूतः । कार्य इति शेषः ।
श्रीमूला.

**चतुर्दण्डान्तरा रथ्याः । राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः संयानीयव्यूहश्मशानग्रामपथाश्चाष्टदण्डाः । चतुर्दण्डः सेतुवनपथः । द्विदण्डो हस्तिक्षेत्रपथः । पञ्चारत्नयो रथपथश्चत्वारः पशुपथो द्वौ क्षुद्रपशुमनुष्यपथः ॥**

रथ्याः अल्पमार्गाः, उपवीथ्य इत्यर्थः, चतुर्दण्डान्तराः चतुर्दण्डविस्ताराः । राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः– राजमार्गः द्रोणमुखपथः स्थानीयपथः राष्ट्रपथः विवीतपथः इत्येते, संयानीयव्यूहश्मशानग्रामपथाश्च– संयानीयं क्रयविक्रयव्यवहारप्रधानं पट्टनं तत्पथः, व्यूहपथः शत्रुपरिवेष्टनावसरे प्राकारेषु समन्तात् सद्यो गन्तुमुपकल्पितः सैन्यस्य मार्गः, श्मशानपथः, ग्रामपथः, इत्येते च अष्टदण्डाः कार्याः । सेतुवनपथः सेतुपथो वनपथश्च चतुर्दण्डः । हस्तिक्षेत्रपथः हस्तिपथः क्षेत्रपथश्च द्विदण्डः । रथपथः पञ्चारत्नयः, निष्कनिष्ठमुष्टिकहस्तपञ्चकविस्तार इत्यर्थः । पशुपथः गोमहिषादिमार्गः चत्वारोऽरत्नयः अरत्निचतुष्टयप्रमाणः । क्षुद्रपशुमनुष्यपथः मेषादिक्षुद्रपशुमार्गः मनुष्यमार्गश्च द्वौ अरत्नी ।
श्रीमूला.

**प्रवीरे वास्तुनि राजनिवेशश्चातुर्वर्ण्यसमाजीवे । वास्तुहृदयादुत्तरे नवभागे यथोक्तविधानमन्तःपुरं प्राङ्मुखमुदङ्मुखं वा कारयेत् । तस्य पूर्वोत्तरं भागमाचार्यपुरोहितेज्यातोयस्थानं मन्त्रिणश्चाऽऽवसेयुः । पूर्वदक्षिणं भागं महानसं हस्तिशाला कोष्ठागारं च । ततः परं गन्धमाल्यधान्यरसपण्याः प्रधानकारवः क्षत्रियाश्च पूर्वां दिशमधिवसेयुः । दक्षिणपूर्वं भागं भाण्डागारमक्षपटलं कर्मनिषद्याश्च । दक्षिणपश्चिमं भागं कुप्यगृहमायुधागारं च । ततः परं नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः पक्वान्नसुरामांसपण्याः रूपाजीवास्तालावचरा वैश्याश्च दक्षिणां दिशमधिवसेयुः । पश्चिमदक्षिणं भागं खरोष्ट्रगुप्तिस्थानं कर्मगृहं च । पश्चिमोत्तरं भागं यानरथशालाः । ततः परमूर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवः शूद्राश्च पश्चिमां दिशमधिवसेयुः । उत्तरपश्चिमं भागं पण्यभैषज्यगृहम् । उत्तरपूर्वं भागं कोशो गवाश्वं च । ततः परं नगरराजदेवता लोहमणिकारवो ब्राह्मणाश्चोत्तरां दिशमधिवसेयुः । वास्तुच्छिद्रानुशालेषु श्रेणीप्रवहणिकनिकाया आवसेयुः ॥**

प्रवीरे प्रकर्षेण वीर्ययुक्ते चातुर्वर्ण्यसमाजीवे वर्णचतुष्टयोपजीव्यगुणसंपन्ने वास्तुनि राजनिवेशः राजभवनं कार्यम् । वास्त्वित्यादि । एकाशीतिपदात्मकस्य वास्तुनः मध्यमः नवभागः वास्तुहृदयम्, वास्तुहृदयात् उत्तरे नवभागे यथोक्तविधानं निशान्तप्रणिधिप्रतिपादितप्रकारं ( कौ. १।२० ) अन्तःपुरं प्राङ्मुखं उदङ्मुखं वा कारयेत् । तस्येति । आचार्यपुरोहितेज्यातोयस्थानं आचार्यपुरोहितयोर्यज्ञस्थानं तोयस्थानं च, मन्त्रिणश्च तस्य अन्तःपुरस्य पूर्वोत्तरं भाग-

(१) कौ. २।४.

मावसेयुः पूर्वोत्तरे भागे स्थितिं कुर्युरित्यर्थः। महानसं पाकशाला, हस्तिशाला हस्तिपृष्ठाकारं सभागृहम्, कोष्ठागारं च अन्तर्गृहमपवरकाख्यं च पूर्वदक्षिणं भागम्, आवसेयुरिति संबध्यते। आश्रयेयुरिति च तदर्थः। तत इति। ततः परं राजभवनाद्बहिः गन्धमाल्यधान्यरसपण्याः गन्धपण्याः माल्यपण्याः धान्यपण्याः रसपण्याश्च, प्रधानकारवः मुख्यशिल्पिनः, क्षत्रियाश्च पूर्वां दिशमधिवसेयुः। भाण्डागारम्, अक्षपटलं रूप्याद्यायव्ययगणनस्थानम्, कर्मनिषद्याश्च स्वर्णरजतशिल्पस्थानानि च दक्षिणपूर्वं भागं अधिवसेयुः आश्रयेयुः। कुप्यगृहं स्वर्णरजतेतरस्थानम्, आयुधागारं च दक्षिणपश्चिमं भागं आश्रयेत्। ततः परमिति। ततः परं नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः नगरव्यावहारिकः धान्यव्यावहारिकः कार्मान्तिकः आकरादिकर्मान्ताधिकृतः बलाध्यक्षः सेनाध्यक्षः इत्येते, पक्वान्नसुरामांसपण्याः पक्वान्नादिविक्रेतारः, रूपाजीवाः वेश्याः, तालावचराः नटाः, वैश्याश्च दक्षिणां दिशं अधिवसेयुः। खरोष्ट्रगुप्तिस्थानं गर्दभक्रमेलककारागृहाणि, कर्मगृहं च यत्र गृहादिकं निर्मीयते च ध्वस्यते च परीक्षाद्यर्थं तत् स्थलं च, अथवा खरोष्ट्रादिव्यापारशाला च, पश्चिमदक्षिणं भागं आश्रयेत्। यानरथशालाः शिबिकादियानशाला रथशालाश्च पश्चिमोत्तरं भागं आश्रयेयुः। ततः परमिति। ततः परं ततः परस्तात् पश्चिमां दिशं ऊर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवः ऊर्णावानकारवः कार्पासतन्तुवानकारवः वेणुवानकारवः चर्मकारवः वर्मकारवः शस्त्रावरणकारवः इत्येते शूद्राश्च अधिवसेयुः। पण्यभैषज्यगृहं पण्यगृहं औषधशाला च उत्तरपश्चिमं भागं अधिवसेत्। कोशः धान्यादिसंग्रहस्थानं गवाश्वं च गावः अश्वाश्च उत्तरपूर्वं भागं अधिवसेत्। तत इति। ततः परं नगरराजदेवताः नगरदेवताः राजकुलदेवताश्च, लोहमणिकारवः अयस्कारवैकटिकाः, ब्राह्मणाश्च उत्तरां दिशमधिवसेयुः। वास्त्वित्यादि। श्रेणीप्रवहणिकनिकायाः— श्रेणी रजकतन्तुवायतुन्नवायादयः, प्रवहणिकाः विदेशागताः वणिजः, तेषां समूहाः वास्तुच्छिद्रानुलासेषु वास्तुच्छिद्रावकाशेषु आवसेयुः। वसेयुरिति श्रेयान् पाठः। श्रीमूला.

**अपराजिताप्रतिहतजयन्तवैजयन्तकोष्ठकान् शिववैश्रवणाश्विश्रीमदिरागृहं च पुरमध्ये कारयेत्। कोष्ठकालयेषु यथोद्देशं वास्तुदेवताः स्थापयेत्। ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि। बहिः परिखाया धनुःशतावकृष्टाश्चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः, यथादिशं च दिग्देवताः॥**

अपराजिताप्रतिहतजयन्तवैजयन्तकोष्ठकान्— अपराजिता दुर्गा, अप्रतिहतः विष्णुः, जयन्तः सुब्रह्मण्यः, वैजयन्तः इन्द्रः, एतेषामालयान् शिववैश्रवणाश्विश्रीमदिरागृहं च शिवादीनां मदिरान्तानां पञ्चानां गृहं च पुरमध्ये कारयेत्। कोष्ठकेत्यादि। कोष्ठकालयेषु पूर्वोक्तेषु यथोद्देशं स्वस्वदेशानतिक्रमेण वास्तुदेवताः स्थापयेत्। ब्राह्मेत्यादि। ब्राह्मैन्द्रयाम्यसैनापत्यानि— ब्राह्मं ब्रह्मदेवताकं, उत्तरम्, ऐन्द्रं पूर्वम्, याम्यं दक्षिणम्, सैनापत्यं पश्चिममित्येतानि द्वाराणि अर्थात् पुरस्य। बहिरिति। परिखाया बहिः धनुःशतावकृष्टाः दण्डशतविप्रकृष्टाः चैत्यपुण्यस्थानवनसेतुबन्धाः— चैत्यः उद्देशवृक्षः, पुण्यस्थानं तीर्थादिकम्, वनम्, सेतुबन्धः इत्येते कार्याः। दिग्देवताश्च यथादिशं स्वस्वदिगनुरोधेन कार्याः। श्रीमूला.

**उत्तरः पूर्वो वा श्मशानवाटः, दक्षिणेन वर्णोत्तमानाम्। तस्यातिक्रमे पूर्वः साहसदण्डः॥**

वर्णोत्तमानां शूद्राणाम्। वर्णोत्तराणामित्यपि पाठः। पूर्वः साहसदण्डः सार्धद्विशतपणलक्षणः। श्रीमूला.

**पाषण्डचण्डालानां श्मशानान्ते वासः॥**

पाषण्डचण्डालानां कापालिकादीनां प्लवपुल्कसादीनां च। श्रीमूला.

**कर्मान्तक्षेत्रवशेन वा कुटुम्बिनां सीमानं स्थापयेत्। तेषु पुष्पफलवाटषण्डकेदारान् धान्यपण्यनिचयांश्चानुज्ञाताः कुर्युः, दशकुलीवाटं कूपस्थानम्। सर्वस्नेहधान्यक्षारलवणभैषज्यशुष्कशाकयवसवल्लूरतृणकाष्ठलोहचर्माङ्गारस्नायुविष-**

**विषाणवेणुवल्कलसारदारुप्रहरणावरणाश्मनिचयाननेकवर्षोपभोगसहान् कारयेत् । नवेनानवं शोधयेत् ॥**

कुटुम्बिनां दुर्गान्तवासयितव्यानां वर्णावराणां कर्मान्तक्षेत्रवशेन कर्मनिर्वृत्तेः क्षेत्रस्य चाऽऽनुरूप्येण सीमानं तदुपयोक्तव्यक्षेत्रमर्यादां स्थापयेत् । वाशब्दः चस्थाने वाक्यभूषणम् । तेष्विति । तेषु क्षेत्रेषु पुष्पफलवाटषण्डकेदारान्– पुष्पफलवाटः पुष्पफलदायकं वनम्, षण्डः पद्मादिसंघातः, केदारः धान्योत्पादभूमिः, एतान् धान्यपण्यनिचयांश्च धान्यपण्यसंग्रहांश्च अनुज्ञाताः कुर्युः, अर्थात् तत्कर्मार्हाः । ते च सीताध्यक्षो विवीताध्यक्षो दुर्गसीमवासिनः कुटुम्बिनश्च । दशकुलीत्यादि । दशकुलीवाटं– मध्यमहलद्वयकर्षणीया भूमिः कुलम्, दशानां कुलानां समाहारो दशकुली, दशगवकृष्या भूमिरित्यपरे, तावत्प्रमाणं वाटं कूपस्थानं कूपमातृकं कुर्युः । एकैकस्य दशकुलीवाटस्यैकैकं कूपं पोषणार्थं कुर्युरिति भावः । निचेतव्यद्रव्याण्याह– सर्वस्नेहेत्यादि । सर्वविधस्नेहादिद्वाविंशतिनिचयान् बहुवर्षोपभोगक्षमान् निवेशयेत् दुर्गेषु । तत्र शाकं वृक्षसंबन्धि मूलपत्रकरीराग्रफलकाण्डाधिरूढकत्वक्पुष्पकवकात्मकं दशकम् । यवसं धान्यपलालम् । वल्लूरं शुष्कमांसम् । अङ्गारः निर्वाणाग्निकमिन्धनम् । स्नायुः वस्नसा । प्रहरणं खड्गादि । स्पष्टमन्यत् । नवेनेति । नवेन अनवं शोधयेत् नूतने यथोक्तद्रव्यजाते लब्धे पुराणं तत् व्यययेत् । श्रीमूला.

**हस्त्यश्वरथपादातमनेकमुख्यमवस्थापयेत् । अनेकमुख्यं हि परस्परभयात्परोजजापं नोपैतीति ॥**

हस्त्यश्वरथपादातं चतुरङ्गं सैन्यं अनेकमुख्यं अनेके मुख्याः बलप्रधानाः यस्मिंस्तत् तथाभूतं अवस्थापयेत् दुर्गेषु । बलप्रधानानां बहुत्वे गुणमाह– अनेकेत्यादि । एकश्चेत् बलप्रधानः स समानपुरुषान्तराभावान्निर्भयो लोभादिना परोपजापमङ्गीकृत्य कृत्स्नं बलं स्वाधिष्ठीयमानं भेदयेत्, बहवश्चेत् बलप्रधानाः ते परस्पराभिशङ्किताः परोपजापं नोपगच्छेयुरिति बहुप्रधानाधिष्ठितं बलं पराभेद्यं भवतीति भावः । श्रीमूला.

**एतेनान्तपालदुर्गसंस्कारा व्याख्याताः ॥**

एतेन यथोक्तेन पुरदुर्गसंस्कारविधिना अन्तपालदुर्गसंस्काराः व्याख्याताः जनपदसीमापालाधिष्ठितानां दुर्गाणां गुणाधानान्युक्तप्रायाणि । ते पुरदुर्गसंस्कारवत् विधातव्या इत्यर्थः । श्रीमूला.

**न च बाहिरिकान् कुर्यात्पुरराष्ट्रोपघातकान् ।**
**क्षिपेज्जनपदस्यान्ते सर्वान् वा दापयेत्करान् ॥**

अध्यायान्ते श्लोकमाह– न चेति । बाहिरिकान् कितववञ्चकनटनर्तकादीन् न च कुर्यात् पुरे नैव वासयेदित्यर्थः, अर्थात् राजा । तत्र हेतुसमर्पकं विशेषणम् – पुरराष्ट्रोपघातकानिति । यतस्ते पौरान् जानपदांश्च कापथप्रवर्तनयोपघ्नन्ति तस्मादित्यर्थः । यदि वासयेत् तदा विधिमाह– जनपदस्य अन्ते सीमायाम् । 'जनपदे चैतान्' इत्यपपाठः । क्षिपेत् वासयेत् बाहिरिकान् । सर्वान् वा सर्वानिव जनपदान्तवास्तव्यानन्यान् कौटुम्बिकानिवेत्यर्थः, करान् दापयेत् बाहिरिकान् । इहाणिकर्तृणां बाहिरिकाणां णौ कर्मत्वमपाणिनीयम् । जल्पतिप्रभृतित्वकल्पनया वा ददातेरौपसंख्यानिकं तत् साध्यम् । श्रीमूला.

## मनुः

आर्यप्राये प्रजाभिः सुखोपजीव्ये देशे षडन्यतमदुर्गान्विता राजधानी राज्ञा विरचनीया

**'जाङ्गलं सस्यसंपन्नमार्यप्रायमनाविलम् ।**
**रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥**

(१) 'अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः । ज्ञेयः स जाङ्गलो देशः' इति तथाविधं देशं प्रचुरधान्यादिकं बहुधार्मिकजनं रोगमशकाद्युपद्रवानाकुलं फलकुसुमोद्यानादियुतं नताटविकादिसामन्तनिवासिनं कर्षकादीनां सुखोपजीव्यं आश्रित्य राजा निवासं कुर्यात् । * गोरा.

---

* ममु, गोरागतम् ।

(१) **मस्मृ.** ७।६९; **गोरा.** विलम् (कुलम्); **राक.** ३९; **राप्र.** १९७; **राकौ.** ११२ लं सस्य (ले शस्य) सामन्तं (सीमान्तं).

( २ ) अनाविलं संकराद्युपहतिरहितम् । रम्यं अनुद्वेगकरम् । आनताः सामन्ताः दुर्गाटवीपर्वतादिवासिनो विषयाभिधेयाः यत्र । सुखेन अल्पायासेन यत्र जीव्यते तत् स्वाजीव्यम् ।                                                                                    * मवि.

( ३ ) 'स्थानभ्रष्टा न शोभन्ते' इति न्यायमाश्रित्य राज्ञो वसतियोग्यं देशं सहेतुं सार्थवादं चाऽऽह— जाङ्गलमित्यष्टभिः । सस्यसंपन्नं सार्वकालिकसस्यैर्युतम् । आर्यप्रायं आर्याः प्रायो वसन्ति यस्मिन्, तेन अम्लेच्छदेशम् । आनतसामन्तं आनताः वशीकृताः सामन्ताः चतुर्दिक्षु वर्तमानाः गिरिवनवासिनो दस्युप्राया जना यत्र तत् ।                                                                                    * मच.

( ४ ) जाङ्गलदेशलक्षणमन्यत्राभिहितम्— 'अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः । स ज्ञेयो जाङ्गलो देश इति देशविदो विदुः ॥' इति । स्मृत्यन्तरेऽपि— 'स्वल्पवृक्षोदकपर्वतो बहुपक्षिमृगः प्रचुरवर्षातपश्च जाङ्गलो देशः' इति । इदं च स्वल्पोदकादिविशेषणं देशस्य परैरनाक्रमणीयत्वार्थम् । राजधान्यां तु बहुजलादिमत्त्वं तत्प्रकरणे वक्ष्यते । सस्यैः वार्षिकशारदहैमन्तिकवासन्तिकैरव्यवहितोत्पत्तिकैः धान्यैः संपूर्णम् । आर्यप्रायं प्रचुरधार्मिकजनम् । अनाविलं सर्पव्याघ्रादिभिरनाकुलम् । रम्यं मनोरमम् । आनतसामन्तं दानमानादिना प्रणततत्तद्भूमिपालम् । स्वाजीव्यं सुलभकृषिवाणिज्यादिलोकजीवनोपायम् । 'देशमावसेत्' इत्यत्र 'उपान्वध्याङ्वसः' (पा. १।४।४८) इत्याधारे द्वितीया ।

राप्र. १९७

( ५ ) पथ्यस्वाद्वन्नजलादिरकर्दमो देशो जाङ्गलः । अनाविलं असंकीर्णमनुष्यम् । आनतः विनीतः सामन्तः समन्ताद्भवो जनः यस्मिंस्तम् । स्वाजीव्यं विशिष्टभृत्यगुण( ? गुणभृत्य )युक्तम् ।                                                                                    + नन्द.

* शेषं गोरागतम् ।

+ शेषं मचगतम् ।



( ६ ) जाङ्गलः स्वल्पोदकतरुपर्वतो देशः, तथाप्यत्र समजलतरुपर्वतो देशो जाङ्गलशब्देन विधीयते । आजीव्यं कन्दमूलादिभिः । आनतसामन्तं वशीकृतमाण्डलिकम् । आनताः नम्राः सामन्ता यस्मिन् सः । *'सामन्तः स्यादधीश्वरः' इत्यमरः ।                                                                                    × भाच.

**'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।**
**नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥**

( १ ) + उक्तप्रकारेण ( ? सावरणगवाक्षादियुक्तप्राकारेण विस्तार-)द्विगुणोत्सेधेनैष्टकेन शैलेन (वा) द्वादशहस्तादूर्ध्वमुद्धतेन तालमूलेन कपिशीर्षचिताग्रेण दृढप्रणाल्या परिकृतं ( ? परिवृतं ) ( धनुर्दुर्गम् ? ) महीदुर्गम् । अगाधेना(ना)श्रयणीयेन चोदकेन परिवेष्टितं (अब्- )दुर्गम् । समन्ततोऽर्धयोजनमात्रं घनमहावृक्षान्वितं वार्क्षम् । चतुरङ्गबलाधिष्ठितं प्रवरायुधवीरपुरुषप्रायं नृदुर्गम् । गिरिपृष्ठे दुरारोहमेवैकमार्गानुगतमन्तर्नदीप्रस्रवणोदकं गिरिदुर्गम् ।                                                                                    मेधा.

( २ ) धन्वं मरुभूमिः । महीदुर्गं अतिनिम्नोन्नता भूमिः । वार्क्षं वनदुर्गम् ।                                                                                    राक. ४०

( ३ ) धन्वदुर्गं मरुदुर्गं यत्रातिनिर्जलतया तद्देशवासिभिरेव कथंचिज्जलं लभ्येत । महीदुर्गं पृथिव्येव यत्र समविषमतया प्राकारादिभिश्चात्यन्तदुर्गा । अब्दुर्गं

* अत्र ग्रन्थस्त्रुटितः । 'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः' इति सकलं वाक्यमत्रानुसंधेयम् ।

× शेषं गोरागतं मविगतं च ।

+ अत्रत्यं धनुर्दुर्गव्याख्यानं प्रभ्रष्टम् । व्याख्यानान्तरानुरोधेन शुद्धयः सूचिताः ।

( १ ) **मस्मृ.** ७।७० ; **विश्व.** १।३१७ मेव वा ( मेव च ) वा समा ( च समा ) ; **मेधा.** धन्वदुग ( धनुर्दुर्गं ) ; **मिता.** १।३२१ ; **राक.** ४० र्गमब्दु ( र्गं मृद्दु ) शेषं विश्ववत् ; **मनु.** मेधावत् ; **रार.** २४ र्गमब्दु ( र्गं जलदु ) शेषं मेधावत् ; **पमा.** ४०६ वा समाश्रित्य ( च समावृत्य ) ; **दीक.** १।३२१ ; **वीमि.** १।३२१ ; **राप्र.** २०२ विश्ववत् ; **नीम.** ५१ श्रित्य ( श्रित्याऽऽ ) शेषं विश्ववत् ; **राकौ.** ११४ त्पुरम् ( त्पुनः ) शेषं विश्ववत्.

अतिप्रचुरोदकतया दुर्गमम् । वार्क्षे वनवेष्टितत्वेन । नृदुर्गे मानुषबहुलतयाऽगम्यम् । गिरिदुर्गे गिरिवेष्टिततया । * मवि.

( ४ ) धनुर्दुर्गे मरुवेष्टितं चतुर्दिशं पञ्चयोजनमनुदकम् । महीदुर्गे पाषाणेन इष्टकेन वा विस्तारात् द्वैगुण्योच्छ्रायेण द्वादशहस्तादुच्छ्रितेन युद्धार्थमुपरिभ्रमणयोग्येन सावरणगवाक्षादियुक्तेन प्राकारेण वेष्टितम् । जलदुर्गे अगाधोदकेन सर्वतः परिवृतम् । वार्क्षदुर्गे बहिः सर्वतो योजनमात्रं व्याप्य तिष्ठन्महावृक्षकण्टकिगुल्मलताद्याचितम् । नृदुर्गे चतुर्दिगवस्थायिहस्त्यश्वरथयुक्तबहुपादातरक्षितम् । गिरिदुर्गे पर्वतपृष्ठमतिदुरारोहं संकोचैकमार्गोपेतं अन्तर्नदीप्रस्रवणाद्युदकयुक्तं बहुसस्योत्पन्नक्षेत्रवृक्षान्वितम् । एतेषु दुर्गेषु मध्यादन्यतमं दुर्गमाश्रित्य पुरं विरचयेत् । ¶ ममु.

( ५ ) राष्ट्रं लक्षयित्वा तन्मध्ये राजधानीं निर्दिशति— धन्वदुर्गमिति । धन्वदुर्गं निरुदकपञ्चयोजनदेशेन समन्ततो व्याप्तेन( ? व्याप्तम् । तच्च) दिवसद्वयपानार्थं जलाभावात् ससैन्यशत्रुभिर्नाऽऽक्रम्यते । अब्दुर्गं अगाधोदकेन नक्रादियुतेन नद्यादिना परितो वेष्टितम् । वार्क्षं न्यग्रोधादिमहावृक्षकण्टकलताद्यैरभितो योजनाद्यावरकेन वेष्टितम्, तेन तच्छेदनोद्यता ये शत्रवः ते तत्रस्थैर्धानुष्कैः हन्यन्ते । नृदुर्गं हस्त्यश्वरथपदातिभिश्चतुर्दिक्षु वेष्टितं बहुमनुष्यं वा, ‘ शतमध्यमवध्यं सहस्रमध्यमवध्यम् ’ इति न्यायात् । एतैः कृत्रिमैरकृत्रिमैर्वा दुर्गं पुरमधितिष्ठेदिति तात्पर्यम् । ‡ मच.

( ६ ) दुर्गमाह मनुः— धन्वेति । कामन्दकस्तु ऐरिणमपि पपाठ— ‘औदकं पार्वतं वार्क्षमैरिणं धन्वमानवम् । प्रशस्तं शास्त्रमतिभिर्दुर्गं दुर्गोपचिन्तकैः ॥ ’ ( कानी. ४।५७) । इरिणं ऊषरम् । धन्व निरुदकं स्थलम् , मरुभूमिरित्यर्थः । महीदुर्गमित्यत्र मह्यां दुर्गं महीरूपमेव वा । तच्च मार्तिकं पाषाणमैष्टकं वा । तथा च महाभारते महीदुर्गापेक्षया मृद्दुर्गस्य पृथङ्निर्देशः कृतः— ‘ धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च । मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षट् ॥ ’ (भामु. १२।८६।५ ) इति । बन्धुदुर्गं सोदरादिबन्धूनां राजगृहस्य परितः स्थानानि । तत्र बन्धुदुर्गमनुष्यदुर्गयोः पृथक् ग्रहणं गोबलीवर्दन्यायेन । अन्तरङ्गत्वाच्छूरत्वाच्च बन्धूनां पृथक् निर्देशः । तथा यावत् बन्धुदुर्गं संभवति तावदितरमनुष्यदुर्गं न कुर्वीतेति । एवं च दुर्गस्य नवत्वं संपद्यते— धन्वदुर्गम्, महीदुर्गमित्यत्र द्वे, जलदुर्गम्, वृक्षदुर्गम्, नृदुर्गम्, गिरिदुर्गम्, बन्धुदुर्गम्, ऐरिणदुर्गम् । महीदुर्गे तु मृदादीनां विशेषः पूर्वमुक्त एव । नीम. ५१–५२

( ७ ) तत्र धन्वदुर्गं यथा— धन्वनि मरुभूमौ दुर्गं कुर्यात्, निर्जलदुर्गमत्वादित्यर्थः । तथा च औशनसे धनुर्वेदे— ‘ सलिलवर्जितमतिशर्करान्वितं रूक्षं निराश्रयं विषमैर्विषकीटैश्चितं विषमप्रदेशे दुःसंचरं बलवद्भिः पालकैरुपेतं रोगविनिर्मुक्तं धन्वदुर्गं श्रेयसे भवेत् ’ इति । अथवा निराश्रया निरुदका भूमिः धन्वा, तेन युक्तं दुर्गं स्वनिवासस्थानात् परितो निर्जलं वृक्षादिरहितं च भूमिप्रदेशं च कुर्यादित्यर्थः । अत एव महाभारतेऽपि ( उक्तम् ? )— ‘ यदा तु पीडितो राजा भवेत् राज्ञा बलीयसा । तदाऽभिसंश्रयेद्दुर्गं बुद्धिमान् पृथिवीपतिः ॥ ’ ( भामु. १२।६९।३३ ) इत्युपक्रम्यानन्तरमेवाभिहितम्— ‘ शस्याभिहारं कुर्याच्च स्वयमेव नराधिपः । असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ॥ क्षेत्रस्थेषु च शस्येषु शत्रोरुपचयो भवेत् । विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वै ॥ नदीषु दुर्गेषु सदा संक्रमानवसादयेत् । जलं निस्रावयेत् सर्वमनिस्राव्यं च दूषयेत् ॥ ’ ( भामु. १२।६९।३७–३९ ) । दूषयेत् विषादिना इत्यर्थः । ‘ दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् । सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षं विवर्जयेत् । प्रवृद्धानां च वृक्षाणां शाखाः प्रच्छेदयेत् ( तथा ) ॥ ’ ( भामु. १२।६९।४१–४२ ) इति । केचित्तु— धन्वनां धनुषां लक्षणयाऽधिष्ठातृपुरुषाणां धन्विनां मण्डलरूपं

---

* दीक., भाच. मविगतम् ।

¶ गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । तच्च ममुगतम् । रार. ममुवत् ।

‡ शेषं मविगतं ममुगतं च ।

दुर्गमित्याहुः, तन्न युक्तम्, लक्षणादोषप्रसङ्गात् एतादृशदुर्गस्याश्रुतत्वात् दुष्करत्वाच्च वक्ष्यमाणनरदुर्गेण पौनरुक्त्यापत्तेश्च । नरदुर्गं नाम बलदुर्गम्, तच्च गजरथाश्वधनुर्धराद्यैः संपद्यते । तत्र बलदुर्गे संपादिते धनुर्धरदुर्गं नान्तरीयकतया सिद्धमेवेति । महीदुर्गं यथा— मह्यामिष्टकापाषाणादिनिर्मितं दुर्गं महीदुर्गम् । मह्येवोच्चावचप्रदेशप्रचुरा दुर्गमिति केचित् । औशनसे धनुर्वेदे— 'सर्वोपकरणोपेतं गुप्तं चोपायसंयुतम् । अत्युत्सेधातिनिम्नं च महीदुर्गं तदिष्यते ॥' इति । सर्वोपकरणोपेतं सर्वापेक्षितपदार्थसमन्वितम् । गुप्तं अविज्ञातमार्गं पराप्रवेश्यं पराभेद्यमिति वा । उपायसंयुतम्— उपायाः परैरवरुद्धे दुर्गे तन्निराकरणसमर्थाः शतघ्नीयन्त्रप्रमुखाः, तद्युक्तम् । अथवा प्रबलैः शत्रुभिरुपरुद्धे स्वनिर्गमनप्रकारा उपायाः । अत्युत्सेधः अत्युच्चता । जलदुर्गं यथा— नद्यादिप्रवाहेणोभयतः* समं तेनागम्यप्रदेशः जलदुर्गम् । औशनसे धनुर्वेदे— 'संक्षिप्तैकमार्गेण सविषैस्तु जलेचरैः । सलिलैर्विषमस्पर्शनखादनवधप्रियैः ॥' इति । एतैर्विषममित्यर्थः । वनदुर्गं यथा— घनतरवनवेष्टितो भूभागविशेषः वनदुर्गम् । औशनसे धनुर्वेदे—'अज्ञातमार्गगहनं वृक्षगुल्मलतादिभिः । सकण्टकैर्वनं दुर्गं भूतले स्यात् सुविस्तृतम् ॥' इति । बलदुर्गं यथा— बलस्य स्वसैन्यस्य स्थितिविशेषसंपादनं व्यूहादिवत् बलदुर्गम् । औशनसे धनुर्वेदे— 'मौलं वश्यं सुसंतुष्टं शिक्षायुक्तं सनायकम् । भौमं चैवाप्रवृत्तं च बलदुर्गं प्रशस्यते ॥' इति । 'बलदुर्गं तदिष्यते' इति पाठान्तरम् । मौलं परम्परागतकुलीननृपतियुक्तम् । एतस्य प्रशंसाऽप्युक्ता महाभारते— 'दुर्गेषु च महाराज ब्रुवेऽहं शास्त्रनिश्चिताः । सर्वदुर्गेषु शस्यन्ते नरदुर्गं सुदुस्तरम् ॥ (?)' (भामु. १२।५६।३५) इति । अन्योन्यसंश्लिष्टहस्तमानुषमण्डलं नृदुर्गमिति केचित्, तन्न हृदयंगमम्, एतादृशदुर्गस्य दुस्तरत्वाभावात् । गिरिदुर्गं यथा— गिरिशिरोभूभागः परिमण्डलगिरिवलयवेष्टितो देशविशेषो वा गिरिदुर्गम् । औशनसे धनुर्वेदे— 'दुरारोहं परैर्दूरं शरपातस्य गोचरात् । सर्वसंपत्समायुक्तं दुर्गं स्यात् पार्वतं श्रिये ॥' इति । एतस्य प्राशस्त्यमुक्तं विष्णुधर्मोत्तरे— 'सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते' (विध. २।२६।७) इति । एतेषु षट्सु दुर्गेषु नृपतिरन्यतमदुर्गमाश्रयेत् । तदुक्तं विष्णुस्मृतौ— 'धन्वनृमहीवारि( वृक्ष )गिरिदुर्गाणामन्यतमं दुर्गमाश्रयेत्' (विस्मृ. ३।६) इति । विष्णुधर्मोत्तरेऽपि— 'तत्र दुर्गे नृपः कुर्यात् षण्णामेकतमं बुधः' (विध.२।२६।६) इति ।

राकौ. ११४–११७

* 'समन्ततोऽगम्यप्रदेशः' इति पाठान्तरम् ।

(८) अथ दुर्गं सप्तभिः श्लोकैराह— धन्वदुर्गमिति । वृक्षाणां समूहः वार्क्षम्, तेन दुर्गं वार्क्षदुर्गम् ।

* नन्द.

षण्णां दुर्गाणां गिरिदुर्गः प्रशस्ततरः

**'सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।**
**एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥**

(१) यतः एषां दुर्गाणां मध्यात् गुणभूयस्त्वेन गिरिदुर्गं प्रशस्यते इति गिरिदुर्गं सर्वप्रयत्नेन समाश्रयेत् ।

\+ गोरा.

(२) गिरिदुर्गे शत्रुदुरारोहत्वं महत्प्रदेशादल्पप्रयत्नप्रेरितशिलादिना बहुविपक्षसैन्यव्यापादनमित्यादयो बहवो गुणाः । ¶ ममु.

(३) एतेषामिति निर्धारणे षष्ठी । नीम. ५२

* शेषं मविगतं ममुगतं च ।

\+ मवि., राप्र., नन्द., भाच. गोरागतम् ।

¶ शेषं गोरागतम् । मच. ममुगतम् ।

(१) **मस्मृ.** ७।७१ ; **विश्व.** १।३१७ एषां हि (एतेषां) विशिष्यते (प्रशस्यते); **गोरा.** प्रयत्नेन (प्रकारेण) इति प्रतीकपाठः ; **राक.** ४१ एषां हि बाहुगुण्येन (बाहुगुण्येन तेषां हि); **रार.** २५ एषां (तेषां); **पमा.** ४०६ पू.; **मच.** राखत्; **राप्र.** २०३ सर्वेण (सर्वेषां); **नीम.** ५२ एषां हि (एतेषां).

दुर्गविधानप्रयोजननिरूपणम्

[1]त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्ताश्रयाप्सराः ।
त्रीण्युत्तराणि क्रमशः प्लवंगमनरामराः ॥

( १ ) आद्यानि त्रीणि धनुर्दुर्गादीनि आश्रिताः आश्रयं कृतवन्तः मृगाः गर्ताश्रयाः गर्तेरनकुलादयः अप्सराः ग्राहकूर्मादयः । एषां दुर्गाणां तदाश्रितानां च यादृशा गुणदोषाः तादृशा एव राज्ञामपि भवन्तीति प्रदर्शनार्थम् । त्रीण्युत्तराणि । प्लवंगमाः कपयः । मेधा.

( २ ) एषां दुर्गाणां मध्यात् आद्यानि त्रीणि धन्वमह्यब्दुर्गाणि मृगादयः आश्रिताः, तत्र धन्वदुर्गं मृगैराश्रितम्, महीदुर्गं बिलवासैर्नकुलादिभिः, अम्बुदुर्गं उदकचारिभिः कूर्मादिभिः । उत्तराणि त्रीणि वृक्षनृगिरिदुर्गाणि क्रमेण प्लवंगमादयः आश्रिताः । तत्र वृक्षदुर्गं वानरैराश्रितम्, नृदुर्गं मनुष्यैः, गिरिदुर्गं देवैः । * गोरा.

( ३ ) मृगाः हरिणादयः । ते हि जलाभावादत्र मृगया न संभवतीति मरुषु तिष्ठन्तीति । नराः ग्रामादिनृदुर्गवासिनः । अमराः मेरुगिरिप्रभृतिवासिन एवासुरभयात् । × मवि.

(४) दुर्गाश्रयो दुर्जय इत्यत्र दृष्टफलमाह– त्रीणीति । एषां धन्वादिदुर्गाणां मध्ये धन्वमहीजलदुर्गत्रयं मृगमूषिकनक्रैराश्रितम् । अतस्तेषां दुर्जयत्वं लोकतः प्रसिद्धम् । तथा वृक्षमनुष्यगिरिदुर्गत्रयं वानरनरामरैराश्रितत्वात् दुर्जयम् । अतः प्रसिद्धमेतत् दुर्गाश्रितस्यापराजय इति । मच.

( ५ ) तिर्यक्प्रभृतयोऽपि दुर्गमाश्रिता इत्यतो राज्ञा तदवश्यमाश्रयणीयमित्यभिप्रेत्याऽऽह– त्रीणीति । झषाः मत्स्याः अगाधजलरूपम् । नराः मनुष्याः नरसमुदायरूपम् । एकाकिनो हि परैरभिभाव्यत्वं स्पष्टमेव । * राप्र. २०२

( ६ ) लोकसिद्धनिदर्शनोपन्यासेन दुर्गाश्रयणफलं श्लोकाभ्यामाह– त्रीणीति । † नन्द.

( ७ ) नृदुर्गं सेनादुर्गं नृणामाश्रयः । * भाच.

[2]यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः ।
तथाऽरयो न हिंसन्ति नृपं दुर्गसमाश्रितम् ॥

( १ ) दुर्गविधानप्रयोजनश्लोकोऽयम् । अत्यल्पबला अपि दुर्गाश्रिता महाबलैररिभिर्न सहसा शक्यन्तेऽभिभवितुम्, अतो दुर्गाश्रयो युक्तः । मेधा.

( २ ) यथा एतान् मृगादीन् दुर्गवर्तिनः व्याधादयः शत्रवः न हिंसन्ति, अशक्तत्वात्, एवं दुर्गाश्रितं राजानं न शत्रव इति । ¶ गोरा.

( ३ ) एते यथा अबाध्यास्तथा नृपोऽप्यबाध्य इत्याह– यथेति । शत्रवः व्याधमार्जारश्येनादयः दुर्गाश्रितान् दुर्गनिविष्टान् एतान्नोपहिंसन्ति एवं अरयः प्रतिराजानः दुर्गनिविष्टं न हिंसन्तीत्यर्थः । + मच.

[3]एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥

( १ ) सुप्रसिद्धमेतत् दुर्गप्रयोजनम् । प्राकारदृष्टान्तेन गिरिदुर्गबलमेतदिति ( केचित् ), तदयुक्तम्, महीदुर्गेऽपि प्राकारसंभवात् । तस्मात् सर्वेषां दुर्गाणां तत्प्रयोजनं स्वबुद्ध्या रूप्यते । ‡ मेधा.

---

* मभु. गोरावत् ।

× शेषं गोरागतम् ।

(१) मस्मृ. ७।७२ ; रार. २५ ; राप्र. २०२ श्रयाप्सराः ( श्रया झषाः ) ; नन्द. स्त्वेषां ( स्तेषां ).

* शेषं गोरागतम् ।

† शेषं गोरागतं मचगतं च ।

¶ मवि., रार., नन्द. गोरागतम् । मभु. गोरावत् ।

+ भाच. मचगतम् ।

‡ रार. मेधागतम् ।

(१) मस्मृ. ७।७३ ; मेधा. न्नोप ( न्नाप ) ; रार. २६ ; राप्र. २०२.

(२) मस्मृ. ७।७४ ; राक. ४१ प्राकार ( प्रासाद ) दश ( शत ) विधीयते ( विशिष्यते ) ; रार. २४ ; राप्र. २०२ ; नीम. ५२ विधीयते ( समाश्रयेत् ) ; राकौ. ११३.

(२) यस्मादेको धानुष्कः प्राकारस्थः परकीयानां शतस्य योद्धुं शक्नोति तस्माद्दुर्गे कर्तव्यतयोपदिश्यते। * गोरा.

(३) शतं पदातीन्। मवि.

(४) गिरिदुर्गे कैमुतिकन्यायमाह– एक इति। (यस्मात्) कृत्रिमप्राकारस्थोऽप्येको धनुर्धरः प्रतिराज्ञः शतं योधयति युद्धेन निग्रहीतुं शक्नोति, यस्माच्छतं प्रतिपक्षदशसहस्राणि तथा कर्तुमीष्टे, तस्मात् किं वक्तव्यं गिरिस्थानां सामर्थ्यम्? य ईषत्क्षिप्तोऽपि शिलादिर्वा बहून् व्यापादयति। मच.

(५) दुर्गस्य गुणमाह– एक इति। शतगुणा अपि पराभवं प्राप्नुवन्तीत्यर्थः। नीम. ५२

दुर्गाणां नरदुर्गः प्रशस्यतमः

[1]मन्दरस्यापि शिखरं निर्मानुष्यं न शिष्यते।
मनुष्यदुर्गं दुर्गाणां मनुः स्वायंभुवोऽब्रवीत्॥

दुर्गस्य विविधसाधनसंपत्

[2]तत्स्यादायुधसंपन्नं धनधान्येन वाहनैः।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च॥

(१) आयुधैः खड्गप्रासादिभिः संपन्नं उपेतम्। आयुधग्रहणं वर्मशिरस्त्राणोपस्कारादेरन्यस्यापि युद्धोपकरणस्य प्रदर्शनार्थम्। धनं रूप्यसुवर्णादीनि। वाहनानि रथाश्वादयः। शिल्पिभिः यन्त्रावाहतक्षप्रभृतिभिः। यवसेन। ब्राह्मणैः मन्त्रिपुरोहितैः अन्यैर्वा। दण्डिकापोतेन ध्वजशङ्कया कदाचिन्नृपधर्मसाहाय्येन प्रवर्तन्ते (?)। प्रदर्शनार्थत्वाच्च भिषगौषधाद्यपेक्षेत। संरोहणाद्युपयोगि संनिधापयितव्यम्। मेधा.

(२) तद्दुर्गं खड्गाद्यायुधधनधान्याश्वादिवाहनब्राह्मणतक्षादिशिल्पियन्त्रघासोदकसमृद्धं कार्यम्। * गोरा.

(३) यन्त्रैः क्षेप्यादिभिः। $ मवि.

(४) किं चान्यदित्याह– तदिति। तत् पुरं आयुधसंपन्नं आयुधानि धनुरादीनि तैः संपत्तिमत्। ब्राह्मणैः शत्रुघातने वाग्वज्रैः। यन्त्रैः लोहादिनिर्मितदिव्यास्त्रैः। यवसेन हस्त्याहारादितृणेन। मच.

(५) मन्त्रैः सर्पादिमन्त्रविद्भिर्मनुष्यैरित्यर्थः। निम. ५२

दुर्गे राजगृहनिर्माणम्

[1]तस्य मध्ये सुपर्याप्तं कारयेद्गृहमात्मनः।
गुप्तं सर्वर्तुकं शुभ्रं जलवृक्षसमन्वितम्॥

(१) सुपर्याप्तं यावत् आत्मनः राज्ञः राजपुत्रकोशायुधास्त्रवागारादिषूपयुज्यते। गुप्तं बहुकक्षाकं गृहं कारयेत्। सर्वर्तुकं सर्वर्तुमाल्यफलैः शोभितं सर्वे ऋतवो यत्रेति। ऋतुशब्देन तत्कार्याणि पुष्पफलादीनि लक्ष्यन्ते। सर्वर्तुगमिति पाठे सर्वानृतून् गच्छति प्राप्नोतीति व्युत्पत्तिः। अर्थस्तु स एव। यो यत्र भवति स तेन व्याप्त इत्युच्यते। शुभ्रं सुधाधवलितम्। जलवृक्षसमन्वितं धारागृहोद्यानवनसंपन्नम्। × मेधा.

(२) प्राकारपरिखादिरक्षितम्। ‡ गोरा.

(३) शुभ्रं प्रसाद्यम्। + मवि.

(४) सर्वर्तुकं आरामादिषु तत्तदृतुफलिवृक्षसहितं तत्तदृतूद्भवफलपुष्पादिसहितं वा। तत्तदृतूपयोगिसामग्रीसहितं सर्ववस्तुसमन्वितमित्यर्थः। नीम. ५२

---

* ममु. गोरावत्।

(१) मस्मृ. ७।७४ इत्यस्यानन्तरं प्रक्षिप्तः.

(२) मस्मृ. ७।७५; मेधा. ७।५६ निर्देशमात्रम्; गोरा. तत्स्या (तस्मा): ७।५६ निर्देशमात्रम्; रार. २६; पमा. ४०७ केन च (केन्धनैः); राप्र. २०४ पमावत्; नीम. ५२ र्यन्त्रै (र्मन्त्रै) शेषं पमावत्; राकौ. ११३ च (वा).

* ममु. गोरावत्। $ भाच. मविगतं मचगतं च। × मच. मेधागतं गोरागतं च। ‡ शेषं मेधागतम्। ममु., मच. गोरागतम्। + शेषं मेधागतम्।

(१) मस्मृ. ७।७६; मेधा. 'सर्वर्तुकम्' इत्यत्र 'सर्वर्तुगम्' इत्यपि पाठः; रार. २६; पमा. ४०७ ध्ये सु (ध्ये तु) शुभ्रं (शुद्धं); नीम. ५२ ध्ये सु (ध्ये तु); नन्द. तुकं (तुंगं); भाच. समन्वितम् (समुद्भवम्).

(५) सर्वर्तुगं सर्वेष्वृतुषु गम्यम्, सर्वकालानुगुणमिति यावत्। * नन्द.

(६) जलवृक्षसमुद्भवं जलवृक्षयोर्मध्ये समुद्भवो यस्य तत्। + भाच.

## याज्ञवल्क्यः

जनकोशात्मगुप्त्यर्थं राज्ञाऽऽवसनीये सुखोपजीव्ये देशे दुर्गनिर्माणम्

**[1]रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत्।**
**तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये॥**

(१) ननु च राष्ट्रसंकोचप्रसङ्गात् भूमिदानमयुक्तम्। राजवृत्तान्तानभिज्ञ, मैवम्, नित्यमेव हि त्रिवर्गवृद्धिचतुरो राजा– रम्यमिति। दुर्गाणीति बहुवचनं दुर्गभेदप्रकारार्थम्। यथाऽऽह मनुः– 'धन्वदुर्गं महीदुर्गं ··· ··· ··· गिरिदुर्गं प्रशस्यते॥' (मस्मृ. ७।७०-७१) इत्यादि। विश्व.

(२) इदानीं राज्ञो निवासस्थानमाह– रम्यमिति। रम्यं रमणीयं अशोकचम्पकादिभिः। पशव्यं पशुभ्यो हितं पशुवृद्धिकरम्। आजीव्यं उपजीव्यं कन्दमूलपुष्पफलादिभिः। जाङ्गलम्। यद्यपि अल्पोदकतरुपर्वतोद्देशो जाङ्गलस्तथाप्यत्र सजलतरुपर्वतो देशो जाङ्गलशब्देनाभिधीयते। तं देशं आवसेत् अधिवसेत्। तत्र एवंविधे देशे जनानां कोशस्य सुवर्णादेः आत्मनश्च रक्षणार्थं दुर्गं कुर्वीत। तच्च षड्विधम्। यथाऽऽह मनुः– 'धन्वदुर्गं ······॥' इति। × मिता.

(३) कं देशविशेषमधिवसित्वा (? मध्यूष्य) एतत् कार्यमित्यपेक्ष्यते? अत आह– रम्यमिति। आजीव्यः समन्तादुपजीव्यौषधिवनस्पतितृणकाष्ठादिमान्। जाङ्गलः स्वल्पवृक्षोदकपर्वतो बहुपक्षिमृगः प्रचुरवर्षातपश्च। * अप.

(४) जाङ्गलं उच्चभूभागप्रायम्। * राक. ३९.

(५) आजीव्यं कृषिवाणिज्यादि। जाङ्गलमिति। 'अल्पोदकतृणो यस्तु प्रचारः प्रचुरायतः। स ज्ञेयो जाङ्गलो देशो बहुधान्यादिसंयुतः॥' एतादृशो देशो जाङ्गल इत्यर्थः। तथा च सुजनहिरण्यरजतमणिमुक्ताप्रवालबहुमूल्यरत्नक्षौमवस्त्राद्याधारकोषस्वाभिगुप्तये इत्यर्थः। * रार. २४

(६) राज्ये आवश्यकप्रजापालनाद्युपयोगीनि कृत्यान्तराण्याह– रम्यमिति। एतादृशं देशमावसेत् तादृशे देशे वसेदित्यर्थः। 'उपान्वध्याङ्वसः' (पा. १।४।४८) इति सप्तम्यर्थे द्वितीया। एतेन दुर्गरूपं राज्याङ्गं दर्शितम्। ¶ वीमि.

## बृहस्पतिः

आत्मदारार्थलोकगुप्त्यर्थं दुर्गरूपा राजधानी राज्ञा आस्थापनीया

**[1]आत्मदारार्थलोकानां संचितानां च गुप्तये।**
**नृपतिः कारयेद्दुर्गं प्राकारद्वारसंयुतम्॥**

दुर्गस्यावश्यविधेयत्वं तत्प्रकारविशेषं च बृहस्पतिराह– आत्मेति। राप्र. २०२

**[2]औदकं पार्वतं वार्क्ष्यमैरणं धान्वनं तथा॥**
**[3]भूतानामिन्धनरसैर्वेत्रशष्पान्नवाहनैः।**
**यन्त्रायुधैश्च विविधैः स्निग्धैः शूरैर्नरैर्युतम्॥**

---

* शेषं मेधागतम्।

\+ शेषं गोरागतम्।

× दीक. मितागतं राकगतं च। राप्र. मितागतं अपगतं च। नीम., राकौ. मितागतम्।

(१) यास्मृ. १।३२१; विश्व. १।३१७ व्यमा (व्यं स्वा) वसेत् (श्रयेत्) गुप्तये (वृद्धये); मिता.; अप. १।३१९-३२०; राक. ३९; रार. २४ वसेत् (विशेत्); पमा. ४०६ पशव्य (यशस्य); वीमि.; राप्र. १९७ पू.: १९९ उत्त.; नीम. ५१; राकौ. ११२ पू.: ११३ उत्त.

* शेषं मितागतम्।

¶ शेषं मितागतं राकवदपि च।

(१) राक. ४०; राप्र. २०२ च (तु).

(२) राकौ. १०२.

(३). राक. ४१; राप्र. २०४ भूता (भूपा).

(१) स्निग्धैः अनुरक्तैः। राक. ४२

(२) पुरमित्युपक्रमे बृहस्पतिरप्याह– भूतानामिति। * राप्र. २०४

'वेदविद्याविदो विप्रान् क्षत्रियानग्निहोत्रिणः।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥

'अनाच्छेद्याः करास्तेभ्यः प्रदद्याद्गृहभूमयः।
मुक्ता भाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥

(१) भूमय इति विभक्तिव्यत्ययः। आराध्यकरविशेषः (?)। राक. ४२

(२) अनाच्छेद्याः अग्राह्याः। भूमय इति छान्दसो भूमीरित्यर्थे प्रयोगः। मुक्ताः करादिनिर्मुक्ताः। नृपतिः विभक्तिव्यत्ययेन नृपतिना। स्वशासने स्वकरादानकरणे लेखयित्वा 'एवं दत्ता गृहाः करनिर्मुक्ताः' इति लेखयित्वा भाव्याः परिपालनीयाः।

राप्र. २०४–२०५

'नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं सदा।
पौराणां कर्म कुर्युस्ते संदिग्धे विनयं तथा ॥

संदिग्धे कार्ये। विनयं शिक्षाम्। राप्र. २०५

'समा निम्नोन्नता वाऽपि यत्र भूमिर्यथाविधा।
शालाट्टपरिखाद्याश्च कर्तव्याश्च तथाविधाः ॥

परिखादिकरणे विशेषमाह– समेति। तथाविधाः भूमेर्निम्नोन्नततानुसारेण निम्नाः उन्नताश्च कार्या इत्यर्थः। राप्र. २०५

'समन्तात्तत्र वेश्मानि कुर्युः प्रकृतयस्ततः।
द्विजवैद्यवणिक्शिल्पिकारुका रक्षकास्तथा ॥

'स्थलावस्थाननिष्काशश्रमश्वभ्रचतुष्पथान्।
समाजविक्रयस्थानगोव्रजांश्चैव कल्पयेत् ॥

* शेषं राकवत्।

(१) राक. ४१; राप्र. २०४.

(२) राक. ४१ दद्या (देया) पति (पते); राप्र. २०४.

(३) राक. ४१; राप्र. २०५.

(४) राक. ४१–४२; राप्र. २०५.

(५) राक. ४२; राप्र. २०५ वैद्य (वैश्य).

(६) राक. ४२; राप्र. २०६.

'दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक्।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥

एवमन्येषां गृहादौ निर्मिते राज्ञो निवासयोग्यगृहनिर्माणे प्रकारमाह– दुर्गेति। राप्र. २०६

'माल्यधूपासनोपेतां वीररत्नसमन्विताम्।
प्रतिमालेख्यदेवैस्तु युक्तामग्न्यम्बुना तथा ॥

## औशनसधनुर्वेदः

### पञ्च दुर्गप्रकाराः

*'सलिलवर्जितमतिशर्कराचितं रूक्षं निराश्रयं विषमैर्विषकीटैश्चितं विषमप्रदेशे दुःसंचरं बलवद्भिः पालकैरुपेतं रोगविनिर्मुक्तं धान्वनदुर्गं श्रेयसे भवेत् ॥

'सर्वोपकरणोपेतं गुप्तं चोपायसंयुतम्।
अत्युत्सेधातिनिम्नं च महीदुर्गं तदिष्यते ॥

'मौलं वश्यं सुसंतुष्टं शिक्षायुक्तं सनायकम्।
भीमं चैवाप्रमत्तं च बलदुर्गं प्रशस्यते ॥

'अज्ञातमार्गं गहनं वृक्षगुल्मलतादिभिः।
सकण्टकैर्वनं दुर्गं भूतले स्यात्सुविस्तृतम् ॥

* राप्रव्याख्यानं 'तत्र दुर्गं नृपः कुर्यात्' (मत्स्य. २१७।६) इत्यादिश्लोके, राकौव्याख्यानं च 'धन्वदुर्गं महीदुर्गम्' (मत्स्य. ७।७०) इत्यादिमनुश्लोके द्रष्टव्यम्।

(१) राक. ४३; राप्र. २०६; राकौ. ३८२.

(२) राक. ४३ सनो (सवो); राप्र. २०६.

(३) राप्र. १९९; राकौ. ११४ राचितं (रान्वितं) धान्वन (धन्व).

(४) राप्र. २००; राकौ. ११५.

(५) राप्र. २०१; राकौ. ११६ भीमं (भौमं) मत्तं (वृत्तं).

(६) राप्र. २०१ भूतले (भूतये); राकौ. ११६ मार्गं ग (मार्गग).

[1]संक्षिप्तेनैकमार्गेण सविषैस्तु जलेचरैः ।
सलिलैर्विषमं स्पर्शनखादनवधप्रियैः ॥
[2]दुरारोहं परैर्दूरं शरपातस्य गोचरात् ।
सर्वसंपत्समायुक्तं दुर्गं स्यात्पार्वतं श्रिये ॥

## बृहत्पराशरः

[3]यथोदितानि दुर्गाणि कुर्यात्तेष्वपि रक्षणम् ॥

## आश्वलायनः

षट् दुर्गाः, दुर्गगुणतारतम्यम्, सुदुर्गा राजधानी कर्तव्या

[4]पुरं सुदुर्गमाश्रित्य वसेत्सुप्रयतो नृपः ॥
[5]धन्वदुर्गमपां दुर्गं गिरिदुर्गं च वा नृपः ॥
वनदुर्गं नृदुर्गं च महीदुर्गं च वा वसेत् ।
नरदुर्गं विशिष्टं स्याद्धन्वदुर्गमथापि वा ॥
षण्णां तु बुद्धिदुर्गेण युक्तं चेदावसेत्पुरम् ॥
[6]आचार्यानृत्विजो वैद्यान् याचकान्नटनर्तकान् ॥
सूतमागधसूदांश्च संपूज्याऽऽत्मनि वासयेत् ।
पक्षिणो विविधाकाराः पुण्याः पश्वरगाः (?) शुभाः ॥
गोगजाश्वाजमहिषरासभोष्ट्राविकादयः ।
श्वमार्जारकपिप्राज्ञचिकित्सककुलालकाः ॥
कर्मारः स्वर्णकारश्च चर्मकारकृषीवलाः ।
सूचीकाराश्च रजकाः सर्ववर्णाश्च शिल्पिनः ॥
वैतालिका बन्दिनश्च रसा धान्याविषाशुनाः (?) ।
तिलतैलतुषाङ्गारयन्त्रादर्शायुधानि च ॥
औषधानि च सर्वाणि काष्ठापाता रथादयः ।
यौधाः कुब्जा वामनाश्च स्त्रियश्चाप्सरसोपमाः ॥

(१) राप्र. २०१ ; राकौ. ११६ में स्पर्श (मत्स्पर्श) खादन (खादंन).

(२) राप्र. २०१ ; राकौ. ११७.

(३) बृपसं. १२।१४.

(४) आश्वस्मृ. ८।४०.

(५) आश्वस्मृ. ८।४१–४३.

(६) आश्वस्मृ. ८।१०९–११६.

एतान्सर्वान्पुरो राजा सद्यःसम्यक्परीक्षितान् ।
आत्मभाधिष्ठिते नित्यं संस्थाप्य परिपालयेत् ॥
[1]पुराद्यावद्विनिर्गच्छन् तावतैः सह्याखिलैः (?) ।
मृगयायामृते प्रायो गच्छेदेव नृपोत्तमः ॥
पृथिव्यां यानि यानीह सन्ति वस्तूनि भूपतिः ।
तानि सर्वाणि यत्नेन स्वपुरे स्थापयेत्सदा ॥

## विश्वकर्मा

राजविप्रक्षत्रियवैश्यशूद्राणां विविधानि भवनानि

[2]यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः ।
तलैरर्धाष्टमैस्तेषां कारयेद्भवनोत्तमम् ॥
[3]तथाऽर्धसप्तमैरेव विप्राणां कारयेद्गृहम् ।
अर्धषष्ठैः क्षत्रियाणां वैश्यानामर्धपञ्चमैः ॥
त्रिभिः सार्धैश्च शूद्राणां भवनं शुभदं स्मृतम् ॥

तत्र शिल्पशास्त्रे विश्वकर्माऽऽह- यजन्त इत्यादिना । अर्धमष्टमं येषु, सार्धाः सतेत्यर्थः । एवमग्रेऽपि । राकौ. १२३–१२४

## मत्स्यपुराणम्

राजधानीस्थानलक्षणानि

मत्स्य उवाच–

[4]राजा सहायसंयुक्तः प्रभूतयवसेन्धनम् ।
रम्यमानतसामन्तं मध्यमं देशमावसेत् ॥

(१) प्रभूतं प्रचुरं यवसं तृणं इन्धनं च यस्मिंस्ताद्दशम् । मध्यमं स्वपालनीयदेशमध्यस्थम् । राप्र. १९८

(१) आश्वस्मृ. ८।१२५.

(२) राकौ. १२३.

(३) राकौ. १२४.

(४) मत्स्य. २१७।१ ; विध. ३।२६।१ न्तं मध्यमं (न्तः पशव्यं) ; राप्र. १९८ : १९८ (राजा सहायसंपन्नः पशव्यं जाङ्गलं शिवम् ।) पू., विष्णुधर्मोत्तरम् ; राकौ. १११ मध्यमं (पशव्यं) विष्णुधर्मोत्तरम्.

(२) राजनिवासस्थानं चोक्तं विष्णुधर्मोत्तरे– राजेत्यादिना । यवसं तृणम् । सामन्ताः भौमिकाः । पशव्यं पशुहितकरणम् । राकौ. १११

¹वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः ।
किंचिद्ब्राह्मणसंयुक्तं बहुकर्मकरं तथा ॥

अनाहार्यं परैर्ग्रहीतुमशक्यम् । ब्राह्मणबाहुल्ये सहवासादिना राजकीयेभ्यस्तेषां पीडा स्यादित्यतः किंचिद्ब्राह्मणसंयुक्तमिति । राप्र. १९८

²अदेवमातृकं रम्यमनुरक्तजनान्वितम् ।
करैरपीडितं चापि बहुपुष्पफलं तथा ॥

(१) अदेवमातृकं नदीमातृकम् । नद्यम्बुसंपन्नव्रीहिपालितमित्यर्थः । राप्र. १९८

(२) अदेवमातृकं नदीमातृकम्, वृष्ट्यपेक्षं न भवति नदीबाहुल्यात् । करः करभागः । राकौ. १११

³अगम्यं परचक्राणां तद्वासगृहमापदि ।
समदुःखसुखं राज्ञः सततं प्रियमास्थितम् ॥

⁴सरीसृपविहीनं च व्याघ्रतस्करवर्जितम् ।
एवंविधं यथालाभं राजा विषयमावसेत् ॥

(१) विषयः देशः । आपदि शत्रोर्विपत्काले । तेषां परचक्राणां वासगृहाणि यत्र तत्तथा । सरीसृपाः सर्पाः । व्यालाः व्याघ्राः । 'यथालाभं एवंविधम्' इत्यनेन एतत्प्रकरणोक्तकतिपयदेशविशेषणराहित्येऽपि न क्षतिरिति दर्शितम् । राप्र. १९८

(२) सुखमित्यन्तस्य पूर्वेणैवान्वयः । तद्बाधाविषयं शत्रुकृतदुःखायोग्यम् । विषयः देशः । सरीसृपाः व्याघ्रादयः । व्यालाः सर्पाः । राकौ. १११

षट् दुर्गाः, गिरिदुर्गस्य तेषु प्रशस्ततरत्वम्

¹तत्र दुर्गं नृपः कुर्यात्षण्णामेकतमं बुधः ।
धनुर्दुर्गं महीदुर्गं नरदुर्गं तथैव च ॥

²वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिव ।
सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते ॥

तानि च षड्विधानि । धन्वदुर्गं निवासस्थानरूपाया राजधान्याः समन्तत एकद्विदिनसाध्ये मार्गे मरुभूमिरूपं दुर्गम् । तच्च द्विविधम्– स्वतःसिद्धमरुभूमिरूपम्, समन्ततो वापीकूपतडागादिजलस्थानानां वृक्षाणां च विनाशनेन निर्जलतां निर्वृक्षतां च संपाद्य कृत्रिममरुभूमिरूपं च । राप्र. १९९

दुर्गरूपराजधानीरचना

³दुर्गं च परिखोपेतं वप्राट्टालकसंयुतम् ।
शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥

---

(१) मत्स्य. २१७।२; विध. २।२६।२; राक. ३९–४०; राप्र. १९८ : १९८ मनाहार्यं तथा परैः (मरोगं देशमावसेव्) पू., विष्णुधर्मोत्तरम्; राकौ. १११ किंचिद्ब्रा (किंच ब्रा) 'वैश्यशूद्रजनप्रायम्' इत्यादिश्लोकद्वयस्थश्लोकार्धानां व्यत्यासः.

(२) मत्स्य. २१७।३; विध. २।२६।३ रम्यमनु (कर्मस्वनु) न्वितम् (चितम्); राक. ४० न्वितम् (वृतम्) चापि (वाऽपि); राप्र. १९८ न्वितम् (वृतम्); राकौ. १११ रम्यमनु (कर्मस्वनु) चापि (वाऽपि) विष्णुधर्मोत्तरम्.

(३) मत्स्य. २१७।४; विध. २।२६।४ समदु (दसह) प्रियमा (च प्रिये); राक. ४० प्रियमा (च प्रिये); राप्र. १९८; राकौ. १११ द्वितीयचरणे (तद्बाधाविषयं पुनः) शेषं राकवत्, विष्णुधर्मोत्तरम्.

(४) मत्स्य. २१७।५; विध. २।२६।५ व्याघ्र (व्याधि); राक. ४० व्याघ्र (व्याल); राप्र. १९८ राकवत्; राकौ. १११ व्याघ्र (व्याल) लाभं (कामं) विष्णुधर्मोत्तरम्.

(१) मत्स्य. २१७।६; विध. २।२६।६ धनुर्दु (धन्वदु); राप्र. १९९ विधवत्; राकौ. ११७ पू., विष्णुधर्मोत्तरम्.

(२) मत्स्य. २१७।७; विध. २।२६।७ पार्थिव (भार्गव); राप्र. १९९ पू.: २०३ उत्त.; राकौ. ११७ उत्त., विष्णुधर्मोत्तरम्.

(३) मत्स्य. २१७।८; विध. २।२६।८ वप्रा (नृपा) समावृतम् (तथा युतम्); राप्र. २०३ वप्राट्टालक (प्राकाराट्टाल); राकौ. ११३ वप्राट्टालक (वप्रोद्यानक) समावृतम् (तथा युतम्) विष्णुधर्मोत्तरम्.

(१) तेषु च यथासंभवं परिखादि कार्यमित्युक्तम्— दुर्गमित्यादिना। राप्र. २०३

(२) वप्रः प्राकारः। राकौ. ११३

[1]गोपुरं सकपाटं च तत्र स्यात्सुमनोहरम्।
सपताकं गजारूढो येन राजा विशेत्पुरम्॥

(१) गोपुरं पुरद्वारम्। राक. ४३

(२) तत्र दुर्गे। गोपुरं पुरद्वारम्। तत्प्रमाणं तु तत्रैव— सपताकमिति। राप्र. २०३

[2]चतस्रश्च तथा तत्र कार्यास्त्वायतवीथयः।
एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम्॥
[3]वीथ्यग्रे च द्वितीये च राजवेश्म विधीयते।
धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके॥
[4]चतुर्थे त्वथ वीथ्यग्रे गोपुरं च विधीयते।
आयतं चतुरस्रं वा वृत्तं वा कारयेत्पुरम्॥

(१) आयतं दीर्घम्। राक. ४३

(२) आयतं दीर्घचतुरस्रम्। राप्र. २०४

[5]मुक्तिहीनं त्रिकोणं च यवमध्यं तथैव च।
अर्धचन्द्रप्रकारं च वज्राकारं च कारयेत्॥

स्रक्तिहीनं कोणरहितम्। राक. ४३

[1]अर्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वशात्।
अन्यत्र तन्न कर्तव्यं प्रयत्नेन विजानता॥
[2]राज्ञा कोशगृहं कार्यं दक्षिणे राजवेश्मनः।
तस्यापि दक्षिणे भागे गजस्थानं विधीयते॥

राज्ञो मुख्यगृहस्य चतुर्दिक्षु कोशादिगृहाण्युक्तानि— 'राज्ञा कोशगृहं ...... सार्वरात्रिकैः॥' इति। राप्र. २०६

[3]गजानां प्राङ्मुखी शाला कर्तव्या
वाऽप्युदङ्मुखी।
आग्नेये च तथा भागे आयुधागारमिष्यते॥
[4]महानसं च धर्मज्ञ कर्मशालास्तथा पराः।
गृहं पुरोधसः कार्यं वामतो राजवेश्मनः॥
[5]मन्त्रिवेदविदां चैव चिकित्साकर्तुरेव च।
तत्रैव च तथा भागे कोष्ठागारं विधीयते॥

पुरोधसो वामतो मन्त्रिगृहं तद्वामतो दैवविदः तद्वामतश्चिकित्सकस्येत्यर्थः। तथा भागे आग्नेयतुल्ये ऐशानभागे इति यावत्। राकौ. १२५

---

(१) मत्स्य. २१७।९; विध. २१२६।९ सक (संक) ताकं (ताक); राक. ४२; राप्र. २०३ च (तु) ताकं (ताक).

(२) मत्स्य. २१७।१०; विध. २।२६।१० स्त्वायत (श्चापण); राक. ४२ विधवत्; राप्र. २०३.

(३) मत्स्य. २१७।११; विध. २।२६।११ तीये च (तीये वै) वेश्म वि (वेश्माभि); राक. ४२; राप्र. २०३–२०४; राकौ. १२४ विधवत्, पू., विष्णुधर्मोत्तरम्.

(४) मत्स्य. २१७।१२; विध. २।२६।१२ त्वथ (चैव) वा कार (चाऽऽकार); राक. ४३ त्वथ (चैव) च (तु); राप्र. २०४ राकवत्.

(५) मत्स्य. २१७।१३; विध. २।२६।१३ कार (वर्ज); राक. ४३ मुक्ति (स्रक्ति); राप्र. २०४ राकवत्.

(१) मत्स्य. २१७।१४ तद्वशात् (तद्वसन्); विध. २।२६।१४ तीरेषु (तीरे तु); राक. ४३ तन्न (तत्र); राप्र. २०४.

(२) मत्स्य. २१७।१५; विध. २।२६।१५ राज्ञा (राज्ञः); राक. ४३; राप्र. २०६; राकौ. १२४ विधवत्, विष्णुधर्मोत्तरम्.

(३) मत्स्य. २१७।१६; विध. २।२६।१६ वाऽप्यु (चाप्यु) गारमि (गार इ); राक. ४३; राप्र. २०६; राकौ. १२५ गारमि (गार इ) विष्णुधर्मोत्तरम्.

(४) मत्स्य. २१७।१७; विध. २।२६।१७ ज्ञ (ज्ञः); राक. ४४; राप्र. २०६ स्तथा पराः (तथाऽपरा); राकौ. १२५ च धर्मज्ञ (तथा प्रोक्तं) पराः (ऽपराः) विष्णुधर्मोत्तरम्.

(५) मत्स्य. २१७।१८; विध. २।२६।१८ वेद (दैव); राक. ४४ विदां (विदः); राप्र. २०६; राकौ. १२५ वेद (दैव) कोष्ठा (गोष्ठा) विष्णुधर्मोत्तरम्.

[1]गवां स्थानं तथैवात्र तुरगाणां तथैव च ।
उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ॥

अश्वशाला ऐशान्यामित्यर्थः । राकौ. १२५

[2]दक्षिणाभिमुखा वाऽथ परिशिष्टास्तु गर्हिताः ।
तुरगास्ते तथा धार्याः प्रदीपैः सार्वरात्रिकैः ॥

दक्षिणात् प्रत्यङ्मुखी विगर्हितेत्यर्थः ।
राकौ. १२५

[3]कुक्कुटान् वानरांश्चैव मर्कटांश्च विशेषतः ।
धारयेदश्वशालासु सवत्सां धेनुमेव च ॥

मन्दुरास्थाश्वानां दृष्टिदोषनिरासाय कुक्कुटादिस्थापनमुक्तम्— कुक्कुटानिति । श्याममुखताम्रमुखाभ्यां ह्रस्वलाङ्गूलदीर्घलाङ्गूलाभ्यां वा वानरमर्कटयोर्भेदः ।
राप्र. २०७

[4]अजाश्च धार्या यत्नेन तुरगाणां हितैषिणा ।
गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ॥

[1]अस्तं गते न कर्तव्यो देवदेवे दिवाकरे ।
तत्र तत्र यथास्थानं राजा विज्ञाय सारथीन् ॥

[2]दद्यादावसथस्थानं सर्वेषामनुपूर्वशः ।
योधानां शिल्पिनां चैव सर्वेषामविशेषतः ॥

[3]दद्यादावसथान् दुर्गे कालमन्त्रविदां शुभान् ।
गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ॥

[4]आहरेत भृशं राजा दुर्गे हि प्रबला रुजः ।
कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ॥

[5]न बहूनामतो दुर्गे विना कार्यं तथा भवेत् ।
दुर्गे च तत्र कर्तव्या नानाप्रहरणान्विताः ॥

[6]सहस्रघातिनो राजंस्तैस्तु रक्षा विधीयते ।
दुर्गे द्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥

---

(१) मत्स्य. २१७।१९ ; विध. २।२६।१९ तथैवात्र ( तु कर्तव्यं ) मुखा ( मुखी ) ; राक. ४४ गाणां वि ( ङ्गाणां वि ) ; राप्र. २०६ मुखा ( मुखी ) ; राकौ. १२५ तथैवात्र ( दि यत्रैव ) मुखा ( मुखी ) विष्णुधर्मोत्तरम्.

(२) मत्स्य. २१७।२० ; विध. २।२६।२० ( प्राङ्मुखी चापि धर्मज्ञ परिशेषा विगर्हिता । तुरगाश्च तथा धार्याः प्रशस्तैः सार्वरात्रिकैः ॥ ) ; राक. ४४ प्रथमचरणे ( प्राङ्मुखी वाऽथ धर्मज्ञ ) पैः सार्व ( पे सर्व ) ; राप्र. २०७ ; राकौ. १२५ वाऽथ ( वाऽपि ) शेषं विधवत्, पू., विष्णुधर्मोत्तरम्.

(३) मत्स्य. २१७।२१ ; विध. २।२६।२१ विशेषतः ( नराधिपः ) दश्व ( दथ ) ; राक. ४४ ; राप्र. २०७.

(४) मत्स्य. २१७।२२ ; विध. २।२६।२२ श्वादि ( श्वि ) निर्गमः ( निष्क्रमम् ) ; राक. ४४ ; राप्र. २०७.

(१) मत्स्य. २१७।२३ ; विध. २।२६।२३ कर्तव्यो ( कर्तव्यं ) तत्र तत्र ( ततस्तत्र ) स्थानं ( न्यायं ) सारथीन् ( सारविद् ) ; राक. ४४ तत्र तत्र ( ततस्तत्र ) ; राप्र. २०७ सारथीन् ( सारथिम् ) शेषं राकवत्.

(२) मत्स्य. २१७।२४ ; विध. २।२६।२४ ; राक. ४४ ; राप्र. २०७.

(३) मत्स्य. २१७।२५ ; विध. २।२६।२५ कालमन्त्र ( मन्त्रकाल ) शुभान् ( सताम् ) ; राक. ४५ कालमन्त्र ( मन्त्रकाल ) ; राप्र. २०७ राकवत्.

(४) मत्स्य. २१७।२६ ; विध. २।२६।२६ हि प्रबला ( परबला ) ; राक. ४५ ; राप्र. २०७.

(५) मत्स्य. २१७।२७ ; विध. २।२६।२७ नामतो दुर्गे ( नां न तैर्दुर्गे ) तत्र ( यन्त्राः ) ; राक. ४५ दुर्गे वि ( दुर्गे वि ) तत्र ( यन्त्राः ) ; राप्र. २०७ तत्र ( यन्त्राः ) ; राकौ. ११३ तत्र ( यन्त्राः ) उत्त., विष्णुधर्मोत्तरम्.

(६) मत्स्य. २१७।२८ ; विध. २।२६।२८ राजंस्तै ( राम तै ) ; राक. ४५ राजंस्तै ( राज्ञा तै ) ; राप्र. २०७ राकवत् ; राकौ. ११३ राजंस्तै ( राम तै ) भूभुजा ( भूतये ) विष्णुधर्मोत्तरम्.

दुर्गे संग्राह्याणां शस्त्रास्त्रौषधिधान्यादिद्रव्याणां निर्देशः

[1]संचयश्चात्र सर्वेषामायुधानां प्रशस्यते ।
धनुषां क्षेपणीयानां तोमराणां च पार्थिव ॥

क्षेपणीयानां क्षेप्तुं योग्यानां पाषाणानां लोहसीसगुलिकानां च । राप्र. २०७

[2]शराणामथ खड्गानां कवचानां तथैव च ।
लगुडानां गुडानां च हुडानां परिघैः सह ॥

[3]अश्मनां च प्रभूतानां मुद्गराणां तथैव च ।
त्रिशूलानां पट्टिशानां कुठाराणां च पार्थिव ॥

[4]प्रासानां च सशूलानां शक्तीनां च नरोत्तम ।
परश्वधानां चक्राणां वर्मणां चर्मभिः सह ॥

[5]कुद्दालरज्जुवेत्राणां पीठकानां तथैव च ।
तुषाणां चैव दात्राणामङ्गाराणां च संचयः ॥

[6]सर्वेषां शिल्पिभाण्डानां संचयश्चात्र चेष्यते ।
वादित्राणां च सर्वेषामोषधीनां तथैव च ॥

[1]यवसानां प्रभूतानामिन्धनस्य च संचयः ।
गुडस्य सर्वतैलानां गोरसानां तथैव च ॥

[2]वसानामथ मज्जानां स्नायूनामस्थिभिः सह ।
गोचर्मपटहानां च धान्यानां सर्वतस्तथा ॥

सर्वतः सर्वेषाम् । राप्र. २०८

[3]तथैवाभ्रपटानां च यवगोधूमयोरपि ।
रत्नानां सर्ववस्त्राणां लोहानामप्यशेषतः ॥

अभ्रं अभ्रकसंज्ञको धातुविशेषः । राप्र. २०८

[4]कलायमुद्गमाषाणां चणकानां तिलैः सह ।
तथा च सर्वसस्यानां पांसुगोमययोरपि ॥

[5]शणसर्जरसं भूर्जं जतु लाक्षा च टङ्कणम् ।
राजा संचिनुयाद् दुर्गे यच्चान्यदपि किंचन ॥

[6]कुम्भाश्चाऽऽशीविषैः कार्या व्यालसिंहादयस्तथा ।
मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् ॥

---

(१) मत्स्य. २१७।२९ ; विध. २।२६।२९ षामायु ( षां चाऽऽयु ) पार्थिव ( भार्गव ) ; राक. ४५ ; राप्र. २०७.

(२) मत्स्य. २१७।३० ; विध. २।२६।३० कवचानां ( खनकानां ) ; राक. ४५ ; राप्र. २०८.

(३) मत्स्य. २१७।३१ ; विध. २।२६।३१ उत्तरार्धे ( कुणियानां त्रिशूलानां पट्टिशानां च भार्गव ॥ ) ; राक. ४५ कुठाराणां ( कणपानां ) ; राप्र. २०८ राकवत्.

(४) मत्स्य. २१७।३२ ; विध. २।२६।३२ सशूलानां ( त्सरूणां च ) वर्मणां ( चर्मणां ) ; राक. ४५ ; राप्र. २०८ परश्व ( परस्व ).

(५) मत्स्य. २१७।३३ ; विध. २।२६।३३ पीठकानां ( पिटिकानां ) उत्तरार्धे ( ह्रस्वकानां च पात्राणामगरस्य च संश्रयम् ॥ ) ; राक. ४५ तुषाणां चैव ( हिंसकानां च ) चयः ( चयाः ) शेषं विधवत् ; राप्र. २०८ तुषाणां चैव ( हिंसकानां च ).

(६) मत्स्य. २१७।३४ ; विध. २।२६।३४ शिल्पि ( चित्र ) चेष्यते ( इष्यते ) मोषधीनां ( मौषधानां ) ; राक. ४५ चेष्यते ( शिष्यते ) ; राप्र. २०८ मोष ( मौष ) शेषं राकवत्.

(१) मत्स्य. २१७।३५ ; विध. २।२६।३५ नामिन्ध ( नां चेन्ध ) चयं ( चयः ) तैलानां ( शैलानां ) ; राक. ४५ ; राप्र. २०८.

(२) मत्स्य. २१७।३६ ; विध. २।२६।३६ प्रथमचरणे ( चर्मणां च ससर्जानां ) गोचर्मपटहानां ( गोरसस्य पटानां ) ; राक. ४६ ; राप्र. २०८.

(३) मत्स्य. २१७।३७ ; विध. २।२६।३७ तथैवाभ्र ( तथैव प्र ) नामप्य ( नां चाप्य ) ; राक. ४६ ; राप्र. २०८ पू.

(४) मत्स्य. २१७।३८ ; विध. २।२६।३८ पांसु ( पांशु ) ; राक. ४६.

(५) मत्स्य. २१७।३९ ; विध. २।२६।३९ शण ( सण ) भूर्जं ( भूर्जं ) च टङ्कणम् ( कटंकटान् ) ; राक. ४६ सर्ज ( सर्जु ) भूर्जं ( पूर्णं ) ; राप्र. २०८.

(६) मत्स्य. २१७।४० ; विध. २।२६।४० (कुम्भाः साशीविषा धार्या व्याघ्रसिंहादयस्तथा । मृगाश्च पक्षिणश्चैव

[1]स्थानानि च विरुद्धानां सुगुप्तानि पृथक्पृथक् ।
कर्तव्यानि महाभाग यत्नेन पृथिवीक्षिता ॥
[2]उक्तानि चाप्यनुक्तानि राजद्रव्याण्यशेषतः ।
सुगुप्तानि पुरे कुर्याज्जनानां हितकाम्यया ॥
[3]जीवकर्षभकाकोलमामलक्याटरूषकान् ।
शालपर्णी पृश्निपर्णी मुद्गपर्णी तथैव च ॥
[4]माषपर्णी च मेदे द्वे शारिवे द्वे बलात्रयम् ।
वीरा श्वसन्ती वृष्या च बृहती कण्टकारिका ॥
[5]शृङ्गी शृङ्गाटकी द्रोणी वर्षाभूर्दर्भरेणुका ।
मधुपर्णी विदार्ये द्वे महाक्षीरा महातपाः ॥
[6]धन्वनः सहदेवाह्वा कटुकैरण्डकं विषः ।
पर्णी शताह्वा मृद्वीका फल्गुखर्जूरयष्टिकाः ॥

पशवश्च पृथग्विधाः ॥ ) ; राक. ४६ कुम्भाश्चाऽऽशीविषैः ( कुम्भेष्वाशीविषाः ) ; राप्र. २०८ राकवत्.

(१) मत्स्य. २१७।४१ ; विध. २।२६।४१ स्थानानि च ( संचेयानि ) ; राक. ४६ ; राप्र. २०८.

(२) मत्स्य. २१७।४२ ; विध. २।२६।४२ ; राप्र. २०९ चाप्य ( वाऽप्य ) राजद्र ( राजा द्र ).

(३) मत्स्य. २१७।४३ ; विध. २।२६।४३ पूर्वार्धे ( जीवकर्षभकाकोलीरामलक्यः परूषकम् । ) शाल (शालि); राप्र. २०९-२१० षकान् ( षकम् ).

(४) मत्स्य. २१७।४४ ; विध. २।२६।४४ च मेदे द्वे ( तथा चैव ) त्रयम् ( भयम् ) तृतीयचरणे ( वीराऽश्वगन्धा पृथ्वीका ) ; राप्र. २१० शारिवे ( सारिवे ) वृष्या च ( वृष्णीया ).

(५) मत्स्य. २१७।४५ ; विध. २।२६।४५ (शृङ्गाटिका रोद्रगोधी वर्षाभूदर्भगुन्द्रका । मधुपर्णीविदार्यौ द्वे महादुर्गा महा तथा ॥ ) ; राप्र. २१० दर्भे ( भेद्र) विदार्ये ( विदार्यौ ) क्षीरा ( क्षुद्रा ).

(६) मत्स्य. २१७।४६ ; विध. २।२६।४६ ( धन्वना महकाख्याह्वा त्रिकोटी रण्डकं विषम् । पर्णासनाह्वी मृद्वीका फल्गुः खर्जूरयष्टिका ॥ ) ; राप्र. २१० धन्वनः ( धन्वना ) पर्णी शताह्वा ( पर्णासनाह्वा ).

[1]शुक्रातिशुक्रकाश्मर्यश्छत्रातिच्छत्रवीरणाः ।
इक्षुरिक्षुविकाराश्च फाणिताद्याश्च सत्तम ॥
[2]सिंही च सहदेवी च विश्वेदेवाश्वरोधकम् ।
मधुकं पुष्पहंसाख्या शतपुष्पा मधूलिका ॥
[3]शतावरीमधूके च पिप्पलं तालमेव च ।
आत्मगुप्ता कट्फलाख्या दार्विका राजशीर्षकी ॥
[4]राजसर्षपधान्याकमृष्यप्रोक्ता तथोत्कटा ।
कालशाकं पद्मबीजं गोवल्ली मधुवल्लिका ॥
[5]शीतपाकी कुलिङ्गाक्षी काकजिह्वोरुपुष्पिका ।
पर्वतत्रपुसौ चोभौ गुञ्जातकपुनर्नवे ॥
[6]कसेरुका तु काश्मीरी बिल्वशालूककेसरम् ।
शूकधान्यानि सर्वाणि शमीधान्यानि चैव हि ॥

(१) मत्स्य. २१७।४७ ; विध. २।२६।४७ काराश्च ( कारश्च ) सत्तम ( भार्गव ) ; राप्र. २१०.

(२) मत्स्य. २१७।४८ ; विध. २।२६।४८ (सहाश्च सहदेवाश्च विश्वेदेवाढरूषकम् । मधूकपुष्पं हंसाख्या शतपुष्पमधूलिका ॥ ) ; राप्र. २१० वाश्वरोधकम् ( वाटरूषकम् ).

(३) मत्स्य. २१७।४९ ; विध. २।२६।४९ ( शतावरी मधूकं च प्रियालं तालमेव च । आत्मगुप्ता कट्फलाख्या दरदा राजसेरुका ॥ ) ; राप्र. २१० शीर्षकी ( शीर्षिका ).

(४) मत्स्य. २१७।५० ; विध. २।२६।५० प्रथमचरणे ( राजर्षभकधानक्या ) कालशाकं ( कटंकटा ) ; राप्र. २१०.

(५) मत्स्य. २१७।५१ ; विध. २।२६।५१ पुष्पिका ( पत्रिका ) पर्वतत्रपुसौ ( एर्वारुत्रपसौ ) गुञ्जा ( मुञ्जा ) नेवे ( नवा ).; राप्र. २१० पर्वत ( एर्वारु ).

(६) मत्स्य. २१७।५२ ; विध. २।२६।५२ कसेरुका तु काश्मीरी बिल्व ( काशेरुका तुगाक्षीरा बिल्वे ) शमी ( शम्बी ) चैव हि ( यानि च ) ; राप्र. २१० कसे ( कशे ) शमी ( शिम्बी ).

[1]क्षीरं क्षौद्रं तथा तक्रं तैलं मज्जा वसा घृतम् ।
नीपश्चारिष्टकक्षोडवातामासोमबाणकम् ॥

[2]एवमादीनि चान्यानि विज्ञेयो मधुरो गणः ।
राजा संचिनुयात्सर्वं पुरे निरवशेषतः ॥

[3]दाडिमाम्रातकौ चैव तिन्तिडीकाम्लवेतसम् ।
भव्यकर्कन्धुलकुचकरमर्दकरूषकम् ॥

[4]बीजपूरककण्डूरे मालती राजबन्धुकम् ।
कोलकद्वयपर्णानि द्वयोराम्रातयोरपि ॥

[5]पारावतं नागरकं प्राचीनारुकमेव च ।
कपित्थामलकं चुक्रफलं दन्तशठस्य च ॥

[6]जाम्बवं नवनीतं च सौवीरकरुषोदके ।
सुरासवं च मद्यानि मण्डतक्रदधीनि च ॥

(१) मत्स्य. २१७।५३; विध. २।२६।५३ तक्रं तैलं मज्जा ( शुक्लं मज्जा तैलं ) उत्तरार्धे ( निकोचाभिषुकाक्षोटं वातापं सोरुखाणकम् ॥ ) ; राप्र. २१० तक्रं (चुक्रं) उत्तरार्धे ( निकोचारिष्टकाक्षोडा वाताममोरुशाणकम् ॥ ).

(२) मत्स्य. २१७।५४ ; विध. २।२६।५४; राप्र. २१०-२११.

(३) मत्स्य. २१७।५५; विध. २।२६।५५ तकौ चैव ( तकां लीनं ) उत्तरार्धे ( भव्यकः कण्डलीकश्च मकरन्दकरूषकम् ॥ ) ; राप्र. २११ तकौ चैव ( तकाम्रं च ).

(४) मत्स्य. २१७।५६ ; विध. २।२६।५६ कण्डूरे ( काण्डीर ) बन्धुकम् ( धन्वना ) राम्रात ( रल्लीक ); राप्र. २११ राम्रात ( राम्लक ).

(५) मत्स्य. २१७।५७ ; विध. २।२६।५७ ( पालेवतं भागरिकं प्राचीनारूकमेव च । कपित्थामलकं चुक्रं कलिन्दं च शठस्य च ॥ ) ; राप्र. २११ पारावतं ( आरेवतं ) कपित्था ( कपिला ) चुक्रफलं ( चुक्रा फलं ).

(६) मत्स्य. २१७।५८ ; विध. २।२६।५८ रुषोदके ( तुषोदके ) मण्ड ( मण्डं ) ; राप्र. २११ रुषो (तुषो).

[1]शुक्तानि चैव सर्वाणि ज्ञेयमाम्लगणं द्विज ।
एवमादीनि चान्यानि राजा संचिनुयात्पुरे ॥
[2]सैन्धवोद्भिदपाठेयपाक्यसामुद्रलोमकम् ।
कुप्यसौवर्चलाविल्वं बालकेयं यवाह्वकम् ॥
[3]और्वं क्षारं कालभस्म विज्ञेयो लवणो गणः ।
एवमादीनि चान्यानि राजा संचिनुयात्पुरे ॥
[4]पिप्पली पिप्पलीमूलचव्यचित्रकनागरम् ।
कुबेरकं च मरिचं शिग्रुभल्लातसर्षपाः ॥
[5]कुष्ठाजमोदा किणिही हिङ्गुमूलकधान्यकम् ।
कारवी कुञ्चिका याज्या सुमुखा कलमालिका ॥
[6]फणिज्झकोऽथ लशुनं भूस्तृणं सुरसं तथा ।
कायस्था च वयस्था च हरितालं मनःशिला ॥
[7]अमृता च रुदन्ती च रोहिषं कुङ्कुमं तथा ।
जया एरण्डकाण्डीरं शल्लकी हञ्जिका तथा ॥

(१) मत्स्य. २१७।५९ ; विध. २।२६।५९ द्वितीयचरणे ( ज्ञेयान्यम्लगणानि वै ) पू. ; राप्र. २११ पूर्वार्धे ( शुक्तानि चैव सर्वाणि ज्ञेयान्यम्लगणानि च । ).

(२) मत्स्य. २१७।६० ; विध. २।२६।५९ ( सैन्धवोद्भेदनादेयपाक्यसामुद्रोचसम् । कूप्यसौवर्चलविडं बालकैलोपवाह्वकम् ॥ ).

(३) मत्स्य. २१७।६१ ; विध. २।२६।६० और्वं ( कष ) लवणो ( लावणो ).

(४) मत्स्य. २१७।६२ ; विध. २।२६।६१ मूल ( मूलं ) उत्तरार्धे ( कुठेरकं समरिचं शिग्रुं भल्लातसर्षपाः ॥ ); राप्र. २११ मूल ( मूलं ) च मरिचं ( समरिचं ).

(५) मत्स्य. २१७।६३ ; विध. २।२६।६२ मोदा किणिही ( मोदकिटिभ ) उत्तरार्धे ( कारव्यः कुचिकादात्यः सुमुखः कालपालिका ॥ ) ; राप्र. २११ कल ( काल ).

(६) मत्स्य. २१७।६४; विध. २।२६।६३ रसं ( रसः ) ; राप्र. २११ फणिज्झ ( फणिज्ज ).

(७) मत्स्य. २१७।६५ ; विध. २।२६।६४-६६ च रुदन्ती च रोहिषं (गुरुदन्ती च रोहितं) पूर्वार्धानन्तरमधिकः पाठः- (अवल्गुजः सोमराजी कृष्णसर्पा शिला जतु ॥ कापित्थकं तेजवती विडङ्गानिचुलानि च । एडकाक्षी प्रकीर्या च पुण्डीरं

[1]सर्वपित्तानि मूत्राणि प्रायो हरितकानि च ।
संगतानि च मूलानि यष्टिश्चातिविषाणि च ।
फलानि चैव हि तथा सूक्ष्मैला हिङ्गुपत्रिका ॥
[2]एवमादीनि चान्यानि गणः कटुकसंज्ञितः ।
राजा संचिनुयाद्दुर्गे प्रयत्नेन नृपोत्तम ॥
[3]मुस्तं चन्दनह्रीबेरकृतमालकदारवः ।
हरिद्रानलदोशीरनक्तमालकदम्बकम् ॥
[4]दूर्वा पटोलकटुका दन्तीत्वक्पत्रकं त्वचा ।
किराततिक्तभूतुम्बी विषा चातिविषा तथा ॥
[5]तालीसपत्रतगरं सप्तपर्णविकङ्कताः ।
काकोदुम्बरिका दिव्यास्तथा चैव सुरोद्भवा ॥
[6]षड्ग्रन्था रोहिणी मांसी पर्पटश्चाथ दन्तिका ।
रसाञ्जनं भृङ्गराजं पतङ्गी परिपेलवम् ॥

---

स्वर्णयूथिका ॥ सौगन्धिकं गृञ्जनकं वेश्मधूमोऽथ रोचना । ) उत्तरार्धे ( यवा ऐरण्डकाण्डीरं सत्यकी ह्पुषा तथा ॥ ); राप्र. २११ रोहिषं ( रोहितं ) जया एरण्ड ( यवासैरण्ड ).

(१) मत्स्य. २१७।६६ ; विध. २।२६।६७ पित्तानि मू ( पीतानि सू ) चैव हि ( चैषां च ) द्वितीयार्धं नास्ति; राप्र. २११ हि ( च ) द्वितीयार्धं नास्ति.

(२) मत्स्य. २१७।६७ ; विध. २।२६।६८ गणः ( गणं ) संज्ञितः (संज्ञकम् ) नृपो (भृगू) ; राप्र. २१२.

(३) मत्स्य. २१७।६८ ; विध. २।२६।६९ मुस्तं ( मुस्त ) दारवः ( दारवम् ) चतुर्थचरणे ( मङ्क्तामलकवास्तुकम् ) ; राप्र. २१२ मुस्तं ( मुस्त ).

(४) मत्स्य. २१७।६९ ; विध. २।२६।७० ( पूर्वा पटोलकटुका पाठत्वक्पत्रतुम्बकः । किराततिक्तकौ निम्बं यष्टीकाऽतिविषा तथा ॥ ) ; राप्र. २११ द्वितीयचरणे ( दीर्वत्वक् चूतकं वचा ) भूतुम्बी ( कं निम्बं ).

(५) मत्स्य. २१७।७० ; विध. २।२६।७१ ( तालीशपत्रं तगरं सप्तपर्णं निकान्तकम् । काकोदुम्बरकौदीपसुषवीकणिकासनाः ॥ ) ; राप्र. २१२ पत्र ( पत्रं ) उत्तरार्धे ( काकोदुम्बरिकोदीच्यसुषवीकृमिहिंसकाः ॥ ).

(६) मत्स्य. २१७।७१ ; विध. २।२६।७२ ( षड्ग्रन्था च हिणी मांसी पर्पटं मदयन्तिका । रसाञ्जनं भृङ्गरसं पतङ्गापरिपेलवम् ॥ ) ; राप्र. २१२ पतङ्गी ( पर्णासं ).

[1]दुःस्पर्शा गुरुणी कामा श्यामाकं गन्धनाकुली ।
तुषपर्णी व्याघ्रनखं मञ्जिष्ठा चतुरङ्गुला ॥
[2]रम्भा चैवाङ्कुरास्फोता तालास्फोता हरेणुका ।
वेत्राग्रवेतसस्तुम्बी विषाणी लोध्रपुष्पिणी ॥
[3]मालती करकृष्णाख्या वृश्चिका जीविता तथा ।
पर्णिका च गुडूची च स गणस्तिक्तसंज्ञकः ॥
[4]एवमादीनि चान्यानि राजा संचिनुयात्पुरे ।
अभयामलके चोभे तथैव च बिभीतकम् ॥
[5]प्रियङ्गुधातकीपुष्पं मोचाख्या चार्जुनासनाः ।
अनन्ता स्त्री तुवरिका श्योणाकं कट्फलं तथा ॥
[6]भूर्जपत्रं शिलापत्रं पाटलापत्रलोमकम् ।
समङ्गात्रिवृतामूलकार्पासगैरिकाञ्जनम् ॥

---

(१) मत्स्य. २१७।७२ ; विध. २।२६।७३ कामा श्यामाकं (काशो रसकं) पर्णी ( वल्ली ) चतुर्थचरणे ( शाङ्गष्ठा चतुरङ्गुलः ) ; राप्र. २१२ गन्ध ( कङ्गु ) मञ्जिष्ठा ( अम्बष्ठा ).

(२) मत्स्य. २१७।७३ ; विध. २।२६।७४ ( रास्ना चैव कुशा स्फीता हरेणुरथरेणुका । वेत्राग्रं वेतसस्तुर्वी विषाणं लोहमञ्जनम् ॥) ; राप्र. २१२ लोध्रपुष्पिणी (लोहपञ्जरा).

(३) मत्स्य. २१७।७४ ; विध. २।२६।७५ (मालती वनतिक्ताख्या वृषगोजिह्वकर्कशाः । पर्पटी च गुडूची च गणस्तिक्तकसंज्ञकः ॥ ) ; राप्र. २१२ कृष्णाख्या वृश्चिका जीविता ( तिक्ताख्या वृषाङ्गी जिह्विका ) पर्णिका ( पर्पटं ).

(४) मत्स्य. २१७।७५ ; विध. २।२६।७६ ; राप्र. २१२ के चोभे ( कौ चोभौ ).

(५) मत्स्य. २१७।७६ ; विध. २।२६।७७ ( प्रियङ्गुधातकीपुष्पमोचरोधासनार्जुना । अनन्ताम्रास्थिनागाह्वा स्योना कङ्कफलं तथा ॥ ); राप्र. २१२ मोचाख्या चा ( मोचालोध्रा ) तुवरिका श्योणाकं ( सुरानङ्गा स्योनाकं ).

(६) मत्स्य. २१७।७७ ; विध. २।२६।७८ पूर्वार्धे (भूर्जपत्रं शिलोद्भेदं पाटला वकुलोष्ठकम् । ) मूलकार्पास ( मूलं कर्पासा ) ; राप्र. २१२–२१३ पूर्वार्धे ( भूर्जपत्रशिलोद्भेदपाटला पक्कलाष्टकम् । ).

[1]विद्रुमं समधूच्छिष्टं कुम्भिका कुमुदोत्पलम् ।
न्यग्रोधोदुम्बराश्वत्थकिंशुकाः शिंशपा शमी ॥

[2]प्रियालपीलुकासारीशिरीषाः पद्मकं तथा ।
बिल्वोऽग्निमन्थः प्लक्षश्च श्यामाकं च बको घनम् ॥

[3]राजादनं करीरं च धान्यकं प्रियकस्तथा ।
कङ्कोलाशोकबदराः कदम्बखदिरद्वयम् ॥

[4]एषां पत्राणि साराणि मूलानि कुसुमानि च ।
एवमादीनि चान्यानि कषायाख्यो गणो मतः ॥

[5]प्रयत्नेन नृपश्रेष्ठ राजा संचिनुयात्पुरे ।
कीटाश्च मारणे योग्या व्यङ्गतायां तथैव च ॥

[6]वातधूमाम्बुमार्गाणां दूषणानि तथैव च ।
धार्याणि पार्थिवैर्दुर्गे तानि वक्ष्यामि पार्थिव ॥

(१) मत्स्य. २१७।७८; विध. २।२६।७९ द्वितीयचरणे (कुम्भीककुमुदोत्पले) न्यग्रोधो (न्यग्रोधौ); राप्र. २१३.

(२) मत्स्य. २१७।७९; विध. २।२६।८० (प्रियाला प्लुकासारं शिरीषं पद्मकं तथा । बिल्वाग्निमन्थं प्लक्षश्च श्यामाकायचकौयनम् ॥); राप्र. २१३ सारी (सार) च बको (कवको).

(३) मत्स्य. २१७।८०; विध. २।२६।८०–८१ (राजादनं करीरं च चम्पकप्रियकौ तथा । अङ्कोलोशीरबदराः कदम्बखदिराह्वयम् ॥); राप्र. २१३ द्वितीयचरणे (चम्पकप्रियकौ तथा).

(४) मत्स्य. २१७।८१; विध. २।२६।८१–८२ मतः (ऽस्ति च); राप्र. २१३.

(५) मत्स्य. २१७।८२; विध. २।२६।८२–८३ नृप (भृगु) टाश्च (टाश्व) योग्या (योगा); राप्र. २१३ टाश्च मा (टाम्बुमा).

(६) मत्स्य. २१७।८३; विध. २।२६।८३–८४ चतुर्थचरणे (नाहं वक्ष्यामि तानि ते); राप्र. २१३ धूमाम्बु (धूमाश्व).

[1]विषाणां धारणं कार्यं प्रयत्नेन महीभुजा ।
विचित्राश्चागदा धार्या विषस्य शमनास्तथा ॥

[2]रक्षोभूतपिशाचघ्नाः पापघ्नाः पुष्टिवर्धनाः ।
कलाविदश्च पुरुषाः पुरे धार्याः प्रयत्नतः ॥

[3]भीतान्प्रमत्तान् कुपितांस्तथैव च विमानितान् ।
कुभृत्यान्पापशीलांश्च न राजा वासयेत्पुरे ॥

[4]यन्त्रायुधाट्टालचयोपपन्नं
समग्रधान्यौषधिसंप्रयुक्तम् ।
वणिग्जनैश्चाऽऽवृतमावसेत
दुर्गं सुगुप्तं नृपतिः सदैव ॥

इत्यादिप्रबन्धेनावश्यापेक्षितवस्तुसंचयं विधाय दुर्गमध्ये पुरं सुरक्षितं कृत्वा तत्र वसेत् । राप्र. २१३

मनुरुवाच–

[5]रक्षोघ्नानि विषघ्नानि यानि धार्याणि भूभुजा ।
अगदानि समाचक्ष्व तानि धर्मभृतां वर ॥

मत्स्य उवाच–

[6]बिल्वाटकी यवक्षारं पाटला बाह्लिकोषणा ।
श्रीपर्णी शल्लकीयुक्तो निक्काथः प्रोक्षणं परम् ॥

(१) मत्स्य. २१७।८४; विध. २।२६।८४–८५ विषस्य श (विषप्रश); राप्र. २१३.

(२) मत्स्य. २१७।८५; विध. २।२६।८५–८६ भूतपिशाचघ्नाः (भूतादिशमनाः) कला (काला); राप्र. २१३.

(३) मत्स्य. २१७।८६; विध. २।२६।८६–८७ न्पापशीलांश्च (नकुलीनांश्च); राप्र. २१३.

(४) मत्स्य. २१७।८७ सुगु (सुषु); विध. २।२६।८७–८८ न्यौषधि (न्यौषध) नैश्चाऽऽवृत (नैः शोभन); राक. ४६ चयो (मयो); राप्र. २१३; राकौ. ११३ नैश्चाऽऽवृत (नैः शोभन).

(५) मत्स्य. २१८।१; विध. २।२७।१ धार्या (कार्या).

(६) मत्स्य. २१८।२; विध. २।२७।२ (बिल्वाढकी यवक्षारपाटली बाह्लिकोषणाः । श्रीपर्णी सल्लकीयुक्ता निष्क्वाथः प्रोक्षणं परम् ॥).

[1]सविषं प्रोक्षितं तेन सद्यो भवति निर्विषम् ।
यवसैन्धवपानीयवस्त्रशय्यासनोदकम् ॥
[2]कवचाभरणं छत्रं वालव्यजनवेश्मनाम् ।
शेलुः पाटल्यतिविषा शिग्रु मूर्वा पुनर्नवा ॥
[3]समङ्गा वृषमूलं च कपित्थवृषशोषितम् ।
महादन्तशठं तद्वत्प्रोक्षणं विषनाशनम् ॥
[4]लाक्षाप्रियङ्गुमञ्जिष्ठा सममेला हरेणुका ।
यष्ट्याह्वा मधुरा चैव बभ्रुपित्तेन कल्पिताः ॥
[5]निखनेद्गोविषाणस्थं सप्तरात्रं महीतले ।
ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ॥
[6]संसृष्टं सविषं तेन सद्यो भवति निर्विषम् ।
मनोह्वया शमीपत्रं तुम्बिका श्वेतसर्षपाः ॥
[7]कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्पिताः ।
शुनो गोः कपिलायाश्च सौम्याक्षिप्तोऽपरो गदः ॥
[8]विषजित्परमं कार्यं मणिरत्नं च पूर्ववत् ।
मूषिका जतुका चापि हस्ते बद्ध्वा विषापहा ॥

(१) मत्स्य. २१८।३ ; विध. २।२७।३ वस्त्र (वसु) नोदकम् (नौदनम्).

(२) मत्स्य. २१८।४ ; विध. २।२७।४ (कवचाभरणच्छत्र-वालव्यजनमेव च । शैलूपाटल्यतिविषाशिग्रुगोपीपुनर्नवाः ॥).

(३) मत्स्य. २१८।५ ; विध. २।२७।५ पूर्वार्धे (ससङ्गा-वृक्षमूलत्वक्कपित्थं वृक्षशोणितम् ।) महा (सह) क्षणं (क्षिणं).

(४) मत्स्य. २१८।६ ; विध. २।२७।६ (लाक्षा प्रियङ्गु-मञ्जिष्ठासमङ्गाः सहरेणुका । सयष्ट्याह्वमधूपेता बभ्रुपित्तेन कल्किताः ॥).

(५) मत्स्य. २१८।७ ; विध. २।२७।७ णस्थं (णस्था).

(६) मत्स्य. २१८।८ ; विध. २।२७।८ (संसृष्टः सविष-स्तेन सद्यो भवति निर्विषः । मनोह्वालशमीपुष्पत्वङ्निशाश्वेत-सर्षपाः ॥).

(७) मत्स्य. २१८।९ ; विध. २।२७।९ कल्पिताः (कल्किताः) उत्तरार्धे (धनोगवः कपिल्लायाः सौम्याख्योऽयं पुरो गदः ॥).

(८) मत्स्य. २१८।१० ; विध. २।२७।१० मं कार्यं (मः प्रोक्तो) रत्नं (रत्न) मूषिका जतुका (मूषकाजिरका).



[1]हरेणुमांसी मञ्जिष्ठा रजनी मधुका मधु ।
अक्षत्वक्सुरसं लाक्षा श्वपित्तं पूर्ववद्भुवि ॥
[2]वादित्राणि पताकाश्च पिष्टैरेतैः प्रलेपिताः ।
श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषः ॥
[3]त्र्यूषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम् ।
सूक्ष्मैला त्रिवृतापत्रं विडङ्गानीन्द्रवारुणी ॥
[4]मधुकं वेतसं क्षौद्रं विषाणे च निधापयेत् ।
तस्मादुष्णाम्बुना मात्रं प्रागुक्तं योजयेत्ततः ॥
[5]विषभुक्तं जरं याति निर्विषं पित्तदोषकृत् ।
शुक्लं सर्जरसोपेतं सर्षपा एलवालुकैः ॥
[6]सुवेगा तस्करसुरौ कुसुमैरर्जुनस्य तु ।
धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ॥
[7]न तत्र कीटा न विषं दर्दुरा न सरीसृपाः ।
न कृत्या कर्मणां चापि धूपोऽयं यत्र दह्यते ॥
[8]कल्पितैश्चन्दनक्षीरपलाशद्रुमवल्कलैः ।
मूर्वैलावालुसरसानाकुलीतण्डुलीयकैः ॥

(१) मत्स्य. २१८।११ ; विध. २।२७।११ मांसी (मासी) मधुका (मधुकं) वद्भुवि (वर्मणि).

(२) मत्स्य. २१८।१२ ; विध. २।२७।१२ पिष्टै (विष्टै).

(३) मत्स्य. २१८।१३ ; विध. २।२७।१३ विडङ्गा (विरुङ्गा).

(४) मत्स्य. २१८।१४ ; विध. २।२७।१४ (मधुकं चेति सक्षौद्रं गोविषाणैर्निधापयेत् । तस्मादुष्णाम्बुना मात्रां प्रागुक्तां योजयेत्तथा ॥).

(५) मत्स्य. २१८।१५ ; विध. २।२७।१५ (विषं भुक्तं जरां याति निर्विषोऽपि न दोषकृत् । सन्तुसर्जरसोशीरसर्षपापत्र-वालुकैः ॥).

(६) मत्स्य. २१८।१६ ; विध. २।२७।१६ पूर्वार्धे (सवेल्लारुष्करपुरैः कुसुमैरर्जुनस्य च ।) वास (वासो).

(७) मत्स्य. २१८।१७ ; विध. २।२७।१७ विषं (विषा) तृतीयचरणे (न कृत्याः कर्म नान्यच्च).

(८) मत्स्य. २१८।१८ ; विध. २।२७।१८ कल्पि (कल्कि) मूर्वैला (पूर्वैल) सरसा (सुरसा).

[1]क्वाथः सर्वोदकार्येषु काकमाचीयुतो हितः ।
रोचनापत्रनेपालीकुङ्कुमैस्तिलकान् वहन् ॥

[2]विषैर्न बाध्यतेऽस्माच्च नरनारीनृपप्रियः ।
चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः ॥

[3]दिग्धं निर्विषतामेति गात्रं सर्वविषार्दितम् ।
शिरीषस्य फलं पत्रं पुष्पं त्वङ्मूलमेव च ॥

[4]गोमूत्रघृष्टो ह्यगदः सर्वकर्मकरः स्मृतः ।
एकवीरमहौषध्यः शृणु चातः परं नृप ॥

[5]वन्ध्या कर्कोटकी राजन् विष्णुक्रान्ता तथोत्कटा ।
शतमूली सितामन्दा बला मोचा पटोलिका ॥

[6]सोमा पिण्डा निशा चैव तथा दग्धरुहा च या ।
स्थले कमलिनी या च विशाली शङ्खमूलिका ॥

[7]चाण्डाली हस्तिमगधा गोजापर्णी करम्भिका ।
रक्ता चैव महारक्ता तथा बर्हिशिखा च या ॥

[8]कोशातकी नक्तमालं प्रियालं च सुलोचनी ।
वारुणी वसुगन्धा च तथा वै गन्धनाकुली ॥

(१) मत्स्य. २१८।१९ ; विध. २।२७।१९ युतो हितः ( जलैर्वृतः ) नेपाली ( नैपाली ) लकान् ( लकं ).

(२) मत्स्य. २१८।२० ; विध. २।२७।२० प्रथमचरणे ( विषं न बाधते स्याच्च ) निम्बजैः ( निम्बकैः ).

(३) मत्स्य. २१८।२१ ; विध. २।२७।२१ दिग्धं (जिघ्रन् ) मूल ( मल ).

(४) मत्स्य. २१८।२२ ; विध. २।२७।२२ घृष्टो ( पिष्टो ) एकवीर ( एता वीर ) नृप ( द्विज ).

(५) मत्स्य. २१८।२३ ; विध. २।२७।२३ राजन् ( राम ) उत्तरार्धे ( शतमूला शतानन्दा बलास्फोटा पटोलिका ॥ ).

(६) मत्स्य. २१८।२४ ; विध. २।२७।२४ च या ( जया ) विशाली शङ्ख ( पिङ्गली शृङ्ग ).

(७) मत्स्य. २१८।२५ ; विध. २।२७।२५ पूर्वार्धे (चण्डाली हस्तिचण्डाली गोचण्डाली कवन्धिका । ).

(८) मत्स्य. २१८।२६ ; विध. २।२७।२६ ( कोशातकी नक्तमालं पियालं च स्वलक्षणा । चारणा च सुगन्धा च तथा वै गन्धनाकुली ॥ ).

[1]ईश्वरी शिवगन्धा च श्यामला वंशनालिका ।
जतुकाली महाश्वेता श्वेता च मधुयष्टिका ॥

[2]वज्रकः पारिभद्रश्च तथा वै सिन्धुवारकाः ।
जीवानन्दा वसुच्छिद्रा नतनागरकण्टका ॥

[3]नालं च जाली जाती च तथा च वटपत्रिका ।
कार्तस्वरं महानीला कुन्दरुर्हंसपादिका ॥

[4]मण्डूकपर्णी वाराही द्वे तथा तण्डुलीयके ।
सर्पाक्षी लवली ब्राह्मी विश्वरूपा सुखाकरा ॥

[5]रुजापहा वृद्धिकरी तथा चैव तु शल्यदा ।
पत्रिका रोहिणी चैव रक्तमाला महौषधी ॥

[6]तथाऽऽमलकवन्दाकं श्यामचित्रफला च या ।
काकोली क्षीरकाकोली पीलुपर्णी तथैव च ॥

[7]केशिनी वृश्चिकाली च महानागा शतावरी ।
गरुडी च तथा वेगा जले कुमुदिनी तथा ॥

[8]स्थले चोत्पलिनी या च महाभूमिलता च या ।
उन्मादिनी सोमराजी सर्वरत्नानि पार्थिव ॥

(१) मत्स्य. २१८।२७ ; विध. २।२७।२७ शिवगन्धा ( च सलिङ्गी ) श्यामला ( सोमली ) काली महाश्वेता ( कारी तथा श्वेता ).

(२) मत्स्य. २१८।२८ ; विध. २।२७।२८ ( वज्जटः पारिभद्रश्च तथा वै सिन्धुवारिका । जीवानन्दी वसुमती न तं नागकर्टकटम् ॥ ).

(३) मत्स्य. २१८।२९ ; विध. २।२७।२९ ( तालना जालपातालं तथा च वटपत्रिका । करक्षीरा महानीली कह्लारं हंसपादिका ॥ ).

(४) मत्स्य. २१८।३० ; विध. २।२७।३० लवली ( लवणा ) सुखाकरा ( सुखंकरी ).

(५) मत्स्य. २१८।३१ ; विध. २।२७।३१ वृद्धि ( शुद्धि ) चैव तु शल्यदा ( शल्यापहा च या ) रक्तमाला ( रक्तशा च ).

(६) मत्स्य. २१८।३२ ; विध. २।२७।३२ पूर्वार्धे ( तथामलकवन्दारु यावचित्रा पटोलिका । ) तथैव च ( मनोवती ).

(७) मत्स्य. २१८।३३ ; विध. २।२७।३३ ( केशनी वृश्चिका काली महानागा शतावरी । तथा गरुडवेगा च स्थलकुमुदिनी च या ॥ ).

(८) मत्स्य. २१८।३४ ; विध. २।२७।३४ पार्थिव ( भार्गव ).

[1]विशिखाऽमरकन्या च कीटपक्षं विशेषतः ।
जीवजाताश्च मणयः सर्वे धार्याः प्रयत्नतः ॥

[2]रक्षोघ्नाश्च विषघ्नाश्च कृत्या वैतालनाशनाः ।
विशेषान्नरनागाश्च गोखरोष्ट्रसमुद्भवाः ॥

[3]सर्पतित्तिरगोमायुबभ्रुमण्डूकजाश्च ये ।
सिंहव्याघ्रर्क्षमार्जारद्वीपिवानरसंभवाः ।
कपिञ्जला गजा वाजिमहिषैणभवाश्च ये ॥

[4]इत्येवमेतैः सकलैरुपेतै-
द्रव्यैः परार्ध्यैः परिरक्षितः स्यात् ।
राजा वसेत्तत्र गृहे सुशुभ्रे
गुणान्विते लक्षणसंप्रयुक्ते ॥

सूत उवाच-

[5]चतुःशालं प्रवक्ष्यामि स्वरूपान्नामतस्तथा ।
चतुःशालं चतुर्द्वारैरलिन्दैः सर्वतोमुखम् ॥

अलिन्दं द्वारचतुष्किका ।       राक. ६३

[6]नाम्ना तत्सर्वतोभद्रं शुभं देवनृपालये ।
पश्चिमद्वारहीनं च नन्द्यावर्तं प्रचक्षते ॥

[7]दक्षिणद्वारहीनं तु वर्धमानमुदाहृतम् ।
पूर्वद्वारविहीनं तत्स्वस्तिकं नाम विश्रुतम् ॥

(१) मत्स्य. २१८।३५; विध. २।२७।३५ प्रथमचरणे (विशेषान्मरकतं तत्र) प्रयत्नतः (विशेषतः).

(२) मत्स्य. २१८।३६; विध. २।२७।३६ विषघ्ना (यशस्या) वैतालनाशनाः (वेताल्नाशिनः) षान्नर (षान्तर).

(३) मत्स्य. २१८।३७; विध. २।२७।३७–३८ द्वीपि (द्वीप) ला गजा वाजि (लाजगोधावि).

(४) मत्स्य. २१८।३८; विध. २।२७।३९ (इत्येवमेतैः सकलैरुपेतं द्रव्यैः पुरं रक्षितसंचयं च । राजा वसेत्तत्र गृहं च शुभ्रं गुणान्वितं लक्षणसंप्रयुक्तम् ॥).

(५) मत्स्य. २५४।१; राक. ६१–६२ मुखम् (वृतम्); राप्र. २२४.

(६) मत्स्य. २५४।२; राक. ६२ च (तु); राप्र. २२४ राकवत्.

(७) मत्स्य. २५४।३; राक. ६२ तत्स्व (तु स्व); राप्र. २२४ राकवत्.

[1]रुचकं चोत्तरद्वारविहीनं तत्प्रचक्षते ।
सौम्यशालाविहीनं यत्त्रिशालं धान्यकं च तत् ॥

सौम्यशाला उत्तरद्वारशाला ।       राक. ६३

[2]क्षेमवृद्धिकरं नृणां बहुपुत्रफलप्रदम् ।
शालया पूर्वया हीनं सुक्षेत्रमिति विश्रुतम् ॥

[3]धन्यं यशस्यमायुष्यं शोकमोहविनाशनम् ।
चुल्ली तु याम्यया हीनं त्रिशालं शालया तु यत् ॥

[4]कुलक्षयकरं नृणां सर्वव्याधिभयावहम् ।
हीनं पश्चिमया यत्तु पक्षघ्नं नाम तत्पुनः ॥

[5]मित्रबन्धुसुतान् हन्ति तथा सर्वभयावहम् ।
याम्यापराभ्यां शालाभ्यां धनधान्यफलप्रदम् ॥

[6]क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम् ।
यमसूर्यं च विज्ञेयं पश्चिमोत्तरशालकम् ॥

[7]राजाग्निभयदं नृणां कुलक्षयकरं च यत् ।
उदक्पूर्वे तु शाले द्वे दण्डाख्यं यत्र तद्भवेत् ॥

[8]अकालमृत्युभयदं परचक्रभयावहम् ।
धनाख्यं पूर्वयाम्याभ्यां शालाभ्यां
यद्द्विशालकम् ॥

(१) मत्स्य. २५४।४; राक. ६२ तत्प्र (तु प्र) धान्य (धन्य); राप्र. २२४ राकवत्.

(२) मत्स्य. २५४।५; राक. ६२; राप्र. २२४.

(३) मत्स्य. २५४।६ चुल्ली तु (शालया) चतुर्थचरणे (यद्विशालं तु शालया); राक. ६२ चुल्ली (चुल्ही); राप्र. २२५.

(४) मत्स्य. २५४।७; राक. ६२ त्पुनः (द्विदुः); राप्र. २२५ राकवत्.

(५) मत्स्य. २५४।८; राक. ६२ सर्व (सर्प); राप्र. २२५ मित्र (पितृ) सर्व (सर्प).

(६) मत्स्य. २५४।९; राक. ६३; राप्र. २२५.

(७) मत्स्य. २५४।१० ण्डाख्यं (ण्डाख्ये); राक. ६२ यत् (तत्) यत्र (तत्र); राप्र. २२५ उदक्पूर्वे तु (पूर्वपश्चिम) शेषं राकवत्.

(८) मत्स्य. २५४।११ यद्द्वि (यद्वि); राक. ६२–६३ तृतीयचरणे (चापाख्यं याम्यपूर्वाभ्यां); राप्र. २२५ तृतीयचरणे (वायव्यं याम्यपूर्वाभ्यां).

[1]तच्छस्त्रभयदं नृणां पराभवभयावहम् ।
चुल्ली पूर्वापराभ्यां तु सा भवेन्मृत्युसूचनी ॥
[2]वैधव्यदायकं स्त्रीणामनेकभयकारकम् ।
कार्यमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम् ॥
सिद्धार्थवर्जं वर्ज्यानि द्विशालानि सदा बुधैः ॥

सिद्धार्थवर्जे याम्यापराम्यां शालाभ्यां युक्तं यत् द्विशालं तद्विहाय । * राक. ६३

राज्ञः सेनापतिसामन्तामात्यशिल्पिचातुर्वर्ण्यादीनां च पञ्चप्रकारभवनानि

[3]अथातः संप्रवक्ष्यामि भवनं पृथिवीपतेः ॥
पञ्चप्रकारं तत्प्रोक्तमुत्तमादिविभेदतः ।
अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः ॥
[4]चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः ।
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम् ।
षड्भिः षड्भिस्तथाऽशीतिर्हीयते तत्र विस्तरात् ॥
त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
सेनापतेः प्रवक्ष्यामि तथा भवनपञ्चकम् ॥
[5]चतुःषष्टिस्तु विस्तारात्षड्भिः षड्भिस्तु हीयते ।
पञ्चस्वेतेषु दैर्घ्यं च षड्भागेनाधिकं भवेत् ॥

[1]मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् ।
चतुश्चतुर्भिर्हीना स्यात्करषष्टिः प्रविस्तरे ॥
[2]अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् ॥
चत्वारिंशत्तथाऽष्टौ च चतुर्भिर्हीयते क्रमात् ।
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते ॥
[3]शिल्पिनां कञ्चुकीनां च वेश्यानां गृहपञ्चकम् ।
अष्टाविंशत्कराणां तु वि(? द्वि)हीनं विस्तरे क्रमात् ॥
[4]द्विगुणं दैर्घ्यमेवोक्तं मध्यमेष्वेवमेव तत् ।
दूतकर्मान्तिकादीनां वक्ष्ये भवनपञ्चकम् ॥
[5]चतुर्थांशाधिकं दैर्घ्यं विस्तारो द्वादशैव तु ।
अर्धार्धकरहानिः स्याद्विस्तारात्पञ्चशः क्रमात् ॥
[6]दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम् ।
तेषामपि प्रवक्ष्यामि तथा भवनपञ्चकम् ॥
[7]चत्वारिंशत्तु विस्ताराच्चतुर्भिर्हीयते क्रमात् ।
पञ्चस्वेतेषु दैर्घ्यं च षड्भागेनाधिकं भवेत् ॥
[8]चतुर्वर्णस्य वक्ष्यामि सामान्यं गृहपञ्चकम् ।
द्वात्रिंशतः कराणां तु चतुर्भिर्हीयते क्रमात् ॥

---

* राप्र. राकानुवादः ।

(१) मत्स्य. २५४।१२ ; राक. ६३ प्रथमचरणे ( विषशस्त्राग्निभयदं ) चुल्ली ( चुल्ही ) तु ( च ) ; राप्र. २२५ पूर्वार्धं राकवत्, तु ( च ).

(२) मत्स्य. २५४।१३–१४ वर्जं ( वज्र ) द्विशा (विशा) ; राक. ६३ वैधव्यदायकं ( विधवत्वाय च) ; राप्र. २२५ कारकम् ( कारिका ).

(३) मत्स्य. २५४।१४–१५ ; राक. ६३ ; राप्र. २२५ मुत्तमा ( मुत्तरा ).

(४) मत्स्य. २५४।१६–१८ ; राक. ६३–६४ ; राप्र. २२५–२२६.

(५) मत्स्य. २५४।१९ ; राक. ६४ ष्टिस्तु ( ष्टिः सु ) रात्ष ( रः ष ) षड्भिस्तु ( षड्भिः प्र ) ; राप्र. २२६ रात्ष ( रः ष ) षड्भिस्तु ( षड्भिः प्र ).

(१) मत्स्य. २५४।२० ; राक. ६४ तुर्भिर्ही ( तुर्विही ) ; राप्र. २२६ राकवत्.

(२) मत्स्य. २५४।२१–२२ ; राक. ६४ ; राप्र. २२६.

(३) मत्स्य. २५४।२३ ; राक. ६४ वेश्या ( वैश्या ) तु वि ( तद्वि ) स्तरे ( स्तरात् ) ; राप्र. २२६ कीनां ( किनां ) तु वि ( तद्वि ) स्तरे ( स्तरात् ).

(४) मत्स्य. २५४।२४ ; तृतीयचरणे (दूतीकर्मांतकादीनां ) ; राक. ६४ तत् ( तु ) ; राप्र. २२६ क्तं मध्यमे ( क्तमध्यक्षे ) तत् ( तु ).

(५) मत्स्य. २५४।२५ ; राक. ६४ तु ( च ) अर्धार्ध ( अध्यर्ध ) स्तारात्पञ्चशः ( स्तरात् पञ्चसु ) ; राप्र. २२६ स्तारो ( स्तरात् ) स्तारात्पञ्चशः ( स्तरात् पञ्चसु ).

(६) मत्स्य. २५४।२६ ; राक. ६४ तथा (क्रमात्) ; राप्र. २२६ राकवत्.

(७) मत्स्य. २५४।२७ ; राक. ६४ तु वि ( त्प्रवि ) ; राप्र. २२६ राकवत्.

(८) मत्स्य. २५४।२८ ; राक. ६४ चतुर्वर्णस्य ( चातुर्वर्ण्यस्य ) शतः ( शद्वे ) ; राप्र. २२६ राकवत्.

[1]आषोडशादिति परं नूनमन्त्यावसायिनाम् ।
दशांशेनाष्टभागेन त्रिभागेनाथ पादिकम् ॥
[2]अधिकं दैर्घ्यमित्याहुर्ब्राह्मणादेः प्रशस्यते ।
सेनापतेर्नृपस्यापि गृहयोरन्तरेण तु ॥

नृपवासगृहं कार्यं भाण्डागारं तथैव च ।
सेनापतेर्गृहस्यापि चातुर्वर्ण्यस्य चान्तरे ।
वासाय च गृहं कार्यं राजपूज्येषु सर्वदा ॥

[3]अन्तरप्रभवाणां च स्वपितुर्गृहमिष्यते ।
तथा हस्तशतादर्धं गदितं वनवासिनाम् ॥

[4]सेनापतेर्नृपस्यापि सप्तत्या सहितेऽन्विते ।
चतुर्दशहृते व्यासे शालान्यासः प्रकीर्तितः ॥

सेनापतेर्नृपस्य गृहे यावान्विस्तार उक्तस्तं करसप्तत्या सहितं कृत्वा तदर्धं गृहीत्वा तस्यार्धस्य चतुर्दशविभागं कृत्वा यावदवशिष्टं भवति तावद्विस्तारां शालां कुर्यादित्यर्थः । तेन अष्टोत्तरहस्तशतविस्तारे राजवेश्मनि पञ्चहस्तप्रमाणा शाला भवति । * राक. ६६

[5]पञ्चत्रिंशान्विते तस्मिन्नलिन्दः समुदाहृतः ।
तथा षट्त्रिंशद्धस्ता तु सप्ताङ्गुलसमन्विता ॥

तस्मिन्नेव नवाशीतिविस्तारे राजवेश्मनि ( पञ्चहस्त ? )पञ्चत्रिंशता भागहारे कृते ये एकोनविंशतिहस्ताः अवशिष्यन्ते तावानलिन्दः कर्तव्यः ।
* राक. ६६

[1]विप्रस्य महती शाला न दैर्घ्यं परतो भवेत् ।
दशाङ्गुलाधिका तद्वत्क्षत्रियस्य विधीयते ॥
पञ्चत्रिंशत्करा वैश्ये अङ्गुलानि त्रयोदश ।
तावत्करैव शूद्रस्य युता पञ्चदशाङ्गुलैः ॥
[2]शालायास्तु त्रिभागेन यस्याग्रे वीथिका भवेत् ।
सोष्णीषं नाम तद्वास्तु पश्चाच्छ्रेयोच्छ्रयं भवेत् ॥
[3]पार्श्वयोर्वीथिका यत्र सावष्टम्भं तदुच्यते ।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते ॥
शुभदं सर्वमेतत्स्याच्चातुर्वर्ण्ये चतुर्विधम् ।
विस्तारात्षोडशो भागस्तथा हस्तचतुष्टयम् ॥
[4]प्रथमो भूमिकोच्छ्राय उपरिष्टात्प्रहीयते ।
द्वादशांशेन सर्वासु भूमिकासु तथोच्छ्रयः ॥
[5]पक्वेष्टका भवेद्भित्तिः षोडशांशेन विस्तरात् ।
दारवैरपि कल्प्या स्यात्तथा मृन्मयभित्तिका ॥
[6]गर्भमानेन मानं तु सर्ववास्तुषु शस्यते ।
गृहव्यासस्य पञ्चाशदष्टादशभिरङ्गुलैः ॥
[7]संयुतो द्वारविष्कम्भो द्विगुणश्चोच्छ्रयो भवेत् ।
द्वारशाखासु बाहुल्यमुच्छ्रायकरसंमितैः ॥
[8]अङ्गुलैः सर्ववास्तूनां पृथुत्वं शस्यते बुधैः ।
उदुम्बरोत्तमाङ्गं च तदाऽर्धार्धप्रविस्तरात् ॥

उदुम्बरः देहली । राक. ६६

---

* राप्र. राकानुवादः ।

( १ ) मत्स्य. २५४।२९ ; राक. ६४–६५ नून ( न्यून ) पादि ( भागि ) ; राप्र. २२७ राकवत्.

( २ ) मत्स्य. २५४।३०–३१ ; राक. ६५ ( गृहयोरन्तरेण तु ······ सेनापतेर्गृहस्यापि० ) ; राप्र. २२७ प्रथमार्धमात्रम्.

( ३ ) मत्स्य. २५४।३२ ; राक. ६५ अन्तर ( अन्तरा ) र्गृह ( र्न्यून ) दर्धं गदितं ( दर्वाग्गमितं ).

( ४ ) मत्स्य. २५४।३३ ; राक. ६५ तेऽन्विते ( तैर्हि ते ) ; राप्र. २२७ ऽन्विते ( कृते ).

( ५ ) मत्स्य. २५४।३४ ; राक. ६५ शान्विते ( शोद्धृते ) ; राप्र. २२७ शान्विते ( शद्धृते ) तु ( ऽत्र ).

( १ ) मत्स्य. २५४।३५–३६ ; राक. ६५ ; राप्र. २२७.

( २ ) मत्स्य. २५४।३७ ; राक. ६५ च्छ्रेयोच्छ्रयं ( च्छायाश्रयं ) ; राप्र. २२८ च्छ्रेयोच्छ्रयं ( त्तापाश्रयं ).

( ३ ) मत्स्य. २५४।३८–३९ ; राक. ६५ ; राप्र. २२८.

( ४ ) मत्स्य. २५४।४० ; राक. ६५–६६ च्छ्रयः ( च्छ्रयात् ) ; राप्र. २२८.

( ५ ) मत्स्य. २५४।४१ ; राक. ६६ षोड ( षडं ) ; राप्र. २२८ पक्वेष्टका ( पञ्चेषुका ) शेषं राकवत्.

( ६ ) मत्स्य. २५४।४२ ; राक. ६६ ; राप्र. २२८.

( ७ ) मत्स्य. २५४।४३ ; राक. ६६ ष्कम्भो ( ष्कम्भात् ) ; राप्र. २२८ ष्कम्भो ( ष्कुम्भो ).

( ८ ) मत्स्य. २५४।४४ ; राक. ६६ तदाऽर्धार्ध ( तदध्यर्ध ) ; राप्र. २२८ राकवत्.

## विष्णुधर्मोत्तरपुराणम्

षडन्यतमदुर्गरूपा राजधानी आस्थापनीया

[1]राजा सहायसंपन्नः पशव्यं जाङ्गलं शिवम् ॥
वैश्यशूद्रजनप्रायमरोगं देशमावसेत् ।
तत्र दुर्गाणि कुर्वीत स्वदुर्गं च विशेषवत् ॥
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
अब्दुर्गं वृक्षदुर्गं च नरदुर्गं तथैव च ॥
[2]एषामन्यतमे दुर्गे धनधान्यसमायुते ।
हस्त्यश्वरथसंपन्ने मणिभिरुपशोभिते ॥
[3]पत्त्याढ्ये योधबहुले युद्धोपकरणैर्युते ।
सुसंचिते धनाढ्ये च बहुपेये बहूदके ॥

वेदबहुले वैदिकब्राह्मणबहुले । सुसंचिते वक्ष्यमाणसकलपदार्थसंचययुक्ते । राप्र. २०५

[4]हस्त्यश्वरथगोवैद्यसांवत्सरयुते शुभे ।
घृततैलौषधियुते सर्वोपकरणैस्तथा ॥
[5]प्राकारपरिखावप्रगोपुराट्टालकैर्युते ।
पापतस्करदुर्वृत्तक्रुद्धलुब्धादिवर्जिते ॥

चाटाः बहुभाषिणः । राप्र.२०५

[6]दैवज्ञस्थपतिभ्यां तु संमत्या शुभलक्षणम् ।
तत्राऽऽवसेत्स्वयं राजा सर्वोपकरणैर्युतम् ॥

## गरुडपुराणम्

दुर्गः शस्त्रास्त्रसंपन्नः कार्यः

[7]सुसंधानानि चास्त्राणि शस्त्राणि विविधानि च ।
दुर्गे प्रवेशितव्यानि ततः शत्रुं निपातयेत् ॥

---

(१) विध. ३।३२३।१४-१६.
(२) विध. ३।३२३।१७ भिरुप (भी रूप); राप्र. २०५.
(३) विध. ३।३२३।१८; राप्र. २०५ पत्त्याढ्ये योध (यन्त्राढ्ये वेद).
(४) विध. ३।३२३।१९ रथ (नर); राप्र. २०५.
(५) विध. ३।३२३।२०; राप्र. २०५ पाप (चाट).
(६) विध. ३।३२३।२१; राप्र. २०६ संमत्या (संमन्त्र्य) तत्राऽऽवसेत्स्वयं (तत्र वासेद्गृहं).
(७) गरुड. १।११२।२१.

## ब्रह्मवैवर्तपुराणम्

कृष्णप्रोक्तः द्वारकानिर्माणविधिः

श्रीनारायण उवाच–

[1]अथाऽऽगत्य मधुपुरीं प्रणम्य पितरं विभुः ।
सबलो वटमूले च सस्मार गरुडं हरिः ॥
सादरं लवणोदं च विश्वकर्माणमीप्सितम् ।
तत्याज गोपवेषं च नृपवेषं दधार सः ॥
एतस्मिन्नन्तरे चक्रमाजगाम हरिं स्वयम् ।
परं सुदर्शनं नाम सूर्यकोटिसमप्रभम् ॥
तेजसा हरिणा तुल्यं परं वैरिविमर्दनम् ।
अव्यर्थमस्त्रमस्त्राणां प्रवरं परमं परम् ॥
रत्नयानं पुरः कृत्वा गरुडो हरिसंनिधिम् ।
विश्वकर्मा सशिष्यश्च जलधिः कम्पितस्तथा ॥
हरिं प्रणेमुस्ते सर्वे मूर्ध्ना च भक्तिपूर्वकम् ।
सस्मितं सादरं यत्नात्तानुवाच क्रमाद्विभुः ॥

श्रीकृष्ण उवाच–

हे समुद्र महाभाग स्थलं च शतयोजनम् ।
देहि मे नगरार्थं च पश्चाद्दास्यामि निश्चितम् ॥
नगरं कुरु हे कारो त्रिषु लोकेषु दुर्लभम् ।
रमणीयं च सर्वेषां कमनीयं च योषिताम् ॥
वाञ्छितं चापि भक्तानां वैकुण्ठसदृशं परम् ।
सर्वेषामपि स्वर्गाणां परं पारमभीप्सितम् ॥
दिवानिशं खगश्रेष्ठ संनिधौ विश्वकर्मणः ।
स्थितिं कुरु महाभाग यावन्निर्माति द्वारकाम् ॥
दिवानिशं च मत्पार्श्वे चक्रश्रेष्ठ स्थितिं कुरु ।
ओमित्युक्त्वा तु प्रययुः सर्वे चक्रं विना मुने ॥
कंसस्य पितरं भद्रमुग्रसेनं महाबलम् ।
नृपं चकार नगरे क्षत्रियाणां सतामपि ॥
विजित्य च जरासंधं निहत्य यवनं तथा ।
उपायेन महाभाग निर्माणक्रममीश्वरः ॥

श्रीभगवानुवाच–

शतयोजनपर्यन्तं नगरं सुमनोहरम् ।
पद्मरागैर्मरकतैरिन्द्रनीलैरनुत्तमैः ॥

---

(१) ब्रह्मवै. ४।१०३।१-८१.

रुचकैः पारिभद्रैश्च पलङ्कैश्च स्यमन्तकैः ।
गन्धकैर्गोलिमैश्चैव चन्द्रकान्तादिमिस्तथा ॥
सूर्यकान्तादिमिश्चैव पुत्रैश्च स्फटिकाकृतैः ।
हरिद्वर्णैश्च मणिभिः श्यामैर्गौरमुखैश्चषैः ॥
गोरोचनाभिः पीतैश्च दाडिमीबीजरूपकैः ।
पद्मबीजनिभैश्चैव नीलैः कमलवर्णकैः ॥
मणिभिः कज्जलाकारैरुज्ज्वलैश्च परिष्कृतैः ।
श्वेतचम्पकवर्णाभैस्तप्तकाञ्चनसंनिभैः ॥
स्वर्णमूल्यशतगुणैरीषद्रक्तैः सुशोभनैः ।
गरिष्ठैश्च वरिष्ठैश्च मणिश्रेष्ठैश्च पूजितैः ॥
यथाविधानं यद्योगं यत्र यन्मुक्तमीप्सितम् ।
मणीनां हरणं चैव यक्षसंघा हिमालयात् ॥
दिवानिशं करिष्यन्ति यावन्निर्माणपूर्वकम् ।
यक्षैश्च सप्तभिर्लक्षैः कुबेरप्रेरितैरपि ॥
वेताललक्षैः कूष्माण्डलक्षैः शंकरयोजितैः ।
दानवैर्ब्रह्मरक्षोभिः शैलकन्यानियोजितैः ॥
कुरु दिव्यं च पत्नीनां सहस्राणां च षोडश ।
अन्यपत्नीजनस्यापि चाष्टाधिकशतस्य च ॥
शिबिरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् ।
युक्तद्वादशशालं च सिंहद्वारपरिष्कृतम् ॥
युक्तं चित्रैर्विचित्रैश्च कृत्रिमैश्च कपाटकैः ।
निषिद्धवृक्षरहितं प्रसिद्धैश्च परिष्कृतम् ॥
सुलक्षणं चन्द्रवेधं प्राङ्गणं च तथैव च ।
यदूनामाश्रमं दिव्यं किङ्कराणां तथैव च ॥
सर्वत्र सिद्धं निलयमुग्रसेनस्य भूभृतः ।
आश्रमं सर्वतोभद्रं वसुदेवस्य मत्पितुः ॥

श्रीकृष्णप्रोक्तः ग्रामेषु नगरेषु च आरोप्यानारोप्य-
वृक्षवल्ल्यादिविवेकः

विश्वकर्मोवाच—
के ते वृक्षाः प्रशस्ताश्च निषिद्धाश्चापि केचन ।
भद्राभद्रप्रदाश्चापि तान् वदस्व जगद्गुरो ॥
केषामस्थिनियुक्तं च शिबिरं च शुभाशुभम् ।
दिशि कुत्र जलं भद्रमभद्रं च वद प्रभो ॥
भद्रप्रदश्च को वृक्षो दिशि कुत्र प्रवर्तते ।
किं प्रमाणं गृहाणां च प्राङ्गणानां सुरेश्वर ॥
मङ्गलं कुसुमोद्यानं दिशि कुत्र तरोस्तथा ।
प्राकाराणां किं प्रमाणं परिखाणां सुरेश्वर ॥
द्वाराणां च गृहाणां च प्राकाराणां प्रमाणकम् ।
कस्य कस्य तरोः काष्ठं प्रशस्तं शिबिरे प्रभो ॥
अमङ्गलं वा केषां च सर्वं मां वक्तुमर्हसि ॥

श्रीभगवानुवाच—
आश्रमे नारिकेलश्च गृहिणां च धनप्रदः ।
शिबिरस्य यदीशाने पूर्वे पुत्रप्रदस्तरुः ॥
सर्वत्र मङ्गलार्हश्च तरुराजो मनोहरः ।
रसालवृक्षः पूर्वस्मिन् नृणां संपत्प्रदस्तथा ॥
शुभप्रदश्च सर्वत्र सुरकारो निशामय ।
बिल्वश्च पनसश्चैव जम्बीरो बदरी तथा ॥
प्रजाप्रदश्च पूर्वस्मिन् दक्षिणे धनदस्तथा ।
संपत्प्रदश्च सर्वत्र यतो हि वर्धते गृही ॥
जम्बूवृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा ।
बन्धुप्रदश्च पूर्वस्मिन् दक्षिणे मित्रदस्तथा ॥
सर्वत्र शुभदश्चैव धनपुत्रशुभप्रदः ।
हर्षप्रदः सुवाकश्च दक्षिणे पश्चिमे तथा ॥
ईशाने सुखदश्चैव सर्वत्रैव निशामय ।
सर्वत्र चम्पकः शुद्धो भुवि भद्रप्रदस्तथा ॥
अलाबुश्चातिकूष्माण्डमायाम्बुश्च सकिंशुकः ।
खर्जूरी कर्कटी चापि शिबिरे मङ्गलप्रदा ॥
वास्तूककारबिल्वश्च वार्ताकश्च शुभप्रदः ।
लताफलं च शुभदं सर्वं सर्वत्र निश्चितम् ॥
प्रशस्तं कथितं कारो निषिद्धं च निशामय ।
वन्यवृक्षो निषिद्धश्च शिबिरे नगरेऽपि च ॥
वटो निषिद्धः शिबिरे नित्यं चोरभयं यतः ।
नगरेषु प्रसिद्धश्च दर्शनात्पुण्यदस्तथा ॥
निषिद्धः शाल्मलिश्चैव शिबिरे नगरे पुरे ।
दुःखप्रदश्च सततं भूमिपानां सदाऽपि च ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ।
विद्यामतिनिषिद्धस्तु सततं दुःखदस्तथा ॥

हे कारो तिन्तिडीवृक्षो यत्नात्तं परिवर्जयेत् ।
शतेन धनहानिः स्यात्प्रजाहानिर्भवेद्ध्रुवम् ॥
शिबिरेऽतिनिषिद्धश्च नगरे किंचिदेव च ।
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥
विद्यामतिनिषिद्धश्च प्राज्ञस्तं परिवर्जयेत् ।
खर्जूरश्च गहुश्चैव निषिद्धः शिबिरे तथा ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ।
वृक्षश्च चणकादिनां धान्यं च मङ्गलप्रदम् ॥
ग्रामेषु नगरे चापि शिबिरे च तथैव च ।
इक्षुवृक्षश्च शुभदः संततं शुभदस्तथा ॥
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कश्चिद्धरिद्रा शुभदा शुभदश्चाऽऽर्द्रकस्तथा ॥
हरीतकी च शुभदा ग्रामेषु नगरेषु च ।
नवाद्या भद्रदा नित्यं तथा चाऽऽमलकी ध्रुवम् ॥

प्राण्यस्थ्नां जलस्य च शुभाशुभत्वविवेकः

गजानामस्थि शुभदमश्वानां च तथैव च ।
कल्याणमुच्चैःश्रवसां वास्तौ स्थापनकारिणाम् ॥
न शुभप्रदमन्येषामुच्छिन्नकारणं परम् ।
वानराणां नराणां च गर्दभानां गवामपि ॥
कुक्कुटानां शृगालानां मार्जाराणामभद्रकम् ।
भेटकानां सूकराणां सर्वेषां च शुभप्रदम् ॥
ईशाने चापि पूर्वस्मिन् पश्चिमे च तथोत्तरे ।
शिबिरस्य जलं भद्रमन्यत्राशुभमेव च ॥

गृहशिबिरप्राङ्गणोद्यानपरिखाप्राकारद्वारादि-
निर्माणविधिः

दीर्घे प्रस्थे समानं च न कुर्यान्मन्दिरं बुधः ।
चतुरस्रे गृहे कारो गृहिणां धननाशनम् ॥
दीर्घप्रस्थः परिमितो नेत्राङ्केनापि संहृतम् ।
शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥
प्रस्थे हस्तद्वयात्पूर्वं दीर्घं हस्तत्रयं तथा ।
गृहाणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥
न मध्यदेशे कर्तव्यं किंचिन्न्यूनाधिके शुभम् ।
चतुरस्रं चन्द्रवेधं शिबिरं मङ्गलप्रदम् ॥
अभद्रदं सूर्यवेधं शिबिरं मङ्गलप्रदम् ( ? ) ।
अभद्रदं सूर्यवेधं प्राङ्गणं च तथैव च ॥
शिबिराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम् ।
धनपुत्रप्रदात्री च पुण्यदा हरिभक्तिदा ॥
प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् ।
मालती यूथिका कुन्दं माधवी केतकी तथा ॥
नागेश्वरं मल्लिकां च काञ्चनं बकुलं शुभम् ।
अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ॥
पूर्वे च दक्षिणे चैव शुभदं नात्र संशयः ।
ऊर्ध्वं षोडशहस्तेभ्यो नैव कुर्याद्गृहं गृही ॥
ऊर्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ।
सूत्रधारं तैलकारं स्वर्णकारं च हीरकम् ॥
वाटीमूले ग्राममध्ये न कुर्यात्स्थापनं बुधः ।
ब्राह्मणं क्षत्रियं वैश्यं सच्छूद्रं गणकं शुभम् ॥
भट्टं वैद्यं पुष्पकारं स्थापयेच्छिबिरान्तिके ।
प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम् ॥
परितः शिबिराणां च गम्भीरं दशहस्तकम् ।
संकेतपूर्वकं चैव परिखाद्वारमीप्सितम् ॥
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च ।
शाल्मलीनां तिन्तिडीनां हिन्तालानां तथैव च ॥
निम्बानां सिन्धुवाराणामुम्बराणामभद्रकम् ।
धत्तूराणां वटानां चाप्येरण्डानामवाञ्छितम् ॥
एतेषामतिरिक्तानां शिबिरे काष्ठमीप्सितम् ।
वृक्षं च वज्रहस्तं च भूधरो वर्जयेदधः ॥
पुत्रदारधनं हन्यादित्याह कमलोद्भवः ।
कथितं लोकशिक्षार्थं कुरु काष्ठं विना पुरीम् ॥
शुभक्षणं चाप्यधुना गच्छ वत्स यथासुखम् ।
विश्वकर्मा हरिं नत्वा जगाम पक्षिणा सह ॥
समुद्रस्य समीपं च वटमूलं मनोहरम् ।
सुष्वाप तत्र नक्तं च कारुश्च पक्षिणा सह ॥
स्वप्ने द्वारवतीं रम्यां ददर्श गरुडस्तथा ।
यत्किंचित्कथितं कारुं कृष्णेन परमात्मना ॥
तदेव लक्षणं सर्वं ददर्श नगरे मुने ।
कारुं हसन्ति स्वप्ने च सर्वे ते शिल्पकारिणः ॥

गरुडं गरुडाश्चान्ये बलवन्तश्च पक्षिणः ।
बुद्धो ददर्श गरुडो विश्वकर्मा च लज्जितः ॥
अतीव द्वारकां रम्यां शतयोजनविस्तृताम् ।
ब्रह्मादीनां च नगरं विजित्य च विराजिताम् ॥
तेजसा छादितं सूर्यं रत्नानां च परिष्कृताम् ॥

## अग्निपुराणम्

वैश्यशूद्रप्राये अन्नजलसंपन्ने देशे षडन्यतमदुर्गरूपा राजधानी आस्थापनीया

पुष्कर उवाच–
[1]दुर्गसंपत्तिमाख्यास्ये दुर्गदेशे वसेन्नृपः ।
वैश्यशूद्रजनप्रायो ह्यनाहार्यस्तथा परैः ॥
किंचिद्ब्राह्मणसंयुक्तो बहुकर्मकरस्तथा ।
अदेवमातृको भक्तजलो देशः प्रशस्यते ॥
परैरपीडितः पुष्पफलधान्यसमन्वितः ।
अगम्यः परचक्राणां व्यालतस्करवर्जितः ॥
षण्णामेकतमं दुर्गं तत्र कृत्वा वसेद्बली ।
धनुर्दुर्गं महीदुर्गं नरदुर्गं तथैव च ॥
वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च भार्गव ।
सर्वोत्तमं शैलदुर्गमभेद्यं चान्यभेदनम् ॥
पुरं तत्र च हट्टाद्यं देवतायतनादिकम् ॥
अनुयन्त्रायुधोपेतं सोदकं दुर्गमुत्तमम् ॥
[2]पृथुसीमं महाखातमुच्चप्राकारतोरणम् ।
पुरं समावसेच्छैलसरिन्मरुवनाश्रयम् ॥
जलवद्धान्यधनवद्दुर्गं कालसहं महत् ।
औदकं पार्वतं वार्क्षमैरिणं धन्विनं च षट् ॥

## देवीपुराणम्

राजधानीस्थापने इष्टानिष्टभूमिविवेकः

इन्द्र उवाच–
[3]कीदृशं तु पुरं कार्यं नगरं कीदृशं शुभम् ।
कस्मिन् स्थाने सुरश्रेष्ठ एतदिच्छामि वेदितुम् ॥

(१) अग्नि. २२२।१–६.

(२) अग्नि. २३९।२८–२९.

(३) राक. ४७–४८ ; राप्र. २१४ अन्ते 'अनेकजातिसंयुक्तं तन्तुवायुयुतं पुरम्' इत्यधिकः पाठः.

ब्रह्मोवाच–
सर्वौषधिभवे देशे सर्वलोकसुखावहे ।
पूर्वोत्तरप्लवे स्थाने कार्यं शक्र पुरादिकम् ॥

सर्वौषधिभवे सर्वाः याः औषधयः फलपाकान्ताः तासां भवः उत्पत्तिः यस्मिन् । पूर्वोत्तरप्लवे प्राक्प्रवणे उदक्प्रवणे ईशानप्रवणे च ।                                                    राप्र. २१४

[1]शर्कराद्यश्मरहिते कटुकण्टकवर्जिते ।
संहते पांसुरहिते कुशादिभिरनावृते ॥
[2]चलगन्धसमायुक्ता मही खातोपलक्षिता ।
चण्डालपतितत्यक्तशरावशकलैर्विना ॥
[3]देवावासपरित्यक्ता निराबाधा मनोरमा ।
उदगाधिप्लवा गाधा वैषम्यादिविवर्जिता ॥
शुद्धा सा दहनाद्यैश्च अथ चण्डेश्वरान्विता ।
सर्वेश्वरयुता वाऽपि अन्यथा भयदा मही ॥

चण्डेश्वरः महादेवस्य गणविशेषः ।                                                    राक. ४८

[4]पूर्ववर्णविपर्यस्ता स्थानकालादिसूत्रगा ।
स्वामिश्रेष्ठिपुरादीनां भयदा जायते मही ॥
[5]कश्मलाद्यैः परिक्लिष्टा पूतनादिसमाकुला ।
पताकी वर्जनीया तु सर्वदोषकरी मही ॥
[6]वत्सरं या परित्यक्ता कृष्टा धान्यरुहा च या ।
सा मही शुभदा ज्ञेया या च तृप्तिकरी भवेत् ॥
[7]रक्ष्या देव्यः सदैवात्र पूजनीयाः स्वभागगाः ।
स्थानानि कल्पयेत्तासामधिवासं तु कारयेत् ॥

अधिवासः स्थापनम् ।                                                    राक. ४८

(१) राक. ४८ ; राप्र. २१४ द्यश्म (भश्म) संहते (सहते).

(२) राक. ४८ खातो (स्वादो) त्यक्तश (त्यक्ता श) ; राप्र. २१४.

(३) राक. ४८ ; राप्र. २१४.

(४) राक. ४८ ; राप्र. २१४ पूर्व (पूर्ण) लादि (लवि) जायते (ज्ञायते).

(५) राक. ४८ ; राप्र. २१४ पताकी (पताका).

(६) राक. ४८ कृष्टा (कृष्ण) ; राप्र. २१४.

(७) राक. ४८ ; राप्र. २१५.

राजधानीनिर्माणविधिः

[1]नगरं देवतावीतं समस्तप्रकृतीयुतम् ।
सप्तपञ्चपुरैः कार्यं मण्डपैरुपशोभितम् ॥
[2]कोष्ठकाः सश्रियः कार्या मण्डपादग्रतः शुभाः ।
एवं देवालयोपेतं सर्ववर्णसमन्वितम् ॥
[3]नवदुर्गासमायुक्तं नगरं परिकीर्तितम् ।
पुरं हट्टसमायुक्तं देवतादिसमाकुलम् ॥
[4]हट्टं हेममणीवस्त्रपत्रोर्णाचर्मविक्रयम् ।
सुरापेयादिकं यस्मिंस्तत्पुरं पत्तनं शृणु ॥
[5]असंहतं समं कार्यं वणिग्हट्टं सुशोभनम् ।
सुरनामं स्वनामं वा पत्तनं सर्वकामदम् ॥
[6]अवेधं कारयेत्पङ्कगर्तादिभिः सुरोत्तम ।
उभयोरन्तरे कार्यं देवतायतनादिकम् ॥
[7]देवलक्ष्मविहीनं तु समदृष्टिगतं शुभम् ।
चिह्नदृष्टिगते देवे न दृष्टेः सुनिरूपणम् ॥
[8]समे मानसमायुक्ते कार्या दृष्टिः शुभा समा ।
ऊनाधिका न कर्तव्या व्याल-
सिंहादिनाऽऽवृता ॥
[9]एवं कुर्यात्पुरे हट्टं प्राकारान्तर्गतं शुभम् ।
चतुर्हस्तं समं कार्यं समसूत्रं सुशोभनम् ॥
[10]पथः समं पुरं कार्यं सममार्गविनिर्गमम् ।
चतुष्पथानि शुद्धानि नित्यं पूजायुतानि च ॥

(१) राक. ५१ ; राप्र. २१५ देव ( दैव ).
(२) राक. ५१ कोष्ठ ( कोष्ट ) ; राप्र. २१५.
(३) राक. ५१ दुर्गा ( दुर्ग ) ; राप्र. २१५.
(४) राक. ५१ पूर्वार्धे ( हट्टं हेममणिर्वस्त्रं पत्रोर्णा चर्मविक्रयम् । ) पत्तनं (पत्तने) ; राप्र. २१५.
(५) राक. ५१ सुरनामं ( सुरनाम ) ; राप्र. २१५.
(६) राक. ५२ ; राप्र. २१५.
(७) राक. ५२ सुनि ( संनि ) ; राप्र. २१५.
(८) राक. ५२ द्वितीयचरणे ( कार्यदृष्टिसमा शुभा ) वृता ( वृते ) ; राप्र. २१५ ऊना ( द्रुमा ).
(९) राक. ५२ ; राप्र. २१५ हस्तं ( हट्टं ).
(१०) राक. ५२ ; राप्र. २१५–२१६.

देवान्तराणि कार्याणि स्वाधिकार्यावृतानि च ।
देवान्तरेषु मन्त्रज्ञाः स्वे स्वे देशाः शुभावहाः ॥
[1]भिन्ना बहुप्रदा लोके यथाशास्त्रपरिग्रहः ।
न शुभा मन्त्रहीनास्तु द्विजाद्या नैष्ठिकास्तथा ॥
[2]चर्चिकायास्तथा शक्र मन्त्रहीना भयावहाः ।
अग्रतः पृष्ठतो देवा उभयोः पार्श्वयोर्द्विजाः ॥
[3]हस्तानां तु शतं त्याज्यं नृपराष्ट्रसुखार्थिभिः ।
दृष्टिभङ्गो न कर्तव्यो रक्षेद्देवीषु यत्नतः ॥
[4]दण्डाष्टकसुविस्तीर्णे कृते राजा विनश्यति ।
तस्माद्दृष्टिः सदा देया तोरणान्तर्गता शुभा ॥
[5]अष्टहस्तं सुशोभाढ्यं शैलवृक्षमयं च वा ।
तोरणं शस्यते देव्या वापीकूपजलं वनम् ॥
[6]पूर्वोत्तरे तथैशान्यामारामः शुभदः कृतः ।
देवीनां मातृकाणां च स भवेत्सर्वकामदः ॥
[7]यथाशुभग्रहाद्देवाद्यच्च कालकृतं भवेत् ।
तत्सर्वं देवतागारे कृते भवति शोभनम् ॥
[8]बलिजाप्यक्रिया नित्यं मातृकाणां शुभा भवेत् ।
पुरपत्तनग्रामाणां ब्रह्मपुर्यः सकामदाः ॥
[9]ब्रह्मविद्याकलोपेता यत्र वेदविदोऽवसन् ।
सा पुरी कमला नाम, सर्वलोकसुखावहा ॥

(१) राक. ५२ शास्त्र ( शस्त ) ; राप्र. २१६.
(२) राक. ५२ काया ( काद्या ) ; राप्र. २१६.
(३) राक. ५२ ; राप्र. २१६.
(४) राक. ५२–५३ ष्टक (ष्टकं) स्तीर्णे (स्तीर्णं) ; राप्र. २१६.
(५) राक. ५३ ; राप्र. २१६.
(६) राक. ५३ त्तरे ( त्तरं ) ; राप्र. २१६.
(७) राक. ५३ ; राप्र. २१६ कृते ( कृतं ).
(८) राक. ५३ मातृकाणां ( मातॄणां च ) ; राप्र. २१६.
(९) राक. ५३ ; राप्र. २१६.

[1]विद्या ह्येका तथा द्वित्राश्चतस्रो यत्र संस्थिताः ।
रुद्रो देवी च विजया गायत्री च क्रमात्मना ॥
[2]गृहाः पङ्क्तिगताः कार्याः शुभवर्त्म ऋजुस्थिताः ।
पूर्वोत्तरसुमार्गस्थाः सजला देवतान्विताः ॥
[3]ब्रह्मत्रिदशपूजार्थं मठादिमुपकल्पयेत् ।
पाठस्थानानि कुर्वीत शिवायतनवेधसोः ॥
[4]पुरे वा नगरे वत्स राजधान्यां च पत्तने ।
दुर्गे हट्टे शुभा दृष्टिर्महालक्ष्म्याः सुमङ्गला ॥
[5]शिवलिङ्गगणेशानां धनदस्य विशेषतः ।
श्रियश्च सौम्यरूपायाः स्वामीशस्य शुभस्य च ॥
[6]रक्षोदेवीषु चोग्रासु दृष्टिर्देया न चान्यथा ।
बाह्ये वनोपकण्ठे च नदीनदतटेऽथ वा ॥
प्रासादे चोत्तमा कार्या तीर्थे हट्टानुगाऽथ वा ।
वाराही भैरवी चोग्रा नारसिंही त्रिविक्रमी ॥
पुरपत्तनगेहेषु दृष्टिर्वर्ज्या प्रयत्नतः ।
उग्रा दृष्टिर्हरेद्राष्ट्रं दारुणा नगरादिकम् ॥
[7]नरसिंहवराहाणां दृष्टिर्हन्यात्प्रियं जनम् ।
तस्माद्दृष्टिः शुभा कार्या समा सर्वगता ततः ॥
[8]विवाहेऽपि शुभा दृष्टिः समा भवति नान्यथा ।
अतो यत्नेन देवानां दृष्टिः सौम्या प्रशस्यते ॥
ग्रहाणां सौम्यरूपाणां लग्ने दृष्टिः शुभावहा ।
पुरपत्तनदुर्गेषु तथा सौम्या शुभावहा ॥

(१) राक. ५३ च वि ( सवि ) ; राप्र. २१६.
(२) राक. ५३ ; राप्र. २१६ गृहाः ( गृह ).
(३) राक. ५३ ; राप्र. २१६–२१७.
(४) राक. ५३ सुम ( सम ) ; राप्र. २१७ दुर्गे हट्टे शुभा ( दुर्गहट्टे शुभे ).
(५) राक. ५३ शिव ( मुख ) ; राप्र. २१७.
(६) राक. ५३ ; राप्र. २१७.
(७) राक. ५३ ; राप्र. २१७ त्प्रियं (च्छ्रियं).
(८) राक. ५३ ; राप्र. २१७.

एवं हट्टे पुरे दुर्गे देया दृष्टिः शुभा नृप ।
शुभार्थे सौम्यरूपाणामुग्राणां परिवर्जयेत् ॥
आवाहने जले वाऽथ उग्रा दृष्टिः शुभावहा ॥
[1]चतुर्दण्डः प्रकर्तव्यो भूमावादौ परिग्रहः ।
गां सवत्सां समादाय कुम्भं धान्यमयं तथा ॥
सवस्त्रं हेमगर्भं तु सहकारदलान्वितम् ।
पृथ्वीं संकल्पयेत्तस्मिन् मेरुकर्णिकशोभिताम् ॥
वनशैलसमायुक्तां सागरैः परिवेष्टिताम् ।
एवं संपूजयित्वा तु देवदेवं त्रिलोचनम् ॥
कुमारादिशिवादींश्च विचार्यादिमहामहीम् ।
सूर्यादिलोकपालादिनागयक्षादिदेवताः ॥
पूर्वं संपूजयित्वा तु पश्चाद्दद्याद्दिशां बलिम् ।
स्वप्रमाणवकं जप्त्वा शेते तत्र यथासुखम् ॥
स्वप्रमाणवकं ' यज्जाग्रत ' ( शुसं. ३४।१ ) इति ।
राक. ४९

आचार्यः सूत्रधारश्च शुभं स्वप्नं निशाक्षये ।
निमित्तं शकुनं दृष्ट्वा सूत्रयेल्लक्षितां दिशम् ॥
चित्रास्वात्यन्तरे पूर्वा पुष्यपित्र्यसमागमे ।
उत्तरा ध्रुवमध्यस्था शेषाः सिद्धा यथागमम् ॥
(१) चित्रास्वात्योरुदितयोर्मध्ये या, तथा पुष्यमघानक्षत्राभ्यां चाऽऽर्जवेन संयुता या सा पूर्वदिगित्यर्थः ।
राक. ४९
(२) ध्रुवः मध्यस्थः मध्ये वर्तमानो यस्यां तथाविधा सा उत्तरा दिक् । * राप्र. २१८
[2]शङ्कुना तदभावे तु पूर्वाशां साधयेद्द्विजः ।
एवं दिशासु सिद्धासु सूत्रपातं समाचरेत् ॥
आचार्यं पूजयित्वा तु सूत्रधारं द्विजोत्तमान् ।
देवतायतनं पूर्वमाचार्यब्राह्मणौकसम् ॥
[3]राजधाम तु शेषांस्तु गृहान् वर्णक्रमाद्गुरुः ।
पुरं वृत्तायतं कार्यं त्र्यस्रं वा चतुरस्रकम् ॥

* शेषं राकानुवादः ।
(१) राक. ४९ ; राप्र. २१७–२१८.
(२) राक. ५० ; राप्र. २१८.
(३) राक. ५० ; राप्र. २१८ त्र्यस्रं ( द्व्यस्रं ).

[1]यथास्थानविभागेन हृद्दशोभासमन्वितम् ।
राजधामाग्रतः कार्यं देवधाम अथापि वा ॥
[2]सुसूत्रं देवतायुक्तं शिवमातृगणावृतम् ।
मङ्गला धनदा कार्या सर्वान्ते सर्वसिद्धिदा ॥
[3]न सूर्यो वह्नियाम्ये वा नैर्ऋते वा हरिः क्वचित् ।
न विष्णुः पश्चिमे सौम्ये वायव्यां कारयेच्छिवम् ॥
[4]कृते विनश्यते कर्ता तत्स्थानं चोद्वसं भवेत् ।
देवो न पूज्यते तत्र तस्मिन् स्थाने स्वके शुभे ॥
[5]विसूत्रेषु प्रवक्ष्यामि येन शान्तिः शुभं भवेत् ।
नगराणां पुराणां च देवानां गोपुरादिषु ॥
[6]विमार्गेषु शिवः शस्तः संमुखः सौम्यभागगः ।
सौम्याग्रे सर्वतो दुर्गा पुरं नन्दति रक्षितम् ॥
[7]तस्माद्दुर्गा प्रकर्तव्या नगरेषु पुरादिषु ।
महालक्ष्म्यादिका शक्र क्षेमकारी सचण्डिका ॥
[8]मङ्गला मङ्गलारूपा महिषघ्नी शिवानना ।
यथास्थानविभागस्था सर्वलोकसुखावहा ॥
[9]महालक्ष्मीः पुरः शस्ता आग्नेये महिषापहा ।
याम्यां शिवा शुभा प्रोक्ता चर्चिका पश्चिमे पुरात् ॥

(१) राक. ५० ; राप्र. २१८.

(२) राक. ५० धनदा ( धनुहा ) सर्वा ( मध्या ) ; राप्र. २१८.

(३) राक. ५० र्यो व ( र्यौद्व ) ; राप्र. २१८–२१९ याम्ये ( यामे ) च्छिवम् ( च्छिवाम् ).

(४) राक. ५० ; राप्र. २१९.

(५) राक. ५० शान्तिः ( शान्ति ) ; राप्र. २१९.

(६) राक. ५० दुर्गा ( दुर्गे ) ; राप्र. २१९ ' सौम्यभागगः ' इति त्रुटितम्.

(७) राक. ५०–५१ द्दुर्गा (द्दुर्गाः) तैव्या (र्तव्यो) ; राप्र. २१९ दिका ( दिकाः ).

(८) राक. ५१ लोक (लोके) ; राप्र. २१९ शिवानना ( शिवा नरा ).

(९) राक. ५१ शिवा शुभा ( चैव शिवा); राप्र. २१९.

[1]उत्तरे शुभदा क्षेमा पञ्चैताः शान्तिदाः पुरे ।
नगरे नव कर्तव्या दुर्गे पञ्चैव चण्डिकाः ॥

## कालिकापुराणम्

दुर्गप्रकाराः, त्रिकोणाद्याकारं नगरं प्रशस्तम्

[2]दुर्गे तु समतां कुर्यात्प्राकाराट्टालतोरणैः ॥
भूषितान्नगराद्राजा दूरे दुर्गाश्रयं चरेत् ।
दुर्गं बलं नृपाणां तु नित्यं दुर्गं प्रशस्यते ॥
शतमेको योधयति दुर्गस्थो यो धनुर्धरः ।
शतं दश सहस्राणि तस्माद्दुर्गं प्रशस्यते ॥
जलदुर्गं भूमिदुर्गं वृक्षदुर्गं तथैव च ।
अरण्यबलदुर्गं च शैलजं परिखोद्भवम् ॥
दुर्गं कार्यं नृपतिना यथा दुर्गं स्वदेशतः ।
दुर्गं कुर्वन् पुरं कुर्यात्त्रिकोणं धनुराकृति ॥
वर्तुलं च चतुष्कोणं नान्यथा नगरं चरेत् ।
मृत्तिकाकृतिदुर्गं तु सततं कुलनाशनम् ॥
यथा राक्षसराज्यस्य लङ्का दुर्गान्विता पुरा ।
बलेः पुरं शोणिताख्यं तेजोदुर्गैः प्रतिष्ठितम् ॥
तद्यस्माद्व्यजनाकारं मनोभ्रष्टः शिवावलिः(?) ।
सौभाग्यं सा तु राज्यस्य (?) नगरं पञ्चकोणकम् ॥
दिवि यद्वर्तते राज्यं तच्च भ्रष्टं भविष्यति ।
यच्चायोध्याह्वयं भूप पुरमिक्ष्वाकुभूभृताम् ॥
धनुराकृति तच्चापि ततोऽभूद्विजयप्रदम् ।
दुर्गभूमौ जयेद्दुर्गान् दिक्पालांश्चैव द्वारतः ॥
पूजयित्वा विधानेन जयं भूपः समाप्नुयात् ।
अतो दुर्गं नृपः कुर्यात्सततं जयवृद्धये ॥

## कामन्दकीयनीतिसारः

सुदुर्गा राजधानी आस्थापनीया, चतुर्विधा दुर्गाः

[3]पृथुसीम महाखातमुच्चप्राकारगोपुरम् ।
समावसेत्पुरं शैलसरिन्मरुवनाश्रयम् ॥

(१) राक. ५१ ; राप्र. २१९.

(२) कालिका. ८७।१०८–११८.

(३) कानी. ४।५५ ; जम. शैल ( शैलं ) ; नीम. ५१ जमवत्.

(१) दुर्गसंपदमाह पञ्चभिः श्लोकैः— पृथुसीमेत्यादि। पृथुसीम विस्तीर्णगोपुरद्वारम्। तत् पुनश्चतुर्विधम्। तत्र शैलं (? शैलाश्रयं) पर्वतदुर्गम्, सरिदाश्रयं औदकम्, मरुदेशाश्रयं धान्वनम्, वनाश्रयं वार्क्षमिति। जम.

(२) राष्ट्रप्रकृतेर्गुणसंपदमभिधाय दुर्गप्रकृतिमभिधातुमाह— पृथ्विति। पृथुसीम विस्तीर्णमुखभूमिः। महाखातमिति महान्ति खातानि परिखाः। तथा च कौटिल्यः— 'महापरिखास्तिस्रो दण्डान्तराश्चतुर्दश द्वादश वा दण्डानि विस्तीर्णाः' (कौ. २।३) इति। उच्चप्राकारगोपुरमिति। प्राकारः वप्रस्योपलक्षणार्थः। तथा च गुरुः— 'वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्तात्' (कौ. २।३) इत्यादि। एवंविधोच्चप्राकारः गोपुरं च प्रतोलीद्वारं यस्य तत् समावसेत् राजा स्थानीयं समुदयस्थानम्। शैलसरिन्मरुवनाश्रयमिति। पर्वतोदकधन्ववनदुर्गाणामन्यतमदुर्गाश्रयम्। उनि.

[1]जलवद्धान्यधनवद्दुर्गं कालसहं महत्।
दुर्गहीनो नरपतिर्वाताभ्रावयवैः समः॥

(१) तच्चानिचितनिचयमकिंचित्करमित्याह— जलवदित्यादि। एवं च कृत्वा पराभियोगकालं सहत इति कालसहम्। वाताभ्रावयवैः समः, निराश्रयस्य शत्र्वादिनोच्छेदात्। जम.

(२) जलवदिति प्रचुरजलम्। धान्यानि अष्टादशापि, धनं सुवर्णादि, तत्संपन्नम्। दुर्गं कालसहम्, निचयसंपन्नत्वात्। विस्तीर्णत्वात् महत्। दुर्गहीनो नरपतिः वाताभ्रावयवैः समः, अलब्धावस्थितिर्भवतीत्यर्थः। उनि.

[2]औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा।
शस्तं प्रशस्तमतिभिर्दुर्गं दुर्गोपचिन्तकैः॥

(१) कानी. ४।५६.

(२) कानी. ४।५७ ; उनि. शस्तं प्रशस्त (प्रशस्तं शास्त्र) ; नीम. ५१ धान्वनं तथा (धन्वमानवम्) शेषं उनिवत्.

(१) इरिणं ऊषरम्। धन्व निरुदकं स्थलम्, मरुभूमिरित्यर्थः। नीम. ५१

(२) तदेव चतुष्प्रकारं पूर्वाचार्यमतेन दर्शयति— औदकमित्यादि। धान्वनं निर्जलदेशभवम्। तच्च ऐरिणं निष्कूपम्। तच्च स्वसैन्योपयोगव्यतिरिक्तजलकूपाद्यभावात् परस्यागम्यं भवति। जम.

(३) शैलसरिन्मरुवनाश्रयमित्युक्तं तदेव व्याख्यातुमाह— औदकमिति। औदकं वार्दुर्गं कौटिल्येन द्विधोक्तम्— 'अन्तर्द्वीपं स्थलं वा निम्नावरुद्धम्' (कौ. २।३)। पार्वतम्, 'प्रास्तरं गुहां वा' (कौ. २।३) इति एतदपि द्विधैवोक्तम्। वार्क्षं वृक्षैर्दुर्गम्। तदपि 'खञ्जनोदकं स्तम्बगहनं वा' (कौ. २।३) इति द्विधैवोक्तम्। ऐरिणमिति। इरिणे निर्जले देशे भवं ऐरिणम्। निस्तृणस्तम्बजलो देशः धन्वा, तत्र भवं धान्वनमिति। अत्र नानयोर्द्वयोः साम्यम्। एवं गुरोर्मतेनाष्ट दुर्गाणि, एतन्मते पञ्चैव प्रशस्तानि। प्रशस्तं अनुशिष्टं शास्त्रमतिभिः दुर्गं दुर्गोपचिन्तकैः आचार्यैरिति। उनि.

[1]जलान्नायुधयन्त्राढ्यं वीरयोधैरधिष्ठितम्।
गुप्तिप्रधानमाचार्या दुर्गं समनुमेनिरे॥

(१) सर्वोपसंहारेण निचयमाह— जलान्नेत्यादिना। यन्त्रं सर्वतोभद्रादि। अधिष्ठितं स्थानान्तरितैः। गुप्तिप्रधानं गूढदेशबहुलम्। जम.

(२) दुर्गगुणानभिधातुमाह— जलेति। जलं प्रचुरतममन्नं च आयुधानि च धनुरादीनि यन्त्राणि सर्वतोभद्रजामदग्न्यादीनि, तैः आढ्यं संपन्नम्। धीरयोधैः शौर्यशिल्पसंपन्नैः सुष्ठ्वधिष्ठितं कृतरक्षम्। गुप्तिप्रधानं रक्षाप्रधानम्। रक्षा च प्रधाना दुर्गस्य। आचार्याः शुक्रसुरगुरुप्रभृतयः समनुमेनिरे सम्यगनुमतिं दुर्गविषये कृतवन्तः। उनि.

[2]सापसाराणि दुर्गाणि भुवः सानूपजाङ्गलाः।
निवासाय प्रशस्यन्ते भूभुजां भूतिमिच्छताम्॥

(१) कानी. ४।५८ ; उनि. वीरयोधैरधि (धीरयोधैः स्वधि).

(२) कानी. ४।५९.

( १ ) अपसरणस्थानयुक्तानि आपदि निवासाय, ततो हि क्षीणनिचयस्यापसृत्य पुनः प्रतिविधानात्। सानूपजाङ्गलाः दुर्गभुवः प्रकृत्यवस्थायां निवासाय, तत्र हि जलस्थलगुणलाभात्। जम.

( २ ) तथा सापसाराणीति निरुद्धे दुर्गे यत्र कलत्राद्य-पसार्यते। भुवः सानूपजाङ्गलाः भूमयश्च जलस्थलप्रायाः निवासाय प्रशस्यन्ते। भूभुजां भूतिमिच्छतामिति प्रतीतम्। उनि.

*[1]प्रजानामापदि त्राणं रक्षणं कोशदण्डयोः।
पौराश्चैवोपकुर्वन्ति संश्रयायेह दुर्गिणाम्॥
तूष्णींयुद्धं जनत्राणं मित्रामित्रपरिग्रहः।
सामन्ताटविकाबाधानिरोधो दुर्गसंश्रयात्॥
स्वपक्षैः परपक्षैश्च दुर्गस्थः पूज्यते नृपः।
एतद्धि दुर्गव्यसनात्सर्वमेव विपद्यते॥

## शुक्रनीतिः

नव दुर्गप्रकाराः, तेषां श्रेष्ठ्यतारतम्यम्, सेनादुर्गः सर्वश्रेष्ठः, महापदि गिरिदुर्गः श्रेष्ठः

[2]षष्ठं दुर्गप्रकरणं प्रवक्ष्यामि समासतः।
खातकण्टकपाषाणैर्दुष्पथं दुर्गमैरिणम्॥

षष्ठं दुर्गप्रकरणं समासतः संक्षेपेण प्रवक्ष्यामि। खातकण्टकपाषाणैः खातेन कण्टकेन पाषाणेन च दुष्पथं दुर्गममित्यर्थः, दुर्गं ऐरिणम्, स्मृतमिति शेषः। शुनीटी.

परितस्तु महाखातं पारिखं दुर्गमेव तत्।
इष्टकोपलमृद्भित्तिप्राकारं पारिघं स्मृतम्॥

परितः सर्वतः चतुर्दिक्षु इत्यर्थः, महाखातं महत् खातं यस्य तादृशं तत् दुर्गं पारिखमेव। तथा इष्टकैः उपलैः पाषाणैः मृद्भिर्वा भित्तिप्राकारो यस्य तादृशं दुर्गं पारिघं स्मृतम्। शुनीटी.

महाकण्टकवृक्षौघैर्व्याप्तं तद्वनदुर्गमम्।
जलाभावस्तु परितो धन्वदुर्गं प्रकीर्तितम्॥

महाकण्टकवृक्षसमूहैः व्याप्तं वेष्टितं तत् दुर्गं वनदुर्गमं वनदुर्गमित्यर्थः। परितः समन्तात् यस्य जलाभावः तत् धन्वदुर्गं प्रकीर्तितम्। शुनीटी.

जलदुर्गं स्मृतं तज्ज्ञैरा समन्तान्महाजलम्।
सुवारिपृष्ठोच्चघ(?ध)रं विविक्ते गिरिदुर्गमम्॥

आ समन्तात् महाजलं चतुर्दिक्षु महाजलाशयवेष्टितं दुर्गं तज्ज्ञैः दुर्गाभिज्ञैः जलदुर्गं स्मृतम्। तथा विविक्ते विजने सुवारीणि पृष्ठे यस्य तथाभूतं उच्चघरं उन्नतगृहं यस्मिन् तथोक्तं दुर्गं गिरिदुर्गमं गिरिदुर्गम्। शुनीटी.

अभेद्यं व्यूहविद्वीरव्याप्तं तत्सैन्यदुर्गमम्।
सहायदुर्गं तज्ज्ञेयं शूरानुकूलबान्धवम्॥

अभेद्यं शत्रुभिः दुर्भेद्यं व्यूहविद्भिः बलविन्यास-विज्ञैः वीरैः व्याप्तं तत् दुर्गं सैन्यदुर्गमं सैन्यदुर्गम्। तथा शूराः बलवन्तः अनुकूलाः बान्धवाः यस्मिन् तथोक्तं तत् दुर्गं सहायदुर्गं ज्ञेयम्। शुनीटी.

पारिखादैरिणं श्रेष्ठं पारिघं तु ततो वनम्।
ततो धन्व जलं तस्माद्गिरिदुर्गं ततः स्मृतम्॥

पारिखात् दुर्गात् ऐरिणं दुर्गम्, ततः ऐरिणात् पारिघम्, ततः पारिघात् वनं वनदुर्गम्, ततः वनदुर्गात् धन्वदुर्गम्, ततः धन्वदुर्गात् जलं जलदुर्गम्, तस्मात् जलदुर्गात् गिरिदुर्गं श्रेष्ठं स्मृतम्। शुनीटी.

सहायसैन्यदुर्गे तु सर्वदुर्गप्रसाधके।
ताभ्यां विनाऽन्यदुर्गाणि निष्फलानि महीभुजाम्॥

सहायसैन्यदुर्गे सहायदुर्गं सैन्यदुर्गं च सर्वेषां दुर्गाणां प्रसाधके अलंकारके संपादके वा। यतः ताभ्यां सहायसैन्याभ्यां विना महीभुजां राज्ञां अन्यानि दुर्गाणि निष्फलानि भवन्तीत्यर्थः। शुनीटी.

श्रेष्ठं तु सर्वदुर्गेभ्यः सेनादुर्गं स्मृतं बुधैः।
तत्साधकानि चान्यानि तद्रक्षेन्नृपतिः सदा॥

---

* 'प्रजानामापदि' इत्यादिश्लोकत्रयस्य व्याख्यानसंग्रहः 'प्रकृतिव्यसनानि' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(१) कानी. १४।२८-३०.

(२) शुनी. ४।६।१-१४.

सेनादुर्गं सर्वदुर्गेभ्यः श्रेष्ठं बुधैः स्मृतम् । अन्यानि दुर्गाणि तत्साधकानि तेषां पोषकाणि, अथवा तानि साधकानि येषां तथोक्तानि । तदुपजीव्यानीत्यर्थः । तस्मात् नृपतिः सदा तत् सैन्यदुर्गं रक्षेत् । शुनीटी.

**सेनादुर्गं तु यस्य स्यात्तस्य वश्या तु भूरियम् ।**
**विना तु सैन्यदुर्गेण दुर्गमन्यत्तु बन्धनम् ॥**

यस्य सेनादुर्गं स्यात् तस्य इयं भूः वश्या वशवर्तिनी भवेदित्यर्थः । सैन्यदुर्गेण विना तु अन्यद्दुर्गं बन्धनं कारातुल्यमित्यर्थः । शुनीटी.

**आपत्कालेऽन्यदुर्गाणामाश्रयश्चोत्तमो मतः ॥**

आपत्काले तु (अन्य)दुर्गाणां आश्रयः उत्तमः श्रेयस्करः मतः । शुनीटी.

**एकः शतं योधयति दुर्गस्थोऽस्त्रधरो यदि ।**
**शतं दशसहस्राणि तस्माद्दुर्गं समाश्रयेत् ॥**

दुर्गस्थः जनः यदि अस्त्रधरः भवेत् तदा स एकोऽपि शतं योधयति । शतं शतसंख्यकः जन इत्यर्थः, दशसहस्राणि योधयेत् । तस्मात् दुर्गं समाश्रयेत् । शुनीटी.

**शूरस्य सैन्यदुर्गस्य सर्वं दुर्गमिव स्थलम् ।**
**युद्धसंभारपुष्टानि राजा दुर्गाणि धारयेत् ।**
**धान्यवीरास्त्रपुष्टानि कोशपुष्टानि वै तथा ॥**

शूरस्य अतिबलवतः सैन्यदुर्गस्य सर्वं स्थलं स्थानं दुर्गमिव भवति । किंच, राजा युद्धसंभारपुष्टानि संग्रामोपकरणपूर्णानि धान्यैः वीरैः अस्त्रैश्च पुष्टानि तथा कोशपुष्टानि धनपूर्णानि दुर्गाणि धारयेत् आश्रयेत् । शुनीटी.

**सहायपुष्टं यद्दुर्गं तत्तु श्रेष्ठतरं मतम् ।**
**सहायपुष्टदुर्गेण विजयो निश्चयात्मकः ॥**

सहायपुष्टं सहायैः पूर्णं यद्दुर्गं तत्तु श्रेष्ठतरं मतम् । सहायपुष्टदुर्गेण विजयः निश्चयात्मकः निश्चितः । शुनीटी.

**यद्यत्सहायपुष्टं तु तत्सर्वं सफलं भवेत् ।**
**परस्परानुकूल्यं तु दुर्गाणां विजयप्रदम् ॥**

यद्यत् दुर्गं सहायपुष्टं तत्सर्वं सफलं भवेत् । दुर्गाणां परस्परानुकूल्यं अन्योन्यसाहाय्यं विजयप्रदं विजयावहं भवति । शुनीटी.

**[1]संश्रयेद्गिरिदुर्गाणि महापदि नृपः सदा ।**
**तदाश्रयाद्दस्युवृत्त्या स्वराज्यं तु समाहरेत् ॥**

नृपः महापदि महत्यां दुर्निवारायामित्यर्थः, आपदि सदा गिरिदुर्गाणि पर्वतरूपदुर्गमस्थानानि संश्रयेत् । तदाश्रयादिति । तस्य गिरेः आश्रयात् गिरिमाश्रित्येत्यर्थः, दस्युवृत्त्या दस्युव्यवहारेण तु पुनः स्वराज्यं समाहरेत् आददीत । शुनीटी.

आस्थापनीयसुदुर्गराजधानीविधिः

**[2]नानावृक्षलताकीर्णे पशुपक्षिगणावृते ।**
**सुबहूदकधान्ये च तृणकाष्ठसुखे सदा ॥**

**आसिन्धुनौगमाकूले नातिदूरमहीधरे ।**
**सुरम्यसमभूदेशे राजधानीं प्रकल्पयेत् ॥**

राजधानीकरणमाह— नानेति, आसिन्ध्विति । राजा नानावृक्षलताकीर्णे बहुविधवृक्षलताबहुले, पशुपक्षिगणैः आवृते युक्ते, सदा सुबहूनि अतिप्रचुराणि, उदकानि धान्यानि च यस्मिन् तथाभूते, तृणैः काष्ठैश्च सुखे सुखकरे, आसिन्धु आसमुद्रं नौभिः नौकाभिः गमः गमनं तेन आकुले युक्ते, समुद्रपर्यन्तनौकागमनसाधने इत्यर्थः, नातिदूरः अदूरवर्ती महीधरः पर्वतः यस्य तादृशे, सुरम्ये मनोहरे समभूदेशे समानभूमिभागे राज्ञा धीयते उष्यते अस्यामिति राजधानीं स्वनिवासस्थानं प्रकल्पयेत् । शुनीटी.

**अर्धचन्द्रां वर्तुलां वा चतुरश्रां सुशोभनाम् ।**
**सप्राकारां सपरिखां ग्रामादीनां निवेशिनीम् ॥**
**सभामध्यां कूपवापीतडागादियुतां सदा ।**
**चतुर्दिक्षु चतुर्द्वारां सुमार्गारामवीथिकाम् ॥**
**दृढसुरालयमठपान्थशालाविराजिताम् ।**
**कल्पयित्वा वसेत्तत्र सुगुप्तः सप्रजो नृपः ॥**

(१) शुनी. १।३८१–३८२.
(२) शुनी. १।२१३–२५०.

अर्धचन्द्रां अर्धचन्द्राकारामित्यर्थः, वा वर्तुलां मण्डलाकाराम्, अथवा चतुरश्रां चतुष्कोणाम्, सुशोभनां शोभाशालिनीम्, सप्राकारां प्राचीरवेष्टिताम्, ग्रामादीनां अन्तराऽन्तरा ग्रामपल्ल्यादिविभागवतीम्, सभामध्यां मध्ये मध्ये स्थापितसमाजाम्, वापीभिः दीर्घिकाभिः तडागैः सरोवरैः आदिपदेन जलयन्त्रादिभिः युताम्, चतुर्दिक्षु पूर्वपश्चिमोत्तरदक्षिणासु चतुर्द्वारां द्वारचतुष्टयवतीम्, शोभनाः मार्गाः पन्थानः आरामवीथयः उपवनश्रेणयः यस्यां तादृशीम्, तथा दृढैः सुरालयैः देवालयैः मठैः छात्रादिपाठशालाभिः तथा पान्थशालाभिः पथिकजनावस्थानार्थं निर्मितगृहैरित्यर्थः, विराजितां राजधानीं कल्पयित्वा नृपः सदा तत्र सुरक्षितः तथा सप्रजः पुत्राद्यन्वयसहितः सन् वसेत्। शुनीटी.

**राजगृहं सभामध्यं गवाश्वगजशालिकम्।**
**प्रशस्तवापीकूपादिजलयन्त्रैः सुशोभितम्॥**
**सर्वतः स्यात्समभुजं दक्षिणोच्चमुदङ्नतम्।**
**शालां विना नैकभुजं तथा विषमबाहुकम्॥**
**प्रायः शाला नैकभुजा चतुःशालं विना शुभा।**
**शस्त्रास्त्रधारिसंयुक्तप्राकारं सुष्ठुयन्त्रकम्॥**

तत्र राजधान्यां सभामध्यं मध्यस्थितसभागृहम्, गवां अश्वानां गजानां च शालाभिः समन्वितम्, प्रशस्तैः मनोज्ञैः वापीकूपजलयन्त्रैः सुशोभितम्, सर्वतः सर्वासु दिक्षु समभुजं समानभुजपरिमाणम्, दक्षिणस्यां दिशि उच्चं उन्नतम्, तथा उदङ्नतं उत्तरस्यां दिशि नतं अवनतम्, शालां गृहं विना अनेकभुजं बहुभुजपरिमाणम्, यावद्भिर्भुजैः गृहमानं ततोऽधिकभुजैः परिच्छिन्नावान्तरस्थानमित्यर्थः, यतः चतुःशालं यस्मिन् गृहे चत्वारः विभागाः सन्तीति तत् विना अनेकभुजा बहुभुजपरिमाणा शाला प्रायः बाहुल्येन अशुभा अमनोहरा इत्यर्थः, विषमबाहुकं अयुग्मभुजमितम्, शस्त्रास्त्रधारिभिः संयुक्तः रक्षित इत्यर्थः, प्राकारो यस्य तथोक्तम्, तथा सुष्ठु शोभनानि यन्त्राणि नानाकार्यसाधनानि यस्मिन् तादृशं राजगृहं स्यात् भवेत्। शुनीटी.

**सत्रिकक्षचतुर्द्वारं चतुर्दिक्षु सुशोभितम्।**
**दिवा रात्रौ सशस्त्रास्त्रैः प्रतिकक्षासु गोपितम्॥**
**चतुर्भिः पञ्चभिः षड्भिर्यामिकैः परिवर्तकैः।**
**नानागृहोपकार्याट्टसंयुतं कल्पयेत्सदा॥**

तच्च राजगृहं सत्रिकक्षचतुर्द्वारं त्रिभिः कक्षैः विभागविशेषैः तथा चतुर्भिर्द्वारैः सहितम्, चतुर्दिक्षु सुशोभितं शोभासंयुक्तम्, दिवा दिवसे, दिवेत्यव्ययम्, तथा रात्रौ सशस्त्रास्त्रैः शस्त्रास्त्रधारिभिः चतुर्भिः पञ्चभिः षड्भिर्वा परिवर्तकैः पर्यायक्रमेण स्थितैः यामिकैः प्रहरिभिः प्रतिकक्षासु प्रतिविभागेषु सदा सुगोपितं सुरक्षितम्, तथा नानागृहैः विविधाकारैः सदनैः उपकार्याभिः पटमण्डपैः तथा अट्टैः हर्म्यैः संयुतं कल्पयेत्। शुनीटी.

**वस्त्रादिमार्जनार्थं च स्नानार्थं यजनार्थकम्।**
**भोजनार्थं च पाकार्थं पूर्वस्यां कल्पयेद्गृहान्॥**

पूर्वस्यां दिशि वस्त्रादीनां मार्जनार्थं क्षालनार्थं स्नानार्थं यजनार्थं यज्ञानुष्ठानार्थं भोजनार्थं तथा पाकार्थं रन्धनार्थं गृहान् कल्पयेत्। शुनीटी.

**निद्रार्थं च विहारार्थं पानार्थं रोदनार्थकम्।**
**धान्यार्थं घरटाद्यर्थं दासीदासार्थमेव च॥**
**उत्सर्गार्थं गृहान् कुर्याद्दक्षिणस्यामनुक्रमात्।**
**गोमृगोष्ट्रगजाद्यर्थं गृहान् प्रत्यक् प्रकल्पयेत्॥**

दक्षिणस्यां दिशि अनुक्रमात् यथाक्रमं निद्रार्थं शयनार्थं विहारार्थं क्रीडार्थं पानार्थं मद्यादीनामुपयोगार्थं रोदनार्थं क्रन्दनार्थं धान्यार्थं धान्यरक्षणार्थं घरटाद्यर्थं मुद्गगोधूमादिचूर्णनार्थं यन्त्रविशेषाद्यर्थं दासीदासार्थं किङ्करीकिङ्करावस्थानार्थं तथा उत्सर्गार्थं मलमूत्रत्यागार्थं गृहान् कुर्यात्। किंच, प्रत्यक् पश्चिमायां दिशि गवां मृगाणां उष्ट्राणां गजादीनां च रक्षणार्थं गृहान् प्रकल्पयेत्। शुनीटी.

**रथवाज्यस्त्रशस्त्रार्थं व्यायामायामिकार्थकम्।**
**वस्त्रार्थकं तु द्रव्यार्थं विद्याभ्यासार्थमेव च॥**
**उदग्गृहान् प्रकुर्वीत सुगुप्तान् सुमनोहरान्।**
**यथासुखानि वा कुर्याद्गृहाण्येतानि वै नृपः॥**

रथानां वाजिनां अस्त्राणां क्षेपणीयानां शस्त्राणां हस्तधृतानां प्रहरणानां स्थानार्थम्, व्यायामायामिकार्थम्– व्यायामः अङ्गचालनाविशेषः, तस्य आयामिका विस्तारः, तदर्थम्, वस्त्रार्थकं वसनरक्षणार्थकम्, द्रव्यार्थे धनरक्षणार्थम्, गृहोपकरणाद्यर्थे वा, तथा विद्याभ्यासार्थे सुगुप्तान् सुरक्षितान् सुमनोहरान् उदग्गृहान् उत्तरदिग्वर्तिनः गृहान् प्रकुर्वीत । वा अथवा नृपः यथासुखानि आत्मनः सुखानुसारेण एतानि पूर्वोक्तानि गृहाणि कुर्यात् । शुनीटी.

**धर्माधिकरणं शिल्पशालां कुर्यादुदग्गृहात् ।**
**पञ्चमांशाधिकोच्छ्राया भित्तिर्विस्तारतो गृहे ॥**

धर्माधिकरणं विचारालयं तथा शिल्पशालां गृहात् राजगृहात् उदक् उत्तरस्यां दिशि, उदगिति अव्ययम्, कुर्यात् । किंच, गृहे राजगृहे भित्तिः विस्तारतः गृहविस्तारात् पञ्चमांशः अधिकः उच्छ्रायः औन्नत्यं यस्याः तादृशी, भवतीति शेषः । शुनीटी.

**कोष्ठविस्तारषष्ठांशस्थूला सा च प्रकीर्तिता ।**
**एकभूमेरिदं मानमूर्ध्वमूर्ध्वं समन्ततः ॥**

सा च भित्तिः कोष्ठस्य गृहाभ्यन्तरभागस्य यः विस्तारः तस्य षष्ठांशवत् स्थूला प्रकीर्तिता उक्ता । समन्ततः सर्वतः एकभूमेः एकस्य गृहस्य भूमेः इदं ऊर्ध्वं उत्कृष्टं, चरममित्यर्थः, ऊर्ध्वं मानं परिमाणम्, उक्तमिति शेषः । शुनीटी.

**स्तम्भैश्च भित्तिभिर्वाऽपि पृथक्कोष्ठानि संन्यसेत् ।**
**त्रिकोष्ठं पञ्चकोष्ठं वा सप्तकोष्ठं गृहं स्मृतम् ॥**
**द्वारार्थमष्टधा भक्तं द्वारस्यांशौ तु मध्यमौ ।**
**द्वौ द्वौ ज्ञेयौ चतुर्दिक्षु धनपुत्रप्रदौ नृणाम् ॥**

स्तम्भैः भित्तिभिर्वा पृथक् भिन्नानि भिन्नानि कोष्ठानि संन्यसेत् विन्यसेत् कल्पयेदित्यर्थः । किंच, गृहं त्रिकोष्ठं त्रिभिः कोष्ठैः युतं पञ्चकोष्ठं पञ्चभिः कोष्ठैः युतं वा सप्तकोष्ठं सप्तभिः कोष्ठैः युतं द्वारार्थे अष्टधा भक्तं द्वारसहिताष्टकोष्ठमित्यर्थः, स्मृतं कथितम् । किंच, द्वारस्य अंशौ खण्डौ मध्यमौ मध्यविधौ चतुर्दिक्षु द्वौ द्वौ निर्मितौ सन्तौ नृणां धनपुत्रप्रदौ, भवत इति शेषः । अदृष्टार्थमेतत् प्रशंसावचनमिति भावः । शुनीटी.

**तत्रैव कल्पयेद्द्वारं नान्यथा तु कदाचन ।**
**वातायनं पृथक्कोष्ठे कुर्याद्यादृक् सुखावहम् ॥**

तत्रैव कोष्ठविभागेषु इत्यर्थः, द्वारं कल्पयेत् । कदाचन अन्यथा न । तथा कोष्ठे यादृक् सुखावहं सुखकरम्, भवतीति शेषः, तादृक् वातायनं गवाक्षं पृथक् पृथक् कुर्यात् । शुनीटी.

**अन्यगृहद्वारविद्धं गृहद्वारं न चिन्तयेत् ।**
**गृहकोणस्तम्भमार्गपीठकूपैश्च वेधितम् ॥**

गृहद्वारं एकमित्यर्थः, अन्यगृहद्वारविद्धं अपरद्वारसंयुक्तम्, तथा वृक्षकोणेन स्तम्भेन मार्गपीठेन पथि स्थापितपीठाकारप्रदेशेन तथा कूपैश्च वेधितं संसक्तं न चिन्तयेत् न कल्पयेत् । शुनीटी.

**प्रासादमण्डपद्वारे मार्गवेधो न विद्यते ।**
**गृहपीठं चतुर्थांशमुच्छ्रायस्य प्रकल्पयेत् ॥**

प्रासादमण्डपस्य देवगृहस्य राजगृहस्य वा । 'प्रासादो देवभूभुजाम्' इत्यमरः । द्वारे मार्गवेधः मार्गयोर्मार्गाणां वा वेधः संयोगः न विद्यते न कार्य इत्यर्थः । किंच, उच्छ्रायस्य चतुर्थांशं चतुर्थांशपरिमाणं गृहपीठं प्रकल्पयेत् । शुनीटी.

**प्रासादानां मण्डपानामर्धांशं वाऽपरे जगुः ।**
**परवातायनैर्विद्धं नापि वातायनं स्मृतम् ॥**

अपरे विद्वांसः प्रासादानां मण्डपानां पूर्वोक्तदेवराजगृहाणां अर्धांशं अर्धांशपरिमितं वा गृहपीठं जगुः कथयन्ति । अर्धपरिमाणेन गृहपीठं कार्यमिति भावः । किंच, वातायनमेकं परवातायनेन अपरगवाक्षेण विद्धं संसक्तं नापि नैव स्मृतं कथितम्, न कार्यमिति भावः । शुनीटी.

**विस्तारार्धांशमध्योच्चा छदिः खर्परसंभवा ।**
**पतितं तु जलं तस्यां सुखं गच्छति वाऽप्यधः ॥**

खर्परसंभवा खर्परैः तदाख्यैः आच्छादकवस्तुविशेषैः कृतेत्यर्थः, छदिः विस्तारस्य स्वविस्तारस्य अर्धांशं मध्यं उच्चं मूलं यस्याः तथाभूता, कार्या इति शेषः । तस्यां पतितं जलं सुखं यथा तथा अधः गच्छति । तुशब्दः अवधारणे । शुनीटी.

हीना निम्ना छदिर्न स्यात्तादृक् कोष्ठस्य विस्तरः ।
स्वोच्छ्रायस्यार्धमूलो वा प्राकारः सममूलकः ॥

छदिः उक्तरूपा हीना न्यूना निम्ना अवनता च न स्यात् । तथा सोच्छ्रायस्य समुन्नतस्य कोष्ठस्य विस्तरः तादृक् हीनः निम्नश्चेत्यर्थः, न स्यात् । किंच, प्राकारः प्राचीरवेष्टनं अर्धमूलः मूलार्धपरिमितः वा सममूलकः मूलपरिमितः न स्यात् । मूलात् किंचिदूनपरिमितः कार्य इति भावः । शुनीटी.

तृतीयांशकमूलो वा ह्युच्छ्रायार्धप्रविस्तरः ।
उच्छ्रितस्तु तथा कार्यो दस्युभिर्न विलङ्घ्यते ॥

वा अथवा प्राकारः तृतीयांशकं तृतीयभागमितं मूलं यस्य तथोक्तः, तथा उच्छ्रायस्य उच्चतायाः अर्धः अर्धमितः प्रविस्तरः विस्तारः यस्य तादृशः, कार्य इति शेषः । किंच, तथा उच्छ्रितः उन्नतः कार्यः यथा दस्युभिः शत्रुभिरित्यर्थः, न विलङ्घ्यते । शुनीटी.

यामिकै रक्षितो नित्यं नालिकास्त्रैश्च संयुतः ।
सुबहुदृढगुल्मश्च सुगवाक्षप्रणालिकः ॥

उक्तरूपः प्राचीरः नित्यं सततं यामिकैः प्रहरिभिः रक्षितः, नालिकास्त्रैः नालिकाख्यप्रहरणविशेषैः संयुतः, सुबहूनि बहुलानि दृढानि गुल्मानि रक्षकवर्गस्थानविशेषाः यस्मिन् तादृशः, तथा सुष्ठु गवाक्षाणां प्रणाली संनिवेशशृङ्खला यत्र तथाभूतः, कार्य इति शेषः । शुनीटी.

स्वहीनप्रतिप्राकारो ह्यसमीपमहीधरः ।
परिखा च ततः कार्या खाताद्द्विगुणविस्तरा ॥
नातिसमीपप्राकारा ह्यगाधसलिला शुभा ।
युद्धसाधनसंभारैः सुयुद्धकुशलैर्विना ॥
न श्रेयसे दुर्गवासो राज्ञः स्याद्बन्धनाय सः ।
राज्ञा राजसभा कार्या सुगुप्ता सुमनोरमा ॥
त्रिकोष्ठैः पञ्चकोष्ठैर्वा सप्तकोष्ठैः सुविस्तृता ।
दक्षिणोदक्तथा दीर्घा प्राक्प्रत्यग्द्विगुणाऽथवा ॥
त्रिगुणा वा यथाकाममेकभूमिर्द्विभूमिका ।
त्रिभूमिका वा कर्तव्या सोपकार्याशिरोगृहा ॥
परितः प्रतिकोष्ठे तु वातायनविराजिता ।
पार्श्वकोष्ठात्तु द्विगुणो मध्यकोष्ठस्य विस्तरः ॥

उक्तः प्राकारः स्वस्मात् हीनः न्यूनः प्रतिप्राकारः विपक्षप्राकारः यस्य तथोक्तः, विपक्षप्राकारात् समुन्नत इत्यर्थः, तथा असमीपः असंनिहितः महीधरः पर्वतः यस्य तादृशः, कर्तव्य इति अध्याहार्यम् । पर्वतसंनिधाने तदाश्रयेण शत्रुभिरुल्लङ्घनीयत्वादिति भावः । ततश्च तस्य प्राचीरस्य परत इत्यर्थः, परिखा तदाख्या जलवृतिरित्यर्थः, कार्या । सा च खातात् गभीरत्वादित्यर्थः, द्विगुणः विस्तरः यस्याः तथोक्ता, नातिसमीपप्राकारा प्राकारस्य नितान्तमसंनिहिता, अगाधसलिला बहूदका, तथा शुभा सुदृश्या च । किंच, युद्धसाधनसंभारैः संग्रामोपकरणसमूहैः तथा सुयुद्धकुशलैः रणदक्षैः पुरुषैः विना राज्ञः दुर्गे वासः श्रेयसे मङ्गलाय न, परं स बन्धनाय स्यात् । अपरं च, राज्ञा सुगुप्ता सुरक्षिता, मनोहरा, त्रिकोष्ठैः पञ्चकोष्ठैः सप्तकोष्ठैर्वा, विभक्ता इत्यध्याहार्यम्, दक्षिणोदक् दक्षिणोत्तरयोरित्यर्थः, सुविस्तृता, तथा प्राक्प्रत्यक् पूर्वपश्चिमयोरित्यर्थः, दीर्घा, अथवा द्विगुणा विस्तारात्, दैर्घ्ये इति शेषः, अथवा त्रिगुणा राजसभा कार्या । अथवा यथाकामं यथेप्सितं एकभूमिः एकमात्रगृहा, द्विभूमिका गृहद्वययुता, त्रिभूमिका गृहत्रयसंयुता, सोपकार्याशिरोगृहा उपकार्याख्यगृहविशेषेण शिरोगृहेण शिरस्थगृहविशेषेण सहिता, प्रतिकोष्ठेषु परितः सर्वतः चतुर्दिक्षु इत्यर्थः, वातायनविराजिता गवाक्षशोभिता राजसभा कर्तव्या । किंतु मध्यकोष्ठस्य विस्तरः पार्श्वकोष्ठात् द्विगुणः, कार्य इति शेषः । शुनीटी.

पञ्चमांशाधिकं त्वौच्चं मध्यकोष्ठस्य विस्तरात् ।
विस्तारेण समं त्वौच्चं पञ्चमांशाधिकं तु वा ॥

मध्यकोष्ठस्य औच्चं उच्चता विस्तरात् पञ्चमांशाधिकम्, कार्यमिति शेषः । औच्चं विस्तरेण समं पञ्चमांशाधिकं वा, कार्यमिति केचित् वदन्तीति अध्याहार्यम् । शुनीटी.

कोष्ठकानां च भूमिर्वा छदिर्वा तत्र कारयेत् ।
द्विभूमिके पार्श्वकोष्ठे मध्यमं त्वेकभूमिकम् ॥

कोष्ठकानां भूमिः विस्तारभागः वा छदिः आच्छादनभागः, या आसीदिति अध्याहार्यम्, तत्र द्विभूमिके

पार्श्वकोष्ठे गृहद्वयावच्छिन्ने पार्श्वावयवे सति मध्यमम्, कोष्ठमिति शेषः, एकभूमिकं एकगृहपरिच्छिन्नं कारयेत्। शुनीटी.

पृथक्स्तम्भान्तसत्कोष्ठा चतुर्मार्गागमा शुभा।
जलोर्ध्वपातियन्त्रैश्च युता सुस्वरयन्त्रकैः॥
वातप्रेरकयन्त्रैश्च यन्त्रैः कालप्रबोधकैः।
प्रतिष्ठिता च स्वादर्शैस्तथा च प्रतिरूपकैः॥
एवंविधा राजसभा मन्त्रार्था कार्यदर्शने॥

पृथक् विभिन्नं सभान्तः सभामध्ये सत् विद्यमानं कोष्ठं यस्याः तथोक्ता। चतुर्भिः मार्गैः पथिभिः आगमे आगमने शुभा सुखकरी, चतुष्पथा इत्यर्थः। जलानि ऊर्ध्वपातीनि ऊर्ध्वगामीनि यैः तादृशानि यन्त्राणि जलोद्गमयन्त्राणीत्यर्थः, तैः तथा सुस्वरयन्त्रकैः स्वयं मधुरस्वरोत्थापकैः यन्त्रैश्च युता। किंच, वातप्रेरकयन्त्रैः अभिमतसमीरणसंचारकयन्त्रैरित्यर्थः, कालप्रबोधकैः समयनिर्णायकैश्च यन्त्रैः उपलक्षिता। तथा स्वादर्शैः शोभनैः दर्पणैः प्रतिरूपकैः प्रतिकृतिभिश्च प्रतिष्ठिता अलंकृता। एवंविधा उक्तप्रकारा मन्त्रार्था मन्त्रणाभिप्रायेण निर्मिता राजसभा कार्यदर्शने कार्यदर्शनार्थमित्यर्थः। निमित्तार्थे सप्तमी। कार्या इति शेषः। शुनीटी.

[1]सभायां प्रत्यगर्धस्य मध्ये राजासनं स्मृतम्।
दक्षसंस्था वामसंस्था विशेयुः पार्श्वकोष्ठगाः॥

सभायां प्रत्यगर्धस्य पश्चिमार्धभागस्य मध्ये राजासनं सिंहासनं स्मृतं कथितम्। स्थाप्यत्वेनेति शेषः। तस्य दक्षसंस्थाः दक्षिणभागस्थाः, केचिदिति शेषः। केचिच्च वामसंस्थाः वामांशस्थिताः सन्तः उपविशेयुरित्यर्थः। अपरे तस्य पार्श्वयोः कोष्ठयोः विभागयोः गच्छन्ति तिष्ठन्तीति तथोक्ताः, भवेयुरिति शेषः। शुनीटी.

पुत्राः पौत्रा भ्रातरश्च भागिनेयाः स्वपृष्ठतः।
दौहित्रा दक्षभागात्तु वामसंस्थाः क्रमादिमे॥
पितृव्याः स्वकुलश्रेष्ठाः सभ्याः सेनाधिपास्तथा।
स्वाग्रे दक्षिणभागे तु प्राक्संस्थाः पृथगासनाः॥
मातामहकुलश्रेष्ठा मन्त्रिणो बान्धवास्तथा।
श्वशुराश्चैव श्यालाश्च वामाग्रे चाधिकारिणः॥

पुत्राः पौत्राः भ्रातरः तथा भागिनेयाः स्वस्य राज्ञः पृष्ठतः पश्चाद्भागे इत्यर्थः, तथा दौहित्राः दुहितृसुताः दक्षभागात् दक्षिणभागमाश्रित्येत्यर्थः। ल्यबर्थे पञ्चमी। विशेयुरित्यनेनान्वयः। इमे वक्ष्यमाणाः पितृव्याः स्वकुलश्रेष्ठाः निजकुलमहत्तराः सभ्याः सभासदः तथा सेनाधिपाः क्रमात् वामसंस्थाः, विशेयुरित्यनेनान्वयः। तथा स्वाग्रे राजाग्रे नृपसमक्षमित्यर्थः, दक्षिणभागे तु मातामहकुलश्रेष्ठाः, राज्ञः इति शेषः, मन्त्रिणः बान्धवाः श्वशुराः श्यालकाश्च प्राक्संस्थाः पूर्वाभिमुखाः पृथगासनाः विभिन्नासनस्थाः सन्तः, विशेयुरित्यनेनान्वयः। वामाग्रे च वामांशे च अधिकारिणः राजकर्मचारिणः, निवसेयुरिति शेषः। शुनीटी.

वामदक्षिणपार्श्वस्थौ जामाता भगिनीपतिः।
स्वसदृशः समीपे वा स्वार्धासनगतः सुहृत्॥

जामाता भगिनीपतिश्च वामदक्षिणपार्श्वस्थौ, क्रमेण विशेतामिति शेषः। स्वसदृशः आत्मसमः सुहृत् समीपे वा स्वस्य अर्धासनगतः वा विशेदित्यर्थः। शुनीटी.

दौहित्रभागिनेयानां स्थाने स्युर्दत्तकादयः।
भागिनेयाश्च दौहित्राः पुत्रादिस्थानसंश्रिताः॥

दत्तकादयः पुत्राः दौहित्रभागिनेयानां स्थाने स्युः भवेयुः। तथा भागिनेयाः दौहित्राश्च पुत्रादीनां स्थानसंश्रिताः स्थानस्थाः स्थानेषु तिष्ठेयुरित्यर्थः। शुनीटी.

यथा पिता तथाऽऽचार्यः समश्रेष्ठासने स्थितः।
पार्श्वयोरग्रतः सर्वे लेखका मन्त्रिपृष्ठगाः॥

यथा पिता तथा आचार्यः वेदाध्यापकः गुरुः शिक्षागुरुर्वा पार्श्वयोरग्रतः पार्श्वद्वयाग्रभागे समश्रेष्ठासने समे राजासनस्य समाने वा श्रेष्ठे आसने स्थितः, भवेदिति शेषः। लेखकाः सर्वे मन्त्रिपृष्ठगाः मन्त्रिणां पश्चाद्भागेषु तिष्ठेयुरित्यर्थः। शुनीटी.

परिचारगणाः सर्वे सर्वेभ्यः पृष्ठसंस्थिताः।
स्वर्णदण्डधरौ पार्श्वे प्रवेशनतिबोधकौ॥

(१) शुनी. १।३५२-३६२.

परिचारगणाः भृत्यवर्गाः सर्वे सर्वेभ्यः कथितेभ्यः पुत्रादिभ्यः पृष्ठसंस्थिताः पश्चाद्भागेषु तिष्ठेयुरित्यर्थः । पार्श्वे प्रवेशनतिबोधकौ प्रवेशं नतिं प्रणामं च कार्यार्थिनामिति भावः, बोधयत इति तथोक्तौ प्रवेशनतिनिवेदकौ स्वर्णदण्डधरौ द्वौ भृत्यौ, तिष्ठतामिति शेषः । शुनीटी.

विशिष्टचिह्नयुग्राजा स्वासने प्रविशेत्सुखम् ।
सुभूषणः सुकवचः सुवस्त्रो मुकुटान्वितः ॥
सिद्धास्त्रनग्नशस्त्रः सन् सावधानमनाः सदा ॥

सिद्धास्त्रः शिक्षितास्त्रविद्यः राजा विशिष्टचिह्नयुक् विशेषलक्षणान्वितः सुभूषणः कुण्डलाद्यलंकृतः सुकवचः शोभनवर्मधारी सुवस्त्रः परिहितशोभनवसनः मुकुटान्वितः किरीटधरः नग्नशस्त्रः शस्त्रधारी सदा सावधानमनाः सन् स्वासने राजासने सुखं प्रविशेत् उपविशेत् । शुनीटी.

[1]तथाविधामात्यलेख्यसभ्याधिकृतशालिकाः ॥
कर्तव्याश्च पृथक्त्वेतास्तदर्थाश्च पृथक् पृथक् ।
शतहस्तमितां भूमिं त्यक्त्वा राजगृहात्सदा ॥

तथाविधा तादृशी, प्रशस्ता इति शेषः (?), अमात्यानां लेख्यानां लेखकानां सभ्यानां अधिकृतानां कर्मचारिणां शालिकाः गृहाणि पृथक् पृथक् तथा राजगृहात् शतहस्तमितां भूमिं त्यक्त्वा सदा तदर्थाः कार्यदर्शनार्थाः एताः शालिकाः पृथक् पृथक् कर्तव्याः । शुनीटी.

उदग्द्विशतहस्तां प्राक् सेनासंवेशनार्थिकाम् ।
आराद्राजगृहस्यैव प्रजानां निलयानि च ॥
सधनश्रेष्ठजात्याऽनुक्रमतश्च सदा बुधः ।
समन्ताच्च चतुर्दिक्षु विन्यसेच्च ततः परम् ॥

बुधः विद्वान् नृपतिः प्राक् प्रथमं राजगृहस्य आरात् समीपे एव । 'आराद्दूरसमीपयोः' इत्यमरः । सदा सेनासंवेशनार्थिकां सैन्यरक्षार्थां उदग्द्विशतहस्तां द्विशतहस्तोत्तरवर्तिनीं शालिकाम्, ततः परं चतुर्दिक्षु समन्तात् सर्वतः अनुक्रमतः यथाक्रमेण सधना श्रेष्ठा च या जातिः तया तदनुसारेणेत्यर्थः, प्रजानां निलयानि च विन्यसेत् कल्पयेत् । शुनीटी.

प्रकृत्यनुप्रकृतयो ह्यधिकारिगणस्ततः ।
सेनाधिपाः पदातीनां गणः सादिगणस्ततः ॥
साश्वश्च सगजश्चापि गजपालगणस्ततः ।
बृहन्नालिकयन्त्राणि ततः स्वतुरगीगणः ॥
ततः स्वगौल्मिकगणो ह्यारण्यकगणस्ततः ।
क्रमादेषां गृहाणि स्युः शोभनानि पुरे सदा ॥

प्रकृतयः प्रधानपुरुषाः, अनुप्रकृतयः ततो निकृष्टाः प्रजाः, तदनन्तरं अधिकारिगणः राजनियुक्तभृत्यवर्गः, ततः सेनाधिपाः सेनापतयः, ततः पदातीनां सैन्यानां गणः, ततः साश्वः अश्वसहितः सादिनां अश्वारोहिणां सैन्यानां गणः, ततः सगजः गजसहितः गजपालगणः, ततः बृहन्नालिकयन्त्राणि बृहन्ति महान्ति नालिकयन्त्राणि अस्त्रविशेषयन्त्राणि चेतनसाहचर्यात् लक्षणया तच्चालिनः पुरुषाः, ततः स्वतुरगीगणः स्वस्य राज्ञ इत्यर्थः, तुरगीगणः अश्वासमूहः, ततः स्वस्य गौल्मिकगणः रक्षकवर्गः, ततश्च आरण्यकगणः वन्यजातिसंघः, पुरे नगरे क्रमात् एषां उक्तानां प्रकृत्याद्यारण्यकगणपर्यन्तानां सदा शोभनानि गृहाणि स्युः भवेयुः । शुनीटी.

पान्थशाला ततः कार्या सुगुप्ता सुजलाशया ।
सजातीयगृहाणां हि समुदायेन पङ्क्तितः ॥
निवेशनं पुरे ग्रामे प्रागुदङ्मुखमेव वा ।
सजातिपण्यनिवहैरापणे पण्यवेशनम् ॥

ततश्च सुगुप्ता सुजलाशया शोभनजलाशयसमन्विता पान्थशाला पथिकावासः कार्या । किंच, पुरे नगरे ग्रामे वा पङ्क्तितः श्रेणिक्रमेण सजातीयगृहाणां समानजातीयलोकानां गृहाणां प्रागुदङ्मुखं प्राङ्मुखं उदङ्मुखं वा इत्यर्थः, समुदायेन साकल्येन निवेशनम्, तथा आपणे निषद्यायां सजातिपण्यनिवहैः समानजातीनां पण्यानां विक्रेयद्रव्याणां निवहैः समुदायैः, तत्क्रमेण इत्यर्थः, पण्यवेशनं पण्यानां स्थापनं च, कर्तव्यमिति शेषः । शुनीटी.

(१) शुनी. १।२५०—२७५.

**धनिकादि क्रमेणैव राजमार्गस्य पार्श्वयोः ।**
**एवं हि पत्तनं कुर्याद्ग्रामं चैव नराधिपः ॥**

किंच, राजमार्गस्य पार्श्वयोः क्रमेण धनिकादि समृद्धजनादिकम्, स्थापयेदिति शेषः । नराधिपः राजा एवं हि ईदृशमेव पत्तनं नगरं ग्रामं च कुर्यात् । शुनीटी.

**राजमार्गास्तु कर्तव्याश्चतुर्दिक्षु नृपगृहात् ।**
**उत्तमो राजमार्गस्तु त्रिंशद्धस्तमितो भवेत् ॥**

नृपगृहात् चतुर्दिक्षु राजमार्गाः कर्तव्याः । तत्र त्रिंशद्धस्तमितः त्रिंशता हस्तैः परिमितः राजमार्गः उत्तमः भवेत् । शुनीटी.

**मध्यमो विंशतिकरो दशपञ्चकरोऽधमः ।**
**पण्यमार्गास्तथा चैते पुरग्रामादिषु स्थिताः ॥**

विंशतिकरः विंशतिहस्तपरिमितः राजमार्गः मध्यमः। दशपञ्चकरः पञ्चदशहस्तपरिमितः अधमः । तथा पुरग्रामादिषु एते पण्यमार्गाः पण्यानां विक्रयस्थानानां मार्गाश्च उच्छ्रिताः विशालाः, कर्तव्या इति शेषः । शुनीटी.

**करत्रयात्मिका पद्या वीथिः पञ्चकरात्मिका ।**
**मार्गो दशकरः प्रोक्तो ग्रामेषु नगरेषु च ॥**

पद्या केवलपादचारणयोग्या रथ्या करत्रयात्मिका त्रिहस्तमिता । वीथिः विपणिमार्ग इत्यर्थः, पञ्चकरात्मिका पञ्चहस्तमिता, कार्या इति शेषः । ग्रामेषु नगरेषु सामान्येन्नित्यर्थः, मार्गः दशकरः दशहस्तमितः प्रोक्तः कथितः । शुनीटी.

**प्राक्पश्चाद्दक्षिणोदक् तान् ग्राममध्यात्प्रकल्पयेत् ।**
**पुरं दृष्ट्वा राजमार्गान् सुबहून् कल्पयेन्नृपः ॥**

नृपः ग्राममध्ये प्राक् पश्चात् दक्षिणोदक् पूर्वपश्चिमदक्षिणोत्तरं दृष्ट्वा तान् मर्गान् पथः प्रकल्पयेत् । तथा पुरं दृष्ट्वा सुबहून् राजमार्गान् कल्पयेत् । शुनीटी.

**न वीथिं न च पद्यां हि राजधान्यां प्रकल्पयेत् ।**
**षड्योजनान्तरेऽरण्ये राजमार्गं तु चोत्तमम् ॥**

राजधान्यां वीथिं अल्पप्रसरां रथ्यां न प्रकल्पयेत् । पद्यां च केवलपादचारणयोग्यां रथ्यां च न प्रकल्पयेत् । हिशब्दः अवधारणे । तथा षड्योजनान्तरे चतुर्विंशतिक्रोशव्यवहिते अरण्ये अरण्ययानार्थमित्यर्थः, उत्तमं राजमार्गं प्रकल्पयेत् । शुनीटी.

**कल्पयेन्मध्यमं मध्ये तयोर्मध्ये तथाऽधमम् ।**
**दशहस्तात्मकं नित्यं ग्रामे ग्रामे नियोजयेत् ॥**

मध्ये चतुर्विंशतिक्रोशव्यवहितारण्यमध्ये इत्यर्थः, मध्यमं राजमार्गं तयोः मार्गयोः मध्ये च अधमं मार्गं कल्पयेत् । तथा ग्रामे ग्रामे प्रतिग्रामं दशहस्तात्मकं दशहस्तपरिमितं मार्गं नित्यं सततं योजयेत् स्थापयेत् । शुनीटी.

**कूर्मपृष्ठा मार्गभूमिः कार्या ग्राम्यैः सुसेतुका ।**
**कुर्यान्मार्गान् पार्श्वखातान्निर्गमार्थं जलस्य च ॥**

ग्राम्यैः ग्रामवासिभिः कूर्मपृष्ठा कमठपृष्ठाकारा उन्नतमध्या इत्यर्थः, तथा सुसेतुका शोभनसेतुयुक्ता मार्गभूमिः कार्या । किंच, ग्रामवासी जनः जलस्य निर्गमार्थं पार्श्वखातान् पार्श्वयोः खातान् मार्गान् कुर्यात् । शुनीटी.

**राजमार्गमुखानि स्युर्गृहाणि सकलान्यपि ।**
**गृहपृष्ठे सदा वीथिं मलनिर्हरणस्थलम् ॥**

सकलानि अपि गृहाणि राजमार्गे मुखं येषां तानि तथाभूतानि स्युः भवेयुः । गृहाणां पृष्ठे पृष्ठदेशे पश्चाद्भूमौ सदा मलनिर्हरणस्य मलनिष्कासनस्य स्थलं स्थानभूतं उपायस्वरूपमित्यर्थः, वीथिः अल्पप्रसरा रथ्या च, कार्या इति शेषः । शुनीटी.

**पङ्क्तिद्वयगतानां हि गेहानां कारयेत्तथा ।**
**मार्गान् सुधाशर्करैर्वा घटितान् प्रतिवत्सरम् ॥**

तथा प्रतिवत्सरं पङ्क्तिद्वयगतानां मार्गस्य उभयोः पार्श्वयोः श्रेणिबद्धानां गेहानां गृहाणां मार्गान् सुधाशर्करैः सुधासु चूर्णेषु यानि शर्कराणि कठिनद्रव्यविशेषाः तैः वा घटितान् निबद्धान्, कर्दमपरिहारार्थमिति भावः, कारयेत् । शुनीटी.

**अभियुक्तनिरुद्धैर्वा कुर्याद्ग्राम्यजनैर्नृपः ।**
**ग्रामद्वयान्तरे चैव पान्थशालां प्रकल्पयेत् ॥**
**नित्यं संमार्जितां चैव ग्रामपैश्च सुगोपिताम् ।**
**तत्राऽऽगतं तु संपृच्छेत्पान्थं शालाधिपः सदा ॥**

अभियुक्तैः संभ्रान्तैः जनैः निरुद्धैः अनुरुद्धैः संभ्रान्तजनानुरोधवशवर्तिभिरित्यर्थः, ग्राम्यजनैः। ग्राम्यजनेषु संभ्रान्तानामनुरोधः साहाय्यदानायेति बोद्धव्यम्। ( ग्रामे ग्रामे वा ? ) ग्रामयोर्मध्ये नित्यं संमार्जितां परिष्कृतां ग्रामपैः ग्रामीणैः सुगोपितां सुरक्षितां च पान्थशालां पथिकजनाश्रयं प्रकल्पयेत्। सदा पान्थशालाधिपः पान्थशालाध्यक्षः तत्र पान्थशालायां आगतं जनं संपृच्छेत्। शुनीटी.

प्रयातोऽसि कुतः कस्मात्क गच्छसि द्रुतं वद।
ससहायोऽसहायो वा किं सशस्त्रः सवाहनः॥
का जातिः किं कुलं नाम स्थितिः
कुत्रास्ति ते चिरम्।
इति पृष्ट्वा लिखेत्सायं शस्त्रं तस्य प्रगृह्य च॥
सावधानमना भूत्वा स्वापं कुर्विति शासयेत्।
तत्रस्थान् गणयित्वा तु शालाद्वारं पिधाय च॥
संरक्षयेद्यामिकैश्च प्रभाते तान् प्रबोधयेत्।
शस्त्रं दद्याच्च गणयेद्द्वारमुद्घाट्य मोचयेत्॥

पृच्छाप्रकारमाह–प्रयात इत्यादि। हे पथिक, कुतः कस्माद्देशात् प्रयातः आगतः असि ? क्व कुत्र गच्छसि ? त्वं ससहायः सानुचरः असहायः एकाकी वा ? शस्त्रधारी किम् ? वा सवाहनः वाहनेन अश्वादिना सहितः किम् ? द्रुतं शीघ्रं वद कथय। ते तव का जातिः ? किं कुलम् ? कस्मात् कुलादुत्पन्नोऽसीत्यर्थः। नाम किम् ? कुत्र चिरं स्थितिः अवस्थानं अस्ति ? इति पृष्ट्वा लिखेत्, पूर्वोक्तं सर्वमिति शेषः। सायं संध्यायां तु तस्य पथिकस्य शस्त्रं प्रगृह्य सावधानमना भूत्वा सतर्कः सन्नित्यर्थः, स्वापं कुरु निद्राहि इति तं शासयेत् उपदिशेत्। ततः तत्रस्थान् पथिकान् गणयित्वा संख्याय शालाद्वारं गृहद्वारं पिधाय आच्छाद्य निरुध्य इत्यर्थः, यामिकैः प्रहरिभिः संरक्षयेत् रक्षां कारयेत्। अथ प्रभाते द्वारमुद्घाट्य तान्, प्रबोधयेत् जागरयेत्। शस्त्रम्, तेषामिति शेषः, दद्यात् प्रत्यर्पयेत्, गणयेत् संख्यां कुर्यात्, तथा मोचयेत् विसर्जयेत्। शुनीटी.

कुर्यात्सहायं सीमान्तं तेषां ग्राम्यजनः सदा॥

ग्राम्यजनः सदा सर्वस्मिन् काले सीमान्तं स्वग्रामसीमापर्यन्तं तेषां पथिकानां सहायं सहगमनं कुर्यात्। शुनीटी.

## योगयात्रा

[1]वप्रप्राकारयन्त्रप्रहरणपरिखा-
तोयधान्येन्धनाढ्यं
दुर्गं कृत्वा प्रगुप्तं द्विपतुरगभिषक्-
छिल्पिविप्राभ्युपेतम्।
लुब्धत्रस्ताभिमानिप्रकुपितकुभृता-
ज्ञातशीलैर्विहीनं
कृत्वा शूराप्तसंस्थं परविषयमियात्-
च्छुद्धपार्ष्णिर्नरेन्द्रः॥

## नीतिवाक्यामृतम्

दुर्गव्युत्पत्तिः दुर्गद्वैविध्यं दुर्गसंपत् अदुर्गत्वदोषः परदुर्गलाभोपायश्च

[2]यस्याभियोगात्परे दुःखं गच्छन्ति दुर्जनोद्योगविषया* वा स्वस्याऽऽपदो गमयतीति दुर्गम्॥

अथ दुर्गसमुद्देशो लिख्यते। तत्राऽऽदावेव दुर्गलक्षणमाह–यस्येति। यस्य दुर्गस्य अभियोगात् प्राप्तेः परे शत्रवः दुःखं यान्ति। तथा दुर्जनान्वेषणायां यत्तद्ग्रहणार्थं योऽसावुद्यमः तस्य विषयः गोचरं यद्दुर्गं लक्ष्येन प्रविशति। तथा च व्यासः–'ज्ञेयं वप्रवनावासप्रासादानां च संभवम्। उत्तरे भूरिजं दानं ज्ञात्वा कार्ये विपद्भवम्॥'। तथा स्वस्य विजिगीषां( ? षोः ) स्वामिनः यद्दुर्गं नाशं

---

* 'विषयाः' इत्यत्र 'विषयः' इत्येकवचनान्तः पाठः व्याख्यानानुसारी। परं बहुवचनान्तः पाठ एव युक्ततरः। तथा च 'दुर्जनोद्योगविषयाः' इति आपद्विशेषणम्। दुर्गशब्दस्य तु व्युत्पत्तिद्वयमेवात्र प्रदर्श्यते। वाकारस्य सकृत्पाठोऽपि व्युत्पत्तिद्वयकल्पनायां क्लिश्यते। व्याख्यात्रा कल्पितं व्युत्पत्तित्रयं तु न सयुक्तिकमाभाति। व्याख्यानं चाशुद्धिसंकुलत्वाद्दुरूहाशयम्।

( १ ) योया. १।११.
( २ ) नीवा. २०।१–९.

-नयति। काम् ? आपदं व्यसनम्। तद्दुर्गमुच्यते। तथा च शुक्रः— 'यस्य दुर्गस्य संप्राप्तेः शत्रवो दुःखमाप्नुयुः। स्वामिनं रक्षयत्येव व्यसने दुर्गमेव तत्॥ दंष्ट्राविरहितः सर्पो यथा नागो मदच्युतः। दुर्गेण रहितो राजा तथा गम्यो भवेद्रिपोः॥' । अनु च— 'देशगर्भे तु यद्दुर्गं तद्दुर्गं शस्यते बुधैः। देशप्रान्तगतं दुर्गं न सर्वं रक्षितो जनैः (?)॥' । नीवाटी.

**तद्द्विविधमाहार्यं स्वाभाविकं च॥**

आहार्यं यत्स्वयं क्रियते। स्वाभाविकं यत्स्वयं जातं पर्वतदुर्गं जलदुर्गं स्थलदुर्गं च। नीवाटी.

**वैषम्यं पर्याप्तावकाशो यवसेन्धनोदकभूयस्त्वं स्वस्य परेषामभावो बहुधान्यरससंग्रहः प्रवेशापसारौ वीरपुरुषा इति दुर्गसंपत्, अन्यद्बन्दिशालावत्॥**

अथ दुर्गसंपदः स्वरूपमाह— वैषम्यमिति। दुर्गस्य याऽसौ संपत् विभूतिः सा किंविशिष्टा ? वैषम्यं तावत् विषमता पर्वतेन। तथा पर्याप्तावकाशः विस्तीर्णता। तथा यवसेन्धनोदकभूयस्त्वम्— यवसः घासः, इन्धनं काष्ठानि, उदकं पानीयम्, एतेषां त्रयाणां भूयस्त्वं प्रचुरत्वम्। कस्य ? स्वस्य आत्मनः। एतानि वस्तूनि यत्र दुर्गे। तथा एतेषां पूर्वोक्तानां परेषां शत्रूणां ये रोधार्थमागच्छन्ति तेषां अभावः। यत्र दुर्गद्वारे पूर्वोदितानि वस्तूनि न भवन्ति। तथा यत्र दुर्गे बहुधान्यरससंग्रहः प्रवेशापसारौ भवतः प्रभूतानि धान्यानि प्रभूताः रसाः अन्यद्वारेण प्रविशन्ति अपसरन्ति निर्गच्छन्तीति। निर्गमश्च प्रवेशश्च यस्मिन् दुर्गे तावुभौ सर्वेषामेव वस्तूनां तद्दुर्गम्। अन्यद्बन्दिशालेव। न दुर्गं तत् यदेवंविधं न स्यात्। गुप्तिरन्यथा। तथा च शुक्रः— 'न निर्गमः प्रवेशश्च यत्र दुर्गे प्रविद्यते। अन्यद्वारेण वस्तूनां न दुर्गं तद्धि गुप्तिदम्॥' । नीवाटी.

**अदुर्गो देशः कस्य नाम न परिभवास्पदम्॥**

अथ यस्मिन् देशे दुर्गं न भवति तत्स्वरूपमाह— अदुर्ग इति। यत्र देशे दुर्गं न भवति स देशः कस्य नाम अहो परिभवास्पदं परिभवस्थानं न भवति ? अपि तु सर्वेषामेव नृपशत्रूणाम्। नीवाटी.

**अदुर्गस्य राज्ञः पयोधिमध्ये पोतच्युतपक्षिवदापदि नास्त्याश्रयः॥**

अथ दुर्गरहितस्य राज्ञो यद्भवति तदाह— अदुर्गस्येति। दुर्गरहितस्य राज्ञः आश्रयः स्थानं नास्ति। कस्याम् ? आपदि व्यसने स्थिते। किंवत् ? पयोधिमध्ये पोतच्युतपक्षिवत्। यथा पयोधिमध्ये पोतच्युतस्य तीर्थभ्रष्टस्य पक्षिणः आश्रयो नास्ति तथा राज्ञो दुर्गरहितस्य। तथा च शुक्रः— 'दुर्गेण रहितो राजा पोतभ्रष्टो यथा खगः। समुद्रमध्ये स्थानं न लभते तद्वदेव सः॥' । नीवाटी.

**उपायतो गमनमुपजापश्चिरानुबन्धोऽवस्कन्दस्तीक्ष्णपुरुषोपयोगश्चेति परदुर्गलम्भोपायाः॥**

अथ जिगीषोः परदुर्गलम्भार्थमुपायानाह— उपायत इति। सामादिभिरुपायैस्तावत् शत्रुदुर्गाधिगमनम्। तथा उपजापः भेदः कार्यः। तथा चिरानुबन्धः चिरकालवेष्टनम्। तथा अवस्कन्दः *धाटीप्रदानच्छलेन। तथा तीक्ष्णपुरुषोपयोगः तीक्ष्णाः ये पुरुषाः घातकाः ते शत्रोः प्रहेतव्याः। यदि वा तीक्ष्णाः विषधराः तैः परदुर्गं शोधनीयम्। इत्येते परदुर्गहरणे विजिगीषोरुपायाः। तथा च शुक्रः— 'न युद्धेन प्रशक्यं स्यात् परदुर्गं कथंचन। मुक्त्वा भेदाद्युपायांश्च तस्मात्तान् विनियोजयेत्॥' । तथा च— 'शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः। परेषामपि वीर्याढ्यं तस्माद्दुर्गेण युध्यते॥' । नीवाटी.

**नामुद्रहस्तोऽशोधितो वा दुर्गमध्ये कश्चित् प्रविशेन्निर्गच्छेद्वा॥**

अथ राज्ञा दुर्गविषये यत्कर्तव्यं तदाह— नामुद्रहस्त इति। राज्ञो यद्दुर्गं तत्र मुद्रया बाह्यमशोधितस्य पुरुषस्य प्रवेशो न देयः निर्गमश्च न देयः। तथा च शुक्रः— 'प्रविशन्ति नरा यत्र दुर्गे मुद्राविवर्जिताः।

* धाटी शत्रुसंमुखगमनम्।

अशुद्धा निःसरन्ति स्म तद्दुर्गं तस्य नश्यति ॥ ' ।

नीवाटी.

श्रूयते किल हूणाधिपतिः पण्यपुटवाहिभिः सुभटैश्चित्रकूटं जग्राह ॥

अथ दुर्गविषये दृष्टान्तमाह– श्रूयत इति । एतत् किल श्रूयते– हूणाधिपतिर्यो राजा स जग्राह । किं तत् ? चित्रकूटम् । कैः कृत्वा ? सुभटैः । किंविशिष्टैः ? पण्यपुटवाहिभिः । पण्यपुटाः क्रियाणकानां स्थगिकाः प्रोच्यन्ते । तासां मध्ये प्रविश्य सायुधान् पुरुषान् प्रभूतांस्ततो रात्रौ निष्क्रामयित्वा दुर्गाधिपतिं व्यापाद्य जग्राह । तथा च गुरुः– ' भिन्दापयति यो राजा करिष्णाय( ? ) शलाकया । स्थगिका वणिजानां च तस्य दुर्गं न नश्यति ॥ ' ।

नीवाटी.

खेटखड्गधरैः सेवार्थं शत्रुणा भद्राख्यं काञ्चीपतिमिति ॥

अथान्यमपि दृष्टान्तमाह– खेटखड्गधरैरिति । तथा खेटखड्गधराः ये पुरुषाः नियोधकाः खेटेन अभ्यासेन ये खड्गं धरन्ति ते सेवार्थं काञ्चीपतेः शत्रुणा प्रहिताः । तैः भद्राख्यं काञ्चीपतिं व्यापाद्य स्वस्वामिनः काञ्ची दत्ता । एवं ज्ञात्वा परदेश(? शा)गतानां सेवकानां विश्वासो न कर्तव्यः । तथा च जैमिनिः– ' स्वदेश( ? विदेश )-जेषु भृत्येषु विश्वासं यो नृपो व्रजेत् । स द्रुतं नाशमायाति जैमिनिस्त्विदमब्रवीत् ॥ ' ।

नीवाटी.

## युक्तिकल्पतरुः

– दुर्गः एव द्वंद्वं द्वंद्वद्वैविध्यं द्वंद्वसंपच्च

अथ द्वंद्वयुक्तिः-

'राज्ञो बलं न हि बलं द्वंद्वमेव बलं बलम् ।
अप्यल्पबलवान् राजा स्थिरो द्वंद्वबलाद्भवेत् ॥

तथा च–

एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दश सहस्राणि तस्माद्दुर्गं विशिष्यते ॥
अकृत्रिमं कृत्रिमं च तत्पुनर्द्विविधं भवेत् ।
यद्दैवघटितं द्वंद्वं गिरिनद्यादिसंश्रितम् ॥
अकृत्रिममिदं ज्ञेयं दुर्लङ्घ्यमरिभूभुजाम् ।
प्राकारपरिखारण्यसंश्रयं यद्भवेदिह ॥
कृत्रिमं नाम विज्ञेयं लङ्घ्यालङ्घ्यं तु वैरिणाम् ॥

अथाकृत्रिमद्वंद्वयुक्तिर्यथा–

अत्युच्चविस्तीर्णशिरा दुरारोहः सकाननः ।
सजलाशयसंभारभोज्यद्रव्यसमाश्रयः ॥
सुखनिःसरणो द्वंद्वः पर्वताख्यो महीभुजाम् ।
नद्यो गभीरविस्तीर्णाश्चतुर्दिक्षु व्यवस्थिताः ॥
तन्मध्ये भूप्रदेशो यो नदीद्वंद्वः स उच्यते ।
यदन्यच्चिरकालीनं दुर्लङ्घ्यं विपिनादिकम् ॥
तन्मध्ये रचिता भूमिर्द्वंद्वत्वेनोपतिष्ठते ।
वनद्वंद्वमिति ख्यातं यथापूर्वं महत्तरम् ॥

कृत्रिमद्वंद्वयुक्तिर्यथा–

यस्मिन्राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः ।
तस्य मध्ये महीपालः कृत्रिमं द्वंद्वमारभेत् ॥
गजैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवायवः ।
द्वंद्वत्वेन समादिष्टाः परिखा बहुयादसः ॥
विशालशालं सुघनं बहुकण्टकसंकुलम् ।
द्वंद्वत्वेन समादिष्टं विस्तीर्णविषमं बलम् ॥
अधोऽधो बध्यमानोऽपि कन्दरो-
ऽल्पजलंस्रवन् ।
द्वंद्वत्वेन समादिष्टः सुदुर्लङ्घ्यो हि भूभुजाम् ।
सर्वतः परिखां कृत्वा निबन्धोपरिकन्दरम् ॥
तज्जलप्लुतदेशत्वाज्जलद्वंद्वं तदुच्यते ।
एषामभावे निम्नस्य भूप्रदेशस्य बन्धनात् ॥
वर्षास्वल्पगते वारि जलद्वंद्वं ततो भवेत् ।
एतयोरपि संमिश्रात्संमिश्रं द्वंद्वमाचरेत् ॥
आश्रित्वा कृत्रिमं द्वंद्वं बलवद्वैरिणो दिशि ।
अन्यत्र कृत्रिमद्वंद्वं कृत्वा नरपतिर्वसेत् ॥
रथपतिर्यदा वैरी जले द्वंद्वं तदाऽऽचरेत् ।
गजाश्वनाथश्चेद्वैरी जलद्वंद्वं तदाऽऽचरेत् ॥
गिरिद्वंद्वं नृपः सेवेन्मुख्यः स्याद्द्विविधो रिपुः ।
सर्वं हि त्रिविधं युद्धं ( ? द्वंद्वं ) समासादुप-
देक्ष्यते ॥

( १ ) युक. १७–२६।११७–१७५.

प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च ।
राज्यान्ते सैनिकान् रक्षेत्प्रकटे निवसेत्स्वयम् ॥
गुप्ते स्त्रीकोषसंभारं संरक्षेदिति निश्चयः ॥

अथ सामान्यतो गुणाः । तथाहि नीतिशास्त्रम् –

सप्रवेशापसरणं द्वंद्वमुत्तममुच्यते ।
अन्यत्र बन्दिशालेव न तादृग् द्वंद्वमाश्रयेत् ॥
धनुर्द्वंद्वं महीद्वंद्वं गिरिद्वंद्वं तथैव च ।
मनुष्यद्वंद्वसंसर्गं वरद्वंद्वं च तानि ( ? ) षट् ॥

अन्ये तु–

न द्वंद्वं द्वंद्वमित्याहुर्योद्धृद्वंद्वं प्रकीर्तितम् ।
योद्धृशून्यं हि यद्द्वंद्वं मृतकायसमं हि तत् ॥

अथान्यत्रापि–

यावत्प्रमाणं नगरं हि राज्ञां
ततो भवेदुत्तममध्यमान्त्यम् ।
त्रिंशच्च लक्षाष्टगुणोत्तरेण
त्रिदेशजानां धरणीपतीनाम् ॥

गर्गस्तु–

यदन्यद्द्विविधं द्वंद्वं प्रोच्यते धरणीभुजाम् ।
ताभ्यामेवातिरिच्येत मन्त्रद्वंद्वं विशेषतः ॥
अन्येषु दैवाद्भिन्नेषु मन्त्रद्वंद्वाज्जये नृपः ।
मन्त्रद्वंद्वे हि भिन्ने हि न चान्यत्कार्यकारणम् ॥

भोजस्तु–

यदैव वैरिदुर्लङ्घ्यं विस्तीर्णं विषमं च तत् ।
सप्रवेशापसरणं तद्द्वंद्वमुत्तमं विदुः ॥

आस्थाख्या राजधानी

अथ नगरनिर्माणादिकालः–

स्थिरराशिगते भानौ चन्द्रे च स्थिरभोदये ।
शुद्धे काले दिने चैव नगरं कारयेन्नृपः ॥

अथास्य लक्षणम् । भविष्योत्तरे–

दीर्घं वा चतुरस्रं वा नगरं कारयेन्नृपः ।
तद्द्वयं बहुलं वाऽपि कदाचिदपि कारयेत् ॥
दीर्घः पादैकप्रसरः चतुरस्रः समोचितः ।
त्रिभिः पादैः समं त्र्यस्रं वर्तुलं वलयाकृति ॥

दीर्घं स्याद्दीर्घकालाय सुखसंपत्तिहेतवे ।
चतुरस्रं चतुर्वर्गफलाय पृथिवीपतेः ॥
त्र्यस्रं त्रिशक्तिनाशाय वर्तुलं बहुरोगकृत् ।
राज्ञः स्वहस्तैर्दशभी राजहस्त उदाहृतः ॥
राजहस्तैस्तु दशभी राजदण्ड उदाहृतः ।
राजदण्डैश्च दशभी राजच्छत्रमुदाहृतम् ॥
राजच्छत्रैस्तु दशभी राजकाण्ड उदाहृतः ।
राजकाण्डैश्च दशभी राजपूरुष उच्यते ॥
राजधानी तु कथिता दशभी राजपूरुषैः ।
राजधानी दशगुणा राजक्षेत्रमुदाहृतम् ॥
सप्तैव परिमाणानि प्रोक्तानि पुरपत्तने ।
भयश्रीभोगसंपत्तिमृत्युकीर्तिसुखार्थिनाम् ॥
राजक्षेत्रेण नृपतिः पुरपत्तनमारभेत् ।
लक्ष्मीर्जयः क्षमा सौख्यं पञ्चत्वं भङ्ग एव च ॥
समृद्धिर्वित्तनाशश्च मङ्गलं च बलक्षयः ।
साम्राज्यं भोगसंपत्तिरिति षोडश (?) कीर्तिताः ॥
यथार्थसंज्ञा नगरी मुनिना तत्त्ववेदिना ॥

अथ वसतिलक्षणम् –

विस्तीर्णमध्यो नगरः सममर्धे चतुष्पथः ।
प्रपामण्डपकासारकाननाद्युपशोभितः ॥
ईशानपूर्वप्लवनो मध्यस्थानसमुन्नतः ।
रोगकृद्दक्षिणप्लावी धनदश्चोत्तरप्लवः ॥
पश्चिमप्लवनो ग्रामसुखसंपत्तिनाशनः ।
मध्ये निम्नो दरिद्रत्वं प्रान्ते निम्नः सुखं वहेत् ॥
त्रिपथाद्राजदण्डेषु राजच्छत्रे चतुष्पथे ।
राजकाण्डे मण्डपिका सरसी राजपूरुषे ॥
राजधान्यन्तरे हट्टं राजक्षेत्रे च दुग्धकम् ।
मध्ये साधुमृदुभिषग्दैवज्ञान् वासयेदथ ॥
प्रान्ते म्लेच्छान्त्यजक्रूरवीरसैनिककर्कशान् ।
गोपुरे सैनिकान् वीरान्मन्त्रिणो भवनान्तिके ॥
मन्त्रिणः प्रतिवेशित्वं कदाचिदपि नाऽऽचरेत् ।
तयोर्हि प्रतिवेशित्वे दुर्मन्त्रोऽपि च जायते ॥
नियोगिनां स्थितिं कुर्यान्नगरे चान्तरेऽन्तरा ।
नियोगिमन्त्रिणोर्दृष्टिः कार्यध्वंसाय कल्पते ॥

मन्त्रिणो दूरवसतिः कर्म कुर्यान्न सत्वरम् ।
नवकं नवकद्वारं नैकद्वारं समारभेत् ॥
न विषमं नाविषमं न समं नासमं तथा ।
न मध्ये हस्तिनां वासो न प्रान्ते वाजिनां तथा ॥
नादूरे पत्तिवसतिर्न दूरे साधुमन्त्रिणोः ।
न वर्णिनो नाधिकाङ्गान्न हीनान्न च उद्धतान् ॥
न देशान्तरगान्नोच्चान्न महाव्याधिपीडितान् ।
स्वपुरे रक्षयेद्राजा यदीच्छेदात्मनः श्रियम् ॥
न भृत्यशाला स्वपुरे न वाऽध्ययनशालिका ।
तत्र शत्रुचरः स्थित्वा सर्वं वेत्ति बलाबलम् ॥

भोजेनापि नगरयुक्तिरन्यथोक्ता । तद्यथा–

राजस्वहस्तैः कोट्या च राजक्षेत्रमुदाहृतम् ।
एतेन परिमाणेन भूपः पत्तनमारभेत् ॥
यस्मिन् लग्ने भवेज्जन्म महीभर्तुर्महीतले ।
तद्दण्डराजक्षेत्रेण राजा पत्तनमारभेत् ॥

एतेन मेषादिषु पादोनचतुर्दण्डादिषु मानेषु जातस्य नृपतेः चतुर्भी राजक्षेत्रैः पुरपत्तनमिति भोजाभिप्रायः । शेषं समानम् । पराशरसंहितायां तु मानं तदेव, किंतु युक्तिरन्या । तद्यथा–

यस्य ग्रहस्य जायेत दशायां नृपतिर्भुवि ।
दशाब्दसंहितै राजक्षेत्रैर्नगरमारभेत् ॥

अथ दोषगुणौ–

परलग्नदशामानमिते परकृतेऽथवा ।
नगरे यो वसेद्राजा सोऽचिरान्मृत्युमाप्नुयात् ॥
परदारेषु यो दोषस्तथा परपुरीषु च ।
यदीच्छेच्छाश्वतीं लक्ष्मीं तदेतदुभयं त्यजेत् ॥
निजलग्नदशामानमिते निजकृते नवे ।
नगरे यो वसेद्राजा लक्ष्मीस्तस्यैव शाश्वती ॥
नैकद्वारं वास्तुखण्डं न चतुर्द्वारमारभेत् ।
एकद्वारं दुःसरणं चतुर्द्वारं दुरापहम् ॥
त्रिद्वारमेव नृपतेर्वास्तुकर्म प्रशस्यते ।
द्वे मुख्ये तत्र चान्यत्स्यादमुख्यमिति निर्णयः ॥
राजद्वारं तु तत्रैकं यमद्वारं तथाऽपरम् ।
अपद्वारं तथाऽन्यत्स्यादिति द्वारस्य निर्णयः ॥
ब्रह्मक्षत्रियवैश्यानां प्रागुदक्पश्चिमैः क्रमात् ।
मुख्यद्वारं दक्षिणस्य परं तस्यापि दक्षिणे ॥
बलवद्वै वैरिमुख्यं द्वारमित्यस्य संमतम् ।
राजद्वारेऽन्यभूपानां शिष्टानां वा प्रवेशयेत् ॥
यात्रा प्रसादपर्वाणि राजद्वारेषु कारयेत् ।
यमद्वारे च्छिदाकर्म द्विषतां च प्रवेशनम् ॥
निःसारणं मृतानां च दुष्टानां च निबन्धनम् ।
अपद्वारेऽवरोधस्य गमनागमनक्रिया ।
राज्ञो विलासयात्रा च मर्मज्ञस्य प्रवेशनम् ॥

अथ प्राचीरनिर्णयः–

गजैरभेद्या मनुजैरलङ्घ्याः प्राचीरखण्डा नृपतेर्भवन्ति ॥
राजदण्डोन्नताः सर्वे प्राचीराः पृथिवीभुजः ।
विंशतिस्तेषु पश्चाग्रे पार्श्वयोः पञ्च पञ्च च ॥
पश्चात्पञ्च च विज्ञेयाः प्राचीराः पृथिवीभुजः ।
सर्वप्रान्ते त्वावरणो नाम प्राचीर उच्यते ॥
प्रतिप्राकारसंस्थानं द्वारं नाभिमुखस्थितम् ॥

तत्र जयाख्यस्य दीर्घस्य वास्तुखण्डस्य निर्णयः । तद्यथा–

राजच्छत्रान्तरे पञ्च राजद्वारे महीपतेः ।
राजदण्डत्रये सार्धे यमद्वारे प्रतिष्ठिताः ॥
अद्वारे राजदण्डार्धे प्राचीराः पृथिवीपतेः ।
एवं व्यवस्थिते स्थाने मध्यमे तद्धि तिष्ठति ॥
राजच्छत्रद्वयं सार्धमायामे जयवास्तुनि ।
परिणाहे पञ्च राजदण्डास्तिष्ठन्ति मध्यतः ॥
राजपट्टाभिधानेन स्थानमेतन्निगद्यते ।
अस्मिन् गृहं नृपः कृत्वा सुचिरं सुखमश्नुते ॥
अज्ञानाद्दम्भतो राजा योऽन्यत्र गृहमारभेत् ।
सोऽचिरान्मृत्युमाप्नोति रोगं शोकभयं तथा ॥
यमदण्डोदयदण्डौ कोणा ईविरुपप्लवः ।
ये चान्ये वास्तुदोषाः स्युः स्थाने दोषाश्च ये पुनः ॥

(१) युक्. २४–४५।२२७–३०८.

न स्पृश्यते राजपट्टस्तैः सर्पैर्गरुडो यथा ।
द्विगुणादिरतोऽपि स्यात्क्रमाद्वङ्गादिवास्तुषु ।
राजच्छत्रमितेऽप्येवं प्राचीरे गुणदोषकौ ॥
अथ जयाख्यस्य चतुरस्रस्य वास्तुखण्डनिर्णयः-
राजद्वारे हि प्राकारा राजच्छत्रान्तरे मताः ।
यमद्वारे सार्धराजच्छत्रान्ते रचयेन्नृपः ॥
अपद्वारे राजदण्डं जित ( ? )
आरम्भिताः पुनः ।
अद्वारे भूपतेस्तस्य राजदण्डत्रयान्तरे ॥
एवं व्यवस्थिते स्थाने मध्यमे तत्प्रदृश्यते ।
आयामे राजच्छत्राणि चत्वारि परिणाहतः ॥
राजच्छत्रैकमानेन राजदण्ड उदाहृतः ।
अयं च सप्तमो भागो वास्तोर्भवति शोभनः ॥
अस्मिन् गृहं नृपः कृत्वा
सुचिरं पाति मेदिनीम् ।
अस्मिन् विजयवृद्धिं च
सौख्यं च समवाप्नुयात् ॥
यो राजा दम्भतोऽन्यत्र वेश्मारम्भं समाचरेत् ।
य उक्तो राजदण्डोऽयं तस्येदं स्थानपञ्चकम् ॥
गजो व्याघ्रश्च सिंहश्च मृगो
भृङ्गो यथाक्रमम् ।
सिंहे सिंहासनस्थानं व्याघ्रे स्याद्वारमन्दिरम् ॥
गजे यात्रालयं कुर्यान्मृगे केलिनिकेतनम् ।
भ्रमरेऽन्तःपुरं कुर्यात्क्रमेण पृथिवीपतेः ॥
तेन मध्यममेव सिंहासनं दीर्घस्य च चतुरस्रकैः ।
तत्र भविष्योत्तरे—
मेषादिचन्द्रे जातस्य नृपतेः स्युरनुक्रमात् ।
द्वादशैव गृहान्वक्ष्ये तेषां लक्षणमग्रतः ॥
सुनन्दः सर्वतोभद्रो भव्यो नान्दीमुखस्तथा ।
विनोदश्च विलासश्च विजयो विमलस्तथा ।
वङ्गः केलिर्जयो वीरो द्वादशैते प्रकीर्तिताः ॥
अथैषां लक्षणानि-
यदत्रैवोच्यते मानं तस्य तेनैव कल्पना ।
राज्ञः स्वहस्तमेकं तु दीर्घे सर्वत्र निक्षिपेत् ॥

आयामेन सुनन्दः स्याद्राजहस्तैश्च पञ्चभिः ।
परिणाहे चतुर्भिश्च राजहस्तैः प्रतिष्ठितः ॥
अस्याधिदेवता भौमो रक्षतीयं वसुंधरा ।
द्वाराणि विंशतिश्चास्य रक्तचित्रावृतानि च ॥
रक्तपट्टावृतो गेहः सकलार्थप्रसाधकः ।
अत्र स्थित्वा महिपालः सुचिरं पाति मेदिनीम् ॥
दीर्घे एकपञ्चाशत्, प्रस्थे चत्वारिंशत् । इति सुनन्दः ।
द्वौ राजहस्तावायामे परिणाहे तथैव च ।
इत्ययं सर्वतोभद्रः शुक्रश्चास्याधिदेवता ॥
दानवा रक्षकाश्चैव पूज्यास्ते चात्र यत्नतः ।
चतुर्दशास्य द्वाराणि कृष्णचित्रावृतानि च ॥
पीतपट्टावृतो ह्येष सर्वानिष्टविनाशनः ।
अत्र स्थित्वा महीपालः सर्वान् शत्रून्निकृन्तति ॥
दीर्घे एकविंशतिः, प्रस्थे विंशतिः । इति सर्वतोभद्रः ।
अष्टकोणो भवेद्भव्यः कोणो हस्तचतुष्टयम् ।
राजहस्तोन्नतः कार्यो बुधश्चास्याधिदेवता ॥
रक्षका वसवश्चास्य पूज्यास्तत्र प्रयत्नतः ।
अष्टौ द्वाराणि चास्य स्युः पीतचित्रावृतानि च ॥
पीतपट्टावृतो ह्येष सर्वानिष्टविनाशनः ।
तत्र स्थाता क्षितिपतिर्न रिष्टैरवमृद्यते ॥
राजदण्डो भवेद्दीर्घः प्रसरे राजहस्तकः ।
राजहस्ते राजहस्ते प्रकोष्ठान् तत्र कारयेत् ॥
अयं नान्दीमुखो नाम चन्द्रश्चास्याधिदेवता ।
नक्षत्रलोकः पूज्योऽत्र स यस्मादस्य रक्षकः ॥
द्वाविंशतिस्तु द्वाराणि दीर्घे दश तथाऽन्तरे ।
अन्यत्र दीर्घ एकं स्यात्प्रसरे एकमेव च ॥
दीर्घद्वितये दश द्वाराणि प्रसरद्वितय एकं कृत्वा वा द्वितीयमेवं द्वाविंशतिर्द्वाराणि ।
शुक्लचित्रेण सहितः शुक्लपट्टेन शोभितः ।
सर्वार्थसाधको राज्ञां लक्ष्मीविजयवर्धनः ॥

दीर्घे एकादश, प्रस्थे दश । इति नान्दीमुखः ।
दीर्घे त्रयो राजहस्ताः प्रसरे द्वौ प्रतिष्ठितौ ।
विनोद एष द्वाराणि त्रिंशत्कोष्ठद्वयं भवेत् ॥
रक्तचित्रेण चित्राङ्गो रक्तवस्त्रोपशोभितः ।
अत्र स्थाता नरपतिर्भवेत्कीर्तिप्रतापवान् ।
सूर्योऽधिदेवता चास्य रक्षकाः सकलग्रहाः ॥
दीर्घे एकत्रिंशत् , प्रस्थे विंशतिः ।
दीर्घेन राजदण्डार्थं प्रसरे राजहस्तकौ ।
विलास एष द्वाराणि चत्वारिंशद्बुधा विदुः ॥
गन्धर्वा राक्षसाश्चास्य प्रकोष्ठत्रितयं भवेत् ।
चित्रपद्मेन शङ्खेन चित्रवस्त्रेण शोभितः ॥
दुर्भिक्षशमनो ह्येष शस्यसंपत्तिकारकः ।
अत्र स्थित्वा नरपतिः प्रचुरं सुखमश्नुते ॥
दीर्घे एकपञ्चाशत्, प्रस्थे विंशतिः । इति विलासगृहम् ।
द्वादशहस्तप्रसरे दीर्घे द्वौ राजहस्तकौ कथितौ ।
विजये द्वादशभवनद्वाराणि स्युर्जयप्रदान्यत्र ॥
सूर्योऽधिदेवता चास्य रक्षतीमं विहंगराट् ।
अरुणाम्भोजचित्राङ्गो अरुणाम्बरभूषितः ।
अत्र स्थित्वा नरपतिः कृत्स्नां शास्ति वसुंधराम् ॥
दीर्घे एकविंशतिः , प्रस्थे द्वादश ।
आयामे राजदण्डौ द्वौ प्रसरे राजदण्डकः ।
शतद्वारोपसहितः प्रकोष्ठैर्दशभिर्युतः ॥
दिक्पाला रक्षकाश्चास्य कुजश्चास्याधिदेवता ।
नानावर्णेन चित्रेण वसनेन विभूषितः ॥
अत्र स्थित्वा नरपतिः सुचिरं सुखमश्नुते ।
यस्मिन्राज्ये प्रतिष्ठेह विमलो गृहसत्तमः ॥
दुर्भिक्षं नात्र जायेत नेतयो न च विप्लवः ।
न रोगो नापि शोकश्च नैवोत्पातभयं तथा ।
पत्यादिगुणबाहुल्यमन्यत्र कथितं बुधैः ॥
दैर्घ्ये द्विशतम् , प्रस्थे एकशतम् ।
आयामपरिणाहाभ्यां राज्ञः षोडशहस्तकः ।
द्वाराणि षोडशैवास्य गुरुरस्याधिदेवता ॥

रक्षिका देवता चास्य शुक्लवस्त्रैर्विभूषितम् ।
अत्र स्थित्वा नरपतिः सर्वार्थान्भुवि साधयेत् ॥
दैर्घ्ये सप्तदश, प्रस्थे षोडश । इति वज्रः ।
आयामे राजदण्डः स्यात्प्रसरे च तदर्धकम् ।
दश प्रकोष्ठद्वाराणि शनिरस्याधिदेवता ॥
पिशाचा रक्षकाश्चास्य नीलवस्त्रादिभूषणम् ।
नाम्नाऽयं केलिराख्यातो भयरोगविनाशनः ॥
अत्र स्थित्वा नरपतिः सुखं विजयते रिपून् ॥
दैर्घ्ये एकशतम् , प्रस्थे पञ्चाशत् । इति केलिः ।
राजहस्तेन कोणः स्यादेवं केलिश्चतुर्दश ।
चतुर्दशैव द्वाराणि राहुरस्याधिदेवता ॥
नक्तंचरा रक्षकाश्च नानावर्णाम्बरादिकम् ।
अयं जयः प्रकटितः सर्वत्रैव जयप्रदः ॥
आयामे राजहस्तः स्यात्परिणाहेऽष्टहस्तकम् ।
नानारूपं कुटीरूपो वीरो नाम जयप्रदः ॥
बृहस्पतिर्देवताऽस्य रक्षकाश्चास्य खेचराः ।
विचित्रवसनोपेतः सर्वकामार्थदायकः ॥
दैर्घ्ये एकादश, प्रस्थे अष्टौ । इति वीरः ।
यो यस्य गदितो वर्णस्तथा स्याच्चामरोऽपि च ।
राजहस्तान्तरे पञ्च चामराः स्युर्महीभुजाम् ॥
चन्द्रोऽपि दर्पणे हस्त उपरिक्रमतो न्यसेत् ।
पताकाध्वजयुक्तश्च गृहरक्षसरक्षसाम् ॥
छत्रयुक्तं गृहं राज्ञां विजयं चक्रवर्तिनाम् ॥
एषां नियमः परवत् ।
इति द्वादश चिह्नानि गृहाणां कथितानि वै ।
विमृष्यैतानि नृपतिर्गृहारम्भं समाचरेत् ॥
इति सिंहासनस्थानमिति राष्ट्रस्य मस्तकम् ।
इतोऽन्ये चित्तहर्षार्थाः प्रासादाः पृथिवीभुजः ॥
जलयन्त्रादयो येऽन्ये तेषां नास्ति विनिश्चयः ।
स्वजन्मगेहसंस्थो यो नृपतिः शुभचेतनः ॥
स चिरं पृथिवीं शास्ति सर्वार्थान् साधयत्यपि ।
यो वा तत्परगेहस्थो दुर्मोहाद्धरणीपतिः ।
न चिरं पाति वसुधां घोरं रोगं च विन्दति ॥

स्खलम्रपतिमित्रस्य गृहवारो न दुष्यति ॥

परं च–

हीरकस्य विशुद्धस्य ब्रह्मजातेर्महाद्युतेः ।
सूर्यांशुस्पर्शमात्रेण वमतो दीप्तिमच्छिखाः ॥
गृहाग्रे धारयेद्राजा तद्वज्रं वज्रधारणम् ॥

वात्स्यस्तु–

गृहेषु मणिविन्यासो विधेयः सदनोपरि ।
तेन सर्वाणि नश्यन्ति अरिष्टानि महीभुजाम् ॥

भोजोऽपि–

वास्तुखण्डाब्जरूपः स्याद्यथार्थैर्नामभिः स्वकैः ।
यमद्वारात्समारभ्य यावदद्वारमिष्यते ॥

तद्यथा–

मृत्युर्भयं स्थिरश्चण्डो धनं विभव एव च ।
वीरस्तापश्च इत्यष्टौ वास्तुभागा यथाक्रमम् ॥
यमनैर्ऋततोयेशवायुयक्षेशशंकराः ।
इन्द्रो वह्निरिति प्रोक्ता विभागानामधीश्वराः ॥
मृत्यौ कारालयं कुर्याद्भयस्थाने च पत्तयः ।
स्थिरे सहचरान् रक्षेच्चण्डे वाजिगजादयः ॥
धने धान्यादिकं रक्षेद्विभवे कोषरक्षणम् ।
राजपट्टं भवेद्वीरस्तापे कश्चिन्नवालयेत् ।
प्राचीरप्रतिभागान्ते इति भोजस्य सन्मतम् ॥

तत्र वास्तुप्लवलक्षणम्–

वास्तुमानेन नियमो गृहमानेन निर्णयः ।
पूर्वप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः ॥
दक्षिणे मृत्युदो वास्तुर्धनहा पश्चिमप्लवः ।
कोणे रेखाद्वयं कृत्वा मध्ये रेखाद्वयं तथा ॥
ऐशानकोणतो रेखा दक्षिणाद्यैर्ध्वजास्तथा ।
नाचामरो नामणिश्च नापताकोऽपि नाध्वजः ॥
नाकुम्भादिर्नावितानो नाचित्रो नातिचित्रधृक् ।
नात्युच्चो नातिनीचो वा नाप्रकीर्णः प्रकीर्णकः ॥
नाधातुर्नागवाक्षश्च न चैकानेकद्वारभाक् ।
नियमस्तु महीन्द्राणां सर्वसंपत्तिहेतवे ॥

## मानसोल्लासः

नव दुर्गप्रकाराः

[१]जलदुर्गं गिरिदुर्गं दुर्गं पाषाणनिर्मितम् ।
इष्टिकाभिः कृतं दुर्गं दुर्गं स्यान्मृत्तिकामयम् ॥
वनदुर्गं मरुदुर्गं दुर्गं दारुविनिर्मितम् ।
नरदुर्गं च नवमं तेषां वक्ष्यामि लक्षणम् ॥
अगाधेनाथ तोयेन वेष्टितं जलजं भवेत् ।
दुरारोहं च शैलाग्रमुदकेन समन्वितम् ॥
गिरिदुर्गं समाख्यातं नयशास्त्रविशारदैः ।
पाषाणघटितं दुर्गमश्मदुर्गमुदीरितम् ॥
इष्टिकाभिः कृतं सम्यक् सुधालिप्तं समुज्ज्वलम् ।
इष्टिकादुर्गमाख्यातं परिखावेष्टितं महत् ॥
मृदा विरचितं यत्तु तद्दुर्गं मृत्तिकामयम् ।
वनदुर्गं समाख्यातं घनं कण्टकशाखिभिः ॥
अन्तःस्थैः संचितं तोयं बहिःस्थानां च दुलभम् ।
मरुदुर्गं समाख्यातं मरुदेशसमं यतः ॥
दारुभिर्वेणुभिः क्लृप्तं दुर्गं दारुमयं स्मृतम् ।
शस्त्रहस्तैर्महायोधैर्निर्मितं नरदुर्गकम् ॥
एतेषामुत्तमं दुर्गं गिरिजं जलजं तथा ।
मध्यमानीतराण्याहुः कनिष्ठं स्याच्च दारुजम् ॥
दुर्गे यन्त्राणि कार्याणि नाना प्रहरणानि च ।
दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥
संचयश्चात्र सर्वेषामायुधानां विधीयते ।
अश्मनां च प्रभूतानां सिकतानां तथैव च ॥
कुद्दालरज्जुवेत्राणां पिटकानां तथैव च ।
सर्वेषां शिल्पभाण्डानां तत्र संचय इष्यते ॥
औषधानां च सर्वेषां वादित्राणां तथैव च ।
यवसानां प्रभूतानामिन्धनानां च संचयः ॥
गुडस्य सर्वतैलानां घृतस्य मधुनस्तथा ।
तथा च सर्वधान्यानां पशुगोमययोरपि ॥
कुम्भेष्वाशीविषा धार्या व्याघ्राः सिंहाश्च बन्धनैः ।
अन्यानि सर्ववस्तूनि दुर्गे संचिनुयान्नृपः ॥

---

(१) मासो. २।५४१—५५५.

## अनिर्दिष्टकर्तृकवचनानि

### दुर्गलक्षणम्

[1]चत्वारिंशत्समायुक्तं दण्डानां षट्शतं मतम् ।
दुर्गस्य विस्तरं दैर्घ्यं विदध्यादधमस्य च ॥

शतैश्च सप्तभिः कुर्याच्चतुर्भिः सह मध्यमम् ।
अष्टषष्टियुतैः श्रेष्ठं दण्डानां सप्तभिः शतैः ॥

विस्तारं चाऽऽयतं कुर्याद्दुर्गलक्षणमीरितम् ॥

(१) राकौ. ११७ सिद्धान्तशेखरे.

## शङ्खलिखितौ

योधानां वृत्तिदेयादिविचारः

[1]वाहनयोधानां सततमन्वीक्षणम् । प्रतिमासं द्विसौवर्णिकी वृत्तिः । षाण्मास्यं स्मरणं चातुर्मास्यं वा । [1]स्वर्यातेषु दानमनुक्रोशो विदितेष्वनुप्रदानं कुलचारित्रशीलविद्यालक्षणगुणाधिकेषु संमानं प्रयुञ्जीत ॥

( १ ) स्वर्यातेषु दानमित्यादि । राजकार्येण मृतेषु योधेषु तत्पुत्रादिभ्यो दानं दया च राज्ञा विधातव्या । प्रसिद्धेषु तु योधेषु दानवेतनादधिकमपि वस्त्रादि देयमित्यर्थः । राक. ८२

( २ ) षाण्मास्यं स्मरणमिति । षड्भिर्मासैः चतुर्भिर्वा मासैः अतिक्रान्तैः सद्भिः स्मृत्वा वेतनं देयमित्यर्थः । स्वर्यातेषु मृतेषु । मृतेषु योधेषु दानदययोरसंभवात् तत्पुत्रादिषु दानदये विधेये । विदितेषु युद्धादौ कृतकार्यतया प्रसिद्धेषु । अनुप्रदानं वेतनादधिकं वस्त्रादि देयमित्यर्थः । राप्र.२५२

## महाभारतम्

चतुरङ्गसेनाविभागवाचकानां पत्ति–सेनामुख–गुल्म–गण–वाहिनी–पृतना–चमू–अनीकिनी–अक्षौहिणीतिपदानां विवरणम्

[2]एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥

पदातय इति रथादिगतानां नराणां व्युदासः । नीटी.

पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥

त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥

चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥

[1]अक्षौहिण्याः प्रसंख्यानं रथानां द्विजसत्तमाः ।
संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥

[2]शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ।
गजानां तु परीमाणमेतदेवात्र निर्दिशेत् ॥

[3]ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव ।
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥

[4]पञ्चषष्टिसहस्राणि तथाऽश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया ॥
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ॥

' अक्षौहिण्याः परीमाणं खाद्रिधृत्यक्षिभिर्गजैः (२१८७०) । रथैरेतैः( २१८७० )र्हयैस्त्रिघ्नैः (६५६१०) पञ्चघ्नैश्च (१०९३५०) पदातिभिः ॥ ' इति संग्रहः । नीटी.

सेनाया दोषः भेदः

[5]भिन्ना हि सेना नृपते दुःसंधेया भवत्युत ।
मौलाऽपि पुरुषव्याघ्र किमु नाना समुत्थिता ॥

---

(१) राक. ८१–८२ स्यं स्म ( स्यस्म ) णगुणाधि ( णाधि ) ; राप्र. २५२.

(२) भा. १।२।१५–१८ ; भामु. १।२।१९–२२.

(१) भा. १।२।१९ ; भामु. १।२।२३ ख्यानं ( ख्याता ).

(२) भा. १।२।२० ; भामु. १।२।२४ तु ( च ) वात्र नि ( व विनि ).

(३) भा. १।२।२१ ; भामु. १।२।२५ तथा नव ( नवैव तु ).

(४) भा. १।२।२२–२३ ; भामु. १।२।२६–२७.

(५) भा. ५।१६५।१८ ; भामु. ५।१६८।२० मौलाऽपि ( मौला हि ) मुत्थिता ( मुत्थिताः ).

मौलाः पारम्पर्यागताः, तेऽपि भिन्नाः सन्तो दुःसंधेया भवन्ति, किमु नाना पृथग्भूताः सन्त एककार्यार्थं समुत्थिता इति। नीटी.

प्रकाशाप्रकाशभेदेन दण्डद्वैविध्यम्, प्रकाशदण्डोऽष्टविधः

*[1]प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः।
प्रकाशोऽष्टविधस्तत्र गुह्यस्तु बहुविस्तरः॥
रथा नागा हयाश्चैव पादाताश्चैव पाण्डव।
विष्टिर्नावश्चराश्चैव देशिकाः पथि चाष्टकम्॥
अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु।
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः॥
स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः॥

गान्धारादिदेशभेदेन योधलक्षणानि

युधिष्ठिर उवाच—
[2]किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत।
किंसंनाहाः कथंशस्त्रा जनाः स्युः संयुगे नृप॥

भीष्म उवाच—
[3]यथाचरितमेवात्र शस्त्रपत्रं विधीयते।
आचारादेव पुरुषस्तथा कर्मसु वर्तते॥

आचरितं कुलदेशाचारागतम्। पत्रं वाहनम्। नीटी.

[4]गान्धाराः सिन्धुसौवीरा नखरप्रासयोधिनः।
आभीरवः सुबलिनस्तद्बलं सर्वपारगम्॥

[1]सर्वशस्त्रेषु कुशलाः सत्त्ववन्तो ह्युशीनराः।
प्राच्या मातङ्गयुद्धेषु कुशलाः शठयोधिनः॥
[2]तथा यवनकाम्बोजा मथुरामभितश्च ये।
एते नियुद्धकुशला दाक्षिणात्याऽसिचर्मिणः॥

नियुद्धं बाहुयुद्धम्। दाक्षिणात्याः असिपाणयः इति च्छेदः। संधिरार्षः। नीटी.

विविधानि शूरप्रकृतिलक्षणानि अन्त्यजशूरलक्षणानि च

[3]सर्वत्र शूरा जायन्ते महासत्त्वा महाबलाः।
प्राय एष समुद्दिष्टो लक्षणानि तु मे शृणु॥

सर्वत्र सर्वदेशे। समुद्दिष्टः प्रख्यातः। नीटी.

[4]सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः।
पारावतकुलिङ्गाक्षाः सर्वे शूराः प्रमाथिनः॥

पारावतकुलिङ्गाक्षाः। 'कुलिङ्गो भूमिकूष्माण्डे मतङ्गजभुजंगयोः' इति मेदिनी। सर्पाक्षत्वं शूरलक्षणम्। 'कुलिन्दाक्षाः' इति पाठेऽपि कुलिन्दः पक्षिविशेषः। नीटी.

[5]मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथाऽपरे।
प्रवादिनः सुचण्डाश्च क्रोधिनः किंनरीस्वनाः॥
[6]मेघस्वनाः क्रुद्धमुखाः केचित्करभनिस्वनाः।
जिह्मनासानुजङ्घाश्च दूरगा दूरपातिनः॥

करभः उष्ट्रः। नीटी.

---

* अस्य सार्धश्लोकत्रयस्य व्याख्यानं शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ५७४) द्रष्टव्यः।

(१) भा. १२।५९।४०–४३.

(२) भा. १२।१०२।१; भामु. १२।१०१।१ मुत्थानाः (माचाराः) युगे नृप (गरे क्षमाः).

(३) भा. १२।१०२।२; भामु. १२।१०१।२ शस्त्रपत्रं (शस्त्रं पत्रं) देव पु (द्वीरपु).

(४) भा. १२।१०२।३; भामु. १२।१०१।३ आभी (अभी).

(१) भा. १२।१०२।४; भामु. १२।१०१।४ शठ (कूट).

(२) भा. १२।१०२।५; भामु. १२।१०१।५ चर्मिणः (पाणयः).

(३) भा. १२।१०२।६; भामु. १२।१०१।६ एष (एव) दिष्टो (दिष्टा).

(४) भा. १२।१०२।७; भामु. १२।१०१।७.

(५) भा. १२।१०२।८; भामु. १२।१०१।८ थाऽपरे (रस्विनः) उत्तरार्धे (प्रमादिनश्च मन्दाश्च क्रोधनाः किङ्किणीस्वनाः॥).

(६) भा. १२।१०२।९; भामु. १२।१०१।९ क्रुद्ध (क्रोध) निस्वनाः (संनिभाः) नुजङ्घा (प्राजिह्मा).

[1]बिडालकुब्जास्तनवस्तनुकेशास्तनुत्वचः ।
शूराश्चपलचित्ताश्च ते भवन्ति दुरासदाः ॥

[2]गोधानिमीलिताः केचिन्मृदुप्रकृतयोऽपि च ।
तुरंगगतिनिर्घोषास्ते नराः पारयिष्णवः ॥

[3]सुसंहताः प्रतनवो व्यूढोरस्काः सुसंस्थिताः ।
प्रवादितेन नृत्यन्ति हृष्यन्ति कलहेषु च ॥

[4]गम्भीराक्षा निःसृताक्षाः पिङ्गला भ्रुकुटीमुखाः ।
नकुलाक्षास्तथा चैव सर्वे शूरास्तनुत्यजः ॥

[5]जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽपि च ।
वक्रबाह्वङ्गुलीसक्ताः कृशा धमनिसंतताः ॥

जिह्माक्षाः कुटिलदृशः । प्रललाटाः उन्नतकपालाः । नीटी.

[6]प्रविशन्त्यतिवेगेन संपरायेऽभ्युपस्थिते ।
वारणा इव संमत्तास्ते भवन्ति दुरासदाः ॥

[7]दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः ।
उन्नतांसाः पृथुग्रीवा विकटाः स्थूलपिण्डिकाः ॥

दीप्तः पिङ्गलः । स्थूलाः दीर्घाः पिण्डिकाः जानुनोरधःपश्चाद्भागाः येषाम् । नीटी.

(१) भा. १२।१०२।१० ; भामु. १२।१०१।१० ब्जास्त ( ब्जत ) शूरा ( शीघ्रा ) चित्ता ( वृत्ता ).

(२) भा. १२।१०२।११ ; भामु. १२।१०१।११ योऽपि च ( यस्तथा ).

(३) भा. १२।१०२।१२ ; भामु. १२।१०१।१२ प्रत ( सुत ) तेन नृत्यन्ति ( तेषु कुप्यन्ति ).

(४) भा. १२।१०२।१३ ; भामु. १२।१०१।१३ पिङ्गला ( पिङ्गाक्षा ).

(५) भा. १२।१०२।१४ ; भामु. १२।१०१।१४ वक्र ( वज्र ) सक्ताः ( चक्राः ).

(६) भा. १२।१०२।१५ ; भामु. १२।१०१।१५ शन्त्यति ( शन्ति च ) संपरायेऽभ्यु ( सांपराये ह्यु ).

(७) भा. १२।१०२।१६ ; भामु. १२।१०१।१६.



[1]उद्वृत्ताश्चैव सुग्रीवा विनता विहगा इव ।
पिण्डशीर्षाहिवक्त्राश्च वृषदंशमुखा इव ॥

सुग्रीवाः वासुदेवाश्वाः इव उद्धताः, विनताविहगाः गरुडाः तद्वत् उद्धताः उत्पतन्तः । पिण्डशीर्षाः वृत्तशिरसः । अतिवक्त्राः विस्तीर्णमुखाः । संधिरार्षः समासो वा । वृषदंशः मार्जारः । नीटी.

[2]उग्रस्वना मन्युमन्तो युद्धेष्वारावसारिणः ।
अधर्मज्ञावलिप्ताश्च घोरा रौद्रप्रदर्शिनः ॥

[3]त्यक्तात्मानः सर्व एते अन्त्यजा ह्यनिवर्तिनः ।
पुरस्कार्याः सदा सैन्ये हन्यन्ते घ्नन्ति चापि ते ॥

अन्त्यजाः प्रान्तदेशोद्भवाः कैवर्तभिल्लादयः । नीटी.

[4]अधार्मिका भिन्नवृत्ताः साध्वेवैषां पराभवः ।
एवमेव प्रकुप्यन्ति राज्ञोऽप्येते ह्यभीक्ष्णशः ॥

योधसंग्रहविधिः, अष्टाङ्गं बलम्

[5]योधाश्चैव मनुष्येन्द्र सर्वैर्गुणगणैर्वृताः ॥

[6]अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणाः ।
न विमानयितव्याश्च राज्ञा वृद्धिमभीप्सता ॥

[7]योधाः समरशौटीराः कृतज्ञाः शस्त्रकोविदाः ।
धर्मशास्त्रसमायुक्ताः पदातिजनसंयुताः ॥

(१) भा. १२।१०२।१७ ; भामु. १२।१०१।१७ उद्वृत्ताश्चैव ( उद्धता इव ) र्षाहि ( र्षाति ) खा इव ( खास्तथा ).

(२) भा. १२।१०२।१८ ; भामु. १२।१०१।१८ स्वना ( स्वरा ) दर्शिनः ( दर्शनाः ).

(३) भा. १२।१०२।१९ ; भामु. १२।१०१।१९ ते ( ये ).

(४) भा. १२।१०२।२० ; भामु. १२।१०१।२० साध्वेवैषां ( सान्त्वेनैषां ).

(५) भा. १२।११८।२३ ; भामु. १२।११८।२३ सर्वैर्गु ( सर्वे गु ).

(६) भा. १२।११८।२४ ; भामु. १२।११८।२४ रणाः ( रणे ) व्याश्च ( व्यास्ते ).

(७) भा. १२।११८।२५ ; भामु. १२।११८।२५ युताः ( वृताः ).

[1]अर्थमानविवृद्धाश्च रथचर्याविशारदाः ।
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ॥
[2]सर्वसंग्रहणे युक्तो नृपो भवति यः सदा ।
उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः ॥
[3]शक्या अश्वसहस्रेण वीरारोहेण भारत ।
संगृहीतमनुष्येण कृत्स्ना जेतुं वसुंधरा ॥
[4]हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च ।
दैशिकाश्चारकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥
[5]अनुरक्तेन पुष्टेन हृष्टेन जगतीपते ।
अल्पेनापि हि सैन्येन महीं जयति पार्थिवः ॥
*[6]बुभूषेद्बलवानेव सर्वं बलवतो वशे ।
श्रियं बलममात्यांश्च बलवानिह विन्दति ॥

यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम् ।
बह्वपथ्यं बलवति न किंचित्त्रायते भयात् ॥
उभौ सत्याधिकारौ तौ त्रायेते महतो भयात् ।
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ॥
बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः ।
धूमो वायोरिव वशं बलं धर्मोऽनुवर्तते ॥

* अस्य श्लोकपञ्चकस्य व्याख्यानं शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे ( पृ. ६३० ) द्रष्टव्यः ।

(१) भा. १२।११८।२६ ; भामु. १२।११८।२६ प्रथमचरणे ( अभया गजपृष्ठरथाः ).

(२) भा. १२।११८।२७ ; भामु.

(३) भा. १२।११८।२८ ; भामु. १२।११८।२८ अश्व ( चाश्व ).

(४) भा. १२।१२१।४३ ; भामु. १२।१२१।४४ रका ( विका ).

(५) भा. १२।१२९।११ ; भामु. १२।१३१।११ पुष्टेन ( चेष्टेन ) पते ( पतिः ) पार्थिवः ( भूमिपः ); राक. ९५ पूर्वार्धे ( अनुरक्तेन हृष्टेन पुष्टेन च महीपते । ) अल्पे ( स्वल्पे ); राप्र. २७६–२७७ राकवत्.

(६) भा. १२।१३२।३–७.

अनीश्वरे बलं धर्मो द्रुमं वल्लीव संश्रिता ।
वश्यो बलवतां धर्मः सुखं भोगवतामिव ।
नास्त्यसाध्यं बलवतां सर्वं बलवतां शुचि ॥

### असिः प्रहरणानां श्रेष्ठः, असेरुत्पत्तिकथा असिधारकपरम्परा च

वैशम्पायन उवाच–

[1]कथान्तरमथाऽऽसाद्य खड्गयुद्धविशारदः ।
नकुलः शरतल्पस्थमिदमाह पितामहम् ॥

कथान्तरं आपद्धर्माणां साङ्गानां समाप्तत्वात् कथाया अवसानम् । आसाद्य प्राप्य । नीटी.

नकुल उवाच–

[2]धनुः प्रहरणं श्रेष्ठमिति वादः पितामह ।
मतस्तु मम धर्मज्ञ खड्ग एव सुसंशितः ॥

मम तु मनः खड्गेऽस्ति । यतः सुसंशितः सम्यग्विनीतः आत्मा खड्गेन परिरक्षितुं शक्यते इति द्वितीयेनान्वयः । नीटी.

[3]विशीर्णे कार्मुके राजन् प्रक्षीणेषु च वाजिषु ।
खड्गेन शक्यते युद्धे साध्वात्मा परिरक्षितुम् ॥
[4]शरासनधरांश्चैव गदाशक्तिधरांस्तथा ।
एकः खड्गधरो वीरः समर्थः प्रतिबाधितुम् ॥
[5]अत्र मे संशयश्चैव कौतूहलमतीव च ।
किंस्वित्प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ॥
[6]कथं चोत्पादितः खड्गः कस्यार्थाय च केन वा ।
पूर्वाचार्यं च खड्गस्य प्रब्रूहि प्रपितामह ॥

(१) भा. १२।१६०।१ ; भामु. १२।१६६।१.

(२) भा. १२।१६०।२ ; भामु. १२।१६६।२ मिति वादः ( मतीवात्र ) तस्तु ( नस्तु ).

(३) भा. १२।१६०।३ ; भामु. १२।१६६।३.

(४) भा. १२।१६०।४ ; भामु. १२।१६६।४ स्तथा ( स्तदा ).

(५) भा. १२।१६०।५ ; भामु. १२।१६६।५.

(६) भा. १२।१६०।६ ; भामु. १२।१६६।६ द्वितीयचरणे ( कस्मै चार्थाय केन च ).

वैशम्पायन उवाच–

[१]तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
सर्वकौशलसंयुक्तं सूक्ष्मचित्रार्थवच्छुभम् ॥

[२]ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम् ।
शिक्षान्यायोपसंपन्नं द्रोणशिष्याय पृच्छते ॥

[३]उवाच सर्वधर्मज्ञो धनुर्वेदस्य पारगः ।
शरतल्पगतो भीष्मो नकुलाय महात्मने ॥

भीष्म उवाच–

[४]तत्त्वं शृणुष्व माद्रेय यदेतत्परिपृच्छसि ।
प्रबोधितोऽस्मि भवता धातुमानिव पर्वतः ॥

धातुमान् गैरिकवान्, रुधिरोक्षितत्वात् । नीटी.

सलिलैकार्णवं तात पुरा सर्वमभूदिदम् ।
निष्प्रकम्पमनाकाशमनिर्देश्यमहीतलम् ॥

[५]तमःसंवृतमस्पर्शमतिगम्भीरदर्शनम् ।
निःशब्दं चाप्रमेयं च तत्र जज्ञे पितामहः ॥

[६]सोऽसृजद्वायुमग्निं च भास्करं चापि वीर्यवान् ।
आकाशमसृजच्चोर्ध्वमधो भूमिं च नैर्ऋतिम् ॥

[७]नभः सचन्द्रतारं च नक्षत्राणि ग्रहांस्तथा ।
संवत्सरानहोरात्रानृतूनथ लवान् क्षणान् ॥

(१) भा. १२।१६०।७ ; भामु. १२।१६६।७ सर्व ( स तु ) वच्छुभम् ( संमतम् ).

(२) भा. १२।१६०।८ ; भामु. १२।१६६।८ उत्तरार्धे ( शिक्षया चोपपन्नाय द्रोणशिष्याय भारत ॥ ).

(३) भा. १२।१६०।९ ; भामु. १२।१६६।९ सर्व ( स तु ).

(४) भा. १२।१६०।१०–११ ; भामु. १२।१६६।१०–११.

(५) भा. १२।१६०।१२ ; भामु. १२।१६६।१२ तमःसं ( तमसाऽऽ ).

(६) भा. १२।१६०।१३ ; भामु. १२।१६६।१३ द्वायु ( द्वात ).

(७) भा. १२।१६०।१४ ; भामु. १२।१६६।१४ नहोरात्रानृतून ( नृतून् मासान् पक्षान ).

[१]ततः शरीरं लोकस्थं स्थापयित्वा पितामहः ।
जनयामास भगवान् पुत्रानुत्तमतेजसः ॥
मरीचिमृषिमत्रिं च पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठाङ्गिरसौ चोभौ रुद्रं च प्रभुमीश्वरम् ॥

[२]प्राचेतसस्तथा दक्षः कन्याः षष्टिमजीजनत् ।
ता वै ब्रह्मर्षयः सर्वाः प्रजार्थं प्रतिपेदिरे ॥

[३]ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा ।
गन्धर्वाप्सरसश्चैव रक्षांसि विविधानि च ॥

[४]पतत्रिमृगमीनाश्च प्लवंगाश्च महोरगाः ।
नानाकृतिबलाश्चान्ये जलक्षितिविचारिणः ॥

[५]औद्भिदाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ।
जज्ञे तात तथा सर्वं जगत्स्थावरजङ्गमम् ॥

[६]भूतसर्गमिमं कृत्वा सर्वलोकपितामहः ।
शाश्वतं वेदपठितं धर्मं च युयुजे पुनः ॥

[७]तस्मिन् धर्मे स्थिता देवाः सहाचार्यपुरोहिताः ।
आदित्या वसवो रुद्राः ससाध्या मरुदश्विनः ॥

[८]भृग्वत्र्यङ्गिरसः सिद्धाः काश्यपश्च तपोधनः ।
वसिष्ठगौतमागस्त्यास्तथा नारदपर्वतौ ॥

(१) भा. १२।१६०।१५–१६ ; भामु. १२।१६६।१५–१६.

(२) भा. १२।१६०।१७ ; भामु. १२।१६६।१७ न्याः ष ( न्याष ).

(३) भा. १२।१६०।१८ ; भामु. १२।१६६।१८.

(४) भा. १२।१६०।१९ ; भामु. १२।१६६।१९ उत्तरार्धे ( तथा पक्षिगणाः सर्वे जलस्थलविचारिणः ॥ ).

(५) भा. १२।१६०।२० ; भामु. १२।१६६।२० औद्भिदाः ( उद्भिदः ) अण्ड ( साण्ड ) तथा सर्वं जगत् ( जगत् सर्वं तथा ).

(६) भा. १२।१६०।२१ ; भामु. १२।१६६।२१ च यु ( प्रयु ) पुनः ( ततः ).

(७) भा. १२।१६०।२२ ; भामु. १२।१६६।२२.

(८) भा. १२।१६०।२३ ; भामु. १२।१६६।२३ पश्च ( पाश्च ) धनः ( धनाः ).

[1]ऋषयो वालखिल्याश्च प्रभासाः सिकतास्तथा।
घृताचाः सोमवायव्या वैखानसमरीचिपाः ॥

[2]अकुष्टाश्चैव हंसाश्च ऋषयोऽथाग्नियोनिजाः।
वानप्रस्थाः पृश्नयश्च स्थिता ब्रह्मानुशासने ॥

[3]दानवेन्द्रास्त्वतिक्रम्य तत्पितामहशासनम्।
धर्मस्यापचयं चक्रुः क्रोधलोभसमन्विताः ॥

हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः।
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥

एते चान्ये च बहवः सगणा दैत्यदानवाः।
धर्मसेतुमतिक्रम्य रेमिरेऽधर्मनिश्चयाः ॥

[4]सर्वे स्म तुल्यजातीया यथा देवास्तथा वयम्।
इत्येवं हेतुमास्थाय स्पर्धमानाः सुरर्षिभिः ॥

[5]न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत।
त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः।
न जग्मुः संविदं तैश्च दर्पादसुरसत्तमाः ॥

[6]अथ वै भगवान् ब्रह्मा ब्रह्मर्षिभिरुपस्थितः।
तदा हिमवतः पृष्ठे सुरम्ये पद्मतारके ॥

पद्मानीव तारका यत्र लग्नाः तस्मिन् पद्मतारके। अत्यन्तमुच्छ्रिते इत्यर्थः। नीटी.

(१) भा. १२।१६०।२४ ; भामु. १२।१६६।२४ घृताचाः ( घृतपाः ) वैखानस ( वैश्वानर ).

(२) भा. १२।१६०।२५ ; भामु. १२।१६६।२५ ऽथाग्नियोनिजाः ( वाऽग्नियोनयः ).

(३) भा. १२।१६०।२६–२८; भामु. १२।१६६। २६–२८.

(४) भा. १२।१६०।२९ ; भामु. १२।१६६।२९ स्म तुल्य ( तुल्याभि ) हेतु ( धर्मं ).

(५) भा. १२।१६०।३० ; भामु. १२।१६६।३०–३१ नाति ( नुपा ).

(६) भा. १२।१६०।३१ ; भामु. १२।१६६।३१–३२ पृष्ठे ( शृङ्गे ).

[1]शतयोजनविस्तारे मणिमुक्ताचयाचिते।
तस्मिन् गिरिवरे पुत्र पुष्पितद्रुमकानने।
तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ॥

[2]ततो वर्षसहस्रान्ते वितानमकरोत्प्रभुः।
विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ॥

[3]ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः।
मरुद्भिः परिसंस्तीर्णं दीप्यमानैश्च पावकैः ॥

[4]काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलंकृतम्।
वृतं देवगणैश्चैव प्रबभौ यज्ञमण्डलम् ॥

[5]तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम्।
तत्र घोरतमं वृत्तमृषीणां मे परिश्रुतम् ॥

[6]चन्द्रमा विमलं व्योम यथाऽभ्युदिततारकम्।
विदार्याग्निं तथा भूतमुत्थितं श्रूयते ततः ॥

[7]नीलोत्पलसवर्णाभं तीक्ष्णदंष्ट्रं कृशोदरम्।
प्रांशु दुर्दर्शनं चैवाप्यतितेजस्तथैव च ॥

[8]तस्मिन्नुत्पतमाने च प्रचचाल वसुंधरा।
तत्रोर्मिकलिलावर्तश्चुक्षुभे च महार्णवः ॥

(१) भा. १२।१६०।३२; भामु. १२।१६६।३२–३३ मुक्ता ( रत्न ).

(२) भा. १२।१६०।३३ ; भामु. १२।१६६।३४ यथोक्तेनो ( यथावचो ).

(३) भा. १२।१६०।३४ ; भामु. १२।१६६।३५ मरुद्भिः ( समिद्भिः ) स्तीर्णं ( कीर्णं ).

(४) भा. १२।१६०।३५ ; भामु. १२।१६६।३६ प्रबभौ ( प्रवरैः ).

(५) भा. १२।१६०।३६ ; भामु. १२।१६६।३७.

(६) भा. १२।१६०।३७ ; भामु. १२।१६६।३८ दार्या ( कीर्या ) ततः ( तदा ).

(७) भा. १२।१६०।३८; भामु. १२।१६६।३९ उत्तरार्धे ( प्रांशुं सुदुर्धर्षतरं तथैव ह्यमितौजसम् ॥ ).

(८) भा. १२।१६०।३९ ; भामु. १२।१६६।४० उत्तरार्धे ( महोर्मिकलितावर्तश्चुक्षुभे स महोदधिः ॥ ).

[1]पेतुरुल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः ।
अप्रसन्ना दिशः सर्वाः पवनश्चाशिवो ववौ ।
मुहुर्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा ॥

[2]ततः सुतुमुलं दृष्ट्वा तदद्भुतमुपस्थितम् ।
महर्षिसुरगन्धर्वानुवाचेदं पितामहः ॥

[3]मयैतच्चिन्तितं भूतमसिर्नामैष वीर्यवान् ।
रक्षणार्थाय लोकस्य वधाय च सुरद्विषाम् ॥

[4]ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः ।
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ॥

[5]ततस्तं शितिकण्ठाय रुद्रायर्षभकेतवे ।
ब्रह्मा ददावसिं दीप्तमधर्मप्रतिवारणम् ॥

[6]ततः स भगवान् रुद्रो ब्रह्मर्षिगणसंस्तुतः ।
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ॥

[7]चतुर्बाहुः स्पृशन् मूर्ध्ना भूस्थितोऽपि नभस्तलम् ।
ऊर्ध्वदृष्टिर्महालिङ्गो मुखाज्ज्वालाः समुत्सृजन् ।
विकुर्वन् बहुधा वर्णान्नीलपाण्डुरलोहितान् ॥

[8]बिभ्रत्कृष्णाजिनं वासो हेमप्रवरतारकम् ।
नेत्रं चैकं ललाटेन भास्करप्रतिमं महत् ।
शुशुभाते च विमले द्वे नेत्रे कृष्णपिङ्गले ॥

(१) भा. १२।१६०।४० ; भामु.१२।१६६।४१–४२ सन्ना ( शान्ता ).

(२) भा. १२।१६०।४१; भामु.१२।१६६।४२–४३ सुतु ( स तु ) तदद्भुत ( तं च भूत ).

(३) भा. १२।१६०।४२ ; भामु.१२।१६६।४३–४४ यैतच्चि ( यैवं वि ).

(४) भा. १२।१६०।४३ ; भामु.१२।१६६।४४–४५.

(५) भा. १२।१६०।४४ ; भामु.१२।१६६।४५–४६ तस्तं ( तः स ) यर्ष ( याऽऽर्ष ) दीप्त ( तीक्ष्ण ).

(६) भा. १२।१६०।४५ ; भामु.१२।१६६।४६–४७ ब्रह्मर्षिगण ( महर्षिजन ).

(७) भा. १२।१६०।४६ ; भामु.१२।१६६।४७–४८ नभस्तलम् ( दिवाकरम् ).

(८) भा. १२।१६०।४७ ; भामु.१२।१६६।४९–५० महत् ( वहन् ) च वि ( ऽतिवि ).

[1]ततो देवो महादेवः शूलपाणिर्भगाक्षिहा ।
संप्रगृह्य तु निस्त्रिंशं कालाग्निनलसंनिभम् ॥

[2]त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम् ।
चचार विविधान् मार्गान् महाबलपराक्रमः ।
विधुन्वन्नसिमाकाशे दानवान्तचिकीर्षया ॥

त्रिकूटं त्रीणि कूटानि कपटानि पार्श्वयोरग्रे च तीक्ष्णधाररूपाणि परविदारकाणि यस्मिन् । नीटी.

[3]तस्य नादं विनदतो महाहासं च मुञ्चतः ।
बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥

[4]तद्रूपधारिणं रुद्रं रौद्रकर्म चिकीर्षवः ।
निशम्य दानवाः सर्वे हृष्टाः समभिदुद्रुवुः ॥

[5]अश्मभिश्चाप्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः ।
घोरैः प्रहरणैश्चान्यैः शितधारैरयोमुखैः ॥

[6]ततस्तद्दानवानीकं संप्रणेतारमच्युतम् ।
रुद्रखड्गबलोद्भूतं प्रचचाल मुमोह च ॥

[7]चित्रं शीघ्रतरत्वाच्च चरन्तमसिधारिणम् ।
तमेकमसुराः सर्वे सहस्रमिति मेनिरे ॥

(१) भा. १२।१६०।४८ ; भामु.१२।१६६।५०–५१ चतुर्थचरणे ( कालाग्निसमवर्चसम् ).

(२) भा. १२।१६०।४९ ; भामु.१२।१६६।५१–५२ दानवान्त ( तथा युद्ध ).

(३) भा. १२।१६०।५०; भामु.१२।१६६।५२–५३.

(४) भा. १२।१६०।५१ ; भामु.१२।१६६।५३–५४ र्षवः ( र्षया ).

(५) भा. १२।१६०।५२ ; भामु.१२।१६६।५४–५५ श्चाप्य ( श्चाभ्य ) शित ( क्षुर ) मुखैः ( मयैः ).

(६) भा. १२।१६०।५३ ; भामु.१२।१६६।५५–५६ स्तद्दा ( स्तु दा ) उत्तरार्धे ( रुद्रं दृष्ट्वा बलोद्भूतं प्रमुमोह चचाल च ॥ ).

(७) भा. १२।१६०।५४ ; भामु.१२।१६६।५६–५७ तर ( पद ) धारिणम् ( पाणिनम् ).

[1]छिन्दन्भिन्दन्रुजन्कृन्तन्दारयन्प्रमथन्नपि ।
अचरद्दैत्यसंघेषु रुद्रोऽग्निरिव कक्षगः ॥

[2]असिवेगप्ररुग्णास्ते छिन्नबाहूरुवक्षसः ।
संप्रकृत्तोत्तमाङ्गाश्च पेतुरुर्व्यां महासुराः ॥

[3]अपरे दानवा भग्ना रुद्रघातावपीडिताः ।
अन्योन्यमभिनर्दन्तो दिशः संप्रतिपेदिरे ॥

[4]भूमिं केचित्प्रविविशुः पर्वतानपरे तथा ।
अपरे जग्मुराकाशमपरेऽम्भः समाविशन् ॥

[5]तस्मिन् महति संवृत्ते समरे भृशदारुणे ।
बभौ भूमिः प्रतिभया तदा रुधिरकर्दमा ॥

[6]दानवानां शरीरैश्च महद्भिः शोणितोक्षितैः ।
समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ॥

[7]रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा ।
रक्तार्द्रवसना श्यामा नारीव मदविह्वला ॥

[8]स रुद्रो दानवान् हत्वा कृत्वा धर्मोत्तरं जगत् ।
रौद्रं रूपं विहायाऽऽशु चक्रे रूपं शिवं शिवः ॥

(१) भा. १२।१६०।५५ ; भामु.१२।१६६।५७–५८ न्प्रमथ ( न्पोथय ) दैत्य ( द्वैरि ) रुद्रोऽ ( दावा ).

(२) भा. १२।१६०।५६ ; भामु.१२।१६६।५८–५९ रुग्णा ( भग्ना ) उत्तरार्धे ( संप्रकीर्णान्त्रगात्राश्च पेतुरुर्व्यां महाबलाः ॥ ).

(३) भा. १२।१६०।५७ ; भामु.१२।१६६।५९–६० रुद्रघा ( खड्गपा ).

(४) भा. १२।१६०।५८ ; भामु.१२।१६६।६०–६१.

(५) भा. १२।१६०।५९ ; भामु.१२।१६६।६१–६२ बभौ भूमिः ( बभूव भूः ) तदा रुधिर ( मांसशोणित ).

(६) भा. १२।१६०।६० ; भामु.१२।१६६।६२–६३ महद्भिः ( पतितैः ).

(७) भा. १२।१६०।६१.

(८) भा. १२।१६०।६२ ; भामु.१२।१६६।६३–६४ पं विहायाऽऽशु ( पमथोत्क्षिप्य ).

[1]ततो महर्षयः सर्वे सर्वे देवगणास्तथा ।
जयेनाद्भुतकल्पेन देवदेवमथार्चयन् ॥

[2]ततः स भगवान् रुद्रो दानवक्षतजोक्षितम् ।
असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ॥

[3]विष्णुर्मरीचये प्रादान्मरीचिर्भगवांश्च तम् ।
महर्षिभ्यो ददौ खड्गमृषयो वासवाय तु ॥

[4]महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक ।
मनवे सूर्यपुत्राय ददुः खड्गं सुविस्तरम् ॥

[5]ऊचुश्चैनं तथैवाऽऽर्यं मानुषाणां त्वमीश्वरः ।
असिना धर्मगर्भेण पालयस्व प्रजा इति ॥

[6]धर्मसेतुमतिक्रान्ताः सूक्ष्मस्थूलार्थकारणात् ।
विभज्य दण्डं रक्ष्याः स्युर्धर्मतो न यदृच्छया ॥

स्थूलसूक्ष्मात्मकारणात्— स्थूलः आत्मा शरीरम्, सूक्ष्मः आत्मा मनः, तयोः प्रीणनार्थम् । नीटी.

[7]दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा ।
व्यङ्गनं च शरीरस्य वधो वाऽनल्पकारणात् ॥

[8]असेरेतानि रूपाणि दुर्वाचादीनि निर्दिशेत् ।
असेरेव प्रमाणानि परिमाणव्यतिक्रमात् ॥

दुर्वारादीनि इत्यत्र दुर्वाचादीनि इति साधीयान् पाठः । नीटी.

(१) भा. १२।१६०।६३ ; भामु. १२।१६६। ६४–६५ वम ( वं त ).

(२) भा. १२।१६०।६४ ; भामु.१२।१६६।६५–६६.

(३) भा. १२।१६०।६५ ; भामु.१२।१६६।६६–६७ वांश्च तम् ( वानपि ) तु ( च ).

(४) भा. १२।१६०।६६ ; भामु.१२।१६६।६७–६८.

(५) भा. १२।१६०।६७ ; भामु.१२।१६६।६८–६९ तथैवाऽऽर्यं ( तथा वाक्यं ).

(६) भा. १२।१६०।६८ ; भामु.१२।१६६।६९–७० सूक्ष्मस्थूलार्थ ( स्थूलसूक्ष्मात्म ) स्युर्ध ( तु ध ).

(७) भा. १२।१६०।६९ ; भामु.१२।१६६।७०–७१ व्यङ्गनं ( व्यङ्गता ).

(८) भा. १२।१६०।७० ; भामु.१२।१६६।७१–७२ दुर्वाचा ( दुर्वारा ) रेव ( रेवं ) माण ( पाल्य ).

[1]अधिसृज्याथ पुत्रं स्वं प्रजानामधिपं ततः ।
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ॥
[2]क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः ।
आयुश्च तस्माल्लेभे तं नहुषश्च ततो भुवि ॥
[3]ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान् ।
आमूर्तरयसस्तस्मात्ततो भूमिशयो नृपः ॥
[4]भरतश्चापि दौःषन्तिर्लेभे भूमिशयादसिम् ।
तस्माच्च लेभे धर्मज्ञो राजन्नैडबिडस्तथा ॥
[5]ततश्चैडबिडाल्लेभे धुन्धुमारो जनेश्वरः ।
धुन्धुमाराच्च काम्बोजो मुचुकुन्दस्ततोऽलभत् ॥
[6]मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः ।
रैवताद्युवनाश्वश्च युवनाश्वात्ततो रघुः ॥
इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रतापवान् ।
हरिणाश्वादसिं लेभे शुनकः शुनकादपि ॥
[7]उशीनरो वै धर्मात्मा तस्माद् भोजाः सयादवाः ।
यदुभ्यश्च शिबिर्लेभे शिबेश्चापि प्रतर्दनः ॥
[8]प्रतर्दनादष्टकश्च रुशदश्वोऽष्टकादपि ।
रुशदश्वाद्भरद्वाजो द्रोणस्तस्मात्कृपस्ततः ।
ततस्त्वं भ्रातृभिः सार्धं परमासिमवाप्तवान् ॥

(१) भा. १२।१६०।७१ ; भामु. १२।१६६।७२–७३ अधि ( स वि ).

(२) भा. १२।१६०।७२ ; भामु. १२।१६६।७३–७४.

(३) भा. १२।१६०।७३ ; भामु. १२।१६६।७४–७५ आमू (अमू).

(४) भा. १२।१६०।७४; भामु. १२।१६६।७५–७६ दौःषन्ति ( दौष्यन्ति ) च लेभे ( लभे च ) डबिड ( लविल ).

(५) भा. १२।१६०।७५; भामु. १२।१६६।७६–७७ श्चैडबिडा ( स्त्वैलविला ).

(६) भा. १२।१६०।७६–७७; भामु. १२।१६६।७७–७९.

(७) भा. १२।१६०।७८ ; भामु. १२।१६६।७९–८० जाः सयादवाः ( जः सयादवः ).

(८) भा. १२।१६०।७९ ; भामु. १२।१६६।८०–८१ रुशद (पृषद ).

[1]कृत्तिकाश्चास्य नक्षत्रमसेरग्निश्च दैवतम् ।
रोहिण्यो गोत्रमस्याथ रुद्रश्च गुरुरुत्तमः ॥
[2]असेरष्टौ च नामानि रहस्यानि निबोध मे ।
पाण्डवेय सदा यानि कीर्तयँल्लभते जयम् ॥
[3]असिर्विशसनः खड्गस्तीक्ष्णवर्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥
[4]अग्र्यः प्रहरणानां च खड्गो माद्रवतीसुत ।
महेश्वरप्रणीतश्च पुराणे निश्चयं गतः ॥
[5]पृथुस्तूत्पादयामास धनुराद्यमरिंदम ।
तेनेयं पृथिवी पूर्वं वैन्येन परिरक्षिता ॥
[6]तदेतदार्षं माद्रेय प्रमाणं कर्तुमर्हसि ।
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ॥
[7]इत्येष प्रथमः कल्पो व्याख्यातस्ते सुविस्तरः ।
असेरुत्पत्तिसंसर्गो यथावद्भरतर्षभ ॥
[8]सर्वथैतदिह श्रुत्वा खड्गसाधनमुत्तमम् ।
लभते पुरुषः कीर्तिं प्रेत्य चाऽऽनन्त्यमश्नुते ॥

राज्ञा संग्राह्याणि विविधानि बलानि

[9]आददीत बलं राजा मौलं मित्रबलं तथा ।
अटवीबलं भृतं चैव तथा श्रेणीबलं च यत् ॥

(१) भा. १२।१६०।८० ; भामु. १२।१६६।८२ श्चास्य ( स्तस्य ) रोहिण्यो ( रोहिणीं ) मस्याथ ( मास्थाप्य ).

(२) भा. १२।१६०।८१ ; भामु. १२।१६६।८३ च ( हि ).

(३) भा. १२।१६०।८२ ; भामु. १२।१६६।८४ वर्मा ( धारो ).

(४) भा. १२।१६०।८३ ; भामु. १२।१६६।८५.

(५) भा. १२।१६०।८४ ; भामु. १२।१६६।८६ दम ( दमः ) उत्तरार्धे ( तेनेयं पृथिवी दुग्धा सस्यानि सुबहून्यपि । धर्मेण च यथापूर्वं वैन्येन परिरक्षिता ॥ ).

(६) भा. १२।१६०।८५ ; भामु. १२।१६६।८७.

(७) भा. १२।१६०।८६ ; भामु. १२।१६६।८८ स्तरः ( स्तरात् ).

(८) भा. १२।१६०।८७ ; भामु. १२।१६६।८९ दिह ( दिदं ).

(९) भा. १५।१२।७ ; भामु. १५।७।७ च यत् ( प्रभो ) ; रार. ३४ अटवीबलं भृतं ( सदा अरिबलं ).

[1]तत्र मित्रबलं राजन् मौलेन न विशिष्यते ।
श्रेणीबलं भृतं चैव तुल्य एवेति मे मतिः ॥
[2]तथा चारबलं चैव परस्परसमं नृप ।
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ॥

( १ ) षड्विधमपि चतुर्विधं तत्रैव– आददीतेत्यादिना । मौलं पितृपितामहादिक्रमागतम् । अरिबलं शत्रुं विहाय आगतम् । श्रेणीबलं साहित्यार्थमागतम् । तथा च मौलबलं मित्रबलं च विश्वसनीयम्, अतो विशिष्यते । श्रेणीबलं तु भृतकवत् । यथा भृतकस्य भरणमेव निमित्तम्, तेन प्राणसंशयेऽपसरणसंभावना, तथा श्रेणीबलस्य साहित्यनिमित्तादपसरणसंभावना । अयमाशयः– अरिबलस्य ग्रहणमरिन्यूनीकरणाय, न तु तत्र विश्वासः । पञ्चमे चारबले उभयसंबन्धादविश्वासः तथैव इत्यर्थः ।

रार. ३४–३५

( २ ) मौलं धनबलम् । नीटी.

## वाल्मीकिरामायणम्

योद्धारो भक्तवेतनादिना भर्तव्याः

[3]कच्चित्ते बलिनो मुख्याः सर्वयुद्धविशारदाः ।
दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥
[4]कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
संप्राप्तकालं दातव्यं ददासि न विशङ्कसे ॥
[5]कालातिक्रमणादेव भक्ष्यदातव्यवर्जिताः ।
भर्तुरप्यपकुर्वन्ति सोऽनर्थः सुमहान् भवेत् ॥

( १ ) भा. १५।१२।८; भासु. १५।७।८ लेन न ( लं चैव ); रार. ३४ ल्य ए ( ल्यमे ) शेषं भासुवत्.

( २ ) भा. १५।१२।९; भासु. १५।७।९ बल ( बहु ); रार. ३४ तथा ( यथा ).

( ३ ) वारा. २।११४।४२; वाराकु. २।१००।३२ पूर्वार्धे ( बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः । ) दृष्टापदाना ( दृष्ट्वापदान ).

( ४ ) वारा. २।११४।४४; वाराकु. २।१००।३३ शङ्क ( लम्ब ).

( ५ ) वारा. २।११४।४५; वाराकु. २।१००।३४ (कालातिक्रमणाच्चैव भक्तवेतनयोर्भृताः । भर्तुः कुप्यन्ति दुष्यन्ति सोऽनर्थः सुमहान् स्मृतः ॥ ).

[1]कच्चित्पूर्वानुरक्तास्ते कुलपुत्राः प्रधानतः ।
आहवेषु प्रियान्प्राणान्संत्यजन्ति समाहिताः ॥

राज्ञा संग्राह्याणि बलानि

[2]मित्राटवीबलं चैव मौलं भृत्यबलं तथा ।
सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥

## *कौटिलीयमर्थशास्त्रम्

सेनागुणाः

[3]पितृपैतामहो नित्यो वश्यस्तुष्टभृतपुत्रदारः प्रवासेष्वपि संपादितः सर्वत्राप्रतिहतो दुःखसहो बहुयुद्धः सर्वयुद्धप्रहरणविद्याविशारदः सहवृद्धिक्षयिकत्वादद्वैध्यः क्षत्रप्राय इति दण्डसंपत् ॥

दण्डसंपदमाह– पितृपैतामह इति । पितृपितामहक्रमायातः, अत एव नित्यः स्थिरसेवी, वश्यः वशवर्ती, तुष्टभृतपुत्रदारः संतृप्ता यथा स्युस्तथा राज्ञा पुष्टाः पुत्रा दाराश्च यस्य सः, प्रवासेष्वपि संपादितः प्रयाणकेष्वपि यथार्हभोगसंपन्नः कृतः, सर्वत्राप्रतिहतः क्वचिदप्यप्राप्तभङ्गः, दुःखसहः प्रवासादिक्लेशसहः, बहुयुद्धः बहुसमरपरिचितः, सर्वयुद्धप्रहरणविद्याविशारदः सर्वविधेषु युद्धेषु आयुधविद्यासु च प्रवीणः, सहवृद्धिक्षयिकत्वात् अद्वैध्यः स्वामिवृद्धौ वृद्धिः स्वामिक्षये क्षय इति स्वामिसमानवृद्धिक्षयत्वाद्धेतोः द्वैध्यरहितः भेदरहितः अभेद्य इत्यर्थः, क्षत्रप्रायः क्षत्रियप्रचुरः, इति दण्डसंपत् । श्रीमूला.

मौलादिषड्विधसेनानां चातुर्वर्ण्यसेनानां च श्रेयस्त्वतारतम्यम्

† [4]मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः ॥

* बलविषयको विचारः 'स्वाम्यनुजीविवृत्तम्, राज्ञः सहायाः, यात्रा' इत्येतेषु प्रकरणेष्वपि द्रष्टव्यः ।

† अस्य ग्रन्थस्य व्याख्यानं 'यात्रा– अभियास्यत्कर्म' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

( १ ) वारा. २।११४।४६; वाराकु. २।१००।३५ स्पूर्वा ( स्सर्वे ऽ ) स्ते ( स्त्वां ) तृतीयचरणे ( कच्चित् प्राणांस्तवार्थेषु ).

( २ ) वाराकु. ६।१७।२४.

( ३ ) कौ. ६।१.

( ४ ) कौ. ९।२.

पूर्वं पूर्वं चैषां श्रेयः संनाहयितुम् । तद्भावभावित्वान्नित्यसत्कारानुगमाच्च मौलबलं भृतबलाच्छ्रेयः । नित्यानन्तरं क्षिप्रोत्थायि वश्यं च भृतबलं श्रेणीबलाच्छ्रेयः । जानपदमेकार्थोपगतं तुल्यसंघर्षामर्षसिद्धिलाभं च श्रेणीबलं मित्रबलाच्छ्रेयः । अपरिमितदेशकालमेकार्थोपगमाच्च । मित्रबलममित्रबलाच्छ्रेयः । आर्याधिष्ठितममित्रबलमटवीबलाच्छ्रेयः । तदुभयं विलोपार्थम् । अविलोपे व्यसने च ताभ्यामहिभयं स्यात् । ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानां तेजःप्राधान्यात्पूर्वं पूर्वं श्रेयः संनाहयितुमित्याचार्याः । नेति कौटल्यः । प्रणिपातेन ब्राह्मणबलं परोऽभिहारयेत् । प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः, बहुलसारं वा वैश्यशूद्रबलमिति ॥

हस्तिबलमहिमा

*[1]हस्तिप्रधानो हि विजयो राज्ञाम् । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिन इति ॥

कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेदिकरूशजाः ।
दाशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥
सौराष्ट्रिकाः पाञ्चनदास्तेषां प्रत्यवराः स्मृताः ।
सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥

चतुरङ्गसेनानामनेकमुख्यत्वम्

[2]हस्त्यश्वरथपादातमनेकमुख्यमवस्थापयेत् । अनेकमुख्यं हि परस्परभयात्परोपजापं नोपैतीति ॥

हस्त्यश्वरथपादातं चतुरङ्गं सैन्यं अनेकमुख्यं अनेके मुख्याः बलप्रधानाः यस्मिंस्तत् तथाभूतं अवस्थापयेत् दुर्गेषु । बलप्रधानानां बहुत्वे गुणमाह— अनेकेत्यादि । एकश्चेद्बलप्रधानः स समानपुरुषान्तराभावान्निर्भयो लोभादिना परोपजापमङ्गीकृत्य कृत्स्नं बलं स्वाधिष्ठीयमानं भेदयेत्, बहवश्चेद्बलप्रधानाः ते परस्पराभिशङ्किताः परोपजापं नोपगच्छेयुरिति बहुप्रधानाधिष्ठितं बलं पराभेद्यं भवतीति भावः । श्रीमूला.

* अस्य ग्रन्थस्य व्याख्यानं 'प्रकृतयः— राष्ट्रम्' इत्यस्मिन् प्रकरणे ( पृ. १३९४–१३९५) द्रष्टव्यम् ।

(१) कौ. २।२.

(२) कौ. २।४.



## मनुः

षड्विधं बलं जयसाधनम्

[1]षड्विधं च बलं स्वकम् ॥

(१) षड्विधं बलमिति । केचित् हस्त्यश्वरथपदाति-( सेना ? )कोशकर्मकरात्मकं षड्विधं बलमिति । अन्ये कोशस्थाने ( सेनापति )प्रक्षेपणमिति । अपरे मौलभृत्यश्रेणिमित्रामित्राटविकबलभेदात् । मेधा.

( २ ) हस्त्यश्वरथपदातिसेनापतिकर्मकरात्मकं षड्विधं बलम् । * गोरा.

( ३ ) बलं हस्त्यश्वरथपदातयश्चत्वारः हस्त्याद्यारोहकाः शस्त्रोपनायकाश्चेति द्वाविति षड्विधम् । केचित्तु हस्त्यारोहकादय एकविधावश्याः परेति षड्विधतामाहुः (?) । § मवि.

( ४ ) षड्विधं बलं 'मौलं च भृतकं चैव' इत्यादिनाऽभिहितम् । राप्र. ३९६

( ५ ) बलस्य षड्विधत्वं कामन्दकेनोक्तम्— 'मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम्' ( कानी. १८।४ ) 'षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत्' ( कानी. १८।२ ) इति । नन्द.

[2]नित्यमुद्यतदण्डः¶ स्यात् ॥

* ममु., मच, गोरावत् ।

§ भाच. मविगतम् ।

¶ दण्डशब्दो हस्त्यश्वादिबलपरो दण्डश्दमनपरश्च । तत्र बलपराणि व्याख्यानान्यत्र आग्रिमश्लोके च संगृहीतानि, दमनपराणि तु 'उपायाः— दण्डः' इत्यस्मिन् प्रकरणे संग्रहीष्यन्ते ।

(१) मस्मृ. ७।१८५; राक. १२२; रार. ३४; पमा. ४०१ बलं स्वकम् ( स्वकं बलम् ); राप्र. ३९६.

(२) मस्मृ. ७।१०२; राक. १५१ मुद्यत (मुद्धृत ); राप्र. १३३.

(१) उद्यतो दण्डोऽनेनेत्युद्यतदण्डः। उद्यतः उद्युक्तः, सव्यापार इति यावत्। तत्र हस्त्यादिबलं नित्यं योग्याभिरभिविनयेत्। शिक्षा वाहनदमनादिभिर्विधेया। करणयोग्या अभ्यासाश्च। तद्वाहनादिषु वस्त्राभरणसंस्कार इत्यादिरुद्यतदण्डता। तथा कुर्वतोऽस्योत्साहशक्तियोगो मण्डले प्रकाशीभवति। मेधा.

(२) हस्त्यश्वरथपदात्यात्मको दण्डो नित्यमुद्यतः कृतयुद्धादिशिक्षाभ्यासो यस्य स तथा स्यात्। * गोरा.

[१]नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत्।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत्॥

(१) अनन्तरस्य फलम्। सर्वं जगदुद्विजते बिभेति प्रतापख्यातिर्भवति चेति। तस्मात्सर्वाणि भूतानि स्वप्रकृतीः परांश्च दण्डेनैव प्रसाधयेत्। एवं यत्नवतो भीताः शत्रवो नमन्त्ययत्नेनैव। † मेधा.

(२) यस्मात् नित्योद्यतदण्डात् सर्वं जगदुद्विजते तस्मात् सर्वाणि भूतानि दण्डेनैव वशीकुर्यात्। $ गोरा.

## उशना

बलं षड्विधम्

[२]मूलबलं श्रेणीबलं मित्रबलं भृतकबलं शत्रुबलमाटविकबलं च॥

## विष्णुधर्मोत्तरपुराणम्

धनुषः शरस्य च निर्माणविधिः

पुष्कर उवाच—

[३]धनुर्द्रव्यत्रयं लोहं शृङ्गं दारु च भार्गव।
ज्याद्रव्यत्रितयं चर्म वंशभङ्गं त्वचस्तथा॥
वंशत्वग्वंशचापं तु कर्तव्यं भृगुनन्दन।
अन्येषु राम चापेषु शेषद्रव्यमिदं भवेत्॥
प्रमाणं नात्र निर्दिष्टं चापयोः शार्ङ्गलोहयोः।
दारुचापप्रमाणं तु श्रेष्ठं हस्तचतुष्टयम्॥
तदर्धसमहीने तु प्रोक्ते मध्यकनीयसी।
मुष्टिग्राह्याणि वृत्तानि मध्ये सर्वाणि कारयेत्॥
स्वल्पा कोटिस्तु वार्क्षाणां शार्ङ्गलोहमयी द्विज।
कामिनीभ्रूलताकारा कोटिः कार्या सुसंस्कृता॥
पृथग्वा दारुमिश्रो(? श्रे) वा
लोहशार्ङ्गे तु कारयेत्।
शार्ङ्गं स्नायुचितं कार्यं रुक्मबिन्दुविभूषितम्॥
कुटिलस्फुटितं चापं सच्छिद्रं च न शस्यते।
हस्तिभग्ना द्रुमा ये च विद्युद्दग्धास्तथा च ये॥
आरामदेवतावेश्मतापसाश्रमसंभवाः।
श्मशानसंभवा ये च न ते कार्याः कथंचन॥
प्राणिना यः सजात्येन शृङ्गी युधि निपातितः।
तच्छृङ्गं वर्जयेच्चापे नित्यं शार्ङ्गे विचक्षणः॥
लोहानि राम चत्वारि शस्यन्ते चापकर्मणि।
सुवर्णं रजतं ताम्रं तथा कृष्णायसं द्विज॥
काञ्चनं चापरत्नं तु सरत्नमपि कारयेत्।
माहिषं शारभं शार्ङ्गं रौहीजं चापि कारयेत्॥
वार्क्षं चन्दनजं श्रेष्ठं वैतसं धान्वनं तथा।
सालशाल्मलिकाशानां ककुभस्याञ्जनस्य च॥
वंशस्य च महाभाग सर्वश्रेष्ठतमं विदुः।
शरद्गृहीतैः काष्ठैस्तु चापं कार्यं प्रयत्नतः॥
वंशानामपि तच्छ्रेष्ठं यत्र गङ्गा महानदी।
सालानामपि तच्छ्रेष्ठं गोमती यत्र भार्गव॥
वितस्ताकूलजं श्रेष्ठं वेतसीनां तथैव च।
एवं द्रव्यमयं कार्यं चापं लक्षणसंयुतम्॥
ग्रहणं लक्षणं चास्य भविष्यति च खड्गवत्।
सुखग्राह्यं दृष्टिकान्तं शरमोक्षसुखं तथा॥
श्लक्ष्णं श्लिष्टं सुसंस्थानं सारवन्तं सुसंहतम्।
अवनामसुखं नित्यं पुंनामनवलोत्कटम्॥

* ममु., राप्र. गोरावत्।
† राप्र. मेधागतम्।
$ ममु. गोरावत्।

(१) मस्मृ. ७।१०३; राक. १५१ मुद्यत (मुद्धृत); राप्र. १३४.
(२) पमा. ४०१.
(३) विध. २।१६।१ तः २।१७।३५.

एतदीदृशकं श्रेष्ठं चापरत्नं विदुर्बुधाः ।
राज्ञा चापस्य कर्तव्या पूजा बाणवरस्य च ॥
नित्यं देवकुले राम खड्गस्य च विशेषतः ।
अयसश्चाथ वंशस्य शरस्याथ शरो भवेत् ॥
शरवंशौ ग्रहीतव्यौ शरत्काले भृगूत्तम ।
शराः किरातजाः श्रेष्ठाः काञ्चीपुरसमीपतः ॥
तेभ्योऽपि ते श्रेष्ठतमाः स्कन्दजन्ममहीभवाः ।
स्निग्धा निमग्नपर्वाणः सारवन्तः समाहिताः ॥
ऋजवो मधुवर्णाभाः सुजाताः शारदा दृढाः ।
स्नायुश्लिष्टाः सुनेत्राश्च सुपुङ्खाः कलवाससः ॥
तैलधौताश्च कर्तव्या रुक्मपुङ्खविभूषणाः ।
तथा विषमपर्वाणः फलैश्च व्रणवर्जितैः ॥
एकं त्रिपुङ्खं कर्तव्यं राजहंसच्छदोत्तरम् ।
रुक्मपुङ्खसुवर्णाग्रमयःफलमनुत्तमम् ॥
स्नायुबद्धं बलं तस्य रुक्मबन्धं तु कारयेत् ।
वज्रैश्च लक्षणोपेतैश्चित्रितं तं तु कारयेत् ॥
ग्रहणं तस्य कर्तव्यं सांवत्सरकरान्नृपैः ।
तस्य पूजा सदा कार्या साभिषेकसमा भवेत् ॥
यात्रायामभिषेके च मङ्गलेषु च कर्मसु ।
सपताके तु तं चापं सपताकं तु कारयेत् ।
मङ्गल्यं तन्नरेन्द्राणां कथितं भृगुनन्दन ॥
ये चापरत्नं विनतं तु भूपाः
सुवर्णरत्नोपचितं सदैव ।
बाणेन साकं परिपूजयन्ति
भवन्ति ते राम विपन्नदुःखाः ॥

खड्गनिर्माणविधिः

पुष्कर उवाच–

पुरा सुमेरुशिखरे काञ्चने रत्नपर्वते ।
स्वर्गङ्गायास्तटे ब्रह्मा यज्ञं यजति भार्गव ॥
तस्मिन् यज्ञे स ददृशे विघ्नं खे लोहदानवम् ।
विघ्नस्य शमनं तस्य चिन्तयामास तत्त्ववित् ॥
तदा चिन्तयतस्तस्य पुरुषः पावकाद्बभौ ।
नीलोत्पलदलश्यामः स्वरुचा वह्नितेक्षणः ॥
प्रांशुः सुवदनः श्रीमान् बलेनाप्रतिमो भुवि ।
स ववन्दे तदा गत्वा देवं कमलसंभवम् ॥
अभ्यनन्दन्त जातेन तेन देवाः सवासवाः ।
तस्मात्स नन्दको नाम खड्गरत्नमभूत्तदा ॥
तं दृष्ट्वा भगवान् ब्रह्मा केशवं वाक्यमब्रवीत् ।
खड्गं गृह्णीष्व गोप्तारं धर्मस्य जगतां पते ॥
यज्ञविघ्नकरं हत्वा खड्गेनानेन केशव ।
निपातय महाबाहो बलिनं लोहदानवम् ॥
इत्येवमुक्तो जग्राह ग्रीवया तं जनार्दनः ।
गृहीतमात्रे देवेन विकोशः समपद्यत ॥
खड्गः कमलपत्राक्षो नीलोत्पलसमद्युतिः ।
रत्नमुष्टिर्महान् राम निर्मलाकाशसंनिभः ॥
एतस्मिन्नन्तरे तत्र व्यदृश्यत तदा महान् ।
करालः कृष्णवदनः शतबाहुर्महोदरः ॥
प्रांशुः सुवृत्तदंष्ट्राग्रो बलवाँल्लोहदानवः ।
यज्ञविघ्नार्थिनं प्राप्तं स दृष्ट्वा लोहदानवम् ॥
खड्गमादाय वेगेन ययौ तं प्रति केशवः ।
स केशवमनादृत्य देवान् शक्रपुरोगमान् ॥
विद्रावयामास तदा गदया भीमवेगया ।
तदा भग्नेषु देवेषु युद्धं कृत्वा हरिश्चिरम् ॥
खड्गेन तस्य गात्राणि चिच्छेद मधुहा रणे ।
खड्गच्छिन्नानि गात्राणि नानादेशेषु भूतले ॥
निपेतुस्तस्य धर्मज्ञ शतशोऽथ सहस्रशः ।
नन्दकस्य तु संस्पर्शात्तानि गात्राणि भार्गव ॥
लोहीभूतानि सर्वाणि प्रसादात्केशवस्य तु ।
हतायास्मै वरं प्रादाद्भगवान् मधुसूदनः ॥
त्वदङ्गानि पवित्राणि भविष्यन्ति महीतले ।
आयुधानि च त्रैलोक्ये करिष्यन्तीह मानवाः ॥
एवमुक्त्वा हरिर्देवो ब्रह्माणं वाक्यमब्रवीत् ।
विना विघ्नं मखमिदं कुरु शीघ्रं जगद्गुरो ॥
एवमुक्तस्तदा ब्रह्मा यज्ञेन मधुसूदनम् ।
आत्मना पूजयामास सुसमिद्धमनोरथः ॥
उत्पत्तिरुक्ता खड्गस्य लोहस्य च मया तव ।
अतः परं प्रवक्ष्यामि खड्गलक्षणमुत्तमम् ॥

प्रधानदेहसंभूतैर्दैत्यास्थिभिररिंदम ।
लोहं प्रधानं खड्गार्थे प्रशस्तं तद्विशेषतः ॥

*कटीकदूरऋषिकं वङ्गे शूर्पांकरेषु च ।
विदेहेषु तथाऽङ्गेषु मध्यमं ग्रामचेदिषु ॥

सहग्रामेषु नीपेषु तथा कलञ्जरेऽपि च ।
लोहं प्रधानं तज्जानां खड्गानां शृणु लक्षणम् ॥

कटीकदूरजाता ये दर्शनीयास्तु ते स्मृताः ।
कायच्छिन्नास्तु ऋषिका मर्मघ्ना गुरवस्तथा ॥

तीक्ष्णाश्छेदसहा वाङ्गा दृढाः शूर्पारकोद्भवाः ।
सुहस्ताश्चैव विज्ञेया प्रभावन्तो विदेहजाः ॥

अङ्गदेशोद्भवास्तीक्ष्णाश्चेदिदेशसमुद्भवाः ।
कालिञ्जरा भारसहास्तथा वक्ष्यामि लक्षणम् ॥

सुप्रमाणाङ्गुलास्ते तु श्रेष्ठाः खड्गाः प्रमाणतः ।
प्रमाणं तत्र विज्ञाय ततो हीनं न धारयेत् ॥

प्रमाणाभ्यधिकं चैव च्छिन्नवंशं तथैव च ।
शीघ्रः सुमधुरः शब्दो यस्य खड्गस्य भार्गव ॥
किङ्किणीसदृशस्तस्य धारणं श्रेष्ठमुच्यते ।
खड्गः पद्मपलाशाग्रो मण्डलाग्रश्च शस्यते ॥

करवीरपलाशाग्रसदृशश्च विशेषतः ।
महीघृतसुगन्धश्च पद्मोत्पलसुगन्धिकः ॥

वर्णतश्चोत्पलाकारः सवर्णो गगनस्य च ।
समाङ्गुलस्थाः शस्यन्ते व्रणाः खड्गेषु भार्गव ॥

श्रीवृक्षपर्वताकारवंशपद्मनिभाश्च ये ।
मङ्गल्यानां तथाऽन्येषां सदृशा ये च भार्गव ॥
काकोलूककबन्धाभा विषमाङ्गुलसंस्थिताः ।
वंशानुगाः प्रभूताश्च न शस्तास्ते कदाचन ॥

न खड्गे वदनं पश्येद् वृथा विवृणुयान्न च ।
उच्छिष्टो न स्पृशेत्खड्गं निशि कुर्याच्च शीर्षके ।
दिवा च पूजयेदेनं गन्धमाल्यानुसंपदा ॥

खड्गं प्रशस्तं मणिहेमचित्रं
कोशे सदा चन्दनचूर्णयुक्ते ।
संस्थापयेद्भूमिपतिः प्रयत्ना-
द्रक्षेत्तथैनं स्वशरीरवच्च ॥

अश्वार्जनम्

पुष्कर उवाच—

[1]राज्ञां तुरंगमायत्तो विजयो भृगुनन्दन ।
तस्मात्सर्वप्रयत्नेन तुरगाणां समर्जनम् ॥

राज्ञा यत्नवता भाव्यं पालने च विशेषतः ।
तावन्तस्तुरगा धार्या यावतां पोषणं सुखम् ॥
कर्तुं शक्यं न धार्यास्ते दुःखिताः क्षुधितास्तथा ।
दुःखितास्ते श्रियं लोके विनिघ्नन्ति जयं तथा ॥
धारणीयाः सुविहिता विधिना यवसादिना ।
विधृतास्ते तथा कुर्युर्लोकद्वयजयं तथा ॥
मङ्गल्यास्ते पवित्रास्ते रजस्तेषां तथैव च ।
कैवल्यस्यैव ते भक्ता देवस्य परमेष्ठिनः ॥

अन्ति मध्ये तथा तेन नानुज्ञाता दिवौकसाम् ।
ततोऽश्वमेधतुरगस्तस्यैवैकस्य हूयते ॥

सर्वरत्नाधिको जातस्तुरगोऽमृतमन्थनात् ।
उच्चैःश्रवास्तेन हयः सर्वरत्नोत्तमः स्मृतः ॥

सपक्षा देववाह्यास्ते मनुष्याणामपक्षकाः ।
पद्मना शालिहोत्रेण वाहनार्थं पुरा कृताः ॥
नीराजयन्ति ते देशान् हेषितैर्बलशालिनः ।
गन्धर्वास्ते विनिर्दिष्टाः श्रियः पुत्रा जितश्रमाः ॥

प्रधानमङ्गं सैन्यस्य शोभा च परमा हयाः ।
सुदूरगमने युद्धे यानश्रेष्ठास्तुरंगमाः ॥

वल्गन्तमुच्चैस्तुरगं चामरापीडधारिणम् ।
आरुह्य या भवेत्तुष्टिर्न सा राम त्रिविष्टपे ॥

संनद्धपुरुषारूढैः सुसंनद्धैस्तुरंगमैः ।
दृष्टैरेवारिसैन्यस्य पतन्ति हृदयान्यलम् ॥

* 'कटीकदूर-ऋषिक—वङ्गशूर्पारकेषु च' इत्येवमत्र शुद्धिः कल्प्या ।

(१) विध. २।४५।१-१३.

तुरंगपादोद्धृतधूलिदण्डं
यस्याऽऽतपत्रानुकृतिं करोति ।
नभः समग्रा वसुधा तु तस्य
शैलावतंसा भवतीह वश्या ॥

कुञ्जरार्जनम्

पुष्कर उवाच–

[1]कुञ्जराः परमा शोभा शिबिरस्य बलस्य च ।
आयाति कुञ्जरेष्वेव विजयः पृथिवीक्षिताम् ॥
तेषां संमार्जने यत्नं पालने च भृगूत्तम ।
यथावन्नृपतिः कुर्याद्गन्धर्वाः कुञ्जरा मताः ॥
जयन्ताश्च तथा धार्या यावतां पोषणं सुखम् ।
कर्तुं शक्यं न धार्यास्ते क्षुधिता दुःखितास्तथा ॥
दुःखितास्ते नृणां हन्युः कुलानि च भृगूत्तम ।
तस्मात्तेषां सुखं कार्यं यशःश्रीविजयप्रदम् ॥
संनद्धपुरुषारूढैः सुसंनद्धैस्तुरंगमैः ।
अनल्पैरपि यद्युक्तं बलं परबलप्रणुत् ॥
तदेकस्यापि समरे कुञ्जरस्य सवर्मणः ।
न शक्यं प्रमुखे स्थातुं वेगादापततो द्विज ॥
अभिन्नानां तु संघानां संहतानां च भेदनम् ।
एकः क्रुद्धो रणे कुर्यात्कुञ्जरः साधु चोदितः ॥
मदक्लिन्नकपोलस्य किंचिदञ्चितचक्षुषः ।
बृहदाभोगशुण्डस्य कः शोभां कथितुं क्षमः ॥
वेगेन धावमानस्य प्रसारितकरस्य च ।
कः समर्थः पुरः स्थातुं स्तब्धकर्णस्य दन्तिनः ॥
यस्य फूत्कारमात्रेण तुरंगमशतान्यपि ।
स्वारूढान्यपि वेगेन विद्रवन्ति दिशो दश ॥
तत्सैन्यं कुञ्जरा यत्र स नृपो यस्य कुञ्जराः ।
मूर्तिमान् विजयो राम कुञ्जरा मदगर्विताः ॥
सपक्षा देववाह्यास्ते मनुजानां त्वपक्षकाः ।
वाहनार्थं कृता राम स्वयमेव तु वेधसा ॥
दृष्ट्वा पताकाभिरलंकृतं तु
नागेन्द्रसैन्यं प्रबलं यथाऽद्रिम् ।
पतन्ति शीघ्रं हृदयान्यरीणां
तस्मात्प्रधानाः सततं गजेन्द्राः ॥

(१) विध. २।४८।१–१३.

सैनिकार्जनम्, सैनिकगुणाः, देशभेदेन सैनिकलक्षणानि

पुष्कर उवाच–

[1]दुर्गमायुधसंघातं कुञ्जरास्तुरगास्तथा ।
पुरुषैश्च विना राम सर्वमेतदपार्थकम् ॥
तस्मात्प्रयत्नं कुर्वीत पुरुषाणां समर्जने ।
तेषां चैवान्तरज्ञाने मूलमेतद्यतः श्रियः ॥
सुसहायार्थसंपन्नं बलं यस्य महीपतेः ।
संग्रामे तुमुले राम नूनं तस्य जयो भवेत् ॥
[2]प्रांशवः शुकनासाश्च ये चाजिह्मेक्षणा नराः ॥
[3]संहतभ्रूयुगाश्चैव क्रोधनाः कलहप्रियाः ।
नित्यं हृष्टाश्च हृस्वाश्च शूरा ज्ञेयाश्च कामिनः ॥
[4]दाक्षिणात्याश्च विज्ञेयाः कुशलाः खड्गवर्मिणः ।
वङ्कला धान्विनो ज्ञेयाः पार्वतीयास्तथैव च ॥
पाषाणयुद्धकुशलास्तथा पर्वतवासिनः ।
पाञ्चालाः शूरसेनाश्च रथेषु कुशला नराः ॥
काम्बोजा ये च गान्धाराः कुशलास्ते हयेषु च ।
प्रायशश्च तथा म्लेच्छा विज्ञेयाः पाशयोधिनः ॥
अङ्गा वङ्गाः कलिङ्गाश्च ज्ञेया मातङ्गयोधिनः ॥

चतुरङ्गसेनाकर्माणि

[5]आहतानां हतानां च रणापनयनक्रिया ॥
पत्तियोधगजानां च तोयदानादिकं च यत् ।
आयुधानयनं चैव पत्तिकर्म विधीयते ॥
[6]रिपूणां भेदकामानां स्वसैन्यस्य तु रक्षणम् ।
भेदनं संहतानां च चर्मिणां कर्म कीर्तितम् ॥

(१) विध. २।५१।१–३.
(२) विध. २।१७७।३८ चाजिह्मे (च जिह्मे); अग्नि. २३६।४३.
(३) विध. २।१७७।३९; अग्नि. २३६।४३–४४ नित्यं हृष्टाश्च हृस्वा (नित्यहृष्टाः प्रहृष्टा).
(४) विध. २।१७७।४०–४३.
(५) विध. २।१७७।४३–४४; अग्नि. २३६।४४–४५ आह (संह) पत्तियोध (प्रतियुद्धं).
(६) विध. २।१७७।४५; अग्नि. २३६।४६ भेदका (भेतुका).

[1]विमुखीकरणं युद्धे धन्विनां च तथोच्यते ।
चर्मिभिः क्रियते शूरैर्भिन्नानामपि संहतिः ॥

[2]शूरापसरणं यावत्साश्वीयस्य तथोच्यते ।
त्रासने रिपुसैन्यानां रथकर्म तथोच्यते ॥

[3]प्राकारगोमुखाट्टालद्रुमभङ्गाश्च भार्गव ।
गजानां कर्म निर्दिष्टं यदसह्यं तथा परैः ॥

धनुर्वेदे प्रोक्तानि पञ्चविधानि शस्त्रास्त्राणि

राम उवाच--

[4]धनुर्वेदं समाचक्ष्व संक्षेपात्सुरनन्दन ।
सर्वं त्वमेव जानासि यथा देवः पितामहः ॥

पुष्कर उवाच--

[5]चतुष्पादो धनुर्वेदस्तथा पञ्चविधो द्विज ।
रथनागाश्वपत्तीनां पादानाश्रित्य कीर्तितः ॥

[6]यन्त्रमुक्तं पाणिमुक्तं मुक्तसंधारितं तथा ।
अमुक्तं बाहुयुद्धं च पञ्चधा तत्प्रकीर्तितम् ॥

[7]तच्च शस्त्रास्त्रसंपत्त्या द्विविधं परिकीर्तितम् ।
दण्डमायाविभेदेन भूयो द्विविधमुच्यते ।
ऋजुमायाविभेदेन भूयो द्विविधमुच्यते ॥

[8]क्षेपणीचापयन्त्राद्यं यन्त्रमुक्तं प्रकीर्तितम् ॥

---

(१) विध. २।१७७।४६ ; अग्नि. २३६।४७ पू.

(२) विध. २।१७७।४७ ; अग्नि. २३६।४७—४८ शूरा (दूरा) यावत्साश्वीयस्य (यानं सुहृतस्य) त्रासने (त्रासनं).

(३) विध. २।१७७।४८ ; अग्नि. २३६।४८-४९ (भेदनं संहतानां च भेदानामपि संहतिः । प्राकारतोरणाट्टालद्रुमभङ्गश्च सद्गजे ॥).

(४) विध. २।१७८।१.

(५) विध. २।१७८।२ ; अग्नि. २४९।१ (चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विज । रथनागाश्वपत्तीनां योधांश्चाऽऽश्रित्य कीर्तितम् ॥).

(६) विध. २।१७८।३ ; अग्नि. २४९।२.

(७) विध. २।१७८।४ ; अग्नि. २४९।३ तच्च (तत्र) द्वितीयार्धं नास्ति.

(८) विध. २।१७८।५ ; अग्नि. २४९।४ यन्त्राद्यं (यन्त्राद्यैः).

[1]शिलातोमरचक्राद्यं पाणिमुक्तं तथैव च ।
मुक्तसंधारितं ज्ञेयं पाशाद्यमपि यद्भवेत् ॥

[2]खड्गादिकममुक्तं च तथा ज्ञेयं महाभुज ।
नियुद्धं व्यायुधं ज्ञेयं पाणिप्रहरणादिकम् ॥

[3]तत्राऽऽदावेव योग्यत्वं गात्राणां तु विधीयते ।
तथा व्यायामचारित्वं भारकर्षणमेव च ॥

जितश्रमो हि युद्धेषु कर्मयोग्यत्वमाप्नुयात् ।
रथाश्वगजपृष्ठेषु तानि शस्त्राणि चाभ्यसेत् ॥

[4]तानि वै खड्गमुख्यानि बाहुप्रत्यवराणि च ॥

धनुर्वेदाध्यापकविवेकः

[5]धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च ॥

[6]वैश्यस्य गुरुतां कुर्यान्न वा कुर्यात्तथा द्विजम् (? जः) ।
धनुर्वेदे न गुरुतां शूद्रः कुर्यात्कदाचन ॥

[7]स्वयमेव तु शूद्रं च (? द्रेण) कर्तव्या कर्मयोग्यता ।
तस्माद्युद्धाधिकारोऽस्ति शूद्रस्यापि विशां पते ॥

[8]संगराणामपि तथा हितः स्यात्स स्वयं प्रभोः ।
सर्वरत्नैर्महाराज राजा रक्ष्यः प्रयत्नतः ॥

---

(१) विध. २।१७८।६ ; अग्नि. २४९।४-५ चक्राद्यं (यन्त्राद्यं) तथैव च (प्रकीर्तितम्) पाशा (प्रासा).

(२) विध. २।१७८।७ ; अग्नि. २४९।५ (खड्गादिकममुक्तं च नियुद्धं विगतायुधम् ॥) एतावदेव.

(३) विध. २।१७८।८-९ ; अग्नि. २४९।६ (कुर्याद् योग्यानि पात्राणि योद्धुमिच्छुर्जितश्रमः । धनुःश्रेष्ठानि युद्धानि प्रासमध्यानि तानि च ॥) एतावदेव.

(४) विध. २।१७८।१० ; अग्नि. २४९।७ वै खड्गमुख्यानि (खड्गजघन्यानि).

(५) विध. २।१७८।१० ; अग्नि. २४९।७.

(६) विध. २।१७८।११.

(७) विध. २।१७८।१२ ; अग्नि. २४९।८ (युद्धाधिकारः शूद्रस्य स्वयं चाऽऽपदि शिक्षया । देशस्थैः शंकरै राज्ञः कार्या युद्धे सहायता ॥).

(८) विध. २।१७८।१३-१४.

श्रद्धावतो भक्तिमतः सुशीलान्
नम्रान् विनीतान् क्षमयोपपन्नान्।
स्निग्धान्नरेशान् सुदृढान् मनोज्ञा-
नध्यापनीयांस्तु वदन्ति सन्तः ॥

धनुर्धारिणः स्थितिभेदाः, सशरधनुर्धारणविधिः
विविधलक्ष्यवेधविधिश्च

पुष्कर उवाच—
[1]पाणिपादतले पृष्ठं सर्वे स्युः संहिता यदि ।
दृष्टं सामपदं स्थानमेतल्लक्षणतस्तथा ॥

[2]बाह्याङ्गुलिः स्फिचौ पादौ स्तब्धजानुबलावुभौ ।
त्रिवितस्त्यन्तरायाममेवं वैशाखमुच्यते ॥

[3]मण्डलाकारपादाभ्यामुद्यते यत्र जानुनी ।
चतुर्विधं त्रिविच्छिन्नं तदेवं मण्डलं स्मृतम् ॥

[4]फलाकृतिसमं यच्च स्तब्धजानूरुदक्षिणम् ।
वितस्तिपञ्चविस्तारं तदालीढं प्रकीर्तितम् ॥

[5]नमिता पूर्वजङ्घा च सदाऽऽलीढे विधीयते ।
तिर्यग्गतो भवेद्वामो दक्षिणोऽपि भवेदृजुः ॥

[6]गुल्फौ पार्ष्णिस्थितावेव स्थिरौ पञ्चाङ्गुलान्तरौ।
स्थानं जातं भवेदेतद्द्वादशाङ्गुलमायतम् ॥

(१) विध. २।१७९।१ ; अग्नि. २४९।९ पूर्वार्धे ( अङ्गुष्ठगुल्फपाण्यङ्घ्र्यः श्लिष्टाः स्युः सहिता यदि । ) साम ( सम ).

(२) विध. २।१७९।२ ; अग्नि. २४९।१० लिः स्फिचौ ( लिस्थितौ ) रायाममेवं ( रास्थानमेतद् ).

(३) विध. २।१७९।३ ; अग्नि. २४९।११ ( हंसपङ्क्त्याकृतिसमे दृश्येते यत्र जानुनी । चतुर्वितस्तिविच्छिन्ने तदेतन्मण्डलं स्मृतम् ॥ ).

(४) विध. २।१७९।४; अग्नि. २४९।१२ फला ( हला ) समं ( मयं ) तस्ति ( तस्त्यः ) स्तारं ( स्तारे ).

(५) विध. २।१७९।५ ; अग्नि. २४९।१३ पूर्वार्धे ( एतदेव विपर्यस्तं प्रत्यालीढमिति स्मृतम् । ) गतो (भूतो).

(६) विध. २।१७९।६ ; अग्नि. २४९।१४ स्थितावेव स्थिरौ ( ग्रहौ चैव स्थितौ ).

[1]एतदेव विपर्यस्तं प्रत्याख्यातं प्रकीर्तितम् ।
कुब्जजानुर्भवेद्वामो दक्षिणस्तु प्रसारितः ॥

[2]अथवा दक्षिणं जानु कुब्जं भवति निश्चलम् ।
भवेद्दण्डायतो वामश्चरणः सह जानुना ॥

[3]एवं विकच्छमुद्दिष्टं द्विहस्तान्तरमायतम् ।
जानुनी द्विगुणे स्यातां ह्युत्तानौ चरणावपि ॥

[4]अनेन विनियोगेन संपुटं परिकीर्तितम् ।
किंचिद्विवर्तितौ पादौ समदण्डायतौ स्थिरौ ॥

[5]दृष्टिमेव यथान्यायं षोडशाङ्गुलमायतम् ।
स्वस्तिकेनात्र कुर्वीत प्रणामं प्रथमं द्विज ॥

[6]कार्मुकं गृह्य वामेन बाणं दक्षिणकेन वा ।
वैशाखेऽप्यथवा जाते स्थितो
वाऽप्यथवाऽऽयते ॥

[7]गुणाग्रं तु ततः कृत्वा कार्मुके प्रियकार्मुकः ।
अधःकोटिं तु धनुषः फलदेशे च पत्रिणः ॥

(१) विध. २।१७९।७ ; अग्नि. २४९।१५ कुब्ज ( ऋजु ) णस्तु ( णः सु ) उक्त.

(२) विध. २।१७९।८ ; अग्नि. २४९।१५–१६ तृतीयचरणे ( दण्डायतो भवेदेष ).

(३) विध. २।१७९।९ ; अग्नि. २४९।१६–१७ कच्छ ( कट ) ह्युत्ता ( उत्ता ) वपि ( वुभौ ).

(४) विध. २।१७९।१० ; अग्नि. २४९।१७–१८ विनि ( विधि ).

(५) विध. २।१७९।११ ; अग्नि. २४९।१८–१९ दृष्टि ( दृष्ट ).

(६) विध. २।१७९।१२ ; अग्नि. २४९।१९–२० केन वा ( केन तु ) ऽप्यथवा ( यदि वा ) स्थितो (स्थितौ) यते ( यतौ ).

(७) विध. २।१७९।१३ ; अग्नि. २४९।२०–२१ ग्राणं ( णान्तं ) देशे ( देशं ).

[1]धरण्यां स्थापयित्वा तु लालयित्वा तथैव च ।
भुजाभ्यामत्र कुब्जाभ्यां प्रकोष्ठाभ्यामरिंदम ॥
[2]न्यस्य बाणं धनुःश्रेष्ठं पुङ्खदेशे च पत्रिणः ।
विन्यासो धनुषश्चैव द्वादशाङ्गुलमन्तरः ॥
[3]तयोर्भार्गव कर्तव्यो नातो हीनो न चाधिकः ।
निवेश्य कार्मुकं कण्ठे नितम्बे शरसंकरम् ॥
[4]उत्क्षिपेदस्थिरं हस्तमन्तरेणाक्षिकर्णयोः ।
पूर्वेण मुष्टिना ग्राह्यः स्तनाग्रे दक्षिणे शरः ॥
[5]हरणं तु ततः कृत्वा शीघ्रं पूर्वां प्रसारयेत् ।
नात्यन्तरा नैव बाह्या नोर्ध्वगा नाधरास्तथा ॥
[6]न च कुब्जा न चोत्ताना न चला नातिवेष्टिताः ।
समाः स्थैर्यगुणोपेताः पूर्वे दण्डमिव स्थिताः ॥
[7]छादयित्वा ततो लक्ष्यं पूर्वेणानेन मुष्टिना ।
तरसा तूत्थितो यत्नात्त्रिकोणविनतिस्थितः ॥
[8]स्रस्तांसो निश्चलग्रीवो मयूराञ्चितमस्तकः ।
ललाटनासावक्त्रांसकूर्परेषु समो भवेत् ॥

[1]अन्तरं त्र्यङ्गुलं ज्ञेयं चिबुकस्यांसकस्य च ।
प्रथमे त्र्यङ्गुलं विन्याद्द्वितीये
द्व्यङ्गुलं स्मृतम् ॥
[2]तृतीयेऽङ्गुलमुद्दिष्टं चाऽऽयतं चिबुकांसयोः ।
गृहीत्वा सायकं तत्र तर्जन्यङ्गुष्ठमेव च ॥
[3]अनामया ततो गृह्य पुनर्मध्यमयाऽपि च ।
तावदाकर्षयेद्योगाद्यावद्बाणः सुपूरितः ॥
[4]एवंविधमुपक्रम्य मोक्तव्यो विधिवत्खगः ।
दृष्टिमुष्टिहतं लक्ष्यं भिन्द्याद्बाणेन भार्गव ॥
[5]मुक्त्वा चापं वामहस्तं क्षिपेद्वेगेन पृष्ठतः ।
एतदुच्छेदमिच्छन्ति ज्ञातव्यं हि त्वया द्विज ॥
[6]कूर्परं त्रिविधं कार्यमाकृष्टं तु धनुष्मता ।
तत्रापि मुक्तके कार्यमक्षिश्लिष्टं तु मध्यमम् ॥
[7]ज्येष्ठं प्रकृष्टं विज्ञेयं धनुःशास्त्रविशारदैः ।
ज्येष्ठस्तु पावको ज्ञेयो भवेद्द्वादश मुष्टयः ॥
[8]एकादश तथा साध्यः कनीयान् दश मुष्टयः ।
चतुर्हस्तं धनुः श्रेष्ठं प्रयोगं चास्य मध्यमम् ॥

---

(१) विध. २।१७९।१४ ; अग्नि. २४९।२१–२२ लाल ( तोल ) भ्यामरिंदम ( भ्यां शुभव्रत ).

(२) विध. २।१७९।१५ ; अग्नि. २४९।२२–२३ न्यस्य ( तस्य ) मन्तरः ( मन्तरम् ).

(३) विध. २।१७९।१६ ; अग्नि. २४९।२३–२४ तयोर्भार्गव ( ज्यया विशिष्टः ) नातो ( नाति ) कण्ठे ( नाभ्यां ).

(४) विध. २।१७९।१७ ; अग्नि. २४९।२४–२५ दस्थिरं ( दुत्थितं ).

(५) विध. २।१७९।१८ ; अग्नि. २४९।२५–२६ पूर्वां ( पूर्वं ) नात्य ( नाऽऽभ्य ) रास्तथा ( रा तथा ).

(६) विध. २।१७९।१९ ; अग्नि. २४९।२६–२७ वेष्टिताः ( वेष्टिता ) उत्तरार्धे ( समा स्थैर्यगुणोपेता पूर्वदण्डमिव स्थिता ॥ ).

(७) विध. २।१७९।२० ; अग्नि. २४९।२७–२८ तरसा ( उरसा ) यत्नात्त्रि ( यन्ता त्रि ) नति ( नत ).

(८) विध. २।१७९।२१; अग्नि. २४९।२८–२९.

(१) विध. २।१७९।२२ ; अग्नि. २४९।२९–३० स्यांस ( स्यांशु ) तृतीयचरणे ( प्रथमं त्र्यङ्गुलं ज्ञेयं ).

(२) विध. २।१७९।२३ ; अग्नि. २४९।३०–३१ चाऽऽयतं ( आयतं ) उत्तरार्धे ( गृहीत्वा सायकं पुङ्खात्तर्जन्याऽङ्गुष्ठकेन तु ॥ ).

(३) विध. २।१७९।२४ ; अग्नि. २४९।३१–३२ ततो ( पुनः ) पुनर्म ( तथा म ) द्योगा ( द्वेगा ).

(४) विध. २।१७९।२५ ; अग्नि. २४९।३२–३३ क्तव्यो ( क्तव्यं ) त्खगः ( त्खगम् ) भार्गव ( सुव्रत ).

(५) विध. २।१७९।२६ ; अग्नि. २४९।३३–३४ चापं वाम ( तु पश्चिमं ).

(६) विध. २।१७९।२७ ; अग्नि. २४९।३४–३५ त्रिविधं ( तदधः ) कृष्टं ( कृष्य ) तत्रापि मु ( ऊर्ध्वं विमु ).

(७) विध. २।१७९।२८ ; अग्नि. २४९।३५–३६ ज्येष्ठं ( श्रेष्ठं ) पावको ( सायको ).

(८) विध. २।१७९।२९ ; अग्नि. २४९।३६ प्रयोगं चास्य ( श्रयः सार्धं तु ) उत्त.

[1]कनीयसं त्रयः प्रोक्तं नित्यमेव पदातिना ।
अश्वे रथे गजे ज्येष्ठं तदेव परिकीर्तितम् ॥

[2]तदेव हीनं खलु मध्यमं स्या-
त्तदेव हीनं च तथा कनीयः ।
पूर्णायुधस्यैष विधिर्मया ते
प्रोक्तः समासाद्भृगुवंशमुख्य ॥

पुष्कर उवाच–

[3]पूर्णायुधो भृतिं कृत्वा ततो मांसैर्गतायुषाम् ।
वराहमृगमेषाणां माहिषाद्यैस्तथा द्विज ॥

[4]मुनिधौतं ततः कुर्याद्युग्यं भूपैर्विधानवित् ।
मृदुसंस्तरणोपेतं मृदु वल्गु च योजयेत् ॥

[5]ततो वाहं समारुह्य दंशितः सुसमाहितः ।
तूर्णमारुह्य बध्नीयाद् दृढां कक्षां च दक्षिणाम् ॥

[6]वैकक्ष्यमपि तच्चापं धारयेद्यन्त्रसंस्थितम् ।
ततः समुद्धरेद्बाणं तूणाद्दक्षिणपाणिना ॥

[7]तज्जवःसहितं सर्वं मध्ये संगृह्य धारयेत् ।
वामहस्तेन वै कक्ष्याद्धनुस्तस्मात्समुद्धरेत् ॥

[1]सुनिषण्णमणिर्भूत्वा गुणे पुङ्खं निवेशयेत् ।
संपीड्य सिंहकर्णेन पुङ्खेनापि समे दृढम् ॥

[2]वामकर्णोपरिस्थं च फलं व्यामस्य धारणात् ।
बलामध्यमया तत्र वामाङ्गुल्या च धारयेत् ॥

[3]मनोलक्ष्यगतं कृत्वा दृष्टिं च सुविधानवित् ।
दक्षिणे गात्रभागे तु बलामाशु विमोक्षयेत् ॥

[4]ललाटपुटसंस्थानं दण्डं लक्ष्ये निवेशयेत् ॥

[5]आकृष्य ताडयेत्तत्र दण्डकं षोडशाङ्गुलम् ।
मुक्त्वा बाणं ततः पश्चाद्बलां शिक्षेत्तदा तदा ॥

[6]विगृह्णीयान्मध्यमया ततोऽङ्गुल्या पुनः पुनः ।
अभिलक्ष्याऽऽक्षिपेत्तूणांश्चतुरस्रं च दक्षिणम् ॥

[7]चतुरस्रगतं वेध्यमभ्यसेदादितः स्थितः ।
तस्मादनन्तरं तीक्ष्णं परावृत्तगतं च यत् ॥

[8]निम्नमुन्नतवेध्यन्तमभ्यसेत्तुष्यकं ततः ।
वेध्यस्थानेष्वथैतेषु संन्यस्तपुटकं धनुः ॥

---

(१) विध. २।१७९।३० ; अग्नि. २४९।३७ यसं ( यस्तु ) तिना ( तिनः ) ज्येष्ठं ( श्रेष्ठ ).

(२) विध. २।१७९।३१.

(३) विध. २।१८०।१ ; अग्नि. २५०।१ ( पूर्णायतं द्विजः कृत्वा ततो मांसैर्गदायुधान् । ) पू.

(४) विध. २।१८०।२ ; अग्नि. २५०।१ ( सुनिधौतं धनुः कृत्वा यज्ञभूमौ विधापयेत् । ) पू.

(५) विध. २।१८०।३ ; अग्नि. २५०।२ वाहं समारुह्य ( बाणं समागृह्य ) तूर्णमारुह्य ( तूणमासाद्य ).

(६) विध. २।१८०।४ तूणा ( त्रूणा ) ; अग्नि. २५०।३ पूर्वार्धे ( विलक्ष्यमपि तद्बाणं तत्र चैव सुसंस्थितम् । ).

(७) विध. २।१८०।५ ; अग्नि. २५०।४ पूर्वार्धे ( तेनैव सहितं मध्ये शरं संगृह्य धारयेत् । ) कक्ष्याद्ध ( कक्षां ध ).

(१) विध. २।१८०।६ ; अग्नि. २५०।५ सुनि ( अत्रि ) मणि ( मति ).

(२) विध. २।१८०।७ ; अग्नि. २५०।६ पूर्वार्धे ( वामकर्णोपविष्टं च फलं वामस्य धारयेत् । ) बलाम ( वर्णान्म ).

(३) विध. २।१८०।८ ; अग्नि. २५०।७ दृष्टिं च सु ( मुष्टिना च ) बलामाशु ( कृत्वा वर्णं ).

(४) विध. २।१८०।९ दण्डं ( दाणीं ) ; अग्नि. २५०।८.

(५) विध. २।१८०।१० ; अग्नि. २५०।८–९ दण्डकं ( चन्द्रकं ) चतुर्थवरणे ( वर्णाशिक्यं तदा तया ).

(६) विध. २।१८०।११ ; अग्नि. २५०।९–१० विगृ ( निगृ ) लक्ष्याऽऽ ( लक्ष्यं ) णांश्च ( णाच्च ).

(७) विध. २।१८०।१२ वेध्य ( वैध्य ) ; अग्नि. २५०।१०–११ दादितः ( च्वाऽऽदितः ) वृत्त ( वृत्तं ).

(८) विध. २।१८०।१३ ; अग्नि. २५०।११–१२ पूर्वार्धे ( निम्नमुन्नतवेधं च अभ्यसेत् क्षिप्रकं ततः । ) संन्यस्तपुटकं ( सत्त्वस्य पुटकात् ).

[1]हस्तावापगतैः स्रस्तैर्जपेद्धस्तकरैरपि ।
तस्मिन् वेध्यगते राम द्वे वेध्ये दृढसंज्ञिते ॥

[2]द्वे वेध्ये पुष्करे विद्धि द्वे तथा चित्रपुष्करे ।
चतुरस्रं च तीक्ष्णं च दृढवेध्ये प्रकीर्तिते ॥

[3]चतुरस्रं स्थूलतीक्ष्णं .......... ।
निम्नं पुष्करमुद्दिष्टं वेध्यमूर्ध्वगतं च यत् ॥

[4]पुष्करेऽधमवेध्ये तु चित्रपुष्करसंज्ञके ।
एवं वेध्यगणं कृत्वा दक्षिणेनेतरेण च ॥

[5]आरोहेत्प्रथमं धीरो जितलक्ष्यस्ततो नरः ।
एष एव विधिः प्रोक्तस्तत्र दृष्टः प्रयोक्तृभिः ॥

[6]आदिकं भ्रमणं तस्य तस्माद्विद्वन् प्रकीर्तितम् ।
लक्ष्यं संयोजयेत्तत्र प्रतियन्त्रगतं दृढम् ॥

[7]भ्रान्तं प्रचलितं चैव स्थितं यच्च भवेदिति ।
समन्ताच्छादयेत्पश्चाच्छेदयेच्छ्लथयेदपि ॥

(१) विध. २।१८०।१४ ; अग्नि. २५०।१२–१३ पूर्वार्धे ( हस्तावापशतैश्चित्रैस्तर्जयेद्दुस्तरैरपि । ) राम ( विप्र ) ज्ञिते ( ज्ञके ).

(२) विध. २।१८०।१५ ; अग्नि. २५०।१३–१४ पुष्करे विद्धि ( दुष्करे वेध्ये ) चित्रपु ( चित्रदु ) चतुरस्रं ( न तु निम्नं ).

(३) विध. २।१८०।१६ ; अग्नि. २५०।१४ पुष्कर ( दुष्कर ) उक्त.

(४) विध. २।१८०।१७ ; अग्नि. २५०।१५ पूर्वार्धे ( मस्तकायनमध्ये तु चित्रदुष्करसंज्ञके । ).

(५) विध. २।१८०।१८; अग्नि. २५०।१६ धीरो ( वीरो ).

(६) विध. २।१८०।१९ ; अग्नि. २५०।१७ आदिकं ( अधिकं ) द्विद्वन् ( द्वेष्याद् ) संयो ( स यो ) प्रतियन्त्र ( पत्रिपत्र ).

(७) विध. २।१८०।२० ; अग्नि. २५०।१८ स्थितं ( स्थिर ) दिति ( दति ) उत्तरार्धे ( समन्तात्ताडयेद् भिन्द्याच्छेदयेद् व्यथयेदपि ॥ ).

[1]कर्मयोगविधानज्ञो ज्ञात्वैवं विधिमाचरेत् ।
मनसा चक्षुषा दृष्ट्या योगं
शिक्षन्न्यसंजयेत् ( ? ) ॥

[2]दत्त्वा प्रयुक्तं सुकृतं प्रमाणा-
न्न्यसेत्समन्तात्पुटकान् विचित्रान् ।
अप्यङ्गुलीयप्रतिमां जपेच्च
वालङ्गताः काष्ठगतं प्रलम्बम् ॥
सिद्धार्थकान् गुञ्जयवांश्च तस्मिन्
न्यसेद्विधिज्ञो भ्रमरीरिकां च ।
मृत्पिण्डसंस्थान् फलकाङ्क्षितांश्च
कबन्धनिष्पावकपेलवांश्च ॥
हंसान् मयूरान् कुररांस्तथा च
कारण्डवांश्चैव शिलीमुखांश्च ।
गृध्रानुलूकानथवाऽपि चाषान्
कपोतगोधाशुकसारिकाश्च ॥
पलाशमूलोर्णवपूर्णदेहां-
श्चर्मावबद्धां मृदुचित्रगात्राम् ।
वरत्रयन्त्रैर्विविधैः सुयुक्तां
काष्ठावसक्तैर्बहुभिः प्रकारैः ॥
चलान् स्थिरांश्चाप्रगतांश्च विद्वान्
न्यसेद्यथान्यायमथोर्ध्वसंस्थान् ।
व्याघ्रान् मृगेन्द्रान् पृषतान् रुरूंश्च
मृगान् सगोकर्णवराहवक्त्रान् ॥
गोमायुमार्जारशशांस्तथाऽन्या-
नृक्षान् मृगांश्चन्द्रमयेन्दुपूर्णान् ।
अन्यान् समीपोपगतान् मृगांश्च
विधानवित्तान् प्रतियन्त्रसंस्थान् ॥
जातांस्तथाऽन्यांश्च बहुप्रकारा-
ननेकसंस्थानविबद्धदेहान् ।
नानाविधैस्तैर्विशिखभ्रमस्थः
संधानयोगैस्त्रिविधैश्च हन्यात् ॥

(१) विध. २।१८०।२१ ; अग्नि. २५०।१९ योगं शिक्षन्न्यसं ( योगशिक्षुर्यमं ).

(२) विध. २।१८०।२२–२८.

वाहाश्रितस्य आयुधधारणक्षेपणविधिः, पाशासियष्टि-
दण्डशूलतोमरक्षेपणीकृपाणीपट्टिशमुद्गरवज्र-
गदापरश्वादिशस्त्रकर्माणि, नियुद्धकर्म

पुष्कर उवाच—

[1]जितहस्तो जितमतिर्जितदृग्लक्ष्यसाधकः ।
नियतां सिद्धिमासाद्य ततो वाहनमारुहेत् ॥

[2]एष तत्रैव च विधिः कार्त्स्न्येन परिकीर्तितः ।
अधिकं भ्रमतस्तस्य भागे ग्रहणमेव च ॥

एतेषां चैव योगानां विधिर्यस्त्वैषुकस्य च ।
वाहाश्रितस्य वक्ष्यामि संविशेषेण लक्षणम् ॥

पाशासियष्टिदण्डानां विधिर्यः परिनिष्ठितः ।
क्षेप एव यथान्यायं तस्य वक्ष्यामि या क्रिया ॥

[3]दशहस्तो भवेत्पाशो धृतः करमुखस्तथा ।
शणकार्पासपुञ्जानां भग्नस्नाय्वस्थिचर्मणाम् ॥

[4]अन्येषां सुदृढानां च सुकृतं परिवेष्टितम् ।
त्रयस्त्रिंशत्समं चापं बुधः कुर्यात्सुवर्तितम् ॥

[5]कर्तव्यं शिक्षकैस्तस्य स्थानं कक्ष्यासु वै तदा ।
वामहस्तेन संगृह्य दक्षिणेनोद्धरेत्तु सः ॥

[6]कुण्डलस्याऽऽकृतिं कृत्वा ग्रामैकं मस्तकोपरि ।
क्षिपेत्तृणमये तूर्णं पुरुषे चर्मवेष्टिते ॥

[1]चलिते च प्लुते चैव तथा प्रजवितेषु च ।
समायोगविधिं ज्ञात्वा प्रयुञ्जीत सुशिक्षितः ॥

[2]विजित्य तु यथान्यायं ततो बन्धं समाचरेत् ।
कट्यां बद्ध्वा ततः खड्गं वामपार्श्वावलम्बिनम् ॥

[3]दृढं विगृह्य वामेन विकर्षे दक्षिणेन तु ।
षडङ्गुलपरीणाहं समहस्तं समुच्छ्रितम् ॥

[4]अयोमयशलाकाश्च चर्माणि विविधानि च ।
अपहस्तं समं चैव तिर्यगूर्ध्वहतं तथा ॥

[5]शोधयेद्विधिना येन तथा मे गदतः शृणु ।
तार्णं चर्मावनद्धाङ्गं स्थापयित्वा नरं दृढम् ॥

[6]करेणाऽऽदाय लगुडं दक्षिणाङ्गुष्ठकान्तरः ।
उद्यम्य घातयेद्यस्य नाम्नस्तं शिरसो दृढम् ।
उभाभ्यामपि हस्ताभ्यां कुर्यात्तस्य निपातनम् ॥

[7]विम्बोऽयं विधिसहितो हितः सुमुक्तिः
शिष्याणां हितमतिकुर्वता मया ते ।
वाहानां भ्रमरणप्रधारणार्थं
योग्यार्हं प्रथमतरं बुधेन बध्यम् ॥

(१) विध. २।१८१।१ ; अग्नि. २५१।१.

(२) विध. २।१८१।२–४.

(३) विध. २।१८१।५ ; अग्नि. २५१।२ धृतः ( वृत्तः ) उत्तरार्धे ( गुणकार्पासमुञ्जानां भङ्गस्नाय्वर्कवर्मिणाम् ॥ ).

(४) विध. २।१८१।६ ; अग्नि. २५१।३ त्रयस्त्रि ( तया त्रि ) चापं ( पाशं ).

(५) विध. २।१८१।७ व्यं शिक्षकै ( व्या शिबिकै ) ; अग्नि. २५१।४ कक्ष्या ( कक्षा ) तु सः ( ततः ).

(६) विध. २।१८१।८ ; अग्नि. २५१।५ ग्रामैकं ( ऽऽभ्राम्यैकं ) तृण ( तूण ).

(१) विध. २।१८१।९ ; अग्नि. २५१।६ चलिते ( वल्गिते ) जवि ( व्रजि ) समा ( सम ) ज्ञात्वा ( कृत्वा ) क्षितः ( क्षितम् ).

(२) विध. २।१८१।१० ; अग्नि. २५१।७ जित्य ( जित्वा ) म्बिनम् ( म्बितम् ).

(३) विध. २।१८१।११ ; अग्नि. २५१।८ विकर्षे ( निष्कर्षेद् ) समहस्तं ( सप्तहस्त ).

(४) विध. २।१८१।१२ ; अग्नि. २५१।९ मय ( मय्यः ) चर्मा ( वर्मा ) अपहस्तं समं ( अर्धहस्ते समे ) हतं ( गतं ).

(५) विध. २।१८१।१३ ; अग्नि. २५१।१० शोध ( योज ) मे ( त्वं ) तार्णं ( तृण ) नरं ( नवं ).

(६) विध. २।१८१।१४ ; अग्नि. २५१।११–१२ णाङ्गुष्ठकान्तरः ( णाङ्गुलकं नवम् ) नाम्नस्तं शिरसो ( नाशस्तेन शिशोः ) मपि ( मथ ).

(७) विध. २।१८१।१५ ; अग्नि. २५१।१२ ( अक्लेशेन ततः कुर्वन् वधे सिद्धिः प्रकीर्तिता । वाहानां श्रमकरणं प्रचारार्थं पुरा तव ॥ ).

पुष्कर उवाच—

[1]भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं निःसृतं सृतम् ।
संपातं समुदीर्णं च श्येनपातमथाऽऽकुलम् ॥
[2]उद्धूतमवधूतं च सव्यं दक्षिणमेव च ।
अनालक्षितविस्फोटौ करालेन्द्रमहामुखौ ॥
[3]विकरालविपातौ च विभीषणभयंकरौ ।
समग्रार्धतृतीयांशपादपादार्धवारिजाः ॥
[4]प्रत्यालीढमथाऽऽलीढं वराहं लुलितं तथा ।
इति द्वात्रिंशधा ज्ञेयाः खड्गचर्मविधारणे ॥
[5]ऋज्वायतं विशालं च तिर्यङ्नमितमेव च ।
पञ्चकर्म विनिर्दिष्टं व्यस्ते पाशे महात्मभिः ॥
[6]छेदनं भेदनं पातो भ्रमणं शमनं तथा ।
विकर्तनं कर्तनं च चक्रकर्मेदमेव च ॥
[7]आस्फोटः क्ष्वेडनं भेदस्त्रासोल्लासितकौ तथा ।
शूलकर्माणि जानीहि षष्ठमाघातसंज्ञकम् ॥

(१) विध. २।१८२।१ चतुर्थचरणे (सेनापातमनाकुलम्) ; अग्नि. २५२।१ निःसृतं सृतम् (विप्लुतं प्लुतम्) दीर्णं (दीर्शं).

(२) विध. २।१८२।२ उद्धू (उद्धा) ; अग्नि. २५२।२ मुखौ (सखौ).

(३) विध. २।१८२।३ उत्तरार्धे (समग्रां वा तृतीयां वा पादपादावजारिजाः ॥) ; अग्नि. २५२।३ विपा (निपा) भयंकरौ (भयानकौ).

(४) विध. २।१८२।४ मथाऽऽ (मना) ; अग्नि. २५२।४ शधा (शतो), एतच्छ्लोकानन्तरमधिकौ श्लोकौ— 'परावृत्तमपावृत्तं गृहीतं लघुसंज्ञितम् । ऊर्ध्वाक्षिप्तमधःक्षिप्तं संधारितविधारितम् ॥ श्येनपातं गजपातं ग्राहग्राह्यं तथैव च । एवमेकादश विधा ज्ञेयाः पाशविधारणे ॥'.

(५) विध. २।१८२।५ व्यस्ते पाशे (व्यस्त्रे प्रासे) ; अग्नि. २५२।७ नमित (भ्रामित).

(६) विध. २।१८२।६ भेदनं (तर्जनं) शमनं (भ्रामणं) कर्मेद (भ्रमण) ; अग्नि. २५२।८.

(७) विध. २।१८२।७ ; अग्नि. २५२।९ सोल्लासि (सान्द्रोलि) संज्ञकम् (संज्ञितम्).

[1]दृष्टिघातं भुजाघातं पार्श्वघातं च भार्गव ।
ऋज्वावक्षेपमाघातं तोमरस्य प्रकीर्तितम् ॥
[2]संहताविततं वामं गोमूत्रं कमलाविलम् ।
ततोऽर्धभागनमितं वामदक्षिणमेव च ॥
[3]व्यावृत्तं च परावृत्तं पादोद्धूतमविप्लुतम् ।
हंसमार्गविमार्गे च गदाकर्म प्रकीर्तितम् ॥
[4]करालमवपातं च दंशोपप्लवमेव च ।
क्षिप्तं हस्तस्थितं शून्यं परशोस्तु विनिर्दिशेत् ॥
[5]ताडनं छेदनं राम तथा चूर्णनमेव च ।
मुद्गरस्य तु कर्माणि लगुडस्य च तान्यपि ॥
[6]अन्त्यं मध्यं परावृत्तं निदेशार्धं तथैव च ।
वज्रस्यैतानि कर्माणि पट्टिशस्य तथैव हि ॥
[7]हरणं छेदनं घातो भेदनं रक्षणं तथा ।
कृपाणीकर्म निर्दिष्टं पातनं स्फोटनं तथा ॥
[8]त्रासनं रक्षणं घातं तलोद्धरणमायतम् ।
क्षेपणीकर्म निर्दिष्टं यन्त्रकर्मैतदेव तु ॥

(१) विध. २।१८२।८ ; अग्नि. २५२।१० च भार्गव (द्विजोत्तम) तृतीयचरणे (ऋजुपक्षेषुणा पातं).

(२) विध. २।१८२।९ ; अग्नि. २५२।११ पूर्वार्धे (आहतं विप्र गोमूत्रप्रभूतं कमलासनम् ।) ऽर्धभाग (ध्वंगात्र).

(३) विध. २।१८२।१० ; अग्नि. २५२।१२ व्यावृ (आवृ) विप्लु (वप्लु) मार्गविमार्गे (मर्दं विमर्दं).

(४) विध. २।१८२।११ दंशो (दशो) ; अग्नि. २५२।१३ पातं (घातं) प्लव (प्लुत) क्षिप्तं हस्त (क्षिप्तहस्तं).

(५) विध. २।१८२।१२ ; अग्नि. २५२।१४–१५ राम (विप्र) चतुर्थचरणे (तथा प्लवनघातनम्), अंतः परमधिकः श्लोकः— 'संभ्रान्तमथ विश्रान्तं गोविसर्गं सुदुर्धरम् । भिन्दिपालस्य कर्माणि लगुडस्य च तान्यपि ॥'.

(६) विध. २।१८२।१३ ; अग्नि. २५२।१६ द्वितीयचरणे (निदेशान्तं द्विजोत्तम) तथैव हि (च तान्यपि).

(७) विध. २।१८२।१४ ; अग्नि. २५२।१७ पाणी (पाण).

(८) विध. २।१८२।१५ ; अग्नि. २५२।१८ घातं तलो (घातो वलो).

[1]संत्यागमङ्गमर्दं च वराहोद्धूतकं तथा ।
हस्तार्धहस्तपालीनमेकहस्तार्धहस्तकम् ॥

[2]द्विहस्तबाहुपाशे च कोटिरेचितकोद्धते ।
उरोललाटघाते च भुजाविवसनं तथा ॥

[3]करोद्धूतविमार्गं च पादाहति विपादकम् ।
गात्रसंश्लेषणं कान्तं तथा गोविधिपर्ययम् ॥

[4]ऊर्ध्वप्रहारं घातं च गोमूत्रं सव्यदक्षिणम् ।
पादसंचारकं गण्डं कबरीबन्धमाकुलम् ॥

[5]तिर्यग्गतमपामार्गं भीमवेगं सुदर्शनम् ।
सिंहक्रान्तं गजक्रान्तं वृषभाक्रान्तमेव च ॥

[6]गदाकर्म विजानीयाद्धनुर्वेदविशारदः ।
आकर्षणं विकर्षं च बाहुनामनमेव च ॥

[7]ग्रीवाविपरिवर्तं च पृष्ठभङ्गं सुदारुणम् ।
पर्णासनं विपर्यासः पशुमारमजाविकम् ॥

(१) विध. २।१८२।१६ ; अग्नि. २५२।१९ ( सप्ताङ्गमवदंशश्च वराहोद्धूतकं तथा । हस्तावहस्तमालीनमेकहस्तावहस्तके ॥ ).

(२) विध. २।१८२।१७ ; अग्नि. २५२।२० कोटि ( कटि ) कोद्धते ( कोद्गते ) विवसनं ( विधमनं ).

(३) विध. २।१८२।१८ ; अग्नि. २५२।२१ (करोद्धूतं विमानं च पादाहतिर्विपादिकम् । गात्रसंश्लेषणं शान्तं तथा गात्रविपर्ययः ॥ ).

(४) विध. २।१८२।१९ ; अग्नि. २५२।२२ दक्षिणम् ( दक्षिणे ) तृतीयचरणे ( पारकं तारकं दण्डं ).

(५) विध. २।१८२।२० ; अग्नि. २५२।२३ ग्गत ( गबन्ध ) सिंह ( सिंहा ) गज (गजा) वृषभा (गर्दभा).

(६) विध. २।१८२।२१ ; अग्नि. २५२।२४ ( गदाकर्माणि जानीयान्नियुद्धस्याथ कर्म च । आकर्षणं विकर्षं च बाहूनां मूलमेव च ॥ ).

(७) विध. २।१८२।२२ मार ( पार ) ; अग्नि. २५२।२५ तृतीयचरणे ( पर्यासनविपर्यासौ ).

[1]पादप्रहारमास्फोटं कटिरेचितकं तथा ।
गात्रश्लेषं कण्ठगतं महीत्याजनमेव च ॥

[2]उरोललाटघातं च विस्पष्टकरणं तथा ।
उद्धूतमवधूतं च तिर्यग्मार्गगतं तथा ॥

[3]गजस्कन्धमवक्षेपमवाङ्मुखकमेव च ।
देवमार्गमधोमार्गममार्गगमनाकुलम् ॥

[4]मुष्टिघातमवक्षेपो वसुधादारणं तथा ।
जानुबन्धं भुजाबन्धमूरुबन्धं सुदारुणम् ॥

[5]संसृष्टं सोदरं शुभ्रं भुजावेल्लितमेव च ।
नियुद्धकर्म जानीयान्नियुद्धकुशलो जनः ॥

[6]प्रधानकर्माणि तवेरितानि
न्यस्तप्रधाने पुरुषप्रवीर ।
नामानि रूपाणि भवन्ति तानि
ज्ञेयानि सर्वाणि यथानुरूपम् ॥

[7]चतुरङ्गबलं कुर्यात्सुभृतं च तथा नृपः ॥

## अग्निपुराणम्

सेनालक्षणसमुच्चयः

[8]पितृपैतामहो वश्यः संहतो दत्तवेतनः ।
विख्यातपौरुषो जन्यः कुशलः *शकुनैर्वृतः ॥

* कामन्दकीयवचनेन साम्यात् ‘ शकुनैः ’ इत्यत्र ‘कुशलैः’ इति शुद्धिः कल्प्या ।

(१) विध. २।१८२।२३ कटि ( कवि ); अग्नि. २५२।२६ गात्र ( गात्रा ) कण्ठ ( स्कन्ध ) त्याज ( व्याज ).

(२) विध. २।१८२।२४ ; अग्नि. २५२।२७.

(३) विध. २।१८२।२५ ; अग्नि. २५२।२८ मवाङ्मुखक ( मपराङ्मुख ).

(४) विध. २।१८२।२६ ; अग्नि. २५२।२९ मुष्टि ( यष्टि ) न्धमूरु ( न्धं गात्र ).

(५) विध. २।१८२।२७ ; अग्नि. २५२।३० संसृष्ट सोदरं ( विपृष्ठं सोदकं ) वेल्लित ( वेष्टित ) पू.

(६) विध. २।१८२।२८.

(७) विध. ३।३२३।१२.

(८) अग्नि. २३९।३१–३३.

नानाप्रहरणोपेतो नानायुद्धविशारदः ।
नानायोधसमाकीर्णो नीराजितहयद्विपः ॥
प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः ।
अद्वैधक्षत्रियप्रायो दण्डो दण्डवतां मतः ॥

विविधं धनुःस्वरूपं विविधाः शराश्च

'धनुर्द्रव्यत्रयं लोहं शृङ्गं दारु द्विजोत्तम ।
ज्याद्रव्यत्रितयं चैव वंशभङ्गत्वचस्तथा ।
दारुचापप्रमाणं तु श्रेष्ठं हस्तचतुष्टयम् ॥
तदेव समहीनं तु प्रोक्तं मध्यकनीयसि(?) ।
मुष्टिग्राहनिमित्तानि मध्ये द्रव्याणि कारयेत् ॥
स्वल्पकोटिस्त्वचा शृङ्गं शार्ङ्गलोहमये द्विज(?) ।
कामिनीभ्रूलताकारा कोटिः कार्या सुसंयता ॥
पृथग्वा विप्र मिश्रं वा लौहं शार्ङ्गं तु कारयेत् ।
शार्ङ्गं समुचितं कार्यं रुक्मबिन्दुविभूषितम् ॥
कुटिलं स्फुटितं चापं सच्छिद्रं च न शस्यते ।
सुवर्णं रजतं ताम्रं कृष्णायो धनुषि स्मृतम् ॥
माहिषं शारभं शार्ङ्गं रौहिषं वा धनुः शुभम् ।
चान्दनं वैतसं सालं धावलं काकुभं तथा ॥
सर्वश्रेष्ठं धनुर्वंशैर्गृहीतैः शरदि श्रितैः ।
पूजयेत्तु धनुः खड्गं मन्त्रैस्त्रैलोक्यमोहनैः ॥
अयसश्चाथ वंशस्य शरस्याप्यशरस्य च ।
ऋजवो हेमवर्णाभाः स्नायुश्लिष्टाः सुपत्रकाः ॥
रुक्मपुंखाः सुपुंखास्ते तैलधौताः सुवर्णकाः ।
यात्रायामभिषेकादौ यजेद्बाणधनुर्मुखान् ॥
सपताकास्त्रसंग्राहं सांवत्सरकरान्नृपः ॥

खड्गप्रशंसा, विविधखड्गलक्षणानि

ब्रह्मा वै मेरुशिखरे स्वर्गगङ्गातटेऽयजत् ॥
लोहदैत्यं स ददृशे विघ्नं यज्ञे तु चिन्तयन् ।
तस्य चिन्तयतो वह्नेः पुरुषोऽभूद्बली महान् ॥
ववन्देऽजं च तं देवा अभ्यनन्दन्त हर्षिताः ।
तस्मात्स नन्दकः खड्गो देवोक्तो हरिरग्रहीत् ॥

(१) अग्नि. २४५।४-२७.

तं जग्राह गले देवो विकोषः सोऽभ्यपद्यत ।
खड्गो नीलो रत्नमुष्टिस्ततोऽभूच्छतबाहुकः ॥
दैत्यः स गदया देवान् द्रावयामास वै रणे ।
विष्णुना खड्गच्छिन्नानि दैत्यगात्राणि भूतले ॥
पतितानि तु संस्पर्शान्नन्दकस्य च तानि हि ।
लोहभूतानि सर्वाणि हत्वा तस्मै हरिर्वरम् ॥
ददौ पवित्रमङ्गं त आयुधाय भवेद्भुवि ।
हरिप्रसादाद्ब्रह्माऽपि विना विघ्नं हरिं प्रभुम् ॥
पूजयामास यज्ञेन वक्ष्येऽथो खड्गलक्षणम् ।
खटीखट्टरजाता ये दर्शनीयास्तु ते स्मृताः ॥
कायच्छिदस्त्वार्षिकाः स्युर्दृढाः सूर्पारकोद्भवाः ।
तीक्ष्णाश्छेदसहा वङ्गास्तीक्ष्णाः स्युश्चाङ्गदेशजाः ॥
शतार्धमङ्गुलानां च श्रेष्ठं खड्गं प्रकीर्तितम् ।
तदर्धं मध्यमं ज्ञेयं ततो हीनं न धारयेत् ॥
दीर्घः सुमधुरः शब्दो यस्य खड्गस्य सत्तम ।
किङ्किणीसदृशस्तस्य धारणं श्रेष्ठमुच्यते ॥
खड्गः पद्मपलाशाग्रो मण्डलाग्रश्च शस्यते ।
करवीरदलाग्राभो घृतगन्धो वियत्प्रभः ॥
समाङ्गुलस्थाः शस्यन्ते व्रणाः खड्गेषु लिङ्गवत् ।
काकोलूकसवर्णाभा विषमास्ते न शोभनाः ॥
खड्गे न पश्येद्वदनमुच्छिष्टो न स्पृशेदसिम् ।
मूल्यं जातिं न कथयेन्निशि कुर्यान्न शीर्षके ॥

## कामन्दकीयनीतिसारः

सेनालक्षणसमुच्चयः

'पितृपैतामहो वश्यः संहतो दत्तवेतनः ।
विख्यातपौरुषो जन्यः कुशलः कुशलैर्वृतः ॥

(१) पितुरयं पितामहस्यायमिति पितृपैतामहः । वश्यः संबन्धी । संहतः अपेक्षितः । रार. ४०

(१) कानी. ४।६३ ; रार. ३९ वश्यः (वंश्यः) विख्या (प्रख्या) ; उनि. चे जन्यः (चौर्जित्यः).

(२) दण्डसंपदमाह— पितृपैतामहो वश्य इत्यादिना श्लोकत्रयेण। वश्यः यथाज्ञातकरः। संहतः परेषाममेद्यः। दत्तवेतनः कृतसंविभागः। विख्यातपौरुषः, अनेकयुद्धविजयित्वात्। जन्यः जानपदः। कुशलः शिल्पेषु। कुशलैर्वृतः शाखास्थानीयैः पुत्रपौत्रादिभिः। जम.

(३) दण्डप्रकृतेर्गुणसंपदमभिधातुमाह— पितृपैतामह इति क्रमायातः। वश्य इति विधेयः। संहतः इति अविभिन्नः। दत्तवेतनः इति कृतभरणः। विख्यातपौरुषोर्जित इति। विख्यातं प्रसिद्धिं गतं पौरुषोर्जित्यं पुरुषस्य बलवत्त्वम्, 'ऊर्ज बलप्राणनयोः' इति पाठात्, पौरुषबलवत्ता प्रख्याता यस्य स तथा। कुशलः सर्वायुधयुद्धकुशलः। कुशलैरेवाधिष्ठातृभिः परिवृतः अनुगतः। उनि.

'नानाप्रहरणोपेतो नानायुद्धविशारदः।
नानायौधसमाकीर्णो नीराजितहयद्विपः॥

(१) नानायुद्धं हस्त्यश्वादिभिः। नानायौधाः निम्नस्थलखनकाकाशदिवारात्रयोधिनः। नीराजितहयद्विपः। ते हि शास्त्रोक्तविधिना नीराजिताः दैवमानुषीभिरापद्भिर्नाभिभूयन्ते। जम.

(२) नानाप्रहरणोपेतः धनुःकुन्तासिचक्रगदाद्यायुधयुक्तः। नानायुद्धविशारद इति जलस्थलखनिकाकाशयुद्धादिपण्डितः। नानायोधसमाकीर्ण इति जलस्थलादियोधसंकीर्णः। नीराजितहयद्विप इति। तथा अत्र कौटिल्यः— 'नीराजनामाश्वयुजे कारयेन्नवमेऽहनि। यात्रादाववसाने वा व्याधौ वा शान्तिके रतः॥' (कौ. २।३०) इति। एवं नीराजिता हयद्विपा यत्रेति। उनि.

'प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः।
अद्वैध्यः क्षत्रियप्रायो दण्डो दण्डविदां मतः॥

(१) कानी. ४।६४; रार. ३९ बौध (योध); उनि. रारवत्.

(२) कानी. ४।६५; रार. ३९ द्वैध्यः (द्वैधः).

(१) दण्डोऽत्र सेनापतिर्विवक्षितः, प्रागुक्तविशेषणासंभवात्। न च पदातौ संभवः, नीराजितहयद्विपत्वाभावात्। रार. ४०

(२) आयासः कर्मसु व्यापारः। दुःखं शीतोष्णवर्षादिप्रभवम्। कृतश्रमः न सहसा श्राम्यति। अद्वैध्यः, राज्ञा सहवृद्धिक्षयत्वात्। क्षत्रियप्रायः। क्षत्रियाणां युद्धयोग्यत्वादितरेषामपि तत्संपर्कादुत्साहो भवति। जम.

(३) प्रवासेत्यादि प्रतीतम्। अद्वैध्य इति परस्परं द्वैधीभावरहितः। क्षत्रियप्राय इति क्षत्रियाः स्वभावत एव महासत्त्वा भवन्तीति। दण्डः चतुरङ्गबलम्। स एवंविधो दण्डविदां आचार्याणां मतः मान्यः इति। उनि.

दण्डप्रयोजनानि

*'मित्रामित्रहिरण्यानां भूमीनां च प्रसाधनम्।
दूरकार्याशुकारित्वं लब्धस्य परिपालनम्॥

परचक्रविघातश्च स्वदण्डस्य परिग्रहः।
दण्डादेतत्प्रभवति याति तद्व्यसने क्षयम्॥

अरयोऽपि हि मित्रत्वं यान्ति दण्डवतो ध्रुवम्।
दण्डप्रायो हि नृपतिर्भुनक्त्याक्रम्य मेदिनीम्॥

षड्विधं बलम्

†'षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत्॥

मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम्।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा॥

सत्कारादनुरागाच्च सहसंकथनासनात्।
नित्यं तद्भावभावित्वान्मौलं भृतबलाद् गुरु॥

* अस्य श्लोकत्रयस्य व्याख्यानं 'प्रकृतिव्यसनानि' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

† 'षड्विधं तु बलं' इत्यारभ्य 'नागवतां बलानाम्' इत्यन्तानां श्लोकानां व्याख्यानं 'यात्रा— अभियास्यत्कर्म' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

(१) कानी. १४।३५–३७.

(२) कानी. १९।२–८.

संनिकृष्टतया नित्यं क्षिप्रोत्थानतयाऽपि च ।
वृत्तेश्च स्वाम्यधीनत्वाद्भृतं श्रेणिबलाद्गुरु ॥
तुल्यसंघर्षणामर्षात्सुखलाभात्तथैव च ।
बलाज्जानपदत्वाच्च मैत्राच्छ्रेणिबलं गुरु ॥
असंख्यदेशकालत्वादेकार्थोपगमात्तथा ।
बलान्मेदनयोगाच्च शत्रोर्मित्रबलं गुरु ॥
प्रकृत्याऽधार्मिका लुब्धा अनार्याः सत्यभेदिनः ।
तस्मादारण्यकतया तेभ्यः शत्रुबलं गुरु ॥
[1]एतन्मौलादिषड्भेदं चतुरङ्गं बलं विदुः ।
षडङ्गं मन्त्रकोशाभ्यां पदात्यश्वरथद्विपैः ॥

गजबलमहिमा

[2]सुगन्धिदानस्रुतिशीकरेषु
दन्ताभिघातस्फुटितोपलेषु ।
गजेषु नीलाभ्रसमप्रभेषु
राज्यं निबद्धं पृथिवीपतीनाम् ॥
सुकल्पितः संयति दृष्टमार्गः
स्वधिष्ठितो वीरतमेन पुंसा ।
तुरंगमाणामपि कल्पिताना-
मेको गजः षष्टिशतानि हन्ति ॥
जले स्थले च द्रुमसंकटे च
समेऽसमे साधु चलेऽचले च ।
प्राकारहर्म्याट्टविदारणे च
जयो ध्रुवं नागवतां बलानाम् ॥
*[3]एकोऽपि वारणपतिर्द्विषतामनीकं
युक्तं निहन्ति मदसत्त्वगुणोपपन्नः ।
नागेषु हि क्षितिभृतां विजयो निबद्ध-
स्तस्माद्गजाधिकबलो नृपतिः सदा स्यात् ॥

* 'एकोऽपि वारणपतिः' इत्यारभ्य 'कर्मसु योजयेत्' इत्यन्तानां श्लोकानां व्याख्यानं 'यात्रा– संग्रामः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कानी. १९।२४.
(२) कानी. १६।१०–१२.
(३) कानी. २०।६१.

हस्तिरथाश्वपत्तिविष्टिकर्माणि

'प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनम् ।
अकृतानां च मार्गाणां तीर्थानां च प्रवर्तनम् ॥'
तोयावतारसंतारावेकाङ्गविजयस्तथा ।
अभिन्नानामनीकानां भेदनं भिन्नसंग्रहः ॥
बिभीषिकाऽभिघातश्च प्राकारद्वारभञ्जनम् ।
कोशनीतिर्भयत्राणं हस्तिकर्म प्रचक्षते ॥
चतुरङ्गस्य सैन्यस्य निषेधो बलरक्षणम् ।
अभिन्नभेदनं भिन्नसंधानं रथकर्म तत् ॥
वनदिङ्मार्गविचयो विवधासाररक्षणम् ।
अनुयानापसरणे शीघ्रकार्योपपादनम् ॥
दीनानुसरणं घातः कोटीनां जघनस्य च ।
इत्यश्वकर्म पत्तेश्च सर्वदा शस्त्रधारणम् ॥
शोधनं कूपतीर्थानां मार्गाणां शिबिरस्य च ।
यवसादि च यत्किंचिद्विज्ञेयं विष्टिकर्म तत् ॥
जातिः सत्त्वं वयः स्थानं प्राणिता
वर्ष्म वेगिता ।
तेजः शिल्पमुदग्रत्वं स्थैर्यं साधु विधेयता ॥
सुव्यञ्जनाचारतेति पत्तिकुञ्जरवाजिनाम् ।
इति लक्षणमेतेन युक्तान् कर्मसु योजयेत् ॥

## शुक्रनीतिः

गजाश्वरथभृत्यसैनिकसंभारादिरक्षणत्यागविवेकः

[1]गजाश्वरथपश्वादीन् भृत्यान् दासांस्तथैव च ॥
संभारान्सैनिकान्कार्याक्षमान् ज्ञात्वा दिने दिने ।
संरक्षयेत्प्रयत्नेन सुजीर्णान् संत्यजेत्सुधीः ॥

सुधीः सुबुद्धिः नृपः दिने दिने गजान् अश्वान् रथान् पश्वादीन् भृत्यान् पोष्यवर्गान् दासान् किङ्करान् संभारान् प्रयोजनद्रव्याणि तथा सैनिकान् कार्याक्षमान् ज्ञात्वा विचार्य प्रयत्नेन संरक्षयेत्, कार्यक्षमान् कर्तुमिति शेषः । सुजीर्णान् अत्यन्ताक्षमानित्यर्थः, संत्यजेत् । शुनीटी.

(१) कानी. २०।१–९.
(२) शुनी. १।३६५–३६६.

गजाश्वादिविद्यावन्तः शिक्षका अधिपतयः सेवकाश्च कार्याः, तथा सार्ववर्णिका म्लेच्छाश्च सेनाधिपाः सैनिकाश्च कार्याः

*[1]प्रभद्रादिजातिभेदं गजानां च चिकित्सितम् ।
शिक्षां व्याधिं पोषणं च तालुजिह्वानखैर्गुणान् ।
आरोहणं गतिं वेत्ति स योज्यो गजरक्षणे ॥
तथाविधाधोरणस्तु हस्तिहृदयहारकः ॥
अश्वानां हृदयं वेत्ति जातिवर्णभ्रमैर्गुणान् ।
गतिं शिक्षां चिकित्सां च सत्त्वं
सारं रुजं तथा ॥
हिताहितं पोषणं च मानं यानं दतो वयः ।
शूरश्च व्यूहवित्प्राज्ञः कार्योऽश्वाधिपतिश्च सः ॥
एभिर्गुणैश्च संयुक्तो धुर्यान् युग्यांश्च वेत्ति यः ।
रथस्य सारं गमनं भ्रमणं परिवर्तनम् ॥
समापतत्सुशस्त्रास्त्रलक्ष्यसंधाननाशकः ।
रथगत्या स रथपो हयसंयोगगुप्तिवित् ॥
सादिनश्च तथा कार्याः शूरा व्यूहविशारदाः ।
वाजिगतिविदः प्राज्ञाः शस्त्रास्त्रैर्युद्धकोविदाः ॥
चक्रितं रेचितं वल्गितकं धौरितमाप्लुतम् ।
तुरं मन्दं च कुटिलं सर्पणं परिवर्तनम् ॥
एकादशाऽऽस्कन्दितं च गतीरश्वस्य वेत्ति यः ॥
यथाबलं यथार्थं च शिक्षयेत्स च शिक्षकः ॥
वाजिसेवासु कुशलः पल्याणादिनियोगवित् ।
दृढाङ्गश्च तथा शूरः स कार्यो वाजिसेवकः ॥
नीतिशस्त्रास्त्रव्यूहादिनतिविद्याविशारदाः ।
अबाला मध्यवयसः शूरा दान्ता दृढाङ्गकाः ॥
स्वधर्मनिरता नित्यं स्वामिभक्ता रिपुद्विषः ।
शूद्रा वा क्षत्रिया वैश्या म्लेच्छाः संकरसंभवाः ॥
सेनाधिपाः सैनिकाश्च कार्या राज्ञा जयार्थिना ॥

* 'प्रभद्रादिजातिभेदम्' इत्यारभ्य 'कुशलाश्च सदा हि ते' इत्यन्तानां श्लोकानां व्याख्यानं 'राज्ञः सहायाः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) शुनी. २।१२७–१५०.



उच्चावचपदस्थाः सेनाधिपतयः

पञ्चानामथवा षण्णामधिपः पदगामिनाम् ॥
योज्यः स पत्तिपालः स्यात्त्रिंशतां गौल्मिकः स्मृतः ।
शतानां तु शतानीकस्तथाऽनुशतिको वरः ॥
सेनानीर्लेखकश्चैते शतं प्रत्यधिपा इमे ।
साहस्रिकस्तु संयोज्यस्तथा
चाऽऽयुतिको महान् ॥
व्यूहाभ्यासं शिक्षयेद्यः सायं प्रातस्तु सैनिकान् ।
जानाति स शतानीकः सुयोद्धुं युद्धभूमिकाम् ॥
तथाविधोऽनुशतिकः शतानीकस्य साधकः ।
जानाति युद्धसंभारं कार्ययोग्यं च सैनिकम् ॥
निदेशयति कार्याणि सेनानीर्यामिकांश्च सः ।
परिवृत्तिं यामिकानां करोति स च पत्तिपः ॥
स्वावधानं यामिकानां विजानीयाच्च गुल्मपः ।
सैनिकाः कति सन्त्येतैः कति प्राप्तं तु वेतनम् ॥
प्राचीनाः के कुत्र गताश्चैतान् वेत्ति स लेखकः ।
गजाश्वानां विंशतेश्चाधिपो नायकसंज्ञकः ॥
उक्तसंज्ञान् स्वस्वचिह्नैर्लाञ्छितांश्च नियोजयेत् ।
अजाविगोमहिष्येणमृगाणामधिपाश्च ये ॥
तद्वृद्धिपुष्टिकुशलास्तद्वात्सल्यनिपीडिताः ।
तथाविधा गजोष्ट्रादेर्योज्यास्तत्सेवका अपि ॥
युद्धप्रवृत्तिकुशलास्तित्तिरादेश्च पोषकाः ।
शुकादेः पाठकाः सम्यक् श्येनादेः पातबोधकाः ।
तत्तद्हृदयविज्ञानकुशलाश्च सदा हि ते ॥

सेनावैविध्यम्

[1]दौर्गं संक्षेपतः प्रोक्तं सैन्यं सप्तममुच्यते ।
सेना शस्त्रास्त्रसंयुक्तमनुष्यादिगणात्मिका ॥

दौर्गं दुर्गविषयं प्रकरणं संक्षेपतः प्रोक्तम् । सप्तमं प्रकरणं सैन्यं सेनासंक्रान्तं उच्यते । शस्त्रैः अस्त्रैश्च संयुक्ता ये मनुष्यादयः पादातहस्त्यश्वरथा इत्यर्थः, तेषां गणः आत्मा यस्याः तथोक्ता सेना, उच्यत इति शेषः । शुनीटी.

(१) शुनी. ४।७।१–३०.

**स्वगमाऽन्यगमा चेति द्विधा सैव पृथक् त्रिधा ।**
**दैव्यासुरी मानवी च पूर्वपूर्वा बलाधिका ॥**

सा स्वगमा अन्यगमा चेति द्विधा । पृथक् पुनश्च सा एव दैवी आसुरी मानवी चेति त्रिधा । तासु पूर्वपूर्वा बलाधिका अधिकबलशालिनीत्यर्थः । तथा च दैवी सर्वश्रेष्ठा, तत आसुरी, ततश्च मानवीति भावः । शुनीटी.

**स्वगमा या स्वयं गन्त्री यानगाऽन्यगमा स्मृता ।**
**पादातं स्वगमं चान्यद्रथाश्वगजगं त्रिधा ॥**

या सेना स्वयं गन्त्री सा स्वगमा । यानगा अन्यगमा स्मृता । यथा पादातं पदातिवर्गः स्वगमं स्वयं पादचारेण गच्छतीत्यर्थः । अन्यत् अन्यगं रथाश्वगजगमिति त्रिधा । तथा च केचित् रथैः केचिदश्वैः केचिच गजैर्गच्छन्तीत्यर्थः । शुनीटी.

**सैन्याद्विना नैव राज्यं न धनं न पराक्रमः ।**
**बलिनो वशगाः सर्वे दुर्बलस्य च शत्रवः ।**
**भवन्त्यल्पजनस्यापि नृपस्य तु न किं पुनः ॥**

सैन्यात् विना राज्यं न, धनं न, पराक्रमश्च न तिष्ठेदित्यर्थः । यदा सर्वे जनाः बलिनः बलवतः जनस्य वशगाः वशवर्तिनः दुर्बलस्य च शत्रवः भवन्ति तदा अल्पजनस्य अनधिकसैन्यवतः नृपस्यापि किं पुनः न शत्रवो भवन्ति ? अपि तु भवन्त्येवेत्यर्थः । शुनीटी.

षट् बलानि

**शारीरं हि बलं शौर्यबलं सैन्यबलं तथा ।**
**चतुर्थमास्त्रिकबलं पञ्चमं धीबलं स्मृतम् ।**
**षष्ठमायुर्बलं त्वेतैरुपेतो विष्णुरेव सः ॥**

शारीरं बलम्, शौर्यबलं स्ववीर्यबलम्, सैन्यबलम्, चतुर्थं आस्त्रिकबलं अस्त्रप्रयोगसामर्थ्यमित्यर्थः, पञ्चमं धीबलं बुद्धिबलम्, षष्ठं आयुर्बलं जीवनसामर्थ्यं स्मृतम् । यस्तु एतैः बलैः उपेतः अन्वितः स विष्णुरेव । शुनीटी.

**न बलेन विनाऽप्यल्पं रिपुं जेतुं क्षमाः सदा ।**
**देवासुरनरास्त्वन्योपायैर्नित्यं भवन्ति हि ॥**

* बलेन विना जनाः अल्पं क्षुद्रमपि रिपुं शत्रुं सदा जेतुं न क्षमाः न समर्थाः । हि यतः देवासुरनराः सुरदैत्यमानवाः अन्योपायैः स्वबलव्यतिरिक्तैः उपायैः सैन्यादिबलैः तु एव, तुशब्दश्चावधारणे, नित्यं भवन्ति उद्युञ्जते इत्यर्थः । शुनीटी.

**बलमेव रिपोर्नित्यं पराजयकरं परम् ।**
**तस्माद्बलमभेद्यं तु धारयेद्यत्नतो नृपः ॥**

बलमेव रिपोः शत्रोः नित्यं परं श्रेष्ठं पराजयकरम् । तस्मात् नृपः अभेद्यं शत्रुदुर्धर्षं बलमेव यत्नतः धारयेत् । शुनीटी.

सेनाबलप्रकाराः, तेषां गुणतारतम्यम्

**सेनाबलं तु द्विविधं स्वीयं मैत्रं च तद्द्विधा ।**
**मौलसाद्यस्कभेदाभ्यां सारासारं पुनर्द्विधा ॥**

सेनाबलं स्वीयं मैत्रं चेति द्विविधम् । तच मौलसाद्यस्कभेदाभ्यां क्रमागताधुनिकभेदाभ्यां कियन्ति क्रमागतानि कियन्ति वा आधुनिकानीति विशेषाभ्यां द्विधा । तदपि पुनः सारमसारं चेति द्विधा । शुनीटी.

**अशिक्षितं शिक्षितं च गुल्मीभूतमगुल्मकम् ।**
**दत्तास्त्रादि स्वशस्त्रास्त्रं स्ववाहि दत्तवाहनम् ॥**

किंच, तत् सेनाबलं अशिक्षितं (शिक्षितम्), गुल्मीभूतं अगुल्मकम्, दत्तास्त्रादि दत्तानि अस्त्रादीनि यस्मै तत् स्वशस्त्रास्त्रं निजशस्त्रास्त्रयुक्तम्, स्ववाहि निजवाहनान्वितं दत्तवाहनं दत्तं वाहनं अश्वादि यस्मै तथाभूतमिति प्रत्येकं द्वैधीभावेन बहुविधमिति भावः । शुनीटी.

**सौजन्यात्साधकं मैत्रं स्वीयं भृत्या प्रपालितम् ।**
**मौलं बह्वब्दानुबन्धि साद्यस्कं यत्तदन्यथा ॥**

सौजन्यात् साधकं कार्यनिर्वाहकं सैन्यं मैत्रम् । भृत्या वेतनेन प्रपालितं परिपालितं सैन्यं स्वीयम् । बहून् अब्दान् वत्सरान् अनुबध्नाति इति तथोक्तं सैन्यं मौलम्, मूलायतत्वादिति भावः । तदन्यथा तद्भिन्नं अल्पदिन-

---

* वस्तुतः 'देवासुरनराः बलेन विना अन्योपायैः अल्पमपि रिपुं सदा जेतुं क्षमाः नित्यं न भवन्ति' इत्यन्वयः ।

नियुक्तमित्यर्थः, सैन्यं साद्यस्कम्, सद्योभवत्वादिति भावः। शुनीटी.

**सुयुद्धकामुकं सारमसारं विपरीतकम्।**
**शिक्षितं व्यूहकुशलं विपरीतमशिक्षितम्॥**

सुयुद्धकामुकं सुयुद्धे समुत्सुकं सैन्यं सारम्। विपरीतकं तद्भिन्नं असारम्। व्यूहेषु कुशलं निपुणं शिक्षितम्। विपरीतं अकुशलमित्यर्थः, अशिक्षितम्। शुनीटी.

**गुल्मीभूतं साधिकारि सस्वामिकमगुल्मकम्।**
**दत्तास्त्रादि स्वामिना यत्स्वशस्त्रास्त्रमतोऽन्यथा॥**

साधिकारि सस्वामिकं सेनापतिसहितमित्यर्थः, सैन्यं गुल्मीभूतम्। सस्वामिकं स्वाधीनमित्यर्थः, सैन्यं अगुल्मकम्। स्वामिना, यदित्यव्ययम्, यस्मै इत्यर्थः, अस्त्रादि दीयते इति शेषः, तत् दत्तास्त्रादि। अतोऽन्यथा एतद्व्यतिरिक्तं सैन्यं स्वशस्त्रास्त्रम्। शुनीटी.

**कृतगुल्मं स्वयंगुल्मं तद्वच्च दत्तवाहनम्।**
**आरण्यकं किरातादि यत्स्वाधीनं स्वतेजसा॥**

तद्वत् तथा कृतगुल्मं स्वामिना सेनापत्यधिष्ठितेषु सैन्येषु निवेशितम्। स्वयंगुल्मं स्वेच्छया गुल्माधिपतीभूतमित्यर्थः। दत्तवाहनं पूर्वमुक्तम्। यत् स्वतेजसा स्वाधीनं किरातादि तत् आरण्यकं सैन्यमित्यर्थः। शुनीटी.

**उत्सृष्टं रिपुणा वाऽपि भृत्यवर्गे निवेशितम्।**
**भेदाधीनं कृतं शत्रोः सैन्यं शत्रुबलं स्मृतम्।**
**उभयं दुर्बलं प्रोक्तं केवलं साधकं न तत्॥**

रिपुणा शत्रुणा उत्सृष्टं त्यक्तं सत् भृत्यवर्गे सैन्यदले निवेशितम्, वाऽपि अथवा शत्रोः भेदाधीनं भेदेन विच्छेदेन अधीनं आयत्तं सैन्यं शत्रुबलं स्मृतम्। एतदुभयं सैन्यं दुर्बलं प्रोक्तं कथितम्, अविश्वसनीयत्वादिति भावः। तस्मात् केवलं स्वसैन्यासमभिव्याहृतं तत् न साधकं न कार्यनिर्वाहकमित्यर्थः। शुनीटी.

**समैर्नियुद्धकुशलैर्व्यायामैर्नतिभिस्तथा।**
**वर्धयेद्बाहुयुद्धार्थं भोज्यैः शारीरकं बलम्॥**

समैः तुल्यबलैः नियुद्धकुशलैः सङ्ग्रामदक्षैः वीरैः सह बाहुयुद्धार्थं व्यायामैः अङ्गचालनाभिः नतिभिः गुरुजनप्रणतिभिः तथा भोज्यैः बलकरैरन्नादिभिः शारीरं बलं वर्धयेत्। गुरुजनप्रणत्या तेषां आशीर्वादात् बलवृद्धिरिति भावः। शुनीटी.

**मृगयाभिस्तु व्याघ्राणां शस्त्रास्त्राभ्यासतः सदा।**
**वर्धयेच्छूरसंयोगात्सम्यक् शौर्यबलं नृपः॥**

नृपः व्याघ्राणाम्, उपलक्षणमेतत्, हिंस्रजन्तूनामित्यर्थः, मृगयाभिः शरव्यकरणैः सदा शस्त्रास्त्राणां अभ्यासतः पुनः पुनः चालनेन तथा शूराणां वीराणां संयोगात् संसर्गात् शौर्यबलं सम्यक् वर्धयेत्। शुनीटी.

**सेनाबलं सुभृत्या तु तपोभ्यासैस्तथाऽऽस्त्रिकम्।**
**वर्धयेच्छास्त्रचतुरसंयोगाद्धीबलं सदा॥**

सुभृत्या सुवेतनेन सेनाबलम्, तपोभिः अभ्यासैश्च आस्त्रिकं अस्त्रप्रयोगबलम्, तथा सदा शास्त्राणां चतुराणां च संयोगात् संसर्गात् धीबलं बुद्धिबलं वर्धयेत्। शुनीटी.

**सत्क्रियाभिश्चिरस्थायि नित्यं राज्यं भवेद्यथा।**
**स्वगोत्रे तु तथा कुर्यात्तदायुर्बलमुच्यते।**
**यावद्गोत्रे राज्यमस्ति तावदेव स जीवति॥**

यथा नित्यं सततं सत्क्रियाभिः राज्यं चिरस्थायि भवेत् तथा स्वगोत्रे निजसंताने कुर्यात्। तदेव आयुर्बलमुच्यते। यस्मात् गोत्रे स्वसंताने यावद्राज्यं अस्ति तिष्ठति स तावदेव तावत्कालपर्यन्तमित्यर्थः, जीवति। शुनीटी.

विविधसेनानां प्रत्येकं संख्याविवेकः,
सैनिकादीनां वेतनप्रमाणम्

**चतुर्गुणं हि पादातमश्वतो धारयेत्सदा।**
**पञ्चमांशांस्तु वृषभानष्टांशांश्च क्रमेलकान्॥**
**चतुर्थांशान् गजानुष्ट्राद्गजार्धांश्च रथान् सदा।**
**रथात्तु द्विगुणं राजा बृहन्नालीकमेव च॥**

राजा अश्वतः अश्वसैन्यात् चतुर्गुणं पादातं पदातिसैन्यम्, पञ्चमांशान् वृषभान्, तथा अष्टांशान् क्रमेलकान् उष्ट्रान्, उष्ट्रात् उष्ट्रसैन्यात् चतुर्थांशान् गजान्, गजार्धान् गजसैन्यात् अर्धसंख्यकान् रथान्,

तथा रथात् द्विगुणं बृहन्नालीकं बृहन्नालीकास्त्रसैन्यं सदा धारयेत् रक्षेत् । शुनीटी.

पदातिबहुलं सैन्यं मध्याश्वं तु गजाल्पकम् ।
तथा वृषोष्ट्रसामान्यं रक्षेन्नागाधिकं न हि ॥

पदातिबहुलं बहुसंख्यकपदातिवर्गम्, मध्याश्वं मध्यविधसंख्यकतुरंगम्, गजाल्पकं अल्पसंख्यकगजम्, तथा वृषोष्ट्रसामान्यं साधारणसंख्यकवृषोष्ट्रं सैन्यं रक्षेत् । नागाधिकं अधिकगजं न हि नैव रक्षेदित्यर्थः । शुनीटी.

सवयः सारवेशोच्चशस्त्रास्त्रं तु पृथक् शतम् ।
लघुनालिकयुक्तानां पदातीनां शतत्रयम् ॥
अशीत्यश्वान् रथं चैकं बृहन्नालद्वयं तथा ।
उष्ट्रान् दश गजौ द्वौ तु शकटौ षोडशर्षभान् ॥
तथा लेखकषट्कं हि मन्त्रित्रितयमेव च ।
धारयेन्नृपतिः सम्यग्वत्सरे लक्षकर्षभाक् ॥

वत्सरे लक्षकर्षभाक् लक्षमुद्रागमवान् नृपतिः राजा सवयः समानवयस्कं सारवेशं कठिनपरिच्छदं उच्चानि उन्नतानि शस्त्राणि अस्त्राणि यस्य तादृशं पृथक् विभिन्नं शतं शतसंख्यपादातम्, लघुनालिकयुक्तानां क्षुद्रनालिकास्त्रधारिणां पदातीनां शतत्रयम्, अशीतिसंख्यकान् अश्वान्, एकं रथम्, बृहन्नालद्वयं बृहन्नालिकास्त्रधारिणौ द्वौ, दश उष्ट्रान्, द्वौ गजौ, द्वौ शकटौ, षोडश ऋषभान् वृषभान्, लेखकषट्कं षट् लेखकान्, तथा मन्त्रित्रितयं त्रीन् मन्त्रिणः सम्यक् यथा तथा धारयेत् रक्षेत् । शुनीटी.

संभारदानभोगार्थं धनं सार्धसहस्रकम् ।
लेखकार्थे शतं मासि मन्त्र्यर्थे तु शतत्रयम् ॥
त्रिशतं दारपुत्रार्थे विद्वदर्थे शतद्वयम् ।
साद्यश्वपदगार्थं हि राजा चतुःसहस्रकम् ॥
गजोष्ट्रवृषनालार्थं व्ययीकुर्याच्चतुःशतम् ।
शेषं कोशे धनं स्थाप्यं *व्ययीकुर्यान्न चान्यथा ॥

* अत्र 'राज्ञा सार्धसहस्रकम्' इति टीकासंमतः पाठो नोपपद्यते, पूर्वंक्तसंख्यानमनुसृत्य एकोनविंशतेः कर्षशतानां शेषरूपत्वात् ।

लक्षमुद्राणां व्ययनियममाह– संभारेति । राजा मासि प्रतिमासं संभारार्थं दानार्थं निजभोगार्थं च सार्धसहस्रकं पञ्चदशशतानि इत्यर्थः, लेखकार्थे लेखकानां निमित्तं शतम्, मन्त्र्यर्थे मन्त्रिणां निमित्तं शतत्रयम्, दारपुत्रार्थे स्त्रीपुत्रनिमित्तं त्रिशतम्, विद्वदर्थे विदुषां संमानार्थे शतद्वयम्, साद्यश्वपदगार्थं सादिनां अश्वारोहिणां अश्वानां पदगानां पदातीनां च निमित्तं चतुःसहस्रकम्, गजानां उष्ट्राणां वृषाणां नालानां नालिकाख्यास्त्रधारिणां निमित्तं चतुःशतं व्ययीकुर्यात् । राज्ञा शेषं अवशिष्टं सार्धसहस्रकं कोशे भाण्डारे स्थाप्यम् । शुनीटी.

प्रतिवर्षं स्ववेशार्थं सैनिकेभ्यो धनं हरेत् ॥

प्रतिवर्षं वर्षे वर्षे स्ववेशार्थं निजनिजपरिच्छदार्थं सैनिकेभ्यः धनं हरेत् दद्यादित्यर्थः । शुनीटी.

राजरथः

लोहसारमयश्चक्रसुगमो मञ्चकासनः ।
स्वान्दोलायितरूढस्तु मध्यमासनसारथिः ॥
शस्त्रास्त्रसंधार्युदर इष्टच्छायो मनोरमः ।
एवंविधो रथो राज्ञा रक्ष्यो नित्यं सदश्वकः ॥

लोहसारमयः उत्कृष्टलौहनिर्मितः, चक्रसुगमः चक्रैः सुखेन गच्छतीति तथोक्तः, मञ्चकं आसनं यस्मिन् सः पर्यङ्कासनसहितः, स्वेन आत्मना आन्दोलितः रूढः आरोही यस्मिन् तथाभूतः, मध्यमं आसनं यस्य तादृशः सारथिः यस्मिन् सः, शस्त्राणि अस्त्राणि च संधारयतीति तादृशं उदरं अभ्यन्तरं यस्य तथोक्तः, इष्टच्छायः अभिलषितच्छायः, मनोरमः, तथा सदश्वकः उत्कृष्टाश्वसंयुतः, एवंविधः रथः राज्ञा नित्यं सततं रक्ष्यः । शुनीटी.

सैनिकाविनयनम्

[1]सुताडनैर्विनेया हि मनुष्याः पशवः सदा ।
सैनिकास्तु विशेषेण न ते वै धनदण्डतः ॥

(१) शुनी. ४।७।१७५–२१८.

मनुष्याः पशवश्च सदा सुताडनैः उपयुक्तदण्डै-रित्यर्थः, सदा विनेयाः दमनीयाः । सैनिकास्तु विशेषेण सुताडनैः विनेया इति । यतः ते सैनिकाः धनदण्डतः अर्थदण्डेन न विनेया भवन्ति । वैशब्दः अवधारणार्थः । शुनीटी.

राष्ट्रप्रदेशभेदेन सेनानिवेशनविधिः

**अनूपे तु वृषाश्वानां गजोष्ट्राणां तु जाङ्गले ।**
**साधारणे पदातीनां निवेशाद्रक्षणं भवेत् ॥**

अनूपे सजलदेशे वृषाणां अश्वानां च, जाङ्गले जङ्गलमये देशे गजानां उष्ट्राणां च, तथा साधारणे सर्वथा स्थितिविधायके इत्यर्थः, स्थाने पदातीनां निवेशात् स्थापनात् रक्षणं भवेत् । शुनीटी.

**शतं शतं योजनान्ते सैन्यं राष्ट्रे नियोजयेत् ॥**

राष्ट्रे राज्ये योजनान्ते प्रतिचतुःक्रोशान्ते शतं शतं सैन्यं नियोजयेत् स्थापयेत् । शुनीटी.

वाहनविवेकः

**गजोष्ट्रवृषभाश्वाः प्राक् श्रेष्ठाः संभारवाहने ।**
**सर्वेभ्यः शकटाः श्रेष्ठा वर्षाकालं विना स्मृताः ॥**

प्राक् प्रथमं संभारवाहने संभाराणां सामग्रीणां वाहने विषये गजा उष्ट्रा वृषभा अश्वाश्च श्रेष्ठाः । वर्षाकालं विना शकटाः सर्वेभ्यः वाहकेभ्य इत्यर्थः, श्रेष्ठाः स्मृताः । शुनीटी.

अभेद्या मौलशिक्षितसेना विजयकारिणी

**न चाल्पसाधनो गच्छेदपि जेतुमरिं लघुम् ।**
**महताऽत्यन्तसाद्यस्कबलेनैव सुबुद्धियुक् ॥**

अल्पसाधनः अल्पबलः सन् लघुमपि क्षुद्रमपि अरिं शत्रुं जेतुं न गच्छेत् । सुबुद्धियुक् सुप्राज्ञः नृपः महता बहुना अत्यन्तसाद्यस्कबलेन एव अत्यन्तेन प्रबलेन साद्यस्कबलेन पूर्वोक्तेन, न तु मौलेन, तस्य प्रबलारिषु यानस्यौचित्यादिति भावः, बलेन सैन्येन एव गच्छेदि-त्यर्थः । शुनीटी.

**अशिक्षितमसारं च साद्यस्कं तूलवच्च तत् ।**
**युद्धं विनाऽन्यकार्येषु योजयेन्मतिमान् सदा ॥**

मतिमान् बुद्धिमान् नृपः अशिक्षितं असारं साद्यस्कं आधुनिकं बलं तूलवत् तूलेन तुल्यम्, अतिलघु इत्यर्थः, तत् बलं युद्धं विना अन्यकार्येषु सदा योजयेत् । शुनीटी.

**विकर्तुं यततेऽल्पोऽपि प्राप्ते प्राणात्ययेऽनिशम् ।**
**न पुनः किं तु बलवान् विकारकरणक्षमः ॥**

* प्राणात्यये जीवनविनाशे प्राप्ते उपस्थिते सति अल्पः क्षुद्रजनः विकर्तुं विपरीतमाचरितुमपि अनिशं सततं यतते । किंतु बलवान् विकारकरणक्षमः विपरीताचरण-क्षमः अपि न पुनः नैव विपरीतमाचरितुं यतते इत्यर्थः । शुनीटी.

**अपि बहुबलोऽशूरो न स्थातुं क्षमते रणे ।**
**किमल्पसाधनाशूरः स्थातुं शक्तोऽरिणा समम् ॥**

बहुबलः अपि अशूरः अपराक्रमी जनः रणे स्थातुं न क्षमते न शक्नोति । अल्पसाधनः अल्पबलः अथ च अशूरः जनः अरिणा शत्रुणा समं सह स्थातुं किं शक्तः ? न समर्थ इत्यर्थः । शुनीटी.

**सुसिद्धाल्पबलः शूरो विजेतुं क्षमते रिपुम् ।**
**महान् सुसिद्धबलयुक् शूरः किं न विजेष्यति ॥**

सुसिद्धं सुशिक्षितं अल्पं बलं यस्य तथोक्तः शूरः विक्रान्तः जनः रिपुं विजेतुं क्षमते । महान् प्रबलः सुसिद्धबलयुक् सुशिक्षितबलशाली शूरः किं कथं न विजेष्यति ? अपि तु जेष्यत्येवेत्यर्थः । शुनीटी.

**मौलशिक्षितसारेण गच्छेद्राजा रणे रिपुम् ।**
**प्राणात्ययेऽपि मौलं न स्वामिनं त्यक्तुमिच्छति ॥**

राजा मौलेन मूलायातेन शिक्षितसारेण शिक्षितेषु मध्ये सारेण स्थिरतरेण बलेन रणे रिपुं गच्छेत् शत्रुं प्रति यायात् । यस्मात् मौलं बलं प्राणात्ययेऽपि स्वामिनं त्यक्तुं न इच्छति । शुनीटी.

---

* वस्तुतः 'अल्पोऽपि ''' विकर्तुं यतते, किं पुनस्तु बल-वान् विकारकरणक्षमः न ( विकर्तुं यतेत ) ?' इति कैमुतिक-न्यायः ।

**वाग्दण्डपरुषेणैव भृतिह्रासेन भीतितः ।**
**नित्यं प्रवासायासाभ्यां भेदोऽवश्यं प्रजायते ॥**

वाग्दण्डपरुषेण वाक्पारुष्येण दण्डपारुष्येण चेत्यर्थः, भृतिह्रासेन वेतनलघूकरणेन, भीतितः भयप्रदर्शनेन, नित्यं प्रवासायासाभ्यां विदेशस्थित्या परिश्रमेण चेत्यर्थः, अवश्यं भेदः भङ्गः, बलानामिति शेषः, प्रजायते । शुनीटी.

**बलं यस्य तु संभिन्नं मनागपि जयः कुतः ।**
**शत्रोः स्वस्यापि सेनाया अतो भेदं विचिन्तयेत् ॥**

यस्य बलं संभिन्नं सम्यक् भेदं प्राप्तं तस्य मनाक् अपि अल्पोऽपि जयः कुतः ? न कुतोऽपि तस्य जयो भवतीत्यर्थः । अतः अस्मात्कारणात् शत्रोः स्वस्यापि आत्मनोऽपि सेनायाः भेदं विचिन्तयेत् । यथा शत्रोर्बलभङ्गः स्यात्, आत्मनो न, तथा विविच्य व्यवहरेदित्यर्थः । शुनीटी.

शत्रुसेनाभेदविधिः

**यथा हि शत्रुसेनाया भेदोऽवश्यं भवेत्तथा ।**
**कौटिल्येन प्रदानेन द्राक्कुर्यान्नृपतिः सदा ॥**

यथा येन प्रकारेण शत्रुसेनाया अवश्यं भेदः भवेत्, नृपतिः सदा कौटिल्येन कापट्येन प्रदानेन अर्थदानेन द्राक् झटिति शत्रुसैन्यं तथा कुर्यात् । शुनीटी.

**सेवयाऽत्यन्तप्रबलं नत्या चारिं प्रसाधयेत् ।**
**प्रबलं मानदानाभ्यां युद्धैर्हीनबलं तथा ।**
**मैत्र्यां जयेत्समबलं भेदैः सर्वान् वशं नयेत् ॥**

अत्यन्तप्रबलं अरिं सेवया नत्या च, प्रबलं अरिं मानदानाभ्याम्, तथा हीनबलं दुर्बलं अरिं युद्धैः प्रसाधयेत् वशीकुर्यात् । किंच, मैत्र्या सौजन्येन समबलं अरिम् । भेदैः मनोभङ्गकरणैः सर्वान् वशं नयेत् वशीकुर्यात् । शुनीटी.

**शत्रुसंसाधनोपायो नान्यः सुबलभेदतः ।**
**तावत्परो नीतिमान् स्याद्यावत्सुबलवान्स्वयम् ।**
**मित्रं तावच्च भवति पुष्टाग्नेः पवनो यथा ॥**

सुबलानां सुशिक्षितसैन्यानां भेदतः भेदात् अन्यः शत्रूणां संसाधने वशीकरणे उपायः न, अस्तीति शेषः । यावत् स्वयं सुबलवान् सुशिक्षितबलसंपन्नः भवेत् तावत् परः शत्रुः नीतिमान् स्यात् । किंच, पुष्टाग्नेः पुष्टस्य वृद्धिं गतस्य अग्नेः पवनः यथा पवनः इव तावत् मित्रं भवति । शुनीटी.

**त्यक्तं रिपुबलं धार्यं न समूहसमीपतः ।**
**पृथङ् नियोजयेत्प्राग्वा युद्धार्थं कल्पयेच्च तत् ।**
**मैत्र्यमारात्पृष्ठभागे पार्श्वयोर्वा बलं न्यसेत् ॥**

त्यक्तम्, शत्रुणेति शेषः, रिपोः शत्रोः बलं समूहसमीपतः साधारणसमक्षं न धार्यं न ग्रहणीयम् । तच्च *प्राक् एकान्ते, गृहीतमिति शेषः, रिपुबलं पृथक् नियोजयेत् युद्धार्थं कल्पयेच्च । किंच, मित्रं आरात् समीपे आत्मसंमुखे इत्यर्थः, पृष्ठभागे पार्श्वयोर्वा बलं अपरसैन्यं न्यसेत् । शुनीटी.

अस्त्रशस्त्रलक्षणम्

**अस्यते क्षिप्यते यत्तु मन्त्रयन्त्राग्निभिश्च तत् ॥**
**अस्त्रं तदन्यतः शस्त्रमसिकुन्तादिकं च यत् ।**
**अस्त्रं तु द्विविधं ज्ञेयं नालिकं मान्त्रिकं तथा ॥**

यत्तु मन्त्रयन्त्राग्निभिः मन्त्रेण यन्त्रेण अग्निना वा अस्यते निःसार्यते वा क्षिप्यते तत् अस्त्रम् । तदन्यतः तद्भिन्नं यत् असिकुन्तादिकं तत् शस्त्रम् । अस्त्रं द्विविधं ज्ञेयम्— नालिकं तथा मान्त्रिकम् । शुनीटी.

**यदा तु मान्त्रिकं नास्ति नालिकं तत्र धारयेत् ।**
**सह शस्त्रेण नृपतिर्विजयार्थं तु सर्वदा ॥**

यदा तु मान्त्रिकं मन्त्रप्रयोज्यं न अस्ति तत्र तदा नृपतिः विजयार्थं सर्वदा शस्त्रेण सह नालिकं धारयेत् । शुनीटी.

**लघुदीर्घाकारधाराभेदैः शस्त्रास्त्रनामकम् ।**
**प्रथयन्ति नवं भिन्नं व्यवहाराय तद्विदः ॥**

---

* वस्तुतः— प्राक् प्रथमत इत्यर्थः । तथा आरात् पृष्ठभागे अनन्तरपृष्ठभागे इत्यर्थः ।

तद्विदः शस्त्रज्ञा जनाः व्यवहाराय लघुदीर्घाकारधाराभेदैः लघवः क्षुद्राः दीर्घाः महान्तः ये आकाराः अवयवाः तेषां धाराभेदाः प्रयोगरीतिविशेषाः तैः शस्त्रास्त्रनामकं शस्त्राणां अस्त्राणां च नामानीत्यर्थः, नवं नूतनं भिन्नं विशेषितं यथा तथा प्रथयन्ति प्रकाशयन्ति। शुनीटी.

अग्निचूर्णयुक्तनालिकास्त्रस्वरूपम्

**नालिकं द्विविधं ज्ञेयं बृहत्क्षुद्रविभेदतः ॥**

नालिकं अस्त्रं बृहत्क्षुद्रविभेदतः गुरुलघुभेदादित्यर्थः, द्विविधं ज्ञेयं बृहन्नालिकं क्षुद्रनालिकं चेत्यर्थः । शुनीटी.

**तिर्यगूर्ध्वच्छिद्रमूलं नालं पञ्चवितस्तिकम् ।**
**मूलाग्रयोर्लक्ष्यभेदितिलबिन्दुयुतं सदा ॥**
**यन्त्राघाताग्निकृद्ग्रावचूर्णधृक्कर्णमूलकम् ।**
**सुकाष्ठोपाङ्गबुध्नं च मध्याङ्गुलबिलान्तरम् ॥**
**स्वान्तेऽग्निचूर्णसंधातृ शलाकासंयुतं दृढम् ।**
**लघुनालिकमप्येतत्प्रधार्यं पत्तिसादिभिः ॥**

तिर्यक् वक्रं ऊर्ध्वं छिद्रं मूले यस्य तत्, पञ्चवितस्तिकं सार्धद्विहस्तम्, मूलाग्रयोः मूले अग्रे च लक्ष्यभेदि लक्ष्यभेदकं यत् तिलबिन्दु तेन युतम्, यन्त्रस्य आघातेन अग्निकृत् अग्न्युद्दीपकं यत् ग्रावचूर्णं प्रस्तरचूर्णं तस्य धृक् धारकः कर्णमूलं यस्य तादृशम्, सुकाष्ठस्य उपाङ्गे अङ्गसमीपे अवयवप्रान्ते इत्यर्थः, बुध्नं मूलं यस्य तत्, मध्यं अङ्गुलबिलं अन्तरे यस्य तत्, स्वान्ते स्वस्य अन्ते अग्निचूर्णसंधातृ अग्निचूर्णं बारुद इति प्रसिद्धं तस्य संधातृ धारकम्, शलाकया संयुतम्, दृढं कठिनं नालं बन्दुक इति प्रसिद्धम् । एतत् लघुनालिकमपि पत्तिभिः पादातैः सादिभिश्च संधार्यम् । शुनीटी.

**यथा यथा तु त्वक्सारं यथा स्थूलबिलान्तरम् ।**
**यथा दीर्घं बृहद्गोलं दूरभेदि तथा तथा ॥**

* त्वक्सारं वंशः यथा यथा, यथा च स्थूलं बृहत् बिलं रन्ध्रं अन्तरे यस्य तथोक्तम्, यथा वा दीर्घं बृहत् गोलं च, तथा तथा दूरभेदि दूरस्थलक्ष्यभेदकं भवति । शुनीटी.

**मूलकीलभ्रमाल्लक्ष्यसमसंधानभाजि यत् ।**
**बृहन्नालिकसंज्ञं तत्काष्ठबुध्नविवर्जितम् ।**
**प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदम् ॥**

यत् पूर्वोक्तरूपं त्वक्सारं मूले यः कीलः शङ्कुः तस्य भ्रमात् भ्रमणात् लक्ष्यस्य समं योग्यं अनुरूपमित्यर्थः, यत् संधानं तत् भजते इति तथाभूतम्, * काष्ठस्य यत् बुध्नं मूलं ग्रन्थिरित्यर्थः, तेन विनिर्मितम्, तत् बृहन्नालिकसंज्ञं बृहन्नालिकं नाम कामान इति भाषा, शकटाद्यैः प्रवाह्यं प्रवहनीयम्, बहुभारवत्त्वात्, न मनुष्येण नापि हस्तिप्रभृतिभिः पशुभिरिति भावः । सुयुक्तं सुप्रयुक्तमित्यर्थः, विजयप्रदं जयसाधनं भवति । शुनीटी.

**सुवर्चिलवणात्पञ्च पलानि गन्धकात्पलम् ।**
**अन्तर्धूमविपक्वार्कस्नुह्याद्यङ्गारतः पलम् ॥**
**शुद्धात्संग्राह्य संचूर्ण्य संमील्य प्रपुटेद्रसैः ।**
**स्नुह्यर्काणां रसोनस्य शोषयेदातपेन च ।**
**पिष्ट्वा शर्करवच्चैतदग्निचूर्णं भवेत्खलु ॥**

अग्निचूर्णं निरूपयति— सुवर्चिलवणादिति । सुवर्चिलवणात् सोरा इति प्रसिद्धात् पञ्च पलानि कर्षचतुष्टयपरिमाणानि, गन्धकात् पलं कर्षचतुष्टयमितं गन्धकमित्यर्थः, तथा अन्तर्धूमः सधूमः अग्निः तेन विपक्वाः दग्धाः ये अर्काः आकन्देति प्रसिद्धा वृक्षाः स्नुह्यादयः सिजवृक्षादयश्च तेषां अङ्गारतः अङ्गारात् शुद्धात् अविमिश्रादित्यर्थः, पलं संग्राह्य सम्यक् गृहीत्वा संचूर्ण्य तथा संमील्य मिश्रयित्वा स्नुहीनां अर्काणां च रसैः प्रपुटेत् पचेत् । † ततश्च रसोनस्य पाकेन क्षीणरसस्य । कर्मणि षष्ठी । आतपेन शोषयेत् । अनन्तरं शर्करवत् एतत् पिष्ट्वा चूर्णयित्वा, यत् लब्धमिति शेषः, तत् खलु अग्निचूर्णं भवेत् । शुनीटी.

---

* त्वचः कवचस्य सारं काठिन्यं यथा यथोत्कृष्यते इत्येवार्थः साधुः ।

* 'विनिर्मितम्' इति प्रामादिकपाठानुसारेणैतत् ।

† वस्तुतः— रसोनः लशुनः । स्नुहीनां अर्काणां रसोनस्य च रसैः प्रपुटेदित्यन्वयः ।

**सुवर्चिलवणाद्भागाः षड्वा चत्वार एव वा ।**
**नालास्त्रार्थाग्निचूर्णे तु गन्धाङ्गारौ तु पूर्ववत् ॥**

नालास्त्राणामर्थे निमित्ते यत् अग्निचूर्णं तस्मिन् सुवार्चिलवणात् षट् वा चत्वार एव वा भागा नियोक्तव्या इत्यर्थः । गन्धाङ्गारौ गन्धकानि अङ्गाराश्च इत्यर्थः, पूर्ववत् पलपरिमितावित्यर्थः । शुनीटी.

**गोलो लोहमयो गर्भगुटिकः केवलोऽपि वा ।**
**सीसस्य लघुनालार्थे ह्यन्यधातुभवोऽपि वा ॥**

* लघुनालार्थे क्षुद्रनालास्त्रनिमित्तं केवलः अविमिश्र इत्यर्थः, लोहमयः गोलः गर्भगुटिकः । अथवा सीसस्य गर्भगुटिकः । अपि वा अन्यधातुमयः गर्भगुटिकः, ग्राह्य इति शेषः । शुनीटी.

**लोहसारमयं वाऽपि नालास्त्रं त्वन्यधातुजम् ।**
**नित्यसंमार्जनस्वच्छमस्त्रपातिभिरावृतम् ॥**

नालास्त्रं लोहसारमयं वा अन्यधातुजं चेत् नित्यसंमार्जनेन सततपरिष्करणेन स्वच्छं तथा अस्त्रपातिभिः अस्त्रक्षेपिभिः वीरैः आवृतम्, कार्यमिति शेषः । शुनीटी.

**अङ्गारस्यैव गन्धस्य सुवर्चिलवणस्य च ।**
**शिलाया हरितालस्य तथा सीसमलस्य च ॥**
**हिङ्गुलस्य तथा कान्तरजसः कर्पूरस्य च ।**
**जतोर्नील्याश्च सरलनिर्यासस्य तथैव च ॥**
**समन्यूनाधिकैरंशैरग्निचूर्णान्यनेकशः ।**
**कल्पयन्ति च तद्विद्याश्चन्द्रिकाभादिमन्ति च ॥**

अग्निचूर्णानि निरूपयति– अङ्गारस्येत्यादि । अङ्गारस्य, गन्धस्य गन्धकस्य, सुवर्चिलवणस्य, शिलायाः प्रस्तरस्य, हरितालस्य, सीसमलस्य, हिङ्गुलस्य, कान्तरजसः लोहचूर्णस्य, कर्पूरस्य, जतोः, नील्याः, तथा सरलनिर्यासस्य सर्जरसस्य समैः न्यूनैः अधिकैश्च यथोक्तैः अंशैः अनेकशः बहुविधानि चन्द्रिकाभादिमन्ति ज्योत्स्नाप्रभादियुक्तानि अग्निचूर्णानि तद्विद्याः तेषु विद्या येषां तादृशाः तदभिज्ञा इत्यर्थः, जनाः कल्पयन्ति । शुनीटी.

**क्षिपन्ति चाग्निसंयोगाद्गोलं लक्ष्ये सुनालगम् ॥**

अग्निसंयोगात् सुनालगं सुनालात् गच्छतीति तादृशं गोलं गोलाकारं गर्भगुटिकं लक्ष्ये लक्षणीये, अरौ इति शेषः, क्षिपन्ति, तद्विद्याः इति शेषः । शुनीटी.

**नालास्त्रं शोधयेदादौ दद्यात्तत्राग्निचूर्णकम् ।**
**निवेशयेत्तद्दण्डेन नालमूले यथा दृढम् ॥**

आदौ नालास्त्रं शोधयेत् परिष्कुर्यात् । ततः तत्र अग्निचूर्णकं पूर्वोक्तं दद्यात् । नालमूले दण्डेन यथा दृढं दृढं यथा तथेत्यर्थः, तत् अग्निचूर्णं निवेशयेत् प्रवेशयेत् । शुनीटी.

**ततः सुगोलकं दद्यात्ततः कर्णेऽग्निचूर्णकम् ।**
**कर्णचूर्णाग्निदानेन गोलं लक्ष्ये निपातयेत् ॥**

ततः अग्निचूर्णनिवेशनानन्तरं तत्र सुगोलकं ततश्च कर्णे अग्निचूर्णकं दद्यात् । अनन्तरं कर्णे चूर्णाग्निदानेन कर्णस्थाग्निचूर्णे अग्निदानेन लक्ष्ये गोलं निपातयेत् । शुनीटी.

शरगदापट्टीशखड्गप्रासकुन्तचक्रपाशकवचकरजानि आयुधानि

**लक्ष्यभेदी यथा बाणो धनुर्ज्याविनियोजितः ।**
**भवेत्तथा तु संधाय ( ? धेयो ) द्विहस्तश्च शिलीमुखः ॥**

यथा बाणः धनुर्ज्याविनियोजितः धनुषो विक्षिप्त इत्यर्थः, सन् लक्ष्यभेदी भवेत् तथा संधाय द्विहस्तः हस्तद्वयमितः शिलीमुखः बाणः, कार्य इति शेषः । शुनीटी.

**अष्टाश्रा पृथुबुध्ना तु गदा हृदयसंमिता ।**
**पट्टीशः स्वसमो हस्तबुध्नश्चोभयतोमुखः ॥**

पृथुबुध्ना स्थूलमूलदेशा अष्टाश्रा अष्टकोणा हृदयसंमिता वक्षःस्थलसमाना गदा, कार्या इति शेषः । पट्टीशः

---

* वस्तुतः– पूर्वार्धे बृहन्नालिकगोलवर्णनम् । तत्र च 'गर्भगुटिकः' इति गोलविशेषणम् । गर्भे गुटिकाः क्षुद्रगुलिकाः यस्येति तदर्थः । केवल इति गुलिकारहितः ।

अस्त्रविशेषः स्वसमः क्षेप्तृसमपरिमाणः *हस्तबुध्नश्च हस्तप्रमाणो वा उभयतोमुखः मूलाग्रमुखः, कार्य इति शेषः। शुनीटी.

**ईषद्वक्रश्चैकधारो विस्तारे चतुरङ्गुलः।**
**क्षुरप्रान्तो नाभिसमो दृढमुष्टिः सुचन्द्ररुक्॥**

† एकधारः अस्त्रविशेषः ईषद्वक्रः, विस्तारे चतुरङ्गुलः अङ्गुलचतुष्टयप्रमाणः। क्षुरप्रान्तः अस्त्रभेदः नाभिसमः क्षेप्तृनाभिपर्यन्तपरिमाणः दृढमुष्टिः तथा सुचन्द्ररुक् शोभनचन्द्रप्रभः, कार्यः इति शेषः। शुनीटी.

**खड्गः प्रासश्चतुर्हस्तदण्डबुध्नः क्षुराननः।**
**दशहस्तमितः कुन्तः फालाग्रः शङ्कुबुध्नकः॥**

खड्गः प्रासश्च अस्त्रभेदः चतुर्हस्तदण्डबुध्नः चतुर्हस्तदण्डप्रमाणः क्षुराननः क्षुरवत् आननं यस्य सः। कुन्तः दशहस्तमितः फालाग्रः फालस्य लाङ्गलमुखवर्तिनो लोहस्य इव अग्रं यस्य तथाभूतः तथा शङ्कुबुध्नकः शङ्कुसदृश इत्यर्थः। शुनीटी.

**चक्रं षड्ढस्तपरिधि क्षुरप्रान्तं सुनाभियुक्।**
**त्रिहस्तदण्डस्त्रिशिखो लोहरज्जुः सुपाशकः॥**

चक्रं चक्राकारः अस्त्रविशेषः षड्ढस्तपरिधि हस्तषट्वेष्टनं क्षुरस्येव प्रान्तं यस्य तत् तथा सुनाभियुक् सुमध्यमित्यर्थः। सुपाशकः पाशनामा अस्त्रविशेषः त्रिहस्तदण्डः हस्तत्रयमितः दण्डाकृतिश्च इत्यर्थः, त्रिशिखः शिखात्रययुतः तथा लोहरज्जुः लोहतारवान्। शुनीटी.

**गोधूमसंमितस्थूलपत्रं लोहमयं दृढम्।**
**कवचं सशिरस्त्राणमूर्ध्वकायविशोभनम्॥**

गोधूमेन संमितं तुल्यं स्थूलं पत्रं यस्य तत् लोहमयं दृढं कठिनं सशिरस्त्राणं शिरस्त्राणसहितं ऊर्ध्वकायविशोभनं ऊर्ध्वदेहशोभाजनकं कवचम्, कार्यमिति शेषः। शुनीटी.

**तीक्ष्णाग्रं करजं श्रेष्ठं लोहसारमयं दृढम्॥**

तीक्ष्णाग्रं सुधारं लोहसारमयं उत्कृष्टलोहमयं दृढं करजं अस्त्रविशेषः, कार्यमिति शेषः। शुनीटी.

स्वजयकारि सैन्यपरिमाणम्

**[1]स्वसैन्यात्तु तृतीयांशहीनं शत्रुबलं यदि।**
**अशिक्षितमसारं वा साद्यस्कं *स्वजयाय वै॥**

यदि शत्रुबलं स्वसैन्यात् तृतीयांशहीनं अशिक्षितं असारं वा साद्यस्कं आधुनिकं तदा वै निश्चितं स्वस्य जयाय, भवतीति शेषः। शुनीटी.

**पुत्रवत्पालितं यत्तु दानमानविवर्धितम्।**
**युद्धसंभारसंपन्नं स्वसैन्यं विजयप्रदम्॥**

यत्तु स्वसैन्यं पुत्रवत् पालितं दानेन मानेन च विवर्धितं विशेषतः वृद्धिं प्रापितं तथा युद्धसंभारैः युद्धसामग्रीभिः संपन्नं युक्तं तत् विजयप्रदं जयावहम्। शुनीटी.

संनिवेशः संशासनं च सैनिकानाम्, सैनिकभृतिदानम्

**[2]ग्रामाद्बहिः समीपे तु सैनिकान् धारयेत्सदा।**
**ग्राम्यसैनिकयोर्न स्यादुत्तमर्णाधमर्णता॥**

ग्रामात् बहिः बाह्यप्रदेशे समीपे वा सदा सैनिकान् धारयेत् रक्षेत्। ग्राम्यसैनिकयोः ग्रामवासिजनसैनिकपुरुषयोः उत्तमर्णाधमर्णता ऋणदानव्यवहारः न स्यात्। तथात्वे भूयाननिष्टपातः स्यादिति भावः। शुनीटी.

**सैनिकार्थं तु पण्यानि सैन्ये संधारयेत्पृथक्।**
**नैकत्र वासयेत्सैन्यं वत्सरं तु कदाचन॥**

सैनिकार्थं सेनानां निमित्तं पण्यानि विक्रयद्रव्याणि सैन्ये सेनानिवेशे पृथक् संधारयेत् स्थापयेत्। ग्रामवासिसाधारण्ये सर्वदा विसंवादसंभावनादिति भावः।

---

* हस्तपरिमितं बुध्नं यस्येत्यर्थः। तथा उभयतोमुखः उभयतोधार इत्यर्थः।

† वस्तुतः समस्तोऽयं श्लोकः खड्गलक्षणपरः। अग्रिमश्लोकस्थं खड्गपदं पूर्वोन्वयि।

* 'स्वजयाय वै' इत्यत्र 'स्वजयाय न' इत्यन्यपुस्तकपाठः।

(१) शुनी. ४।७।२३२–२३३.
(२) शुनी. ४।७।३७९–३९१.

तथा वत्सरं व्याप्य सैन्यं एकत्र एकस्मिन् स्थाने न वासयेत् । शुनीटी.

**सेनासहस्रं सज्जं स्यात्क्षणात्संशासयेत्तथा ।**
**संशासयेत्स्वनियमान् सैनिकानष्टमे दिने ॥**

यथा सेनासहस्रं क्षणात् सज्जं स्यात् तथा संशासयेत् सम्यक् शिक्षयेत् । तथा *अष्टमे दिने दिनस्य अष्टमे भागे इत्यर्थः, अपराह्णसमये इति यावत्, सैनिकान् स्वस्य नियमान् संशासयेत् सम्यक् उपदिशेच । शुनीटी.

**चण्डत्वमाततायित्वं राजकार्ये विलम्बनम् ।**
**अनिष्टोपेक्षणं राज्ञः स्वधर्मपरिवर्जनम् ॥**
**त्यजन्तु सैनिका नित्यं संलापमपि वा परैः ।**
**नृपाज्ञया विना ग्रामं न विशेयुः कदाचन ॥**
**स्वाधिकारिगणस्यापि ह्यपराधं दिशन्तु नः ।**
**मित्रभावेन वर्तध्वं स्वामिकृत्ये सदाऽखिलैः ॥**
**सूज्ज्वलानि च रक्षन्तु शस्त्रास्त्रवसनानि च ।**
**अन्नं जलं प्रस्थमात्रं पात्रं बह्वन्नसाधकम् ॥**
**शासनादन्यथाचारान् विनेष्यामि यमालयम् ।**
**भेदायिता रिपुधनं गृहीत्वा दर्शयन्तु माम् (१) ॥**

संशासनान्याह– चण्डत्वमित्यादि । सैनिकाः नित्यं सततं चण्डत्वं उग्रत्वं आततायित्वं राजकार्यविलम्बनं राज्ञः अनिष्टस्य उपेक्षणं स्वधर्मस्य परिवर्जनं परित्यागं अपि वा अथवा परैः शत्रुभिः सल्लापं सदालापं त्यजन्तु । नृपस्य आज्ञया विना कदाचन ग्रामं न विशेयुः प्रविशेयुः । स्वाधिकारिगणस्य सेनाधिकारे नियुक्तस्य अपराधं दोषं नः अस्मभ्यं दिशन्तु । अखिलैः समस्तैः सैन्यैः स्वामिनः कृत्ये कार्ये मित्रभावेन वर्तध्वम्, यूयमिति शेषः । सूज्ज्वलानि अत्युज्ज्वलानि शस्त्राणि अस्त्राणि वसनानि वस्त्राणि च, तथा शासनात् मम आज्ञया इत्यर्थः, अन्नं जलं प्रस्थमात्रं प्रस्थपरिमितं बहूनां अन्नानां साधकं पात्रं स्थालीमित्यर्थः, रक्षन्तु । अन्यथाचारान् ये अन्यथा आचरन्ति तानित्यर्थः, यमालयं विनेष्यामि प्रापयिष्यामि । भेदायिताः भेदं प्रापिताः शत्रुतः विच्छिन्ना इत्यर्थः, शत्रुसैनिकाः रिपुधनं मां दर्शयन्तु । शुनीटी.

**सैनिकैरभ्यसेन्नित्यं व्यूहाद्यनुकृतिं नृपः ।**
**तथाऽयनेऽयने लक्ष्यमस्त्रपातैर्विभेदयेत् ॥**

नृपः सैनिकैः व्यूहादीनां अनुकृतिं नित्यं अभ्यसेत् । तथा अयनेऽयने प्रति षाण्मासिकमित्यर्थः, अथवा गतिविशेषे गतिविशेषे अस्त्राणां पातैः लक्ष्यं विभेदयेत् । शुनीटी.

**सायं प्रातः सैनिकानां कुर्यात्संगणनं नृपः ।**
**जात्याकृतिवयोदेशग्रामवासान् विमृश्य च ॥**

नृपः सायं प्रातः सैनिकानां जातिं आकृतिं वयः देशं ग्रामं वासं वासस्थानं च विमृश्य विविच्य संगणनं संख्यां कुर्यात् । शुनीटी.

**कालं भृत्यवधिं देयं दत्तं भृत्यस्य लेखयेत् ।**
**कति दत्तं हि भृत्येभ्यो वेतनं पारितोषिकम् ।**
**तत्प्राप्तिपत्रं गृह्णीयाद्दद्याद्वेतनपत्रकम् ॥**

भृत्यस्य भृतेः अवधिं सीमारूपं कालम्, तथा भृत्येभ्यः देयं दत्तं कति दत्तं पारितोषिकं च कति इत्येतत् लेखयेत् । लेखयित्वा तेषां प्राप्तिपत्रं गृह्णीयात् वेतनपत्रं च दद्यात् । शुनीटी.

**सैनिकाः शिक्षिता ये ये तेषु पूर्णा भृतिः स्मृता ।**
**व्यूहाभ्यासे नियुक्ता ये तेष्वर्धां भृतिमावहेत् ॥**

ये ये सैनिकाः शिक्षिताः तेषु भृत्येषु पूर्णा भृतिः वेतनं स्मृता । ते पूर्णवेतनमर्हन्तीत्यर्थः । ये व्यूहानां अभ्यासे शिक्षायां नियुक्ताः तेषु अर्धां भृतिं आवहेत् दद्यात् । ते सैनिकाः पूर्णभृतेरर्धमर्हन्तीत्यर्थः । शुनीटी.

**असत्कर्त्राश्रितं सैन्यं नाशयेच्छत्रुयोगतः ॥**

असन्तं अभद्रं कर्तारं स्वामिनं आश्रितं सैन्यं शत्रुयोगतः शत्रुयोगेन नाशयेत्, प्रभुमिति शेषः । शुनीटी.

---

* यथाश्रुत एवार्थोऽन्यविदुषां संमतः ।

[१]नृपकार्यं विना कश्चिन्न ग्रामं सैनिको विशेत् ॥
तथा न पीडयेत्कुत्र कदाऽपि ग्रामवासिनः ।
सैनिकैर्न व्यवहरेन्नित्यं ग्राम्यजनोऽपि च ॥

कश्चित्सैनिकः नृपकार्यं विना ग्रामं न विशेत् । तथा सैनिकः कुत्र कस्मिन्नपि स्थाने कदाऽपि ग्रामवासिनः जनान् न पीडयेत् । ग्राम्यजनोऽपि नित्यं सततं सैनिकैः न व्यवहरेत् । शुनीटी.

श्रावयेत्सैनिकान्नित्यं धर्मं शौर्यविवर्धनम् ।
सुवाद्यनृत्यगीतानि शौर्यवृद्धिकराण्यपि ॥

नित्यं सततं सैनिकान् शौर्यविवर्धनं शौर्यवृद्धिकरं धर्मं युद्धधर्मम्, तथा शौर्यवृद्धिकराणि सुवाद्यानि नृत्यानि गीतानि च श्रावयेत् । शुनीटी.

युद्धक्रियां विना सैन्यं योजयेन्नान्यकर्मणि ॥

सैन्यं युद्धक्रियां साङ्ग्रामिकव्यापारं विना अन्यकर्मणि न योजयेत् न नियुक्तं कुर्यात् । शुनीटी.

[२]ये सैन्यधनिकास्तेभ्यो यथार्हां भृतिमावहेत् ।
पारदेश्यं च त्रिंशांशमधिकं तद्धनव्ययात् ॥
धनं संरक्षयेत्तेषां यत्नतः स्वात्मकोशवत् ॥

ये जनाः सैन्येषु मध्ये धनिकाः तेभ्यः यथार्हां यथायोग्यां भृतिम्, तथा तस्य धनव्ययात् अधिकं पारदेश्यं परदेशगमनार्थं त्रिंशांशं च आवहेत् दद्यात् । आत्मकोशवत् निजधनमिव तेषां धनिकसैन्यानां धनं यत्नतः यत्नेन संरक्षेत् । शुनीटी.

## योगयात्रा

मुहूर्ताद्यपेक्षया प्रधानो बलकोशादिः राज्ञो विजयहेतुः

[३]ग्रहर्क्षतिथ्युद्गमराशिहोरा-
द्रेष्काणभागाद्यनुकूलमात्रम् ।
भवेद्वियासोर्यदि सिद्धिहेतुः
स्वयं भवेद्दैवविदेव राजा ॥

[१]मन्त्राभिषेकमणिबन्धनशान्तिकर्म-
होमोपवाससुरयागजपादिमात्रम् ।
स्यात्सिद्धिहेतुरथ चेद्विजिगीषतोऽरीन्
कस्मात्तदा नरपतिर्न भवेत्पुरोधाः ॥

मुहूर्ताद्यपेक्षया बलस्य प्राधान्यमाह वराहमिहिरः— ग्रहर्क्षेत्यादिना । नीम. ५२

[२]बुद्ध्वाऽऽर्थशास्त्राण्यपि मन्त्रिणोऽपि
कुर्युः प्रणामं न नरेश्वराणाम् ।
यद्याभिजात्यद्विपवाजिपत्ति-
कोशाद्यपेक्षा न भवेत्प्रधाना ॥

अतोऽवश्यं बलकोशाधीनं राज्यम् । ननु जयपराजयादिकं सर्वं कर्माधीनम् । तत्र किं बलादिना ? इति चेत्, उच्यते— न केवलं सर्वं कर्माधीनम्, किंतु पुरुषकाराधीनमपि । उक्तं च याज्ञवल्क्येन— 'यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिध्यति ॥' (यास्मृ. १।३५१) । माघेऽपि— 'नाऽऽलम्बते दैष्टिकतां न निषीदति पौरुषे । शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥' इति । कथं तर्हि क्वचित्पुरुषकारे कृतेऽपि न फलप्राप्तिः ? उच्यते— न वयं कर्मणः कारणत्वमेव खण्डयामः, किंतु तन्मात्रस्य । वस्तुतस्तु न हि कर्म पुरुषकारापेक्षया भिन्नमस्ति । पूर्वजन्मार्जितः पुरुषकारो हि कर्मोच्यते । अतः यदिह जन्मनि द्वाभ्यामेकजातीये प्रयत्ने कृते फलावाप्तिरेकस्य, एकस्य न, ततः नूनमेकस्य प्राक्तनः पुरुषकारो नास्ति, पापरूपो वा स प्रतिबन्धक इति कल्प्यते । अतः सर्वं कर्मापरपर्यायपुरुषकाराधीनमेव । अत एवोक्तं भारते— 'स्वकर्मणाऽशुभेनापि शुभेनाप्यथवा जनः । फलं तदनुरूपं हि प्राप्नोति भरतर्षभ ॥' । अत एवोत्तरमीमांसायाम्— कस्यचिद्वर्तमानजन्मनि कर्मभिः पापक्षये जाते संन्यासोत्तरं मुक्तिः । यत्र तु कर्मस्वकृतेषु संन्यासोत्तरं

(१) शुनी. ५।८४–८७.
(२) शुनी. ५।८९–९०.
(३) योया. १।५ ; नीम. ५२ द्रेष्काण ( द्रेक्काण ).

(१) योया. १।६ ; नीम. ५२.
(२) योया. १।७ ; नीम. ५२ ऽऽर्थ ( ऽर्थ ) धाना ( धानम् ).

मुक्तिस्तत्र पूर्वजन्मार्जितानि कर्माणि कल्प्यन्ते । अत एव क्षत्रियजनकस्य ज्ञानोत्पत्तिं दृष्ट्वा प्राक्तनः संन्यासोऽपि कल्प्यते इत्युक्तम् । अतः यत्र लोकतः शास्त्रतो दृढतरः कार्यकारणभावोऽवगतः तत्र कार्यं दृष्ट्वा कारणमनुमीयते इति । अतः सर्वत्र प्राक्तनः ऐहिको वा पुरुषकारः कारणमिति । अतः पुरुषकार एव राज्ञा कर्तव्य इति । स च बलाधीनः इति अवश्यं बलसंग्रहः कार्यः ।

नीम. ५२–५३

गजमहिमा

[1]आरिराधयिषुणा नराधिपं
वारणाश्रितमिदं शुभाशुभम् ।
ज्ञेयमादरवता विपश्चिता
वारणेषु नृपतेर्जयस्थितिम् (?तिः) ॥

खड्गलक्षणानि खड्गप्रयोजनं च

[2]अङ्गुलशतार्धं उत्तम
ऊनः स्यात्पञ्चविंशतिः खड्गः ।
अङ्गुलमानाज्ज्ञेयः
समाङ्गुलस्थो व्रणः शुभदः ॥

[3]श्रीवृक्षवर्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम् ।
सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानां च ॥

[4]कृकलासकाककङ्कक्रव्यादकबन्धवृश्चिकाकृतयः ।
खड्गे व्रणा न शुभदा वंशानुगताः प्रभूताश्च ॥

[5]स्फुटितो ह्रस्वः कुण्ठो वंशच्छिन्नो
न दृङ्मनोनुगतः ।
अस्वन इति वाऽनिष्टः प्रोक्तविपर्ययस्तु इष्टफलः ॥

(१) योया. १०।१.

(२) योया. १२।१ ; नीम. ४० र्धं उत्त ( र्धमुत्त ).

(३) योया. १२।२ ; नीम. ४० सदृशा ( एते ) स्ता ध्वजा ( स्ता अध्वा ).

(४) योया. १२।३ ; नीम. ४० व्यादक ( व्याद्धक ).

(५) योया. १२।४–५.

क्वणितं मरणायोक्तं पराजयाय प्रवर्तनं कोशात् ।
स्वयमुद्गीर्णे युद्धं ज्वलिते विजयो
भवति खड्गे ॥

[1]नाकारणं विवृणुयान्न विघट्टयेच्च
पश्येन्न तत्र वदनं न वदेच्च मूल्यम् ।
देशं न चास्य कथयेत्प्रतिमानयेच्च
नैव स्पृशेन्नृपतिरप्रयतोऽसियष्टिम् ॥

प्रतिमानयेत् पूजयेत् । अप्रयतः अशुचिः ।

नीम. ४०

[2]गोजिह्वासंस्थानो नीलोत्पलवंशपत्रसदृशश्च ।
करवीरपत्रसदृशो मण्डलाग्रः प्रशस्तश्च ॥

तदाकार उच्यते– गोजिह्वेत्यादिना । मण्डलाग्रः खड्गः ।

नीम. ४०

[3]निष्पन्नो न च्छेद्यो निकषैः कार्यः
प्रमाणयुक्तः सः ।
मूले म्रियते स्वामी जननी तस्याग्रतश्छिन्ने ॥

खड्गव्रणानां ज्ञानं फलानि च

यस्मिन् क्षुरप्रदेशे व्रणो भवेत्तद्वदेव खड्गस्य ।
वनितानामिव तिलकं
गुह्ये वाच्यो मुखे दृग् च ( ? दृष्ट्वा ) ॥
अथवा स्पृशति यदङ्गं
प्रष्टा निस्त्रिंशभृत्तदवधार्य ।
कोशस्थस्याऽऽदेश्यो
व्रणोऽसिशास्त्रं विदित्वेदम् ॥
शिरसि स्पृष्टे प्रथमेऽङ्गुले द्वितीये
ललाटसंस्पर्शे ।
भ्रूमध्ये च तृतीये नेत्रे स्पृष्टे चतुर्थे च ॥
नासोष्ठकपोलहनुश्रवणग्रीवांसकेषु पञ्चाद्याः* ।
उरसि द्वादशसंस्थस्त्रयोदशे कक्षयोर्ज्ञेयः ॥

* यत्र अङ्गुलसंख्यापूरणार्थकाः शब्दाः प्रथमान्तास्तत्र ' सव्रणाः ' इति शेषो ज्ञेयः ।

(१) योया. १२।६ ; नीम. ४०.

(२) योया. १२।७ ; नीम. ४० वंशपत्र ( वंश ) सदृशो म ( सदृशश्चण्डकरो म ).

(३) योया. १२।८–२४.

स्तनहृदयोदरकुक्षीनाभीषु चतुर्दशादयो ज्ञेयाः ।
नाभीमूले कट्यां गुह्ये चैके सविंशः स्यात्
( ? चैकोनविंशाद्याः ) ॥

ऊर्वोर्द्वाविंशे स्यादूर्वोर्मध्ये व्रणस्त्रयोविंशे ।
जानुनि च चतुर्विंशे जङ्घायां पञ्चविंशे स्यात् ॥

जङ्घामध्ये गुल्फे पार्ष्ण्यां पादे
तथाङ्गुलीष्वपि च ।
षड्विंशादिषु यावत्त्रिंशदिति मतेन गर्गस्य ॥

पुत्रमरणं धनाप्तिर्धनहानिः संपदश्च बन्धश्च ।
एकाद्यङ्गुलसंस्थैर्व्रणैः फलं निर्दिशेत्क्रमशः ॥

सुतलाभः कलहो हस्तिलब्धयः
पुत्रमरणधनलाभौ ।
क्रमशो विनाशवनिताप्तिर्वित्तदुःखानि
षट्प्रभृति ॥

लब्धिर्हानिः स्त्रीलब्धयो वधो
वृद्धिमरणपरितोषाः ।
ज्ञेयाश्चतुर्दशादिषु धनहानिश्चैकविंशे स्यात् ॥

वित्ताप्तिरनिर्वाणं धनागमो मृत्युसंपदोऽस्वत्वम् ।
ऐश्वर्यमृत्युराज्यानि च क्रमात्त्रिंशदिति यावत् ॥

परतो न विशेषफलं विषमसमस्थाश्च
पापशुभफलदाः ।
कैश्चिदफलाः प्रदिष्टास्त्रिंशत्परतोऽग्रमिति यावत् ॥

करवीरोत्पलगजमदघृतकुङ्कुमचम्पकसुगन्धः ।
शुभदोऽनिष्टो गोमूत्रपङ्कमेदःसदृशगन्धः ॥

कूर्मवसासृक्क्षारोपमश्च भयदुःखदो
भवति गन्धः ।
वैडूर्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः ॥

शस्त्राणां पानसंस्कारः

इदमौशनसं च शस्त्रपानं
रुधिरेण श्रियमिच्छतः प्रदीप्ताम् ।
हविषा गुणवत्सुताभिलिप्सोः
सलिलेनाक्षयमिच्छतश्च वित्तम् ॥

वडवोष्ट्रकरेणुदुग्धपानं
यदि पापेन समीहतेऽर्थसिद्धिम् ।
झषपित्तमृगाश्वबस्तदुग्धैः
करिहस्तच्छिदये सतालगर्भैः ॥

[1]आर्कं पयो हुडुविषाणमषीसमेतं
पारावताखुशकृता च युतं प्रलेपः ।
शस्त्रस्य तैलमथितस्य ततोऽस्य पानं
पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥

[2]क्षारे कदल्या मथितेन युक्ते
दिनोषिते पायितमायसं च यत् ।
सम्यक् स्थितं चाश्मनि नैति भङ्गं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ।

सैनिकसुलक्षणानि

[3]शूरकृतास्त्रमहाकुलजाताः
स्वामिहिता बलिनः कृतयोग्याः ।
इष्टकरा बहुबान्धवमित्रा
नागकरोरुभुजाः कठिनाङ्गाः ॥

व्याघ्रमृगेश्वरगोवृषनादाः
श्येनदृशः शुकसंनिभनासाः ।
केकरजिह्मनिमीलितनेत्राः
पुण्यकृतां समरेषु सहायाः ॥

## नीतिवाक्यामृतम्

बलशब्दव्युत्पत्तिः

[4]द्रविणदानप्रियभाषणाभ्यामरातिनिवारणेन यद्धि हितं स्वामिनं सर्वावस्थासु बलते संवृणोतीति बलम् ॥

---

(१) योया. १२।२५ ; नीम. ४० हुडु ( हुड ) युतं प्र ( युतप्र ) च्छितस्य ( स्थितस्य ).

(२) योया. १२।२६ ; नीम. ४०–४१ मायसं च ( मायुधं ).

(३) योया. १५।१–२.

(४) नीवा. २२।१–२५.

अथ बलस्वरूपमाह— द्रविणेति । प्रयोजनावस्थासु दशासु बलते बलं ददाति संवृणोतीति । केन ? अरातिनिवारणेन शत्रुनिषेधेन । तत् बलं सैन्यं उच्यते । तथा च शुक्रः- 'धनेन प्रियसंभाषैर्यतश्चैव पुराऽर्जितम् । आपद्भयः स्वामिनं रक्षेत्ततो बलमिति स्मृतम् ॥' ।

नीवाटी.

हस्तिबलम्

**बलेषु हस्तिनः प्रधानमङ्गं स्वैरवयवैरष्टायुधा हस्तिनो भवन्ति ॥**

अथ बलस्य स्वरूपमाह— बलेष्विति । चतुर्भिः पादैस्तावद्युध्यन्ते दन्तयुगलेन च शुण्डया पुच्छेन च शत्रून् विनाशयतीति । न चान्यद्बलं अष्टाङ्गैर्युध्यते इति । तथा च पालकिः— 'अष्टायुधो भवेद्दन्ती दन्ताभ्यां चरणैरपि । तथा च पुच्छशुण्डाभ्यां संख्ये तेन स शस्यते ॥' ।

नीवाटी.

**हस्तिप्रधानो विजयो राज्ञां यदेकोऽपि हस्ती सहस्रं योधयति न सीदति प्रहारसहस्रेणापि ॥**

अथ हस्तिनां माहात्म्यमाह— हस्तीति । राज्ञां योऽसौ विजयः स किंविशिष्टः ? हस्तिप्रधानः हस्तिमुख्यः । ननु कथं हस्तिप्रधानो विजयः ? यत् यस्मात् एकोऽपि हस्ती सहस्रं योधयति, तथा सहस्राणामपि प्रहाराणां लग्नेन न सीदति न व्यथां याति । तथा च शुक्रः— 'सहस्रं योधयत्येको यतो याति न च व्यथाम् । प्रहारैर्बहुभिर्लग्नैस्तस्माद्धस्तिमुखो जयः ॥' ।

नीवाटी.

**जातिः कुलं वनं प्रचारश्च न हस्तिनां प्रधानं किंतु श(? शा)रीरं बलं शौर्यं शिक्षा च तदुचिता च सामग्रीसंपत्तिः ॥**

अथ हस्तिनां यत्प्रधानबलं तदाह— जातिरिति । हस्तिनां किल चत्वारि बलानि जातिकुलवनप्रचारसंभवानि । तेषां मध्ये यच्छारीरं बलं तत्प्रधानम् । यदि पुष्टिर्न भवति शरीरस्य ततः सर्वाण्येतानि आपदर्थानि । जातिः चतुर्विधा मन्दमृगसंकीर्णभद्रसंज्ञा । तथा कुलं अष्टविधं ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकानां संतानम् । तथा वनं अष्टविधम्— प्राच्यं अगरूपकं दाशार्णं मार्गणरवकं कालेयकं अपरान्तिकं सौराष्ट्रं पञ्चनदमिति गजवनानि । प्रचारास्त्रयः- पर्वतप्रचारः नदीप्रचारः उभयप्रचारश्चेति । तथा च वल्लभदेवः— 'जातिवंशवनभ्रान्तैर्बलैरेतैश्चतुर्विधैः । युक्तोऽपि बलहीनः स यदि पुष्टो भवेन्न च ॥' ।

नीवाटी.

**अशिक्षिता हस्तिनः केवलमर्थप्राणहराः ॥**

अथ अशिक्षिता हस्तिनो यादृशा भवन्ति तानाह— अशिक्षिता इति । ये हस्तिनः अशिक्षिता भवन्ति अक्रीडापिता भवन्ति ते अर्थप्राणहराः । एकं तावदर्थं हरन्ति घासादिभिः, अपरं प्राणान् हरन्ति महामात्रादिकानाम् । तस्माद्भूभुजा सुशिक्षिता हस्तिनः कर्तव्याः । तथा च नारदः— 'शिक्षाहीना गजा यस्य प्रभवन्ति महीभृतः । कुर्वन्ति धननाशं ते केवलं जनसंक्षयम् ॥' ।

नीवाटी.

**सुखेन यानमात्मरक्षा परपुरावमर्दनमरिव्यूहविघातो जलेषु सेतुबन्धा वचनादन्यत्र सर्वविनोदहेतवश्चेति हस्तिगुणाः ॥**

अथ गजैर्यद्भवति तदाह— सुखेनेति । एते हस्तिनां गजानां गुणाः । एकं तावत् सुखेन यानं गजैः क्रियते । तथा आत्मरक्षा भवति । परपुरावमर्दनं शत्रुपुरभङ्गः । तथा अरिव्यूहविघातः शत्रुसमुदायविघातः । तथा जलेषु नदीसंभवेषु सेतुबन्धाः क्रियन्ते । तथा वचनादन्यत्र सर्वविनोदहेतवः संभाषणं मुक्त्वाऽन्ये सर्वे विनोदा हस्तिनां सकाशाद्भवन्ति । इति हस्तिगुणाः । तथा च भागुरिः— 'सुखयानं सुरक्षा च शत्रोः पुरविभेदनम् । शत्रुव्यूहविघातश्च सेतुबन्धो गजैः स्मृतः ॥' ।

नीवाटी.

अश्वबलम्

**अश्वबलं सैन्यस्य जङ्गमं प्रकारः ॥**

अथाश्वसैन्येन यद्भवति तदाह— अश्वबलमिति । यदश्वबलं किंविशिष्टम् ? प्रकारलक्षणम् । पुनरपि कथंभूतम् ? जङ्गमं बलम् । यत्र स्थाने वाञ्छा क्रियते तत्र

याति । कस्य प्रकारभूतम् ? सैन्यस्य । एतदुक्तं भवति– यत्र स्थाने सैन्यं गच्छति तत्र परिवर्ज(? वृत्य) रक्षां करोति । तथा च नारदः– 'तुरंगमबलं यच्च तत्प्रकारो बलं स्मृतम् । सैन्यस्य भूभुजा कार्यं तस्माच्चद्वेगवत्तरम् ॥' । नीवाटी.

**अश्वबलप्रधानस्य हि राज्ञः कदनकन्दुकक्रीडाः प्रसीदन्ति, भवन्ति दूरस्था अपि करस्थाः शत्रवः, आपत्सु सर्वमनोरथसिद्धयस्तुरंगमा एव शरणमवस्कन्दः परानीकभेदनं च तुरंगमसाध्यमेतत् ॥**

अथाश्वबलस्य माहात्म्यमाह– अश्वबलेति । एतत्सर्वं तुरंगमसाध्यं भवति– राज्ञः अश्वबलप्रधानस्य कदनकन्दुकक्रीडाः प्रसीदन्ति विनोदतां यान्ति । कदनं युद्धम्, तदेव कन्दुकः सूत्रमयः, तेन यथा क्रीडाविनोदः क्रियते, तथाऽश्वबलेनापि राज्ञो युद्धक्रीडा विनोदयति । तथैते शत्रवः । किंविशिष्टाः ? करस्थाः इव दूरस्था अपि । तुरंगमा एव शरणं रक्षास्थानम् । कासु ? आपत्सु । तथा समस्तमनोरथसिद्धयो विजिगीषोर्भवन्ति । तथा अवस्कन्दः धाटीप्रदानम् । तथा परानीकभेदनं च तुरंगमसाध्यमेव । तथा च शुक्रः– 'प्रेक्षतामपि शत्रूणां यतो यान्ति तुरंगमैः । भूपाला येन निघ्नन्ति शत्रुं दूरेऽपि संस्थितम् ॥' । नीवाटी.

**जात्यारूढो विजिगीषुः शत्रोर्भवति तत्तस्य गमनं नारातिर्ददाति (?) ॥**

अथ जात्याश्वानां माहात्म्यमाह– जात्येति । नारातिर्ददाति । किं तत् ? गमनम् । कस्य ? शत्रोः । किंविशिष्टस्य ? न्यूनस्येति । (?) नीवाटी.

**तर्जिका (स्व) स्थलाणा करोखरा गाजिगाणा केकाणा पुष्टाहारा गाह्वरा सादुयारा सिन्धुपारा जात्याश्वानां नवोत्पत्तिस्थानानि (?) ॥**

अथ जात्याश्वानामुत्पत्तिस्थानान्याह– तर्जिकेति । तथा च शालिहोत्रम्– 'तर्जिका स्वस्थलाणा सुतोखराश्चोत्तमा हयाः । गाजिगाणाः सकेकाणाः पुष्टाहाराश्च मध्यमाः ॥ गाह्वरा सादुयाराश्च सिन्धुपारा कनीयस्याः । अश्वानां शालिहोत्रेण जातयो नव कीर्तिताः ॥' (?) । नीवाटी.

रथबलम्

**समा भूमिर्धनुर्वेदविदो रथारूढाः प्रहर्तारो यदा तदा किमसाध्यं नाम नृपाणाम् ॥**

अथ रथबलस्य स्वरूपमाह– समेति । यदा धनुर्वेदविदः महाधानुष्काः रथारूढा भवन्ति, तथा समा गर्तपाषाणरहिता भूमिर्भवति । किंविशिष्टा धानुष्काः ? प्रहर्तारः युद्धशौण्डाः । तदा किं नाम अहो असाध्यं भवति ? केषाम् ? नृपाणाम् । सर्वमेव साधयन्तीत्यर्थः । तथा च शुक्रः– 'रथारूढाः सुधानुष्का भूमिभागे समे स्थिताः । युध्यन्ते यस्य भूपस्य तस्यासाध्यं न किंचन ॥' । नीवाटी.

रथमाहात्म्यम्

**रथैरवमर्दितं परबलं सुखेन जीयते मौलभृत्यकभृत्यश्रेणीमित्राटविकेषु पूर्वं पूर्वं बलं यतेत ॥**

अथ भूयोऽपि रथमाहात्म्यमाह– रथैरिति । रथैरवमर्दितं यत्परबलं यद्राजा सुखेन जीयते व्यापादयति तस्मात्परबलं समाहि (?) व्यापादयितुं यतेत यत्नं कुर्यात् । सत्सु मौलभृत्यकभृत्यश्रेणिमित्राटविकेषु– मूले भवाः मौलाः ये योद्धारः, तथा भृत्यकाः नियोगिनः, तथा भृत्याः सामान्यसेवकाः, तथा श्रेणिसंज्ञाः योजयनशालाधिपादयः, तथा मित्रसंज्ञाः ये सुहृदः, तथा आटविकाः येऽटव्यां वसन्ति आज्ञां कुर्वन्ति, तेषु संबन्धि यद्बलं तेन पूर्वं प्रथमं यद्बलं सारभूतं विजिगीषुणा तेन बलेन परबलं सुखेन हन्तव्यम् । (?) । तथा च नारदः– 'रथैर्विमर्दितं पूर्वं परसैन्यं जयेन्नृपः । षड्भिर्बलैः समादिष्टैर्मौलाद्यैः ससुखेन च ॥' । नीवाटी.

औत्साहिकबलगुणाः

**अथान्यत्सप्तममौत्साहिकं बलं यद्विजिगीषोर्विजययात्राकाले पराराष्ट्रविलोडनार्थमेव मिलति । क्षत्रसारत्वं शस्त्रज्ञत्वं शौर्यसारत्वमनुरक्तत्वं चेत्यौत्साहिकस्य गुणाः ॥**

अथौत्साहिकबलस्य सप्तमस्य गुणानाह— क्षत्रेति । यत् औत्साहिकबलं तस्य एते चत्वारो गुणा भवन्ति । प्रथमं तावत् क्षत्रसारत्वं क्षत्राः राजपुत्राः तैः सारत्वं प्रधानं( ? नत्वं ) यस्य । तथा शस्त्रज्ञत्वं शस्त्रविद्याकुशलत्वम् । तथा शौर्यसारत्वं शूरैः पुरुषैः प्रधानत्वम् । तथा अनुरक्तत्वं सानुरागं यत् ( ? सानुरागत्वम् ) । एते चत्वारोऽपि यस्य बलस्य गुणाः औत्साहिकस्य तेन परबलं हन्यते । तथा च नारदः— 'क्षत्रियाढ्यं सुशस्त्रज्ञं शूरसारं सरागकृत् । यद्बलं तद्बलं प्रोक्तं न तत्स्यादन्यदेव यत् ॥' । नीवाटी.

मौलबलम्

**मौलबलाविरोधेनान्यद्बलमर्थमानाभ्यामनुगृह्णीयात् ॥**

अन्यदपि बलं भूभुजा यथा कार्यं तदाह— मौलेति । अनुगृह्णीयात्. सानुरागं कुर्यात् । किं तत् ? अन्यद्बलं यत्रोत्कालौत्सुक्यसंज्ञम् ( ? ) । केन कृत्वा ? मौलबलाविरोधेन यथा मौलबलं विरोधं न करोति । तथा च बादरायणः— 'अन्यद्बलं समायातमौत्सुक्यात्परनाशनम् । दानमानेन तत्तोष्यं मौलसैन्याविरोधतः ॥' । नीवाटी.

**मौलाख्यमापद्यनुगच्छति दण्डितमपि न दुह्यति, भवति चापरेषामभेद्यम् ॥**

अथ मौलसैन्यं यादृग्भवति तदाह— मौलेति । मौलं बलं व्यसनेऽपि अनुगच्छति, दण्डितमपि न दुह्यति न द्रोहं करोति, परैरपि न भेद्यते । तस्मान्मौलबलस्य नापमानं कुर्वीत । तथा च वशिष्ठः— 'न दण्डितमपि स्वल्पं द्रोहं कुर्यात्कथंचन । मौलं बलं न भेद्यं च शत्रुवर्गेण जायते ॥' । नीवाटी.

**न तथाऽर्थः पुरुषान् योधयति यथा स्वामिसंमानः ॥**

अथ स्वामिप्रसादस्य यो गुणः सेवकानां तमाह— नेति । न तथा अर्थः पुरुषान् योधयति सङ्ग्रामं कारयति यथा प्रभुसंमानः योधयति । तथा च नारायणः— 'न तथा पुरुषानर्थः प्रभूतोऽपि महाहयम् । कारापयति योद्धॄणां स्वामिसंभावना यथा ॥' । नीवाटी.

सैन्यविरक्तिकारणानि

**स्वयमनवेक्षणं देयांशहरणं कालयापना व्यसनाप्रतीकारो विशेषविधावसंभावनं च तन्त्रस्य विरक्तिकारणानि ॥**

अथ सैन्यस्य विरक्तिकारणान्याह— स्वयमिति । एतानि पञ्च तन्त्रस्य सैन्यस्य विरक्तिकारणानि । कानि तानि ? स्वयमनवेक्षणं तावत् स्वयं आत्मनैव यन्नित्यमेव नावेक्ष्यते । तथा देयांशहरणं देयं वृत्तिलक्षणं यत् तस्य मध्यात् अंशहरणं विभागग्रहणम् । तथा कालयापना दानकाले याऽसौ वृत्तिः दानलक्षणा तस्या याऽसौ यापना विलम्बलक्षणा तस्या अभ्यासनं सेवनम् । व्यसने आपत्काले प्रतीकारचिन्ता न क्रियते । (* विशेषविधौ विशिष्टे काले पुत्रोत्पत्त्यादिसमये असंभावनं किंचिद्दानम् ।) तथा च भारद्वाजः— 'यः सैन्यं वीक्षते नैव वृत्तिभङ्गं करोति च । न काले यच्छते वृत्तिं न विशेषं करोति च ॥ विशेषदर्शिते लोके न विशेषं करोति च । व्यसने च प्रतीकारं यः स्वामी न करोति च ॥ तस्य तन्त्रं प्रयात्येव विरक्तं सर्वतो दिशम् । तस्मात्सर्वप्रयत्नेन तोष्यं तन्त्रं महीभुजा ॥' । नीवाटी.

**स्वयमवेक्षणीयं सैन्यं परैरवेक्षयन्नर्थतन्त्राभ्यां परिहीयते ॥**

अथ सैन्यमनालोकयतः क्षितिपतेर्यद्भवति तदाह— स्वयमिति । परिहीयते हीनो भवति । काभ्याम् ? अर्थतन्त्राभ्याम् । किं कुर्वन् ? स्वयमवेक्षणीयं आत्मनाऽवेक्षणीयं यत्सैन्यं तदन्येषां पार्श्वादवलोकयन् । ततः तत् सीदति । तस्मात् भूभुजा स्वयमेव सैन्यमवलोकनीयम् । तथा च जैमिनिः— 'स्वयं नाऽऽलोकयेत्तन्त्रं प्रमादाद्यो महीपतिः । तदन्यैः प्रेक्षितं धूर्तैर्विनश्यति न संशयः ॥' । नीवाटी.

---

* कंसचिह्नस्थं आदर्शपुस्तकसंपादकीयं त्रुटिपूरणम् ।

**आश्रितभरणे स्वामिसेवायां धर्मानुष्ठाने पुत्रोत्पादने च खलु न सन्ति प्रतिहस्ताः ॥**

अथ येषु येषु पदार्थेषु प्रतिहस्ता न क्रियन्ते तानाह — आश्रितभरण इति । एतेषु चतुर्षु पदार्थेषु न सन्ति न विद्यन्ते न क्रियन्त इत्यर्थः । के ते ? प्रतिहस्ताः । केष्वित्याह— आश्रितभरणे तावत् । ये आश्रिताः सेवकाः भवन्ति तेषां स्वयं दृष्टं भक्तकं देयम्, न परहस्तेन । तथा स्वामिसेवायां यत्प्रयोजनं भवति तत्स्वयमेव विज्ञाप्यं स्वामिने, नान्यस्य मुखेन । तथा धर्मानुष्ठाने धर्मकृत्यं यद्भवति तत्स्वयमेव कार्यम्, नान्यपार्श्वात् कारापनीयम् । तथा च शुक्रः— 'भृत्यानां पोषणं हस्ते स्वामिसेवाप्रयोजनम् । धर्मकृत्यं सुतोत्पत्तिं परपार्श्वान्न कारयेत् ॥' ।
नीवाटी.

आश्रितेभ्यो देयम्

**तावद्देयं यावदाश्रिताः संपूर्णतामाप्नुवन्ति ॥**

अथाऽऽश्रितानां यथा देयं तदाह— तावदिति । आश्रितानां सेवकानां कदाचिन्न त्यजन्ति तेषां तावत् देयं वित्तं यावत् संपूर्णतां आप्नुवन्ति, न केनापि सीदन्ति । तथा च शुक्रः— 'आश्रिता यस्य सीदन्ति शत्रुस्तस्य महीपतेः । स सर्वैर्वेष्ट्यते लोकैः कार्पण्याच्च सुदुःस्थितः ॥' ।
नीवाटी.

**न हि स्वं द्रव्यमव्ययमानो राजा दण्डनीयः ॥**

अथ राज्ञो वृत्तिमयच्छतो भृत्यस्य यत्कृत्यं तदाह— नेति । सेवकानां यदि राजा वृत्तिं न प्रयच्छति तत् हठात् न ग्राह्यं भवति, सोऽत्रैव त्याज्यः । तथा च शुक्रः— 'वृत्त्यर्थं कलहः कार्यो न भृत्यैर्भूभुजा समम् । यदि यच्छति नो वृत्तिं नमस्कृत्य परित्यजेत् ॥' ।
नीवाटी.

**को नाम सचेताः स्वगुडं चौर्यात्खादेत ॥**
नीवाटी.

गतार्थमेतत् ।

**किं तेन जलदेन यः काले न वर्षति ॥**

अथ सतृष्णस्य राज्ञो दृष्टान्तमाह— किमिति । गतार्थमेतत् ।
नीवाटी.

**स किं स्वामी य आश्रितेषु व्यसने न प्रविधत्ते ॥**

गतार्थमेतत् ।
नीवाटी.

**अविशेषज्ञे राज्ञि को नाम तस्यार्थे प्राणाव्ययेनोत्सहेत ॥**

अथ अविशेषज्ञस्य राज्ञो यद्भवति तदाह— अविशेषज्ञ इति । विशेष(ज्ञान)रहिते राजनि यो विशेषं न जानाति तस्यार्थे को नाम अहो कः प्राणव्ययेन प्राणनाशेन उत्सहेत उत्साहं करोति ? अपि तु न कोऽपि । तथा चाङ्गिराः— 'काचो मणिर्मणिः काचो यस्य संभावनेदृशी । कस्तस्य भूपतेरग्रे संग्रामे निधनं व्रजेत् ॥' ।
नीवाटी.

सारवद्बलं जयाय

**[1]तन्त्रं चतुरङ्गबलम् ॥**

अथ तन्त्रस्य स्वरूपमाह— तन्त्रेति । गतार्थमेतत् ।
नीवाटी.

***[2]वरमल्पमपि सारं बलं न भूयसी मुण्डमण्डली ॥**

**असारबलभङ्गः सारबलभङ्गं करोति ॥**

**[3]एकं बलस्याधिकृतं न कुर्यात्, भेदापराधेनैकः समर्थो जनयति महान्तमनर्थम् ॥**

**[4]तादात्विकबलस्य कुतो रणे जयः प्राणार्थः स्त्रीषु कल्याणं वा ॥**

अथ तादात्विकस्य रणे यद्भवति तदाह — तादात्विकेति । तादात्विकबलस्य तावन्मात्रसैन्यबलस्य युद्धे विजयो न भवति । किमर्थम् ? शत्रुरतिर्गण्यते (? शत्रुभिर्न गण्यते) । तस्मात् युद्धकाले प्रभूतं सैन्यं कर्तव्यमिति । तथा च शुक्रः— 'तावन्मात्रो बलो यस्य नान्यत् सैन्यं करोति च । शत्रुभिर्हीनसैन्यः स लक्षयित्वा निपात्यते ॥' ।
नीवाटी.

---

* 'वरमल्पमपि' इत्यादिसूत्रत्रयस्य व्याख्यानं 'यात्रा-सङ्ग्रामः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) नीवा. १८।१२.
(२) नीवा. ३०।१६–१७.
(३) नीवा. ३०।९२.
(४) नीवा. ३२।२४.

## युक्तिकल्पतरुः

विविधबलगुणतारतम्यम्

[1]रथिनः सादिनश्चैव गजारोहाश्च सत्तमाः।
पत्तयश्च महाकाया बलमेतच्चतुर्विधम् ॥
मौलभूतं श्रेणीबद्धं संहतं तु स्मृतं बलम्।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा ॥
रथो बलं समे देशे गजस्तु विषमे बलम्।
जाङ्गले बलमश्वाश्च बलं नौका जलप्लुते ॥
पदातयस्तु सर्वत्र बलं स्यात्पृथिवीभुजः।
राज्ञा युद्धाय युज्येत यदन्यद्विविधं बलम् ॥
सर्वं पत्तिबलाधीनं तस्मात्पत्तिबलं बलम् ॥

अस्त्रप्रकाराः

[2]दण्डसाध्यं यतो राज्यं स दण्डश्चास्त्रसंश्रितः।
अस्त्राणि भूमिपालानां निरूप्यन्ते ततः क्रमात् ॥
खड्गश्चर्म धनुर्बाणौ शल्वभल्लौ तथाऽपरौ।
अर्धचन्द्रश्च नाराचः शक्तियष्टी तथाऽपरे ॥
परशुश्चक्रशूले च परिघश्चैवमादयः।
अस्त्रभेदाः समुद्दिष्टाः श्रीमद्भोजमहीभुजा ॥

वात्स्यस्तु—

अस्त्रं तु द्विविधं प्रोक्तं निर्मायं मायिकं तथा।
खड्गादिकं तु निर्मायं मायिकं दहनादिकम् ॥
दहनोऽथ जलं काष्ठं लोष्टं शब्दादयस्तथा।
तप्ततैलादिकं चैव मायिकस्यास्त्रमुच्यते ॥
खड्गादीनां तु गणना पूर्वमेव निदर्शिता।
अत्रात्मनैव निर्दिष्टः कवचादिरपीष्यते ॥

## मानसोल्लासः

षड्विधबलगुणानां तारतम्यम्

[3]मौलं भृत्यं तथा मैत्रं श्रैणमाटविकं बलम्।
अमित्रमपरं षष्ठं सप्तमं नोपलभ्यते ॥
वंशक्रमागतं मौलं भृत्यं द्रविणदानतः।
मैत्रीकरणतो मैत्रं श्रेष्ठमेतद्बलत्रयम् ॥
संबद्धं जन्मकर्मभ्यां निश्चितं समयैश्च यत्।
तद्बलं श्रैणमाख्यातं तच्च मध्यममिष्यते ॥
पर्वतोपान्तसंवासिनिषादम्लेच्छजातिकम्।
अधमं तत्समाख्यातं बलमाटविकं बुधैः ॥
शात्रवास्तु समाक्रान्ता दासभावमुपस्थिताः।
तेषां बलं तु विज्ञेयममित्रजबलं बुधैः ॥
संनिधौ न च तत्कार्यं विश्वसेन्न कदाचन।
युद्धेषु पुरतः कार्यं नृपैर्युद्धविशारदैः ॥
लोहचर्मविनिर्माणाः कार्पासरचिता अपि।
शल्कैश्च घटिताः कार्याः संनाहाः सुदृढाः सदा ॥
बाहुत्राणैः शिरस्त्राणैरङ्गत्राणैश्च संवृतम्।
पताकाभिर्ध्वजैः स्तम्भैः शोभमानं भवेद्बलम् ॥
वेत्रैर्वंशैश्च काष्ठैश्च चर्मभिर्दृढबन्धनैः।
वर्तुलानि विधेयानि वर्माणि बलगुप्तये ॥
व्याघ्रचर्मपिनद्धानि शातकौम्भमयानि च।
फलकानि विचित्राणि कारयेत्स्वबले सदा ॥

सैनिकवेतनम्

मौले बले तु ये मुख्यास्तेषां कुर्वीत माननम्।
रत्नैर्विभूषणैर्वस्त्रैः प्रियैर्वाक्यैर्मनोहरैः ॥
वृत्तिं तेषां प्रकुर्वीत यथायोग्यं सुपुष्कलाम्।
ग्रामेण ग्रामयुग्मेन ग्रामैर्वा हेमसंचयैः ॥
भृत्यानां वेतनं दद्याद्यथाकालमतन्द्रितः।
प्रत्यहं प्रतिमासं वा मासत्रयमथापि वा ॥
चतुर्मासोदितं वाऽपि मासषट्कमथापि वा।
संवत्सरमितं वाऽपि कार्यापेक्षितया नृपः ॥

सैनिकदर्शनम्

प्रत्यहं वीक्षणं कार्यमलुब्धैरात्मपूरुषैः।
पक्षे पक्षे स्वयं पश्येद्वेतनैर्विधृतान् भटान् ॥
कृतश्रमान् सदोत्साहान् रणोचितधृतायुधान्।
जितश्रमाणां शूराणां सायुधानां नरेश्वरः ॥

---

(१) युक. ६–७।४३–४७.
(२) युक. १३९–१४०।११२७–११३२.
(३) मासो. २।५५६–५७७.

दद्यात्प्रसादं भृत्यानां सोत्साहास्ते भवन्त्यतः ।
अलसानायुधैर्हीनान् दण्डयेत्तान् महीपतिः ॥

अश्वहस्तिपोषणम्

सैन्धवैर्यवनोद्भूतैः काम्बोजप्रभवैरपि ।
शिक्षितैर्बहुभिर्वाहैः संयुक्तं बलमुत्तमम् ॥

साध्यन्ते तुरगैरेव दूरस्था अपि वैरिणः ।
लभ्यते तुरगैः कीर्तिर्यस्याश्वास्तस्य भूः स्थिरा ॥

वाहिताः पोषिताः सम्यग्वाहाः कार्या महीभुजा ।
अवाहिता न योग्यास्ते मार्गे सङ्ग्रामकर्मणि ॥

दूर्वादियवसैरश्वान् खादनैश्चणकादिभिः ।
स्नेहैर्घृतादिकैर्भोज्यै रसैश्च परिपोषयेत् ॥

प्रत्यहं वाहयेदश्वान् प्रातःकाले प्रयत्नतः ।
ततस्ते कर्मयोग्याः स्युर्विनोदे समरेऽध्वनि ॥

[1]वारणैर्भद्रजातीयैः कालिङ्गवनजन्मभिः ।
शिक्षितैः सज्जितैः शूरैर्लभ्यते विजयो युधि ॥

शूरो रूढो महाकायः सर्वलक्षणसंयुतः ।
एको विजयते दन्ती मदघूर्णितलोचनः ॥

मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ।
तस्मान्निजबले कार्या बहवो वारणोत्तमाः ॥

ततस्तेषां महीपालः पोषणे यत्नवान् भवेत् ।
राजान्नैर्घृतसंमिश्रैर्दध्ना च परिलोडितैः ॥

पुष्टमांसरसोपेतैरिक्षुकाण्डैः सुधासमैः ।
शुकपक्षप्रतीकाशशालिपुञ्जैर्मनोहरैः ॥

(१) मासो. २।६२०–६२७.

नवगोधूमकुल्माषैर्यावनालैः फलान्वितैः ।
हरितैश्च तथा शुष्कैस्तृणैः कालोचितैरपि ॥
विविधैः क्षीरपानैश्च शर्करारससंयुतैः ।
द्विकालं जलपानैश्च तथा तोयावगाहनैः ॥
मृत्तिकामृदुशय्याभिः पांसुक्रीडनकैरपि ।
प्रीणयेद्द्विरदान्नित्यं यथा पुष्टा भवन्ति ते ॥

चतुरङ्गं बलम्

[1]मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ।
तस्मान्निजबले कार्या बहवो द्विरदा नृपैः ॥
उपचारान् प्रकुर्वीत दानार्थं करिणां नृपः ।
अनेकायुधसंकीर्णाः पताकाध्वजराजिताः ।
चतुर्भिस्तुरगैर्युक्ता दृढाः सारथिनोदिताः ॥
महारथैः समाक्रान्ता बहवः स्यन्दना नृपैः ।
चतुरङ्गे बले कार्या रणे विजयकाङ्क्षिभिः ॥
खड्गचर्मधराः केचिदन्ये स्युः कुन्तपाणयः ।
सेल्लचक्रधराः केचित्केचिन्मुद्गरपाणयः ॥
धनुर्धरास्तथा केचित्केचित्परशुपाणयः ।
शक्तिशूलधराः केचित्केचिच्च क्षुरिकाधराः ॥
यन्त्रमुक्तायुधाः केचित्केचिन्मुक्तायुधास्तथा ।
अमुक्तायुधहस्ताश्च मुक्तायुधकरास्तथा ॥
ईदृक् चतुर्बलं विद्वान् युद्धाय विजितश्रमः ।
कुर्यादतन्द्रितो राजा शत्रुसंहरणोद्यतः ॥

## अनिर्दिष्टकर्तृकवचनम्

[2]मौलं च भृतकं चैव ॥

(१) मासो. २।६७८–६८४.
(२) राप्र. ३९६.

# सामान्यविचारः

## कौटिलीयमर्थशास्त्रम्

परस्परोपकारिण्यः स्वगुणोदयाः प्रकृतिसंपदः कृत्स्न-पृथिवीजयकारणम् , प्रकृतिकोपात् राजहानिः

*[1]स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतयः ॥

अरिवर्जाः प्रकृतयः सप्तैताः स्वगुणोदयाः ।
उक्ताः प्रत्यङ्गभूतास्ताः प्रकृता राजसंपदः ॥

चरमोक्तारिं राजत्वात् स्वामिप्रकृतावन्तर्भूतं वर्जयित्वा एताः स्वाम्यादयः सप्त प्रकृतयः स्वगुणोदयाः स्वस्वगुण-युक्ताः उक्ताः । प्रत्यङ्गभूताः परस्परोपकारकतया पर-स्पराङ्गभूताः ताः प्रकृताः स्वस्वकर्मसु व्यापृताः सत्यः राजसंपदः, उच्यन्ते इति शेषः । श्रीमूला.

संपादयत्यसंपन्नाः प्रकृतीरात्मवान् नृपः ।
विवृद्धाश्चानुरक्ताश्च प्रकृतीर्हन्त्यनात्मवान् ॥

आत्मवान् आत्मसंपद्युक्तः नृपः असंपन्नाः स्वस्वगुण-संपद्रहिताः प्रकृतीः संपादयति तत्संपन्नाः करोति । अनात्मवान् नृपः विवृद्धाश्च गुणसमृद्धाश्च अनुरक्ताश्च प्रकृतीः हन्ति । श्रीमूला.

ततः स दुष्टप्रकृतिश्चातुरन्तोऽप्यनात्मवान् ।
हन्यते वा प्रकृतिभिर्याति वा द्विषतां वशम् ॥

तत इति तद्दोषेण दुष्टप्रकृतिः दुष्टाः प्रकृतयो यस्य स तथाभूतः अनातमवान् सः राजा चातुरन्तोऽपि चतुः-समुद्रपर्यन्तभूमीश्वरोऽपि सन् प्रकृतिभिर्हन्यते वा, द्विषतां वशं आयत्ततां याति वा । श्रीमूला.

आत्मवांस्त्वल्पदेशोऽपि युक्तः प्रकृतिसंपदा ।
नयज्ञः पृथिवीं कृत्स्नां जयत्येव न हीयते ॥

प्रकृतिसंपदा युक्तः नयज्ञः आत्मवांस्तु अल्पदेशोऽपि स्वल्पभूम्यधिपोऽपि सन् कृत्स्नां पृथिवीं जयत्येव, न हीयते । श्रीमूला.

## चाणक्यसूत्राणि

प्रकृतिकोपो राज्यहानिकारणम्

[1]प्रकृतिसंपदा ह्यनायकमपि राज्यं नीयते ॥
प्रकृतिकोपः सर्वकोपेभ्यो गरीयान् ॥

## लघुचाणक्यः

प्रजाक्षयकारणानि

[2]सिंहरूपेण राजानो व्याघ्ररूपेण मन्त्रिणः ।
भृत्याश्च गृध्ररूपेण क्षयं यास्यन्ति वै प्रजाः ॥

## कामन्दकीयनीतिसारः

प्रकृत्यधिष्ठितो राजा विश्वविजयी

[3]इति स्म राज्यं सकलं समीरितं
परं प्रतिष्ठाऽस्य धनं सुसाधनम् ।
गृहीतमेतन्निपुणेन मन्त्रिणा
त्रिवर्गनिष्पत्तिमुपैति शाश्वतीम् ॥

( १ ) प्रकरणानुष्ठानफलमाह– इतीत्यादि । समीरितं परीक्षितम् । अस्य समीरितस्य धनं सुसाधनम् (प्रतिष्ठा), प्रतिष्ठानहेतुत्वात् । अन्यथा कोशहीनो निरुपायश्च कथमेतत् प्रतिष्ठापयेत् ? प्रतिष्ठितमपि यदि बुद्धिमता मन्त्रिणा परिष्कृतं भवति तदा राज्ञस्त्रिवर्गनिष्पत्तये भवति । जम.

( २ ) उपसंहरन्नाह– इतीति । इति एवमभिहित-प्रकारेण राज्यं सप्ताङ्गं सकलं समीरितं व्याख्यातम् । अस्य राज्यस्य परा उत्कृष्टा प्रतिष्ठा स्थितिहेतुः धनं कोशः द्रव्यचयः । साधनमिति चतुरङ्गो दण्डः, तेन सह

---

* व्याख्यानं 'प्रकृतयः– प्रकृतिप्रकाराः' इत्यस्मिन् प्रकरणे (पृ. ११६५) द्रष्टव्यम् ।

(१) कौ. ६।१.

(१) चासू. १२–१३.

(२) लचा. ६।१.

(३) कानी. ४।७४; उनि. सुसा ( ससा ).

स्थितिहेतुः, अस्य राज्यस्येति संबन्धः। गृहीतं प्रतिगृहीतं एतद्राज्यं निपुणेन मन्त्रिणा त्रिवर्गनिष्पत्तिमुपैति शाश्वतीं अविनश्वरामिति। उनि.

'यथाऽन्तरात्मा प्रकृतीरधिष्ठित-
श्चराचरं विश्वमिदं समश्नुते।
तथा नरेन्द्रः प्रकृतीरधिष्ठित-
श्चराचरं विश्वमिदं समश्नुते ॥

(१) केवलस्य राज्ञो न लोकभोगसामर्थ्यमिति दर्शयन्नाह– यथाऽन्तरात्मेति। अन्तरात्मा अन्तर्यामी परः पुरुषः। स स्वयं निष्क्रियोऽपि यथा यदा प्रधानमहदादिभिः (यैः ?) युज्यते तदा ब्रह्मादिस्तम्बपर्यन्तं त्रैलोक्यं देवादिभावेन समश्नुते, तथा राजाऽप्येकोऽसमर्थोऽमात्यादिप्रकृतियोगाल्लोकं समश्नुते। जम.

(२) तथैवान्तरात्मसमवेत(प्रकृतिवत्) स्वामिनाऽधिष्ठितं राज्यं कार्यकारीति दर्शयन्नाह– यथेति। यथा अन्तरात्मा परमात्मा प्रकृतीः आत्मव्यतिरिक्ताः शरीरप्रकृतीः अधिष्ठितः व्याप्य स्थितः चराचरं स्थावरजङ्गमं विश्वमिदं समश्नुते व्याप्नोति, तथा नरेन्द्रः प्रकृतीः अमात्यादिकाः समधिष्ठितः स्वीकृत्य विश्वं राष्ट्रं समश्नुते भुनक्ति। उनि.

'प्रकृतिभिरिति सम्यगन्वितो
जनपदमादरवांस्तु पालयेत्।
जनपदपरिपालनाच्चिरं
व्रजति नृपः परमं श्रियः पदम् ॥

(१) कानी. ४।७५.
(२) कानी. ४।७६; उनि. व्रजति (स्पृशति).

(१) तस्मात् किं कुर्यादित्याह– प्रकृतिभिरित्यादि। जम.

(२) इति उक्तगुणसंपद्भिः प्रकृतिभिः अमात्यादिकाभिः अन्वितः संपन्नः जनपदं राष्ट्रं आदरवान् नीत्यादरेण पालयेत् वृद्धिं नयेत्। जनपदपरिपालनात् परमसमृद्धकोशदण्डः परमं श्रियः पदं चिरं बहुकालं स्पृशति, एकच्छत्रं पृथिवीपतित्वं प्राप्नोतीत्यर्थः। उनि.

'प्रकृतिगुणसमन्वितः सुधी-
र्व्रजति नृपः स्पृहणीयतां पराम्।
स च भवति रणेषु विद्विषां
श्वसन इव प्रबलः पयोमुचाम् ॥

(१) तथा प्रकृतिगुणयोगाल्लोके स्पृहणीयो भवति, शत्रूच्छेदाय च। यदाह– प्रकृतिगुणसमन्वित इत्यादि। रणेष्विति उच्छेदनिमित्तम्। श्वसनः वायुः। जम.

(२) तदेव दर्शयन्नाह– प्रकृतीति। प्रकृतिगुणसमन्वित इति प्रकृतिगुणैः प्रकृतिसंपत्प्रकरणोक्तगुणैः कुलशीलादिभिरन्वितः सुधीः सुप्रज्ञः व्रजति नृपः स्पृहणीयतां आश्रयणीयतां परां उत्कृष्टाम्। स्पृहणीयश्च सद्भिराश्रितत्वात्। अनन्तरं च स नृपो रणेषु समरेषु विद्विषां शत्रूणां प्रबल इव प्रचण्ड इव श्वसनः महावातः पयोमुचां मेघानाम्। यथा प्रचण्डपवनेन मेघाः खण्डशः क्रियन्ते तथा प्रकृतिगुणसमन्वितेन राज्ञा शत्रव इति। उनि.

(१) कानी. ४।७७; उनि. 'प्रबल इव श्वसनः' इति पाठः प्रतिभाति.

## प्रकृतिव्यसनानि

### विष्णुः

राज्ञा परिहार्याणि मृगयाद्यूतमद्यस्त्रीपारुष्यद्वयार्थदूषणानि सप्त

[1]मृगयाक्षस्त्रीपानाभिरतिं परिहरेत् ॥
वाक्पारुष्यदण्डपारुष्ये च ॥
नार्थदूषणं कुर्यात् ॥

### महाभारतम्

बहुदोषं द्यूतम्

[2]द्यूतेन तदलं पुत्र द्यूते भेदो हि दृश्यते ।
भेदे विनाशो राज्यस्य तत्पुत्र परिवर्जय ॥

[3]अनर्थमर्थं मन्यसे राजपुत्र
संग्रन्थनं कलहस्यातिघोरम् ।
तद्वै प्रवृत्तं तु यथाकथंचित्
विमोक्षयेच्चाप्यसिसायकांश्च ॥

अनर्थं द्यूताख्यमनर्थहेतुम् । संग्रन्थनं गुम्फनम् ।
नीटी.

[4]निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन् किं त्वं द्यूतं प्रशंससि ॥

[5]न हि मानं प्रशंसन्ति निकृतौ कितवस्य ह ।
शकुने मैव नो जैषीरमार्गेण नृशंसवत् ॥

निकृतिः वञ्चनम् । देवनं द्यूतम् । पापं पापहेतुः । यतो न च नीतिः द्यूते सत्यं नास्तीत्यर्थः । निकृतौ शाठ्ये । एवं शाठ्येन ! नीटी.

(१) विस्मृ. ३।५०–५२.

(२) भा. २।४६।१२ ; भामु. २।५०।११–१२ प्रथमचरणे ( तदलं पुत्र द्यूतेन ).

(३) भा. २।५१।११ ; भामु. २।५६।१२ घोरम् ( याति ) विमोक्षयेच्चाप्यसि ( सृजेदसींस्त्रिशितान् ).

(४) भा. २।५३।२ ; भामु. २।५९।५.

(५) भा. २।५३।३ ; भामु. २।५९।६ ह ( हि ) मैव ( मैवं ).

[1]इदं वै देवनं पापं मायया कितवैः सह ।
धर्मेण तु जयो युद्धे तत्परं साधु देवनम् ॥

द्विविधं देवनम्– अक्षैः शस्त्रैश्च । तत्राऽऽद्यं निन्दित्वा परं प्रशंसति– इदं वा इति । नीटी.

[2]नाऽऽर्या म्लेच्छन्ति भाषामिर्मायया न
चरन्त्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ॥

म्लेच्छन्ति अपशब्दं कुर्वन्ति । भाषाभिः गीर्भिः । मायया कपटेन । न चरन्ति न कर्म कुर्वन्ति । वाचा देहेन च कौटिल्यं न कुर्वन्तीति भावः । अत एव अजिह्मं अकुटिलम् , अशठं कुटिलपुरुषहीनम् ।
नीटी.

[3]शक्तितो ब्राह्मणान् वन्द्याञ्शिक्षितुं प्रयतामहे ।
तद्वै वित्तं माऽतिदेवीर्मा जैषीः शकुने परम् ॥

ब्राह्मणार्थाय ब्राह्मणप्रयोजनाय शिक्षितुं विद्यामुपादातुं यतामहे येन वित्तेन तद्वै वित्तं अपहर्तुं माऽतिदेवीः सर्वस्वस्य पणीकरणेन अतिद्यूतं मा कृथाः ।
नीटी.

[4]नाहं निकृत्या कामये सुखान्युत धनानि वा ।
कितवस्याप्यनिकृतेर्वृत्तमेतन्न पूज्यते ॥

ननु अक्षपाताधीनो जयस्तवापि समान इत्याशङ्क्याऽऽह– निकृत्येति । निकृत्या नीचकर्मणा । इह कितवस्य

(१) भा. २।५३।७ ; भामु. २।५९।१० मायया ( निकृत्या ) साधु ( न तु ).

(२) भा. २।५३।८ ; भामु. २।५९।११.

(३) भा. २।५३।९ ; भामु. २।५९।१२ णान् वन्द्यान् ( णार्थाय ) परम् ( परान् ).

(४) भा. २।५३।१० ; भामु. २।५९।१३ प्रथमचरणे ( निकृत्या कामये नाहं ) स्याप्यनिकृतेर्वृ ( स्येह कृतिनो वृ ).

¹एतद् वृत्तं कृतिनः न पूज्यते सतां न प्रशस्यमित्यर्थः।
नीटी.

चत्वारि स्त्रीद्यूतमृगयामद्यानि व्यसनानि

²चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम्।
मृगयां पानमक्षांश्च ग्राम्ये चैवातिसक्तताम्॥

³एतेषु हि नरः सक्तो धर्ममुत्सृज्य वर्तते।
तथायुक्तेन च कृतां क्रियां लोको न मन्यते॥

कृताऽप्यकृतैव सा क्रियेत्यर्थः। नीटी.

⁴स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम्।
व्यसनं चतुष्टयं प्रोक्तं यै राजन्भ्रश्यते श्रियः॥

कामः रागः। नीटी.

⁵तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः।
विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः॥

वक्तव्यं अधिगन्तव्यं ज्ञातव्यम्। गत्यर्थस्य वजेरिदं रूपं वचेरेक वाऽर्थान्तरम्। नीटी.

⁶एकाह्ना द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च।
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम्॥

तदेवाऽऽह– एकाह्नादिति। व्यसनं राज्यभ्रंशादि। अर्थानां धर्मार्थकामानां पुमर्थानाम्। नीटी.

सैन्यव्यसनं भेदः

⁷बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः।
मुख्यो भेदो हि तेषां वै पापिष्ठो विदुषां मतः॥

बलस्य सैन्यस्य। व्यसनानि विनाशकानि। नीटी.

(१) भा. २।६१।२०; भामु. २।६८।२० सक्त (रक्त).

(२) भा. २।६१।२१; भामु. २।६८।२१ तथा (यथाऽ).

(३) भा. ३।१४।७; भामु. ३।१३।७ व्यसनं (दुःखं) राजन् (नरो).

(४) भा. ३।१४।८; भामु. ३।१३।८.

(५) भा. ३।१४।९; भामु. ३।१३।९ एकाह्ना (एकाह्नाद्).

(६) भा. ४।४६।११; भामु. ४।५१।१३ वै (तु).

द्यूतं बहुदोषम्

¹किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद।
देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत्॥

²श्रुतस्ते यदि वा दृष्टः पाण्डवो वै युधिष्ठिरः।
स राज्यं सुमहत्स्फीतं भ्रातॄंश्च त्रिदशोपमान्॥

³द्यूते हारितवान्सर्वं तस्माद्द्यूतं न रोचये॥

व्यसनानि सप्त

⁴सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः।
प्रायशो यैर्विनश्यन्ति कृतमूलाश्च पार्थिवाः॥

⁵स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम्।
महच्च दण्डपारुष्यमर्थदूषणमेव च॥

वाक्पारुष्यं दण्डपारुष्यं च पाण्डवेषु त्वत्पुत्रैः कृतम्। नीटी.

⁶द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम्।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्॥

⁷द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत्।
मन्दनैश्वर्यकामेन लोभात्पापमिदं कृतम्॥

⁸अक्षद्यूतं महाप्राज्ञ सतामरतिनाशनम्।
असतां तत्र जायन्ते भेदाश्च व्यसनानि च॥

(१) भा. ४।६३।३३; भामु. ४।६८।३३.

(२) भा. ४।६३।३४; भामु. ४।६८।३४ वो वै (वेयो) राज्यं (राष्ट्रं).

(३) भा. ४।६३।३५; भामु. ४।६८।३५ द्यूते (राज्यं).

(४) भा. ५।३३।७३; भामु. ५।३३।९१ श्च पार्थिवाः (अपीश्वराः).

(५) भा. ५।३३।७४; भामु. ५।३३।९२.

(६) भामु. ५।३७।१९.

(७) भा. ५।५०।५७; भामु. ५।५१।५७.

(८) भा. ५।१२६।६; भामु. ५।१२८।६ सतामरति (सतां मतिवि).

*[1]व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण।
न चैव न प्रयुञ्जीत सङ्गं तु परिवर्जयेत्॥
नित्यं हि व्यसनी लोके परिभूतो भवत्युत॥

कामजानि क्रोधजानि दश व्यसनानि

[2]क्रोधजानि तथोग्राणि कामजानि तथैव च।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह॥
मृगयाऽक्षास्तथा पानं स्त्रियश्च भरतर्षभ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयंभुवा॥

[3]वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च।
आत्मनो निग्रहस्त्यागोऽथार्थदूषणमेव च॥

परिशेषात् वाक्पारुष्यादीनि षट् क्रोधजानि। आत्मनः देहस्य। नीटी.

अनासक्त्या युक्त्या मद्यादिसेवनमनुमतम्

[4]पानमक्षास्तथा नार्यो मृगया गीतवादितम्।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान्॥

[5]व्यसनानि च सर्वाणि नृपतिः परिवर्जयेत्।
लोकसंग्रहणार्थाय कृतकव्यसनी भवेत्॥

## वाल्मीकिरामायणम्

कामजानि क्रोधजानि च व्यसनानि

[6]कामक्रोधसमुत्थानि त्यज त्वं व्यसनानि च॥

* 'व्यसनानि च सर्वाणि' इत्यादिसार्धश्लोकस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १०६१) द्रष्टव्यम्।

(१) भा. १२।५६।४२–४३ ; भामु. १२।५६।४२–४३ सङ्गं तु (संकीर्णे) नित्यं हि व्यसनी लोके (लोकस्य व्यसनी नित्यं).

(२) भा. १२।५९।५९–६० ; भामु.

(३) भा. १२।५९।६१ ; भामु. १२।५९।६१ गोऽथार्थ (गो ह्यर्थ).

(४) भा. १२।१३८।२६ ; भामु. १२।१४०।२६ ; राक. १४५ दितम् (दिते).

(५) पमा. ४१३.

(६) वारा. २।५।२८.

[1]किमयं कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः।
भर्ता भर्तृहिते युक्ते न चैनमवबुध्यसे॥

मद्यमप्रशस्तम्

न चिन्तयति राज्यार्थं नास्माञ्शोकपरायणान्।
सामात्यपरिषत्तारे पानमेवोपसेवते॥

न हि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते।
पानादर्थश्च धर्मश्च कामश्च परिहीयते॥

## कौटिलीयमर्थशास्त्रम्

व्यसनविचारः यानरक्षाविचारफलः, व्यसनशब्दव्युत्पत्तिः, स्वाम्यमात्यादिप्रकृत्यवयवानां प्रत्येकं व्यसनस्य गुरुलघुभावविचारः

[2]व्यसनयौगपद्ये सौकर्यतो यातव्यं रक्षितव्यं वेति व्यसनचिन्ता॥

षाड्गुण्याधिकरणे (? मण्डलयोन्यधिकरणे) 'अरिसंपद्युक्तः सामन्तः शत्रुर्व्यसनी यातव्यः' (कौ. ६।२) इति यातव्यस्य शत्रोर्व्यसनमङ्गमभिहितम्। (षाड्गुण्याधिकरणे) 'अभ्युचीयमानो विगृह्णीयात्' (कौ. ७।१) इति च यातुर्विजिगीषोर्व्यसनाभावोऽङ्गमभिहितः। तस्यैतस्य व्यसनस्य कारणस्वरूपाश्रयादिकं वक्तुमिदमष्टममधिकरणमारभ्यते व्यसनाधिकारिकं नाम। व्यसनस्य अधिकारः प्रस्तावः अस्ति अस्मिन्निति च मत्वर्थीयोऽत्र ठन्।

अधिकरणं स्वयमेव संगमयति– व्यसनयौगपद्य इत्यादि। शत्रुर्यदा व्यसनी आत्मा चाव्यसनी तदा शत्रूच्छेदसौकर्यात् यानं कर्तव्यमुक्तम्। तस्यास्य व्यसनस्य यौगपद्ये शत्रुविजिगीष्वोरुभयोरपि युगपत् संभवे सति सौकर्यतो यातव्यं रक्षितव्यं वा यानं वा सौकर्यात् कर्तव्यं रक्षणं वा इति एवं कोटिद्वयोपस्थानात्, व्यसनचिन्ता व्यसनस्य गौरवलाघवचिन्तनम्, अन्यतरकोटिनिर्धारणार्थं क्रियत इति शेषः।

(१) वाराकु. ४।३३।४३–४४, ४६.

(२) कौ. ८।१.

तत्रं 'प्रकृतिव्यसनवर्गः' इति प्रथमं सूत्रम् । प्रकृतयः स्वाम्यादयः सप्त, तासां व्यसनवर्गः उच्यत इति सूत्रार्थः। श्रीमूला.

**दैवं मानुषं वा प्रकृतिव्यसनमनयापनयाभ्यां संभवति ॥**

व्यसनं सामान्यतो विभजंस्तत्कारणमाह– दैवमिति । दैवं जन्मान्तरीयकर्मजन्यं मानुषं वा पुरुषबुद्धिजन्यं वा प्रकृतिव्यसनं स्वाम्यादिव्यसनं अनयापनयाभ्यां अनयेन अशुभविधिना अपनयेन संध्यादिगुणानामयथावदनुष्ठानेन च संभवति । तत्रानयकारणकं अग्न्युदकादिभयं अपनयकारणकं परचक्राद्युपद्रवः । श्रीमूला.

**गुणप्रातिलोम्यमभावः प्रदोषः प्रसङ्गः पीडा वा व्यसनम् । व्यस्यत्येनं श्रेयस इति व्यसनम् ॥**

व्यसनं विशेषतो विभजते– गुणप्रातिलोम्यमिति । महाकुलीनत्वादिगुणानां स्वानुरूपकार्यानारभकत्वं संधिविग्रहादीनां असम्यगनुष्ठानं वा, अभावः महाकुलीनत्वादीनामसत्त्वं संधिविग्रहादीनामननुष्ठानं वा, प्रदोषः प्रकृष्टो दोषो गुणन्यक्कारेण प्रगल्भमानः कोपादिः, प्रसङ्गः स्त्रीमृगयाद्यत्यासक्तिः, पीडा वा परचक्रादिभव आबाधश्च व्यसनम् । व्यसनसंज्ञान्वर्थतां दर्शयति– व्यस्यत्येनमित्यादि । एनं जनं श्रेयसः अर्थप्राप्त्यनर्थपरिहाररूपात् व्यस्यति विक्षिपति दूरीकरोति इत्यतो व्यसनम्, उच्यत इति शेषः । एषामादिमौ प्रकारौ गुणप्रातिलोम्यगुणाभावौ वक्ष्यमाणायां राजराज्यव्यसनचिन्तायाम्, प्रदोषप्रसङ्गौ पुरुषव्यसनवर्गे, पीडा च बलमित्रव्यसनवर्गेऽनुसंधेयाः । तदिदं यथोक्तरूपं प्रकृतिव्यसनं स्वाम्यादिसप्तप्रकृत्याश्रयत्वेन सप्तात्मकं स्थितम् । श्रीमूला.

**स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रव्यसनानां पूर्वं पूर्वं गरीय इत्याचार्याः ॥**

अथ स्वामिव्यसनादीनां सप्तानां गौरवतारतम्यं यानादिकार्योपयुक्तमुपदेष्टुं सूत्रयति– स्वाम्यमात्येत्यादि । स्वामिव्यसनादीनां मित्रव्यसनान्तानां सप्तानां मध्ये पूर्वं पूर्वं व्यसनं गरीयः उत्तरोत्तरापेक्षया गुरुतरं भवति– मित्रव्यसनात् दण्डव्यसनं गरीयः, दण्डव्यसनात्कोशव्यसनम्, कोशव्यसनात् दुर्गव्यसनम्, दुर्गव्यसनात् जनपदव्यसनम्, जनपदव्यसनादमात्यव्यसनम्, अमात्यव्यसनाच्च स्वामिव्यसनमिति क्रमेण । इति आचार्याः पूर्वेऽर्थशास्त्रकाराः, आहुरिति शेषः । ते च वक्ष्यमाणभारद्वाजविशालाक्षाद्यतिरिक्ता ग्राह्याः, तद्विप्रतिपन्नानामंशानामनुपदमुद्धाव्य खण्डयिष्यमाणत्वात् । अत एव चाऽऽचार्यमतमिदमखण्डितत्वात् कौटल्यस्येष्टं द्रष्टव्यम् । श्रीमूला.

**नेति भारद्वाजः । स्वाम्यमात्यव्यसनयोरमात्यव्यसनं गरीय इति । मन्त्रो मन्त्रफलावाप्तिः कर्मानुष्ठानमायव्ययकर्म दण्डप्रणयनममित्राटवीप्रतिषेधो राज्यरक्षणं व्यसनप्रतीकारः कुमाररक्षणमभिषेकश्च कुमाराणामायत्तममात्येषु । तेषामभावे तदभावः, छिन्नपक्षस्येव राज्ञश्चेष्टानाशः । व्यसनेषु चाऽऽसन्नाः परोपजापाः । वैगुण्ये च प्राणबाधः प्राणान्तिकचरत्वाद्राज्ञ इति ॥**

तत्र भारद्वाजस्य विप्रतिपत्तिमुपन्यस्यति– नेति भारद्वाज इत्यादि । स्वाम्यमात्येत्यादिनाऽऽचार्यनिर्दिष्टे गरीयस्त्वक्रमे स्वाम्यमात्ययोः पौर्वापर्यविपर्ययः कर्तव्य इत्यर्थः । एकदेशविप्रतिपत्त्या च शेषसंप्रतिपत्तिर्भारद्वाजस्य बोद्धव्या । एवं विशालाक्षादिविप्रतिपत्तिष्वपि द्रष्टव्यम् । अमात्यव्यसनगरीयस्त्वे भारद्वाजोक्तां युक्तिमाह –मन्त्र इति । मन्त्रः कार्याकार्यविमर्शनम्, मन्त्रफलावाप्तिः कार्यनिर्धारणम्, कर्मानुष्ठानं निर्धारितकार्यकरणम्, आयव्ययकर्म हिरण्याद्युत्पादनं उत्पादितहिरण्यविनियोगश्च, दण्डप्रणयनं सैन्यसमुत्थापनयथास्थानस्थापनादि, अमित्राटवीप्रतिषेधः अमित्राणामाटविकानां च स्वदेशहिंसनाद्वारणम्, राज्यरक्षणं निजप्रजायोगक्षेमवहनम्, व्यसनप्रतीकारः दैवमानुषविपत्प्रतिक्रिया, कुमाररक्षणं कुमारेभ्यो नृपस्य रक्षणम्, कुमाराणामभिषेकश्च यौवराज्ये नवार्जितराज्ये वाऽभिषेचनं च अमात्येषु आयत्तं अमात्यैकसाध्यम् । तेषां आमात्यानां अभावे तदभावः मन्त्राद्यभावः । ततश्च छिन्नपक्षस्येव छिन्नपक्षस्य पक्षिण इव राज्ञः

चेष्टानाशः प्रवृत्तिलोपः, स्यादिति शेषः । व्यसनेषु च अमात्यानां व्यसनसंभवे च आसन्नाः परोपजापाः शत्रूपजापानर्थाः संनिहिताः स्युः । वैगुण्ये च पूज्यापूजनदूष्यादरणलक्षणे विगुणाचारे च राज्ञः प्राणबाधः प्राणनाशः स्यात् । कुतः ? प्राणान्तिकचरत्वात् राजप्राणनिकटचरत्वादमात्यानाम् । अतस्तद्वैगुण्यं अन्तिकचरा अमात्याः परिहरेयुरित्यर्थः । इतिशब्दः हेतौ । एवं च राज्ञः सर्वारम्भाणां जीवितस्य च अमात्याधीनत्वात् अमात्या एव राजापेक्षया गरीयांसः इति तद्व्यसनमेव गरीय इत्यभिप्रायः । श्रीमूला.

**नेति कौटल्यः । मन्त्रिपुरोहितादिभृत्यवर्गमध्यक्षप्रचारं पुरुषद्रव्यप्रकृतिव्यसनप्रतीकारमेधनं च राजैव करोति । व्यसनिषु वाऽमात्येष्वन्यानव्यसनिनः करोति । पूज्यपूजने दूष्यावग्रहे च नित्ययुक्तस्तिष्ठति । स्वामी च संपन्नः स्वसंपद्भिः प्रकृतीः संपादयति । स्वयं यच्छीलस्तच्छीलाः प्रकृतयो भवन्ति, उत्थाने प्रमादे च तदायत्तत्वात् । तत्कूटस्थानीयो हि स्वामीति ॥**

भारद्वाजोक्तं खण्डयति– नेति कौटल्य इत्यादि । मन्त्रिपुरोहितेत्यादिना स्वामीतीत्यन्तेन खण्डनयुक्तिप्रदर्शनम् । मन्त्रिपुरोहितादिभृत्यवर्गं मन्त्रिपुरोहितसेनापतिप्रभृतिं भृत्यवर्गम्, अध्यक्षप्रचारं सुवर्णाध्यक्षादिसर्वविधाध्यक्षव्यवस्थापनम्, पुरुषद्रव्यप्रकृतिव्यसनप्रतीकारं मन्त्र्यादीनां पुरुषप्रकृतीनां द्रव्यप्रकृतीनां जनपददुर्गकोशानां च व्यसनप्रतिक्रियाम्, एधनं च पुरुषद्रव्यप्रकृतीनामेव वर्धनं च राजैव करोति । एतावता अमात्याभावे राज्ञश्चेष्टानाशः प्रत्युक्तः । व्यसनिषु वा अमात्येषु जातेषु अन्यान् अव्यसनिनः करोति अमात्यपदेषु स्थापयति । एतेन 'व्यसनेषु चाऽऽसन्नाः परोपजापाः' इति यदुक्तं तत्प्रत्युक्तम् । पूज्यपूजने दूष्यावग्रहे च दूष्याणां राज्योपघातिनां निग्रहणे च नित्ययुक्तः नित्यावहितः तिष्ठति । एतेन 'वैगुण्ये च प्राणबाधः' इति समाहितम् । प्रकृतिगुणवत्ताऽपि स्वामिगुणवत्तयैवाभिनिर्वर्तेत इत्याह– स्वामी चेत्यादि । स च संपन्नः गुणसमृद्धियुक्तः स्वसंपद्भिः स्वीयाभिर्गुणसमृद्धिभिः प्रकृतीः संपादयति संपद्वतीः करोति । स्वामिनः संपन्नत्वे तद्यत्नं विना स्वयमेव प्रकृतयः संपन्ना भवन्तीत्यभिप्रायेणाऽऽह– स्वयं यच्छील इत्यादि । उत्थाने प्रमादे च तदायत्तत्वादिति । प्रकृतयो हि स्वामिनमुत्तिष्ठमानमनूत्तिष्ठन्ति प्रमाद्यन्तं चानुप्रमाद्यन्तीत्यर्थः । तासां कूटं मूलप्रकृतिः, तत्स्थानीयो हि राजा । अर्थात् तद्विकृतिस्थानीयास्ताः । श्रीमूला.

**अमात्यजनपदव्यसनयोर्जनपदव्यसनं गरीय इति विशालाक्षः । कोशो दण्डः कुप्यं विष्टिर्वाहनं निचयाश्च जनपदादुत्तिष्ठन्ते । तेषामभावो जनपदाभावे । स्वाम्यमात्ययोश्चानन्तर इति ॥**

विशालाक्षस्य विप्रतिपत्तिमाह– अमात्यजनपदेत्यादि । अमात्यव्यसनाज्जनपदव्यसनस्य गरीयस्त्वे तदीयां युक्तिमाह– कोश इत्यादि । कोशः हिरण्यादिसमुदयः, दण्डः मौलभृतादि सैन्यम्, कुप्यं वस्त्रास्तरणादि, विष्टिः कर्मकरवर्गः, वाहनं गजाश्वादि, निचयाश्च धान्यस्नेहादिसमुदयाश्च जनपदात् उत्तिष्ठन्ते उद्भवन्ति । जनपदाभावे तेषां कोशादीनां अभावः । स्वाम्यमात्ययोश्चानन्तर इति । ततश्च जनपदः स्वाम्यमात्ययोः अनन्तरः अव्यवहितः मध्यगतः, युक्त इति शेषः । तथा च 'स्वाम्यमात्यजनपददुर्ग' इति पठितं सूत्रम् 'स्वामिजनपदामात्यदुर्ग' इत्येवमेकदेशव्यत्ययेन पठितव्यमित्याशयः । श्रीमूला.

**नेति कौटल्यः । अमात्यमूलाः सर्वारम्भा जनपदस्य कर्मसिद्धयः स्वतः परतश्च योगक्षेमसाधनं व्यसनप्रतीकारः शून्यनिवेशोपचयौ दण्डकरानुग्रहश्चेति ॥**

विशालाक्षमतं निराचष्टे– नेति कौटल्य इति । तत्र युक्तिमाह– अमात्यमूला इति । जनपदस्य सर्वारम्भाः सर्वे व्यापाराः अमात्यमूलाः । के ते ? कर्मसिद्धयः सेतुवार्तादिकर्मनिष्पत्तयः, स्वतः परतश्च योगक्षेमसाधनं स्वजनात् शत्रुजनाच्च योगक्षेमयोः अलब्धलाभलब्धपालनयोः निष्पादनम्, व्यसनप्रतीकारः प्रकृतिव्यसनप्रतिक्रिया, शून्यनिवेशोपचयौ शून्यदेशे ग्रामादिनिवेशनं

निवेशितपरिवर्धनं च, दण्डकरानुग्रहश्च दण्डस्य उत्तमसाहसादेः करस्य राजभागस्य च अनुग्रहः ग्रहणानुवृत्तिश्च इति । श्रीमूला.

**जनपददुर्गव्यसनयोर्दुर्गव्यसनमिति पाराशराः । दुर्गे हि कोशदण्डोत्पत्तिरापदि स्थानं च जनपदस्य । शक्तिमत्तराश्च पौरा जानपदेभ्यो नित्याश्चाऽऽपदि सहाया राज्ञः । जानपदास्त्वमित्रसाधारणा इति ॥**

पाराशराणां विप्रतिपत्तिमाह– जनपदेत्यादि । जनपदव्यसनदुर्गव्यसनयोर्मध्ये दुर्गव्यसनं गुरुतरमिति पराशरशिष्याः । 'स्वाम्यमात्यजनपददुर्गकोश' इत्येतत् 'स्वाम्यमात्यदुर्गजनपदकोश' इति किंचिद्व्यत्ययेन पठनीयमित्याशयः । तत्र युक्तिरुच्यते– दुर्गे हीति । दुर्गे स्थानीयं तस्मिन् । दुर्गाद्धीति क्वचित्पाठः । कोशदण्डोत्पत्तिः धनसमुदायबलोत्पत्तिः आपदि स्थानं च जनपदस्य जानपदानां परचक्रभयादौ रक्षाभूमिश्च । पौराः जानपदेभ्यः शक्तिमत्तराश्च अतिशयेन शक्तिमन्तश्च, नित्याश्च सर्वकालानुवर्तिनश्च, आपदि सहायाः, राज्ञः सुलभा इति शेषः । नैवं जानपदा इत्याह– जानपदास्त्विति । ते तु अमित्रसाधारणाः पराक्रम्याऽऽगतं शत्रुमप्यनुवर्तन्त इत्यर्थः । इति । श्रीमूला.

**नेति कौटल्यः । जनपदमूला दुर्गकोशदण्डसेतुवार्तारम्भाः । शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यं च जानपदेषु । पर्वतान्तर्द्वीपाश्च दुर्गा नाध्युष्यन्ते जनपदाभावात् । कर्षकप्राये तु दुर्गव्यसनमायुधीयप्राये तु जनपदे जनपदव्यसनमिति ॥**

पाराशरमतं प्रत्याचष्टे– नेति कौटल्य इति । तत्र युक्तिमाह– जनपदेत्यादि । दुर्गकोशदण्डसेतुवार्तारम्भाः– दुर्गस्य स्थानीयादेः, कोशस्य धनसमुदायस्य, दण्डस्य सैन्यस्य, सेतोः पुष्पफलवाटादेः, वार्तायाः कृषिपाशुपाल्यवाणिज्यानां च आरम्भाः जनपदमूलाः जनपदयोनयः । न केवलं दुर्गवत् कोशदण्डयोः, किंतु कोशदण्डयोनित्वेन त्वयोक्तस्य दुर्गस्यापि जनपदो योनिरिति स एव गरीयानित्यभिप्रायः । यत् पौराणां शक्तिमत्तरत्वमुक्तं तत्रोत्तरमाह– शौर्यमित्यादि । शौर्यं पराक्रमवत्त्वम्, स्थैर्यं अभेद्याध्यवसायत्वम्, दाक्ष्यं शीघ्रक्रियत्वम्, बाहुल्यं च बहुत्वं च जानपदेषु । पौरेषु शौर्यादिसत्त्वेऽपि बाहुल्यं नास्तीत्यभिप्रायः । व्यतिरेकान्तरमाह– पर्वतान्तर्द्वीपाश्चेति । पर्वतरूपाः अन्तरीपरूपाः द्वीपरूपाश्च दुर्गाः नाध्युष्यन्ते । कुतः ? जनपदाभावात् जनवासयोग्यस्थानविरहात् । जनपदस्तु दुर्गरहितोऽप्यध्युष्यते इत्यार्थम् । एवं च दुर्गाणां जनपदनैरपेक्ष्येण वासयोग्यतैव नास्ति, जनपदस्य तु दुर्गनैरपेक्ष्येण वासयोग्यता अस्तीति दुर्गाज्जनपद एव गरीयानित्याशयः । विशेषान्तरमाह– कर्षकप्राये त्वित्यादि । अल्पायुधीये कृषीवलबहुले देशे दुर्गव्यसनं दुर्गविरहनिमित्ता पीडा जायते । तच्च आयुधीयबहुले जनपदे आयुधीयैरेव सुखेन परिहर्तुं शक्यम् । जनपदव्यसनं तु तैरप्यपरिहार्यमिति तदेव गरीय इत्यभिप्रायः । श्रीमूला.

**दुर्गकोशव्यसनयोः कोशव्यसनमिति पिशुनः । कोशमूलो हि दुर्गसंस्कारो दुर्गरक्षणं च । दुर्गः कोशादुपजाप्यः परेषाम् । जनपदमित्रामित्रनिग्रहो देशान्तरितानामुत्साहनं दण्डबलव्यवहारः । कोशमादाय च व्यसने शक्यमपयातुं न दुर्गमिति ॥**

नारदमतमुपन्यस्यति– दुर्गकोशव्यसनयोरित्यादि । दुर्गव्यसनकोशव्यसनयोर्मध्ये कोशव्यसनं गुरुतरमिति पिशुनः नारदः मन्यते । 'स्वाम्यमात्यजनपददुर्गकोशदण्ड' इत्येतत् 'स्वाम्यमात्यजनपदकोशदुर्गदण्ड' इत्येवं व्यत्ययेन पठनीयमित्याशयः । तत्र युक्तिमाह– कोशमूलो हीत्यादि । धनसंचयनिर्वर्त्यं हि स्थानीयादिसंस्करणं तद्रक्षणं चेत्यर्थः । दुर्ग इति । परेषां दुर्गः परदुर्गस्थो जनः क्रुद्धलुब्धभीतादिः कोशात् धनदानेनैव उपजाप्यः परेभ्यो भेदनीयः । जनपदमित्रामित्रनिग्रहः जनपदस्य मित्रस्यामित्रस्य च निग्रहः । देशान्तरितानां देशव्यवहितानां उत्साहनं साहाय्यकरणायोद्योजनम् । दण्डबलव्यवहारः दण्डबलस्य सैन्यबलस्य दानग्रहणलक्षणो व्यवहारश्च । कोशादिति वर्तते । भवतीति शेषः ।

शत्र्वाक्रमणादिव्यसने दुर्गादपसरता कोशो हस्ते कर्तुं शक्यः, न दुर्गमित्येवं विशेषान्तरमाह– कोशमादाय चेत्यादि। श्रीमूला.

**नेति कौटल्यः। दुर्गार्पणः कोशो दण्डस्तूष्णींयुद्धं स्वपक्षनिग्रहो दण्डबलव्यवहार आसारप्रतिग्रहः परचक्राटवीप्रतिषेधश्च। दुर्गाभावे च कोशः परेषाम्। दृश्यते हि दुर्गवतामनुच्छित्तिरिति॥**

नारदमतं निराकरोति– नेति कौटल्य इति। दुर्गार्पण इत्यादिना दुर्गस्य कोशव्याद्यवृत्तगुणकीर्तनम्। दुर्गेणार्प्यते इति दुर्गार्पणः दुर्गाधीन इत्यर्थः। कः? कोशः, दण्डः सैन्यम्, तूष्णींयुद्धं तीक्ष्णादिभिर्गूढवधः, स्वपक्षनिग्रहः स्वपक्षसंबन्धिदूष्यामित्रादिनिग्रहणम्, दण्डबलव्यवहारः सैन्यबलदानग्रहणव्यवहारः, आसारप्रतिग्रहः सुहृद्बलस्वीकारः, परचक्राटवीप्रतिषेधश्च शत्रुसैन्यस्याऽऽटविकस्य चाऽऽक्रमणान्निवारणं च। कोशस्य रक्षाऽपि दुर्गाधीनैवेत्याह– दुर्गाभावे चेति। दुर्गरक्षाभावे कोशः परेषां शत्रुसंबन्धी भवतीत्यर्थः। किंच, दुर्गवन्तः कदाऽप्यनुच्छेद्याः शत्रूणामित्याह– दृश्यते हीत्यादि। श्रीमूला.

**कोशदण्डव्यसनयोर्दण्डव्यसनमिति कौणपदन्तः। दण्डमूलो हि मित्रामित्रनिग्रहः परदण्डोत्साहनं स्वदण्डप्रतिग्रहश्च। दण्डाभावे च ध्रुवः कोशविनाशः। कोशाभावे च शक्यः कुप्येन भूम्या परभूमिस्वयंग्रहेण वा दण्डः पिण्डयितुम्। दण्डवता च कोशः। स्वामिनश्चाऽऽसन्नवृत्तित्वादमात्यसधर्मा दण्ड इति॥**

भीष्मस्य मतमाह– कोशदण्डव्यसनयोरित्यादि। 'स्वाम्यमात्यजनपददुर्गकोशदण्डमित्र' इत्येतत् 'स्वाम्यमात्यजनपददुर्गदण्डकोशमित्र' इति व्यत्ययेन पठनीयमित्याशयः। तत्र युक्तिरुच्यते– दण्डमूलो हीत्यादि। मित्रामित्रनिग्रहः मित्रस्यामित्रस्य च दमनम्, परदण्डोत्साहनं परदण्डस्य स्वोपकारार्थमागतस्य उत्साहनम्, स्वदण्डप्रतिग्रहश्च स्वदण्डस्य शत्रुबलाभियोगितया स्वीकारश्च दण्डमूलः दण्डभयनिमित्तः। दण्डाभावे च ध्रुवः निश्चितः कोशविनाशः। कोशाभावे तु दण्डविनाशो न भवतीत्याह– कोशाभावे च हिरण्यविरहेण तद्दानाभावेऽपीत्यर्थः, कुप्येन वस्त्रादिदानेन, भूम्या भूमिदानेन, परभूमिस्वयंग्रहेण वा शत्रोरभियुक्तस्य देशे 'येन यत्स्वयं गृह्यते तत्तदीयं धनम्' इति संवित्कल्पनया वा दण्डः पिण्डयितुं संग्रहीतुं शक्यः। दण्डे संगृहीते कोशस्तेनैव सुसाध इत्याह– दण्डवता च कोश इति। पिण्डयितुं शक्य इति संबध्यते। दण्डः स्वामिन आसन्नवर्तनेन सर्वकार्यनिर्वाहकत्वात् अमात्यस्थानीय इत्याह– स्वामिनश्चाऽऽसन्नेत्यादि। श्रीमूला.

**नेति कौटल्यः। कोशमूलो हि दण्डः। कोशाभावे दण्डः परं गच्छति स्वामिनं वा हन्ति। सर्वाभियोगकरश्च कोशो धर्मकामहेतुः। देशकालकार्यवशेन तु कोशदण्डयोरन्यतरः प्रमाणीभवति। लम्भपालनो हि दण्डः कोशस्य। कोशः कोशस्य दण्डस्य च भवति। सर्वद्रव्यप्रयोजकत्वात् कोशव्यसनं गरीय इति॥**

भीष्ममतं निराकरोति– नेति कौटल्य इत्यादि। युक्तिमाह– कोशमूलो हि दण्ड इति। कोशसंग्राह्य एव दण्डः, नोपायान्तरसंग्राह्यः। कोशाभाव इति। तद्विरहे दण्डः परं गच्छति। संगृहीतमपि दण्डं परः कोशदानेन स्वायत्तं करोतीत्यर्थः। स्वामिनं वा हन्ति, अर्थात् कोशालाभकुपितः। सर्वाभियोगकरश्चेति सर्वसामन्तविषयाभियोगनिर्वाहकश्च। 'सर्वाभियोगतारकः' इति पाठे सर्वेषां सामन्तानामभियोगात् विरोधात् तारकः रक्षक इत्यर्थः। कोशः धर्मकामहेतुः। यदुक्तं दण्डस्य प्राधान्यं पूर्वपक्षिणा तत् देशकालकार्यानुसारात् कोशसाधारणमङ्गीकरोति– देशकालकार्यवशेन त्वित्यादि। देशवशेन कालवशेन कार्यवशेन च कदाचित् कोशः कार्यसाधको भवति कदाचित् दण्ड इत्यर्थः। एवं स्थितेऽपि कोशस्य दण्डात् व्यतिरेकमाह– लम्भपालनो हीति। दण्डः कोशस्य लम्भपालनः लाभरक्षकः, अर्थात् लब्धकोशरक्षकः। कोशः कोशस्य दण्डस्य च भवति अर्थात् पालनः। एकदेशानुवृत्तिर्वा पालन इति। एतावता सिद्धमाह– सर्वद्रव्यप्रयोजकत्वादिति। सर्वद्रव्येषु

सर्वासु द्रव्यप्रकृतिषु प्रयोजकत्वात् कार्यकारित्वात् कोशव्यसनं गरीयः इति । श्रीमूला.

**दण्डमित्रव्यसनयोर्मित्रव्यसनमिति वातव्याधिः। मित्रमभृतं व्यवहितं च कर्म करोति, पार्ष्णिग्राहमासारममित्रमाटविकं च प्रतिकरोति, कोशदण्डभूमिभिश्चोपकरोति, व्यसनावस्थायोगमिति ॥**

अथोद्धवमतं सप्तममाह– दण्डमित्रव्यसनयोरित्यादि । 'स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रव्यसनानाम्' इत्येतत् 'स्वाम्यमात्यजनपददुर्गकोशमित्रदण्डव्यसनानाम्' इति किंचित् व्यत्ययेन पठनीयमित्यर्थः । तत्र युक्तिप्रदर्शनम्– मित्रमित्यादिना । मित्रं अभृतं अदत्तवेतनं व्यवहितं च आत्मानवहितं च सत् कर्म करोति । दण्डस्तु भृतश्च समक्षितश्च कर्म करोतीत्यार्थम् । पार्ष्णिग्राहमित्यादि । पृष्ठशत्रुम्, आसारं पार्ष्णिग्राहमित्रम्, अमित्रम्, आटविकं च प्रतिकरोति वारयति । कोशदण्डभूमिभिश्च कोशादिदानेन च उपकरोति । कथंभूतं सत्? व्यसनावस्थायोगं व्यसनावस्थायां आपद्दशायां योगः आत्मना सह संगतिः यस्य तत् तथाभूतं सत् । इति । श्रीमूला.

**नेति कौटल्यः । दण्डवतो मित्रं मित्रभावे तिष्ठत्यमित्रो वा मित्रभावे । दण्डमित्रयोस्तु साधारणे कार्ये सारतः स्वयुद्धदेशकाललाभाद्विशेषः । शीघ्राभियाने त्वमित्राटविकाभ्यन्तरकोपे च न मित्रं विद्यते । व्यसनयौगपद्ये परवृद्धौ च मित्रमर्थयुक्तौ तिष्ठति ॥**

तदपि मतं प्रत्याचष्टे– नेति कौटल्य इति । तत्र युक्तिमाह– दण्डवत इत्यादि । मित्रं वा अमित्रो वा दण्डवतो नृपस्य भवति । दण्डाभावे मित्रामित्रव्यवहार एव नास्तीत्यर्थः । दण्डमित्रयोस्त्वित्यादि । दण्डमित्रयोरुभयोः कार्यसाधकत्वे बलतः समाने स्वानुगुणयुद्धभूमिकाललाभानुसारेणान्यतरप्रमाणीकरणलक्षणो विशेषो भवतीत्यर्थः । एवं सति दण्डस्य मित्रात् व्यतिरेकमाह– शीघ्राभियाने त्विति । शत्रुमुद्दिश्याभियाने शीघ्रमनुष्ठातव्ये अमित्राटविकाभ्यन्तरकोपे च अमित्राणां आटविकानां आभ्यन्तराणां अभ्यन्तरगतानां दूष्यादीनां च कोपे विकारे च सद्यः शमयितव्ये समुपस्थिते मित्रं न विद्यते दुरवस्थत्वादुपकारक्षमं न भवति । दण्डस्तु संनिहितत्वादुपकारक्षमो भवतीत्याशयः । व्यसनयौगपद्ये शत्रुविजिगीष्वोर्युगपदापत्संभवे परवृद्धौ च विजिगीष्वपेक्षया शत्रोर्वृद्धियुक्तत्वे च मित्रं अर्थयुक्तौ तिष्ठति अर्थलाभमेवाऽऽत्मनो गणयति परादधिकमर्थं गृहीत्वा तत्पक्षं प्रविशतीत्यर्थः । एवं च सर्वकालोपकारकतया दण्डस्य मित्रात् गरीयस्त्वसिद्धेर्दण्डव्यसनमेव मित्रव्यसनात् गुरुतरमिति सिद्धम् । श्रीमूला.

**प्रकृतिव्यसनसंप्रधारणमुक्तमिति ॥**

प्रकृतिव्यसनानां परस्परापेक्षगौरवलाघवनिर्धारणमित्थं व्याख्यातम् । श्रीमूला.

**प्रकृत्यवयवानां तु व्यसनस्य विशेषतः ।**
**बहुभावोऽनुरागो वा सारो वा कार्यसाधकः ॥**

योऽयं स्वाम्यादिप्रकृतिविशेषसप्तकसंबन्धिनां व्यसनानां परस्परगुरुलघुभावः यानादिकार्योपयोगी कथितः तस्य क्वचिदप्रयोजकत्वमाह– प्रकृत्यवयवानां त्विति । प्रकृतीनां स्वाम्यादीनां अवयवा यथा– स्वामिनो राजयुवराजादयः, अमात्यस्य मन्त्रिमन्त्रपरिषदादयः, जनपदस्य कर्षकायुधीयादयः, दुर्गस्य धान्वनवनादयः, कोशस्य रत्नसारफल्गवादयः, दण्डस्य मौलभृतादयः, मित्रस्य सहजकृत्रिमादयः इति । एतेषां व्यसनस्य विशेषतः इतरापेक्षया गरीयस्त्वरूपे विशेषे विद्यमानेऽपि बहुभावः जनादिबहुत्वम्, अनुरागः स्वामिभक्तिः, सारो वा प्रशस्तगुणयोगो वा कार्यसाधकः यानादिकार्यसिद्धिकरः । तद्यथा– दुर्गव्यसनवति शत्रौ दुर्गव्यसनात् गुरुतरं जनपदव्यसनं प्राप्तोऽपि विजिगीषुर्जनपदावयवानां बहुभावानुरागादिसत्त्वे दुर्गावयवानां च तदसत्त्वे यानादिकमनुतिष्ठेत्, तच्च सिद्धिकरं स्यादिति । श्रीमूला.

**द्वयोस्तु व्यसने तुल्ये विशेषो गुणतः क्षयात् ।**
**शेषप्रकृतिसाद्गुण्यं यदि स्यान्नाभिधेयकम् ॥**

इदं शत्रुविजिगीष्वोर्व्यसनैक्ये उक्तम् । व्यसनतुल्यतायां त्वाह– द्वयोस्त्विति । शत्रुविजिगीष्वोरुभयोः व्यसने तुल्ये

गुणतः एकत्र बहुभावानुरागादिगुणसद्भावात् क्षयात् अन्यत्र तथाविधगुणविरहाच्च विशेषः यानानुष्ठानलक्षणः, अध्यवसेयः इति शेषः। तद्यथा– शत्रुविजिगीषू द्वावपि जनपदव्यसनवन्तौ। तत्र विजिगीषोर्जनपदावयवानां बहुभावानुरागादिसत्त्वे शत्रोर्जनपदावयवानां तदभावे च विजिगीषुर्यानमनुतिष्ठेत्। तच्च कार्यसिद्धिकरं स्यादेवेत्यभिप्रायः। यथोक्तबहुभावानुरागादिगुणसत्त्वासत्त्वनिमित्तश्चायं विशेषः किं सर्वत्रैव भवति? नेत्याह– शेषेत्यादि। शेषप्रकृतिसादृगुण्यं शेषाणां यत्प्रकृतिविषयं व्यसनं शत्रुविजिगीष्वोस्तुल्यं तदतिरिक्तानां प्रकृतीनाम्– जनपदव्यसने तुल्ये तदतिरिक्तानां स्वाम्यमात्यादिप्रकृतीनाम्– सादृगुण्यं 'जानपदोऽभिजातः' इत्यादिगुणसमृद्धत्वरूपं अभिधेयकं अभिधानविषयभूतं पूर्वोक्तमित्यर्थः, न स्याद्यदि अर्थाच्छत्रोर्न भवेच्चेत्। तदैव स विशेष इत्यर्थः। परस्य शेषप्रकृतिसादृगुण्ययोगे तु बहुभावानुरागादिसद्भावोऽपि विजिगीषोरप्रयोजक इत्यभिप्रायः। श्रीमूला.

**शेषप्रकृतिनाशस्तु यत्रैकव्यसनाद्भवेत्।**
**व्यसनं तद्गरीयः स्यात्प्रधानस्येतरस्य वा॥**

यत्रैकप्रकृतिविषयं व्यसनं शेषप्रकृतिविनाशहेतुः स्यात् तत्र तद्व्यसनं प्रधानप्रकृतिसंबद्धं वा भवतु अप्रधानप्रकृतिसंबद्धं वा, सर्वथा तत् गुरुतरमेवेत्याह– शेषप्रकृतिनाशस्त्वित्यादि। श्रीमूला.

राज्ञो व्यसनानि राज्यदूषकाणि

**[1]राजा राज्यमिति प्रकृतिसंक्षेपः॥**

राजराज्ययोर्व्यसनचिन्ता इति सूत्रम्। राजा अभिषिक्तः स्वामी विजिगीषुमित्राद्यवस्थः, राज्यं अमात्यादिप्रकृतिपञ्चकम्, तयोः व्यसनचिन्ता व्यसनानां गुरुलघुभावसंप्रधारणा क्रियते इति सूत्रार्थः। स्वाम्यादिप्रकृतीर्द्विश उपादाय तद्व्यसनानां परस्परगुरुलघुभावः पूर्वप्रकरणे चिन्तितः। इह तु स्वामी एको राशिः शेषप्रकृतिसमुदायोऽपरः इति द्वैराश्येन गृहीत्वा तद्व्यसनावान्तरभेदानां स विचार्यते।

(१) कौ. ८।२.

तदेतदभिसंधायाऽऽह– राजेति। प्रकृतिसंक्षेपः प्रकृतीनां स्वाम्यादीनां सप्तानां संक्षेपः समष्टिः राजा राज्यमिति, द्वैराश्येन विभज्यत इति शेषः। तत्र राजा स्वामी विजिगीषुमित्त्रोभयरूपः, राज्यं अमात्यादिद्रव्यप्रकृतिपञ्चकम्। श्रीमूला.

**राज्ञोऽभ्यन्तरो बाह्यो वा कोप इति। अहिभयादभ्यन्तरः कोपो बाह्यकोपात् पापीयान्। अन्तरमात्यकोपश्चान्तःकोपात्। तस्मात्कोशदण्डशक्तिमात्मसंस्थां कुर्वीत॥**

तत्र राजव्यसनहेतुभूतयोः राज्यव्यसनभेदयोर्गुरुलघुभावं चिन्तयति– राज्ञ इत्यादि। राजानं प्रति राज्यस्य आभ्यन्तरो बाह्य इति द्वौ कोपौ। तत्र आद्यः अमात्यादिकोपः, द्वितीयः अरिकोपः। तयोर्मध्ये कतरो गुरुतरः इति चिन्त्यत इत्यर्थः। निर्धारयति– अहिभयादिति। अभ्यन्तरकोपो बाह्यकोपात् पापीयान् अतिशयेनानर्थावहः। कुतः? अहिभयात् आसन्नसर्पभयसधर्मत्वात्। अभ्यन्तरकोपेऽपि विशेषमाह– अन्तरमात्यकोपश्चान्तःकोपादिति। अभ्यन्तरकोपोऽपि द्विरूपः– आन्तरामात्यकोपो बाह्यामात्यकोप इति। तत्राऽऽद्यः अन्यस्मात् अन्तःकोपात् पापीयानित्यर्थः। तस्मात् उक्तकोपद्वयपापीयस्त्वाद्धेतोः कोशदण्डशक्तिं कोशदण्डयोस्तत्प्रशमनसाधनयोर्विषये या शक्तिः प्रयोगप्रभविष्णुता तां आत्मसंस्थां आत्मनि प्रतिष्ठितां स्वायत्तां कुर्वीत। श्रीमूला.

**द्वैराज्यवैराज्ययोः। द्वैराज्यमन्योन्यपक्षद्वेषानुरागाभ्यां परस्परसंघर्षेण वा विनश्यति। वैराज्यं तु प्रकृतिचित्तग्रहणापेक्षि यथास्थितमन्यैर्भुज्यत इत्याचार्याः॥**

एवं राज्यकोपजं राजव्यसनं तत्परिहारोपायं चाभिधाय राजनिमित्तं राज्यस्य व्यसनमाह– द्वैराज्यवैराज्ययोरिति। द्वैराज्यं द्विस्वामिकत्वम्, वैराज्यं विगतस्वामिकत्वम्, तयोः, चिन्ता क्रियते इति शेषः। तदुभयगुरुलघुभावश्चिन्त्यते इत्यभिप्रायः। तत्राऽऽचार्यमतमाह–द्वैराज्यमिति। तत् अन्योन्यपक्षद्वेषानुरागाभ्यां परस्परपक्षयोर्द्वेषानुरागाभ्यां

परस्परसंघर्षेण वा मिथः स्पर्धया वा विनश्यति । वैराज्ये गुणमाह– वैराज्यमिति । तत् प्रकृतिचित्तग्रहणापेक्षि प्रजाचित्तज्ञानानुरोधिप्रवृत्तिकं यथास्थितं केनाप्यव्याकुलितं अन्यैः भुज्यते प्रजाभिरनुभूयते । अतश्च वैराज्यात् द्वैराज्यं पापीयः इत्याशयः । इत्याचार्याः, मन्यन्ते इति शेषः । श्रीमूला.

**नेति कौटल्यः । पितापुत्रयोर्भ्रात्रोर्वा द्वैराज्यं तुल्ययोगक्षेमममात्यावग्रहं वर्तयेतेति । वैराज्ये तु जीवतः परस्याऽऽच्छिद्य 'नैतन्मम' इति मन्यमानः कर्शयत्यपवाहयति पण्यं वा करोति विरक्तं वा परित्यज्यापगच्छतीति ॥**

तन्मतं निराकरोति– नेति कौटल्य इति । तत्र युक्तिमाह– पितापुत्रयोरित्यादि । अयमर्थः– द्वैराज्यं नाम पितापुत्रयोर्भ्रात्रोर्वा दायभागिनोः परस्परेण विरोधाद्भवति । तच्च अभिन्नयोगक्षेमत्वादमात्यैरेव राज्ययोगक्षेमनिर्वहणसहायभूतैः प्रतिषिध्येत इति नातिगणनीयो द्वैराज्ये दोष इति । वैराज्ये पुनर्महान्तं दोषमाह– वैराज्ये त्वित्यादि । अयमर्थः– विजिगीषुर्जीवन्तं शत्रुमनादृत्य बलापहृततदीयराज्यः तस्मिन् राज्ये यदि ममकारं न करोति तदा तत् दण्डकरादिभिः कर्शयति, अन्यत्र नयति, मूल्यग्रहणेन वा यस्मैकस्मैचित् विक्रीणीते । यद्यात्मनि तत् विरक्तं भवति तदाऽपहृतसर्वसारं तत् परित्यज्य अपैति, इति महते दुःखाय स्यादिति । श्रीमूला.

**अन्धश्चलितशास्त्रो वा राजेति । अशास्त्रचक्षुरन्धो यत्किंचनकारी दृढाभिनिवेशी परप्रणेयो वा राज्यमन्यायेनोपहन्ति, चलितशास्त्रस्तु यत्र शास्त्राच्चलितमतिर्भवति शक्यानुनयो भवतीत्याचार्याः ॥**

राज्यव्यसनस्यावान्तरभेदं चिन्तयति– अन्ध इत्यादि । अन्धः अनधीतशास्त्रः राजा, चलितशास्त्रः अधीताननुरुद्धशास्त्रः राजा, तयोर्मध्ये को वा श्रेयानिति विचार्यते इत्यर्थः । तत्राऽऽचार्यमतेन निर्णयमाह– अशास्त्रेत्यादि । अशास्त्रचक्षुः शास्त्रात्मकचक्षुर्हीनः अन्धः यत्किंचनकारी असमीक्ष्यपूर्वकारी, दृढाभिनिवेशी अनिवार्यदुष्कर्माभिनिवेशः, परप्रणेयो वा परबुद्ध्यधीनप्रवृत्तिको वा भवन् अन्यायेन राज्यं उपहन्ति । चलितशास्त्रस्त्विति । स तु यत्र विषये शास्त्रात् चलितमतिर्भवति तत्र शक्यानुनयः शक्यः सुकरः अनुनयः सान्त्वपूर्वं वारणं यस्य स तथाभूतो भवति । इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । अन्धो राजा शक्यते सहायसंपदा यत्र तत्र वा पर्यवस्थापयितुमिति । चलितशास्त्रस्तु शास्त्रादन्यथाभिनिविष्टबुद्धिरन्यायेन राज्यमात्मानं चोपहन्तीति ॥**

तन्मतप्रतिषेधपूर्वं स्वमतमाह– नेति कौटल्य इत्यादि । अन्धो राजा अमात्यादिसहायगतया प्राज्ञत्वादिगुणसंपदा यत्र हितायां प्रवृत्तौ पर्यवस्थापयितुमिष्टस्तत्र शक्यः पर्यवस्थापयितुम् । चलितशास्त्रस्तु शास्त्रप्रतिषिद्धकर्माभिनिवेशदोषात् वारयितुमशक्यः अन्यायेन राज्यं चाऽऽत्मानं च नाशयतीत्यर्थः । श्रीमूला.

**व्याधितो नवो वा राजेति । व्याधितो राजा राज्योपघातममात्यमूलं प्राणाबाधं राज्यमूलमवाप्नोति । नवस्तु राजा स्वधर्मानुग्रहपरिहारदानमानकर्मभिः प्रकृतिरञ्जनोपकारैश्चरतीत्याचार्याः ॥**

अन्यं विचारमाह– व्याधित इति । व्याधिग्रस्तः नवो वा अचिराभिषिक्तो वा राजा, श्रेयानिति विचार्यते । तत्र आचार्यमतमाह– व्याधितो राजेति । सः अमात्यमूलं राजभयाभावनिरङ्कुशवृत्तिभिरमात्यैर्जनितं राज्योपघातं अवाप्नोति । राज्यमूलं प्राणाबाधं वा अमात्यादिप्रकृतिषट्ककृतं स्वप्राणनाशं वा अवाप्नोति । नवो राजा तु स्वधर्मादिभिः– स्वधर्मः शास्त्रोक्तराजधर्मानुष्ठानम्, अनुग्रहः स्वकोशोपकारः, परिहारः करमोक्षणम्, दानं कृतकर्मणां भूम्याद्यर्पणम्, मानः सत्कारः, कर्म पूर्तादिप्रवर्तनम्, इत्येतैः प्रकृतिरञ्जनोपकारैः प्रकृत्यनुरागोत्पादनोपायैः चरति व्यवहरति इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । व्याधितो राजा यथाप्रवृत्तं राजप्रणिधिमनुवर्तयति । नवस्तु राजा 'बलावर्जितं ममेदं राज्यम्' इति यथेष्टमनवग्रहश्चरति । सामुत्थायिकैरवगृहीतो वा राज्योपघातं मर्षयति ।**

**प्रकृतिष्वरूढः सुखः समुच्छेत्तुं भवति । व्याधिते विशेषः पापरोग्यपापरोगी च ॥**

नेति कौटल्य इति । प्रतिषेधे उपपत्तिमाह— व्याधितो राजेति । सः यथाप्रवृत्तं पूर्वप्रवृत्तप्रकारं राजप्रणिधिं राजव्यापारं अनुवर्तयति । नवो राजा तु 'इदं राज्यं मम बलावर्जितं स्वबलोपार्जितम्' इति मन्यमानः इति शेषः, अनवग्रहः निरङ्कुशः यथेष्टं स्वच्छन्दं चरति । वा अथवा सामुत्थायिकैः सामवायिकैः अवगृहीतः परतन्त्रतां नीतः राज्योपघातं सामवायिकमूलं मर्षयति सहते । न तु प्रतिकर्तुं शक्नोतीत्यर्थः । प्रकृतिषु विषये अरूढः नवत्वेनानुपजातस्नेहः सुखः समुच्छेत्तुं भवति परेणोच्छेत्तुमनायासशक्यो भवति । एवं च नवाद्व्याधितस्य श्रेयस्त्वं सिद्धम् । व्याधितविषयेऽपि न सामान्यग्रहणम्, किंतु व्याधितविशेषस्यैवापापरोगिलक्षणस्य स्वमते ग्रहणमित्यभिप्रायं मनसि निधाय पापरोगी अपापरोगी चेत्येवं व्याधिते विशेषमाचष्टे— व्याधिते विशेष इत्यादि । पापरोगः कुष्ठादिः, तद्वान् पापरोगी । श्रीमूला.

**नवेऽप्यभिजातोऽनभिजात इति । दुर्बलोऽभिजातो बलवाननभिजातो राजेति । दुर्बलस्याभिजातस्योपजापं दौर्बल्यापेक्षाः प्रकृतयः कृच्छ्रेणोपगच्छन्ति । बलवतश्चानभिजातस्य बलापेक्षाः सुखेनेत्याचार्याः ॥**

नवेऽप्यवान्तरभेदं विमर्शार्थमाह— नवेऽपीत्यादि । विशेषः इत्यनुवर्तते । तत्र अभिजातो दुर्बलो वा गरीयान् बलवाननभिजातो वेति चिन्तयति— दुर्बल इत्यादि । आचार्यमतेन निर्णयमाह— दुर्बलस्येत्यादि । अभिजातस्यापि सतो दुर्बलस्योपजापं प्रकृतयो दौर्बल्यावज्ञया कृच्छ्रादङ्गीकुर्वन्ति, बलवतस्त्वनभिजातस्यापि बलबहुमानात् सुखेनाङ्गीकुर्वन्तीति बलवाननभिजात एव गरीयानित्यभिप्रायः । श्रीमूला.

**नेति कौटल्यः । दुर्बलमभिजातं प्रकृतयः स्वयमुपनमन्ति जात्यमैश्वर्यप्रकृतिरनुवर्तत इति । बलवतश्चानभिजातस्योपजापं विसंवादयन्त्यनुरागे सार्वगुण्यमिति ॥**

आचार्यमतं निषेधन् स्वमतमाह— नेति कौटल्य इत्यादि । युक्तिमाह— दुर्बलमिति । बलरहितं अभिजातं राजानं प्रकृतयः स्वयमुपनमन्ति अप्रार्थ्यमाना अपि आभिजात्यानुरागात् उपगम्य आश्रयन्ति । कुतः ? जात्यं कुलोत्पन्नं ऐश्वर्यप्रकृतिः ऐश्वर्यार्हता अनुवर्तते इति हेतोरित्यर्थः । बलवतश्च अनभिजातस्य अजात्यस्य उपजापं विसंवादयन्ति नानुवर्तन्ते । कुतः ? अनुरागे सार्वगुण्यमिति अनुरागे सति सर्वगुणयोगित्वं प्रतीयते इति हेतोः । इह 'अनुयोगे साद्गुण्यम्' इत्यपपाठः । एवं च प्रकृतयः आभिजात्यानुरागात् अभिजाते सार्वगुण्यं पश्यन्त्यः तमुपनमन्ति, अनभिजातं तु अनुरागाभावात् नोपनमन्तीत्याशयः । इत्थं राजहेतुकं राज्यव्यसनं व्याख्यातम् । श्रीमूला.

**प्रयासवधात्सस्यवधो मुष्टिवधात्पापीयान् ॥**

परचक्रहेतुकं व्यसनमाह— प्रयासवधादिति । सस्यवधः निष्पन्नसस्यनाशनं मुष्टिवधात् मुष्टिः बीजवापः तस्याकरणात् पापीयान् । कुतः ? प्रयासवधात् धान्यालाभहेतुत्वसाम्येऽपि उदकपायनपालनादिरूपपरिश्रमनैष्फल्यहेतुत्वेनाधिकेन योगात् । श्रीमूला.

**निराजीवत्वादवृष्टिरतिवृष्टित इति ॥**

दैवकृतं व्यसनमाह— निराजीवत्वादिति । इह 'पापीयान्' इत्यनुवृत्तं स्त्रीलिङ्गतया विपरिणम्यते । अवृष्टिः अतिवृष्टितः पापीयसी । कस्मात् ? निराजीवत्वात् उदकाधीनाजीवोच्छेदप्रयोजकत्वात् । इतिशब्दो विचारसमाप्तौ । श्रीमूला.

**द्वयोर्द्वयोर्व्यसनयोः प्रकृतीनां बलाबलात् ।
पारंपर्यक्रमेणोक्तं याने स्थाने च कारणम् ॥**

एवं निर्णीतो द्विद्विप्रकृतिपरस्परगुरुलघुभावः क्वोपयुज्यते इत्याह— द्वयोर्द्वयोरित्यादि । याने स्थाने च कारणमिति । शत्रुव्यसनापेक्षया स्वव्यसनस्य लघुत्वं विजिगीषोर्याने प्रयोजकम्, गुरुत्वं तु स्थाने, इत्येवं यानस्थानव्यवस्थापकतया बलाबलमुपयुज्यते इति भावः । श्रीमूला.

अविनीतपुरुषकर्तृको द्विविधो व्यसनवर्गः
कामजः क्रोधजश्च

**'अविद्याविनयः पुरुषव्यसनहेतुः। अविनीतो हि व्यसनदोषान् न पश्यति ॥**

' पुरुषव्यसनवर्गः ' इति सूत्रम्। पुरुषसामान्यस्य यानि व्यसनानि व्यसनप्रभवा दोषाः तेषां वर्गः अभिधीयते इति सूत्रार्थः।

पुरुषस्य व्यसने कारणमाह– अविद्याविनय इति। विद्यासु आन्वीक्षिक्यादिषु विनयः शिक्षा विद्याविनयः, तस्याभावः अविद्याविनयः पुरुषव्यसनहेतुः। हेतुत्वमुपपादयति– अविनीतो हीत्यादि। पुरुषस्य व्यसने प्रवृत्तिः तज्जन्यदोषाज्ञानात् भवति। अज्ञानं विद्याशिक्षणाभावकृतमित्यर्थः। श्रीमूला.

**तानुपदेक्ष्यामः। कोपजस्त्रिवर्गः कामजश्चतुर्वर्गः ॥**

व्यसनदोषान् प्रतिज्ञापूर्वमुपदिशति– तानुपदेक्ष्याम इत्यादि। तत्र वाक्पारुष्यमर्थदूषणं दण्डपारुष्यं च त्रिवर्गः, मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः। उभयोः संकलनया च व्यसनदोषाः सप्त संपद्यन्ते इति बोद्धव्यम्। श्रीमूला.

**तयोः कोपो गरीयान्। सर्वत्र हि कोपश्चरति। प्रायशश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते। कामवशाः क्षयव्ययनिमित्तमरिव्याधिभिरिति ॥**

तयोरिति वर्गद्वयोत्पादकयोः कामकोपयोर्मध्ये कोपो गरीयान्। 'कोपजः' इति नयचन्द्रिकापाठे 'तयोः कामजकोपजयोर्वर्गयोः' इति व्याख्येयम्। गरीयस्त्वे हेतुमाह –सर्वत्र हीत्यादि। कोपो हि सर्वविषयः, कामस्तु स्त्र्यादिप्रतिनियतविषयत्वादसर्वविषयः, इति असार्वत्रिकं काममपेक्ष्य सार्वत्रिकः कोपो गुरुतरः। ततश्च तज्जन्यस्त्रिवर्गोऽपि गुरुतर इति भावः। हेत्वन्तरमाह– प्रायशश्चेत्यादि। क्षयव्ययनिमित्तमरिव्याधिभिरित्यादि। कोशदण्डहानिं शरीरपरिहानिं च निमित्तीकृत्य शत्रुभिर्व्याधिभिश्च हताः श्रूयन्ते इत्यर्थः। एवं च अरिव्याधिहननापेक्षया पापीयसः प्रकृतिकोपहननस्य कोपो निमित्तं भवतीत्यतोऽपि हेतोः कोपो गरीयानित्यभिप्रायः। श्रीमूला.

**नेति भारद्वाजः। सत्पुरुषाचारः कोपः। वैरयातनमवज्ञावधो भीतमनुष्यता च। नित्यश्च कोपसंबन्धः पापप्रतिषेधार्थः। कामः सिद्धिलाभः। सान्त्वं त्यागशीलता संप्रियभावश्च। नित्यश्च कामेन संबन्धः कृतकर्मणः फलोपभोगार्थ इति ॥**

नेति भारद्वाज इति। कोपः कामश्च न दोष इति द्रोणाचार्यो मन्यते इत्यर्थः। सत्पुरुषाचार इत्यादिना तत्र हेतूपन्यासः। कोपः सत्पुरुषाचारः सत्पुरुषधर्मो भवति। उपादेयं कोपसाध्यमाह– वैरयातनं वैरप्रतिक्रिया, अवज्ञावधः परकृतावहेलनवारणम्, भीतमनुष्यता च यमुद्दिश्यापकारकरणात् भीता मनुष्याः स भीतमनुष्यः तत्ता च, कोपात् सिध्यतीति वाक्यशेषः। पापप्रतिषेधार्थः दुर्जननिग्रहार्थः कोपसंबन्धः कोपस्वीकारः नित्यश्च अवर्जनीयश्च सत्पुरुषस्य। कामं प्रत्याह– काम इति। सः सिद्धिलाभः सुखलाभहेतुः। तदधीनान् पुरुषस्य गुणानाह– सान्त्वं सूनृतभाषित्वम्, त्यागशीलता दानशौण्डत्वम्, संप्रियभावश्च सौम्यत्वं च, जायते इति शेषः। कृतस्य प्रयत्नस्य तत्फलानुभवार्थं कामेन संबन्धः पुरुषावर्जनीयश्चेत्याह– नित्यश्चेत्यादि। इतिशब्दो हेत्वर्थः। श्रीमूला.

**नेति कौटल्यः। द्वेष्यता शत्रुवेदनं दुःखासङ्गश्च कोपः। परिभवो द्रव्यनाशः पाटच्चरद्यूतकारलुब्धकगायनवादकैश्चानर्थ्यैः संयोगः कामः ॥**

तदिदं भारद्वाजमतं निषेधति– नेति कौटल्य इति। भारद्वाजेन यदुक्तं तन्न, कोपकामौ न गुणौ, किंतु दोषावेवेत्यर्थः। कोपजान् महानर्थान् आह– द्वेष्यतेति। द्वेष्यता सर्वद्वेषविषयता, शत्रुवेदनं शत्रुलाभः, दुःखासङ्गश्च दुःखयोगश्च कोपः। 'आयुर्घृतम्' इतिवत् कार्यकारणयोरभेदोपचारात् द्वेष्यतादिनिमित्तं कोप इत्यर्थः। एवं कोपजदोषत्रिवर्गमुक्त्वा कामजं दोषत्रिवर्गमाह– परीत्यादि। परिभवः उत्पथप्रवृत्त्या अव-

(१) कौ. ८।३.
घ. कौ. १९५

मानप्राप्तिः, द्रव्यनाशः द्रव्याणां अपात्रेष्वतिमात्रं विनियोगात् नाशः, पाटच्चरादिभिः— पाटच्चराः चोराः, द्यूतकाराः अक्षादिदेविनः, लुब्धकाः मृगयासहायाः, गायनाः कण्ठगायिनः, वादकाः वीणावादिनः, एभिः अनर्थैः अर्थापितैः संयोगश्च कामः । परिभवादिरूपः काम इत्यर्थः । एवं चानर्थहेतुत्वात् कोपकामयोर्दोषत्वं सिद्धम् । श्रीमूला.

**तयोः परिभवाद्‌द्वेष्यता गरीयसी । परिभूतः स्वैः परैश्चावगृह्यते, द्वेष्यः समुच्छिद्यत इति । द्रव्यनाशाच्छत्रुवेदनं गरीयः । द्रव्यनाशः कोशाबाधकः, शत्रुवेदनं प्राणाबाधकमिति । अनर्थ्यसंयोगात् दुःखसंयोगो गरीयान् । अनर्थ्यसंयोगो मुहूर्तप्रीतिकरः, दीर्घक्लेशकरो दुःखानामासङ्ग इति । तस्मात्कोपो गरीयान् ॥**

तयोश्च कोपस्य गरीयस्त्वं यत् प्रागुपन्यस्तं तत् यथोक्तकोपजदोषत्रिवर्गकामजदोषत्रिवर्गान्योन्यगुरुलघुभावविमर्शद्वारेण स्थापयति— तयोः परिभवादित्यादि । तयोः कोपजकामजत्रिवर्गयोर्मध्ये परिभवात् कामजवर्गप्रथमात् द्वेष्यता कोपजवर्गप्रथमा गरीयसी । कुतः ? परिभूतः स्वैः परैश्च अवगृह्यते विधेयीक्रियते, द्वेष्यः समुच्छिद्यते राज्यात्प्रभ्रश्यते, इति अतः कारणात् । द्रव्यनाशात् कामजवर्गद्वितीयात् शत्रुवेदनं कोपजवर्गद्वितीयं गरीयः । कुतः ? द्रव्यनाशः कोशाबाधकः कोशमेव केवलमाबाधते, न तु प्राणान्, शत्रुवेदनं प्राणाबाधकम्, इति अतः कारणात् । अनर्थ्यसंयोगात् कामजवर्गतृतीयात् दुःखसंयोगः कोपजवर्गतृतीयः गरीयान् । कुतः ? अनर्थ्यसंयोगः मुहूर्तप्रीतिकरः दुःखपर्यवसाय्यपि मुहूर्तं प्रीतये कल्पते, दुःखानामासङ्गः दीर्घक्लेशकरः प्रीतिलेशेनाप्यस्पृष्टं क्लेशं करोति, इति अतः । तस्मादिति । कामजत्रिवर्गापेक्षया कोपजत्रिवर्गस्य गरीयस्त्वात् कोपः गरीयान् कामापेक्षया । श्रीमूला.

**वाक्पारुष्यमर्थदूषणं दण्डपारुष्यमिति । वाक्पारुष्यार्थदूषणयोर्वाक्पारुष्यं गरीय इति विशालाक्षः । परुषमुक्तो हि तेजस्वी तेजसा प्रत्यारोहति, दुरुक्तशल्यं हृदि निखातं तेजःसंदीपनमिन्द्रियोपतापि चेति ॥**

'कोपजस्त्रिवर्गः' इति पूर्वमुक्तस्य त्रिवर्गस्य परस्परतो गुरुलघुभावं विचारयति— वाक्पारुष्यमित्यादि । तत्राऽऽद्ययोर्निर्णयं विशालाक्षमतेनाऽऽह— वाक्पारुष्यार्थदूषणयोरित्यादि । तत्र हेतुमाह— परुषमुक्तो हीति । परुषवाक्यैरधिक्षिप्तः तेजस्वी परिभवासहनस्वभावः तेजसा प्रत्यारोहति अधिक्षेप्तारं प्रत्याक्रामति । दुरुक्तशल्यं दुर्वचनरूपं शल्यं हृदि निखातं स्थापितं तेजःसंदीपनं तेजसः प्रज्वलनकरं इन्द्रियोपतापि च इन्द्रियसंतापकारकं च इति अतः कारणात् । श्रीमूला.

**नेति कौटल्यः । अर्थपूजा वाक्छल्यमपहन्ति, वृत्तिविलोपस्त्वर्थदूषणम् । अदानमादानं विनाशः परित्यागो वाऽर्थस्येत्यर्थदूषणम् ॥**

विशालाक्षमतं निराकरोति— नेति कौटल्य इति । तत्र हेतुमाह— अर्थपूजेति । अर्थेन सत्कारः वाक्छल्यं अधिक्षेपवचनप्रयोगकृतं मनःशल्यं अपहन्ति अपोहति । वाक्पूजा तु अर्थदूषणं नापहन्ति, तस्य जीविकाविलोपहेतुत्वादित्यभिप्रायेणाऽऽह— वृत्तिविलोपस्त्वर्थदूषणमिति । अदानमित्यादिनाऽर्थदूषणस्य प्रकाराणां प्रदर्शनं तेषु चतुर्ष्वपि वृत्तिविलोपहेतुत्वस्य स्पष्टत्वबोधनार्थम् । अदानं कृतकर्मवेतनानर्पणम्, आदानं दण्डाद्यात्मना धनग्रहणम्, विनाशः देशपीडनम्, अर्थस्य परित्यागः रक्षणीयस्यारक्षणमिति, चतुष्प्रकारमिति शेषः, अर्थदूषणम् । तथा च अर्थदूषणमेव गरीय इत्यभिप्रायः । श्रीमूला.

**अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीय इति पाराशराः । अर्थमूलौ धर्मकामौ, अर्थप्रतिबन्धश्च लोको वर्तते, तस्योपघातो गरीयानिति ॥**

अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीय इति पाराशरमतमाह— अर्थदूषणेत्यादि । तत्र युक्तिमाह— अर्थमूलौ धर्मकामावित्यादि । धर्मकामयोरर्थसाध्यतया लोकवर्तनस्यार्थान्वयव्यतिरेकानुविधायित्वादर्थस्य प्राधान्यात् तस्योपघातो दण्डपारुष्यात् गुरुतर इत्यर्थः । श्रीमूला.

**नेति कौटल्यः । सुमहताऽप्यर्थेन न कश्चन शरीरविनाशमिच्छेत् । दण्डपारुष्याच्च तमेव दोषमन्येभ्यः प्राप्नोति । इति कोपजस्त्रिवर्गः ॥**

तन्निराचष्टे— नेति कौटल्य इत्यादि । अतिप्रभूतेनाप्यर्थलाभेन कस्याप्यनभिलषितं प्रत्युत तावताऽप्यर्थोपघातेन सर्वैः परिजिहीर्षितं शरीरविनाशं यस्मात् दण्डपारुष्यं प्रयोजयति तस्मात् तदेव अर्थदूषणापेक्षया पापीय इत्यभिप्रायः । इति कोपजस्त्रिवर्ग इति । इत्थं कोपजस्य त्रिवर्गस्यान्योन्यगुरुलघुभावो निरूपित इत्यर्थः । श्रीमूला.

**कामजस्तु मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः । तस्य मृगयाद्यूतयोर्मृगया गरीयसीति पिशुनः । स्तेनामित्रव्यालदावप्रस्खलनभयदिङ्मोहाः क्षुत्पिपासे च प्राणाबाधस्तस्याम् । द्यूते तु जितमेवाक्षविदुषा यथा जयत्सेनदुर्योधनाभ्यामिति ॥**

कामजस्य चतुर्वर्गस्य त्रीणि द्विकानि कृत्वा तेषामेकैकस्यावयवयोरन्योन्यापेक्षं गुरुलघुभावं निर्णेष्यन् वर्गिणो निर्दिशति–कामजस्तु मृगयेत्यादि । आद्यद्विके गरीयस्त्वस्य निर्णयं नारदमतेनाऽऽह— तस्येत्यादि । तत्र तदीयां युक्तिमाह— स्तेनेत्यादि । स्तेनाः चोराः, अमित्राः शत्रवः, व्यालाः दुष्टमृगाः, दावः वनाग्निः, प्रस्खलनं गत्याद्यनवधानम्, एतेभ्यो भयानि अपायशङ्काः, दिङ्मोहः दिग्भ्रमः इत्येते, क्षुत्पिपासे च बुभुक्षोदन्ये च प्राणाबाधः कार्यकारणयोरभेदोपचारात् प्राणपीडाहेतवः इत्यर्थः, तस्यां मृगयायाम । द्यूते तु अक्षविदुषा जितमेव अक्षदेवनविचक्षणो जयमेव लभते । तत्रोदाहरणमाह— यथेत्यादि । इतिशब्दः हेतौ । श्रीमूला.

**नेति कौटल्यः । तयोरप्यन्यतरपराजयोऽस्तीति नलयुधिष्ठिराभ्यां व्याख्यातम् । तदेव विजितद्रव्यमामिषं वैरबन्धश्च सतोऽर्थस्य विप्रतिपत्तिरसतश्चार्जनमप्रतिभुक्तनाशो मूत्रपुरीषधारणबुभुक्षादिभिश्च व्याधिलाभ इति द्यूतदोषाः । मृगयायां तु व्यायामः श्लेष्मपित्तमेदःस्वेदनाशश्चले स्थिरे च काये लक्ष्यपरिचयः कोपभयस्थानेहितेषु च मृगाणां चित्तज्ञानमनित्ययानं चेति ॥**

पिशुनमतं निषेधति— नेति कौटल्य इति । मृगयाद्यूतयोर्मध्ये द्यूतस्य मृगयाया इव दोषमाह— तयोरपीत्यादि । अन्यतरस्य जयवत् पराजयोऽपि नियतः, जितं द्रव्यं सर्वेषां भोग्यं भवति, पराजितस्य जेतरि विद्वेषकरणम्, सतः विशुद्धागमस्य पूर्वार्जितस्य द्रव्यस्य अस्थानविनियोगः, असतः अशुद्धागमस्यार्थस्य द्यूतोपायेनाधिगमनम्, अभुक्तस्यैव द्यूतार्जितस्य पुनर्द्यूते हारणा, मूत्रपुरीषधारणबुभुक्षापिपासाभिर्व्याधिप्राप्तिश्चेत्येतान् द्यूते दोषानभिधाय मृगयायां गुणानाह— मृगयायां त्वित्यादि । व्यायामः कायायासकरणम्, श्लेष्मपित्तमेदःस्वेदनाशः श्लेष्मपित्तदोषनाशः मांसानुपचयः आयासे महत्यपि अस्विद्यद्गात्रत्वं च, चलस्य स्थिरस्य च शरीरस्य लक्षीकरणशिक्षणम्, कोपनिमित्तचेष्टितेषु भयनिमित्तचेष्टितेषु च मृगाणां भावज्ञानम्, मृगयार्थस्य यानस्य वर्षादिषु कर्तुमशक्यतया कादाचित्कानुष्ठानविषयत्वम्, न पुनर्द्यूतस्येव नित्यानुष्ठानविषयत्वमित्येते द्यूतव्यावृत्ता गुणाः मृगयायां सन्ति । अतश्च द्यूतमेव पापीय इत्यभिप्रायः । श्रीमूला.

**द्यूतस्त्रीव्यसनयोः कैतवव्यसनमिति कौणपदन्तः । सातत्येन हि निशि प्रदीपे मातरि च मृतायां दीव्यत्येव कितवः, कृच्छ्रे च प्रतिपृष्टः कुप्यति । स्त्रीव्यसनेषु तु स्नानप्रतिकर्मभोजनभूमिषु भवत्येव धर्मार्थपरिप्रश्नः । शक्या च स्त्री राजहिते नियोक्तुमुपांशुदण्डेन व्याधिना वा व्यावर्तयितुमवस्रावयितुं वेति ॥**

द्यूतस्त्रीव्यसनयोर्बलाबलचिन्तायां द्यूतव्यसनं गरीय इति भीष्ममतमाह— द्यूतेत्यादि । तदीयं तत्र हेतुमाह— सातत्येन हीत्यादि । द्यूतकारो हि सूर्यप्रकाशाभावेऽपि रात्रौ दीपप्रकाशमुपजीव्याविच्छेदेन दीव्यति, मृताया मातुरौर्ध्वदैहिकमप्यात्मकार्यं परिहृत्य दीव्यति, कार्यसंकटे तन्निवारणोपायं पृष्टः कुप्यतीत्येते द्यूते दोषाः । स्त्रीव्यसने तु दोषसत्त्वेऽपि विशेषमाह— स्त्रीव्यसने-

ष्वित्यादि । स्त्रीव्यसनी तु स्नानभूमौ प्रसाधनभूमौ भोजनभूमौ च धर्ममर्थं वा प्रष्टुं बोधयितुं च शक्यः । यत्स्त्रीव्यसनी राजा सा राजहितायां वृत्ताववस्थापयितुममात्यादिभिः शक्या । अवस्थापनाशक्यत्वे उपांशुदण्डेन नाशयितुं शक्या । नाशनाशक्यत्वे रसदानादिनिमित्तव्याधियोगेनान्यत्र नेतुं वा शक्या इत्येते दोषपरिहारमार्गाः संभवन्तीत्याशयः । श्रीमूला.

**नेति कौटल्यः । सप्रत्यादेयं द्यूतम्, निष्प्रत्यादेयं स्त्रीव्यसनम् । अदर्शनं कार्यनिर्वेदः कालातिपातनादनर्थधर्मलोपश्च तन्त्रदौर्बल्यं पानानुबन्धश्चेति ॥**

कौणपदन्तमतमिदं निराचष्टे– नेति कौटल्य इति । तत्र हेतुकथनम्– सप्रत्यादेयमित्यादिना । द्यूते हारितं यत् तत् पुनर्द्यूतद्वारेण प्रत्यादातुं शक्यमिति प्रत्यादेयसहितं द्यूतम्, अतथाभूतं तु स्त्रीव्यसनम् । किंच, स्त्रीव्यसनिनो राज्ञो दर्शनमेव तावदमात्यैर्न लभ्यते, अमात्यादीनां राजदर्शननिमित्तः कार्यानुष्ठानेष्वनुत्साहः, कालातिपातनादनर्थप्राप्तिसहिता धर्महानिश्च, तन्त्रस्य स्वराज्यचिन्तनलक्षणस्य अनूर्जितत्वम्, स्त्रीरतिसहकारिणो मद्यपानस्यानुवर्तनमित्येतैर्दोषैः स्त्रीव्यसनमेव पापीय इत्यभिप्रायः । श्रीमूला.

**स्त्रीपानव्यसनयोः स्त्रीव्यसनमिति वातव्याधिः । स्त्रीषु हि बालिश्यमनेकविधं निशान्तप्रणिधौ (कौ. १।२०) व्याख्यातम् । पाने तु शब्दादीनामिन्द्रियार्थानामुपभोगः प्रीतिदानं परिजनपूजनं कर्मश्रमवधश्चेति ॥**

स्त्रीव्यसनपानव्यसनयोः बलाबलविचारे स्त्रीव्यसनं गरीय इत्युद्धवमतमाह– स्त्रीपानव्यसनयोरित्यादि । तत्र तदीयं हेतुमाह– स्त्रीषु हीत्यादि । तासु हि बहुप्रकारं मौर्ख्यं भर्तृवधार्थविषमिश्रलाजदानादिलक्षणं प्रथमाधिकरणीयनिशान्तप्रणिधिप्रकरणोदाहृतं संभावितम्, न तु पाने । किंच, पाने चित्तैकाग्र्यसंपत्त्या शब्दादीनामिन्द्रियार्थानामैकरस्यानुभवः प्रीतिदानम्, परिजनसत्कारः, कर्मायासकरणनिमित्ताङ्गावसादादिप्रशमनं च भवतीत्येतस्माद्धेतोरित्यर्थः । श्रीमूला.

**नेति कौटल्यः । स्त्रीव्यसने भवत्यपत्योत्पत्तिरात्मरक्षणं चान्तर्दारेषु विपर्ययो वा बाह्येष्वगम्येषु सर्वोच्छित्तिः । तदुभयं पानव्यसने । पानसंपत्– संज्ञानाशोऽनुन्मत्तस्योन्मत्तत्वमप्रेतस्य प्रेतत्वं कौपीनदर्शनं श्रुतप्रज्ञाप्राणवित्तमित्रहानिः सद्भिर्वियोगोऽनर्थ्यसंयोगस्तन्त्रीगीतनैपुण्येषु चार्थघ्नेषु प्रसङ्ग इति ॥**

इदं मतं प्रतिषेधति– नेति कौटल्य इति । तत्र हेतुमाह– स्त्रीव्यसन इत्यादि । तस्मिन् अन्तर्दारेषु यथाविधि परिणीतासु पतिव्रतासु अपत्योत्पत्तिः आत्मरक्षणं च भवति । वा अन्तर्दाराभावपक्षे बाह्येषु गणिकादिषु, प्रसक्तस्येति शेषः, विपर्ययः अपत्योत्पत्त्यात्मरक्षणयोरभावः । अगम्येषु कुलस्त्रीजनेषु सर्वोच्छेदः प्राणपर्यन्तसर्वस्वनाशः । एवं तावत् गणिकादिप्रसङ्गः कुलवधूप्रसङ्गः इति दोषद्वयं स्त्रीव्यसनेऽभिहितम् । तच्च तदतिरिक्ताश्च बहवो दोषाः पानव्यसने भवन्तीत्याह– तदुभयमित्यादि । पानसंपत् पानकार्याणां समृद्धिः । तां विवृणोति– संज्ञानाश इति । संज्ञानाशः बुद्धिलोपः । अनुन्मत्तस्य उन्मत्तभावः चित्तविभ्रमहीनस्यैव विभ्रान्तचित्तत्वम् । अप्रेतस्य प्रेतत्वं जीवत एव शवसाधारणं निश्चेष्टत्वम् । कौपीनदर्शनं गुह्यागोपनम् । श्रुतादिहानिः– श्रुतं शास्त्रश्रवणम्, प्रज्ञा श्रुतजन्या मतिः, प्राणः बलम्, वित्तमित्रे प्रसिद्धे, तेषां हानिः । सद्भिर्वियोगः सत्संसर्गाभावः । अनर्थ्यसंयोगः गायनवादकादिसंसर्गः । तन्त्रीगीतनैपुण्येषु चार्थघ्नेषु प्रसङ्गः अर्थोपघातिषु वीणागानकौशलेषु अत्यासङ्गः । एवं च स्त्रीव्यसनात् मद्यव्यसनं गरीय इति व्यवस्थितम् । श्रीमूला.

**द्यूतमद्ययोः द्यूतमेकेषाम् । पणनिमित्तो जयः पराजयो वा प्राणिषु निश्चेतनेषु वा पक्षद्वैधेन प्रकृतिकोपं करोति, विशेषतश्च संघानां संघधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः, तन्निमित्तो**

विनाश इति । असत्प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यादिति ॥

केचिदाचार्या मन्यन्ते— द्यूतमद्यव्यसनयोर्द्यूतव्यसनं गरीय इति । तन्मतं सयुक्तिकं दर्शयति— द्यूतमद्ययोरित्यादि । 'एकेषाम्' इत्येतदनन्तरं 'गरीयस्त्वेनेष्टम्' इति शेषः । तत्र द्यूतदोषबाहुल्यं हेतुमाह— पणनिमित्त इति । पणः ग्लहद्रव्यम्, तन्निमित्तः जयः पराजयो वा पणलाभप्रयोजनो जयः पणहानिप्रयोजनः पराजय इत्यर्थः, प्राणिषु निश्चेतनेषु वा प्राणिद्यूते प्राणिविषयः अप्राणिद्यूते अप्राणिविषयः पक्षद्वैधेन जेतृपक्षो जितपक्ष इति परस्परविरुद्धपक्षद्वयोत्थापनेन प्रकृतिकोपं करोति । विशेषतश्च संघानां संघधर्मिणां च, संघधर्मः ऐकमत्यम्, तद्वतां च राजकुलानां द्यूतनिमित्तो भेदः ऐकमत्यभङ्गः, तन्निमित्तः भेदनिमित्तः विनाशः, जायते इति शेषः । इति हेतोः । अन्येषामिति । अपरेषामाचार्याणां असत्प्रग्रहः असतां प्रग्रहः पूजा यस्मिन्नस्ति सः, अर्थान्मद्यपानासङ्गः पापिष्ठतमः व्यसनानां सर्वेषां व्यसनानां मध्ये । कुतः ? तन्त्रदौर्बल्यात् स्वराज्यचिन्तापचयात् । इति एवम्, मतमिति शेषः । 'अन्येषाम्' इति पाठो मूलमातृकासु न दृश्यते, किंतु नयचन्द्रिकायामुपात्तत्वात् प्रकृतसंगतत्वाच्च स आदृतः । मतद्वयमपीदमप्रतिषिद्धत्वात् कौटल्यस्यापीष्टं द्रष्टव्यम् । श्रीमूला.

असतां प्रग्रहः कामः कोपश्चावग्रहः सताम् ।
व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम् ॥

प्रपञ्चितमर्थं संक्षिप्याऽऽह— असतामिति । गायनवादकादीनामनर्थ्यानां प्रग्रहः पूजाहेतुः कामः । कोपश्च सतां अवग्रहः निग्रहहेतुः । उभयं उक्तं द्विकं अत्यन्तं सर्वथा व्यसनं मतं व्यसनत्वेनाभिमतम् । कुतः ? दोषबाहुल्यात् पूर्वोक्तात् दोषप्राचुर्यात् । श्रीमूला.

तस्मात्कोपं च कामं च व्यसनारम्भमात्मवान् ।
परित्यजेन्मूलहरं वृद्धसेवी जितेन्द्रियः ॥

तस्मात् आत्यन्तिकव्यसनतायाः सिद्धत्वात् व्यसनारम्भं दुःखजनकं मूलहरं सर्वस्वनाशकरं कोपं च कामं च परित्यजेत् । कः ? आत्मवान् मनस्वी, धीर इत्यर्थः । स कीदृशः ? वृद्धसेवी जितेन्द्रियः वृद्धसंयोगद्वारेण वशीकृतमनस्क इत्यर्थः । श्रीमूला.

दैव्य आपदः मानुष्य आपदश्च, आपदां परस्परगुरुलघुभावविचारः, कोशव्यसनम्

[१]दैवपीडनमग्निरुदकं व्याधिर्दुर्भिक्षं मरक इति ॥

'पीडनवर्गः' इति सूत्रम् । पीडनानां दैवमानुषभेदभिन्नानां वर्गः अभिधीयते इति सूत्रार्थः । गुणप्रातिलोम्यगुणाभावप्रदोषप्रसङ्गपीडात्मकेषु पञ्चसु व्यसनेषु प्रसङ्गपर्यन्तानि निरूपितानि, पीडारूपं तु संप्रति निरूप्यते ।

तत्र दैवपीडनं तावत् पञ्चधा विभजते— दैवपीडनमग्निरित्यादि । श्रीमूला.

अग्न्युदकयोरग्निपीडनमप्रतिकार्यं सर्वदाहि च, शक्योपगमनं तार्याबाधमुदकपीडनमित्याचार्याः ॥

तेषां द्वयोर्द्वयोः क्रमेण परस्परगुरुलघुभावं निर्णेष्यन् प्रथमयोः अग्निपीडनोदकपीडनयोः तन्निर्णयमाचार्यमतेनाऽऽह— अग्न्युदकयोरित्यादि । तयोर्मध्ये अग्निपीडनं अग्नेः स्प्रष्टुमप्यशक्यतया प्रतिकर्तुमशक्यं सर्वदहनशीलं च भवति । उदकपीडनं तु शक्योपगमनं नौकादिप्रतिकार्याबाधं चेत्यतोऽग्निपीडनमुदकपीडनात् गरीय इत्याचार्या मन्यन्ते इत्यर्थः । श्रीमूला.

नेति कौटल्यः । अग्निर्ग्राममर्धग्रामं वा दहति, उदकवेगस्तु ग्रामशतप्रवाहीति ॥

तन्मतं निषेधति— नेति कौटल्य इति । निषेधसूचिते उदकपीडनस्य गरीयस्त्वे स्वमते साधकमाह— अग्निर्ग्राममित्यादि । ग्रामशतप्रवाही ग्रामशतमाक्रम्यापहर्तुं शक्त इत्यर्थः । श्रीमूला.

व्याधिदुर्भिक्षयोर्व्याधिः प्रेतव्याधितोपसृष्टपरिचारकव्यायामोपरोधेन कर्माण्युपहन्ति, दुर्भिक्षं पुनरकर्मोपघाति हिरण्यपशुकरदायि चेत्याचार्याः ॥

व्याधिदुर्भिक्षयोर्व्याधिगरीयस्त्वमाचार्यमतेनाऽऽह — व्याधीत्यादि । प्रेतादिव्यायामोपरोधेन प्रेतानां व्याधितानां

(१) कौ. ८।४.

उपसृष्टपरिचारकाणां रोगिपरिचारकाणां च कृष्याद्यायासोपहननेन । अकर्मोपघाति कर्मानुपघातकम् । हिरण्यपशुकरदायि हिरण्यरूपं पशुरूपं च करं धान्यकराभावेऽपि दत्ते इत्यर्थः । श्रीमूला.

**नेति कौटल्यः । एकदेशपीडनो व्याधिः शक्यप्रतीकारश्च, सर्वदेशपीडनं दुर्भिक्षं प्राणिनामजीवनायेति ॥**

आचार्योक्तहेतुविघटनभङ्ग्या दुर्भिक्षगरीयस्तां स्वाभिमतां समर्थयति– नेति कौटल्य इत्यादि । एकदेशपीडनः, एकदेशमात्रवर्तित्वात् । सर्वदेशपीडनम्, कृत्स्नजनपदव्यापित्वात् । श्रीमूला.

**तेन मरको व्याख्यातः ॥**

प्राणिप्राणहरणलक्षणेन दुर्भिक्षोक्तन्यायेन मरकः मारिः व्याख्यातः । बहुतरप्राणिमरणहेतुतया दुर्भिक्षादपि स गरीयानित्यर्थः । श्रीमूला.

**क्षुद्रकमुख्यक्षययोः क्षुद्रकक्षयः कर्मणामयोगक्षेमं करोति, मुख्यक्षयः कर्मानुष्ठानोपरोधधर्मेत्याचार्याः ॥**

अथ पीडाया विषयभेदनिमित्ते गौरवचिन्तने आचार्यमतमाह– क्षुद्रकमुख्यक्षययोरिति । क्षुद्रकाः कर्मणां कर्तारः, मुख्याः प्रधानाः कर्मणां कारयितारः, तेषां क्षययोर्मध्ये क्षुद्रकक्षयः कर्मणां अयोगक्षेमं करोति अप्रवृत्तप्रवृत्तिं प्रवृत्तरक्षणं च न निष्पादयति । मुख्यक्षयः कर्मानुष्ठानोपरोधधर्मा कर्मानुष्ठानविघातमात्रहेतुः, न तु कर्मकराणां कारयितृनिरपेक्षां स्वतन्त्रप्रवृत्तिं विहन्तीत्यर्थः । तथा च कारयितृक्षयात् कर्तृक्षयो गरीयानित्यभिप्रायः । श्रीमूला.

**नेति कौटल्यः । शक्यः क्षुद्रकक्षयः प्रतिसंधातुम्, बाहुल्यात् क्षुद्रकाणाम्, न मुख्यक्षयः । सहस्रेषु हि मुख्यो भवत्येको न वा सत्त्वप्रज्ञाधिक्यादाश्रयत्वात् क्षुद्रकाणामिति ॥**

तन्निराकरोति– नेति कौटल्य इति । क्षुद्रकक्षयः प्रतिसंधातुं क्षुद्रकान्तरप्रतिनिधानेन समाधातुं शक्यः । कुतः ? क्षुद्रकाणां बाहुल्यात् बहुत्वेन सुलभत्वात् । न मुख्यक्षयः मुख्यक्षयस्तु न प्रतिसंधातुं शक्यः । तत्र हेतुमाह– सहस्रेषु हीति । बहुषु पुरुषाणां सहस्रेषु मध्ये मुख्यः एको भवति न वा, अतिदुर्लभ इत्यर्थः । स कथंभूतः ? सत्त्वप्रज्ञाधिक्यादाश्रयत्वात् क्षुद्रकाणां सत्त्वप्रज्ञातिशययोगनिमित्तां क्षुद्रकाश्रयत्वयोग्यतां प्राप्य स्थित इत्यर्थः । इतिशब्दो वाक्यार्थहेतुत्वे । श्रीमूला.

**स्वचक्रपरचक्रयोः स्वचक्रमतिमात्राभ्यां दण्डकराभ्यां पीडयत्यशक्यं च वारयितुम्, परचक्रं तु शक्यं प्रतियोद्धुमपसारेण संधिना वा मोक्षयितुमित्याचार्याः ॥**

इत्थं दैवपीडनं निरूप्य मानुषपीडनं निरूपयति– स्वचक्रपरचक्रयोरिति । तयोर्मध्ये स्वचक्रं स्वबलं अतिमात्राभ्यां सीमातिगाभ्यां दण्डकराभ्यां पीडयति । अशक्यं च वारयितुं स्वामिप्रकृत्युत्पादितां पीडां कः प्रतिसमादधीतेत्यर्थः । 'अशक्यं वारयितुम्' इत्यस्य स्थाने 'अशक्यप्रकृतिश्च' इति नयचन्द्रिकायाः पाठः । अप्रतिसमाधेयराजप्रकृतिरूपं च स्वचक्रं भवतीति तदर्थो बोद्धव्यः । परचक्रं तु शक्यं प्रतियोद्धुं प्रतियोधनेन वारयितुं शक्यम्, अपसारेण अन्यत्र गमनेन संधिना वा दानपणनेन वा मोक्षयितुं द्रोहारम्भान्निवर्तयितुं शक्यम् । एवं च परचक्रपीडनात् स्वचक्रपीडनं गरीय इति भावः । इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । स्वचक्रपीडनं प्रकृतिपुरुषमुख्योपग्रहविघाताभ्यां शक्यते वारयितुम्, एकदेशं वा पीडयति । सर्वदेशपीडनं तु परचक्रं विलोपघातदाहविध्वंसनापवाहनैः पीडयतीति ॥**

स्वचक्रपीडनं नाम प्रकृतिपुरुषमुख्यभूतानाममात्यादीनामानुकूल्यसंपादनेन विघातोत्पादनेन च वारयितुं शक्यम् । एकदेशमेव च तत् धनधान्याद्याढ्यवन्तं प्रदेशं पीडयति, न तु सर्वदेशम् । परचक्रं तु द्रव्यलुण्टनैर्मनुष्यवधैर्गृहादिदाहभञ्जनैः स्वदेशादुत्सारणैश्च सर्वं देशं पीडयतीत्यतः परचक्रपीडनमेव स्वचक्रपीडनाद्गरीय इत्यभिप्रायकमाचार्यमतनिषेधपूर्वकमाह– नेति कौटल्य इत्यादि । श्रीमूला.

**प्रकृतिराजविवादयोः प्रकृतिविवादः प्रकृतीनां भेदकः पराभियोगानावहति, राजविवादस्तु प्रकृतीनां द्विगुणभक्तवेतनपरिहारकरो भवतीत्याचार्याः ॥**

अथ प्रकृतिविवादराजविवादयोः तारतम्यपरीक्षायामाचार्यमतमाह— प्रकृतीत्यादि । प्रकृतिराजविवादयोः— प्रकृतिविवादः प्रकृतीनां परस्परविप्रतिपत्तिः, राजविवादः राज्ञोः परस्परविप्रतिपत्तिः, तयोर्मध्ये प्रकृतिविवादः प्रकृतीनां भेदकः परस्परभेदहेतुः । अत एव पराभियोगान् शत्रूद्योगान् आवहति । राजविवादस्तु प्रकृतीनां द्विगुणभक्तवेतनपरिहारकरः भक्तवेतनद्वैगुण्यं करमोक्षणं च करोति । ततश्च प्रकृत्यनुकूलात् राजविवादात् तत्प्रतिकूलः प्रकृतिविवादो गरीयानित्यर्थः । इत्याचार्यमतम् । श्रीमूला.

**नेति कौटल्यः । शक्यः प्रकृतिविवादः प्रकृतिमुख्योपग्रहेण कलहस्थानापनयनेन वा वारयितुम् । विवदमानास्तु प्रकृतयः परस्परसंघर्षेणोपकुर्वन्ति । राजविवादस्तु पीडनोच्छेदनाय प्रकृतीनां द्विगुणव्यायामसाध्य इति ॥**

तत्प्रतिषेधति— नेति कौटल्य इत्यादि । शक्य इत्यादेरयमर्थः— प्रकृतिविवादः प्रकृतिमुख्यानुकूलीकरणेन परस्परकलहकारणनिवारणेन वा वारयितुं शक्यः । किंच, विवदमानाः प्रकृतयः परस्परस्पर्धया सातिशयमुपकुर्वन्ति । राज्ञोर्विवादस्तु प्रकृतीनां शक्तिसिद्धिविघातलक्षणाय पीडनाय उच्छेदाय च कल्पते । प्रकृतिविवादप्रशमनापेक्षितप्रयत्नद्विगुणप्रयत्नप्रशमनीय इत्ययमेव गरीयानिति । श्रीमूला.

**देशराजविहारयोः देशविहारस्त्रैकाल्येन कर्मफलोपघातं करोति, राजविहारस्तु कारुशिल्पिकुशीलववाग्जीवनरूपाजीवावैदेहकोपकारं करोतीत्याचार्याः ॥**

देशविहारराजविहारयोः गुरुलघुभावं निरूपयन्नाचार्यमतमाह— देशराजविहारयोरिति । देशविहारः देशीयजनक्रीडा, राजविहारः राजक्रीडा, तयोर्मध्ये देशविहारः त्रैकाल्येन कर्मफलोपघातं करोति कृतवापसस्यानवेक्षणात् तत्कालकरणीयवापाकरणात् करिष्यमाणवापानुकूलक्षेत्रसंस्काराकरणाच्च कालत्रयेऽपि कृषिफलमुपहन्ति । राजविहारस्तु कारुशिल्पिकुशीलववाग्जीवनरूपाजीवावैदेहकोपकारं करोति । तत्र कारवः तक्षादयः, शिल्पिनः सूक्ष्मशिल्पकराः स्वर्णकारादयः, कुशीलवाः गायकाः, वाग्जीवनाः स्तुतिपाठकाः, रूपाजीवाः वेश्याः, वैदेहकाः गन्धमाल्यादिविक्रयजीविनः । अतश्च देशविहार एव गरीयानित्यभिप्रायः । इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । देशविहारः कर्मश्रमवधार्थमल्पं भक्षयति, भक्षयित्वा च भूयः कर्मसु योगं गच्छति । राजविहारस्तु स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयतीति ॥**

तत्प्रतिषेधति— नेति कौटल्य इत्यादि । देशविहारस्तावत् कृष्यादिव्यापारानुष्ठानोत्पन्नश्रमनिवारणापेक्षितमल्पं कालमपहरति अपहृत्य च भूयः कृष्यादिकर्मसु उद्योगं गमयति विहारवन्तं जनम् । राजविहारस्तु स्वयं राज्ञा राजवल्लभैश्च जानपदाननुज्ञातधनग्रहणलक्षणेन स्वयंग्राहेण आत्माभिरुचिकल्पितया पण्यशालया कार्यनिर्वर्तनार्थलञ्चग्रहणेन च पीडयतीति स एव पापीयानित्यर्थः । श्रीमूला.

**सुभगाकुमारयोः कुमारः स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयति, सुभगा विलासोपभोगेनेत्याचार्याः ॥**

सुभगाविहारकुमारविहारयोर्गुरुलघुभावे आचार्यमतमाह— सुभगाकुमारयोरिति । सुभगा देवी, कुमारः युवराजः, तयोर्मध्ये कुमारः स्वयं वल्लभैश्च स्वदयितजनैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयति, अर्थाज्जनान् । सुभगा विलासोपभोगेन क्रीडार्थेन भोगद्रव्येण गन्धमाल्यादिना पीडयति । ततश्च कुमारनिमित्तकं पीडनं गुर्वित्यर्थः । श्रीमूला.

**नेति कौटल्यः । शक्यः कुमारो मन्त्रिपुरोहिताभ्यां वारयितुम्, न सुभगा बालिश्यादनर्थ्यजनसंयोगाच्चेति ॥**

तन्निषिध्य स्वमतमाह– नेतीत्यादि । कुमारः मन्त्रिपुरोहिताभ्यां वारयितुं स्वयंग्राहादिभ्यो निवर्तयितुं शक्यः । सुभगा न वारयितुं शक्या स्त्रीत्वादेव । हेत्वन्तरमप्याह– बालिश्यादनर्थ्यजनसंयोगाच्चेति । मौर्ख्यात् गायनवाग्जीवनकुशीलवादिसहवासाच्च । श्रीमूला.

**श्रेणीमुख्ययोः श्रेणी बाहुल्यादनवग्रहा स्तेयसाहसाभ्यां पीडयति, मुख्यः कार्यानुग्रहविघाताभ्यामित्याचार्याः ॥**

श्रेणीनिमित्तपीडामुख्यनिमित्तपीडयोः गुरुलघुभावे आचार्यमतमाह– श्रेणीमुख्ययोरिति । तयोर्मध्ये श्रेणी आयुधीयकर्षकाणामन्योन्यसंगतानां संघः बाहुल्यात् अनवग्रहा वारयितुमशक्यतया निष्प्रतिबन्धा स्तेयसाहसाभ्यां परधनप्रच्छन्नहरणात् परधनप्रसभहरणाच्च पीडयति । मुख्यः कार्यानुग्रहविघाताभ्यां उत्कोचदाने कार्यसाधनेन तददाने कार्यविहननेन च पीडयतीति । श्रीमूला.

**नेति कौटल्यः । सुव्यावर्त्या श्रेणी समानशीलव्यसनत्वाच्छ्रेणीमुख्यैकदेशोपग्रहेण वा । स्तम्भयुक्तो मुख्यः परप्राणद्रव्योपघाताभ्यां पीडयतीति ॥**

तन्निषिध्य स्वमतमाह– नेतीत्यादि । श्रेणी सुव्यावर्त्या सुखेन स्तेयादितो निवर्तयितुं शक्या । कुतः ? समानशीलव्यसनत्वात् श्रेण्यवयवतुल्यकृष्यादिवृत्तिव्यसनत्वात्, अर्थात् समानशीलव्यसनैरेव । श्रेणीमुख्यैकदेशोपग्रहेण वा श्रेणीमुख्याङ्गभूतपुरुषानुकूलनेन वा । सुव्यावर्त्येति संबध्यते । स्तम्भयुक्तः गर्वयुक्तः मुख्यः परप्राणद्रव्योपघाताभ्यां अन्यजीवितहरणेनान्यद्रव्यहरणेन च पीडयति । इति अतश्च मुख्यपीडैव गरीयसीत्यर्थः । श्रीमूला.

**संनिधातृसमाहर्त्रोः संनिधाता कृतविदूषणात्ययाभ्यां पीडयति, समाहर्ता करणाधिष्ठितः प्रदिष्टफलोपभोगी भवतीत्याचार्याः ॥**

संनिधातृपीडासमाहर्तृपीडयोर्गुरुलघुभावं चिन्तयन् आचार्यमतमाह– संनिधातृसमाहर्त्रोरिति । तयोर्मध्ये संनिधाता कृतविदूषणात्ययाभ्यां कृतस्य भूषणादेर्दोषारोपेण कालातिक्रमकथनेन च पीडयति । समाहर्ता करणाधिष्ठितः संख्यायकाधिष्ठितः प्रदिष्टफलोपभोगी स्वक्लृप्तवेतनमात्रभोक्ता भवति । अत एष न पीडाकर इत्यभिप्रायः । इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । संनिधाता कृतावस्थमन्यैः कोशप्रवेश्यं प्रतिगृह्णाति । समाहर्ता तु पूर्वमर्थमात्मनः कृत्वा पश्चाद्राजार्थं करोति प्रणाशयति वा, परस्वादाने च स्वप्रत्ययश्चरतीति ॥**

आचार्यमतं निषिध्य स्वमतमाह– नेति कौटल्य इत्यादि । संनिधाता अन्यैः कृतावस्थं अन्यैः परीक्षकैः सुपरीक्ष्य ग्राह्यत्वेन निर्णीतं कोशप्रवेश्यं भाण्डागारस्थापनीयं वस्तु प्रतिगृह्णाति, न तु तस्य ग्राह्यत्वाग्राह्यत्वविषये स प्रमाणमित्यर्थः । एवं च स न पीडाकरः, किंतु समाहर्तैवेत्यभिप्रायेणाऽऽह– समाहर्ता त्विति । सः पूर्वं प्रथमं आत्मनः अर्थं कृत्वा अपीडनार्थमुत्कोचद्रव्यं गृहीत्वा पश्चाद्राजार्थं करोति उत्थापयति प्रणाशयति वा स्वयमपहरति वा । प्रणाशनसंभावनार्थमाह– परस्वादाने चेति । परस्वस्य करभूतस्य ग्रहणे च स्वप्रत्ययः आत्मप्रमाणकः चरति । इतिशब्दः हेत्वर्थः । एवं च समाहर्तैव पीडाकर इत्यभिप्रायः । श्रीमूला.

**अन्तपालवैदेहकयोरन्तपालश्चोरप्रसङ्गदेयात्यादानाभ्यां वणिक्पथं पीडयति, वैदेहकास्तु पण्यप्रतिपण्यानुग्रहैः प्रसाधयन्तीत्याचार्याः ॥**

अन्तपालवैदेहकपीडां प्रत्याह– अन्तपालवैदेहकयोरिति । तयोर्मध्ये अन्तपालः चोरप्रसङ्गदेयात्यादानाभ्यां चोरप्रसङ्गेन स्वप्रसञ्जितचोरद्वारार्थापहरणेन देयात्यादानेन देयस्य पथिकदेयस्य वर्तनीरूपस्यातिमात्रग्रहणेन च वणिक्पथं पीडयति । वैदेहकास्तु पण्यप्रतिपण्यानुग्रहैः पण्ये पणनीयपदार्थे प्रतिपण्ये पण्यमूल्यप्रतिनिधिभूते पदार्थे च अनुग्रहैः लाभकल्पनैः प्रसाधयन्ति वणिक्पथं वर्धयन्ति इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । अन्तपालः पण्यसंपातानुग्रहेण वर्तयति । वैदेहकास्तु संभूय पण्यानामुत्कर्षाप-**

कर्षं कुर्वाणाः पणे पणशतं कुम्भे कुम्भशतमित्याजीवन्ति ॥

तन्मतं निषिध्य स्वमतमाह– नेतीत्यादि । अन्तपालः पण्यसंपातानुग्रहेण पण्यानां संभूयागमनं पण्यसंपातः, तेन तन्निमित्ता वर्तनीह लक्ष्यते, तस्यामनुग्रहेण लाभकरणेन वर्तयति अर्थात् वणिक्पथम् । वैदेहकास्तु संभूय संहता भूत्वा पण्यानामुत्कर्षापकर्षं कुर्वाणाः स्वपण्यविक्रये मूल्योत्कर्षं परपण्यक्रयणे मूल्यापकर्षं च कल्पयन्तः पणे पणशतं एकस्मिन् पणे पणानां शतं कुम्भे कुम्भशतं एकस्मिंस्तैलादिकुम्भे तत्कुम्भशतं इति आजीवन्ति अनेन प्रकारेण बहुगुणं लाभं गृह्णन्ति । अतो वणिज एव पीडाकरा इत्यभिप्रायः । श्रीमूला.

**अभिजातोपरुद्धा भूमिः पशुव्रजोपरुद्धा वेति । अभिजातोपरुद्धा भूमिर्महाफलाऽप्यायुधीयोपकारिणी न क्षमा मोक्षयितुं व्यसनाबाधभयात्, पशुव्रजोपरुद्धा तु कृषियोग्या क्षमा मोक्षयितुं विवीतं हि क्षेत्रेण बाध्यत इत्याचार्याः ॥**

भूमेः पीडाहेतुभूताया मोक्षणीयत्वामोक्षणीयत्वे चिन्तयति– अभिजातोपरुद्धेति । विजिगीषुकुलीनाधिगता भूमिः, मोक्षयितव्येति शेषः, पशुव्रजोपरुद्धा वा मोक्षयितव्या इति, विचार्यते इति शेषः । तत्राऽऽचार्यमतमाह– अभिजातोपरुद्धा भूमिः महाफलाऽपि प्रभूतधान्यफलदायिकाऽपि आयुधीयोपकारिणी आयुधीयदानेनोपकर्त्री अत एव मोक्षयितुं न क्षमा । कुतः ? व्यसनाबाधभयात् व्यसने शत्र्वाक्रमणे यः आबाधः आयुधीयव्यपगमनिमित्ता पीडा तद्भयात् । पशुव्रजोपरुद्धा तु कृषियोग्या धान्यादिप्रसवार्हा अत एव मोक्षयितुं क्षमा । पशुभोग्यविवीतस्थानभूता भूमिः किमिति विवीतत्वबाधनेन धान्योत्पत्तिक्षेत्रतामापाद्यत इत्यत्राऽऽह– विवीतं हि क्षेत्रेण बाध्यत इति । विवीतं तृणाद्युत्पत्तिभूमिः क्षेत्रेण सस्यवापेन बाध्यते । प्रयोजनगौरवादित्यार्थम् । श्रीमूला.

**नेति कौटल्यः । अभिजातोपरुद्धा भूमिरत्यन्तमहोपकाराऽपि क्षमा मोक्षयितुं व्यसनाबाधभयात् । पशुव्रजोपरुद्धा तु कोशवाहनोपकारिणी न क्षमा मोक्षयितुमन्यत्र सस्यवापोपरोधादिति ॥**

आचार्यमतं निषेधति– नेति कौटल्य इति । अभिजातोपरुद्धा भूमिः अतिमहान्तं सस्योपकारमादधानाऽपि मोक्षणीयैव, अन्यथा व्यसने रन्ध्रान्वेषिणाऽभिजातेनैव आबाध उत्पाद्येतेति भयात् । पशुव्रजोपरुद्धा तु कोशसंग्राह्यघृतादिदानेन बलीवर्दादिवाहनदानेन चोपकारिणी अत एव मोक्षयितुं न क्षमा समीपावस्थितसस्यवापक्षेत्रोपघाताभावे इत्येवंरूपं स्वमतमाह– अभिजातोपरुद्धेत्यादि । श्रीमूला.

**प्रतिरोधकाटविकयोः प्रतिरोधका रात्रिसत्रचराः शरीराक्रमिणो नित्याः शतसहस्रापहारिणः प्रधानकोपकाश्च, व्यवहिताः प्रत्यन्तारण्यचराश्चाऽऽटविकाः प्रकाशा दृश्याश्चरन्त्येकदेशघातकाश्चेत्याचार्याः ॥**

प्रतिरोधकाटविकयोः पीडामधिकृत्याऽऽचार्यमतमाह– प्रतिरोधकाटविकयोरित्यादि । प्रतिरोधकाः रात्रिसत्रचराः रात्रिचारिणो वनगहनचारिणश्च शरीराक्रमिणः परशरीरहिंसिनः शरीरं शरीरमात्रं अर्थादसहायं जनं यं यं पश्यन्ति तं तमाक्रमितुं शीलमेषामिति तथाभूता इत्यर्थः, नित्याः सर्वदा संनिहिताः शतसहस्रापहारिणः हिरण्यादिलक्षापहारिणः प्रधानकोपकाश्च प्रधानान् राष्ट्रमुख्यान् महाधनिकान् कोपयन्ति उपघ्नन्तीति तथाभूताश्च । व्यवहिताः दूरस्थाः । दूरस्थत्वमेव विवृणोति– प्रत्यन्तारण्यचराश्च विषयान्तवनचारिणश्च आटविकाः प्रकाशाः सर्वजनविदिताः दृश्याः दृष्टिविषयाः चरन्ति । एतेन तत्पीडनीयानामपसरणसौकर्यमुक्तम् । एकदेशघातकाश्च कतिपयघातिनः, न सर्वघातिनः । एवं च प्रतिरोधकाः गुरुपीडाकराः, आटविकाः लघुपीडाकरा इत्यभिप्रायः इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । प्रतिरोधकाः प्रमत्तस्यापहरन्ति, अल्पाः कुण्ठाः सुखा ज्ञातुं ग्रहीतुं च । स्वदेशस्थाः प्रभूता विक्रान्ताश्चाऽऽटविकाः प्रकाशयोधिनोऽपहर्तारो हन्तारश्च देशानां राजसधर्माण इति ॥**

तन्मतं निराकरोति— नेति कौटल्य इति। प्रतिरोधकाः प्रमत्तस्य धनरक्षणानवहितस्य अपहरन्ति अर्थात् धनम्, अल्पाः असहायचराः अत एव कुण्ठाः कुण्ठितप्रसराः ज्ञातुं ग्रहीतुं च बन्धुं च सुलाः अनायासशक्याः। सुखमिति पाठे सामान्ये नपुंसकम्। आटविकेषु विशेषमाह— आटविकाः स्वदेशस्थाः, न तु प्रतिरोधका इव देशान्तरगमनसापेक्षाः, प्रभूताः अनल्पाः विक्रान्ताश्च विक्रमवत्तया दुर्ग्रहाश्च। किंच, राजान इव ते निरङ्कुशाः प्रकाशमेव युद्धं कृत्वा देशीयजनानां द्रव्यं प्राणांश्च हरन्तीत्याह— प्रकाशयोधिन इत्यादि। ततश्चाऽऽटविकपीडैव गरीयसीत्यभिप्रायः। श्रीमूला.

**मृगहस्तिवनयोर्मृगाः प्रभूताः प्रभूतमांसचर्मोपकारिणो मन्दग्रासावक्लेशिनः सुनियम्याश्च। विपरीता हस्तिनो गृह्यमाणा दुष्टाश्च देशविनाशायेति॥**

मृगवनाद्धस्तिवनं पीडने गरीय इत्यभिप्रायकमाह— मृगहस्तिवनयोरित्यादि। प्रभूताः प्रचुराः हस्त्यपेक्षया, मन्दग्रासावक्लेशिनः अल्पाहाराः, अत एव धावने सुलभक्लेशाः, अत एवानुधावितृसुग्रहा इत्यर्थः, सुनियम्याः गृहीताश्च सुखेन वशयितुं शक्याः। विपरीताः मृगोक्तगुणविपरीतगुणाः अल्पसंख्याः अल्पमांसचर्मोपकारिणः अमिताहारतयाऽनवक्लेशिनो दुर्दमाश्चेत्यर्थः, गृह्यमाणा दुष्टाश्च देशविनाशायेति। गृह्यमाणा हस्तिनो दुष्टाश्चेत् लोकं विनाशयन्ति। श्रीमूला.

**स्वपरस्थानीयोपकारयोः स्वस्थानीयोपकारो धान्यपशुहिरण्यकुप्योपकारो जानपदानामापद्यात्मधारणः। विपरीतः परस्थानीयोपकारः। इति पीडनानि॥**

स्वनगरोपकारपरनगरोपकारयोराद्य उपकर्तुर्गुणावहः, द्वितीयः पीडावह इत्याह— स्वपरस्थानीयोपकारयोरिति। तयोः स्वस्थानीयोपकारः जानपदानां धान्यपशुहिरण्यकुप्योपकारः धान्यपश्वादिक्रयविक्रयव्यवहाररूपः आपदि दुर्भिक्षादिविपत्समये आत्मधारणः स्वप्राणधारणहेतुः। परस्थानीयोपकारः परस्थानीये स्वेन प्रयुक्तो धान्यादिक्रयविक्रयव्यवहारः विपरीतः परवृद्धिहेतुत्वादात्मपीडावह इत्यर्थः। इति पीडनानीति। एवं देशपीडनवर्गो व्याख्यात इत्यर्थः। श्रीमूला.

**आभ्यन्तरो मुख्यस्तम्भो बाह्यो मित्राटवीस्तम्भः। इति स्तम्भवर्गः॥**

अथ 'स्तम्भनवर्गः' इति सूत्रम्। राष्ट्रमुख्याद्यैः प्रत्यूहोक्त्या राजार्थोपरोधः स्तम्भनम्, तत्संबद्धो वर्ग उच्यत इति सूत्रार्थः। जनपददुर्गव्यसनकथनानन्तरं क्रमप्राप्तं कोशव्यसनं अनेन सूत्रेणोत्तरेण चाभिधीयते।

राष्ट्रमुख्यकृतः स्तम्भ आभ्यन्तर इति मित्राटविककृतः स्तम्भो बाह्य इति च स्तम्भो द्विप्रकार इत्याह— आभ्यन्तर इत्यादि। इति स्तम्भवर्ग इति। व्याख्यात इति शेषः। श्रीमूला.

**ताभ्यां पीडनैर्यथोक्तैश्च पीडितः सक्तो मुख्येषु परिहारोपहतः प्रकीर्णो मिथ्यासंहृतः सामन्ताटवीहृत इति कोशसङ्गः॥**

'कोशसङ्गवर्गः' इति सूत्रम्। कोशस्य राजार्थस्य करादेः सङ्गः अप्रदानं भाण्डागारे प्रवेशाकरणं कोशसङ्गः, तस्य वर्ग उच्यत इति सूत्रार्थः।

ताभ्यामिति। आभ्यन्तरबाह्यस्तम्भाभ्यां यथोक्तैः पीडनैश्च दैवमानुषरूपैः पीडितः अल्पितः, मुख्येषु सक्तः करदेभ्यो गृहीत एव मुख्यैर्भक्षितत्वात् तेषु स्थितः, परिहारोपहतः परिहारेण राजशासननिमित्तकेन कराग्रहणेन उपहृतः विहतोत्थापनः, प्रकीर्णः कणशस्तत इतो विक्षिप्तावस्थितः, मिथ्यासंहृतः न्याय्यपरिमाणात् न्यूनतयाऽधिकतया वा संहृतः, सामन्ताटवीहृतः सामन्तैराटविकैश्चापहृतः। हृतस्थाने 'भृत' इत्यादर्शेषु पठ्यते। इति एवंप्रकाराः कोशसङ्गाः। श्रीमूला.

**पीडनानामनुत्पत्तौ उत्पन्नानां च वारणे।**
**यतेत देशवृद्ध्यर्थं नाशे च स्तम्भसङ्गयोः॥**

प्रान्ते श्लोकमाह— पीडनानामिति। तेषां अनुत्पत्तौ उत्पत्तिप्रतिबन्धे उत्पन्नानां पीडनानां वारणे च यतेत राजा। किमर्थम्? देशवृद्ध्यर्थम्। स्तम्भसङ्गयोः नाशे च यतेत, अर्थात् कोशवृद्ध्यर्थम्। श्रीमूला.

सैन्यस्य मित्रस्य च व्यसनानि तेषां गुरुलघुभावाः तत्परिहारोपायाश्च

**'बलव्यसनानि— अमानितं विमानितमभृतं व्याधितं नवागतं दूरायातं परिश्रान्तं परिक्षीणं प्रतिहतं हताग्रवेगमनृतुप्राप्तमभूमिप्राप्तमाशानिर्वेदि परिसृप्तं कलत्रगर्ह्यन्तःशल्यं कुपितमूलं भिन्नगर्भमपसृतमतिक्षिप्तमुपनिविष्टं समाप्तमुपरुद्धं परिक्षिप्तं छिन्नधान्यपुरुषवीवधं स्वविक्षिप्तं मित्रविक्षिप्तं दूष्ययुक्तं दुष्टपार्ष्णिग्राहं शून्यमूलमस्वामिसंहतं भिन्नकूटमन्धमिति ॥**

'बलव्यसनवर्गः' इति सूत्रम् । बलस्य दण्डस्य यानि व्यसनानि तेषां वर्गः अभिधीयते इति सूत्रार्थः । कोशव्यसनानन्तरं क्रमप्राप्तं दण्डव्यसनमिहोच्यते ।

बलव्यसनानीति । बलस्य व्यसनरूपा धर्मा उच्यन्त इति शेषः । तानुद्दिशति— अमानितमित्यादि । श्रीमूला.

**तेषाममानितविमानितयोरमानितं कृतार्थमानं युध्येत, न विमानितमन्तःकोपम् ॥**

तेषां क्रमेण द्वयोर्द्वयोर्गुरुलघुभावं चिन्तयिष्यन् प्रथमस्य द्विकस्य तमादौ निरूपयति— तेषामिति । अमानितादिचतुस्त्रिंशद्विशेषयुक्तानां बलानां मध्ये अमानितविमानितयोः अकृतार्थसत्कारस्यावहेलितस्येत्यनयोर्द्वयोः अमानितं कृतार्थमानं तत्कालकृतार्थदानसत्कारं सत् युध्येत । न विमानितमन्तःकोपमिति । विमानितं तु हृदयनिहितस्वावज्ञामर्षं न युध्येत । श्रीमूला.

**अभृतव्याधितयोरभृतं तदात्वकृतवेतनं युध्येत, न व्याधितमकर्मण्यम् ॥**

अदत्तवेतनरोगिणोर्मध्ये । तदात्वकृतवेतनं तत्कालदत्तवेतनं सत् । अकर्मण्यं कर्माक्षमम् । श्रीमूला.

**नवागतदूरायातयोर्नवागतमन्यत उपलब्धदेशमनवमिश्रं युध्येत, न दूरायातमायतगतपरिक्लेशम् ॥**

नवागतं अचिरायातम्, दूरायातं दूरादागतम्, तयोर्मध्ये नवागतं अन्यत उपलब्धदेशं स्वतो देशानभिज्ञमपि नवेतरेभ्यो विज्ञातदेशं अनवमिश्रं नवेतरसहितं युध्येत । न दूरायातमायतगतपरिक्लेशमिति । दूरायातं दीर्घाध्वगमनपरिखिन्नत्वान्न युध्येत । श्रीमूला.

**परिश्रान्तपरिक्षीणयोः परिश्रान्तं स्नानभोजनस्वप्नलब्धविश्रमं युध्येत, न परिक्षीणमन्यत्राऽऽहवे क्षीणयुग्यपुरुषम् ॥**

असुखाहारदूरगतागतादिपरिखिन्नं परिश्रान्तम्, युद्धान्तरक्षीणयुग्यपुरुषं परिक्षीणम्, तयोर्मध्ये । अन्यत्राऽऽहवे अन्यस्मिन् युद्धे । श्रीमूला.

**प्रतिहतहताग्रवेगयोः प्रतिहतमग्रपातभग्नं प्रवीरपुरुषसंहतं युध्येत, न हताग्रवेगमग्रपातहतप्रवीरम् ॥**

प्रतिहतं युद्धारम्भ एव प्राप्तभङ्गम्, हताग्रवेगं हतः प्रवीरपुरुषवधकुण्ठितः अग्रवेगः प्राथमिको युद्धसंपातोत्साहो यस्य तत्तथाभूतम्, तयोर्मध्ये प्रतिहतम्, अग्रपातभग्नमिति तद्विवरणम्, प्रवीरपुरुषसंहतं प्रवीरपुरुषमिलितं युध्येत । हताग्रवेगम्, अग्रपातहतप्रवीरमिति तद्विवरणम्, न युध्येत । श्रीमूला.

**अनृत्वभूमिप्राप्तयोरनृतुप्राप्तं यथर्तुयोग्ययुग्यशस्त्रावरणं युध्येत, नाभूमिप्राप्तमवरुद्धप्रसारव्यायामम् ॥**

अनृतुप्राप्तं अलब्धयुद्धयोग्यर्तुकम्, अभूमिप्राप्तं सैन्यव्यायामानर्हभूमिप्राप्तम्, तयोर्मध्ये अनृतुप्राप्तं यथर्तुयोग्ययुग्यशस्त्रावरणं यथोपस्थितर्त्वर्हवाहनायुधकवचादियुक्तं सत् युध्येत । अभूमिप्राप्तं तु अवरुद्धप्रसारव्यायामं न युध्येत उपरुद्धसर्वतोगतिकत्वादुपरुद्धयुद्धकर्मत्वाच्च न योद्धुमर्हेत् । श्रीमूला.

**आशानिर्वेदिपरिसृप्तयोराशानिर्वेदि लब्धाभिप्रायं युध्येत, न परिसृप्तमपसृतमुख्यम् ॥**

कामनाविषयवस्त्वलाभप्राप्तनैराश्यं आशानिर्वेदि, मुख्यवर्जितं परिसृप्तम्, तयोर्मध्ये आशानिर्वेदि बलं आसादितपुनराशास्थानं भूत्वा युध्येत, न तु परिसृप्तं

(१) कौ. ८।५.

प्रधानापेतत्वादित्याह– आशानिर्वेदीत्यादि । अपसृतमुख्यमिति परिसृतपदार्थव्याख्यानम् । एवमुत्तरेष्वपि बोध्यम् । अपसृतमित्यपपाठः । श्रीमूला.

**कलत्रगर्ह्यन्तःशल्ययोः कलत्रगर्ह्युन्मुच्य कलत्रं युध्येत, नान्तःशल्यमन्तरमित्रम् ॥**

कलत्रं लक्षणया पोष्यवर्गं गर्हति 'एष मे युद्धकर्मपरिपन्थी रक्ष्यभारः' इति निन्दतीति कलत्रगर्ही, अन्तरमित्रं अन्तःशल्यम्, तयोर्मध्ये कलत्रगर्ही कलत्रमुन्मुच्य समुचिते रक्षास्थानेऽवस्थाप्य युध्येत । अन्तःशल्यं अन्तरमित्रं अन्तर्गतशत्रुकं न युध्येत । श्रीमूला.

**कुपितमूलभिन्नगर्भयोः कुपितमूलं प्रशमितकोपं सामादिभिर्युध्येत, न भिन्नगर्भमन्योन्यस्माद्भिन्नम् ॥**

कुपितमूलं क्रुद्धप्रधानकम्, भिन्नगर्भं परस्परभिन्नगर्भितम्, तयोर्मध्ये कुपितमूलं सामादिभिः प्रशमितकोपं सत् युध्येत, न तु भिन्नगर्भमित्याह– कुपितमूलभिन्नगर्भयोरित्यादि । श्रीमूला.

**अपसृतातिक्षिप्तयोरपसृतमेकराज्यातिक्रान्तं मन्त्रव्यायामाभ्यां सत्रमित्रापाश्रयं युध्येत, नातिक्षिप्तमनेकराज्यातिक्रान्तं बह्वाबाधत्वात् ॥**

एकस्मिन् राज्ये अतिक्रान्तं बलैर्विप्रकृतं यत् तदपसृतमुच्यते । अनेकेषु राज्येषु अतिक्रान्तं बलैः कृतभङ्गं यत् तदतिक्षिप्तमुच्यते । तयोर्मध्ये अपसृतं शास्त्रदृष्टोपायचिन्तालक्षणेन मन्त्रेण शिक्षाविशेषलक्षणेन व्यायामेन च अरण्यं मित्रं चापाश्रित्य युध्येत, न तु अतिक्षिप्तं अनेकराज्यानुभूतबहुपीडत्वादित्याह– अपसृतातिक्षिप्तयोरित्यादि । सत्रं अरण्यम् । श्रीमूला.

**उपनिविष्टसमाप्तयोरुपनिविष्टं पृथग्यानस्थानमतिसंधातारं युध्येत, न समाप्तमरिणैकस्थानयानम् ॥**

शत्रोः समीपे यन्निविष्टं न शत्रुणा सह निविष्टं अर्थात् शत्रुसंबद्धस्वीययानस्थानं तत् उपनिविष्टम्, यच्छत्रुणा सह तुल्यस्थानयानं तत् समाप्तम्, तयोर्मध्ये उपनिविष्टं बलं स्वातिसंधातारं शत्रुं प्रति युध्येत पृथग्यानस्थानस्याऽऽत्मनो रन्ध्रं स न जानातीति कृत्वा, न तु समाप्तं स्वातिसंधातारं शत्रुं प्रति युध्येत स्वस्यारिणा सहैकस्थानयानस्य रन्ध्रं स जानातीति कृत्वेत्याह– उपनिविष्टसमाप्तयोरित्यादि । श्रीमूला.

**उपरुद्धपरिक्षिप्तयोरुपरुद्धमन्यतो निष्क्रम्योपरोद्धारं प्रति युध्येत, न परिक्षिप्तं सर्वतः प्रतिरुद्धम् ॥**

एकतः प्रतिरुद्धं उपरुद्धम्, सर्वतः प्रतिरुद्धं परिक्षिप्तम्, तयोर्मध्ये उपरुद्धं उपरोधदेशेतरदेशतो निर्गत्योपरोद्धारं प्रति युध्येत, न पुनः परिक्षिप्तमित्याह– उपरुद्धपरिक्षिप्तयोरित्यादि । श्रीमूला.

**छिन्नधान्यपुरुषवीवधयोश्छिन्नधान्यमन्यतो धान्यमानीय जङ्गमस्थावराहारं वा युध्येत, न छिन्नपुरुषवीवधमनभिसारम् ॥**

विच्छिन्नस्वदेशधान्यागमं छिन्नधान्यमुच्यते, विच्छिन्नस्वदेशयौधपुरुषशिक्यादिभारागमं छिन्नपुरुषवीवधम्, तयोर्मध्ये छिन्नधान्यं अन्यदेशात् व्रीह्यादिधान्यमानीय वा युध्येत, मृगादिजङ्गममांसाहारं वृक्षादिस्थावरफलाद्याहारं च भूत्वा वा युध्येत, न तु छिन्नपुरुषवीवधमसहायमित्याह– छिन्नधान्यपुरुषवीवधयोरित्यादि । श्रीमूला.

**स्वविक्षिप्तमित्रविक्षिप्तयोः स्वविक्षिप्तं स्वभूमौ विक्षिप्तं सैन्यमापदि शक्यमवस्रावयितुम्, न मित्रविक्षिप्तं विप्रकृष्टदेशकालत्वात् ॥**

स्वभूमौ कार्यार्थे तत इतः प्रेषितं स्वविक्षिप्तमुच्यते, मित्रभूमौ तत्कार्यार्थं प्रेषितं मित्रविक्षिप्तम्, तयोर्मध्ये स्वविक्षिप्तं सैन्यं पराभियोगविपदि प्रत्यायामावाहयितुं शक्यम्, न तु मित्रविक्षिप्तं विप्रकृष्टदेशस्थत्वेन संनिधानविलम्बित्वादित्याह– स्वविक्षिप्तमित्रविक्षिप्तयोरित्यादि । श्रीमूला.

**दूष्ययुक्तदुष्टपार्ष्णिग्राहयोर्दूष्ययुक्तमाप्तपुरुषाधिष्ठितमसंहतं युध्येत, न दुष्टपार्ष्णिग्राहं पृष्ठाभिघातत्रस्तम् ॥**

राज्योपघातिनो मुख्या हि दूष्याः, तैर्युक्तं दूष्ययुक्तमुच्यते । पृष्ठाभिघातरन्ध्रान्वेषिपार्ष्णिग्राहं दुष्टपार्ष्णिग्राहम्। तयोर्मध्ये दूष्ययुक्तं दूष्योपजीव्यस्वविश्वस्तपुरुषाधिष्ठितं दूष्यान्तरासंहतं सत् युध्येत, न तु दुष्टपार्ष्णिग्राहं पृष्ठाभिघातभयग्रस्तत्वादित्याह— दूष्ययुक्तदुष्टपार्ष्णिग्राहयोरित्यादि । श्रीमूला.

**शून्यमूलास्वामिसंहतयोः शून्यमूलं कृतपौरजानपदारक्षं सर्वसंदोहेन युध्येत, नास्वामिसंहतं राजसेनापतिहीनम् ॥**

निरवशेषसैन्यसंदोहेन प्रस्थितं शून्यमूलमुच्यते, राज्ञा सेनापतिना वाऽनधिष्ठितं अस्वामिसंहतम्, तयोर्मध्ये शून्यमूलं पौरजानपदकृतपरिरक्षं भूत्वा सर्वसंदोहेन युध्येत, न पुनः अस्वामिसंहतं अनायकत्वादित्याह— शून्यमूलास्वामिसंहतयोरित्यादि । श्रीमूला.

**भिन्नकूटान्धयोर्भिन्नकूटमन्याधिष्ठितं युध्येत, नान्धमदेशिकमिति ॥**

कूटं शृङ्गं तत्स्थानीयः सर्वसेनाध्यक्षः, तद्रहितं भिन्नकूटम्, अन्धं शत्रुवृत्तिज्ञानशून्यम्, तयोर्मध्ये भिन्नकूटं अन्याधिष्ठितं अन्येन प्रधानेनाध्यक्षितं भूत्वा युध्येत । अदेशिकं उपदेष्टृरहितं अन्धं न युध्येत । इतिशब्दो बलव्यसनस्वरूपादिनिरूपणसमाप्त्यर्थः । श्रीमूला.

**दोषशुद्धिर्बलावापः सत्रस्थानातिसंहितम् ।**
**संधिश्चोत्तरपक्षस्य बलव्यसनसाधनम् ॥**

उक्तानां बलव्यसनानां परिहारोपायानाह—दोषशुद्धिरिति । अमाननविमाननादीनां दोषाणां प्रायश्चित्तविधानं दोषशुद्धिः । बलावापः निर्दोषस्य बलस्य बलान्तरेण सहावस्थानम् । सत्रस्थानातिसंहितं सत्रस्थानं अरण्यस्थितिः अतिसंहितं कपटोपायैः शत्रुबलातिसंधानं च । अतिसंधानमित्यपि पाठः । उत्तरपक्षस्य संधिश्च बलाधिकप्रतिपक्षेण संधिकरणं च । बलव्यसनसाधनं बलव्यसनानां परिहारोपायः । श्रीमूला.

**रक्षेत्स्वदण्डं व्यसने शत्रुभ्यो नित्यमुत्थितः ।**
**प्रहरेद्दण्डरन्ध्रेषु शत्रूणां नित्यमुत्थितः ॥**

उपदेष्टव्यशेषमाह— रक्षेदिति । नित्यमुत्थितः नित्योद्योगी सन् व्यसने स्वदण्डं स्वबलं शत्रुभ्यो रक्षेत् । तथाभूत एव सन् शत्रूणां दण्डरन्ध्रेषु सैन्यच्छिद्रेषु प्रहरेत् । श्रीमूला.

**अभियातं स्वयं मित्रं संभूयान्यवशेन वा ।**
**परित्यक्तमशक्त्या वा लोभेन प्रणयेन वा ॥**

इत्थं बलव्यसनं निरूपितम् । अथ मित्रव्यसने निरूपणीये सूत्रम्— 'मित्रव्यसनवर्गः' इति । मित्रसंबन्धिनां व्यसनानां वर्ग उच्यत इति सूत्रार्थः ।

तमेवाऽऽह— अभियातमिति । स्वयं स्वकार्यार्थे वा संभूय समुदायेन सह तदर्थे समवेत्य वा अन्यवशेन वा स्वबन्ध्वादिकार्यवशेन वा अभियातं शत्रौ कृताभियोगं मित्रम्, अशक्त्या वा शक्तिविरहेण वा लोभेन वा शत्रुसकाशात् धनग्रहणेन वा प्रणयेन वा शत्रौ स्नेहेन वा परित्यक्तं अकृतसाहाय्यं अर्थात् विजिगीषुणा, यत् यथोक्तास्ववस्थासु यथाशक्ति साह्ये कर्तव्ये विजिगीषुणाऽऽत्मदोषादुपेक्षितं तत् तथाविधं मित्रमिति श्लोकार्थः । तस्य च 'कृच्छ्रेण साध्यते' इति वक्ष्यमाणेन संबन्धः । एवमुत्तरत्रापि बोद्धव्यम् । अयमेको मित्रव्यसनस्य प्रयोजकः प्रकारः । श्रीमूला.

**विक्रीतमभियुञ्जाने सङ्ग्रामे वाऽपवर्तिना ।**
**द्वैधीभावेन वा मित्रं यास्यता वाऽन्यमन्यतः ॥**

प्रकारान्तरमाह— विक्रीतमित्यादि । सङ्ग्रामे युद्धे अभियुञ्जाने अनुष्ठीयमानाभियोगे, न तु निस्तीर्णाभियोगे, सति अर्थान्मित्रे अपवर्तिना स्वारब्धमेव साहाय्यमपरिसमाप्य परस्माद्धनं गृहीत्वा मध्ये निवर्तमानेन विजिगीषुणा विक्रीतं वा स्वीयत्वात् प्रच्यावितं वा मित्रम् । प्रकारमन्यमाह— द्वैधीभावेन वेति । स्वमित्रशत्रुणा सह संधिं कृत्वा स्वयातव्यं प्रति यानं द्वैधीभावः, तेन निमित्तेन वा विक्रीतं मित्रम् । प्रकारान्तरमाह— यास्यता वाऽन्यमन्यत इति । 'त्वमितो याहि अहमितो यास्यामि' इत्येवं अन्यतः अन्येन स्वमित्रशत्रुणा सह संधिं कृत्वा अन्यं स्वशत्रुं यास्यता वा विजिगीषुणा विक्रीतं मित्रम् । श्रीमूला.

**पृथग्वा सह याने वा विश्वासेनातिसंहितम् ।**
**भयावमानालस्यैर्वा व्यसनान्न प्रमोक्षितम् ॥**

प्रकारान्तरमाह— पृथग्वेत्यादि । पृथक् याने विश्वासेन वा 'त्वमितो याहि त्वच्छत्रुं प्रति अहमितो यास्यामि' इति भिन्नदिक्यानविषयसंधिविश्वासेन वा सह याने विश्वासेन वा सहयानसंधिविश्वासेन वा अतिसंहितं मित्रशत्रोः प्रच्छन्नसाहाय्यकरणेन वञ्चितं मित्रम्। प्रकारान्तरमाह— भयावमानालस्यैर्वेति । मित्रशत्रोः सकाशात् भयेन वा मित्रविषयानादरेण वा अलसतया वा व्यसनात् शत्र्वभियोगात् न प्रमोक्षितं अनिस्तारितं मित्रम् । श्रीमूला.

**अवरुद्धं स्वभूमिभ्यः समीपाद्वा भयाद्गतम् ।**
**आच्छेदनाददानाद्वा दत्त्वा वाऽप्यवमानितम् ॥**

प्रकारान्तराण्याह— अवरुद्धमिति । स्वभूमिभ्यः अवरुद्धं स्वभूमिमुद्दिश्य प्रतिरुद्धागमनं मित्रम्। समीपाद्भयाद्गतं वा वधबन्धनादिशङ्कया स्वसमीपात्स्वयमेव गतं वा मित्रम् । आच्छेदनात् बलेन द्रव्यापहरणात् अवमानितं मित्रम् । अदानाद्वा दातव्याप्रदानाद्वा अवमानितं मित्रम् । दत्त्वाऽपि वा दातव्यं प्रदायापि वा अवमानितं मित्रम् । श्रीमूला.

**अत्याहारितमर्थं वा स्वयं परमुखेन वा ।**
**अतिभारे नियुक्तं वा भङ्क्त्वा परमवस्थितम् ॥**

प्रकारान्तरमाह— अत्याहारितमिति । स्वयं परमुखेन वा अन्यद्वारेण वा अर्थं अत्याहारितं वा धनमतिमात्रहारितं वा मित्रम् । प्रकारान्तरमाह— अतिभार इत्यादि । विजिगीषुशत्रुं निर्जित्य प्राप्तमात्रमेव पुनरपि दुःसाधे कार्ये नियुक्तं वा मित्रम् । श्रीमूला.

**उपेक्षितमशक्त्या वा प्रार्थयित्वा विरोधितम् ।**
**कृच्छ्रेण साध्यते मित्रं सिद्धं चाऽऽशु विरज्यति ॥**

प्रकारान्तरमाह— उपेक्षितमशक्त्या वेति । सामर्थ्यविरहेणानपेक्षितम् , प्रार्थयित्वा विरोधितं पुनर्मित्रभावप्रार्थनयोपगतमुत्पादितविरोधं वा मित्रम् । इत्थं व्युत्पादितनानाप्रकारविकारप्राप्तस्य पुनःसाध्यतापेक्षायामाह— कृच्छ्रेणेति । मित्रं यथोक्तविकारभेदभिन्नं कृच्छ्रेण साध्यते क्लेशेन स्वानुकूलीक्रियते विजिगीषुणा । सिद्धं वा कथंचित् प्राप्तानुकूल्यमपि वा आशु क्षिप्रं विरज्यति निःस्नेहं भवति । श्रीमूला.

**कृतप्रयासं मान्यं वा मोहान्मित्रममानितम् ।**
**मानितं वा न सदृशं भक्तितो वा निवारितम् ॥**
**मित्रोपघातत्रस्तं वा शङ्कितं वाऽरिसंहितात् ।**
**दूष्यैर्वा भेदितं मित्रं साध्यं सिद्धं च तिष्ठति ॥**

इत्थं विकृतचित्तेषु मित्रेषु दुःसाधानां वर्गमुक्त्वा सुसाधानां वर्गमाह— कृतप्रयासमिति । विजिगीष्वर्थं कृतसंग्रामादिपरिश्रमं अत एव मान्यं पूजार्हं मोहादमानितं प्रमादादपूजितं वेति प्रथमम् । मानितं वा न सदृशमिति द्वितीयम् । अकृतस्वप्रयासानुरूपसत्कारं वेत्यर्थः । भक्तितो वा निवारितमिति तृतीयम् । शत्रुभिः विजिगीषुविषयादनुरागात् प्रतिषिद्धमित्यर्थः । मित्रोपघातत्रस्तं वेति चतुर्थम् । मित्रस्यान्यस्योपघातं विजिगीषुणा कृतं दृष्ट्वा स आत्मनोऽपि क्रियेतेति भीतमित्यर्थः । शङ्कितं वाऽरिसंहितादिति पञ्चमम् । स्वशत्रुणा कृतसंधानाद्विजिगीषोरुपजातशङ्कमित्यर्थः । दूष्यैर्वा भेदितमिति षष्ठम् । राज्योपघातकरैः प्रधानैः प्रयुक्तभेदमित्यर्थः । मित्रं यथोक्तषट्प्रकारं साध्यं विकारापनयनेन प्रकृतिं नेतुं शक्यम् , सिद्धं च तिष्ठति प्रकृतिप्राप्तं च पुनर्न विक्रियते । श्रीमूला.

**तस्मान्नोत्पादयेदेनान् दोषान् मित्रोपघातकान् ।**
**उत्पन्नान् वा प्रशमयेद्गुणैर्दोषोपघातिभिः ॥**

तस्मादिति सर्वथाऽपि परिहर्तव्यत्वाद्धेतोः एनान् दोषान् मित्रोपघातकान् मैत्रीभङ्गहेतून् यथोक्तान् परित्यक्तत्वविक्रीतत्वादिरूपान् दोषान् नोत्पादयेत् अर्थान्मित्रेषु । उत्पन्नान् वा यदृच्छासंभूतांश्च तान् दोषान् दोषोपघातिभिः गुणैः सान्त्वादिरूपैः प्रशमयेत् । श्रीमूला.

**यतो निमित्तं व्यसनं प्रकृतीनामवाप्नुयात् ।**
**प्रागेव प्रतिकुर्वीत तन्निमित्तमतन्द्रितः ॥**

पूर्वोक्तसर्वविधस्वाम्यादिप्रकृतिव्यसनसाधारणं विधिं वदन्नधिकरणमुपसंहरति— यत इत्यादि । इह यत इति

द्वितीयार्थे तसिः । अतन्द्रितः अनलसः अर्थात् विजिगीषुः प्रकृतीनां स्वाम्यादीनां मित्रान्तानां संबन्धि व्यसनं कर्तृ यत् निमित्तं स्वोत्पादकं अवाप्नुयात् तत् निमित्तं तदवाप्तेः प्रागेव प्रतिकुर्वीत परिहरेत् तदुत्पत्तिप्रागभावं परिरक्षेदित्यर्थः । अस्य श्लोकस्य मित्रव्यसनवर्गनिरूपणारम्भात् प्राक् पाठो मातृकासु दृश्यते । श्रीमूला.

## चाणक्यसूत्राणि

व्यसनदोषाः

[1]न व्यसनपरस्य कार्यावाप्तिः ॥
इन्द्रियवशवर्ती चतुरङ्गवानपि विनश्यति ॥
नास्ति कार्यं द्यूतप्रवृत्तस्य ॥
मृगयापरस्य धर्मार्थौ विनश्यतः ॥
अर्थैषणा न व्यसनेषु गण्यते ॥
न कामासक्तस्य कार्यानुष्ठानम् ॥
अग्निदाहादपि विशिष्टं वाक्पारुष्यम् ॥
दण्डपारुष्यात्सर्वजनद्वेष्यो भवति ॥

## चाणक्यराजनीतिशास्त्रम्

व्यसनैः राजनाशः

[2]अक्षेषु मृगयायां च स्त्रीषु पाने वृथाटने ।
निद्रायां च निबन्धेन क्षिप्रं नश्यति भूपतिः ॥

## मनुः

अष्टादश कामजानि क्रोधजानि च व्यसनानि
तेषां लघुगुरुभावश्च

[3]दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥

( १ ) इदमपरमिन्द्रियजयोपदेशस्य प्रयोजनम् । अजितेन्द्रियस्य दुष्परिहराणि व्यसनानि । दुरन्तानि दुःखकरः अन्तः अवसानं येषाम् । प्रथमं प्रातिकाले सुखयन्ति व्यसनानि, पश्चात्तु वैरस्यं जनयन्ति, ततो दुरन्तानि उच्यन्ते । अथवा दुष्प्रापः अन्तः एषाम् । न हि व्यसनिनस्ततो निवर्तितुं शक्नुवन्ति । कामाद्धेतोः समुत्थानं जन्म येषाम् । * मेधा.

( २ ) दश कामसंभवानि अष्टौ क्रोधजानि वक्ष्यमाणव्यसनानि यत्नतस्त्यजेत् । † मनु.

( ३ ) एष्वष्टादशव्यसनेषु अतिप्रसक्तिरेव निषिद्धा, न तु तत्संबन्ध एव, राज्ञस्तद्विधेः । रार. ७

( ४ ) अजितेन्द्रियता हि विषयाधीनेत्याह— दशेति । वक्ष्यमाणानि व्यसनानि विविधदुःखहेतुनरकेषु व्यस्यते पुमान् यैस्तानि । दुःखहेतव इति यावत् । दुरन्तानि दुःखमेवान्तो येषां तानि । मच.

[1]कामजेषु प्रसक्तो हि व्यसनेषु महिपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥

( १ ) एषां वर्जने प्रयोजनमाह गुरुलघुभावं च— कामजेष्विति । अर्थधर्मवियोगेन व्यवहित आत्मवियोगः । क्रोधजेषु सर्वैर्वियुज्यते इति विशेषः । × मेधा.

( २ ) यस्मात् कामोद्भवेषु व्यसनेषु राजा प्रसक्तो धर्मार्थहानिं प्राप्नोति, क्रोधजेषु च सक्तः सर्वद्वेष्यत्वात् प्रकृतिकोपे सति प्राणैर्वियुज्यते । $ गोरा.

( ३ ) आत्मनैव देहेन वियुज्यते इत्यन्वयः । यद्यपि कामजेऽपि मृत्युः संभवति तथापि कामजैः स्वप्रयोजनमल्पं सुखं सिध्यति, न क्रोधजे, इति अत्रैवाऽऽत्मवियोगोक्तिः । मवि.

---

(१) चासू. ६९–७६.

(२) चाशा. ४।२०.

(३) मस्मृ. ७।४५ ; राक. १४३ ; रार. ६ मुत्थानि ( मुच्छ्राणि ) ; पमा. ४१३ पू. ; राप्र. १४८.

* मवि. मेधागतम् ।

† शेषं मेधागतम् । गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम्, तच्च ममुगतम् ।

× ममु. मेधागतं गोरागतं च ।

$ राप्र. गोरागतम् ।

(१) मस्मृ. ७।४६ ; राक. १४३ जेष्वात्म ( जे स्वात्म ) ; रार. ६ धर्मा (कामा) ; पमा. ४१३ राकवत् ; राप्र. १४८.

( ४ ) कस्मिन् गणे को दोषस्तत्राऽऽह– कामजेष्विति । § मच.

( ५ ) तेषूभयेषु व्यसनेषु प्रसक्तस्यानर्थान् विविच्याऽऽह– कामेति । आत्मना शरीरेण वियुज्यते म्रियते इति यावत् । अनेन क्रोधजानां गुरुतरत्वमुक्तम् । नन्द.

'मृगयाऽक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाटया च कामजो दशको गणः ॥

( १ ) तानीदानीं व्यसनानि स्वनामतो दर्शयति– मृगयेति । आखेटकार्यो मृगवधः मृगया । अक्षः तद्विषयक्रीडा । एतयोस्त्वनर्थत्वं प्रसिद्धम् । दिवास्वप्नः कर्मानुष्ठानकाले कर्मस्वव्यापारः । न दिवाशब्देनाहरेव विवक्षितम् । तदुक्तम्– ' जागर्तव्ये प्रसुप्तिका ' इति । अथवा मुख्य एव दिवास्वप्नः । स हि प्रतिषिद्धः सर्वकार्यविघाती । स च दर्शनार्थिनामन्येषां तदसंपत्तेर्द्वेष्यताजनकः प्रजासु । परिवादः रहसि परदोषावर्जनम् । तेन सर्वाः प्रकृतयो विरज्यन्ति । अपरिवाद्यानां च परिवादेऽधर्मः स्थित एव । स्त्रियो मदः इत्येतयोरनर्थरूपता सुप्रतीता । तौर्यत्रिकं नृत्यगीतवादित्राणि । वृथाट्या अप्रयोजनमीषत्प्रयोजनं वा इतस्ततश्च परिभ्रमणम् । दशपरिमाणः दशकः । कामजः कामः इच्छा, ततो जायते । विशिष्टसुखोपभोगार्थो वा अनुभूतविशेषाद्वा जायमानः कामजः । * मेधा.

§ शेषं मेधागतं मविगतं च ।

* गोरा. , मभु. , रार. , राप्र., नीम. , नन्द. मेधागतम् ।

(१) मस्मृ. ७।४७ ; गोरा. तौर्यत्रिकं ( तूर्यत्रिको ); मिता. १।३१० याऽक्षो ( यांऽक्षा ) ; राक. १४३–१४४ याऽक्षो ( याऽक्षा ) गणः ( गुणः ) ; रार. ६ मितावत् ; पमा. ४१३ परि ( परी ) ट्या च ( ढाढ्या ) ; दीक. १।३१० परिवादः ( परीवादं ) थाट्या ( थाढ्या ) ; राप्र. १४७–१४८ स्वप्नः ( स्वापः ) शेषं मितावत् ; नीम. ३५ राप्रवत् ; राकौ. २४६ स्वप्नः ( स्वापः ) ; बाल. १।३१० याऽक्षो ( याऽक्षा ) ट्या च ( त्यागः ) ; भाच. ' वृथाट्या ' इत्यत्र ' वृथोद्या ' इत्यपि पाठः .

( २ ) परिवादः स्वप्रशंसार्थमद्वेष्याणामपि निन्दा । मदः पानमत्तता । कामजः विना क्रोधं रागमात्राज्जातः । * मवि.

( ३ ) दश कामसमुत्थान्याह– मृगयेति । मृगया वृथा मृगवधः ( अ )श्राद्धाद्यर्थम् । युधिष्ठिराद्यनुष्ठितः अक्षः द्यूतक्रिया । परिवाद इति ' स्वयं नोत्पादयेत् कार्यम् ' ( मस्मृ. ८।४३ ) इत्यस्यानुवादः । स्त्रियः स्त्रीसेवनम् । तच्च दिवाधिकरणं निषिद्धम् , राजकार्यविघातित्वात् प्रजोद्वेगहेतुः । बहुस्त्रीसेवनं वा । मदः स्त्रीभोगाय पानजः । मच.

( ४ ) वृथा त्यागः वृथा दानम् ।

* बाल. १।३१०

( ५ ) वृथोद्या वृथालापः । ¶ भाच. ९.

'पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥

( १ ) अमात्यादयो ये सुकृतबान्धवाः तत्र यन्निगोपनीयं तस्य प्रकाशनं पैशुन्यम् । साहसं ज्यायसो नीचकर्मणि विनियोगः स्वल्पेनैवापराधेन कराधानं करावरोधो वा । द्रोहः उपांशुवधः तत्रोपघातो वा जीवत एव । ईर्ष्या सर्वसाधारणस्य विषयस्य साधारण्यव्यावृत्तिः असहनं वा । गुणिनां गुणेषु दोषाविष्करणं असूया । अर्थदूषणं अर्थानामदानं हरणं वा । वाग्दण्डपारुष्ये प्रसिद्धे । क्रोधः द्वेषः । तत्प्रधाना एतत्कुर्वन्ति । मेधा.

( २ ) पैशुन्यं अविज्ञातदोषाविष्करणम् । साहसं साधोः निकृष्टकर्मविनियोगः बन्धनं वा । द्रोहः छद्म-

* शेषं मेधागतम् ।

¶ शेषं मेधागतं मविगतं च ।

(१) मस्मृ. ७।४८ ; गोरा. शुन्यं ( शून्यं ) ; मिता. १।३१० ; राक. १४४ ; रार. ७ ; पमा. ४१३ ; दीक. १।३१० दूष ( द्रोह ) ; राप्र. १४८ ; नीम. ३५ ; राकौ. २४६.

वधः । ईर्ष्या परस्याऽऽत्मना सह गुणसामान्याक्षमणम् । असूया परगुणस्तवामर्षणम् । अर्थदूषणं प्राप्तानामर्थाना-मदानमपहारो वा । वाक्पारुष्यं आक्रोशादि । दण्ड-पारुष्यं ताड़नादि । इति अपरिमाणो व्यसनसंघः क्रोधा-ज्जायते । * गोरा.

( ३ ) पैशुन्यं असद्दोषाविष्कारः । साहसं अल्पेऽपि कारणे स्वयं मानुषवधादि । द्रोहः परजिघांसा । ईर्ष्या परस्यानभिसंधिकृतस्वयशोऽपहरणादावपचिकीर्षा । असूया परस्तवासहिष्णुता । अर्थदूषणं अर्थानां परकीयानां स्वय-मग्रहणेऽपि विनाशनम् । वाक्पारुष्यं आक्रोशादिना वाङ्मात्रेण परद्वेषोत्पादनम् । दण्डपारुष्यं अयुक्तदण्ड-प्रणयनम् । × मवि.

( ४ ) ईर्ष्या अन्यगुणासहिष्णुता । परगुणेषु दोषा-विष्करणं असूया । † ममु.

( ५ ) अर्थदूषणं परस्वापहारः, न त्वर्थार्थे दूषणम्, परिवादेन गतार्थत्वात् । पारुष्यविशेषणं वाग्दण्डजम् । तत्र वाक्पारुष्यं आक्रोशादि, अनपराधे दण्डपारुष्यं ताडनादि, तेन द्वयम् । $ मच.

( ६ ) दण्डपारुष्यं अल्पापराधेऽपि बहुलार्थग्रहणं शारीरदण्डो वा । + राप्र. १४९

( ७ ) अर्थदूषणं नाम परदूषणार्थे महतोऽर्थस्य परित्यागः । तथा कामन्दकेनोक्तम् – ' दूष्यस्य दूषणार्थे हि परित्यागो महीयसः । अर्थस्य नीतिशास्त्रज्ञैरर्थ-दूषणमुच्यते ॥ ' ( कानी. १५।१८ ) इति । नन्द.

( ८ ) द्रोहः अपकारः । परजिघांसा ईर्ष्या । ¶ भाच.

---

* नीम. गोरागतं ममुगतं च ।

× रार. मविगतम् ।

† शेषं गोरावत् ।

$ शेषं गोरागतं ममुगतं च ।

+ शेषं ममुवत् ।

¶ शेषं मवि



'द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥

( १ ) उक्तं तावत् कामजस्य व्यसनवर्गस्य लोभो मूलम्, विषयोपभोगस्पृहा कामः इच्छा अभिलाषः लोभः इत्यनर्थान्तरं यतः । क्रोधजस्य कथं लोभो मूलम् ? येनोच्यते ' तज्जावेतावुभौ गणौ ' इति । उच्यते– नात्र लोभकारणता तयोर्वर्गयोरभिप्रेता । किं तर्हि ? वर्गद्वयतुल्यता लोभस्य । यमेतानि सर्वाणि व्यसनान्यनर्थमुपजनयन्ति तमेवैको लोभो व्यसनहीन-स्यापि । तदुक्तम्– ' लोभः सर्वगुणानिव ' इति । अत उपचारत एतदुक्तं तज्जावेताविति । यदि लोभो न जायेत कथं समानफलानि स्युः ? कारणदोषो हि कार्यदोषं भासयति । अतः तत्कार्यत्वात् व्यसनेषु चेद्दोषः प्रवं कारणस्याप्यसौ दोष उक्तो भवति । अथवा लुब्ध एव पैशुनादिबहिष्कार्येष्वभिषङ्गं गच्छति, इतरस्तु स्वल्पके विषये अनुनयेन वोपशाम्यति । सेयमुपचाराल्लोभमूलता व्यसनवर्गद्वयस्योच्यते । मेधा.

( २ ) द्वयोरप्येतयोः कामक्रोधव्यसनवर्गयोस्तु यं स्वयं कारणभूतं सर्वे स्मृत्युपनिबन्धग्रन्थकारा मन्यन्ते तं लोभं यत्नतः परिहरेत् । यस्मादेतत्समुद्भवमेतत् गणद्वयम् । सर्वेषां लोभो मूलम्, क्वचिद्धनलिप्सया क्वचिच्छरीरसुख-लोभेन प्रवृत्तेः । * गोरा.

( ३ ) लोभः प्राप्तस्य विषयस्य अनपन्ययेच्छा । तज्जौ त्वेताविति क्रोधजेऽपि लोभप्रवृत्तस्य कामप्रतिहता-वेव कोपोदयात् । मवि.

( ४ ) ' मूलोच्छेदे पुरुषव्यापारात् ' इति न्याया-श्रयेणाऽऽह– द्वयोरिति । तयोः गणयोः । अत एवोक्तं

---

* ममु., भाच. गोरागतम् ।

(१) मस्मृ. ७।४९ ; राक. १४४ सर्वे ( पूर्वे ); मवि. तज्जावेता ( तज्जौ त्वेता ) ; पमा. ४१३ जये ( त्यजे ) चतुर्थचरणे (त्याज्यौ हेतौ गणावुभौ) ; मच. प्येतं (पि त); राप्र. १४८ सर्वे ( पूर्वे ) ज्जावेता ( ज्जयेता ) ; भाच. जये ( त्यजे ).

गुणानुपक्रम्य– 'लोभः सर्वगुणान् हन्ति श्वित्रो रूपमिवेप्सितम्' इति । श्वित्ररोगः ईप्सितं रूपं हन्तीत्यन्वयः । मच.

(५) द्वयोरपि गणयोर्जयोपायमाह– द्वयोरिति । विषयाभिध्यानजः आसङ्गः लोभः । तज्जौ लोभजौ । लोभात् कामः, कामात् प्रतिहतात् क्रोधः, तेन तज्जावित्युक्तम् । तथा भगवानुवाच– 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते । सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥' (भगी. २।६२) इति । नन्द.

[1]पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥

(१) दिवास्वप्नादिभ्योऽस्य चतुष्कस्य गणस्य बहुदोषतरत्वं प्रसिद्धमेव । * मेधा.

(२) मद्यपानं अक्षैः क्रीडा स्त्रीसंभोगो मृगया चेति क्रमपठितमेतच्चतुष्कं कामजव्यसनमध्ये बहुदोषत्वादतिशयेन दुःखहेतुं जानीयात् । ‡ ममु.

(३) किंच, अवश्यं त्याज्यं सार्थवादं संकलयति– पानमिति । मृगयायां व्यायामेनाऽऽरोग्यगुणोत्पत्तेः अतः स्त्रीसेवनं कष्टम्, तत्रापत्योत्पत्तावपि मैथुननिमित्तरेतःक्षरणवेगधारणात् व्याध्युत्पत्त्या मरणोत्पत्तिः संभावितेति । ततोऽपि कष्टतरं द्यूतम्, तत्र पाक्षिकधनाप्तावपि वैरायुत्पत्तिरिति । ततोऽपि पानं कष्टतमम्, मत्तस्य संज्ञारहिततया विषपानादिना मरणाद्यापत्ते(?त्ति)र्बहुकालीननरकापत्तिश्चेति । एतच्चतुष्कं दिवास्वप्नादिभ्य उत्तरोत्तरं कष्टं विद्यादित्यन्वयः । मच.

[2]दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥

(१) अयमपि त्रिकः पैशुनादिभ्यः पापीयानिति सुप्रतीतम् । मेधा.

(२) वाक्पारुष्यदण्डपारुष्यार्थदूषणात्मकं त्रिकं क्रोधजव्यसनगणमध्याद्दोषभूयस्त्वे सति सर्वदा दोषहेतुं बुध्येत । * गोरा.

(३) क्रोधजेऽप्याह– दण्डस्येति । एवमर्थापहरणात् कष्टतरं वाक्पारुष्यम्, तावन्मात्रेण मरणोद्यमदर्शनात् त्यक्तधनस्य यतेरपि । तदुक्तम्– 'दुरुक्तैर्भिन्नमात्मानं कः समाधातुमीश्वरः' इति । ततोऽपि कष्टतमो दण्डपातः, तत्र बहुकल्पनरकजनकविप्रवधादिदर्शनात् द्रुततरमरणदर्शनाच्चेति । मच.

[3]सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥

(१) ¶ पानद्यूतयोः पानं गरीयः । तत्र हि संज्ञाप्रणाशः, अनुन्मत्तस्योन्मत्तत्वम्, अप्रेतस्य प्रेतत्वम्, कौपीनप्रकाशनम्, श्रुतप्रज्ञाप्रहाणम्, मित्रहानिः, सद्भिर्वियोगः, असद्भिश्च संप्रयोगः, गीतादिष्वर्थघ्नेषु प्रसङ्गः, रतमन्त्रप्रकाशनं च, मानिनोऽप्युपहास्यता, गम्भीरप्रकृतेरपि यत्किंचनवादिता मदवेगेनेति पानदोषाः । द्यूते तु जितमेवाक्षविदुषा, अनक्षज्ञस्यापि पाक्षिकः पराजयः । स्त्रीद्यूतव्यसनयोर्द्यूतव्यसनं गरीयः । येन तदेव जितं द्रव्यं तस्यापि विषं भवति । तथा च तन्निमित्तो वैरानुबन्धो जयः साधारणः केवलं पराजयः

---

* मवि. मेधागतम् ।

‡ गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम्, तच्च ममुगतम् । भाच. ममुगतम् ।

* मवि., ममु., भाच. गोरागतम् ।

¶ अत्र कौटिलीयार्थशास्त्रं (कौ. ८।३) अनुसंधेयम् ।

(१) **मस्मृ.** ७।५० ; **मिता.** १।३१० ; **राक.** १४४ तमं (तरं) ; **पमा.** ४१३ ; **राप्र.** १४८ ; **नीम.** ३५ ; **राकौ.** २४६ मक्षाः (मक्षः).

(२) **मस्मृ.** ७।५१ ; **मिता.** १।३१० ; **राक.** १४४ ; **पमा.** ४१३–४१४ ; **राप्र.** १४८ ; **नीम.** ३५ ; **राकौ.** २४६ .

(३) **मस्मृ.** ७।५२ ; **राक.** १४४ त्रैवा (स्यैवा) त्मवान् (त्मनः) ; **राप्र.** १४८ पूर्वं पूर्वं (पूर्वंपूर्वं) त्मवान् (त्मनः) ; **नीम.** ३५ विद्या (विन्द्या) त्मवान् (त्मनः).

भुक्तनाशः । मूत्रपुरीषवेगधारणाच्च शरीरे शैथिल्यं व्याधिनिदानमेव, तेन क्षुद्रादिभिः स्वपीडातिशयात् । मातर्यपि च मृतायां दीव्यत्येव । कृतकृत्येषु च न सुहृद्भिरपि कृष्यते । तप्तायसपिण्डवत् परद्रव्याणि परिहरतो न प्रत्ययते च । क्षुधिते दुर्गतेऽन्नाद्युपपत्त्युपेक्षाविषयता सर्वगुणसंपन्नस्यापि तृणवदवज्ञेयता । इति द्यूतदोषाः । स्त्रीव्यसने त्वपत्योत्पत्तिः, प्रतिकर्मभोजनभूयिष्ठानुभवनम्, धर्मार्थपरिग्रहः । शक्या च स्त्री राजहिते नियोक्तुमपवाहयितुं वा । स्त्रीमृगयाव्यसनयोः स्त्रीव्यसनं गरीयः । अदर्शनं कार्याणाम्, स्त्रीव्यसनसङ्गेन राजकार्येषु च निर्वेदः, कालातिपातनम्, धर्मलोपः, पानदोषानुबन्धः, अर्थघ्नेषु चानृतादिषु प्रसङ्ग इति । मृगयायां तु व्यायामः, पित्तश्लेष्मबन्धः, मेदादिनाशः, चले स्थिरे वा काये लक्ष्यपरिचयः, प्रहरणे वैशारद्योपजननम्, आम्यजनपरिचयश्चेति । एवं कामजस्य चतुष्कस्य वर्गस्य स्ववर्गे पूर्वं पूर्वं पापीयः । क्रोधजस्यापि च दण्डपातदोषानुबन्धः, अर्थघ्नेष्वेवानृतादिषु सङ्गः । दण्डपातवाक्पारुष्ययोः दण्डपातनं गरीयः । दण्डपातने हि शरीरविनाशादशक्यं प्रतिसंधानम् । वाक्पारुष्ये त्वमर्षजः क्रोधाग्निः शक्यते दानमानाम्भोभिः शमयितुम् । वाक्पारुष्यार्थदूषणयोर्वाक्पारुष्यं गरीयः । तेजस्विनो हि पारुष्यवचनचित्तसंक्षोभे भयं नाऽऽसादयन्ति । तथा च प्रवादः–'स्थिरं साध्वसितं काण्डं भित्त्वा वाऽस्थिप्रवेशितम् । विशल्यमङ्गं कुर्वन्ति न वाचो हृदयादपि ॥' 'रोहते सायकैर्विद्धं वनं परशुना हतम् । वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥' (भामु. ५।३४।७८) । भाग्यायत्तत्वादर्थस्येति न तेजस्विनः अर्थदूषणं गणयन्ति । एवमेतयोर्वर्गयोः पूर्वस्य पूर्वस्य गरीयस्त्वं निदर्शितम् । * मेधा.

(२) एतस्मिन् सप्तके यथायथं सर्वं गणद्वयमन्तर्भवति, तौर्यत्रिकादेः स्त्रीरागादिकृतत्वात्, अर्थदूषणादेश्च पैशुन्यादावप्यनुषङ्गादित्यर्थः । पूर्वं पूर्वमिति । द्यूतं हि स्त्रीभ्यः कष्टम्, द्यूते धननाशनियमात् भोगसुखस्य चाभावात्, स्त्रीणां सुखहेतुत्वादित्यादि । एवं क्रोधजगणे विज्ञेयम् । मवि.

(३) अस्य पानादेः कामक्रोधसंभवस्य सप्तपरिमाणस्य व्यसनवर्गस्य सर्वस्मिन्नेव राजमण्डले प्रायेणावस्थितस्य पूर्वपूर्वव्यसनमुत्तरोत्तरात् कष्टतरं प्रशस्तात्मा राजा जानीयात् । अर्थदूषणाद्वाक्पारुष्यं दोषवन्मर्मपीडाकरम्, वाक्प्रहारस्य दुश्चिकित्स्यत्वात् । तदुक्तम् – 'न संरोहति वाक्कृतम् (? क्षतम्)' । अर्थदूषणं तु प्रचुरतरार्थदानाच्छक्यसमाधानम् । एवं क्रोधजत्रिकस्यापि पूर्वं पूर्वं दुष्टतरं यत्नतस्त्यजेत् । * ममु.

(४) सप्तकस्य पानाद्यर्थदूषणान्तस्य । सर्वत्रानुषङ्गिणः, इहामुत्र दुःखहेतुत्वात् व्यसनस्य । व्यसनमिति परिभाषितस्य गुरुतरत्वं प्रपञ्चितम् । मच.

(५) अत्रोभये तारतम्यमाह– सप्तकस्येति । वर्गद्वयान्तर्गतबहुत्वापेक्षया वर्गस्येति निर्धारणे षष्ठी । सर्वत्र प्राज्ञेषु मूढेषु चाविशेषेण अनुषङ्गिणः । सजातीयापेक्षोऽयं पूर्वशब्दः, न सर्वापेक्षः । कुतः ? कामजेभ्यः क्रोधजानां गौरवस्य प्रतिपादितत्वात् । नन्द.

**'व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ।**
**व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥**

(१) यद्यपि मृत्युव्यसने सर्वं हरेत् (? सर्वहरे) तथाप्येवं विशेषः– मृत्युरस्मिंल्लोके सर्वहरः, व्यसनं पुनरिह चामुत्र च । तदिदमाह– व्यसन्यधोऽधो व्रजति । नरकं गच्छतीत्यर्थः । व्यसनशब्देन अत्यन्तोऽभ्यास एतद्वर्गविषय उच्यते । अतश्चाभ्यासः प्रतिषिध्यते, न त्वीषदासेवनम् । व्यसनभूता ह्येते धर्मार्थकामप्राणहरा भवन्त्यन्यस्यापि पुरुषस्य, किं पुना राज्ञः ?

---

* गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम्, तच्च मेधागतं ममुगतं च ।

* शेषं मेधागतम् । भाच. ममुगतम् ।

(१) मस्मृ. ७।५३ ; राक. १४५ ; रार. ७ व्यसनं कष्ट (कष्टं व्यसन) ; पमा. ४१४ धोऽधो (धो हि) ; राप्र. १४९.

किंच, असेवनमप्ययुक्तं पानादीनामशक्यं चेति । यतो(?अतो)ऽभ्यासप्रतिषेधः । * मेधा.

( २ ) मृत्युव्यसनयोर्मध्ये व्यसनं दुष्टतरम् , यस्मात् व्यसनी यावद्दीर्घकालं जीवति तावत्तावच्छास्त्रार्थातिक्रमाधिक्यादधिकतरं नरकं गच्छति । अव्यसनी पुनर्मृतः शास्त्रानुष्ठानात् स्वर्गं व्रजति । गोरा.

( ३ ) यद्यपि मृत्युव्यसने द्वे अपीह लोके संज्ञाप्रणाशादिदुःखहेतुतया शास्त्रानुष्ठानविरोधितया च तुल्ये, तथापि व्यसनं कष्टतरम् , परत्रापि नरकपातहेतुत्वात् । तदाह– व्यसन्यधोऽधो व्रजतीति । बहून्नरकान् गच्छतीत्यर्थः । अव्यसनी तु मृतः शास्त्रानुष्ठानप्रतिपक्षव्यसनाभावात् स्वर्गं गच्छति । एतेन अतिप्रसक्तिर्व्यसनेषु निषिध्यते, न तु तस्य सेवनमपि । × ममु.

( ४ ) अधोऽधो व्रजति, नरकं प्रतिपद्यते इत्यर्थः , नरकाणां पाताल एव वर्णितत्वात् । राप्र.१४९

उत्तरोत्तरप्रकृतिव्यसनात् पूर्वपूर्वप्रकृतिव्यसनं गरीयः

[१]सप्तानां प्रकृतीनां तु राज्यस्याऽऽसां यथाक्रमम् ।
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं महत् ॥

( १ ) मित्रव्यसनात् स्वबलव्यसनं गरीयः । स्वबलसंपन्नो हि शक्नोति मित्रमनुग्रहीतुम् । एवं दण्डकोशयोः । कोशनाशे हि दण्डोऽपि नश्यत्येव । एवं कोशराष्ट्रयोः । राष्ट्रनाशे हि कुतः कोशोत्पत्तिः ? पुरराष्ट्रविनाशशङ्कायां पुरं यत्नतो रक्षितव्यम् । तत्र हि सर्वावयवसाधनादि (? सर्वं यवसेन्धनादि ) संभवति । पुरादमात्यः प्रधानम् । प्रधानामात्यनाशे हि सर्वं बलं भज्यते । आत्मनाशे सर्वनाशः इत्येतत् प्रसिद्धमेव । तदुक्तम्– ' आत्मा तु सर्वतो रक्ष्यः ' इति । मेधा.

( २ ) व्यसनं व्यसनकारणम् , दोषवदिति शेषः । राक. ९८

( ३ ) सप्तानां प्रकृतीनां द्वयोस्तिसृणां वा व्यसने पूर्वं पूर्वं प्रथमतश्चिकित्स्यम् , गुरुत्वादित्यर्थः । मवि.

( ४ ) ततः किमित्याह– सप्तानामिति । आसां राज्यप्रकृतीनां सप्तानां क्रमोक्तानामुत्तरस्या विनाशमपेक्ष्य पूर्वस्याः पूर्वस्या विनाशविषये गरीयो व्यसनं जानीयात् । तथाहि– मित्रव्यसनात् स्वबलव्यसनं गरीयः , संपन्नबलस्य एव मित्रनिग्रहे सामर्थ्यात् । एवं बलात् कोशो गरीयान् , कोशनाशे बलस्यापि नाशात् । कोशाद्राष्ट्रं गरीयः, राष्ट्रनाशे कुतः कोशोत्पत्तिः ? एवं राष्ट्राद्दुर्गनाशोऽपि, दुर्गादेव यवसेन्धनादिसंपन्नाद्राज्यरक्षासिद्धेः । दुर्गादमात्यो गरीयान् , प्रधानामात्यनाशे सर्वाङ्गवैकल्यात् । अमात्यादप्यात्मा, सर्वस्याऽऽत्मार्थत्वात् । तस्मादुत्तरापेक्षया पूर्वं यत्नतो रक्षेत् । * ममु.

( ५ ) प्रकृतीनां अङ्गानाम् । × राप्र.३१९

## बार्हस्पत्यसूत्रम्

व्यसननिषेधः

[१]मृगयातिसङ्गं च नाऽऽचरेत् ॥
स्त्रीष्वतिसङ्गादयशो वर्धते ॥
आयुश्च क्षीयते ॥
द्यूतपरतापपरापवादपातकिसमागमे समन्त्रपदानि परच्छिद्राणि विद्याव्यसनपरिहारस्येन (?) ॥

## आश्वलायनः

व्यसनसप्तकनिषेधः, युक्त्या स्त्रीमद्यसेवनमनुमतम्

[२]स्त्रियोऽक्षान्मृगयां पानं वाक्पारुष्यं च भूपतिः ॥
महच्च दण्डपारुष्यं वर्जयेच्चार्थदूषणम् ।
कार्यः स्त्रीषु न विश्वासो धीमता सुप्रियास्वपि ॥
उपायाद्विश्वसेनास्तु ( ? ) भोक्तव्याश्चाऽऽत्मनोऽखिलाः ।
काले स्त्रियः स्युर्भोक्तव्या लालनीयाश्च नित्यदा ॥

---

* मवि. मेधागतम् ।

× मच., माच. ममुगतम् ।

(१) मस्मृ. ९।२९५ ; राक. ९७–९८ तु ( च ) महत् ( नृपः ) ; राप्र. २७८, ३१९ महत् ( नृपः ).

* मच., नन्द. ममुगतम् ।

× शेषं राकवत् ।

(१) बासू. १।३३–३६.

(२) आश्वस्मृ. ८।५०–५५.

न च विश्वसितव्यास्तास्तासु गुह्यं न भाषयेत् ।
उपद्रुतेषु देशेषु श्वापदैर्नृपतिस्तदा ॥
मृगयायां प्रसक्तः स्यान्नान्यथेति मतिर्मम ।
पानं चापि पिबेत्काले भोगस्य न तु सर्वदा ॥
वाक्पारुष्यं सदा राज्ञा वर्जनीयं विशेषतः ॥

## मार्कण्डेयपुराणम्

व्यसनसप्तकनिषेधः

[1]व्यसनानि परित्यज्य सप्त मूलहराणि वै ।
आत्मा रिपुभ्यः संरक्ष्यो बहिर्मन्त्रविनिर्गमात् ॥

## मत्स्यपुराणम्

व्यसनसप्तकनिषेधः, अर्थदूषणविवरणम्, स्त्रीमद्यादीनां युक्त्या सेवनमनुमतम्

[2]मृगयां, पानमक्षांश्च वर्जयेत्पृथिवीपतिः ।
एतांस्तु सेवमानास्तु विनष्टाः पृथिवीक्षितः ॥
[3]बहवो नृपशार्दूल तेषां संख्या न विद्यते ।
वृथाटनं दिवास्वप्नं विशेषेण विवर्जयेत् ॥

वृथाटया वृथाटनम् । राप्र. १४७

[4]वाक्पारुष्यं न कर्तव्यं दण्डपारुष्यमेव च ।
परोक्षनिन्दा च तथा वर्जनीया महीक्षिता ॥
[5]अर्थस्य दूषणं राजा द्विप्रकारं विवर्जयेत् ।
अर्थानां दूषणं चैकं तथाऽर्थेषु च दूषणम् ॥

[1]प्राकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया ।
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥
[2]अदेशकाले यद्दानमपात्रे दानमेव च ।
अर्थेषु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥
[3]व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत् ।
लोकसंग्रहणार्थाय कृतकव्यसनी भवेत् ॥

व्यसनानि पुरुषार्थविक्षेपकाणि मृगयादीनि । राप्र. १४७

## विष्णुधर्मोत्तरपुराणम्

व्यसननिषेधः

[4]मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम् ।
वाग्दण्डयोस्तु पारुष्यं तथैवार्थस्य दूषणम् ॥

## अग्निपुराणम्

व्यसननिषेधः, अर्थदूषणविवरणम्

*[5]मृगयां पानमक्षांश्च राज्यनाशांस्त्यजेन्नृपः ॥
दिवास्वप्नं वृथाट्यां च वाक्पारुष्यं विवर्जयेत् ।
निन्दां च दण्डपारुष्यमर्थदूषणमुत्सृजेत् ॥
प्राकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया ।
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥
अदेशकाले यद्दानमपात्रे दानमेव च ।
अर्थेषु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥

---

(१) मार्क. २४।६.

(२) मत्स्य. २२०।८ ; विध. २।६५।९–१० येत्पृथिवी (येच्च मही) एतांस्तु (एतान्सं) ; राप्र. १४६ एतांस्तु (एतान्या).

(३) मत्स्य. २२०।९ ; विध. २।६५।१०–११ नृप (मृगु) तेषां (येषां) तृतीयचरणे (दिवास्वापं वृथावादं) ; राप्र. १४७ तेषां संख्या (संख्या येषां) तृतीयचरणे (दिवास्वप्नं वृथाट्यां च).

(४) मत्स्य. २२०।१० ; विध. २।६५।११–१२ ; राप्र. १४७.

(५) मत्स्य. २२०।११ ; विध. २।६५।१२–१३ राजा (राम) ऽर्थेषु च (चार्थेन) ; राक. १४७ तथाऽर्थेषु च (तथैवार्थेन) ; राप्र. १४७ र्थेषु (र्थेन).

* अग्निपुराणस्थानामशुद्धानां श्लोकानां शोधनं तत्सदृशकामन्दकीयनीतिसारश्लोकान् दृष्ट्वा विधेयम् ।

(१) मत्स्य. २२०।१२ ; विध. २।६५।१३–१४ नामसत्क्रिया (नां समक्रिया) राक. १४७ ; राप्र. १४७.

(२) मत्स्य. २२०।१३ ; विध. २।६५।१४–१५ अर्थेषु (अर्थैस्तु) ; राक. १४७ विधवत् ; राप्र. १४७ अर्थेषु (अर्थेन).

(३) मत्स्य. २२०।२५–२६ ; राक. १४६–१४७; पमा. ४१३ भूपतिः (नृपतिः) शान्तिपर्वणि ; राप्र. १४७.

(४) विध. ३।३२३।९.

(५) अग्नि. २२५।४–७.

व्यसनशब्दव्युत्पत्तिः, दैवमानुषव्यसनानि स्वामि-
सचिवादिप्रकृतीनां व्यसनानि च

'अनयाव्यस्यति श्रेयस्तस्मात्तव्यसनं स्मृतम् ।
हुताशनो जलं व्याधिर्दुर्भिक्षं मरकं तथा ॥
इति पञ्चविधं दैवं व्यसनं मानुषं परम् ।
दैवं पुरुषकारेण शान्त्या च प्रशमं नयेत् ॥
उत्थापितेन नीत्या च मानुषं व्यसनं हरेत् ।
मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः ॥
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम् ।
व्यसनस्य प्रतीकारो राज्यराजाभिरक्षणम् ॥
इत्यमात्यस्य कर्मेदं हन्ति स व्यसनान्वितः ।
हिरण्यधान्यवस्त्राणि वाहनं प्रजया भवेत् ॥
तथाऽन्ये द्रव्यनिचया हन्ति सव्यसना प्रजा ।
प्रजानामापदिस्थानां रक्षणं कोषदण्डयोः ॥
पौराद्याश्चोपकुर्वन्ति संश्रयादिह दुर्दिनम् ।
तूष्णींयुद्धं जनत्राणं मित्रामित्रपरिग्रहः ॥
सामन्तादिकृते दोषे नश्येत्तव्यसनाच्च तत् ।
भृत्यानां भरणं दानं प्रजामित्रपरिग्रहः ॥
धर्मकामादिभेदश्च दुर्गसंस्कारभूषणम् ।
कोषात्तव्यसनाद्धन्ति कोषमूलो हि भूपतिः ॥
मित्रामित्रावनीहेमसाधनं रिपुमर्दनम् ।
दूरकार्याशुकारित्वं दण्डात्तव्यसनाद्धरेत् ॥
संस्तम्भयति मित्राणि ह्यमित्रं नाशयत्यपि ।
धनाद्यैरुपकारित्वं मित्रात्तव्यसनाद्धरेत् ॥
राजा स व्यसनी हन्याद्राजकार्याणि यानि च ।
वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ॥
पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ।
आलस्यं स्तब्धता दर्पः प्रमादो द्वैधकारिता ॥
इति पूर्वोपदिष्टं च सचिवव्यसनं स्मृतम् ।
अनावृष्टिश्च पीडादि राष्ट्रव्यसनमुच्यते ॥
विशीर्णयन्त्रप्राकारपरिखात्वमशस्त्रता ।
क्षीणया सेनया नद्धं दुर्गव्यसनमुच्यते ॥
व्ययीकृतः परिक्षिप्तोऽप्रजितोऽसंजितस्तथा ।
दूषितो दूरसंस्थश्च कोषव्यसनमुच्यते ॥
उपरुद्धं परिक्षिप्तममानितविमानितम् ।
अभूतं व्याधितं श्रान्तं दूरायातं नवागतम् ॥
परिक्षीणं प्रतिहतं प्रहताग्रतरं तथा ।
आशानिर्वेदभूयिष्ठमनृतप्राप्तमेव च ॥
कलत्रगर्भं निक्षिप्तमन्तःशल्यं तथैव च ।
विच्छिन्नविविधासारं शून्यमूलं तथैव च ।
अस्वाम्यसंहतं वाऽपि भिन्नकूटं तथैव च ॥
दुष्पार्ष्णिग्राहसन्धं च बलव्यसनमुच्यते ॥
दैवोपपीडितं मित्रं ग्रस्तं शत्रुबलेन च ।
कामक्रोधादिसंयुक्तमुत्साहादरिभिर्भवेत् ॥
अर्थस्य दूषणं क्रोधात्पारुष्यं वाक्यदण्डयोः ।
कामजं मृगया द्यूतं व्यसनं पानकं स्त्रियः ॥
वाक्पारुष्यं परं लोक उद्वेजनमनर्थकम् ।
असिद्धसाधनं दण्डस्तं युक्त्याऽवनयेन्नृपः ॥
उद्वेजयति भूतानि दण्डपारुष्यवान्नृपः ।
भूतान्युद्वेज्यमानानि द्विषतां यान्ति संश्रयम् ॥
विवृद्धाः शत्रवश्चैव विनाशाय भवन्ति ते ।
दूष्यस्य दूषणार्थं च परित्यागो महीयसः ॥
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ।
पानात्कार्यादिनोऽज्ञानं मृगयातोऽरितः क्षयः ॥
जितश्रमार्थं मृगयां विचरेद्रक्षिते वने ।
धर्मार्थप्राणनाशादि द्यूते स्यात्कलहादिकम् ॥
कालातिपातो धर्मार्थपीडा स्त्रीव्यसनाद्भवेत् ।
पानदोषात्प्राणनाशः कार्याकार्याविनिश्चयः ॥

## कालिकापुराणम्

व्यसनसप्तकनिषेधः, स्त्रीपानद्यूतानां
युक्त्या सेवनमनुमतम्

'आखेटकाक्षौ स्त्रीसेवा पानं चैवार्थदूषणम् ॥
वाग्दण्डयोश्च पारुष्यं सप्तैतानि विवर्जयेत् ।
परस्त्रीषु विरक्तासु सेवामेकान्ततस्त्यजेत् ॥

(१) अग्नि. २४१।१४-४१.

(१) कालिका. ८७।४०-४८.

सतीषु निजनारीषु युक्तं कुर्यान्निवेशनम् ।
रतिपुत्रफला दारास्तास्तु नैकान्ततस्त्यजेत् ॥
तयोः सिद्ध्यै स्त्रियः सेव्या
वर्जयित्वाऽतिसक्तताम् ।
मृगयां तु प्रमादानां स्थानं नित्यं विवर्जयेत् ॥
अक्षांस्तथा न कुर्वीत सत्कार्यासक्तिनाशनान् ।
अन्यैः कृतं कदाचित्तु सेवेत नाऽऽत्मना चरेत् ॥
अकार्यकरणे बीजं कृत्यानां च विवर्जने ।
अकालमन्त्रभेदे च कलहे सत्कृतिक्षये ॥
वर्जयेत्संततं पानं शौचमाङ्गल्यनाशनम् ।
अर्थक्षयकरं नित्यं त्यजेच्चैवाऽऽत्मदूषणम् ॥
अभिशस्तेषु चोरेषु घातकेष्वाततायिषु ।
सततं पृथिवीपालो दण्डपारुष्यमाचरेत् ॥
नान्यत्र दण्डपारुष्यं कुर्यान्नृपतिसत्तमः ।
वाक्पारुष्यं च सर्वत्र नैव कुर्यात्कदाचन ॥

## कामन्दकीयनीतिसारः

अव्यसनिनो राज्यम्, व्यसनशब्दव्युत्पत्तिः, व्यसननिषेधः, दैवमानुषव्यसनानि, प्रत्येकं सप्तानां प्रकृतीनां व्यसनानि तेषां लघुगुरुभावाः परिहारोपायाश्च

(१)वीतव्यसनमश्रान्तं महोत्साहं महामतिम् ।
प्रविशन्ति सदा लक्ष्म्यः सरित्पतिमिवाऽऽपगाः ॥

(१) वीतव्यसनं त्रितययोगादेव । अश्रान्तं असंतुष्टं महासत्त्वम् । महामतिं सूक्ष्मबुद्धिम् । प्रविशन्ति लक्ष्म्य इति । ता एव प्रतीपं प्रार्थयन्ते इत्यर्थः । जम.

(२) वीतं विरहितं व्यसनं यस्य तं अश्रान्त सततोद्योगेऽपि यस्य श्रमो नास्ति तं अत एव महोत्साहं महामतिं महती मतिः मन्त्रशक्तिः यस्य तं तादृशं विजिगीषुं आपगाः सरित्पतिमिव सदा लक्ष्म्यः प्रविशन्ति । उनिसा.

(१)सत्त्वबुद्ध्युपपन्नोऽपि व्यसनग्रस्तमानसः ।
स्त्रीभिः षण्ड इव स्त्रीभिरलसः परिभूयते ॥

(१) त्रयाणामप्युत्साहः प्रधानम्, तस्य साधकतमत्वादित्याह– सत्त्वबुद्ध्युपपन्नोऽपीत्यादि । व्यसनग्रस्तमानसः उत्साहवैकल्यादेव । जम.

(२) उत्साहप्रशंसामभिधाय प्रकृतिकर्म प्रकृतिव्यसनानि च अभिधत्ते– सत्त्वबुद्ध्युपपन्नोऽपीति । सत्त्वगुणसंपन्नः बुद्धियुक्तोऽपि यदि व्यसनासक्तमानसः अलसश्च उत्साहशक्तिविहीन इत्यर्थः, स्यात् तदा स्त्रीभिः षण्ड इव श्रीभिः परिभूयते । उनिसा.

(२)प्रकृतिव्यसनं यस्याात्तत्प्रशाम्य समुत्पतेत् ।
अनयापनयाभ्यां तज्जायते दैवतोऽपि च ॥

(१) एवं दर्शितोत्साहेन विजिगीषुणा व्यसनी परो यातव्यः । यदा तु स्वयं प्रकृतिव्यसनापन्नः स्यात् तदैवोत्साहमेवाऽऽस्थाय तत् प्रतिकृत्य यायात् । अन्यथा प्रकृतयो व्यसनापन्ना न स्वकर्माणि कुर्युरिति प्रकृतिकर्म प्रकृतिव्यसनानि चेति प्रकरणद्वयमुच्यते । तत्र व्यसनानां कारणनिर्वचनभेदप्रतीकारान् श्लोकपञ्चकेनाऽऽह– प्रकृतिव्यसनमित्यादि । समुत्पतेत् यायात् । कुतश्चैतत् स्यादित्याह– अनयापनयाभ्यामित्यादि । दैवं मानुषं च कर्म लोकं पालयति । तत्र दैवं अनयो नाम, मानुषं अपनयो नाम । यत् पूर्वजन्मकृतं कर्म तत् दैवम् । तस्मिन्निष्टेन फलेन योगः अयः, अनिष्टेन अनयः । यदिह क्रियते तन्मानुषम् । अस्मिन् योगक्षेमनिष्पत्तिः नयः, विपत्तिः अपनयः । तत्रानयापनयाभ्यां संयुक्ताभ्यां प्रकृतीनां व्यसनमुत्पद्यते । दैवतोऽपि चेति । अपिशब्दान्मानुषतोऽपि । इदमुक्तं भवति– दैवाद्वा केवलादनयलक्षणात् मानुषाद्वा केवलादपनयलक्षणादिति । जम.

(२) प्रकृतीनां कर्माणि चाभिधातुं प्रस्तौति– प्रकृतिव्यसनमिति । यस्मात् कारणात् स्वाम्यादिप्रकृतीनां व्यसनम्, भवतीति शेषः, तत् प्रशाम्य निवार्य

---

(१) कानी. १४।७.

(१) कानी. १४।८.

(२) कानी. १४।१८; उनिसा. यस्या (यस्मा).

समुत्पतेत् यात्रोद्योगं कुर्यात् । व्यसनं च कुतो भवतीत्याह– अनयापनयाभ्याम् । अयः शुभावहो विधिः, तस्य अभावः अनयः, अपनयः दुर्नीतिः, ताभ्याम् । दैवतोऽपि अदृष्टवशादपि जायते उत्पद्यते । उनिसा.

[१]व्यस्यत्यधो व्यसनमुच्यते ।
व्यसत्यधो वा व्रजति तस्मात्तत्परिवर्जयेत् ॥

(१) कथं तत उत्पन्नं व्यसनमित्युच्यत इत्याह– यस्मादित्यादि । व्यस्यति क्षिपति श्रेयः अभिमतमर्थमिति व्यसनम् । अधो वा व्रजतीति 'अस गतिदीप्त्यादानेषु' इत्यस्य धातोः प्रयोगं दर्शयति । विशब्दः अधःशब्दार्थे नाशे वा । अधो नाशं वा असति व्रजति अनेनेति व्यसनम् । जम.

(२) व्यसनशब्दं व्याख्यातुमाह– यस्मादिति । यस्माद्धेतोः श्रेयः परमाभ्युदयं व्यस्यति निरस्यति दूरं क्षिपति इत्यर्थः, तस्मात् तत् व्यसनं उच्यते, नीतिविद्भिरिति शेषः । व्यसनी पुरुषः अधोऽधः श्रेयसः पतित्वा अधोऽधो व्रजति, तस्मात् तत् व्यसनं परिवर्जयेत् यथासाध्यं परिहरेदित्यर्थः । 'व्यस्यति' इत्यत्र 'व्यसति' इति मुद्रितपुस्तकस्य पाठः । उनिसा.

[२]हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा ।
इति पञ्चविधं दैवं व्यसनं मानुषं परम् ॥

(१) पञ्चविधं दैवमिति । यदा पूर्वजन्मकृतमनवदातं कर्म स्वानुरूपकार्योत्पादनाभिमुखं तदा तत्प्रेरिताः हुताशनादयः पीडाहेतुत्वात् दैवं व्यसनमित्युच्यते । मानुषं परं दैवादन्यत् । तथाह्युक्तम्– '* गुणप्रातिलोम्यभावः प्रदोषसंप्रयोगः पीडा वा व्यसनम्' (कौ. ८।१) इति । तत्र पीडा दैवी मानुषी च । दैवी हुताशनादिका, मानुषी स्वपरचक्रादिका । तत्र दैवं पीडनं मुक्त्वाऽन्यत् सर्वं मानुषम् । जम.

(२) दैवकृतव्यसनभेदानाह– हुताशन इति । हुताशनः वह्निः । स हि ग्रामनगरादिकं दहति । जलं सलिलम् । तद्धि ग्रामादिकं प्लावयति । तृतीयो व्याधिः शारीरकपीडा । चतुर्थो दुर्भिक्षः अतिवृष्ट्यादिना अन्नाभावः । मरकः सांक्रामिकपीडादिना बहुप्राणिसंहारहेतुः । इत्येवं पञ्चविधं दैवं दैवकृतव्यसनम् । परं अवशिष्टं प्रत्यासन्नभूपादिकृतं व्यसनं मानुषमित्युच्यते । उनिसा.

[१]दैवं पुरुषकारेण शान्त्या वा प्रशमं नयेत् ।
उत्थायित्वेन नीत्या वा मानुषं कार्यतत्त्ववित् ॥

(१) तत् प्रशाम्य समुत्पतेदित्युक्तम् । तस्य शमनोपायमाह– दैवमिति । पुरुषकारेण मानुष्या प्रतिक्रियया वह्न्यादिप्रतिपक्षोपकरणसंपादनेनेत्यर्थः । शान्त्या दैव्या अथर्ववेदविहितया । उत्थायित्वेन दुर्गादिकर्मसु चेष्टया । नीत्या संध्यादीनां सामादीनां च यथोद्देशप्रयोगेण । कार्यतत्त्वविदिति यथोपेयमुपायप्रयोगं दर्शयति । जम.

(२) दैवं पञ्चविधमपि हुताशनादिनिमित्तं व्यसनं पुरुषकारेण हुताशनादीनां जलादिभिः उपशमनलक्षणपुरुषकारेण शान्त्या च अथर्ववेदोक्तया प्रशमं नयेत् । कार्यतत्त्ववित् नीतिकुशलो विजिगीषुः उत्थायित्वेन उत्साहशक्त्या नीत्या च नयेन च मानुषं व्यसनं प्रशमं नयेत् । पूर्वेणान्वयः । उनिसा.

[२]स्वाम्यादिमित्रपर्यन्तं प्राकृतं मण्डलं हि यत् ।
तस्य कर्म प्रवक्ष्यामि व्यसनं च यथाक्रमम् ॥

(१) इदानीं मित्रपर्यन्तं प्रकृतिकर्म तद्व्यसनान्यभिधित्सुराह– स्वाम्यादीत्यादि । प्राकृतं मण्डलं सप्तप्रकृतिकं राज्यं यदुक्तं प्राक् स्वाम्यादिप्रकृतिमण्डलम् । जम.

(२) स्वाम्यमात्यादिप्रकृतिसप्तकस्यानुष्ठेयानि व्यसनानि च आह– स्वाम्यादीति । स्पष्टम् । उनिसा.

मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः ।
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम् ॥

---

* 'गुणप्रातिलोम्यमभावः प्रदोषः प्रसङ्गः पीडा वा व्यसनम्' इति कौटिलीयार्थशास्त्रे वचनमुपलभ्यते ।

(१) कानी. १४।१९.

(२) कानी. १४।२० ; उनिसा. द्वितीयचरणे (दुर्भिक्षो मरकस्तथा).

(१) कानी. १४।२१ ; उनिसा. वा (च).

(२) कानी. १४।२२–२३.

(१) तत्र षट्त्रिंशता श्लोकैः प्रकृतिकर्माऽऽह— मन्त्र इत्यादि। बहुत्वात् स्वामिकर्म प्रकृतिकर्मणः पश्चात् वक्ष्यति। मन्त्रः कार्यनिश्चयः मन्त्र्यायत्तः। मन्त्रफलावाप्तिः दूरादेवामित्रानुत्सार्य या साध्यस्य फलस्य प्राप्तिः दूतायत्ता। कार्यानुष्ठानं दुर्गादिकर्मप्रवर्तनं अध्यक्षाधीनम्। आयतिः प्रभावः अमात्यैः क्रियते। आयव्ययौ अक्षपटलिकाधीनौ। दण्डनीतिः वधादीनां दण्डसाध्येषु यथार्हं नयनं धर्मस्थायत्तम्। अमित्रप्रतिषेधनं मित्राधीनम्। जम.

(२) बहुवक्तव्यत्वात्स्वामिकर्म तद्व्यसनं च पश्चात् वक्ष्यति। सूचीकटाहन्यायेन अमात्यकर्म तद्व्यसनं चाऽऽह— मन्त्र इति। अमात्यस्य मन्त्रः पञ्चाङ्गः। अलब्धलाभादिकस्य सूचनावधि प्रयोगपर्यन्तं कर्म मन्त्रशब्देन गृह्यते। मन्त्रफलावाप्तिः पृथिवीलाभपालनादिरूपा। कार्यानुष्ठानं एतदेव कार्यं क्रियतामित्येवं प्रेरणम्। आयतिः आगामिनि काले यत् भविष्यति तस्य शुभाशुभफलनिरूपणम्। आयः धनागमनिरूपणम्। व्ययः यथायोग्यस्थाने धनवितरणम्। दण्डनीतिः अपराधिनो दण्डार्हस्य यथाशास्त्रमर्थदण्डादिसाधनम्। अमित्रप्रतिषेधनं नीतिबलेन शत्रुदमनम्। उनिसा.

[१]**व्यसनस्य प्रतीकारो राजराज्याभिरक्षणम्।**
**इत्यमात्यस्य कर्मेदं हन्ति तद्व्यसनान्वितः॥**

(१) व्यसनस्य प्रकृतीनां प्रतीकारो मन्त्रिपुरोहिताधीनः। तथा राजराज्याभिरक्षणं मन्त्रिपुरोहिताधीनमेव। जम.

(२) व्यसनस्य दुःखमूलस्य दुर्भिक्षादेः प्रतीकारः निवारणम्। राजराज्याभिरक्षणं बुद्धिबलेन राज्ञो राज्यस्य च अभिरक्षणं परिपालनं तयोरनिष्टापातनिवारणमिति भावः। इति अमात्यस्य कर्म। सः मन्त्री व्यसनेन वक्ष्यमाणलक्षणेन अन्वितः इदं सर्वं हन्ति। व्यसनिनो मन्त्रिणः कर्तव्यं कर्म किमपि न सिध्यतीति भावः। 'राजराज्याभिरक्षणम्' इत्यत्र 'राजराज्याभिषेचनम्' इति मुद्रितपाठः। उनिसा.

[२]**अमात्यैर्व्यसनोपेतैर्ह्रियमाणो हि भूपतिः।**
**अशक्त एवोत्पतितुं छिन्नपक्ष इवाण्डजः॥**

(१) ह्रियमाणः श्रेयसः सकाशात्। छिन्नपक्ष इव, पक्षस्थानीयत्वादमात्यादीनाम्। जम.

(२) अमात्यव्यसनं स्वामिन एव व्यसनं भवतीति निदर्शयन्नाह— अमात्य इति। अमात्ये मन्त्रिणि व्यसनोपेते धूर्तैररिभिः ह्रियमाणे परिगृह्यमाणेऽपि च महीपतिः छिन्नपक्षः अण्डजः पक्षीव उत्पतितुं अभिसंधानादिप्रतीकारं कर्तुं अशक्त एव असमर्थ एव। प्रथमार्धे 'आमात्ये व्यसनोपेते ह्रियमाणे' इत्यत्र 'अमात्यैर्व्यसनोपेतैर्ह्रियमाणो' इति मुद्रितपाठः। अत्र च 'अमात्ये व्यसनोपेते शक्तियुक्तो महीपतिः' इति पाठान्तरम्। 'अशक्त एवोत्पतितुम्' इत्यत्र 'अशक्त एवोत्पतति' इति मुद्रितपाठः। उनिसा.

[३]**हिरण्यवस्त्रधान्यादि वाहनादि तथैव च।**
**तथाऽन्ये द्रव्यनिचयाः प्रजातः संभवन्ति हि॥**

(१) हिरण्यं सुवर्णरजतादि। वस्त्रं त्वक्फलकृमिरोमभेदाच्चतुर्विधम्। तदुभयं कोशप्रवेश्यम्। धान्यं (पूर्वमध्यापकवाचकं ?) कोष्ठागारप्रवेश्यम्। वाहनं गजाश्वादि दण्डौपयिकम्। द्रव्यनिचयाः सारदार्वादयो दुर्गौपयिकाः। प्रजातः जनपदात्। जम.

(२) राष्ट्रकर्म राष्ट्रव्यसनं चाऽऽह— हिरण्येति। सुवर्णधान्यवसनवाहनप्रभृतिद्रव्याणि प्रजाभ्यः संभवन्ति इत्यर्थः। उनिसा.

[४]**वार्ता प्रजा साधयति वार्ता वै लोकसंश्रया।**
**प्रजायां व्यसनस्थायां न किंचिदपि सिध्यति॥**

(१) साधयति संपादयति। वार्ता लोकसंश्रया, तत्प्रतिबद्धत्वाल्लोकस्थितेः। जम.

---

(१) कानी. १४।२४; उनिसा. तद्य (स व्य).

(१) कानी. १४।२५; उनिसा. पूर्वार्धे (अमात्ये व्यसनोपेते ह्रियमाणे महीपतिः।).

(२) कानी. १४।२६.

(३) कानी. १४।२७; उनिसा. श्रया (श्रयः).

( २ ) एतदेव स्पष्टयन्नाह– वार्तामिति । प्रजा वार्तां कृषिवाणिज्यपाशुपाल्यलक्षणां साधयति संपादयति । तथाहि वार्ता लोकसंश्रया लोकनिष्ठा नानालोकेषु वर्तते इत्यर्थः । प्रजायां ब्राह्मणादिवर्णेषु व्यसनस्थायां विपन्नायां सत्यां किंचिदपि न सिध्यति, सर्वेषां वार्तामूलकत्वादित्यर्थः । उनिसा.

**[1]प्रजानामापदि त्राणं रक्षणं कोशदण्डयोः ।**
**पौराश्चैवोपकुर्वन्ति संश्रयायेह दुर्गिणाम् ॥**

(१) आपदि पराभियोगे जनपदस्य त्राणं रक्षणं कोशदण्डयोः । अन्यथा दुर्गाभावे कोशदण्डौ परेषामेव स्यातामित्याह– पौराः तन्निवासिनः उपकुर्वन्ति कोशादिना । दुर्गिणां राज्ञाम् । जम.

( २ ) दुर्गस्य कार्ये व्यसनं चाऽऽह– प्रजानामिति । आपदि विपक्षकृतनगराद्यवरोधकाले । प्रजानां स्थानं आत्मरक्षार्थमाश्रयः । तथैव कोषदण्डयोः कारणं धनागाररक्षायाः दण्डरक्षायाश्च साधनम् । पौराश्च संश्रयाय आपदि आश्रयनिमित्तं दुर्गिणां दुर्गपतीनां राज्ञां उपकुर्वन्ति, धनप्रदानादिनेति शेषः । उनिसा.

**[2]तूष्णींयुद्धं जनत्राणं मित्रामित्रपरिग्रहः ।**
**सामन्ताटविकाबाधानिरोधो दुर्गसंश्रयात् ॥**

( १ ) तूष्णींयुद्धं योगगूढोपजापादिना । जनत्राणं दुष्टनिग्रहेण । मित्रामित्रपरिग्रहः प्रोत्साहेन । मध्यमोदासीनलिप्सायां हि दुर्गसंश्रयात्तदेव मित्रामित्रानुत्साहयेत् । आबाधा पीडा, तस्या निरोधः । दुर्गसंश्रयात् दुर्गे सर्वमेवैतत् कर्मोच्यते । जम.

( २ ) दुर्गे स्थित्वा परैरविज्ञातो यत् सहसा परितः पतित्वा युद्धं तत् तूष्णींयुद्धम् । जनत्राणं जनानामापन्नानां त्राणं परिरक्षणम् । मित्रामित्रपरिग्रहः मित्रामित्रयोः व्यापन्नयोः परिग्रहः ग्रहणम् । एतच्च दुर्गबलादेव भवति । सामन्तानां संसक्तानां आटविकानां च या आबाधा आक्रमणादिकं तस्याः निरोधः निवारणम् । एतत् सर्वं दुर्गेणैव विधीयते । अतः दुर्गं उच्यते, दुःखेन गम्यत्वादिति भावः । उनिसा.

**[1]स्वपक्षैः परपक्षैश्च दुर्गस्थः पूज्यते नृपः ।**
**एतद्धि दुर्गव्यसनात्सर्वमेव विपद्यते ॥**

( १ ) स्वपक्षैः पूज्यते, कालेऽस्माकं मता( ? कमसावा )श्रय इति । अशक्योच्छेदोऽयमिति परपक्षैः स्तूयते । जम.

( २ ) दुर्गस्थः दुर्गाधिकारी नृपः राजा स्वपक्षैः परपक्षैश्च पूज्यते । दुर्गबलेन निग्रहानुग्रहक्षमत्वादिति भावः । दुर्गव्यसनात् दुर्गसंस्काराद्यभावात् एतत् सर्वमेव न विद्यते । एतेषां सर्वेषामभावो भवतीति भावः । उनिसा.

**[2]भृत्यानां भरणं दानं भूषणं वाहनक्रियाः ।**
**स्थैर्यं परोपजापश्च दुर्गसंस्कार एव च ॥**

( १ ) भरणं पोषणम् । दानं भृत्येभ्य एव तुष्टिकाले । स्थैर्यं कोशात्, सर्वापत्प्रतरणहेतुत्वात् । परोपजापत्वात् तत्रालब्धप्रकृतिभेदः ( ? ) । जम.

( २ ) कोषप्रकृतेः कर्मव्यसने आह– भृत्यानामिति । भृत्यानां चतुरङ्गबलादीनां भरणं भृतिः , दानं सोपाधिकं निरुपाधिकं च, भूषणं अलंकरणम्, वाहनक्रयः वाहनानां हस्त्यश्वादीनां क्रयः मूल्येन ग्रहणम्, स्थैर्यं कोषबलात् दृढत्वम्, परोपजापश्च परेषां शत्रुबलानां उपजापः भेदनम्, दुर्गसंस्कार एव च । एतत् सर्वमेव कोषव्यसाध्यम् । उनिसा.

**[3]सेतुबन्धो वणिकर्म प्रजामित्रपरिग्रहः ।**
**धर्मकामार्थसिद्धिश्च कोषादेतत्प्रवर्तते ॥**

( १ ) सेतुबन्धः सस्यार्थे जलाधारबन्धः । वणिक्कर्म वाणिज्यम् । प्रजापरिग्रहः शून्यनिवेशकाले । मित्रपरिग्रहः पराभियोगकाले । धर्मसिद्धिः पात्रेभ्यः प्रदानात् ।

---

(१) कानी. १४।२८ ; उनिसा. त्राणं रक्षणं ( स्थानं कारणं ).

(२) कानी. १४।२९ ; उनिसा. संश्रयात् ( मुच्यते ).

(१) कानी. १४।३० ; उनिसा. विपद्यते ( न विद्यते ).

(२) कानी. १४।३१ ; उनिसा. क्रियाः ( क्रयः ).

(३) कानी. १४।३२ ; उनिसा. धर्मकामार्थ ( धर्मार्थकाम ).

कामसिद्धिः शरीरपरिभोगकरणात् । अर्थसिद्धिः 'अर्थैरर्था निबध्यन्ते ' इति न्यायात् । जम.

(२) सेतुबन्धः धान्यादीनां शस्यानामुत्पत्तये आलिबन्धनम्, नदीपारे गमनागमनाय च सेतुनिर्माणम् । वणिक्कर्म वाणिज्यं कोषमूलमेव । प्रजामित्रपरिग्रहः क्षीणाक्षीणप्रजा मित्राणि च कोषेणैव परिगृह्यन्ते । धर्मार्थकामानां सिद्धिश्च त्रिवर्गनिष्पत्तिश्च । एवं सर्वं कोषादेव प्रवर्तते । उनिसा.

'कोशमूलो हि राजेति प्रवादः सार्वलौकिकः ।
एतत्सर्वं जहात्याशु कोशव्यसनवान् नृपः ॥

(१) कोशमूल इति । अन्यथा हि कोशविकलः कथं स्वामीत्युच्यते ? ऐश्वर्याभावात् । जम.

(२) राजा हि कोषमूलः, कोषाभावे न राजत्वनिष्पत्तिरित्यर्थः । इति प्रवादः जनश्रुतिः सार्वलौकिकः सर्वलोकप्रसिद्धः । कोषव्यसनवान् नृपतिरेतत् सर्वं पूर्वोक्तसमुदायं जहाति । कोषाभावे सेतुबन्धवणिक्कर्मादिकं किमपि न सिध्यतीति भावः । उनिसा.

क्षीणं बलं वर्धयति स्वतो गृह्णाति च प्रजाः ।
कोषवान् पृथिवीपालः परैरप्युपजीव्यते ॥

(१) क्षीणं बलं वर्धयति स्वतः वित्तात्, अन्यथा कोशाभावे दण्डः परं गच्छति । स्वतो गृह्णाति प्रजाः क्षीणाः । परैरपि शत्रुभिः । जम.

(२) कोषवान् प्रभूतधनसंपन्नः पृथिवीपालः क्षीणं संग्रामादिना अपचीयमानं बलं वर्धयति । स्वतश्च प्रजाः क्षीणाक्षीणा गृह्णाति । परैरपि शत्रुभिरपि उपजीव्यते । धनलोभेन शत्रवोऽपि तस्य कार्यं साधयन्तीत्यर्थः । उनिसा.

'मित्रामित्रहिरण्यानां भूमीनां च प्रसाधनम् ।
दूरकार्याशुकारित्वं लब्धस्य परिपालनम् ॥

(१) मित्रामित्राणां अपचिकीर्षतां हिरण्यानां दुःसाधानां च भूमीनां सामन्ताटविकादिभिराक्रान्तानां प्रसाधनं दण्डेन आत्मसात्करणम् । दूरकार्याशुकारित्वं देशान्तरितस्य द्रुतसंपादनशीलता । लब्धस्य कोशादेः । जम.

(२) दण्डकर्मव्यसने चाभिधातुमाह— मित्रामित्रेति । मित्राणि बान्धवाः, अमित्राः शत्रवः, हिरण्यानि च, तेषां भूमीनां च अधिकृतप्रदेशानां च प्रसारणं परिवर्धनम्, दूरकार्येषु व्यवहितकर्मसु आशुकारित्वं शीघ्रकारिता, लब्धस्य राज्यादिकस्य परिपालनम्, एतत्सर्वं दण्डसाध्यमेवेत्यर्थः । उनिसा.

'परचक्रविघातश्च स्वदण्डस्य परिग्रहः ।
दण्डादेतत्प्रभवति याति तद्व्यसने क्षयम् ॥

(१) परचक्रविघातः परबलस्याभियुञ्जानस्य व्याघातः । स्वदण्डस्य परिग्रहः स्वस्य दण्डैकदेशस्य पराभवशङ्कायां परिरक्षणेन परिग्रहः । जम.

(२) परचक्राभिघातश्च परचक्राणां शत्रुसंबन्धिचतुरङ्गबलानां अभिघातः विनाशः । स्वदण्डस्य परेण परिपीड्यमानस्येत्यर्थः, परिग्रहः रक्षणम् । दण्डात् एतत् सर्वं प्रकर्षेण भवति, तद्व्यसने च क्षयं याति । उनिसा.

'अरयोऽपि हि मित्रत्वं यान्ति दण्डवतो ध्रुवम् ।
दण्डप्रायो हि नृपतिर्भुनक्त्याक्रम्य मेदिनीम् ॥

(१) अरयोऽपि मित्रत्वं यान्ति दण्डवतः । दण्डप्रायः दण्डबहुलः । जम.

(२) ध्रुवं निश्चयेन दण्डवतः नृपतेः अरयः शत्रवोऽपि मित्रत्वं यान्ति, दण्डभयादिति भावः । शेषार्धं स्पष्टम् । उनिसा.

'संस्तम्भयति मित्राणि शत्रूनुत्सादयत्यपि ।
भूकोशदण्डैर्व्रजति प्राणैश्चाप्युपकारिताम् ॥

(१) मित्रकर्माऽऽह— संस्तम्भयति मित्राणि विजिगीषोर्यानि बलाधिकानि अ(रि ?)मित्रा भवन्ति,

---

(१) कानी. १४।३३–३४.
(२) कानी. १४।३५ ; उनिसा. धनम् ( रणम् ).

(१) कानी. १४।३६ ; उनिसा. चक्रवि ( चक्राभि ).
(२) कानी. १४।३७.
(३) कानी. १४।३८ ; उनिसा. द्वितीयचरणे ( ह्यमित्रान् नाशयत्यपि ).

विजिगीषुभयात् वा अमित्रानाश्रयन्ति । प्राणैः पराभियोगकाले । जम.

( २ ) मित्राणि विकलत्वात् विचलन्ति संस्तम्भयति । अमित्रान् विजिगीषून् नाशयत्यपि । मित्रमिति कर्तृपदं ऊह्यम् । भूकोषदण्डैः प्राणैश्चापि उपकारितां व्रजति भूमिधनदानादिना प्राणव्ययेनापि च उपकारं करोतीति भावः । ' अमित्रान् ' इत्यत्र ' अमित्रम् ' इति ' उपकारिताम् ' इत्यत्र ' उपकारिणे ' इति क्वचित्पाठः । उनिसा.

[1]ततः करोति सुबहु मित्रं स्नेहनिबन्धनम् ।
तस्मिन् व्यसनमापन्ने मित्रकर्म न विद्यते ॥

( १ ) तत्तत् करोति यद्यत् विजिगीषोरनुकूलम् । स्नेहनिबन्धनं तद्ध्युपकारनिरपेक्षं भवति । जम.

( २ ) ततः स्नेहनिबन्धनं परस्परप्रीतिजनितं सुबहु मित्रं करोति साधयति । तस्मिन् मित्रे व्यसनं आपन्ने सति मित्रकर्म मित्रसाध्यं कार्यं न विद्यते न सिध्यतीत्यर्थः । ' ततः करोति ' इत्यत्र ' तत्तत्करोति ' इति पाठान्तरम् । उनिसा.

[2]उपकाराद्दतेऽप्याशु मित्रं श्रेयसि तिष्ठति ।
मित्रवान् साधयत्यर्थान् दुःसाधानप्यनादरात् ॥

( १ ) तदेव स्फुटयन्नाह– उपकाराद्दत इति । श्रेयसि विजिगीषुहिते । जम.

( २ ) उपकाराद्दते प्रत्युपकारं विनाऽपि मित्रं श्रेयसि श्रेयस्करकार्ये तिष्ठति शुभं संपादयतीत्यर्थः । मित्रवान् राजा दुःसाध्यानपि अर्थान् विषयान् अनादरात् अनायासेन साधयति । उनिसा.

[3]एतत्सर्वममात्यादि राजा नयपुरःसरः ।
नयत्युन्नतिमुद्युक्तो व्यसनी क्षयमेव तु ॥

(१) कानी. १४।३९ ; जम. ततः करोति सु ( तत्तत्करोति च ).

(२) कानी. १४।४० ; उनिसा. दुःसाधा (दुःसाध्या).

(३) कानी. १४।५९ ; उनिसा. राजा ( नृपो ).

( १ ) सप्तानामपि स्वामिप्रकृतिः प्रधानमिति दर्शयन्नाह– एतदित्यादि । नयत्युन्नतिं अतिवृद्धिम् । कूटस्थस्थानीयो हि स्वामी, तदायत्तत्वादमात्यादीनाम् । जम.

( २ ) नयपुरःसरः नीतिमार्गानुसारी उद्युक्तः उद्योगशीलः नृपः राजा एतत् पूर्वोक्तं सर्वं अमात्यादि राज्यं च उन्नतिं नयति । तु किंतु व्यसनी अनन्तरोक्तवाक्पारुष्यदण्डपारुष्यार्थदूषणपानस्त्रीमृगयाद्यूतरूपव्यसनवान् राजा क्षयमेव नयति । उनिसा.

[1]तस्मिन् धर्मार्थयोर्व्यग्रे तथैवास्वस्थचेतसि ।
सर्वमेतद्विशेषेण मन्त्री संनेतुमर्हति ॥

( १ ) अस्यापवादमाह– तस्मिन्निति । राज्ञि धर्मार्थयोर्व्यग्रे, व्यसनप्रवृत्ते तु मन्त्र्यपि तत् विद्वान्न शक्नोति संनेतुमुन्नतिम्, स यच्छीलस्तच्छीला हि प्रकृतयो भवन्तीति । अस्वस्थचेतसि पर(वश)शरीरे । जम.

( २ ) तस्मिन् राजनि धर्मोपार्जनार्थोपार्जनयोर्व्यग्रे, तथा च अस्वस्थचेतसि रोगादिना विकृतचित्ते सति मन्त्री एतत् सर्वं अशेषेण साकल्येन संधातुं संपादयितुं अर्हति । ' संधातुम् ' इत्यत्र ' संनेतुम् ' इति पाठान्तरम् । उनिसा.

[2]वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ॥

( १ ) येषु व्यसनेषु प्रकृतिकर्म न विद्यते तानि व्यसनान्येकत्रिंशता श्लोकैराह– वागित्यादि । एतानि सप्त महाव्यसनानि कोपकामजानि विस्तरतो द्वितीये सर्गे वक्ष्यति । जम.

( २ ) एवं प्रकृतिसप्तकस्य प्रत्येकं कर्म प्रतिपादितम्, इदानीं व्यसनं प्रतिपाद्यते– वाग्दण्डयोरिति । वाक्पारुष्यं वचनैः परदुःखोत्पादनम् । दण्डपारुष्यं तीक्ष्णदण्डता । अर्थदूषणं अर्थानां अदानमादानं नाशस्त्यागश्च । तथा च कौटिल्यः– [ ' अदानमादानं विनाशः परित्यागो वाऽर्थस्येत्यर्थदूषणम् ' ( कौ. ८।३ )

(१) कानी. १४।६० ; उनिसा. तथैवा ( तथा चा ) तद्विशे ( तदशे ) संनेतु ( संधातु ).

(२) कानी. १४।६१–६४.

इति ।] अदानं पूर्वभृतस्य पुनरस्य यददानं तेन पूर्वदत्तोऽप्यर्थो विनष्टो भवति । आदानं दत्तस्य पुनराच्छेदनमपि तथैवानर्थाय भवति । नाशोऽपि चौरादिभिरपहारः । त्यागः उपनतस्यार्थस्य परित्यागः । इत्येव (अर्थ)दूषणमुच्यते । पानं सुरासक्तिः । स्त्री रमणीष्वासक्तिः । मृगया मृगमारणासक्तिः । द्यूतं अक्षक्रीडादि । व्यसनानि । महीपतेरित्युपलक्षणं सामान्यजनस्यापीति बोध्यम् । 'व्यसनानि महीपतेः' इत्यत्र 'व्यसनं पृथिवीपतेः' इति पुस्तकान्तरस्य पाठः । उनिसा.

**आलस्यं स्तब्धता दर्पः प्रमादो वैरकारिता ।**
**इति पूर्वोपदिष्टं च सचिवव्यसनं स्मृतम् ॥**

(१) स्तब्धता मानः । दर्पः मदः । प्रमादः अनवधानता । पूर्वोपदिष्टं वाक्पारुष्यादि । जम.

(२) तथा मन्वादिकथितान्यपि व्यसनानि अभिधत्ते– आलस्यमिति । आलस्यं दीर्घसूत्रता निरुद्यमो वा । स्तब्धता गुरुषु (अ)प्रश्रयः जडता वा । दर्पः शौर्याद्यहंकारः । प्रमादः अनवधानता अवशेन्द्रियता वा । वैरकारिता वैरकारणं विनाऽपि बहुभिः सह वैरकरणम् । इति इत्येतदालस्यादि पूर्वोपदिष्टं च वाक्पारुष्यादि सप्तसंख्यं यथा महीपतेस्तथा सचिवस्यापि व्यसनम् । 'पूर्वोपदिष्टं च' इत्यत्र 'पूर्वोपदिष्टं हि' इति पाठान्तरम् । उनिसा.

**अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः ।**
**असत्करश्च दण्डश्च परचक्राणि तस्कराः ॥**

(१) मूषिकाः शलभादय इति । आदिशब्दादग्निदुर्भिक्षोपग्रहः । असत्करः अशोभनः करः अतिमहत्त्वात् । परबलं पीडाहेतुत्वात् । जम.

(२) राष्ट्रव्यसनमाह– अतिवृष्टिरिति । असत्करः असदुपायेन करसंग्रहः । यथा करसंग्राहकेण प्रदेशपतिना प्रथमं करे संगृहीतेऽपि तत्प्रतारणया अप्राप्तकरेण भूपालेन पुनरपि करसंग्रहार्थं प्रजानां शस्यादिनिर्लुण्ठनम् । दण्डः विद्रोहिशङ्कया प्रजानां धनधान्यादिकस्याऽऽत्मसात्करणम् । परचक्राणि विपक्षभूपालादिकृताक्रमणावरोधविलुण्ठनादिकम् । तस्कराः आटविकादयः । शेषः सुगमः । उनिसा.

**राजानीकप्रियोत्सर्गो मारकव्याधिपीडनम् ।**
**पशूनां व्यसनं रोगो राष्ट्रव्यसनमुच्यते ॥**

(१) राज्ञो यत् सैन्यं ये च वल्लभाः तेषामनियमः उत्सर्गः । मारकव्याधिपीडनं मनुष्याणाम् । जम.

(२) राजानीकप्रियोत्सर्गः राजानीकानां राजवल्लभानां च उत्सर्गः राज्यपरित्यागः । एतत्सर्वं राष्ट्रव्यसनमुच्यते । उनिसा.

[१]**विशीर्णयन्त्रप्राकारपरिखात्वमशस्त्रता ।**
**क्षीणघासेन्धनान्नत्वं दुर्गव्यसनमुच्यते ॥**

(१) यन्त्रं सर्वतोभद्रादि । परिखा खातकम् । जम.

(२) दुर्गव्यसनमाह– विशीर्णेति । दुर्गस्थितानां यन्त्राणां प्राकाराणां परिखाणां च विशीर्णत्वं जीर्णता इति भावः । अशस्त्रता धनुःशरकृपाणभल्लतोमरपरशुगदाप्रभृतिशस्त्रहीनता । घासानां पशूनामाहारीयतृणविशेषाणां इन्धनानां अन्नानां च क्षीणता स्वल्पता । एतत्सर्वं दुर्गव्यसनमुच्यते । 'क्षीणघासेन्धनान्नत्वम्' इत्यत्र 'क्षीणवासेन्धनान्नत्वम्' इति मुद्रितः पाठः । उनिसा.

[२]**व्ययीकृतः परिक्षिप्तो भक्षितोऽसंचितस्तथा ।**
**मुषितो दूरसंस्थश्च कोशव्यसनमुच्यते ॥**

(१) व्ययीकृतः असद्व्ययेन । परिक्षिप्तः मण्डलस्थानेषु खण्डखण्डेनावस्थितः । भक्षितः कृमिभिः । असंचितः दुर्न्यस्तः । मुषितः सामन्ताटविकादिभिः । दूरसंस्थः विजिगीषुप्रदेशात् । जम.

(२) कोषव्यसनमाह– व्ययीकृत इति । व्ययीकृतः भृत्यादिभ्यो दत्तः । परिक्षिप्तः बहुधा विक्षिप्तः । भक्षितः, रक्षकादिभिरिति शेषः । असंचितः न संगृहीतः । मुषितः चौरादिभिरपहृतः । दूरसंस्थः व्यवहितः । एतत् सर्वं कोषव्यसनमुच्यते । उनिसा.

(१) कानी. १४।६५.
(२) कानी. १४।६६.

[1]उपरुद्धं परिक्षिप्तं विमानितममानितम् ।
अभृतं व्याधितं श्रान्तं दूरायातं नवागतम् ॥

( १ ) दण्डव्यसनमाह— उपरुद्धमित्यादि । जम.

( २ ) संप्रति बलव्यसनमाह— उपरुद्धमिति । उपरुद्धं शत्रुसैन्येन कृतोपरोधमित्यर्थः । परिक्षिप्तं परि समन्तात् वेष्टितं विशृङ्खलया नानाप्रदेशे विकीर्णं वा । विमानितं विगतमानं अपमानितमित्यर्थः । अमानितं असंमानितम् । अमतं अनिष्टं अप्रियमित्यर्थः । स्पष्टमन्यत् । 'अमतम्' इत्यत्र 'अभृतम्' इत्यपि पाठः । अभृतं अप्रदत्तवेतनम् । उनिसा.

[2]परिक्षीणं प्रतिहतं प्रहताग्रजवं तथा ।
आशानिर्वेदभूमिष्ठमनृतप्राप्तमेव च ॥

परिक्षीणाग्ररहितं परिक्षीणं हतभूयिष्ठम्, अग्ररहितं हतमुख्यप्रवीरं अधिनायकहीनमित्यर्थः । अग्रे जवः वेगः यस्य सः अग्रजवः संग्रामे अग्रवर्ती, प्रहतः अग्रजवः अग्रवर्ती वीरो यस्य तत् । आशानिर्वेदभूयिष्ठं आशया निर्वेदेन च भूयिष्ठम् । बलवत्या आशया बलवता निर्वेदेन च अनायत्तचित्तमित्यर्थः । 'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना' ( साहित्यदर्पणः ३।१४२ ) इति दर्पणम् । उनिसा.

[3]कलत्रगर्भ्यतिक्षिप्तमन्तःशल्यं तथैव च ।
भिन्नगर्भं ह्यपसृतमवमुक्तं तथैव च ॥

कलत्रं कुलस्त्री गर्भे विद्यते यस्य तत् । विक्षिप्तं अनेकराज्ये विकीर्णं सुदूरं प्रेषितं वा । अन्तःशल्यं अन्तर्गतामित्रशल्यम् । भिन्नगर्भं अन्योन्यमेव निर्भिन्नम् । अपसृतं स्वराज्य एव मण्डलान्तरव्यवहितम् । अवियुक्तं कदापि न देशान्तरितम् । 'अवियुक्तम्' इत्यत्र 'अपकृष्टम्' इति पाठे युद्धे अशिक्षितमित्यर्थः । 'परिमृष्टम्' इति पाठे युद्धशिक्षां कुर्वन्तमित्यर्थः (?) । उनिसा.

[1]क्रुद्धमौलारिमित्रं च निविष्टं चापि विद्विषा ।
दूष्ययुक्तं स्वविक्षिप्तं मित्रविक्षिप्तमेव च ॥

क्रुद्धमौलाविमिश्रम्— मौलं पितृपैतामहं सैन्यम्, क्रुद्धं मौलं यत्र तत्, अविमिश्रं विभिन्नमतम् । विद्विषा विशिष्टं शत्रुणा एकत्र स्थितम् । दूष्ययुक्तं दूष्येण विपक्षेण युक्तं मिलितम् । स्वविक्षिप्तं स्वविषये विक्षिप्तं क्षिप्तवत् वर्तमानम् । मित्रविक्षिप्तं मित्रकार्यार्थे क्षिप्तम् । उनिसा.

[2]विच्छिन्नवीवधासारं शून्यमूलं तथैव च ।
अस्वामिसंगतं चैव भिन्नकूटं तथैव च ॥

वीवधः धान्यादेः प्राप्तिः । आसारः सुहृद्बलम् । विच्छिन्नौ ध्वस्तौ वीवधासारौ यत्र तत् । 'विछिन्नविविधासारम्' इति पाठान्तरम् । शून्यमूलं शून्यं मूलं जनपदे धनकलत्रादिरक्षास्थानं यस्य तत् । अस्वामिसंगतं स्वामिनोऽनुमतिं विना यत् संगतम् । भिन्नकूटं भिन्नं पृथक् पृथक् कूटं छलं यत्र तत् । उनिसा.

[3]दुष्पार्ष्णिग्राहमन्धं च बलव्यसनमुच्यते ।
अत्र किंचिदसाध्यं तु किंचित्साध्यं तदुच्यते ॥

( १ ) अत्र किंचिदिति त्रयस्त्रिंशद्बलव्यसनेषु । तदुच्यते यत् साध्यमसाध्यं च । जम.

( २ ) दुष्पार्ष्णिग्रहं दुरभिसंधियुक्तपार्ष्णिग्रहसमेतम् । अन्धं देशाद्यनभिज्ञम् । 'अन्धम्' इत्यत्र 'अज्ञम्' इत्यपि पाठः । एतत् सर्वं बलव्यसनमुच्यते । अत्र बलव्यसने किंचित् साध्यं प्रयत्नेनापनेतुं शक्यम्, किंचित् असाध्यम् । एतत् द्वयं पश्चादुच्यते । उनिसा.

---

(१) कानी. १४।६७ ; उनिसा. अभृतं ( अमतं ).

(२) कानी. १४।६८ ; उनिसा. प्रथमचरणे ( परिक्षीणाग्ररहितं ) दभूमिष्ठ ( दभूयिष्ठ ).

(३) कानी. १४।६९ ; उनिसा. गर्भ्यति ( गर्भे वि ) मवमु ( मवियु ).

(१) कानी. १४।७० ; उनिसा. रिमित्रं ( विमिश्रं ) निविष्टं ( विशिष्टं ).

(२) कानी. १४।७१.

(३) कानी. १४।७२ ; उनिसा. ग्राह ( ग्रह ).

[1]उपरुद्धं तु युध्येत निर्गत्यान्यत ऊर्जितम् ॥
परिक्षिप्तं न निर्मार्गं सर्वतः परिवेष्टितम् ॥

(१) अन्यत इति अनुपरुद्धेन मार्गेण निर्गत्य। सर्वतः परिवेष्टितं निर्गमाभावात् कथं युध्येत ? जम.

(२) बलव्यसनेषु किं साध्यं किमसाध्यमित्याह—उपरुद्धमिति। उपरुद्धं शत्रुणा कृतावरोधं बलं निर्गत्य यदा अत्यन्तमूर्जितं बलवत् भवति तदा युध्येत। 'अपरुद्धम्' इति मुद्रितपाठः। परिक्षिप्तं परि समन्तात् वेष्टितं अत एव निर्मार्गं न, युध्येत इति शेषः। उनिसा.

अमानितं हि युध्येत कृतमानार्थसंग्रहम्।
न विमानितमत्यर्थं प्रदीप्तक्रोधपावकम् ॥

(१) कृतमानार्थसंग्रहं कृतो मानार्थाभ्यां स्वीकारो यस्येति विग्रहः। विमानितं वाक्पारुष्यादिना। क्रोधपावकः क्रोध एव पावकः। जम.

(२) अमानितं असंमानितं बलं कृतमानार्थसंग्रहं सत् कृतः मानार्थाभ्यां संग्रहो यस्य तत् युध्येत। साध्यमेतत्। विमानितं विगतमानं अपमानितमित्यर्थः, अत्यर्थं प्रदीप्तक्रोधपावकं समुज्ज्वलकोपानलं अत एव न युध्येत। अपमानात् प्रदीप्तकोपानलस्य कोपशान्तिरसाध्यैव। उनिसा.

[2]युध्येताभृतमत्यर्थं तदात्वकृतवेतनम्।
न व्याधितमकर्मण्यं व्याधितं परिभूयते ॥

(१) तदात्वकृतवेतनं समुत्पन्नकार्यकाले दत्तवेतनम्। अकर्मण्यं व्याधिपीडितत्वात् युद्धादिकर्मासमर्थं परिभूयते च। जम.

(२) अभृतं अप्रदत्तवेतनं तदात्वे कृतवेतनं तत्कालं दत्तवेतनं युध्येत। साध्यमेतत्। व्याधितं अकर्मण्यं न, युध्येतेति शेषः। यतः व्याधितं पीडितं परिभूयते पराभवमाप्नोति। असाध्यमेतत्। उनिसा.

[3]परिश्रान्तं हि युध्येत विश्रान्तं सुविधानतः।
दूरायातं हतप्राणं न शस्त्रग्रहणे क्षमम् ॥

(१) विश्रान्तं सुविधानतः स्नानभोजनस्वप्नादिभिः। हतप्राणं दूराध्वपरिपीडितत्वात्। जम.

(२) परिश्रान्तं बलं सुविधानतः स्नानभोजनादिना विश्रान्तं विगतश्रमं सत् युध्येत। साध्यमेतत्। दूरायातं दूरात् मित्रकार्यं संपाद्य दूरदेशात् आयातं अत एव हतप्राणं निःसत्त्वं न शस्त्रग्रहणक्षमं न शस्त्रग्रहणे समर्थं भवति। असाध्यमेतत्। उनिसा.

नवागतं हि युध्येत तद्देश्यैर्मिश्रितं नयात्।
हतमुख्यप्रवीरं तु परिक्षीणं न युध्यते ॥

(१) नवागतं अन्यदेशादागतम्। तद्देश्यैः तत्रत्यैर्बलैः मिश्रितं नयात् तद्देश्योपलब्धदेशम्। हतमुख्यप्रवीरं अन्यत्राऽऽहवे। (परिक्षीणं) क्षीणवाहनयोधम्। जम.

(२) नवागतं अभिनवागतं तद्देश्यैः तद्देशसंभूतैर्बलैः मिश्रं युध्येत। साध्यमेतत्। हतमुख्यप्रवीरं हताः मुख्यप्रवीराः धुरंधराः यस्य तत् अत एव परिक्षीणं न, युध्येतेति शेषः (?)। 'हतमुख्यप्रवीरं तु' इत्यत्र 'हतमुख्यमवीरं तु' इति मुद्रितपाठः। उनिसा.

[1]युध्यते हि प्रतिहतं प्रवीरैः सह संगतम्।
हताग्रवेगं शक्तं न प्रमाथितपुरःसरम् ॥

(१) प्रतिहतं प्रथमसंपातभग्नम्। प्रमाथितपुरःसरं निहताग्रवीरं शूराभावान्न तच्छक्तम्। जम.

(२) प्रतिहतं अन्यैर्वीरैर्भग्नं प्रवीरैः सह संगतं मिलितं सत् युध्येत। साध्यमेतत्। हताग्रजं हतः अग्रजः श्रेष्ठः यस्य तत् अत एव प्रमाथितपुरःसरं प्रमाथितः ध्वस्तः पुरःसरः सेनानीः यस्य तत् अनासक्तं सङ्ग्रामपराङ्मुखं न युध्यते इति परश्लोकेनान्वयः। 'हताग्रजमनासक्तम्' इत्यत्र 'हताग्रजं च नाऽऽसक्तम्' इति पाठान्तरम्। उनिसा.

---

(१) कानी. १४।७३–७४.
(२) कानी. १४।७५ ; उनिसा. दात्व (दात्वे).
(३) कानी. १४।७६–७७.

(१) कानी. १४।७८ ; उनिसा. तृतीयचरणे (हताग्रजमनासक्तं).

[१]आशानिर्वेदलब्धार्थं पूर्णांशत्वात्तु युध्यते ।
अभूमिष्ठं प्रसारे न निरुद्धेऽल्पतया भुवः ॥

( १ ) प्रत्याशाया निर्वेदः भङ्गः अस्यास्तीति मत्वर्थीयः । अभूमिष्ठं अयुद्धयोग्यभूमिप्राप्तम् । प्रसारः व्यायामः , तस्मिन् भूमेरल्पत्वान्निरुद्धे । जम.

( २ ) आशानिर्वेदलब्धार्थं आशायां निर्वेदे च सिद्धप्रयोजनं अत एव पूर्णांशं न युध्यते, युद्धप्रवृत्तिकारणापगमादिति भावः । निरुद्धे अवरुद्धे सति अभूयिष्ठप्रसारे अल्पपरिसरस्थाने भुवोऽल्पतया न, युध्येतेति शेषः । 'आशानिर्वेदलब्धार्थं पूर्णांशं नात्र युध्यते' इत्यत्र 'आशानिर्वेदि लब्ध्वा तु शुध्यते न तु युध्यते' इति पाठान्तरम् । उनिसा.

[२]युध्येतावृतसंप्राप्तं यथार्हायुधवाहनम् ।
कलत्रगर्भि चोन्नीतकलत्रं समरक्षमम् ॥

( १ ) यथाशक्त्या( ? थार्हा )युधवाहनं यथाकालैरायुधवाहनैर्युक्तम् । कलत्रगर्भि चेति । अयुद्धयोग्यः स्त्रीकर्मकरवर्गः कलत्रम् , तेनान्तःप्रविष्टेन युक्तम् । समरं युद्धम् । जम.

( २ ) आवृतसंप्राप्तं पूर्वमावृतं शत्रुसैन्येन कृतावरोधं पश्चात् संप्राप्तं अपसृतं बलं यथार्हायुधवाहनं सत्त्वानुरूपसंपादितशुद्धवाहनं सत् युध्येत । 'यथार्हायुधवाहनम्' इत्यत्र 'अपूर्वायुधवाहनम्' इति मुद्रितपाठः। कलत्रगर्भात् कलत्रं कुलस्त्री गर्भे यस्य तस्मात् सैन्यसमूहात् उन्नीतकलत्रं अपसारितकलत्रं बलं संगरक्षमं युद्धकरणे समर्थम् , भवतीति शेषः । उनिसा.

[३]अनेकराज्यान्तरितमतिक्षिप्तं न युध्यते ।
अन्तर्गतामित्रशल्यमन्तःशल्यं हि न क्षमम् ॥

( १ ) अनेकराज्यान्तरितं शत्रुमित्रादिराज्यातिक्रान्तम् । अमित्र एव शल्यम् । जम.

( २ ) अनेकराज्यान्तरितं मित्रसाहाय्यार्थं प्रेषितं अनेकैः राज्यैः अन्तरितं व्यवहितं अत एव अतिक्षिप्तं अतिदूरं प्रेषितं न युध्यते । अन्तःशल्यं अन्तर्गतामित्रशल्यं अन्तर्गतं अमित्राणां शत्रूणां शल्यं यस्य तत् न क्षमं युद्धकरणे न समर्थमित्यर्थः । उनिसा.

[१]अन्योन्यस्माद्विनिर्भिन्नं भिन्नगर्भं न युध्यते ।
तथैवापसृतं शक्तं नैकराज्यान्तरीकृतम् ॥

( १ ) अन्योन्यस्मात् विनिर्भिन्नं परस्परभयान्न युध्येत । नैकराज्यान्तरीकृतमिति शत्रुराज्यैनैकान्तरितं न युध्यते । एतच्चातिक्षिप्ताल्लघु व्यसनम् । जम.

( २ ) भिन्नगर्भं बलं अन्योन्यमेव निर्भिन्नं परस्परं विरोधि, तत् न युध्यते । तथा च अपसृतं स्वाधिकारमध्ये मण्डलान्तरव्यवहितम् । तथा राज्यान्तरीकृतं भिन्नराज्ये प्रेरितम् । अत्यर्थं श्रान्तत्वात् न युद्धक्षममिति भावः । उनिसा.

[२]अवमुक्तमपक्रान्तमुख्यं तन्न क्षमं युधि ।
पितृपैतामहं मौलं तत्क्रुद्धं सान्त्वितं क्षमम् ॥

( १ ) शौर्यादियुक्ता मुख्याः , तेऽपसृता यस्मात् तत् बलमपक्रान्तमुख्यम् । तन्न क्षमं युधि । मुख्येषु हि युद्धम् , न क्षुद्रेषु । सान्त्वितं क्षममिति । यत् मौलं कुपितं तत् सान्त्वितं युधि क्षममिति योज्यम् । जम.

( २ ) अवियुक्तं न देशान्तरगतम् । देशान्तरगमनाभावात् सङ्ग्रामदक्षताभावः । अपक्रान्तं पलायितं युधि योद्धुं न क्षमम् । 'परिमृष्टं ह्युपक्रान्तम्' इति पाठे परिमृष्टं अर्थादुपक्रान्तं अशिक्षितमित्यर्थः । मौलं मूलतः स्थितं पितृपैतामहमित्यर्थः । क्रुद्धं तत् बलं सान्त्वितं सान्त्वनाप्राप्तं क्षमम् , योद्धुमिति शेषः । उनिसा.

---

(१) कानी. १४।७९ ; उनिसा. निर्वेध ( निर्वेद ) शत्वात्तु ( शं नात्र ) भूमिष्ठं ( भूयिष्ठ ).

(२) कानी. १४।८० ; उनिसा. वृत ( वृत ) गर्भि चो ( गर्भात्तु ).

(३) कानी. १४।८१.

(१) कानी. १४।८२ ; उनिसा. न्यस्माद्वि ( न्यमेव ) तथैवा ( तथा चा ) शक्तं नैक ( चैव तथा ).

(२) कानी. १४।८३ ; उनिसा. अवमु ( अवियु ) क्रान्तमुख्यं ( क्रान्तं योद्धुं ).

¹मित्रं शत्रुमिरेकस्थं तदाक्रान्ततयाऽक्षमम् ।
शत्रोरुपनिविष्टं तत्सामर्थ्यान्न क्षमं युधि ॥

( १ ) एकस्थमिति शत्रुभिः सह यात्रायामेकस्थानस्थितम् । तदरिमित्रं बलम् । तदाक्रान्ततयेति अरिमित्रापगृहीतत्वादक्षमम् । उपनिविष्टं शत्रोः समीपे निविष्टम् । पृथग्यानावस्थितं प्राधान्यानवस्थानादाक्रान्तं भवति, ततश्चासामर्थ्यान्न क्षमं युधि । जम.

( २ ) मिश्रं अर्थात् शत्रुभिरेकस्थं शत्रुभिः आक्रान्ततया निरुद्धप्रसरं बलं अक्षमम् । शत्रोः उपनिविष्टं शत्रुकर्तृकसमीकृतशिबिरनिवेशं बलं न सामर्थ्यात् सामर्थ्याभावात् युधि अक्षमम् । असाध्यमेतत् । उनिसा.

²दूष्ययुक्तं तदुद्धाराद्युध्येतोद्धृतकण्टकम् ।
प्रधानयोधसंगुप्तं दूष्ययुक्तं समुत्पतेत् ॥

( १ ) तदुद्धारादिति शल्योद्धारात् उद्धृतकण्टकं भवति । अनुद्धारे वा गत्यन्तरमाह– प्रधानयोधसंगुप्तमिति । आप्तयोधाधिष्ठितं हि दूष्ययुक्तं समुत्पतेत् युध्येत । जम.

(२) दूष्ययुक्तं बलं न युध्येत । तदेव उद्धृतकण्टकं अपनीतदूष्यं युध्येत । पक्षान्तरमाह– प्रधानयोधसंगुप्तं वीरप्रधानेन संरक्षितं दूष्यं चापि बलं समुत्पतेत् युद्धार्थं संपतेत् । 'प्रधानयोधसंगुप्तं दूष्यं चापि समुत्पतेत्' इत्यत्र 'प्रधानयोधसंयुक्तं दूष्ययुक्तं समुन्नयेत्' इति मुद्रितः पाठः । उनिसा.

³स्वविक्षिप्तं स्वविषये क्षिप्तमापद्युदाहृतम् ।
प्रकृष्टदेशकालत्वान्मित्रक्षिप्तमयौगिकम् ॥

(१) कानी. १४।८४; उनिसा. मित्रं ( मिश्रं ) तत्सा ( यत्सा ) न्न क्षमं ( न्नाक्षमं ).

(२) कानी. १४।८५; उनिसा. तदुद्धाराद्यु ( न युध्येत यु ) दूष्ययुक्तं स ( दूष्यं चापि स ).

(३) कानी. १४।८६; उनिसा. ये क्षिप्त (याक्षिप्त) त्रक्षिप्त ( त्रोत्क्षिप्त ).



( १ ) स्वविक्षिप्तं आपद्युदाहृतम् । कौटिलीये तथा-ह्युक्तम्– 'स्वविक्षिप्तं स्वभूमौ विक्षिप्तं सैन्यमापदि शक्यमावाहयितुम्, न मित्रविक्षिप्तं प्रकृष्टदेशत्वात्' ( कौ. ८।५ ) इति । मित्रविक्षिप्तं असाध्यसाधनार्थं मित्रेषु दत्तम् । जम.

( २ ) स्वविक्षिप्तं अर्थात् आपदि आपत्काले स्वविषये आत्मकार्ये आक्षिप्तं संपूर्णमाकृष्टम् । एवं प्रकृष्टदेशकालत्वात् मित्रकार्यसाधनार्थं उत्क्षिप्तं अयौगिकं युद्धयोगाय न समर्थं भवति । 'स्वविषयाक्षिप्तम्' इत्यत्र 'सुविषयाक्षिप्तम्' इति मुद्रितः पाठः । उनिसा.

¹धान्यादेर्विवधः प्राप्तिरासारस्तु सुहृद्बलम् ।
विच्छिन्नवीवधासारं बलं युद्धाय नेष्यते ॥

( १ ) धान्यादेरिति । आदिशब्दात् स्नेहक्षारलवणभैषज्यादिपरिग्रहः । स्वदेशात् तेषां पृष्ठतः प्राप्तिः विवधः । मित्रबलं आसारः । तदुभयं विच्छिन्नं यस्य तदाहारादिवैक्लव्यान्न युद्धाय । जम.

( २ ) वीवधः धान्यादेः प्राप्तिः । आदिपदात् वस्त्रघृतलवणादि सर्वं स्कन्धावारोपयोगि गृह्यते । बहुपुस्तकेषु 'धान्यादेर्वीवधा( ? विवधः ) प्राप्तिः' इति पाठः । 'विवधो वीवधश्चापि पर्याहारे' इति मेदिनी । आसारः सुहृद्बलम् । विच्छिन्नः वीवधः आसारश्च यस्य तत् सैन्यं युद्धाय न इष्यते, आहारप्रतिबलाभावादिति भावः । 'युद्धाय नेष्यते' इत्यत्र 'युद्धाय नेक्ष्यते' इति च पाठः । उनिसा.

²कृतजानपदारक्षं शून्यमूलं युधि क्षमम् ।
(*पितृपैतामहं मौलं तेन शून्यं हि न क्षमम् ॥

* कंसचिह्नगतं श्लोकार्धद्वयं निष्प्रयोजनं जयमङ्गलापुस्तके लिखितमपि जयमङ्गलया न व्याख्यातम्, मुद्रितपुस्तके नास्ति, द्वितीयार्धमुपाध्यायनिरपेक्षानुसारिण्यां नास्ति । ततः प्रक्षिप्तमिति भाति ।

(१) कानी. १४।८७; उनिसा. विंव ( वींव ) बलं यु ( सैन्यं यु ).

(२) कानी. १४।८८; उनिसा. हि न ( न तत् ) श्लोकार्धयोर्व्यत्यासः.

[1]युध्यते शून्यमूलं हि यत्नान्मौलेन पालितम् । )
अस्वामिसंगतं नैव स्वामिना यद्विनाकृतम् ॥

(१) शून्यमूलमिति शून्यं स्थानीयं यस्य तत् जानपदैः कृतमूलरक्षणं सर्वसंदोहेन युध्येत । स्वामिना यद्विनाकृतमिति यन्नाऽऽपत्यधिष्ठितं तदस्वामिसंगतं नैव युधि क्षमम् । जम.

(२) मौलं पितृपैतामहम् । तेन मौलेन शून्यं तत् बलं न क्षमं न युद्धे समर्थमित्यर्थः । शून्यमूलं कलत्रादि-रक्षास्थानच्युतम्, अपीति शेषः, कृतजानपदारक्षं कृता जानपदैः आरक्षा, कलत्रादीनामिति शेषः, यस्य तत् बलं युधि क्षमं संग्रामे समर्थम् । स्वामिना विना यत् कृतं नियुक्तं तत् अस्वामिसंहतम् । तादृशं बलं न युध्येत इति परश्लोकेनान्वयः । प्रथमचरणद्वयं मुद्रितपुस्तके नास्ति । श्लोकाङ्कसामञ्जस्यरक्षणाय मया षड्भिश्चरणै-रेकः श्लोको गृहीतः । 'कृतजानपदारक्षम्' इत्यत्र 'कृतजानपदारक्ष्यम्' इति मुद्रितपुस्तकस्य पाठः । उनिसा.

[2]न युध्यते भिन्नकूटं भिन्नकूटमनायकम् ।
पश्चात्कोपातिसंतप्तं दुष्पार्ष्णिग्राहमक्षमम् ॥

(१) भिन्नकूटं अनायकं विनष्टारिमीय (? ष्टात्मीय)-स्वामिपदम् । तत् भर्तृवधामर्षितं भर्तृपिण्डेन निर्वेशार्थं युध्येत । दुष्पार्ष्णिग्राहमिति । दुष्टः पार्ष्णिग्राहो यस्य तत् । किमयं करिष्यतीति पृष्ठाभिघातत्रस्तं न तत् क्षमम् । जम.

(२) भिन्नकूटं भिन्नः कूटः दम्भः यस्य तत् । सर्वमेव स्वस्वप्रधानं अत एव अनायकम् । तथा च पश्चात् कोपाभिसंतप्तं रोषाभिभूतं दुष्पार्ष्णिग्राहं दुः दुरभिसंधियुक्तः पार्ष्णिग्राहो यस्य तादृशं बलं अक्षमं संग्रामे अयोग्यमित्यर्थः । उनिसा.

[1]अदेशिकं स्मृतं ह्यन्धं तन्मूढत्वात्क्रियाक्षमम् ।
बलव्यसनमित्यादि तत्समीक्ष्य समुत्पतेत् ॥

(१) देशिकः उपदेष्टा । स्वयं तावत् बलमदेश-कुशलम्, तस्योपदेष्टाऽपि नास्तीत्यदेशिकम् । मूढत्वात् अन्धत्वादस्य सर्पवत् प्रवर्तनं क्रियास्वक्षमम् । बलव्यसन-मित्यादि । आदिशब्दात् कामकोपजव्यसनोपग्रहः । तत् समीक्ष्य साध्यासाध्यतया । जम.

(२) आदेशिकं देशानभिज्ञम्, तत् अन्धं स्मृतम् । तन्मूलत्वात् क्रियायां युद्धक्रियायां अक्षमम् । 'आदे-शिकं स्मृतं ह्यन्धं तन्मूलत्वात्क्रियाक्षमम्' इत्यत्र 'आदे-शिकं स्मृतं युद्धं मूढत्वान्न क्रियाक्षमम्' इति मुद्रित-पाठः । उपसंहरन्नाह– बलव्यसनमित्यादीति । अत्र आदिपदात् अन्यान्यपि द्यूतस्त्रीपानादीनि आक्षिप्यन्ते । तत् समीक्ष्य तत् प्रतीकारानन्तरं पर्यवसानं समालोक्य पश्चात् युद्धार्थं समुत्पतेत् । उनिसा.

[2]दैवोपपीडितं ग्रस्तं मित्रं शत्रुबलेन च ।
कामक्रोधसमुत्थैश्च दोषैः संपरिकीर्तितैः ॥

(१) मित्रव्यसनमाह– दैवोपपीडितमिति । दैव-व्यसनाभिभूतम् । कामक्रोधसमुत्थितैः मृगयादिभि-र्वाक्पारुष्यादिभिश्च स्वदोषैर्ग्रस्तम् । जम.

(२) मित्रव्यसनमाह– दैवोपपीडितमिति । दैवान्यु-पपीडनानि कथितप्रकाराणि व्याधिमरकादीनि, तैः समा-क्रान्तम्, शत्रुबलेन ग्रस्तं आक्रान्तम्, तथा संपरि-कीर्तितैः कथितैः कामक्रोधसमुत्थैश्च दोषैः ग्रस्तं मित्रम्, व्यसनोपेतमिति शेषः । मृगया अक्षाः स्त्रियः पानमिति कामजश्चतुर्वर्गः । वाक्पारुष्यं दण्डपारुष्यं अर्थदूषणमिति क्रोधजस्त्रिवर्गः । उनिसा.

नरेन्द्राद्याः प्रकृतयः सप्त याः परिकीर्तिताः ।
पूर्वं पूर्वं गुरुतरं तासां व्यसनमुच्यते ॥

---

(१) कानी. १४।८९; उनिसा. गतं नैव (हतं चैव) उत्त.

(२) कानी. १४।९०; उनिसा. ध्यते (ध्येत) पाति (पाभि).

(१) कानी. १४।९१; उनिसा. अदे (आदे) तन्मूढ (तन्मूल).

(२) कानी. १४।९२–९३.

(१) अरिविजिगीष्वोः प्रकृतिव्यसनयौगपद्ये सौकर्यतो यातव्यं चेति दर्शयितुमाह– नरेन्द्राद्या इत्यादि । पूर्वं पूर्वं गुरुतरमिति । तत्र मित्रव्यसनात् दण्डव्यसनं गरीयः, दण्डेन मित्रामित्राणां साधनात् । दण्डवतो मित्राणाम- (? मित्राणि )मित्रभावे तिष्ठन्ति, अमित्राश्च मित्रभावे। ततोऽपि कोशव्यसनं गरीयः । कोशेन हि क्षीणं बलं वर्धते । कोशाभावे च दण्डः परं गच्छति । ततोऽपि दुर्गव्यसनम्, तत्र हि कोशदण्डयोः संश्रयात् । तदभावे च कोशः परेषामेव स्यात् । ततोऽपि जनपदव्यसनम्, तन्मूलत्वात् दुर्गकोशदण्डमित्राणाम् । तस्मादप्यमात्य-व्यसनं गरीयः, जनपदे हि सर्वारम्भाणाममात्यपूर्वकत्वात् सर्वकर्मसिद्धीनां तद्व्यसनप्रतीकारस्य च । ततोऽपि स्वामि-व्यसनम्, स्वामिना हि शेषप्रकृतीनामसंपन्नानां संपाद-नात् संपन्नानां चाभिवर्धनात्। जम.

(२) व्यसनतारतम्यमाह– नरेन्द्राद्या इति । मित्र-व्यसनात् दण्डव्यसनम्, ततोऽपि कोषव्यसनम्, ततोऽपि दुर्गव्यसनम्, ततोऽपि राष्ट्रव्यसनम्, ततोऽपि अमात्य-व्यसनम्, अमात्यव्यसनात् स्वामिव्यसनं गरीय इति तात्पर्यम् । उनिसा.

[1]इत्यादि सर्वं प्रकृतेर्यथावद्
बुध्येत राजा व्यसनं प्रयत्नात् ।
बुद्ध्या च शक्त्या व्यसनस्य कुर्या-
दकालहीनं व्यवरोपणं सः ॥

(१) व्यसनप्रदर्शनफलमाह– इत्यादीति । अकाल-हीनं व्यवरोपणम्, कालातिक्रमे हि तदप्रतीकार्यमपि स्यात् । जम.

(२) राजा इत्यादि 'वाग्दण्डयोश्च पारुष्यम्' एतत्प्रभृति 'दुष्पार्ष्णिग्राहमन्धं च बलव्यसनमुच्यते' एतत्पर्यन्तं सर्वं प्रकृतं प्रकृतेः प्रस्तुतं व्यसनं यथा-वत् बुध्येत अनुसंदध्यात् । तथा च प्रयत्नात् यत्नेन बुद्ध्या ज्ञानेन शक्त्या सामर्थ्येन च व्यसनस्य पूर्वोल्लिखितस्य अकालहीनं न कालेन यथायोग्यसमयेन हीनं व्यपेतं व्यपरोपणं अपसारणं कुर्यात् । 'बुध्येत राजा व्यसनं प्रयत्नात् बुद्ध्या च शक्त्या व्यसनस्य कुर्यात् । अकालहीनं व्यपरोपणं स राजा प्रजारञ्जनतत्परो भवेत् ॥' इति पुस्तकान्तरस्य पाठः । उनिसा.

[1]प्रकृतिव्यसनानि भूतिकामः
समुपेक्षेत न हि प्रमाददर्पात् ।
प्रकृतिव्यसनान्युपेक्षते यो
नचिरात्तं रिपवः पराजयन्ते ॥

(१) यदाह– प्रकृतिव्यसनानीत्यादि । प्रमादात् दर्पात् कामासङ्गात् शौर्यावलेपाच्च । जम.

(२) कालात्यये हि व्यसनं व्याधिवदसाध्यं स्यादिति तदुपेक्षायां दोषं दर्शयन्नाह– प्रकृतिव्यसनानीति । इन्द्रियाद्यर्थेषु गीतवाद्यादिषु प्रसक्तिरत्र प्रमादशब्देनाभि-धीयते । दर्पः पौरुषादिजनितोऽहंकारः । तस्मात् यः राजा प्रकृतिव्यसनानि उपेक्षते रिपवः नचिरात् तं पराभवन्ति इति प्रतीतम् । उनिसा.

इदमिदमिति सम्यक् कर्मणा योजनीयं
नियतमिति विचिन्त्य प्रापयेदीहमानः ।
सुनयपिहितरन्ध्रः प्राकृतो यस्य वर्गः
क्षितिपतिरुपभुङ्क्ते स त्रिवर्गं चिराय ॥

(१) इदमिति वस्तुमात्राभिधानान्नपुंसकलिङ्गता । इतिशब्दस्तस्मादर्थे । प्रकृतिव्यसने यस्मादयं दोषस्तस्मा-दियं प्रकृतिरनेन कर्मणा योजनीया तेन चेयमिति सम्यक् विचिन्त्य पश्चाच्चेष्टमानस्तत् नियतं कर्म प्रापयेत् प्रकृतिम् । ततः किं स्यादित्याह– सुनयपिहितरन्ध्र इति । कर्म-प्रापणलक्षणेन सुनयेन प्रच्छादितव्यसनः । प्राकृतः सप्तप्रकृतिकः वर्गः । जम.

(२) इदं चेदं च कार्यं स्वविषये दुर्गादिकं परविषये संध्यादिकं विचिन्त्य मन्त्रपूर्वकं निश्चित्य सम्यक् कर्मणा योजनीयं अनुष्ठेयम् । ततश्च ईहमानः चेष्टमानः राजा नियतं निश्चयेन प्रापयेत् समापयेत् । यस्य नृपतेः प्राकृतो वर्गः प्रकृतीनां स्वाम्यमात्यादीनां वर्गः समूहः सुनयपिहितरन्ध्रः सुनयेन शास्त्रोपदिष्ट-

---

(१) कानी. १४।९४; उनिसा. कृतेर्य (कृतं य) व्यव (व्यप).

(१) कानी. १४।९५–९६.

रीत्या पिहितं रन्ध्रं छिद्ररूपव्यसनं यस्य तथा सः क्षितिपतिः चिराय त्रिवर्गं धर्मार्थकामरूपं उपभुङ्क्ते । उनिसा.

[1]अमात्याद्याः प्रकृतयो मित्रान्ता राज्यमुच्यते ।
अशेषराज्यव्यसनात्पार्थिवव्यसनं गुरु ॥

(१) प्रकृतिव्यसनेषु सप्तवर्गस्य महाव्यसनत्वात्तद्दोषदर्शनार्थमस्मिन् सर्गे सप्तव्यसनवर्ग उच्यते । तत्रेदं विचिन्त्यते— 'पूर्वं पूर्वं गुरुतरम्' (कानी. १४।९३) इत्युक्तम्, तत्र राज्ञो राज्यस्य चोभयोर्व्यसने कतरत् गुर्वित्याह— अमात्याद्या इति । अशेषराज्यव्यसनात् पार्थिवव्यसनं गुर्विति । सप्तप्रकृतिकं राज्यमिति नेह द्रष्टव्यमिति । अशेषराज्यव्यसनादिति । अमात्या(दी)नां बहुत्वात् तद्व्यसनमेव गुर्विति पूर्वपक्षवादिनोऽभिप्रायः । जम.

(२) राजराज्यव्यसनयोः स्वरूपं तारतम्यं चाऽऽह— अमात्याद्या इति । अमात्यः आद्यो यासां ताः षडपि मित्रान्ता राज्यमुच्यते । स्पष्टमन्यत् । उनिसा.

राजा त्वव्यसनी राज्यव्यसनापोहनक्षमः ।
न राजव्यसनापोहे समर्थं राज्यमूर्जितम् ॥

(१) राज्यव्यसनापोहनक्षमः स्वयमव्यसनित्वात् राज्यव्यसनापोहनसमर्थः । राज्यमूर्जितमपि । स यच्छीलस्तच्छीलास्तस्य प्रकृतयो भवन्ति, उत्थाने प्रमादे च तदायत्तत्वात् । कूटस्थानीयो हि स्वामीति । जम.

(२) अव्यसनी राजा राज्यव्यसनापोहनक्षमः षडङ्गराज्यव्यसनस्य निराकरणे समर्थः । ऊर्जितं व्यसनादिशून्यं राज्यं न राजव्यसनापोहसमर्थं न राज्ञो व्यसनदूरीकरणे समर्थं भवति । उनिसा.

[2]आत्मामात्यप्रजादुर्गकोशानां दण्डमित्रयोः ।
व्यसनेभ्यः समुन्नेता राजा यः स त्रिवर्गभाक् ॥

(१) तस्मादात्मीयव्यसनापोहे स एव पक्ष (१ दक्ष) इत्याह— आत्मेत्यादि । तत्र द्विधा राजा— चक्षुष्मान् (अचक्षुष्मांश्च) । चक्षुष्मानपि द्विविधः— सुगृहीतशास्त्रोऽगृहीतशास्त्रश्च । तत्र यः सुगृहीतशास्त्रश्चक्षुष्मान् स व्यसनेभ्यः समुन्नेता समुत्थापयिता । जम.

(२) आत्मनः अमात्यानां प्रजायाः कोषस्य दुर्गस्य दण्डमित्रयोश्च व्यसनेभ्यः समुन्नेता वियोजकः यो राजा स त्रिवर्गभाक् धर्मार्थकामभाजनं भवति । उनिसा.

[1]अशास्त्रचक्षुर्नृपतिरन्ध इत्यभिधीयते ।
वरमन्धो न चक्षुष्मान् मदादाक्षिप्तसत्पथः ॥

(१) शास्त्रमेव चक्षुस्तदस्य नास्तीति कृत्वा अन्ध उच्यते । वरमन्धो न चक्षुष्मानिति । चलितशास्त्रस्तु अचक्षुष्मान् । स हि शास्त्रादन्यथा निविष्टबुद्धिः ज्ञानमदाक्षिप्तसन्मार्गो भवति (?) । जम.

(२) अशास्त्रचक्षुः नास्ति शास्त्रं नीतिशास्त्ररूपं चक्षुर्यस्य सः नृपतिः अन्ध इत्यभिधीयते । अन्धः शास्त्रलोचनरहितः नृपतिः वरम्, तथापि मदात् गर्वात् आक्षिप्तसत्पथः परित्यक्तसन्मार्गः चक्षुष्मान् नृपतिर्न । तथाहि— अन्धो नृपतिः मन्त्रिभिर्मन्त्रकुशलैरसन्मार्गात् निवर्त्यते, चक्षुष्मांस्तु मदान्धः कुमार्गमाश्रितः आत्मानं राज्यं चाशेषतो हन्ति । उनिसा.

मन्त्रिभिर्मन्त्रकुशलैरन्धः पथि निवेश्यते ।
चक्षुष्मांस्तु मदान्धः सन्नात्मानं हन्त्यशेषतः ॥

(१) तदेव स्फुटयन्नाह— मन्त्रिभिरिति । 'अन्धः संचार्यते धर्मात्' इत्याचार्यैरविगुप्तपादैः । अशेषतः सह राज्येन हन्तीत्यर्थः । जम.

(२) आत्मानं सराज्यमपीत्यर्थः । स्पष्टम् । उनिसा.

शास्त्रचक्षुर्नृपस्तस्मान्महामात्रमते स्थितः ।
धर्मार्थप्रतिघातीनि व्यसनानि परित्यजेत् ॥

(१) यस्मादन्धेऽपि दोषः तस्मात् सुगृहीतशास्त्रचक्षुषा भवितव्यम्, तस्यैव व्यसनापोहनसामर्थ्यात् । यदाह— शास्त्रचक्षुरिति । महामात्रमते स्थितः, नृपामात्ययोर्हि परस्परानुकूलयोः सर्वसंपत्संभवात् ।

(१) कानी. १५।१–२.

(२) कानी. १५।३; उनिसा. दुर्गकोशानां (कोशदुर्गाणां).

(१) कानी. १५।४–८.

धर्मार्थप्रतिघातीनीति । धर्मार्थयोः प्रधानत्वात् तदुपघातीनि त्यजेत् । जम.

(२) धर्मार्थौ प्रतिघ्नन्ति यानि तानि धर्मार्थप्रतिघातीनि धर्मार्थविध्वंसकानि व्यसनानि परित्यजेत् । उनिसा.

**वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।**
**स्मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयम् ॥**

(१) तानि व्यसनान्याह– वागित्यादि । क्रोधजं व्यसनत्रयम्, वाक्पारुष्यादीनां कोपसमुत्थत्वात् । जम.

(२) वाक्पारुष्यं दण्डपारुष्यं अर्थदूषणं चेति व्यसनत्रयं क्रोधजं स्मृतम् । उनिसा.

**कामजं मृगया द्यूतं स्त्रियः पानं तथैव च ।**
**व्यसनं व्यसनार्थज्ञैश्चतुर्विधमुदाहृतम् ॥**

(१) कामजं व्यसनं चतुर्वर्गम्, मृगयादीनामिच्छाप्रभवत्वात् । जम.

(२) कामजं व्यसनं चतुर्विधम् । 'चतुर्विधम्' इत्यत्र 'चतुष्टयम्' इति पाठान्तरम् । स्पष्टम् । उनिसा.

**[1]वाक्पारुष्यं परं लोक उद्वेजनमनर्थकम् ।**
**न कुर्याद्विप्रियां वाचं प्रकुर्याज्जनमात्मसात् ॥**

(१) तत्रैकादशभिः श्लोकैः कोपजस्य दोषानाह– वाक्पारुष्यमित्यादि । अपवादः कुत्सनं अभिभर्त्सनं चेति वाक्पारुष्यम् । तदनर्थकं न कुर्यात् । कार्यापेक्षया क्रियमाणं न व्यसनमिति । जम.

(२) वाक्पारुष्यं वाचां तीक्ष्णत्वं लोके उद्वेजनम्, अत एव अनर्थकृत् अनर्थं अपायं करोतीति । तस्मात् तत् न कुर्यात् । प्रियया वाचा जगत् आत्मसात् प्रकुर्यात् । 'अनर्थकृत्' इत्यत्र 'अनर्थकम्' इति, 'आत्मसात्' इत्यत्र 'आत्मताम्' इति, 'वाक्पारुष्यं परम्' इत्यत्र 'वाक्पारुष्यपरम्' इति मुद्रितपुस्तकस्य पुस्तकान्तरस्य च पाठः । उनिसा.

(१) कानी. १५।९ ; उनिसा. र्थकम् ( र्थकृत ).

**[1]अकस्मादेव यः कोपात्परुषं बहु भाषते ।**
**तस्मादुद्विजते लोकः सस्फुलिङ्गादिवानलात् ॥**

(१) कथं तदुद्वेजनमित्याह– अकस्मादित्यादि । बहुभाषणम्, दुरुक्तमित्यर्थात् । तस्मादुद्विजते लोकः, दुर्वचनदण्डत्वात् । जम.

(२) 'कोपात्परुषम्' इत्यत्र 'कोपादभीक्ष्णम्' इति मुद्रितपाठः । इति प्रतीतम् । उनिसा.

**हृदये वागसिस्तीक्ष्णो मर्मच्छिन्नितपन् मुहुः ।**
**तेजस्विनं दीपयति स दीप्तो याति वैरिताम् ॥**

(१) दोषान्तरमाह– हृदय इत्यादि । जम.

(२) हृदये हृदयस्थित इत्यर्थः, मर्मच्छित् मर्मभेदी तीक्ष्णो वागसिः तेजस्विनं जनं दीपयति । दीप्तः उद्दीप्तश्च स वैरितां याति । 'तेजस्विनं दीपयति' इत्यत्र 'तेन च्छिन्नो नरपतिः' इति मुद्रितपाठः । उनिसा.

**नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग् भवेत् ।**
**प्रायेण प्रियवाक्कर्मा कृपणोऽपि हि सेव्यते ॥**

(१) नोद्वेजयेत् जगत् यथोक्तदोषपरिहारार्थम् । प्रियवाक्कर्मा प्रियाभिधायी । कृपणः अदाता । जम.

(२) कृपणो लुब्ध उच्यते । उनिसा.

**[2]असिद्धसाधनं सद्भिः शासनं दण्ड उच्यते ।**
**तं युक्त्यैव नयेद्दण्डं युक्तदण्डः प्रशस्यते ॥**

(१) दण्डपारुष्यमाह– असिद्धसाधनमिति । अर्थहरणं ताडनं वधश्चैतत् त्रितयं असिद्धार्थसाधनात् अनुशासनं दण्डः । तं युक्त्यैव नयेत् अनुशास्ये यथार्हमेव प्रवर्तयेत्, युक्तदण्डस्य राज्ञः प्रशस्यत्वात् । तेन एवंविधो न व्यसनमिति । जम.

(२) असिद्धस्य प्रतिपक्षादेः दण्डनक्रियया साधनं दण्डः । तथा शासनं शिक्षणमपि दण्डः उच्यते सद्भिः । तथा च कौटिल्यः– 'वधः परिक्लेशोऽर्थहरणं दण्डः' ( कौ. २।१७ ) इति । तं दण्डं युक्त्यैव शास्त्रोक्तप्रमाणेनैव नयेत् प्रापयेत् । दण्डये दण्डार्हे जने युक्त-

(१) कानी. १५।१०–१२.
(२) कानी. १५।१३ ; उनिसा. दण्डं ( दण्डये ).

दण्डः प्रयुक्तो दण्डो येन तादृशो नरपतिः प्रशस्यते। 'तं युक्त्यैव नयेत्' इत्यत्र 'तद्युक्तेऽपनये' इति, 'दण्डये' इत्यत्र 'दण्डयम्' 'दण्डम्' इति च, 'सद्भिः' इत्यत्र 'षड्भिः' इति पाठान्तरम्। उनिसा.

[1]उद्वेजयति भूतानि दण्डपारुष्यवान् नृपः।
भूतान्युद्वेज्यमानानि द्विषतां यान्ति संश्रयम्॥

अयुक्तो दण्डये चादण्डये च प्रवर्तमानो दोषावहत्वात् व्यसनमित्याह– उद्वेजयतीत्यादि। जम.

[2]आश्रिताश्चैव लोकेन समृद्धिं यान्ति विद्विषः।
समृद्धाश्च विनाशाय तस्मान्नोद्वेजयेत्प्रजाः॥

(१) आश्रिता विद्विषः इति संबन्धः। लोकेनोद्वेजितेन। विनाशाय विजिगीषोः। जम.

(२) लोकस्य संश्रयाः आश्रयदातारः। 'संश्रयाः' इत्यत्र 'आश्रिताः' इति मुद्रितपाठः। 'आश्रिताश्चैव लोकेन' इत्यपि पाठः। विवृद्धाः वृद्धिं गताश्च विद्विषः विनाशाय भवन्ति। उनिसा.

[3]लोकानुग्रहकर्तारः प्रवर्धन्ते महीभुजः।
लोकवृद्धया नरेन्द्राणां वृद्धिस्तत्संक्षये क्षयः॥

धान्यपशुहिरण्योपसंग्रहैः लोकमनुगृह्णन्तो वर्धन्ते, दण्डवाक्पारुष्याच्च निगृह्णन्तः क्षीयन्ते। यदाह– लोकवृद्धयेति। अनुगृहीते लोके जनवृद्धया राज्ञां वृद्धिः, निगृहीते तु तत्संक्षयात् क्षयः। जम.

महत्स्वप्यपराधेषु दण्डं प्राणान्तिकं त्यजेत्।
ऋते राज्यापहारात्तु तत्र दण्डः प्रशस्यते॥

(१) दण्डेष्वपि वधाख्यं दण्डं लोकजिघृक्षार्थं त्यजेदित्याह– महत्स्वपीति। बन्धताडने त्वनुशासनार्थं प्रवर्तयेदेव। ऋते राज्यापहारादिति। राज्यापहारे त्वपराधे वधाख्य एव दण्डः प्रशस्यते, तदर्थत्वात् प्रयासस्य। जम.

(२) तत्र राज्यापहारे प्राणान्तिको दण्डः प्रशस्यते, अन्यत्र विगर्हितः। 'तत्र दण्डः प्रशस्यते' इत्यत्र 'युक्तदण्डः प्रशस्यते' इति 'तत्र दण्डं प्रशस्यते' इति वा पाठः। उनिसा.

[1]दूष्यस्य दूषणार्थं हि परित्यागो महीयसः।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते॥

(१) अर्थदूषणमाह– दूष्यस्येत्यादि। अर्थदूषणं अर्थस्योपघातः। तथाह्युक्तम्– 'अदानमादानं विनाशः परित्यागश्चार्थस्येत्यर्थदूषणम्' (कौ. ८।३)। तत्र पूर्वप्रवृत्तस्यार्थस्योच्छेदात् अदानम्। तस्य पण्यागारादिनाऽऽकर्षणं आदानम्। स्वयमर्जितस्याग्न्यादिना विध्वंसनं विनाशः। कुतश्चिल्लभ्यमानस्य विघातनेन परित्यजनं परित्यागः। तदिदं क्रोधोत्कर्षसंदर्शनार्थं परित्यागादर्थदूषणमुक्तम्। दूषणार्थं अपकारार्थं यत् दूष्यः अन्यः तस्मात् महीयांसमर्थं प्राप्स्यति तस्यार्थस्य विघातनेन परित्यजनं अर्थदूषणम्। जम.

(२) अर्थदूषणमाह– दूष्यस्य दूषणार्थमिति। दूष्यस्य शङ्कितापराधस्य दोषयुक्तस्य वा दूषणार्थं दोषनिरूपणार्थं वधार्थं वा महीयसः बहुसंख्यस्य अर्थस्य परित्यागः व्ययः नीतितत्त्वज्ञैः नीतिशास्त्रविचक्षणैः अर्थदूषणं उच्यते। 'दूष्यस्यादूषणार्थं च' इति पाठे दूष्यस्य अदूषणार्थं निर्दोषिताख्यापनार्थमित्यर्थः। कौटिल्येनाप्युक्तम्– 'अदानमादानं विनाशस्त्यागः'। तदपि कोपेनैव यन्न दीयते तत्कृतार्थदूषणमुच्यते। कोपेनैव यदादीयते तत्कृतार्थदूषणमुच्यते। क्षितिविनाशोऽपि कोपेनैवोपलक्षितः। अर्थस्य त्यागोऽपि दूष्यवधार्थं यद्बहु दीयते इत्येकमेव तदिति। उनिसा.

[2]तदकस्मात्समाविष्टः कोपेनातिबलीयसा।
नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम्॥

(१) तच्च दूष्ये क्रियमाणं अव्यसनम्, अन्यत्र तु व्यसनमेवेत्याह– तदकस्मादिति। कार्यं विनेत्यर्थः। कोपेनातिबलीयसेति महतः कोपात् परित्यागाख्यमर्थ-

---

(१) कानी. १५।१४.

(२) कानी. १५।१५; उनिसा. प्रथमचरणे (संश्रयाश्चैव लोकस्य) समृद्धा (विवृद्धा).

(३) कानी. १५।१६–१७.

(१) कानी. १५।१८; नन्द. ७।४८ तत्त्व (शास्त्र).

(२) कानी. १५।१९.

-दूषणमुत्पद्यत इति दर्शयति, यस्मादन्यस्मादपि लभ्यमानमर्थं घातयति। जम.

(२) अर्थदूषणस्याविधेयतामाह– तदकस्मादिति। तत् तस्मात् नित्यं आत्महिताकाङ्क्षी राजा अकस्मात् अतिबलीयसा कोपेन समाविष्टः सन् अर्थदूषणं न कुर्यात्। उनिसा.

[1]यानक्षोभो यानपातो यानाभिहरणं तथा।
क्षुत्पिपासाश्रमायासशीतवातोष्णपीडनम्॥

(१) इदानीं सप्तचत्वारिंशता श्लोकैः कामजस्य दोषा उच्यन्ते। तत्र मृगयामधिकृत्याऽऽह– यानेत्यादि। यानक्षोभः यानकृतः अङ्गसंक्षोभः। यानात् प्रधावतः पातः। यानेन प्रजविना अभिहरणं अनभिमतदेशप्रापणम्। पीडनशब्दः क्षुदादिभिः प्रत्येकं योज्यः। आयासः पण्यादीनां व्यापारक्लेशः। जम.

(२) मृगयाव्यसनदोषान् अभिधातुमाह– यानक्षोभ इति। यानवतः यानेन रथादिना अरण्यं प्रविशतः यानक्षोभः बन्धुरप्रदेशे यानप्रतिघात इत्यर्थः। तथा यानाभिहरणं यानानां ध्वंसः। क्षुत् क्षुधा, पिपासा जलपानेच्छा, श्रमः परिश्रमः, आयासः औत्सुक्यम्, इत्यादिजनितं पीडनं परिक्लेशः। 'इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम्' (कानी. १५।२५) इति चतुर्विंशश्लोकेनान्वयः। 'यानक्षोभो यानवतो यानाभिहरणं तथा' इत्यत्र 'पानक्षोभौ पानरतौ पानाभिहरणं तथा' इति पाठे पानरतौ सुरापानाभ्यासे सति पानक्षोभौ सर्वदा पानं तज्जनितः क्षोभः संमोहश्च, तथा पानाभिहरणं पानरत्याकर्षणम्, सर्वदा सुरासेवनप्रवृत्तिरित्यर्थः। उनिसा.

[2]अभियानस्य संपत्त्या यानव्यसनजं महत्।
दुःखं प्रतप्तसिकताकुशकण्टकभूमयः॥

(१) अभिमुखीभूतस्य अन्यदीयाश्वस्य संपातेन आत्मीयाश्वयानस्य आघातः पातो वा व्यसनम्, तस्माज्जातं महत् दुःखं भवति, अश्ववरानाक्रम्य तस्य संपतनात्। प्रतप्तसिकतादिभिः कुशकण्टकैश्च चितभूमयो दुःखहेतवः। जम.

(२) अभियानस्य युद्धयात्रायाः संपत्त्या संग्रामसामग्रीणाम(? मु)पचयेनेति भावः, यानव्यसनजं यानव्यसनजनितं महत् दुःखम्। 'अभियानस्य संपत्त्या यानव्यसनजं महत्' इत्यत्र 'अभिपानस्य संपत्त्या पानव्यसनजं महत्' इति पाठे अभिपानस्य निरन्तरसुरासेवनस्य संपत्त्या संघटनेन पानव्यसनजं सुरापरायणतारूपव्यसनजनितं महत् दुःखम्। स्पष्टमन्यत्। उनिसा.

[1]वृक्षसंकटजा देशा लताकण्टकपातनम्।
शैलपातशिलाजालस्थाणुवल्मीकपीडनम्॥

(१) वृक्षसंकटजा देशाः, तत्र हि प्रविष्टस्य दुःखेन निर्गमनम्। तत्र कम्भारीकण्टकारिकादिलताकण्टकैः पातनम्। तथा शैलात् पातः मृगमनुसरतः। शिलाजालादिभिः पीडनम्। जम.

(२) वृक्षसंकटजाः वृक्षसंनिपातजनिताः। लताकण्टकपाटनं लताभिः कण्टकैश्च पाटनं शरीरविदारणमित्यर्थः। 'शैलपादलताजालस्थाणुवल्मीकपीडनम्' इत्यत्र 'शैलपादशिलाजालस्थाणुवल्मीकपीडनम्' इति पाठान्तरम्। अर्थोऽत्र न दुरवगाहः। उनिसा.

[2]प्रच्छन्नोपहितैः शैलसरिद्विपिनकुक्षिषु।
वधबन्धपरिक्लेश आसन्नाटविकादिभिः॥

(१) प्रच्छन्नोपहितैरिति अवस्कन्दादिदानार्थं शैलादिकुहरेषु प्रच्छन्नलीनैः। आसन्नाटविकादिभिरिति। आदिशब्दात् स्तेनावरुद्धाद्युपग्रहः। जम.

(२) शैलानां सरितां विपिनानां कुक्षिषु गर्भेषु प्रच्छन्नोपगतैः अलक्षितरूपेणोपस्थितैः सामन्ताटविकादिभिः कृताः वधबन्धपरिक्लेशाः वधबन्धनादिजनिताः

---

(१) कानी. १५।२०; नीम. ३६; उनिसा. पातो (वतो).

(२) कानी. १५।२१; नीम. ३६.

(१) कानी. १५।२२; उनिसा. पातनम् (पाटनम्) पातशिला (पादलता).

(२) कानी. १५।२३; उनिसा. हितैः (गतैः) आसन्ना (सामन्ता).

क्लेशाः, संभवन्तीति शेषः । 'वधबन्धपरिक्लेशाः' इत्यत्र 'वधबन्धपरिक्लेशैः' इति मुद्रितपाठस्तु न समीचीनः । उनिसा.

[1]**स्वसैन्यैश्च स्वकुल्यैश्च परभिन्नैः प्रमापणम् ।**
**ऋक्षाजगरमातङ्गसिंहव्याघ्रभयादि च ॥**

(१) स्वकुल्यैः परभिन्नैरिति 'राज्यार्हा यूयम्, कथं विजिगीषुणा एकेनाऽऽक्रामता भुज्यमानमुपेक्षन्ते भवन्तः ? वयं च सहायाः' इति परेण भिन्नैः विजिगीषुसैन्यैश्च मृगयां गतस्य प्रमापणं आघातः । साक्षाद्दक्षादिभ्यः प्राणोपघातिभ्यो भयादीति । जम.

(२) परभिन्नैः परेण शत्रुणा भिन्नैः भेदमापादितैः आयत्तीकृतैरित्यर्थः, स्वकल्पैः आत्मसदृशैः स्वसैन्यैः मारणं गुप्तहत्येति भावः । स्पष्टमन्यत् । उनिसा.

[2]**दवाग्निधूमसंरोधो दिङ्मोहभ्रमणानि च ।**
**इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् ॥**

(१) अरण्यमध्यवर्तिनो वनाग्निधूमाभ्यां प्राणोपघाती संरोधः । दिङ्मोहभ्रमेण रिपुविषयगमनमपि स्यात् । इत्यादि दोषजातं मृगयाव्यसने स्मृतम् । आदिशब्दात् दशरथादिवच्छापादेरपि भयं द्रष्टव्यम् । जम.

(२) दिङ्मोहः दिग्भ्रमः । भ्रमणानि दिग्भ्रमात् दुर्गमप्रदेशेषु चङ्क्रमणानि । इत्यादि, दोषजातमिति वाक्यशेषः । उनिसा.

[3]**जितश्रमत्वं व्यायाम आममेदःकफक्षयः ।**
**चलस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥**

(१) राज्ञो गुणानावहति मृगयेत्यन्ये, यदाह— जितश्रमत्वमिति । चलस्थिरेष्विति । धावत्सु तिष्ठत्सु च बाणसिद्धिः, लक्ष्यसाधनात् । जम.

(२) अपरोल्लिखितमृगयागुणानभिधाय तत्खण्डनमाह— जितश्रमत्वमिति (द्वाभ्याम्) । जितश्रमत्वं श्रमसहिष्णुता । व्यायामः बलवृद्धिकरमङ्गसंचालनम् । अम्लमेदकफक्षयः शरीरस्थानां जडतासंपादकानां अम्लादीनां अपचयः । 'अम्लमेदकफक्षयः' इत्यत्र 'आममेदकफक्षयः' इति मुद्रितपाठः । 'अम्लस्य मेदसः क्षयः' इति तु क्वचित् पाठः । चलस्थिरेषु चलाचलेषु लक्ष्येषु अनुत्तमा अस्खलिता बाणसिद्धिः । उनिसा.

[1]**मृगयायां गुणानेतानन्ये प्राहुर्न तत्क्षमम् ।**
**दोषाः प्राणहराः प्रायस्तस्मात्तत्परिवर्जयेत् ॥**

(१) न तत् क्षममिति न तत् मृगयाव्यसनं युक्तम् । जम.

(२) अन्ये अपरे मृगयायां एतान् गुणान् आहुः । तत् एवंविधगुणकीर्तनं न क्षमं न युक्तिसंगतम् । यतः दोषाः मृगयायां अनिष्टापाताः प्रायः प्राणहराः जीवनहारिणः । तस्मात् तत् मृगयाकरणं महत् व्यसनम् । उनिसा.

[2]**आमादयो हि जीर्यन्ति योग्ययैव दिवानिशम् ।**
**चलेषु यन्त्रलक्ष्येषु बाणसिद्धिश्च जायते ॥**

(१) कुतस्तर्हि तद्गुणा इत्याह— आमादय इति । योग्यया आयुधवाहनशिक्षया । यन्त्रलक्ष्येषु यन्त्रघटितेषु मृगादिलक्ष्येषु । जम.

(२) मृगयां विनाऽपि मृगयोक्तगुणाः संपद्यन्ते इति प्रदर्शयन्नाह— अम्लादय इति । योग्या अश्वारोहणाद्यभ्यासः, तयैव अम्लादयः अम्लकफमेदाः दिवानिशं जीर्यन्ते जीर्णा भवन्ति । तथा च चलेषु स्थितिस्थापकगुणोपेतपदार्थेन वायुना बाष्पादिना वा प्रचलत्सु यन्त्रलक्ष्येषु यन्त्ररूपलक्ष्येषु धावत्कृतकमृगादिषु वा बाण-

---

(१) कानी. १५।२४ ; नीम. ३६ यादि ( यानि ) उत्त. ; उनिसा. कुल्यै ( कल्पै ) प्रमापणम् ( च मारणम् ).

(२) कानी. १५।२५ ; नीम. ३६ स्मृतम् ( महत् ) उत्त. ; उनिसा. मोह ( मोहो ).

(३) कानी. १५।२६ ; उनिसा. आममेदः ( अम्लमेद ) लक्षेषु ( लक्ष्येषु ).

(१) कानी. १५।२७ ; उनिसा. त्तत्परिवर्जयेत् ( त्तद्व्यसनं महत् ).

(२) कानी. १५।२८ ; नीम. ४१ जीर्यन्ति योग्ययैव ( जीर्यन्ते सा योग्यैव ) तृतीयचरणे ( चरेषु यत्र लक्ष्येषु ) ; उनिसा. आमा ( अम्ला ) लक्षेषु ( लक्ष्येषु ).

सिद्धिः जायते । 'अम्लादयः' इत्यत्र 'आमादयः' इति, 'चलेषु यन्त्रलक्ष्येषु' इत्यत्र 'चरेषु यत्र लक्ष्येषु' इति मुद्रितः पाठः । उनिसा.

[1]अथ चेन्मृगयाक्रीडावाञ्छा तन्नगरान्तिके ।
कारयेन्मृगयारण्यं क्रीडाहेतोर्मनोहरम् ॥

(१) तन्नगरान्तिके राजनगरसमीपे । मृगयारण्यं मृगयावनम् । जम.

(२) मृगयासक्तिचरितार्थताया उपायान्तरमाह—अथ चेदिति । व्याख्या सुगमा । उनिसा.

[2]परिक्षिप्तं परिखया दुर्गया मृगगम्यया ।
आयामपरिणाहाभ्यामर्धयोजनसंमितम् ॥

(१) परिक्षिप्तं परिवेष्टितम् । दुर्गया मनुष्यागम्यया । मृगगम्ययेति आगतमृगवधार्थम् । आयामः दैर्घ्यम् । परिणाहः विस्तारः । जम.

(२) कृत्रिमं मृगयारण्यं कीदृशं करणीयमित्याह—परिक्षिप्तमिति । मृगाणामपि अगम्यया अलङ्घनीयया परिखया परिक्षिप्तं परि समन्तात् वेष्टितम् । अन्यथा रक्षितमृगाणां पलायनसंभावना । परिखाशब्देन प्राकारोऽप्युपलक्षितः । आयामपरिणाहाभ्यां दैर्घ्यविस्ताराभ्यां अर्धयोजनसंमितं क्रोशद्वयपरिमितम् । 'अर्धयोजनसंमितम्' इत्यत्र 'अर्धयोजनसंश्रितम्' इत्यपि पाठः । उनिसा.

[3]गिरेरुपान्ते नद्या वा पर्याप्तजलशाद्वलम् ।
अकण्टकलतागुल्मं विषपादपवर्जितम् ॥

गिरेर्नद्या वेति, उभयोः मृगाश्रयत्वात् । जम.

[4]पादपैः पुष्पफलदैः प्रज्ञातैश्चित्तहारिभिः ।
स्निग्धनीलघनच्छायैर्विरलैरुपशोभितम् ॥

(१) प्रज्ञातैः लोकप्रतीतैः । विरलैः यानवाहनानुपरोधकैः । जम.

(२) 'स्निग्धनीलघनच्छायैः' इत्यत्र 'स्निग्धशीतघनच्छायैः' इति, 'प्रख्यातैः' इत्यत्र 'विज्ञातैः' इति, 'विरलैः' इत्यत्र 'विटपैः' इति मुद्रितः पाठः । उनिसा.

[1]पांसुपूरितनिश्छिद्रश्वभ्रप्रदरकन्दरम् ।
दलितस्थाणुवल्मीकपाषाणसमभूतलम् ॥

(१) पांसुभिः पूरितत्वान्निश्छिद्राः अश्वादिसंचरणार्थं श्वभ्रा(दयः) यत्रेति विग्रहः । प्रदरः भूमेः स्फुटितम् । दलितस्थाण्वादित्वात् समभूतलम् । जम.

(२) पांशुभिः पूरिताः अत एव निश्छिद्राः छिद्ररहिताः श्वभ्रप्रदरकन्दराः यत्र तत् । श्वभ्रं बिलम्, प्रदरः विदीर्णस्थानम्, कन्दरः दरी । 'पांशुपूरितनिश्छिद्रश्वभ्रप्रदरकन्दरम्' इत्यत्र 'पांशुपूरितनिच्छिद्रं शुभ्रप्रदरकन्दरम्' इति मुद्रितः पाठः । दलिताः पातिताः स्थाणुवल्मीकपाषाणाः यत्र तत्, अत एव समभूतलम् । निम्नस्थानपूरणात् उच्चस्थानविध्वंसाच्च सर्वत्र समीकृतमिति भावः । उनिसा.

[2]शोधितग्राहसलिलमगम्भीरजलाशयम् ।
नानापुष्पसमाकीर्णं नानाविहगसेवितम् ॥

(१) ग्राहः नक्रादिः । तदपनयनात् परिभोग्यं जलं भवति । अगम्भीरत्वाच्च तदवगाहनयोग्यो जलाधारः । जम.

(२) शोधिताः निःसारिताः ग्राहाः कुम्भीरादयः येभ्यः तादृशानि सलिलानि यत्र तत् । 'सुगम्भीरजलाशयम्' इत्यत्र 'संभूतजलदाशयम्' इति, 'नानापद्मवनाकीर्णम्' इत्यत्र 'नानापुष्पसमाकीर्णम्' इति, 'नानाविहगशोभितम्' इत्यत्र 'नानाविहगसंकुलम्' इति च मुद्रितः पाठः । स्पष्टोऽर्थः । उनिसा.

---

(१) कानी. १५।२९ ; नीम. ४१ क्रीडावाञ्छा ( क्रीडां वाञ्छेत् ) हरम् ( रमम् ).

(२) कानी. १५।३० ; उनिसा. दुर्गया मृग ( मृगाणामप्य ).

(३) कानी. १५।३१ ; नीम. ४१ उत्त.

(४) कानी. १५।३२ ; उनिसा. ज्ञातै ( ख्यातै ).

(१) कानी. १५।३३ ; उनिसा. पांसु ( पांशु ).

(२) कानी. १५।३४ ; नीम. ४१ लम ( लं सु ) चतुर्थचरणे ( हस्तिनीकलभान्वितम् ); उनिसा. लम ( लं सु ) पुष्पसमा ( पद्मवना ) सेवितम् ( शोभितम् ).

[1]सुपात्यमृगसंपूर्णं हस्तिनीकलभान्वितम् ।
भग्नदंष्ट्रनखव्यालं छिन्नशृङ्गविषाणि च ॥

(१) सुपात्यः सुखव्यापाद्यः । कलभः पोतः । व्यालाः व्याघ्राः । विषाणिनः गण्डकादयः । ते तु भग्ननखदंष्ट्रत्वात् कलितमृगत्वाच्च नाभिभवन्ति । जम.

(२) छिन्नानि शृङ्गाणि येषां ते छिन्नशृङ्गाः, तादृशाः विषाणिनः शृङ्गिणः यत्र तत् । स्पष्टमन्यत् । 'मृगसंघातसंपूर्णम्' इत्यत्र 'आघात्यमृगसंपूर्णम्' इति क्वचित् पाठः । उनिसा.

[2]सुखसंसेव्यलतया पुष्पपर्णावनद्धया ।
वनराज्या परिक्षिप्तं परिखातटजातया ॥

(१) अकण्टकिनी निर्विषा च लता सुखसंसेव्या भवति । वनराज्या परिक्षिप्तं मोहार्थं विश्रमार्थं च । जम.

(२) पुष्पवल्लीपिनद्धया कुसुमश्रेणीयुक्तया, सुखसंसेव्यलतया सुखेन संसेव्या पुष्पादिचयनार्थं आश्रयणीया लता यत्र तया, परिखायास्तटे जाता समुत्पन्ना तया वनराज्या परिक्षिप्तं समन्तात् परिवेष्टितम् । उनिसा.

[3]बहिर्दूरान्तराभोगनिर्वृक्षस्तम्भभूतलम् ।
अगम्यं रिपुसैन्यानां मनःप्रीतिविवर्धनम् ॥

(१) बहिः, परिखायाः इत्यर्थात् । दूरे क्रोशमात्रान्तरे यो वनाभोगः वनवैस्तार्यं समन्तात्, तत्र समन्तात् निर्वृक्षं निस्तम्भं च भूतलं यस्य । एवं च निराश्रयत्वात् तदगम्यं रिपुसैन्यानाम् । जम.

(२) बहिः वनाद्बहिः बाह्यप्रदेशे इत्यर्थः, दूरान्तरस्य सुदूरस्थानस्य यः आभोगः परिसरः तत्र निर्वृक्षं वृक्षशून्यं समं समतलं भूतलं यत्र तत् । निवृक्षेति पाठे निवृक्षेण क्षुपेण ह्रस्वशाखवृक्षेणेत्यर्थः, समं समीकृतं भूतलं यत्र तत् । पूर्वार्धे 'बहिर्भूरान्तराभोगनिवृक्षसमभूतलम्' इत्यपि पाठः । शेषार्धं सुगमम् । उनिसा.

[1]तद्वनेचरचित्तज्ञैः क्लेशायाससहैर्दृढैः ।
रक्षितं रक्षिभिः स्वाप्तैर्भूभुजामभिवृद्धये ॥

(१) वनेचराः मृगादयः, तेषां क्रोधभयाविष्टं चित्तं जानन्ति तैः । नीम. ४१

(२) तस्मिन् वने मृगाणां दुष्टादुष्टपरिज्ञानार्थं ये शबरपुलिन्दादयो निवासिकाः तदनुकूलैः रक्षिभिरिति संबन्धः । दृढैः स्थिरैः । स्वाप्तैः परस्याभेद्यैः । जम.

(३) तद्वनं मृगयावनं रक्षिभिः रक्षितं सत् भूभुजां भूतये भवति । 'तद्वनम्' इत्यत्र 'तद्वने' इति, 'चाऽऽप्तैः' इत्यत्र 'स्वाप्तैः' इति, 'भूभुजां भूतये भवेत्' इत्यत्र 'भूभुजां भूरिभूतये' इति मुद्रितपाठः । उनिसा.

[2]तत्कर्माप्तो नरेन्द्रस्य जनो जितपरिश्रमः ।
क्रीडनायात्र विविधा मृगजातीः प्रवेशयेत् ॥

(१) तत्कर्माप्तः मृगप्रवेशनकर्मकुशलः जनः । नरेन्द्रस्य नरेन्द्रानुरक्त इत्यर्थः । दुष्टमृगप्रवेशनिषेधार्थम् । जम.

(२) तत्कर्मणि मृगयाकर्मणि आप्तः अन्तरङ्गीभूतः । स्पष्टमन्यत् । 'क्रीडनायास्य विविधाः' इत्यत्र 'क्रीडनाय नरेन्द्रस्य' इति पाठान्तरम् । उनिसा.

[3]अन्यकार्याविरोधेन प्रातश्चङ्क्रमणक्षमः ।
क्रीडनाय विशेद्राजा तदाप्तैः सहितो मितैः ॥

---

(१) कानी. १५।३५ ; उनिसा. सुपात्यमृग ( मृगसंघात ).

(२) कानी. १५।३६ ; उनिसा. पर्णाव ( वल्लीपि ).

(३) कानी. १५।३७ ; नीम. ४१ उत्त. ; उनिसा. स्तम्भ ( सम ).

(१) कानी. १५।३८ ; नीम. ४१ उत्तरार्धे ( मृगयारक्षिभिः स्वाप्तैः प्रक्रीडेद्धीरमानसः ॥ ) ; उनिसा. तद्वने ( तद्वनं ) स्वाप्तै ( चाऽऽप्तै ) जामभिवृद्धये ( जां भूतये भवेत् ).

(२) कानी. १५।३९ ; नीम. ४१ र्माप्तो ( र्मा तु ) यात्र ( यास्य ) ; उनिसा. यात्र ( यास्य ).

(३) कानी. १५।४० ; उनिसा. य विशे ( याऽऽविशे ) मितैः ( मतैः ).

(१) अन्यकार्याविरोधेन, अन्यकार्यविरोधित्वात् व्यसनमेव स्यात्। प्रातः प्रविशेदिति संबन्धः। चङ्क्रमणक्षमः, शरीरपाटवात्। तदाप्तैरिति। तत् मृगयारण्यम्। मितैः स्तोकैः। जम.

(२) प्रातश्चङ्क्रमणक्षमः अभुक्त्वाऽपि अश्वादिकमनारुह्यापि धावनादिसमर्थः राजा अन्यकार्याविरोधेन अन्यकार्यस्य प्रजापालनादिराजकार्यस्य धर्मार्थादिरूपपुरुषार्थसाधनस्य च अविरोधेन अव्याघातेन क्रीडनाय मृगयाविहारार्थं आप्तैः विश्वस्तैः मतैः प्रियैः पुरुषैः सहितः तत् मृगयारण्यं आविशेत् प्रविशेत्। 'अन्यकार्याविरोधेन' इत्यत्र 'धर्मार्थाद्यविरोधेन' इति, 'क्रीडनायाऽऽविशेत्' इत्यत्र 'क्रीडनाय विशेत्' इति, 'तदाप्तैः' इत्यत्र 'तद्वासैः' इति, 'मतैः' इत्यत्र 'मितैः' इति पाठान्तरम्। उनिसा.

[१]यदा च प्रविशेद्राजा क्रीडनार्थं तदा बहिः।
संनद्धं यत्नतस्तिष्ठेत्सैन्यं दूरान्तगोचरम्॥

(१) संनद्धं यत्नतस्तिष्ठेत् परावस्कन्दनपरिहारार्थम्। दूरान्तगोचरं दूरदेशवर्ति। जम.

(२) दूरान्तगोचरं दूरस्य दूरवर्तिनः अन्तस्य मृगयारण्यप्रान्तभागस्य गोचरम्। 'संनद्धं यत्नतस्तिष्ठेत्' इत्यत्र 'संनद्धं तत्र संतिष्ठेत्' इति क्वचित् पाठः। उनिसा.

[२]सद्भिर्यो मृगयायाने गुणः साधु प्रकीर्तितः।
क्रीडाप्रीतिर्नरपतिस्तं तत्र स्वयमाप्नुयात्॥

(१) यथोक्तानुष्ठानफलमाह– सद्भिरिति। गुणः जितश्रमत्वादिः। जम.

(२) 'गुणाः साधु प्रकीर्तिताः' इत्यत्र 'गुणाः संपरिकीर्तिताः' इति पाठान्तरम्। उनिसा.

[१]विधिरेष समुद्दिष्टो मृगयाक्रीडने परः।
न गच्छेदन्यथा राजा मृगयां मृगयुर्यथा॥

(१) न गच्छेदन्यथा, यथोक्तदोषसंभवात्। मृगयुः व्याधः। जम.

(२) अन्यथा कृतकमृगयारण्यादिकं विना मृगयुर्यथा व्याध इव राजा मृगयां न गच्छेत्। 'मृगयां मृगयुर्यथा' इत्यत्र 'मृगयायां मृगा इव' इति, 'परः' इत्यत्र 'वरः' इति मुद्रितपाठः। स्पष्टमन्यत्। उनिसा.

[२]महतोऽपि क्षणान्नाशो धनस्य ह्रीविमुक्तता।
निःसत्यता निष्ठुरता क्रोधो वाक्छस्त्रखण्डनम्॥

(१) द्यूतदोषानाह– महत इत्यादि। क्षणान्नाशः एकेनैव पणेन। ह्रीविमुक्तता, असभ्याचरणात्। निःसत्यता, असमपाते विषमपात इत्यभिधानात्। निष्ठुरता, द्यूतापहृतस्य धनस्य कृते परस्परव्यापादनात्। क्रोध इति। द्यूतासक्तमना हि केनचित् कृच्छ्रे पृष्टः कुप्यति। तथा परस्परकलहात् वाचा खण्डनं आक्रोशनं शस्त्रखण्डनं च। जम.

(२) द्यूतव्यसनदोषानभिधातुमाह– महतेति। द्राक् झटिति विमुक्तता, निवसने हारितेऽपि नग्नो दीव्यतीति दर्शनात्। निःसत्यता पराजयभयात् सत्यरहितत्वमित्यर्थः। निष्ठुरता, पुत्रस्य सर्पदंशनान्मरणे श्रुतेऽपि अनास्थया कस्य सर्प इति प्रश्नपूर्वकमेकाग्रमनसा क्रीडासक्तिदर्शनात्। क्रोधः, हारिते पार्श्ववर्तिनामपि कुप्यतीति दर्शनात्। वाक्शस्त्रखण्डनम्। क्रोधान्धतया वाक्पारुष्यमपि भवतीति तात्पर्यम्। उनिसा.

[३]लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम्।
सत्समागमविच्छित्तिरसद्भिः सह वर्तनम्॥

---

(१) कानी. १५।४१; नीम. ४१ तदा (तथा).

(२) कानी. १५।४२; उनिसा. गुणः (गुणाः) कीर्तितः (कीर्तिताः).

(१) कानी. १५।४३; नीम. ४१ रेष समुद्दिष्टो (रेवं समादिष्टो) परः (वरः).

(२) कानी. १५।४४; उनिसा. ह्रीवि (द्राग्वि).

(३) कानी. १५।४५; नीम. ३६.

(१) लोभः परद्रव्येषु द्यूतहृतेषु । कर्मणां सदा क्रियमाणानाम् । सत्समागमविच्छित्तिः, तत्प्रसंयुक्तस्य हि विद्यावृद्धानामनुपयोगात् । असद्भिः द्यूतकारिभिः । जम.

(२) लोभः हारिते लोभवृद्धिः । धर्मक्रियालोपः द्यूतादरादित्यर्थः । कर्मणां प्रारब्धकर्मणां अप्रवर्तनं अननुष्ठानम् । सत्समागमविच्छित्तिः, द्यूतासक्तं सन्तः परिहरन्तीति दर्शनात् । असद्भिः कितवैः सह वर्तनम् । उनिसा.

[१]अर्थनाशक्रियाऽवश्यं नित्यं वैरानुबन्धिता ।
सत्यप्यर्थे निराशत्वमसत्यपि च साशता ॥

(१) अर्थनाशक्रिया केनचिन्निक्षिप्तस्याप्यर्थस्या-(प)हृतमिति नाशकरणम् । वैरानुबन्धिता अहमनेन संरुद्धो बद्ध इति । निराशत्वं निराशता पुनरपि जेष्यतीति । साशता सप्रत्याशता जेष्यामीति । जम.

(२) अवश्यं अर्थनाशक्रिया कोषध्वंसकरणम् । नित्यं नियतं वैरानुबन्धिता शत्रुताकरणम् । हारितवित्तो वैरी भवतीति भावः । प्रतिक्षणं जयपराजयसंभावनया सत्यपि अर्थे निराशत्वं धनशून्यताज्ञानम्, असत्यपि अर्थे रागिता धनवत्ताज्ञानम् । उनिसा.

[२]प्रतिक्षणं क्रोधहर्षौ संतापश्च प्रतिक्षणम् ।
प्रतिक्षणं च संक्लेशः साक्षिप्रश्नः प्रतिक्षणम् ॥

(१) क्रोधः जीयमानस्य । हर्षः जयतः । संतापः हृतार्थस्य । संक्लेशः संरोधादिः । साक्षिप्रश्नः विवादे साक्षिपृच्छा । जम.

(२) प्रतिक्षणं क्षणे क्षणे क्रोधहर्षौ । पराजितस्य क्रोधः जयिनो हर्षश्च भवतीति भावः । प्रतिक्षणं संतापः परितापः । प्रतिक्षणं च संक्लेशः कष्टापातः पराजितस्येत्यर्थः । प्रतिक्षणं साक्षिप्रश्नः संदिग्धाक्षपातने साक्षिग्रहणमित्यर्थः । उनिसा.

[१]स्नानादिगात्रसंस्कारपरिभोगेष्वनादरः ।
अव्यायामोऽङ्गदौर्बल्यं शास्त्रार्थप्रत्युपेक्षणम् ॥

(१) स्नानादीति । आदिशब्दादभ्यङ्गमर्दनाद्युपसंग्रहः । अङ्गदौर्बल्यं भोजनवेलातिक्रमात् । यत् पूर्वमधीतं शास्त्रं तस्यार्थानिरूपणम् । जम.

(२) द्यूतासक्तिवशात् स्नानादिषु अनादरः अनास्था । अव्यायामः अङ्गपरिचालनराहित्यम् । अङ्गदौर्बल्यं उक्तकारणसमुदयात् शरीरावसादः । शास्त्रार्थस्य अप्रत्यवेक्षणं अनालोचनम् । उनिसा.

[२]गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम् ।
इत्यादींस्तन्त्रकुशला द्यूतदोषान् प्रचक्षते ॥

(१) गूहनं मूत्रशकृतोः वेगप्राप्तयोरनिःसारणात् विधारणम् । इत्यादीनिति । आदिशब्दात् स्तेयापवादाद्युपसंग्रहः । जम.

(२) मूत्रशकृतोः गूहनं वेगरोधः । क्षुत्पिपासोपपीडनं क्षुधा पिपासया च उपपीडनं परिक्लेशः । नीतिशास्त्रप्रवीणाः इत्यादीन् द्यूतदोषान् प्रचक्षते कीर्तयन्ति । उनिसा.

[३]पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।
द्यूतेन ह्यसता दीव्यन् कलत्राद्यपहारितः ॥

(१) धर्मराजः युधिष्ठिरः । द्यूतेनासता कपटद्यूतेनेत्यर्थः । तथाहि— तस्य प्राप्तराज्यस्य दुर्योधनो महीयसीं विभूतिं दृष्ट्वा तदतिसंधानोपायं चिन्तयन् मातुलेन शकुनिनाऽक्षहृदयविदा द्यूतं कारितस्तद्देशं च यदृच्छया

(१) कानी. १५।४६ ; नीम. ३६ तृतीयचरणे (स्वल्पेऽप्यर्थे निराशित्व) उत्त. ; उनिसा. साशता (रागिता).

(२) कानी. १५।४७ ; नीम. ३६ संताप (विषाद).

(१) कानी. १५।४८ ; नीम. ३६ अव्यायामो (अन्या वाचो) र्थप्रत्युपे (र्थाप्रत्यवे) उत्त. ; उनिसा. र्थप्रत्युपे (र्थाप्रत्यवे).

(२) कानी. १५।४९ ; नीम. ३६ दींस्तन्त्रकुशला द्यूत (दीञ्शास्त्रनिपुणा द्यूते).

(३) कानी. १५।५० ; नीम. ३६ उत्तरार्धे (द्यूतेन द्विषता विद्वान् कलत्राण्यपहारितः ॥) ; उनिसा. दीव्यन् (विद्वान्) द्यप (ण्यपि).

युधिष्ठिरमागच्छन्तं देवनाय आहूतवान् । सोऽपि 'आहूतेन क्षत्रियेण द्यूताद्रणाच्च न निवर्तितव्यम्' इति विधानं मत्वाऽनेन सह देवितुमारेभे । तयोश्चेदमध्यवसितम्— 'यदि दुर्योधनेन जितं तदा युधिष्ठिरेण राज्यं त्यक्त्वा द्वादश वर्षाणि वने स्थातव्यम्, त्रयोदशे वर्षे अज्ञातचर्यया । अथ चेत् परिज्ञातं स्यात् पुनर्द्वादश वर्षाणि वने स्थातव्यम्' इति । ततोऽसौ शकुनिप्रयुक्तेन कपटद्यूतेन दुर्योधनेन जित इति । जम.

(२) अपरः द्वितीयः लोकपालः इन्द्रः इव पाण्डवः धर्मराजः युधिष्ठिरः स्वयं विद्वानपि असता अशोभनेन द्यूतेन कलत्राणि धर्मदारान् अपि द्रौपदीं हारितः । 'द्यूतेन ह्यसता विद्वान्' इत्यत्र 'द्यूतव्यसनमापन्नः' इत्यपि पाठः । उनिसा.

नलश्च राजा द्यूतेन हृते राज्ये महोदये ।
धर्मदारान् वने त्यक्त्वा परकर्मकरोऽभवत् ॥

(१) नलश्च राजा द्यूतेन हृते राज्ये भ्रात्रा जयसेनेन, धर्मदारान् दमयन्तीं वने त्यक्त्वा परकर्मकरोऽभवत् ऋतुपर्णस्य राज्ञो देशमुपगम्य तत्सूपकारकर्म कृतवान् । जम.

(२) महान् उदयः अभ्युदयः यस्य तस्मिन् राज्ये द्यूतेन हृते हस्तान्तरं नीते सति प्रभुः प्रभावशाली राजा नलः वने हिंस्रसमाकुलारण्ये धर्मदारान् दमयन्तीं त्यक्त्वा परित्यज्य परकर्म ऋतुपर्णगृहे दासवृत्तिं अकरोत् । 'हृते राज्ये महोदये' इत्यत्र 'हृते राज्यमहोदये' इति मुद्रितपाठः । 'परकर्माकरोत्प्रभुः' इत्यत्र 'परकर्मपरोऽभवत्' इति पाठान्तरम् । उनिसा.

तुल्यो भुवीन्द्रतुल्यस्य यस्य नास्ति धनुर्धरः ।
स रुक्मी रुक्मशैलाभो द्यूतदोषाद्गतः क्षयम् ॥

(१) तुल्यो यस्य नास्ति धनुर्धरः, तस्य चतुर्मार्गे अस्त्रग्रामे किंपुरुषेणाभिविनीयानुज्ञातत्वात् । जम.

(२) इन्द्रतुल्यस्य महेन्द्रसमानस्य यस्य तुल्यो धनुर्धरः भुवि पृथिव्यां नास्ति रुक्मशैलाभः सुवर्णपर्वतसदृशः स रुक्मी रुक्मिणीभ्राता द्यूतदोषात् क्षयं गतः बलभद्रेण जर्जरीकृताङ्गो मृत्युमुखे पतितः । 'रुक्मशैलाभः' इत्यत्र 'रुक्मतुल्याभः' इति मुद्रितपाठः । उनिसा.

राजा काशिकरूशानां दन्तवक्रोऽपि मन्दधीः ।
तीव्राद्द्यूतकृताद्दोषाद्दन्तभङ्गमवाप्तवान् ॥

(१) काशयः करूशाश्च नाम जनपदौ । तत्र राजा दन्तवक्रो नामासुरः स्वदुहितरं प्रद्युम्नसुताय दत्तवान् । सोऽपि यदुचक्रपरिवृतः तत्राऽऽगत्य तां परिणीतवान् । पारियात्रिकेषु कुतश्चित्प्रसङ्गात् यथाधीतेन शिल्पेन तत्र तत्र तैः सह स्पर्धमानेषु अपि (? अहं) महाक्षहृदयविदित्युत्थाय साम्बो विष्णुपुत्रो दन्तवक्रेण सह देवितुमारेभे । बलभद्रोऽपि दन्तवक्रगृह्येण रुक्मिणा क्रथकैशिकेन राज्ञा । ततो द्यूतकलहात् प्रकुपितेन बलभद्रेण स्तम्भमुत्पाट्य हतो रुक्मी क्षयमगमत् । दन्तवक्रोऽपि मित्रार्थेनोद्गच्छंस्तेनैव चुबुके समाहतो दन्तभङ्गमवाप । जम.

(२) कौशिकरूपाणां तदाख्यजनपदानां राजा मन्दधीः अल्पबुद्धिः दन्तवक्रोऽपि तीव्रद्यूतकृतात् दोषात् अत्यन्तद्यूतासक्तिजनितदोषेण दन्तभङ्गं अवाप्तवान् प्राप्तवान् । बलदेवेन द्यूतफलकाहतस्य दन्तवक्रस्य दन्ता भग्ना इति भावः । उनिसा.

द्यूतादनर्थसंरम्भो द्यूतात्स्नेहक्षयो महान् ।
पक्षाणां चापि महतां द्यूताद्भेदः प्रवर्तते ॥

---

(१) कानी. १५।५१ ; नीम. ३६ हृते राज्ये ( हृते राज्य ) चतुर्थचरणे ( परकर्माकरोत्प्रभुः ) ; उनिसा. चतुर्थचरणे ( परकर्माकरोत् प्रभुः ).

(२) कानी. १५।५२.

(१) कानी. १५।५३ ; उनिसा. काशिकरूशानां ( कौशिकरूपाणां ) तीव्राद् ( तीव्र ).

(२) कानी. १५।५४ ; नीम. ३६ चापि महतां ( संहतानां च ) ; उनिसा. तृतीयचरणे ( संहतानां च पक्षाणां ).

(१) अनर्थसंरम्भः 'अस्माभिर्जितम्, वयमन्यायेन जिताः' इत्येवंरूपः। स्नेहक्षयः, जयपराजयवशात्। पक्षाणां महतां संघातारीणाम्। जम.

(२) द्यूतात् अनर्थसंरम्भः अनर्थं विना कारणं संरम्भः अमर्षः। द्यूतात् महान् स्नेहक्षयः। संहतानां दृढतरसंबद्धानां पक्षाणां च कुरुपाण्डवसमानानामपीत्यर्थः, द्यूतात् भेदः परस्परमनोभङ्गः शत्रुताचरणमपि प्रवर्तते जायते। 'संहतानां च पक्षाणाम्' इत्यत्र 'पक्षाणां सहितानां च' इति मुद्रितपाठः। उनिसा.

**'इति केवलदोषं हि राजा द्यूतं विवर्जयेत्।**
**समाह्वयं च मेधावी दर्पिणां विनिवारयेत्॥**

(१) दर्पिणामिति बलदृप्तानां मल्लादीनाम्। समाह्वयं प्राणिद्यूतम्। सोऽपि भिन्नपक्षद्वैधेन कोपं जनयति। जम.

(२) इत्येवं केवला दोषा यत्र तत् द्यूतं राजा परित्यजेत्। मेधावी राजा अन्येषां दर्पिणां भूपालानामपि समाह्वयं द्यूते आह्वानं अथवा द्यूतस्य नामापि विनिवारयेत्। 'आहूतो न निवर्तेत द्यूतादपि रणादपि' इति वचनात् द्यूते आह्वानमपि निवारयेत्। 'समाह्वयम्' इत्यत्र 'समाह्वयम्' इति मुद्रितपाठः। 'तस्माद्धयम्' इत्यन्यत्र पाठः। उनिसा.

**'कालातिपातः कार्याणां धर्मार्थपरिपीडनम्।**
**नित्याभ्यन्तरवर्तित्वात्साधुप्रकृतिकोपनम्॥**

(१) स्त्रीव्यसनदोषानाह– कालातिपात इत्यादि। तत्र कालातिपातः, यथाकालमकरणात्। धर्मपीडनम्, धर्मस्थीयव्यवहारादर्शनात्। अर्थपीडनं अर्थाधिकारादर्शनम्। अभ्यन्तरं अन्तर्गृहम्, तत्र कामान्नित्यावस्थितस्य दर्शनाभावादार्यप्रकृतीनां प्रकोपनम्। जम.

(२) स्त्रीदोषानभिधातुमाह– कालातिपात इति। कार्याणां सकलकरणीयानां कालातिपातः। स्त्रीव्यसनासक्तस्येति शेषः। धर्मार्थयोः प्रधानपुरुषार्थयोः परिपीडनम्। धर्मस्यासेवया अर्थस्य च कामोपभोगव्ययेन हानिरित्यर्थः। नित्याभ्यन्तरवर्तित्वात् सर्वदाऽन्तःपुरवासात् सर्वप्रकृतिकोपनम्, भवतीति शेषः। सचिवादयः सर्वाः प्रकृतयः कुप्यन्तीति भावः। 'सर्वप्रकृतिकोपनम्' इत्यत्र 'साधुप्रकृतिकोपनम्' इति पाठान्तरम्। उनिसा.

**'रहस्यभेदस्तत्पक्षादकार्येषु प्रवर्तनम्।**
**ईर्ष्यामर्षस्तथा क्रोधो निरोधः साहसानि च॥**

(१) तत्पक्षात् स्त्रीपक्षात्। स्त्रीषु हि विश्वासे तत्पक्षोऽपि रहस्यवित् भवति। अकार्येषु नृत्तगीतादिषु। ईर्ष्यामर्षः ईर्ष्याकोपः दुःखहेतुः। क्रोधः स्त्रीभिः सुखासीनस्य कृच्छ्रेण केनचित् स्पृष्टस्य। तथा कामासक्तेन हि पथ्यकारिणोऽपि दारा अवरुध्यन्ते। साहसानि परदाराभिगमने प्राकारलङ्घनादीनि। जम.

(२) तत्पक्षात् स्त्रीपक्षात् रहस्यभेदः। स्त्रीजितस्य स्त्रियो रहस्यं जानन्ति चापल्यात् तदपि प्रकाशयन्तीति लोके प्रसिद्धिः। अकार्येषु परदारादौ प्रवर्तनं प्रवृत्तिः। अथवा तत्पक्षादिति परेणान्वयः। प्रथमं ईर्ष्या, प्रार्थितायाः कामिन्याः प्रणयार्थिनि अन्यस्मिन् पुरुष इति शेषः। ततस्तस्मिन्नेव अमर्षः असहिष्णुता। ततः क्रोधः, ततो विरोधः, ततः साहसानि, रावणस्येव इत्यर्थः। 'ईर्ष्यामर्षौ तथा क्रोधो विरोधः साहसानि च' इत्यत्र 'ईर्ष्यामर्षस्तथा क्रोधोऽनुरोधः साहसं तथा' इति मुद्रितपाठः। उनिसा.

**'इत्यादि च स्त्रीव्यसने यच्च पूर्वं प्रकीर्तितम्।**
**तस्मात्स्त्रीव्यसनं राजा राज्यकामः परित्यजेत्॥**

इत्यादि चेति। आदिशब्दात् अशौचलाघवप्रत्यवायाद्युपसंग्रहः। यच्च पूर्वं प्रकीर्तितं द्यूतव्यसने। तथाहि– कामुकोऽपि महान्तमर्थमसत्पात्रेषु विनियोजयन् क्षणान्नाशयति, तथा सत्यस्य च परित्यागः, निर्धनस्य

---

(१) कानी. १५।५५.

(२) कानी. १५।५६ ; उनिसा. त्साधु ( त्सर्व ).

(१) कानी. १५।५७ ; उनिसा. र्षस्त ( र्षौ त ). निरोधः ( विरोधः ).

(२) कानी. १५।५८–५९.

-धनिकव्यापादनानैष्ठुर्यम्, प्रतिकामुकैः कलहात् वाक्छत्र-खण्डनम्, धनहीनस्य लोभः । इत्यादि यथासंभवं योजनीयम् । जम.

**स्त्रीमुखालोकनतया व्यग्राणामल्पचेतसाम् ।**
**ईहितानीह गच्छन्ति यौवनेन सह क्षयम् ॥**

(१) अल्पचेतसां अल्पसत्त्वानां ईहितानि चेष्टितानि यौवनेन सह क्षीयन्ते, उत्तरकालं चेष्टासंभवात् । जम.

(२) स्त्रीमुखालोकनतया व्यग्राणां स्त्रीमुखदर्शन-लालसानां अल्पचेतसां क्षुद्राशयानां ईहितानि चेष्टितानि यौवनेन सह क्षयं गच्छन्ति । उनिसा.

**[१]वमनं विह्वलत्वं च संज्ञानाशो विवस्त्रता ।**
**बह्वबद्धप्रलापित्वमकस्माद्व्यसनं मुहुः ॥**

(१) पानदोषानाह– वमनमित्यादि । विह्वलत्वं परवशदेहता । संज्ञानाशः निश्चेष्टता । अबद्धं असंबद्धम् । अकस्माद्व्यसनं मुहुः उन्मत्तस्येव गाननृत्तादिकरणम् । जम.

(२) मद्यव्यसनदोषानभिधातुमाह– गमनमिति । गमनं यथातथासंचरणम् । विह्वलत्वं अनायत्तशरीरता । संज्ञानाशः अचेतनत्वम् । विवस्त्रता दिगम्बरत्वम् । असंबद्धप्रलापित्वं योग्यतादिरहितवचनप्रयोगः । मुहुः वारंवारम् । अकस्मात् हठात् । व्यसनं असुस्थता । 'असंबद्धप्रलापित्वमकस्माद् व्यसनं मुहुः' इत्यत्र 'बह्वबद्धप्रलापित्वमकस्माद् व्रजनं मुहुः' इति पाठान्तरम् । 'असंबद्धप्रलापित्वम्' इत्यत्र 'असंबन्धप्रलापित्वम्' इति पाठे परस्परसंबन्धविवर्जितवाक्यप्रयोग इत्यर्थः । उनिसा.

**[२]प्राणग्लानिः सुहृन्नाशः प्रज्ञाश्रुतमतिभ्रमः ।**
**सद्भिर्वियोगोऽसद्भिश्च संयोगोऽनर्थ्यसंगमः ॥**

(१) प्राणग्लानिः, सुरया जर्जरीकरणात् । सुहृन्नाशः अननुरागादाचार्यमित्रत्यागः । ऊहापोहासामर्थ्यात् प्रज्ञाविभ्रमः । पूर्वाधीतशास्त्रानभ्यासात् श्रुतविभ्रमः । भयस्खलितेषु संविधानस्य मतिविभ्रमः । असद्भिः शौण्डिकादिभिः । अनर्थ्यः पानशौण्डादिजनः । जम.

(२) प्राणग्लानिः निःसत्त्वता । सुहृन्नाशः बन्धुविच्छेदः । प्रज्ञाश्रुतिमतीनां बुद्धिविद्याज्ञानानां भ्रमः वैलक्षण्यम् । सद्भिः साधुभिः वियोगः विच्छेदः । असद्भिः सङ्गः संगमः । अनर्थेन सह संगमः, अनिष्टापात इत्यर्थः । 'प्राणग्लानिः' इत्यत्र 'प्राणलाभः' इति पाठस्तु न समीचीनः । उनिसा.

**[१]स्खलनं वेपथुस्तन्द्री नितान्तं स्त्रीनिषेवणम् ।**
**इत्यादि पानव्यसनमत्यन्तं सद्भिर्गर्हितम् ॥**

(१) संकल्पेनैव स्त्रीसङ्गः । नीम. ३६

(२) स्खलनं समेऽपि पथि । तन्द्री अकालेऽपि निद्रा । नितान्तं अत्यर्थम् । इत्यादीति । आदिशब्दादशौचकलहप्रमादाद्युपसंग्रहः । जम.

**[२]श्रुतशीलबलोपेताः पानदोषेण भूयसा ।**
**क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ॥**

(१) भूयसेति युक्त्या पानमव्यसनमिति दर्शयति । अक्षीणनामानः अतिप्रतीताः । अन्धकवृष्णयः यादवाः । जम.

(२) पुनरपि सोदाहरणं पानदोषमाह– श्रुतशीलबलोपेता इति । श्रुतं शास्त्राध्ययनम्, शीलं सुचरितम्, बलं शौर्यम्, तद्युक्ताः अक्षीणनामानः सर्वत्र विख्याताः बलदेवकृष्णादयः अन्धकवृष्णयः भूयसा पानदोषेण अपरिमितसुरासेवनदोषेण क्षयं जग्मुः उच्छेदं प्रापुः । उनिसा.

**[३]योगीश्वरस्तु भगवान् भार्गवो भृगुतुल्यधीः ।**
**शुक्रः पानमदात्तीव्राद्बुभुजे शिष्यमौरसम् ॥**

---

(१) कानी. १५।६० ; नीम. ३६ विह्वलत्वं ( निर्गुणत्वं ) बह्व ( असं ) ; उनिसा. वमनं ( गमनं ) बह्व ( असं ).

(२) कानी. १५।६१ ; नीम. ३६ नर्थ्य ( नर्थ ) उत्त. ; उनिसा. संयोगोऽनर्थ्य ( सङ्गोऽनर्थेन ).

(१) कानी. १५।६२ ; नीम. ३६ स्तन्द्री नितान्तं ( स्तन्द्रा चिन्तान्त ).

(२) कानी. १५।६३ ; नीम. ३६.

(३) कानी. १५।६४.

( १ ) भार्गवः भृगोरपत्यम् । बुभुजे शिष्यमौरसं कचाख्यम् । जम.

( २ ) औरसं हृदयग्राहिणं शिष्यं कचम् । पुरा देवासुराणां संग्रामे प्रवृत्ते शुक्रो मृतसंजीवन्या विद्यया मृतानसुरान् संजीवयति । देवास्तु मृता न जीवन्ति । तदा देवानां बृहस्पतेश्चानुरोधेन मृतसंजीवन्याः विद्यायाः संग्रहार्थं कचः शुक्रदुहित्रा सह सख्यमकरोत् तद्द्वारेण शुक्रस्य च प्रियतमशिष्योऽभवत् । तत् ज्ञात्वा दैत्यैर्बहुशो व्यापादितोऽपि कचो दुहित्रनुरोधात् शुक्रेण मृतसंजीवन्या विद्यया पुनः पुनः संजीवितः । अथ दैत्याः कचं व्यापाद्य तन्मांसानि बहुधा पक्वानि कृत्वा सुरया सह शुक्राय ददुः । शुक्रस्तु मदान्धः सुरया सह कचस्य मांसं भक्षितवान् । तेन च तदवधि ब्राह्मणानां सुरापानं निषिद्धमिति पौराणिकी वार्ता । उनिसा.

[1]पानाक्षिप्तो हि पुरुषो यत्र यत्र प्रवर्तते ।
यात्यसंव्यवहारित्वं तत्र तत्राप्रवर्तनात् ॥

( १ ) अप्रवर्तनात् संव्यवहारस्येत्यर्थात्, पाने कस्यचिदपि संव्यवहाराभावात् । जम.

( २ ) पानासक्तो हि चाण्डालादिकान्नभोजनादिरूपे अकार्येऽपि प्रवर्तते । तेनासौ शास्त्रनिषिद्धाचरणात् आर्यसमाजे अव्यवहार्यो भवतीति भावः । शब्दार्थस्तु सुगमः । उनिसा.

[2]कामं स्त्रियो निषेवेत पानं वा साधुमात्रया ।
न द्यूतमृगये विद्वानत्यन्तव्यसने हि ते ॥

( १ ) काममिति अभ्युपगमे । अत्यन्तव्यसने इति । स्त्रीपानयोः शरीरस्थित्यर्थं मात्रया युक्तं सेवनम् । तयोस्तु मात्रयाऽपि न युक्तम्, फलाभावात् तद्गुणानां चान्यथाऽपि सिद्धेः । जम.

( २ ) मृगयाद्यूतयोर्दोषाधिक्यमाह— काममिति । कामं सर्वथा वरं स्त्रियं निषेवेत गच्छेत् । अथवा साधुमात्रया परिमितमात्रया स्वल्पपरिमाणेनेत्यर्थः, पानं सुरापानं निषेवेत कुर्यात् । तथापि विद्वान् द्यूतमृगये न, निषेवेतेति शेषः । यतः ते द्यूतमृगये अत्यन्तव्यसने । उनिसा.

[1]तदपनयविधिज्ञैः श्रेयसां विघ्नकारि
व्यसनमिदमुदारं सप्तधेहोपदिष्टम् ।
जनयति हि निषङ्गादेकधैवाऽऽशु नाशं
किमु न भवति हन्ता यौगपद्योदयेन ॥

( १ ) उक्तार्थमुपसंहरन्नाह— तदित्यादि । तच्छब्दः तस्मादर्थे । यस्मादेते दोषास्तस्मात् । अपनयविधिज्ञैर्व्यसनमिदमुदारमुपदिष्टमिति संबन्धः । सप्तव्यसनवर्गस्य अपनयहेतुत्वात् तद्विधिज्ञैरित्युक्तम् । उदारं महत् । एकधा एकप्रकारः । हन्तेति वर्गशब्दाध्याहारात् पुंल्लिङ्गता । जम.

( २ ) उपसंहरति— तदिति । तत् तस्मात् श्रेयसो व्यस्यति इत्यस्मात् अपनयविधिज्ञैः अपनयस्य दुर्नीतेः शास्त्रनिषिद्धाचरणस्येति यावत्, विधिज्ञैः विधिं अनिर्दिष्टलक्षणं जानन्तीति तैः आचार्यैः श्रेयसां कल्याणानां विघ्नकारि विघातकं व्यसनं सप्त सप्तधा उदारं अप्रतिहतं यथा तथा उपदिष्टं कथितम् । तथाहि— एकमपि व्यसनं निषङ्गात् दृढसंसर्गात् आशु शीघ्रं नाशं विनाशं जनयति संपादयति । 'निषङ्गात्' इत्यत्र 'निसर्गात्' इति मुद्रितपाठे स्वभावादित्यर्थः । किमु किमुत यौगपद्योदयेन युगपदेकाधारे सर्वेषां समवायेन न हन्ता उच्छेदकारी भवति ? परश्लोकोक्तः दुरन्तः व्यसनसप्तकसमवाय इति शेषः । उनिसा.

[2]पटयति परिभोगग्राहितामिन्द्रियाणां
श्रुतमपि विनिहन्ति श्रेष्ठतां प्रष्ठतां च ।
चलयति हि विभूतिं भूयसीमप्यनीचैरपि विबुधमतीनां सप्तकोऽयं दुरन्तः ॥

---

(१) कानी. १५।६५; उनिसा. पाना (पान).
(२) कानी. १५।६६.

(१) कानी. १५।६७; उनिसा. सप्तधेहो (सप्तधैवो).
(२) कानी. १५।६८; उनिसा. प्रष्ठ (प्रेष्ठ).

(१) पटयति पटुं करोति। परिभुज्यते इति परिभोगः विषयः। श्रेष्ठतां प्रशस्यताम्। प्रष्ठतां नेतृत्वम्। अनीचैः द्रुतमित्यर्थः। दुरन्तः दुष्पाकः। जम.

(२) विबुधमतीनामपि देवसमानबुद्धीनामपि दुरन्तः दुष्परिपाकः अशुभावसानो वा अयं सप्तकः, गण इति शेषः, इन्द्रियाणां श्रोत्रत्वग्घ्राणरसननयनादीनां परिभोगग्राहितां तत्तद्विषयासक्तिं पटयति संवर्धयति। घटयतीति पाठे जनयतीत्यर्थः। श्रुतमपि आलोचितशास्त्रमपि श्रेष्ठतां उत्कृष्टत्वमपि प्रेष्ठतां अग्रगामित्वं च विनिहन्ति नाशयति। विभूतिं निश्चलामपि श्रियं भूयसीं महाप्रमाणामपि अनीचैः अत्यर्थं यथा तथा चलयति अपसारयति। उनिसा.

'अरिगणा नियतं व्यसने स्थितान्
परिभवन्ति भवन्ति च दुश्छिदः।
अपगतव्यसनास्तु बुधा रिपून्
परिभवन्ति भवन्ति च दुश्छिदः॥

(१) दुश्छिदः व्यसनग्रस्तानाम्। दुश्छिदः रिपूणाम्। जम.

(२) अरिगणाः शत्रुगणाः। अपगतव्यसना इति विशेषणमत्रापि योजनीयम्। नियतं निरन्तरं व्यसने स्थितं स्त्रीद्यूतमृगयादौ निरतं राजानं परिभवन्ति पराजयन्ते। स्वयं च दुश्छिदः दुर्भेद्याः भवन्ति। अपगतव्यसनाः व्यसनविवर्जिताः बुधाः नीतिशास्त्रविदः पण्डिताः रिपून् शत्रून् परिभवन्ति। स्वयं च ते दुश्छिदो भवन्ति। उनिसा.

*'निकामं सक्तमनसां कान्तामुखविलोकने।
गलन्ति गलिताश्रूणां यौवनेन सह श्रियः॥
धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः।
आत्मानं हन्ति तौ हत्वा युक्त्या यो न निषेवते॥

नामापि स्त्रीति संह्लादि विकरोत्येव मानसम्।
किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः॥
रहःप्रचारकुशला मृदुगद्गदभाषिणी।
कं न नारी रमयति रक्तं रक्तान्तलोचना॥
मुनेरपि मनोऽवश्यं सरागं कुरुतेऽङ्गना।
प्रसन्नं कान्तिजननं संध्येव शशिमण्डलम्॥
मनः प्रह्लादयन्तीभिर्मन्दं यान्तीभिरप्यलम्।
महान्तोऽपि हि भिद्यन्ते स्त्रीभिरद्रिरिवाचलाः॥
मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम्।
दृष्टास्तेभ्योऽपि विपदः पाण्डुनैषधवृष्णिषु॥
कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनं तस्मिंस्त्यक्ते सुखी नृपः॥
दाण्डक्यो नृपतिः कामात्क्रोधाच्च जनमेजयः।
लोभादैलस्तु राजर्षिर्वातापिर्हर्षतोऽसुरः॥
पौलस्त्यो राक्षसो मानान्मदाद्दम्भोद्भवो नृपः।
प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः॥

## शुक्रनीतिः

व्यसनसप्तकनिषेधः, द्यूतमद्यस्त्रीणां युक्त्या सेवनमनुमतम्, सेनाव्यसनानि

*'द्यूतं स्त्री मद्यमेवैतत्त्रितयं बह्वनर्थकृत्।
अयुक्तं युक्तियुक्तं हि धनपुत्रमतिप्रदम्॥
नलधर्मप्रभृतयः सुद्यूतेन विनाशिताः।
सकापट्यं धनायालं द्यूतं भवति तद्विदाम्॥
स्त्रीणां नामापि संह्लादि विकरोत्येव मानसम्।
किं पुनर्दर्शनं तासां विलासोल्लासितभ्रुवाम्॥
रहःप्रचारकुशला मृदुगद्गदभाषिणी।
कं न नारी वशीकुर्यान्नरं रक्तान्तलोचना॥
मुनेरपि मनो वश्यं सरागं कुरुतेऽङ्गना।
जितेन्द्रियस्य का वार्ता किं पुनश्चाजितात्मनाम्॥

---

* एतेषां व्याख्यानं शेषस्थलादिनिर्देशश्च 'इन्द्रियजयः' इत्यस्मिन् प्रकरणे (पृ. ९३३–९३६) द्रष्टव्यः।

(१) कानी. १५।६९ ; उनिसा. स्थितान् (स्थितं).

(२) कानी. १।५०–५९.

* 'द्यूतं स्त्री मद्यम्' इत्यारभ्य 'मद्यमन्यद्विनाशकृत्' इत्यन्तानां श्लोकानां व्याख्यानं 'इन्द्रियजयः' इत्यस्मिन् प्रकरणे (पृ. ९३८–९३९) द्रष्टव्यम्।

(१) शुनी. १।१०९–११७.

व्यायच्छन्तश्च बहवः स्त्रीषु नाशं गता अमी ।
इन्द्रदण्डक्यनहुषरावणाद्याः सदा ह्यतः ॥
अतत्परनरस्यैव स्त्री सुखाय भवेत्सदा ।
साहाय्यिनी गृह्यकृत्ये तां
विनाऽन्या न विद्यते ॥

अतिमद्यं हि पिबतो बुद्धिलोपो भवेत्किल ।
प्रतिभां बुद्धिवैशद्यं धैर्यं चित्तविनिश्चयम् ॥
तनोति मात्रया पीतं मद्यमन्यद्विनाशकृत् ॥

*[1]अदानेनापमानेन छलाच्च कटुवाक्यतः ।
राज्ञः प्रबलदण्डेन नृपं मुञ्चति वै प्रजा ॥
विपरीतगुणैरेभिः सान्वया रज्यते प्रजा ।
एकस्तनोति दुष्कीर्तिं दुर्गुणः संघशो नु किम् ॥

मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम् ।
दृष्टास्तेभ्यस्तु विपदो पाण्डुनैषधवृष्णिषु ॥

मृगया अक्षाः द्यूतानि तथा पानं मद्यपानं एतानि महीभुजां राज्ञां गर्हितानि निन्दितानि । तेभ्यः त्रिभ्यः पाण्डुनैषधवृष्णिषु पाण्डवनलयादवेषु विपदः दृष्टाः ।
शुनीटी.

†[2]नित्यं मनोपहारिण्या वाचा प्रह्लादयेज्जगत् ।
उद्वेजयति भूतानि क्रूरवाक् धनदोऽपि सन् ॥
हृदि विद्ध इवात्यर्थं यया संतप्यते जनः ।
पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥
प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा ।
शिखीव केकां मधुरां वाचं ब्रूते जनप्रियः ॥
मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः ।
हरन्ति न तथा वाचो यथा वाचो विपश्चिताम् ॥

ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति सत्कृतम् ।
श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

*[1]मुहूर्तद्वितयं चैव मृगयाक्रीडनैर्नयेत् ॥
....कालं वृथा नैव नयेत्स्त्रीमद्यसेवनैः ॥
[2]व्याघ्रादिभिर्वनचरैर्मयूराद्यैश्च पक्षिभिः ।
क्रीडयेन्मृगयां कुर्याद्दुष्टसत्त्वान्निपातयन् ॥
शौर्यं प्रवर्धते नित्यं लक्ष्यसंधानसाधनम् ।
अकातरत्वं शस्त्रास्त्रशीघ्रपातनकारिता ॥
मृगयायां गुणा एते हिंसादोषो महत्तरः ॥

‡[3]दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितश्रमम् ।
व्याधिदुर्भिक्षकरकैः पीडितं दस्युविद्रुतम् ।
पङ्कपांसुजलस्कन्नं व्यस्तं श्वासातुरं तथा ॥
प्रसुप्तं भोजने व्यग्रमभूयिष्ठमसंस्थितम् ।
घोराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ॥
एवमादिषु जातेषु व्यसनैश्च समाकुलम् ।
स्वसैन्यं साधु रक्षेत्तु परसैन्यं विनाशयेत् ॥
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषां तु पापिष्ठो विदुषां मतः ॥
भिन्ना हि सेना नृपतेर्दुःसंदेहा भवत्युत ।
मौला हि पुरुषव्याघ्र किमु नानासमुत्थिता ॥

---

* अस्य श्लोकद्वयस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११४१) द्रष्टव्यम् ।

† 'नित्यं मनोपहारिण्या' इत्यारभ्य 'मधुरा च वाक्' इत्यन्तस्य श्लोकषट्कस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११४२) द्रष्टव्यम् ।

(१) शुनी. १।१४०–१४२.
(२) शुनी. १।१६६–१७१.

* अस्य सार्धश्लोकत्रयस्य व्याख्यानं 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९६२–९६३) द्रष्टव्यम् ।

‡ एतदादिश्लोकपञ्चकस्य व्याख्यानं 'यात्रा–सङ्ग्रामः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) शुनी. १।२८३,२८६.
(२) शुनी. १।३३२–३३४.
(३) शुनी. ४।७।३४५–३४९.

## योगयात्रा

कामजानि क्रोधजानि च व्यसनानि, तेषां निषेधः, स्त्रीमद्यादीनां युक्त्या सेवनमनुमतम्

[१]मद्याङ्गनावादितनृत्यगीता-
न्यक्षो वृथाटथा मृगया क्षुनिद्रा ।
परोक्षनिन्देति च कामजानि
दशैव विद्याद्व्यसनानि पुंसाम् ॥

वाक्पारुष्यं दण्डपारुष्यमीर्ष्या
द्रोहोऽसूया पैशुनं साहसं च ।
अर्थस्योक्तं दूषणं चाष्टसंख्यः
क्रोधोद्भूतो वर्ग एष प्रदिष्टः ॥

महदिदमनयानामास्पदं मद्यमाहु-
स्तनुधनमतिसत्त्वश्रेयसां कर्षणाय ।
समुपहतमतिः सन् तत्प्रधानेन्द्रियत्वात्
गणयति न हि भक्ष्याभक्ष्यमन्यानि चैवम् ॥

[२]पत्नीयत्यपि मातरं मदवशात्पत्नीं च मात्रीयति
श्वभ्रीयत्यपि मन्दिरं श्लथशिलं कूपं च गेहीयति ।
स्वल्पं वार्युदधीयतीश्वरमपां मोहात्स्थलीयत्यपि
मित्रीयत्यपि पार्थिवं किमपरं कुर्यान्न यन्मद्यपः ॥

[३]भूयोऽपि दीव्यति जितो जयलिप्सयैव
प्राप्नोति तत्र सविशेषतरं कदाचित् ।
कृत्वा प्रियाणि मदतः परितप्य चान्ते
भूयः पिबेत्किमपि दोषविशेषकाङ्क्षी ॥

[४]अभ्यागमोत्सवभिषग्वचनोपदेशैः
कामं पिबेदमतिलोपकृदप्रकाशम् ।
द्यूतं विनेन्द्रियसुखानि हितानि युक्त्या
विज्ञस्य जीवितफलं विषयैर्विना किम् ॥

(१) योया. २।२–४.

(२) योया. २।५ ; नीम. ३६ श्लथ ( दृढ ) पार्थिवं ( विद्विषं ).

(३) योया. २।६.

(४) योया. २।७ ; नीम. ३६ गमो ( सनो ) पू.

एवं पाने वर्जितेऽपवादो योगयात्रायाम्– अभ्यासनेति । तदेकनाश्यरोगादौ तद्वचनैरित्यर्थः ।

नीम. ३६

[१]शौचाचारविवर्जितः शव इव त्यक्तः सुहृद्बान्धवैः
निःशङ्को निरपत्रपो गतघृणः कृच्छ्रादवाप्ताशनः ।
बन्धुर्नास्य निबन्धनं न शपथो लोकद्वयं नेक्षते
मायावी कुलपांसुलश्च कितवो दोषाकरो निःसुखः ॥

## नीतिवाक्यामृतम्

व्यसनशब्दव्युत्पत्तिः, सहजाहार्यभेदेन द्विविधं व्यसनम्, व्यसनपरिहारोपायाः, स्त्रीमद्यमृगयाद्यूतपैशुन्यदिवास्वापपरपरिवादसंगीतवृथाटयेर्ष्यालुतासाहसार्थदूषणाकारणवधपरस्वापहारवाक्पारुष्यदण्डपारुष्याणि व्यसनानि

[२]व्यस्यति पुरुषं श्रेयस इति व्यसनम् ॥

अथ व्यसनसमुद्देशो व्याख्यायते । तत्राऽऽदावेव व्यसनस्वरूपं निरूपयन्नाह– व्यस्यतीति । व्यस्यति प्रत्यावर्तयति इति व्यसनम् । कं प्रत्यावर्तयति ? पुरुषम् । कस्मात् ? श्रेयसः कल्याणात् । यदा पुरुषः उत्तमस्थानादधमस्थानेषु भ्रमति तदा व्यसनं आपल्लक्षणम् । तथा च शुक्रः– 'उत्तमादधमं स्थानं यदा गच्छति मानवः । तदा तद्व्यसनं ज्ञेयं बुधैस्तस्य निरन्तरम् ॥' ।

नीवाटी.

व्यसनं द्विविधं सहजमाहार्यं च ॥

अथ भूयोऽपि व्यसनस्वरूपमाह– व्यसनमिति ।

नीवाटी.

सहजं व्यसनं धर्माभ्युदयहेतुभिरधर्मजनितमहाप्रत्यवायप्रतिपादनैरुपाख्यानैर्योगपुरुषैश्च प्रशमं नयेत् ॥

अथ सहजं व्यसनं यथा नाशं नीयते तथाऽऽह– सहजमिति । प्रशमयेत् नाशयेत् । किं तत् ? व्यसनम् ।

(१) योया. २।८.

(२) नीवा. १६।१–३२.

किंविशिष्टम् ? सहजं स्वाभाविकम् । कैः ? धर्माभ्युदय-हेतुभिः धर्माभ्युदयकारणैः । धर्मकारणानि चिन्त्यानि अभ्युदयकारणानि च । ततो नाशं यान्ति । तथा अधर्मजनिताः अधर्मसंभूताः ये महाप्रत्यवायाः महा-दोषाः तेषां प्रतिपादनैः निवेदनैः । अधर्मेण ये प्रत्यवाया भवन्ति तेषां प्रतिपादनैः सहजं व्यसनं नाशं याति । तथा आख्यानैः तेषां प्रत्यवायानां वृत्तान्तैः । तथा योगपुरुषैः अध्यात्मविद्भिः सह संयोगेन । तथा च गुरुः— 'धर्मेणाभ्युदयो यस्य प्रत्यवायस्त्वधर्मतः । तं श्रुत्वा सहजं याति व्यसनं योगिसङ्गतः ॥' । नीवाटी.

**परचित्तानुकूल्येन तदभिलषितेषूपायेन विरक्ति-जननहेतवो योगपुरुषाः ॥**

अथ योगपुरुषलक्षणमाह— परचित्तेति । ये योग-पुरुषास्ते कीदृशा भवन्ति ? ये व्यसनाभिभूतस्य इष्टे वस्तुनि यत्पार्श्वाद्व्यसनं संजातं तस्योपरि विरक्तिं जन-यन्ति । केन कृत्वा ? परचित्तानुकूल्येन परस्य व्यसनाभि-भूतस्य यच्चित्तानुकूल्यं चित्तवल्लभं तेन कृत्वा । तस्योपरि ये विरक्तिं जनयन्ति ते योगपुरुषाः । तथा च हारीतः— 'परचित्तानुकूल्येन विरक्तिं व्यसनात्मके । जनयन्तीष्ट-नाशेन ते ज्ञेया योगिनो नराः ॥' । नीवाटी.

**शिष्टसंसर्गदुर्जनासंसर्गाभ्यां पुरातनमहापुरुष-चरितोत्थिताभिः कथाभिराहार्यं व्यसनं प्रतिबध्नी-यात् ॥**

अथाऽऽहार्यव्यसनं यथा नाशं याति तदाह— शिष्टेति । प्रतिबध्नीयात् नाशं नयेत् । किं तत् ? व्यसनम् । किंविशिष्टम् ? आहार्यं कृत्रिमम् । काभ्याम् ? शिष्टसंसर्गदुर्जनासंसर्गाभ्याम् । यदा कृत्रिमव्यसना-भिभूतः पुरुषः शिष्टैः सह संसर्गं करोति तथा दुर्जनैः सह संसर्गं त्यजति तदा तद्व्यसनं नाशं याति । तथा पुरातनमहापुरुषचरितोत्थिताभिः कथाभिः श्रुताभिः तद्व्यसनं याति । तथा च शुक्रः— 'आहार्यव्यसनं नश्येत्सत्सङ्गेनाहितासतम् (?) । महापुरुषवृत्तान्तैः श्रुतैश्चैव पुरातनैः ॥' । नीवाटी.

**स्त्रियमतिशयेन भजमानो भवत्यवश्यं तृतीया-प्रकृतिः ॥**

अथ स्त्रीव्यसनेनातिसेवितेन पुरुषो यथा भवति तदाह— स्त्रियमिति । अतिशयेन अत्यर्थं स्त्रियं भज-मानः पुरुषो भवति । किंविशिष्टः ? तृतीयाप्रकृतिः वृद्ध इत्यर्थः । कथं वृद्धो भवति ? अतिशुक्रच्युतेः शीघ्रं वृद्धो भवति । एवं वृद्धत्वं न लिङ्गपातेन । तथा धन्व-न्तरिः— 'अकालं जरसा युक्तः पुरुषः स्त्रीनिषेवणात् । अथवा यक्ष्मणा युक्तस्तस्माद्युक्तं निषेवयेत् ॥' । नीवाटी.

**सौम्यधातुक्षयेण सर्वधातुक्षयः ॥**

अथ सौम्यधातुक्षयेण यद्भवति तदाह— सौम्य-धात्विति । सौम्यधातुशब्देन सप्तमो धातुः शुक्रलक्षणः उच्यते । तस्य क्षयेण ये अन्ये षट् धातवः रसरुधिर-मांसमेदोस्थिमज्जास्नायुलक्षणास्ते सर्वे क्षयं यान्ति । तस्मादात्मस्वभावेन यः शुक्रो वृद्धिं याति स भोक्तव्यः, नातिशक्तिं कृत्वा सर्वक्षयः कार्यः । तथा च वैद्यकः— 'सौम्यधातुक्षये पुंसां सर्वधातुक्षयो यतः । तस्मात्तं रक्षयेद्यत्नान्मूलोच्छेदं न कारयेत् ॥ सौम्यधातुबलात्सर्वे बलवन्तो हि धातवः । तं रक्षन्ति यतः सिंहो लघुस्तुङ्गेन सोऽधिकः ॥' । नीवाटी.

**पानशौण्डश्चित्तविभ्रमान्मातरमपि गच्छति ॥**

अथ मद्यासक्तस्य यद्भवति तदाह— पानशौण्ड इति । यः पुरुषः पानशौण्डः मद्यपः भवति स किं करोति ? मातरमपि जननीमपि गच्छति भजति । तथा च नारदः— 'यदा स्यान्मद्यमत्तस्तु कुलीनोऽपि पुमांस्तदा । मातरं भजते मोहात्तस्माद्युक्तं निषेवयेत् ॥' । नीवाटी.

**मृगयासक्तिः स्तेनव्यालद्विषदायादानामामिषं पुरुषं करोति ॥**

अथातिमृगयासक्तस्य यद्भवति तदाह— मृगयेति । याऽसौ मृगयासक्तिः आखेटकव्यसनं सा किं करोति ? पुरुषं मृगयासक्तं आमिषं भक्ष्यस्थानं करोति, विनाशयतीत्यर्थः । केषामामिषम् ? स्तेनानां तस्कराणां तथा व्यालानां सिंहव्याघ्रादीनां तथा द्विषतां शत्रूणां

तथा दायादानां गोत्रिकाणाम् । तस्माचामपि युक्त्या सेवेत, नातिशयेन । तथा च भारद्वाजः– 'मृगयाव्यसनोपेतः पुरुषो वधमाप्नुयात् । चौरव्यालारिदायादपार्श्वादेकतमस्य च ॥'। नीवाटी.

**द्यूतासक्तस्य किमप्यकृत्यं नास्ति ॥**

अथ द्यूतासक्तस्य यदस्ति तदाह– द्यूतासक्तस्येति । गतार्थमेतत् । नीवाटी.

**मातर्यपि हि मृतायां दीव्यत्येव हि कितवः ॥**

अथान्यदपि कितवः किं करोतीत्याह– मातरीति । हि यस्मात्कारणात् दीव्यति द्यूतक्रीडां करोति मृतायां परलोकगतायामपि । कस्याम् ? मातरि जनन्याम् । तस्मादकृत्यं नास्ति द्यूतासक्तस्य । तथा च शुक्रः– 'सानुरागोऽपि चेन्नीवीं पत्न्याः स्पृशति कर्हिचित् । द्यूतविन्नेच्छते साधुर्व( ? सा तु व )स्त्राहरणशङ्कया ॥'। नीवाटी.

**पिशुनः सर्वेषामविश्वासं जनयति ॥**

अथ पिशुनस्य यद्भवति तदाह– पिशुन इति । जनयति करोति । कोऽसौ ? पिशुनः राजाग्रे लोकच्छिद्रकथकः । कं जनयति ? अविश्वासं अविश्रम्भम् । केषाम् ? सर्वेषां लोकानाम् । यो राजाग्रे पैशुन्यं करोति स कस्यचिद्विश्वासस्थानं न भवति कुलीनोऽपि । तथा च वसिष्ठः– 'विद्वानपि कुलीनोऽपि राजाग्रे चैव पैशुनम् । यः करोति नरो मूर्खस्तस्य कोऽपि न विश्वसेत् ॥'। नीवाटी.

**दिवास्वापो गुप्तव्याधिव्यालानामुत्थापनदण्डः सकलकार्यान्तरायश्च ॥**

अथ दिवा स्वप्नं यः करोति तस्य यद्भवति तदाह– दिवेति । योऽसौ दिवास्वापः दिवाशयनं स किंविशिष्टः ? गुप्तव्याधिव्यालानामुत्थापनदण्डः गुप्तः प्रच्छन्नं शरीरस्थः योऽसौ व्याधिः तस्योत्थापनदण्डः प्रतिलक्षणः । यथा व्यालानां सिंहव्याघ्रसर्पाणां उत्थापने दण्डः मृत्युलक्षणः । तथा सकलकार्यान्तरायः विघ्नकरश्च । यः पुमान् पुरुषः ग्रीष्मकालं मुक्त्वा दिवाशयनं करोति स व्याधिव्यालानां प्रबोधनं करोति यथा तथा दिवाशयनम् । तथा च धन्वन्तरिः– 'ग्रीष्मकालं परित्यज्य योऽन्यकाले दिवा स्वपेत् । तस्य रोगाः प्रवर्धन्ते यैः स याति यमक्षयम् ॥'। नीवाटी.

**न परपरीवादात्परं सर्वविद्वेषणभेषजमस्ति ॥**

अथ परपरीवादेन यद्भवति तदाह– नेति । न विद्यते किंचित् परपरीवादात् परं परेषां योऽसौ परीवादः तस्मादपरं विद्वेषणभेषजम् । परेषां अन्येषां याऽसौ निन्दा क्रियते तस्याः किंचिद्भेषजं औषधं नास्ति येन सा नाशं याति । तस्याः स्तुतिकरणमेकं भेषजं औषधं अस्ति । तथा च हारीतः– 'क्षयव्याधिपरीतस्य यथा नास्त्यत्र भेषजम् । परीवादप्रयोगस्य स्तुतिं मुक्त्वा न भेषजम् ॥'। नीवाटी.

**तौर्यत्रयासक्तिः प्राणार्थमानैर्वियोजयति ॥**

अथ तौर्यत्रयासक्तेर्यद्भवति तदाह– तौर्येति । तौर्यत्रयशब्देन गीतनृत्यवाद्यमुच्यते । तद्विषये याऽसौ आसक्तिः व्यसनं तद्वियोजयति । कम् ? पुरुषम् । कैः ? प्राणार्थमानैः । तस्मात् दूरतस्त्यजेत् । नीवाटी.

**वृथाट्यां ना वि( ? ट्या नावि)धाय कमप्यनर्थं विरमति ॥**

अथ वृथाटनेन यद्भवति तदाह– वृथेति । न विरामं गच्छति । काम् ? वृथाट्यां वृथाटनाम् । किं कृत्वा ? विधाय कृत्वा । कम् ? अनर्थम् । किंविशिष्टम् ? कमपि अपूर्वम् । तथा च भृगुः– 'वृथाटनं नरो योऽत्र कुरुते बुद्धिवर्जितः । अनर्थं प्राप्नुयाद्रौद्रं यस्य चान्तो न लभ्यते ॥'। नीवाटी.

**अतीवेर्ष्यालुं स्त्रियो घ्नन्ति त्यजन्ति वा पुरुषम् ॥**

अथ अतीवेर्ष्यायुक्तस्य पुरुषस्य यद्भवति तदाह– अतीवेति । अतीव ईर्ष्यायुक्तो यः पुमान् भवति स स्त्रीभिः त्यज्यते वध्यते वा । तस्मादतीवेर्ष्या न कर्तव्या । तथा च भृगुः– 'ईर्षाधिकं त्यजन्ति स्म घ्नन्ति वा पुरुषं स्त्रियः । कुलोद्भूता अपि प्रायः किं पुनः कुकुलोद्भवाः ॥'। नीवाटी.

**परपरिग्रहाभिगमः कन्यादूषणं वा साहसम् ॥**

अथ साहसस्य लक्षणमाह– परेति । परस्य अन्यस्य योऽसौ परिग्रहः कलत्रलक्षणः तस्य अभिगमः प्राप्तिः

परकलत्रहरणलक्षण इत्यर्थः, तथा कन्यादूषणं कन्यागमनं क्रियते तत्साहसम्। इहलोके परलोके निर्भयत्वमित्यर्थः। तथा च भारद्वाजः– 'अन्यभार्यापहारो यस्तथा कन्याप्रदूषणम्। तत्साहसं परिज्ञेयं लोकद्वयभयप्रदम्॥'। नीवाटी.

**यत्साहसं दशमुखदाण्डिक्यविनाशहेतुः सुप्रसिद्धमेव॥**

अथ तस्य साहसस्य दृष्टान्तमाह– यत्साहसमिति। रामायणे पुराणे च कथितम्। नीवाटी.

**यत्र नाहमस्मीत्यध्यवसायस्तत्साहसम्॥**

अथ भूयोऽपि साहसलक्षणमाह– यत्रेति। यत्र यस्मिन् कर्मणि प्रारब्धे रौद्रतमे नाहमस्मीत्यङ्गीकृत्य मरणं पश्चादध्यवसायः क्रियते तदेव साहसम्। तथा च भृगुः– 'अङ्गीकृत्याऽऽत्मनो मृत्युं यत्कर्म क्रियते नरः। तत्साहसं परिज्ञेयं रौद्रकर्मणि निर्भयम्॥'। नीवाटी.

**अर्थदूषकः कुबेरोऽपि भवति भिक्षाभाजनम्॥**

अथार्थदूषणेन यद्भवति तदाह– अर्थदूषक इति। यः पुरुषः अर्थदूषकः भवति अतिव्ययं करोति अपात्रे च प्रयच्छति स इत्थंभूतो यदि स्यात् तदा कुबेरोऽपि धनदोऽपि भवति भिक्षाभाजनम्, दरिद्र इत्यर्थः। तथा च हारीतः– 'अतिव्ययं च योऽर्थस्य कुरुते कुत्सितं सदा। दारिद्र्योपहतः स स्याद्धनदोऽपि न किं परः॥'। नीवाटी.

**अतिव्ययोऽपात्रव्ययश्चार्थदूषणम्॥**

अथ अर्थदूषणस्य लक्षणमाह– अतिव्यय इति। पूर्वसूत्रे व्याख्यातमेतत्। नीवाटी.

**हर्षामर्षाभ्यामकारणं तृणाङ्कुरमपि नोपहन्यात्किं पुनर्मर्त्यम्॥**

अथाकारणवधस्य स्वरूपमाह– हर्षामर्षाभ्यामिति। नोपहन्यात् न व्यापादयेत्। किं तत्? तृणाङ्कुरमपि। कथम्? अकारणं प्रयोजनबाह्यम्। काभ्याम्? हर्षामर्षाभ्याम्। हर्षशब्देन अहंकारः कथ्यते। अमर्षः कोपः। ताभ्यां कृत्वा। किं पुनः मर्त्यं मानवम्? तथा च भारद्वाजः– 'तृणच्छेदोऽपि नो कार्यो विना कार्येण साधुभिः। येन नो सिध्यते किंचित् किं पुनर्मानुषं सहम्॥'। नीवाटी.

**श्रूयते किल निष्कारणभूतावमानिनौ वातापिरिल्वलश्च द्वावसुरावगस्त्याशनाद्विनेशतुरिति॥**

एतयोर्वृत्तान्तो महाभारतादि( ? दौ ) पुराणेषु च ज्ञेयः। नीवाटी.

**यथादोषं कोटिरपि गृहीता न दुःखायते। अन्यायेन पुनस्तृणशलाकाऽपि गृहीता प्रजाः खेदयति॥**

तथा च भागुरिः– 'गृहीता नैव दुःखाय कोटिरप्यपराधिनः। अन्यायेन गृहीतं यद्भूभुजा तृणमर्तिदम्॥'। नीवाटी.

**तरुच्छेदेन फलोपभोगः सकृदेव॥**

अथ जनसर्वस्वहरणे नृपस्य वृक्षच्छेददृष्टान्तद्वारेण यद्भवति तदाह– तरुच्छेदेनेति। यदा तरोर्मूलच्छेदः कृतः तदा फलोपभोगः फलप्राप्तिः तज्जाता सकृदेव एकवारम्, न द्वितीयम्। तथा राजाऽपि यः सर्वस्वं कुटुम्बिनां हरति तावन्मात्रः स लाभः तेषां पार्श्वात्, नापरः। तथा च वल्लभदेवः– 'मूलच्छेदे यथा नास्ति तत्फलस्य पुनस्तरोः। सर्वस्वहरणे तद्वन्न नृपस्य तदुद्भवः॥'। नीवाटी.

**प्रजाविभवो हि स्वामिनोऽद्वितीयो भाण्डागारोऽतो युक्तितस्तमुपभुञ्जीत॥**

अथ प्रजानां विभवो नृपस्य यथा भवति तदाह– प्रजाविभव इति। प्रजानां विभवः स्वामिनः अद्वितीयं भाण्डागारलक्षणं हि स्फुटम्। अतः अस्मात्कारणात् युक्तितः न्यायेन तमुपभुञ्जीत। अन्यायेन न गृह्णीयादित्यर्थः। तथा च गौतमः– 'प्रजानां विभवो यश्च सोऽपरः कोश एव हि। नृपाणां युक्तितो ग्राह्यः सोऽन्यायेन न कर्हिचित्॥'। नीवाटी.

**राजपरिगृहीतं तृणमपि काञ्चनं भवति ( जायते ? ) पूर्वसंचितस्याप्यर्थस्यापहाराय॥**

अथ राज्ञो द्रव्ये गृहीते यद्भवति तदाह– राजपरिगृहीतमिति । राजपरिगृहीतं तृणमपि चौर्येण गृहीतं काञ्चनं भवति सुवर्णं स्यात् । कथम् ? यतः संचितस्याप्यर्थस्यापहाराय नाशाय भवति । तस्मात् दूरतः त्यजेत् । तथा च गर्गः– 'यो हरेद्भूपजं वित्तमपि स्वल्पतरं हि यत् । गृहस्थस्यापि विज्ञस्य तन्नाशाय प्रजायते ॥' । नीवाटी.

**वाक्पारुष्यं शस्त्रपातादपि विशिष्यते ॥**

अथ वाक्पारुष्यलक्षणमाह– वाक्पारुष्यमिति । विशिष्यते अधिकतरं भवति । किं तत् ? वाक्पारुष्यं निष्ठुरं वचनं प्रोक्तम् । कस्माद्विशिष्यते ? शस्त्रपातादपि । तस्माद्वरं शस्त्रपातः कृतः सुजनस्य, न निष्ठुरं वचनं प्रोक्तम् । तथा च विदुरः– 'वाक्सायका रौद्रतमा भवन्ति यैराहतः शोचति रात्र्यहानि । परस्य मर्मस्वपि ते पतन्ति तान् पण्डितो नैव क्षिपेत्परेषु ॥' (भामु. ५।३४।८०) । नीवाटी.

**जातिवयोवृत्तविद्यादोषाणामनुचितं वचो वाक्पारुष्यम् ॥**

अथ परुषवचनस्य लक्षणमाह– जातीति । यत् वचः वचनं अनुचितं अयोग्यम् । केषाम् ? जातिवयोवृत्तविद्यादोषाणाम् । तद्वाक्यपारुष्यम् । येन वचनेन जात्यः कुलीनः अकुलीनः कथ्यते, तथा विद्वान् मूर्खः कथ्यते, तथा अदोषः बहुदोषः कथ्यते, तत् पारुष्यम् । तथा च जैमिनिः– 'जातिपारुष्यवित्ताढ्यान् (?) निर्दोषान् यस्तु भर्त्सयेत् । तद्गुणैर्वामितां नीतैः पारुष्यं तन्न कारयेत् ॥' । नीवाटी.

**स्त्रियमपत्यं भृत्यं च तथोक्त्वा विनयं ग्राहयेद्यथा हृदयप्रविष्टाच्छल्यादिव न ते दुर्मनायन्ते ॥**

अथ स्त्रियमपत्यं भृत्यं च यथा विनयं ग्राहयेत् तथाऽऽह– स्त्रियमपत्यमिति । ग्राहयेत् ग्रहणयुक्तान् कारयेत् । कम् ? विनयम् । काम् ? स्त्रियं भार्याम्, तथा अपत्यम्, तथा भृत्यं सेवकम् । त्रीण्येतानि विनयं ग्राहयितव्यानि यथा सविनयानि भवन्ति तथा करणीयानि । यथा ते त्रयोऽपि पूर्वोक्ताः स्त्रीपुत्रभृत्याः न दुर्मनायन्ते अन्यमनस्का न भवन्ति तथा कार्यम् । कस्मादिव ? शल्यादिव हृदयप्रविष्टात् । हृदयप्रविष्टे शल्ये यथा मनसि दुःखं भवति तथा ते न कर्तव्याः, यथा सानन्दा भवन्तीति । तथा च शुक्रः– 'भार्याभृत्यसुता यस्य वाक्पारुष्यसुदुखिताः । भवन्ति तस्य नो सौख्यं तेषां पार्श्वात्प्रजायते ॥' । नीवाटी.

**वधः परिक्लेशोऽर्थहरणमक्रमेण दण्डपारुष्यम् ॥**

अथ दण्डपारुष्यमाह– वध इति । यत् अक्रमेण अन्यायेन कस्यचिद्वधः क्रियते, तथा क्लेशः गुप्तिपातः, अर्थग्रहणं द्रव्यापहारः, तत् दण्डपारुष्यमुच्यते । तस्मात्तन्न कार्यमिति । तथा च गुरुः– 'वधक्लेशापहारं यत्प्रजानां कुरुते नृपः । अन्यायेन हि तत्प्रोक्तं दण्डपारुष्यमेव च ॥' । नीवाटी.

**एकेनापि व्यसनेनोपहतश्चतुरङ्गोऽपि राजा विनश्यति किं पुनर्न सप्तभिः ॥**

अथ व्यसनोपहतस्य राज्ञो यद्भवति तदाह– एकेनापीति । गतार्थमेतत् । नीवाटी.

## अनिर्दिष्टकर्तृकवचनम्

### कार्याविरुद्धमृगयानुमतिः

**[1]अन्यकार्याविरोधेन कुर्यादाखेटकं नृपः ॥**

अथ मृगया । सा त्रिविधा– जलस्थलान्तरिक्षभेदात् । सा च यद्यपि पूर्वं व्यसनमध्ये परिगणिता तथापि 'अन्यकार्याविरोधेन' इत्यादिवचनादत्यनासक्तेन कार्या । अस्यां च गुणोऽप्युक्तः कालिदासेन– 'मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥' । नीम. ४१

(१) नीम. ४१.

# पुरोहितः

—०—

## आथर्वणपरिशिष्टम्

राज्ञा वरणीयः अथर्ववेदवित् पुरोहितः, पुरोहितस्य गुणा दोषाश्च, पुरोहितकर्तव्यानि आथर्वणिकानि

'तस्मात्कुलीनं श्रोत्रियं भृग्वङ्गिरोविदं विनयाकृतिशौचाचारयुक्तमलोलुपं व्रतनियमचारित्रवृत्तलक्षणगुणसंपन्नं संधिविग्रहचिकित्सकं माहेन्द्रजालभूतकर्मादिष्वभिविन्दकं जितस्थानासनं हिमातपवर्षसहं ह्रीधृतिकर्मार्जवशमदयादानशक्तिसंपन्नं बृहस्पत्युशनसोः ( कृतौ पारगं ) स्थानाकृतिप्रमाणवर्णश्रुतवपुषा चानुमेयं तेजस्विनं गम्भीरं सत्त्वयुक्तं गुरुं वृणुयाद्भूपतिः ॥

तस्माद्गुरुं वेदरहस्ययुक्तं
चतुर्विधे कर्मणि चाप्रमत्तम् ।
शान्तं च दान्तं च जितेन्द्रियं च
कुर्यान्नरेन्द्रः प्रियदर्शनं च ॥

नातिदीर्घं नातिह्रस्वं नातिस्थूलं कृशं तथा ।
न च हीनातिरिक्ताङ्गं कचित्कुर्यात्पुरोहितम् ॥
हीनाधिकाङ्गं पतितं विवर्णं स्तेयिनं जडम् ॥
क्लीबमशक्तियुक्तं भिन्नस्वरं काणं विरूपनेत्रं
द्वेष्यं च राजा गुरुं नैव कुर्यात् ॥

हीनाधिकाङ्गे पुरराष्ट्रहानिः
काणे जडे वाहनकोशनाशः ।
स्तेये त्वशक्ते च समस्तदोषाः
क्लीबे विवर्णे नृपतिर्विनश्येत् ॥
भिन्नस्वरे जायते गात्रभेदो
द्वेष्ये गुरौ विप्रतिपत्तिमाहुः ।
विवर्णनेत्रे पतिते सुपुत्रा-
नध्वर्युणा चैव निहन्ति पौत्रान् ॥

कृष्णे कोशक्षयं विद्याद्रक्ते वाहनसंक्षयः ।
पिङ्गलः पार्थिवं हन्याद्राष्ट्रं हन्यात्तु केकरः ॥

बह्वृचं हि नियुञ्ज्याद्यः पौरोहित्ये तु पार्थिवः ।
सभारः पङ्के हस्तीव सह तेनैव मज्जति ॥

अध्वर्युं हि नियुञ्ज्याद्यः पौरोहित्ये तु पार्थिवः ।
उत्तितीर्षुरिवाश्मानमादत्ते स्ववधाय सः ॥

वधबन्धपरिक्लेशान् कोशवाहनसंक्षयम् ।
करोत्येतां च योऽवस्थां तपोयुक्तोऽपि सामगः ॥

अन्वयाकृतिसंपन्नं तस्माद्भृग्वङ्गिरोविदम् ।
गोत्राङ्गिरसवासिष्ठं राजा कुर्यात्पुरोहितम् ॥

मखेषु राष्ट्रेषु पुरेषु चैव
सेनासु राज्ञां स्वनिवेशनेषु ।
य उत्पातास्त्रिविधा घोररूपा-
स्तान् सर्वान् शमयेद्ब्रह्मवेदवित् ॥

ब्रह्मवेदः अथर्ववेदः । बह्वृचादिनिषेधस्याथर्ववेदवेत्तरि( ? वेदविहित–) शान्त्यादिवेत्तरि तात्पर्यम्, न तु बह्वृचादिनिषेधे । राप्र. ६१

*'गुरुं वृणुयाद्भूपतिर्मधुपर्काद्येन विधिना ॥
न पुनः कुर्यादन्यराजपुरोहितम् ॥

* अत्रायं 'गुरुं ... विधिना' इति वाक्यमाथर्वणपरिशिष्टस्थमिति विश्वबन्धुसंपादितवैदिकपदानुक्रमकोशादवगम्यते । तथा 'न पुनः ... पुरोहितम्' इति द्वितीयवाक्यगतपदानां निर्देशः यद्यप्याथर्वणपरिशिष्टस्थत्वेन वि. वै. कोशे नोपलभ्यते तथापि 'रथसिंहासनासि' (राकौ. २४२) इत्याद्याथर्वणपरिशिष्टस्थवाक्यव्याख्यानावसरे तद्वाक्यशेषत्वेन वाक्यस्यास्य राजधर्मकौस्तुभकारैर्निर्दिष्टत्वादिदं वाक्यमप्याथर्वणपरिशिष्टस्थमेवेति स्फुटं प्रतीयते । 'रथसिंहासनासि' इति वाक्यमाथर्वणपरिशिष्टस्थमेव, वि. वै. कोशात् तथाऽवगतेः । आथर्वणानुक्रमणिकास्थमिदं वाक्यत्रयमिति राजधर्मकौस्तुभकारोक्तिस्तु रभसादिति प्रतिभाति ।

( १ ) राप्र. ५९–६१.

( १ ) राकौ. २४२ आथर्वणानुक्रमणिकायाम्.

अन्यकुलोपयुक्तः पुरोहितो वर्ज्यः

[1]यस्यान्यकुलोपयुक्तपुरोधाः शान्तिकपौष्टिकप्रायश्चित्ताभिचारिकनैमित्तिकौर्ध्वदैहिकान्यथर्ववि-हितानि कर्माणि कुर्यात्स तस्य प्रत्यङ्गिरा भूत्वा हस्त्यश्वरथपदात्यादीनि नाशयेत् ॥

अस्यापि शान्त्यादिज्ञातरि तात्पर्यम्, न त्वथर्ववेदवेत्तरि। राप्र. ६१

## गौतमः

राज्ञा वरणीयो ब्राह्मणः पुरोहितः, पुरोहितस्य गुणाः

[2]ब्राह्मणं च पुरोदधीत ॥

[3]विद्याभिजनवाग्रूपवयःशीलसंपन्नम् ॥

[4]न्यायवृत्तं तपस्विनम् ॥

(१) ब्राह्मणं पुरः अग्रे सर्वकार्येषु कुर्यात्। चशब्दात् सेनापतिं च कुर्यात्। विद्याशब्देन अथर्ववेद उच्यते स एव शान्त्यादिकर्मसमर्थ इति। अभिजनः चारित्रं तद्वान् कार्ये प्रवर्तेत इति। वाक्संपन्नः संस्कृत-वक्तृत्वेन सर्वं रञ्जयतीति। रूपसंपन्नः प्रियदर्शनत्वाच्छ्रद्धेयवाक्यो भवतीति। वयःसंपन्नः नातियुवा नातिस्थविरः असावेव महत्कर्मयोग्यो भवतीति। शीलसंपन्नः क्षमायुक्तः तस्यासाध्यं नास्तीति। किंचान्यत्, न्यायवृत्तः अविरुद्धलोकाचारोपेतः सः कृच्छ्रेऽपि राजानं न परित्यजतीति। तपस्वी ऋतावेव गमनशील इत्यर्थः, सोऽभ्यन्तरप्रवेशादिषु योग्यो भवतीति। अन्येऽपि सहाया एवंरूपा एव कर्तव्या इति योगविभागः। विसमासो धर्मशास्त्रकुशलोपसंग्रहार्थः। मभा.

(२) 'स एव बहुश्रुतो भवति' (गौध. ८।४) इत्यारभ्य उक्ता विद्या। विशिष्टकुले जन्म अभिजनः। वाक् संस्कृता भारती। रूपं मनोहरम्। वयः मध्यमं नातिबालो नातिस्थविर इति। शीलं अन्तःकरणशुद्धिः बाह्यं वा अनुष्ठानम्। एतैर्विद्यादिभिः संपन्नं समृद्धम्। न्यायवृत्तं लोकाविरुद्धाचारम्। तपस्विनं अभोगपरम्। एवंभूतं ब्राह्मणं पुरोदधीत पुरोहितं कुर्वीत। गौमि.

ब्राह्मणपुरोहिताभ्यनुज्ञया राज्ञा कर्तव्यानि निर्वर्तनीयानि

[1]तत्प्रसूतः कर्माणि कुर्वीत ॥

(१) तत्प्रसूतः तदनुज्ञातः। राक. १६५

(२) तच्छब्दः सर्वसहायोपसंग्रहार्थः। प्रसूतः अभ्यनुज्ञातः। तैर्विचार्येत्यर्थः। कर्माणि दृष्टादृष्टार्थानि कुर्वीत। मभा.

(३) सर्वेषु कर्मसु पुरो धीयते इति पुरोहितः। तद्दर्शयति– तत्प्रसूत इति। तेन पुरोहितेन प्रसूतः अनुज्ञातः इदमित्थं कर्तव्यमिति कृतोपदेशः कर्माणि श्रौतस्मार्तादीनि पौराणिकानि नित्यनैमित्तिकानि शान्तिकपौष्टिकानि आभिचारिकाणि कुर्वीत। * गौमि.

[2]ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते ॥

(१) किंच– ब्रह्मप्रसूतमिति। हिशब्दो यस्मादर्थे। यस्मात् ब्राह्मणानुज्ञया क्षत्रकर्म प्रवर्तमानं ऋध्यते, अवश्यं तत्फलेन युज्यते इत्यर्थः। विधिनैव कृतत्वात् पात्रदोषाद्यभावात् न व्यथते, अन्यथा न भवतीत्यर्थः। इतिचशब्दौ श्रुतिद्वयसूचनार्थौ। विज्ञायते इति श्रुति-सूचनार्थम्। विचार्यैव कर्तव्यानीत्येवमर्थः श्रुत्युपन्यासः। मभा.

---

(१) राप्र. ६१.

(२) गौध. ११।१२; राक. १६४; मभा.; गौमि.; राप्र. ५९, १३६; बौवि. ३।१८।८ (च०).

(३) गौध. ११।१३; राक. १६४–१६५; मभा.; गौमि. ११।१२; राप्र. ५९, १३६; बौवि. ३।१८।८ (शील०).

(४) गौध. ११।१४; राक. १६५; मभा.; गौमि. ११।१२; राप्र. ५९, १३६; बौवि. ३।१८।८.

* राप्र. गौमिगतम्।

(१) गौध. ११।१५; राक. १६५; मभा.; गौमि. ११।१३; राप्र. १३६; बौवि. ३।१८।८ कर्माणि (कर्म).

(२) गौध. ११।१६; राक. १६५; मभा.; गौमि. ११।१४; राप्र. १३६; बौवि. ३।१८।८ निर्देशमात्रम्.

(२) तत्प्रसूत इत्यस्य मूलत्वेन ब्राह्मणमाकर्षति–ब्रह्मप्रसूतमिति । ब्रह्म ब्राह्मणः, तेन प्रसूतं अनुज्ञातं हि क्षत्रं क्षत्रियं ऋध्यते समृद्धं भवतीति । न व्यथते न कुतश्चित् बिभेति, निरपायं स्यादित्यर्थः । इत्येवंप्रकारेण विज्ञायते परंपरया दृश्यते । * गौमि.

पुरोहितद्वारा शान्त्यादीनि कर्तव्यानि

¶ [१]शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्ताम्याभ्युदयिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात् ॥

यथोक्तमृत्विजोऽन्यानि ॥

## बौधायनः

राज्ञा वरणीयः सर्वतोधूः पुरोहितः, पुरोहितशासनानुवर्तनम्

[२]सर्वतोधुरं पुरोहितं वृणुयात् ॥

सर्वत्र धूः यस्य सर्वतोधूः । धूश्च व्यापारः विषयज्ञानमिहाभिप्रेतम् । सर्वज्ञ इति यावत् । पुरो धीयते इति पुरोहितः । तं वृणुयात् वृणीत । बौवि.

तस्य शासने वर्तेत ॥

तत्प्रयुक्तः कर्माणि कुर्यात् । स च ब्राह्मणः विद्याभिजनवांश्च, गौतमवचनात् । स ह्याह– 'ब्राह्मणं पुरोदधीत । विद्याभिजनवाग्रूपवयःसंपन्नम् । न्यायवृत्तं तपस्विनम् । तत्प्रसूतः कर्म कुर्वीत । ब्रह्मप्रसूतं हि क्षत्रमृध्यते ।' (गौध. ११।१२–१६) इत्यादि । बौवि.

## वसिष्ठः

ब्राह्मणः पुरोहितो वरणीयः

[३]तस्माद्गार्हस्थ्यनैयमिकेषु पुरोहितं दध्यात् ॥

विज्ञायते ब्रह्मपुरोहितं राष्ट्रमृध्नोतीति ॥

उभयस्य पालनात् ॥

असामर्थ्याच्च ॥

## विष्णुः

वरणीयपुरोहितगुणाः

[१]वेदेतिहासधर्मशास्त्रार्थकुशलं कुलीनमव्यङ्गं तपस्विनं पुरोहितं च वरयेत् ॥

(१) पुरोहितम्, कुर्यादिति शेषः । राप्र. १३७

(२) अर्थः अर्थशास्त्रं औशनसादि । वै.

## महाभारतम्

राज्ञा ब्राह्मणः पुरोहितो वरणीयः, पुरोहितप्रयोजनम्, पुरोहिताभ्यनुज्ञया वर्तनम्

[२]यस्तु स्यात्कामवृत्तोऽपि राजा तापत्य संगरे ।
जयेन्नक्तंचरान् सर्वान् स पुरोहितधूर्गतः ॥
[३]तस्मात्तापत्य यत्किंचिन्नृणां श्रेय इहेप्सितम् ।
तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥
वेदे षडङ्गे निरताः शुचयः सत्यवादिनः ।
धर्मात्मानः [४]कृतात्मानः स्युर्नृपाणां पुरोहिताः ॥
[५]जयश्च नियतो राज्ञः स्वर्गश्च स्यादनन्तरम् ।
यस्य स्याद्धर्मविद्वाग्ग्मी पुरोधाः शीलवाञ्शुचिः ॥
[५]लाभं लब्धुमलब्धं हि लब्धं च परिरक्षितुम् ।
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् ॥

---

* राप्र. गौमिव्याख्यानुवादः ।

¶ अस्य वचनद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १०२५–१०२६) द्रष्टव्यः ।

(१) गौध. ११।१९–२०.

(२) बौध. १।१८।७–८. (३) वस्मृ. १९।२–५.

(१) विस्मृ. ३।७०; राक. १६४ शास्त्रार्थ (शास्त्र) पुरोहितं च (च पुरोहितं) (वरयेत्०); राप्र. ५९ शास्त्रार्थ (शास्त्रेषु) पुरोहितं च वरयेत् (च पुरोहितं कुर्यात्): १३७ राकवत्.

(२) भा. १।१५९।१५; भामु. १।१७०।७३ द्वितीयचरणे (पार्थ ब्रह्मपुरस्कृतः).

(३) भा. १।१५९।१६–१७; भामु. १।१७०।७४–७५.

(४) भा. १।१५९।१८; भामु. १।१७०।७६ स्याद (तद).

(५) भा. १।१५९।१९; भामु. १।१७०।७७ लब्धं हि लब्धं च (लब्धुं वा लब्धं वा).

लाभं लब्धव्यं धनम् । नीटी.

[1]पुरोहितमते तिष्ठेद्य इच्छेत्पृथिवीं नृपः ।
प्राप्तुं मेरुवरोत्तंसां सर्वशः सागराम्बराम् ॥

[2]न हि केवलशौर्येण तापत्याभिजनेन च ।
जयेद्ब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् ॥
तस्मादेवं विजानीहि कुरूणां वंशवर्धन ।
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ॥

इक्ष्वाकुकुलराजपुरोहितो वसिष्ठः, ब्राह्मणः पुरोहितो वरणीयः

गन्धर्व उवाच–

[3]ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः ।
तपसा निर्जितौ शश्वदजेयावमरैरपि ।
कामक्रोधावुभौ यस्य चरणौ संववाहतुः ॥

[4]इन्द्रियाणां वशकरो वशिष्ठ इति चोच्यते ॥

[5]यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः ।
विश्वामित्रापराधेन धारयन्मन्युमुत्तमम् ॥

अपराधेन पुत्रशतवधरूपेण । नीटी.

[6]पुत्रव्यसनसंतप्तः शक्तिमानपि यः प्रभुः ।
विश्वामित्रविनाशाय न मेने कर्म दारुणम् ॥

[7]मृतांश्च पुनराहर्तुं यः स पुत्रान् यमक्षयात् ।
कृतान्तं नातिचक्राम वेलामिव महोदधिः ॥

[1]यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ।
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ॥

[2]पुरोहितवरं प्राप्य वसिष्ठमृषिसत्तमम् ।
ईजिरे क्रतुभिश्चापि नृपास्ते कुरुनन्दन ॥

[3]स हि तान् याजयामास सर्वान्नृपतिसत्तमान् ।
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ॥

[4]तस्माद्धर्मप्रधानात्मा वेदधर्मविदीप्सितः ।
ब्राह्मणो गुणवान् कश्चित्पुरोधाः प्रविमृश्यताम् ॥

[5]क्षत्रियेण हि जातेन पृथिवीं जेतुमिच्छता ।
पूर्वं पुरोहितः कार्यः पार्थ राज्याभिवृद्धये ॥

[6]महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरःसरम् ।
तस्मात्पुरोहितः कश्चिद्गुणवानस्तु वो द्विजः ॥

[7]विद्वान् भवतु वो विप्रो धर्मकामार्थतत्त्ववित् ॥

पुरोहितगुणाः

[8]कश्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥

विनयसंपन्नः शिक्षायुक्तः । कुलपुत्रः सत्कुलजः । अनसूयुः परगुणेषु दोषारोपमकुर्वन् । अनुप्रष्टा शास्त्रचर्चाकुशलः । असंकीर्ण इति पाठे सदसद्विवेकवान् । नीटी.

---

(१) भा. १।१५९।२०; भामु. १।१७०।७८ त्पृथिवीं नृपः (द्भूतिमात्मनः) मेरुवरोत्तंसां (वसुमतीं सर्वां).

(२) भा. १।१५९।२१–२२; भामु. १।१७०।७९–८०.

(३) भा. १।१६४।५ प्रथमार्धं नास्ति; भामु. १।१७४।५–६.

(४) भामु. १।१७४।६.

(५) भा. १।१६४।६; भामु. १।१७४।७.

(६) भा. १।१६४।७; भामु. १।१७४।८ पि यः प्रभुः (प्यशक्तवत्) मेने (चक्रे).

(७) भा. १।१६४।८; भामु. १।१७४।९ यः स (शक्तः).

(१) भा. १।१६४।९; भामु. १।१७४।१०.

(२) भा. १।१६४।१०; भामु. १।१७४।११ वरं (मिमं) श्चापि (श्चैव).

(३) भा. १।१६४।११; भामु. १।१७४।१२.

(४) भा. १।१६४।१२; भामु. १।१७४।१३ प्रविमृश्य (प्रतिदृश्य).

(५) भा. १।१६४।१३; भामु. १।१७४।१४ ण हि (णाभि).

(६) भा. १।१६४।१४; भामु. १।१७४।१५ नस्तु वो द्विजः (न्विजितेन्द्रियः).

(७) भामु. १।१७४।१५.

(८) भा. २।५।२९; भामु. २।५।४०.

राज्ञा वरणीयः ब्राह्मणः पुरोहितः, पुरोहितकर्तव्यम्, सर्ववर्णगुरुर्ब्राह्मणः

भीष्म उवाच–

[1]य एव तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राज्ञा कर्तव्यो राजन्राजपुरोहितः ॥

निवर्तयेत् राज्यात् दूरीकारयेत् । नीटी.

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पुरूरवस ऐलस्य संवादं मातरिश्वनः ॥

ऐल उवाच–

[3]कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः ।
कस्माच्च भवति श्रेयानेतद्वायो विचक्ष्व मे ॥

वायुरुवाच–

[4]ब्रह्मणो मुखतः सृष्टो ब्राह्मणो राजसत्तम ।
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य उच्यते ॥

[5]वर्णानां परिचर्यार्थं त्रयाणां पुरुषर्षभ ।
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः ॥

[6]ब्राह्मणो जातमात्रस्तु पृथिवीमन्वजायत ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥

[1]ततः पृथिव्या गोप्तारं क्षत्रियं दण्डधारिणम् ।
द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये ॥

[2]वैश्यस्तु धनधान्येन त्रीन्वर्णान्बिभृयादिमान् ।
शूद्रो ह्येनान्परिचरेदिति ब्रह्मानुशासनम् ॥

ऐल उवाच–

[3]द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत् ।
धर्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ॥

वायुरुवाच–

विप्रस्य सर्वमेवैतद्यत्किंचिज्जगतीगतम् ।
ज्येष्ठेनाभिजनेनेह तद्धर्मकुशला विदुः ॥
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः ॥

[4]पत्यभावे यथा स्त्री हि देवरं कुरुते पतिम् ।
आनन्तर्यात्तथा क्षत्रं पृथिवी कुरुते पतिम् ॥

[5]एष ते प्रथमः कल्प आपद्यन्यो भवेदतः ।
यदि स्वर्गे परं स्थानं धर्मतः परिमार्गसि ॥

[6]यः कश्चिद्विजयेद्भूमिं ब्राह्मणाय निवेदयेत् ।
श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने ॥

[7]स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत् ।
यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया ॥

---

(१) भा. १२।७३।१; भामु. १२।७२।१ वर्ह (वर्त).

(२) भा. १२।७३।२; भामु. १२।७२।२.

(३) भा. १२।७३।३; भामु. १२।७२।३ ऐल उवाच (पुरूरवा उवाच) उत्तरार्धे (कस्माच्च भवति श्रेष्ठस्तन्मे व्याख्यातुमर्हसि ॥).

(४) भा. १२।७३।४; भामु. १२।७२।४ वायुरुवाच (मातरिश्वोवाच) ब्रह्मणो (ब्राह्मणो) ब्राह्मणो (ब्रह्मणो) उच्यते (एव च).

(५) भा. १२।७३।५; भामु. १२।७२।५ पुरुष (भरत) पश्चात्तु (संभूतः).

(६) भा. १२।७३।६; भामु. १२।७२।६ पूर्वार्धे (ब्राह्मणो जायमानो हि पृथिव्यामनुजायते ।).

(१) भा. १२।७३।७; भामु. १२।७२।७ ततः (अतः) गोप्तारं (यन्तारं) धारिणम् (धारणे) वर्ण (दण्ड).

(२) भा. १२।७३।८; भामु. १२।७२।८ ह्येना (ह्येता).

(३) भा. १२।७३।९–११; भामु. १२।७२।९–११.

(४) भा. १२।७३।१२; भामु. १२।७२।१२ यथा स्त्री हि (यथैव स्त्री) पू.

(५) भा. १२।७३।१३; भामु. १२।७२।१२–१३ स्वर्गे (स्वर्ग) धर्मतः (स्वधर्म).

(६) भा. १२।७३।१४; भामु. १२।७२।१३–१४ पूर्वार्धे (यत्किंचिज्जयसे भूमिं ब्राह्मणाय निवेदय ।).

(७) भा. १२।७३।१५; भामु. १२।७२।१४–१५.

[1]ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवाक् ।
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम् ॥
[2]राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम् ।
शुश्रूषुरनहंवादी क्षत्रधर्मव्रते स्थितः ॥
[3]तावता स कृतप्रज्ञश्चिरं यशसि तिष्ठति ।
तस्य धर्मस्य सर्वस्य भागी राजपुरोहितः ॥

पुरोहितवरणम्

भीष्म उवाच–

[4]राज्ञा पुरोहितः कार्यो भवेद्विद्वान् बहुश्रुतः ।
उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् ॥

अप्रमेयौ गहनौ । अनन्तरं शीघ्रमेव पुरोहितः कार्यो भवेत् । नीटी.

[5]धर्मात्मा धर्मविद्येषां राज्ञां राजन् पुरोहितः※।
राजा चैवंगुणो येषां कुशलं तेषु सर्वशः ॥

धर्मात्मेति । धर्मसाधकः । नीटी.

---

※ अतः परं भा-पुस्तके ११८ इतिक्रमाङ्के परिशिष्टे डी. ७, एस्. इतिसंकेतितहस्तलिखितपुस्तकस्था इमे श्लोकाः समुद्धृताः– तेषामर्थश्च कामश्च धर्मश्चेति विनिश्चयः ॥ श्लोकांश्चोशनसा गीतांस्तान्निबोध युधिष्ठिर । उच्छिष्टः स भवेद्राजा यस्य नास्ति पुरोहितः ॥ रक्षसामसुराणां च पिशाचोरगपक्षिणाम् । शत्रूणां च भवेद्वध्यो यस्य नास्ति पुरोहितः ॥ ब्रह्मत्वं सर्वयज्ञेषु कुर्वीताऽऽथर्वणो द्विजः । राज्ञश्चाथर्ववेदेन सर्वकर्माणि कारयेत् ॥ ब्रूयाद् गर्ह्याणि सततं महोत्पातान्यघानि च । इष्टमङ्गलयुक्तानि तथान्तःपुरकाणि च ॥ गीतनृत्ताधिकारेषु संमतेषु महीपतेः । कर्तव्यं करणीयानि वैश्वदेवबली तथा ॥ पक्षसंधिषु कुर्वीत महाशान्तिं पुरोहितः । रौद्रहोमसहस्रं च स्वस्य राज्ञः प्रियं हितम् ॥ राज्ञः पापमलाः सप्त यान्नृच्छति पुरोहितः । अमात्याश्च कुकर्माणो मन्त्रिणश्चाप्युपेक्षकाः ॥ चौर्यमव्यवहारे च व्यवहारोपसेविनाम् । अदण्ड्यदण्डनं चैव दण्ड्यानां चाप्यदण्डनम् ॥ हिंसा चान्यत्र संग्रामाद्यज्ञाच्च मल उच्यते । कुभृत्यैस्तु प्रजानाशः सप्तमस्तु महामलः ॥ रौद्रैर्होमैर्महाशान्त्या धृतकम्बलकर्मणा । भृग्वङ्गिरो विधिज्ञो वै पुरोधा निर्णुदेन्मलान् ॥ एतान् हित्वा दिवं याति राजा सप्त महामलान् । सामात्यः सपुरोधाश्च प्रजानां पालने रतः ॥ एतस्मिन्नेव कौरव्य पौरोहित्ये महामते । श्लोकानाह सुरेन्द्रस्य गुरुर्देवो बृहस्पतिः । तान्निबोध महाभाग महीपालहिताञ्छुभान् ॥ ऋग्वेदे सामवेदे च यजुर्वेदे च वाजिनाम् । न निर्दिष्टानि कर्माणि त्रिषु स्थानेषु भूभृताम् । शान्तिकं पौष्टिकं चैव अनिष्टानां च शातनम् ॥ शप्तास्ते याज्ञवल्क्येन यज्ञानां हितमीहता । ब्रह्मिष्ठानां वरिष्ठेन ब्रह्मणः संमते विभोः ॥ बह्वृचं सामगं चैव वाजिनं च विवर्जयेत् । बह्वृचो राष्ट्रनाशाय राजनाशाय सामगः । अध्वर्युर्बलनाशाय प्रोक्तो वाजसनेयकः ॥ अब्राह्मणेषु वर्णेषु मन्त्रान् वाजसनेयकान् । शान्तिके पौष्टिके चैव नित्यं कर्मणि वर्जयेत् ॥ ब्राह्मणस्य महीपस्य सर्वथा न विरोधिनः । वेदाश्चत्वार इत्येते ब्राह्मणा ये च तद्विदुः । पौरोहित्ये प्रमाणं तु ब्राह्मणश्च महीपते ॥ जात्या न क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः । चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः ॥ भार्गवाङ्गिरसैर्मन्त्रैस्तेषां कर्म विधीयते । वैतानं कर्म यच्चैव गृह्यकर्म च यत्स्मृतम् ॥ द्विजातीनां त्रयाणां तु सर्वकर्म विधीयते । राजधर्मप्रवृत्तानां हितार्थं त्रीणि कारयेत् । शान्तिकं पौष्टिकं चैव तथाऽभिचरणं च यत् ॥ अग्निष्टोममुखैर्यज्ञैर्दूषिता भूपकर्मभिः । न सम्यक्फलमिच्छन्ति ये यजन्ति द्विजातयः । पौरोहित्यं हि कुर्वाणा नाशं यास्यन्ति भूभृताम् ॥ यज्ञकर्माणि कुर्वाणा ऋत्विजस्तु विरोधिनः । ब्रह्मक्षत्रविशः सर्वे पौरोहित्ये विवर्जिताः ॥ तदभावे च पारक्यं निर्दिष्टं राजकर्मसु । ऋषिणा याज्ञवल्क्येन तत्तथा न तदन्यथा ॥ भार्गवाङ्गिरसां वेदे कृतविद्यः षडङ्गवित् । यज्ञकर्मविधिज्ञश्च विधिज्ञः पौष्टिकेषु च ॥ अष्टादशविकल्पानां विधिज्ञः शान्तिकर्मणाम् । सर्वरोगविहीनश्च संयतः संयतेन्द्रियः ॥ श्वित्रकुष्ठक्षयक्षीणैर्ग्रहापस्मारदूषितैः । अशस्तैर्वातदुष्टैश्च दूरस्थैः संवदेन्नृपः ॥ रोगिणं त्वृत्विजं चैव वर्जयेच्च पुरोहितम् ॥ न चान्यस्य कृतं येन पौरोहित्यं कदाचन । यस्य याज्यो मृतश्चैव भ्रष्टः प्रव्रजितोऽथ वा । युद्धे पराजितश्चैव सर्वांस्तान् वर्जये-

(१) भा. १२।७३।१६ ; भामु. १२।७२।१५–१६ वाक् ( वान् ).

(२) भा. १२।७३।१७ ; भामु. १२।७२।१६–१७ ; राक. १६६ (सदाऽऽचरति यो धर्मं नृपो ब्राह्मणदेशितम् । ) पू. ; राप्र. १३८ राकवत्.

(३) भा. १२।७३।१८ ; भामु. १२।७२।१७–१८ स कृतप्रज्ञ ( सत्कृतः प्राज्ञ ) ; राक. १६६ सर्वस्य ( सिद्धस्य ) राज ( राज्ञः ) ; राप्र. १३८ राकवत्.

(४) भा. १२।७४।१ ; भामु. १२।७३।१.

(५) भा. १२।७४।२ ; भामु. १२।७३।२ धर्म ( मन्त्र ).

ब्राह्मणक्षत्रिययोः वैमत्यं प्रजानां क्षतिकरं
परस्परं सौहृदं च हितकरम्

[1]उभौ प्रजा वर्धयतो देवान्पूर्वान्परान्पितॄन् ।
यौ समेयाऽऽस्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ॥
[2]परस्परस्य सुहृदौ संमतौ समचेतसौ ।
ब्रह्मक्षत्रस्य संमानात्प्रजाः सुखमवाप्नुयुः ॥
[3]विमाननात्तयोरेव प्रजा नश्येयुरेव ह ।
ब्रह्मक्षत्रं हि सर्वेषां धर्माणां मूलमुच्यते ॥
[4]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऐलकश्यपसंवादं तं निबोध युधिष्ठिर ॥

ऐल उवाच–

[5]यदा हि ब्रह्म प्रजहाति क्षत्रं
क्षत्रं यदा वा प्रजहाति ब्रह्म ।
अन्वग्बलं कतमेऽस्मिन् भजन्ते
तथाऽबल्यं कतमेऽस्मिन् वियन्ति ॥

ब्रह्म कर्म, क्षत्रं कर्तृ । अनु पश्चात् प्रकाश्यमानं बलं अन्वग्बलं यथा स्यात्तथा अस्मिन् ब्रह्मक्षत्रान्यतरस्मिन् कतमे भजन्ते ? किं क्षत्रेण ब्रह्म बलवत् भवति उत ब्रह्मणा क्षत्रमित्यर्थः । नीटी.

कश्यप उवाच–

[1]व्यृद्धं राष्ट्रं भवति क्षत्रियस्य
ब्रह्म क्षत्रं यत्र विरुध्यते ह ।
अन्वग्बलं दस्यवस्तद्भजन्ते-
ऽबल्यं तथा तत्र वियन्ति सन्तः ॥

[2]नैषामुक्षा वर्धते नोत उस्रा
न गर्गरो मथ्यते नो यजन्ते ।
नैषां पुत्रा वेदमधीयते च
यदा ब्रह्म क्षत्रियाः संत्यजन्ति ॥

[3]नैषामुक्षा वर्धते जातु गेहे
नाधीयते सप्रजा नो यजन्ते ।
अपध्वस्ता दस्युभूता भवन्ति
ये ब्राह्मणाः क्षत्रियान् संत्यजन्ति ॥

वृद्धं छिन्नम् । क्षत्रं कर्तृ । तत्र क्षत्रे सन्तः वर्णे विन्दन्ति ' ब्राह्मणानामवमन्ता म्लेच्छजातीयोऽयं राजा ' इति अनुमानात् जानन्ति । यथोक्तम्– ' भोगेन ज्ञायते कर्म कर्मणा ज्ञायते जनिः ' इति । अपध्वस्ताः संकरजाः इव कंसादिवत् । सार्धश्लोकः । नीटी.

[4]एतौ हि नित्यसंयुक्तावितरेतरधारणे ।
क्षत्रं हि ब्रह्मणो योनिर्योनिः क्षत्रस्य च द्विजाः ॥

---

न्नृपः ॥ नक्षत्रस्याऽऽनुकूल्येन यः संजातो नरेश्वरः । राजशास्त्रविनीतश्च श्रेयान् राज्ञः पुरोहितः ॥ अधन्यानां निमित्तानामुत्पातानामथार्थवित् । शत्रुपक्षक्षयज्ञश्च श्रेयान् राज्ञः पुरोहितः ॥ त्राजिनं तदभावे च चरकाध्वर्यवानथ । बह्वृचं सामगं चैव नीतिशास्त्रकृतश्रमान् । कृतिनोऽथर्वणे वेदे स्थापयेत्तु पुरोहितान् ॥ हिंसालिङ्गा हि निर्दिष्टा मन्त्रा वैतानिकैर्द्विजैः । न तानुच्चारयेत्प्राज्ञः क्षात्रधर्मविरोधिनः ॥ प्रजागुणः पुरोधाश्च पुरोहितगुणाः प्रजाः ॥

(१) भा. १२।७४।३ ; भामु. १२।७३।३ न्पूर्वान्परा (न्सर्वान्सुता) यौ समेयाऽऽस्थितौ ( भवेयातां स्थितौ ).

(२) भा. १२।७४।४ ; भामु. १२।७३।४ संमतौ ( विहितौ ) त्प्रजाः ( त्प्रजा ) वाप्नुयुः ( वाप्नुयात् ).

(३) भा. १२।७४।५ ; भामु. १२।७३।५ ह ( हि ) धर्माणां ( वर्णानां ).

(४) भा. १२।७४।६ ; भामु. १२।७३।६.

(५) भा. १२।७४।७ ; भामु. १२।७३।७ तथाऽबल्यं ( तथा वर्णाः ) वियन्ति ( म्रियन्ते ).

(१) भा. १२।७४।८ ; भामु. १२।७३।८ पूर्वार्धे ( वृद्धं राष्ट्रं क्षत्रियस्य भवति ब्रह्मक्षत्रं यत्र विरुध्यतीह । ) ऽबल्यं तथा ( तथा वर्णं ) वियन्ति ( विन्दन्ति ).

(२) भा. १२।७४।९ ; भामु. १२।७३।९ षामुक्षा ( षां ब्रह्म ) उस्रा ( पुत्रा ) यजन्ते ( जयन्ते ).

(३) भा. १२।७४।१० ; भामु. १२।७३।१० मुक्षा ( मर्त्या ) सप्रजा ( सुप्रजा ) ब्राह्मणाः क्षत्रियान् ( ब्राह्मणान् क्षत्रियाः ).

(४) भा. १२।७४।११ ; भामु. १२।७३।११ नित्य ( नित्यं ) त्रं हि ( त्रं वै ) च ( वै ).

[1]उभावेतौ नित्यमभिप्रपन्नौ
संप्रापतुर्महतीं श्रीप्रतिष्ठाम् ।
तयोः संधिर्भिद्यते चेत्पुराण-
स्ततः सर्वं भवति हि संप्रमूढम् ॥

अभिप्रपन्नौ अन्योन्यशरणौ । क्षत्रशरणं ब्रह्म तपस्यति, ब्रह्मशरणं क्षत्रं जयतीति भावः । नीटी.

[2]नात्र प्लवं लभते पारगामी
महागाधे नौरिव संप्रणुन्ना ।
चातुर्वर्ण्यं भवति च संप्रमूढं
ततः प्रजाः क्षयसंस्था भवन्ति ॥

अत्र ब्रह्मक्षत्रयोर्वियोगे । संप्रपन्ना विपन्ना । नीटी.

[3]ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति ।
अरक्ष्यमाणः सततमश्रु पापं च वर्षति ॥

मधु सुखम् । अश्रु दुःखम् । पापं नरकम् । नीटी.

[4]अब्रह्मचारी चरणादपेतो
यदा ब्रह्मा ब्रह्मणि त्राणमिच्छेत् ।
आश्चर्यशो वर्षति तत्र देव-
स्तत्राभीक्ष्णं दुःसहाश्चाऽऽविशन्ति ॥

न क्षत्रियं ब्रह्म ब्राह्मणजातिः ब्रह्मचारी चरणात् अधीतशालातः अपेतः दस्युभिर्वारितः सन् ब्रह्मणि वेदे अध्येतव्ये त्राणं रक्षणं इच्छेत्, रक्षितुरभावात्, तदा देवस्तत्र आश्चर्यतो वर्षति । तत्र वर्षमत्यन्तं दुर्लभमित्यर्थः । दुःसहाः मारीदुर्भिक्षादयः । 'अब्रह्मचारी' 'नाऽऽश्चर्यतः' इति च पाठे ब्रह्मचरणादपेतत्वात् अब्रह्मचारी वेदाध्ययनशून्यः सन् त्राणमिच्छेत्तर्हि तत्राऽऽश्चर्यतोऽपि न वर्षतीति योज्यम् । नीटी.

ब्राह्मणहिंसया रुद्रकोपात् राष्ट्रहानिः

[1]स्त्रियं हत्वा ब्राह्मणं वाऽपि पापः
सभायां यत्र लभतेऽनुवादम् ।
राज्ञः सकाशे न बिभेति चापि
ततो भयं जायते क्षत्रियस्य ॥

स्त्रियं ब्राह्मणं वाऽपि हत्वा । अनुवादं प्रशंसाम् । नीटी.

[2]पापैः पापे क्रियमाणेऽतिवेलं
ततो रुद्रो जायते देव एषः ।
पापैः पापाः संजनयन्ति रुद्रं
ततः सर्वान् साध्वसाधून्हिनस्ति ॥

रुद्रः हिंस्रः । देवः राजा । रुद्रं कलिम् । नीटी.

ऐल उवाच–

[3]कुतो रुद्रः कीदृशो वाऽपि रुद्रः
सत्त्वैः सत्त्वं दृश्यते वध्यमानम् ।
एतद्विद्वन् कश्यप मे प्रचक्ष्व
यतो रुद्रो जायते देव एषः ॥

कश्यप उवाच–

[4]आत्मा रुद्रो हृदये मानवानां
स्वं स्वं देहं परदेहं च हन्ति ।
वातोत्पातैः सदृशं रुद्रमाहु-
र्दावैर्जीमूतैः सदृशं रूपमस्य ॥

---

(१) भा. १२।७४।१२; भामु. १२।७३।१२ श्री (सं).

(२) भा. १२।७४।१३; भामु. १२।७३।१३ प्लवं (पारं) णुन्ना (पन्ना) च (हि) ततः प्रजाः (प्रजास्ततः).

(३) भा. १२।७४।१४; भामु. १२।७३।१४.

(४) भा. १२।७४।१५; भामु. १२।७३।१५ अब्रह्म (न ब्रह्म) ब्रह्मा (ब्रह्म) र्यशो (र्यतो).

(१) भा. १२।७४।१६; भामु. १२।७३।१६ जायते (विद्यते).

(२) भा. १२।७४।१७; भामु. १२।७३।१७ ऽतिवेलं (हि चैल).

(३) भा. १२।७४।१८; भामु. १२।७३।१८ द्विद्वन् (त्सर्वं) यतो (कुतो).

(४) भा. १२।७४।१९; भामु. १२।७३।१९ दावै (देवै).

कुतो राज्ञो रुद्रत्वमिति पृष्टे आह– आत्मेति। मानवानां हृदये यः आत्मा जीवः अस्ति स एव रुद्रः संहर्ता भवति। यथा च ग्रहाविष्टस्य शरीरं देहस्वामिनः स्वं न भवति, किंतु तदानीं तद्ग्रहस्यैव स्वम्, एवं रुद्रावेशकाले नृपस्य शरीरं रौद्रमेव भवतीत्यर्थः। ननु कुतः शान्तस्य आत्मनो रुद्रत्वम्? अत आह– वातेति। यथा उत्पातवातः आकाशोत्थः आकाशोत्थां मेघदेवतामितस्ततो नयति गर्जयति विद्युदशनिवारीणि च तत आविर्भावयति, एवं आत्मोत्थितं जीवं आत्मोत्थिताः कामक्रोधादयः सर्वे हिंस्रं कारयन्तीत्यर्थः। नीटी.

ऐल उवाच–

'न वै वातं परिवृणोति कश्चि-
न्न जीमूतो वर्षति नैव दावः।
तथायुक्तो दृश्यते मानवेषु
कामद्वेषाद्बध्यते मुच्यते च॥

इदमाक्षिपति– न वा इति। यथा आकाशेन युक्तास्ततः पृथग्भूताः वातो मेघाश्च मेघप्रवर्तकदेवता च प्रत्यक्षेण शास्त्रज्ञानेन च दृश्यन्ते, नैवं जीवो वा तदभिभावकः कामादिर्वा पृथक् दृश्यते, किंतु आत्मन्येव वह्न्यौष्ण्यवत् कामद्वेषौ वर्तेते। तौ च एतस्य संबन्धकौ मोहकौ च भवत इत्यर्थः। नीटी.

कश्यप उवाच–

'यथैकगेहे जातवेदाः प्रदीप्तः
कृत्स्नं ग्रामं प्रदहेत्स त्वरावान्।
विमोहनं कुरुते देव एष
ततः सर्वं स्पृश्यते पुण्यपापैः॥

अत्रोत्तरमाह– यथेति। यथा अल्पोऽपि वह्निः अधिकमधिकं काष्ठभारमुपारुह्य कृत्स्नं ग्रामं दहति, तत्र न केवलं काष्ठानां दाहकत्वम्, नापि काष्ठान्यनुपारूढस्याग्नेः, किंतु तदुभयसंघातस्यैव, तत्रापि विवेके क्रियमाणे वह्नेरेव उपाध्यावेशाद्दाहकत्वम्, एवं आत्मानमारुह्य अहंकारवह्निः कामक्रोधादिवातैरुद्दीपितो रुद्रत्वं प्रतिपद्यते। ततश्च 'अयो दहति, एधांसि पचन्ति' इतिवत् अहंकारेण कृतं आत्मन्युपचर्यते मोहात्। तेन च सर्वं जगत् असङ्गमपि जलचन्द्रन्यायेन पुण्यैः पापैश्च स्पृश्यते। तत्त्वालोचने तु असङ्ग एव आत्मेत्यर्थः। नीटी.

ऐल उवाच–

'यदि दण्डः स्पृशते पुण्यभाजं
पापैः पापे क्रियमाणेऽविशेषात्।
कस्य हेतोः सुकृतं नाम कुर्याद्-
दुष्कृतं वा कस्य हेतोर्न कुर्यात्॥

अत्र शङ्कते– यदीति। अपुण्यपापमपि आत्मानं यदि विशेषात् क्रियमाणे पापे निमित्तभूते सति दण्डः पापं दण्डात्मकं पापं गालनताडनादिदुःखं कर्तृ स्पृशते मोहादिति ब्रवीषि तर्हि पुण्यकरणं पापवर्जनं च शास्त्रचोदितं वृथैव स्यात्। आत्मनि वास्तवदुःखाभावस्य सिद्धत्वात् तदर्थं साधनोपादानं व्यर्थं स्यादिति भावः। नीटी.

कश्यप उवाच–

'असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृश्यते मिश्रभावात्।
शुष्केणाऽऽर्द्रं दह्यते मिश्रभावा-
न्न मिश्रः स्यात्पापकृद्भिः कथंचित्॥

---

(१) भा. १२।७४।२०; भामु. १२।७३।२० वातं (वातः) नैव दावः (नापि देवः) मानवेषु (मानुषेषु) मुच्य. (मुह्य).

(२) भा. १२।७४।२१; भामु. १२।७३।२१ प्रदहेत्स त्वरावान् (दहते चत्वरं वा) स्पृश्यते (स्पृशते).

(१) भा. १२।७४।२२; भामु. १२।७३।२२ पुण्यभाजं (ऽपुण्यपापं) पापैः (पापं) ऽवि (वि).

(२) भा. १२।७४।२३; भामु. १२।७३।२३ असंत्या (असंयो) स्पृश्यते (स्पृशते).

आत्माहंकारयोर्मिश्रीभावात् अहंकारगतं दुःखमात्मनि प्रतीयते। अतः अहंकारत्यागान्न किंचिदात्मनो दुःखमस्तीत्युत्तरयति– असंयोगादिति। नीटी.

ऐल उवाच–

[1]साध्वसाधून् धारयतीह भूमिः
साध्वसाधूंस्तापयतीह सूर्यः।
साध्वसाधून् वातयतीह वायु-
रापस्तथा साध्वसाधून् वहन्ति॥

अहंकर्त्रादीन् अधिष्ठानभूतः आत्मा भूमिसूर्यादिवत् असङ्ग एव संधारयतु प्रकाशयतु, वाय्वम्बुवच्चालयतु स्वसत्तया आप्याययतु वा, कस्तत्र आत्मनः संबन्धः अहंकारधर्मेण रुद्रत्वेन? अतः आत्मा रुद्र इत्युक्तमयुक्तमित्याक्षेपः। नीटी.

कश्यप उवाच–

[2]एवमस्मिन् वर्तते लोक एव
नामुत्रैवं वर्तते राजपुत्र।
प्रेत्यैतयोरन्तरवान् विशेषो
यो वै पुण्यं चरते यश्च पापम्॥

तत्त्वदृष्ट्या यद्यप्येवमेव तथापि ऐहिकामुष्मिकव्यवहारदृष्ट्या अस्त्येवाऽऽत्मनो रुद्रत्वमित्युत्तरयति– एवमस्मिन्नित्यादिना। एषः एवंरूपोऽर्थः अस्मिन् प्रत्यगात्मनि लोके लोक्यते इति लोकः दर्शनं तत्र विषये वर्तते सिद्धान्तोऽस्ति, न तु अमुत्र परलोकविषये एवं दर्शनं वर्तते। किं तर्हि अमुत्र वर्तते? यः पापं चरते यश्च पुण्यं एतयोः प्रेत्य मरणानन्तरं विशेषोऽस्ति। स च अन्तरावान् तिरोहितः। शास्त्रैकगम्ये धर्माधर्मफले इत्यर्थः। नीटी.

(१) भा. १२।७४।२४; भामु. १२।७३।२४ वातय (चापि वा) वहन्ति (पुनन्ति).

(२) भा. १२।७४।२५; भामु. १२।७३।२५ क एव (क एष) रन्तर (रन्तरा).



[1]पुण्यस्य लोको मधुमान् घृतार्चि-
र्हिरण्यज्योतिरमृतस्य नाभिः।
तत्र प्रेत्य मोदते ब्रह्मचारी
न तत्र मृत्युर्न जरा नोत दुःखम्॥

[2]पापस्य लोको निरयोऽप्रकाशो
नित्यं दुःखः शोकभूयिष्ठ एव।
तत्राऽऽत्मानं शोचते पापकर्मा
बह्वीः समाः प्रपतन्नप्रतिष्ठः॥

शास्त्रमेवाऽऽह द्वाभ्याम्– पुण्यस्येति। नीटी.

प्रथमं पुरोहितवरणं पश्चाद्राजाभिषेकः

[3]मिथो भेदाद् ब्राह्मणक्षत्रियाणां
प्रजा दुःखं दुःसहं चाऽऽविशन्ति।
एवं ज्ञात्वा कार्य एवेह विद्वान्
पुरोहितो नैकविद्यो नृपेण॥

प्रकृतमनुसरति–मिथ इति। नैकविद्यः बहुविद्यः। नीटी.

[4]तं चैवान्वभिषिच्येत तथा धर्मो विधीयते।
अग्र्यो हि ब्राह्मणः प्रोक्तः सर्वस्यैवेह धर्मतः॥

तं पुरोहितं वृत्वा अनु पश्चात् आत्मानं राज्ये अभिषिञ्चेत्। नीटी.

[5]पूर्वं हि ब्राह्मणाः सृष्टा इति धर्मविदो विदुः।
ज्येष्ठेनाभिजनेनास्य प्राप्तं सर्वं यदुत्तरम्॥

(१) भा. १२।७४।२६; भामु. १२।७३।२६.

(२) भा. १२।७४।२७; भामु. १२।७३।२७ दुःखः (दुःखं) ष्ठ एव (ष्ठमेव) शोचते (शोचति) प्रपत (प्रतप).

(३) भा. १२।७४।२८; भामु. १२।७३।२८ विद्वान् (नित्यं).

(४) भा. १२।७४।२९; भामु. १२।७३।२९ षिच्येत (षिञ्चेत) अग्र्यो (अग्रं) प्रोक्तः (प्रोक्तं).

(५) भा. १२।७४।३०; भामु. १२।७३।३० ब्राह्मणाः सृष्टा इति धर्म (ब्रह्मणः सृष्टिरिति ब्रह्म) सर्वं (पूर्वं).

[1]तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ।
सर्वं श्रेष्ठं वरिष्ठं च निवेद्यं तस्य धर्मतः ॥

[2]अवश्यमेतत्कर्तव्यं राज्ञा बलवताऽपि हि ।
ब्रह्म वर्धयति क्षत्रं क्षत्रतो ब्रह्म वर्धते ॥

[3]एवं राज्ञा विशेषेण पूज्या वै ब्राह्मणाः सदा ॥

भीष्म उवाच—

[4]योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते ।
योगक्षेमश्च राज्ञोऽपि समायत्तः पुरोहिते ॥

[5]यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत ।
दृष्टं च राजा बाहुभ्यां तद्राष्ट्रं सुखमेधते ॥

अदृष्टं अनावृष्ट्यादिजम् । ब्रह्म ब्राह्मणः । दृष्टं परचक्रादिजम् । नीटी.

सपुरोहितो राजा रक्षसां हन्ता इत्यस्य निदर्शकं मुचुकुन्दराजाख्यानम्

[6]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ॥

[7]मुचुकुन्दो विजित्येमां पृथिवीं पृथिवीपतिः ।
जिज्ञासमानः स्वबलमभ्ययादलकाधिपम् ॥

(१) भा. १२।७४।३१ ; भामु. १२।७३।३१ वरिष्ठं (विशिष्टं).

(२) भा. १२।७४।३२ ; भामु. १२।७३।३२ मेतत्क (मेव क).

(३) भामु. १२।७३।३२.

(४) भा. १२।७५।१ ; भामु. १२।७४।१ मश्च (मो हि) ऽपि (हि) ; राकौ. २५५ भामुवत्.

(५) भा. १२।७५।२ ; भामु. १२।७४।२ द्राष्ट्रं (द्राज्यं) ; राकौ. २५५ दृष्टं भयं ब्रह्म (दृष्टभयं क्लृप्त) दृष्टं च राजा (हस्त्यश्वराज).

(६) भा. १२।७५।३ ; भामु. १२।७४।३.

(७) भा. १२।७५।४ ; भामु. १२।७४।४ मभ्यया (मुपेया).

[1]ततो वैश्रवणो राजा रक्षांसि समवासृजत् ।
ते बलान्यवमृद्नन्तः प्राचरंस्तस्य नैर्ऋताः ॥

असृजत् अतिसृष्टवान् आज्ञापितवानिति यावत् । नीटी.

[2]स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः ।
गर्हयामास विद्वांसं पुरोहितमरिंदमः ॥

[3]तत उग्रं तपस्तप्त्वा वसिष्ठो ब्रह्मवित्तमः ।
रक्षांस्यपावधीत्तत्र पन्थानं चाप्यविन्दत ॥

तस्य मुचुकुन्दस्य पन्थानं गतिं मार्गं अविन्दत ज्ञातवान् । नीटी.

[4]ततो वैश्रवणो राजा मुचुकुन्दमदर्शयत् ।
वध्यमानेषु सैन्येषु वचनं चेदमब्रवीत् ॥

[5]त्वत्तो हि बलिनः पूर्वे राजानः सपुरोहिताः ।
न चैवं समवर्तंस्ते यथा त्वमिह वर्तसे ॥

[6]ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः ।
आगम्य पर्युपासन्ते मामीशं सुखदुःखयोः ॥

यद्यस्ति बाहुवीर्यं ते तद्दर्शयितुमर्हसि ।
किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्तसे ॥

मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम् ।
न्यायपूर्वमसंरब्धमसंभ्रान्तमिदं वचः ॥

(१) भा. १२।७५।५ ; भामु. १२।७४।५ द्वितीयचरणे (राक्षसानसृजत्तदा). न्तः प्राचरंस्तस्य (न्त मुचुकुन्दस्य).

(२) भा. १२।७५।६ ; भामु. १२।७४।६.

(३) भा. १२।७५।७ ; भामु. १२।७४।७ स्यपा (स्युपा) तत्र (तस्य).

(४) भा. १२।७५।८ ; भामु. १२।७४।८.

(५) भा. १२।७५।९ ; भामु. १२।७४।९ 'धनद उवाच' इत्यधिकम्, त्वत्तो हि बलिनः (बलवन्तस्त्वया) वर्तंस्ते (वर्तन्त).

(६) भा. १२।७५।१०-१२ ; भामु. १२।७४। १०-१२.

[1]ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा ।
पृथग्बलविधानं च तल्लोकं परिरक्षति ॥
[2]तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ॥
[3]ताभ्यां संभूय कर्तव्यं प्रजानां परिपालनम् ।
तथा च मां प्रवर्तन्तं गर्हयस्यलकाधिप ॥
[4]ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् ।
नाहं राज्यमनिर्दिष्टं कस्मैचिद्विदधाम्युत ॥

अनिर्दिष्टं ईश्वरेणाननुज्ञातम् । विदधामि ददामि ।
नीटी.

[5]नाऽऽच्छिन्दे चापि निर्दिष्टमिति
जानीहि पार्थिव ।
प्रशाधि पृथिवीं वीर मद्दत्तामखिलामिमाम् ॥

नाऽऽच्छिन्दे न हरामि च । अखिलां खिलरहिताम् ।
नीटी.

[6]एवमुक्तः प्रत्युवाच मुचुकुन्दो महीपतिः ॥
मुचुकुन्द उवाच–
[7]नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव ।
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ॥
भीष्म उवाच–
ततो वैश्रवणो राजा विस्मयं परमं ययौ ।
क्षत्रधर्मे स्थितं दृष्ट्वा मुचुकुन्दमसंभ्रमम् ॥

(१) भा. १२।७५।१३; भामु. १२।७४।१३ च तल्लोकं परिरक्षति (तन्न लोकं परिपालयेत्).

(२) भा. १२।७५।१४; भामु. १२।७४।१४.

(३) भा. १२।७५।१५; भामु. १२।७४।१५ गर्हयस्य (किं गर्हस्य).

(४) भा. १२।७५।१६; भामु. १२।७४।१६.

(५) भा. १२।७५।१७; भामु. १२।७४।१७ पि नि (प्यनि) वीर (कृत्स्नां).

(६) भामु. १२।७४।१७.

(७) भा. १२।७५।१८–२०; भामु. १२।७४।१८–२०.

ततो राजा मुचुकुन्दः सोऽन्वशासद्वसुंधराम् ।
बाहुवीर्यार्जितां सम्यक् क्षत्रधर्ममनुव्रतः ॥
[1]एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते ।
जयत्यविजितामुर्वीं यशश्च महदश्नुते ॥
[2]नित्योदको ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः ।
तयोर्हि सर्वमायत्तं यत्किंचिज्जगतीगतम् ॥
[3]वेदाध्ययनसंपन्नस्तपस्वी सर्वधर्मवित् ।
स्वामी सर्वस्य राज्यस्य श्रीमान् मम पुरोहितः ॥
[4]पुरोहितप्रधानो हि राजा हितमवाप्नुयात् ॥

## वाल्मीकिरामायणम्

पुरोहितगुणाः

[5]कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥

## कौटिलीयमर्थशास्त्रम्

राज्ञा षडङ्गवेददण्डनीतिज्ञः पुरोहितो वरणीयः, पुरोहितस्य आथर्वणिककर्माणि, राज्ञा पुरोहितानुसरणं कर्तव्यम्

[6]पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणामथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत । तमाचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनमिव चानुवर्तेत ॥

(१) भा. १२।७५।२१; भामु. १२।७४।२१ ब्रह्मवि (धर्मवि).

(२) भा. १२।७५।२२; भामु. १२।७४।२२ दको (दकी).

(३) भा. १२।७८।२४; भामु. १२।७७।२४ वेदाध्ययन (आत्मविज्ञान) राज्य (राष्ट्र) श्री (धी).

(४) राक. १६६; राप्र. १३८.

(५) वारा. २।११४।७; वाराकु. २।१००।१२ प्रष्टा (द्रष्टा).

(६) कौ. १।९.

'मन्त्रिपुरोहितोत्पत्तिः' इति सूत्रम् । मन्त्री प्रधानामात्यः यस्मिन्नायत्ताः कर्मसचिवाः । पुरोहितः पुरः अग्रे धीयते सर्वकार्येषु प्रमाणत्वेन निवेश्यते इति पुरोहितः । तयोरुत्पत्तिरिहाभिधीयते इत्यर्थः ।

पुरोहितोत्पत्तिमाह– पुरोहितमित्यादि । उदितोदितकुलशीलत्वादियुक्तं पुरोहितं कुर्वीत । उदितोदितकुलशीलम्– उदितोदितं उदितैः शास्त्रोक्तैर्विद्याभिजनादिभिः उदिताः समृद्धाः उदितोदिताः, तेषां कुलं शीलं वृत्तं च यस्य तं तथाभूतम् । उदितोदितकुलजातं उदितोदिताचारयुक्तं चेत्यर्थः । षडङ्गे वेदे, दैवे ज्योतिःशास्त्रे पूर्वकर्मपरिपाकलक्षणदैवप्रतिपादके, निमित्ते शकुनशास्त्रे, दण्डनीत्यां च अभिविनीतं शिक्षितम् । दैवमानुषीणां देवकृतानां मानुषकृतानां च आपदां अथर्वभिः अथर्वमन्त्रप्रयोगैः उपायैश्च सामदानादिभिश्च प्रतिकर्तारं परिहर्तारम् । तमिति । शिष्य आचार्यमिव पुत्रः पितरमिव भृत्यः स्वामिनमिव च तं अनुवर्तेत अनुसरेत् तत्परतन्त्रो भवेत् । श्रीमूला.

ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम् ।
जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम् ॥

एवं च करणे अलब्धलाभो भवतीत्यर्थकं श्लोकमाह– ब्राह्मणेनेति । ब्राह्मणेन यथोक्तगुणेन पुरोहितेन एधितं वर्धितं मन्त्रिमन्त्राभिमन्त्रितं मन्त्रिणो यथोक्तगुणस्य मन्त्रेण अर्थनिश्चयेन अभिमन्त्रितं संस्कृतम् । अभिरक्षितमित्यपि पाठः । अत एव शास्त्रानुगं शास्त्रोक्तानुष्ठानपरं क्षत्रं क्षत्रियकुलं कर्तृ अशस्त्रितं सत् अशस्त्रयुक्तं सत् युद्धं विनैवेत्यर्थः । 'शास्त्रानुगतशस्त्रितम्' इति पाठे शास्त्रानुगमात्मकशस्त्रयुक्तम्, तदतिरिक्तशस्त्रानपेक्षमित्यर्थः । अत्यन्तं एकान्ततः अजितं जयति अलब्धं लभते । श्रीमूला.

## वृद्धचाणक्यः

पुरोहितगुणाः

(१)वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादपरो नित्यमेष राज्ञः पुरोहितः ॥

## मनुः

राज्ञा पुरोहित ऋत्विजश्च वरणीयाः, तेषां कर्माणि

*(२)पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः ।
तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ॥

## याज्ञवल्क्यः

गुणसंपन्नः ज्योतिःशास्त्रवित् दण्डनीतिकुशलः अथर्ववेदपारगः पुरोहितो राज्ञा वरणीयः

(३)पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥

(१) पूर्वोक्तन्यायेनैवाऽऽह– पुरोहितमिति । तथाशब्दात् पूर्वगुणयोगश्च । दैवज्ञः ज्योतिःशास्त्रवित् प्राक्तनकर्मफलसंबन्धज्ञो वा । इदमस्मात् कर्मणः अद्य फलमुपभुज्यते पश्चात् तु प्रतिसमाधिः इति उदितोदितः । दण्डनीत्यां च प्रवीणः । चशब्दात् त्रय्यामान्वीक्षिक्यां विविधवार्तायां च । एतच्च मन्त्रिणामपि समानम् । अयं त्वस्य विशेषः– अथर्वाङ्गिरसे शान्तिकपौष्टिकाभिचाराद्यर्थे प्रवीणः स्यात् । एतेनापि सह यथार्थं मन्त्रणीयम् । सर्वामात्याश्च अनेनैव धर्मोपधाशुद्धत्वेन परीक्ष्याः ।

* व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११०७) द्रष्टव्यः ।

(१) वृचा. ४।८ ; चानी. ९९ राज्ञः पु (राजपु) ; चासा. १।५२ ; चाशा. ५।१३ नित्यमेष राज्ञः (नित्यं पार्थिवस्य).

(२) मस्मृ. ७।७८.

(३) यास्मृ. १।३१३ ; विश्व. १।३०८ ; मिता. ; अप. १।३११–३१२ तं च (तं प्र) ; राक. १६६ ; रार. १४ दितम् (दयम्) पू. ; पमा. ४०८ मुदितोदितम् (मपि चाधिकम्) ; वीमि. ; राप्र. ५९, १३७–१३८ ; राकौ. २५५.

एवमन्यैरपि यथास्थानमुपधाविशेषैः सर्वामात्यपरीक्षा कर्तव्येति नीतिसंक्षेपः । विश्व.

(२) कीदृशं पुरोहितं कुर्यादित्याह— पुरोहितमिति । पुरोहितं च सर्वेषु दृष्टादृष्टार्थेषु कर्मसु पुरतो हितं दानमानसत्कारैरात्मसंबद्धं कुर्यात् । कथंभूतम् ? दैवज्ञं ग्रहोत्पाततच्छमनादेर्वेदितारम् । उदितोदितं विद्याभिजनानुष्ठानादिभिः उदितैः शास्त्रोक्तैः उदितं समृद्धम् । दण्डनीत्यां अर्थशास्त्रे कुशलम् । अथर्वाङ्गिरसे च शान्त्यादिकर्मणि । * मिता.

(३) दैवज्ञत्वादिगुणोपेतं ब्राह्मणं पुरोहितं कुर्वीत । दैवज्ञः ज्योतिःशास्त्रवित् । तेन हि शास्त्रेण प्राणिनां दैवं कर्मविपाकः ज्ञायते । ये मन्त्रिणां उदिताः उक्ताः प्राज्ञा( ? ज्ञत्वा )दयो गुणाः ते यस्य उदिताः उद्भूताः स उदितोदितः । पुरोहितं प्रकुर्वीत वृण्वीत । वरणेन हि पुरोहितत्वमुत्पद्यते यथा अध्वर्युत्वादिकम् । अप.

(४) उदितोदितं वेदवेदार्थवेत्तारम् । × दीक.

(५) तथाशब्देन त्रयीसमुच्चयः । प्रथमचकारेण मन्त्रिषूक्तस्य गुणस्य शुचित्वस्य, द्वितीयचकारेण आन्वीक्षिक्याः समुच्चयः । † वीमि.

## व्यासः

पुरोहितगुणाः

[१]वेदवेदार्थतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादपरो दक्ष एष राजपुरोहितः ॥

इदं पुरोहितस्वरूपम् । रार. १४

## बृहत्पराशरः

पुरोहितवरणम्

[२]यथोदितपुरोहिताम् + ॥

* राप्र., राकौ. मितावत् ।

× शेषं विश्वगतम् ।

† शेषं मितागतम् ।

+ ' राजा कुर्यात् ' इति प्रकृतम् ।

(१) रार. १४.

(२) बृपसं. १२।११.

## आश्वलायनः

गुणसंपन्नः सर्वविद्याकुशलो ब्राह्मणः पुरोहितः राज्ञा वरणीयः, पुरोहितानुसरणं राज्ञः कर्तव्यम्

[१]राज्ञोऽपुरोहितस्येह राष्ट्रे देवो न वर्षति ॥
न च गृह्णन्ति हव्यं च सुराः कव्यं पितामहाः ।
तस्माच्छीलकुलाचारवयोशीलगुणान्वितम्(?) ॥
सर्वविद्यासु निष्णातं कुर्यादादौ पुरोहितम् ॥
[२]पुरोहितानुगो नित्यं चारचक्षुर्द्विजप्रियः ॥
यो रक्षति महीं राजा सोऽत्यन्तं श्रियमृच्छति ।
पुरोधा ब्राह्मणो राज्ञां भवेन्नान्यः कथंचन ॥
स च सर्वगुणोपेतो भवेद्धीरश्च सर्ववित् ॥

## विष्णुधर्मोत्तरपुराणम्

यजुर्वेदाथर्वणवेदवित् पञ्चकल्पज्ञः पुरोहितो राज्ञा वरणीयः, पुरोहितेन अपतितो राजा अत्याज्यः, राज्ञा दैवज्ञपुरोहितौ अत्याज्यौ, दोषयुक्तौ तु त्याज्यौ

राम उवाच—

[३]राज्ञा पुरोहितः कार्यस्तथा मन्त्री च कीदृशः ।
महिषी च तथा ज्येष्ठा तन्ममाऽऽचक्ष्व पृच्छतः ॥

पुष्कर उवाच—

[४]अव्यङ्गं लक्षणोपेतमनुकूलं प्रियंवदम् ।
अथर्ववेदविद्वांसं यजुर्वेदविशारदम् ॥
[५]द्विवेदं ब्राह्मणं राजा पुरोहितमथर्वणम् ।
पञ्चकल्पविधानज्ञं वरयेत सुदर्शनम् ॥

' अथर्ववेदविद्वांसम् ' इत्याद्युक्तानेकगुणयुक्तः पुरोहितो यदा न प्राप्यते तदा अन्यो गुणहीनः केवलं अभिचाराद्युपयुक्ताथर्ववेदविदपि पुरोहितः कर्तव्य इति ' अथर्वणम् ' इति पुनरुक्तम् । राकौ. २५६

(१) आश्वस्मृ. ८।३०–३२.

(२) आश्वस्मृ. ८।९६–९८.

(३) विध. २।५।१.

(४) विध. २।५।२ ; राकौ. २५१ व्यङ्गं ( व्यङ्ग ).

(५) विध. २।५।३ ; राकौ. २५५ (=) कल्प ( काल ) येत ( येत्त ) : २५६ वेदं ( वेद ) येत ( येत्तु ).

[1]नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः ।
चतुर्थोऽङ्गिरसां कल्पः शान्तिकल्पस्तु पञ्चमः ॥

[2]पञ्चकल्पविधानज्ञमाचार्यं प्राप्य भूपतिः ।
सर्वोत्पातप्रशान्तात्मा भुनक्ति वसुधां चिरम् ॥

[3]स च राज्ञस्तथा कुर्यान्नित्यं कर्म सदैव तु ।
नैमित्तिकं तथा काम्यं दैवज्ञवचने रतः ॥

[4]न त्याज्यस्तु भवेद्राजा दैवज्ञेन पुरोधसा ।
पतितस्तु भवेत्त्याज्यो नात्र कार्या विचारणा ॥

[5]तथैवापतितौ राम न त्याज्यौ तौ महीभुजा ।
तयोस्त्यागेन राजेन्द्र राज्यभ्रंशं विनिर्दिशेत् ॥

'अपतितौ न त्याज्यौ' इति वदता पतितौ दैवज्ञपुरोहितौ त्याज्यौ इत्यभ्यनुज्ञातं भवति । राकौ. २५६

[6]दुर्गतिं परलोके च बहुकालमसंशयम् ।
सांवत्सरविरुद्धस्तु त्याज्यो राज्ञा पुरोहितः ॥

[7]पुरोहितोऽन्यथा राज्ञो यथा माता यथा पिता ।
अनिष्टमस्य व्यसनं हन्याद्दैवोपघातजम् ॥

[8]ब्राह्मणे निष्कृतिस्तस्य कुतः शक्या महीभुजा ॥

(१) विध. २।५।४ ; राकौ. २५६.

(२) विध. २।५।५ ; राकौ. २५६ यै प्राप्य (यैमाप्य).

(३) विध. २।५।६ ; राकौ. २५६ तु (च).

(४) विध. २।५।७ ; राकौ. २५६.

(५) विध. २।५।८ थैवा (थैव) भ्रंशं (भ्रंशो) ; राकौ. २५६ गेन राजेन्द्र (गे नरेन्द्रस्य).

(६) विध. २।५।९ दुर्गतिं (दुर्गतिः) ; राकौ. २५६–२५७ त्सर (त्सरो).

(७) विध. २।५।१० ; राकौ. २५७ तोऽन्यथा (तस्तथा) अनिष्ट (अदृष्ट).

(८) विध. २।५।११ ब्राह्मणे (ब्राह्मणो) कुतः (कुत्र) ; राकौ. २५७.

दैवज्ञपुरोहितयोः वृत्तिच्छेदो न कार्यः

[1]यौ च तौ राज्ञो विद्वांसौ सांवत्सरपुरोहितौ ॥
[2]वृत्तिच्छेदे तयो राज्ञः कुलं त्रिपुरुषं व्रजेत् ।
नरकं वर्जयेत्तस्माद्वृत्तिच्छेदं तयोः सदा ॥
[3]स्थावरेण विभागश्च तयोः कार्यो विशेषतः ।
स्वामी राजा यथा राम तथा तौ नात्र संशयः ॥
एकस्मिंस्तु मते राज्यं तयोरेवान्यतः कथम् ॥
स्थावरेणार्चयेद्राजा वर्तमाने विशेषतः ।
अनुरूपेण धर्मज्ञौ सांवत्सरपुरोहितौ ॥

पुरोहितानुसरणं राज्ञा कर्तव्यम्

[4]भाव्यं सदा भार्गववंशचन्द्र
पुरोहितस्याऽऽत्मसमस्य राज्ञा ।
राज्ञो यथा सर्वजनेन भाव्यं
विद्वान् प्रभुः स्यान्नृपतेः पुरोधाः ॥

## गरुडपुराणम्

राजपुरोहितगुणाः

[5]वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादपरो नित्यमेष राजपुरोहितः ॥

## अग्निपुराणम्

राज्ञा त्रयीदण्डनीतिज्ञः पुरोहितो वरणीयः, तस्य आथर्वणिकानि कर्माणि

[6]सांवत्सरं स वृणुयात्पुरोहितमथ द्विजम् ॥

(१) विध. २।५।११ यौ च तौ (यावन्न) राज्ञो (राज्ञा) ; राकौ. २५७.

(२) विध. २।५।१२ ; राकौ. २५७ वृत्ति (वृत्त्यु).

(३) विध. २।५।१३ द्वितीयतृतीयचतुर्थार्धाः न विद्यन्ते, धर्मज्ञौ (धर्मज्ञ) ; राकौ. २५७.

(४) विध. २।५।१४ यथा सर्व (यथाऽपि स्व) भाव्यं (भाव्यो) ; राकौ. २५७ हितस्याऽऽत्मसमस्य (हितेऽनन्यसमेन).

(५) गरुड. १।११२।१२.

(६) अग्नि. २१८।३.

[1]त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः ।
अथर्ववेदविहितं कुर्याच्छान्तिकपौष्टिकम् ॥

## कालिकापुराणम्

राज्ञा सदोषः पुरोहितो न वरणीयः

[2]काणं व्यङ्गमपुत्रं वा नाभिज्ञमजितेन्द्रियम् ।
न ह्रस्वं व्याधितं वाऽपि नृपः कुर्यात्पुरोहितम् ॥

## कामन्दकीयनीतिसारः

राज्ञा त्रयीदण्डनीतिज्ञः पुरोहितो वरणीयः, तस्य आथर्वणिकानि कर्माणि

[3]त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः ।
अथर्वविहितं नित्यं कुर्याच्छान्तिकपौष्टिकम् ॥

( १ ) पुरोहितस्याप्यमात्यविशेषत्वात् वैशेषिकममात्यकार्यमित्याह— त्रय्यामित्यादि । 'अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम्' इत्यनेनैवाथर्ववेदाध्ययनस्य सिद्धत्वात् त्रयीशब्दः, त्रय्यन्तर्भावपक्षेणाथर्ववेदस्य तद्वचनो वा, दण्डनीतिवत् समुच्चयार्थो वा । शान्तिकपौष्टिकं राज्ञः । तथाहि पुरः धीयते नियुज्यते दृष्टादृष्टेषु इति पुरोहितः । जम.

( २ ) अमात्यविशेषमेवाधिकतरगुणं पुरोहितमभिधातुमाह— त्रय्यामिति । मन्त्रिसंपदुक्तगुणानामुपरि त्रय्यां उक्तलक्षणायां दण्डनीत्यां च अस्यामेव कुशलः प्रवीणः पुरोहितः स्यात् । अथर्वोक्तेन शान्तिकपौष्टिकं कुर्यात् । तथा च कौटिल्यः— 'पुरोहितमुदितोदितकुलशीलं साङ्गवेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणामाथर्वभिरुपायैः प्रतिकर्तारं प्रकुर्वीत' ( कौ. १।९ ) इत्यादि । उनि.

( १ ) अग्नि. २३९।१६–१७.

( २ ) कालिका. ९१।५२.

( ३ ) कानी. ४।३१ ; जम. नित्यं कुर्याच्छान्ति ( कुर्यान्नित्यं शान्ति ) ; नीम. ४९ लः स्यात् ( लोऽस्य ) नित्यं ( कर्म ).

## शुक्रनीतिः

धनुर्वेदवित् त्रैविद्यः षडङ्गवित् अर्थशास्त्रज्ञः जितेन्द्रियः शापानुग्रहसमर्थः पुरोहितः

*[1]मन्त्रानुष्ठानसंपन्नस्त्रैविद्यः कर्मतत्परः ।
जितेन्द्रियो जितक्रोधो लोभमोहविवर्जितः ॥
षडङ्गवित्साङ्गधनुर्वेदविच्चार्थधर्मवित् ।
यत्कोपभीत्या राजाऽपि धर्मनीतिरतो भवेत् ॥
नीतिशस्त्रास्त्रव्यूहादिकुशलस्तु पुरोहितः ।
सैवाचार्यः पुरोधा यः शापानुग्रहयोः क्षमः ॥

## योगयात्रा

ब्राह्मणेन पुरोहितेन शान्तिकर्माणि कर्तव्यानि

[2]रोगाभिभूतं विषदूषितं वा
यथा विनाशाभिमुखं शरीरम् ।
वैद्यः प्रयोगैः सुदृढं करोति
राष्ट्रं तथा शान्तिभिरग्रजन्मा ॥

## नीतिवाक्यामृतम्

राज्ञा षडङ्गवेदज्योतिषदण्डनीतिज्ञः दैवमानुषापदां प्रतिकर्ता पुरोहितो वरणीयः

[3]पुरोहितमुदितोदितकुलशीलं षडङ्गवेदे दैवे निमित्ते दण्डनीत्यामभिविनितमापदां दैवीनां मानुषीणां च प्रतिकर्तारं कुर्वीत ॥

अथ पुरोहितसमुद्देशः । तत्र पुरोहितलक्षणमाह— पुरोहितमिति । ( अभिविनीतं ) कुशलम् । कस्मिन् ? षडङ्गे वेदे तथा दैवे ज्योतिःशास्त्रे निमित्ते उत्पातदर्शने तथा दण्डनीत्यां च । इत्थंभूतं पुरोहितं कुर्वीत । तथा च शुक्रः— 'दिव्यान्तरिक्षभौमानामुत्पातानां प्रशान्तये ।

* अस्य श्लोकत्रयस्य व्याख्यानं पुरोहितविषयकः कश्चिद्विचारश्च 'प्रकृतयः— मन्त्रिणः' इत्यस्मिन् प्रकरणे (पृ. १२६६) द्रष्टव्यः ।

( १ ) शुनी. २।७८–८०.

( २ ) योया. ३।२३.

( ३ ) नीवा. ११।१–५५.

तथा सर्वापदां चैव कार्यो भूपैः पुरोहितः ॥ ' । नीवाटी.

मन्त्रिपुरोहितौ अनतिक्रमणीयौ

**राज्ञो हि मन्त्रिपुरोहितौ मातापितरौ, अतस्तौ न केषुचिद्वाञ्छितेषु विस्तरयेत् (?) ॥**

अथ राज्ञा मन्त्रिपुरोहिताभ्यां यत्कृत्यं तदाह– राज्ञो हीति । न निराशौ कार्यौ । केषु? वाञ्छितेषु । किंविशिष्टेषु? केषुचित् समस्तेष्वपि । हि यस्मात् तौ मातापितरौ, अतस्तौ नातिक्रामेत् । तथा च गुरुः– ' समौ मातापितृभ्यां ( हि ) राज्ञो मन्त्रिपुरोहितौ । अतस्तौ वाञ्छितैरर्थैर्न कथंचिद्विस्तरयेत् ( ? ) ॥ ' । नीवाटी.

दैवमानुषापदः

**अमानुष्योऽग्निरवर्षमतिवर्षं मरको दुर्भिक्षं सस्योपघातो जन्तूसर्गो व्याधिर्भूतपिशाचशाकिनीसर्पव्यालमूषकाश्चेत्यापदः ॥**

अथ दैवीनां मानुषीणां चाऽऽपदां स्वरूपमाह– अमानुष्य इति । अमानुष्यः अग्निः विद्युत्पातः । अवृष्ट्यतिवृष्टी प्रसिद्धे । मरकः प्रचुरजनमृत्युः । दुर्भिक्षम् । सस्योपघातः । शलभादिजन्तूत्सर्गः । मानुषविक्रयः (?) । व्याधिप्राचुर्यं भूतप्राचुर्यं पिशाचप्राचुर्यं शाकिनीप्राचुर्यं व्यालानां नखायुधानां च प्राचुर्यं मूषिकप्राचुर्यम् । एताः जनस्य आपदः दैविका मानुष्यश्च । नीवाटी.

विविधासु विद्यासु राजपुत्रः पुरोहितेन शिक्षणीयः, शिष्यकर्तव्यानि, शिष्यस्य गुणा दोषाश्च

*** शिक्षालापक्रियाक्षमो राजपुत्रः सर्वासु लिपिषु प्रसंख्याने पदप्रमाणप्रयोगकर्मणि नीत्यागमेषु रत्नपरीक्षायां संभोगप्रहरणोपवाह्यविद्यासु च साधु विनेतव्यः ॥**

* अस्य सूत्रस्य व्याख्यानं ' राजपुत्ररक्षणम् ' इत्यस्मिन् प्रकरणे ( पृ. १०१८ ) द्रष्टव्यम् ।

**अस्वातन्त्र्यमुक्तकारित्वं नियमो विनीतता च गुरूपासनकारणानि ॥**

अथ शिष्येण गुरोर्यथा वर्तितव्यं तदाह– अस्वातन्त्र्येति । गुरूणामुपासनं गुरुसेवा, तत्र शिष्यगृहस्थेन उक्तकारित्वं आदेशः कार्यः, नियमः व्रतचर्या, विनीतता नयः, एतानि गुरुसंतोषणे शिष्यस्य कारणानि । तथा च गौतमः– ' सदादेशकरो यः स्यात्स्वेच्छया न प्रवर्तते । विनयव्रतचर्याद्यः( ? ) स शिष्यः सिद्धिभाग्भवेत् ॥ ' । नीवाटी.

**व्रतविद्यावयोधिकेषु नीचैराचरणं विनयः ॥**

अथ विनयलक्षणमाह– व्रतेति । योऽसौ विनयः स किंविशिष्टः कथ्यते ? यत् व्रतविद्यावयोधिकेषु नीचैराचरणं ये व्रताधिका भवन्ति तथा विद्याधिकाः ये च वयोधिकाः तेषु यत् नीचैराचरणं नमस्करणादिको व्यवहारः स विनयः । तथा च गर्गः– ' व्रतविद्याधिका ये च तथा च वयसाऽधिकाः । यत्तेषां क्रियते भक्तिर्विनयः स उदाहृतः ॥ ' । नीवाटी.

**पुण्यावाप्तिः शास्त्ररहस्यपरिज्ञानं सत्पुरुषाधिगम्यत्वं च विनयफलम् ॥**

अथ विनयफलमाह– पुण्यावाप्तिरिति । ये व्रताधिका भवन्ति तेषां नीचैराचरणेन धर्मप्राप्तिर्भवति । ये च विद्याधिका भवन्ति तेषां स ...... * । नीवाटी.

**अभ्यासः कर्मसु कौशलमुत्पादयत्येव यद्यस्ति तज्ज्ञेभ्यः संप्रदायः ॥**

**गुरुवचनमनुल्लङ्घनीयमन्यत्राधर्मानुचिताचारात्मप्रत्यवायेभ्यः ॥**

**युक्तमयुक्तं वा गुरुरेव जानाति यदि न शिष्यः प्रत्यर्थवादी ॥**

**गुरुजनरोषेऽनुत्तरदानमभ्युपपत्तिश्चौषधम् ॥**

**शत्रूणामभिमुखः पुरुषः श्लाघ्यो न पुनर्गुरूणाम् ॥**

**आराध्यं न प्रकोपयेद्यद्यसावाश्रितेषु कल्याणशंसी ॥**

* इतः परं वाक्यशेषः कतिपयसूत्रटीकाग्रन्थश्च त्रुटितः ।

**बहुभिरुक्तं नातिक्रमितव्यं यदि नैहिकामुत्रिकफलविलोपः ॥**

**संदिहानो गुरुमकोपयन्नापृच्छेत् ॥**

**गुरूणां पुरतो ( न ) यथेष्टमासितव्यम् ॥**

**नानभिवाद्योपाध्यायाद्विद्यामाददीत ॥**

अथ शिष्येणोपाध्यायसकाशाद्यथा विद्याग्रहणं कर्तव्यं तदाह— नानभिवाद्येति । नाऽऽददीत न गृह्णीयात् । काम् ? विद्याम् । किं कृत्वा ? अनभिवाद्य अनमस्कारं कृत्वा । कस्मान्न गृह्णीयात् ? उपाध्यायात् सकाशात् । यदा विद्याग्रहणं क्रियते तदोपाध्यायनमस्कारः कार्यः । तथा च वशिष्ठः— 'नमस्कारं विना शिष्यो यो विद्याग्रहणं क्रियात् । गुरोः स तां न चाऽऽप्नोति शूद्रो वेदश्रुतिं यथा ॥ ' । नीवाटी.

**अध्ययनकाले व्यासङ्गं पारिप्लवमन्यमनस्कतां च न भजेत् ॥**

अथ शिष्येणाध्ययनकाले यत्कर्तव्यं तदाह— अध्ययनकाल इति । न भजेत् न सेवेत । किं तत् ? व्यासङ्गं अन्यकृत्यं तथा पारिप्लवं चाञ्चल्यं तथा अन्यमनस्कतां अन्यचित्तताम् । कस्मिन् ? अध्ययनकाले पाठसमये । तस्मात् पठनसमये अन्यकृत्यं चापल्यं अन्यचित्ततां न कुर्यात् । तथा च गौतमः— 'अन्यकार्ये च चापल्यं तथा चैवान्यचित्तताम् । प्रस्तावे पठनस्यात्र यः करोति जडो भवेत् ॥ ' । नीवाटी.

**सहाध्यायिषु बुद्ध्यतिशयेन नाभिभूयेत ॥**

अथ शिष्येण सहाध्यायिषु यत् कर्तव्यं तदाह— सहाध्यायिष्विति । नाभिभूयेत न पराभवं कुर्यात् । केषु ? सहाध्यायिषु सतीर्थेषु । केन ? बुद्ध्यतिशयेन मतिबाहुल्येन । यदि पठनात्तस्य बुद्धिरधिका भवति अन्यच्छात्राणां सकाशात् तदा तद्गताँश्छात्रान् न पराभवेत् न पराभवयुक्तान् कुर्यात् । तथा च गुरुः— 'न सहाध्यायिनः कुर्यात्पराभवसमन्वितान् । स्वबुद्ध्यतिशयेनात्र यो विद्यां वाञ्छति प्रभोः ॥' । नीवाटी.

**प्रज्ञयाऽतिशयानो न गुरुमवज्ञायेत ॥**

अथ च्छात्रेण गुरोर्यत्कृत्यं तदाह— प्रज्ञयेति । नावज्ञायेत नाऽऽज्ञालोपेनायुक्तं गुरुं कुर्यात् । कोऽसौ ? छात्रः । कम् ? गुरुम् । किंविशिष्टः ? प्रज्ञयाऽतिशयानः गुरोः सकाशादधिकबुद्धिः संजातः सन् । यदि कथंचित् गुरोः सकाशाच्छात्रस्य पठतोऽधिका बुद्धिर्भवति तदा तया गुरोर्नावलेपः कार्यः । तथा च भृगुः— 'बुद्ध्याऽधिकस्तु यश्छात्रो गुरुं पश्येदवज्ञया । स प्रेत्य नरकं याति वाच्यतामिह भूतले ॥ ' । नीवाटी.

**स किमभिजातो मातरि यः पुत्रः शूरो वा पितरि ॥**

अथ यो मातापितृभ्यामुपरि पुत्रः शूरो भवति स यादृक् तदाह— स इति । स पुत्रः किं अभिजातः कुलीनः ? स कुलीनो न भवति । यः किंविशिष्टः ? शूरः उद्भटः । कस्याम् ? मातरि । तथा पितुरुपरि (वारान् ?) । तस्मात्पुत्रेण मातापित्रोर्भक्तिः कार्या, येन ज्ञायते कुलीनोऽयमिति । तथा च मनुः— 'न पुत्रः पितरं द्वेष्टि मातरं न कथंचन । यस्तयोर्द्वेषसंयुक्तस्तं विद्यादन्यरेतसम् ॥ ' । नीवाटी.

**अननुज्ञातो न क्वचिद्व्रजेत् ॥**

अथ पुत्रेण मातापितृभ्यां कुलीनेन यत्कृत्यं तदाह— अननुज्ञात इति । ताभ्यां मातापितृभ्यां अननुज्ञातः अप्रेषितः सन् न क्वचित् व्रजेत् । तथा वशिष्ठः— 'पितृमातृसमादेशमगृहीत्वा करोति यः । सुसूक्ष्माण्यपि कृत्यानि स कुलीनो भवेन्न हि ॥ ' । नीवाटी.

**मार्गमचलं जलाशयं च नैकोऽवगाहयेत् ॥**

तथा भूयोऽपि पुत्रेण यत्कर्तव्यं तदाह— मार्गमचलमिति । नो गच्छेत् । कोऽसौ ? पुत्रः । किंविशिष्टः ? एकः मातृपितृविहीनः । कं न गच्छेत् ? मार्गं पन्थानम्, तथा अचलं पर्वतम्, तथा जलाशयं वापीकूपादिकमिति । तथा च गुरुः— 'वापीकूपादिकं यच्च मार्गं वा यदि वाऽचलम् । नैकोऽवगाहयेत्पुत्रः पितृमातृविवर्जितः ॥ ' । नीवाटी.

**पितरमिव गुरुमुपचरेत् ॥**

अथ गुरोः शिष्येण यथा वर्तितव्यं तथाऽऽह– पितरमिति । उपचरेत् सेवेत । कम् ? गुरुम् । कमिव ? पितरमिव जनयितारमिव । यथा जनकस्य पुरुषेण (? पुत्रेण) वर्तितव्यं तथा गुरोरपि । तथा च भारद्वाजः– 'योऽन्तेवासी पितुर्यद्वद्गुरोर्भक्तिं समाचरेत् । स विद्यां प्राप्य निःशेषां लोकद्वयमवाप्नुयात् ॥' । नीवाटी.

**गुरुपत्नीं जननीमिव पश्येत् ॥**

अथ शिष्यो गुरुपत्नीं यथा पश्येत् तथाऽऽह– गुरुपत्नीमिति । पश्येत् अवलोकयेत् । काम् ? गुरुपत्नीं उपाध्यायाम् (? यीम्) । कामिव ? जननीमिव । गुरुभार्या मातृवच्छिष्येणावलोकनीया, न तु सस्मरदृष्ट्या । तथा च याज्ञवल्क्यः– 'गुरुभार्यां च यः पश्येद् दृष्ट्या चात्र सकामया । स शिष्यो नरकं याति न च विद्यामवाप्नुयात् ॥' । नीवाटी.

**गुरुमिव गुरुपुत्रं पश्येत् ॥**

अथ गुरुपुत्रेण शिष्येण यथा वर्तितव्यं तदाह– गुरुमिवेति । पश्येत् अवलोकयेत् । कम् ? गुरुपुत्रम् । कमिव ? गुरुमिव । यादृग्भक्त्या गुरुं तथा पश्येत् तादृग्भक्त्या गुरुपुत्रमपि । तथा च बादरायणः– 'यथा गुरुं तथा पुत्रं यः शिष्यः समुपाचरेत् । तस्य तुष्टो गुरुः कृत्स्नां निजां विद्यां निवेदयेत् ॥' । नीवाटी.

**सब्रह्मचारिणि बान्धव इव स्निह्येत् ॥**

अथ ब्रह्मचर्यसमोपेते यथा वर्तितव्यं तथाऽऽह– स ब्रह्मचारिणीति । सः शिष्यः ब्रह्मचारिणि गुरुपुत्रे बान्धवे इव स्निहयेत् स्नेहं कुर्यात् । यथा बान्धवः भ्राता भ्रातुः स्नेहं करोति तथा शिष्योऽपि ब्रह्मचारिणः । तथा च मनुः– 'यथा भ्रातुः प्रकर्तव्यः स्नेहोऽत्र निबन्धना (?) । तथा स्नेहः प्रकर्तव्यः शिष्येण ब्रह्मचारिणः ॥' । नीवाटी.

**ब्रह्मचर्यमा षोडशाद्वर्षात्ततो गोदानपूर्वकं दारकर्म चास्य ॥**

अथ ब्रह्मचारिलक्षणमाह– ब्रह्मचर्यमिति । नीवाटी.

**समविद्यैः सहाधीतं सर्वदाऽभ्यस्येत् ॥**

**गृहदौःस्थित्यमागन्तुकानां पुरतो न प्रकाशयेत् ॥**

**परगृहे सर्वोऽपि विक्रमादित्यायते ॥**

**स खलु महान् यः स्वकार्येष्विव परकार्येषूत्सहते ॥**

**परकार्येषु को नाम न शीतलः ॥**

**राजासन्नः को नाम न साधुः ॥**

**अर्थपरेष्वनुनयः केवलं दैन्याय ॥**

**को नामार्थार्थी प्रणामेन तुष्यति ॥**

**आश्रितेषु कार्यतो विशेषकरणं प्रियदर्शनालापाभ्यां सर्वत्र समवृत्तिस्तन्त्रं वर्धयत्यनुरञ्जयति च ॥**

**तनुधनादर्थग्रहणं मृतमारणमिव ॥**

**अप्रतिविधातरि कार्यनिवेदनमरण्यरुदितमिव ॥**

**दुराग्रहस्य हितोपदेशो बधिरस्याग्रतो गानमिव ॥**

**अकार्यज्ञस्य शिक्षणमन्धस्य पुरतो नर्तनमिव ॥**

**अविचारकस्य युक्तिकथनं तुषकण्डनमिव ॥**

**नीचेषूपकृतमुदके विशीर्णं लवणमिव ॥**

**अविशेषज्ञे प्रयासः शुष्कनदीतरणमिव ॥**

**परोक्षे क्लिष्टोपकृतं सुप्तसंवाहनमिव ॥**

**अकाले विज्ञप्तमूषरे कृष्टमिव ॥**

**उपकृत्योद्घाटनं वैरकरणमिव ॥**

**अफलवतः प्रसादः काशकुसुमस्येव ॥**

**गुणदोषावनिश्चित्यानुग्रहनिग्रहविधानं ग्रहाभिनिवेश इव ॥**

**उपकारापकारासमर्थस्य तोषरोषकरणमात्मविडम्बनमिव ॥**

**शूद्रस्त्रीविद्रावणकारि गलगर्जितं ग्रामशूराणाम् ॥**

**स विभवो मनुष्याणां यः परोपभोग्यो न तु यः स्वस्यैवोपभोग्यो व्याधिरिव ॥**

अथ विभवो मनुष्याणां यथा भवति तदाह– स इति । मनुष्याणां पुरुषाणां स विभवः श्लाघ्यः यः

किंविशिष्टः ? परोपभोग्यः परैः अन्यैः यः भुज्यते । न तु केवलं व्याधिरिव यः स्वयमात्मना भुज्यते इति । तथा च वल्लभदेवः– 'किं तया क्रियते लक्ष्म्या या वधूरिव केवला । या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ ' । नीवाटी.

गुरोः दोषा गुणाश्च

**स किं गुरुः पिता सुहृद्वा योऽभ्यसूययाऽर्भं बहुदोषं बहुषु वा दोषं प्रकाशयति न शिक्षयति च ॥**

अथ गुरुजनकसुहृदामर्भकविषये यदाह– स इति । स किं गुरुः पिता सुहृद् वा ? त्रयाणामपि यः न शिक्षयति । कम् ? अर्भकम् । किंविशिष्टम् ? बहुदोषम् । कया कृत्वा ? अभ्यसूयया अतिकोपप्रदया । केषु ? बहुषु बाह्यलोकेषु । प्रकाशयति प्रकटं करोति, न शिक्षयति न शिक्षां ददाति । स त्रयाणामेकोऽपि न स्यात् । शत्रुरित्यर्थः । तस्माच्छिष्यस्य दोषं न प्रकाशयेत्, शिक्षामेव दद्यात् । तथा च गौतमः– 'शिक्षां दद्यात् स्वशिष्यस्य तद्दोषं न प्रकाशयेत् । ईर्ष्यागर्भं भवेद्यच्च प्रभूतस्य जनाग्रतः ॥ ' । नीवाटी.

**स किं प्रभुर्यश्चिरसेवकेष्वेकमप्यपराधं न सहते ॥**

अथ प्रभोः स्वरूपमाह– स इति । यः चिरसेवकस्य प्रभूतकालसेवकस्य एकमपि अपराधं दोषं न सहते । तस्मात् स्वामिना चिरकालसेवकस्य प्रथमोऽपराधः सहनीयः । तथा च शुक्रः– 'चिरकालचरो भृत्यो भक्तियुक्तः प्रसेवयेत् । न तस्य निग्रहः कार्यो दोषस्यैकस्य कारणात् ॥ ' । नीवाटी.

***वंशवृत्तविद्याभिजनविशुद्धा हि राज्ञामुपाध्यायाः ॥**

## युक्तिकल्पतरुः

पुरोहितगुणाः

[1]सदाचारः कुशलधीः सर्वशास्त्रार्थपारगः ।
नित्यनैमित्तिकानां च कार्याणां कारकः शुचिः ॥
अपर्वमैथुनपरः पितृदेवार्चने रतः ।
गुरुभक्तो जितक्रोधो विप्राणां हितकृत्सदा ॥
दयावान् शीलसंपन्नः सत्कुलीनो महामतिः ।
परदारेषु विमुखो दृढसंकल्पको द्विजः ॥
अन्यैश्च वैदिकगुणैर्युक्तः कार्यो गुरुर्नृपैः ।
एतैरेव गुणैर्युक्तः पुरोधाः स्यान्महीभुजाम् ॥

## मानसोल्लासः

राज्ञा वरणीयः त्रैविद्यः अथर्ववेदवित् पुरोहितः

[3]त्रय्यां च दण्डनीत्यां च शान्तिकर्मणि पौष्टिके ।
आथर्वणे च कुशलः स स्याद्राजपुरोहितः ॥

---

* अस्य सूत्रस्य व्याख्यानं 'राजशिक्षा' इत्यस्मिन् प्रकरणे (पृ. ९०३) द्रष्टव्यम् ।

(१) नीवा. ५।६५.
(२) युक. ३।१४–१७.
(३) मासो. २।६०.

## महाभारतम्

राज्ञा वरणीयानां ऋत्विजां कर्तव्यानि गुणाश्च

युधिष्ठिर उवाच–

[1]कसमुत्थाः कथंशीला ऋत्विजः स्युः पितामह ।
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर ॥

स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानां सप्तानां राज्यप्रकृतीनां मध्ये स्वामिरूपा प्रकृतिः ऋत्विक्पुरोहितनृपभेदेन त्रिविधा । तत्र अभ्यर्हितत्वात् प्रथमं पुरोहितः ततः शेषित्वाद्राजा च निरूपितः । इदानीं ऋत्विजो निरूपयति– केत्यादिना । कसमुत्थाः कस्मिन्निमित्ते उदिताः, किमेषां कर्तव्यं कर्मेत्यर्थः । नीटी.

भीष्म उवाच–

[2]प्रतिकर्म पुराचार ऋत्विजां स्म विधीयते ।
आदौ छन्दांसि विज्ञाय द्विजानां श्रुतमेव च ॥

यथा योगशास्त्रे मैत्र्यादिभिश्चित्तप्रसादनाख्यं प्रतिकर्म विधीयते एवं राज्ञां शान्तिकपौष्टिकादि कर्म प्रयोगशुद्ध्याख्यं प्रतिकर्म ऋत्विग्भिः कर्तव्यम् । तत्र पराचारः अत्यन्ताभियोगेनाऽऽचरणं ऋत्विजां विधीयते । कीदृशानाम् ? छन्दः ऋचः, साम, आदिपदार्थो यजुः, श्रुतं मीमांसा, तानि विज्ञाय, स्थितानामिति शेषः । नीटी.

[3]ये त्वेकरतयो नित्यं धीरा नाप्रियवादिनः ।
परस्परस्य सुहृदः संमताः समदर्शिनः ॥

एवं कसमुत्था इत्यस्योत्तरमुक्त्वा किंशीला इत्यस्योत्तरमाह– ये त्विति । नीटी.

---

(१) भा. १२।८०।१; भामु. १२।७९।१ वर (वरः).

(२) भा. १२।८०।२; भामु. १२।७९।२ पुरा (परा) आदौ छन्दांसि (छन्दः सामादि).

(३) भा. १२।८०।३; भामु. १२।७९।३ रत (मत) धीरा नाप्रिय (वीराणां प्रति) संमताः (समन्तात्).

[1]येष्वानृशंस्यं सत्यं चाप्यहिंसा तप आर्जवम् ।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥
[2]ह्रीमान् सत्यधृतिर्दान्तो भूतानामविहिंसकः ।
अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ॥
[3]अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति ।
एते महर्त्विजस्तात सर्वे मान्या यथातथम् ॥

कथंविधा इत्यस्याऽऽह त्रिभिः– अनृशंसा इति । त्रिभिः श्रुतवृत्तवंशैः । शुक्लैः निर्दोषैः । महर्त्विजः ब्रह्मादयः, उपर्त्विजः ब्राह्मणाच्छंस्यादयः, ते यथार्हतः यथायोग्यं मान्याः धनादिना आराधनीयाः । नीटी.

## मनुः

ऋत्विजां वरणं कर्तव्यानि च

*[4]पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः ।
तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ॥

## याज्ञवल्क्यः

ऋत्विजां वरणं कर्तव्यानि च

[5]श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ।
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥

---

* अस्य श्लोकस्य व्याख्यानसंग्रहः शेषस्मृत्यादिनिर्देशश्चात्र 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११०७) द्रष्टव्यः ।

(१) भा. १२।८०।४; भामु. १२।७९।४ पूर्वार्धे (अनृशंसाः सत्यवाक्या अकुसीदा अथर्जवः ।) नाभि (ऽनभि).

(२) भा. १०।८०।५; भामु. १२।७९।५ ह्री (धी).

(३) भा. १२।८०।६; भामु. १२।७९।६ तथम् (र्हतः).

(४) मस्मृ. ७।७८.

(५) यास्मृ. १।३१४; विश्व. १।३१० देव चर्त्विजः (द्विजस्तथा); मिता.; अप. १।३१२–३१३; राक. १६६–१६७ विश्ववत्; रार. १४ चर्त्विजः (चर्त्विजम्); पमा. ४०८; वीमि.

(१) अयं च राज्ञः अभ्यधिको वैशेषिको धर्मः। तथाशब्दात् पुरोहितोऽपि श्रौतस्मार्तक्रियाहेतोरेव। ऋत्विग्वरणं चैतत् कर्मप्रयोगात् बहिः आदित एव द्रष्टव्यम्। यज्ञांश्च विधिवत् कुर्यात्, न तु यथाकथंचनेत्यर्थः। भूरिदक्षिणाः बहुसुवर्णकादयः। *प्रसर्पकदानापेक्षया वा भूरिदक्षिणत्वं योज्यम्। विश्व.

(२) श्रौताग्निहोत्रादिस्मार्तोपासनादिक्रियानुष्ठानसिद्ध्यर्थं ऋत्विजो वृणुयात्। यज्ञांश्च राजसूयादीन् विधिवत् यथाविधानं भूरिदक्षिणान् बहुदक्षिणानेव कुर्यात्। मिता.

(३) श्रुतिस्मतिविहिताग्निहोत्रादिकर्मणां क्रिया अनुष्ठानम्, तस्मात् प्रयोजनीभूतात् हेतोः ब्रह्मादीन् ऋत्विजो वृणुयात् वरणेन कुर्यात्, यथा आधानेन आहवनीयादीन्। तथा हविःसंस्थासोमसंस्थादीन् यज्ञान् भूरिदक्षिणान् प्राथमकल्पिकदक्षिणादानयुक्तान् कुर्यात्। अप.

* 'यज्ञे अर्थसंशये निर्णायकाः यज्ञार्थशालोपविष्टाः विद्वांसः शिष्टा ब्राह्मणाश्रिप्रभृतयः' इति मीमांसाकोशे प्रसर्पकशब्दार्थः।

(४) उक्तपुरोहितादेरर्थधर्मयोरविशेषादत्रावसरः। यत्तु यजनादेरदृष्टमेव फलमिति, तन्न, 'राज्यकामो विजयकामो धनकामः पुष्ट्यादिकामो यजेत्' इत्यादिदर्शनात् व्यवहाराच्च, किंच *आशीर्वादादेरर्थप्रयोजकस्य पृथगुपादानात्। सर. १४-१५

(५) एवकारेण ऋत्विग्वरणस्याऽऽवश्यकत्वम्, चकारेण पूर्वोक्तपुरोहितस्य वरणं समुच्चीयते इत्याहुः। ऋत्विग्वरणस्य प्रयोजनमाह– यज्ञानिति। भूरिदक्षिणान् स्वशक्त्यनुसारिदक्षिणायुक्तान्। एवकारोऽत्र विधिवदित्यत्रान्वेति, 'अन्नहीनो दहेद्राष्ट्रं विधिहीनस्तु ऋत्विजः। यजमानमदाक्षिण्यो नास्ति यज्ञसमो रिपुः॥' इति वचनात्। यज्ञान् यागाङ्गक्रियान्। चकारेण पशुयागपरिग्रहः। † वीमि.

* 'ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः' (याज्ञ. १।३३२) इत्यत्रेत्यादिः।

† शेषं अपगतम्।

---

## गौतमः

दैवोत्पातज्ञानां वचनं कर्तव्यम्

¹यानि च दवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत ॥

(१) दैवचिन्तकाः ज्योतिःशास्त्रविदः। उत्पातचिन्तकाः शकुननिमित्तज्ञाः। प्रब्रूयुः निश्चयेन ब्रूयुः। चशब्दात् गुरवश्च। तानि आद्रियेत श्रद्धीत, तदनुरूपं कुर्यादित्यर्थः। मभा.

(२) दैवचिन्तकाः ज्योतिर्विदः। उत्पातचिन्तकाः शकुनज्ञाः उत्पातानां चाग्रे फलानि जानते। ते यत् प्रब्रूयुः 'इदमन्यग्रहवैकृतम्, इदमद्य दुःशकुनम्, अयमद्योत्पातः, अयमेषां परिहारः' इति च, तान्यपि सर्वाण्याद्रियेत नोपेक्षेत। गौमि.

²तदधीनमपि ह्येके योगक्षेमं प्रतिजानते ॥

(१) कस्मात्? यतः दैवाधीना पुरुषकाराधीना वा कर्मफलप्राप्तिः। दैवशब्देन पूर्वजन्मोपात्तं कर्मोच्यते, पुरुषकारशब्देन एतज्जन्मकृतं कर्म। तथा च कण्वः— 'पूर्वजन्मकृतं कर्म दैवमित्यभिधीयते। एतज्जन्मकृतं यत्तु पुरुषकारमिहोच्यते॥' इति। तत्र पुरुषकारहीनानामपि पङ्ग्वादीनां निधानादिलाभदर्शनात्, प्रकृष्टकर्मकृतामपि फलादर्शनात् दैवाधीनमेव फलम्, न पुरुषकाराधीनमिति मन्यमानाः तदधीनमिति प्रतिजानते। तच्छब्देन दैवोत्पातचिन्तकवचनम्, तेनैव अदृष्टफलविज्ञानात्। तदायत्तं योगक्षेमम्। अलब्धलाभः योगः, लब्धस्य रक्षणं क्षेमः। योगस्तावत्तदधीनः, निमित्तेन तल्लाभालाभविज्ञाने सति तदनुरूपयत्नस्य करणाकरणात्। क्षेमश्चापि, निमित्तेन उपद्रवज्ञाने सति शान्त्यादिना तदपनेतुं शक्यत्वात्। प्रतिजानते प्रतिज्ञां कुर्वन्ति। अन्याभिप्रायसूचनार्थोऽपिशब्दः। अन्येऽप्येवं ब्रुवते— पुरुषकारमन्तरेण अन्नादिसंबन्धस्य अनुपपद्यमानत्वात् पुरुषकारे एव प्रवृत्तानां कदाचिदेव निष्फलत्वदर्शनात् सर्वदा व्यभिचाराभावाच्च पुरुषकाराधीनमेवेति मन्यमानाः दैवोत्पात(चिन्त)कवचनस्य कदाचित् अव्यभिचारदर्शनान्न तदधीनमिति। एकेग्रहणात् उभयस्मादिति गौतमः। नैकान्तेन दैवस्य प्राधान्यम्, न च पुरुषकारस्य। किं तर्हि? कदाचिद्दैवं पुरुषकारमपेक्षते, तथा पुरुषकारोऽपि दैवमिति। यथा पुरुषकारो दैवमपेक्षते कृष्यादौ, न दैवं वर्षादिकमन्तरेण कृष्यादीनां पुरुषकारेणैव फलसिद्धिरिति। तथा अन्नादिलाभे दैवं पुरुषकारमपेक्षते, तमन्तरेण तत्संबन्धानुपपत्तेः। गौतमस्यायमभिप्रायः— दैवे दैवोत्पातचिन्तकवचनमाद्रियेत, पुरुषकारे त्वाप्तवचनमिति। मभा.

(२) किमर्थम्? — तदधीनमिति। न केवलं रक्षणादिविहितानुष्ठानम्, किं तर्हि? तदधीनमपि दैवोत्पातचिन्तकैर्ग्रहवैकृतादौ यत् कर्तव्यतया प्रोक्तं तदधीनमपि योगक्षेमं भवति। अलब्धस्य लाभः योगः। लब्धस्य रक्षणं क्षेमः। तयोः समाहारद्वंद्वः। 'आयोगप्रजा विन्देत्' 'योगक्षेमो नः कल्पताम्' इत्यादौ एकविंशत्यादिवत् परवल्लिङ्गता। तद्यथा— एकश्च विंशतिश्च एकविंशतिः। तं योगक्षेमं प्रतिजानते एके आचार्याः इति। गौमि.

(३) 'योगक्षेमम्' इत्यत्र समाहारद्वंद्वेन नपुंसकता एकवद्भावश्च। * राप्र. १३७.

(१) गौध. ११।१७; राक. १६५; मभा.; गौमि. ११।१५; राप्र. १३६.

(२) गौध. ११।१८; राक. १६५ मपि ह्ये (मप्ये); मभा.; गौमि. ११।१६; राप्र. १३६ राकवत्.

* शेषं गौमिवत्।

## विष्णुः

ज्योतिर्विद् अनुसरणीयः सर्वकार्येषु

[१]राजा च सर्वकार्येषु सांवत्सराधीनः स्यात् ॥

## महाभारतम्

कुशलदैवज्ञवैद्ययोः संग्रहः

[२]कच्चिदङ्गेषु निष्णातो ज्योतिषां प्रतिपादकः ।
उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव ॥

अङ्गेषु सामुद्रिकशास्त्रोक्तरीत्या अङ्गानां परीक्षायाम् । उत्पातेषु दिव्यभौमशारीरेषु धूमकेतुभूकम्पवामनेत्रस्फुरणादिषु आगाम्यशुभसूचकेषु । नीटी.

[३]कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः ।
सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥

अष्टाङ्गायां विचिकित्सायाम् । ' निदानं पूर्वलिङ्गानि रूपाण्युपशयस्तथा । संप्राप्तिरौषधी रोगी परिचारक एव च ॥ ' इत्यष्टावङ्गानि । अथवा रोगः, रोगहेतुः, आरोग्यम्, आरोग्यहेतुः, तेषां लक्षणानि च । नीटी.

## वृद्धचाणक्यः

वैद्यगुणाः

[४]आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ।
उक्तहेतुसमायुक्त एष वैद्यो विधीयते ॥

## चाणक्यराजनीतिशास्त्रम्

वैद्यज्योतिर्विद्गुणाः

[५]आयुर्वेदकृताभ्यासः सर्वत्र प्रियदर्शनः ।
दृष्टलक्ष्यः सुशीलश्च प्राज्ञश्च भिषगुच्यते ॥

लेखकः पाठकश्चैव गणकः प्रतिबोधकः ।
ग्रहमन्त्रप्रयोक्ता च कालज्ञो राज्ञ उच्यते ॥

## याज्ञवल्क्यः

प्रतिदिनं ज्योतिर्विद्वैद्ययोः दर्शनम्

*[१]दृष्ट्वा ज्योतिर्विदो वैद्यान् ...... ॥

## बृहस्पतिः

ज्योतिर्विद्गुणाः

[२]शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥

शब्दाभिधानं कोषः । गणकः ज्योतिर्वित् । लेखकः व्याकरणकोषवेत्ता । द्वावपि योगरूढौ । उभयत्र तयोरेव कुशलतेत्यर्थः । रार. २१

## बार्हस्पत्यसूत्रम्

वैद्यज्योतिर्विन्मन्त्रज्ञाः राज्ञा संग्राह्याः

[३]चिकित्सकज्योतिषमन्त्रवादिनः संग्रहेद्वृत्तशीलसंपन्नान् ॥

## आश्वलायनः

ज्योतिर्विद्भ्यः कालो ज्ञेयः

[४]यामस्य घटिकायाश्च सावनस्य दिनस्य च ।
सांवत्सरिकमुख्येन प्रतिपाद्य प्रसारयेत् ॥

## मत्स्यपुराणम्

वैद्यस्य गुणाः अनुसरणं च

[५]परम्परागतो यः स्यादष्टाङ्गे सुचिकित्सिते ।
अनाहार्यः स वैद्यः स्याद्धर्मात्मा च कुलोद्गतः ॥

(१) विस्मृ. ३।७५ ; राक. १६४ (च०) सर्वं (सर्वेषु) ; राप्र. १३७ राकवत्.

(२) भा. २।५।३१ ; भामु. २।५।४२ तिषां (तिषः).

(३) भा. २।५।८० ; भामु. २।५।९०.

(४) वृचा. ४।११ ; चानी. १०१ तृतीयचरणे (आर्यशीलगुणोपेत) ; चासा. १।५७ सर्वेषां (सर्वज्ञः) शेषं चानीवत्.

(५) चाशा. ५।११,१४.

* अस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च ' राज्ञो दिनकृत्यम् ' इत्यस्मिन् प्रकरणे (पृ. ९५५) द्रष्टव्यः ।

(१) यास्मृ. १।३३३. (२) रार. २१.

(३) बासू. १।८७.

(४) आश्वस्मृ. ८।१३०.

(५) मत्स्य. २१५।३४ ; विध. २।२४।३३ परम्परा (परं पारं) ङ्गे सु (ङ्गेषु) ; राक. २८ सुचि (तु चि) ; राप्र. १८३ ङ्गे सु (ङ्गेन).

अष्टावङ्गानि शल्यशालाक्यकायचिकित्साभूततन्त्रविषविद्यारसायनवाजीकरणकुमारभृत्याः। राप्र. १८३

[1]प्राणाचार्यः स विज्ञेयो वचनं तस्य भूभुजा।
राजन् राज्ञा सदा कार्यं यथा कार्यं पृथग्जनैः॥

## विष्णुधर्मोत्तरपुराणम्

राज्ञा वरणीयः अवरणीयश्च ज्योतिर्वित्

[2]व्रतं गृहीत्वा राज्यार्थी वृणुयाद्ब्राह्मणोत्तमम्।
सांवत्सरं सुखायास्य सर्वस्य जगतो नृपः॥
[3]सर्वलक्षणलक्षण्यं विनीतं प्रियदर्शनम्।
सुरूपं वेशसंपन्नं नित्यमूर्जितदर्शनम्॥
[4]अदीनवादिनं धीरं धर्मनित्यं जितेन्द्रियम्।
त्रिस्कन्धं ज्ञानकुशलं द्वादशाश्रयपारगम्।
अन्यङ्गं नाधिकाङ्गं च वेदवेदाङ्गपारगम्॥

त्रिस्कन्धाः होरागणितसंहिताः, आश्रयाः ग्रहसंस्थानानि द्वादश मेषादिराशयः, तत्पारगं शत्रुमित्रोच्चनीचादिविवेककुशलम्। राकौ. २५८

[5]चतुःषष्टयङ्गतत्त्वज्ञमूहापोहविशारदम्।
भूतभव्यभविष्यज्ञं गणितज्ञं विशेषतः॥

तथा चतुःषष्टयङ्गानि च यथा वेदस्य षडङ्गानि एवं ज्योतिःशास्त्रस्य, तेषां तत्त्वज्ञं अर्थतत्त्वज्ञातारम्। तानि च अङ्गानि गर्गेणोक्तानि *। राकौ. २५८

* गर्गवचनानि जिज्ञासुभिः राजनीतिकौस्तुभे द्रष्टव्यानि।

(१) मत्स्य. २१५।३५; विध. २।२४।३४ राजन् राज्ञा (राम स्नेहात्); राक. २८; राप्र. १८३–१८४ राजन् राज्ञा (अविचार्य).

(२) विध. २।४।३.

(३) विध. २।४।४; राकौ. २५८ सुरूपं वेश (पुरुषं वष).

(४) विध. २।४।५ द्वितीयार्धं नास्ति; राकौ. २५८ अदीन (प्रज्ञात) नित्यं (निष्ठं).

(५) विध. २।४।६; राकौ. २५८ पू.: २६१ उत्त.

[1]विचन्द्रा शर्वरी यद्वन्मुकुटं च च्युतोपलम्।
गणितेन तथा हीनं ज्योतिषं नृपसत्तम॥
[2]आस्तिकं श्रद्दधानं च अनुकूलं महीपतेः।
सांवत्सरं नृपो गत्वा वरयेत्प्रयतः शुचिः॥
[3]येनाभिषिक्तो नृपतिर्विनष्टस्तु नराधिप।
सांवत्सरं न तं विद्वान् वरयेन्नृपसत्तम॥
[4]न हीनाङ्गं न वाचालं न च निष्प्रतिभं नृपः।
कुवेशमलिनं मुण्डं नास्तिकं पापनिश्चयम्॥
[5]भिन्नवृत्तिं च वरयेद्वरयेत्सद्गुणं सदा॥

ज्योतिर्विदा शुभाशुभानि वरणीयावरणीयानि च राज्ञे वक्तव्यानि

[6]वरयित्वा तु वक्तव्याः स्वयमेव महीभुजा॥
[7]यथैवाग्निमुखा देवास्तथा राजमुखाः प्रजाः।
यथैवाग्निमुखा मन्त्रा राज्ञां सांवत्सरास्तथा॥
[8]त्वं मे माता पिता चैव देशिकश्च गुरुस्तथा।
दैवं पुरुषकारश्च ज्ञातव्यौ सततं त्वया॥

देशिकः आज्ञाप्रदः। राकौ. २६२

[9]समधर्मज्ञ भद्रं ते राज्यं साधारणं हि नौ।
समानेयः शुभो देवस्त्वयैव मम सत्तम॥

(१) विध. २।४।७; राकौ. २६१–२६२.

(२) विध. २।४।८; राकौ. २५८ उत्त.: २६२.

(३) विध. २।४।९; राकौ. २६२.

(४) विध. २।४।१०; राकौ. २६२ वेश (वेशं) मुण्डं (चण्डं).

(५) विध. २।४।११; राकौ. २६२ च (न) त्सद्गु (त्सगु).

(६) विध. २।४।११; राकौ. २६२ तव्याः (तव्यः).

(७) विध. २।४।१२; राकौ. २६२ ग्निमुखा म (ग्नेर्मुखं म) त्सरा (त्सर).

(८) विध. २।४।१३; राकौ. २६२ व्यौ सततं (व्यश्च सदा).

(९) विध. २।४।१४; राकौ. २६२ सम (मम) नौ (ते) तृतीयचरणे (शमनीयोऽशुभो दैव) सत्तम (शान्तिभिः).

अशुभो दैवः अशुभादृष्टम् । राकौ. २६२

[1]पौरुषेण पदं कार्यं समरं च तथा मया ।
स चेत्तदभिमन्येत पार्थिवस्य महागुणम् ॥

[2]अथवा गुणदोषेण प्रज्ञया चाऽऽशु यो नृणाम् ।
दैवोपघातसमरे विज्ञानं पौरुषस्य च ॥

[3]वाडवं न च प्राज्ञस्तु तस्यैवानुमते तदा ।
तेनोद्दिष्टौ तु वरयेद्राजा मन्त्रिपुरोहितौ ॥

[4]तेनोद्दिष्टां च वरयेन्महिषीं नृपसत्तमः ।
ततोऽभिषेकसंभारांस्तस्य कुर्यात्स दैववित् ॥

[5]कुञ्जरं तुरगं कुर्यात्तस्य राज्ञः परीक्षितौ ।
भद्रासनं च च्छत्रं च वालव्यजनमेव च ॥

[6]खड्गरत्नं तथा चापं रत्नानि विविधानि च ।
राज्ञो मृतस्य ये त्वासन् सर्वाणि तु नराधिप ॥

[7]ते न कार्या नरेन्द्रस्य तेन दैवविदा तथा ।
कामं सांवत्सरः कार्यो ह्यलाभेऽन्यस्य भूभुजा ॥

(१) विध. २।४।१५ ; राकौ. २६२ द्वितीयचरणे (समरे च सदा मम) पू.

(२) विध. २।४।१६.

(३) विध. २।४।१७ ; राकौ. २६२ तु (च) उत्त.

(४) विध. २।४।१८ ; राकौ. २६२ रांस्त (रं त).

(५) विध. २।४।१९ ; राप्र. ५२ उत्त. ; राकौ. १२७ उत्त. : २६२–२६३ क्षितौ (क्षितम्).

(६) विध. २।४।२० ; राप्र. ५२ खड्गरत्नं (खड्गं चक्रं) सर्वाणि तु (सर्वं एते) ; राकौ. १२७ खड्गरत्नं (खड्गं चक्रं) मृतस्य (पूर्वस्य) सर्वाणि तु (सर्वं एव) : २६३ खड्गरत्नं (खड्गं चक्रं) सर्वाणि तु (सर्वे चैते).

(७) विध. २।४।२१ सांवत्सरः कार्यो ह्य (संवत्सरं कार्या अ) ; राप्र. ५२ ते न (न ते) तथा (तदा) ; राकौ. १२७ यों ह्यला (यौऽला) न्यस्य (न्यस्यैव) शेषं राप्रवत् : २६३ ते न (न ते) दैव (वेद) यों ह्य (यै अ).

[1]गुणाधिकाश्चेन्नो कार्या येऽन्येऽत्राभिहिता मया ॥

(१) पूर्वे चेत् गुणाधिकाः तदा ये अन्ये कर्तव्या इत्यभिहिताः ते नो कार्या इत्यर्थः । राप्र. ५२

(२) मृतराज्ञो ये ते प्राचीनाः पदार्थाः भद्रासनच्छत्रचामरखड्गप्रभृतयः आसन् ते नूतनराज्ञे न देयाः, किंतु नूतना एव कर्तव्याः । दैवज्ञश्च पूर्वज्योतिर्विदपेक्षया गुणाधिकश्चेत् प्राप्यते तदा प्राचीनं विहाय नूतनः कर्तव्यः । नूतनदैवज्ञस्य गुणाधिक्याभावे तु पुरातन एव दैवज्ञः स्थापनीयः । भद्रासनच्छत्रचामरखड्गादीनां तु पूर्वेषां गुणाधिक्ये नूतनानां निर्गुणत्वेऽपि सगुणान् पुरातनान् विहाय नूतना एव कर्तव्या इति ।
* राकौ. २६३

[2]न तत्र नागाः सुभृता न योधा
राज्ञो न माता न पिता न बन्धुः ।
यत्रास्य साध्यं भवतीह विद्वान्
सांवत्सरो धर्मविदः प्रमत्तः ॥

ज्योतिर्विद्वैद्यवचनानुसरणं महाफलम्

×[3]सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः ।
राजा विभूतिमाप्नोति चिरं यशसि तिष्ठति ॥

## गरुडपुराणम्

वैद्यगुणाः

[4]आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ।
आयुःशीलगुणोपेतो वैद्य एव विधीयते ॥

* राकौ. १२७ राप्रवत् ।

× ज्योतिर्विद्विषयको विचारः पुरोहितप्रकरणीयविष्णुधर्मोत्तरपुराणेऽपि द्रष्टव्यः ।

(१) विध. २।४।२२ काश्चेन्नो (कस्य नो) न्येऽत्रा (न्यत्रा) ; राप्र. ५२ ; राकौ १२७ श्चेन्नो (श्चेन्न) न्येऽत्रा (न्यत्रा) : २६३ काश्चेन्नो (केऽस्य नो).

(२) विध. २।४।२३ ; राकौ. २६३ साध्यं (कार्यं) प्रमत्तः (प्रयत्नतः).

(३) विध. २।१५१।२७–२८ ; राप्र. ३१२ सांवत्सराणां (सचराणां च).

(४) गरुड. १।११२।११.

## अग्निपुराणम्

राज्ञा ज्योतिर्विद् वैद्यश्च वरणीयः

[1]सांवत्सरं स वृणुयात् ॥

[2]स्यादायुर्वेदविद्वैद्यः ॥

## कामन्दकीयनीतिसारः

ज्योतिर्विद्गुणाः

*[3]तादृक्सांवत्सरोऽप्यस्य ज्योतिःशास्त्रार्थचिन्तकः।
प्रश्नाभिधानकुशलो होरागणिततत्त्ववित् ॥

## शुक्रनीतिः

राज्ञा दैवज्ञमान्त्रिकवैद्यपोषणं कर्तव्यम्

[4]........... दैवज्ञा मान्त्रिकाश्च ये ॥
आयुर्वेदविदः .................. ॥
तान्सर्वान्पोषयेद्भृत्या दानैर्मानैः सुपूजितान् ।
हीयते चान्यथा राजा ह्यकीर्तिं चापि विन्दति ॥

दैवज्ञाः गणकाः । ये च मान्त्रिकाः सर्पगारुडादिमन्त्रज्ञाः । आयुर्वेदविदः वैद्यकशास्त्रज्ञाः । तान् सर्वान् दानैः मानैश्च सुपूजितान्, कृत्वेति शेषः, भृत्या मासिकादिवृत्तिविधानेन पोषयेत् पालयेत् । अन्यथा एतेषामपालने राजा हीयते राज्यात् भ्रश्यति, अकीर्तिं अयशः विन्दते लभते । हिशब्दः अवधारणे । शुनीटी.

ज्योतिर्विन्मान्त्रिकवैद्यगुणाः

[5]संहितां च तथा होरां गणितं वेत्ति तत्त्वतः ।
ज्योतिर्विच्च स विज्ञेयो त्रिकालज्ञश्च यो भवेत् ॥

यः होरां होरानिर्णायिकां संहितां शास्त्रं तथा गणितं तत्त्वतः याथार्थ्येन वेत्ति जानाति, तथा त्रिकालज्ञः भूतभवद्भविष्यज्ञः भवेत् सः ज्योतिर्वित् ज्योतिषिकः विज्ञेयः । शुनीटी.

बीजानुपूर्व्या मन्त्राणां गुणान्दोषांश्च वेत्ति यः ।
मन्त्रानुष्ठानसंपन्नो मान्त्रिकः सिद्धदैवतः ॥

यः बीजानां बीजि( ? ज )भूतमन्त्राणां आनुपूर्व्या पूर्वानुक्रमेण मन्त्राणां गुणान् दोषांश्च वेत्ति, तथा मन्त्रानुष्ठानसंपन्नः सिद्धदैवतः देवतासिद्धश्च सः मान्त्रिकः मन्त्राचार्यः । शुनीटी.

हेतुलिङ्गौषधीभिर्यो व्याधीनां तत्त्वनिश्चयम् ।
साध्यासाध्यं विदित्वोपक्रमते स भिषक् स्मृतः ॥

यः हेतुभिः कारणैः लिङ्गैः चिह्नैः औषधीभिश्च व्याधीनां रोगाणां तत्त्वनिश्चयं याथार्थ्यनिर्णयं साध्यासाध्यं च विदित्वा ज्ञात्वा उपक्रमते चिकित्सामारभते सः भिषक् वैद्यः स्मृतः । शुनीटी.

## योगयात्रा

ज्योतिर्विदः प्रयोजनम्

[1]दैवज्ञमन्त्रिसुहृदाप्तवचांसि राजा
यो नाऽऽद्रियेत मतिचेष्टितदुष्टबुद्धिः ।
सोऽग्रेसरेण रहितोऽन्ध इवाचिरेण
हास्यत्वमेति पतितो विषये रिपूणाम् ॥

[2]इति मनुजपतिर्यथोपदेशं
भगणविदां प्रकरोति यो वचांसि ।
स सकलमण्डलाधिपत्यं
व्रजति दिवा च पुरंदरोऽचिरेण ॥

## युक्तिकल्पतरुः

ज्योतिर्विद्गुणाः

[3]ज्योतिःशास्त्रविशेषज्ञः सुन्दराङ्गः सभापटुः ।
कुलक्रमागतः शुद्धो गणकः स्यान्महीपतेः ॥

---

* सटीकपुस्तके नास्ति ।

( १ ) अग्नि. २१८।३.

( २ ) अग्नि. २२०।६.

( ३ ) कानी. ४।३१ इति श्लोकादूर्ध्वं वेङ्कटेश्वरमुद्रणालयपुस्तके अधिकोऽयं श्लोकः.

( ४ ) शुनी. २।१२२-१२४.

( ५ ) शुनी. २।१८१-१८३.

( १ ) योया. २।९.

( २ ) योया. १७।१०.

( ३ ) युक. ३।२२.

## मानसोल्लासः

ज्योतिर्विद्वैद्यगुणाः

[1]एवं ग्रहबलं ज्ञात्वा दुर्बलत्वं च पापिनाम् ।
लग्नं यः कथयेत्सम्यक् स कार्यो गणको नृपैः ॥

[2]नराणां च गजानां च वाजिनां च गवामपि ।
मृगाणां च खगानां च ये जानन्ति चिकित्सितम् ॥
परं पारंगताः सम्यगष्टाङ्गे तु चिकित्सिते ।
शस्त्रकर्मकलादक्षा मन्त्रे तन्त्रे च कोविदाः ॥

(१) मासो. २।८९.
(२) मासो. २।१३८–१४५.

देहे शिरसि बाले तु विषे शल्ये ग्रहेऽपि च ।
वृषे रसायने चैव कुशला भिषजोऽष्टसु ॥
रोगनामनिदानं तु रुजं जानन्ति तत्त्वतः ।
औषधं रूपनामभ्यां जानन्तो भिषजो वराः ॥
वमौ विरेचने नस्ये बस्तौ शस्त्रक्रियास्वपि ।
शस्यन्ते भिषजः सम्यङ् निष्णाताः पञ्चकर्मसु ॥
यत्किंचिदौषधैः साध्यं शरीरेषु हिताहितम् ।
सम्यग् विदन्ति ये वैद्या नृपयोग्या भवन्ति ते ॥
कृच्छ्रसाध्यमसाध्यं वा साध्यं जानन्ति तत्त्वतः ।
देशं कालं वयोऽवस्थां प्रकृतिसात्म्यमेव च ॥
असाध्याः परकीयाणामात्मस्वामिहिते रताः ।
धर्मज्ञा दृढचित्ताश्च वैद्याः कार्या महीभुजा ॥

# प्रणिधिः

—०—

## विष्णुः

सर्वत्र राजा चारचक्षुः

[1]स्वराष्ट्रपरराष्ट्रयोश्च चारचक्षुः स्यात् ॥

## शङ्खलिखितौ

सर्पाख्यपरराज्यचाराणां ज्ञानाय जनपदचरितज्ञानाय भृत्यपक्षचरितज्ञानाय च चारा नियोज्याः

[2]विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्पाः, तत्प्रयोजनत्वात् । प्रत्यक्षा परोक्षा (च) वृत्तिस्तस्य राज्ञो भवेत् । एकान्ततो हि दोषः । तस्माद् भृत्यपक्षाः क्रोधलोभमानभयदोषोपहताः संलपिता विमानिताभ्याख्याता दानमानस्थानव्यवरोपिता हृतसर्वस्वाः स्वदोषोपहतादयः सततं प्रत्यवेक्षितव्याः । धर्मार्थहितेष्वेतेषां यतेत ॥

चारः जनपदचरितज्ञानाय प्रच्छन्नचारी । तच्चरितज्ञः प्रच्छन्नः प्रतिचारः । मन्त्रप्रणिधयः राज्ञो मन्त्रान्वेष्टारः । एते पराराजसंबन्धिनः सर्पाः शङ्कनीया इत्यर्थः । तत्प्रयोजनत्वात् । यतः तदेव चरितज्ञानं चारादीनां प्रयोजनम् । प्रत्यक्षा वृत्तिः स्वयं कार्यदर्शनम् । परोक्षा चारैः चरितज्ञानम् । एकान्ततः अन्यतरवृत्तिमात्राश्रयेण । भृत्यपक्षाः भृत्याः । पूर्वं संमानिताः पश्चाद्विमानिताः । * अभ्याख्यानं आभिमुख्येन गुणाख्यानम् । दानमानस्थानव्यवरोपिताः दानेन व्यवरोपिताः मानेन व्यवरोपिताः स्थानेन व्यवरोपिताः । स्वदोषोपहताः आत्मदोषदूषिताः । एवमादयः सततं प्रत्यवेक्षितव्याः । तेन कारणेन एतेषां संबन्धिषु धर्मादिषु यतेत ।

* राक. ३१–३२

* अभ्याख्यानं मिथ्यादोषारोपणमित्याभिधानिकोक्त एवार्थोऽत्र युक्ततरः ।

(१) विस्मृ. ३।३५.

(२) राक. ३१ संलपिता विमानिताभ्याख्याता ( संमानितविमानिता अभ्याख्याता ) इति पाठो व्याख्यानात्प्रतीयते; राप्र. १८५–१८६ पाठभेदः राकवत् स्यादिति प्रतिभाति.

## महाभारतम्

स्वपरराष्ट्रयोः स्थानविशेषेषु च राज्ञा योजनीयाः पाषण्डादयः चाराः, तैर्बोद्धव्या विषयाः, परचारा ज्ञातव्या हन्तव्याश्च

[1]चारः सुविहितः कार्य आत्मनश्च परस्य वा ।
पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ॥

सुविहितः सम्यक्परीक्षितः । नीटी.

उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु रथ्यासु सर्वतीर्थेषु चाप्यथ ॥
चत्वरेषु च कूपेषु पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥

उद्यानादिस्थानेषु ये समवायाः जनसमूहाः तेषु । तीर्थेषु 'मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः । पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥ कारागाराधिकारी च द्रव्यसंचयकृत्तथा । कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥ षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः । अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥' इति नीतिशास्त्रोक्तेषु । विचारयेत्, चारद्वारा शत्रुचिकीर्षितमिति शेषः । नीटी.

[2]तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च ।
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ॥

स्थानं सिद्धसंरक्षणम् । नीटी.

* राप्र. राकानुवादः ।

(१) भामु. १।१४०।६३–६५.

(२) भा. ३।१४९।४० ; भामु. ३।१५०।४०.

[1]प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन् ।
पुंसः परीक्षितान्प्राज्ञान्क्षुत्पिपासातपक्षमान् ॥
प्रणिधीन् चारान् । नीटी.

[2]अमात्येषु च सर्वेषु मित्रेषु त्रिविधेषु च ।
पुत्रेषु च महाराज प्रणिदध्यात्समाहितः ॥
प्रणिदध्यात् गुप्तचारान् नियुञ्जयात् । नीटी.

[3]पुरे जनपदे चैव तथा सामन्तराजसु ।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥

[4]चारांश्च विद्यात्प्रहितान्परेण भरतर्षभ ।
आपणेषु विहारेषु समवायेषु भिक्षुषु ॥
आपणेषु वणिजां हट्टेषु । विहारेषु यूनां मल्लक्रीडास्थानेषु । समाजेषु महाजनसमुदायेषु । नीटी.

[5]आरामेषु तथोद्याने पण्डितानां समागमे ।
वेशेषु चत्वरे चैव सभास्वावसथेषु च ॥
आरामेषु पुरवाटिकासु । उद्याने बहिर्वाटिकायाम् । देशेषु आकरस्थानेषु । चत्वरे अधिकारिणामुपवेशनस्थाने । सभासु राजसंसत्सु । आवसथेषु तत्र तत्र महतां गृहेषु । नीटी.

[6]एवं विहन्याच्चारेण परचारं विचक्षणः ।
चारेण विहतं सर्वं हृतं भवति पाण्डव ॥
विचिनुयात् अन्विष्यात् । नीटी.

(१) भा. १२।६९।८; भामु. १२।६९।८ सातप (साश्रम).

(२) भा. १२।६९।९; भामु. १२।६९।९ त्रिवि (विवि).

(३) भा. १२।६९।१०; भामु.

(४) भा. १२।६९।११; भामु. १२।६९।११ समवायेषु (समाजेषु च).

(५) भा. १२।६९।१२; भामु. १२।६९।१२ वेशेषु (देशेषु).

(६) भा. १२।६९।१३; भामु. १२।६९।१३ विहन्याच्चारेण (विचिनुयाद्राजा) चारेण विहतं सर्वं हृतं (चारे हि विदिते पूर्वं हितं).

[1]राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते ॥

[2]चारयेथाश्च सततं चारैरविदितैः परान् ।
परीक्षितैर्बहुविधं स्वराष्ट्रेषु परेषु च ॥

धृतराष्ट्र उवाच–

[3]व्यवहाराश्च ते तात नित्यमाप्तैरधिष्ठिताः ।
योज्यास्तुष्टैर्हितै राजन्नित्यं चारैरनुष्ठिताः ॥

[4]चारैर्विदित्वा शत्रूंश्च ये ते राज्यान्तरायिणः ।
तानाप्तैः पुरुषैर्दूराद्घातयेथाः परस्परम् ॥

## वाल्मीकिरामायणम्

चारद्वारा अन्वेष्टव्यानि परपक्षे अष्टादश स्वपक्षे पञ्चदश तीर्थानि, प्रतिविषयं चारत्रयैकमत्यमावश्यकम्

[5]कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥

राजा अयुक्तचारो वर्ज्यः, युक्तचारो युद्धविजयार्हः

[6]अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् ।
वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥

[7]आत्मवद्भिन्नगेहस्त्वं देवदानवराक्षसैः ।
अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥

(१) भा. १२।८४।४८; भामु. १२।८३।५१.

(२) भा. १५।९।१५; भामु. १५।५।१५ तैः परान् (तः परैः) विधं स्वराष्ट्रेषु परेषु च (विधैः स्वराष्ट्रप्रतिवासिभिः).

(३) भा. १५।१०।१; भामु. १५।५।२७–२८ तात (राजन्) ष्ठिताः (ष्ठितः) योज्या (योज्य).

(४) भा. १५।१०।१०; भामु. १५।५।३७–३८ ते राज्यान्तरायिणः (राज्ञामन्तरैषिणः) परस्परम् (नराधिप); रार. ४५ नाप्तैः (नाप्तः) परस्परम् (नरर्षभ) शेषं भामुवत्.

(५) वारा. २।११४।४८; वाराकु. २।१००।३७.

(६) वारा. ३।३७।५; वाराकु. ३।३३।५.

(७) वारा. ३।३७।७; वाराकु. ३।३३।७ पूर्वार्धे (आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः।).

¹येषां चारश्च कोशश्च नयश्च जयतां वर।
अस्वाधीना नरेन्द्रा ये प्राकृतैस्ते नरैः समाः॥

²यस्मात्पश्यन्ति दूरस्थाः सर्वानर्थान् नराधिपाः।
चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः॥

³अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतम्।
जनस्थानं हतस्थानं यन्मौर्ख्यान्नावबुध्यसे॥

⁴चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः।
युद्धे तुल्येन यत्नेन समासाद्य निरस्यते॥

## कौटिलीयमर्थशास्त्रम्

कापटिकादीनां प्रच्छन्नानां चाराणां संस्था कर्तव्या, तेषां विशेषाणि स्थानानि, तेषां गूढाचारस्वरूपवैविध्यम्

⁵उपधाभिः शुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत्कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्रितीक्ष्णरसदभिक्षुकीश्च॥

'गूढपुरुषोत्पत्तिः' इति सूत्रम्। अमात्यशौचाशौचपरीक्षणं गूढपुरुषानन्तरेण न शक्यं कर्तुमिति तदुत्पत्तिरुच्यते इत्यर्थः। तत्र अस्मिन्नध्याये संस्थोत्पत्तिः, उत्तरस्याऽऽदौ संचारोत्पत्तिः।

उपधाभिः शुद्धामात्यवर्गः धर्मोपधादिभिः छलोपायैः शोधितसचिववर्गः। उत्पादयेत् राजा। के ते गूढपुरुषा इत्याकाङ्क्षायामाह— कापटिकेत्यादि। चकारात् कुब्जवामनकिरातमूकबधिरजडान्धनटनर्तकगायनवादनवाग्जीवनकुशीलवा अपि गृह्यन्ते। श्रीमूला.

परमर्मज्ञः प्रगल्भश्छात्रः कापटिकः। तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयात्— राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत् तदानीमेव प्रत्यादिशेति॥

परमर्मज्ञः परच्छिद्रवेदी। प्रगल्भः प्रौढः। छात्रः अध्यापकाध्येतृवृत्तिः निष्परिग्रहत्वात् शरीरमात्रपरिच्छदो राजकार्यैकपरः। एवंगुणः कापटिकः कपटवृत्तित्वात् तदाख्ययोच्यते। अस्य विनियोगमाह— तमित्यादि। अर्थमानाभ्यां धनबहुमानाभ्याम्। यस्य यदकुशलं पश्यसि यस्य अमात्यादेः यत् अवद्यं चौर्यं परदाराभिमर्शनं इत्येवंजातीयं उपलभसे। प्रत्यादिश विज्ञापय। श्रीमूला.

प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्त उदास्थितः। स वार्ताकर्मप्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म कारयेत्। कर्मफलाच्च सर्वप्रव्रजितानां ग्रासाच्छादनावसथान् प्रतिविदध्यात्। वृत्तिकामांश्चोपजपेत्— एतेनैव वेषेण राजार्थश्चरितव्यो भक्तवेतनकाले चोपस्थातव्यमिति। सर्वप्रव्रजिताश्च स्वं स्वं वर्गमुपजपेयुः॥

प्रव्रज्याप्रत्यवसितः चतुर्थाश्रमात् प्रतिनिवृत्तः संन्यासं प्राप्य ततश्च्युतः। बौद्धशैवव्रतादिच्युतानामपीदमुपलक्षणम्। प्रज्ञाशौचयुक्तः प्रज्ञया मत्या शौचेन सत्त्वेन च युक्तः। उदास्थितः तदाख्यः। प्रभूतहिरण्यान्तेवासी प्रभूताः प्रचुराः हिरण्यान्तेवासिनः धनानि शिष्याश्च यस्य स तथाभूतः। अनेन वार्ताकर्मापेक्षिता मूलधनसंपत् कर्मकरसंपच्चोक्ता। सः उदास्थितः वार्ताकर्मप्रदिष्टायां कृषिवाणिज्यपाशुपाल्यकर्मार्थे उपकल्पितायां भूमौ कर्म वार्ताकर्म कारयेत् अर्थादन्तेवासिभिः। कर्मफलाच्च सर्वप्रव्रजितानां सर्वेषां स्वकर्मकरातिरिक्तानामपि संन्यास्यादीनाम्। सर्ववेशधारिणामित्यपि पाठः। तत्र वेशधारिणः संन्यासिशैवशाक्यदिगम्बरादय एव। ग्रासाच्छादनावसथान् अन्नवस्त्रवासस्थानानि प्रतिविदध्यात् संविदधीत। ग्रासादिप्रतिविधानस्य सर्वविषयत्वं प्रसिद्ध्यर्थम्। प्रसिद्धिश्च तदर्थिनवनवान्तेवास्युपस्थानार्थेति

---

(१) वारा. ३।३७।८; वाराकु. ३।३३।९ न्द्रा ये (न्द्राणां) नरैः (जनैः).

(२) वारा. ३।३७।९; वाराकु. ३।३३।१० दूरस्थाः (दूरस्थान्) नश्चार (नो दीर्घ).

(३) वारा. ३।३७।१०; वाराकु. ३।३३।११ उत्तरार्धे (स्वजनं तु जनस्थानं हतं यो नावबुध्यसे॥).

(४) वारा. ६।५।२१; वाराकु. ६।२९।२२ तुल्येन (स्वल्पेन).

(५) कौ. १।११.

-बोद्धव्यम् । वृत्तिकामान् स्वदीयमानग्रासादिना नित्यदेह-यात्रां ये कामयन्ते तान् उपजपेच्च उपजापेन वशीकुर्याच्च। एतेनैवेत्यादिरुपजापप्रकारः । अनेन परिगृहीतेनैव बौद्ध-भिक्षुपाशुपतादिवेषेण राजप्रयोजनं परराष्ट्रवृत्तगवेषणरूपं युष्माभिरनुष्ठेयम् , गृहीतपरराष्ट्रवृत्तान्तैश्च धान्यतण्डुलादि-भृतिग्रहणकाले संनिधातव्यमित्यर्थः । सर्वेति । स्वं स्वं वर्गं उपजपेयुः बौद्धाः बौद्धम् , पाशुपताः पाशुपतम् , इत्येवं स्वस्वजातीयं उपजपेयुः उपजप्य स्वसहायान् कुर्युः । श्रीमूला.

**कर्षको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो गृहपतिक-व्यञ्जनः । स कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण ॥**

वृत्तिक्षीणः कृषिवृत्त्या क्षयं प्राप्तः प्रज्ञाशौचयुक्तः कर्षकः कृषिशीलः गृहपतिकव्यञ्जनः तन्नामा । तत्कृत्य-माह— स कृषीत्यादि । भूमाविति समानं पूर्वेणेति । भूमावित्यादिकं उदास्थितकृत्योक्तेन तुल्यम् । तच्च ' प्रभूतहिरण्यान्तेवासी कर्म कारयेत् , कर्मफलाच्च सर्व-गृहपतिकव्यञ्जनानां ग्रासाच्छादनावसथान् ' इत्यादिकं यथोचितमूह्यम् । श्रीमूला.

**वाणिजको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदेहक-व्यञ्जनः । स वणिक्कर्मप्रदिष्टायां भूमाविति समानं पूर्वेण ॥**

वैदेहकव्यञ्जनसंज्ञमाह— वाणिजक इत्यादि । वृत्ति-क्षीणः धनविरहात् वाणिज्यवृत्तिच्युतः । भूमाविति समानं पूर्वेणेति । तच्च ' प्रभूतहिरण्यान्तेवासी ' इत्यादिकं ' स्वं स्वं वर्गमुपजपेयुः ' इत्यन्तं प्रव्रजितशब्दस्थाने वैदेहकशब्दस्य यथास्थानयोजनेन बोद्धव्यम् । श्रीमूला.

**मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः । स नगराभ्याशे प्रभूतमुण्डजटिलान्तेवासी शाकं यवसमुष्टिं वा मासद्विमासान्तरं प्रकाशमश्नीयात् , गूढमिष्टमाहारम् । वैदेहकान्तेवासिनश्चैनं समिद्ध-योगैरर्चयेयुः । शिष्याश्चास्याऽऽवेदयेयुः— असौ सिद्धः सामेधिक इति । समेधाशास्तिभिश्चाभि-गतानामङ्गविद्यया शिष्यसंज्ञाभिश्च कर्माण्यभि-जनेऽवसितान्यादिशेदल्पलाभमग्निदाहं चोरभयं दूष्यवधं तुष्टिदानं विदेशप्रवृत्तिज्ञानमिदमद्य श्वो वा भविष्यतीदं वा राजा करिष्यतीति ॥**

तापसव्यञ्जनाख्यमाह— मुण्ड इत्यादि । मुण्डः भिक्षु-क्षपणकादिः । जटिलः शैवपाशुपतादिः । शाकं हरिताख्यं सस्यम् , ' मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥ ' इत्युक्त-रूपं वृक्षमूलपत्रफलादिकं वा । यवसमुष्टिं मुष्टिमेयं तृणम् । मासद्विमासान्तरं एकमासव्यवहितं मासद्वय-व्यवहितं वा । इदमशनक्रियाविशेषणम् । प्रकाशं सर्व-जनप्रत्यक्षं यथा भवति तथा । ईदृशं प्रकाशाशनं निरा-हारख्यात्यर्थम् । गूढं अन्याविदितम् । वैदेहकेति । वैदेह-कान्तेवासिनश्च वणिग्वृत्तयः शिष्याश्च एनं तापसव्यञ्जनं समिद्धयोगैः समिद्धैः समृद्धैः योगैः इष्टार्थलाभैः अर्च-येयुः , संभावयेयुः । अथवा समिद्धयोगैः तापसप्रसादात् समृद्धार्था वयमिति कपटयुक्तिभिः अर्चयेयुः धनदाना-दिना पूजयेयुरित्यर्थः । शिष्या इति । अस्य तापसस्य शिष्याश्च ' असौ तापसः सिद्धः योगी अत एव सामेधिकः समेधा भाविनी संपत्तिः तदभिज्ञः ' इति आवेद-येयुः प्रख्यापयेयुः । एवमारोपितमाहात्म्यस्तापसव्यञ्जनः किं कुर्यादित्याह— समेधाशास्तिभिरिति । समेधा-शास्तिभिः अभिगतानां भाविसंपद्विज्ञानाभिलाषैस्तां प्रष्टुमागतानां अभिजने अवसितानि कर्माणि तत्कुलनिष्प-न्नानि वृत्तानि अङ्गविद्यया अङ्गानां शरीरावयवानां प्रश्नकालिकचेष्टाविशेषैः शुभाशुभज्ञप्तिप्रतिपादकेन ज्योति-षाङ्गशास्त्रेण । पुष्पशकस्त्या इत्यन्ये । सा त्वाकाशवाणी । शिष्यसंज्ञाभिश्च शिष्याणां अक्षिभ्रूविलासादिसूचनैश्च आदिशेत् कथयेदित्यर्थः । आदेष्टव्यान्तराण्याह— अल्प-लाभं किंचिद्धनप्राप्तिं आदिशेत् । प्रष्टुर्मध्यमत्वे इत्यौचित्यलभ्यम् । अग्निदाहं चोरभयं च आदिशेत् प्रश्नकृतो राजापकारित्वे । दूष्यवधं ये दूष्याः कृत्याः प्रष्टारस्तेषां वधं आदिशेत् । तुष्टिदानं संतोषनिमित्त-मर्थदानं आदिशेत् प्रश्नकृतो राजोपकारित्वे ।

विदेशप्रवृत्तिज्ञानं दूरदेशवृत्तान्तज्ञानं आदिशेत् । इदमद्य श्वो वा भविष्यतीत्यादिशेत् । इदमद्य श्वो वा राजा करिष्यतीत्यादिशेत् । वाक्यान्ते इतिशब्दः प्रकारार्थः । एवंजातीयमन्यच्च आदिशेदित्यर्थः । श्रीमूला.

**तदस्य गूढाः सत्रिणश्च संवादयेयुः । सत्त्वप्रज्ञावाक्यशक्तिसंपन्नानां राजभाव्यमनुव्याहरेन्मन्त्रिसंयोगं च । मन्त्री चैषां वृत्तिकर्मभ्यां वियतेत । ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत्, अकारणक्रुद्धान् तूष्णींदण्डेन राजद्विष्टकारिणश्च ॥**

आदिश्यतां काममीदृशम्, कथं पुनरिदं संवादयितुं शक्यमित्यत आह– तदस्येति । अस्य तापसस्य तत् आदेशनं गूढाः सत्रिणः संवादयेयुश्च यथार्थयेयुश्च । लाभाग्निदाहादीनां प्रच्छन्नोत्पादनेनेत्यर्थसिद्धम् । सत्त्वेति । सत्त्वप्रज्ञावाक्यशक्तिसंपन्नानां धैर्यबुद्धिवाग्मित्वप्रभुशक्तियुक्तानां प्रष्टॄणां राजभाव्यं राजसकाशात् भाविनमर्थं धनादिलाभरूपं मन्त्रिसंयोगं च मन्त्रिसमागमं च अनुव्याहरेत् आदिशेत् । आदेशसंवादनाय मन्त्रिकर्तव्यमाह– मन्त्रीति । मन्त्री च अर्थात् घटितसंयोगः एषां वियतेत सत्त्वप्रज्ञादिसंपन्नानामर्थे विशिष्य यत्नं कुर्यात् । कथं वियतेतेत्यत्राऽऽह– वृत्तिकर्मभ्याम् । वृत्तिः आजीवः, कर्म व्यापारः, ताभ्याम् । सत्त्वप्रज्ञाद्यनुरूपवृत्तिकर्मपरिकल्पनेनेत्यर्थः । ये चेति । ये कारणात् अपकाररूपात् क्रुद्धाः क्रुद्धत्वेन कापटिकादिद्वारा विज्ञाताः तान् अर्थमानाभ्यां शमयेत् शान्तक्रोधान् कुर्यात् । अकारणक्रुद्धान् राजद्विष्टकारिणश्च तूष्णींदण्डेन उपांशुवधेन शमयेत् । श्रीमूला.

**पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम् ।**
**जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्तिताः ॥**

गूढपुरुषेषु मन्त्रिणः समुदाचार उक्तः । राज्ञस्तमाह– पूजिताश्चेति । राज्ञा अर्थमानाभ्यां पूजिताः सन्तः अर्थात् गूढपुरुषाः राजोपजीविनां अमात्यादीनां शौचं शुद्धिं जानीयुः । एतावता अध्यायार्थं तदन्ते संचष्टे– इत्येताः पञ्च संस्थाः प्रकीर्तिता इति । इत्थं कापटिकाद्येकैकप्रधानाः पञ्च संस्थाः सम्यक् तिष्ठन्ति राजप्रयोजनकारिण आस्विति संस्थाः गूढपुरुषकर्मस्थानानि प्रकीर्तिताः व्युत्पादिताः । श्रीमूला.

प्रच्छन्नाः संचारिणश्चाराः, तेषां गूढाचारवैविध्यम्

**'ये चास्य संबन्धिनोऽवश्यभर्तव्यास्ते लक्षणमङ्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं निमित्तमन्तरचक्रमित्यधीयानाः सत्रिणः संसर्गविद्या वा ॥**

'गूढपुरुषप्रणिधिः' इति सूत्रम् । गूढपुरुषाणां प्रणिधिः प्रणिधानं कार्येषु नियोजनमिहोच्यते इत्यर्थः । तत्र पूर्वाध्यायोद्दिष्टेषु गूढपुरुषेषु कापटिकादीनां स्वरूपं वर्णितम् । सत्रितीक्ष्णरसदभिक्षुकीणां तु तत् वर्णनीयमवशिष्यते । तदिह आदौ अभिधीयते । उभयेषां गूढपुरुषत्वाविशेषेऽपि अध्यायपृथक्त्वकरणं कर्तृभेदद्योतनार्थम् । कापटिकादीनां हि पञ्चानां मन्त्रिसहितो राजा कर्ता, 'तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयात्' इत्युक्तत्वात् । सत्रितीक्ष्णरसदभिक्षुकीणां तु विना मन्त्रिणं स्वयमेव राजा कर्ता, मन्त्रिशुद्धिपरिज्ञानायापि तन्नियोजनात् । यद्वक्ष्यति– 'तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराज' इत्यादि । इत्थं स्फुटः कर्तृभेदः । स्वरूपतोऽप्युभयेषामस्ति भेदः । संस्थाशब्दवाच्या हि कापटिकादयः स्वस्थाने सम्यक् तिष्ठन्तो राजार्थमनुतिष्ठन्ति, न संचरन्तः, सत्रिप्रभृतयस्तु सर्वत्र संचरन्त एव राजार्थमनुतिष्ठन्ति संचारपदवाच्या इति ।

ये चास्येत्यादि । अस्य राज्ञः संबन्धिनः सगन्धाः अवश्यभर्तव्याः अवश्यपोष्याः ये भवन्ति, लक्षणं सामुद्रिकादि, अङ्गविद्यां शिक्षाव्याकरणादिं अङ्गस्पर्शेन शुभाशुभपरिज्ञानविद्यां वा, जम्भकविद्यां वशीकरणान्तर्धानविद्याम्, मायागतं इन्द्रजालम्, आश्रमधर्मं मन्वादिधर्मशास्त्रम्, निमित्तं कपिञ्जलरुतपूर्णकुम्भदर्शनादि, अन्तरचक्रं पक्षिभिः शुभाशुभज्ञापनं पक्षिशास्त्रम्, इत्यधीयानाः एवंजातीयकमधीत्य विदन्तः संसर्गविद्याः अधीयाना वा कामतदनुबन्धिगीतनृत्तादिशास्त्राणि अधीयानाश्च ते सत्रिणः सत्रिसंज्ञाः । श्रीमूला.

(१) कौ. १।१२.

**ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः ॥**

त्यक्तात्मानः शरीरनिरपेक्षाः । व्यालं व्याघ्रादिम् । तीक्ष्णाः तदाख्याः । श्रीमूला.

**ये बन्धुषु निःस्नेहाः क्रूराश्चालसाश्च ते रसदाः ॥**

क्रूराः आततायिनः । अलसाः अनुत्साहाः । रसदाः तदाख्याः । विषदानेऽपि निःशङ्का इति कृत्वा तथोक्तिः । श्रीमूला.

**परिव्राजिका वृत्तिकामा दरिद्रा विधवा प्रगल्भा ब्राह्मण्यन्तःपुरे कृतसत्कारा महामात्रकुलान्यधिगच्छेत् । एतया मुण्डावृषल्यो व्याख्याताः । इति संचाराः ॥**

वृत्तिकामा भोगार्थिनी । महामात्रकुलानि अधिगच्छेत् असकृदमात्यगृहाणि गच्छेत् सत्कारस्वीकारार्थम् । या एवंभूता सा परिव्राजिका इत्यभिधीयते इत्यर्थः । एतयेति । एतया ब्राह्मणपरिव्राजिकया उक्तया मुण्डावृषल्यो व्याख्याताः उक्तप्रायाः । ब्राह्मणपरिव्राजिकासमानाचाराः वेदितव्या इत्यभिप्रायः । तत्र मुण्डाः शाक्यभिक्षुक्यः, वृषल्यः शूद्राः । इति संचाराः इत्युक्तरूपाः सत्रिप्रभृतयः संचारशब्देन आख्यायन्ते । श्रीमूला.

**तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसंनिधातृप्रदेष्टृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषदध्यक्षदण्डदुर्गान्तपालाटविकेषु श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान् भक्तितः सामर्थ्ययोगाच्चापसर्पयेत् ॥**

संचाराणां विनियोगमाह– तानिति । राजा स्वविषये आत्मजनपदे तान् संचारान् अपसर्पयेत् चारयेत् । केषु चारयेत् ? मन्त्रिपुरोहितसेनापतिप्रभृतिषु अष्टादशपुरुषेषु विषये । मन्त्र्यादीनां शुद्धिज्ञानायेत्यर्थलभ्यम् । तत्र मन्त्र्यादयः प्रसिद्धाः । दौवारिकः द्वाराधिकृतः प्रतिहारी । अन्तर्वंशिकः अन्तःपुराधिकृतः । प्रशास्ता स्कन्धावारनिवेशयिता । समाहर्ता राजार्थसमाहरणकर्ता । संनिधाता भाण्डागाराधिकृतः । प्रदेष्टा कण्टकशोधनाधिकृतः । नायकः एकद्विसहस्रपदातिनेता । पौरव्यावहारिकः पुरमुख्यः पुरप्राड्विवाको वा । पुरपाठेऽप्ययमेवार्थः । कार्मान्तिकः आकरादिकर्माधिकृतः । मन्त्रिपरिषत् मन्त्रिसभा, तदध्यक्षः । भाषाटीकायां तु मन्त्रिपरिषदध्यक्षो नाम द्वादशमण्डलाधिकारनेतेत्युक्तम् । दण्डपालः सैन्यसेनामुख्यादिनेता । सेनापतिस्तु अक्षौहिणीश्वरः पूर्वमुक्तः । दुर्गपालः प्राकारादिरक्षी । अन्तपालः राज्यसीमारक्षी यो वीवधाध्यक्ष इत्युच्यते । आटविकः अटवीराज्याधिपतिः । तान् कीदृशान् ? श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान् । देशः मध्यदेशगौडदेशादिः । वेषः प्रलम्बश्मश्रुत्वादिः । शिल्पं कलाकौशलम् । भाषा प्राच्योदीच्यादिव्याहारभेदः । अभिजनः ब्राह्मणादिजन्म । एषां देशादीनां अपदेशः निर्देशः श्रद्धेयः अनभिशङ्कनीयः विश्वसनीयः येषां तान् तथाभूतान् । कथं कृत्वा चारयेत् ? भक्तितः सामर्थ्ययोगाच्च । भक्तिं सेव्यगतां सामर्थ्ययोगं सेवकगतं चानुसृत्य । अयं भावः– सेव्येषु मन्त्र्यादिषु यो यद्देवभक्तः तस्मिंस्तद्देवभक्तवेषान् स्वस्वसामर्थ्यानुरूपच्छत्रग्रहणादिकर्मनियुक्तांश्च कृत्वा चारयेदिति । श्रीमूला.

**तेषां बाह्यं चारं छत्रभृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणस्तीक्ष्णा विद्युः । तं सत्रिणः संस्थास्वर्पयेयुः ॥**

संचाराणां मध्ये तीक्ष्णाः मन्त्र्यादीनां बाह्यं समाचारं छत्रभृङ्गाराद्युपग्रहणवृत्त्या तान् सेवमानाः सन्तो जानीयुरित्याह– तेषामित्यादि । तत्र छत्रं आतपत्रम् । भृङ्गारः पात्रभेदः कनकालुकाख्यः । व्यजनं तालवृन्तम् । पादुका उपानत् । आसनं उपवेशसंवेशाधारः । यानं आन्दोलिका । वाहनं अश्वः । तमिति । तं तीक्ष्णविदितं चारं सत्रिणः उक्तलक्षणाः संस्थासु अर्पयेयुः निवेदयेयुः । श्रीमूला.

**सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारका रसदाः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मानो नटनर्तकगायनवादक-**

**वाग्जीवनकुशीलवाः स्त्रियश्चाऽऽभ्यन्तरं चारं विद्युः। तं भिक्षुक्यः संस्थास्वर्पयेयुः॥**

विषदानसुलभसौकर्यो सूदारालिकादिवृत्तिमाश्रिताः रसदाः तथा कुब्जवामनादिच्छलजीविनः नटनर्तकादयः स्त्रियश्च गृहान्तर्गतं चारं जानीयुरित्याह– सूदेत्यादि। सूदः अन्नकारः, आरालिकः भक्ष्यकारः, स्नापकः स्नपयिता, संवाहकः अङ्गमर्दकः, आस्तरकः शय्यास्तरणकर्ता, कल्पकः नापितः, प्रसाधकः अलंकर्ता, उदकपरिचारकः जलहारकः, कुब्जः गडुलः, वामनः खर्वः, किरातः अल्पतनुः, जडः लोकव्यवहारानभिज्ञः। कुब्जादिषु शेषाः प्रतीताः। नटः नवरसाभिनयकर्ता, नर्तकः चारणः अङ्गविक्षेपमात्रकर्ता, गायनः गान्धर्ववित्, वादकः वंशवीणादिवादयिता, वाग्जीवनः पुरावृत्तकथनोपजीवी पुस्तकवाचकः, कुशीलवः वेणः लङ्घनप्लवनादिवृत्तिः, स्त्रियः प्रतारिकाः। स्त्रीग्रहणं षण्डस्याप्युपलक्षणम्। तमिति। तं रसदादिविज्ञातं चारं भिक्षुक्यः उक्तलक्षणाः संस्थासु अर्पयेयुः। श्रीमूला.

**संस्थानामन्तेवासिनः संज्ञालिपिभिश्चारसंचारं कुर्युः। न चान्योन्यं संस्थास्ते वा विद्युः॥**

संस्थास्वर्पितश्चारः केन द्वारेण राजानं प्राप्नुयादित्यत्राऽऽह– संस्थानामित्यादि। संज्ञालिपिभिः अर्थसूचनाय स्वसंकेतकल्पिताभिर्लिपिभिः पत्रे निवेशिताभिः। चारसंचारं चारस्य बाह्यस्य आभ्यन्तरस्य च व्यापारस्य संचारं राज्ञि समर्पणम्। न चेति। संस्थाः ते वा अन्योन्यं न विद्युः संस्थाः संस्थान्तरवेदिनः संचाराश्च संचारान्तरवेदिनो न भवेयुः संवादच्छलनपरिहारार्थं एकविज्ञाने सर्वग्रहणं मा भूदित्येतदर्थं च। अन्योन्यवेदने हि स्वस्वचारस्य अन्यचारेण संवादं मिथ्यैव परिकल्प्य स्वामिनं वञ्चयेयुः, एकस्मिन् विज्ञाते तद्द्वारेणान्यस्य तद्द्वारेणान्यस्येति क्रमेण सर्वस्य ग्रहणं च प्रसज्येतेति।

श्रीमूला.

**भिक्षुकीप्रतिषेधे द्वाःस्थपरंपरा मातापितृव्यञ्जनाः शिल्पकारिकाः कुशीलवा दास्यो वा गीतपाठ्यवाद्यभाण्डगूढलेख्यसंज्ञाभिर्वा चारं निर्हरेयुः। दीर्घरोगोन्मादाग्निरसविसर्गेण वा गूढनिर्गमनम्॥**

यदि भिक्षुक्यो नान्तः प्रवेशं लभेरन् तदा सूदादिसकाशाच्चारः कथं निष्कामयितव्य इत्यत्राऽऽह– भिक्षुकीति। भिक्षुकीप्रतिषेधे भिक्षुकीनामन्तःप्रवेशप्रतिरोधे द्वाःस्थपरंपरा चारं निर्हरेत्। एको द्वाःस्थः तदनन्तराय द्वाःस्थाय स तदनन्तरायेति क्रमेण चरमो द्वाःस्थो भिक्षुक्यादये बाह्यजनाय राज्ञे वा चारं समर्पयेदित्यर्थः। तदभावे मातापितृव्यञ्जनाः अन्तपुरसेवकजनस्य माताऽहं पिताऽहमिति बन्धुत्वापदेशिनः वृद्धाः स्त्रियः पुरुषाश्च चारं निर्हरेयुः। शिल्पकारिकाः– केशसंस्कारपत्रवल्लीरचनादिवैचित्र्यं शिल्पम्, तत्कर्त्र्यः, कुशीलवाः गायन्यः, दास्यो वा परिचारिका वा, चारं निर्हरेयुः। गीतपाठ्यवाद्यभाण्डगूढलेख्यसंज्ञाभिर्वा– गीतेन सूचनीयार्थसूचकपदबन्धचारुणा गेयेन, पाठ्येन तथाविधेन श्लोकेन, वाद्येन वंशवीणादिना, भाण्डगूढलेख्येन भाण्डे जलकुम्भादौ क्षिप्तेन गूढलेख्येन च याः संज्ञाः अर्थसूचनाः ताभिर्वा चारं निर्हरेयुः, अर्थात् तत्तत्कुशलाः। उक्तोपायासंभवे सूदादयः स्वयमेव चारनिर्हरणाय अन्तःपुरात् दीर्घरोगोन्मादापदेशादिना निमित्तेन निर्गच्छेयुरित्याह– दीर्घेत्यादि। दीर्घरोगोन्मादाग्निरसविसर्गेण। समाहारद्वंद्वोऽयम्। दीर्घरोगेण गुल्मादिना, उन्मादेन ग्रहपीडया, अग्निरसविसर्गेण शालायामग्निदानेन अन्नादौ विषदानेन च। अग्निरसविसर्गवचनं तज्जनिते अन्तःपुरसंभ्रमे गूढपुरुषाणां रोगाद्यपदेशं विनैव निर्गमनसौकर्यात्। श्रीमूला.

**त्रयाणामेकवाक्ये संप्रत्ययः। तेषामभीक्ष्णविनिपाते तूष्णींदण्डः प्रतिषेधो वा॥**

गूढपुरुषार्पितस्य चारस्य कथं विश्वास्यतेत्याकाङ्क्षायां अन्योन्यानभिज्ञाः त्रयो गूढपुरुषाः परचारमधिकृत्य यदि वाक्यमेकार्थं ब्रूयुस्तदा तत्र विश्वासः कार्यः, न त्वन्यथेत्यभिप्रायेणाऽऽह– त्रयाणामित्यादि। एकवाक्ये परस्परवाक्यसंवादिनि वाक्ये संप्रत्ययः विश्वासः, अभीक्ष्णविनिपाते पौनःपुनिके वाक्यविसंवादे तेषां तूष्णींदण्डः

प्रतिषेधो वा ते उपांशु ताडनीयाः गूढपुरुषकर्मणो वारणीया वेत्यर्थः । श्रीमूला.

**कण्टकशोधनोक्ताश्चापसर्पाः परेषु कृतवेतना वसेयुः संपातनिश्चारार्थम् । त उभयवेतनाः ॥**

किमेतावन्त एव चारपुरुषाः उतान्येऽपि सन्तीति जिज्ञासायामाह– कण्टकेत्यादि । कण्टकशोधनोक्ताः कण्टकशोधनाधिकरणोक्ताः सिद्धप्रव्रजितचक्रचरादयश्च अपसर्पाः गूढपुरुषाः कार्याः । ते परेषु शत्रुषु तद्राज्ये तन्मन्त्र्यादिष्वष्टादशतीर्थेषु च कृतवेतनाः कल्पितजीविकाः वसेयुः सेवां कुर्युः । किमर्थम् ? संपातनिश्चारार्थे संपातानां चाराणां निश्चारार्थे निरायाधानुष्ठानार्थे शत्रुचाराणां स्वराज्यापसर्पणे प्रवृत्तिपरिहाराय च । ते उभयवेतनाः विजिगीषोः शत्रोश्च वेतनग्राहिणः । श्रीमूला.

**गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान् ।**
**तांश्चारिप्रहितान् विद्यात्तेषां शौचं च तद्विधैः ॥**

उभयवेतनान् गृहीतपुत्रदारान् कुर्यात् । गृहीताः राज्ञा पूजापूर्वमात्मवशे कृताः पुत्रा दाराश्च येषां तांस्तथाभूतान् कृत्वा परेषु विसृजेदित्यर्थः । अरिप्रहितान् तान् शत्रुप्रेषितान् उभयवेतनान् तेषां शौचं च स्वीयानामुभयवेतनानां शुद्धिं च तद्विधैः विद्यात् उभयवेतनद्वारेण जानीयात् । श्रीमूला.

अष्टादशसु स्थानेषु चारसंचारः

**एवं शत्रौ च मित्रे च मध्यमे चाऽऽवपेच्चरान् ।**
**उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि ॥**

आवपेत् विसृजेत् । अष्टादशसु तेषां तीर्थेष्वपि शत्रुमित्रमध्यमोदासीनानां मन्त्रिपुरोहितसेनापतिप्रभृतिषु पूर्वोक्तेषु कार्यस्थानेषु च । श्रीमूला.

**अन्तर्गृहचरास्तेषां कुब्जवामनषण्डकाः ।**
**शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः ॥**

तेषां अन्तर्गृहचराः शय्यादितत्तीर्थान्तानामन्तर्गृहसंचारिणः कर्तव्याः । चित्राः नानाप्रकाराः । श्रीमूला.

**दुर्गेषु वणिजः संस्था दुर्गान्ते सिद्धतापसाः ।**
**कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः ॥**

दुर्गेषु जलादिदुर्गेषु राजधान्यादिमहानगरेषु वणिजः सम्यक् तिष्ठन्तीति संस्थाः गूढपुरुषाः कार्याः । दुर्गान्ते दुर्गसीमायां सिद्धतापसाः संस्थाः कार्याः । राष्ट्रे कर्षकाः उदास्थिताश्च संस्थाः कार्याः । राष्ट्रान्ते राष्ट्रसीमायां व्रजवासिनः गोपालाः गूढपुरुषाः कार्याः । श्रीमूला.

**वने वनचराः कार्याः श्रमणाटविकादयः ।**
**परप्रवृत्तिज्ञानार्थाः शीघ्राश्चारपरंपराः ॥**

वने श्रमणाटविकादयः क्षपणाटवीपालप्रभृतयः वनचराः कार्याः । परप्रवृत्तिज्ञानार्थाः शत्रुव्यापारज्ञानप्रयोजनाः शीघ्राः क्षिप्रचारिण्यः चारपरंपराः कर्तव्याः । श्रीमूला.

**परस्य चैते बोद्धव्यास्तादृशैरेव तादृशाः ।**
**चारसंचारिणः संस्था गूढाश्चागूढसंज्ञिताः ॥**

एते तादृशाः उक्तजातीयाः गूढाश्चागूढसंज्ञिताः छन्नरूपा अपि अच्छन्नचिह्नधारिणः परस्य शत्रोः चारसंचारिणः सत्रितीक्ष्णादयः संस्थाश्च कापटिकोदास्थितप्रभृतयश्च तादृशैरेव तज्जातीयैरेव बोद्धव्याः ज्ञातव्याः । श्रीमूला.

**अकृत्यान् कृत्यपक्षीयैर्दर्शितान् कार्यहेतुभिः ।**
**परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥**

अकृत्यान् मुख्यान् असाध्यान् विरुद्धानपि राष्ट्रमुख्यान् कृत्यपक्षीयैः कार्यहेतुभिः साध्यपक्षोचितैः कार्यकारणैः दर्शितान् कृत्यता यथा स्यात् तथा बोधितान्, कृत्वेत्यार्थम्, परापसर्पज्ञानार्थे शत्रुचारपुरुषज्ञानाय अन्तेषु राष्ट्रसीमसु वासयेत् । श्रीमूला.

चारैः स्वजनपदकृत्याकृत्यनिरीक्षणम्

**[1]कृतमहामात्यापसर्पः पौरजानपदानपसर्पयेत् ॥**

'स्वविषये कृत्याकृत्यपक्षरक्षणम्' इति सूत्रम् । स्वविषये स्वपुरे स्वजनपदे च कृत्याकृत्यपक्षरक्षणम्–

(१) कौ. १।१३.

कृत्याः क्रुद्धलुब्धभीतावमानिताः शत्रुभेद्याः, तद्विपरीताः अकृत्याः, कृत्यपक्षस्य अकृत्यपक्षस्य च रक्षणं परोपजापात् पालनं अत्रोच्यते इत्यर्थः ।

तत्र जानपदकृत्याकृत्यपक्षावबोधो जानपदेषु गूढपुरुषप्रणिधानादृते न भवतीति तदिदं पूर्वाध्यायानुक्तमिदानीं प्राप्तावसरमाह– कृतेत्यादि । कृतमहामात्यापसर्पः । महामात्यग्रहणं पूर्वोक्ताष्टादशतीर्थोपलक्षणम् । मन्त्रिपुरोहितादिषु चारप्रणिधानानन्तरमित्यर्थः । पौरजानपदान् अपसर्पयेत् अपसर्पैः गूढपुरुषैः परिशोधयेत् ते स्वस्मिन्ननुरागिणोऽपरागिणो वेति । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (गणसूत्रम्) इति णिच् ।

श्रीमूला.

**सत्रिणो द्वंद्विनस्तीर्थसभाशालापूगजनसमवायेषु विवादं कुर्युः– सर्वगुणसंपन्नश्चायं राजा श्रूयते । न चास्य कश्चिद्गुणो दृश्यते यः पौरजानपदान् दण्डकराभ्यां पीडयतीति ॥**

सत्रिणः द्वंद्विनः कलहायमानाः सन्तः तीर्थसभाशालापूगजनसमवायेषु नद्यादितीर्थेषु ब्राह्मणादिसभासु अन्नपानीयादिशालासु कर्मकरवृन्देषु नानाजातीयजनसंघेषु च विवादं विरुद्धं वादं वक्ष्यमाणप्रकारं कुर्युः । सर्वगुणेत्यादि स्फुटार्थम् । श्रीमूला.

**तत्र येऽनुप्रशंसेयुस्तानितरस्तं च प्रतिषेधयेत् – मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे । धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः । तेन भृता राजानः प्रजानां योगक्षेमवहाः । तेषां किल्बिषं दण्डकरा हरन्ति, योगक्षेमवहाश्च प्रजानाम् । तस्मादुञ्छषड्भागमारण्यका अपि निवपन्ति– तस्यैतद्भागधेयं योऽस्मान् गोपायतीति । इन्द्रयमस्थानमेतद्राजानः प्रत्यक्षहेडप्रसादाः । तानवमन्यमानं दैवोऽपि दण्डः स्पृशति । तस्माद्राजानो नावमन्तव्या इति क्षुद्रकान् प्रतिषेधयेत् ॥**

तत्र तीर्थादिषु ये अनुप्रशंसेयुः यथोक्तराजनिन्दानुगुणं कथयेयुः सत्यमेवमेतदिति तान् तं च पूर्वनिन्दकं च इतरः सत्र्यन्यतमः प्रतिषेधयेत् वारयेत् । प्रतिषेधनप्रकारं प्रदर्शयति– मात्स्यन्यायेत्यादि । मनुं वैवस्वतं मनुनामानं विवस्वतः सूनुम् । धान्यषड्भागं धान्यस्य षष्ठमंशम् । पण्यदशभागं पण्यादीनां वस्त्रादीनां विक्रेयद्रव्याणां दशमांशम् । हिरण्यं यथादेशप्रसिद्धम् । भागधेयं अंशम् । तेन भृताः यथोक्तभागधेयरूपभृतिग्राहिणः सन्तः प्रजानां योगक्षेमवहाः पौरजनपदानां योगक्षेमवहनरूपकर्मकराः । पौरजानपदान् दण्डकराभ्यां पीडयतीति यत् दूषणमुद्भावितं तत्र समाधिमाह– तेषामिति । तेषां दण्डकराः तत्संबन्धिनो दण्डकराः राजभिः प्रजासु प्रयुज्यमाना दण्डाः प्रजाभ्यो गृह्यमाणाः कराश्चेत्यर्थः, प्रजानां किल्बिषं हरन्ति पापं चौर्यादिजनितमपनुदन्ति, योगक्षेमवहाश्च योगक्षेमसाधकाश्च भवन्ति । तत्र दण्डानां किल्बिषहरत्वं दण्डानुभवस्य प्रायश्चित्तानुष्ठानस्थानीयत्वात् बोद्धव्यम्, योगक्षेमवहत्वं च स्वधर्मव्यतिक्रमभयोत्पादनेन सन्मार्गप्रवर्तकत्वात् । कराणां योगक्षेमवहत्वं तु जनहितेषु पूर्तादिकर्मसु विनियुज्यमानत्वात् स्पष्टमेव । तस्मादिति । तस्मात् कराणां रक्षाभृतिरूपत्वात् आरण्यका अपि ऋषयोऽपि उञ्छषड्भागं उञ्छस्य कणश आत्तस्य धान्यादेः षष्ठमशं निवपन्ति वितरन्ति । किं कृत्वा ? यः अस्मान् रक्षति तस्यैतत् भागधेयमिति मत्वा । इन्द्रेति । राजानः प्रत्यक्षहेडप्रसादाः प्रत्यक्षनिग्रहानुग्रहाः । अत एव एतत् इन्द्रयमस्थानं इमे इन्द्रयमस्थानस्थिताः । इन्द्रयमतुल्या इत्यर्थः । तात्स्थ्यात् ताच्छब्द्यम् । तानवमन्यमानमित्यादि स्फुटार्थम् । तानवमन्यमानानिति पाठे व्यधिकरणे द्वितीये । श्रीमूला.

**किंवदन्तीं च विद्युः ॥**

किंवदन्तीं च विद्युः जनश्रुतिं च जानीयुः, अर्थात् सत्रिणः ।

श्रीमूला.

**ये चास्य धान्यपशुहिरण्यान्याजीवन्ति, तैरुपकुर्वन्ति व्यसनेऽभ्युदये वा, कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्ति, अमित्रमाटविकं वा प्रतिषेधयन्ति, तेषां मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः ॥**

ये अस्य राज्ञः धान्यपशुहिरण्यानि आजीवन्ति उपजीवन्ति, तैः धान्यादिभिः व्यसने अभ्युदये वा अस्य उपकुर्वन्ति, ये वा कुपितं बन्धुं राष्ट्रं च व्यावर्तयन्ति कोपान्निवर्तयन्ति, ये वा अमित्रं शत्रुं आटविकं अटवीपालं प्रतिषेधयन्ति शत्रुभावात् वारयन्ति, तेषां तुष्टातुष्टत्वं तुष्टत्वमतुष्टत्वं च मुण्डजटिलव्यञ्जनाः मुण्डजटिलवेषाः विद्युः । श्रीमूला.

**तुष्टान् भूयः पूजयेत् । अतुष्टांस्तुष्टिहेतोस्त्यागेन साम्ना च प्रसादयेत् । परस्पराद्वा भेदयेदेनान् सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च । तथाप्यतुष्यतो दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत् । विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत् । गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत्परेषामास्पदभयात् ॥**

तुष्टातुष्टत्ववेदनानन्तरकार्यमाह— तुष्टानित्यादि । भूयः पूजयेत् तुष्ट्यतिशयार्थम् । तुष्टिहेतोः तुष्ट्यर्थम् । त्यागेन अर्थदानेन । साम्ना सान्त्ववादेन । अर्थदानादिनाऽप्यतुष्टावाह— परस्परादिति । एनान् अतुष्टान् परस्परात् भेदयेत् मिथः संहता भूत्वा माऽपकार्षुरिति । सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च भेदयेत्सामन्तादिषु मोपजापं कार्षुरिति । तथापि अतुष्यतः भेदनेऽप्यार्जवं अप्रतिपद्यमानान् दण्डकरसाधनाधिकारेण दण्डसाधनाधिकारदानेन वा करसाधनाधिकारदानेन वा जनपदविद्वेषं जानपदविरोधं ग्राहयेत् । विद्विष्टान् तथा प्राप्तजनपदविद्वेषान् उपांशुदण्डेन रहोघातेन जनपदकोपेन वा जानपदनिष्ठया स्वविद्विष्टजिघांसया वा साधयेत् दमयेत् । किंच, गुप्तपुत्रदारान् आकरकर्मान्तेषु वासयेत् तत्पुत्रदारगुप्तिं स्वयमङ्गीकृत्य तानतुष्टान् खनिकर्मस्थानेषु व्यापारयेत् । कस्मात् ? परेषामास्पदभयात् शत्रुपक्ष्याणांमास्पदमिमे स्युरिति भयात् । तदेवं गूढपुरुषप्रणिधानं व्युत्पादितम् । श्रीमूला.

**क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः । तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसंबन्धममित्रप्रतिसंबन्धं वा विद्युः ॥**

अथ स्वविषये कृत्याकृत्यपक्षरक्षणमाह— क्रुद्धेत्यादि । क्रुद्धलुब्धभीतमानिनः परेषां कृत्याः शत्रूणां कृत्याः साध्याः भेद्याः भवन्ति । एतेन शत्रुभेद्याः अकृत्याः इत्यर्थादुक्तप्रायम् । तेषां क्रुद्धादीनां परस्पराभिसंबन्धं अमित्रप्रतिसंबन्धं वा अन्योन्यसंबन्धं शत्रुसंबन्धं च कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जना विद्युः । कार्तान्तिकाः कृतान्तः दैवं पूर्वकर्म तद्वेदिनः, नैमित्तिकाः शुभाशुभशकुनज्ञाः, मौहूर्तिकाः त्रिकालवृत्तज्ञाः, तद्वेषाः जानीयुः । एतेन अकृत्यज्ञानमप्युक्तप्रायम् । श्रीमूला.

**तुष्टानर्थमानाभ्यां पूजयेत् । अतुष्टान् सामदानभेददण्डैः साधयेत् ॥**

एवं कार्तान्तिकादिव्यञ्जनद्वारेण अकृत्येषु कृत्येषु च विज्ञातेषु विजिगीषोः कर्तव्यमाह— तुष्टानिति । तुष्टान् राज्ञि प्रीतिमतः अकृत्यपक्ष्यानित्यर्थः, अर्थमानाभ्यां पूजयेत्, अर्थः धनम्, मानः बहुमानचिह्नं वलयाङ्गदादि, तद्दानेन सत्कुर्यात् । अतुष्टान् कृत्यान् कृत्यपक्ष्यानित्यर्थः, सामदानभेददण्डैः साधयेत् दमयेत् । श्रीमूला.

**एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः ।**
**परोपजापात्संरक्षेत्प्रधानान् क्षुद्रकानपि ॥**

एवं उक्तप्रकारेण । विचक्षणः नीतिज्ञः । क्षुद्रकानपि अमुख्यानपि । श्रीमूला.

चारैः परजनपदकृत्याकृत्यनिरीक्षणम्

**'कृत्याकृत्यपक्षोपग्रहः स्वविषये व्याख्यातः, परविषये वाच्यः ॥**

'परविषये कृत्याकृत्यपक्षोपग्रहः' इति सूत्रम् । परविषये शत्रुजनपदे कृत्याकृत्यपक्षोपग्रहः कृत्यपक्षस्य अतुष्टवर्गस्य अकृत्यपक्षस्य तुष्टवर्गस्य च उपग्रहः उपजापादिना संग्रहः स्वायत्तीकरणं इहोच्यते इत्यर्थः ।

प्रकरणसंगतिमाह— कृत्याकृत्येत्यादि । श्रीमूला.

**संश्रुत्यार्थान् विप्रलब्धः, तुल्यकारिणोः शिल्पे वोपकारे वा विमानितः, वल्लभावरुद्धः, समाहूय**

(१) कौ. १।१४.

पराजितः, प्रवासोपतप्तः, कृत्वा व्ययमलब्धकार्यः, स्वधर्माद्दायाद्याद्वोपरुद्धः, मानाधिकाराभ्यां भ्रष्टः, कुल्यैरन्तर्हितः, प्रसभाभिमृष्टस्त्रीकः, काराभिन्यस्तः, परोक्तदण्डितः, मिथ्याचारवारितः, सर्वस्वमाहारितः, बन्धनपरिक्लिष्टः, प्रवासितबन्धुरिति क्रुद्धवर्गः ॥

कृत्याः नाम क्रुब्धलुब्धभीतमानिनः इत्युक्तम् । तत्र प्रथमं क्रुद्धान् व्युत्पादयति— संश्रुत्येति । अर्थान् संश्रुत्य विप्रलब्धः ददामीति प्रतिज्ञाय तददानेन वञ्चितः । शिल्पे उपकारे वा तुल्यकारिणोः समानं कर्म कृतवतोर्मध्ये विमानितः अनभिनन्दितः अन्यतरः । वल्लभावरुद्धः राज्ञः परमाप्तसेवकैः प्रतिषिद्धराजकुलप्रवेशः । समाहूय पराजितः द्यूतक्रीडार्थमाहूय हृतधनः । प्रवासोपतप्तः- राजकृतेनावरोधेन स्वेप्सितदेशवासप्रतिबन्धः प्रवासः, तेन दुःखितः । कृत्वा व्ययमलब्धकार्यः कार्यार्थे राजवल्लभादिभ्यः उत्कोचं दत्त्वाऽप्यलब्धप्रयोजनः । स्वधर्मात् दायाद्याद्वा उपरुद्धः— स्वधर्मः दाक्षिणात्यानां मातुलकन्यापरिणयादिः, दायाद्यं दायत्वेन भोग्यं भागिनेयानां केरलेषु मातुलधनम्, तादृशात् स्वधर्मात् दायाद्याच्च प्रतिषिद्धः । मानाधिकाराभ्यां भ्रष्टः— मानः छत्रान्दोलिकादिः परिच्छदबहुमानः, अधिकारः समाहर्तृसंनिधातृप्रभृतिनियोगः, ताभ्यां प्रच्यावितः । कुल्यैः कुलभवैः राजबन्ध्वादिभिर्निमित्तभूतैः अन्तर्हितः अप्रकाशं गतः । अपलपितगुणत्वादित्यार्थम् । प्रसभाभिमृष्टस्त्रीकः बलात्कारधर्षितदारः । काराभिन्यस्तः बन्दीकृतः । परोक्तदण्डितः अविचार्यैव परवचनप्रत्ययमात्रेण कृतदण्डः । मिथ्याचारवारितः प्राणिवधरूपत्वात् यज्ञः पापकर्मेत्येवंजातीयेन मिथ्यान्यायेन आचारात् यज्ञादिसत्कर्मानुष्ठानात् वारितः । सर्वस्वमाहारितः हृतसर्वस्वः । बन्धनपरिक्लिष्टः । बन्धनेन कार्येषु अयथार्हनियन्त्रणया परिक्लिष्टः । प्रवासितबन्धुः प्रवासितः स्वदेशान्निष्कासितः बन्धुः पुत्रादिः यस्य सः । इति एवंजातीयः क्रुद्धवर्गः । वेदितव्यः इति शेषः । श्रीमूला.

स्वयमुपहतः, विप्रकृतः, पापकर्माभिख्यातः, तुल्यदोषदण्डेनोद्विग्नः, पर्यात्तभूमिः, दण्डेनोपहतः, सर्वाधिकरणस्थः, सहसोपचितार्थः, तत्कुलीनोपाशंसुः, प्रद्विष्टो राज्ञा, राजद्वेषी चेति भीतवर्गः ॥

भीतवर्गमाह— स्वयमित्यादि । स्वयमुपहतः धनार्थे स्वकृतेन परमारणादिना नृशंसकर्मणा दूषितः, विजिगीषुणा वा स्वयं धनदानेन नृशंसकर्म परमारणादिकं कारयित्वा दूषितः । स हि विजिगीषुसकाशात् भीतो भवति 'शत्रुपक्षादधिकधनलाभे मामप्ययं हन्यात्' इति विजिगीषुरात्मानमभिशङ्केतेति मत्वा । विप्रकृतः अन्तःपुरादौ विजिगीषुविरुद्धक्रियारम्भः । पापकर्माभिख्यातः ब्रह्महत्यादिपापकर्माभिशस्तः । तुल्यदोषदण्डेन उद्विग्नः स्वसमानदोषे अन्यस्मिन् दण्डं प्रयुक्तं दृष्ट्वा भीतः मय्यपि दण्डः पतेदिति । पर्यात्तभूमिः भूम्यपहर्ता । दण्डेन उपहतः कर्शितः । सर्वाधिकरणस्थः सर्वेषु राजकीयनियोगस्थानेषु प्राप्तस्वाम्यः । सहसोपचितार्थः अकस्मात् साहसेन वा वर्धितधनः । साहसेति च पाठः । तत्कुलीनोपाशंसुः तस्य राज्ञः कुलीनं दायादं उपाशंसुः कामुकः उपाश्रित इत्यर्थः । शेषं स्फुटम् । श्रीमूला.

परिक्षीणः, अत्यात्तस्वः, कदर्यः, व्यसनी, अत्याहितव्यवहारश्चेति लुब्धवर्गः ॥

लुब्धवर्गमाह— परीत्यादि । परिक्षीणः विनष्टसर्ववैभवः । अत्यात्तस्वः अत्यात्तं राज्ञा दण्डकररूपतया अतिमात्रं गृहीतं स्वं धनं यस्य सः । कदर्यः कृपणः । व्यसनी स्त्रीपानादिव्यसनवान् । अत्याहितव्यवहारः अतिमात्रप्रयुक्तधननिमित्तव्यवहारः । श्रीमूला.

आत्मसंभावितः, मानकामः, शत्रुपूजामर्षितः, नीचैरुपहितः, तीक्ष्णः, साहसिकः, भोगेनासंतुष्ट इति मानिवर्गः ॥

मानिवर्गमाह— आत्मेति । आत्मसंभावितः अहमतीव विद्वान् शूर इति । मानकामः धनमवधीर्य पूजामात्राभिलाषी । शत्रुपूजामर्षितः अनेन मम शत्रुः पूजित इति प्राप्तामर्षः । नीचैरुपहितः दुर्जनैः क्वचित् कार्येऽभिनिवेशितः । तीक्ष्णः आत्मत्यागी । साहसिकः—

अतर्कितप्रवृत्तिः साहसम्, तद्वान् । भोगेन असंतुष्टः वल्लभया भृत्या तृप्तिमप्राप्तः । श्रीमूला.

**तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत् ॥**

क्रुद्धादीनां कृत्यपक्षीयाणां मध्ये यो यदभिलषति तं मुण्डजटिलव्यञ्जनमुखेन तद्दानपूर्वं भेदयेदित्याह– तेषामित्यादि । श्रीमूला.

**'यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नात्येवमयमशास्त्रचक्षुरन्धो राजाऽन्धेन मन्त्रिणाऽधिष्ठितः पौरजानपदवधायाभ्युत्थितः, शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुम्, अमर्षः क्रियताम्' इति क्रुद्धवर्गमुपजापयेत् ॥**

तत्र क्रुद्धवर्गस्य भेदनप्रकारमाह– यथा मदान्ध इत्यादि । मत्तेनाधिष्ठितः प्रमादिना हस्तिपकेन नियम्यमानः । आसादयति दृष्टिविषयं करोति । प्रमृद्नाति नाशयति । अशास्त्रचक्षुः राजशास्त्रलक्षणनेत्रहीनः । अभ्युत्थितः उद्युक्तः । प्रतिहस्तिप्रोत्साहनेन प्रत्यर्थ्युत्साहजननेन । अमर्षः क्रियतां प्रकोपः उत्पाद्यतां राज्ञः । श्रीमूला.

**'यथा लीनः सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजत्येवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजति, अन्यत्र गम्यताम्' इति भीतवर्गमुपजापयेत् ॥**

भीतवर्गस्याऽऽह– यथा लीन इत्यादि । भयं पश्यति आत्मनो विपत्तिमभिशङ्कते । पुरा जातदोषाशङ्कः पूर्वमुत्पन्नदोषवितर्कः । अथवा पुराशब्दः उत्स्रक्ष्यतीत्यनेन संबध्यते, उत्स्रक्ष्यतीत्यर्थः । 'यावत्पुरानिपातयोः' (पा. ३।३।४) इति लट् । श्रीमूला.

**'यथा श्वगणिनां धेनुः श्वभ्यो दुग्धे न ब्राह्मणेभ्य एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नाऽऽत्मगुणसंपन्नेभ्यः, असौ राजा पुरुषविशेषज्ञः सेव्यताम्' इति लुब्धवर्गमुपजापयेत् ॥**

लुब्धवर्गस्याऽऽह– यथा श्वगणिनामित्यादि । श्वगणिनां धेनुः श्वगणस्वामिनां गौः । दुग्धे क्षीरं स्रावयति । अयं संनिहितः । दुग्धे फलं ददाति । असौ विप्रकृष्टः सामन्तः । पुरुषविशेषज्ञः पुरुषतारतम्यवेदी । श्रीमूला.

**'यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषामेवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम्, असौ राजा पुरुषविशेषज्ञस्तत्र गम्यताम्' इति मानिवर्गमुपजापयेत् ॥**

मानिवर्गस्याऽऽह– यथा चण्डालेत्यादि । चण्डालोदपानः चण्डालकूपः । आर्याः शिष्टाः । श्रीमूला.

**तथेति प्रतिपन्नांस्तान् संहितान् पणकर्मणा ।**
**योजयेत यथाशक्ति सापसर्पान् स्वकर्मसु ॥**

तथेति प्रतिपन्नान् उपजापानुरोधेन परपक्षप्रवेशमङ्गीकृतवतः पणकर्मणा संहितान् सत्यशपथादिना कृतसंधानान् तान् कृत्यान् सापसर्पान् चारसहितान् कृत्वा यथाशक्ति स्वकर्मसु योजयेत नियुञ्जीत । श्रीमूला.

**लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु ।**
**अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥**

परभूमिषु परजनपदे कृत्यान् सामदानाभ्यां लभेत साधयेत् । भेदस्य तेषु स्वत एव सिद्धत्वादनुपयोग इत्यभिप्रायः । अकृत्यान् भेददण्डाभ्यां लभेत । अकृत्यान् प्रति भेदनसाधनेषु परदोषप्रदर्शनस्य मुख्यत्वादाह– परदोषान् दर्शयेच्च बोधयेच्च । श्रीमूला.

चारदर्शनप्रेषणकालः

**'प्रथमे रात्रिभागे गूढपुरुषान् पश्येत् ॥**
**सप्तमे मन्त्रमध्यासीत, गूढपुरुषांश्च प्रेषयेत् ॥**

प्रेषयेत् यथाविषयं प्रणिदध्यात् । श्रीमूला.

## चाणक्यसूत्राणि

राजा चारचक्षुः

**'दूरस्थमपि चारचक्षुः पश्यति राजा ॥**

---

(१) कौ. १।१९.
(२) चासू. ४७२.

## मनुः

चारचेष्टाचिन्तनम्

**'प्रणिधीनां च चेष्टितम् ॥**

( १ ) प्रणिधीनां च कापटिकादीनां वा परस्पराभिचेष्टितं चिन्तयेत् । × मेधा.

( २ ) प्रणिधीनां चेष्टितं परसंगमादि । मवि.

पञ्च चारवर्गाः

***'पञ्चवर्गं च तत्त्वतः ॥**

( १ ) † पञ्चवर्गः कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनाः । परमर्मज्ञाः प्रगल्भच्छात्राः कापटिकाः । तानर्थमानाभ्यामुपसंगृह्य मन्त्री ब्रूयात्– 'राजानं मां च प्रमाणं कृत्वा यत्र यदकुशलं तत्तदानीमेवाऽऽश्राव्यं त्वया' इति । प्रव्रज्यायाः प्रत्यवसितः उदास्थितः । स च प्रज्ञाशौचयुक्तः सर्वान्नप्रदानसमर्थायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म कारयेत् । कृषिकर्मफलाच सर्वप्रव्रजितानां ग्रासाच्छादनावसथान् प्रतिविदध्यात् । तेषां ये वृत्तिकामास्तानुपजपेत्– 'एवमेतेनैव वृत्तेन राजार्थश्चरितव्यः, भक्तवेतनकाले चोपस्थातव्यम्' इति । सर्वप्रव्रजिताः स्वं स्वं वर्गमुपजपेयुः । कर्षको वृत्तिक्षीणः प्रज्ञाशौचयुक्तः गृहपतिव्यञ्जनः । स कृषिकर्म कुर्याद्यथोक्तायां भूमाविति ( समानं पूर्वेण ) । वाणिजिकः वृत्तिक्षीणः प्रज्ञाशौचयुक्तः वैदेहिकव्यञ्जनः । स वणिक्कर्म कुर्यात् प्रदिष्टायां भूमाविति समानम् ( पूर्वेण ) । मुण्डो जटिलो वा वृत्तिकामः तापसव्यञ्जनः । स नगराभ्याशे प्रभूतजटिलमुण्डान्तेवासी शाकं यवमुष्टिं वा मासान्तरितं प्रकाशमश्नीयाद्धर्मव्याजेन, गूढं यथेष्टमाहारम् । तापसव्यञ्जनान्तेवासिनश्चैनं प्रसिद्धयोगैरर्चयेयुः । अर्थलाभमग्रे शिष्याश्चाऽऽदिशेयुर्दाहं चौरभयं दुष्टवधं विदेशप्रवृत्तं च– 'इदमद्य श्वो वा भविष्यति इदं वा राजा करिष्यति' इति । तदस्य गूढसत्रिणः तत्प्रयुक्ताः संपादयेयुः । ये चास्य राज्ञः अवश्यभर्तव्याः लक्षणविद्यां संसर्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं निमित्तज्ञानं चाधीयानाः सत्रिणः । तत्र राजा एतत्पञ्चसंस्थायत्तैः सत्रिभिः स्वविषयेऽवस्थापयेत् । मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकादिषु सद्यपदेशवेषशिल्पभाषाविदो जनपदापदेशेन सत्रिणः संधारयेत् । तथा कुब्जवामनकिरातमूकजडबधिरान्धनटनर्तकगायनादयः स्त्रियश्चाभ्यन्तरचारिण्यः ‘अटव्यां वनेचराः कार्या ग्रामे ग्रामीणकादयः । पुरुषव्यापारार्थाः स्वव्यापारपरम्पराः ॥ परस्परं चैते बोद्धव्यास्तादृशैरेव तादृशाः । चारसंचारिणः संस्था गूढाश्चागूढसंज्ञिताः ॥ * मेधा.

( २ ) पञ्चवर्गः पञ्चप्रकाराणां चाराणां समूहः । ते च यथा– श्रद्धेयदेशविशेषशिल्पभाषादिविदो जनाः, तथा कुब्जवामनकिरातमूकबधिरजडान्धादिच्छद्मिनः, तथा नटनर्तकगायनादयः, तथा स्त्रियोऽभ्यन्तरचारिण्यः, तथा श्रमणादयः । एतेषां प्रवृत्तिज्ञानार्थाश्चारसमूहाः स्वस्य परस्य च बोद्धव्याः । × राक. १०८–१०९.

( ३ ) तथा कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत् ॥

---

× गोरा., ममु., मच. मेधावत् ।

* अस्य वाक्यस्य चारपराण्येव व्याख्यानान्यत्र संगृहीतानि ।

† इदं व्याख्यानमतीवाशुद्धम् । तच्च कौ. १।११,१२ इति कौटिलीयग्रन्थस्यार्थतोऽनुवाद इति तदनुसारेण यथासंभवं शोधितम् । व्याख्यानान्ते ' वने वनचराः कार्याः श्रमणाटविकादयः । परप्रवृत्तिज्ञानार्थाः शीघ्राश्चारपरम्पराः ॥ परस्य चैते बोद्धव्यास्तादृशैरेव तादृशाः । चारसंचारिणः संस्था गूढाश्चागूढसंज्ञिताः ॥ ' (कौ. १।१२) इतिकौटिलीयश्लोकानुवादः प्रतीयते । इमौ श्लोकौ नन्दनेन व्याख्यातौ । स चानयोर्मानवत्वमभिप्रैतीति प्रतिभाति ।

( १ ) **मस्मृ.** ७।१५३ ; **राक.** १०६ ; **पमा.** ४१० ; **राप्र.** १५९,३१७ ; **नीम.** ३८.

( २ ) **मस्मृ.** ७।१५४ ; **राक.** १०७ तत्त्व (यत्न) ; **पमा.** ४११ ; **राप्र.** १५९ : ३१७ राकवत् ; **नीम.** ३८.

* गोरा., मवि., पमा., मच., भाच. मेधागतम् ।

× राप्र. राकवत् ।

तत्र परममर्मज्ञः प्रगल्भच्छात्रः कपटव्यवहारित्वात् कापटिकस्तं वृत्त्यर्थिनमर्थमानाभ्यामुपगृह्य रहसि राजा ब्रूयात्— 'यस्य दुर्वृत्तं पश्यसि तत्तदानीमेव मयि वक्तव्यम्' इति । प्रव्रज्यारूढपतितः उदास्थितः तं लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं वृत्त्यर्थिनं कृत्वा रहसि राजा पूर्ववत् ब्रूयात् । बहूत्पत्तिकमठे स्थापयेत् प्रचुरसस्योत्पत्तिकं भूम्यन्तरं च तद्वृत्त्यर्थमुपकल्पयेत् । स चान्येषामपि प्रव्रजितानां राजचारकर्मकारिणां ग्रासाच्छादनादिकं दद्यात् । कर्षकः क्षीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जनः । तमपि पूर्ववदुक्त्वा स्वभूमौ कृषिकर्म कारयेत् । वाणिजकः क्षीणवृत्तिः वैदेहिकव्यञ्जनः । तं पूर्ववदुक्त्वा धनमानाभ्यामात्मीकृत्य वाणिज्यं कारयेत् । मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः । सोऽपि क्वचिदाश्रमे वसन् बहुमुण्डजटिलान्तरे कपटशिष्यगणवृतो गुप्तराजोपकल्पितवृत्तिस्तापस्यं कुर्यात् । मासद्विमासान्तरितं प्रकाशं बदरादिमुष्टिमश्नीयात्, रहसि च राजोपकल्पितमाहारं कल्पयेत् । शिष्याश्चास्यातीतानागतज्ञानादिकं ख्यापयेयुः । ते च बहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात् सर्वकार्यमकार्यं च पृच्छन्ति, अन्यस्य कुक्रियादिकं कथयन्ति । एवंरूपं पञ्चवर्गं यथावच्चिन्तयेत् । ममु.

***[1]संध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥**

चारद्वारा द्विविधास्तस्करा ज्ञातव्याः

**$[2]द्विविधांस्तस्करान् विद्यात्परद्रव्यापहारकान् ।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥**

**तान् विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः ।
चौरैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत् ॥**

**सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।
चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ॥**

**जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ।
शून्यानि चाप्यगाराणि वनान्युपवनानि च ॥**

**एवंविधान्नृपो देशान् गुल्मैः स्थावरजङ्गमैः ।
तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥**

**तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः ।
विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः ॥**

**भक्ष्यभोज्योपदेशैश्च ब्राह्मणानां च दर्शनैः ।
शौर्यकर्मापदेशैश्च कुर्युस्तेषां समागमम् ॥**

चारेण स्वपरशक्तिज्ञानं कर्तव्यम्

***[1]चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ।
स्वशक्तिं परशक्तिं च नित्यं विद्यान्महीपतिः ॥**

## याज्ञवल्क्यः

चाराणां दर्शनम्, तेषां गूढभाषितश्रवणम्,
तेषां परीक्षणीयानि स्थानानि

**[2]पश्येच्चारान् ॥**

(१) नित्यं च भुक्त्वा व्यपेतक्लमो विश्वस्तचित्तः पश्येच्चारान् अवस्थितानेकविधचारप्रहितान् प्रहेतव्यांश्च । अयं हि नीतिसंक्षेपः— नित्यं ह्यनेकविधाः सर्वाश्रमसर्वपाषण्डिनः लिङ्गिनः अनेकविद्याव्याजकपटैः परराष्ट्रस्वराष्ट्रविन्यस्ताः तत्प्रहितान्धमूकजडबधिरोन्मत्तादिप्रकारकपटप्रच्छन्नाः प्रख्यापितकुतूहलप्रधानतया सर्वसत्त्वानुजिघृक्षापरत्वप्रसिद्ध्या वा राज्ञा प्रयत्नतो गूढसंकेतनिपुणेनान्वहमप्रमत्तेन द्रष्टव्याः । यद्वा एकं कंचित् वामनकुब्जादिकं आत्मनोऽतिशयवाल्लभ्यप्रख्यातं सुपरीक्षितमाप्तं

---

* अस्य श्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राज्ञो दिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९४८) द्रष्टव्यः ।

$ एतदादिश्लोकसप्तकस्य व्याख्यानादिकं व्यवहारकाण्डे स्तेयप्रकरणे द्रष्टव्यम् ।

(१) मस्मृ. ७।२२३.

(२) मस्मृ. ९।२५६,२६१,२६४–२६८.

* अस्य श्लोकस्य व्याख्यानादिकं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ७१०–७११) द्रष्टव्यम् ।

(१) मस्मृ. ९।२९८.

(२) यास्मृ. १।३२८. शेषः स्थलादिनिर्देशः 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९५३) द्रष्टव्यः.

चारव्यापारे नियोजयेत् । स चाखिलां राज्ञो नित्ययुक्तचारप्रहितां मुहुर्मुहुर्वार्तां संपादयेत् । विश्व.

(२) ततः चारान् स्पशान् प्रत्यागतान् पश्येत् । ये परराज्ये वृत्तान्तपरिज्ञानाय परिव्राजकतापसादिरूपेण गूढचारिणः प्रेषिताः तांश्चारान् दृष्ट्वा क्वचिन्निवेशयेत् । * मिता.

**[१]संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ॥**
**[२]प्रेषयेच्च ततश्चारान् स्वेष्वन्येषु च सादरान् ॥**

चारद्वारा निश्चितानां साधूनां असाधूनां च यथायथं संमानः घातश्च कर्तव्यः

**$[३]ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।**
**साधून् संमानयेद्राजा विपरीतांश्च घातयेत् ॥**

## नारदः

चारद्वारा प्रकाशाप्रकाशचोरज्ञानम्, चोरनिग्रहः, चारपरीक्षणीयानि स्थानानि

**[४]तान्विदित्वा सुनिपुणैश्चोरैस्तत्कर्मकारिभिः ।**
**अनुसृत्य ग्रहीतव्या गूढैः प्रणिहितैर्नरैः ॥**

तान् ¶एवंप्रकारान् बुद्ध्वा कुशलैः चोरैः तत्कर्मकारिभिः चोरव्यञ्जनैः पुराणचोरैः चानुसृत्य गृह्णीयात् अमुत्राऽऽस्ते इति तैश्चारयित्वा गृह्णीयात् ।

अथवा चोरव्यञ्जनास्तैः सह एकार्थीभूताश्चोराः कस्मिंश्चित् गृहे फल्गु द्रव्यं तत्र निधाय तान् नीत्वा मोषयित्वा प्रत्ययमुत्पाद्य पुनः ग्रामान्तरेषु मनुष्यान् गूढान् निधाय तत्र प्रवेश्य ग्राहयेयुः । नाभा.

**सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।**
**चतुष्पथाश्चैत्यवृक्षाः समाजप्रेक्षणानि च ॥**

**शून्यागाराण्यरण्यानि देवतायतनानि च ।**
**चारैर्विचेयान्येतानि चोरग्रहणतत्परैः ॥**

सभादीनि नित्यं चारैः परीक्ष्याणि । तेऽत्र चोरचिह्नैः ग्रहीतव्याः तदन्वेषणतत्परैः परीक्ष्य एतैर्ग्रहीतव्यास्ते । नाभा.

चारप्रसर्पणरीतिः

**तथैवान्ये प्रणिहिताः श्रद्धेयाश्चित्रवादिनः ।**
**चोरा ह्युत्साहयेयुस्तांस्तस्करान् पूर्वतस्कराः ॥**

तथाऽन्ये प्रणिहिताश्चोराः तैः संहत्य दर्शितप्रत्ययाः 'अन्तर्धानमन्त्रोऽयम्, अनेन मन्त्रेणापिहितो न दृश्यते मनुष्यः' इति पूर्वं राज्ञा संकेतिते गृहे दिवसे एव प्रविश्य भाजनादि गृहीत्वा निष्क्रामन्ति । गृहजनश्च तूष्णीमास्ते । ततोऽपरस्मिन् गृहे गूढमनुष्ये प्रवेश्य ते तथोत्पादितप्रत्ययाः चित्रवादिनः 'इदं चेदं चास्मिन् गृहेऽस्ति, पर्याप्तमेतदस्माकम्' इति प्रोत्साह्य प्रवेश्य ग्राहयेयुः । नाभा.

**अन्नपानमहादानैः समाजोत्सवदर्शनैः ।**
**तथा चौर्यापदेशैश्च कुर्युस्तेषां प्रसर्पणम् ॥**

श्रद्धेयवाक्याः पुराणचोराः तैः सह एकीभूताः भोजनं चोद्दिश्य पानं वा 'यूयं निमन्त्रिताः आगच्छतास्मद्गृहे भोक्तुम्' इति दारकस्य बहुदण्डनमिति निमित्तेषूद्दिश्य, महादानं वा 'अहमस्मिन् देशे वस्तुमुत्सहे, देशान्तरं यास्यामि, यत् ममास्ति तत् युष्मभ्यं दास्यामि, अमनुष्यायां वेलायामागच्छत' इति, 'समाजं वा पुत्रं वा पश्यामः उत्सवं वेति, रात्रावागच्छत, अदो गृहं तन्मुष्णामः' इत्येवमेषां समागमं कारयेयुः । समागतान् ग्राहयेयुः । नाभा.

---

* अप., रार., वीमि. मितागतम् ।

† अनयोरर्धयोः व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९५४) द्रष्टव्यः ।

$ अस्य श्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः- राष्ट्रम्' इत्यस्मिन् प्रकरणे (पृ. १४१३) द्रष्टव्यः ।

¶ पूर्वोक्तान् प्रच्छन्नान् प्रकाशांश्च द्विविधान् तस्करानित्यर्थः ।

(१) यास्मृ. १।३३०.
(२) यास्मृ. १।३३२.
(३) यास्मृ. १।३३८.
(४) नासं. १९।५८–६२.

## बृहत्पराशरः

चारभाषितश्रवणकालः

[1]प्रातः संध्यार्चनादूर्ध्वं गूढपुंवचनश्रुतिः ॥

## विशालाक्षः

चारैरालोच्या विषयाः

[2]वन्यान् वनगतैर्नित्यं मण्डलस्थांस्तथाविधैः ।
चारैरालोच्य सात्कुर्याज्जिगीषुर्दीर्घदूरदृक् ॥

## आश्वलायनः

चारसंचारणस्थानानि

[3]प्रणिधीन् परराष्ट्रेषु कार्याकार्यविचक्षणान् ॥

युक्तानात्महितान् राजा चारयेच्चाटवीषु च ।
प्रत्यक्षेषु स्वराष्ट्रेषु कार्येष्वपि च तादृशान् ॥

चारांश्च चारयेद्राजा भृत्यान्दण्डयेष्वनुत्तमान् ।
स्वराष्ट्रान्परराष्ट्रस्य ग्रामान् सत्यंस्य (?)
चानिशम् ॥

चारचक्षुर्नृपः पश्येद्वृत्तिं यत्नादवीवहि (?) ॥

## मत्स्यपुराणम्

चारचक्षुः राजा, चारगुणाः, वणिगादयः चाराः परस्पराज्ञाताः प्रमाणम्, चारपरीक्षणीया विषयाः

[4]कथिताः सततं राजन् राजानश्चारचक्षुषः ॥

[5]स्वके देशे परे देशे ज्ञानशीलान् विचक्षणान् ।
अनाहार्यान्क्लेशसहान्नियुञ्जीत तथा चरान् ॥

[1]जनस्याविदितान्सौम्यांस्तथाऽज्ञातान्परस्परम् ।
वणिजो मन्त्रकुशलान् सांवत्सरचिकित्सकान् ।
तथा प्रव्रजिताकारांश्चारान् राजा नियोजयेत् ॥

[2]नैकस्य राजा श्रद्दध्याच्चारस्यापि सुभाषितम् ।
द्वयोः संबन्धमाज्ञाय श्रद्दध्यान्नृपतिस्तदा ॥

[3]परस्परस्याविदितौ यदि स्यातां च तावुभौ ।
तस्माद्राजा प्रयत्नेन गूढांश्चारान्नियोजयेत् ॥

[4]राज्यस्य मूलमेतावद्या राज्ञश्चारदर्शिता ।
चाराणामपि यत्नेन राज्ञा कार्यं परीक्षणम् ॥

[5]रागापरागौ भृत्यानां जनस्य च गुणागुणान् ।
सर्वं राज्ञां चरायत्तं तेषु यत्नपरो भवेत् ॥

## अग्निपुराणम्

चारचक्षुः राजा, चारगुणाः, चाराणां वणिगादीनां बहूनां मतं प्रमाणम्, प्रकाशोऽप्रकाशश्च चारः

[6]चारचक्षुर्भवेद्राजा नियुञ्जीत सदा चरान् ॥
जनस्याविदितान्सौम्यांस्तथाऽज्ञातान्परस्परम् ।
वणिजो मन्त्रकुशलान् सांवत्सरचिकित्सकान् ॥
तथा प्रव्रजिताकारान् बलाबलविवेकिनः ।
नैकस्य राजा श्रद्दध्याच्छ्रद्दध्याद्बहुवाक्यतः ॥

---

(१) बृपसं. १२।१५.

(२) विश्व. १।३२८.

(३) आश्वस्मृ. ८।३४-३७.

(४) मत्स्य. २१५।९० ; विध. २।२४।६३ राजन् (राम).

(५) मत्स्य. २१५।९१ ; विध. २।२४।६४ प्रथमचरणे (स्वदेशे परदेशे च) ज्ञान (जाति) तथा (सदा).

(१) मत्स्य. २१५।९२ व्रजि (व्राजि) नियो (वियो) ; विध. २।२४।६५-६६ विदि (वित) त्सकान् (त्सितान्) रांश्चारान् राजा (रान्राजा चारान्).

(२) मत्स्य. २१५।९३ ; विध. २।२४।६६-६७ सुभा (च भा) उत्तरार्धे (द्वयोः संवादमाज्ञाय संदध्यान्नृपतिस्ततः ॥).

(३) मत्स्य. २१५।९४ ; विध. २।२४।६७-६८ च (न) न्नियो (न्प्रयो).

(४) मत्स्य. २१५।९५ ; विध. २।२४।६८-६९ द्या रा (द्यद्रा) दर्शिता (दृष्टिता).

(५) मत्स्य. २१५।९६ ; विध. २।२४।६९-७० गुणान् । + (शुभानामशुभानां च विज्ञानं राम कर्मणाम् ।) तेषु यत्नपरो (तेष्वायत्तः सदा).

(६) अग्नि. २२०।२०-२२.

[1]चरः प्रकाशो दूतः स्यादप्रकाशश्चरो द्विधा ।
वणिक् कृषीवलो लिङ्गी भिक्षुकाद्यात्मकाश्चराः ॥

## कालिकापुराणम्

चारसंख्या, चारपरीक्षणीया अष्टवर्गाः अष्टादश विषयाश्च, चारभाषितश्रवणकालः, चाराः बहुलिङ्गिनः, चारदोषाः, चारगुणाः

[2]कृषिं दुर्गं च वाणिज्यं खड्गानां करसाधनम् ॥
आदानं सैन्यकरयोर्बन्धनं गजवाजिनोः ।
शून्ये सद्म सुखानां च योजनं सततं जनैः ॥
त्रयाणां सारसेतूनां बन्धनं चेति चाष्टमम् ।
एतदष्टसु वर्गेषु चारान् सम्यक् प्रयोजयेत् ॥
कार्याकार्यविभागाय चाष्टवर्गाधिकारिणाम् ।
अष्टौ चारान् नियुञ्जीयादष्टवर्गेषु पार्थिवः ॥
दश शून्येषु युञ्जीत क्रमतः शृणु तानिमे ।
स्वामी सचिवराष्ट्राणि मित्रं कोशो बलं तथा ॥
दुर्गं तु सप्तमं ज्ञेयं राज्याङ्गं गुरुभाषितम् ।
दुर्गयुक्तं चाष्टवर्गे चारान्नात्मनि योजयेत् ॥
तस्मादिमानि शेषाणि पञ्च चारपदानि च ।
शुद्धान्तेषु च पुत्रेषु सयूथादौ महानसे ॥
शत्रूदासीनयोश्चापि बलाबलविनिश्चये ।
अष्टादशसु चैतेषु चारान् राजा प्रयोजयेत् ॥
न यत्प्रकाशं जानीयात्तत्तच्चारैर्निरूपयेत् ।
निरूप्य तत्प्रतीकारमवश्यं छिद्रतश्चरेत् ॥
यथानियोगमेतेषां यो यो यत्रान्यथा चरेत् ।
ज्ञात्वा तत्र नृपश्चारैर्दण्डयेद्वा वियोजयेत् ॥
चारांस्तु मन्त्रिणा सार्धं रहस्ये संस्थितो नृपः ।
प्रदोषसमये पृच्छेत्तदानीमेव साधयेत् ॥
स्वपुत्रे चाथ शुद्धान्ते ये तु चारा महानसे ।
नियुक्तास्तान्मध्यरात्रे पृच्छेत्स्वेऽपि च मन्त्रिणि ॥
एतांश्चारान् स्वयं पश्येन्नृपतिर्मन्त्रिणा विना ।
अन्यांस्तु मन्त्रिणा सार्धं निरूप्य प्रदिशेत्फलम् ।
नैकवेशधरश्चारो नैको नोत्साहवर्जितः ॥
संस्तुतो न हि सर्वत्र नातिदीर्घो न वामनः ।
सततं न दिवाचारी न रोगी नाप्यबुद्धिमान् ।
न वित्तविभवैर्हीनो न भार्यापुत्रवर्जितः ॥
कार्यश्चारो नृपतिना तत्त्वगुह्यविनिर्णये ।
अनेकवेशग्रहणक्षमं भार्यासुतैर्युतम् ॥
बहुदेशवचोभिज्ञं पराभिप्रायवेदकम् ।
दृढभक्तं प्रकुर्वीत चारं शक्तमसाध्वसम् ॥

## कामन्दकीयनीतिसारः

चारगुणाः

[1]तर्केङ्गितज्ञः स्मृतिमान् मृदुर्लघुपरिक्रमः ।
क्लेशायाससहो दक्षश्चरः स्यात्प्रतिपत्तिमान् ॥

(१) यथा दूतादरिविमर्शनं तथा चरादपीति चरविकल्प उच्यते पञ्चविंशत्या श्लोकः । तत्र चरः किंगुणः स्यादित्याह– तर्केङ्गितज्ञ इत्यादि । तर्कः ऊहः, गूढवस्तूत्प्रेक्षणमिति यावत् । इङ्गितं अन्यथावृत्तिः । मृदुः अनुद्भटः । स हि अनुपलक्षितो भवति । लघुपरिक्रमः शीघ्रगमनक्षमः । प्रतिपत्तिमान् भयस्खलितेषु आशु प्रतिविधाता । जम.

(२) चरलक्षणमाह– तर्केति । तर्कः ऊहः ; येन अनुक्तमपि ऊह्यते, इङ्गितं आकारस्य लक्षणम्, तत् जानातीति तर्केङ्गितज्ञः । स्मृतिमान् अविस्मरणशीलः । मृदुः अनिष्ठुरवचनः । लघुपरिक्रमः त्वरितगतिः । क्लेशायाससहः क्षुधातृष्णादिकृतक्लेशान् बहुपरिश्रमजनितायासान् च सहते यः सः । दक्षः कुशलः, शीघ्रकारी च । प्रतिपत्तिमान् प्रत्युत्पन्नमतिः अनालोचितोत्तरदानकुशल इत्यर्थः । ईदृशः चरः गूढपुरुषः स्यात् । उनिसा.

चारकर्म जगन्मतसंकलनम्, राजा चारचक्षुः

[2]तपस्विलिङ्गिनो धूर्ताः शिल्पपण्योपजीविनः ।
चराश्चरेयुः परितः पिबन्तो जगतां मतम् ॥

---

(१) अग्नि. २४१।१२.
(२) कालिका. ८७।५५–७१.

(१) कानी. १३।२६.
(२) कानी. १३।२७ ; नीम. ५८ शिल्पपण्यो (पण्यशिल्पो) मतम् (मनः) ; उनिसा. लिङ्गिनो (व्यञ्जना) शिल्पपण्यो (पण्यशिल्पो).

(१) तस्य व्यापारमाह– तपस्वीत्यादि । तापसलिङ्गित्वं शिल्पपण्योपजीवित्वं च संचरणोपायः । धूर्ताः परातिसंधानचतुराः । परितः पिबन्तः विदन्तः । विशेयुः नृपतेः सकाशमिति संबन्धः । जम.

(२) चराणां वेशमाह– तपस्विव्यञ्जना इति । तपस्विनः प्रव्रजिताः, ते इव व्यज्यन्ते । 'तपस्विलिङ्गिनः' इत्यपि पाठः । धूर्ताः चतुराः । पण्यशिल्पोपजीविनः पण्यानि विक्रेयवस्तूनि शिल्पानि कारुकर्मादीनि च उपजीवन्ति ये ते । तादृशाश्चराः परितः समन्तात् द्वादशराजमण्डलेषु जगतां जगन्निवासिनां मतं अभिप्रायं पिबन्तः हृदयस्थं कुर्वाणाः चरेयुः । उनिसा.

**[1]निर्गच्छेयुर्विशेयुश्च सर्ववार्ताविदोऽन्वहम् ।**
**चराः सकाशं नृपतेश्चक्षुर्दूरचरं हि ते ॥**

(१) निर्गच्छेयुः तस्यैव सकाशादित्यर्थः । अन्वहं प्रतिदिनम् । चक्षुर्दूरचरं हि ते । इतरत्तु चक्षुरर्वाक्चरम् । जम.

(२) सर्ववार्ताविदः चराः अन्वहं प्रतिदिनं नृपतेः सकाशात् निर्गच्छेयुः तत्र विशेयुश्च । हि यतः ते चराः दूरतरं दूरवर्ति चक्षुः । राज्ञामिति शेषः । उनिसा.

**[2]सूक्ष्मसूत्रप्रचारेण पश्येद्वैरिविचेष्टितम् ।**
**स्वपन्नपि हि जागर्ति चारचक्षुर्महीपतिः ॥**

(१) सूक्ष्मसूत्रप्रचारेणेति । चारेणेति शेषः । पटे हि ऊयमानं सूत्रं संचरत् सूक्ष्मत्वान्नोपलभ्यते, तस्येव प्रचारः अस्येति विग्रहः । जम.

(२) सूक्ष्मं परैरनुपलक्षितं सूत्रं गूढतरपरवृत्तान्तानां सूचनम्, तस्य प्रचारेण प्रकाशहेतोः अरिचेष्टितं पश्येत् । हि यस्मात् चारचक्षुर्महीपतिः स्वपन्नपि निद्रां गच्छन्नपि जागर्ति । चारचक्षुषा जगद्वृत्तान्तं प्रत्यक्षीकरोतीत्यर्थः । उनिसा.

(१) कानी. १३।२८ ; नीम. ५८ पू.

(२) कानी. १३।२९ ; नीम. ५८ त्रप्र ( त्रं हि ) वैरिवि ( द्विविध ).

**[1]विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः ।**
**राजा चारैर्जगत्कृत्स्नं व्याप्नुयाल्लोकसंमतैः ॥**

नभस्वान् वायुः । चेष्टितैः गतिभिः । जगत् कृत्स्नं व्याप्नुयात् तन्मतपरिच्छित्तये । लोकसंमतैरिति । यस्य यद्देशभाषादिषु अभिरतिरस्ति तस्य तदीयदेशादितया संमतैः । जम.

**[2]चारचक्षुर्नरेन्द्रस्तु संपतेत्तेन भूयसा ।**
**अनेनासंपतन्मौढ्यात्पतत्यन्धः समेऽपि हि ॥**

(१) तेन भूयसा चरसंज्ञकेन चक्षुषा प्रभूततरेण । तेन असंपतन्, किंतु मांसचक्षुषैव प्रवर्तते, स न कृत्स्नलोकतत्त्वापरिज्ञानात् मूढः अन्धः अधः पतति न पश्यति समेऽपि स्थले । (वाय ?) विषममार्गे (सताम् ?) किंपुनरित्यर्थात् । जम.

(२) नरेन्द्रः चारचक्षुः चाराः एव चक्षुः यस्य तादृशः स्यात् । भूयसा तेन चक्षुषा संपतेत् संचरेत् । तेन चारमयेण चक्षुषा निर्णीय सर्वं कुर्यादिति भावः । मौढ्यात् मूढतया अनेन चारचक्षुषा असंपतन् असंचरन् राजा समेऽपि समस्थलेऽपि पतति । यतः सः अन्धः चारचक्षुर्विहीनः । उनिसा.

चारेण वैरिचेष्टितानि ज्ञेयानि

**[3]सर्वसंपत्समुदयं सर्वावस्थाविचेष्टितम् ।**
**चारेण द्विषतां विद्यात्तद्देशप्रार्थनादि च ॥**

(१) वैरिविचेष्टितमिति सामान्येनोक्तं विशेषेणाऽऽह– सर्वसंपत्समुदयमिति । सर्वेषां अमात्यादीनां संपदं समुदयं च कोशम् । सर्वावस्थाविचेष्टितं सर्वासु व्ययमानव्यवस्थासु विचेष्टितम् । तद्देशप्रार्थनादि चेति । आदिशब्दात् अर्थकोशप्रार्थनम् । जम.

(२) चरेण प्रेरितगूढपुरुषेण द्विषतां सर्वसंपत्समुदयं कोषदण्डजाभ्युदयादिकं सर्वावस्थासु च विचेष्टितं

(१) कानी. १३।३० ; नीम. ५८ चारै ( चरै ) मतैः ( मतेः )

(२) कानी. १३।३१ मौढ्यात् ( मार्गात् ); जम. मौढ्यात् ( मूढः ).

(३) कानी. १३।३२ ; उनिसा. चारेण ( चरेण ).

उद्यमः( ? मं ) तद्देशप्रार्थनानि च तद्देशवासिनां अभिप्रेतानि च विद्यात् । उनिसा.

द्विविधश्चारः प्रकाशः अप्रकाशश्च, प्रकाशो राजदूतः

'प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः ।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते ॥

( १ ) यथा चरेण विद्यात् तथा दूतेनापि, तस्यापि चरत्वादित्याह– प्रकाश इति । अयं अनन्तरोक्तः अप्रकाशः । प्रकाशः दूतः यः प्रागुक्तः सोऽपि चरः परचर्यासु चरतीति कृत्वा । जम.

( २ ) प्रसङ्गात् दूतस्यापि चरत्वं स्थापयन्नाह– प्रकाश इति । प्रकाशः प्रकटः । अप्रकाशः प्रच्छन्नः । अप्रकाशोऽयमुद्दिष्टः तपस्विव्यञ्जनादिभिः आच्छादितराजपुरुषत्वः । प्रकाशो दूत उच्यते । दूतोऽपि सर्ववार्ताविद्भवति । चरति मण्डलान्तराणीति चरः । उनिसा.

'चरेण प्रचरेत्प्राज्ञः सूत्रेणर्त्विगिवाध्वरे ।
दूते संधानमायत्तं चरे चर्या प्रतिष्ठिता ॥

( १ ) सूत्रेणेति कात्यायनीयादियज्ञसूत्रेण । दूते संधानमायत्तम् , प्राधान्येन तस्य संधिविग्रहनियुक्तत्वात् । इतरत् आनुषङ्गिकं कर्म वेदितव्यम् । चरे चर्या प्रतिष्ठिता । अप्रकाशे चरे परप्रचारज्ञानं निश्चितम् । जम.

( २ ) चरेण गूढपुरुषेण राजा प्रचरेत् पृथ्वीलाभपालनाद्यर्थं व्यवहरेत् अध्वरे सूत्रेण वेदोक्तवाक्येन ऋत्विगिव । दूते संधानमायाते चरेण दूते संधानं प्राप्ते इत्यर्थः , चरचर्या चरत्वं प्रतिष्ठिता । दूते इति शेषः । उनिसा.

वणिगादयश्चाराः संचाराश्च

'संस्थानवत्यः संस्थाश्च कार्याः कार्यसमृद्धये ।
तिष्ठेयुर्यासु संचाराः परचर्योपवेदिनः ॥

( १ ) कानी. १३।३३; नीम. ५८ उच्यते (इष्यते).

( २ ) कानी. १३।३४ ; उनिसा. त्प्राज्ञः ( द्राजा ) मायत्तं चरे चर्या ( मायाते चरचर्या ).

( ३ ) कानी. १३।३५ ; नीम. ५८ ( एतैर्ज्ञेयास्तु संचाराः सर्वे नान्योन्यवेदिनः ॥ ) उत्त. ; उनिसा. समृ (प्रसि) यासु ( यत्र ) चतुर्थचरणे ( परिचर्याववाहिनः ).

( १ ) अप्रकाशाश्चराः संस्थानामानश्च सन्तीत्याह – संस्थानवत्य इत्यादि । संस्थानं वेषश्चरितं च, तदुपेताः संस्थाः चराः कार्याः । संचाराः वक्ष्यमाणाः । जम.

( २ ) संस्थानं एकस्मिन् प्रदेशे अवस्थितिः, तद्वत्यः संस्थाः कार्यसंसिद्धये कार्याः । तथा च कौटिल्यः – ' दुर्गेषु वणिजः संस्था दुर्गान्ते सिद्धतापसाः ' ( कौ. १।१२ ) इति । एवं संस्थाः अवस्थानार्थं आश्रया इत्यर्थः । यत्र संचाराः चराः तिष्ठेयुः परिचर्याववाहिनः परिचर्या लभमानाः । ' तिष्ठेयुर्यत्र संचाराः परिचर्याववाहिनः ' इत्यत्र ' तिष्ठेयुः पार्श्वसंचाराः परिचर्योपवादिनः ' इति मुद्रितपाठः । उनिसा.

'वणिक् कृषीवलो लिङ्गी भिक्षुकोऽध्यापकस्तथा ।
संस्थाः स्युश्चारसंस्थित्यै दत्तदायाः सुखाशयाः ॥

(१) किंसंस्थानाः संस्थाः स्युरित्याह– वणिगित्यादि । वणिक् वैदेहकइतिद्वितीयनामा । कृषीवलः गृहपतिरितिद्वितीयनामा । लिङ्गी मुण्डो जटिलो वा तापसः । भिक्षुक इति कुत्सायां कन् , तस्य प्रव्रज्याप्रत्यवसितत्वात् । तस्योदास्थित इति द्वितीयं नाम । अध्यापकः छात्रवृत्त्या स्थितः । तस्य कापटिक इत्यपरं नाम । तथा चोक्तम्– ' गूढपुरुषानुत्पादयेत् कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्रितीक्ष्णरसदभिक्षुकीश्च ' ( कौ. १।११ ) इति । एषु पञ्चसु संचाराः संतिष्ठन्ते इति संस्थाः । यदाह– चारसंस्थित्यै इति । संचाराणां हि वैदेहकादिभिर्ग्रासाच्छादनादिसंपादनात् तैरपि तत्र प्रचारार्पणात् । दत्तदायाः कल्पितवृत्तयः । सुखाशया इति । आशयशब्दोऽत्र अवस्थाने वर्तते । सुखावस्थाना इत्यर्थः । तथाहि आशयाशो वह्निरुच्यते । अन्ये ' सुखाश्रयाः ' इति स्पष्टमेव पठन्ति । जम.

(२) चारसंस्थित्यै के संस्थाः स्युरित्याह– वणिगिति । वणिगिति वैदेशिकमात्रव्यञ्जकः । कृषीवलः कृषकः । लिङ्गी इति मठपतिव्यञ्जकः । भिक्षुकः सिद्धतापसव्यञ्जकः ।

( १ ) कानी. १३।३६ ; उनिसा. सुखा ( शुभा ).

अध्यापकः स्वाध्यायपरव्यञ्जकः । शुभाशयाः शुद्धचित्ताः, स्वामिभक्ता इत्यर्थः । दत्तदायाः भुक्तवेतनाः । एते चारसंस्थित्यै संस्थाः स्युः । 'वणिक्' इत्यत्र 'बालः' इति मुद्रितपाठो न समीचीनः । उनिसा.

**'स्वपक्षे परपक्षे च यावान् कश्चिद्विवक्षितः ।**
**सर्वस्मिंस्तत्र संचारास्तिष्ठेयुश्चित्तवेदिनः ॥**

(१) स्वपक्षे परपक्षे च स्वविषये परविषये च । यावान् कश्चिद्विवक्षितः कार्ययोगितया । तत्र कार्ययोगीनि अष्टादश तीर्थानि संभवन्ति । तद्यथा– मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसंनिधातृप्रदेष्टृनायकपौरव्यावहारिकपरिषदध्यक्षदण्डदुर्गान्तपालाटविकाः । तत्र सर्वस्मिंस्तिष्ठेयुः । जम.

(२) स्वपक्षे स्वमण्डले परपक्षे परमण्डले च मित्रोदासीनमध्यमेषु यावान् कश्चित् व्यवस्थितः यः कश्चित् विद्यते इत्यर्थः, तत्र प्रधानभूते सर्वस्मिन् चित्तवेदिनः अभिप्रायज्ञानकुशलाः संचाराः चराः तिष्ठेयुः । उनिसा.

**'तीक्ष्णः प्रव्रजिता चैव सत्री रसद एव च ।**
**एते प्रधानं संचाराः सर्वे नान्योन्यवेदिनः ॥**

(१) के पुनस्ते संचारा इत्याह– तीक्ष्ण इत्यादि । यः शूरस्त्यक्तात्मा * निस्त्रिंशः स तीक्ष्णः । तस्य प्राधान्येन शस्त्रव्यापारे नियोगः । प्रव्रजिता गृहीतलिङ्गा भिक्षुकी । सत्रं छद्मचरितम्, तेन आत्मच्छादनात् । वक्ष्यति च– 'सत्रं छद्म प्रकीर्तितम्' (कानी. १९।६९) इति । तदस्यास्तीति सत्री । स च स्त्रीपुंसलक्षणाद्यभिज्ञापदेशचारितया परान् विश्वासयति । रसदः विषस्य दाता । एते प्रधानं संचारयन्तीति संचाराः । सर्वे नान्योन्यवेदिन इति । संस्थाः संस्थान्तरवेदिनः संचाराश्च संचारान्तरवेदिनो न स्युः संवादपरिहारार्थम्, एकस्मिन् वा परिज्ञाते मा भूत् सर्वग्रहणमिति । जम.

(२) तीक्ष्ण इति संचारभेदानाह । तीक्ष्णः कठोरकर्मा मृदुतारहितो वा । प्रव्रजितः वानप्रस्थाश्रमलिङ्गधारी । सत्री याज्ञिकवेशवान् । 'सत्री' इत्यत्र 'छद्मी' इति क्वचित् पाठः । विशदः निर्मलचरितः । एते संचारा ज्ञेयाः । एते सर्वे च न अन्योन्यवेदिनः न परस्परं जानन्तीत्यर्थः । उनिसा.

चारद्वारा स्वपक्षपरपक्षचिकीर्षितं ज्ञेयम्

**'स्वपक्षे परपक्षे वा यो न वेद चिकीर्षितम् ।**
**जाग्रत्स्वरिषु सुप्तोऽसौ न भूयः प्रतिबुध्यते ॥**

(१) यो न वेद चिकीर्षितं तीर्थप्रणिहितैः संचारैः । जाग्रत्सु विजिगीषोः छिद्रान्वेषणतत्परेषु । सुप्तः निश्चिन्तः । न प्रतिबुध्यते न पुनश्चेष्टते, विनाशाघ्रातत्वात् । जम.

(२) चराणां संस्थानप्रयोजनमाह– स्वपक्ष इति । यो राजा स्वपक्षे स्वमण्डले परपक्षे परमण्डले च चिकीर्षितं कर्तुमीप्सितम्, विरुद्धमित्यर्थादापद्यते, न वेद न जानीयात् सः जाग्रदपि सुप्तः निरवधानः विरुद्धचिकीर्षितानभिज्ञ इत्यर्थः । स भूयो न प्रतिबुध्यते दीर्घनिद्रां प्राप्नोतीत्यर्थः । उनिसा.

साध्वसाधुज्ञानोत्तरं राज्ञः कर्तव्यम्

**'कारणाकारणक्रुद्धान् बुध्येत स्वपरिग्रहे ।**
**पापानकारणक्रुद्धान् तूष्णींदण्डेन साधयेत् ॥**

(१) तत्र स्वपक्षे विजिगीषोश्चरैः सह व्यापारमाह– कारणाकारणक्रुद्धानिति । विजिगीषोर्दोषेण वा क्रुद्धान् बुध्येत । सत्रिभिरिति शेषः । स्वपरिग्रहे स्वपक्षे ।

---

* निस्त्रिंशः निर्दयः ।

(१) कानी. १३।३७; उनिसा. द्विवक्षितः (व्यवस्थितः).

(२) कानी. १३।३८; उनिसा. जिता (जितः) रसद (विशद) प्रधानं (ज्ञेयास्तु), अयं श्लोकः 'चरेण प्रचरेत् प्राज्ञः' (कानी. १२।३४) इत्यादिश्लोकादूर्ध्वं पठितः.

(१) कानी. १३।३९; उनिसा. वा (च) जाग्रत्स्वरिषु सुप्तो (जाग्रदपि सुप्तो).

(२) कानी. १३।४०.

पापानिति दुष्टान् अकारणक्रुद्धान् तूर्णींदण्डेन साधयेत् तीक्ष्णैरुपांशु हन्यात् । अपापांस्तु कारणक्रुद्धान् कारणनिवृत्त्या परिक्लेशार्थहरणाभ्यां यथायोगं साधयेदित्यर्थोक्तम् । जम.

( २ ) गूढपुरुषैः विदितवृत्तान्तस्य विधेयमाह– कारणेति । कारणैः प्रतिश्रुतविषयस्य अप्रदानादिरूपकारणैः क्रुद्धान्, अथवा अकारणक्रुद्धान् जन्मान्तरशत्रून् बुध्येत जानीयात् । स्वपरिग्रहे स्वकीयभृत्यवर्गे पापान् दुष्टाशयान् अकारणक्रुद्धान् जन्मान्तरायातवैरान् तूर्णींदण्डेन साधयेत् उपांशुवधेन निपातयेदित्यर्थः । अकारणक्रोधसंभवोऽपि श्रूयते– 'मुनेरपि निरीहस्य स्वानि कर्माणि कुर्वतः । उद्यन्ते वै त्रयः पक्षा मित्रोदासीनशत्रवः ॥' इति वचनात् । उनिसा.

**[1]ये तु कारणतः क्रुद्धास्तान्वशीकृत्य संविशेत् ।**
**शमयेद्दानमानाभ्यां छिद्रमण्वप्यरेर्मुखम् ॥**

( १ ) तान् वशीकृत्य वक्ष्यमाणप्रकारेण संविशेत् सुप्यात् । निश्चिन्तः स्यादित्यर्थः । छिद्रं प्रकृतिदोषाः क्रोधलोभभयमानाख्याः । तच्च अरेः मुखं द्वारम्, तेन तस्य प्रवेशात् । तत् अल्पमपि उपेक्षितं अनर्थाय भवति । तत्र क्रुद्धं मानिनं च दानमानाभ्यां द्वियोगेन शमयेत् । शेषयोः शमनं वक्ष्यति । जम.

( २ ) ये तु कारणतः राजदोषात् क्रुद्धाः तान् दानमानाभ्यां शमयेत् उपशान्तक्रोधान् कुर्यात् । अनन्तरं पक्षपरिग्रहेण तान् वशीकृत्य तैः सह संवसेत् । 'छिद्रं चापि रिपोर्मुखम्' इत्यत्र 'छिद्रं च परिपूरयेत्' इति मुद्रितपाठः । उनिसा.

**[2]कण्टकान् मुखभङ्गेन राज्यस्य प्रशमं नयेत् ।**
**उद्युक्तः सामदानाभ्यां छिद्रं च परिपूरयेत् ॥**

( १ ) कण्टकान् राज्यस्येति संबन्धः । मुखभङ्गेन प्रधानवधेन, हते मुख्ये शेषाणां प्रशमनात् । छिद्रं च परिपूरयेदिति । भीतं लुब्धं च सामदानाभ्यां द्वियोगेन परितोषयेत् । जम.

( २ ) वञ्चका इव ते राज्यस्य राज्ञश्च पीडाकराः स्वामिद्रोहबुद्धयो राज्यकण्टकाः । तान् मुखभङ्गेन । यथा कण्टकः मुखभङ्गे कृते पीडां न जनयति तथा दण्डेन कण्टकत्वे त्याजिते तेऽपि दण्डभयात् न द्रोहबुद्धयो भवन्ति । उद्युक्तश्च सन् सामदानाभ्यां छिद्रं परिपूरयेत् । तथा च छिद्रं अण्वपि परिजनस्य भर्तरि क्रोधलोभादि रन्ध्रं अरेर्मुखं द्वारम् । तेन प्रविश्य अरिः अपकरोति । उनिसा.

**[1]अणुनाऽपि प्रविश्यारिश्छिद्रेण बलवत्तरम् ।**
**निःशेषं मार्जयेद्राज्यं यानपात्रमिवोदकम् ॥**

( १ ) बलवत्तरं ज्यायांसम् । मार्जयेत् नाशयेत् । जम.

( २ ) छिद्रपरिपूरणे प्रयोजनमाह– अणुनेति । अणुनाऽपि छिद्रेण रक्षाशैथिल्यादिना प्रविश्य बलवत्तरं शक्तित्रयेणापि दुर्जयं अरिं उदकं कर्तृ पानपात्रमिव निःशेषं अखिलं राष्ट्रं मज्जयेत् आपत्सागरे मग्नं कुर्यात् । विनाशयेदित्यर्थः । उनिसा.

छद्मना विविधलिङ्गधारिणां चाराणां वार्तासंग्रहरीतिः

**[2]जडमूकान्धबधिरच्छद्मानः पण्डकास्तथा ।**
**किरातवामनाः कुब्जास्तद्विधा ये च कारवः ॥**

( १ ) परपक्षे प्रणिहितानां व्यापारमाह– जडेत्यादि । जडादिच्छद्मानः पाषण्डकादयश्च अन्तःपुरप्रवेशानर्हाः अवि( ? शार्हाः वि )श्वास्याश्च भवन्ति । तद्विधा ये च कारवः । वामनकुब्जादिरूपाः वर्धक्यादयः । जम.

( २ ) जडाः मूकत्वबधिरत्वाभ्यां युक्ताः, मूकाः वक्तुमशक्ताः, अन्धाः दर्शनशक्तिरहिताः, बधिराः

---

( १ ) कानी. १३।४१ ; उनिसा. चतुर्थचरणे ( छिद्रं चापि रिपोर्मुखम् ).

( २ ) कानी. १३।४२ ; उनिसा. कण्ट ( वञ्च ).

( १ ) कानी. १३।४३ ; उनिसा. श्यारिश्छि ( श्यारिं छि ) मार्जयेद्राज्यं यान ( मज्जयेद्राष्ट्रं पान ).

( २ ) कानी. १३।४४ ; नीम. ५८ पण्ड ( षण्ड ), किरात ( किराता ).

श्रवणशक्तिरहिताः, तत् छद्म विद्यते येषां ते । पण्डकाः । अत्रापि छद्मशब्दो द्रष्टव्यः । किराताः, वामनाः क्षुद्रावयवाः, कुब्जाः वक्रावयवाः, कारवः सुवर्णकारादयः । एते अलक्षिताः सन्तः निजस्य शत्रोश्चापि अन्तःपुरगतां वार्तां आहरेयुः इति परश्लोकेनान्वयः । उनिसा.

[1]भिक्षुक्यश्चारणा दास्यो मालाकाराः कलाविदः ।
अन्तःपुरगतां वार्तां निर्हरेयुरलक्षिताः ॥

( १ ) चारणाः नटनर्तकादयः । कलाविदः चित्रादिकुशलाः । ये छत्रादिधारणेन अन्तःपुरप्रवेशार्हाः । जम.

( २ ) भिक्षुकाः भिक्षुकव्यञ्जनाः परिव्राजकपरिव्राजिकादयः चारणाः नाट्याचार्यादयः दास्यः नानाकार्यकलाविदश्च अन्तःपुरगतां प्रवृत्तिं आहरेयुः । उनिसा.

[2]छत्रव्यजनभृङ्गारयानवाहनधारिणः ।
महामात्रा बहिर्वार्तां विद्युरन्ये च तद्विधाः ॥

( १ ) महामात्राः हस्तिशिक्षानियुक्ताः । अन्ये च तद्विधाः रथारोहाश्वारोहादयः महाश्वपतिकादयः । जम.

( २ ) छत्रं आतपत्रम्, व्यजनं चामरादिकम्, भृङ्गारः जलपात्रम्, यानं शिबिकादि, वाहनं हस्त्यश्वादि, एतद्धारिणः । एते तद्विधाः अन्ये च महामात्रबहिर्वार्ताम्– महती मात्रा गौरवं येषां ते महामात्राः मन्त्रिपुरोहितादयः, तेषां बहिर्वार्ता बाह्यविवरणं विदुः । उनिसा.

[1]अन्नव्यञ्जनकर्तारः कल्पकाः स्नापकास्तथा ।
प्रसाधका भोजकाश्च गात्रसंवाहका अपि ॥

( १ ) अन्नव्यञ्जनकर्तारः भक्तसूपकादिरन्धकाः । कल्पकाः नापिताः । गात्रसंवाहकाः मर्दकाः । जम.

( २ ) सूदाः पाचकाः । सुगमम् । उनिसा.

[2]जलताम्बूलकुसुमगन्धभूषणदायकाः ।
कर्तव्या रसदा ह्येते ये चान्येऽभ्याशवर्तिनः ॥

( १ ) दायकशब्दो जलादिभिः प्रत्येकं योज्यः । अभ्याशवर्तिनः समीपवर्तिनः । जम.

( २ ) रसशब्देन विषः अभिधीयते । ये चान्ये समीपवर्तिनः तेषामपि विषदानं सुकरम् । 'कर्तव्या रसदा ह्येते' इत्यत्र 'कर्तव्याश्च सदा ह्येते' इति मुद्रितपुस्तकस्य पाठः । उनिसा.

[3]संज्ञाभिर्म्लेच्छितैर्लेख्यैराकारैरिङ्गितैरपि ।
संचारयेयुरव्यग्राश्चाराश्चर्यां परस्परम् ॥

( १ ) अन्तःपुरगतानां बहिरनिष्कासे प्रसारसंचारणोपायमाह– संज्ञाभिरिति । पूर्वसंकेतितवीणादिवाद्यसंज्ञाभिः । म्लेच्छितैः अव्यक्तवचनैः । लेख्यैः गूढैः । आकारैः मुखनयनादिविकारैः । इङ्गितैः चेष्टितैः । संचारयेयुः परस्परमिति संबन्धः । अव्यग्राः सावधानाः । जम.

( २ ) चराणां वार्तासंग्रहोपायमाह– संज्ञाभिरिति । मुद्रितैः शरीरभङ्गीभिः । 'मुद्रितैः' इत्यत्र 'मूर्च्छितैः' इति च पाठः । लेख्यैः लिखिताक्षरैः, आकारैः शरीरावयवैः, इङ्गितैः लक्षणविशेषैः, अव्यग्राः अनाकुलाः

---

( १ ) **कानी.** १३।४५; **नीम.** ५८ भिक्षुक्य (भिक्षुका) मालाकाराः ( नानाकार्य ) वार्तां निर्ह ( वार्तामाह ) ; **उनिसा.** नीमवत् .

( २ ) **कानी.** १३।४६ ; **नीम.** ५८ रिणः ( रिणा ) विद्यु ( विन्द्यु ) तद्विधाः ( संगताः ); **उनिसा.** मात्रा ( मात्र ) विद्यु ( विदु ).

( १ ) **कानी.** १३।४७ ; **नीम.** ५८ अन्न ( सूदा ) स्नाप ( सूचि ) ; **उनिसा.** अन्न ( सूदा ).

( २ ) **कानी.** १३।४८ ; **नीम.** ५८ रसदा ( वशगा) ऽभ्याश ( न्यास ).

( ३ ) **कानी.** १३।४९ ; **उनिसा.** म्लेच्छि ( मुद्रि ) श्चारा ( श्चरा ).

चराः गूढपुरुषाः चर्या महामात्रादीनां आचरणानि परस्परं सुसंचरेयुः आहरेयुः । उनिसा.

'समापिबन्तो जगतां मतानि
जलानि भूमेरिव सूर्यपादाः ।
अनेकशिल्पाध्ययनप्रवीणाः
चाराश्चरेयुर्बहुलिङ्गिरूपाः ॥

(१) संक्षेपेण च व्यवहारमाह— अनेकशिल्पाध्ययनप्रवीणाः विश्वासार्थं बहुविधलिङ्गिरूपाः । जम.

(२) अनेकशिल्पाध्ययनप्रवीणाः बहुलिङ्गिरूपाः चराः सूर्यपादाः भूमेः जलानीव जगतां जगन्निवासिनां मतानि समापिबन्तः आहरन्तः सन्तः चरेयुः । उनिसा.

'येन प्रकारेण परानुपेयात्
परावरज्ञः स्वसमृद्धिहेतोः ।
तमात्मनि स्वस्थमतिश्च तज्ज्ञैः
प्रयुज्यमानं च परेण विद्यात् ॥

(१) मुण्डजटिलादिरूपेण यथा विजिगीषुः संचारान् प्रणिधत्ते तथा परोऽपीति तत्प्रतिविधानं श्लोकेनाऽऽह— येन प्रकारेणेति । तापसव्यञ्जनादिप्रणिधानप्रकारेण । परावरज्ञः परात्मवित् । तत्प्रकारेण स्वस्थमतिः सावधानः । तज्ज्ञैः तत्प्रकारज्ञैः स्वचरैः विद्यादिति संबन्धः । जम.

(२) विजिगीषौ परप्रयुक्तगूढपुरुषादिसंधानप्रतीकारार्थमाह— येनेति । परापरज्ञः— परं शास्त्रम्, अपरं लोकवृत्तम्, तदुभयं जानातीति परापरज्ञः, स्वच्छमतिः निर्मलचित्तः विजिगीषुः आत्मसमृद्धिहेतोः येन प्रकारेण गूढपुरुषनियोगादिना परान् शत्रून् उपेयात् अभिसंदध्यात्, परेण शत्रुणा आत्मनि नियुज्यमानं तं प्रकारं तज्ज्ञैः गूढपुरुषैः विद्यात् जानीयात् । ज्ञात्वा प्रतिविदध्यादिति भावः । 'नियुज्यमानम्' इत्यत्र 'वियुज्यमानम्' इति मुद्रितपाठः । उनिसा.

(१) कानी. १३।५० ; उनिसा. चारा (चरा).
(२) कानी. १३।५१ ; उनिसा. वर (पर) स्वस्थ (स्वच्छ) प्रयु (नियु).

## शुक्रनीतिः

लोकानां स्वदोषगुणभाषितानि चारैः श्रुत्वा राजा संबोध्यः, लोकोक्तस्वदोषश्रवणे राज्ञा लोका न पीडनीयाः

*'स्वदुर्गुणश्रवणतो लोकानां परिपीडकः ॥
नृपो यदा तदा लोकः क्षुभ्यते भिद्यते यतः ।
गूढचारैः श्रावयित्वा स्ववृत्तं दूषयन्ति के ॥
भूषयन्ति च कैर्भावैरमात्याद्याश्च तद्विदः ।
मयि कीदृक् च संप्रीतिः केषामप्रीतिरेव वा ॥
ममागुणैर्गुणैर्वाऽपि गूढं संश्रुत्य चाखिलम् ।
चारैः स्वदुर्गुणं ज्ञात्वा लोकतः सर्वदा नृपः ॥
सुकीर्त्यै संत्यजेन्नित्यं नावमन्येत वै प्रजाः ।
लोको निन्दति राजंस्त्वां चारैः संश्रावितो यदि ॥
कोपं करोति दौरात्म्यादात्मदुर्गुणलोपकः ।
सीता साध्व्यपि रामेण त्यक्ता लोकापवादतः ॥
शक्तेनापि हि न धृतो दण्डोऽल्पो रजके क्वचित् ।
ज्ञानविज्ञानसंपन्नो राजदत्ताभयोऽपि च ॥
समक्षं वक्ति न भयाद्राज्ञो गुर्वपि दूषणम् ।
स्तुतिप्रिया हि वै देवा विष्णुमुख्या इति श्रुतिः ॥
किं पुनर्मनुजा नित्यं निन्दाजः क्रोध इत्यतः ॥

प्रजाधिकारिशत्रुसैनिकबान्धवादीनां मतं चारद्वारा श्रुत्वा लेखनीयम्

'इङ्गितं चेष्टितं यत्नात्प्रजानामधिकारिणाम् ॥
प्रकृतीनां च शत्रूणां सैनिकानां मतं च यत् ।
सभ्यानां बान्धवानां च स्त्रीणामन्तःपुरे च यत् ॥
शृणुयाद्गूढचारेभ्यो निशि चाऽऽत्ययिके सदा ।
सावधानमनाः सिद्धशस्त्रास्त्रः संलिखेच्च तत् ॥

* एतदादिश्लोकाष्टकस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १४४०–१४४१) द्रष्टव्यम् ।

(१) शुनी. १।१३०–१३८.
(२) शुनी. १।३३४–३४०.

किंच, सावधानमनाः सतर्कः सन् सदा प्रतिदिनं निशि रात्रौ तथा सिद्धानि शस्त्राणि अस्त्राणि च यस्य तथोक्तः शस्त्रास्त्रव्यापारे सुनिपुणः सन् आत्ययिके आसन्नविपदि च गूढचारेभ्यः गुप्तचरेभ्यः प्रजानां अधिकारिणां भृत्यवर्गाणां प्रकृतीनां प्रधानपुरुषाणां च यत् इङ्गितं मनोभावः तथा चेष्टितं आचरणं यत्, शत्रूणां विपक्षाणां सैनिकानां च मतं अभिप्रायः यत्, सभ्यानां राजसभासदां बान्धवानां च मतं यत्, तथा अन्तःपुरे स्त्रीणां मतं च यत् तत् सर्वं यत्नात् शृणुयात् संलिखेच्च पत्रारूढं च कुर्यात्। शुनीटी.

असत्यवादी चारो दण्ड्यः, चारशोधनम्,

चाररक्षणम्

**असत्यवादिनं गूढचारं नैव च शास्ति यः ।**
**स नृपो म्लेच्छ इत्युक्तः प्रजाप्राणधनापहः ॥**

यः नृपः असत्यवादिनं मिथ्यावादिनं गूढचारं नैव शास्ति नैव दण्डयति स प्रजानां प्राणान् धनानि च अपहन्तीति तथोक्तः, अत एव म्लेच्छः दुर्जातिविशेषः इति उक्तः कथितः। तादृशचारवचनप्रत्ययेन प्रजानां सर्वनाशकरणादिति भावः। शुनीटी.

**वर्णितपास्विसंन्यासिनीचसिद्धस्वरूपिणम् ।**
**प्रत्यक्षेण च्छलेनैव गूढचारं विशोधयेत् ॥**

वर्णी ब्रह्मचारी, तपस्वी वानप्रस्थः तृतीयाश्रमीत्यर्थः, वा संन्यासी चतुर्थाश्रमी, नीचसिद्धः कपटसिद्धपुरुषः, तेषां स्वरूपिणं कपटसिद्धपुरुषादिवेशधारिणं गूढचारं प्रत्यक्षवत् दृश्यमानेन छलेन व्याजेन विशोधयेत्। कौशलेन तस्मात् अलीकवादं बहिष्कुर्यादित्यर्थः। तेषामेव तत्कौशलज्ञानमस्तीति राज्ञा तेषां साहाय्येन गूढचारशुद्धिः कर्तव्येति भावः। शुनीटी.

**विना तच्छोधनात्तत्त्वं न जानाति च नाऽऽप्यते ।**
**अशोधकनृपान्नैव बिभ्यत्यनृतवादने ॥**

तच्छोधनात् तेषां गूढचाराणां शोधनात् विना राजा तत्त्वं याथातथ्यं न जानाति न ज्ञातुं शक्नोति। न च तत्त्वं आप्यते प्राप्यते, राज्ञेति शेषः। ते च चाराः अशोधकनृपात् उक्तप्रकारेण यः न शोधयति तस्मान्नृपादित्यर्थः, अनृतवादने असत्यभाषणे नैवं बिभ्यति भयं प्राप्नुवन्तीत्यर्थः। शुनीटी.

**प्रकृतिभ्योऽधिकृतेभ्यो गूढचारं सुरक्षयेत् ॥**

प्रकृतिभ्यः अधिकृतेभ्यः राजपुरुषेभ्यः गूढचारं सुरक्षयेत्। गूढचारः प्रकृत्यादीनां राजनि अनुरागविरागौ गूढं कथयति। तेन ज्ञातेन तेषां गूढचारं प्रति विद्वेषो जायते। अतस्तस्य अनिष्टसंभवः। तस्मात् तं सुरक्षयेत्। यथा ते तं प्रति नानिष्टमाचरन्तीति फलितार्थः। शुनीटी.

चारगुणाः

**[१]शत्रुप्रजाभृत्यवृत्तं विज्ञातुं कुशलाश्च ये ।**
**ते गूढचाराः कर्तव्या यथार्थश्रुतबोधकाः ॥**

ये शत्रूणां प्रजानां भृत्यानां च वृत्तं चरितं विज्ञातुं कुशलाः निपुणाः, तथा यथार्थश्रुतस्य सत्यश्रुतस्य, न तु मिथ्याभूतस्य, बोधकाः निवेदकाः, ते गूढचाराः गुप्तचाराः कर्तव्याः। शुनीटी.

## नीतिवाक्यामृतम्

चारकर्तव्यानि, चारगुणाः, चारप्रयोजनम्, चारभृतिः,
चारत्रयस्यैकमत्यं प्रमाणम्

**[२]स्वपरमण्डलकार्याकार्यावलोकने चराश्चक्षूंषि क्षितिपतीनाम् ॥**

अथ चारसमुद्देशो व्याख्यायते। अथ चरा यादृशा भवन्ति तदाह– स्वपरेति। राज्ञां चक्षूंषि दृष्टिविषयाः चराः। कस्मिन् विषये? स्वमण्डलपरमण्डलकार्याकार्यावलोकने। स्वमण्डले च यत्कार्यं परमण्डले च यत्कार्यं तस्य यदवलोकनं दर्शनं तत् चरैः राजानो जानन्ति, न स्वयं जानन्तीति। तथा च गुरुः– ' स्वमण्डले परे चैव कार्याकार्यं च यद्भवेत्। चरैः पश्यन्ति यद्भूपाः सुदूरमपि संस्थिताः ॥ '। नीवाटी.

(१) शुनी. २।१८८.
(२) नीवा. १४।१–३७.

**अलौल्यममान्द्यममृषाभाषित्वमभ्यूहकत्वं चारगुणाः ॥**

अथ चारगुणानाह– अलौल्यमिति । चराणां ये गुणास्ते किंविशिष्टाः ? अलौल्यं संतोषस्तावत् । तथा अमान्द्यं अनालस्यं नीरोगता वा । तथा अमृषाभाषित्वं सत्यवचनम् । अभ्यूहकत्वं ऊहेन युक्तत्वम् । एते गुणाः येषां चाराणां भवन्ति ते प्रभोः कार्याणि साधयन्ति । तथा च भागुरिः– 'अनालस्यमलौल्यं च सत्यवादित्वमेव च । ऊहकत्वं भवेद्येषां ते चराः कार्यसाधकाः ॥'। नीवाटी.

**तुष्टिदानमेव चाराणां वेतनम् ॥**

अथ चाराणां यद्वेतनं तदाह– तुष्टिदानमिति । वेतनं वृत्तिः । केषाम् ? चाराणाम् । राज्ञः सकाशाद्भवति तुष्टिदानं कार्ये साधिते प्रभूतं देयमिति । नीवाटी.

**ते हि तल्लोभात्स्वामिकार्येषु त्वरन्ते ॥**

अथ चारास्तुष्टिदानेन लब्धेन स्वामिकार्येषु यथा वर्तन्ते तदाह– त इति । ते चराः तुष्टिदानेन लब्धेन हि स्फुटं तल्लोभात् तल्लौल्यात् त्वरन्ते सत्वराः कार्याणि कुर्वन्ति । तथा च गौतमः– 'स्वामितुष्टिप्रदानं ये प्राप्नुवन्ति समुत्सुकाः । ते तत्कार्याणि सर्वाणि चराः सिद्धिं नयन्ति च ॥'। नीवाटी.

**असति संकेते त्रयाणामेकवाक्ये संप्रत्ययः ॥**

अथ चाराणां वाक्यस्य यथा स्वामिनः प्रत्ययो भवति तदाह– असतीति । तदा कार्यसंप्रत्ययो ज्ञेयः । तथा च भागुरिः– 'असंकेतेन चाराणां यदा वाक्यं प्रतिष्ठितम् । त्रयाणामपि तत्सत्यं विज्ञेयं पृथिवीभुजा ॥'। नीवाटी.

**अनवसर्पो हि राजा स्वैः परैश्चातिसंधीयते ॥**

अथ चाररहितो राजा यादृग्भवति तदाह– अनवसर्प इति । अनवसर्पो राजा चरैर्विना यो राजा सोऽनवसर्पः । सोऽतिसंधीयते आक्रम्यते । कैः ? स्वैः आत्मीयैः परैश्च । तस्माद्राज्ञा स्वपक्षे विपक्षे च चाराः प्रेषणीयाः । तथा च चारायणः– 'वैद्यसंवत्सराचार्यैश्चारैर्ज्ञेयं निजं बलम् । वामाहिर(? तु)ण्डिकोन्मत्तैः परेषामपि भूभुजाम् ॥'। नीवाटी.

**किमस्त्ययामिकस्य निशि कुशलम् ॥**

अथ चाररहितस्य नृपस्य यद्भवति तदाह– किमिति । यामिकशब्देन प्राहरिक उच्यते । अयामिकस्य अप्राहरिकस्य पुरुषस्य किमस्ति कुशलम् ? अपि तु क्षेमं नास्तीति । कस्याम् ? निशि । एवं भूपस्यापि चाररहितस्य कुशलं नास्तीति । तथा च गर्गः– 'यथा प्राहरिकैर्बाह्यं रात्रौ क्षेमं न जायते । चारैर्विना न भूपस्य तथा ज्ञेयं विचक्षणैः ॥'। नीवाटी.

छात्रकापटिकादयः चतुस्त्रिंशत्संख्याकाश्चाराः

**छात्रकापटिकोदास्थितगृहपतिवैदेहिकतापसकिरातयमपट्टिकाहितुण्डिकशौण्डिकशौभिकपाटच्चरविटविदूषकपीठमर्दनर्तकगायकवादकवाग्जीवनगणकशाकुनिकभिषगैन्द्रजालिकनैमित्तिकसूदारालिकसंवाहकतीक्ष्णक्रूररसदजडमूकबधिरान्धच्छद्माव (? नः )स्थायियायिभेदेनावसर्पवर्गः ॥**

अथ चाराः के भवन्ति तानाह– छात्रेति । चतुस्त्रिंशत्प्रमाणा एते भूभुजां चराः । एतैः स्वपक्षः परपक्षश्च ज्ञातव्यः । नीवाटी.

**परमर्मज्ञः प्रगल्भश्छात्रः ॥**

**यं कमपि समयमास्थाय प्रतिपन्नच्छात्रवेषकः कापटिकः ॥**

**प्रभूतान्तेवासी प्रज्ञातिशययुक्तो राज्ञा परिकल्पितवृत्तिरुदास्थितः ॥**

**गृहपतिकवैदेहिकौ ग्रामकूटश्रेष्ठिनौ ॥**

**बाह्यव्रतविद्याभ्यां लोकदम्भहेतुस्तापसः ॥**

**अल्पाखिलशरीरावयवः किरातः ॥**

**यमपट्टिको गलत्रोटिकः प्रतिगृहं चित्रपटदर्शी वा ॥**

**अहितुण्डिकः सर्पक्रीडाप्रसरः ॥**

**शौण्डिकः कल्यपालः ॥**

**शौभिकः क्षपायां पटावरणेन रूपदर्शी ।**

**पाटच्चरश्चौरो बन्दीकारो वा ॥**

व्यसनिनां प्रेषणानुजीवो विटः ॥
सर्वेषां प्रहसनपात्रं विदूषकः ॥
कामशास्त्राचार्यः पीठमर्दः ॥
गीताङ्गपटप्रावरणेन नृत्यवृत्त्याजीवी नर्तको नाटकाभिनयरङ्गनर्तको वा ॥
रूपाजीववृत्त्युपदेष्टा गायकः ॥
गीतप्रबन्धगतिविशेषवादकचतुर्विधातोद्यप्रचारकुशलो वादकः ॥
वाग्जीवी वैतालिकः सूतो वा ॥
गणकः संख्याविद्दैवज्ञो वा ॥
शाकुनिकः शकुनवक्ता ॥
भिषगायुर्वेदविद्वैद्यः शस्त्रकर्मविच्च ॥
ऐन्द्रजालिकस्तन्त्रयुक्त्या मनोविस्मयकरो मायावी वा ॥
नैमित्तिको लक्ष्यवेधी दैवज्ञो वा ॥
महासाहसिकः सूदः ॥
विचित्रभक्ष्यप्रणेताऽऽरालिकः ॥
अङ्गमर्दनकलाकुशलो भारवाहको वा संवाहकः ॥
द्रव्यहेतोः कृच्छ्रेण कर्मणा यो जीवितविक्रयी स तीक्ष्णोऽसहनो वा ॥
बन्धुस्नेहरहिताः क्रूराः ॥
अलसाश्च रसदाः ॥

एतेषां यद्व्याख्यानं तदाचार्येणापि कृतं लिख्यते— परममेश इति । जडमूकबधिरान्धाः प्रसिद्धाः । परमेते कपटेन जडमूकबधिरान्धाः, न स्वभावतः । एतेषां मध्यादेके स्थायिनः स्वपक्षे योजनीयाः, अन्ये यायिनः परपक्षे योग्यतानुसारेण । तथा च शुक्रः— 'स्थायिनो यायिनश्चारा यस्य सर्पन्ति भूपतेः । स्वपक्षे परपक्षे वा तस्य राज्यं विवर्धते ॥' । नीवाटी.

## युक्तिकल्पतरुः

स्वराष्ट्रे परराष्ट्रे च चाराणां नियोजनं प्रयोजनं च, चारगुणाः, अनेकचारमतं प्रमाणम्, प्रकाशः अप्रकाशश्च द्विविधश्चारः

[1]विवस्वानिव तेजोभिर्नभस्वानिव वेगतः ।
राजा चरेज्जगत्सर्वं प्राप्नुयाल्लोकसंमतीः ॥
तर्केङ्गितज्ञः स्मृतिमान् स्वीयभावप्रकाशकः ।
क्लेशायाससहो दक्षः सर्वत्र भयवर्जितः ॥
सुभक्तो राजसु तथा कार्याणां प्रतिपत्तिमान् ।
नृपो निहन्याच्चारेण परराष्ट्रं विचक्षणः ॥
कालज्ञान्मन्त्रकुशलान् सांवत्सरचिकित्सकान् ।
तथाऽन्यानपि युञ्जीत सामर्थ्यान् शुद्धचेतसः ॥
संक्रुद्धांश्च तथाऽलुब्धान् दृष्टार्थांतत्त्वभाषिणः ।
पाषण्डिनस्तापसादीन् परराष्ट्रे नियोजयेत् ॥
स्वदेशपरदेशज्ञान् सुशीलान् सुविचक्षणान् ।
वार्ताहर्यान् बहूंश्चैव चराणां विनियोजयेत् ॥
नैकस्य वचने राजा चारस्य प्रत्ययं वहेत् ।
द्वयोः संबन्धमाज्ञाय तद्युक्तं कार्यमारभेत् ॥
तस्माद्राजा प्रयुञ्जीत चरान् बहुमुखान् बहून् ।
*नीरता वामनाः कुब्जास्तद्विधा ये च कारवः ॥
भिक्षुक्यश्चारणा दास्यो मालाकार्यः कलाविदः ।
अन्तःपुरगतां वार्तां निर्हरेयुरलक्षिताम् ॥
प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधो मतः ।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञकः ॥

* 'नीरताः क्लैब्यं गताः निर्गतं रतं रमणं यस्मादिति वा' इति टिप्पणी मुद्रितपुस्तके ।

(१) युक. ९-१०।६२-७१.

# दूतः

—०—

## महाभारतम्

अष्टौ सप्त वा दूतगुणाः, अन्यथावादी दूतो वध्यः, दूतो बन्धनानर्हः, अकृतार्थेन दूतेन अन्यपक्षस्य पूजाभोजनादीनि अग्राह्याणि

[1]अस्तब्धमक्लीबमदीर्घसूत्रं
सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं
दूतं वदन्त्यष्टगुणोपपन्नम् ॥

अस्तब्धं दर्पशून्यम् । अक्लीबं सामर्थ्यवन्तम् । अदीर्घसूत्रं क्षिप्रकारिणम् । सानुक्रोशं सदयम् । श्लक्ष्णं मञ्जुलम् । अहार्यं अभेद्यम् । अरोगजातीयं रोगलेशशून्यम् । उदारं युक्तियुक्तं महार्थं च वाक्यं यस्य तम् । दूतं प्रेष्यम् । नीटी.

[2]यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥

*[3]इदं तु सुमहत्कार्यं शृणु मे यत्समर्थितम् ।
परायणं पाण्डवानां नियंस्यामि जनार्दनम् ॥

[4]तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा ।
पाण्डवाश्च विधेया मे स च प्रातरिहेष्यति ॥

[5]ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः ।
मैवं वोचः प्रजापाल नैष धर्मः सनातनः ॥

[6]दूतश्च हि हृषीकेशः संबन्धी च प्रियश्च नः ।
अपापः कौरवेयेषु कथं बन्धनमर्हति ॥

[1]ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम् ।
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ॥

[2]ततो दुर्योधनः कृष्णमब्रवीद्राजसंसदि ॥

[3]कस्मादन्नानि पानानि वासांसि शयनानि च ।
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन ॥

[4]स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ॥

[5]कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव हि ।
कृतार्थं मां सहामात्यस्त्वमर्चिष्यसि भारत ॥

[6]न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि ।
दूतस्य हन्ता निरयमाविशेत्सचिवैः सह ॥

[7]यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥

[8]कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान् दूतः स्यात्सप्तभिर्गुणैः ॥

---

* दुर्योधनस्योक्तिरियम् ।

(१) भा. ५।३७।२५ ; भामु. ५।३७।२७.

(२) भा. ५।७०।७ ; भामु. ५।७२।७.

(३) भा. ५।८६।१३ ; भामु. ५।८८।१३ यंस्यामि (यच्छामि).

(४) भा. ५।८६।१४ ; भामु. ५।८८।१४ रिहे (रिहै).

(५) भा. ५।८६।१७ ; भामु. ५।८८।१७.

(६) भा. ५।८६।१८ ; भामु. ५।८८।१८ कथं बन्धन (स कथं बन्ध).

(१) भा. ५।८९।११ ; भामु. ५।९१।११–१२.

(२) भा. ५।८९।१२ ; भामु. ५।९१।१२ द्राज (त्कुरु).

(३) भा. ५।८९।१३ ; भामु. ५।९१।१३–१४.

(४) भा. ५।८९।१६ ; भामु. ५।९१।१६.

(५) भा. ५।८९।१८ ; भामु. ५।९१।१८ हि (ह). मात्यस्त्व (मात्यं स).

(६) भा. १२।८६।२५ ; भामु. १२।८५।२६ ; राक. ३३ न्नृपो जातु (न्महीपालो) तृतीयचरणे (दूतहन्ता तु नरक) ; राप्र. १८९ राकवत्.

(७) भा. १२।८६।२६ ; भामु. १२।८५।२७ ; राप्र. १८९.

(८) भा. १२।८६।२७ ; भामु. १२।८५।२८ शील (कुल).

## वाल्मीकिरामायणम्

दूतगुणाः दूतभाषणगुणाश्च

[3]कच्चिज्जानपदो विद्वान्दक्षिणः प्रतिभानवान् ।
यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥
[2]सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव काङ्क्षमाणस्य ममान्तिकमुपागतः ॥
तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिंदम ॥
नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ।
नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥
नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किंचिदपशब्दितम् ॥
न मुखे नेत्रयोर्वाऽपि ललाटे च भ्रुवोस्तथा ।
अन्येष्वपि च गात्रेषु दोषः संविदितः कचित् ॥
अविस्तरमसंदिग्धमविलम्बितमद्रुतम् ।
उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥
संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥
अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाऽऽराध्यते चित्तमुद्यतासेररेरपि ॥
एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु ।
सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥
एवं गुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः ।
तस्य सिध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः ॥

अकृतार्थेन दूतेन भोजनादिसत्कारः अग्राह्यः

*[1]न शक्यमकृतार्थेन दूतेन हरिपुंगव ।
प्रतिग्रहीतुं शक्यं वै भोक्तुं संवेष्टुमेव च ॥

* लक्ष्मणस्य सुग्रीवं प्रति उक्तिरियम् ।

(१) वारा. २।११४।४७ उजानपदो (ह्यानवशो); वाराकु. २।१००।३६.

(२) वाराकु. ४।३।२७–३६.

(३) वारा. ४।२७।६ इत्यस्य पूर्वार्धानन्तरं टिप्पण्यां पठितेषु श्लोकेष्वन्तर्भूताविमौ श्लोकौ.

सदा कृतार्थो दूतः स्याद्भर्तुरर्थविनिश्चये ।
प्रतिग्राह्यस्तदा तेन सत्कारश्च कपीश्वर ॥

दूतदोषाः

[1]भूताश्चार्था विपद्यन्ते देशकालविरोधिताः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥
अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥

दूता अवध्याः

[2]तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥
[3]वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ॥
[4]तं रक्षोधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् ।
विदित्वा चिन्तयामास कार्यं कार्यविधौ स्थितः ॥
[5]निश्चितार्थस्ततः साम्नाऽऽपूज्य शत्रुजिदग्रजम् ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥
[6]क्षमस्व रोषं त्यज राक्षसेन्द्र
प्रसीद मद्वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञा
दूतस्य सन्तो वसुधाधिपेन्द्राः ॥
[7]राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर कपेरस्य प्रमापणम् ॥

(१) वाराकु. ५।२।३९–४०.

(२) वाराकु. ५।५२।१.

(३) वारा. ५।४८।१ प्रथमचरणे (आज्ञप्ते तु वधे तस्य) दौत्यं (वाक्यं); वाराकु. ५।५२।२.

(४) वारा. ५।४८।२ तं रक्षो (राक्षसा) तच्च (तद) विधौ स्थितः (विदां वरः); वाराकु. ५।५२।३.

(५) वारा. ५।४८।३ र्थस्ततः साम्नाऽऽपूज्य (र्थं ततः साम्ना पूज्यं) विशारदः (विदां वरः); वाराकु. ५।५२।४.

(६) वाराकु. ५।५२।५.

(७) वारा. ५।४८।४ धर्म (वृत्त) वृत्तेश्च (वृत्ते च) तव चा (सर्वथाऽ); वाराकु. ५।५२।६.

[1]धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ।
परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥
गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः ।
ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥
तस्मात्प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद ।
युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ।
रोषेण महताऽऽविष्टो वाक्यमुत्तरमब्रवीत् ॥
न पापानां वधे पापं विद्यते शत्रुसूदन ।
तस्मादेनं वधिष्यामि वानरं पापचारिणम् ॥
अधर्ममूलं बहुरोषयुक्त-
मनार्यजुष्टं वचनं निशम्य ।
उवाच वाक्यं परमार्थतत्त्वं
विभीषणो बुद्धिमतां वरिष्ठः ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र
धर्मार्थयुक्तं वचनं शृणुष्व ।
दूता न वध्याः समयेषु राजन्
सर्वेषु सर्वत्र वदन्ति सन्तः ॥
[2]असंशयं शत्रुरयं प्रवृद्धः
कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो
दूतस्य दृष्टा बहवो हि दण्डाः ॥
[3]वैरूप्यमङ्गेषु कशाभिघातो
मौण्ड्यं तथा लक्षणसंनिपातः ।
एतान् हि दूते प्रवदन्ति दण्डान्
वधस्तु दूतस्य न नः श्रुतोऽपि ॥

[1]साधुर्वा यदि वाऽसाधुः परैरेष समर्पितः
ब्रुवन्परार्थं परवान्न दूतो वधमर्हति ॥

[2]दूता वध्या न दृष्टा हि राजशास्त्रेषु रावण ।
दूतेन भवितव्यं हि यथाभिहितवादिना ॥

[3]सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ।
विरूपकरणं दृष्टं ताडनं चापि शास्त्रतः ॥

[4]शास्त्रविद्वाक्यकुशलः सुहृत्सप्रतिभः शुचिः ।
कुले महति चोत्पन्नो दूत एष सतां मतः ॥

[5]वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ।
न दूता घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ॥

यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते ।
अनुक्तवादी दूतः सन् स दूतो वधमर्हति ॥

[6]राजसंश्रयवश्यानां प्रेष्यतां चापि कुर्वताम् ।
दूतानां चाऽऽप्तवाक्यानां नात्र दोषः प्रकल्प्यते ॥

---

(१) वाराकु. ५।५२।७–१३.

(२) वारा. ५।४८।५ प्रव (तु व) दृष्टा बहवो हि दण्डाः (दण्डा बहवः प्रदिष्टाः); वाराकु. ५।५२।१४; राक. ३४ न दूतवध्यां (दूता न वध्याः) दृष्टा बहवो हि दण्डाः (दण्डा बहवः प्रदिष्टाः) उत्त.; राप्र. १८९ न दूतवध्यां (दूतानवध्यान्) शेषं राकवत्.

(३) वारा. ५।४८।६ भिघातो (निपातो) मौण्ड्यं (यौग्यः) चतुर्थचरणे (दूतस्य दण्डो हि वधोऽप्रशस्तः); वाराकु. ५।५२।१५; राक. ३४ चतुर्थचरणे (दूतस्य दण्डो हि वधो न दृष्टः); राप्र. १८९ राकवत्.

(१) वारा. ५।४८।२१ द्वितीयचरणे (परैः संप्रेषितो ह्ययम्) दूतो वध (वधं प्राप्तु); वाराकु. ५।५२।२१.

(२) वारा. ५।५६।१२७; वाराकु. ५।५८।१४८. दूता वध्या (दूतवध्या) रावण (राक्षस) भवितव्यं हि यथाभिहित (वेदितव्यं च यथार्थं हित).

(३) वारा. ५।५६।१२८; वाराकु. ५।५८।१४९. ताडनं चापि (न वधोऽस्तीति).

(४) वारा. ५।८२।१६.

(५) वाराकु. ६।२०।१७–१८.

(६) वारा. ६।९४।३५; वाराकु. ६।११६।३९. (राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया । विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥).

## कौटिलीयमर्थशास्त्रम्

दूतस्य प्रस्थानकालीनानि संदेशनकालीनानि च कर्तव्यानि

'उद्धृतमन्त्रो दूतप्रणिधिः । अमात्यसंपदोपेतो निसृष्टार्थः, पादगुणहीनः परिमितार्थः, अर्धगुणहीनः शासनहरः ॥

'दूतप्रणिधिः' इति सूत्रम् । दूताः नाम निसृष्टार्थाः परिमितार्थाः शासनहराः इति त्रिप्रकाराः, तेषां प्रणिधानं परेषु संदेशदानपूर्वं प्रेषणमिहाभिधीयते इति सूत्रार्थः ।

उद्धृतेति । दूतप्रणिधिः दूतस्य प्रणिधानं उद्धृतमन्त्रः उद्धृतः निर्धारितार्थः मन्त्रः यस्मिन् स तथाभूतः भवति । मन्त्रार्थनिर्धारणोत्तरकालकार्यं दूतसंप्रेषणमित्यर्थः । एवं च मन्त्रकथनान्तरं दूतसंप्रेषणप्रस्तावः संगत इत्यभिप्रायः । पूर्वोक्तजानपदत्वाद्यमात्यसंपद्युक्तो दूतो निसृष्टार्थः, तस्मात् पादगुणप्रत्यवरः परिमितार्थः, अर्धगुणप्रत्यवरः शासनहर इत्याह— अमात्यसंपदेत्यादि । श्रीमूला.

सुप्रतिविहितयानवाहनपुरुषपरिवापः प्रतिष्ठेत । शासनमेवं वाच्यः परः, स वक्ष्यत्येवम्, तस्येदं प्रतिवाक्यम्, एवमतिसंधातव्यमित्यधीयानो गच्छेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत् । अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य चावेक्षेत । दुर्गराष्ट्रप्रमाणं सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत । पराधिष्ठानमनुज्ञातः प्रविशेत् । शासनं च यथोक्तं ब्रूयात्प्राणाबाधेऽपि दृष्टे । परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं वाक्यपूजनमिष्टपरिप्रश्नं गुणकथासङ्गमासन्नमासनं सत्कारमिष्टेषु स्मरणं विश्वासगमनं च लक्षयेत्तुष्टस्य, विपरीतमतुष्टस्य । तं ब्रूयात् दूतमुखा वै राजानस्त्वं चान्ये च । तस्मादुद्यतेष्वपि शस्त्रेषु यथोक्तं वक्तारः । तेषामन्तावसायिनोऽप्यवध्याः, किमङ्ग पुनर्ब्राह्मणाः ? परस्यैतद्वाक्यम् । एष दूतधर्म इति ॥

दूतकरणीयमाह— सुप्रतिविहितेति । सुप्रतिविहितं सम्यक् सज्जीकृतं यानं शिबिकान्दोलिकादि वाहनं अश्वादि पुरुषाः शुश्रूषादिकर्मकराः परिवापः शय्यास्तरणगोणिकादिश्च यस्य सः सुप्रतिविहितयानवाहनपुरुषपरिवापः, तथाभूतः सन् प्रतिष्ठेत दूतः शत्रुविषयं प्रति । शत्रुः स्वामिसंदेशमित्थं बोधनीयः, बोधितः स एवं वदिष्यति, तथा वदत ईदृशं प्रत्युत्तरं वक्तव्यम्, शत्रोरतिसंधानमित्थं कर्तव्यमित्येवंजातीयमर्थं पुनः पुनरनुसंदधानो गच्छेदित्याह— शासनमित्यादि । अटवीति । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च अटवीपालान्तपालपुरमुख्यराष्ट्रमुख्यैश्च प्रतिसंसर्गं सख्यं गच्छेत्, दूत्यायाऽऽत्मप्रयाणं तेभ्यो निवेद्य वा गच्छेदित्यर्थः । परविषयं गतस्य कर्माऽऽह—अनीकेति । आत्मनः परस्य च अनीकस्थानयुद्धप्रतिग्रहापसारभूमीः अनीकस्य सैन्यस्य निवेशयोग्यभूमिं युद्धस्वीकारार्हभूमिं अपसरणानुकूलभूमिं च अवेक्षेत जानीयात् । दुर्गराष्ट्रप्रमाणं दुर्गराष्ट्रयोरियत्ताम्, सारवृत्तिगुप्तिच्छिद्राणि— सारं धान्यस्वर्णाद्युत्पत्तिं वृत्तिं जनानां जीविकां गुप्तिं रक्षां छिद्रं शत्र्वाक्रमणद्वारं च उपलभेत । सारवृत्तिशब्दस्थाने सारवत्ताशब्दपाठः कामन्दकेन नूनं दृष्टः । अत एव स आह— 'सारवत्तां च राष्ट्रस्य दुर्गे तद्गुप्तिमेव च । छिद्रं च शत्रोर्जानीयात्' (कानी. १२।७) इति । पराधिष्ठानं शत्रुगृहं अनुज्ञातः प्रविशेत् परानुज्ञानानन्तरं प्रविशेत् । शासनं स्वामिसंदेशं च प्राणाबाधेऽपि दृष्टे यथोक्तं ब्रूयात् प्राणभयेऽप्युपस्थिते स्वस्वामिसंदिष्टप्रकारं कथयेत्, न तु स्वप्राणरक्षार्थमप्यन्यथा कथयेदित्यर्थः । परतुष्टातुष्टत्वस्य तदनुगुणव्यवहारार्थं लक्षणीयत्वादाह— परस्येत्यादि । वाग्वदनदर्शनेषु प्रसन्नत्वम्, दूतोच्यमानवाक्यादरः, स्वामिगतसर्वकुशलप्रश्नः, स्वामिगुणप्रस्तावेऽवधानदानम्, दूतान्तिकोपवेशनम्, दूतविषयो बहुमानः, स्वादुभोग्यफलादिसंविभागे दूतस्मरणम्, दूतं प्रति विश्वासोपगम इत्येतैश्चिह्नैः शत्रोस्तुष्टत्वं विपरीतैरतुष्टत्वं च विदित्वा व्यवहरेदित्यभिप्रायः ।

(१) कौ. १।१६.

तमित्यादि । तं ब्रूयात् अतुष्टं परं वक्ष्यमाणरीत्या ब्रूयात् । दूतमुखाः दूतो मुखं स्वाभिप्रायनिवेदनद्वारं येषां ते । तस्मात् दूतानां स्वस्वामिवदनस्थानीयत्वात् । उद्यतेष्वपि यथार्थमुद्धृतेष्वपि सत्सु । वक्तारः अर्थात् दूताः । तेषां दूतानां मध्ये । अन्तावसायिनोऽपि चण्डाला अपि । किमङ्ग पुनर्ब्राह्मणाः ? ब्राह्मणा अवध्या इति किमु वक्तव्यमित्यर्थः । श्रीमूला.

दूतस्य कर्तव्यानि अकर्तव्यानि च

**वसेदविसृष्टः, पूजया नोत्सिक्तः, परेषु बलित्वं न मन्येत, वाक्यमनिष्टं सहेत, स्त्रियः पानं च वर्जयेत्, एकः शयीत। सुप्तमत्तयोर्हि भावज्ञानं दृष्टम् । कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं रागापरागौ भर्तरि रन्ध्रं च प्रकृतीनां तापसवैदेहकव्यञ्जनाभ्यामुपलभेत । तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा तेषामसंभाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत । उपलब्धस्योपजापमुपेयात् । परेण चोक्तः स्वासां प्रकृतीनां परिमाणं नाऽऽचक्षीत । सर्वं वेद भवानिति ब्रूयात्, कार्यसिद्धिकरं वा ॥**

अविसृष्टः वसेत् यावद्विसर्जनम् । पूजया नोत्सिक्तः गर्वितो न भवेत् । परेषु बलित्वं न मन्येत अहं बलवानिति मतिं शत्रुसकाशे न प्रकाशयेत् । अनिष्टं वाक्यं परोक्तं सहेत । स्त्रियः पानं मद्यसेवनं च वर्जयेत् । एकः असहायः शयीत । पानवर्जनैकशयनयोः कारणमाह– हि यस्मात् सुप्तमत्तयोः भावज्ञानं स्वप्नप्रलापमदप्रलापाभ्यां हृदयवेदनं दृष्टं प्रत्यक्षानुभूतम् । कृत्यपक्षेति । कृत्यपक्षोपजापं कृत्यवर्गस्य भेदनम्, अकृत्यपक्षे गूढप्रणिधानं तीक्ष्णरसदसत्रादिप्रयोगम्, प्रकृतीनां अमात्यादीनां भर्तरि रागापरागौ रन्ध्रं च द्वेषस्थानं च तापसवैदेहकव्यञ्जनाभ्यां संस्थाभ्यां उपलभेत । तयोरिति । तयोरन्तेवासिभिः तापसवैदेहकयोः शिष्यैः चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा भिषग्वेषैः पाषण्डवेषैः उभयवेतनैश्च पूर्वोक्तैर्वा चारं उपलभेत परचर्या विद्यात् । तेषामसंभाषायां तापसव्यञ्जनादीनां संभाषणासौकर्ये याचकमत्तोन्मत्तसुप्तप्रलापैः तेषां भैक्षकालभवैः प्रलापैः मत्तसाधारणैः उन्मत्तसाधारणैः सुप्तसाधारणैश्च प्रलापैः पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा पुण्यस्थानेषु नदीतीरजपमण्डपमुनिगृहादिषु देवगृहेषु च गूढपुरुषान्योन्यसंपातयोग्येषु भित्त्यर्पिताभिरालेख्यविशेषसंज्ञाभिरक्षरविशेषसंज्ञाभिर्वा चारमुपलभेत । उपलब्धस्य परवृत्तस्य उपजापं उपेयात् उपलब्धपरवृत्तानुरूपं भेदोपायं प्रयुञ्जीत यथापेक्षम् । परेण उक्तश्च पृष्टश्च स्वासां आत्मीयानां प्रकृतीनां स्वाम्यमात्यादीनां परिमाणं इयत्तां सारफल्गुतां वा नाऽऽचक्षीत । तत्र किमुत्तरं प्रतिपद्येत ? तत्राऽऽह– सर्वमिति । भवान् सर्वं वेद, चारचक्षुषा भवता न किंचिदत्राविदितमस्तीत्यर्थः, इति ब्रूयात् स्तुयात् । यदि स्तुत्या परो न परितुष्यति तदा किं कर्तव्यम् ? तत्राऽऽह– कार्यसिद्धिकरं वा ब्रूयात् परिमाणम्, यावत् उच्यमानं दूतकार्यसिद्धिकरं स्यात् तावत् ब्रूयात्, न कृत्स्नमित्यर्थः । श्रीमूला.

शत्रुणा कार्यसिद्धौ उपरुध्यमानस्य दूतस्य कर्तव्यानि

**कार्यस्य सिद्धावुपरुध्यमानस्तर्कयेत्– किं भर्तुर्मे व्यसनमासन्नं पश्यन्, स्वं वा व्यसनं प्रतिकर्तुकामः, पार्ष्णिग्राहासारावन्तःकोपमाटविकं वा समुत्थापयितुकामः, मित्रमाक्रन्दं वा व्यापादयितुकामः, स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः, संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकामः, सस्यकुप्यपण्यसंग्रहं दुर्गकर्म बलसमुत्थानं वा कर्तुकामः, स्वसैन्यानां वा व्यायामदेशकालावाकाङ्क्षमाणः, परिभवप्रमदाभ्यां वा, संसर्गानुबन्धार्थी वा मामुपरुणद्धीति । ज्ञात्वा वसेदपसरेद्वा । प्रयोजनमिष्टमवेक्षेत वा । शासनमनिष्टमुक्त्वा बन्धवधभयादविसृष्टोऽप्यपगच्छेदन्यथा नियम्येत ॥**

यदि परो दूतोपक्षिप्तं संध्यादिकार्यमुचितकालेऽप्यसाधयन् 'स्थीयतां तावदिह त्वया कंचित् कालम्, अभिमतं ते करिष्यामि' इत्युक्त्वा दूतं स्वपुरे चिरमुपरुन्धे तदा दूतः किं कुर्यात् ? तत्राऽऽह– कार्यस्येत्यादि ।

'कार्यस्यासिद्धौ' इति पाठे 'परः कार्यं च दूतस्य न साधयति, प्रतिजिगमिषुं च दूतं न विसर्जयति' इति रीत्या अवतरणिका बोद्धव्या । तर्कयेत् उपरोधकारणं विकल्प्य चिन्तयेत् । तर्कणप्रकाराः किं भर्तुरित्यादयः । परः मे भर्तुः स्वामिनः व्यसनं प्रकृतिगतं आसन्नं संनिकृष्टं पश्यन् मां उपरुणद्धि किम् ? न विसर्जयति किम् ? एवमुत्तरत्र प्रथमान्तेषु क्रिया योज्या । अथवा स्वं व्यसनं प्रतिकर्तुकामः प्रशमयितुमिच्छुः । अथवा पार्ष्णिग्राहासारौ– पार्ष्णिग्राहः शत्रुमित्रभूतः स्वामिशत्रुः, आसारः शत्रुमित्रमित्रम्, तौ समुत्थापयितुकामः स्वामिद्रोहार्थमुद्योजयितुकामः । अथवा अन्तःकोपं मन्त्र्यादिप्रकोपं उपजापादिना उत्पादयितुकामः । अथवा आटविकं युद्धार्थमुद्योजयितुकामः । अथवा मित्रं स्वामिनः पुरस्तान्मित्रम्, आक्रन्दं स्वामिनः पृष्ठतोमित्रं वा व्यापादयितुकामः हन्तुकामः । अथवा स्वं परतो विग्रहं परेण विग्रहमुपस्थितम्, स्वं अन्तःकोपं मन्त्र्यादिप्रकोपम्, स्वं आटविकं कुपितं प्रतिकर्तुकामः । अथवा संसिद्धं सुकरतयोपनतं मे भर्तुः यात्राकालं शत्र्वभियानकालं अभिहन्तुकामः । सस्यकुप्यपण्यसंग्रहं कर्तुकामः आरब्धे युद्धे सस्यादिपरिक्षयो मा मां बाधिष्टेति । अथवा दुर्गकर्म भिन्नस्फुटितदुर्गसंस्कारं कर्तुकामः । अथवा बलसमुत्थानं सैन्यवृद्धिं सैन्यस्य तत इतो विप्रकीर्णस्य समाहरणं वा कर्तुकामः । अथवा स्वसैन्यानां व्यायामदेशकालौ आकाङ्क्षमाणः शत्रुषु विक्रमणयोग्यौ देशकालावुदीक्षमाणः मामुपरुणद्धि किम् ? अथवा परिभवप्रमदाभ्यां परिभवेन मन्त्र्याद्यन्तः कोपोत्पादनादिजनितेनानादरेण प्रमदेन सहसंवासप्रीत्या च मामुपरुणद्धि किम् ? अथवा संसर्गानुबन्धार्थी– संसर्गः विवाहादिनिमित्तः संबन्धः तदर्थी, अनुबन्धः दोषोत्पादः तदर्थी च मां उपरुणद्धि किम् ? इति एवं रीत्या तर्कयेदिति संबन्धः । ज्ञात्वेति । ज्ञात्वा तर्कणपूर्वं कारणं निश्चित्य वसेत् स्नेहनिमित्तमुपरोधनमिति निश्चये सति, अपसरेद्वा अविसृष्टोऽपि अन्यथा निश्चये सति । अथवा इष्टं प्रयोजनं स्वाम्यर्थं अवेक्षेत स्वाम्यर्थसिद्धिमवेक्ष्य वसेत् । शत्रुपुरे एव वसन् स्वामिनं प्रति गूढसंदेशप्रेषणेन शत्रुदुरभिसंधीनां प्रतिविधानं कारयेदित्यभिप्रायः । शासनमिति । अनिष्टं शासनं शत्रुद्दिष्टं स्वामिसंदेशं उक्त्वा दूतः अविसृष्टोऽपि शत्रुणा बन्धवधभयात् आत्मनो बन्धनं वधं वा शत्रुः करिष्यतीति शङ्कया अपगच्छेत् । अन्यथा अनपगमने नियम्येत नियन्त्र्येत शत्रुणा । श्रीमूला.

दूतकर्माणि

**प्रेषणं संधिपालत्वं प्रतापो मित्रसंग्रहः ।**
**उपजापः सुहृद्भेदो दण्डगूढातिसारणम् ॥**
**बन्धुरत्नापहरणं चारज्ञानं पराक्रमः ।**
**समाधिमोक्षो दूतस्य कर्म योगस्य चाऽऽश्रयः ॥**

श्लोकद्वयेन दूतकर्म संगृह्णाति– प्रेषणमिति, बन्धुरत्नेति च । प्रेषणं शत्रुदेशगतागतं शत्रौ स्वामिशासननिवेदनार्थे स्वामिनि शत्रुदेशवृत्तान्तस्य स्वावगतस्य निवेदनार्थे च, संधिपालत्वं कृतसंधिरक्षणम्, प्रतापः यथापेक्षं शत्रौ विक्रमणम्, मित्रसंग्रहः, उपजापः कृत्यभेदनम्, सुहृद्भेदः, दण्डगूढातिसारणं दण्डस्य सेनायाः गूढानां तीक्ष्णरसदादीनां चाऽऽक्रमणम् । 'गूढदण्ड' इत्यपि पाठः । बन्धुरत्नापहरणं बन्धूनां रत्नानां च स्वीकरणम्, चारज्ञानं चाराणां गूढपुरुषाणां अनुष्ठानसौष्ठवपरिज्ञानम्, पराक्रमः अवसरे विक्रमणम्, समाधिमोक्षः संधिविश्वासार्थमाहितः पुत्रादिः समाधिः तस्य मोचनम्, योगस्य आश्रयश्च औपनिषदकोक्तस्य मारणादेः सेवनं च दूतस्य कर्म भवति । श्रीमूला.

**स्वदूतैः कारयेदेतत्परदूतांश्च रक्षयेत् ।**
**प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः ॥**

एतत् उक्तं सर्वं कर्म स्वदूतैः कारयेत्, अर्थात् राजा । प्रतिदूतापसर्पाभ्यां प्रतिदूतप्रतिचाराभ्यां दृश्यादृश्यैः रक्षिभिश्च दृश्यैः स्वदेशस्थैः अदृश्यैः शत्रुविषये तत्सेवकच्छद्मभिः रक्षिपुरुषैश्च परदूतान् रक्षयेच्च । यथा परदूताः स्वदेशे मित्रसंग्रहादिकर्म न कुर्युस्तथा तच्चेष्टितानि यत्नेन गवेषयेच्चेत्यभिप्रायः ।

श्रीमूला.

## वृद्धचाणक्यः

दूतगुणाः

[1]प्रवीणः प्रेक्षणे दक्षः परचित्तोपलक्षकः ।
स्फुटवाक्यस्तथा प्राज्ञ एष दूतो विधीयते ॥

## चाणक्यनीतिशास्त्रम्

दूतगुणाः

[2]मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥

## चाणक्यराजनीतिशास्त्रम्

दूतगुणाः

[3]प्रगल्भो बुद्धिमान् वक्ता परिवर्तोपलक्षकः ।
धीरो यथोक्तवादी च दूत इत्यभिधीयते ॥

## मनुः

दूतस्य सामान्या विशेषाश्च गुणाः

[4]दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥

(१) दूतस्यायमधिको गुणः इङ्गिताकारचेष्टज्ञता । परविषये राज्ञो मन्त्रिणां च संधित्सतां इङ्गितानि दूतस्य आदरेण संपरिग्रहः, विश्वसनम्, मुहुर्मुहुः संपूर्णतद्वाक्यस्य तस्य चाभिनन्दनम् । एतानि विपर्यस्तानि उपेक्षेत । आकारः शरीरवैकृत्यम्, म्लानिः, मुखस्य वर्णवैकृत्यम्, तूष्णींभावः, दीर्घोष्णनिश्वासता । एवमादिविकारैः दैन्यं सूचयति– अस्ति काचिदापदस्य, तेनायं विवर्ण इति । वाक्यवैशारद्यम्, शारीरसंस्कारः, प्रसन्नमुखता, एवमादि हर्षं सूचयति । शुचिः स्त्रीगतेऽर्थे गमनविशेषैः । यतः स्त्रीसंबन्धे मन्त्रभेदः परिभवश्च । मेधा.

(२) दूतं च दृष्टादृष्टार्थशास्त्रपारगम्, इङ्गितस्य अभिप्रायसूचकस्य वाकायव्यापारविशेषस्य आकारस्य च अभिप्रायसूचकस्य शरीरविकारस्य चेष्टायाश्च कवचायुधभोजनात्मिकायाः विज्ञातारम्, अर्थस्त्रीशौचादियुक्तम्, कुलीनं कुर्वीत । गोरा.

(३) इङ्गितं भावसूचकम् । चेष्टितं अक्षिनिकोचादि । आकारः ततोऽन्यो भावसूचकः वक्त्रारुण्यादिः । मवि.

(४) दूतं च दृष्टादृष्टार्थशास्त्रज्ञम्, इङ्गितं अभिप्रायसूचकं वचनस्वरादि, आकारः देहधर्मः मुखप्रसादवैवर्ण्यादिरूपः प्रीत्यप्रीतिसूचकः, चेष्टा करास्फालनादिक्रिया कोपादिसूचिका, तदीयतत्त्वज्ञम्, अर्थदानस्त्रीव्यसनाद्यभावात्मकशौचयुक्तम्, चतुरम्, कुलीनं कुर्यात् । * ममु.

(५) 'दूतस्तत्कुरुते' (मस्मृ. ७।६६) इति वक्ष्यमाणदूतस्य लक्षणमाह– दूतमिति द्वाभ्याम् । अधिकगुणाय सर्वविशारदं भावाभिज्ञम्, शास्त्रविशारदं –शास्त्रं प्रतिपत्तिहेतुः संस्कृतप्राकृतदेशभाषाधर्मशास्त्रकरपल्लवादि, तत्र विशारदं निपुणम्, 'द्वंद्वात् परम्' इति स्मरणात् । इङ्गिताकारचेष्टाज्ञं इङ्गिताकाराभ्यामेव चेष्टाज्ञं परचिकीर्षितज्ञम् । कुलोद्गतं कुलीनं दूतवंश्यं वा । मच.

(६) शुचिं अलोलुपम् । भाच.

[1]अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥

(१) अनुरक्तः अहार्यो भवति । दक्षः देशकालौ नातिक्रामति । स्मृतिमान् अमुषितस्मृतिः प्रसङ्गेन स्वामिसंदेशं कथयति । देशकालवित् देशकालौ ज्ञात्वा अन्यदप्यसंदिष्टं तत्कालयोग्यं कथयति । वपुष्मान् स्वाकृतिः प्रियदर्शनत्वात् निपुणमुचितं वक्ति ।

(१) वृचा. ४।९.

(२) चानी. १०४; चासा. १।६३.

(३) चाशा. ५।८.

(४) मस्मृ. ७।६३ ; गोरा. चेष्ट (चेष्टा); राक. ३३ ; ममु. गोरावत् ; रार. ४२ ; मच. गोरावत् ; राप्र. १८८ गोरावत् ; नीम. ४२ गोरावत्.

* राप्र. ममुव्याख्यानानुवादः ।

(१) मस्मृ. ७।६४; राक. ३३ ; रार. ४२ ; वीक. १।३२८ ; राप्र. १८८ ; नीम. ४२.

-वीतभीः । अनेन निपुणत्वमुच्यते । वाग्मी संदेशस्योत्तरे प्रतिवचनसमर्थो भवति । मेधा.

( २ ) यस्मात्– अनुरक्त इति । अनुरागवान् । -स्त्रीशौचयुक्तः मैथ्यर्थपरिहारार्थम् । चतुरः कालानतिक्रमार्थम् । स्मरणवान् समग्रसंदेशार्थम् । देशकालज्ञः तदनुरूपे व्यवहारार्थम् । स्वाकृतिः प्रियदर्शनेन आदेयवाक्यतत्त्वार्थम् । विगतभयः परुषसंदेशकथनार्थम् । वाग्मी संस्कृतविचित्राभिधायी उक्तिप्रत्युक्तिसामर्थ्यार्थम् । इत्येवंविधो दूतो राज्ञः प्रकर्षेण इष्यते । गोरा.

( ३ ) सामान्यतो दूतलक्षणमुक्त्वा प्रशस्तदूतलक्षणमाह– अनुरक्त इति । वपुष्मान् अधृष्यशक्तिः । मवि.

( ४ ) जनेषु अनुरागवान्, तेन प्रतिराजादेरपि अद्वेषविषयः । अर्थस्त्रीशौचयुक्तः, तेन धनस्त्रीदानादिना अभेद्यः । देशकालज्ञः, तेन देशकालौ ज्ञात्वा अन्यदपि संदिष्टं देशकालोचितमन्यथा कथयति । * ममु.

( ५ ) अनुरक्तः स्वराजनि । स्मृतिमान् उक्तानुसंधाता । वपुष्मान् सुंदरो बली वा । वीतभीः वधोद्यमेऽपि । मच.

(६) अयं च दूतः परराज्ये संधिविग्रहप्रसक्तौ तत्र प्रेषणाय । मत्स्यपुराणे पूर्वमुक्तस्तु‡ राजनिकटस्थित एव सर्वेषां कार्यकारकः । अत एवैतद्विषये महाभारते– ' न तु हन्यान्महीपालो दूतं कस्यांचिदापदि । दूतहन्ता तु नरकमाविशेत् सचिवैः सह ॥ यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः । यो हन्यात् पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ ' ( भामु. १२।८५।२६–२७ ) इति । श्रीरामायणेऽपि– ' दूतानवध्यान् प्रवदन्ति सन्तो दूतस्य दण्डा बहवः प्रदिष्टाः । वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्षणसंनिपातः । एतान् हि दूते प्रवदन्ति दण्डान् दूतस्य दण्डो हि वधो न दृष्टः ॥ ' ( वाराकु. ५।५२।१४–१५ ) इति । * राप्र. १८८–१८९

( ७ ) पूर्वश्लोकोक्तयोः शुचिदक्षत्वयोरत्र पुनरुक्तिः प्रशंसार्था । $ नीम. ४२

* शेषं गोरावत् ।

‡ ' यथोक्तवादी दूतः स्यात् ' (मत्स्य. २१५।१२–१३) इत्यादिश्लोकाभ्यामुक्त इत्यर्थः ।

दूतकर्माणि संधिविग्रहादीनि

**'अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया ।**
**नृपतौ कोशराष्ट्रे च दूते संधिविपर्ययौ ॥**

( १ ) उक्तानां दूतगुणानां संपादनप्रयत्ने प्रयोजनमाह– अमात्य इति । अमात्ये सेनापतौ दण्डः हस्त्यादिबलं आयत्तम्, तदिच्छया कार्येषु प्रवृत्तेः । दण्डे वैनयिकी । यो विनेयः स्वपरराष्ट्रगतः स दण्ड्यो यतः । विनयाश्रिता वैनयिकी क्रिया कार्यम् । नृपतौ कोशराष्ट्रे आयत्ते । संचयस्थानं कोशः, राष्ट्रं जनपदः । द्वे च ते पराधीने न कर्तव्ये, स्वयमेव विलम्भनीयफलप्रासाच( ? ) । दूते संधिविपर्ययौ । प्रियवचनेन स्वामिकार्यप्रदर्शनेन संधिः, तद्वैपरीत्येन विग्रहः । एतदुभयं दूतायत्तम् । एवं दूतार्थानुवादः । + मेधा.

( २ ) अमात्य इति सेनापतौ हस्त्यश्वरथपदात्यात्मको दण्ड आयत्तः, तदिच्छया तस्योपचयः । दण्डे च हस्त्यादिके नीत्यर्थो व्यापार आयत्तः, तदभावे नीत्यभावात् । राजनि च अर्थागारदेशौ आयत्तौ, तदिच्छया वृद्धिक्षयोत्पत्तेः । दूते च संधिविग्रहौ आयत्तौ, तदिच्छया तत्प्रवृत्तेः । गोरा.

( ३ ) अमात्ये दण्ड आयत्तः, विना तद्रुचिं दूरे दण्डसिद्धेः । दण्डे वैनयिकी लोकविनयहेतुः क्रिया । नृपतौ कोशराष्ट्रे, तदुद्यमादेव तद्द्वयवृद्धेः । विपर्ययः विग्रहादिपञ्चकम् । मवि.

* शेषं ममुवत् ।

$ नन्द. नीमवत् ।

+ ममु. मेधागतं गोरागतं च । रार. मेधागतम् । भाच. मेधागतं मविगतं च ।

( १ ) **मस्मृ.** ७।६५ ; **राक.** ३३ च ( उ ) ; **रार.** ३९ ; **राप्र.** १८८ राकवत् .

(४) दूतप्रसङ्गेन तस्य कार्यव्यवस्थितिमाह– अमात्य इति । अमात्ये भूपतेः हस्त्यश्वरथपदात्यात्मको दण्ड आयत्तः अधीनः । सपणादिदण्डो वा अमात्येन नियमितः । तदीक्षया पणादिदण्डो दण्ड्येषु प्रवृत्तः साधुः । दण्डे चतुर्विधे तस्मिन् वैनयिकी विनयायार्हति । दण्डे हि विनयी स्यात्, अन्यथा उत्पथगामी जनः । नृपतौ कोशराष्ट्रे द्वे । तेन कोशः संचीयते राष्ट्रं च परिपाल्यते । दूते संधिभेदौ आयत्तौ, तन्निमित्तत्वात्तयोः । विपर्ययः भेदः । मच.

(५) दूतगुणबाहुल्यवचने कारणमाह– अमात्य इति । अमात्यः सर्वकार्यनिर्वाहकः । अविनीतदमनं दण्डः । विपर्ययः विग्रहः । अमात्या(दी)नामुपन्यासो दृष्टान्तार्थः । नन्द.

'दूत एव हि संधत्ते भिनत्त्येव च संहतान् ।
दूतस्तत्कुरुते कर्म भिद्यन्ते येन मानवाः ॥

(१) एष एवार्थः पुनरुच्यते– दूत इति । दूतः संधत्ते यथोक्तम् । संहतान् एकीभूतान् स एव भिनत्ति । अनुक्तमपि प्रियं संदिशति, प्रतिकूलमनाचरितमित्यादि । सुवर्णादिद्रव्यमप्रतिश्रुतमित्याह । एवं भिनत्ति दूतः । तदेतत्कर्मान्तरमुपदिष्टं येन राजानो भिद्यन्ते । वाक्पारुष्यापन्ना एवं संभवन्ति । मेधा.

(२) यस्मात् दूत एव भिन्नानां संध्युत्पादने समर्थः संहतानां च भेदने । तथा परराष्ट्रे व्यवहरति येन संहता भिद्यन्ते । तस्मात् दूते संधिविपर्ययौ आयत्तौ (च?) इत्येतन्निगमार्थमाह । * गोरा.

(३) दूत एव हीत्येतदुपपादनम् । दूतस्तदिति । न वा भिद्येत, संदध्यात् । मवि.

(४) एतौ व्यनक्ति– दूत इति । स्वदेशे स्वामात्यादीन् भिन्नान् संधत्ते मिश्रयति, भिनत्ति च संहतान् स्वराज्यनाशाय कृतोद्यमान् शत्रून् तत्पक्षगांश्च द्रव्यादिदानेन मिथ्याभयप्रदर्शनेन च । न चान्यथा संधिमायान्तीत्यर्थः । मच.

(५) दार्ष्टान्तिकं प्रपञ्चयति– दूत इति । न केवलं राज्ञामेवेदम्, किंतु सर्वेषामपीत्यभिप्रायेणोक्तं मानवा इति । यत एवं तस्माद्यथोक्तलक्षणो दूतः कार्य इति । नन्द.

(६) संहतान् बन्धून् भिनत्ति भेदयति । भाच.

'स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥

(१) अन्यदपि दूतकार्यं दर्शयति– स इति । सः दूतः । (अस्य) यातव्यस्य राज्ञः । कृत्येषु कार्येषु । मेधा.

(२) सः दूतः अप्रकाशाभिः आकारचेष्टाभिः आत्मीयाभिः परस्य राज्ञो मुखविकाशवैवर्ण्याद्याकारं हर्षविषादसूचितम्, इङ्गितं स्वेदवेपथुरोमाञ्चाद्यात्मकं पञ्चसंधिविग्रहाभिप्रायसूचकम्, चेष्टां च वाहनायुधसंस्कारोदासीनात्मिकामुत्साहसूचनीं जानीयात् । अभिलषितं तु नोपेक्षितमिति जानीयात् । कृत्येषु च क्रुद्धलुब्धभीतावमानितेषु तद्भृत्येषु कर्तुमिष्टं संग्रहणम् । गोरा.

(३) सः दूतः विद्यात् अस्य राज्ञः कृत्येषु क्रियाविषयेषु लुब्धभीतावमानिषु शत्रुषु यः आकारादिः तं स्वयं निगूढैः इङ्गितचेष्टितैः उपलक्षितः । इङ्गितपदेनात्र आकारेङ्गितयोर्ग्रहणम् । चेष्टितं चेष्टा । यथा युद्धार्थिनः शस्त्रनिर्माणादि । न ह्येतत् इङ्गितमाकारो वेति । स्वकृत्येषु च शत्रोश्चिकीर्षितम् । मवि.

(४) दूतस्य कार्यान्तरमाह– स विद्यादिति । सः दूतः अस्य प्रतिराजस्य कर्तव्ये आकारेङ्गितचेष्टां

---

* मगु. गोरावत् ।

(१) मस्मृ. ७।६६; गोरा. मानवाः (बान्धवाः); मवि. भिद्यन्ते येन (न वा भिद्येत) 'मानवाः' इत्यत्र 'मानवः' इति 'बान्धवः' इति वा पाठः एतत्संमतो भवेत्; राक. ३३; रार. ४२; राप्र. १८८ चतुर्थचरणे (येन भिद्येत बान्धवः).

(१) मस्मृ. ७।६७; राक. ३३ भृत्येषु (कृत्येषु); मवि. राकवत्; रार. ४२ चेष्टां (चेष्टा); राप्र. १८८.

जानीयात् । निगूढाः अनुचराः प्रतिपक्षनृपस्यैव परिजनाः तस्मिन् युक्ताः तत्संनिधावपि, तेषामिङ्गितचेष्टितैः भृत्येषु च क्षुब्धलुब्धापमानितेषु प्रतिराजस्य कर्तुमीप्सितं जानीयात् । † ममु.

(५) इदानीं दूतस्य परं प्रति प्रेषितस्य कर्तव्यं प्रसङ्गादाह– स इति । सः दूतः अस्य कृत्येषु स्वराज्ञा भेद्येषु परपक्षस्थेषु पुरुषेषु विद्यमानं आकारमिङ्गितं चेष्टितं च निगूढेङ्गितचेष्टितैः पुरुषैः विद्यात् । किंच, कृत्येषु भेद्येषु चिकीर्षितं अभिलषितं च तैर्विद्यात् । नन्द.

(६) सः राजा अस्य दूतस्य निगूढेङ्गितचेष्टितैः कृत्यं कार्यं आकारादिकं कृत्येषु कार्येषु चिकीर्षितं च विद्यात् । भाच.

**[1]बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम् ।**
**तथा प्रयत्नमातिष्ठेद्यथाऽऽत्मानं न पीडयेत् ॥**

(१) परराजसंबन्धि कर्तुमिष्टं अशेषं परमार्थतो ज्ञात्वा तथा दूतो यतेत यथा स्वामिनाशद्वारेण तस्य आत्मनाशो न भवति । गोरा.

(२) बुद्ध्वा राजा स्वदूतद्वारा । न पीडयेत् शत्रुः । $ मवि.

(३) उक्तलक्षणदूतद्वारेण प्रतिपक्षराजस्य कर्तुमिष्टं सर्वं तत्त्वतो ज्ञात्वा तथा प्रयत्नं कुर्यात् यथा आत्मनः पीडा न भवति । ‡ ममु.

(४) ततो भृत्येषु परराजचिकीर्षितं बुद्ध्वा मद्राजा यद्यत्राऽऽगन्तुं शक्नोति तदा भवादृशानां क्षोभादि नङ्क्ष्यतीति विश्वासं संपादयेदिति भावः । आत्मानं स्वराजानं दूतं वा यथा न पीडयेत् तथा यत्नमातिष्ठेत् । मच.

(५) आतिष्ठेत् कुर्यात् । स दूत इत्यनुवर्तते । स्वार्थे अस्य राज्ञः कार्ये यथा स्वयं न पीडयेत् । नन्द.

## याज्ञवल्क्यः

दूतप्रेषणम्

**[1]पश्येच्चारांस्ततो दूतान् प्रेषयेन्मन्त्रिसंगतः ॥**

(१) तदनन्तरं दूतांश्च पश्येत् । दूताश्च ये प्रकटमेव राजान्तरं प्रति गतागतमाचरन्ति । ते च त्रिविधाः— निसृष्टार्थाः संदिष्टार्थाः शासनहराश्चेति । तत्र निसृष्टार्थाः राजकार्याणि देशकालोचितानि स्वयमेव कथयितुं क्षमाः । उक्तमात्रं ये परस्मै निवेदयन्ति ते संदिष्टार्थाः । शासनहरास्तु राजलेखहारिणः । तान् पूर्वप्रेषितान् आगतान् मन्त्रिसंगतः पश्येत् । दृष्ट्वा तद्वार्तामाकलय्य पुनः पुनः प्रेषयेत् । मिता.

(२) प्रथमं चारान् पश्येत् ततो दूतानित्यर्थः । दूतान् परस्परं वृत्तसूचकान् । रार. ४६

(३) ततो मन्त्रिसंगतः सन् दूतान् चारोक्तशत्रुबलाबलानुसारेण संधिविग्रहादिसंदेशहरान् गूढान् प्रेषयेत् । 'दूतान्' इति बहुवचनं निसृष्टार्थसंदिष्टार्थशासनहस्तभेदेन त्रिविधत्वं दूतानां दर्शयितुम् । वीमि.

## बृहस्पतिः

दूतगुणाः

**[2]संधिभेदसंधानस्थानज्ञोऽनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालज्ञो दर्शनीयो नीतिगतिज्ञः प्राज्ञो वाग्ग्मी दूतः स्यात् ॥**

## बृहत्पराशरः

दूतकरणम्

**[3]अमात्यान् मन्त्रिणो दूतान् (राजा कुर्यात्) ॥**

---

† मच. ममुवत् ।

$ रार. मविगतम् ।

‡ भाच. ममुवत् ।

(१) मस्मृ. ७।६८ ; राक. ३३ ; रार. ४२ बुद्ध्वा (लब्ध्वा) ; राप्र. १८८ ; नन्द. ऽऽत्मानं (स्वार्थं).

(१) यास्मृ. १।३२८. शेषः स्थलादिनिर्देशः 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९५३) द्रष्टव्यः.

(२) विश्व. १।३०७.

(३) बृपसं. १२।११.

## मत्स्यपुराणम्

दूतगुणाः

[1]यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी देशकालविभागवित् ॥
[2]विज्ञातदेशकालश्च दूतः स स्यान्महीक्षितः ।
वक्ता नयस्य यः काले स दूतो नृपतेर्भवेत् ॥

## गरुडपुराणम्

दूतगुणाः

[3]बुद्धिमान्मतिमांश्चैव परचित्तोपलक्षकः ।
क्रूरो यथोक्तवादी च एष दूतो विधीयते ॥

बुद्धिः निश्चयात्मिका । मतिः प्रज्ञा शीघ्रग्राहिणी । राप्र. १८०

## अग्निपुराणम्

दूतगुणाः, त्रिविधो दूतः, दूतकर्माणि

[4]दूतश्च प्रियवादी स्यादक्षीणोऽतिबलान्वितः ॥
[5]प्रगल्भः स्मृतिमान्वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥
निसृष्टार्थो मितार्थश्च तथा शासनहारकः ।
सामर्थ्यात्पादतो हीनो दूतस्तु त्रिविधः स्मृतः ॥
नाविज्ञातं पुरं शत्रोः प्रविशेच्च न संसदम् ।
कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥

छिद्रं च शत्रोर्जानीयात्कोषमित्रबलानि च ।
रागापरागौ जानीयाद्दृष्टिगात्रविचेष्टितैः ॥
कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ।
तपस्विव्यञ्जनोपेतैः सुचरैः सह संवसेत् ॥

---

(१) मत्स्य. २१५।१२; विध. २।२४।१२-१३ दूतः (धूर्तः) शक्तः (शाब्दः) विभागवित् (विभाविता); राक. २५ शक्तः (सूक्तः); राप्र. १८० राकवत्.

(२) मत्स्य. २१५।१३; विध. २।२४।१३-१४ पूर्वार्धे (विज्ञाय देशं कालं वा हितं यत्स्यान्महीक्षितः ।) नयस्य (ऽपि तस्य); राक. २५ दूतः (कृतं) शेषं विधवत्; राप्र. १८० दूतः स (हितं यत्) नयस्य (तस्यापि) शेषं विधवत्.

(३) गरुड. १।११२।८; राप्र. १८०.

(४) अग्नि. २२०।२.

(५) अग्नि. २४१।७-११.

## कामन्दकीयनीतिसारः

दूतप्रेषणम्, दूतगुणाः, त्रिविधो दूतः

[1]कृतमन्त्रः सुमन्त्रज्ञो मन्त्रिणं मन्त्रिसंमतम् ।
यातव्याय प्रहिणुयाद्दूतं दूत्याभिमानिनम् ॥

(१) अस्मिन् सर्गे प्रकरणद्वयम्— दूतप्रचारः चारविकल्पश्च । संधिविग्रहाद्यर्थो मन्त्रः । स च स्वपरमतसंपादनाधीनः । तच्च प्रस्तावज्ञात् दूतात् चाराच्च भवति । अतो मन्त्रविकल्पानन्तरमुभयविधिः षाड्गुण्यशेषभूतः उच्यते । तत्र प्राधान्याद्दूतविधिमाह— कृतमन्त्र इत्यादि । कृतमन्त्रः उद्धृतमन्त्रः । दूत्याभिमानिनमिति । यो मन्त्री दूतकर्मणि जाताभिमानो मन्त्रिसंमतश्च तं दूत्येन यातव्याय शत्रवे प्रेषयेत्, तस्य कार्यसाधनयोग्यत्वात् । जम.

(२) दूतप्रचारमाह— कृतमन्त्र इति । कृतमन्त्रः कृतः मन्त्रः येन सः मन्त्रज्ञः राजा मन्त्रिणां मध्ये मन्त्रसंमतम्, कमपीति शेषः । अथवा मन्त्रिणां मन्त्रसंमतं मन्त्रिणां मन्त्रेण अनुमोदितम् । दौत्याभिमानिनं अहं दूतः इत्यभिमानवन्तं सर्वत्रैव निःशङ्कमित्यर्थः, दूतं दुनोति स्वाचारेण यातव्यमिति दूतः तं यातव्याय गन्तव्यजनसमीपे प्रहिणुयात् प्रेरयेत् । 'मन्त्रसंमतम्' इत्यत्र 'मन्त्रिसंमतम्' इति, 'दौत्याभिमानिनम्' इत्यत्र 'दूत्याभिमानिनम्' इति मुद्रितपाठः । उनिसा.

[2]प्रगल्भः स्मृतिमान् वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥

---

(१) कानी. १३।१; नीम. ५७ उत्त.; उनिसा. मन्त्रिसं (मन्त्रसं) दूत्या (दौत्या).

(२) कानी. १३।२; नीम. ५७ शस्त्रे शास्त्रे (शास्त्रे चास्त्रे) तृतीयचरणे (अभ्यासकर्माभिरतो); उनिसा. शस्त्रे शास्त्रे (शास्त्रे चास्त्रे).

( १ ) दूतगुणानाह– प्रगल्भ इत्यादि । अमात्यस्वरूपो दूतः । तस्य प्रकृतिसंपदि गुणा उक्ता एव । पुनरिह कतिपयगुणोपादानं प्राधान्यार्थम् । निष्ठितः प्रकृष्टः । अभ्यस्तकर्मा बहुधा कृतदूत्यः । जम.

( २ ) सति अमात्यसामान्यगुणसंपन्नत्वे दूतस्य अवश्यंभाविनो गुणानाह– प्रगल्भ इति । प्रगल्भः शत्रुपरिषदि साध्वसहीनः । स्मृतिमान् स्वामिसंदिष्टं किमपि न विस्मरति । वाग्मी स्ववचनेन सभां रञ्जयति । शास्त्रे नीतिशास्त्रादिके अस्त्रे धनुरादिके च निष्ठितः दक्षः । अभ्यस्तं सुशिक्षितं कर्म शास्त्रप्रतिपादितकार्यं येन सः । तादृशो नृपतेर्दूतो भवितुमर्हति योग्यो भवति । उनिसा.

**[१]निसृष्टार्थो मितार्थश्च तथा शासनहारकः ।**
**सामर्थ्यात्पादतो हीनो दूतस्तु त्रिविधः स्मृतः ॥**

( १ ) तत्र यः अशिक्षितमेव देशकालोचितं यथायोग्यमन्यस्याग्रे वदति स निसृष्टार्थः । यथा पाण्डवानां दूतो वासुदेवः । यावत्संदिष्टवक्ता मितार्थः । शासनहारः प्रसिद्धः । नीम. ५७

( २ ) निसृष्टार्थः यथाकामेन निसृष्टः संध्यादिः अर्थः यस्मिन् । परिमितार्थः त्वयैतावद्वाच्यमिति । शासनहारकः लेखनहारकः । 'सामर्थ्यात् पादतो हीनः' इति अमात्यगुणांश्चतुर्धा विभज्य योजनीयम् । तत्र गुणसाकल्यं सामर्थ्यमस्य, तदुपेतो निसृष्टार्थो वेदितव्यः । तस्य पादतो हीनः पादत्रययुक्तः परिमितार्थः । तस्यापि पादतो हीनः पादद्वययुक्तः शासनहारकः । तेन भेद्यापेक्षया पादतो हीन इति द्विरावर्तनीयम् । उक्तं च– 'अमात्यसंपदोपेतो निसृष्टार्थः, पादगुणहीनः परिमितार्थः, अर्धगुणहीनः शासनहारकः' (कौ. १।१६) इति । जम.

( ३ ) दूतस्यापि त्रैविध्यं दर्शयति– निसृष्टार्थ इति । निसृष्टः नियमरहितः अर्थः संधिविग्रहादिकः यस्य । यथा युधिष्ठिरेण वासुदेव एवमुक्त्वा प्रेषितः – 'यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः' (भामु. ५।७२।९२) इति । अत्र संधिरेव कर्तव्यो विग्रहो वेति न नियमः । मितार्थः मितः नियमितः निर्दिष्टः अर्थः संधिविग्रहादिकः यस्य सः । 'त्वया रिपुसंसदि एवं व्यवहर्तव्यं यथा विग्रहो भवति' इत्येवं स्वामिना नियमितो मितार्थः । शासनवाहकः शासनं स्वामिसंदेशं वहति यः सः । अयं हि यावद्भाषितमाचष्टे । इत्थं त्रिविधो दूतः सामर्थ्यात् पादतो हीनः । सामर्थ्यं हि अमात्यानां पञ्चविंशतिगुणरूपम् । निसृष्टार्थात् पादगुणहीनो मितार्थः । ततोऽपि पादगुणहीनः संदेशवाहकः । 'संदेशवाहकः' इत्यत्र 'संदेशहारकः' इति पाठान्तरम् । उनिसा.

दूतकर्तव्यानि

**[१]स भर्तुः शासनाद्गच्छेद्गन्तव्यं ह्युत्तरोत्तरम् ।**
**स्ववाक्यपरवाक्यानामिति चेति च चिन्तयन् ॥**

( १ ) इदानीमेकविंशत्या श्लोकैस्तत्प्रचारमाह– स भर्तुरित्यादि । स इति निसृष्टार्थः । शासनात् आज्ञया । गन्तव्यं यातव्यं शत्रुम् । इति चेति शासनमेवं वाच्यम्, पर एवं वक्ष्यति, एवं तस्येदं प्रतिवाच्यम्, एवमतिसंधातव्यमित्युत्तरोत्तरं चिन्तयन् । जम.

( २ ) दूतानामितिकर्तव्यतामाह– स भर्तुरिति । सः त्रिविधो दूतः भर्तुः विजिगीषोः शासनात् स्वराष्ट्रपरराष्ट्राणां उत्तरोत्तरं इति च इति च इति चिन्तयन् गन्तव्यं यातव्यं रिपुं गच्छेत् । 'स्ववाक्यपरवाच्यानामिति चेति च चिन्तयेत्' इति पाठे स्ववाक्यपरवाच्यानामुत्तरोत्तरं इति च इति च इति चिन्तयेत् । प्रथमपाठे 'एवं कृते स्वराष्ट्रस्य एवं भविष्यति, एवं कृते परराष्ट्रस्य एवं भविष्यति' इति उत्तरोत्तरं परिणतिं चिन्तयन्नित्यर्थः । द्वितीयपाठे 'मया एवं वक्तव्यम्, शत्रुभिरेवं कथिते मया एवमुत्तरं दातव्यम्' इति उत्तरोत्तरं वचनविन्यासं चिन्तयेदिति भावः । तथा च कौटिल्यः– 'शासनमेवं वाच्यः, स वक्ष्यत्येवम्, तस्येदं प्रति-

---

( १ ) कानी. १३।३ ; नीम. ५७ हारकः (वाहकः) पु. ; उनिसा. हारकः (वाहकः)

( १ ) कानी. १३।४; उनिसा. वाक्य (राष्ट्र) वाक्याना (राष्ट्राणा).

वाक्यम्, एवमतिसंधातव्यमित्यधीयानो गच्छेत्' (कौ. १।१६) इति। उनिसा.

[1]अन्तपालांश्च कुर्वीत मित्राण्याटविकांस्तथा।
जलस्थानानि मार्गांश्च विद्यात्स्वबलसिद्धये ॥

(१) अन्तपालान् जनपदान्तरक्षाधिकृतान् मित्राणि कुर्यात् उपजापार्थं स्वबलसिद्धये। जम.

(२) स्वमण्डलपरमण्डलानां अन्तान् पालयन्तीति अन्तपालाः, तान् आटविकान् च सामदानादिभिः यात्रासौकर्यार्थं मित्राणि कुर्वीत। 'अन्तःपालान्' इति मुद्रितपाठे तु अन्तः स्वराष्ट्रपरराष्ट्राणां अन्तः अभ्यन्तरं पालयन्ति ये ते तान्। स्वबलसिद्धये स्वबलानां यात्रासुकरतासंपादनाय जलस्थलानि जलमयप्रदेशान् स्थलमयप्रदेशांश्च, मार्गान् स्वबलोपयोगिनिराबाधान् पथश्च विद्यात् जानीयात्, आविष्कुर्यादित्यर्थः। 'विन्द्यात्' इति पाठे लभेत इत्यर्थः। उनिसा.

[2]नाविज्ञातः पुरं शत्रोः प्रविशेन्न च संसदम्।
कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥

(१) निष्पतेत् उपविशेत्। नीम. ५७

(२) अभियोगकाले नाविज्ञातः प्रविशेत् शङ्कानिवृत्तये। पुरं दुर्गम्। संसदं सभाम्। कालमीक्षेत कार्यार्थे 'इदं कार्यमस्मिन् काले सिध्यति' इति। अनुज्ञातः शत्रुणा विसर्जितः। जम.

(३) अविज्ञातः अविदितवृत्तान्तः अथवा शत्रुभिरपरिज्ञातः सन् शत्रोः पुरं संसदि च न प्रविशेत्। कार्यार्थे अभिप्रेतकार्यसाधनार्थे कालं अवसरं ईक्षेत। अनुज्ञातश्च शत्रुणाऽनुमतश्च निष्पतेत् शत्रोः पुरे सदसि च प्रविश्य स्वकार्यं साधयेत्। उनिसा.

[3]सारवत्तां च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च।
छिद्रं च शत्रोर्जानीयात्कोशमित्रबलानि च ॥

(१) सारवत्तां स्फीतताम्। दुर्गं जानीयात् कियता बलेनाधिष्ठीयते विलुप्यते चेति। तद्गुप्तिं विषमस्थानम्। छिद्रं अन्तःकोपादि। जम.

(२) यातव्यशत्रोः राष्ट्रस्य सारवत्तां दुर्गं तद्गुप्तिं दुर्गरक्षां दुर्गस्य छिद्रं कोषं मित्राणि बलानि च अनुसंदध्यात्। उनिसा.

[1]उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत्।
रागापरागौ जानीयाद्दृष्टिवक्त्रविचेष्टितैः ॥

(१) उद्यतेष्वपीति प्राणबाधार्थमुत्खातेष्वपि, किमुत विभीषिकादौ? शासनं स्वामिसंदेशम्। रागापरागौ जानीयात् संदेशमाचिख्यासुराख्याय वा। दृष्टिवक्त्रविचेष्टितैरिति। तत्रोर्ध्वाधस्तिर्यक्प्रसारितत्वं नैर्मल्यमुत्फुल्लता चेति दृष्टेर्विचेष्टितानि, पुलकिता विकासश्चेति वक्त्रस्य। तैः रागं लक्षयेत्, विपरीतैरपरागम्। जम.

(२) यथोक्तं न भयात् अपलपेत्। शेषं सुगमम्। 'प्रकृतीनां च भर्तरि' इत्यत्र 'दृष्टिवक्त्रविचेष्टितैः' इति पाठान्तरम्। उनिसा.

[2]सहेतानिष्टवचनं कामं क्रोधं च वर्जयेत्।
नान्यैः शयीत संरक्षेद्भावं विद्यात्परस्य च ॥

(१) अनिष्टवचनं अधिक्षेपादिकम्। कामं वेश्यासु। क्रोधं द्वेष्येषु। मन्त्रभेदनिवृत्त्यर्थं नान्यैः शयीत, वक्ष्यमाणदोषात्। भावं अभिप्रायम्। जम.

(२) सहेतेति। 'असहिष्णुतया कार्यं नाशयेत्, कामादेरुद्रेको मन्त्रं भिनत्ति' इति वचनात्। अन्यैः सह एकशय्यायां न शयीत। स्वप्नावस्थायां मन्त्रभेदसंभवादिति भावः। स्वं भावं मन्त्रात्मकमभिप्रायं रक्षेत्। परस्य विद्यात्, भावमित्यनुवर्तते। उनिसा.

---

(१) कानी. १३।५; उनिसा. स्थाना (स्थला).

(२) कानी. १३।६; नीम. ५७ न्न च संसदम् (च न संसदि).

(३) कानी. १३।७; नीम. ५७ च शत्रोर्जा (शत्रोर्विजा).

(१) कानी. १३।८; नीम. ५७ चतुर्थचरणे (प्रकृतीनां च भर्तरि).

(२) कानी. १३।९; नीम. ५८ पूर्वार्धानन्तरम् (वैतसीमाश्रयेद्वृत्तिं नान्यवृक्षाश्रितां सदा।) इत्यधिकम्, उत्तरार्धे (नान्यं शयेन्न भावं स्वं वदेद्विन्द्यात् परस्य च ॥); उनिसा. संरक्षेद्भावं (स्वं भावं रक्षेद्). अयं श्लोकः नीम-उनिसा-ग्रन्थयोः कानी. १३।१५ इति श्लोकादूर्ध्वं पठितः.

[1]रागापरागौ जानीयात्प्रकृतीनां च भर्तरि ।
कृत्यपक्षोपजापं च कुर्यादनभिलक्षितः ॥

( १ ) प्रकृतीनां भर्तरीति । शत्रुप्रकृतीनां स्वभर्तरि । कृत्यपक्षोपजापं कुर्यात् क्रुद्धलुब्धभीतावमानितान् भिन्द्यादित्यर्थः । अनभिलक्षितः शत्रोः । जम.

( २ ) शत्रोः प्रकृतीनां जनपदकोषदण्डादीनां स्वभर्तरि प्रच्युतिं हीनतां न ब्रूयात् न कस्यापि प्रकाशयेत् । शिष्टं सुगमम् । 'अनुपलक्षितः' इत्यत्र 'अनतिलक्षितः' इत्यपि पाठः । उनिसा.

[2]वध्यमानोऽपि न ब्रूयात्स्वस्वामिप्रकृतिच्युतिम् ।
ब्रूयात्प्रश्रितया वाचा सर्वं वेद भवानिति ॥

( १ ) स्वस्वामिप्रकृतिच्युतिमिति । स्वभर्तुः प्रकृतीनां असारतां अल्पतां च न ब्रूयात् , किं तु व्याजेनापसरेत् । यदाह– ब्रूयादिति । प्रश्रितया अनुकूलया । सर्वं वेद भवानिति । किमिहाविदितं युष्माकं चारचक्षुषाम् ? वयं त्वात्मव्यापारमात्रविद एवेति । जम.

( २ ) स्वस्वामिनः प्रकृतिच्युतिं प्रकृतीनां विरागं पृच्छ्यमानोऽपि न ब्रूयात् । तत्प्रश्ने किमुत्तरं दद्यादित्याह– ब्रूयादिति । 'स्वस्वामिप्रकृतिच्युतिम्' इत्यत्र 'हृद्यवाक्प्रकृतिच्युतिम्' इत्यपि पाठः । उनिसा.

[3]कुलेन नाम्ना द्रव्येण कर्मणा च गरीयसा ।
कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ॥

( १ ) कुलेन उदितोदितेन । नाम्ना दिगन्तरव्यापिना । द्रव्येण स्वपरोपकारिणा । कर्मणा सतामनिन्द्येन । उभयोरपि भर्तुः शत्रोश्च । जम.

( २ ) चित्तरञ्जनार्थं यत् ब्रूयात् तस्यैवार्थमाह– कुलेनेति । विजिगीषुपक्षविजेतव्यपक्षयोः चतुर्विधस्तोत्रं यथा–कुलं विजिगीषोरभ्यर्हितं सोमान्वयायातम् , त्वदीयमपि तथैव आदित्यसंभवम् । नाम्ना विजिगीषुः श्लाघ्यतरः , नाम्ना त्वमपि तथैव । द्रव्येण विजिगीषुः नवतिकोटीश्वरः , त्वमपि तथैव । महीयसा कर्मणा विजिगीषुः उत्खाताशेषप्रतिपक्षाधिगतानेकमण्डलः , त्वमपि तथा । इत्येवं चतुर्विधं स्तोत्रं कुर्यात् । मध्यस्थताख्यापनार्थमिति तात्पर्यम् । 'कुलेन' इत्यत्र 'फलेन' इति मुद्रितपाठे कार्यसाधनेनेत्यर्थः । उनिसा.

[1]विद्याशिल्पापदेशेन संश्लिष्योभयवेतनैः ।
कृत्यपक्षं विजानीयात्तद्भर्तुश्च विचेष्टितम् ॥

( १ ) अपदेशेन व्याजेन शङ्कापरिहारार्थम् । उभयवेतनैः, ते हि पूर्वप्रणिहिताः कथयितारः । कृत्यपक्षं उपजापार्थम्, तद्भर्तुश्च विचेष्टितं प्रतिविधानार्थं विजानीयात् । जम.

( २ ) विद्याः आन्वीक्षिकीप्रभृतयः , शिल्पं अस्त्रगृहगृहसामग्रीप्रभृतिनिर्माणादौ असाधारणकौशलम् , तदुपदेशेन तत्तद्विषयशिक्षादानव्याजेन संश्लिष्य संबन्धं घटयित्वा उभयवेतनैः कृत्यपक्षं भेद्यपक्षं जानीयात् । तद्भर्तुः यातव्यस्य विचेष्टितमपि बुध्येत इति । 'विद्याशिल्पोपदेशेन' इत्यत्र 'तथाविधोपदेशेन' इति पुस्तकान्तरस्य पाठः । उनिसा.

[2]तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना ।
तपस्विव्यञ्जनोपेतैः स्वचारैः सह संपतेत् ॥

( १ ) तीर्थस्थानं पुण्यनदीसमुद्देशः, आश्रमस्थानं ऋषीणां निवासः, सुरस्थानं देवायतनम् , तत्र संपतेदिति संबन्धः , तेषु तपस्विव्यञ्जनस्य संनिधानात् । शास्त्रविज्ञानहेतुनेति संप्रधारणोपायः । तपस्विव्यञ्जनोपेतैरिति । तापसव्यञ्जनाः साध्वाचाराः यत्र तत्र परस्परं चाराणां संपातो भवति । तद्युक्तैः स्वचारैः सह संपतेत् , शत्रुप्रचारज्ञानार्थम् । जम.

---

( १ ) कानी. १३।१० ; उनिसा. ( न ब्रूयात् प्रच्युतिं शत्रोः प्रकृतीनां स्वभर्तरि । कृत्यपक्षस्य चोपायं कुर्यादनुपलक्षितः ॥ ).

( २ ) कानी. १३।११ ; उनिसा. वध्य ( पृच्छ्य ).

( ३ ) कानी. १३।१२ ; नीम. ५७ कुलेन ( फलेन ) गरी ( मही ).

( १ ) कानी. १३।१३ ; उनिसा. शिल्पाप (शिल्पोप).

( २ ) कानी. १३।१४ ; नीम. ५७ सुरस्थाने ( पुरस्थानैः ) उत्तरार्धे ( उपान्त्यं जनोपेतैः स्वचरैः सह संवदेत् ॥ ) ; उनिसा. चारैः ( चरैः ) पतेत् ( वदेत् ).

(२) तीर्थानि वेणीसंगमप्रभृतीनि, आश्रमाः तपस्विनां तपोवनानि, सुराः सोमेश्वरभूतेश्वरप्रभृतयः, तेषां स्थानं तत्र शास्त्रविज्ञानहेतुना तच्छलेनेत्यर्थः, नियुक्तैः तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत् संवादं कुर्यात्। 'संवदेत्' इत्यत्र 'संवसेत्' इति 'तीर्थाश्रमसुरस्थाने' इत्यत्र 'तीर्थाश्रमाश्रयस्थाने' इति च मुद्रितपुस्तकधृतपाठः। उनिसा.

[1]प्रतापं कुलमैश्वर्यं त्यागमुत्थानसौष्ठवम्।
अक्षुद्रतां दक्षतां च भर्तुर्भेद्येषु कीर्तयेत्॥

(१) उत्थानसौष्ठवं उत्साहसंपदम्। अक्षुद्रतां सत्संग्रहशीलताम्। दक्षतां अनालस्यम्। भेद्येषु कृत्यपक्षेषु। तत्र क्रुद्धेषु प्रतापं उत्थानसौष्ठवं दाक्ष्यं (च) दर्शयेत्। त्रितयमप्यक्षुद्रतायुक्तं भीतेषु। तदेव चतुष्टयं कुलसहितं मानिषु। लुब्धेषु त्यागैश्वर्ये। जम.

(२) प्रतापः पौरुषम्, कुलं श्लाघ्यतरान्वयः, ऐश्वर्यं विभूतेराधिक्यम्, त्यागः वदान्यता, उत्थानसौष्ठवं उत्साहशक्तिप्रवणत्वम्, अक्षुद्रता अवञ्चकत्वम्, भद्रता कल्याणबुद्धित्वं भर्तुः विजिगीषोः भेद्येषु विषये दर्शयेत्। दूरतो भेद्यानात्मसात्कर्तुमिति भावः। 'प्रतापम्' इत्यत्र 'संतापम्' इति मुद्रितपुस्तकस्य पाठः। उनिसा.

[2]भावमन्तर्गतं व्यक्तं सुप्तो मत्तश्च भाषते।
तस्मादेकः स्वपेन्नित्यं स्त्रियः पानं च वर्जयेत्॥

सुप्तो मत्तश्चेति, तयोः स्वापमदाभ्यां परवशत्वात्। तस्मादेकः शयीत, नान्यैः। जम.

[3]काले व्रजति मेधावी न खिद्येतार्थसिद्धये।
क्षिप्यमाणं च बुध्येत कालं नानाविलोभनैः॥

(१) न खिद्येत इहाऽऽगतस्य मम बहवो दिवसा वर्तन्त इति। अर्थसिद्धये यथोपन्यस्तसंधिविग्रहादिसिद्धये। क्षिप्यमाणं परेण स्वार्थं पश्यता। बुध्येत वक्ष्यमाणप्रकारेण। नानाविलोभनैः 'स्थीयतां तावत्, अभिमतं ते करिष्यामि' इति। जम.

(२) दीर्घे काले अतीतेऽपि मेधावी दूतः आत्मसिद्धये स्वकार्यसिद्ध्यर्थं न खिद्येत। तथा च नानार्थलोभनैः विविधविषयकप्रलोभनैः क्षिप्यमाणं कालं अतिवाह्यमानसमयविवरणं बुध्येत जानीयात्। 'नानार्थलोभनैः' इत्यत्र 'नानाविलोभनैः' इति पाठान्तरम्। उनिसा.

[1]एतेष्वहःसु गच्छत्सु तत्र नः पृथिवीपतेः।
पश्यति व्यसनं किंचित् स्वयं वा कर्तुमीहते॥

(१) नः पृथिवीपतेः अस्माकं राज्ञः व्यसनं दैवं मानुषं वा पश्यति। तत्र संदध्यात्। स्वयं वा सामन्ताटविकादीनुत्थाप्य व्यसनं कर्तुमीहते अभियोक्ष्यामीति। जम.

(२) तान्येव कालक्षेपकारणानि दर्शयन्नाह– एतेष्विति। एतेषु कालक्षेपदिवसेषु गच्छत्सु तत्र पृथिवीपतेः विजेतव्यस्य व्यसनं चेन्न पश्यति, स्वयं च विजेतव्यो भूपतिः वक्ष्यमाणश्लोकोक्तं किंचित् अन्तःप्रकोपप्रशमनादिकं चेत् कर्तुमिच्छति। 'न तत्र पृथिवीपतेः' इत्यत्र 'किमस्य पृथिवीपतेः' इति पाठान्तरम्। उनिसा.

[2]स्वान्तःप्रकोपमथवा विनेतुं नीतिवित्तमः।
सस्यादेः संग्रहं कर्तुं दुर्गे वा दुर्गसत्क्रियाम्॥

(१) स्वयं वा मन्त्र्यादिप्रकोपमपनेतुमीहते यथेष्टं संधास्य इति। सस्यादेः संग्रहं कर्तुमीहते परिक्षीणपुराणभक्तं अगृहीतनवभक्तं परमभियोक्ष्यामीति। दुर्गसत्क्रियां भिन्नस्फुटितप्राकारादिसंस्कारं कर्तुमीहते दुर्गमविषह्यमाश्रित्य परकर्माण्युपहनिष्यामीति। जम.

---

(१) कानी. १३।१५; नीम. ५८ दक्षतां (च दाक्ष्यं) भेद्येषु (सर्वत्र); उनिसा. दक्ष (भद्र) कीर्त (दर्श).

(२) कानी. १३।१६; नीम. ५८ व्यक्तं (गुप्तं) स्त्रियः पानं च (स्त्रीमद्ये च वि). अयं श्लोकः उपाध्यायनिरपेक्षानुसारिण्यां नास्ति.

(३) कानी. १३।१७; उनिसा. तार्थ (ताऽऽत्म) नानावि (नानार्थ).

(१) कानी. १३।१८; उनिसा. तत्र नः (न तत्र) मीहते (मिच्छति).

(२) कानी. १३।१९.

(२) स्वयं किं कर्तुमीहते इत्याह– स्वान्तःप्रकोपमिति । स्वान्तःप्रकोपं विनेतुं पार्ष्णिग्राहप्रोत्साहनादिकं कर्तुं प्रकृतिविरागं शमयितुं चेत्यर्थः, दुर्गसंस्कारं शस्यादेः संग्रहं च कर्तुं, यदि ईहते इति शेषः । उनिसा.

**[1]स्वपक्षाभ्युदयाकाङ्क्षी देशकालावुदीक्षते ।**
**उत यात्रां स्वयं दातुं येनास्मान्न समीहते ॥**

(१) स्वपक्षः मित्रम्, यत् विजिगीषुमभियुञ्जानस्य साहाय्यं दास्यति । तस्य वा वृद्ध्याकाङ्क्षी तदनुगुणौ देशकालौ उदीक्षते । स्वयं वा यात्रां दातुं स्वसैन्यव्यायामयोग्यौ देशकालावुदीक्षते। येनास्मान्न समीहते न प्रेषयति, प्रेषिते हि विजिगीषुः प्रतिविधास्यति । जम.

(२) तदा किं कर्तव्यमित्याह– स्वपक्षेति । स्वपक्षस्य विजिगीषुपक्षस्य अभ्युदयाकाङ्क्षी दूतः देशकालौ प्रतीक्षते इति च तर्कयेत् । यातव्य इति शेषः । तत्र विजिगीषुराष्ट्रे स्वयं यात्री यातव्यो यास्यतीति चित्तं आश्वास्य समीहते तदनुकूलं चेष्टते, यातव्य इति शेषः । 'तत्र यात्री स्वयं चित्तमाश्वास्यैव समीहते' इत्यत्र 'उत यात्रां स्वयं कर्तुमस्मानेव समीहते' इति पाठः समीचीनः । उनिसा.

**[2]यात्राकालक्रियार्थी वा तत्र चायं विलम्बते ।**
**काले विक्षिप्यमाणे तु तर्कयेदिति पण्डितः ॥**

(१) यात्राकालक्रियार्थी वेति यात्राकाले यत् परबलापेक्षया बलसमुत्थानकर्म ततोऽ(? तद)पेक्षी वा । तत्र च कर्मण्ययं प्रविलम्बमानो न प्रेषयति । जम.

(२) तर्कान्तरमाह– यात्राकाल इति । यात्राकालस्य अस्मत्प्रभोरनुगुणस्य क्षयार्थी अतिवाहनाभिलाषी वा अयं यातव्यो विलम्बते कालक्षेपं करोति । काले विक्षिप्यमाणे सति इति तर्कयेत् दूत इत्यर्थः । उनिसा.

---

(१) **कानी.** १३।२०; **उनिसा.** उत्तरार्धे (तत्र यात्री स्वयं चित्तमाश्वास्यैव समीहते ॥).

(२) **कानी.** १३।२१; **उनिसा.** क्रियार्थी (क्षयार्थी).

**[1]कार्यकालव्यपेतं च व्यक्तं ज्ञात्वा विनिष्पतेत् ।**
**तिष्ठन् वार्ताविशेषार्थी भर्त्रे सर्वं निवेदयेत् ॥**

(१) कार्यकालव्यपेतं कार्यकालयोरतिक्रमणम् । वार्ताविशेषार्थीति । अस्माननादृत्यान्यत्रानेन संधिविग्रहादिकं प्रस्तुतम्, तत्रास्य किं स्थितमिति निश्चयार्थी चेत् तदा तत्रैव तिष्ठन् सर्वं यथोक्तं भर्त्रे निवेदयेत् प्रतिविधानार्थम् । जम.

(२) तर्कस्य विनिर्णये किं कर्तव्यमित्याह– कार्येति । कार्यकाले विपत्तिं प्रभोरुपस्थितां विपत्तिं व्यक्तां ज्ञात्वा विनिष्पतेत् स्वराष्ट्रं समागच्छेत् । अथवा तत्र तिष्ठन् भर्तुः विजिगीषुसमीपे सर्वान् वार्ताविशेषाणामर्थान् निवेदयेत् ज्ञापयेत् । शेषार्धे 'तिष्ठन् वार्ताविशेषार्थी भर्तुः सर्वं निवेदयेत्' इति वा पाठः । उनिसा.

**[2]रिपोः शत्रुपरिच्छेदः सुहृद्बन्धुविभेदनम् ।**
**दुर्गकोशबलज्ञानं कृत्यपक्षोपसंग्रहः ॥**

(१) संक्षेपेण दूतव्यापारमाह– रिपोरित्यादि । शत्रुपरिच्छेदः एतावन्तोऽस्य शत्रव इति । बलं सैन्यम् । जम.

(२) तथाऽन्यदपि दूतकर्माऽऽह– रिपोरिति । रिपोः यातव्यस्य ये परमार्थशत्रवः तेषां परिच्छेदः विनिर्णयः । सुहृदः मित्राणि, बन्धवः मातुलादयः, तेषां विभेदनं विभेदमापाद्य आत्मसात्करणम् । दुर्गकोषबलज्ञानं कीदृशानि दुर्गाणि, कियान् कोषः, कीदृक् बलं एतेषां परिज्ञानम् । कृत्यपक्षोपसंग्रहः इतिकर्तव्यताज्ञानम् । उनिसा.

**[3]राष्ट्राटव्यन्तपालानामात्मसात्करणं तथा ।**
**युद्धापसारभूज्ञानं दूतकर्मेति कीर्तितम् ॥**

---

(१) **कानी.** १३।२२; **उनिसा.** व्यपेतं च व्यक्तं (विपत्तिं च व्यक्तां) षार्थी भर्त्रे सर्वं (षार्थान् भर्तुः सर्वान्).

(२) **कानी.** १३।२३.

(३) **कानी.** १३।२४; **नीम.** ५८ कीर्तितम् (कथ्यते); **उनिसा.** टव्यन्त (व्यपेत) कीर्तितम् (कथ्यते).

(१) अटवी तात्स्थ्यात् आटविकाः। युद्धापसारभूज्ञानमिति। हस्त्यश्वरथपदातीनामेता युद्धयोग्या भूमयः, एषा च बलवताऽभियुक्तस्य *कलत्रस्थानमिति। जम.

(२) राष्ट्राण्यपेतपालानां राज्यस्थितप्रदेशरक्षकाणां आत्मसात्करणं वशीकरणम्। युद्धापसारभूज्ञानं केन पथा मम प्रभुः संग्रामादपसर्तुं समर्थो भविष्यतीति ज्ञानम्। एतत्सर्वं दूतकर्म कथ्यते। उनिसा.

शत्रुज्ञानं दूतात् ग्राह्यम्

¶[1]दूतेनैव नरेन्द्रस्तु कुर्यादरिविमर्शनम्।
स्वपक्षे च विजानीयात्परदूतविचेष्टितम्॥

(१) इदं कर्म निसृष्टार्थस्यैव। नीम. ५८

(२) यथा दूतामात्येन यथोक्तं विमर्शनं कुर्यात् तथा किमन्येनाप्यमात्येनेत्याह–दूतेनैवेति। अन्यस्य परमण्डलगमनासंभवात्। जानीयात् परदूतविचेष्टितम्। यस्मात् परो विजिगीषुपदे च संचारिणं दूतं प्रेषयति। जम.

## शुक्रनीतिः

दूतगुणाः

[2]इङ्गिताकारचेष्टाज्ञः स्मृतिमान् देशकालवित्।
षाड्गुण्यमन्त्रविद्वाग्मी वीतभीर्दूत इष्यते॥

यः इङ्गितं अन्तर्भावं आकारं चेष्टां च जानातीति तथोक्तः। स्मृतिमान् मेधावी। देशकालवित् देशकालानुरूपकार्यवेत्ता। षाड्गुण्यानां संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां मन्त्रज्ञानवान्। वाग्मी वचनपटुः। तथा वीतभीः निर्भयः। स दूतः इष्यते। शुनीटी.

अवध्यो दूतः

[1]दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा॥
स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते च कः।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति॥

दूतस्यावध्यत्वमाह– दूत इत्यादिना। रार. ४२

## नीतिवाक्यामृतम्

देशान्तरीयकार्येषु दूतो मन्त्रिस्थानीयः

[2]अनासन्नेष्वर्थेषु दूतो मन्त्री॥

अथ दूतसमुद्देशो व्याख्यायते। तत्राऽऽदौ दूतस्य लक्षणमाह– अनासन्नेष्विति। अनासन्नेषु दूरान्तरेषु अर्थेषु प्रयोजनेषु देशान्तरसंस्थेषु यो याति दूतः राजदौवारिकः तत्काले मन्त्रिस्थाने स राज्ञो भवति। यतः तद्वक्त्रेण तत्कार्यं सिध्यति। तथा च राजपुत्रः– 'देशान्तरस्थितं कार्यं दूतद्वारेण सिध्यति। तस्माद्दूतो यथा मन्त्री तत्कार्यं हि प्रसाधयेत्॥'। नीवाटी.

दूतगुणाः

स्वामिभक्तिरव्यसनिता दाक्ष्यं शुचित्वममूर्खता प्रागल्भ्यं प्रतिभानवत्त्वं क्षान्तिः परमर्मवेदित्वं जातिश्च प्रथमे दूतगुणाः॥

अथ दूतेन यादृशेन भाव्यं तदाह– स्वामिभक्तिरिति। स्वामिभक्ति(युक्त ?)ः, तथा अव्यसनिता अव्यसनित्वम्, तथा दाक्ष्यं दक्षता, तथा शुचित्वं निर्मलशरीरवस्त्रधारणम्, तथा अमूर्खता पाण्डित्यं, तथा प्रागल्भ्यं उदारत्वम्, तथा प्रतिभानवत्त्वं प्रज्ञोत्कर्षः, क्षान्तिः सहिष्णुता, तथा परमर्मवेदित्वं शत्रुरहस्यज्ञातृत्वम्, तथा जातिश्च उत्तमकुलत्वं प्रथमे आद्याः एते गुणाः दूतस्य। तथा च शुक्रः– 'दक्षं जात्यं प्रगल्भं च दूतं यः प्रेषयेन्नृपः। अन्यैश्च स्वगुणैर्युक्तं तस्य कृत्यं प्रसिध्यति॥'। नीवाटी.

---

* 'कलत्रं राज्ञां दुर्गस्थानम्' इति हेमचन्द्रः।

¶ एतच्छ्लोकस्य उनिसाव्याख्यानं नोपलब्धम्।

(१) कानी. १३।२५; नीम. ५८ द्वितीयचरणे (कुर्वीतारिविमर्षणम्). अयं श्लोकः उपाध्यायनिरपेक्षानुसारिण्यां नास्ति.

(२) शुनी. २।८७.

(१) रार. ४२ नीतौ शुक्रः.

(२) नीवा. १३।१–२५.

त्रिविधो दूतः

**स त्रिविधो निसृष्टार्थः परिमितार्थः शासनहरश्चेति ॥**

**यत्कृतौ स्वामिनः संधिविग्रहौ प्रमाणं स निसृष्टार्थः, यथा कृष्णः पाण्डवानाम् ॥ ***

अथ त्रिविधदूतस्य लक्षणमाह– स इति। यत्कृतौ येन दूतेन गतेन विहितौ संधिविग्रहौ प्रमाणं भवतः स दूतः स्वामिनः प्रभोः निसृष्टार्थः कथ्यते। पाण्डवानां वासुदेवो यथा। तथा च भृगुः– 'यद्वाक्यं नान्यथाभावि प्रभोर्यद्यप्यनीप्सितम्। निसृष्टार्थः स विज्ञेयो दूतो नीतिविचक्षणैः॥' अथ परिमितार्थस्य दूतस्य लक्षणमाह– 'यत्प्रोक्तं प्रभुणा वाक्यं तत्प्रमाणं वदेच्च यः। परिमितार्थ इति ज्ञेयो दूतो नान्यं ब्रवीति यः॥'। अथ शासनहरस्य लक्षणमाह– 'प्रभुणा लेखितं यच्च तत्परस्य निवेदयेत्। यः शासनहरः सोऽपि दूतो ज्ञेयो नयान्वितैः॥'। नीवाटी.

दूतकर्माणि

**अविज्ञातो दूतः परस्थानं न प्रविशेन्निर्गच्छेद्वा ॥**

अथ दूतेन परस्थानगतेन यत्कृत्यं तदाह– अविज्ञात इति। न प्रविशेत् न प्रवेशं कुर्यात्। कोऽसौ? दूतः। किं तत्? परस्थानं शत्रुनिवासम्। निर्गच्छेद्वा तस्मात् शत्रुस्थानात्। किंविशिष्टः सन्? अविज्ञातः सन्। केन? परेण शत्रुणा। अविज्ञातः यः प्रवेशं करोति निर्गच्छेद्वा स दूतः पराभवमाप्नोति। तथा च गुरुः– 'शत्रुणा योऽपरिज्ञातो दूतस्तत्स्थानमाविशेत्। निर्गच्छेद्वा ततः स्थानात् स दूतो वधमाप्नुयात्॥'। नीवाटी.

**मत्स्वामिनाऽसंधातुकामो रिपुर्मां विलम्बयितुमिच्छतीत्यननुज्ञातोऽपि दूतोऽपसरेत्, गूढपुरुषान् वाऽवसर्पयेत् ॥**

---

* दूतस्य त्रैविध्यं प्रतिपाद्य निसृष्टार्थस्य लक्षणसत्त्वात् परिमितार्थशासनहरयोरपि लक्षणाभिधायि ग्रन्थकृता प्रणीतं सूत्रद्वयं प्रभ्रष्टमिति टीकाकृताऽपि प्रमाणान्तरमात्रमुद्धरता नोपलब्धमिति च प्रतीयते।

अथ शत्रुणाऽसंधातुकामेन अवज्ञातो दूतो यत्करोति तदाह– मत्स्वामिनेति। तदा अननुज्ञातोऽपि तेन अपसरेत् गच्छेत् स्वामिनं प्रति। वा अथवा न गच्छेत्, तद्गूढपुरुषान् प्रच्छन्नदूतानवसर्पयेत् तत्समीपं प्रेषयेत् यदेष ते परः असंधातुकाम इति। तथा च हारीतः– 'असंधानपरं शत्रुं दूतो ज्ञात्वा विचक्षणः। अनुक्तोऽपि गृहं गच्छेद्गुप्तान् वा प्रेषयेच्चरान्॥'। नीवाटी.

**परेणाऽऽशु प्रेषितो दूतः कारणं विमृशेत् ॥**

अथ शत्रुणा प्रेषितो यच्छीघ्रं करोति तदाह– परेणेति। पर्यालोचयेत्। कोऽसौ? दूतः। किं तत्? कारणम्। किंविशिष्टो दूतः? प्रेषितः। कथम्? आशु शीघ्रम्। केन? परेण शत्रुणा। यदि दर्शनमात्रेणापि दूतं शत्रुः प्रेषयति तत् तेन कारणं चिन्तनीयं 'किमर्थमहमनेन द्रुतं प्रेषितः? अवश्यं पापबुद्धिरयं मम स्वामिनं प्रति। तत्त्वस्य विलम्बयति एतान् पदार्थान् वक्ष्यमाणान् करोति (?)'। तथा च गर्गः– 'शत्रुणा प्रेषितो दूतो यच्छीघ्रं प्रविचिन्तयेत्। कारणं चैव विज्ञाय कुर्यात् स्वामिहितं ततः॥'। नीवाटी.

**कृत्योपग्रहोऽकृत्योत्थापनं सुतदायादावरुद्धोपजापः स्वमण्डलप्रविष्टगूढपुरुषपरिज्ञानमन्तपालाटविककोशदेशतन्त्रमित्रावबोधः कन्यारत्नवाहनविनिश्रावणं स्वाभीष्टपुरुषप्रयोगात् प्रकृतिक्षोभकरणं दूतकर्म ॥**

अथ दूतेन परस्थानस्थितेन स्वामिहितं यत्कार्यं तदाह– कृत्योपेति। कृत्योपग्रहः कृत्यानां योऽसौ उपग्रहः विनाशः स उपायैः कर्तव्यः। तथा अकृत्योत्थापनं अकृत्यानां यथा उत्थापनं भवति तथा कार्यम्। तथा सुतदायादावरुद्धानां भेदः– ये च शत्रोः पुत्राः भवन्ति, तथा दायादाः गोत्रिणः, तथा अवरुद्धाः बन्दीकृताः ये, ते भेदनीयाः। तथा स्वमण्डलप्रविष्टगूढपुरुषपरिज्ञानं स्वमण्डले स्वदेशे ये शत्रुणा प्रेषिताः गूढचराः ते ज्ञातव्याः। तथा अन्तपालाटविककोशदेशतन्त्रमित्रावबोधः कन्यारत्नवाहनविनिश्रावणम्। अन्तपालः सीमा-

-धिपाः, आटविकाः भिल्लादयः, तथा कोशः भाण्डागारम्, देशः राष्ट्रम्, तन्त्रं सैन्यम्, तथा मित्रावबोधः, तथा कन्यारत्नं यत्तस्य गृहे तिष्ठति, तथा वाहनानि यानि तस्य गृहे तिष्ठन्ति, तथा तेषां विनिश्रावणं स्वस्वामिनो गूढचरैः कथनीयम् । प्रकृतिक्षोभणं च एतेषां करणीयं येन क्षोभो भवति । इति दूतकर्म । नीवाटी.

**मन्त्रिपुरोहितसेनापतिप्रतिबद्धपूजनोपचारविश्रम्भाभ्यां शत्रोरितिकर्तव्यतामन्तःसारतां च विद्यात् ॥**

तथा न केवलमेतत् पूर्वोक्तमेव कुर्याद्दूतः, एतच्च कुर्यात् । किं तत् ? मन्त्रिपुरोहितसेनापतीनां ये प्रतिबद्धाः समीपवर्तिनः भवन्ति तेषामलक्षितेन पूजा स्तुतिः उपचारः दानं दत्त्वा एवं पूजोपचाराभ्यां विश्वासयित्वा शत्रोरितिकर्तव्यतां एतदेव करिष्यति लग्नः एवं ज्ञात्वा तस्यान्तःसारतां कोशाश्वगजादिप्रमाणं च विद्यात् । नीवाटी.

**स्वयमशक्तः परेणोक्तमनिष्टं सहेत ॥**

अथ स्वयमशक्तेनानिष्टे वा बन्धुहतेन यत्कर्तव्यं तदाह– स्वयमिति । यदि स्वयं परुषं वक्तुमसमर्थो भवति तदा शत्रुणा यदुक्तं परुषं तत्सहेत, नोत्तरं दद्यात् । तथा च शुक्रः– ' असमर्थेन दूतेन शत्रोर्यत्परुषं वचः । तत् क्षन्तव्यं न दातव्यमुत्तरं श्रियमिच्छता ॥ ' । नीवाटी.

**गुरुषु स्वामिषु वा परिवादे नास्ति क्षान्तिः ॥**

अथ यस्मिन् परिवादे न क्षन्तव्यं तदाह– गुरुष्विति । यदि शत्रुः तद्गुरोर्निन्दां करोति स्वामिनो वा तदा नास्ति क्षान्तिः । यदि मृत्युर्भवति तदाऽपि न क्षन्तव्यमिति । तथा च जैमिनिः– ' गुरोर्वा स्वामिनो वाऽपि कृतां निन्दां परेण तु । यः शृणोति न कुप्येच्च स पुमान् नरकं व्रजेत् ॥ ' । नीवाटी.

**स्थित्वाऽपि यियासतोऽवस्थानं केवलमुपक्षयहेतुः ॥**

अथान्येन पुरुषेण यियासता यत्कृत्यं तदाह– स्थित्वेति । स्थित्वाऽपि यियासतः गन्तुमिच्छतः यत् अवस्थानं अगमनं तत् किंविशिष्टम् ? नैरन्तर्येण उपक्षयहेतुः । देशान्तरं गन्तुमिच्छता पुरुषेण यद्विलम्बः क्रियते तत्केवलमुपक्षयकारणम्, तस्मात् गन्तव्यमेव । तथा च रैभ्यः– ' अवश्यं यदि गन्तव्यं तन्न कुर्याद्विलम्बनम् । गन्तव्यमेव नोचेद्धि तस्माद्धनपरिक्षयः ॥ ' । नीवाटी.

राज्ञः परदूतप्रेक्षणविधिः ; शत्रुप्रहितस्य सर्वस्य संपरीक्ष्य उपादानम्

**वीरपुरुषपरिवारितः शूरपुरुषान्तरितान् दूतान् पश्येत् ॥**

अथ राज्ञा यथा परदूता द्रष्टव्यास्तदाह– वीरपुरुषेति । दूतान् परदेशोपगतान् पश्येत् अवलोकयेत् । किंविशिष्टान् दूतान् ? शूरपुरुषान्तरितान् शूरपुरुषानन्तरे धृत्वा । किंविशिष्टः सन् ? वीरपुरुषपरिवारितः सन् । तथा च नारदः– ' परदूतान् नृपः पश्येद्वीरैर्बहुभिरावृतः । शूरैरन्तर्गतस्तेषां चिरं जीवितुमिच्छया ॥ ' । नीवाटी.

**श्रूयते हि किल चाणक्यस्तीक्ष्णदूतप्रयोगेणैकं नन्दं जघान ॥**

एतत्किल श्रूयते योऽसौ चाणक्यः स तीक्ष्णदूतप्रयोगेण– तीक्ष्णविषदूता भृत्याः, तेषां प्रयोगेण नन्दं एकं अद्वितीयमपि जघान । नीवाटी.

**शत्रुप्रहितं शासनमुपायनं च स्वैरपरीक्षितं नोपाददीत ॥**

अथान्यदपि भूभुजा यत्कृत्यं तदाह– शत्रुप्रहितमिति । नोपाददीत न गृह्णीयात् । कोऽसौ ? राजा । किं तत् ? शासनं लिखितम् । किंविशिष्टम् ? शत्रुप्रहितं वैरिप्रेषितम् । न केवलं शासनम्, उपायनं च ढौकनीयं च । कथं न गृह्णीयात् ? यावन्न परीक्षितम् । कैः ? स्वैः आत्मीयपुरुषैः । तथा च शुक्रः– ' यावत् परीक्षितं न स्वैर्लिखितं प्राभृतं तथा । शत्रोरभ्यागतं राज्ञा तावद् ग्राह्यं न तद्भवेत् ॥ ' । नीवाटी.

श्रूयते हि किल स्पर्शविषवासिताद्भुतवस्त्रोपायनेन करहाटपतिः कैटभो वसुनामानं राजानं जघान ॥

आशीविषविषधरोपेतरत्नकरण्डकप्राभृतेन च करपालः करालं जघान ॥

श्रूयते हीति । एतस्मात्कारणाच्छत्रूपायनं स्वैरपरीक्षितं नाऽऽददीत । तथा— आशीविषेति । सूत्रद्वयमपि गतार्थम् । नीवाटी.

अवध्यो दूतः

महत्यपराधेऽपि न दूतमुपहन्यात् ॥

अथ राज्ञो दूतस्य यत्कर्तव्यं तदाह— महतीति । नोपहन्यात् न वध्यात् । कम् ? दूतम् । कोऽसौ ? राजा । कस्मिन् सति ? अपराधे । किंविशिष्टे ? महत्यपि गुरुतरेऽपि । तथा च शुक्रः— 'दूतं न पार्थिवो हन्यादपराधे गरीयसि । कृतेऽपि तत्क्षणात् तस्य यदीच्छेद्भूतिमात्मनः ॥' । नीवाटी.

उद्धतेष्वपि शस्त्रेषु दूतमुखा वै राजानः ॥

अथ यस्मान्न हन्तव्यो दूतः तत्कारणमाह— उद्धतेष्विति । यस्मात्कारणात् उद्धतेष्वपि शस्त्रेषु प्रहरणेषु पतत्सु राजानस्तु दूतमुखा भवन्ति दूतवक्त्रेण तेषां कार्यं सिध्यति । तथा च गुरुः— 'अपि सङ्ग्रामकालेऽपि वर्तमाने सुदारुणे । सर्पन्ति संमुखा दूता वधस्तेषां न कारयेत् ॥' । नीवाटी.

तेषामन्तावसायिनोऽप्यवध्याः ॥

अथ भूयोऽपि राज्ञा दूतविषये यत्कृत्यं तदाह— तेषामिति । तेषां दूतानां ये अन्तावसायिनः चाण्डालाः तेऽप्यवध्याः । तथा च शुक्रः— 'अन्तावसायिनो येऽपि दूतानां प्रभवन्ति च । अवध्यास्तेऽपि भूपानां स्वकार्यपरिसिद्धये ॥' । नीवाटी.

किं पुनर्ब्राह्मणाः ॥

गतार्थमेतत् । नीवाटी.

अवध्यभावो दूतः सर्वमेव जल्पति ॥

अथ दूतस्य लक्षणमाह— अवध्यभाव इति । योऽसौ दूतः सः अवध्यभावः अयोग्यवधः । सर्वं यत्किंचित् प्रभुणा प्रोक्तं स निष्ठुरमपि वदति, न दोषः । नीवाटी.

कः सुधीर्दूतवचनात् परोत्कर्षं स्वापकर्षं च मन्येत ॥

अथ दूतवचनानि श्रुत्वा भूभुजा यत्कर्तव्यं तदाह— क इति । को मन्येत कः संभावयति ? राजा । किंविशिष्टः ? सुधीः शोभनमतिः । कम् ? परोत्कर्षं शत्रुस्तवनम्, तथा स्वापकर्षं आत्मनिन्दाम् । कस्मात् ? दूतवचनात् । तस्माद् भूभुजा दूतवचनानि शुभान्यशुभान्यपि श्रोतव्यानीति । तथा च वसिष्ठः— 'श्रोतव्यानि महीपेन दूतवाक्यान्यशेषतः । विज्ञेनेर्ष्यां परित्यज्य सुशुभान्यशुभान्यपि ॥' । नीवाटी.

राज्ञा परदूतः प्रणिधातव्यः

स्वयं रहस्यपरिज्ञानार्थं परदूतो नयाद्यैः स्त्रीभिरुभयवेतनैस्तद्गुणाचारशीलानुवृत्तिभिर्वा प्रणिधातव्यः ॥

अथ अरिदूतस्य राज्ञा यत्कर्तव्यं तदाह— स्वयमिति । प्रणिधातव्यः । कोऽसौ ? परदूतः शत्रुदूतः । कैः कृत्वा ? नयाद्यैः नीतिपूर्वकैः । किंविशिष्टैः ? स्त्रीभिः तावद्वेश्याभिः, तथा उभयवेतनैः ये स्वामिनः शत्रोरपि वेतनं गृह्णन्ति ते उभयवेतनाः तैरपि दूतः प्रणिधातव्यः । किमर्थम् ? रहस्यपरिज्ञानार्थम् । तथा तद्गुणाचारशीलानुवृत्तिभिः ये तद्गुणान् जानन्ति, आचारं जानन्ति, शीलं जानन्ति, तस्यानुवृत्तिं कुर्वन्ति, तैर्वा प्रणिधातव्यः नीतिपूर्वकैः । येन तैः पृष्टः स्वकीयं रहस्यं वदति हृदयस्य परस्य वा रहस्यं गुह्यं वदतीति । तथा च शुक्रः— 'दूतस्य यद्रहस्यं च तद्वेश्योभयवेतनैः । तच्छीलैर्वा परिज्ञेयं येन शत्रुः प्रसिध्यति ॥' । नीवाटी.

शत्रुलेखस्वरूपम्

चत्वारि वेष्टनानि खड्गमुद्रा च प्रतिपक्षलेखानाम् ॥

अथ शत्रुलेखानां स्वरूपमाह— चत्वारीति । ये प्रतिपक्षलेखाः शत्रुलेखाः भवन्ति तेषामुपरि चत्वारि वेष्टनानि बन्धनानि भवन्ति, तथा खड्गमुद्रा च । नीवाटी.

## युक्तिकल्पतरुः

दूतगुणाः, त्रिविधो दूतः, दूतकर्माणि,

दूता अदण्ड्या अवध्याश्च

[1]परेङ्गितज्ञः परवाग्व्यङ्ग्यार्थस्यापि तत्त्ववित् ।
सदोत्पन्नमतिर्धीरो दूतः स्यात् पृथिवीपतेः ॥
[2]दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुलसंभवम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥
दूत एव हि संधत्ते भिनत्त्येव हि संगतान् ।
विमृष्टार्थो मितार्थश्च तथा शासनहारकः ॥

(१) युक. ३।२०.

(२) युक. ११।७२–७८.

दूतास्त्रयोऽमात्यगुणैः समैः पादार्धवर्जितैः ।
विमृष्टार्थः कार्यवशाच्छासनं न करोति यः ॥
मितार्थः कार्यमात्रोक्तौ न कुर्यादुत्तरोत्तरम् ।
यथोक्तवादी संदेशहारको लेखहारकः ॥
तत्र दूतो व्रजन्नेव चिन्तयेदुत्तरोत्तरम् ।
वार्ताविशेषं भूपाय झटितीत्यङ्गवेश्मनि ॥
दूतो हि न लिखेत् किंचिन्निर्णेता विनिसंशयम् ।
पृच्छ्यमानो हि न ब्रूयात् स्वामिनः क्वापि वैशसम् ॥
[1]विरुद्धमपि जल्पन्तो दूता दण्ड्या न भूभृता ।
दूतहन्ता तु नरकमाविशेत् सचिवैः सह ॥

(१) युक. १५।१०७.

# स्वाम्यनुजीविवृत्तम्

## वृद्धहारीतः

अनुजीविषु पितृवद्वृत्तं राज्ञः

[1]पितेव पालयेद्भृत्यान् प्रजाश्च पृथिवीपतिः ॥

## महाभारतम्

सहायप्राप्त्युपायः, सहायाः पृथिवीप्राप्त्युपायाः

*[2]यस्याविभक्तं वसु राजन् सहायै-
स्तस्य दुःखेऽप्यंशभाजः सहायाः ।
सहायानामेष संग्रहणेऽभ्युपायः
सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥

सहायार्जनोपायमाह— यस्येति । अविभक्तं साधारणम् । वसु वित्तम् । नीटी.

[3]सत्यं श्रेष्ठं पाण्डव निष्प्रलापं
तुल्यं चान्नं सह भोज्यं सहायैः ।
आत्मा चैषामग्रतो नातिवर्ते-
देवंवृत्तिर्वर्धते भूमिपालः ॥

विप्रलापं विगतः प्रलापः अनर्थकं वचः यस्मात् तत्तथा पूज्यः स्तव्यः । वनवासान्ते बहुना धनेन बहून् सहायान् प्राप्य त्वमेव शत्रूच्छेदं कृत्वा राज्यं प्राप्स्यसीत्यर्थः । नीटी.

राजवेश्मनि वसतां अनुजीविनां वर्तननियमाः

¶[4]दिष्टद्वारो लभेद्द्वारं न च राजसु विश्वसेत् ।
तदेवाऽऽसनमन्विच्छेद्यत्र नाभिषजेत्परः ॥

(१) दिष्टद्वारः निवेदनानन्तरमादिष्टप्रवेशः सामान्यतो वा निवारितद्वारप्रवेशः । राप्र. १९२

(२) दृष्टद्वारः प्रतीहारद्वारा निवेद्यैव राजानं द्रष्टुमिच्छेत्, न तु अननुज्ञात इत्यर्थः । दिष्टेत्यपि पाठः । *पाठान्तरे रहस्येषु मन्त्रकार्येषु न विश्वसेत् संमतोऽस्मीति बुद्ध्या तत्र न गच्छेत् । पुत्रादिषु अपि अविश्वस्ता राजानः मन्त्रविप्लवभयात् सद्यो मारयेयुरिति भावः । तदेवेति । परेण सह वैरं मा भूदिति परासनं नान्विच्छेत् । नीटी.

[1]नास्य यानं न पर्यङ्कं न पीठं न गजं रथम् ।
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत् ॥

यानम्, परकीयमिति शेषः । नीटी.

[2]अथ यत्रैनमासीनं शङ्केरन् दुष्टचारिणः ।
न तत्रोपविशेज्जातु स राजवसतिं वसेत् ॥

दुष्टचारिणः दुष्टाचाराः । यत्र यत्र द्यूतमद्यवेश्यादिस्थानेषु स्वनगरस्थपरकीयचारमण्डले वा आसीनमेनं 'द्यूतादिप्रियोऽयम्, परैर्भेदितोऽयम्' इति शङ्केरन् तत्र नोपविशेत्, राजगामिपैशुन्यभयादित्यर्थः । नीटी.

[3]न चानुशिष्येद्राजानमपृच्छन्तं कदाचन ।
तूष्णीं त्वेनमुपासीत काले सममिपूजयन् ॥

---

* वनवासिने युधिष्ठिराय विदुरेण कथितः सहायमहिमा ।

¶ धौम्येन गुरुणा पाण्डवेभ्यः विराटराजवेश्मनि वस्तुं प्रस्थितेभ्यः कथितमनुजीविवृत्तम् ।

(१) वृहास्मृ. ७।२२३.

(२) भा. ३।६।२० ; भामु. ३।५।२०.

(३) भा. ३।६।२१ ; भामु. ३।५।२१ निष्प्र (विप्र) नातिवर्तेदेवं (न स्म पूज्य एवं).

(४) भा. ४।४।९ ; भामु. ४।४।१३ दिष्ट (दृष्ट) द्वारं न च राजसु (द्रष्टुं राजस्वेषु न) षजे (पते) ; राप्र. १९२ द्वारं न च राजसु (द्रष्टुं राजस्वेषु न) नाभिषजेत्परः (नातिपतेत्परान्).

* 'रहस्येषु न विश्वसेत्' इति पाठे इत्यर्थः ।

(१) भा. ४।४।१० ; भामु. ४।४।१४ नास्य (यो न) ; राप्र. १९२ भामुवत्.

(२) भा. ४।४।११ ; भामु. ४।४।१५ अथ (यत्र) ज्जातु (द्यो वै) ; राप्र. १९२ भामुवत्.

(३) भा. ४।४।१२ ; भामु. ४।४।१६ शिष्ये (शिष्या) जयन् (जयेत्) ; राप्र. १९२ शिष्ये (शिष्या).

न चानुशिष्यात् 'इदमित्थं कुरु' इति नाऽऽज्ञापयेत् । तूष्णीं मौनेन । काले पराक्रमसमये । समभिपूजयेत् स्तुवीत । नीटी.

[1]असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥

स्तुतिरपि अभूतार्था न कर्तव्येत्याह– असूयन्तीति । दूषयन्तीत्यर्थः । नीटी.

[2]नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथंचन ।
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥

(१) यान् राजा द्वेष्टि, ये च राज्ञोऽहिताः, तेषु मैत्रीं न कुर्वीतेत्यनुषङ्गः । राप्र. १९३

(२) ये अन्तःपुरचराः, यांश्च राजा द्वेष्टि, ये च राज्ञोऽहिताः द्वेष्टारः, तैः सर्वैः सह मैत्रीं न कुर्यात् । नीटी.

[3]विदिते चास्य कुर्वीत कार्याणि सुलघून्यपि ।
एवं विचरतो राज्ञो न क्षतिर्जायते क्वचित् ॥

राज्ञि राजसंनिधौ विचारतः विचारपूर्वकं वसतः न क्षतिः मानहान्यादिः जायते । नीटी.

[4]गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥

परां उत्कृष्टां भूमिं नित्यं गच्छन् आसनार्थं प्राप्नुवन् राज्ञा अपृष्टः असंभाषितः अनियोजितः 'स्वे स्थाने उपविश' इत्यनाज्ञप्तः जात्यन्ध इव तत्स्थानमपश्यन्तमिवाऽऽत्मानं मन्येत । यावद्राजा न संभाषते नाप्यासनं दिशति तावत् प्रतीक्षेतैवेत्यर्थः । नीटी.

[1]न हि पुत्रं न नप्तारं न भ्रातरमरिंदमाः ।
समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ॥

अन्यथा दोषमाह– नहीति । नीटी.

[2]यत्नाच्चोपचरेदेनमग्निवद्देववच्च ह ।
अनृतेनोपचीर्णो हि हिंस्यादेनमसंशयम् ॥

अतिसांनिध्यात् अग्निरिव राजा दहति, अवज्ञानात् देव इव सर्वं हरतीत्यर्थः । अनृतेन कूटकार्षापणादिना उपचीर्णः आराधितः हन्यादेव । नीटी.

[3]यच्च भर्ताऽनुयुञ्जीत तदेवाभ्यनुवर्तयेत् ।
प्रमादमवहेलां च कोपं च परिवर्जयेत् ॥

भर्ता राजा । अनुयुञ्जीत आज्ञापयेत् पृच्छेद्वा । अनुवर्तयेत् कुर्यात् वदेद्वा । प्रमादं अनवधानताम् । अवलेपं शौर्यादिगर्वम् । नीटी.

[4]समर्थनासु सर्वासु हितं च प्रियमेव च ।
संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥

समर्थनासु कार्याकार्यपरीक्षासु हितं परिणामसुखं प्रियं श्रुतिसुखं च वदेत् । उभयोः समुच्चयासंभवे प्रियादपि हितं भवेत् । प्रियं त्यक्त्वाऽपि यद्धितं भवेत्तदेव वदेत्, न तु हितविरोधि प्रियं वदेदित्यर्थः । नीटी.

[5]अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च ।
अप्रियं चाहितं यत्स्यात्तदस्मै नानुवर्णयेत् ॥

---

(१) भा. ४।४।१३; भामु. ४।४।१७; राप्र. १९३.

(२) भा. ४।४।१४; भामु. ४।४।१८ कथं (कदा); राप्र. १९३ भामुवत्.

(३) भा. ४।४।१५; भामु. ४।४।१९ राज्ञो (राज्ञि); राप्र. १९३ लघू (वहू) राज्ञो (राज्ञि).

(४) भामु. ४।४।२०; राप्र. १९३.

(१) भामु. ४।४।२१; राप्र. १९३ उक्त.

(२) भा. ४।४।१६; भामु. ४।४।२२ च्च ह (विह) चतुर्थचरणे (हन्यादेव न संशयः); राप्र. १९३ भामुवत्.

(३) भा. ४।४।१७; भामु. ४।४।२३ यच्च भर्ता (यद्यद्भर्ता) तदेवाभ्य (तत्तदेवा) हेलां (लेपं); राप्र. १९३ भामुवत्.

(४) भा. ४।४।१८; भामु. ४।४।२४ वदेत् (भवेत्); राप्र. १९३ भामुवत्.

(५) भा. ४।४।१९; भामु. ४।४।२५; राप्र. १९३.

अस्य सर्वार्थेषु सर्वेषु अर्थसाधनेषु अनुकूलः यत्नवान् भवेत्, न तु प्रातिकूल्यं आलस्यं वा कुर्यादित्यर्थः। नीटी.

[1]नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः।
अप्रमत्तश्च यत्तश्च हितं कुर्यात्प्रियं च यत् ॥

पण्डितः परिहासकः। 'पण्डितः सिह्लके कवौ' इति विश्वः। 'खण्डितः' इति पाठे विच्छिद्य न सेवेत, किंतु अविच्छेदेनैव सेवेतेत्यर्थः। अप्रमत्तः अवहितः। नीटी.

[2]नास्यानिष्टानि सेवेत नाहितैः सह संवसेत्।
स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् ॥

स्वस्थानात् राजदत्तात् न विकम्पेत न चलेत्। नीटी.

[3]दक्षिणं वाऽथ वामं वा पार्श्वमासीत पण्डितः।
रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते।
नित्यं विप्रतिषिद्धं तु पुरस्तादासनं महत् ॥

पण्डितः विद्यावान् राजानं कथाभिः रमयन् पार्श्वे तिष्ठेत्। रक्षिणां राजगोप्तॄणां तु स्थानं पृष्ठतः। शूरेण पण्डितेन वा पुरस्तात् आसनं उपवेशनं न कर्तव्यमित्यर्थः। नीटी.

[4]न च संदर्शने किंचित्प्रवृद्धमपि संजपेत्।
अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ॥

राज्ञां संदर्शने समक्षं प्रवृत्तमपि भक्तवेतनादिदानं अहंपूर्विकया अनाकारितः सन् न संजयेत् स्वीकुर्यात्। एतत्तु धाष्टर्यं दरिद्राणामपि व्यलीकस्थानं अप्रियपदम्, किमुत राज्ञामिति भावः। उत्तमं परमम्। नीटी.

[1]न मृषाऽभिहितं राज्ञो मनुष्येषु प्रकाशयेत्।
यं चासूयन्ति राजानः पुरुषं न वदेच्च तम् ॥

राज्ञोदितमनृतं बहिर्न प्रकाशयेत्। हि यस्मात् अनृतवादिनः नृपान् (हि यतः ?) अन्ये राजानः असूयन्ति दोषवत्त्वेन कीर्तयन्ति। तस्मात् स्वामिनः अकीर्तिकरं न वदेदित्यर्थः। नीटी.

[2]तथैव चावमन्यन्ते नरान् पण्डितमानिनः ॥

अवमन्यन्ते, राजान इति शेषः। नीटी.

[3]शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः।
प्रियमेवाऽऽचरन् राज्ञः प्रियो भवति भोगवान् ॥

प्रियो भोगवांश्च भवतीति संबन्धः। नीटी.

ऐश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः।
अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च ॥
यस्य कोपो महाबाधः प्रसादश्च महाफलः।
कस्तस्य मनसाऽपीच्छेदनर्थं प्राज्ञसंमतः ॥

[4]न चोष्ठौ निर्भुजेज्जातु न च वाक्यं समाक्षिपेत्।
सदा क्षुतं च वातं च ष्ठीवनं चाऽऽचरेच्छनैः ॥

क्रोधचापलयोः सूचकं ओष्ठादीनां समाक्षेपं प्रचालनं न कुर्यादित्यर्थः। वातं मुखजं अधस्तनं वा। शनैः इतरेणाज्ञातं यथा भवेत्तथा कुर्यादित्यर्थः। नीटी.

---

(१) भा. ४।४।२०; भामु. ४।४।२६ यत्तश्च (सततं); राप्र. १९३ भामुवत्.

(२) भा. ४।४।२१; भामु. ४।४।२७ संवसेत् (संवदेत्); राप्र. १९३ भामुवत्.

(३) भा. ४।४।२२; भामु. ४।४।२८–२९ वप्रति (हि प्रति); राप्र. १९३–१९४ भामुवत्.

(४) भा. ४।४।२३; भामु. ४।४।२९–३० वृद्ध (वृत्त) जपेत् (जयेत्); राप्र. १९४ त्पवृद्ध (दवद्ध).

(१) भा. ४।४।२४; भामु. ४।४।३०–३१ राज्ञो (राज्ञां) उत्तरार्धे (असूयन्ति हि राजानो नराननृतवादिनः ॥); राप्र. १९४ राज्ञो (राज्ञा) शेषं भामुवत्.

(२) भामु. ४।४।३१; राप्र. १९४.

(३) भा. ४।४।२५–२७; भामु. ४।४।३२–३४; राप्र. १९४.

(४) भा. ४।४।२८; भामु. ४।४।३५ निर्भुजेज्जातु (न भुजौ जानू) क्षुतं च वातं (वातं च वाचं); राप्र. १९४ निर्भुजेज्जातु (न भुजौ जातु) क्षुतं च वातं (वातं च वाचं) चाऽऽ (वाऽऽ).

'हास्यवस्तुषु चाप्यस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् ॥

अन्यस्य राजसेवकस्य हास्यवस्तुषु हास्यास्पदेषु अयथास्थितेषु उष्णीषादिषु वर्तमानेषु निमित्तेषु तदीयवैकल्येन अतिगाढं न प्रहृष्येत् नापि हसेत् । तावतैव राजानः एनं क्षुद्रं मन्यन्त इति भावः । नीटी.

'न चातिधैर्येण चरेद्गुरुतां हि व्रजेत्तथा ।
स्मितं तु मृदुपूर्वेण दर्शयेत प्रसादजम् ॥

न चैवंभूते निमित्ते सति धैर्येण काष्ठवत् स्थेयमित्याह– न चातीति । गुरुतां जडताम् । किमप्ययं न जानातीति वदेयुरिति भावः । अत एव स्मितं मृदुपूर्वं किंचिद्दर्शयेदेव । नीटी.

'लाभे न हर्षयेद्यस्तु न व्यथेद्योऽवमानितः ।
असंमूढश्च यो नित्यं स राजवसतिं वसेत् ॥

न हर्षयेत् हृष्येत् । असंमूढः सेवायामेकाग्रः । नीटी.

'राजानं राजपुत्रं वा संवर्तयति यः सदा ।
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठति श्रियम् ॥

राजा तदाश्रिताश्च स्तोतव्या एवेत्याह– राजानमिति । ' संवर्तयति ' इति पाठे अनुसरति । तिष्ठते प्रकाशते । नीटी.

'प्रगृहीतश्च योऽमात्यो निगृहीतश्च कारणैः ।
न निर्बध्नाति राजानं लभते प्रग्रहं पुनः ॥

न निर्वदति न निन्दति । दण्डितोऽप्यमात्यः पुनरभ्युदयकामः राजानं न निन्देदित्यर्थः । नीटी.

'प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः ।
उपजीवी भवेद्राज्ञो विषये चापि यो वसेत् ॥

यो राज्ञो विषये भवेत् देशे वसेत्, यो वा राज्ञः उपजीवी, स राज्ञो गुणवादी स्यादिति संबन्धः । नीटी.

'अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत्तु यः ।
न स तिष्ठेच्चिरं स्थानं गच्छेच्च प्राणसंशयम् ॥

बलात् हठात् भोक्तुं कुटिलीकर्तुं येन केनचित् व्याजेन लोकान् दण्डय इति शिक्षयन् यः प्रार्थयेत् स राज्ञः प्रियोऽपि बहुजनविरोधात् चिरं स्थानं पदं न तिष्ठेत् नाधितिष्ठेत् । अवश्यं पदच्युतो भवेदित्यर्थः । भोक्तुमिति । ' भुज कौटिल्ये ' इत्यस्य रूपम् । नीटी.

'श्रेयः सदाऽऽत्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेन्न राजानं योग्याभूमिषु सर्वदा ॥

( १ ) विशेषयेत् राजानमधिकं स्वात्मानं च ततो न्यूनं कुर्यात् । राप्र. १९५

( २ ) राज्ञः सकाशात् आत्मनः स्वस्य श्रेयः धनमानादिलाभं दृष्ट्वा परं अन्यं सदा सर्वदा राज्ञा सार्धं न संवदेत् न संवादयेत्, किंतु ' महाराजो न भवादृशान् मन्त्रे लक्षयति ' इत्येव लोके परं दर्शयेत् । योग्यभूमिषु युद्धे परराष्ट्रिकैः सह संलापे वा राजानं विशेषयेत् राज्ञोऽपेक्षया स्वीयं शौर्यं यौक्तिकत्वं वा अधिकं दर्शयेत् । तेन राजा प्रीयते इति भावः । नीटी.

---

( १ ) भा. ४।४।२९ ; भामु. ४।४।३६ चाप्यस्य ( चान्यस्य ) ; राप्र. १९४ चाप्यस्य ( चान्येषु ).

( २ ) भा. ४।४।३० ; भामु. ४।४।३७ तथा ( ततः ) ; राप्र. १९४ भामुवत्.

( ३ ) भा. ४।४।३१ ; भामु. ४।४।३८ ; राप्र. १९४.

( ४ ) भा ४।४।३२ ; भामु. ४।४।३९ वर्त (वर्ण) ति श्रियम् ( ते प्रियः ) ; राप्र. १९४ भामुवत्.

( ५ ) भा. ४।४।३३ ; भामु. ४।४।४० श्च का ( स्वका ) निर्बध्नाति ( निर्वदति ) प्रग्रहं ( संपदं ) ; राप्र. १९४ भामुवत्.

( १ ) भा. ४।४।३४ ; भामु. ४।४।४१ चापि यो वसेत् ( योऽपि वा भवेत् ) ; राप्र. १९४–१९५ चापि ( वाऽपि ).

( २ ) भा. ४।४।३५ ; भामु. ४।४।४२ येत्तु ( येत ) ; राप्र. १९५ भामुवत्.

( ३ ) भा. ४।४।३६ ; भामु. ४।४।४३ येन्न ( येच्च ) योग्या ( योग्य ) ; राप्र. १९५ भामुवत्.

[1]अम्लानो बलवान् शूरश्छायेवानपगः सदा ।
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ॥

अम्लानः उत्साही । बलवान् धीबलयुक्तः । मृदुः अनिष्ठुरः । दान्तः जितेन्द्रियः सुशिक्षितो वा ।

नीटी.

[2]अन्यस्मिन् प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ।
अहं किं करवाणीति स राजवसतिं वसेत् ॥

अन्यस्मिन् पुंसि कस्यचित् कार्यस्यार्थे प्रेष्यमाणे ' एहि इदं कुरु ' इति उच्यमाने सति यः तदागमनात् पूर्वं समुत्पतेत् तत्कार्यं कर्तुं स शीघ्रकारी राजवसतिं वसेत् ।

नीटी.

[3]उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा ।
आदिष्टो न विकल्पेत स राजवसतिं वसेत् ॥

आन्तरे धनदारसंरक्षणादौ । बाह्ये सामन्तजये । आदिष्टः आज्ञप्तः । नैव कम्पेत नैव संशयं भयं वा कुर्यात् । निःसंशयो निर्भयश्च तत्कार्यं कुर्यादेवेत्यर्थः ।

नीटी.

[4]यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखमन्विच्छेत्स राजवसतिं वसेत् ॥

प्रियाणां प्रियाणि स्त्रीपुत्रान्नपानादिसुखानि । दुःखेन प्रवासादिना ।

नीटी.

[5]समवेषं न कुर्वीत नात्युच्चैः संनिधौ हसेत् ।
मन्त्रं न बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ॥

समवेषं वस्त्रालंकारादिकं राज्ञा समानं न । उच्चैः अतिशयेन । बहुधा बहुप्रकारं न कुर्यात् न भिन्द्यादित्यर्थः ।

नीटी.

[1]न कर्मणि नियुक्तः सन् धनं किंचिदुपस्पृशेत् ।
प्राप्नोति हि हरन् द्रव्यं बन्धनं यदि वा वधम् ॥

धनं उत्कोचादिना प्राप्तं किंचिदपि अल्पमपि न स्पृशेत् ।

नीटी.

[2]यानं वस्त्रमलंकारं यच्चान्यत्संप्रयच्छति ।
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ॥

यत् संप्रयच्छति राजा तदेव राजदत्तं यानादिकं धारयेत् । न तु तत् अन्यस्मै दद्यादित्यर्थः ।

नीटी.

राज्ञा पालनीया अनुजीविविषया वर्तननियमाः

*[3]यस्तात न कुध्यति सर्वकालं
भृत्यस्य भक्तस्य हिते रतस्य ।
तस्मिन् भृत्या भर्तरि विश्वसन्ति
न चैनमापत्सु परित्यजन्ति ॥

भक्तस्य सेवां कुर्वतः ।

नीटी.

[4]न भृत्यानां वृत्तिसंरोधनेन
बाह्यं जनं संजिघृक्षेदपूर्वम् ।
त्यजन्ति ह्येनमुचितावरुद्धाः
स्निग्धा ह्यमात्याः परिहीनभोगाः ॥

अपूर्वं परकीयम् । स्निग्धा हि स्नेहवन्तोऽपि ।

नीटी.

---

(१) भा. ४।४।३७ ; भामु. ४।४।४४ नपगः ( नुगतः ) ; राप्र. १९५ भामुवत्.

(२) भा. ४।४।३८ ; भामु. ४।४।४५ ; राप्र. १९५.

(३) भा. ४।४।३९ ; भामु. ४।४।४६ पूर्वार्धे ( आन्तरे चैव बाह्ये च राज्ञा यश्चाथ सर्वदा । ) न विकल्पेत ( नैव कम्पेत ) ; राप्र. १९५ भामुवत्.

(४) भा. ४।४।४० ; भामु. ४।४।४७ ; राप्र. १९५.

(५) भा. ४।४।४१ ; भामु. ४।४।४८ द्वितीयचरणे ( नोच्चैः संनिहितो वसेत् ) मन्त्रं न ( न मन्त्रं ) ; राप्र. १९५ भामुवत्.

---

* विदुरेण धृतराष्ट्राय कथिताः अनुजीविषु वर्तननियमाः ।

(१) भा. ४।४।४२ ; भामु. ४।४।४९ दुप ( दपि ) ; राप्र. १९५ बन्धनं ( वेधनं ) शेषं भामुवत्.

(२) भा. ४।४।४३ ; भामु. ४।४।५० ; राप्र. १९५ यानं ( पानं ).

(३) भा. ५।३७।२० ; भामु. ५।३७।२२.

(४) भा. ५।३७।२१ ; भामु. ५।३७।२३ बाह्यं जनं ( राज्यं धनं ) ह्येनमुचिताव ( ह्येनं वञ्चिता वै वि ).

[1]कृत्यानि पूर्वं परिसंख्याय सर्वा-
ण्यायव्ययावनुरूपां च वृत्तिम् ।
संगृह्णीयादनुरूपान्सहायान्
सहायसाध्यानि हि दुष्कराणि ॥

कृत्यानि परिसंख्याय साध्यासाध्यनिश्चयं कृत्वा तथा वृत्तिं भृत्यजीविकां आयव्ययानुरूपां कृत्वेत्यर्थः । दुष्कराणि परराष्ट्रग्रहणादीनि । नीटी.

[2]अभिप्रायं यो विदित्वा तु भर्तुः
सर्वाणि कार्याणि करोत्यतन्द्रीः
वक्ता हितानामनुरक्त आर्यः
शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥

अनुकम्प्यः मादृशः वचनस्वीकारेण अनुग्राह्यः इति प्रार्थयते । नीटी.

[3]वाक्यं तु यो नाऽऽद्रियतेऽनुशिष्टः
प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी
त्याज्यः स तादृक् त्वरयैव भृत्यः ॥

प्रत्याह प्रत्याख्यानं करोति । प्रतिकूलं आज्ञाविरुद्धं वदतीति प्रतिकूलवादी । नीटी.

[4]नाममात्रेण तुष्येत च्छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥

नाममात्रेण एव राजा भवेत् । भोगांस्तु भृत्यैः समानानेव भुञ्जीत । नीटी.

[5]प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥

(१) भा. ५।३७।२२ ; भामु. ५।३७।२४ व्यया-वनु (व्यये चानु).
(२) भा. ५।३७।२३ ; भामु. ५।३७।२५ तन्द्रीः (तन्द्री).
(३) भा. ५।३७।२४ ; भामु. ५।३७।२६.
(४) भा. ५।३८।२४ ; भामु. ५।३८।२७.
(५) भा. ५।३८।२९ ; भामु. ५।३८।३२.

राज्ञो मार्दवोपेतं भृत्यैः सह वर्तनं भृत्यदोषजनकम्

*[1]परिहासश्च भृत्यैस्ते न नित्यं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥
अवमन्यन्ति भर्तारं संहर्षादुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति हि तद्वचः ॥
प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्तेऽभोज्यान्याहारयन्ति च ॥
क्रुध्यन्ति परिदीप्यन्ति भूमिमध्यासतेऽस्य च ।
उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च ॥
जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥
वान्तं च ष्ठीवनं चैव कुर्वते चास्य संनिधौ ।
निर्लज्जा नरशार्दूल व्याहरन्ति च तद्वचः ॥
हयं वा दन्तिनं वाऽपि रथं नृपतिसंमतम् ।
अधिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ ॥
इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवन्ति परिषद्गताः ॥
क्रुद्धे चास्मिन् हसन्त्येव न च हृष्यन्ति पूजिताः ।
संघर्षशीलाश्च सदा भवन्त्यन्योन्यकारणात् ॥
विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।
लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम् ।
अलंकरणभोज्यं च तथा स्नानानुलेपनम् ॥
हेलमाना नरव्याघ्र स्वस्थास्तस्योपशृण्वते ।
निन्दन्ति स्वानधीकारान् संत्यजन्ति च भारत ॥
न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ।
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ।
अस्मत्प्रणेयो राजेति लोके चैव वदन्त्युत ॥
एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥

* एतदादीनां त्रयोदशानां श्लोकानां व्याख्यानं शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १०६२–१०६३) द्रष्टव्यः ।

(१) भा. १२।५६।४८–६०.

अनुजीविनां राज्ञा सह वर्तननियमाः

*[1]प्रागेवोक्तश्च दोषोऽयमाचार्यैर्नृपसेविनाम् ।
अगतीकगतिर्ह्येषा या राज्ञा सह जीविका ॥
आशीविषैश्च तस्याऽऽहुः संगतं यस्य राजभिः ।
बहुमित्राश्च राजानो बहुमित्रास्तथैव च ॥
तेभ्यः सर्वेभ्य एवाऽऽहुर्भयं राजोपसेविनाम् ।
अथैषामेकतो राजन् मुहूर्तादेव भीर्भवेत् ॥
नैकान्तेनाप्रमादो हि कर्तुं शक्यो महीपतौ ।
न तु प्रमादः कर्तव्यः कथंचिद् भूतिमिच्छता ॥
प्रमादाद्धि स्खलेद्राजा स्खलिते नास्ति जीवितम् ।
अग्निं दीप्तमिवाऽऽसीदेद्राजानमुपशिक्षितः ॥
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥
दुर्व्याहृताच्छङ्कमानो दुष्कृताद् दुरधिष्ठितात् ।
दुरासिताद् दुर्व्रजितादिङ्गितादङ्गचेष्टितात् ॥
देवतेव हि सर्वार्थान् कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ।
इति राजन् मयः प्राह वर्तते च तथैव तत् ॥

राज्ञा महति कर्मणि नियोज्या अनियोज्याश्च

‡[2]निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये ।
भक्तं भजेत नृपतिस्तद्धि वृत्तं सतामिह ॥
अप्रकीर्णेन्द्रियं प्राज्ञमत्यन्तानुगतं शुचिम् ।
शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि ॥
एवमेव गुणैर्युक्तो यो न रज्यति भूमिपम् ।
भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि ॥
मूढमैन्द्रियकं लुब्धमनार्यचरितं शठम् ।
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥
त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरम् ।
कार्ये महति यो युञ्ज्याद्धीयते स नृपः श्रियः ॥

अनुजीविदोषजनका राजदोषाः, भृत्यसंग्रहः, राजसहायगुणाः

[1]यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः ।
इन्द्रियाणामनीशत्वादसज्जनबुभूषकः ॥

असत्प्रग्रहरतिः इन्द्रियाणामनिग्रहशीलः । नीटी.

तस्य भृत्या विगुणतां यान्ति सर्वे कुलोद्गताः ।
न च भृत्यफलैरर्थैः स राजा संप्रयुज्यते ॥

भृत्यफलैः भृत्यबलप्राप्यैः अर्थैः धनादिभिः । नीटी.

[2]कीदृशाः संनिकर्षस्था भृत्याः स्युर्वा गुणान्विताः ।
कीदृशैः किंकुलीनैर्वा सह यात्रा विधीयते ॥
[3]न ह्येको भृत्यरहितो राजा भवति रक्षिता ।
राज्यं चेदं जनः सर्वस्तत्कुलीनोऽभिशंसति ॥
[4]न हि प्रशास्तुं राज्यं हि शक्यमेकेन भारत ।
असहायवता तात नैवार्थाः केचिदप्युत ।
लब्धुं लब्ध्वा चापि सदा रक्षितुं भरतर्षभ ॥

लब्धुं लब्धाश्च रक्षितुम्, शक्याः इति शेषः । नीटी.

भीष्म उवाच-
[5]यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः ।
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥

---

* एतदादीनामष्टानां श्लोकानां व्याख्यानं शेषस्थलादिनिर्देशश्च 'प्रकृतयः— अमात्याः' इत्यस्मिन् प्रकरणे (पृ. १२११-१२१२) द्रष्टव्यः ।

‡ एतदादीनां पञ्चानां श्लोकानां व्याख्यानं शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. १०७४) द्रष्टव्यः ।

(१) भा. १२।८३।२४-३१.

(२) भा. १२।९४।१३-१७.

(१) भा. १२।११६।६-७ ; भामु. १२।११५।६-७.

(२) भा. १२।११६।११ ; भामु. १२।११५।११.

(३) भा. १२।११६।१२ ; भामु. १२।११५।१२ शंसति (काङ्क्षति).

(४) भा. १२।११६।१३ ; भामु. १२।११५।१३-१४ 'भीष्म उवाच' इत्यधिकम्, न हि (न च) लब्ध्वा चापि (लब्धा ह्यपि).

(५) भा. १२।११६।१४ ; भामु. १२।११५।१४-१५ 'भीष्म उवाच' इति नास्ति.

[1]समदुःखसुखा यस्य सहायाः सत्यकारिणः ।
अर्थचिन्तापरा यस्य स राज्यफलमश्नुते ॥
[2]संगृहीतमनुष्यश्च यो राजा राजधर्मवित् ।
षड्वर्गं प्रतिगृह्णन् स धर्मात्फलमुपाश्नुते ॥

षड्वर्गं संधिविग्रहादिकम् । नीटी.

युधिष्ठिर उवाच–

[3]न सन्ति कुलजा यत्र सहायाः पार्थिवस्य तु ।
अकुलीनाश्च कर्तव्या न वा भरतसत्तम ॥

उत्तममध्यमाधमस्थानेषु स्वाभाविकगुणतारतम्येनैव सहाया नियोज्या राज्ञा, अस्मिन्नर्थे जामदग्न्यरामाश्रमस्थमुनिकृता शुनः परिवर्तनकथा

भीष्म उवाच–

[4]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निदर्शनकरं लोके सज्जनाचरितं सदा ॥

अत्र वक्ष्यमाणे उत्तमाधममध्यमस्थानेषु क्रमादुत्तमाधममध्यमा एव योज्याः, न तु उच्चस्थाने नीचो नियोज्यः, इत्यस्मिन्नर्थे निदर्शनं श्वदृष्टान्तरूपमितिहासमुदाहरन्ति । नीटी.

[5]अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने ।
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः ॥

अस्यैव वक्ष्यमाणस्य । नीटी.

वने महति कस्मिंश्चिदमनुष्यनिषेविते ।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥

[1]दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः ।
उपवासविशुद्धात्मा सततं सत्पथे स्थितः ॥
[2]तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः ।
सर्वसत्त्वाः समीपस्था भवन्ति वनचारिणः ॥

सत्त्वाः प्राणिनः । नीटी.

[3]सिंहव्याघ्राः सशरभा मत्ताश्चैव महागजाः ।
द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥
[4]ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः ।
तस्यर्षेः शिष्यवच्चैव न्यग्भूताः प्रियकारिणः ॥

सुखप्रश्नदाः 'सुखिनः स्थ' इति प्रश्नस्योत्तरं 'सुखिनः स्मः' इति, तत्प्रदा इत्यर्थः । न्यग्भूताः दासभूताः । नीटी.

[5]दत्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथागतम् ।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहाच्छ्वा महामुनिम् ॥
[6]भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः ।
फलमूलोत्कराहारः शान्तः शिष्टाकृतिर्यथा ॥
[7]तस्यर्षेरुपविष्टस्य पादमूले महामुनेः ।
मनुष्यवद्गतो भावः स्नेहबद्धोऽभवद्भृशम् ॥

भावं चित्तम् । नीटी.

---

(१) भा. १२।११६।१७ ; भामु. १२।११५।१८ सत्य ( प्रिय ) परा यस्य ( पराः सत्याः ).

(२) भा. १२।११६।२२ ; भामु. १२।११५।२३ उत्तरार्धे ( षड्वर्गं प्रतिगृह्णाति स धर्मफलमश्नुते ॥ ).

(३) भा. १२।११७।१ इति श्लोकात् पूर्वं टिप्पण्यां समुद्धृतः .

(४) भा. १२।११७।१ ; भामु. १२।११६।१ नकरं ( न परं ) रितं ( रिते ).

(५) भा. १२।११७।२–३ ; भामु. १२।११६।२–३.

(१) भा. १२।११७।४ ; भामु. १२।११६।४ सत्पथे ( सत्तमा ).

(२) भा. १२।११७।५ ; भामु. १२।११६।५ सर्व ( सर्वे ).

(३) भा. १२।११७।६ ; भामु. १२।११६।६ व्याघ्राः सशरभाः ( व्याघ्रगणाः क्रूराः ).

(४) भा. १२।११७।७ ; भामु. १२।११६।७.

(५) भा. १२।११७।८ ; भामु. १२।११६।८ च्छ्वा ( त्स ).

(६) भा. १२।११७।९ ; भामु. १२।११६।९ त्करा ( दका ).

(७) भा. १२।११७।१० ; भामु. १२।११६।१० मुनेः ( मते ) भावः ( भावं ).

[1]ततोऽभ्ययान्महावीर्यो द्वीपी क्षतजभोजनः ।
श्वार्थमत्यन्तसंदुष्टः क्रूरः काल इवान्तकः ॥

द्वीपी क्षुद्रव्याघ्रः । नीटी.

[2]लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः ।
व्यादितास्यः क्षुधाभग्नः प्रार्थयानस्तदामिषम् ॥

[3]तं दृष्ट्वा क्रूरमायान्तं जीवितार्थी नराधिप ।
प्रोवाच श्वा मुनिं तत्र यत्तच्छृणु महामते ॥

[4]श्वशत्रुर्भगवन्नत्र द्वीपी मां हन्तुमिच्छति ।
त्वत्प्रसादाद्भयं न स्यात्तस्मान्मम महामुने ॥

[5]तथा कुरु महाबाहो सर्वज्ञस्त्वं न संशयः ।
स मुनिस्तस्य विज्ञाय भावज्ञो भयकारणम् ।
रुतज्ञः सर्वसत्त्वानां तमैश्वर्यसमन्वितः ॥

मुनिरुवाच–

[6]न भयं द्वीपिनः कार्यं मृत्युतस्ते कथंचन ।
एष श्वरूपरहितो द्वीपी भवसि पुत्रक ॥

द्वीपिनः द्वीपिरूपात् मृत्युतः । श्वरूपरहितः श्वरूपहीनः । नीटी.

भीष्म उवाच–

[7]ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः ।
चित्राङ्गो विस्फुरन् हृष्टो वने वसति निर्भयः ॥

---

(१) भा. १२।११७।११ ; भामु. १२।११६।११ श्वार्थं ( स्वार्थ ) दुष्टः ( तुष्टः ) क्रूरः ( क्रूर ).

(२) भा. १२।११७।१२ ; भामु. १२।११६।१२ भग्नः ( मुग्नः ).

(३) भा. १२।११७।१३ ; भामु. १२।११६।१३ तं दृष्ट्वा ( दृष्ट्वा तं ) चतुर्थचरणे ( तच्छृणुष्व विशांपते ).

(४) भा. १२।११७।१४ ; भामु. १२।११६।१४ न्नत्र ( न्नेष ) त्तस्मा ( दस्मा ).

(५) भामु. १२।११६।१५.

(६) भा. १२।११७।१५ ; भामु. १२।११६।१६ पुत्रक ( पुत्रकः ).

(७) भा. १२।११७।१६ ; भामु. १२।११६।१७ 'भीष्म उवाच' इति नास्ति, रन् हृष्टो ( रद्दंष्ट्रो ).

[1]तं दृष्ट्वा संमुखे द्वीपी आत्मनः सदृशं पशुम् ।
अविरुद्धस्ततस्तस्य क्षणेन समपद्यत ॥

[2]ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः ।
द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः ॥

[3]व्याघ्रं दृष्ट्वा क्षुधाभग्नं दंष्ट्रिणं वनगोचरम् ।
द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् ॥

क्षुधा भुग्नं पीडितम् । नीटी.

[4]ततः संवासजं स्नेहमृषिणा कुर्वता सदा ।
स द्वीपी व्याघ्रतां नीतो रिपुभिर्बलवत्तरः ।
ततो दृष्ट्वा स शार्दूलो नाभ्यहंस्तं विशां पते ॥

[5]स तु श्वा व्याघ्रतां प्राप्य बलवान् पिशिताशनः ।
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा ॥
यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रः समभवत्तदा ॥

[6]व्याघ्रस्तूटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः ।
नागश्चाऽऽगात्तमुद्देशं मत्तो मेघ इवोत्थितः ॥

मृगैः तृप्तः । नीटी.

[7]प्रभिन्नकरटः प्रांशुः पद्मी विततमस्तकः ।
सुविषाणो महाकायो मेघगम्भीरनिस्वनः ॥

---

(१) भामु. १२।११६।१८.

(२) भा. १२।११७।१७ ; भामु. १२।११६।१९.

(३) भा. १२।११७।१८ ; भामु. १२।११६।२० धाभग्नं ( धा भुग्नं ).

(४) भा. १२।११७।१९ ; भामु. १२।११६।२१ ततः संवासजं ( संवासजं परं ) रिपुभिर्ब ( रिपूणां ब ) नाभ्यहंस्तं ( नाहनत्तं ).

(५) भा. १२।११७।२०–२१ ; भामु. १२।११६।२२–२३.

(६) भा. १२।११७।२२ ; भामु. १२।११७।१ स्तूट ( श्चोट ) त्थितः ( द्रुतः ).

(७) भा. १२।११७।२३ ; भामु. १२।११७।२ मस्तकः ( कुम्भकः ).

[1]तं दृष्ट्वा कुञ्जरं मत्तमायान्तं मदगर्वितम् ।
व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ ॥
[2]ततोऽनयत्कुञ्जरतां तं व्याघ्रमृषिसत्तमः ।
महामेघोपमं दृष्ट्वा तं स भीतोऽभवद्गजः ॥
[3]ततः कमलषण्डानि शल्लकीगहनानि च ।
व्यचरत्स मुदा युक्तः पद्मरेणुविभूषितः ॥
कमलषण्डानि कमलसमूहान् । नीटी.
[4]कदाचिद्रममाणस्य हस्तिनः सुमुखं तदा ।
ऋषेस्तस्योटजस्थस्य कालोऽगच्छन्निशानिशम् ॥
निशानिशं बहुरात्रम् । नीटी.
[5]अथाऽऽजगाम तं देशं केसरी केसरारुणः ।
गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः ॥
[6]तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयाकुलः ।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥
[7]ततः स सिंहतां नीतो नागेन्द्रो मुनिना तदा ।
वन्यं नागणयत्सिंहं तुल्यजातिसमन्वयात् ॥
समन्वयात् संबन्धात् । नीटी.
[8]दृष्ट्वा च सोऽनशत्सिंहो वन्यो भीसन्नवाग्बलः ।
स चाऽऽश्रमेऽवसत्सिंहस्तस्मिन्नेव वने सुखी ॥

(१) भा. १२।११७।२४ ; भामु. १२।११७।३.
(२) भा. १२।११७।२५ ; भामु. १२।११७।४ रतां तं व्याघ्र ( रत्वं व्याघ्रं त ) मेघोपमं ( मेघनिभं ) तं स भीतो ( स भीतो ह्य ).
(३) भा. १२।११७।२६ ; भामु. १२।११७।५.
(४) भा. १२।११७।२७ ; भामु. १२।११७।६ चिद्र ( चिद्भ्र ) सुमु ( संमु ).
(५) भा. १२।११७।२८ ; भामु. १२।११७।७.
(६) भा. १२।११७।२९ ; भामु. १२।११७।८ कुलः ( र्दितः ).
(७) भा. १२।११७।३० ; भामु. १२।११७।९ ततः स ( स ततः ).
(८) भा. १२।११७।३१ ; भामु. १२।११७।१० नश ( मव ) भीसन्नवाग्बलः ( भयसमन्वितः ) वने सुखी ( महावने ).

[1]न त्वन्ये क्षुद्रपशवस्तपोवननिवासिनः ।
व्यदृश्यन्त भयत्रस्ता जीविताकाङ्क्षिणः सदा ॥
[2]कदाचित्कालयोगेन सर्वप्राणिविहिंसकः ।
बलवान् क्षतजाहारो नानासत्त्वभयंकरः ॥
[3]अष्टपादूर्ध्वचरणः शरभो वनगोचरः ।
तं सिंहं हन्तुमागच्छन् मुनेस्तस्य निवेशनम् ॥
[4]तं मुनिः शरभं चक्रे बलोत्कटमरिंदम ।
ततः स शरभो वन्यो मुनेः शरभमग्रतः ।
दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्भयात् ॥
[5]स एवं शरभस्थाने न्यस्तो वै मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शारभ्यं सुखमाप्तवान् ॥
[6]ततः शरभसंत्रस्ताः सर्वे मृगगणा वनात् ।
दिशः संप्राद्रवन् राजन् भयाज्जीवितकाङ्क्षिणः ॥
[7]शरभोऽप्यतिसंदुष्टो नित्यं प्राणिवधे रतः ।
फलमूलाशनं शान्तं नैच्छत्स पिशिताशनः ॥
[8]ततो रुधिरतर्षेण बलिना शरभोऽन्वितः ।
इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः ॥

(१) भा. १२।११७।३२ ; भामु. १२।११७।११ पूर्वार्धे ( तद्भयात् पशवो नान्ये तपोवनसमीपतः । ) भयत्र ( तदा त्र ) सदा ( तथा ).
(२) भा. १२।११७।३३ ; भामु. १२।११७।१२.
(३) भा. १२।११७।३४ ; भामु. १२।११७।१३ चरणः ( नयनः ).
(४) भा. १२।११७।३५ ; भामु. १२।११७।१४-१५ भयात् ( द्वनात् ).
(५) भा. १२।११७।३६ ; भामु. १२।११७।१५-१६ न्यस्तो वै ( संन्यस्तो ) शारभ्यं ( शरभः ).
(६) भा. १२।११७।३७ ; भामु. १२।११७।१६-१७ वनात् ( स्तदा ).
(७) भा. १२।११७।३८ ; भामु. १२।११७।१७-१८ दुष्टो ( हृष्टो ) शान्तं ( कर्तुं ).
(८) भा. १२।११७।३९ ; भामु. १२।११७।१८-१९.

अकृतज्ञत्वे हेतुः श्वयोनिज इति । नीटी.

[1]चिन्तयामास च तदा शरभः श्वानपूर्वकः ।
अस्य प्रभावात्संप्राप्तो वाङ्मात्रेण तु केवलम् ॥
शरभत्वं सुदुष्प्रापं सर्वभूतभयंकरम् ।
अन्येऽप्यत्र भयत्रस्ताः सन्ति सत्त्वा भयार्दिताः ॥
मुनिमाश्रित्य जीवन्तो मृगाः पक्षिगणास्तथा ।
तेषामपि कदाचिच्च शरभत्वं प्रयच्छति ॥
सर्वसत्त्वोत्तमं लोके बलं यत्र प्रतिष्ठितम् ।
पक्षिणामप्ययं दद्यात्कदाचिद्गारुडं बलम् ॥
यावदन्यत्र संप्रीतः कारुण्यं तु समाश्रितः ।
न ददाति बलं तुष्टः सत्त्वस्यान्यस्य कस्यचित् ॥
तावदेनमहं विप्रं वधिष्यामि च शीघ्रतः ।
स्थातुं मया शक्यमिह मुनिघातान्न संशयः ॥
[2]ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च महाप्राज्ञो मुनिः श्वानं तमुक्तवान् ॥

[3]मुनिरुवाच–

[4]अहमग्निप्रभो नाम मुनिर्भृगुकुलान्वयः ।
मनसा निर्दहे सर्वं जगत्संधारयामि च ॥
मम वश्यं जगत्सर्वं देवान् वर्ज्य चराचरम् ।
सन्ति देवाश्च मे भीताः स्वधर्मं न त्यजन्ति ये ॥
स्वधर्माच्चलितान् सर्वान् वाङ्मात्रेणैव निर्दहे ।
किमङ्ग त्वं मया नीतः शरभत्वमनामयम् ।
क्रूरः स सर्वभूतेषु हीनश्चाशुचिरेव च ॥
[4]श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रो नागो मदपटुर्नागः सिंहत्वमाप्तवान् ॥

( १ ) भा. १२।११७।३९ इति श्लोकादूर्ध्वं इत आरभ्य षट् श्लोका भापुस्तके टिप्पण्यां समुद्धृताः.

( २ ) भा. १२।११७।४० ; भामु. १२।११७। १९–२० च ( स ).

( ३ ) भा. १२।११७।४० इति श्लोकादूर्ध्वं इत आरभ्य श्लोकत्रयं भापुस्तके टिप्पण्यां समुद्धृतम्.

( ४ ) भा. १२।११७।४१ ; भामु. १२।११७।२०–२१ व्याघ्रो ( व्याघ्रात् ) माप्तवान् ( मागतः ).

मदपटुः प्रवहन्मदः । नीटी.

[1]सिंहोऽतिबलसंयुक्तो भूयः शरभतां गतः ।
मया स्नेहपरीतेन न विसृष्टः कुलान्वयः ॥

विसृष्टः विविधेन रूपेण त्वं सृष्टः, न तु त्वं कुलान्वयः तेन तेन कुलेनान्वयः संबन्धो यस्य स कुलान्वयः, तादृशस्त्वं न भवसि । नीटी.

[2]यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।
तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ॥
[3]ततो मुनिजनद्वेषाद्दुष्टात्मा श्वाकृतोऽबुधः ।
ऋषिणा शरभः शप्तः स्वं रूपं पुनराप्तवान् ॥

भीष्म उवाच–

[4]स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत् ।
ऋषिणा हुंकृतः पापस्तपोवनबहिष्कृतः ॥
[5]एवं राज्ञा मतिमता विदित्वा शीलशौचताम् ।
आर्जवं प्रकृतिं सत्त्वं कुलं वृत्तं श्रुतं दमम् ॥

दृष्टान्तमुपपाद्य दार्ष्टान्तिकमाह– एवमित्यादिना । नीटी.

[6]अनुक्रोशं बलं वीर्यं भावं संप्रशमं क्षमाम् ।
भृत्या ये यत्र योग्याः स्युस्तत्र
स्थाप्याः सुशिक्षिताः ॥

( १ ) भा. १२।११७।४२ ; भामु. १२।११७।२१–२२ सिंहोऽतिबलसंयुक्तो ( सिंहत्वं बलमापन्नो ) न विसृष्टः ( विसृष्टो न ).

( २ ) भा. १२।११७।४३ ; भामु. १२।११७। २२–२३.

( ३ ) भा. १२।११७।४४ ; भामु. १२।११७।२३ पाद्दु ( प्याद्दु ) श्वा ( प्रा ) स्वं रूपं ( तद्रूपं ).

( ४ ) भा. १२।११८।१ ; भामु. १२।११८।१ गमत् ( गतः ).

( ५ ) भा. १२।११८।२ ; भामु. १२।११८।२ शील ( सत्य ) सत्त्वं कुलं वृत्तं श्रुतं ( सत्यं श्रुतं वृत्तं कुलं ).

( ६ ) भा. १२।११८।३ ; भामु. १२।११८।३ भावं संप्रशमं ( प्रभावं प्रश्रयं ) सुशि ( सुर ) ; राक. २४

[1]नापरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ।
अकुलीननराकीर्णो न राजा सुखमेधते ॥

[2]कुलजः प्रकृतो राज्ञा तत्कुलीनतया सदा ।
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ॥

राज्ञा अनागसि भिद्यमानोऽपि कुलीनः पापे बुद्धिं न कुरुते इत्यन्वयः । नीटी.

[3]अकुलीनस्तु पुरुषः प्रकृतः साधुसंक्षयात् ।
दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ॥

अकुलीनस्तु निन्दामात्रेण शत्रुतां व्रजेत् । नीटी.

भीष्म उवाच–

[4]एवं शुनाऽसमान्भृत्यान्स्वस्थाने यो नराधिपः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥

एवं नीचाननीचे नैव योजयेत् । नीटी.

[5]न श्वा स्वस्थानमुत्क्रम्य प्रमाणमभि सत्कृतः ।
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रपद्यते ॥

विपरीते दोषमाह– न श्वेति । स्वं स्थानं प्रमाणं च उत्क्रम्य उच्चस्थाने नाऽऽरोप्यः, आरोपितश्चेत् प्रमाद्यतीति योजना । नीटी.

[1]स्वजातिकुलसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
प्रकर्तव्या बुधा भृत्या नास्थाने प्रक्रिया क्षमा ॥

[2]अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ।
स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ॥

[3]शरभः शरभस्थाने सिंहः सिंह इवोर्जितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥

कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।
प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥

यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान् स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥

अबुद्धिरिति छेदः । नीटी.

[4]न बालिशा न च क्षुद्रा न चाप्रतिमितेन्द्रियाः ।
नाकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ॥

[5]साधवः कुशलाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षा नराः स्युः पारिपार्श्वकाः ॥

[6]परीक्षेत्प्रत्यहं भृत्यानाप्तैश्चारैर्नराधिपः ।
समानशीलैर्विस्रब्धैर्विवृणोति मनोगतम् ॥

---

यत्र ( तत्र ) स्युस्तत्र (स्युः सम्यक् ) सुशि (परी) उत्त. ; राप्र. १७५ स्युस्तत्र ( स्युः सम्यक् ) सुशि ( परी ) उत्त.

( १ ) भा. १२।११८।४ ; भामु. १२।११८।४ प्रकर्तुं भृत्य ( सचिवं कर्तुं ) ; राक. २४ पू. ; राप्र. १७५ पू. , विष्णुधर्मोत्तरम्.

( २ ) भा. १२।११८।५ ; भामु. १२।११८।५ प्रकृतो ( प्राकृतो ) तत्कु ( स्वकु ) निन्द्य ( भिद्य ).

( ३ ) भा. १२।११८।६ ; भामु. १२।११८।६ प्रकृतः ( प्राकृतः ) क्षयात् ( श्रयात् ).

( ४ ) भा. १२।११९।१ ; भामु. १२।११९।१ स्वस्थाने यो ( स्वे स्वे स्थाने ).

( ५ ) भा. १२।११९।२ ; भामु. १२।११९।२ स्वस्था ( स्वं स्था ) पद्यते ( माद्यति ).

( १ ) भा. १२।११९।३ भामु. १२।११९।३ कुल ( गुण ) स्वव ( सु सं ) बुधा भृत्या ( ह्यमात्यास्तु ).

( २ ) भा. १२।११९।४ ; भामु. १२।११९।४ पन्नं ( पन्नो ).

( ३ ) भा. १२।११९।५–७ ; भामु.

( ४ ) भा. १२।११९।८ ; भामु. १२।११९।८ न चाप्रतिमिते ( नाप्राज्ञा नाजिते ) पार्श्वे ( सर्वे ) राज्ञा हितै ( गुणगणै ) ; राक. २४ न चाप्रतिमिते ( नाप्राज्ञा नाजिते ) ; राप्र. १७५ न चाप्रतिमिते ( नाप्रज्ञा नाजिते ). विष्णुधर्मोत्तरम्.

( ५ ) भा. १२।११९।९ ; भामु. १२।११९।९ कुशलाः ( कुलजाः ) नराः स्युः ( स्युर्नराः ) ; राक. २४ भामुवत् ; राप्र. १७५ भामुवत् , विष्णुधर्मोत्तरम्.

( ६ ) राक. २४ ; राप्र. १७५ विष्णुधर्मोत्तरम्.

[1]न्यग्भूतास्तत्पराः क्षान्ताश्चौक्षाः प्रकृतिजाः शुभाः ।
स्वे स्वे स्थानेऽपरिक्रुष्टास्ते स्यू राज्ञो बहिश्चराः ॥

बहिश्चराः, प्राणा इवेति शेषः ।   नीटी.

[2]सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥

[3]यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥

[4]एवमेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुंधराम् ॥

[5]नावैद्यो नानृजुः पार्श्वे नाविद्यो नामहाधनः ।
संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥

[6]बाणवद्विसृता यान्ति स्वामिकार्यपरा जनाः ।
ये भृत्याः पार्थिवहितास्तेषां सान्त्वं प्रयोजयेत् ॥

विसृताः अपरावर्तिनः ।   नीटी.

[7]नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः ।
वाजिनां च प्रयोगेषु वैशारद्यमिहेष्यते ॥

ज्ञातिबन्धुजनावेक्षी मित्रसंबन्धिसंवृतः ।
पौरकार्यहितान्वेषी भव कौरवनन्दन ॥

[1]एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया ।
श्वा ते निदर्शनं तात किं भूयः श्रोतुमिच्छसि ॥

[2]धनं भोज्यं पुत्रदारं समृद्धिं
सर्वो लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषाः संभवन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत लुब्धान् ॥

समृद्धिम्, च प्राप्यापीति शेषः । धनं उत्कोचरूपं न प्रगृह्णीत न संगृह्णीत ।   नीटी.

[3]संदर्शने सत्पुरुषं जघन्यमपि चोदयेत् ॥

[4]कर्मदृष्ट्याऽथ भृत्यांस्त्वं वरयेथाः कुरूद्वह ।
कारयेथाश्च कर्माणि युक्तायुक्तैरधिष्ठितैः ॥

## वाल्मीकिरामायणम्

गुणानुरूपं भृत्यनियोजनम्

[5]कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्यास्ते तात योजिताः ॥

राजसहायस्य वक्तव्यरीतिः

[6]दोषान् गुणान् वाऽसंपृष्टो न मे त्वं वक्तुमर्हसि ।
अपायमप्युपायं वा कार्यं वा सविनिश्चयम् ॥

---

(१) भा. १२।११९।१० ; भामु. १२।११९।१० क्षान्ता (शान्ता) तिजाः (तिजैः) उत्तरार्धे (स्वस्थानानपकृष्टा ये ते स्यू राज्ञां बहिश्चराः ॥ ).

(२) भा. १२।११९।११ ; भामु. १२।११९।११ एव जनो (एवानुगो).

(३) भा. १२।११९।१२ ; भामु.

(४) भा. १२।११९।१३ ; भामु. १२।११९।१३ तैर्म (तन्म) कृत्स्नां (कृत्स्ना) धराम् (धरा).

(५) भा. १२।११९।१४ ; भामु. १२।११९।१४ वैद्यो (विद्यो) विद्यो (प्राज्ञो).

(६) भा. १२।११९।१५ ; भामु. १२।११९।१५ जनाः (नराः).

(७) भा. १२।११९।१८–१९ ; भामु.

(१) भा. १२।११९।२० ; भामु. १२।११९।२० प्रज्ञा चा (प्रजास्व) श्वा ते (शुनो).

(२) भा. १२।१२०।४६ ; भामु. १२।१२०।४८ भोज्यं (भोगं) सर्वो (सर्वं) लुब्धान् (लुब्धम्).

(३) भा. १२।१२०।४७ ; भामु. १२।१२०।४९ ने सत्पु (नेन पु).

(४) भा. १५।१०।११ ; भामु. १५।५।३८–३९ दृष्ट्या (दृष्ट्वा).

(५) वारा. २।११४।२० ; वाराकु. २।१००।२६ न्याश्च (न्यास्तु) त्यास्ते तात (त्याः कर्मसु).

(६) वारा. ३।४३।८ ; वाराकु. ३।४०।८ (दोषं गुणं वा संपृष्टस्त्वमेवं वक्तुमर्हसि । अपायं वाऽप्युपायं वा कार्यस्यास्य विनिश्चये ॥ ).

¹सुहृदा तेन वक्तव्यं प्रथितेन विपश्चिता ।
प्रबद्धाञ्जलिना राज्ञे यद्रक्षेद् भूतिमात्मनः ॥
²वाक्यं चाप्रतिकूलं हि मृदुपूर्वं हितं शुभम् ।
उपचारेण संयुक्तं वक्तव्यं साधु पार्थिवे ॥
³सावमानं तु यद्वाक्यं न्यायतो हीनमुच्यते ।
नाभिनन्दति तद्राजा मानदो मानवर्जितम् ॥

युक्तोऽयुक्तश्च भृत्यः

⁴यो हि भृत्यो नियुक्तः सन्भर्त्रा कर्मणि दुष्करे ।
कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥
⁵नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् ।
भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥
⁶नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः ।
भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥

## कौटिलीयमर्थशास्त्रम्

विविधभृत्यवेतनपरिमाणानि वेतनद्रव्यप्रकाराश्च

⁷दुर्गजनपदशक्त्या भृत्यकर्म समुदयपादेन स्थापयेत्, कार्यसाधनसहेन वा भृत्यलाभेन । शरीरमवेक्षेत, न धर्मार्थौ पीडयेत् ॥

'भृत्यभरणीयम्' इति सूत्रम् । भृत्याः नाम धीसचिवाः शास्त्रसचिवाः कर्मसचिवा इति त्रिप्रकाराः । तेषां भरणं पोषणमधिकृत्य प्रवृत्तमिदं प्रकरणमित्यर्थः । असद्भृत्यानां शोधनकथनानन्तरं सद्भृत्यभरणस्य प्राप्तावसरत्वात् कथनम् ।

दुर्गजनपदशक्त्यनुसारेण भृत्यकर्म भृत्यभरणीयं समुदयपादेन समुदयस्य सर्वदुर्गजनपदोत्थस्य धनपिण्डस्य चतुर्भागेन स्थापयेत् । कार्यसाधनसहेन वा भृत्यलाभेन कार्यसाधनसमर्थस्य भृत्यस्य लाभो यावता धनेन भवति तावता वा अर्थात् समुदयपादाधिकेनापि वा भृत्यकर्म स्थापयेत् । शरीरं आयशरीरं अवेक्षेत । धर्मार्थौ न पीडयेत् धर्मं देवपितृकार्यनित्यदानादिकं अर्थं दुर्गसेतुवणिक्पथादिकर्मलक्षणं च नोपरुन्ध्यात् । श्रीमूला.

**ऋत्विगाचार्यमन्त्रिपुरोहितसेनापतियुवराजराजमातृराजमहिष्योऽष्टचत्वारिंशत्साहस्राः । एतावता भरणे नानास्वाद्यत्वमकोपकं चैषां भवति ॥**

समुदयपादस्य भृत्यविशेषापेक्षया विनियोगविशेषानाह— ऋत्विगाचार्येत्यादि । ऋत्विगादयः अष्टौ अष्टचत्वारिंशत्साहस्राः अष्टाचत्वारिंशत्सहस्रपणाः । एतावता द्रव्येण भरणे एषां ऋत्विगादीनां नानास्वाद्यत्वं बहुविधभोज्यभोग्ययुक्तत्वं अकोपकं अकोपजनकं तृप्तिकरमित्यर्थः, भवति । श्रीमूला.

**दौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसंनिधातारश्चतुर्विंशतिसाहस्राः । एतावता कर्मण्या भवन्ति ॥**

दौवारिकः द्वाराधिकृतः, अन्तर्वंशिकः अन्तःपुराधिकृतः, प्रशास्ता आयुधाध्यक्षः, समाहर्ता धान्यकराध्यक्षनेता, संनिधाता भाण्डागाराध्यक्षः इत्येते चतुर्विंशतिसाहस्राः । एतावता धनेन कर्मण्याः कर्मयोग्याः भवन्ति । श्रीमूला.

**कुमारकुमारमातृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषद्राष्ट्रपालान्तपालाश्च द्वादशसाहस्राः । स्वामिपरिबन्धबलसहाया ह्येतावता भवन्ति ॥**

कुमारादयोऽष्टौ द्वादशसाहस्राः । तत्र कुमारः अश्वानुचरः, कुमारमाता अशीतिजननेतेति भाषा,

---

(१) वारा. ३।४३।९; वाराकु. ३।४०।९ सुहृदा तेन (संपृष्टेन तु) प्रथितेन (सचिवेन) प्रबद्धा (उद्यता) यद्रक्षे (य इच्छे).

(२) वारा. ३।४३।१०; वाराकु. ३।४०।१० वाक्यं चा (वाक्यम) हि (तु) उत्तरार्धे (उपचारेण युक्तं च वक्तव्यो वसुधाधिपः ॥).

(३) वारा. ३।४३।११; वाराकु. ३।४०।११ पूर्वार्धे (सावमर्दं तु यद्वाक्यं मारीच हितमुच्यते ।) मानदो (मानार्हो).

(४) वारा. ५।६८।७ सन्भर्त्रा (संसक्तव) नुरागेण (नसयुर्वै); वाराकु. ६।१।८.

(५) वाराकु. ६।१।९.

(६) वारा. ५।६८।८ नियुक्तो (भृत्यो वै) भृत्यो युक्तः (शक्तो न यः); वाराकु. ६।१।१०.

(७) कौ. ५।३.

नायकः पदातिनेता, पौरव्यावहारिकः पुरगतव्यवहारचिन्तकः, कार्मान्तिकः कृषिद्रव्यवनादिकर्मान्तनियुक्तः, मन्त्रिपरिषत् द्वादशामात्याः, राष्ट्रपालः, अन्तपालश्च। एतावता स्वामिपरिबन्धबलसहायाः स्वामिनः परिकरबलभूताः सहायाश्च भवन्ति। श्रीमूला।

**श्रेणीमुख्या हस्त्यश्वरथमुख्याः प्रदेष्टारश्चाष्टसाहस्राः। स्ववर्गानुकर्षिणो ह्येतावता भवन्ति ॥**

श्रेण्याः सजातीयशिल्पिगणस्य मुख्याः, हस्त्यश्वरथमुख्याः हस्त्याद्येकैकमुख्याः, प्रदेष्टारश्च कण्टकशोधनाधिकृताश्च अष्टसाहस्राः। एतावता स्ववर्गानुकर्षिणः स्ववर्गानुकूलनशीलाः भवन्ति हि। श्रीमूला.

**पत्त्यश्वरथहस्त्यध्यक्षाः द्रव्यहस्तिवनपालाश्च चतुःसाहस्राः ॥**

पत्त्यध्यक्षादयः चत्वारः द्रव्यवनपाला हस्तिवनपालाश्च चतुःसाहस्राः। श्रीमूला.

**रथिकानीकस्थचिकित्सकाश्वदमकवर्धकयो योनिपोषकाश्च द्विसाहस्राः ॥**

रथिकादयः पञ्च। तत्र रथिकः रथचर्याशिक्षकः, अनीकस्थः गजशिक्षकः। अनीकपाठे अनीकस्थो लक्ष्यः। चिकित्सकः भिषक्, अश्वदमकः अश्वशिक्षकः, वर्धकिः महातक्षा, योनिपोषकाश्च कुक्कुटसूकरादिसंवर्धकाध्यक्षाश्च द्विसाहस्राः। श्रीमूला.

**कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकसूतमागधाः पुरोहितपुरुषाः सर्वाध्यक्षाश्च साहस्राः ॥**

कार्तान्तिकः स्त्रीपुरुषादिलक्षणदर्शनेन अतीतानागतादेष्टा, नैमित्तिकः शाकुनविचक्षणः, मौहूर्तिकः ज्यौतिषिकः, पौराणिकः पुराणवक्ता, सूतः सारथिः, मागधः स्तुतिपाठकः इत्येते षट्, पुरोहितपुरुषाः पुरोहितपरिकर्मिणः, सर्वाध्यक्षाश्च सर्वे सुरासूनासूत्राद्यध्यक्षाश्च साहस्राः। श्रीमूला.

**शिल्पवन्तः पादाताः संख्यायकलेखकादिवर्गः पञ्चशताः ॥**

शिल्पवन्त इति चित्रकारादयः, पादाताः पदातिकर्मकुशलाः, संख्यायकलेखकादिवर्गः— संख्यायकः गणकः, लेखकः लिपिकरः, आदिपदात् उन्मातृपरिमातृप्रभृतयः गृह्यन्ते, तेषां वर्गः पञ्चशताः। श्रीमूला.

**कुशीलवास्त्वर्धतृतीयशताः। द्विगुणवेतनाश्चैषां तूर्यकराः ॥**

कुशीलवास्त्विति। ते अर्धतृतीयशताः पञ्चाशदधिकद्विशतपणाः। एषां कुशीलवानां मध्ये तूर्यकराः प्रधानवाद्यकराः द्विगुणवेतनाः इतरापेक्षया। श्रीमूला.

**कारुशिल्पिनो विंशतिशतिकाः ॥**

कारुशिल्पिन इति। ते विंशतिशतिकाः विंशत्यधिकशतपणाः। श्रीमूला.

**चतुष्पदद्विपदपरिचारकपारिकर्मिकौपस्थायिकपालकविष्टिबन्धकाः षष्टिवेतनाः ॥**

चतुष्पदसंबन्धी परिचारकः अनुचरः पारिकर्मिकः प्रधानः, तथा द्विपदपरिचारकः, द्विपदपारिकर्मिकः, औपस्थायिकः शरीरपरिचारकः, पालकः गवादिरक्षकः, विष्टिः, बन्धकश्चेत्येते षष्टिवेतनाः। श्रीमूला.

**आर्ययुक्तारोहकमाणवकशैलखनकाः सर्वोपस्थायिन आचार्या विद्यावन्तश्च पूजावेतनानि यथार्हं लभेरन् पञ्चशतावरं सहस्रपरम् ॥**

आर्यः शीलाभिजनसंपन्नः सत्पुरुषः, युक्तारोहकः अविधेयहस्त्यश्वारोहणसमर्थः, माणवकः कुपुरुषो वृद्धचोरादिः, शैलखनकः शिलाशिल्पकरः इत्येते, सर्वोपस्थायिनः आचार्याः गान्धर्वाचार्याः, विद्यावन्तश्च धर्मार्थादिशास्त्रकुशलाश्च पूजावेतनानि पूजायुक्तानि वेतनानि यथार्हं लभेरन्। कियत्? पञ्चशतावरं सहस्रपरम्। श्रीमूला.

**दशपणिको योजने दूतो मध्यमः। दशोत्तरे द्विगुणवेतन आयोजनशतादिति ॥**

मध्यमः अमन्दाद्रुतगतिः दूतः योजने दशपणिकः योजनगमने दशपणवेतनः आ दशयोजनात्। दशोत्तरे दशयोजनादुपरि आ योजनशतात् द्विगुणवेतनः प्रतियोजनं विंशतिपणवेतनः। श्रीमूला.

**समानविद्येभ्यस्त्रिगुणवेतनो राजा राजसूयादिषु क्रतुषु, राज्ञः सारथिः साहस्रः ॥**

समानविद्याः मन्त्रिपुरोहिताः, तेभ्यः त्रिगुणवेतनः राजा राजसूयादिषु क्रतुषु, आनीत इति शेषः। राज्ञः सारथिः साहस्रः सहस्रपणः क्रतुषु। श्रीमूला.

**कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनाः साहस्राः ॥**

कापटिकेत्यादि। प्रतीतम्। श्रीमूला.

**ग्रामभृतकसत्रितीक्ष्णरसदभिक्षुक्यः पञ्चशताः ॥**

ग्रामभृतकाः रजकादयः। शेषं प्रतीतम्। श्रीमूला.

**चारसंचारिणोऽर्धतृतीयशताः। प्रयासवृद्धवेतना वा ॥**

चारसंचारिण इति। ते अर्धतृतीयशताः पञ्चाशदधिकद्विशतपणवेतनाः। प्रयासवृद्धवेतना वेति। येषां वेतनमभिहितं ते सर्वे प्रयासानुरूप्येण यथोक्ताभ्यधिकवेतना वा कर्तव्याः। श्रीमूला.

**शतवर्गसहस्रवर्गाणामध्यक्षा भक्तवेतनलाभमादेशं विक्षेपं च कुर्युः। अविक्षेपे राजपरिग्रहदुर्गराष्ट्ररक्षावेक्षणेषु च। नित्यमुख्याः स्युरनेकमुख्याश्च ॥**

यथोक्तवेतनानां भृतकानामेकैकस्य शतवर्गस्य सहस्रवर्गस्य चैकैकमध्यक्षं कृत्वा तन्मुखेन भक्तवेतनदानं राजादेशानुष्ठानं समुचितकर्मनियोजनं च तत्तद्वर्गे कारयेदित्यभिप्रायेणाऽऽह– शतवर्गेत्यादि। अविक्षेप इति व्यापाराभावे। प्रथमान्तपाठोऽशुद्धः। राजपरिग्रहदुर्गराष्ट्ररक्षावेक्षणेषु च कुर्युः अर्थात् अध्यक्षाः स्वं स्वं वर्गम्। नित्यमुख्याः स्युः तत्तद्वर्ग्याः स्वस्वमुख्याधीनप्रवृत्तिका भवेयुः, न तु जातु स्वतन्त्राः। अनेकमुख्याश्च बहुप्रधानाश्च स्युः। श्रीमूला.

**कर्मसु मृतानां पुत्रदारा भक्तवेतनं लभेरन्। बालवृद्धव्याधिताश्चैषामनुग्राह्याः। प्रेतव्याधितसूतिकाकृत्येषु चैषामर्थमानकर्म कुर्यात् ॥**

राजकर्मकरणावस्थायां मृतानां पुत्रदाराः पुत्रा दाराश्च भक्तवेतनं लभेरन्। बालवृद्धव्याधिताश्च, एषां मृतभृत्यानां पोष्यभूताः इत्यार्थम्, अनुग्राह्याः राज्ञा। प्रेतेत्यादि। अर्थमानकर्म अर्थदानबहुमानकर्म। श्रीमूला.

**अल्पकोशः कुप्यपशुक्षेत्राणि दद्यात्, अल्पं च हिरण्यम्। शून्यं वा निवेशयितुमभ्युत्थितो हिरण्यमेव दद्यात्, न ग्रामं ग्रामसंजातव्यवहारस्थापनार्थम् ॥**

अल्पकोश इति। तथाभूतो राजा कुप्यपशुक्षेत्राणि दद्यात् दानीयेभ्यः। अल्पं च हिरण्यं सुवर्णादिकं तु स्वल्पं दद्यात्। शून्यं वा निवेशयितुं अभ्युत्थितः शून्यं देशं ग्रामीकर्तुमुद्युक्तो राजा हिरण्यमेव दद्यात् निविशमानानामनुग्रहार्थम्, न ग्रामं दद्यात्। किमर्थम्? ग्रामसंजातव्यवहारस्थापनार्थं 'अमुकग्रामः एतावद्धिरण्यमूल्यः, अमुकग्रामोत्पन्नाद्धिरण्यादेतावद्देयम्' इत्येवंरूपस्य व्यवहारस्य प्रवर्तनार्थम्। श्रीमूला.

**एतेन भृतानामभृतानां च विद्याकर्मभ्यां भक्तवेतनविशेषं च कुर्यात्। षष्टिवेतनस्याऽऽढकं कृत्वा हिरण्यानुरूपं भक्तं कुर्यात् ॥**

एतेनेति। उक्तेन प्रकारेण भृतानामभृतानां च स्थिरभृतिकानां अस्थिरभृतिकानां च कर्मकराणां विद्याकर्मभ्यां विद्याकर्मप्रकर्षानुसारेण भक्तवेतनविशेषं च भोजनभृतितारतम्यं च कुर्यात्। कियद्वेतनस्य कियद्भक्तमिति व्यवस्थामाह– षष्टिवेतनस्याऽऽढकं कृत्वेति। षष्टिपणवेतनस्य तण्डुलाढकमिति क्रममाश्रित्य हिरण्यानुरूपं भक्तं कुर्यात् हिरण्यवृद्ध्यानुरूप्येण भक्तवृद्धिं कुर्यात्। श्रीमूला.

**पत्त्यश्वरथद्विपाः सूर्योदये बहिः संधिदिवसवर्जं शिल्पयोग्याः कुर्युः। तेषु राजा नित्ययुक्तः स्यात्। अभीक्ष्णं चैषां शिल्पदर्शनं कुर्यात्। कृतनरेन्द्राङ्कं शस्त्रावरणमायुधागारं प्रवेशयेत्। अशस्त्राश्चरेयुरन्यत्र मुद्रानुज्ञातात्। नष्टं विनष्टं वा द्विगुणं दद्यात्। विध्वस्तगणनां च कुर्यात् ॥**

संधिदिवसवर्जं अमावास्याद्यनध्यायदिवसान् वर्जयित्वा। शिल्पयोग्याः विचित्राः शस्त्रचर्याशिक्षाः। तेषु पत्त्यादिषु। नित्ययुक्तः नित्यासक्तः। कृतनरेन्द्राङ्कं दत्तराजमुद्राचिह्नम्। शस्त्रावरणं शस्त्रं चाऽऽवरणं च।

-अशस्त्राश्चरेयुरित्यादि । मुद्रानुज्ञातादन्यत्र मुद्रादानानुज्ञातसशस्त्रसंचारं राजपुरुषमपहाय । मुद्रानुज्ञानादित्यपि पाठः । नष्टं विनष्टं वेति । विस्मृतं उपहतं च शस्त्रावरणं द्विगुणं दद्यात् । विध्वस्तगणनां च कुर्यादिति । आयुधशालादौ एतावन्ति शस्त्राणि ध्वस्तानीति गणयित्वा जानीयात् ।                                        श्रीमूला.

**सार्थिकानां शस्त्रावरणमन्तपाला गृह्णीयुः, समुद्रमवचारयेयुर्वा । यात्रामभ्युत्थितो वा सेनामुद्योजयेत् । ततो वैदेहकव्यञ्जनाः सर्वपण्यान्यायुधीयेभ्यो यात्राकाले द्विगुणप्रत्यादेयानि दद्युः । एवं राजपण्यविक्रयो वेतनप्रत्यादानं च भवति ॥**

सार्थेन चरतां परदेशागतानां शस्त्रावरणं अर्थात् मुद्रानुज्ञानरहितं अन्तपालाः गृह्णीयुः । समुद्रं मुद्रानुज्ञानयुक्तं अवचारयेयुः अवारितं विसृजेयुः । यात्रामभीति । युद्धयात्रामुद्दिश्य उत्थितः उद्यतः सेनां उद्योजयेत् समूहयेत् । ततः वैदेहकव्यञ्जनाः राजप्रयुक्ताः सर्वपण्यानि सर्वाणि पण्यानि युद्धोपकरणभूतानि आयुधीयेभ्यः अर्थात् निरुपकरणेभ्यः यात्राकाले द्विगुणप्रत्यादेयानि दद्युः युद्धावसाने द्विगुणमेतानि प्रत्यर्पणीयानीत्युक्त्वा ऋणत्वेन दद्युः । ईदृशदानस्य फलमाह– एवमिति । अनेन प्रकारेण दाने राजपण्यविक्रयः वेतनप्रत्यादानं च दत्तवेतनप्रत्यापत्तिश्च भवति सिध्यति ।                                        श्रीमूला.

**एवमवेक्षितायव्ययः कोशदण्डव्यसनं नावाप्नोति ॥**

यथोक्तेन प्रकारेण अवेक्षितायव्ययः राजा कोशदण्डव्यसनं धनदरिद्रतां सैन्यदरिद्रतां च नावाप्नोति ।                                        श्रीमूला.

**इति भक्तवेतनविकल्पः ॥**

इति भक्तवेतनविकल्प इति । व्याख्यात इति शेषः ।                                        श्रीमूला.

**सत्रिणश्चाऽऽयुधीयानां वेश्याः कारुकुशीलवाः ।**
**दण्डवृद्धाश्च जानीयुः शौचाशौचमतन्द्रिताः ॥**

आयुधयोधिनां शुचित्वमशुचित्वं च सत्रिणः वेश्याः कारवः कुशीलवाः पुराणभटाश्चाप्रमत्ता विद्युरितीममर्थं श्लोकेनाऽऽह– सत्रिणश्चेत्यादि ।                                        श्रीमूला.

लोकयात्राज्ञानम्, मन्त्रिसचिवाद्यनुजीविगुणाः, मन्त्रिसचिवादिभिराश्रयणीयराजगुणाः, अनुजीविज्ञानपरीक्षा, अनुजीविपदनियुक्तस्य वर्ज्यावर्ज्यानि आत्मरक्षणपरता च

**[1]लोकयात्राविद्राजानमात्मद्रव्यप्रकृतिसंपन्नं प्रियहितद्वारेणाऽऽश्रयेत । यं वा मन्येत– यथाऽऽहमाश्रयेप्सुरेवमसौ विनयेप्सुराभिगामिकगुणयुक्त इति, द्रव्यप्रकृतिहीनमप्येनमाश्रयेत । न त्वेवानात्मसंपन्नम् । अनात्मवान् हि नीतिशास्त्रद्वेषादनर्थ्यसंयोगाद्वा प्राप्यापि महदैश्वर्यं न भवति ॥**

'अनुजीविवृत्तम्' इति सूत्रम् । अनुजीविनः मन्त्र्यादयः, तेषां वृत्तं स्वामिनं प्रति अनुष्ठानं उच्यते इति सूत्रार्थः । पूर्वस्मिन् प्रकरणे भृत्यानां प्रस्तुतत्वादिह तद्वृत्ताख्यानस्य सांगत्यं स्पष्टमेव ।

कीदृग्गुणोऽनुजीवनाधिकारी कीदृग्गुणमनुजीव्यमाश्रयेतेत्याकाङ्क्षायामाह– लोकयात्राविदिति । अर्थशास्त्राभिज्ञः राजानं आत्मद्रव्यप्रकृतिसंपन्नं आत्मसंपन्नं द्रव्यप्रकृतिसंपन्नं च, तत्राऽऽत्मसंपन्नं 'महाकुलीनो दैवबुद्धिः' (कौ. ६।१) इत्यादिना प्रकृतिसंपत्प्रकरणे वक्ष्यमाणया आत्मसंपदा युक्तम्, द्रव्यप्रकृतिसंपन्नं द्रव्यप्रकृतिभिरमात्यादिभिः पञ्चभिर्जानपदत्वादिगुणयोगिभिः युक्तं प्रियहितद्वारेण राज्ञः प्रियाश्च हिताश्च ये पुरुषास्तद्द्वारेण आश्रयेत । राज्ञस्तथाविधस्यालाभे त्वाह– यं वेति । यथा अहं आश्रयेप्सुः आश्रयार्थी एवमसौ विनयेप्सुः विद्यावृद्धसंयोगार्थी आभिगामिकगुणयुक्तः महाकुलीनत्वादिभिराभिगामिकगुणैर्युक्तः इति यं वा मन्येत एनं राजानं द्रव्यप्रकृतिहीनमपि सन्तं आश्रयेत । अनात्मसंपन्नं तु आत्मसंपद्रहितं तु नैवाऽऽश्रयेत । तत्र हेतुमाह– अनात्मवान् हीति । सः नीतिशास्त्रद्वेषात् अर्थात् मौर्ख्यप्राज्ञपुरुषासंयोगकृतात् अनर्थ्यसंयोगाद्वा अनर्थावहानां मृगयाद्यूतस्त्रीपानानां वाग्दण्डपारुष्यार्थदूषणानां नटनर्तकादीनां च संयोगाद्वा प्राप्यापि महदैश्वर्यम्,

---

(१) कौ. ५।४.

महदिति राज्यमुच्यते, तदीश्वरत्वं पितृपैतामहं लब्ध्वाऽपि न भवति नश्यति। श्रीमूला.

**आत्मवति लब्धावकाशः शास्त्रानुयोगं दद्यात्। अविसंवादाद्धि स्थानस्थैर्यमवाप्नोति। मतिकर्मसु पृष्टस्तदात्वे चाऽऽयत्यां च धर्मार्थसंयुक्तं समर्थं प्रवीणवदपरिषद्भीरुः कथयेत्। ईप्सितः पणेत-धर्मार्थानुयोगमविशिष्टेषु बलवत्संयुक्तेषु दण्डधारणं मत्संयोगे तदात्वे च दण्डधारणमिति न कुर्याः, पक्षं वृत्तिं गुह्यं च मे नोपहन्याः, संज्ञया च त्वां कामक्रोधदण्डनेषु वारयेयमिति॥**

आत्मसंपन्ने आश्रये लब्धावकाशः प्राप्तावसरः शास्त्रानुयोगं अर्थशास्त्रादिविषयप्रश्नोत्तरं दद्यात्। किमर्थमिदमित्याह– अविसंवादाद्धीत्यादि। स्वोक्तेऽर्थे शास्त्राविसंवादिनि हि सति निश्चितशास्त्रज्ञभावः स्थिरामधिकारपदे स्थितिमनुजीवी प्राप्नोति। लक्षणपरीक्षानन्तरं लक्ष्यपरीक्षामाह– मतिकर्मसु पृष्ट इति। बुद्धिसाध्यकर्मविषयेऽनुयुक्तः तदात्वे चाऽऽयत्यां च समर्थं तत्काले चोत्तरकाले च क्षमं धर्मार्थसंयुक्तं प्रवीणवत् मतिकर्मनिपुणैस्तुल्यं अपरिषद्भीरुः सभाकम्परहितः कथयेत्। ईप्सित इति। लक्ष्यलक्षणकोविदत्वमवधार्य राज्ञा स्वामात्यकर्मणे प्रार्थितोऽनुजीवी पणेत संविदं कुर्यात् राज्ञा सह। केन प्रकारेण? धर्मार्थानुयोगमविशिष्टेषु गुणोत्कर्षरहितेषु धर्मार्थप्रश्नं बलवत्संयुक्तेषु दण्डधारणं मत्संयोगे तदात्वे च दण्डधारणं मत्संबद्धे विषये सद्यश्च दण्डप्रयोगं इति एवंजातीयं न कुर्याः। पक्षं स्ववर्गं वृत्तिं व्यापारं गुह्यं च रहस्यं च मे नोपहन्याः, संज्ञया च अक्षिनिकोचभ्रूविकारादिचेष्टया च त्वां कामक्रोधदण्डनेषु कामक्रोधनिमित्तकेषु मिथ्यादण्डनेषु, प्रवर्तमानमिति शेषः, वारयेयं इति अनेन प्रकारेण। श्रीमूला.

**आयुक्तप्रदिष्टायां भूमावनुज्ञातः प्रविशेत्। उपविशेच्च पार्श्वतः संनिकृष्टविप्रकृष्टः। वरासनं विगृह्यकथनमसभ्यमप्रत्यक्षमश्रद्धेयमनृतं च वाक्यमुच्चैरनर्मणि हासं वातष्ठीवने च शब्दवती न कुर्यात्। मिथः कथनमन्येन, जनवादे द्वंद्वकथनम्, राज्ञो वेषमुद्धतकुहकानां च, रत्नातिशयप्रकाशाभ्यर्थनम्, एकाक्ष्योष्ठनिर्भोगम्, भ्रुकुटीकर्म, वाक्यावक्षेपणं च ब्रुवति। बलवत्संयुक्तविरोधं स्त्रीभिः स्त्रीदर्शिभिः सामन्तदूतैर्द्वेष्यापक्षावक्षिप्तानर्थ्यैश्च प्रतिसंसर्गमेकार्थचर्यां संघातं च वर्जयेत्॥**

आयुक्ताः अधिकारपदनियुक्ताः, तत्प्रवेशार्हायाम्। 'आदिष्टः प्रदिष्टायाम्' इत्यपपाठः। भूमौ अनुज्ञातः प्रविशेत्। उपविशेच्च पार्श्वतः राज्ञः पार्श्वे, न त्वग्रे, श्वासादिस्पर्शभयात्। कथंभूतः? संनिकृष्टविप्रकृष्टः अनतिसंनिकृष्ट इत्यर्थः। स्वग्रन्थे 'विप्रकृष्ट' इति न पठ्यते। वरासनमिति। श्रेष्ठमासनम्। परासनमिति पाठेऽपि स एवार्थः। विगृह्यकथनं आक्षिप्य कथनम्, असभ्यं अश्लीलम्, अप्रत्यक्षं परोक्षार्थविषयम्, अश्रद्धेयं अविश्वास्यम्, अनृतं च असत्यं च वाक्यम्, उच्चैरनर्मणि हासं नर्मानवसरे उच्चैर्हसितम्, शब्दवती वातष्ठीवने च सशब्दे उपर्यधोवातवृत्तिष्ठीवने च न कुर्यात्। मिथः कथनमन्येनेति। राजसंनिधावन्येन रहसि मन्त्रणम्, जनवादे द्वंद्वकथनं समूहवादे 'इदमेवं भवति, न त्वदः' इति विधिनिषेधादिकथनम्, राज्ञो वेषम्, उद्धतकुहकानां च वेषं उद्धतानां पाषण्डादीनां च वेषम्, रत्नातिशयप्रकाशाभ्यर्थनं राजधार्यमाणरत्नगतस्यातिशयस्य स्वस्मै प्रकाशनप्रार्थनम्, एकाक्ष्योष्ठनिर्भोगं एकस्याक्ष्णः ओष्ठस्य च वक्रत्वम्, भ्रुकुटीकर्म भ्रूभङ्गम्, वाक्यावक्षेपणं च ब्रुवति राज्ञि कथयति सति मध्ये वाक्यकथनं च, न कुर्यादिति वर्तते। बलवत्संयुक्तविरोधमिति। बलवत्संबन्धिभिः सह विरोधम्, स्त्रीभिः स्त्रीदर्शिभिः स्त्रीदर्शनशीलैरन्तर्वंशिकैः सामन्तदूतैः विषयानन्तरनृपतिदूतैः द्वेष्यापक्षावक्षिप्तानर्थ्यैश्च राज्ञो द्वेष्यैरक्षिगतैः अपक्षैः असहायैरुदासीनैः अवक्षिप्तैः अपहृतार्थमानैः अनर्थ्यैः नटनर्तकादिभिश्च प्रतिसंसर्गं सख्यम्, एकार्थचर्यां बहूनामर्थिनां मध्ये एकार्थानुष्ठानम्, संघातं च संघसमवायं च वर्जयेत्, अर्थात् प्रधानामात्यादिः। श्रीमूला.

**अहीनकालं राजार्थं स्वार्थं प्रियहितैः सह ।**
**परार्थं देशकाले च ब्रूयाद्धर्मार्थसंहितम् ॥**

विधिशेषं श्लोकैराह– अहीनकालमित्यादि । राजार्थे राजप्रयोजनं अहीनकालं ब्रूयात् विनाकालविलम्बं सद्य एव कथयेत् । स्वार्थे आत्मप्रयोजनं प्रियहितैः सह राज्ञः प्रियैर्हितैश्च जनैः सह ब्रूयात् । परार्थे परस्य प्रयोजनं देशकाले समुचितेऽवसरे ब्रूयात् । धर्मार्थसंहितमिति सर्वशेषः । यद्यत् ब्रूयात् तत् सर्वं धर्मेणार्थेन च संयुक्तं स्यादित्यर्थः । श्रीमूला.

**पृष्टः प्रियहितं ब्रूयान्न ब्रूयादहितं प्रियम् ।**
**अप्रियं वा हितं ब्रूयाच्छृण्वतोऽनुमतो मिथः ॥**

राज्ञाऽनुयुक्तः प्रियहितं ब्रूयात् । अहितं प्रियं न ब्रूयात् । अप्रियं वा हितं ब्रूयात् । कथंभूतस्य कथंभूतो ब्रूयात् ? शृण्वतोऽनुमतो मिथः ब्रूहीत्यभ्यनुज्ञातो रहसि श्रद्धयाऽऽकर्णयतः । श्रीमूला.

**तूष्णीं वा प्रतिवाक्ये स्याद्द्वेष्यादींश्च न वर्णयेत् ।**
**अप्रिया अपि दक्षाः स्युस्तद्भावाद्ये बहिष्कृताः ॥**
**अनर्थ्याश्च प्रिया दृष्टाश्चित्तज्ञानानुवर्तिनः ।**
**अभिहास्येष्वभिहसेद्घोरहासांश्च वर्जयेत् ॥**

अप्रियं हितमुच्यमानं न शृणुयादिति मन्यमानः किं कुर्यादिति सार्धश्लोकेनाऽऽह– तूष्णीं वा प्रतिवाक्ये स्यादिति । प्रतिवाक्यदानप्रसङ्गे अप्रियकथनभये सति मौनमवलम्बेत । द्वेष्यादींश्च न वर्णयेत् राज्ञो द्वेष्यादिवर्णनं न कुर्यात् । कुत इत्याह– ये तद्भावाद्बहिष्कृताः राजच्छन्दाननुवर्तिनः ते दक्षा अपि अप्रियाः स्युः । चित्तज्ञानानुवर्तिनः राजच्छन्दानुवर्तिनः अनर्थ्याश्च अनर्थावहाः नटनर्तकादयोऽपि प्रियाः दृष्टाः । अभिहास्येष्विति । हसति राज्ञि तदभिमुखहसनीयेष्वर्थेषु अभिहसेत् अभिमुखं हसेत्, न तु काष्ठवन्निर्विकारस्तिष्ठेत् । घोरहासान् वर्जयेच्च । श्रीमूला.

**परात्संक्रामयेद्घोरं न च घोरं स्वयं वदेत् ।**
**तितिक्षेताऽऽत्मनश्चैव क्षमावान् पृथिवीसमः ॥**

परद्वारेण घोरं अश्राव्यमर्थं संक्रामयेत् राजानं ग्राहयेत्, न च घोरं स्वयं वदेत् । 'परे वदेत्' इति मूलमातृकापाठे तु परविषये इत्यर्थः । क्षमावान् पृथिवीसमः आत्मनश्चैव घोरं उपनतं तितिक्षेत सहेत । श्रीमूला.

**आत्मरक्षा हि सततं पूर्वं कार्या विजानता ।**
**अग्नाविव हि संप्रोक्ता वृत्ती राजोपजीविनाम् ॥**

अग्निसेवनवत् राजसेवनं सुलभापायमिति कृत्वा तत् कुर्वता स्वात्मरक्षायां प्रतिजागरितव्यमित्याह– आत्मरक्षा हीत्यादि । श्रीमूला.

**एकदेशं दहेदग्निः शरीरं वा परं गतः ।**
**सपुत्रदारं राजा तु घातयेद्वर्धयेत वा ॥**

अग्न्यपेक्षया राज्ञो व्यतिरेकमप्याह– एकदेशं दहेदग्निरित्यादि । सुबोधम् । श्रीमूला.

राजसहायानां मन्त्रिसचिवादीनां शिष्टसंकेतानुसरणं राजव्यसननिवारणं च कर्तव्यम्, राजप्रीत्यप्रीतिलिङ्गानि

**[1]नियुक्तः कर्मसु व्ययविशुद्धमुदयं दर्शयेत् ॥**

'समयाचारिकम्' इति सूत्रम् । समयस्य व्यवस्थायाः आचारः अनुष्ठानं समयाचारः, तमधिकृत्य प्रवृत्तमित्यर्थः । पूर्वाध्याये मन्त्रिणां वृत्तमुक्तम्, तन्मूलत्वात् कोशस्य राज्यफलत्वाच्च अर्थाधिकारिणां वृत्तमिहोच्यते इति संगतिः ।

कर्मसु नियुक्तः समाहर्तृसंनिधातृप्रभृतिपुरुषः व्ययविशुद्धं उदयं आयं दर्शयेत् । श्रीमूला.

**आभ्यन्तरं बाह्यं गुह्यं प्रकाश्यमात्ययिकमुपेक्षितव्यं वा कार्यं 'इदमेवम्' इति विशेषयेच्च ॥**

अभ्यन्तरभवं दुर्गसंबन्धि, बाह्यं बहिर्भवं जनपदसंबन्धि, इदमुभयविधं कार्यं गुह्यं प्रकाश्यं आत्ययिकं उपेक्षितव्यं वेति चतुर्विधं 'इदमेवम्' इति विशेषयेत् इदमीदृशमिति राज्ञे निवेदयेत् लेख्ये निवेशयेच्च । तत्र गुह्यं राजरहस्यादि, प्रकाश्यं राजसर्वज्ञत्वख्यापनादिकं कोशाभिसंहरणोक्तम्, आत्ययिकं सद्योऽननुष्ठाने हीयमानम्, उपेक्षितव्यं सद्योऽननुष्ठानेऽप्यहीयमानम् । श्रीमूला.

---

(१) कौ. ५।५.

**मृगयाद्यूतमद्यस्त्रीषु प्रसक्तं नैनमनुवर्तेत प्रशंसाभिः । आसन्नश्चास्य व्यसनोपघाते प्रयतेत । परोपजापातिसंधानोपधिभ्यश्च रक्षेत् ॥**

मृगयाद्यूतमद्यस्त्रीषु प्रसक्तं चेति । तथाविधं राजानं *अनुवर्तेत प्रशंसाभिः श्लाघावचनैरनुसरेत् । अनुवर्तनफलमाह– आसन्नश्च अस्य राज्ञः व्यसनोपघाते प्रयतेत प्रकर्षेणोत्सहेत । परोपजापातिसंधानोपधिभ्यश्च परप्रयुक्तात् उपजापात् भेदात् अतिसंधानात् वञ्चनात् उपधेः तीक्ष्णरसदादेश्च रक्षेत् । श्रीमूला.

**इङ्गिताकारौ चास्य लक्षयेत् । कामद्वेषहर्षदैन्यव्यवसायभयद्वंद्वविपर्यासमिङ्गिताकाराभ्यां हि मन्त्रसंवरणार्थमाचरन्ति प्राज्ञाः ॥**

इङ्गितं अयथापूर्वमाचरणम्, आकारः मुखरागादिः, तौ च अस्य लक्षयेत् सूक्ष्मेक्षिकया जानीयात् । कामद्वेषहर्षदैन्यव्यवसायभयद्वंद्वविपर्यासं कामादीनां व्यत्ययेन प्रदर्शनं इङ्गिताकाराभ्यां प्राज्ञाः आचरन्ति हि । किमर्थमाचरन्ति ? मन्त्रसंवरणार्थं मन्त्रगोपनार्थम् । अतो दुर्लक्ष्यौ मतिमताऽपीङ्गिताकारावितिं तद्दर्शनेऽवधानविशेषो देय इति भावः । श्रीमूला.

**दर्शने प्रसीदति, वाक्यं प्रतिगृह्णाति, आसनं ददाति, विविक्ते दर्शयते, शङ्कास्थाने नातिशङ्कते, कथायां रमते, परज्ञाप्येष्वपेक्षते, पथ्यमुक्तं सहते, स्मयमानो नियुङ्क्ते, हस्तेन स्पृशति, श्लाघ्येनोपहसति, परोक्षे गुणं ब्रवीति, भक्ष्येषु स्मरति, सह विहारं याति, व्यसनेऽभ्यवपद्यते, तद्भक्तीन् पूजयति, गुह्यमाचष्टे, मानं वर्धयति, अर्थं करोति, अनर्थं प्रतिहन्तीति तुष्टज्ञानम् ॥**

प्रीतिलिङ्गान्याह– दर्शन इति । दर्शने प्रसीदति तुष्यति । वाक्यं प्रतिगृह्णाति सादरं शृणोति । आसनं ददाति । विविक्ते दर्शयते जनान्तराप्रवेश्येऽन्तःपुरादावपि दर्शनावसरं ददाति । शङ्कास्थाने नातिशङ्कते, विश्वासात् । कथायां संभाषणप्रबन्धे रमते । परज्ञाप्येषु अपेक्षते अन्यैर्विज्ञाप्येषु कार्येष्वपि प्रियपुरुषसाचिव्यमिच्छति । 'परिज्ञाप्येषु' इति पाठेऽप्येष एवार्थः । पथ्यं उक्तं सहते अर्थात् परुषमपि । स्मयमानो नियुङ्क्ते 'त्वमेवेदं कर्तुमर्हसि' इति सस्मितं कार्ये प्रेरयति । हस्तेन स्पृशति स्पृशन् वक्ति । श्लाघ्येन उपहसति श्लाघनीयेन कर्मणा कृतेन संमुखे परिहसति । परोक्षे गुणं ब्रवीति अप्रत्यक्षे श्लाघते । भक्ष्येषु स्मरति संविभागार्थम् । सह विहारं संचारं याति । व्यसने अभ्यवपद्यते तत्परिहारसाहाय्यमाचरति । तद्भक्तीन् पूजयति तदनुरक्तान् बहु मन्यते । गुह्यं रहस्यं आचष्टे । मानं वर्धयति उत्कृष्टपदारोपणादिना बहुमानमुपचिनोति । अर्थं करोति धर्मार्थकामलक्षणमीप्सितं साधयति । अनर्थं प्रतिहन्ति निवारयति । इति तुष्टज्ञानं उक्तप्रकारः प्रीतज्ञानोपायः । श्रीमूला.

**एतदेव विपरीतमतुष्टस्य । भूयश्च वक्ष्यामः– संदर्शने कोपः, वाक्यस्याश्रवणप्रतिषेधौ, आसनचक्षुषोरदानम्, वर्णस्वरभेदः, एकाक्षिभ्रुकुट्योष्ठनिर्भोगः, स्वेदश्च, श्वासस्मितानामस्थानोत्पत्तिः, परिमन्त्रणम्, अकस्माद्व्रजनम्, वर्धनमन्यस्य, भूमिगात्रविलेखनम्, अन्यस्योपतोदनम्, विद्यावर्णदेशकुत्सा, समनिन्दा, प्रतिदोषनिन्दा, प्रतिलोमस्तवः, सुकृतानवेक्षणम्, दुष्कृतानुकीर्तनम्, पृष्ठावधानम्, अतित्यागः, मिथ्याभिभाषणम्, राजदर्शिनां च तद्वृत्तान्यत्वम् ॥**

उक्तमेव दर्शनप्रसादादिकं विपरीतं अर्थादप्रसादादिकं अतुष्टस्य ज्ञानोपायः । भूयश्च अधिकं च लिङ्गं वक्ष्यामः । तन्निर्दिशति– संदर्शने कोप इत्यादि । सः, वाक्यस्याश्रवणप्रतिषेधौ, आसनचक्षुषोरदानं आसनस्याप्रतिपादनं दृष्ट्याऽप्यसंभावनं च, वर्णस्वरभेदः वर्णभेदः स्वरभेदश्च, एकाक्षिभ्रुकुट्योष्ठनिर्भोगः काकाक्ष्यवलोकनं भ्रूभङ्गः ओष्ठवक्रीकरणं च, स्वेदश्च, श्वासस्मितानामस्थानोत्पत्तिः दीर्घनिःश्वासानां हासानां चाकारणोत्पत्तिः, परिमन्त्रणं अन्येन सह मन्त्रणम्, अकस्मात् व्रजनं प्रयोजनं विना गमनम्, वर्धनमन्यस्य विहायेममितरस्याऽऽदरणम्, भूमिगात्रविलेखनं भूमौ गात्रे वा नखेन विलेखनम्,

* 'नैनमनुवर्तेत' इत्यत्र 'चानुवर्तेत' इति टीकापुस्तकपाठः ।

अन्यस्योपतोदनं परस्य ताडनम्, विद्यावर्णदेशकुत्सा विद्यावर्णदेशानां तदीयानां निन्दनम्, समनिन्दा तत्तुल्यकर्मणो निन्दा। 'समदोषनिन्दा' इत्यपि पाठः। प्रतिदोषनिन्दा तद्गतदोषसमानस्य दोषस्य निन्दा, प्रतिलोमस्तवः तद्विरुद्धवृत्तीनां श्लाघनम्, सुकृतानवेक्षणं तेन सम्यक् कृतस्यागणनम्, दुष्कृतानुकीर्तनं असुष्ठुकृतस्यासकृत् संशब्दनम्, पृष्ठावधानं प्रतिगच्छतस्तस्य पृष्ठतो विलोकनम्, अतित्यागः विसृष्टप्रत्यागतस्य कार्यापदेशेन पुनःपुनर्विसर्जनम्, मिथ्याभिभाषणं भावशून्यं संभाषणम्, राजदर्शिनां तद्वृत्तान्यत्वं च राजसेवकानां तस्मिन् वृत्तिभेदश्च। श्रीमूला.

**वृत्तिविकारं चावेक्षेताप्यमानुषाणाम् ॥**

अमानुषाणामपि पक्ष्यादीनामपि अपिशब्दात् मनुष्याणामपि वृत्तिविकारं च वृत्तिभेदं च अवेक्षेत लक्षयेत्। श्रीमूला.

**अयमुच्चैः सिञ्चतीति कात्यायनः प्रवव्राज ॥**

तत्र मानुषाणां तदवेक्षणमुदाहरति— अयमित्यादि। अयं उदकसेचकः उच्चैः ऊर्ध्वं सिञ्चति इति हेतोः कात्यायनः तदाख्यो राजमन्त्री प्रवव्राज राजानं परित्यज्य गतः। अत्रैष इतिहासः— पौण्ड्रदेशे किल सोमदत्तो नाम राजा कंचिदपराधे निमित्ते स्वपुत्रं बन्धनागारे निवेशयितुं मन्त्रिणा कात्यायनेन सह संमन्त्रितवान्। इममर्थमिङ्गिताकाराभ्यां तत्सख्या विज्ञाय पुत्रमन्यत्र निन्युः। राजा तु मन्त्रिणमेव मन्त्रभेत्तारं मन्यमानस्तद्वधाय स्वसेवकानादिदेश। श्रुततदादेशरहस्यः कश्चिदुदकसेचकः आगच्छति कात्यायने जलमूर्ध्वतो विकिरन्नसिञ्चत्। मन्त्री च मद्देहजलबिन्दुपातपरिहाराय अधः शनैः सेचनं ह्यो यावत् कृतवतोऽद्येदमुच्चैरुदकसेचनं किमपि मयि राजप्रकोपसूचकं वृत्तिवैकृतमिति जानन् राजानं परितत्याजेति। श्रीमूला.

**क्रौञ्चोऽपसव्यमिति कणिङ्को भारद्वाजः ॥**

अथामानुषाणामाह— क्रौञ्च इति। कुङ्नामा पक्षिविशेषः अपसव्यम्, गत इति शेषः, इति हेतोः कणिङ्कः तदाख्यः भारद्वाजः भारद्वाजगोत्रः, प्रवव्राजेत्यनुवर्तते। अयमिहेतिहासः— कोसलेषु किल परंतपस्य राज्ञोऽनुजीवी कणिङ्को नामार्थशास्त्रविचक्षणः आसीत्। तस्य राजकुलगमने क्रौञ्चः प्रदक्षिणं नित्यं गच्छेत्। कणिङ्कः क्वचित् दिवसे स्वस्मिन् अन्तःपुरस्थे सति समागत इति कृत्वा तं राजा क्रुध्यन् निनिन्द। श्रुततन्निन्दः क्रौञ्चस्तस्यापसव्यं गतः। तदपसव्यगमनानुमितराजकोपश्च कणिङ्को राजानं परित्यक्तवानिति। श्रीमूला.

**तृणमिति दीर्घश्चारायणः ॥**

तृणमिति ज्ञात्वा चारायणगोत्रो दीर्घः प्रवव्राज। इदमिहैतिह्यम्— मगधेषु पुरा बालः कश्चित् राजा बभूव। तस्याऽऽचार्यो दीर्घो नाम कश्चित् तत्पितुः प्रियः आसीत्। आगते तस्मिन् राज्ञो माता स्वभर्तृभक्त्या तं प्रत्युत्थानादिना नित्यमुपचचार। अथ पुत्रः प्राप्तवयस्को मात्रा क्रियमाणं दीर्घस्योपचारमसहमानो मातरं क्वचित् दिने पप्रच्छ— 'किमर्थं ब्राह्मणोऽयमुपचर्यते?' इति। तं च राजमाता जगाद— 'विद्वानयमस्माकमाचार्यः पितुस्ते परमः स्निग्धो बहुमाननीयश्च ते। तमेनं भक्तचेलदानादिना पूजय' इति। तच्छ्रुत्वा सद्य एव तृणपर्यवच्छन्नमन्नं कृत्वा तस्मै प्रायच्छत्। तेन परिज्ञाततदनादरो दीर्घस्तं परित्यक्तवानिति। श्रीमूला.

**शीता शाटीति घोटमुखः ॥**

वस्त्रं शीतमित्यनेनेङ्गितेन घोटमुखो नामाऽऽचार्यः प्रवव्राज। इहेदं पुरावृत्तम्— अवन्तिष्वंशुमतो नाम राज्ञः पुत्रं घोटमुखो नीतिविद्यामध्यापयन्नुवास। तस्मै च राजा कस्मिंश्चिन्निमित्ते जातु चुक्रोध। तमर्थं विदित्वा गुरुभक्तो राजपुत्रः इङ्गितं स्वगुरवे दर्शयांबभूव। स हि स्नात्वा गच्छन् नियमेन वस्त्रं निष्पीडितं कण्ठे धरति। तस्मिंस्तु दिने स्नात्वा वस्त्रं शीतमिति वदन् वस्त्ररिक्तकण्ठो जगाम। अनेनेङ्गितेन राज्ञ आत्मनि भावविकारं ज्ञात्वा घोटमुखस्तं तत्याजेति। श्रीमूला.

**हस्ती प्रत्यौक्षीदिति किञ्जल्कः ॥**

गजः प्रतिसिक्तवानित्यतः किञ्जल्कः प्रवव्राज। तथा चेतिहासः— वङ्गेषु शतानन्दस्य राज्ञोऽनुजीवी किञ्जल्को नाम आचार्यः आसीत्। सोऽनुदिनं राजौपवाह्यं हस्तिनं

प्रतिलालयन्तमग्रे क्षणमुपलाल्य पश्चात् राजकुलं गच्छेत् । कदाचित् राजा तं हस्तिनमधिरूढः आचार्यद्रोहममन्त्रयत । श्रुतार्थो हस्ती पुष्करजलैराचार्यमसिञ्चत् । अपूर्वेण तेन जलसेकेङ्गितेन भावविकारमात्मनि राज्ञो विज्ञाय किञ्जल्कस्ततः प्रव्रजित इति । श्रीमूला.

**रथाश्वं प्राशंसीदिति पिशुनः ॥**

इयमिह कथा– पिशुनो नामाऽऽचार्यः उज्जयिन्यां प्रद्योतस्य पुत्रं पालकं नीतिविद्यामध्यापयांबभूव । अथ समाप्तेऽध्यापने राजा पिशुनस्य धनमपहर्तुममन्त्रयत स्वपुत्रसंनिधौ । तच्छ्रुत्वा पुत्रः आचार्यद्रोहं परिजिहीर्षुः स्यन्दनमश्वयुक्तमारुह्य आचार्यस्याग्रे स्थित्वा रथाश्वं श्लाघितवान्– अश्वोऽयमेकेनाह्ना त्रिंशतं योजनानि गच्छेदिति । तेनाऽऽत्मगमनं चोदितं ज्ञात्वा पिशुनस्ततो गत इति । श्रीमूला.

**प्रतिरवणे शुनः पिशुनपुत्र इति ॥**

श्वभषणं श्रुत्वा पिशुनपुत्रः प्रव्रजितः । अत्र चेदमैतिह्यम्– पिशुनस्याऽऽचार्यस्य पुत्रो बाल्ये एवाधीतनीतिशास्त्रतत्त्वः राजानं सेवमानः स्थितः । राजा चैनं विद्वत्तम इत्यनुसरन्नवर्तत । कदाचित् राजा अमन्त्रयत– पिशुनपुत्रोऽयं बालत्वात् मन्त्रिपदायोग्यः । अतः आ योग्यवयःप्राप्तेर्बद्ध्वाऽयं रक्षणीयः । अन्यथा देशान्तरं गच्छेदिति । मन्त्रणमिदं श्रुत्वा कुक्कुरः पिशुनपुत्रस्याग्रे बुक्कति स्म । तेनेङ्गितेन राजचित्तवैकृतमनुमाय पिशुनपुत्रः सद्य एव ततो गत इति । इतीति । एवं वृत्तिविकारं ज्ञात्वा राजानं त्यजेदित्यर्थः । श्रीमूला.

**अर्थमानावक्षेपे च परित्यागः । स्वामिशीलमात्मनश्च किल्बिषमुपलभ्य वा प्रतिकुर्वीत । मित्रमुपकृष्टं वाऽस्य गच्छेत् ॥**

अर्थमानहानिकरं च राजानं परित्यजेत् । स्वामीत्यादि । स्वामिशीलं राज्ञः स्वभावं आत्मनः किल्बिषं च अपराधं च उपलभ्य पर्यालोच्य प्रतिकुर्वीत वा राजकोपस्य प्रतिक्रियां कुर्वीत वा राजानमपरित्यजन् । अस्य स्वामिनः उपकृष्टं संनिकृष्टं मित्रं गच्छेत् वा आश्रयेत वा स्वामिचित्तप्रसादनार्थम् । श्रीमूला.

**तत्रस्थो दोषनिर्घातं मित्रैर्भर्तरि चाऽऽचरेत् ।
ततो भर्तरि जीवेद्वा मृते वा पुनराव्रजेत् ॥**

तत्रस्थ इति राजदुर्गस्थः मित्रैः मित्रद्वारेण भर्तरि दोषनिर्घातं स्वापराधमार्जनं आचरेच्च । ततः दोषमार्जनानन्तरं भर्तरि जीवेद्वा मृते भर्तरि पुनराव्रजेद्वा । श्रीमूला.

## चाणक्यसूत्राणि

अनुजीविना स्वामी अनुसरणीयः

**[1]स्वामिनः शीलं ज्ञात्वा कार्यार्थी कार्यं साधयेत् ॥
धेनोः शीलज्ञः क्षीरं भुङ्क्ते ॥
[2]राजाज्ञां नातिलङ्घयेत् ॥
यथाऽऽज्ञप्तं तथा कुर्यात् ॥**

## चाणक्यनीतिदर्पणः

कुलीनाः शीलगुणकर्मभिः परीक्षिताः सहायाः

**[3]दुर्जनस्य च सर्पस्य वरं सर्पो न दुर्जनः ।
सर्पो दंशति कालेन दुर्जनस्तु पदे पदे ॥
[4]एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् ।
आदिमध्यावसानेषु न त्यजन्ति च ते नृपम् ॥
[5]यथा चतुर्भिः कनकं परीक्ष्यते
निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते
त्यागेन शीलेन गुणेन कर्मणा ॥**

## वृद्धचाणक्यः

त्याज्याः स्वाम्यनुजीविनः

**[6]त्यजेत्स्वामिनमत्युग्रमत्युग्रात्कृपणं त्यजेत् ।
कृपणादविशेषज्ञं तस्माच्च कृतनाशनम् ॥**

---

(१) चासू. १३९–१४०.

(२) चासू. ५३२–५३३.

(३) चाद. ३।४.

(४) चाद. ३।५ ; वृचा. २।९ चतुर्थचरणे ( न ते यास्यन्ति विक्रियाम् ).

(५) चाद. ५।२ ; वृचा. ४।६ त्यागेन ( श्रुतेन ) गुणेन ( कुलेन ) ; चाशा. ५।२ त्यागेन ( कुलेन ).

(६) वृचा. ४।१४ ; चासा. १।७५.

[1]अलसं मुखरं स्तब्धं क्रूरं व्यसनिनं शठम् ।
असंतुष्टमभक्तं च त्यजेद्भृत्यं नराधिपः ॥

## चाणक्यनीतिशास्त्रम्

प्राज्ञमूर्खसहायविवेक:

[2]प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥
[3]मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः ।
अयशश्चार्थनाशश्च नरके गमनं तथा ॥

## चाणक्यसारसंग्रहः

गुणतारतम्यानुसारि स्थानतारतम्यं सहायानाम्

[4]क्रूरं व्यसनिनं लुब्धमप्रगल्भं सदार्जवम् ।
अनार्यं व्ययकर्तारं नाऽऽधिपत्ये नियोजयेत् ॥

*[5]तस्माद्भूमीश्वरो नित्यं धर्मकामार्थवृद्धये ।
गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ॥

[6]यत्किंचित्कुरुते भृत्यः शुभं वा यदि वाऽशुभम् ।
तेन संवर्धते राजा सुकृतैर्दुष्कृतैरपि ॥

* 'प्राज्ञे नियोज्यमाने तु' इतिपूर्वगतश्लोकद्वयार्थोऽत्रानुसंधेयः ।

(१) वृचा. ४।१५ ; चासा. १।७४ स्तब्धं क्रूरं (क्रूरं स्तब्धं) ; चाशा. ५।१७.

(२) चानी. ८३ ; चासा. १।६७ विपुल (पुष्कल); चाशा. ५।२९ पूर्वार्धे (प्राज्ञं नियोजयेत्कार्ये ततो राज्ञस्त्रयो गुणाः ।) विपुल (पुष्कल).

(३) चानी. ८४ ; चासा. १।६८ गमनं तथा (पतनं ध्रुवम्) ; चाशा. ५।३० पूर्वार्धे (मूर्खो नियोज्यते कार्ये राज्ञो दोषास्त्रयस्तथा ।) गमनं (पतनं).

(४) चासा. १।५५ ; चाशा. ५।१८ लमं सदार्जवम् (लभमनाकृतिम्) उत्तरार्धे (दुर्मतिं पापकर्माणं नाधिकारे नियोजयेत् ॥).

(५) चासा. १।६९.

(६) चासा. १।७० ; चाशा. ५।३१ उत्तरार्धे (सुकृतं वर्धते तेन राज्ञो दुष्कृतमेव च ॥).



[1]यथा हेम परीक्षेत तापताडनच्छेदनैः ।
तथा पुरुषमप्येवं कुलशीलेन कर्मणा ॥

भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ।
ते नियोज्या यथायोग्यं त्रिविधेष्वेव कर्मसु ॥

## चाणक्यराजनीतिशास्त्रम्

सहायानां गुणदोषविवेकः, गुणदोषपरीक्षया सहाया नियोज्याः

[2]परीक्ष्य प्रथमं भृत्यानुत्तमाधममध्यमान् ।
योजयेत्तादृशेष्वेव नृपतिः स्वेषु कर्मसु ॥

[3]तुल्यार्थं तुल्यसामर्थ्यं मन्त्रज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥

गाम्भीर्ययुक्ता मृदुमन्दवाक्या
जितेन्द्रियाः सत्यपराः सुयोग्याः ।
भाव्यर्थतज्ज्ञा विदितार्थतत्त्वाः
प्रायेण भृत्याः कृतिनां भवन्ति ॥

निरालस्याः सुसंतुष्टाः सुस्वप्नाः सुप्रबोधिनः ।
सुखदुःखसमा धीरा भृत्या जगति दुर्लभाः ॥

दम्भाश्रितान् कपटिनो हिंसानुत्साहवर्जितान् ।
अशक्तान्भयभीतांश्च राजा भृत्यान्विवर्जयेत् ॥

[4]असहायस्य कार्याणि सिद्धिं नाऽऽयान्ति कानिचित् ।
तस्मात्समस्तकार्येषु सहायो भूपतेर्गतिः ॥

गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ।
पण्डिते च गुणाः सर्वे मूर्खे दोषाश्च केवलाः ॥

कार्यार्थे संगतिं याति कृतार्थे नास्ति संगतिः ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥

(१) चासा. १।७१, ७३.

(२) चाशा. ५।१.

(३) चाशा. ५।२१–२४.

(४) चाशा. ५।३२–३३, ३६.

## मनुः

सहायानां स्थानकर्मानुरूपं वेतनपरिमाणम्,
वेतनद्रव्यप्रकाराः, भृत्यभरणम्

**[1]राजा कर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च ।**
**प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥**

(१) युक्तानां नियुक्तानाम् । स्त्रीणां अन्तःपुरदास्यादीनाम् । प्रेष्यजनस्य दोलकवाहादेः । प्रत्यहं वृत्तिं कल्पयेत्, न सांवत्सरीयं सकृद्दद्यात् ग्रामं तदेकदेशं वा । स्थानकर्मानुरूपतः । स्थानं प्रधानं नियोगः शय्यारक्षादि, कर्म शरीरव्यापारः, तदनुरूपेण वृत्तिर्देया । प्रधाने स्थाने स्वल्पेऽपि कर्मणि महती वृत्तिः, निकृष्टे स्थाने महत्यपि कर्मणि स्वल्पा इत्येतदुभयानुरूपम् । * मेधा.

(२) राजोपयोगिकर्मसु युक्तानां दास्यादिस्त्रीणां दासवर्गस्य चोत्कृष्टहीनस्थानानुरूपेणैव कर्मानुरूप्येण प्रत्यहं वृत्तिं दद्यात् । × गोरा.

(३) राजकर्मसु राज्ञः उपचारादिषु । स्थानं अन्तर्बहिरपि, कर्म उत्तममध्यमाधमम्, तदनुरूपेण । † मवि.

(४) राज्ञः कृत्यान्तरमाह– राजेति । स्थानं स्वनिकटदूरादि, कर्म अल्पायासबह्वायाससाध्यम् । ¶ मच.

**[2]पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य भक्तकम् ।**
**षाण्मासिकस्तथाऽऽच्छादो धान्यद्रोणस्तु मासिकः ॥**

(१) अवकृष्टः संमार्जनशोधनविनियुक्तः, तस्य भक्तार्थे पणो देयः । उत्कृष्टस्य षट्सु षट्सु मासेषु गतेषु आच्छादवस्त्रं धान्यद्रोणश्च मासिकः । चतुराढकः द्रोणः । पणपरिमाणं वक्ष्यति । वृत्तिकल्पनार्था एते । मेधा.

(२) तामेव दर्शयति– पण इति । पणः वक्ष्यमाणः । सः जघन्यभृत्यकस्य भक्तार्थं प्रत्यहं दातव्यः । षाण्मासिकश्च आच्छादः वस्त्रयुगलम्, मासि मासि धान्यद्रोणः द्वादशोत्तराणि पञ्च पलशतानि देयः । उत्कृष्टस्य तु षट् पणाः भक्तार्थं देयाः । अनयैव कल्पनया षाण्मासिकं वस्त्रयुगषट्कं (प्रतिमासं धान्यद्रोणषट्कं च) देयम् । अनयैव च दिशा मध्यमस्य पणत्रयं षाण्मासिकं वस्त्रयुगत्रयं मासिकं च धान्यद्रोणत्रयं देयमिति । * गोरा.

(३) 'अष्टमुष्टिर्भवेत्किंचित् किंचिदष्टौ च पुष्कलम् । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः ॥ चतुराढको भवेत् द्रोणः ।' ‡ ममु.

(४) पणाधिक्यमात्रम्, अन्यत्समानमिति वा । × मच.

(५) कियती वृत्तिः कल्प्येति चेदाह– पणो देय इति । भक्तकं पणः इत्यन्वयः । उक्तार्थः पण इत्यर्थः । देयः प्रत्यहं देयः । षट् पणाः इति वचनविपरिणामः । पणद्रोणयोः परिमाणं वक्ष्यति । आच्छादः वस्त्रम् । षाण्मासिकः षण्मासे देयः षाण्मासिकः । नन्द.

(६) अशीतिवराटकानां पणः । ¶ भाच.

**[3]भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।**
**नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥**

---

* नन्द. मेधागतम् ।
× ममु. गोरावत् ।
† माच. मविगतम् ।
¶ शेषं गोरागतम् ।

(१) मस्मृ. ७।१२५ ; गोरा. राजा क (राजक) ; राक. ८२ ; मवि. गोरावत् ; ममु. गोरावत् ; मच. गोरावत् ; राप्र. २५१–२५२.

(२) मस्मृ. ७।१२६ ; राक. ८२ षडु (षट् तू) ; मच. ऽऽच्छादो (छादो) ; राप्र. २५२ भक्तकम् (वेतनम्).

* राक. गोरागतम् । मवि. गोरावत् ।
‡ शेषं गोरावत् ।
× शेषं ममुवत् ।
¶ शेषं गोरागतम् ।

(१) रार. ७६.

## याज्ञवल्क्यः

अनुजीविषु पितृवद्वृत्तं राज्ञः

[1]*स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥

## बृहस्पतिः

नियुक्तो भृत्यः वेतनस्थानाभ्यामचालनीयः, चालने दोषः

[2]गुणवानिति यः प्रोक्तः ख्यापितो जनसंसदि ।
कथं तेनैव वक्त्रेण निर्गुणः परिकथ्यते ॥
तस्मात्प्रभुत्वं वृत्तिं च निर्दोषस्य न चालयेत् ।
अनवस्थाप्रसङ्गः स्यान्नश्येतोपग्रहस्तथा ॥

उपग्रहः परिग्रहः । † राक. ८२

## यमः

भृत्यरक्षणं राज्ञः कर्तव्यम्

[3]पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ।
भृत्या यमुपजीवन्ति स राजा शक्रलोकभाक् ॥

## मत्स्यपुराणम्

उत्तममध्यमाधमकर्मसु उत्तममध्यमाधमभृत्यनियोजनम्, गुणानुरूपं वेतनविधानम्

[4]कर्माण्यपरिमेयानि राज्ञो नृपकुलोद्वह ॥
[5]उत्तमाधममध्यानि बुद्ध्वा कर्माणि पार्थिवः ।
उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ॥

[1]नरकर्मविपर्यासाद्राजा नाशमवाप्नुयात् ।
नियोगं पौरुषं भक्तिं श्रुतं शौर्यं कुलं नयम् ॥
[2]ज्ञात्वा वृत्तिर्विधातव्या पुरुषाणां महीक्षिता ।
पुरुषान्तरविज्ञानतत्त्वसारनिबन्धनात् ॥

नरकर्मविपर्यासादिति । उत्तमे कर्मण्यधमं मध्यमे कर्मण्युत्तमं नियोजयन् नश्यति । * राक. ३०

परीक्षितानां विविधभृत्यानां गुणानुसारेण विविधकर्मसु सवेतनं नियोजनम्

[3]नरेन्द्रलक्ष्म्या धर्मज्ञ त्राताऽश्रान्तो भवेन्नृपः ।
सद्भृत्याश्च तथा पुष्टाः सततं प्रतिमानिताः ॥
[4]राज्ञा सहायाः कर्तव्याः पृथिवीं जेतुमिच्छता ।
यथार्हं चाप्यसुभृतो राजा कर्मसु योजयेत् ॥
[5]धर्मिष्ठान् धर्मकार्येषु शूरान् सङ्ग्रामकर्मसु ।
निपुणानर्थकृत्येषु सर्वत्रैव तथा शुचीन् ॥
[6]स्त्रीषु षण्डं नियुञ्जीत तीक्ष्णं दारुणकर्मसु ।
धर्मे चार्थे च कामे च नये च रविनन्दन ॥

---

* व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ७१६) द्रष्टव्यः ।

† राप्र. राकवत् ।

(१) यास्मृ. १।३३४.

(२) राक. ८२ ; राप्र. २५२.

(३) राक. १५५ ; राप्र. १३६.

(४) मत्स्य. २१५।४४ ; विध. २।२४।४३ राज्ञो नृप (राज्ञां भृगु) ; राक. ३० ; राप्र. १८५ नृप (भृगु).

(५) मत्स्य. २१५।४५ ; विध. २।२४।४३–४४ पार्थिवः (पार्थिव) मध्येषु पुरुषेषु (मध्यांस्तु पुरुषान् वि) ; राक. ३० ; राप्र. १८५.

* राप्र. राकवत् ।

(१) मत्स्य. २१५।४६ ; विध. २।२४।४४–४५ नरकर्म (न कर्मणि) नियोगं पौरुषं (नियुक्तपुरुषे) कुलं नयम् (बलं कुलम्) ; राक. ३० ; राप्र. १८५.

(२) मत्स्य. २१५।४७ ; विध. २।२४।४५–४६ ज्ञात्वा (ज्ञाने) सारनिबन्धनात् (मात्रनिबन्धनाः) ; राक. ३० पू. ; राप्र. १८५ पू.

(३) मत्स्य. २१५।७५ ; विध. २।२४।४६–४७ लक्ष्म्या धर्मज्ञ त्राताऽश्रान्तो (लक्ष्या धर्मज्ञास्तत्राऽऽयत्तो) सद्भृ (स्वभृ).

(४) मत्स्य. २१५।७६ ; विध. २।२४।४७–४८ चाप्यसुभृतो (चाथ सुभृतान्).

(५) मत्स्य. २१५।७७ ; विध. २।२४।४८–४९ कर्मसु (कर्मणि) त्रैवं (त्र च).

(६) मत्स्य. २१५।७८ ; विध. २।२४।४९–५० षण्डं (षण्ढान्) तीक्ष्णं (तीक्ष्णान्) नये च रवि (भये च भृगु).

[1]राजा यथार्हं कुर्याच्च उपधाभिः परीक्षणम् ।
समतीतोपधान्भृत्यान्कुर्याच्छस्तवनेचरान् ॥

[2]तत्पादान्वेषिणो यत्तांस्तदध्यक्षांस्तु कारयेत् ।
एवमादीनि कर्माणि नृपैः कार्याणि पार्थिव ॥

[3]सर्वथा नेष्यते राज्ञस्तीक्ष्णोपकरणक्रमः ।
कर्माणि पापसाध्यानि यानि राज्ञो नराधिप ॥

[4]सन्तस्तानि न कुर्वन्ति तस्मात्तानि त्यजेन्नृपः ।
नेष्यते पृथिवीशानां तीक्ष्णोपकरणक्रिया ॥

[5]यस्मिन्कर्मणि यस्य स्याद्विशेषेण च कौशलम् ।
तस्मिन्कर्मणि तं राजा परीक्ष्य विनियोजयेत् ।
पितृपैतामहान् भृत्यान् सर्वकर्मसु योजयेत् ॥

[6]विना दायादकृत्येषु तत्र ते हि समागताः ।
राजा दायादकृत्येषु परीक्ष्य तु कृतान्नरान् ।
नियुञ्जीत महाभाग तस्य ते हितकारिणः ॥

[7]परराजगृहात्प्राप्तान् जनसंग्रहकाम्यया ।
दुष्टान् वाऽप्यथवाऽदुष्टानाश्रयीत प्रयत्नतः ॥

[1]दुष्टं विज्ञाय विश्वासं न कुर्यात्तत्र भूमिपः ।
वृत्तिं तस्यापि वर्तेत जनसंग्रहकाम्यया ॥

[2]राजा देशान्तरप्राप्तं पुरुषं पूजयेद्भृशम् ।
ममायं देशसंप्राप्तो बहुमानेन चिन्तयेत् ॥

[3]कामं भृत्यार्जनं राजा नैव कुर्यान्नराधिप ।
न च वाऽसंविभक्तांस्तान् भृत्यान्
कुर्यात्कथंचन ॥

[4]शत्रवोऽग्निर्विषं सर्पो निस्त्रिंश इति चैकतः ।
भृत्या मनुजशार्दूल रुषिताश्च तथैकतः ॥

[5]तेषां चारेण चारित्रं राजा विज्ञाय नित्यशः ।
गुणिनां पूजनं कुर्यान्निर्गुणानां च शासनम् ॥

अनुजीविनां कर्तव्याकर्तव्यानि

[6]यथाऽनुवर्तितव्यं स्यान्मनो राज्ञोऽनुजीविभिः ।
तथा ते कथयिष्यामि निबोध गदतो मम ॥

[7]ज्ञात्वा सर्वात्मना कार्यं स्वशक्त्या रविनन्दन ।
राजा यत्तु वदेद्वाक्यं श्रोतव्यं तत्प्रयत्नतः ।
आक्षिप्य वचनं तस्य न वक्तव्यं तथा वचः ॥

---

( १ ) मत्स्य. २१५।७९ ; विध. २।२४।५०–५१ र्याच्च उ ( र्यात्तान् ह्यु ) क्षणम् ( क्षितान् ) पधान्भृत्यान् ( यथार्थांश्चा ) च्छस्त ( च्छस्ति ).

( २ ) मत्स्य. २१५।८० ; विध. २।२४।५१–५२ पूर्वार्धे ( तत्पादान्वेषणे यत्तांस्तदध्यक्षांस्तत्र कारयेत् । ) नृपैः ( यत्नैः ) पार्थिव ( भार्गव ).

( ३ ) मत्स्य. २१५।८१ ; विध. २।२४।५२–५३ क्रमः ( क्षयः ) उत्तरार्धे ( पापसाध्यानि कर्माणि यानि राज्ञां भृगूत्तम ॥ ).

( ४ ) मत्स्य. २१५।८२ ; विध. २।२४।५३–५४ तानि त्यजे ( त्तान् विभृया ) क्रिया ( क्षयः ).

( ५ ) मत्स्य. २१५।८३ ; विध. २।२४।५४–५५.

( ६ ) मत्स्य. २१५।८४ ; विध. २।२४।५६–५७ गताः ( सनः ) तु कृ ( स्वकृ ) भाग ( भागः ).

( ७ ) मत्स्य. २१५।८५ ; विध. २।२४।५७–५८ गृहात्प्रा ( गृहान्प्रा ) दुष्टानाश्रयीत ( दुष्टान् संश्रयेत ).

( १ ) मत्स्य. २१५।८६ ; विध. २।२४।५८–५९.

( २ ) मत्स्य. २१५।८७ ; विध. २।२४।५९–६० ममायं ( सहायं ) प्राप्तो ( प्राप्तं ).

( ३ ) मत्स्य. २१५।८८ ; विध. २।२४।६०–६१ न्नराधिप ( द्भृगूत्तम ) उत्तरार्धे ( न च वाऽविभक्तं तु भृत्यं कुर्यात्कथंचन ॥ ).

( ४ ) मत्स्य. २१५।८९ ; विध. २।२४।६१–६२ पूर्वार्धे ( शस्त्रमग्निं विषं सर्पान्निस्त्रिंशमपि चैकतः । ) रुषिता ( कुभृत्या ).

( ५ ) मत्स्य. २१५।९० ; विध. २।२४।६२–६३ चारित्रं ( विज्ञानं ).

( ६ ) मत्स्य. २१६।१ ; विध. २।२५।१ न्मनो राज्ञोऽनु ( द्राम राजोप ) ; राक. ३४ ; राप्र. १८९ जीवि ( वर्ति ).

( ७ ) मत्स्य. २१६।२ ; विध. २।२५।२ ज्ञात्वा ( आज्ञा ) कार्यं ( कार्या ) रवि ( भृगु ) द्वितीयार्धं नास्ति;

[1]अनुकूलं प्रियं तस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं तद्धितं भवेत् ॥
[2]परार्थमस्य वक्तव्यं स्वस्थे चेतसि पार्थिव ।
स्वार्थः सुहृद्भिर्वक्तव्यो न स्वयं तु कथंचन ॥
[3]कार्यातिपातः सर्वेषु रक्षितव्यः प्रयत्नतः ।
न च हिंस्यं धनं किंचिन्नियुक्तेन च कर्मणि ॥
[4]नोपेक्ष्यस्तस्य मानश्च तथा राज्ञः प्रियो भवेत् ।
राज्ञश्च न तथा कार्यं वेषभाषितचेष्टितम् ॥
[5]राजलीला न कर्तव्या तद्विद्विष्टं च वर्जयेत् ।
राज्ञः समोऽधिको वा न कार्यो वेषो विजानता ॥
[6]द्यूतादिषु तथैवान्यत्कौशलं तु प्रदर्शयेत् ।
प्रदर्श्य कौशलं चास्य राजानं तु विशेषयेत् ॥

राक. ३४ तथा वचः ( कदाचन ) द्वितीयार्धं नास्ति; राप्र. १८९ सर्वं राकवत्.

( १ ) मत्स्य. २१६।३ ; विध. २।२५।३ संसदि ( संनिधौ ) तद्धि ( यद्धि ) ; राक. ३४ तस्य ( त्वस्य ) तद्धि ( यद्धि ) ; राप्र. १८९ तस्य ( त्वस्य ).

( २ ) मत्स्य. २१६।४ ; विध. २।२५।४ पार्थिव ( मार्गव ) स्वार्थः ( स्वास्थ्यं ) क्तव्यो ( क्तव्यं ) ; राक. ३५ परार्थं ( यथार्थं ) तु कथं ( हि करा ) ; राप्र. १८९ तु कथं ( हि करा )

( ३ ) मत्स्य. २१६।५ ; विध. २।२५।५ पातः सर्वेषु रक्षितव्यः ( पातकं कार्यं रक्षितव्यं ) हिंस्यं ( हिंस्य ) ; राक. ३५ हिंस्यं ( हिंस्यात् ) ; राप्र. १८९ राकवत्.

( ४ ) मत्स्य. २१६।६ ; विध. २।२५।६ पूर्वार्धे ( नोपेक्ष्यं तस्य मानं च तथा राज्ञा प्रियो भवेत् । ) वेष ( वेश ) ; राक. ३५ पूर्वार्धे ( नोपेक्ष्यं तस्य मानं च तस्य राज्ञः प्रियो भवेत् । ) ; राप्र. १९०.

( ५ ) मत्स्य. २१६।७ ; विध. २।२५।७ तद्विद्विष्टं च ( तद्द्विष्टं च वि ) उत्तरार्धे ( राज्ञः समाधिकौ वेशौ न तु कार्यौ विजानता ॥ ) ; राक. ३५ विधवत्, पू. ; राप्र. १९० विधवत्, पू.

( ६ ) मत्स्य. २१६।८ ; विध. २।२५।८ न्यत्कौ ( स्य कौ ) नं तु ( नं न ).

[1]अन्तःपुरजनाध्यक्षैर्वैरिदूतैर्निराकृतैः ।
संसर्गं न व्रजेद्राजन्विना पार्थिवशासनात् ॥
[2]निःस्नेहतां चावमानं प्रयत्नेन तु गोपयेत् ।
यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ॥
[3]नृपेण श्रावितं यत्स्याद्वाच्यावाच्यं नृपोत्तम ।
न तत्संश्रावयेल्लोके तथा राज्ञोऽप्रियो भवेत् ॥
[4]आज्ञाप्यमाने वाऽन्यस्मिन्समुत्थाय त्वरान्वितः ।
किमहं करवाणीति वाच्यो राजा विजानता ॥
[5]कार्यावस्थां च विज्ञाय कार्यमेव यथा भवेत् ।
सततं क्रियमाणेऽस्मिंल्लाघवं तु व्रजेद्ध्रुवम् ॥
[6]राज्ञः प्रियाणि वाक्यानि न चात्यर्थं पुनः पुनः ।
न हास्यशीलस्तु भवेन्न चापि भ्रुकुटीमुखः ॥

( १ ) मत्स्य. २१६।९ ; विध. २।२५।९ द्राजन् ( द्राम ) सनात् ( सनम् ) ; राक. ३५ ध्यक्षैर्वैरिदूतै ( ध्यक्षवैरीभूतै ) संसर्गं ( शंसनं ) सनात् ( सनम् ) ; राप्र. १९० सनात् ( सनम् ).

( २ ) मत्स्य. २१६।१० ; विध. २।२५।१० प्रयत्नेन तु ( तत्प्रयुक्तं च ) ज्ञो न तल्लो ( ज्ञस्तन्न लो ) ; राक. ३५ प्रयत्नेन तु ( तत्प्रयत्नेन ) ; राप्र. १९०.

( ३ ) मत्स्य. २१६।११ ; विध. २।२५।११ द्वितीयचरण [illegible] गुह्याद् गुह्यं भृगूत्तम ) ज्ञोऽपि ( ज्ञः प्रि ) ; राक. २५ द्वाच्यावाच्यं ( द्गुह्यागुह्यं ) ज्ञोऽपि ( ज्ञः प्रि ) ; राप्र. १९० द्वाच्यावाच्यं ( द्गुह्याद्गुह्यं ) शेषं राकवत्.

( ४ ) मत्स्य. २१६।१२ ; विध. २।२५।१२ ज्ञाप्य ( ज्ञप्य ) वाऽ ( चा ) किमहं ( अहं किं ) ; राक. ३५ किमहं ( अहं किं ) ; राप्र. १९० विधवत्.

( ५ ) मत्स्य. २१६।१३ ; विध. २।२५।१३ मेव य ( मेतत्त ) ध्रुवम् ( बुधः ) ; राक. ३५ मेव य ( मेतत्त ) व्रजे ( भवे ) ; राप्र. १९० मेव य ( मेतत्त ).

( ६ ) मत्स्य. २१६।१४ ; विध. २।२५।१४ लस्तु ( लश्च ) ; राक. ३६ वाक्या ( वाच्या ) चापि ( वाऽपि ) ; राप्र. १९० राकवत्.

[1]नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा ।
आत्मसंभावितश्चैव न भवेत्तु कथंचन ॥

[2]दुष्कृतानि नरेन्द्रस्य न तु संकीर्तयेत्क्वचित् ।
वस्त्रमस्त्रमलंकारं राज्ञा दत्तं तु धारयेत् ॥

[3]औदार्येण न तद्देयमन्यस्मै भूतिमिच्छता ।
न चैवात्यशनं कार्यं दिवा स्वप्नं न कारयेत् ॥

[4]नानिर्दिष्टे तथा द्वारे प्रविशेत्तु कथंचन ।
न च पश्येत्तु राजानमयोग्यासु च भूमिषु ॥

[5]राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तदा ।
पुरस्ताच्च तथा पश्चादासनं तु विगर्हितम् ॥

[6]जृम्भां निष्ठीवनं कासं कोपं पर्यस्तिकाश्रयम् ।
भृकुटिं वान्तमुद्गारं तत्समीपे विवर्जयेत् ॥

[7]स्वयं तत्र न कुर्वीत स्वगुणाख्यापनं बुधः ।
स्वगुणाख्यापने युक्त्या परमेव प्रयोजयेत् ॥

( १ ) मत्स्य. २१६।१५ ; विध. २।२५।१५ ; राक. ३६ ; राप्र. १९० मात्स ( मत्स ).

( २ ) मत्स्य. २१६।१६ ; विध. २।२५।१६ न तु ( न च ) वस्त्रमस्त्र ( वस्त्रं पत्र ) ; राक. ३६ ; राप्र. १९०.

( ३ ) मत्स्य. २१६।१७ ; विध. २।२५।१७ न्यस्मै ( न्यस्मिन् ) उत्तरार्धे ( न चैवाध्ययनं राज्ञः स्वपनं चापि कारयेत् ॥ ) ; राक. ३६ ; राप्र. १९०.

( ४ ) मत्स्य. २१६।१८; विध. २।२५।१८ शेत्तु ( शेत ) श्येत्तु ( श्येत ) ; राक. ३६ ; राप्र. १९०.

( ५ ) मत्स्य. २१६।१९ ; विध. २।२५।१९ च तथा ( तु यथा ) ; राक. ३६ चोप ( वोप ) ; राप्र. १९० चोप ( वोप ) त्तदा ( त्सदा ).

( ६ ) मत्स्य. २१६।२० ; विध. २।२५।२० जृम्भां ( जृम्भा ) कासं ( कामं ) पर्यस्ति ( पर्यङ्कि ) भृकुटिं वान्त ( मुकुटं वात ) ; राक. ३६ ; राप्र. १९१ वान्त ( वात ).

( ७ ) मत्स्य. २१६।२१ ; विध. २।२५।२१ तत्र ( तथा ) उत्तरार्धे ( स्वगुणाख्यापने कुर्यात् परानेव प्रयोजकान् ॥ ); राक. ३६ ; राप्र. १९१.

[1]हृदयं निर्मलं कृत्वा परां भक्तिमुपाश्रितैः ।
अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः ॥

[2]शाठ्यं लौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रता तथा ।
चापल्यं च परित्याज्यं नित्यं राज्ञोऽनुजीविभिः ॥

[3]श्रुतेन विद्याशीलैश्च संयोज्याऽऽत्मानमात्मना ।
राजसेवां ततः कुर्याद्भूतये भूतिवर्धनीम् ॥

[4]नमस्कार्याः सदा चास्य पुत्रवल्लभमन्त्रिणः ।
सचिवैश्चास्य विश्वासो न तु कार्यः कथंचन ॥

[5]अपृष्टश्चास्य न ब्रूयात्कामं ब्रूयात्तथाऽऽपदि ।
हितं तथ्यं च वचनं हितैः सह सुनिश्चितम् ॥

[6]चित्तं चैवास्य विज्ञेयं नित्यमेवानुजीविना ।
भर्तुराराधनं कुर्याच्चित्तज्ञो मानवः सुखम् ॥

रक्तविरक्तराजविवेकः त्याज्यात्याज्यानुजीविविवेकश्च

[7]रागापरागौ चैवास्य विज्ञेयौ भूतिमिच्छता ।
त्यजेद्विरक्तं नृपतिं रक्ताद्वृत्तिं तु कारयेत् ॥

( १ ) मत्स्य. २१६।२२ ; विध. २।२५।२२ परां ( परं ) ; राक. ३६ ; राप्र. १९१.

( २ ) मत्स्य. २१६।२३ ; विध. २।२५।२३ ल्यं च पै ( ल्यमपै ) क्षुद्रता ( क्षुद्रतां ) राज्ञोऽनुजीविभिः ( राजानुजीविना ) ; राक. ३६ ; राप्र. १९१ क्षुद्रता ( क्षुद्रतां ) राज्ञोऽ ( राजा ).

( ३ ) मत्स्य. २१६।२४ ; विध. २।२५।२४ शीलै ( शिल्पै ) भूतिवर्धनीम् ( भीतिवर्धनः ) ; राक. ३६–३७ शीलै ( शिल्पै ) ; राप्र. १९१ राकवत्.

( ४ ) मत्स्य. २१६।२५ ; विध. २।२५।२५ श्वासो ( श्वासं ) कार्यः ( कार्यं ) ; राक. ३७ ; राप्र. १९१.

( ५ ) मत्स्य. २१६।२६ ; विध. २।२५।२६ तथ्यं ( पथ्यं ) ; राक. ३७ विधवत् ; राप्र. १९१ विधवत्.

( ६ ) मत्स्य. २१६।२७ ; विध. २।२५।२७ ; राक. ३७ ; राप्र. १९१.

( ७ ) मत्स्य. २१६।२८ ; विध. २।२५।२८ कार ( काम ) ; राक. ३७ ; राप्र. १९१.

[1]विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा ।
आशावर्धनकं कृत्वा फलनाशं करोति च ॥

[2]अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः ।
वाक्यं च समदं वक्ति वृत्तिच्छेदं करोति वै ॥

[3]प्रदेशवाक्यमुदितो न च संभावयेत्तथा ।
आराधनासु सर्वासु सुप्तवच्च विचेष्टते ॥

[4]कथासु दोषं क्षिपति वाक्यभङ्गं करोति च ।
लक्ष्यते विमुखश्चैव गुणसंकीर्तनेऽपि च ॥

[5]दृष्टिं क्षिपति चान्यत्र क्रियमाणे च कर्मणि ।
विरक्तलक्षणं चैतच्छृणु रक्तस्य लक्षणम् ॥

[6]दृष्ट्वा प्रसन्नो भवति वाक्यं
गृह्णाति चाऽऽदरात् ।
कुशलादिपरिप्रश्नं संप्रयच्छति चाऽऽसनम् ॥

[1]विविक्तदर्शने चास्य रहस्येनं न शङ्कते ।
जायते हृष्टवदनः श्रुत्वा तस्य तु तत्कथाम् ॥

[2]अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दते ।
उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ॥

[3]कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ।
इति रक्तस्य कर्तव्या सेवा रविकुलोद्वह ।
आपत्सु न त्यजेत्पूर्वं विरक्तमपि सेवितम् ॥

[4]मित्रं न चाऽऽपत्सु तथा च भृत्यं
त्यजन्ति ये निर्गुणमप्रमेयम् ।
विभुं विशेषेण च ते व्रजन्ति
सुरेन्द्रधामामरवृन्दजुष्टम् ॥

[5]भीतान्प्रमत्तान्कुपितांस्तथैव च विमानितान् ।
कुभृत्यान्पापशीलांश्च न राजा वासयेत्पुरे ॥

भृत्यैः सह परिहासो वर्ज्यः

[6]भृत्यैः सह महीपालः परिहासं विवर्जयेत् ।
भृत्याः परिभवन्तीह नृपं हर्षवशं गतम् ॥

---

(१) मत्स्य. २१६।२९ ; विध. २।२५।२९ प्रथम-चरणे ( कर्मोपकारयोर्नाशं ) वर्धनकं ( संवर्धनं ) ; राक. ३७ ; राप्र. १९१.

(२) मत्स्य. २१६।३० ; विध. २।२५।३० सको ( प्रको ) च समदं वक्ति ( समन्दं वदति ) वै ( च ) ; राक. ३७ च समदं वक्ति ( समन्दं वदति ) वै ( च ) ; राप्र. १९१ च समदं वक्ति ( स मन्दं वदति ) वै ( च ).

(३) मत्स्य. २१६।३१ ; विध. २।२५।३१ पूर्वार्धे ( प्रवेशवाक्यानुदितो न संभावयतीत्यथ । ) ; राक. ३७ पूर्वार्धे ( प्रदेशवाक्यैर्मुदितो न संभावयतेऽन्यथा । ) ; राप्र. १९१ राकवत् .

(४) मत्स्य. २१६।३२ ; विध. २।२५।३२ दोषं ( दोषैः ) भङ्गं ( च्छेदं ) ऽपि च ( कृते ) ; राक. ३७ लक्ष्यते वि ( लज्जतेऽभि ) ; राप्र. १९१–१९२.

(५) मत्स्य. २१६।३३ ; विध. २।२५।३३ ति चा ( त्यथा ) चैतच्छृणु ( श्रुत्वा शृणु ) ; राक. ३७ ति चा ( त्यथा ) चैत ( ह्येत ) ; राप्र. १९२ राकवत् .

(६) मत्स्य. २१६।३४ ; विध. २।२५।३४ प्रश्नं ( प्रश्ने ) ; राक. ३७ दृष्ट्वा ( दृष्ट्या ) ; राप्र. १९२ प्रश्नं ( प्रश्नी ).

(१) मत्स्य. २१६।३५ ; विध. २।२५।३५ स्येनं न ( स्ये न च ) तत्क ( संक ) ; राक. ३७–३८ तत्क ( संक ) ; राप्र. १९२ स्येन ( म्येन ) तत्क ( संक ).

(२) मत्स्य. २१६।३६ ; विध. २।२५।३६ नन्दते ( नन्दति ) ; राक. ३८ ; राप्र. १९२.

(३) मत्स्य. २१६।३७ ; विध. २।२५।३७ स्मरति ( सरति ) रवि ( भृगु ) ; राक. ३८ ; राप्र. १९२.

(४) मत्स्य. २१६।३८ ; विध. २।२५।३८ तथा च ( तथा न ) त्यजन्ति ( व्रजन्ति ) विभुं ( प्रभुं ) मामर ( मासुर ) ; राक. ३८ विभुं ( प्रभुं ) ; राप्र. १९२ भृत्यं त्यजन्ति ( भृत्या यजन्ति ) विभुं ( प्रभुं ).

(५) मत्स्य. २१७।८६ ; विध. २।२६।८६–८७ न्पापशीलांश्च ( नकुलीनांश्च ).

(६) मत्स्य. २२०।२४–२५ ; विध. २।६५।२६ वशं गतम् ( लसत्कथम् ) ; राक. १४७ ; राप्र. १४७ हर्षवशं गतम् ( हर्षुकसंकथम् ) मत्स्यपुराणविष्णुधर्मोत्तरयोः .

## विष्णुधर्मोत्तरपुराणम्

भृत्यानां वेतनकल्पनम्

[1]राजा कर्मनियुक्तानां स्त्रीणां प्रेष्यजनस्य च ।
प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥

## गरुडपुराणम्

राज्ञो भृत्यैः सह वर्तनरीतिः

[2]कारणेन विना भृत्ये यस्तु कुप्यति पार्थिवः ।
स गृह्णाति विषोन्मादं कृष्णसर्पविसार्जितम् ॥
[3]चापलाद्वारयेद्दृष्टिं मिथ्यावाक्यं च वारयेत् ।
मानवे श्रोत्रिये चैव भृत्यवर्गे सदैव हि ॥
[4]लीलां करोति यो राजा भृत्यस्वजनगर्वितः ।
शासने सर्वदा क्षिप्रं रिपुभिः परिभूयते ॥

लीलां क्रीडाम् । वादे वाक्कलहे । विग्रहे शस्त्रसाध्ये सङ्ग्रामे । राप्र. १४६

[5]हुंकारे भृकुटीं नैव सदा कुर्वीत पार्थिवः ।
विना दोषेण यो भृत्यान्राजाऽधर्मेण शास्ति च ।
लीलासुखानि भोग्यानि त्यजेदिह महीपतिः ॥

परिक्ष्या विविधा भृत्याः, तेषां त्रीणि कमाणि

सूत उवाच–

[6]भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ।
नियोक्तव्या यथार्हेषु त्रिविधेष्वेव कर्मसु ॥
[7]भृत्ये परीक्षणं वक्ष्ये यस्य यस्य हि यो गुणः ।
तमिमं संप्रवक्ष्यामि ये यथाकथितं किल ॥

(१) विध. ३।३२३।३४.

(२) गरुड. १।१११।२७; राप्र. १४६ सर्पविसर्जितम् (सर्पेण दंशितः).

(३) गरुड. १।१११।२८.

(४) गरुड. १।१११।२९; राप्र. १४६ द्वितीयचरणे (भृत्ये सज्जनगर्विते) शासने सर्वदा (स वादे विग्रहे).

(५) गरुड. १।१११।३०.

(६) गरुड. १।११२।१; राप्र. १७६ बहुविधा (श्च त्रिविधा) धेष्वेव (धेषु च).

(७) गरुड. १।११२।२.

[1]यथा चतुर्भिः कनकं परीक्ष्यते
निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिर्भृतकं परीक्षयेद्
व्रतेन शीलेन कुलेन कर्मणा ॥

भृत्यानामवश्यं परीक्षा कार्या इत्युक्तम्– यथेति । राप्र. १७६

वर्ज्या भृत्याः

[2]लेखकः पाठकश्चैव गणकः प्रतिरोधकः ।
आलस्ययुक्तश्चेद्राजा कर्म संवर्जयेत्सदा ॥
द्विजिह्वमुद्वेगकरं क्रूरमेकान्तदारुणम् ।
खलस्याहेश्च वदनमपकाराय केवलम् ॥
दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥

भृत्यदोषाः भृत्यगुणाश्च

अकारणाविष्कृतकोपधारिणः
खलाद्भयं कस्य न नाम जायते ।
विषं महाहेर्विषमस्य दुर्वचः
सुदुःसहं संनिपतेत्सदा मुखे ॥
[3]तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो हन्यात्स न हन्यते ॥
[4]शूरत्वयुक्ता मृदुमन्दवाक्या
जितेन्द्रियाः सत्यपराक्रमाश्च ।
प्रागेव पश्चाद्विपरीतरूपा
ये ते तु भृत्या न हिता भवन्ति ॥
निरालस्याः सुसंतुष्टाः सुस्वप्नाः प्रतिबोधकाः ।
सुखदुःखसमा धीरा भृत्या लोकेषु दुर्लभाः ॥

(१) गरुड. १।११२।३; राप्र. १७६ निघर्षण (तुलाकष) तापताडनैः (तापनेन) कं परीक्षयेद्व्र (कः परीक्ष्यते श्रु).

(२) गरुड. १।११२।१३–१६.

(३) गरुड. १।११२।१७; राप्र. १४६ सामर्थ्यं (संबन्धं) हन्यात्स न (न हन्यात्स).

(४) गरुड. १।११२।१८–२०.

क्षान्तिसत्यविहीनश्च क्रूरबुद्धिश्च निन्दकः ।
दाम्भिकः कपटी चैव शठश्च स्पृहयाऽन्वितः ।
अशक्तो भयभीतश्च राज्ञा त्यक्तव्य एव सः ॥
[1]मूर्खान्नियोजयेद्यस्तु त्रयोऽप्येते महीपतेः ।
अयशश्चार्थनाशश्च नरके चैव पातनम् ॥
यत्किंचित्कुरुते कर्म शुभं वा यदि वाऽशुभम् ।
तेन स्म वर्धते राजा सूक्ष्मतो भृत्यकार्यतः ॥
तस्माद्भूमीश्वरः प्राज्ञं धर्मकामार्थसाधने ।
नियोजयेद्धि सततं गोब्राह्मणहिताय वै ॥
[2]गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ।
पण्डितस्य गुणाः सर्वे मूर्खे दोषाश्च केवलाः ॥
सद्भिरासीत सततं सद्भिः कुर्वीत संगतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥
पण्डितैश्च विनीतैश्च धर्मज्ञैः सत्यवादिभिः ।
बन्धनस्थोऽपि तिष्ठेच्च न तु राज्ये खलैः सह ॥

## अग्निपुराणम्

नियोज्या अनियोज्याश्च भृत्याः

[3]यस्मिन्कर्मणि कौशल्यं यस्य तस्मिन्नियोजयेत् ।
पितृपैतामहान् भृत्यान् सर्वकर्मसु योजयेत् ॥
विना दायादकृत्येषु तत्र ते हि समा मताः ।
परराजगृहात्प्राप्ताञ्जनान् संश्रयकाम्यया ॥
दुष्टानप्यथ वाऽदुष्टान् संश्रयेत प्रयत्नतः ।
दुष्टं ज्ञात्वा विश्वसेन्न तद्वृत्तिं वर्तयेद्वशे ॥
देशान्तरागतान् पार्श्वे चारैर्ज्ञात्वा हि पूजयेत् ।
शत्रवोऽग्निर्विषं सर्पो निस्त्रिंशमपि चैकतः ॥
भृत्या विशिष्टं विज्ञेयाः कुभृत्याश्च तथैकतः ॥

भृत्यानां कर्तव्याकर्तव्यानि

[4]भृत्यः कुर्यात्तु राजाज्ञां शिष्यवत्सुस्त्रियः पतेः ।
न क्षिपेद्वचनं राज्ञो अनुकूलं प्रियं वदेत् ॥
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ।
न नियुक्तो हरेद्वित्तं नोपेक्षेत्तस्य मानकम् ॥
राज्ञश्च न तथा कार्यं वेषभाषाविचेष्टितम् ।
अन्तःपुरचराध्यक्षो वैरभूतैर्निराकृतैः ॥
संसर्गं न व्रजेद्भृत्यो राज्ञो गुह्यं च गोपयेत् ।
प्रदर्श्य कौशलं किंचिद् राजानं तु विशेषयेत् ॥
राज्ञा यच्छ्रावितं गुह्यं न तल्लोके प्रकाशयेत् ।
आज्ञाप्यमाने वाऽन्यस्मिन्किं करोमीति वा वदेत् ॥
वस्त्रं रत्नमलंकारं राज्ञा दत्तं च धारयेत् ।
नानिर्दिष्टो द्वारि विशेन्नायोग्यभुवि राजदृक् ॥
जृम्भा निष्ठीवनं कासं कोपं पर्यङ्किकाश्रयम् ।
भृकुटीं वातमुद्गारं तत्समीपे विवर्जयेत् ॥
स्वगुणाख्यापने युक्त्या परानेव नियोजयेत् ।
शाठ्यं लौल्यं सपैशुन्यं नास्तिक्यं क्षुद्रता तथा ॥
चापल्यं च परित्याज्यं नित्यं राजानुजीविना ।
श्रुतेन विद्याशिल्पैश्च संयोज्याऽऽत्मानमात्मना ॥
राजसेवां ततः कुर्याद्भूतये भूतिवर्धनः ।
नमस्कार्याः सदा चास्य पुत्रवल्लभमन्त्रिणः ॥
सचिवैर्नास्य विश्वासो राजचित्तप्रियं चरेत् ॥

रक्तविरक्तराजविवेकः

त्यजेद्विरक्तं रक्तात्तु वृत्तिमीहेत राजवित् ॥
अपृष्टश्चास्य न ब्रूयात्कामं कुर्यात्तथाऽऽपदि ।
प्रसन्नो वाक्यसंग्राही रहस्ये न च शङ्कते ॥
कुशलादिपरिप्रश्नं संप्रयच्छति चाऽऽसनम् ।
तत्कथाश्रवणाद्धृष्टो अप्रियाण्यपि नन्दते ॥
अल्पं दत्तं प्रगृह्णाति स्मरेत्कथान्तरेष्वपि ।
इति रक्तस्य कर्तव्या सेवाऽन्यस्य विवर्जयेत् ॥

भृत्यानां कर्तव्याकर्तव्यानि

[1]वक्ष्येऽनुजीविनां वृत्तं सेवी सेवेत भूपतिम् ।
दक्षता भद्रता दार्ढ्यं क्षान्तिः क्लेशसहिष्णुता ॥
संतोषः शीलमुत्साहो मण्डयत्यनुजीविनम् ।
यथाकालमुपासीत राजानं सेवको नयात् ॥

---

(१) गरुड. १।११२।२३–२५.
(२) गरुड. १।११३।१–३.
(३) अग्नि. २२०।१६–२०.
(४) अग्नि. २२१।१–१४.

(१) अग्नि. २३९।३८–४२.

परस्थानगमं क्रौर्यमौद्धत्यं मत्सरं त्यजेत् ।
विगृह्य कथनं भृत्यो न कुर्याज्ज्यायसा सह ॥
गुह्यं मर्म च मन्त्रं च न च भर्तुः प्रकाशयेत् ।
रक्ताद्वृत्तिं समीहेत विरक्तं संत्यजेन्नृपम् ॥
अकार्ये प्रतिषेधश्च कार्ये चापि प्रवर्तनम् ।
संक्षेपादिति सद्वृत्तिं बन्धुमित्रानुजीविनाम् ॥

## कामन्दकीयनीतिसारः

मन्त्रिसचिवादिभिर्भृत्यैः सेव्यस्य राज्ञो गुणाः

[1]वृत्तस्थं वृत्तसंपन्नाः कल्पवृक्षोपमं नृपम् ।
अभिगम्यगुणैर्युक्तं सेवेरन्ननुजीविनः ॥

(१) एवं प्रकृतिसंपदा युक्तेन स्वामिना कथं स्वेषु वर्तितव्यं स्वैश्च स्वामिनि ? इति स्वाम्यनुजीविवृत्तमुच्यतेऽस्मिन् सर्गे । तत्राऽऽराध्यस्य प्रधानत्वात् तद्विषयमनुजीविनो वृत्तमाह अष्टपञ्चाशता श्लोकैः– वृत्तस्थमित्यादि । वृत्तस्थं प्रजापालनधर्मे स्थितम् । वृत्तसंपन्नाः स्वधर्मसंयुक्ताः । कल्पवृक्षोपमम्, यथाभिलषितसंपादनात् । अभिगम्यगुणाः आभिगामिकगुणाः । अथवा अभिगम्य प्रियहितद्वारेणाऽऽश्रित्य । गुणैर्युक्तं प्रकृतिगुणैरन्वितम् । जम.

(२) अनन्तरं स्वामिनोऽनुजीविना न गुणसंपदुक्ता । प्राधान्यात् तेषां परस्परं वृत्तमनुष्ठान त्राऽऽह– वृत्तस्थमिति । विजिगीषुवृत्तं पृथिवीपालनादिकम्, तस्मिंस्तिष्ठतीति वृत्तस्थः, तम् । स हि अनुजीविषु अर्थी भवति । वृत्तिसंपन्नमिति । वृत्तिहेतुत्वात् कोशः वृत्तिः, तत्संपन्नः । अर्थ्यपि कोशरहितः किं दास्यतीति भावः । कल्पवृक्षोपममिति ईप्सितफलदायिनम् । दानशक्तियुक्तमित्यर्थः । नृपं स्वामिनम् । अभिगम्यगुणैः आभिगामिकैः कुलशीलादिभिरनन्तरोक्तैः युक्तं समन्वितम् । सेवेरन् सेवकत्वेन उपतिष्ठेरन् अनुजीविनः भृत्याः । उनि.

[2]द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः ।
भवत्याजीवनं तस्माच्छ्लाघ्यं कालान्तरादपि ॥

(१) द्रव्यप्रकृतिहीनोऽपीति पक्षान्तरं दर्शयति । अमात्यादयः दण्डपर्यन्ताः द्रव्यप्रकृतयः । तद्धीनमपि आभिगामिकगुणैरुपेतं सेवेतेति । ततो हि कालान्तरेणापि जीवनं श्लाघ्यम् । जम.

(२) पक्षान्तरं दर्शयन्नाह– द्रव्येति । द्रव्यप्रकृतिः कोशप्रकृतिः । तद्विहीनोऽपि सेव्यः स्वामी सेव्यगुणान्वितः आभिगामिकगुणयुक्तः । कस्मादित्याह– भवति आजीवनं भरणं श्लाघ्यं स्पृहणीयतरं कालान्तरादपि तस्मात् जीवनं भवत्येवेति । सांप्रतिकाभावेऽपि गुणयुक्तत्वादुपजीवनं भवेदिति । उनि.

[3]अपि स्थाणुवदासीत शुष्यन् परिगतः क्षुधा ।
न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥

(१) न त्वेवानात्मसंपन्नादिति द्रव्यप्रकृतियुक्तादपि न वृत्तिमीहेत । जम.

(२) असेव्यमभिधातुमाह– अपीति । स्थाणुः छिन्नशाखस्तरुः, स इव शुष्यन् परिगतः क्षुधा आसीत तिष्ठेत् । न त्वेव कदाचिदनात्मसंपन्नात् अनन्तरोक्तात्मसंपद्गुणरहितात् वृत्तिं जीवनं ईहेत पण्डितः विवेकीति । उनि.

[4]अनात्मवान् नयद्वेषी वर्धयन्नरिसंपदः ।
प्राप्यापि महदैश्वर्यं सह तेन विनश्यति ॥

(१) अनात्मवान् अज्ञः, नयद्वेषी नीतिनिन्दकः, रिपुसंपद्वर्धकः न सेव्य इत्याशयः । रार. ४६

(२) किमर्थमिति चेत् यदाह– अनात्मवानित्यादि । स हि नीतिशास्त्रविद्वेषात् अरिसंपदः वर्धयन् स्वसंपद्घात् । प्राप्यापि महदैश्वर्यमिति । ऐश्वर्यसंपूर्णोऽपि नश्यत्येव । ततश्च तत्राऽऽश्रितस्य वृथा श्रमः स्यात् । जम.

---

(१) कानी. ५।१ ; उनि. वृत्तसंपन्नाः (वृत्तिसंपन्नं); रार. ४६ अभिगम्यगु (उपगम्य गु) 'राजनीतौ' इति बहुषु स्थलेषु निर्देशः.

(१) कानी. ५।२ ; रार. ४६.
(२) कानी. ५।३ ; नीम. ४२ नात्म (नर्थ).
(३) कानी. ५।४ ; रार. ४६ नश्यति (पद्यते) ; उनि. रारवत्.

(३) एतदेव दर्शयन्नाह— अनात्मवानिति । अनात्मवान् नयं द्वेष्टुं शीलमस्य सः । नयवान् न भवतीत्यर्थः । वर्धयन्नरिसंपद इति अनात्मवत्त्वेवारीणां संपदो वर्धयति । सः काकतालीयवत् प्राप्यापि महदैश्वर्यं सह तेन ऐश्वर्येण अनुजीविना च सह विपद्यते विनश्यति । अतोऽनात्मवान् न सेव्य इति ।

उनि.

[1]लब्धावकाशो निपुण आत्मवत्यविकारवान् ।
स्थाने स्थैर्यमवाप्नोति मन्त्री कर्मसु निश्चितः ॥

(१) आत्मवति तु को गुणः स्यादित्याह— आत्मवति स्वामिनि लब्धसंश्रयः अनुजीवी निपुणः शास्त्रकलासु अविकारवान् अविसंवादकत्वादेकमार्गः स्थाने स्थैर्यमवाप्नोति यत्र नियुक्तः । मन्त्री कर्मसु निश्चित इति । अस्य वक्ष्यमाणेन संबन्धः । स्वामिना मन्त्री अन्यस्तु( ? कर्मसु ) व्यापारेषु नियुक्तः सन् ।

जम.

(२) एतदेव समर्थयन्नाह— लब्धावकाश इति । लब्धावकाशः प्राप्तसेवावसरः निपुणं सुश्लिष्टं यथा भवति तथा आत्मवति स्वामिनि अविकारवानिति शरीरवेषादिविकाररहितः स्थाने सचिवादिपदे स्थैर्यं स्थिरत्वं अवाप्नोतीति । मतिकर्मसु बुद्धिसाध्येष्वनुष्ठानेषु निश्चितः कृतनिश्चयः इति । संक्षिप्तमिदमनुजीविवृत्तमिति ।

उनि.

[2]आयत्यां च तदात्वे च यत्स्यादास्वादपेशलम् ।
तत्क्लिश्यन्नपि कुर्वीत न लोकद्विष्टमाचरेत् ॥

(१) स्वामितः दुःखितोऽपि स्वामिनो नापकारं कुर्यात् । न परद्वेषमाचरेत्, वृथेति शेषः ।

रार. ४७

(२) यत् आयत्यां तदात्वे च आस्वादपेशलं आस्वादहृद्यं कटुविपाकाभावात्, तत् क्लिश्यन्नपि कुर्वीत तस्मिन् आत्मवति लब्धसंश्रयोऽनुजीवी कर्म कुर्यात् । न तु लोकविद्विष्टमाचरेत् ।

जम.

(३) अनुजीविना न उभयलोकविरुद्धं जीवनमभिलषणीयमिति दर्शयन्नाह— आयत्यामिति । आयत्यां आगामिनि काले तदात्वे वर्तमानकाले च यत् आस्वादपेशलं आस्वादरमणीयं तत् आचरेदिति । अर्थाधिकारिविषयोऽयमुपदेशः । यद्यर्थाधिकारी तदा त्वर्थलोलुपो भक्षयति तत् तदात्वे आस्वादपेशलं भवति, किंतु आयत्यां लेखदानकाले वधबन्धादिभिः कटुकास्वादं भवति । यत्तु स्वाम्यनुमतं भक्ष्यते तदा आयत्यां तदात्वे च आस्वादपेशलं भवति । तदेव क्लिश्यन्नपि, क्षुधयेति शेषः, कुर्वीत । अर्थाधिकारीत्यर्थादापद्यते । न लोकद्विष्टं इहलोकपरलोकविरुद्धं आचरेत् । स्वामिनमतिसंधाय अर्थभक्षणे लोकद्वयविरुद्धो भवतीत्यर्थः ।

उनि.

[1]तिलाश्चम्पकसंश्लेषात्प्राप्नुवन्त्यधिवासनाम् ।
रसोनभक्षास्तद्गन्धाः सर्वे सांक्रामिका गुणाः ॥

(१) अन्यथा हि अनात्मवति लब्धसंश्रयः सर्वं वैपरीत्येन आरभते संपर्कदोषात् । यदाह— तिला इत्यादि ।

जम.

(२) कोशवान् कल्पवृक्षोपमोऽपि अशुभात्मको म्लेच्छादिर्न सेव्य इति दर्शयन्नाह— तिला इति । तिलाश्चम्पकपुष्पसंश्लेषात् तिलमध्यन्यस्तनागचम्पकाधिवासनां तद्गन्धित्वं प्राप्नुवन्ति । ततश्च पीडितेषु तिलेषु चम्पकतैलं भवतीति संसर्गजोऽयं गुणः । रसोनभक्षाः पुरुषाः तद्गन्धाः रसोनगन्धाः एव भवन्ति । अयं संसर्गजो दोषः । एवं च सर्वे गुणा इति पुरुषधर्माः सांक्रामिकाः संक्रमणशीलाः । तस्मादविशुद्धः सङ्गः परित्याज्य इति ।

उनि.

अपां प्रवाहो गाङ्गोऽपि समुद्रं प्राप्य तद्रसः ।
भवत्यवश्यं तद्विद्वान्नाऽऽश्रयेदशुभात्मकम् ॥

(१) तद्विद्वानिति तस्मादेवं जानन् । अशुभात्मकं अनात्मवन्तं सत्यपि जीवने नाऽऽश्रयेत् ।

जम.

(२) एतदेव समर्थयन्नाह— अपामिति । अपां जलानां प्रवाहः ओघः गाङ्गोऽपि अमृतमयोऽपि

---

(१) कानी. ५१५ ; उनि. ण आत्म ( णमात्म ) मन्त्री क ( मतिक ).

(२) कानी. ५१६ ; रार. ४६ न्नपि कु ( न्नापकु ) द्विष्ट ( द्वेष ) उत्त.

(१) कानी. ५१७–८.

समुद्रं क्षारं प्राप्य गत्वा तद्रसः क्षारः भवति अवश्यं निःसंदेहम् । तस्मात् विद्वान् पण्डितः विवेकी नाऽऽश्रयेत् , अशुभात्मकं अकुलीनं म्लेच्छादिकं तत्सङ्गात् तत्समः एव भवतीति । उनि.

[1]क्लिश्यन्नपि हि मेधावी शुद्धं जीवनमाचरेत् ।
तेनेह श्लाघ्यतामेति लोकेभ्यश्च न हीयते ॥

( १ ) तुल्ये च सेवाक्लेशे वरं परिशुद्धमाजीवनम् । यदाह— क्लिश्यन्नपीत्यादि । तेनेति शुद्धजीवनेन । लोकेभ्यश्च न हीयत इति । परिशुद्धवृत्तत्वान्न लोकवाच्यो भवतीत्यर्थः । जम.

( २ ) तदेव द्रढयितुमाह— क्लिश्यन्निति । क्लिश्यन् दौर्गत्येन बुभुक्षादिभिः क्लेशं गच्छन्नपि मेधावी बुद्धिमान् शुद्धं न्याय्यं जीवनं जीविकां आचरेत् आतिष्ठेत् । शुद्धता च जीवनस्य आत्मसंपन्नात् स्वामिनो यथोक्तसेवाधर्मादधिगतत्वम् । तेन इह लोके श्लाघ्यतां स्पृहणीयतां एति प्राप्नोति, लोकेभ्यश्च इहपरलोकबन्धुलोकेभ्यः न हीयते न प्रच्यवते । उनि.

[2]अभिलक्ष्यं स्थिरं पुण्यं ख्यातं सद्भिर्निषेवितम् ।
सेवेत सिद्धिमन्विच्छन् श्लाघ्यं विन्ध्यमिवेश्वरम् ॥

( १ ) शुद्धं चाऽऽजीवनमन्विच्छन्नभिलक्ष्यत्वादिधर्मयुक्तं सेवेत, तत्र ह्यात्मवत्तायाः संभवादित्याह— अभिलक्ष्यमित्यादि । अभिलक्ष्यं स्वजातीयेषु भूभृत्सु च । स्थिरं अनुच्छेद्यम् । पुण्यं धार्मिकत्वात् , इतरत्र सिद्धिक्षेत्रत्वात् । ख्यातं सर्वत्र । सद्भिः वृद्धैः, इतरत्र मुनिभिः । जम.

( २ ) सेव्यस्वामिस्वरूपमभिधातुमाह— अभिलक्ष्यमिति । विन्ध्यमिवेश्वरं सेवेत इति संबन्धः । अभिलक्ष्यं उन्नतिमत्त्वात् । दूरादेवाभिलक्ष्यते विन्ध्यः पर्वतः । ईश्वरोऽपि बहूनां मध्ये त्यागशौर्यादिभिः अवाप्तकीर्तित्वादेवाभिलक्ष्यते । स्थिरमिति । विन्ध्यपर्वतोऽप्यविचलत्वात् स्थिरः , ईश्वरोऽपि स्थितेर्न चलतीति । पुण्यमिति । पवित्रः विन्ध्य इव ईश्वरोऽपि पुण्ययोगान्महाकुलोत्पन्नत्वेन पुण्यः । ख्यातमिति । विन्ध्यो जगद्विदितः, ईश्वरोऽपि महाविजिगीषुत्वेन ख्यातः । सद्भिर्निषेवितमिति । सत्पुरुषैर्निषेवितं सिद्धिमिच्छुभिः , ईश्वरोऽपि सर्वार्थसिद्धिमिच्छुभिः । इति विन्ध्यसमानमीश्वरं सेवेतेति । सिद्धिमन्विच्छन्निति । विन्ध्यं अष्टमहासिद्धीनां मध्ये अभिलषितां सिद्धिमन्विच्छन् , ईश्वरमपि लोकद्वयसिद्धिमन्विच्छन्निति । श्लाघ्यं स्पृहणीयं विन्ध्यमिवेश्वरं चेति । उनि.

दुरापमपि लोकेऽस्मिन् यद्यद्वस्त्वभिवाञ्छति ।
तत्तदाप्नोति मेधावी तस्मात्कार्यः समुद्यमः ॥

( १ ) सेवाप्रयाससाफल्यं दर्शयति— दुरापमपीत्यादिना । तस्मात् कार्यः समुद्यमः । तत्र न दैवप्रमाणस्तिष्ठेत् , तस्याचिन्त्यत्वात् । उद्यमश्च नयविकलो नैकान्तेन फलवानित्याह— मेधावीति । मेधाग्रहणं बुद्ध्युपलक्षणार्थम् । जम.

( २ ) अभिमतगुणः स्वामी न प्राप्यते इत्याशङ्क्याऽऽह— दुरापमिति । दुरापं दुष्प्रापमपि अस्मिन् जगति उद्यमी पुरुषो यद्यद्वस्तु धर्मार्थकाममोक्षादिकमपि अभिवाञ्छति अभिलषति, मेधावी प्राज्ञः तत्तदाप्नोति । तस्मात् कार्यः समुद्यमः आभिगामिकगुणोपेतस्वामिप्राप्त्यर्थं समुद्योगः । उनि.

अनुजीविगुणाः

[1]आरिराधयिषुः सम्यगनुजीवी महीपतिम् ।
विद्याविनयशिल्पाद्यैरात्मानमुपपादयेत् ॥

( १ ) अनिपुणस्याऽऽसेवकस्यान्याराधनासंभवादित्याह— आरिराधयिषुरित्यादि । आराधयितुमिच्छुः । जम.

( २ ) स्वामिगुणानभिधाय अनुजीविगुणानभिधातुमाह— आरिराधयिषुरिति । आराधयितुमिच्छुः सम्यगिति निरुपचरितत्वेन अनुजीवी सेवकः महीपतिं सेवान्तरे विद्याभिः आन्वीक्षिक्यादिभिः , विनयेन इन्द्रियजयेन, शिल्पैः सकलकलाविज्ञानैः , आदिग्रहणादन्यैरपि

---

( १ ) कानी. ५।९ ; रार. ४७ भ्यश्च ( भ्यस्तु ).
( २ ) कानी. ५।१०–११.

( १ ) कानी. ५।१२ ; रार. ४७ पतिम् ( भुजम् ).

नृपाराधनगुणैः आत्मानं उपपादयेत् संपन्नं कुर्यादिति । उनि.

'कुलविद्याश्रुतौदार्यशिल्पविक्रमधैर्यवान् ।
वपुःसत्त्वबलारोग्यस्थैर्यशौचदयान्वितः ॥

(१) तान् गुणानाह– कुलेत्यादि । विद्या ग्रन्थतोऽवधारिता । तस्या एव अर्थतः परिज्ञानं श्रुतम् । औदार्यं स्थूललक्षता । धैर्यं अनौद्धत्यम् । वपुरित्यनेन कुशरीरप्रतिषेधः । स्थैर्यं अपरित्यागिता । शौचं उपधाशुद्धिः । जम.

(२) एतदेव स्पष्टयन्नाह– कुलेति । कुलं आभिजात्यम् । विद्यानां अनन्तरोक्तानां श्रुतम् । श्रुतं च सम्यग्ज्ञानपर्यन्तमत्र ग्राह्यम् । औदार्यं अलुब्धत्वम् । शिल्पं कलाकौशलम् । विक्रमः विविधं प्रतिपक्षाक्रमणम् । धैर्यं अभीरुत्वम् । कश्चिद्धीरोऽप्यविक्रान्तो भवतीति भेदः । एभिरन्वितः । वपुः शरीरम् । तच्च यथोक्तप्रमाणं ग्राह्यम् । सत्त्वं व्यसनेऽभ्युदये यदविकारि । बलं महाप्राणता । आरोग्यं नीरोगता । स्थैर्यं प्रतिष्ठितत्वम् । शौचं उपधाशुद्धिः । दया क्रौर्याभावः । एभिः अन्वितः संयुक्तः । उनि.

'पैशुन्यद्रोहसंभेदशाठ्यलौल्यानृतातिगः ।
स्तम्भचापलहीनश्च सेवनं कर्तुमर्हति ॥

(१) संभेदः अत्र कलिकर्म । रार. ४७

(२) संभेदातिग इति परस्याभेद्य इत्यर्थः । शाठ्यं चित्तकौटिल्यम् । लौल्यं जिह्वादीन्द्रियलोलुपता । शेषा व्याख्यातप्रायाः । जम.

(३) पैशुन्यं पिशुनभावः । द्रोहः विश्वासघातित्वम् । संभेदः संहतभेदनशीलता । शाठ्यं वञ्चकत्वम् । लौल्यं आहारादिलोलुपत्वम् । अनृतं असत्यम् । तानि अत्येति अतिगच्छतीति, तैः रहित इत्यर्थः । स्तम्भः स्तब्धता प्रश्रयरहितत्वमित्यर्थः । चापलं अप्रतिष्ठितत्वम् । ताभ्यां हीनः । चकारादुक्तगुणैर्युक्तो यः सेवको दोषैरेभिर्हीनः सः सेवनं कर्तुमर्हति सेवाफलयोगात् । इतरस्तु नार्हति विफलप्रयासत्वात् । उनि.

'दक्षता भद्रता दार्ढ्यं क्षान्तिः क्लेशसहिष्णुता ।
संतोषः शीलमुत्साहो मण्डयन्त्यनुजीविनम् ॥

(१) दक्षता उत्साहगुणान्तर्भावेऽपि प्राधान्यार्थं पृथक्कृता । भद्रता लोकप्रियता । दार्ढ्यं कर्मसु । क्षान्तिः आक्रोशादितितिक्षा । काले त्वमर्षः इष्यते एव, उत्साहगुणत्वात् । संतोषः पानाशनादिषु । मण्डयन्त्यनुजीविनमिति पूर्वोक्तसर्वगुणाभावेऽपि दक्षतादिगुणाष्टके त्वाद्रियेत इति दर्शयति, अत्यन्तोपयोगित्वात् । एवं हि गुणव्यतिरेकेणैषां निर्देशः । जम.

(२) अलंकारभूतान् सेवकगुणानभिधातुमाह– दक्षतेति । दक्षता कौशलं आशुकारित्वं च । भद्रता भद्रकारित्वम् । दार्ढ्यं स्थिरस्नेहता । क्षान्तिः क्षमा । क्लेशः क्षुत्तृडध्ववातातपादिजन्यः, तत्सहिष्णुता । संतोषः अविषादिता । शीलं सत्स्वभावः । उत्साहः 'शौर्यममर्षो दाक्ष्यं च' (कौ. ६।१) इति कौटिल्यकृतलक्षणः । एते गुणा मण्डयन्त्यनुजीविनम् । गुणानामेते प्रधानभूताः यत्नतः संपादनीया इति भावः । उनि.

अनुजीविनां राजसंबन्धीनि कर्तव्याकर्तव्यानि

'अर्थशौचपरो नित्यं गुणैरेभिः समन्वितः ।
भूतये भूतिसंपन्नं साधु विश्वासयेन्नृपम् ॥

(१) अर्थशौचपर इति अनुजीविनां प्रायेणार्थेष्वधिकारात् । विश्वासयेन्नृपम्, उपासनां कुर्वन्निति शेषः । जम.

(२) प्रधानतरं गुणं दर्शयन्नाह– अर्थेति । 'अर्थार्थी जीवलोकोऽयम्' इति अर्थशौचं दुष्करम् । न चानेन विना विश्वासः स्यादित्यर्थशौचपरो नित्यम् । अनन्तरोक्तगुणैर्युक्तः भूतये भूतिसंपन्नं प्रभुशक्तिकोशप्रकृतिकं साधु यथा भवति तथा विश्वासयेत् आत्मनि विश्वस्तं

(१) कानी. ५।१३ ; रार. ४७ स्थैर्य (सत्य).

(२) कानी. ५।१४ ; रार. ४७ लौल्या (मौढ्या) तृतीयचरणे (दम्भचापल्यहीनं च).

(१) कानी. ५।१५ ; रार. ४७.

(२) कानी. ५।१६.

कुर्यात् । विश्वस्ते सेवाफलं संपद्यते इति भावः । उनि.

[1]प्रविष्टः सम्यगुचिते स्थाने तिष्ठन् सुवेषवान् ।
यथाकालमुपासीत राजानं विनयान्वितः ॥

(१) तामुपासनामाह– प्रविष्ट इत्यादिना । सम्यक् प्रविष्टः यदाऽनुज्ञातः प्रविशत्विति । उचिते उत्तमाधममध्यमन्यवस्थाकल्पिते । सुवेषवान् अनुपहतदर्शनः । यथाकालं यो यस्य सेवाकालः । उपासीत सेवेत । जम.

(२) अनुजीविवृत्ते सेवाधर्मविषयमभिधातुमाह– प्रविश्येति । प्रविश्य प्रियहितद्वारेण राजसभाम् । सम्यगिति प्रतिहारनिर्दिष्टे स्थाने । तिष्ठन् वक्ष्यमाणन्यायेन । सुवेषवानिति निर्मलानुद्धतनेपथ्यवान् । यथाकालं उपासनाकालानतिक्रमेण । उपासीत सेवेत राजानम् । विनयान्वितः प्रश्रयवानिति । उनि.

[2]परस्थानासनं क्रौर्यमौद्धत्यं मत्सरं त्यजेत् ।
विगृह्य कथनं चापि न कुर्याज्ज्यायसा सह ॥

(१) राजवेश्मनि एकान्ते कथनं स्त्रिया सह न कुर्यात् । जायया राजजायया इति । 'राजानं विसृज्य न कुर्यात्' इति पल्लवः । रार. ४७

(२) सेवाविधिमाह– परस्थानेत्यादिना ग्रन्थेन । औद्धत्यं अननुरूपचेष्टता । ज्यायसा अधिकतरेण । जम.

(३) तत्र यत्कर्तव्यं तदभिधातुमाह– परस्थानेति । परस्य अन्यसेवकस्य स्थानं प्रदेशम्, आसनं विष्टरादि, क्रौर्यं क्रूरभावम्, औद्धत्यं असभ्यवेषत्वम्, मत्सरं विद्याशौर्याद्यसहनं त्यजेत् अनुजीवी । विगृह्य ज्यायसा अधिकेन सह विरोधं कृत्वा कथनं राजसभायां न कुर्यात् । यस्मात् ज्यायान् विगृहीतः सन् सेवाविघातं करोति । उनि.

[1]विप्रलम्भं च मायां च दम्भं स्तेयं च वर्जयेत् ।
पुत्रेभ्यश्च नमस्कुर्याद्वल्लभेभ्यश्च भूपतेः ॥

(१) स्तेयं विवर्जयेत् । यद्यपि सर्व(त्र)निषेधः तथापि राजवेश्मनि संनिहितभयात् अत्र विशेषतो निषेध इत्याशयः । रार. ४७

(२) विप्रलम्भं विसंवादनम् । अन्यथा प्रतिज्ञाय अन्यथा करणमित्यर्थः । मायां वञ्चनाम्, यत्र सर्वथा अर्थाभावः । दम्भं कुक्कुटवृत्तम् । जम.

(३) विप्रलम्भं वञ्चनम् । मायां रूपपरिवर्तनम् । दम्भं कूटदीनारादिव्यवहारम् । स्तेयं तृणादेरपि चौर्यं यत् ज्ञात्वा न विश्वसितीति । विप्रतारणादिकं वर्जयेत् । किंच, स्वामिपुत्रेभ्यो नमस्कुर्यात् वल्लभेभ्यश्च भूपतेः । ते हि प्रश्रयेणाऽऽराधिताः स्वामिनमनुकूलयन्तीति भावः । उनि.

[2]न नर्मसचिवैः सार्धं किंचिदप्यप्रियं वदेत् ।
ते हि मर्मण्यभिघ्नन्ति प्रहासेनैव संसदि ॥

(१) नर्मसु सचिवैः नर्मसचिवैः परिहासादिचतुरैः । 'कटुनादिभिः' इति पल्लवः । प्रियात् भिन्नं अप्रियम् । साभिप्रायार्थवचनमिति यावत् । मर्माणि आशयानि । तथा च तैः सभायां तद्वचनप्रहासेन तदुच्छेद इत्यर्थः । रार. ४८

(२) नर्मसचिवो यथा वसन्तको वत्सराजस्य । क्रीडासचिव इत्यर्थः । जम.

(३) नर्मसचिवाः विदूषकादयः सचिवाः, यैः सह स्वामी नर्मालापान् करोति । तैः सह न किंचिदप्यप्रियं वदेत् । हि यतः ते नर्मसचिवाः संसद्येव सभायामेव विग्रहेण विरोधेन हेतुना मर्माण्यपि गोप्यानि छिद्राण्यपि घ्नन्ति उद्घाटयन्ति प्रहासेनैवेति । उनि.

---

(१) कानी. ५।१७ ; उनि. प्रविष्टः (प्रविश्य).
(२) कानी. ५।१८ ; रार. ४७ विगृह्य (विसृज्य) चापि (चैव) ज्यायसा (जायया).

(१) कानी. ५।१९ ; रार. ४७ च वर्जं (विवर्जं) इति व्याख्यानपाठः, पू.
(२) कानी. ५।२० ; रार. ४८ तृतीयचरणे (तेऽस्य मर्माणि कृन्तन्ति) ; उनि. उत्तरार्धे (ते हि मर्माण्यपि घ्नन्ति विग्रहेणैव संसदि ॥).

[1]भर्तुरन्वासितो दृष्टिं मुहुर्नान्यत्र निक्षिपेत् ।
ब्रूयान्न किंचिदन्योन्यं तिष्ठेच्चाऽऽस्यं विलोकयन् ॥

(१) अर्धासने पुरोभागार्धासने । अन्योन्यं सेवकेन सह न ब्रूयात् । रार. ४८

(२) राजसमीपवर्तिनां सेवकानां लक्षणमाह– भर्तुरिति । नीम. ४२

(३) भर्तुः अन्यत्र इति संबन्धः । अन्वासितः आसनसमीपे व्यवस्थितः । जम.

(४) भर्तुः स्वामिनः अन्वासने आसनसमीपस्थाने तिष्ठन् स्थितः दृष्टिं नान्यत्र संक्षिपेत् कुर्यात् । (किम् ?) अयं स्वामी किं ब्रूयात् किं वदेत् इति तदाकर्णनार्थं मुहुरास्यं विलोकयन् तिष्ठेत् सावधानताप्रदर्शनार्थमिति । उनि.

[2]कोऽत्रेत्यहमिति ब्रूयात्सम्यगाज्ञापयेति च ।
आज्ञां चावितथां कुर्याद्यथाशक्त्यविलम्बितम् ॥

(१) अवितथामिति कार्यसंपादनेन सफलाम् । जम.

(२) स्वामिनाऽऽदिष्टे 'कः अत्र' इति, 'अहमत्र तिष्ठामि' इति ब्रूयात् । 'सम्यक् आज्ञापय' इति च ब्रूयात् । आज्ञां शासनं दत्तां तथा कुर्यात् एवं करोमीति सत्यसंपादनेन यथाशक्ति शक्त्यनतिक्रमेण अविलम्बितं अतिकालहीनमिति । उनि.

[3]उच्चैः प्रकथनं हासं ष्ठीवनं कुत्सितं तथा ।
जृम्भणं गात्रभङ्गं च पर्वस्फोटं च वर्जयेत् ॥

(१) ष्ठीवनं मुखनिर्गतजलबिन्दुविशेषम् । जृम्भणं मुखव्यासक्रियाविशेषम् । गात्रभङ्गं गात्रकौटिल्यक्रियाविशेषम् । पर्वस्फोटं अङ्गुलीपर्वस्फोटनम् । रार. ४८

(२) ष्ठीवनं श्लेष्मादिनिरसनम् । कुत्सितं दुष्टमारुतकर्म । पर्वस्फोटं अङ्गुलीनाम् । जम.

(३) भूयो वर्जनीयमाह– उच्चैरिति । सत्सु उपहासकारणेषु उच्चैः अत्यर्थं प्रहसनं अट्टहासम्, कासमप्युच्चैः, ष्ठीवनं श्लेष्ममोक्षम्, कुत्सितमपि अपानदर्शनादिकम्, तथा जृम्भणं गात्रभङ्गं पर्वस्फोटं च वर्जयेदिति प्रतीतम् । उनि.

[4]प्रविश्य चानुरागेण चित्तं चित्तज्ञसंमतः ।
समर्थयंश्च तत्पक्षं साधु भाषेत भाषितम् ॥

(१) चित्तज्ञसंमत इति । राजाभिप्रायविदां पार्श्ववर्तिनां संमतः । असंमतो हि ध्रुवं तद्द्वेषात् द्वेष्यः स्यात् । तत्पक्षं राजाभ्युपगतम् । जम.

(२) भाषणावसरे यदभिलषितव्यं तदुपदेष्टुमाह– प्रविश्येति । सानुरागस्य स्वामिनश्चित्तं प्रविश्य अपरेषामपि चित्तज्ञानां संमतः स्वामिचित्तज्ञत्वेन, समर्थयंश्च तत्पक्षमिति स्वामिपक्षं साधु भाषेत भाषिते आलापे सति । उनि.

---

(१) कानी. ५।२१ ; रार. ४८ रन्वासितो (रर्धासने) निक्षिपेत् (कारयेत्) ब्रूयान्न (न ब्रूयात्) च्चाऽऽस्यं (दास्यं) ; नीम. ४२ रन्वासितो (रर्धासने) पू. ; उनि. पूर्वार्धे (भर्तुरन्वासने तिष्ठन् दृष्टिं नान्यत्र संक्षिपेत् ।) तृतीयचरणे (ब्रूयात् किमयमित्येव).

(२) कानी. ५।२२ ; रार. ४८ गाज्ञाप (गादेश) चावि (न वि) लम्बितम् (लम्बितः) ; नीम. ४२ ; उनि. चावितथां (चापि तथा).

(१) कानी. ५।२३ ; रार. ४८ हासं (हास्यं) कुत्सितं (कुत्सनं) च वर्जे (विवर्जे); निम. ४२ कुत्सितं (कुत्सनं) पर्व (पर्वा) प्रकथनं हासं (प्रहसनं कासं) ; उनि. प्रकथनं हासं (प्रहसनं कासं).

(२) कानी. ५।२४ ; रार. ४८ उत्त. ; नीम. ४२ चित्तं चित्तज्ञ (चित्तज्ञस्य च) तत्प (सत्प) चानुरागेण (सानुरागस्य) षितम् (षिते) ; उनि. चानुरागेण (सानुरागस्य) षितम् (षिते).

'तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितम् ।
सुखप्रबन्धगोष्ठीषु वादे वा वादिनां मतम् ॥

(१) * अत्र (? र्थं) तदभिप्रेतं ब्रूयात् । इदं तु कार्यसिद्धौ, 'मज्जमानमकार्येषु' (कानी. ४।३९) इत्यादिवचनात् । रार. ४९

(२) सुखप्रबन्धगोष्ठीष्विति । सुखार्थप्रवर्तितकाव्यादिगोष्ठीष्वित्यर्थः । जम.

(३) पक्षान्तरमभिधातुमाह— तन्नियोगेनेति । स्वामिनियोगेन वा ब्रूयात् अर्थं वाक्यस्य सुपरिनिश्चितं सुनिर्णीतम्, कृत्वेति शेषः । सुखार्थं प्रवृत्ता: या गोष्ठ्यः तासु ब्रूयात् । वादे वा शास्त्रोक्तलक्षणे वादिनां अन्येषामपि यन्मतं तत् ब्रूयात् । उनि.

²विजानन्नपि न ब्रूयाद्भर्तुः क्षिप्त्वोत्तरं वचः ।
प्रवीणोऽपि हि मेधावी वर्जयेदभिमानिताम् ॥

(१) क्षिप्तोत्तरं परित्यक्तोत्तरम् । रार. ४८

(२) क्षिप्त्वोत्तरं वच इति । 'न सम्यक्' इत्युक्तमाक्षिप्य । अभिमानिताम् 'अहमेव जानामि' इति । जम.

(३) अभाषणीयमभिधातुमाह— विजानन्निति । विशेषेण जानन्नपि भर्तुः क्षिप्त्वोत्तरं वचः येन भर्ता निरुत्तरो भवति तत् न ब्रूयात् । प्रवीणोऽपि हि भाषणे कुशलोऽपि मेधावी प्राज्ञोऽपि वर्जयेत् स्वामिविषये अभिमानिताम् । अभिमानात् न स्वामी निरुत्तरः कार्य इति भावः । उनि.

'यदप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्तयेत् ।
कर्मणा तस्य वैशिष्ट्यं कथयेद्विनयान्वितः ॥

(१) प्रबलतरमपि वचनं मृदु कीर्तयेत् । कर्मणा सोपन्यासेन । रार. ४९

(२) उच्चैः अधिकम् । नीचैः विस्रब्धम् । वैशिष्ट्यं आधिक्यम् । विनयान्वितः निहतमानः । जम.

(३) विद्याशिल्पविषये यत् ब्रूयात्तदभिधातुमाह— उच्चैरिति । उच्चैः अतिशयेन यदपि जानीयात् तदपि नीचैः कीर्तयेत् 'किंचिदत्र जानामि' इति ब्रूयात् । कर्मणा सुक्रियया तस्य वैशिष्ट्यं श्रैष्ठ्यं कथयेत् दर्शयेत्, न वाचा । तत्रापि विनयान्वितः प्रश्रययुक्तः । ज्ञानमगर्वमिष्यते इति भावः । उनि.

²आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥

(१) आपदि पराभियोगादौ । उन्मार्गगमने अदण्ड्यदण्डनादौ । कार्यकालात्ययेषु चेति । यत् कार्यं यस्मिन् काले चिकीर्षितं तयोरतिपातनेषु । कल्याणभाषितं युक्तियुक्तम् । जम.

(२) अपृष्टस्यापि कारणाद्भाषणमभिधातुमाह— आपदीति । आपदि परप्रयुक्ततीक्ष्णादिप्रारब्धायाम्, उन्मार्गगमने स्वामिनः शास्त्रविरुद्धाचरणे, कार्यात्यये स्वामिनः कार्यं विनश्वरं दृष्ट्वा, कालात्यये च अनुगुणकालातिक्रमे अपृष्टोऽपि स्वामिहितान्वेषी ब्रूयात् आपदि विक्रियाप्रतीकारार्थम् । तत्रापि कल्याणभाषितं मङ्गल्यं वचनीयमिति । उनि.

³प्रियं तथ्यं च पथ्यं च वदेद्धर्म्यार्थ्यमेव च ।
अश्रद्धेयमसभ्यं च परोक्षं कटु चोत्सृजेत् ॥

---

* 'आपद्युन्मार्गगमने कार्यत्यागात्ययेषु च । तन्नियोगेन तु ब्रूयादर्थं सुपरिनिष्ठितम् ॥' इति श्लोकशरीरमभिप्रेत्येदं व्याख्यानम् ।

(१) **कानी.** ५।२५; **रार.** ४९ न वा (न तु) श्चितम् (ष्ठितम्) सुखप्रबन्ध (मुखप्रसन्न) वादे वा (वादेषु) अयं श्लोकः 'आपद्युन्मार्गगमने' (**कानी.** ५।२८) इत्यादिश्लोकस्य पूर्वोत्तरार्धयोर्मध्ये पठितः; **नीम.** ४२ वादे वा (विवादे) मतम् (मतः); **उनि.** प्रबन्ध (प्रवृद्ध).

(२) **कानी.** ५।२६; **रार.** ४८ क्षिप्त्वो (क्षिप्तो); **नीम.** ४२ क्षिप्त्वो (क्षिप्तो) हि (च).

(१) **कानी.** ५।२७; **रार.** ४८; **नीम.** ४२ कर्मणा (कर्मणां); **उनि.** यदप्युच्चैर्वि (उच्चैर्यदपि).

(२) **कानी.** ५।२८; **रार.** ४९ काला (त्यागा); **नीम.** ४२ हिता (हि ना).

(३) **कानी.** ५।२९; **नीम.** ४२ र्म्यार्थ्य (र्मार्थं) पू.

(१) प्रियं तदात्वे सुखकरम् । तथ्यं सद्भूतम् । पथ्यं यत् परिणामसुखं औषधपानवत् । धर्म्यार्थ्यमेव चेति । गुरुप्रत्युत्थानादिकं धर्म्यम्, यातव्याभिसरणादिकं अर्थ्यम् । अश्रद्धेयं प्रत्यक्षमपि । असभ्यं सभायामसाधु । परोक्षं तथ्यमपि यत् स्वयं नोपलब्धम् । कटु अश्रव्यम् । जम.

(२) प्रियं भूत्वा यत् पथ्यं हितमित्यर्थः । तथ्यं सत्यं भवेत् । ब्रूयाद्धर्म्यार्थ्यमेव च यद्धर्मात् अर्थात् च अनपेतम् । अश्रद्धेयं श्रद्धातुं यन्न शक्यते । असभ्यं अश्लीलादि । यत् परोक्षं यदश्रद्धेयमिति संबन्धः । कटु कर्णकटु । चोत्सृजेत् न ब्रूयादित्यर्थः । उनि.

**[१]परार्थं देशकालज्ञो देशे काले च साधयेत् ।**
**स्वार्थं च स्वार्थकुशलः कुशलेनार्थकारिणा ॥**

(१) संतोषाद्यवसरे परोपकारमपि कुर्यादित्यर्थः । नीम. ४२

(२) परार्थे अन्यस्याऽऽजीवनार्थम् । देशकालज्ञः, अन्यथा हि सहसा न साधयेत् । देशे काले च समुपस्थिते । पुनरुपादानमेतौ परस्परापेक्षया कार्यं साधयत इति दर्शनार्थम् । स्वार्थकुशलः देशकालज्ञ इत्यर्थः । कुशलेन देशकालज्ञेन । अर्थकारिणा कल्याणाशयेन । जम.

(३) 'प्रविश्य सानुरागस्य चित्तं चित्तज्ञसंमतः' (कानी. ५।२४) इत्यपेक्ष्य परार्थं स्वामिनं विज्ञाप्य साधयेदित्यर्थः । देशकालज्ञ इति । यस्मिन् देशे स्थितः स्वामी कार्यं करोति यस्मिंश्च काले तौ जानातीति तज्ज्ञः अनुजीवी । तत्र देशे काले चार्थं साधयेत् । स्वार्थं आत्मीयकार्यं कुशलेन अन्येन स्वार्थकुशलः अनुजीवी साधयेत्, न स्वयम् । अर्थकारिणा आत्महितेन । प्रत्यक्षं प्रार्थनाभङ्गे वैलक्ष्यं मा भवत्विति । उनि.

**[२]गुह्यकर्म च मन्त्रं च न भर्तुः संप्रकाशयेत् ।**
**विद्विष्टमपि नाशं च मनसाऽपि न चिन्तयेत् ॥**

(१) गुह्यकर्म चारप्रणिधानादिकं भर्तुः संबन्धि । विद्विष्टं वाक्पारुष्यादि । जम.

(२) गुह्याप्रकाशनमाह– गुह्यमिति । गुह्यं गोपनीयं कर्म शत्रुविषये अभिचारादिकं अन्यद्वा अप्रकाश्यं न भर्तुः संबन्धि प्रकाशयेत् । तथा '*मन्त्रमुच्छिद्य न विभेदयेत्' इति कौटिल्यः । तथा च विद्विष्टं भर्तृराज्यभ्रंशादिकम्, विनाशं मरणादि मनसा हृदयेन न चिन्तयेत् । वचनेन तु नैवेत्यर्थादिति । उनि.

**[१]स्त्रीभिस्तद्दर्शिभिः पापैर्वैरिदूतैर्निराकृतैः ।**
**एकार्थचर्यासंघातं संसर्गं च विवर्जयेत् ॥**

(१) स्त्रीभिः धात्र्यादिकाभिः । तद्दर्शिभिः स्त्रीदर्शिभिः कञ्चुकिभिः । पापैः वैरान्वेषिभिः । वैरिदूतैः शत्रुप्रेषितैः । निराकृतैः राज्ञा अर्थमानाभ्यामवक्षिप्तैः । एकार्थचर्यासंघातं संभूयैकार्थसाधनाय मेलनं तत्संसर्गमपि । जम.

(२) स्त्रीभिः स्वामिभोग्याभिः तद्दर्शिभिः शम्भलीप्रभृतिभिः संसर्गं विवर्जयेत् कामोपधाशुद्धो न भवतीति शङ्कानिवृत्त्यर्थम् । पापैः पातकिभिः कृतस्वामिविरोधिभिः तत्सङ्गागतपातकशङ्कानिवृत्त्यर्थम् । वैरिदूतैः शत्रुप्रेषितैः अहितगत्यागमशङ्कानिवृत्त्यर्थम् । निराकृतैः दोषात् स्वामिना कार्यादुत्सारितैः एभिरभिहितैः सह एकार्थचर्या एकमर्थमुद्दिश्य सहचर्या गमनं संघातं सर्वदा मिलित्वा स्थानं संसर्गं संगतिं च वर्जयेत् शङ्कानिवृत्त्यर्थमिति । उनि.

**[२]वेषभाषानुकरणं न कुर्यात्पृथिवीपतेः ।**
**संपन्नोऽपि हि मेधावी स्पर्धेत न च तद्गुणैः ॥**

(१) संपन्नोऽपि तद्गुणैरिति संबन्धः । जम.

---

* 'उच्छिद्येत मन्त्रभेदी' (कौ. १।१५) इति कौटिलीयवचनमुपलभ्यते ।

(१) **कानी.** ५।३० ; **नीम.** ४२ पू.

(२) **कानी.** ५।३१ ; **रार.** ४९ गुह्य (गुह्यं) द्विष्टमपि (द्वेषं च वि) ; **नीम.** ४२ रारवत् ; **उनि.** गुह्य (गुह्यं).

(१) **कानी.** ५।३२ ; **रार.** ४९ दूतै (भृतै) चर्यासंघातं (चर्यां संवासं) ; **नीम.** ४२ दूतै (भृतै) चर्यासंघातं (चर्यां साहित्यं) ; **उनि.** चर्या (चर्यां).

(२) **कानी.** ५।३३ ; **रार.** ४९ वेषभाषा (देशभावा) ; **नीम.** ४२ भाषा (भावा) हि (च).

(२) पृथिवीपतेः यो वेषः नेपथ्यादिः, या च भाषा स्वामिना व्युत्पादिता वाक्, तदनुकरणं न कुर्यात् मया स्पर्धते इति शङ्कानिवृत्त्यर्थम्। तथा संपन्नोऽपि गुणैः अनुजीवी मेधावी प्राज्ञोऽपि सन् स्पर्धेत न च तद्गुणैः द्वेष्यः अन्यथा भवतीति। उनि.

रक्तविरक्तराजलिङ्गानि

[1]रागापरागौ जानीयाद्भर्तुः कुशलकर्मकृत्।
इङ्गिताकारलिङ्गाभ्यामिङ्गिताकारतत्त्ववित्॥

(१) कुशलकर्मकृत्, स्वामिहिताचरणात्। इङ्गिताकारलिङ्गाभ्यामिति। यथाभिप्रायानुरूपक्रियाविष्करणं इङ्गितम्, भ्रुकुटीमुखरागादिः आकारः, तावेव लिङ्गभूतौ रागापरागानुमाने। इङ्गिताकारतत्त्वविदिति। प्राज्ञा हि मन्त्रसंवरणार्थं रागद्वेषविपर्यासं इङ्गिताकाराभ्यामाचरन्ति। तस्मात् तत्त्ववित् स्यात्। जम.

(२) रागः अनुरक्तता। अपरागः विरक्तता। तौ जानीयात् अनुजीवी। कुशलकर्मकृत् अन्यैरपि कुशलैर्यदकृतं तत् कर्म करोति यः। न हि कर्मकरणाभावे रागापरागौ ज्ञातुं शक्येते। काभ्यां जानीयात्? इत्याह— इङ्गिताकारलिङ्गाभ्यामित्यादि। 'इङ्गितमन्यथावृत्तिः, आकृतिग्रहणमाकारः' (कौ. १।१५) इति कौटिल्यः। इङ्ग्यते ज्ञायते हृदयस्थोऽर्थो येन तत् इङ्गितं इत्यर्थो युज्यते, 'सर्वे गत्यर्था ज्ञानार्थाः' इति वचनात्। तच्च अन्यथावृत्तिः पूर्ववृत्तायाः क्रियायाः अन्यथात्वमिति। आकृत्यन्तरस्य ग्रहणं पूर्ववृत्तायाः प्रसन्नादिकाया आकृतेः आकृत्यन्तरस्य ग्रहणं आकारः। क्रियाया अन्यथात्वं इङ्गितम्, कर्तुरन्यथात्वं चाऽऽकार इति समुदायार्थः। तयोः लिङ्गानि चिह्नानि, ताभ्याम्। इङ्गिताकारतत्त्वविदिति अनुजीवी। उनि.

[2]दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चाऽऽदरात्।
दिशत्यासनमभ्याशे कुशलं परिपृच्छति॥

(१) तदिदानीं प्रायोवृत्त्याऽभिधीयते। तत्र रागमधिकृत्याऽऽह— दृष्ट्वेत्यादि। अभ्याशे समीपे। जम.

(२) रागलिङ्गानि इङ्गिताकाराभ्यामभिधातुमाह— दृष्ट्वेति। दृष्ट्वा प्रसन्नो भवतीत्याकारलिङ्गम्। वाक्यं गृह्णात्यादरादिति इङ्गितम्। पूर्ववृत्ते वाक्यग्रहणे ऽन्यथावृत्तिग्रहणमेव। उनि.

[2]विविक्तदर्शने स्थाने रहस्ये च न शङ्कते।
तदर्थी तत्कृतां चोच्चैराकर्णयति संकथाम्॥

(१) रहस्यं न शङ्कते 'गोप्यमिदमनेनास्य भेदः' इति न शङ्कते। तदर्थी तदिष्टाम्। रार. ५०

(२) विविक्तदर्शन इति एकस्य राज्ञो दर्शनं यस्मिन् स्थाने। तदर्थी अन्येन क्रियमाणाम्। जम.

(३) विविक्तदर्शने एकान्तदर्शने विविक्तस्थाने रहस्ये गोपनीये च कार्ये न शङ्कते, विश्वासयोगात्। तदर्थी अनुजीविगुणग्रहणपक्षपातां तत्कृतां अनुजीविकृतां संकथां इष्टैः सह आकर्णयति, नावज्ञां करोतीति। एतदपि इङ्गितम्। उनि.

[3]श्लाघते श्लाघनीयेषु श्लाघ्यमानं च नन्दति।
कथान्तरेषु स्मरति प्रहृष्टः कीर्तयेद्गुणान्॥

(१) कार्यान्तरेषु अनवसरेषु। रार. ५०

---

(१) **कानी.** ५।३४; **रार.** ४९ परागौ (नुरागौ) लिङ्गाभ्यामि (तत्त्वार्थैरि); **नीम.** ४३ कृत (वित्) उत्तरार्धे (इङ्गिताकारचेष्टाभ्यस्तदभिप्रायवित्तथा॥).

(१) **कानी.** ५।३५; **रार.** ४९–५०.

(२) **कानी.** ५।३६; **रार.** ५० हस्ये (हस्यं) संक (सत्क); **नीम.** ४३ चोच्चै (वोच्चै) संक (तत्क) उत्त.; **उनि.** ने स्था (नस्था) तां चोच्चै (तामिष्टै).

(३) **कानी.** ५।३७; **रार.** ५० (श्लाघते श्लाघ्यमानेषु श्लाघनीयं च नन्दते। कथारम्भेषु स्मरति प्रकृष्टं कीर्तयेद् गुणान्॥) 'कथा' इत्यत्र 'कार्या' इति व्याख्यानुसारी पाठः; **नीम.** ४३ श्लाघ्य (श्लाघ) न्तरेषु (न्तराणि) हृष्टः (कृष्टान्).

(२) * राज्ञा कस्यचित् स्तुतौ क्रियमाणायां स्वयमपि अभिनन्दनं कार्यमित्यर्थः। नीम. ४३

(३) श्लाघनीयेष्विति अभीप्सितेष्वर्थेषु। जम.

(४) श्लाघनीयेषु अन्येषु कीर्त्यमानेषु स्वामी श्लाघते अनुजीविनम्। श्लाघ्यमानं अन्यैः अभिनन्दति 'एवमेतद्यथासंभवम्, ईदृश एवासौ' इति। कथान्तरेषु अन्यैः क्रियमाणेषु स्मरति 'यादृक् असौ तादृक् नान्यः' इति स्मरति। प्रहृष्टः कीर्तयेद्गुणानिति। उनि.

**[1]सहते पथ्यमुक्तः सन् न निन्दामनुमन्यते।**
**करोति वाक्यं तस्यैव तद्वच्च बहु मन्यते॥**

(१) अतथ्यमपि तेनोक्तं सहते क्षमते। रार. ५०

(२) पथ्यमुक्तः अप्रियमपि। तद्वचेति। यथा सेवकः तत्कृतं कर्म बहु मन्यते तथा स्वाम्यपि तत्कृतमिति। जम.

(३) सहते मर्षयति पथ्यं हितं उक्तः सन्। तत्कृतां न निन्दामप्यनुमन्यते 'त्वमनात्मवान् विजिगीषुः गर्हितः' इत्यादिकं निन्दात्वेन नानुमन्यते। करोति वाक्यं अनुजीविना प्रोक्तम्। तद्वचः अनुजीविवचनं बहु मन्यते श्लाघते इत्यर्थः। उनि.

**[2]वृद्धौ प्रसन्नो भवति व्यसने परितप्यते।**
**उपकारेषु माध्यस्थ्यं दर्शयत्यद्भुतेषु च॥**

(१) अपरागमधिकृत्याऽऽह– उपकारेष्वित्यादि। अद्भुतेषु अशक्यकरणादिषु। जम.

(२) अनुरक्तस्य स्वामिनो लक्षणमुक्त्वा विरक्तस्याभिधातुमाह– उपकारेष्विति। उपकारेषु अद्भुतेष्वपि अनुजीविना कृतेषु विरक्तत्वात् माध्यस्थ्यमेव दर्शयति, नानुरागम्। उनि.

**[1]तत्कृतं कर्म चान्येन कृतमित्यभिभाषते।**
**विपक्षमुत्थापयति विनाशं चाप्युपेक्षते॥**

(१) तत्कृतं कर्मेति। अन्यकृतं तत्कृतं भाषते। चशब्दाद्विपरीतं कर्म तेन कृतं अन्यकृतं भाषते अनुरक्तौ। * विपक्षमुत्थापयति सेवकादेः विपक्षं प्रेरयति कलये। पुनर्विनाशमप्युपेक्षते। विनाशस्याप्युपायं न कुरुते इत्यर्थः। रार. ५०, ५१

(२) विनाशं चाप्युपेक्षते विपक्षादुत्पद्यमानम्। जम.

(३) तत्कृतं कर्म चान्येन कृतमभिभाषते तौष्टिकमदातुम्। विपक्षं अनुजीविनं(?नः) शत्रुभूतं उत्थापयति उत्तेजयति तद्विनाशाय। विनाशं च विपक्षादिभिः क्रियमाणं उपेक्षते 'विनश्यतामयम्' इति। उनि.

**[2]कार्ये संवर्धयत्याशां फले च कुरुतेऽन्यथा।**
**यद्वाक्यं मधुरं किंचित्तदप्यर्थेन निष्ठुरम्॥**

(१) कार्ये संवर्धयत्याशां 'कृतेऽस्मिन्निदं दास्यामि' इति। फले च कुरुतेऽन्यथा संपादिते प्रतिज्ञातं न प्रयच्छति। अर्थेन निष्ठुरम्, दुष्टार्थत्वात्। जम.

(२) कार्ये च तत्साध्ये समुपस्थिते संवर्धयत्याशाम्, यथा– 'निष्पत्तौ त्वद्दारिद्र्यमोक्षं करोमि' इत्याशां संवर्धयति। फले च कार्ये स्वे संपन्ने कुरुतेऽन्यथा 'त्वया न एतत्साधितम्' इति। स्वामी अनुजीविविषये यत्किंचिद्वाक्यं मधुरमपि प्रयुङ्क्ते तदप्यर्थेन निष्ठुरम्। यथा 'भद्र, त्वया प्रियहितैषिणा विपक्ष उपेक्षितो ममैव समग्रं यशो दातुम्' इति मधुरं भाषते, तत् अर्थतस्तु 'विपक्षपक्षपाती भवान्' इति समर्थित भवति। उनि.

---

* 'श्लाघमान च नन्दति' इत्यस्य व्याख्यानमिदम्। तच्च 'श्लाघनं राजकर्तृकम्, नन्दनं चानुजीविकर्तृकमनुजीविवृत्तत्वेन विधेयम्' इत्याकारकभ्रान्तिमूलकम्।

(१) कानी. ५।३८; रार. ५० पथ्यमुक्तः सन् (ऽतथ्यमप्युक्तं) मनुमन्यते (मनुवर्तते) तस्यैव तद्वच्च (तद्वक्तं तद्वचो); उनि. तस्यैव तद्वच्च (तत्प्रोक्तं तद्वचो).

(२) कानी. ५।३९; रार. ५० तृतीयचरणे (उपचारेषु मध्यस्थं) उत्त.

* इत आरभ्य विरक्तलक्षणानीति रत्नाकराभिप्रायः।

(१) कानी. ५।४०; रार. ५०.

(२) कानी. ५।४१; रार. ५०–५१.

[1]आचरत्यात्मसंसत्सु परिवादं च केवलम् ।
अकोपोऽपि सकोपाभः प्रसन्नश्चापि निष्फलः ॥

(१) आत्मसंसत्सु स्वसभामध्ये । सकोपाभः, मुखविकारात् । जम.

(२) तथा आचरति आत्मशंसासु अनुजीविना कृतासु परिवादं निन्दादिकं केवलमाचरति । कोपरहितोऽपि तद्दर्शने सकोप इवाऽऽभाति मा किमप्ययं प्रार्थयत्विति । प्रसन्नः कैतवेन निष्फलो भवति । उनि.

[2]हसत्यकस्माद्व्रजति रूक्षं च समुदीक्षते ।
विज्ञाप्यमानो वृत्त्यर्थं सहसोत्थाय गच्छति ॥

(१) रूक्षं अस्निग्धम् । जम.

(२) रूक्षं च मुहुरीक्षते, प्रसादानुरूपाकरणात् । अकस्मात् व्रजति 'कस्मादयं मद्दृष्टिपथेऽवतिष्ठते ?' इति । उनि.

[3]आघट्टयति मर्माणि गुणैर्न बहु मन्यते ।
संभावयति दोषेण वृत्तिच्छेदं करोति च ॥

(१) आघट्टयति चालयति । वृत्तिच्छेदं जीवनाक्षेपम् । जम.

(२) मर्माणि दुश्चरितानि आसमन्तात् घट्टयति स्पृशन्निव वक्ति । हासस्थानं अनुजीविप्रस्तावितं न मन्यते न हसतीत्यर्थः । दुष्टत्वमात्मनो गोपायितुं तथा संभावयति अविद्यमानेनापि दोषेण । वृत्तिच्छेदं करोति चेति । उनि.

---

(१) **कानी.** ५।४२ ; **रार.** ५१ वादं च ( वादेन) सको ( हि को ) न्नश्चापि ( न्नोऽपि हि ) ; **नीम.** ४३ उत्त.; **उनि.** संसत्सु ( शंसासु ).

(२) **कानी.** ५।४३ ; **रार.** ५१ ( वदत्यकस्माद्वदति रूक्षं च मुहुरीक्षते । ) पू. ; **नीम.** ४३–४४ पूर्वार्धे ( वदत्यकस्माद्दुष्टेति रूक्षं च मुहुरीक्षते । ) ; **उनि.** समुदी ( मुहुरी ).

(३) **कानी.** ५।४४ ; **रार.** ५१ द्वितीयचरणे ( सहन्नास्यं प्रपद्यते ) ; **नीम.** ४४ उत्त. ; **उनि.** गुणैर्न बहु ( हासस्थानं न ).

[1]साधूक्तमपि तद्वाक्यं समर्थयति चान्यथा ।
अपर्वणि कथाभङ्गं करोति विरसीभवन् ॥

(१) साधूक्तं अवश्यकर्तव्यमपि तद्वचनं अन्यथा तदा तिरस्कृत्य अन्यद्वारेण साधयति । अपर्वणीति अपूर्णायां कथायां विरसीभवन् रूक्षीभवन् कथाभङ्गं करोति कथां छिनत्तीत्यर्थः । रार. ५१

(२) अन्यथेति दोषेणेत्यर्थः । अपर्वणि अप्रस्तावे । विरसीभवन् विरक्तीभवन् । जम.

(३) साधूक्तमपि अनुजीविवाक्यं समर्थयति चान्यथा असाध्विति योजयति । अपर्वणि अस्थाने एव कथाभङ्गं करोतीति । विरसीभवन् उद्विजन्नित्यर्थः । उनि.

[2]उपास्यमानः शयने सुप्तलक्ष्येण तिष्ठति ।
यत्नेनाऽऽराध्यमानोऽपि सुप्तवच्च विचेष्टते ॥

(१) सुप्तलक्षेण सुप्तव्याजेन तिष्ठति । तदाऽपि यत्नेनाऽऽराध्यमानः सुप्तवच्च विचेष्टते दीर्घनिःश्वासादिना । जम.

(२) उपास्यमानः प्रायेण सुप्तलक्ष्येण तिष्ठति सेवाऽस्य व्यर्थाऽस्त्विति । यत्नेनाऽऽराध्यमानोऽपि सुप्तवच्च विचेष्टते 'न जानामि कदा त्वमागतोऽसि' इति सुप्त इव वक्ति तत्सेवां निष्फलां कर्तुमिति । उनि.

[3]इत्यादि ह्यनुरक्तस्य विरक्तस्य च लक्षणम् ।
रक्ताद्वृत्तिं समीहेत विरक्तं च परित्यजेत् ॥

(१) 'रक्ताद्वृत्तिं ..........' इति अनुरागविरागपरीक्षाफलम् । रार. ५१

(२) विरक्तं च परित्यजेत् । तस्य न केवलमाराधनं निष्फलम्, दोषकरमपि स्यात् । जम.

---

(१) **कानी.** ५।४५ ; **रार.** ५१ ; **नीम.** ४८ अपर्वणि क ( आचक्षाणक ).

(२) **कानी.** ५।४६ ; **रार.** ५१ ; **नीम.** ४४ लक्षेण ( वस्त्र ) नाऽऽराध्य ( न बोध्य ); **उनि.** शयने ( प्रायेण) लक्षे।( लक्ष्ये ).

(३) **कानी.** ५।४७ ; **रार.** ५१ ह्यनु ( चानु ) च लक्ष ( तु लक्ष ) परित्यजेत् ( विवर्जयेत्) ; **नीम.** ४४ .

( ३ ) इत्युक्तमादौ कृत्वा अन्यदप्यनुरक्तविरक्तलक्षणं विद्यते तदपि लोकतो ग्राह्यम् । ततश्च रक्तात् स्वामिनः वृत्तिं समीहेत अनुजीवी, विरक्तं च परित्यजेत्, निष्फलत्वात् अनर्थहेतुत्वाच्च । उनि.

बन्धुमित्रानुजीविनां कर्तव्याकर्तव्यानि

[१]निर्गुणं ह्यपि भर्तारमापत्सु न परित्यजेत् ।
ततः परतरो नास्ति य आपत्सूपतिष्ठते ॥

( १ ) निर्गुणमपि, किमुत गुणवन्तम् ? ततः परतर इति । उत्कृष्टतरः । जम.

( २ ) अस्यापवादमभिधातुमाह– निर्गुणमिति । श्लोकार्थः सुगमः । ततश्च कृतज्ञतया अस्य बहूपकरोति । उनि.

[२]स्वस्थवृत्तेषु सत्त्वाढ्या नोपयान्त्यभिलक्ष्यताम् ।
विरोधे कर्मधुर्याणां तेषां नामातिरिच्यते ॥

( १ ) तदेव स्फुटयन्नाह– स्वस्थवृत्तेष्विति । स्वस्थावस्थेषु स्वामिषु । सत्त्वाढ्या भृत्याः । विरोधे पराभियोगप्रभवे । नामातिरिच्यते ' एत एव सद्भृत्याः यैरुपकृतमस्मिन् काले ' इति । जम.

( २ ) आपत्सूपकारस्य गुणं दर्शयितुमाह–स्वस्थवृत्तेष्विति । स्वस्थवृत्तानि आपदामभावे निराकुलानि यानि वृत्तानि तेषु सत्त्वाढ्याः सत्त्वसंपन्नाः प्रकाशं न यान्ति । विपत्सु च सत्त्वानुजीविनां नामाभिधानमतिरिच्यते अतिरिक्तं जनैरभिधीयते । यथा ' अनेनानुजीविना विपत्सु स्वामी रक्षितः ' इति शेषानुजीविमध्ये तस्य नाम अतिरिच्यते अतिरिक्तं शौर्येण भवतीत्यर्थः । उनि.

[३]श्लाघ्या चाऽऽनन्दनी चैव महतामुपकारिता ।
काले कल्याणमाधत्ते स्वल्पाऽपि सुमहोदयम् ॥

( १ ) तदेवोपकृतं स्तौति– श्लाघ्येत्यादिना । तदात्वे तावत् लोके स्पृहणीया आनन्दनी च, महतामावर्जनात् । काले आयत्यां कल्याणमाधत्ते सुमहोदयं निरवद्यं महाफलं च । जम.

( २ ) एतदेव समर्थयन्नाह– श्लाघ्येति । महतां स्वाम्यादीनां उपकारिता आपत्सु परित्राणादिका काले प्रस्तावे कल्याणं अभ्युदयं आधत्ते करोति स्वल्पाऽपि सुमहोदयं महाभ्युदयसंपन्नमित्यर्थः । तस्मान्महतां स्वामिनामुपकारः कर्तव्य एवेति । उनि.

[१]अकार्यात्प्रतिषेधश्च कार्ये चैवानुवर्तनम् ।
संक्षेपादिति सद्वृत्तं बन्धुमित्रानुजीविनाम् ॥

( १ ) एतत्तावदव्युत्पन्नबुद्धीनामनुग्रहार्थं विस्तरतो वृत्तमुक्तम् । व्युत्पन्नबुद्धीनामाह– अकार्यादित्यादि । अधर्म्यानर्थ्यविद्वेष्येषु प्रवर्तमानस्य स्वामिनो व्यावर्तनम्, धर्म्यार्थ्याद्वेष्येषु प्रवर्तमानस्य अनुवर्तनं इत्येतावदेव आराधनाय अलम् । बन्धुमित्रग्रहणं अनुजीविभिस्तुल्ययोगक्षेमदर्शनार्थम् । जम.

( २ ) केवलमनुजीविवृत्तमभिधाय बन्धुमित्रसाधारणमभिधातुमाह– अकार्य इति । अकार्ये शास्त्रनिषिद्धाचरणे प्रतिषेधः निवारणम् । कार्ये धर्मार्थफले अनुवर्तनं क्रियतामेतदिति । संक्षेपात् सत् शोभनं वृत्तं अनुष्ठानं बन्धुमित्रानुजीविनामिति । उनि.

[२]पानस्त्रीद्यूतगोष्ठीषु राजानमभितश्चराः ।
बोधयेयुः प्रमाद्यन्तमुपायैर्नालिकादिभिः ॥

( १ ) कथमकार्यात् प्रतिषेधयेयुरित्याह– पानेत्यादिना । अभितश्चराः राजपार्श्ववर्तिनः । उपायैर्नालिकादिभिरिति । उक्तं हि– ' * सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः तत्प्रमाणकुम्भच्छिद्रेण जलाढकस्य यावता कालेन स्रुतिः स कालो नालिका ' ( कौ. २।२० ) इति । आदिशब्दात् त्रिपौरुष्यादिच्छायापरिग्रहः । तैः

( १ ) कानी. ५।४८ ; रार. ५१ ह्यपि ( चापि ) ततः ( अतः ) ; नीम. ४३.

( २ ) कानी. ५।४९ ; रार. ५२ रोधे कर्म ( पत्सु धर्म ) उत्त. ; नीम. ४३ ढ्या नोप ( ढ्या नैव ) क्ष्यताम् ( क्ष्यते ) रोधे कर्म ( पत्सु धर्म ) ; उनि. रोधे ( पत्सु ).

( ३ ) कानी. ५।५० ; रार. ५२ नी चैव ( जननी ) सुमहो ( हि महो ) ; नीम. ४३ दयम् ( दये ).

* कौटिलीयवचनस्यार्थतोऽनुवादोऽयम् ।

( १ ) कानी. ५।५१ ; उनि. र्यात्प ( र्ये प्र ).

( २ ) कानी. ५।५२.

पटहशब्दादिभिर्व्यक्तैरुपायैर्बोधयेयुः 'इयमनुष्ठानान्तरवेला वर्तते' इति। जम.

(२) अनुजीविवृत्तसंयोगात् प्रसङ्गतस्तन्त्रयुक्त्या बन्धुमित्राणां समुद्दिष्टमपि भूयोऽप्यनुजीविनां वृत्तमभिधातुमाह– पानेति। पानगोष्ठी यथाऽऽह कौटिल्यः– 'मद्यकामं योगपानैरुद्वेजयेयुः' इति, 'परस्त्रीकाममार्याव्यञ्जनाभिरमेध्याभिः शून्यागारेषूद्वेजयेयुः' इति, 'द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः' (कौ. १।१७) इति। राजपुत्रावस्थायामभिहिताः एते उपायाः यथासंभवं वृद्धस्यापि योज्या इति। एवं राजानं स्वामिनं अभितश्चराः अनुजीविनः प्रबोधयेयुः आख्यानकादिभिः प्रमाद्यन्तं राजप्रणिधौ निरुद्योगं नालिकादिभिः उपायैः सामादिभिरिति। उनि.

'राजानं ये ह्युपेक्षन्ते सज्जमानं विकर्मसु।
ते गच्छन्त्यकृतात्मानः सह तेन पराभवम्॥

(१) अबोधने दोषमाह– राजानमित्यादि। अकृतात्मानः, अकृतार्थत्वात्। पराभवं नाशं यान्ति। जम.

(२) अनुजीविनां स्वामिबोधने प्रमादे दोषमाह– राजानमिति। राजानं ये अनुजीविनः उपेक्षन्ते सज्जमानं सक्तिं गच्छन्तं विकर्मसु विरुद्धाचरणेषु ते अनुजीविनः गच्छन्ति अकृतात्मानः असंस्तुतात्मानः सह तेन स्वामिना पराभवं नाशमिति। उनि.

'जयाऽऽज्ञापय देवेति नाथ जीवेति चाऽऽदरात्।
आज्ञामस्य प्रतीच्छन्तो भृत्याः कुर्युरुपासनम्॥

(१) तस्मान्मा भूत् पराभव इत्येवं प्रबोधयन्त उपासीरन्नित्याह– जयाऽऽज्ञापय देवेत्यादि। आज्ञामस्य प्रतीच्छन्तः इति प्रबोधनफलमेतत्। अन्यथा हि अप्रतिबोधितः कथं कार्याकार्येषु आज्ञां प्रयच्छेत्? जम.

(२) उपासनाक्रममभिधातुमाह– जयेति। दर्शने 'जय महाराज' इति वचनम्। स्वामिना आह्वानेषु 'जीव, आज्ञापय' इति। 'देव, नाथ' इति कार्यावसरे वक्तव्यम्। एवमाज्ञामस्य स्वामिनः प्रतीच्छन्तो भृत्याः कुर्युः उपासनां सेवामित्यर्थः। उनि.

'भर्तुश्चित्तानुवर्तित्वं सद्वृत्तमनुजीविनाम्।
रक्षांस्यपि हि गृह्यन्ते नित्यं छन्दानुवर्तिभिः॥

(१) संक्षिप्ततरमनुजीविवृत्तमाह– भर्तुरित्यादि। चित्तानुवर्तित्वं चित्तानुविधायित्वम्। रक्षांस्यपि हि गृह्यन्ते, किमुत तत्तुल्यधर्माणो मनुष्याः? छन्दः अभिप्रायः। जम.

(२) संक्षिप्तगुणानभिधातुमाह– भर्तुरिति। भर्तुः स्वामिनः चित्तानुवर्तित्वं नाम सद्वृत्तं अनुजीविनां सेवकानां एतच्छोभनं वृत्तम्। यस्मात् रक्षांस्यपि हि क्रूरकर्मकारीण्यपि हि गृह्यन्ते वशीक्रियन्ते नित्यं छन्दानुवर्तिभिः सेवकैः। मनुष्यास्तु गृह्यन्ते एवेत्यर्थः। 'छन्दानुवर्तनं वशीकरणम्' इति वचनात्। उनि.

'धीसत्त्वोद्योगयुक्तानां किं दुरापं महात्मनाम्।
छन्दानुवर्तिनां लोके कः परः प्रियवादिनाम्॥

(१) अत्र धीः शास्त्रानुगा बुद्धिर्द्रष्टव्या, तयाऽवश्यं कार्यसिद्धेः। एतदुक्तं भवति– दुष्प्रापार्थस्य प्रापणे प्राधान्येन बुद्ध्यादिगुणत्रयं व्याप्रियते, परमात्मसात्करणे छन्दानुविधायित्वमिति। जम.

(२) परचित्तवृत्तयो दुर्ग्राह्या भवन्तीत्याशङ्क्य आह– धीति। धीरिति अष्टगुणा प्रज्ञा। तद्यथा– 'शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः' (कौ. ६।१) इति। सत्त्वं व्यसनेऽभ्युदये यदविकारि। उद्योगः उद्यमः। 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इति वचनात्। एवं गुणत्रययुक्तानां

---

(१) **कानी.** ५।५३; **रार.** ५२ द्वितीयचरणे (मज्जमानमकर्मसु).

(२) **कानी.** ५।५४; **नीम.** ४३ देवेति नाथ जीवेति (जीवेति नाथ देवेति) पू.; **उनि.** सनम् (सनाम्) शेषं नीमवत्.

(१) **कानी.** ५।५५; **रार.** ५२ पू.; **नीम.** ४३ वर्तिभिः (वृत्तिभिः) उत्त.

(२) **कानी.** ५।५६; **नीम.** ४३.

-महात्मनां आत्मसंपदुपेतानां किं दुरापं किं नाम दुष्प्रापम् ? अपि तु सर्वमेव प्राप्यमेव । एवं च स्वामि-चित्तमुक्तगुणैर्महात्मभिर्ग्रहीतुं शक्यते एव । तथा छन्दानु-वर्तिनां इच्छानुविधायिनां लोके प्रियवादिनां च कः परः ? न कश्चिदपि परो भवति । सर्वो लोकः स्वजन एव भवति । तस्मादनुजीविना धीसत्त्वोद्योगयुक्तेन भाव्य-मिति भावः । उनि.

[1]अलसस्याल्पतोषस्य निर्विद्यस्याकृतात्मनः ।
प्रदानकाले भवति माताऽपि हि पराङ्मुखी ॥

( १ ) अस्यैव पूर्वार्धोक्तं व्यतिरेकेण स्फुटयन्नाह– अलसस्येति निरुद्योगस्य । अल्पतोषस्य सत्त्वहीनस्य । निर्विद्यस्य अश्रुतशास्त्रत्वात् निर्बुद्धेः । एवं च सति अकृतात्मनः अनात्मवतः माताऽपि न स्निह्यति, पराङ्मुखी भवति, किं पुनरन्ये ? जम.

( २ ) उक्तगुणहीनस्तु न कुतश्चित्किंचिदासादयतीति दर्शयन्नाह– अलसस्येति । अलसस्य निरुद्यमस्य । अल्प-तोषस्य अल्पसंतुष्टस्य । निर्विद्यस्य मूर्खस्य । अकृतात्मनः अजितेन्द्रियस्य पुंसः । आस्तां तावदन्यः, प्रदानकाले दानावसरे माताऽपि हि पराङ्मुखी खिन्नचित्ता । तस्मादुक्तगुणेन अनुजीविना भवितव्यमिति भावः । उनि.

[2]ये शूरा ये च विद्वांसो ये च सेवाविपश्चितः ।
तेषामेव विकासिन्यो भोग्या नृपतिसंपदः ॥

( १ ) इदानीमुभयार्धोक्तमेव संधाय फलं प्रदर्शयन्नाह –ये शूरा इति । सत्त्वोद्योगयुक्ता इत्यर्थः । विद्वांसः प्रकृष्ट-बुद्धित्वात् । सेवाविपश्चितः भर्तुश्चित्तानुविधायितया सेवा-कुशलाः । जम.

( २ ) गुणवतामनुजीविनामुपभोग्या नृपसंपदो भवन्ति, नेतरेषामिति दर्शयन्नाह– य इति । ये अनुजीविनः शौर्यसंपन्नाः, ये च विद्वांसः, सेवाविपश्चितः सेवाधर्म-पण्डिताः, तेषां विकासिन्यः भोगानुगुणाः नृपसंपदो भवन्ति । उनि.

[1]अप्रियोऽपि हि पथ्यः स्यादिति वृद्धानुशासनम् ।
वृद्धानुशासने तिष्ठन् प्रियतामुपगच्छति ॥

( १ ) अप्रियोऽपि हि पथ्यः स्यादिति । यदाऽपि स्वामिनि द्वेष्यः तदाऽपि तच्चित्तानुविधायित्वेनैव हितः स्यात् । स हि कालान्तरेण प्रियतामेति । जम.

( २ ) अप्रियोऽपि प्रियव्यसनाद्यालापानामकृतत्वेन यद्यपि अप्रियः स्वामिनः तथाऽपि पथ्यः स्यात् । पथ्येषु उभयलोकहितेषु कार्येषु प्रेरणात् उपचारात् अनुजीवी पथ्य उच्यते इति । वृद्धानुशासने पथ्यकार्येषु प्रेरणे तिष्ठन् अनुजीवी पश्चात् प्रियतामुपगच्छतीति । उनि.

भृत्यः आजीव्यः निराजीव्यश्च राजा

[2]आजीव्यः सर्वभूतानां राजा पर्जन्यवद्भवेत् ।
निराजीव्यं त्यजन्त्येनं शुष्कं सर इवाण्डजाः ॥

( १ ) इदानीं स्वामिनोऽनुजीविषु वृत्तमेकत्रिंशता श्लोकैराह– आजीव्य इत्यादि । यथायथं जीवनसंवि-भागेन आजीव्यः स्यात् । अन्यथा निष्फलं कथं सेव्येत ? यदाह– निराजीव्यमित्यादि । जम.

( २ ) एवमनुजीविवृत्तमभिधाय स्वामिवृत्तमभिधातु-माह– आजीव्य इत्यादिना । क्रमश्चायं स्वामिवृत्तस्यानु-जीविवृत्तापेक्षया स्वामिना भरणकल्पना कर्तव्येति । वृत्तिसंपन्नोऽपि यदि अदाता स्यात् तदा न सेव्यते । तदर्थमाह– आजीव्य इति । आजीव्यः उपजीव-नीयः सर्वभूतानां प्राणिनां दानाश्रयरक्षणादिभिः राजा प्रजापतिः पर्जन्य इव जीमूत इव स्यात् । निराजीव्यं आजीविकारहितं वृत्त्यभावात् एनं राजानं त्यजन्ति मुञ्चन्ति आजीविनः , शुष्कं रसाभावात् सरः तडागमिव पक्षिणः हंसादयः । तस्मात् राज्ञा दानशीलेन भवितव्यमिति । उनि.

---

( १ ) कानी. ५१५७ ; नीम. ४३.

( २ ) कानी. ५१५८ ; नीम. ४३ सिन्यो ( शिन्यो ).

( १ ) कानी. ५१५९ ; रार. ५२ मुप ( मधि ).

( २ ) कानी. ५१६० ; नीम. ४३ द्भवेत् ( द्भुवि ) निरा ( अना ) सर इवा ( वृक्षमिवा ).

[1]कुलं वृत्तं श्रुतं शौर्यं सर्वमेतन्न गण्यते ।
दुर्वृत्ते वा सुवृत्ते वा जनो दातरि रज्यते ॥

(१) सर्वमेतन्न गण्यते, प्राणधारणाक्षमत्वात् । दातरि रज्यते, दानप्रतिबद्धत्वाच्छरीरस्थितेः । जम.

(२) एतदेव समर्थयन्नाह– कुलमिति । कुलं सोमसूर्यवंशप्रभवम् । वृत्तं रामयुधिष्ठिरवदनुष्ठानम् । श्रुतं सकलशास्त्रपारंगमत्वम् । शौर्यं परशुरामसमानम् । सर्वमेतन्न गण्यते आश्रयणीयत्वे लेख्ये नाऽऽरोप्यते । एभिर्गुणैः स्वामी आश्रयणीयो न भवतीत्यर्थः । दुर्वृत्तेऽपि अकुलीनेऽपि स्वामिनि जनो दातरि रज्यते । 'त्यागो गुणशताधिको मतः' इति वचनात् । उनि.

[2]अर्थार्थी जीवलोकोऽयं ज्वलन्तमुपसर्पति ।
क्षीणक्षीरां निराजीव्यां वत्सस्त्यजति मातरम् ॥

(१) तदेव दृष्टान्तेन स्फुटयन्नाह– अर्थार्थीति । ज्वलन्तं विभूत्या । तन्मा भूत् मय्यनाश्रयणमित्यनुजीविनां वृत्तिं कल्पयेत् । जम.

(२) भूयोऽपि स्पष्टयन्नाह– अर्थार्थीति । अर्थः जीविकोपकरणम् । यथा अर्थार्थी जीवलोकः जीववर्गः ज्वलन्तमुपसर्पति दानशक्त्या प्रज्वलन्तं पार्थिवं उपसर्पति एवमर्थार्थी परिजनोऽपि उपसर्पति । क्षीणक्षीरां गतपयसं अत एव निराजीव्यां वत्सकः तर्णकः गतपरिचयः सन् मातरं त्यजति । तस्मात् स्वामिना त्यागिना भवितव्यमिति भावः । 'लक्ष्मीरेवान्वयो लोके न लक्ष्म्याः परतोऽन्वयः । यस्मिन् कोशो बलं चैव तस्मिँल्लोकोऽनुगच्छति ॥ उत्थिता एव पूज्यन्ते जनाः कार्यार्थिभिर्नरैः । शत्रुवत्पतितं को नु वन्दते मानवं पुनः ॥' । उनि.

(१) कानी. ५।६१ ; नीम. ४३ श्रुतं (तथा) तृतीयचरणे (दुर्वृत्तेऽप्यकुलीनेऽपि) ; उनि. तृतीयचरणे (दुर्वृत्तेऽप्यकुलीनेऽपि).

(२) कानी. ५।६२ ; रार. ५२.

भृत्यानां वेतनकल्पनं राजकर्तव्यम्

[1]अहापयन्नृपः कालं भृत्यानामनुवर्तिनाम् ।
कर्मणामानुरूप्येण वृत्तिं समनुकल्पयेत् ॥

(१) कथमित्यत्राऽऽह– अहापयन्नित्यादि । वृत्तिकालं अनतिपातयन् । अनुवर्तिनाम्, नान्येषाम्, 'कर्मणा भुज्यते वृत्तिः' इति न्यायात् । तत्रापि कर्मणामानुरूप्येण उत्तममध्यमाधमकर्मापेक्षयेत्यर्थः । जम.

(२) भृत्यभरणमभिधातुमाह– अहापयन्निति । अहापयन्नृपः कालं दानकालयापनमकुर्वन् भृत्यानां भरणार्हाणां अनुवर्तिनां इच्छानुविधायिनां कर्मणामानुरूप्येण उत्तममध्यमाधमरूपेण औचित्येन वृत्तिं जीविकां समनुकल्पयेत् दद्यादित्यर्थः । उनि.

[2]काले स्थाने च पात्रे च न हि वृत्तिं विलोपयेत् ।
एतद्वृत्तिविलोपेन राजा भवति गर्हितः ॥

(१) कार्तिक्यादिपर्वकाले देवगृहादिस्थाने श्रोत्रियादिपात्रे च पूर्वजैः स्वयं वा कल्पितां वृत्तिं न विच्छेदयेत् । जम.

(२) वृत्तिविलोपे दोषं दर्शयन्नाह– काल इति । यस्मिन् काले यस्य दातव्यम्, स्थाने च कोशगृहजनपददेवालयादिके, पात्रे च गुणसंपन्ने यद्दातव्यं तस्य तादृशीं वृत्तिं न लोपयेत् । हि यस्मात् एतस्याः एवंरूपायाः वृत्तेर्विलोपेन राजा भवति गर्हितः निन्दितः । निन्द्यश्च नाभिगम्यते इति भावः । उनि.

[3]अपात्रवर्षणं जातु न कुर्यात्सद्भिर्गर्हितम् ।
अपात्रवर्षणात्किं स्यादन्यत्कोशक्षयादृते ॥

(१) पापिष्ठे वर्षणं दानं सद्भिर्विगर्हितम्, दृष्टादृष्टाभावात् । जम.

(१) कानी. ५।६३ ; नीम. ४३ अहापयन्नृ (अपेक्ष्य हि नृ) वर्ति (जीवि).

(२) कानी. ५।६४ ; नीम. ४३ काले स्थाने (स्थाने काले).

(३) कानी. ५।६५ ; रार. ५२ पात्र (पात्रे) जातु (यत्तत्व) त्कोश (त्कोष) ; नीम. ४३ त्सद्भि (त्स वि) त्किं स्यादन्यत्को (दन्यत् किं स्यात्को).

(२) अपात्रे दाननिषेधमभिधातुमाह– अपात्र इति। पुरुषार्थत्रयोत्पत्तिस्थानानि क्षेत्राणीव पात्राणि अभिधीयन्ते। यत्र कनकवर्षणेन धर्म उत्पद्यते अर्थो वा कामो वा तानि पात्राणि। यत्र न पुरुषार्थोत्पत्तिस्तानि अपात्राणि। तत्र वर्षणं दानं विगलितफलत्वात् न कुर्यात्। त(? य)स्मात् सद्भिर्गर्हितम्, निष्फलत्वात्। तथा च अपात्रवर्षणात् किमन्यत् स्यात् कोशक्षयादृते? केवलं कोशक्षय एव स्यात् भाण्डारहीनत्वम्। यथार्हमपि दानं गुणवत्स्वेव कृतं यशसे भवति, न सर्वावस्थासु। श्लाघनकेषु श्लाघाऽपि गुणवद्भिः कृता यशसे धर्माय च भवतीति। उनि.

[1]कुलं विद्यां श्रुतं शौर्यं सौशील्यं भूतपूर्वताम्।
वयोऽवस्थां च संवीक्ष्य स्वाद्रियेत महामनाः॥

(१) आदरं च भृत्यानां गुणानवेक्ष्य कुर्यादित्याह– कुलमित्यादि। भूतपूर्वतां पितृपैतामहताम्। वयः वार्धक्यम्। अवस्थाम्, कार्यसंभववशात्। स्वाद्रियेत यथा ते तुष्येयुः। जम.

(२) पात्रस्वरूपसूचनापूर्वकं तत्संग्रहार्थमाह– कुलमिति। कुलमिति उभयपक्षविशुद्धिः। विद्या आन्वीक्षिक्यादि। श्रुतं आन्वीक्षिक्यादिश्रवणम्। शौर्यं अभीरुत्वम्। सुशीलः सुस्वभावः, तस्य भावः सौशील्यम्। भूतपूर्वतां पितृपैतामहायातताम्। वयोवस्थां यौवनावस्थाम्। संवीक्ष्य निरूप्य स्वाद्रियेत सुन्दरं पात्रं संगृह्णीयादित्यर्थः। महात्मवान् विजिगीषुरिति। उनि.

[2]कुलीनान्नावमन्येत सम्यग्वृत्तान् मनस्विनः।
त्यजन्त्येतेऽवमन्तारं घ्नन्ति वा मानहेतवः॥

(१) नावमन्येत यदि नाऽऽद्रियेत। सम्यग्वृत्तान् विद्याश्रुतादिगुणयुक्तान्। मानहेतव इति। मान एव हेतुर्येषां त्यागे घाते च। जम.

(२) पात्रभूतानामनादरे दोषं दर्शयन्नाह– कुलीनानिति। कुलीनान् महाकुलप्रसूतान् नावमन्येत। सम्यग्वृत्तान् सदाचारान्। मनस्विनः प्रज्ञायुक्तान् बुद्धिसमेतान्। यस्मात् एते अवमन्तारं अवमानकर्तारं घ्नन्ति निपातयन्ति त्यजन्ति वा परिहरन्ति। कस्मादिति? मानहेतुतः। तस्मान्माननीयान् नावमन्येत। उनि.

[1]गुणैरुदारैः संयुक्तान् प्रोन्नयेन्मध्यमाधमान्।
महत्तां प्राप्नुवन्तस्ते वर्धयन्ति नरेश्वरम्॥

(१) मध्यमाधमानिति। एतदुक्तं भवति– मध्यमाधमकर्मसु ये नियुक्ताः तान् उत्तमगुणैर्युक्तान् नीचान् प्रोन्नयेत् उत्तमकर्मसु समारोपयेत्। ते हि महत्तां प्राप्नुवन्तो राजानं वर्धयन्तीति। जम.

(२) मध्यमा(धमा)नामप्युद्धरणमभिधातुमाह– गुणैरिति। गुणैः उदारैः उत्तमैः शौर्यादिभिः संयुक्तान् अनुजीविनः प्रोन्नयेत् प्रकर्षेण उन्नतिं नयेत् मध्यमाधमानपि। (गुणैः) अव(द्ध ?)रास्तु उन्नतियोग्या न भवन्ति। कुत इत्याह– महत्तां महतीमुन्नतिं प्राप्नुवन्तस्ते वर्धयन्ति वृद्धिं नयन्ति नरेश्वरं अर्थसामर्थ्यात् कृतज्ञतयेति। उनि.

[2]उत्तमाभिजनोपेतान्न नीचैः सह वर्धयेत्।
कृशोऽपि हि विवेकज्ञो याति संश्रयणीयताम्॥

(१) उत्तमं नीचवत् सत्कारेण न वर्धयेदित्यर्थः। हि यतः। विवेकज्ञः उत्तमाधमविचारवित्। संश्रयणीयतां सेव्यत्वम्। रार. ५३

(२) उत्तमान् अभिजनयुक्तान् नीचैः सह न वर्धयेत् तत्तुल्यमानान् न कुर्यात्। एवं च सति विवेकज्ञत्वात् बन्धुमित्रसज्जनानामाश्रयणीयो भवति। यदाह– कृशोऽपि क्षीणोऽपि, किमुत संपूर्णकोशबलः? जम.

---

(१) कानी. ५।६६; रार. ५२ उत्तरार्धे (वयोऽवस्थां च संलक्ष्य आद्रियेत महात्मनाम्॥); नीम. ४३ उत्तरार्धे (वयोऽवस्थां च संप्रेक्ष्य आद्रियेत महात्मनः॥); उनि. मनाः (त्मवान्).

(२) कानी. ५।६७; रार. ५३ कुलीना (सुशीला) त्त्येते (न्ति ते) तवः (तवे); नीम. ४३ ऽवमन्तारं (च भर्तारं) तवः (तुना); उनि. तवः (तुतः).

(१) कानी. ५।६८.

(२) कानी. ५।६९; रार. ५३ तान्न (तं न); नीम. ४३ उत्त.

(३) स्वामिना विवेकयुक्तेन भवितव्यमित्यभिधातुमाह— उत्तमेति । उत्तमं सर्वाधिकं अभिजनं कौलीन्यम्, तेन उपेतान्। महाकुलीनानित्यर्थः। तान् न नीचैः सह संवर्धयेत् नियोगेन अभियोजयेदित्यर्थः। तथा च कौटिल्यः— 'नीचैरुपहताः कृद्धवर्गे पतन्ति' इति । एतच्च अविवेकित्वम्। विवेकी उत्तमाभिजनोपेतान् उत्तमैरेव सह संवर्धयेत् नियोगेन नियोजयेत् । अत्र गुणं दर्शयन्नाह— कृशोऽपि हि विवेकज्ञः विवेकैरुपलभ्यते (? विवेकमुपलभते) यः, विवेकः अर्थोचितज्ञानम्, स कृशोऽपि याति संश्रयणीयताम् । संश्रितो बहुभिर्यः स राजेति । उनि.

[१]निरालोके हि लोकेऽस्मिन्नाऽऽसते तत्र पण्डिताः।
जात्यस्य हि मणेर्यत्र काचेन समता मता ॥

(१) अस्मिन् लोके यो न विवेकज्ञः तत्र नाऽऽसते इति संबन्धः। जम.

(२) अविवेकित्वस्य दोषं दर्शयन्नाह— निरालोक इति । आलोकः हेयोपादेयदर्शकं ज्ञानम् । तच्च न विद्यते यस्य लोकस्य चातुर्वर्ण्यस्य स निरालोको लोकः। निर्विवेक इत्यर्थः । एवंभूतेऽपि लोके क्षुधापीडिता अपि पण्डितास्तत्र नाऽऽसते नावस्थितिं कुर्वन्ति यत्र जात्यस्य हि मणेः वज्रादेः काचेन निकृष्टमणिना समता समानता मता अभिमतेत्यर्थः। उनि.

[२]विश्राम्यन्ति महात्मानो यत्र कल्पतराविव ।
स श्लाघ्यो भवति श्रीमान्सत्संभोगफलाः श्रियः ॥

(१) आश्रयणफलमाह— विश्राम्यन्तीत्यादि । कल्पतराविवेत्याश्रयिणः आश्रयसाफल्यं दर्शयति । जम.

(२) यथा विवेकित्वादौचित्याद्विनियोग इष्यते तथा सत्पात्रेषु प्रतिपत्तिश्चेति दर्शयन्नाह— विश्राम्यन्तीति। यत्र श्रीमति स्वामिनि विश्राम्यन्ति अवस्थितिं कुर्वन्ति महात्मानः अनुजीविनः सकलगुणयुक्ताः कल्याणधियः समीहितसंपादके, श्लाघ्यं स्पृहणीयं यथा भवति तथा स जीवति । यतः सत्संभोगफलाः श्रियः गुणवद्भोग्याः । श्रियां फलमेतदेव यत् ताः सद्भिः संभुज्यन्ते । तथा च कौटिल्यः— '* अलब्धलाभार्थाय लब्धपरिरक्षणाय रक्षितविवर्धनाय वृद्धस्य तीर्थे व्ययप्रतिपादनाय' इति । उनि.

[१]लक्ष्म्या लक्ष्मीवतां लोके विकासिन्याऽपि किं तया ।
बन्धुभिश्च सुहृद्भिश्च विस्रब्धं या न भुज्यते ॥

(१) विकाशिन्या विख्यातया संपदा किम् ? यदुपभोगो नास्ति बन्धुसुहृदादेः। रार. ५३

(२) विकासिन्याऽपि प्रकृष्टयाऽपीत्यर्थः । जम.

(३) एतदेव द्रढयितुमाह— लक्ष्म्येति । लक्ष्म्या विभूत्या लक्ष्मीवतां राज्ञां विकासिन्याऽपि विस्तारिण्याऽपि किं तया निष्फलया ? या बन्धुभिः सुहृद्भिः मित्रैः विस्रब्धं यथेष्टं न भुज्यते इति । उनि.

विविधेषु कर्मसु परीक्षितभृत्यनियोजनम्

[२]आयद्वारेषु सर्वेषु कुर्यादाप्तान् परीक्षितान् ।
आददीत धनं तैस्तु भास्वानुस्रैरिवोदकम् ॥

(१) एवं स्वानुरूपप्रतिपत्त्या संमानितानामिदानीं यथार्हं कर्मनियोगमाह— आयद्वारेष्वित्यादि । शुल्कदण्डपौतवादिषु आयस्थानेषु। कुर्यात् स्थापयेत् । तेभ्यो द्रव्यस्याऽऽदानात् आप्तान् अविसंवादकान्, परीक्षितान् उपधाभिः । उस्रैरिव रश्मिभिरिव आयुक्तकैः । जम.

---

(१) कानी. ५।७० ; नीम. ४३.

(२) कानी. ५।७१ ; उनि. घ्यो भ (घ्यं जी).

* 'अलब्धलाभार्था लब्धपरिरक्षणी रक्षितविवर्धनी वृद्धस्य तीर्थेषु प्रतिपादनी च' (कौ. १।४) इति दण्डनीतिविषयकं वचनमुपलभ्यते ।

(१) कानी. ५।७२ ; रार. ५३ कासि (काशि) स्रब्धं (श्वासं).

(२) कानी. ५।७३ ; रार. ५३ धनं तैस्तु (फलं तेभ्यो) ; जम. तैस्तु (तेभ्यो).

(२) अध्यक्षप्रचारं शीलतोऽप्यभिधातुमाह– आयद्वारेष्विति । कोशागममार्गेषु सर्वेषु अष्टस्वपि वक्ष्यमाणेषु कृष्यादिषु कुर्यात् आप्तान् अध्यक्षान् परीक्षितान् उपधाभिः शोधितान् । आददीत धनं तैस्तु आप्तैः करणभूतैः भास्वान् आदित्यः उस्रैः किरणैः उदकमिवेति । उनि.

[1]अभ्यस्तकर्मणस्तज्ज्ञान् शुचीन् शुद्धार्थसंगतान् ।
कुर्यादुद्योगसंपन्नानध्यक्षान् सर्वकर्मसु ॥

(१) किंविशिष्टान् पुनस्तान् कुर्यादित्याह– अभ्यस्तकर्मण इत्यादि । प्रयोगतो बहुधा दृष्टकर्मणः । तज्ज्ञान् अर्थतः । शुचीन् उपधाशुद्धान् । शुद्धार्थसंगतानिति । विज्ञातेन संख्यायकादिकरणवर्गेण अधिष्ठितानित्यर्थः । उद्योगसंपन्नानिति कर्मसु उद्योगप्रमुखा गुणा व्याप्रियन्ते इति दर्शयति । सर्वकर्मसु उत्तममध्यमाधमेषु । जम.

(२) तथा अभ्यस्तं कर्म यैस्तान् । तज्जानन्ति ते, तान् । तथा चोक्तम्– 'लक्षणस्यो(? ज्ञो) निकृष्टस्तु लक्ष्यवेदी तु मध्यमः । उभयं यो विजानाति स उत्तम इति स्मृतः ॥' । शुचीन् उपधाशुद्धान्, तज्ज्ञैः उपस्थितकर्मज्ञैः आप्तैः संगतान् उपयुक्तपुरुषैः निबन्धनलेखकादिभिः सह कुर्यात् स्वामी उद्योगसंपन्नान् अप्रमादिनः अध्यक्षान् सर्वकर्मस्विति । उनि.

[2]यो यद्वस्तु विजानाति तं तत्र विनियोजयेत् ।
अशेषविषयप्राप्ताविन्द्रियार्थेष्विवेन्द्रियम् ॥

(१) तत्र अनेकत्वात् कर्मणां न सर्वः सर्वं वेत्तीत्याह– यो यद्वस्त्वित्यादि । अशेषविषयप्राप्ताविति । यथाऽन्तरात्मा रूपाद्यर्थोपभोगमिन्द्रियैः साधयन् स्वविषये एव इन्द्रियं प्रवर्तयति, तद्योग्यत्वात्, एवं राजाऽपि इन्द्रियस्थानीयमध्यक्षं कर्मसिद्धये तद्विषय एव कर्मणि नियोजयेत् । तथाहि अक्षवत् अधिक्रियन्ते इत्यध्यक्षाः । जम.

(२) यः अध्यक्षः यद्वस्तु जानाति शिल्पकर्मादिकं तं तत्रैव कर्मणि विनियोजयेत् । तत्र दृष्टान्तः– यथा आत्मा अशेषविषयाः शब्दस्पर्शरूपगन्धाः तत्प्राप्त्यर्थमिन्द्रियार्थेष्विन्द्रियमिव यस्येन्द्रियस्य योऽर्थः । तद्यथा– शब्दविषयं प्राप्तुं श्रवणेन्द्रियं प्रयुञ्जीत शेषैः शब्दो नैव प्राप्यते इति । तथा स्पर्शं प्राप्तुं त्वगिन्द्रियम् । रूपं प्राप्तुं चक्षुः । गन्धं प्राप्तुं घ्राणम् । न ह्यन्यविषयोऽन्येन प्राप्तुं शक्यते । तस्माद्यो यज्जानाति तत्र तं नियोजयेदिति । उनि.

[1]कोष्ठागारेऽभियुक्तः स्यात्तदायत्तं हि जीवितम् ।
नात्यायं च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वहम् ॥

(१) सर्वकर्मसु कथितलक्षणान् नियोज्य कोषागारे अतियत्नशीलो भवेत् । तदाह– नान्यायमिति । इति यत्नरूपम् । रार. ५३–५४

(२) तैश्चाऽऽदीयमानानामर्थानां कोशगृहं कोष्ठागारं पण्यागारं च । तत्र कोष्ठागारस्य प्रधानत्वात् तद्व्यापारमाह– कोष्ठागार इत्यादि । कोष्ठं उदरम् । तदर्थं यदगारं तत् कोष्ठागारम् । तत्र अभियुक्तः आदृतः स्यात् । अत्यायं चेति आयमतिक्रान्तम् । आयादधिकमित्यर्थः । प्रत्यवेक्षेत चान्वहं कियदद्य दातव्यं दापितं चेति । जम.

(३) तथा कोष्ठं उदरम् । तत्पूरणार्थं धान्यादि उपचारात् कोष्ठम् । तत्स्थापनार्थमगारं कोष्ठागारम् । तत्र अभियुक्तः तत्परः स्यात् । विजिगीषुः तद्भरणं वृद्धिं तद्रक्षणं च कुर्यादित्यर्थः । कस्मादित्याह– तदायत्तं हि जीवितमिति । रत्नादिभिर्विनाऽपि जीव्यते, कोष्ठागारेण विना तु क्षणमपि न जीव्यते । अत एव रामेणोक्तम्– 'सर्वरत्नप्रधानस्य कोष्ठस्य कुशलं गृहम् । नात्यायं हि

---

(१) कानी. ५।७४; रार. ५३ शुद्धार्थसंगतान् (तत्त्वार्थकोविदान्); उनि. शुद्धार्थ (तज्ज्ञात).

(२) कानी. ५।७५; रार. ५३ स्तु वि (स्त्वभि) तं तत्र (तत्र तं) अशे (विशे).

(१) कानी. ५।७६; रार. ५३–५४ कोष्ठा (कोषा); नीम. ५० त्यायं (न्यायं) उत्त.

व्ययं कुर्यादनत्यायं हि वर्तताम् ॥' इति । अतीत्य आयं वर्तते इति अत्यायः, व्ययः आयादधिक इत्यर्थः । तं न कुर्यात् । तौ आयव्ययौ प्रत्यवेक्षेत तत्र अन्वहं स्वयं विजिगीषुः अध्यक्षान्तरकरणनिषेधार्थमिति । उनि.

[1]कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ।
खन्याकरो वनादानं शून्यानां च निवेशनम् ॥

(१) यत्कर्मप्रतिबद्धाश्च आयाः स्युः तानि कर्माण्याह– कृषिरित्यादि । कृषिः पूर्वमध्यापरावापसस्यनिष्पत्तये कर्म । वणिक्पथः स्थलपथो वारिपथश्च । दुर्गं पर्वतादि । सेतुबन्धः सस्यनिष्पत्तये जलाधारबन्धनम् । अस्मात् कर्षणं भिन्नमिति प्रथमं कृषिग्रहणम् । आचार्यस्तूभयोः सस्यफलत्वात् कर्षणं सेतावेवान्तर्भाव्य सप्तवर्गमुपदिष्टवान् । तद्यथा– 'दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्माणि' (कौ. ७।१) इति । कुञ्जरबन्धनं प्राण्यादिपदाष्टकम् । खन्यन्ते इति खनयः सुवर्णरजतादयः, तेषामाकरः क्षेत्रम् । वनादानं सारदार्वादिच्छेदनम् । शून्यानां निवेशनं उद्वासितानां अनिविष्टपूर्वाणां वा भूमिभागानां अध्यासनम् । जम.

(२) अनन्तरोद्दिष्टानि आयद्वाराण्यभिधातुमाह– कृषिरिति । सा द्विविधा– कुसीदेन कृता राजकुटुम्बिकृता च । वणिक्पथो द्विविधः– स्थलपथो जलपथश्चेति । दुर्गं राजधान्यामुत्पत्तिः । सेतुरिति । शाल्यादिवापार्थं तडागादिजलाधारप्रतिबन्धः सेतुरभिधीयते । तदुत्पन्नेक्षुशाल्यादि च । कुञ्जरबन्धनं आयद्वारम्, महामूल्यहस्तिनो लाभात् । खन्याकरः– खनिः रत्नादिखननात् रत्नोत्पत्तिस्थानम्, आकरः सुवर्णादीनामासमन्तात्करणात् सुवर्णादिधातुजनकम्, तत्र मृत्पाषाणरत्नधातुसंस्कारात् सुवर्णरूप्यादिलोहान्युत्पद्यन्ते । वनादानं कुप्यप्रदिष्टशाकतिनिशादीनां सारदार्वादीनां वृक्षाणामादानात् (वनोत्पन्नसारदार्वादीनां ग्रहणस्थानानि) । शून्यानां च ग्रामादीनां निवेशनं तत्र भवमष्टममायद्वारमिति । उनि.

[1]अष्टवर्गमिमं साधु स्वस्थवृत्तं विवर्धयेत् ॥
जीवनार्थमिहाऽऽजीव्यैः कारयेत्करणान्वितैः ॥

(१) स्वस्थवृत्तमिति स्वस्थावस्थायां राज्ञा प्रवर्त्यमानत्वादष्टवर्गस्य । तत् जीवनार्थं अकृतं कारयेत् कृतं च विवर्धयेत् । इहेति स्वभूमौ । आजीव्यैः आस्वाद्यैः, यैर्भक्षितमपि पुनर्दास्यते इत्यर्थः । करणान्वितैः संख्यायकलेखकादिवर्गोपेतैः । जम.

(२) पूर्वोक्तं अष्टकं आयद्वारमिति संबन्धः । तत् साधु विवर्धयेत् विशेषेण वृद्धिं नयेदिति । किमर्थं कैरित्याह– जीवनार्थमिति राष्ट्रस्य । इहाऽऽजीव्यैरिति । आजीव्यते इत्याजीव्याः, भूयोऽप्युपजीवितुं शक्यते यैः ते । तैः कारयेत् करणाधिपैरध्यक्षैरिति । उनि.

राज्ञः पण्योपजीविविषयं कर्तव्यम्

[2]यया ययेह वर्धेत वृत्त्या क्षीणोऽपि पार्थिवः ।
तस्यां तस्यां न संरोधं कुर्यात्पण्योपजीविनाम् ॥

(१) पण्यागारमधिकृत्य परभूमिजपण्यादानोपायमाह– ययेत्यादि । एतदुक्तं भवति– स्थलजलपण्योपजीविनां वाणिजकानां परदेशात् संव्यवहारार्थमिहागतानां वृत्तिं अनुचितादानेन न विरोधयेत् मा भूत् परभूमिजपण्यक्षयात् इहायापनमिति । जम.

(२) तथा यया यया वृत्त्या कृष्या पाशुपाल्येन वाणिज्यया वा वर्तेत स्वयं राजा क्षीणोऽपि तस्यां वृत्तौ न संरोधं द्रव्यग्रहणेन प्रतिबन्धं कुर्यात् प्रवर्तयेदेव । विशेषेण तु पण्योपजीविनां न संरोधं कुर्यादिति । उनि.

---

(१) कानी. ५।७७ ; नीम. ५० उत्तरार्धे (खन्यः करधनादानं स्वस्थचित्तोऽपि वर्धयेत् ॥) उत्तरश्लोकस्य द्वितीयचरणः एतच्छ्लोकस्य चतुर्थचरणत्वेन प्रमादाल्लिखितो मध्यमो ग्रन्थस्त्रुटितश्चेति भाति; नन्द. ७।१५४ उत्तरार्धे (खन्याकरवनादाने सैन्यानां च निवेशनम् ॥).

(१) कानी. ५।७८ ; नन्द. ७।१५४ (अष्टवर्गमिमं साधुः स्वस्थचित्तो विचिन्तयेत् ।) पू. ; उनि. न्वितैः (धिपैः).

(२) कानी. ५।७९ ; उनि. ययेह वर्धेत (यया प्रवर्तेत).

सस्यरक्षणं राजकर्तव्यम्

[1]सुसंरक्षेत निपुणः सस्यं कण्टकशाखया ।
फलाय लगुडः कार्यो दस्युभोग्यमिदं जगत् ॥

(१) स्वभूमिजसस्येषु का प्रतिपत्तिरित्याह– सुसंरक्षेतेत्यादि । कण्टकशाखयेति । प्रजातोदनात् ग्रामकण्टकाः चोरादयः, तेषामपवारणेन * । लगुडः कार्यं इति । लोकेन संगृहीतेषु सस्येषु फलार्थो दण्डः पातनीयः परिभोगार्थं च । अन्यथा हि अत्युपचितो लोको न भोग्यः स्यात् । जम.

(२) जगतो भोगोपदेशं दातुमाह– सुसंरक्षेतेति । यथा सस्यं प्ररूढं धान्यं कण्टकिशाखया सर्वतः परिवार्यकृतया कश्चित् पश्वाद्युपद्रवात् रक्षति, फलाय फलार्थं च यथा लगुडं करोति अवटादौ वा स्थापयति चौरादिनिषेधार्थम्, तद्वदिति तेनैव प्रकारेण भोग्यमिदं जगत् । प्रजां सस्यस्वरूपां कण्टकिशाखासमानदण्डप्रणयनेन पश्वादिसमानायुक्तकेभ्यो रक्षेत्, दण्डेन विपक्षाटविकतस्करेभ्यो रक्षेत् । पश्चात् भोग्यं भवतीति भावः । उनि.

पञ्चविधं प्रजानां भयं निवार्यं राज्ञा

[2]आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् ।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥

(१) अस्यैव श्लोकस्य पूर्वार्धमधिकृत्याऽऽह– आयुक्तकेभ्य इत्यादि । आयुक्तकाः अधिकृताः । परे शत्रवः । राजवल्लभः श्यालादिः । पृथिवीपतेर्लोभ एव । जम.

(२) एतदेव समर्थयन्नाह– आयुक्तकेभ्य इति । आयुक्तकाः अध्यक्षादयः, तेभ्यः, तथा चोरेभ्यः स्वपरमण्डलस्थेभ्यः, परेभ्यः शत्रुभ्यः, राजवल्लभात् देवीकुमारादेः, पृथिवीपतिलोभात् प्रजानां पञ्चधा भयम् । तद्यथा न भवति तथा विधेयमिति । उनि.

पञ्चप्रकारमप्येतदपोह्य नृपतिर्भयम् ।
आददीत फलं काले त्रिवर्गपरिवृद्धये ॥

(१) उत्तरार्धमधिकृत्याऽऽह– आददीत फलमिति । काले सस्यनिष्पत्तौ सत्याम् । जम.

(२) तत् भयं पञ्चप्रकारं अपोह्य अपनीय नृपतिः स्वयं आददीत फलं धान्यहिरण्यादि काले आदानयोग्ये त्रिवर्गपरिवृद्धये धर्मार्थकामवृद्ध्यर्थम् । उनि.

[1]यथा गौः पाल्यते काले दुह्यते च तथा प्रजा ।
सिच्यते चीयते चैव लता पुष्पप्रदा यथा ॥

(१) तदेव दृष्टान्तेन प्रतिपादयन्नाह– यथा गौरित्यादि । जम.

(२) दृष्टान्तप्रदर्शनेन प्रजापालनमुपजीवनमभिधातुमाह– यथेति । यथा गौः पाल्यते काले पिण्याकतृणलवणादिना, काले दुह्यते च, तथा प्रजाऽपि निवेशकृष्यादौ धान्यपशुहिरण्याद्यनुग्रहेण पाल्यते, पश्चात् षड्भागकरादानादिना दुह्यते च । तथा द्वितीयो दृष्टान्तः– सिच्यते अवसरे जलेन लता, उच्चीयते मालाकारेण पुष्पमालार्थिना, तद्वदियं प्रजा पाल्यते च उच्चीयत इति । उनि.

अग्नाविव राज्ञि भृत्यवर्तनमिष्टम्

[2]आस्रावयेदुपचितान् साधु दुष्टव्रणानिव ।
आयुक्तास्ते च वर्तेरन्नग्नाविव महीपतौ ॥

(१) कृतकर्मसु चाऽऽयुक्तकेषु विधिमाह– आस्रावयेदित्यादि । साधु सम्यक् वर्तेरन् अग्नाविव । यथाहुः– 'अत्यासन्ना विनाशाय दूरस्था न फलप्रदाः । तस्माद्योगेन संसेव्या भृत्यैः पार्थिववह्नयः ॥' इति । ननु च स्वामिनो वृत्तिरधिकृता । सत्यम् । सैव अनुजीविद्वारेण कथ्यते 'आयुक्तकेषु अग्निवत् वर्तेत, येऽपकुर्वन्ति तान् पतङ्गानिव दहेत्' इति । जम.

---

* शाखाया अपवारणसाधनत्वात् शाखाशब्दोऽत्र लक्षणया अपवारणपर इति जयमङ्गलाकर्तुरभिप्रायः प्रतीयते ।

(१) कानी. ५।८० ; उनि. कण्टक (कण्टकि) कार्यो दस्यु (कार्यस्तद्वद्).

(२) कानी. ५।८१–८२.

(१) कानी. ५।८३ ; उनि. उत्तरार्धे (सिच्यते चोच्चीयते च पुष्पमालार्थिना लता ॥).

(२) कानी. ५।८४ ; उनि. आयुक्ता (अध्यक्षा).

( २ ) आयुक्तपीडानिवारणार्थमाह– आस्रावयेदिति । प्रजापीडया ये उपचिताः वृद्धिं गताः तान् आस्रावयेत् दण्डप्रणयनेन अपहृतधनान् कुर्यात् साधु सुश्लिष्टं यथा भवति । दुष्टव्रणानिव यथा दुष्टव्रणाः स्राविताः सुखाय भवन्ति । तथा अध्यक्षाः आयुक्तकाः, ते च वर्तेरन्नग्नाविव महीपतौ । यथा अग्निः ' किं करिष्यत्ययम् ' इति लङ्घितो दहति, परित्यक्तः पाकादिसाधको न भवति, तथा महीपतिरपि युक्त्या सेवितः फलदो भवति, नान्यथेति भावः । उनि.

**¹स्वल्पमप्यपकुर्वन्ति ये पापाः पृथिवीपतौ ।**
**ते वह्नाविव दह्यन्ते पतङ्गा मूढचेतसः ॥**

( १ ) तदेव दर्शयति– स्वल्पमित्यादिना । जम.

( २ ) ये पापाः पृथिवीपतौ स्वल्पं स्तोकमपि अपकुर्वन्ति ते वह्नाविव दह्यन्ते पतङ्गाः मूढं द्रव्यलोभादिना असत् चेतो येषां ते, नृपकोपात् । उनि.

**²संवर्धयेत्तथा कोशमाप्तैस्तज्ज्ञैरधिष्ठितम् ।**
**काले चास्य व्ययं कुर्यात्त्रिवर्गप्रतिपत्तये ॥**

( १ ) काले आवश्यके । तज्ज्ञैः कोषकर्मप्रवीणैः । ' आप्तैः अतीष्टसंबन्धिभिः, तज्ज्ञैः तत्कर्मज्ञैः च ' इति सागरः । ' तज्ज्ञैः इष्टैः ' इति पल्लवः । तथा च धनार्जनं कोषसंचयश्च त्रिवर्गहेतुरिति, ' धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ' ( वारा. ६।६१।३६ ) इत्याद्युक्तेः । रार. ३२

( २ ) कोशव्यापारमाह– संवर्धयेदित्यादि । तज्ज्ञैः कुशलैः । काले चेति । त्रिवर्गसाधनकाले । जम.

( ३ ) तज्ज्ञैः कोशवृद्ध्युपायज्ञैः सदा कोशं वर्धयेत् आप्तैः विश्वास्यैः अधिष्ठितम् । काले युद्धधर्मादौ व्ययावसरे अस्य कोशस्य व्ययं कुर्यात् त्रिवर्गप्रतिपत्तये धर्मार्थकामप्राप्तये इति । उनि.

**³धर्मार्थं क्षीणकोशस्य कृशत्वमपि शोभते ।**
**सुरैः पीतावशेषस्य शरद्धिमरुचेरिव ॥**

( १ ) धर्मार्थं क्षीणकोशस्य कृशत्वं शोभते, धर्मेण पुनरापूर्यमाणत्वात् । यथा सुरैः सुषुम्णया नाड्या कृष्णपक्षे पीतावशेषस्य चन्द्रमसः पुनरिडया नाड्या शुक्लपक्षे तैरेव पूरणम् । कामात्तु क्षीणस्य पूरणाभावान्न कृशत्वं शोभते । तथा अर्थादपि क्षीणस्य यद्यर्थो न निष्पन्नः स्वल्पो वा स्यात् । जम.

( २ ) धर्मनिमित्तं क्षीणकोशस्य राज्ञः कृशत्वमपि शोभते । सुरैः देवैः पीतावशेषस्य शरद्धिमरुचेः चन्द्रमसः इव कृशत्वं यथा शोभते तथा नृपस्यापि । उनि.

अनुजीविषु विश्वासाविश्वासविवेकः

***¹संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।**
**राज्ञस्तस्मादविश्वासः केवलं हितमात्मनः ॥**

**²बृहस्पतेरविश्वास इति शास्त्रार्थनिश्चयः ।**
**विश्वासी च तथा च स्याद्यथा संव्यवहारवान् ॥**

( १ ) ननु अनुजीव्याद्यविश्वास एव तदा संदिग्धार्थनिश्चयो न स्यात् । तन्न, ' नातिविश्वसेत् ' ( कानी. ५।८९ ) इत्यादिवाक्यात् तस्य अतिविश्वासाभावपरत्वात् । तथा च राजा परविश्वासेन न समो भवेदित्यर्थः । रार. ५४

( २ ) एवमनुजीविषु वर्तमानोऽपि न विश्वसेदित्याह– बृहस्पतेरित्यादि । यथा संव्यवहारवानिति । यावता परो विश्वसिति तावन्मात्रं विश्वसेदित्यर्थः । जम.

---

( १ ) कानी. ५।८५ ; रार. ५४ स्वल्प ( अल्प ) पतौ ( पतेः ) उत्तरार्धे ( अग्नौ पतङ्गा इव ते दह्यन्ते मूढचेतसः ॥ ).

( २ ) कानी. ५।८६ ; रार. ३२ त्तथा कोश ( त्सदा कोष ) प्रतिपत्तये ( परिवृद्धये ).

* अयं श्लोकः कामन्दकीयनीतिसारस्य मैथिलीये हस्तलिखितपुस्तके उपलभ्यते इति राजनीतिरत्नाकरटिप्पण्यामुक्तम् ।

( १ ) कानी. ५।८७.

( २ ) रार. ५४.

( ३ ) कानी. ५।८८ ; रार. ५४ शास्त्रार्थ ( शास्त्रस्य ) पू. ; उनि. विश्वासी च ( अविश्वासः ).

( ३ ) संक्षिप्तमर्थशास्त्रोपदेशमभिधातुमाह– बृहस्पतेरिति । बृहस्पतेः शास्त्रार्थनिश्चयः क इत्याह– अविश्वास इति । कस्यचिदाप्ततरस्यापि न विश्वासः कार्य इति । कुतः ? चित्तानित्यत्वात् । तथा च कौटिल्यः– 'चित्तानित्यत्वान्मनुष्याणाम् । अश्वसधर्माणो हि मनुष्याः कर्मसु नियुक्ता विकुर्वते' ( कौ. २।९ ) इति । ततश्च अविश्वासः इति बृहस्पतिमतम् । सर्वथा अविश्वासे संव्यवहाराभावः प्राप्नोति । यथा संव्यवहारवान् भवति अविश्वासश्च तथा कर्तव्य इति च । उनि.

**[1]विश्वासयेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ।**
**यस्मिन् विश्वासमायाति विभूतेः पात्रमेव सः ॥**

( १ ) तदेव स्फुटयति– विश्वासयेदित्यादिना । विभूतेः पात्रमेव स इति । स हि अतिविश्वस्तत्वात् राज्ञो यद्यदिच्छति तत्तदाप्नोति । जम.

( २ ) दण्डोपनयनाद्भीतमध्यक्षमविश्वस्तं विश्वासयेत् । स्वयं नातिविश्वसेत्, लेशतो विश्वसेदिति । यस्मिन् स्वामी विश्वासमायाति विभूतेः पात्रमेव सः इत्यनुजीविनामयमुपदेशः 'यथा स्वामी विश्वासमेति तथा विधेयम्' इति । उनि.

**प्रादुर्भवन्त्यर्थसमं यस्माच्चित्तान्यनुक्षणम् ।**
**तस्माद्योगीव सततं तानि पश्येत्समाहितः ॥**

( १ ) अनुजीविनां च चित्तानित्यत्वात् कस्य कोऽभिप्राय इति योगिवन्निरूपयेत् । यदाह – प्रादुर्भवन्तीत्यादि । अर्थसमं कार्यतुल्यम् । यथा यथा कार्यं प्रतिक्षणं विलक्षणमुत्पद्यते तथा तथा तद्वत् अभिप्राया अपीति । जम.

( २ ) अविश्वासी संव्यवहारार्थ(? र्ह)श्च भवति तदुपदेष्टुमाह– प्रादुर्भवन्तीति । प्रादुर्भवन्ति उत्पद्यन्ते अर्थसमं अर्थैः कार्यैः सहैव चित्तानि अन्यथाऽन्यथा भवन्ति । यदि कार्ये मित्रत्वादिकमुत्पद्यते तदा चित्तमपि स्निग्धं स्यात्, यदि शात्रवादिकं कार्यमुत्पद्यते तदा चित्तमपि शत्रुभावि भवति, 'कार्यं मित्रारिकारकम्' इति । अनुक्षणं प्रतिमुहूर्तम् । तस्माद्योगीव समाहितः एकाग्रमनाः तानि पश्येत् प्रतीकारार्थम् । एवमविश्वासश्च संव्यवहारश्च प्रवर्तेते इति । उनि.

( १ ) कानी. ५।८९–९०.

स्वाम्यनुजीविवृत्तफलम्

**[1]उद्योगादनिवृत्तस्य सुसहायस्य धीमतः ।**
**छायेवानुगता तस्य नित्यं श्रीः सहचारिणी ॥**

सुसमाहितत्वमेव प्रवर्तयन्नाह– उद्योगादिति । उद्योगात् व्यवसायात् अनिवृत्तस्य संततोद्योगिनः । सुसहायस्य धीमतः इति प्रतीतम् । स्वकीयच्छायेवानुगता तस्य नित्यं श्रीः सहचारिणी अविच्छिन्नेति । उनि.

**[2]स्वनुगतपरितोषितानुजीवी**
**मधुरवचाश्चरितानुरक्तलोकः ।**
**सुनिपुणपरमाप्तसक्ततन्त्रो**
**भवति चिरं नृपतिः प्रदीप्तरश्मिः ॥**

( १ ) स्वामिवृत्तफलमाह– स्वनुगतेत्यादिना । स्वविधेयाः स्ववृत्त्या परितोषिताः स्वामिवृत्त्या अनुजीविनो यस्येति विग्रहः । लोकः प्रजा । सुनिपुणपरमाप्तसक्ततन्त्र इति । सुनिपुणं शास्त्रकलासु, परमं उत्कृष्टम्, आप्तं अविसंवादकम्, सक्तं अनुबद्धं तन्त्रं स्वसैन्यं यस्येति समासः । रश्मिः प्रतापो भूतिर्वा । जम.

( २ ) उपसंहरन्नाह– स्वनुगतेति । सुष्ठु अनुगताः विधेयतराः परितोषिताः दानमानादिभिः अनुजीविनः येन सः । मधुरवचोभिः चरितैश्च अनुरक्तो लोको यस्मिन् सः । सुनिपुणं यथा भवति तथा परमाप्तं शक्यं तन्त्रं मण्डलं येन नृपतिना सः । सुचिरं प्रदीप्तरश्मिः तेजस्वी । यथा सुदीप्तरश्मिरादित्यः सदा ध्वान्तनाशाय भवति तथा नृपतिरपि । उनि.

( १ ) कानी. ५।९० इति श्लोकादूर्ध्वमुपाध्यायनिरपेक्षाभिमतः.

( २ ) कानी. ५।९१ ; उनि. वचा ( वच ) सक्त ( शक्य ) चिरं नृपतिः ( नृपः सुचिरं ).

## शुक्रनीतिः

अमात्यादिभृत्यपरीक्षा भृत्यगुणदोषाश्च

'समासादुच्यते कृत्यममात्यादेश्च लक्षणम् ।
मृदुगुरुप्रमाणत्ववर्णशब्दादिभिः समम् ॥

इदानीं अमात्यादेः कृत्यं कार्यं मृदुगुरुप्रमाणत्व-वर्णशब्दादिभिः— मृदुः गुरुः गम्भीरप्रकृतिः प्रमाणं महत्तया गणनीयः, तेषां भावः मृदुगुरुप्रमाणत्वम्, वर्णः जातिः, शब्दः वाक्यम्, एवमादिभिः समं सहितं लक्षणं च समासात् संक्षेपात् उच्यते । अयं भावः— अमात्यः मृदुप्रकृतिः वा गम्भीरस्वभावः वा कश्चित् संभ्रान्तः, अस्य च का जातिः किदृशं वा वचनमित्यादि वेदितव्यमिति । शुनीटी.

परीक्षकैर्द्रावयित्वा यथा स्वर्णं परीक्ष्यते ।
कर्मणा सहवासेन गुणैः शीलकुलादिभिः ॥
भृत्यं परीक्षयेन्नित्यं विश्वास्यं विश्वसेत्तदा ।
नैव जातिर्न च कुलं केवलं लक्षयेदपि ॥

परीक्षकैः द्रावयित्वा गलयित्वा यथा स्वर्णं परीक्ष्यते तथा कर्मणा सहवासेन शीलकुलादिभिः चरित्रसत्कुल-जातत्वादिभिः गुणैः नित्यं भृत्यं परीक्षयेत् । तदा परीक्षिते सतीत्यर्थः, विश्वास्यं विश्वासयोग्यं जनं विश्वसेत् । केवलं जातिं न लक्षयेत्, कुलं वंशं वा नैव लक्षयेत् नैव परीक्षयेत् । गुणाः परीक्षणीया इति भावः । शुनीटी.

कर्मशीलगुणाः पूज्यास्तथा जातिकुले न हि ।
न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥

कर्म शीलं चरित्रं गुणाः विद्यादयः पूज्याः । जाति-कुले तथा न हि नैव पूज्ये इत्यर्थः । कर्मशीलगुणानामेव विशेषेण परीक्षा कार्येति भावः । जात्या केवलया इत्यर्थः, कुलेन सद्वंशेन च नैव श्रेष्ठत्वं महत्त्वं प्रतिपद्यते प्राप्नोति, जनः इति शेषः । शुनीटी.

विवाहे भोजने नित्यं कुलजातिविवेचनम् ।
सत्यवाग् गुणसंपन्नस्तथाऽभिजनवान् धनी ॥
सुकुलश्च सुशीलश्च सुकर्मा च निरालसः ।
यथा करोत्यात्मकार्यं स्वामिकार्यं ततोऽधिकम् ॥

विवाहे उद्वाहकृत्ये भोजने च नित्यं सततं कुलजाति-विवेचनं कुलजातिविचारः, कार्यमिति शेषः । सत्यवाक् गुणसंपन्नः अभिजनवान् महावंशप्रसूतः धनी धनसंपन्नः सुकुलः निर्दोषवंशजातः सुशीलः सुकर्मा तथा निरालसः आलस्यरहितः जनः यथा आत्मकार्यं करोति स्वामिकार्यं ततः तस्मात् आत्मकार्यात् अधिकं यथा तथा करोती-त्यन्वयः । शुनीटी.

चतुर्गुणेन यत्नेन कायवाङ्मानसेन च ।
भृत्यैव तुष्टो मृदुवाक् कार्यदक्षः शुचिर्दृढः ॥

भृत्यः कायवाङ्मानसेन कायिकेन वाचिकेन मान-सिकेन कर्मणा यत्नेन च चतुर्गुणेन चतुर्णां गुणानां समाहारः तेन तथा भृत्या वेतनेन च तुष्टः मृदुवाक् मधुरभाषी कार्यदक्षः शुचिः शुद्धचेताः तथा दृढः कार्येषु निश्चलः, भवेदिति शेषः । शुनीटी.

परोपकरणे दक्षो ह्यपकारपराङ्मुखः ।
स्वाम्यागस्कारिणं पुत्रं पितरं वाऽपि दर्शकः ॥

किंच, परोपकरणे परेषामुपकारविधाने दक्षः निपुणः अपकारपराङ्मुखः तथा स्वाम्यागस्कारिणं स्वामिनि प्रभौ अपराधकारिणं पुत्रं स्वामिपुत्रं पितरं च, स्वामिनः इति शेषः, दर्शकः यथा स्वामिनः पुत्रः पिता वा तस्य अपकारी न भवेत् तथा दर्शनकारी, भवेदिति शेषः । शुनीटी.

अन्यायगामिनि *पतौ यतद्रूपः सुबोधकः ।
नाऽऽक्षेप्ता तद्गिरं कांचित्तन्न्यूनस्याप्रकाशकः ॥

पुनश्च पत्यौ स्वामिनि अन्यायगामिनि अनौचित्य-प्रवृत्ते सति यतद्रूपः यतत् रूपं यस्य सः यत्नवानित्यर्थः, सन् । यतदिति यतधातोरात्मनेपदिनोऽपि शतृप्रत्यय आर्षः । सुबोधकः यत्नेन सत्पथप्रवर्तकः, कांचित् तद्गिरं तस्य स्वामिनः गिरं वाचं न आक्षेप्ता न तद्वाक्योपरि वाक्प्रयोक्ता इत्यर्थः, तथा तन्न्यूनस्य तदीयन्यूनतायाः

(१) शुनी. २।५२–६३.

* 'पतौ' इत्यार्षरूपपाठ एव बहुसंमतश्छन्दोनुकूलश्च ।

इत्यर्थः, भावप्रधाननिर्देशः, अप्रकाशकः प्रभोर्यदि कुत्रचित् त्रुटिर्दृश्यते न प्रकाशकारी, भवेदिति शेषः। शुनीटी.

**अदीर्घसूत्रः सत्कार्ये ह्यसत्कार्ये चिरक्रियः।**
**न तद्भार्यापुत्रमित्रच्छिद्रदर्शी कदाचन॥**

अपरं च, सत्कार्ये शोभनकर्मणि दानादौ अदीर्घसूत्रः सत्वरः, असत्कार्ये मन्दकार्ये हिंसादिकर्मणीत्यर्थः, चिरक्रियः कृतविलम्बः भवेत्। तथा कदाचन तस्य प्रभोः भार्याणां पुत्राणां मित्राणां च छिद्रदर्शी दोषानुसंधायी न भवेत्। शुनीटी.

**तद्वद्बुद्धिस्तदीयेषु भार्यापुत्रादिबन्धुषु।**
**न श्लाघते स्पर्धते न नाभ्यसूयति निन्दति॥**

तदीयेषु स्वामिसंबन्धिषु; भार्यापुत्रादिबन्धुषु तद्वत् तादृशी स्वामिसदृशी बुद्धिर्यस्य तादृशः स्वामी यथा तेषु वर्तते तथा वर्तमान इत्यर्थः, भवेत्। किंच, स्वयं न श्लाघते न श्लाघां कुर्यात्, न अभ्यसूयति न स्वामिनः तदीयानां च गुणेषु दोषारोपं कुर्यात्, न निन्दति निन्दां कुर्याच्च। शुनीटी.

**नेच्छत्यन्याधिकारं हि निःस्पृहो मोदते सदा।**
**तद्दत्तवस्त्रभूषादिधारकस्तत्पुरोऽनिशम्॥**

अन्येषां अधिकारं न इच्छति अपरराजकर्मचारिणां कार्ये लालसां न कुर्यात्। हिशब्दः अवधारणे। निःस्पृहः अलुब्धः सन् सदा मोदते आनन्दं प्रकाशयेदित्यर्थः। तथा अनिशं सततं तद्दत्तान् स्वामिदत्तान् वस्त्रभूषादीन् वसनालंकारादीन् धारयतीति तथोक्तः सन् तस्य प्रभोः पुरः अग्रे, तिष्ठेदिति शेषः। शुनीटी.

**[1]भृतितुल्यव्ययो दान्तो दयालुः शूर एव हि।**
**तदकार्यस्य रहसि सूचको भृतको वरः॥**

अन्यच्च, भृतितुल्यव्ययः वेतनानुसारेण व्ययकारी, न तु वृथाव्ययकारीत्यर्थः, दान्तः संयतेन्द्रियः दयालुः दयाशीलः शूरः अभीरुरित्यर्थः, तथा रहसि एकान्ते केवलप्रभुसमक्षम्, न तु अन्यसंनिधावित्यर्थः, तस्य प्रभोः यत् अकार्यं अनुचितकार्यं तस्य सूचकः प्रकाशकः भवेत्। ईदृशः भृतकः भृत्यः वरः श्रेष्ठः। शुनीटी.

(१) शुनी. २।६४.
घ. को. २१८

**[1]विपरीतगुणैरेभिर्भृतको निन्द्य उच्यते।**
**ये भृत्या हीनभृतिका ये दण्डेन प्रकर्षिताः॥**

**शठाश्च कातरा लुब्धाः समक्षं प्रियवादिनः।**
**मत्ता व्यसनिनश्चाऽऽर्ता उत्कोचेष्टाश्च देविनः॥**

**नास्तिका दाम्भिकाश्चैवासत्यवाचोऽप्यसूयकाः।**
**ये चापमानिता येऽसद्वाक्यैर्मर्मणि भेदिताः॥**

**रिपोर्मित्राः सेवकाश्च पूर्ववैरानुबन्धिनः।**
**चण्डाः साहसिका धर्महीना नैते सुसेवकाः।**
**संक्षेपतस्तु कथितं सदसद्भृत्यलक्षणम्॥**

एभिर्विपरीतगुणैः पूर्वोक्तविरुद्धगुणैरित्यर्थः, उपलक्षितः भृतकः निन्द्यः दूष्यः उच्यते। ये भृत्याः हीना भृतिः येषां तथोक्ताः स्वल्पवेतना इत्यर्थः, ये दण्डेन प्रकर्षिताः प्रपीडिताः सततदोषकारित्वादिति भावः, ये शठाः धूर्ताः कातराः भीरवः लुब्धाः लोभपरायणाः समक्षं प्रियवादिनः मत्ताः मद्यरताः व्यसनिनः मृगयादिदोषसंसृष्टाः आर्ताः रोगिणः उत्कोचेष्टाः उत्कोचे इष्टं अभिलाषः येषां तथाभूताः देविनः द्यूतरताः नास्तिकाः परलोकाद्यमानिनः दाम्भिकाः वञ्चकाः तथा असत्यवाचः असत्यवादिनः असूयकाः दोषारोपिणः ये अपमानिताः कृतावमानाः ये च असद्वाक्यैः दुरुक्तिभिः मर्मणि भेदिताः कृतमर्माघाताः इत्यर्थः, रिपोः शत्रोः मित्राः तथा रिपोः सेवकाः भृत्याः तथा ये च पूर्ववैरानुबन्धिनः पूर्वशत्रुतासंबन्धविशिष्टाः तथा चण्डाः कोपनाः साहसिकाः अवमृष्यकारिणः तथा धर्महीनाः अधार्मिकाः, एते सुसेवकाः सुभृत्याः न, भवन्तीति शेषः। संक्षेपतस्तु संक्षेपेणैव सदसद्भृत्यलक्षणं सतामसतां च भृत्यानां लक्षणं स्वरूपं कथितम्। शुनीटी.

(१) शुनी. २।६५–६८.

प्रोक्तं पुण्यतमं सत्यं परोपकरणं तथा ।
आभ्यां युक्तांश्च भृतकान् सततं धारयेन्नृपः ॥

(सत्यं) तथा परोपकरणं परोपकारकरणं पुण्यतमं अतिपुण्यकरं प्रोक्तं कथितम् । अतः कारणात् नृपः आज्ञायुक्तान् आज्ञाकारिणः भृतकान् भृत्यान् सततं धारयेत् पालयेत् । 'आज्ञायुक्तान्' इत्यत्र 'आभ्यां युक्तान्' इति पाठान्तरकल्पने आभ्यां सत्यपरोपकाराभ्यां युक्तानित्यर्थः । शुनीटी.

हिंसा गरीयसी सर्वपापेभ्योऽनृतभाषणम् ।
गरीयस्तरमेताभ्यां युक्तान् भृत्यान्न धारयेत् ॥

हिंसा सर्वपापेभ्यः गरीयसी श्रेष्ठा, तथा अनृतभाषणं मिथ्यावचनं गरीयस्तरं अतिगुरुतरम्, तस्मात् नृपः एताभ्यां हिंसानृताभ्यां युक्तान् भृत्यान् न धारयेत् त्यजेदित्यर्थः । शुनीटी.

यदा यदुचितं कर्तुं वक्तुं वा तत्प्रबोधयन् ।
तद्वक्ति कुरुते द्राक्तु स सद्भृत्यः सुपूज्यते ॥

यदा यत् कार्यं कर्तुं वा वक्तुं उचितं तत् प्रबोधयन् राज्ञे बोधयन् सन् यः द्राक् झटिति तत् वक्ति कथयति कुरुते च सः सद्भृत्यः सुपूज्यते सम्यक् प्रशस्यते । शुनीटी.

भृत्यानां कर्तव्याकर्तव्यानि राजविषयकाणि

उत्थाय पश्चिमे यामे गृहकृत्यं विचिन्त्य च ।
कृत्वोत्सर्गं तु विष्णुं हि स्मृत्वा स्नायादनन्तरम् ॥

प्रातःकृत्यं तु निर्वर्त्य यावत्सार्धमुहूर्तकम् ।
गत्वा स्वकार्यशालां वा कार्याकार्यं विचिन्त्य च ॥

पश्चिमे यामे प्रहरे, रात्रेरिति शेषः, उत्थाय गृहकृत्यं गृहकार्यं विचिन्त्य उत्सर्गं मलमूत्रत्यागं कृत्वा विष्णुं स्मृत्वा इत्थं सार्धमुहूर्तकं दण्डत्रयं यावत् प्रातःकृत्यं निर्वर्त्य तु समाप्यैव स्वस्य कार्यशालां कर्मालयं गत्वा कार्याकार्यं कार्यमकार्यं च विचिन्त्य च *अनन्तरं स्नायात् । हिशब्दोऽवधारणे । शुनीटी.

* अश्रद्धेयवचनष्टीकाकारः । स्नानादनन्तरं प्रातःकृत्यनिर्वर्तनादीति यथाश्रुतमेव ग्राह्यम् ।

(१) शुनी. २।२०५–२१२.

विनाऽऽज्ञया विशन्तं तु द्वास्थः सम्यङ्निरोधयेत् ।
निर्देशकार्यं विज्ञाप्य तेनाऽऽज्ञप्तः प्रमोचयेत् ॥

द्वास्थः दौवारिकः आज्ञया आदेशेन विना विशन्तं प्रविशन्तं जनम्, गृहाभ्यन्तरमिति शेषः, सम्यक् निरोधयेत् । पश्चात् निर्देशेन यथानिर्देशमित्यर्थः, कार्यं विज्ञाप्य, राज्ञे इति शेषः, तेन राज्ञा आज्ञप्तः सन् तं प्रविशन्तं प्रमोचयेत् त्यजेत् प्रवेशाय अनुमन्येत इत्यर्थः । शुनीटी.

दृष्ट्वाऽऽगतान्सभामध्ये राज्ञे दण्डधरः क्रमात् ।
निवेद्य तन्नतीः पश्चात्तेषां स्थानानि सूचयेत् ॥

दण्डधरः दौवारिकः सभामध्ये आगतान् दृष्ट्वा क्रमात् यथाक्रमं राज्ञे तन्नतीः तेषां प्रणामान् निवेद्य पश्चात् तेषां स्थानानि उपवेशनार्थानि सूचयेत् प्रदर्शयेत् । शुनीटी.

ततो राजगृहं गत्वाऽऽज्ञप्तो गच्छेच्च संनिधिम् ।
नत्वा नृपं यथान्यायं विष्णुरूपमिवापरम् ॥

प्रविश्य सानुरागस्य चित्तज्ञस्य समन्ततः ।
भर्तुरर्धासने दृष्टिं कृत्वा नान्यत्र निक्षिपेत् ॥

ततः तेषां स्थाननिर्देशानन्तरं राजगृहं गत्वा आज्ञप्तः प्राप्तराजनिदेशः सन् संनिधिम्, राज्ञः इति शेषः, गच्छेत् । प्रविश्य च नृपं राजानं अपरं विष्णुरूपं नारायणावतारमिव यथान्यायं नत्वा प्रणम्य सानुरागस्य अनुरागिणः चित्तज्ञस्य हृदयं विजानतः भर्तुः स्वामिनः अर्धासने आसनार्धे दृष्टिं कृत्वा अन्यत्र समन्ततः चतुर्दिक्षु दृष्टिं न क्षिपेत् न दद्यात् । शुनीटी.

अग्निं दीप्तमिवाऽऽसीदेद्राजानमुपशिक्षितः ।
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ॥

उपशिक्षितः सम्यग्विनीतः सन् दीप्तं ज्वलन्तं अग्निमिव तथा क्रुद्धं आशीविषं भुजंगमिव प्राणानां धनानां च ईश्वरं प्रभुं स्वामिनं राजानं आसीदेत् राजसमीपं गच्छेदित्यर्थः । शुनीटी.

**यत्नेनोपचरेन्नित्यं नाहमस्मीति चिन्तयेत् ।**
**समर्थयंश्च तत्पक्षं साधु भाषेत भाषितम् ।**
**तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितम् ॥**

नित्यं सततं यत्नेन उपचरेत् सेवेत, राजानमिति शेषः। अहमस्मि स्वाधीनो भवामीति न चिन्तयेत् न भावयेत् । तथा तत्पक्षं राजपक्षं समर्थयन् दृढीकुर्वन् साधु संतोषकरं भाषितं वचनं भाषेत कथयेत् । तस्य राज्ञः नियोगेन आदेशेन वा सुपरिनिश्चितं सुनिश्चितं अर्थं ब्रूयात् । शुनीटी.

**सुखप्रबन्धगोष्ठीषु विवादे वादिनां मतम् ।**
**विजानन्नपि नो ब्रूयाद्भर्तुः क्षिप्त्वोत्तरं वचः ॥**

सुखप्रबन्धगोष्ठीषु विहारसमाजेषु वादिनां परस्परतर्कवतां विवादे तर्कव्यवहारे मतं सिद्धान्तं विजानन्नपि भर्तुः स्वामिनः उत्तरं सिद्धान्तं क्षिप्त्वा आक्षिप्य आच्छाद्य इत्यर्थः, वचः वचनं नो ब्रूयात् न कथयेत् । शुनीटी.

**सदाऽनुद्धतवेशः स्यान्नृपाहूतस्तु प्राञ्जलिः ।**
**तद्गां कृतनतिः श्रुत्वा वस्त्रान्तरितसंमुखः ॥**
**तदाज्ञां धारयित्वाऽऽदौ स्वकर्माणि निवेदयेत् ।**
**नत्वाऽऽसीताऽऽसने प्रह्वो न तत्पार्श्वे न संमुखे ॥**

नृपेण आहूतः सन् सदा अनुद्धतवेशः विनीतपरिच्छदः प्राञ्जलिः स्यात् । तथा कृतनतिः प्रणतः वस्त्रान्तरितसंमुखः आच्छादितपुरोभागः सन् आदौ अग्रतः तस्य प्रभोः गां वाचं श्रुत्वा तस्य आज्ञां आदेशं धारयित्वा गृहीत्वा पश्चात् प्रह्वः नम्रः सन् स्वकर्माणि निजागमनप्रयोजनानि निवेदयेत् । † तस्य प्रभोः पार्श्वे संमुखे वा प्रभोराज्ञयाऽपीत्यर्थः, आसने न तु आसीत नैव उपविशेत् । आज्ञापालनार्थं आसनं स्पृशेदिति भावः । शुनीटी.

**उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा ।**
**जृम्भणं गात्रभङ्गं च पर्वास्फोटं च वर्जयेत् ॥**

उच्चैः प्रहसनं उच्चहासं कासं कफादिनिःसारणशब्दविशेषं ष्ठीवनं थुत्कारं कुत्सनं कुत्सितकर्मकरणं अथवा कस्यापि निन्दनं जृम्भणं गात्रभङ्गं तथा पर्वणां शरीरग्रन्थीनां आस्फोटं कण्डूयनं वर्जयेत् । प्रभुसमक्षमिति शेषः । शुनीटी.

**राज्ञाऽऽदिष्टं तु यत्स्थानं तत्र तिष्ठेन्मुदाऽन्वितः ।**
**प्रवीणोचितमेधावी वर्जयेदभिमानताम् ॥**

राज्ञा आदिष्टं प्रदर्शितं यत् स्थानं मुदाऽन्वितः सहर्षः सन् तत्र तिष्ठेत् । तथा प्रवीणोचितमेधावी वृद्धोचितप्रज्ञावान् सन् अभिमानतां मानितां वर्जयेत् । प्रभुसमीपे मानापमानबुद्धिर्नाऽऽद्रीयते इति भावः । शुनीटी.

**आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।**
**अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥**

हितान्वेषी हितकामी जनः अपृष्टोऽपि अजिज्ञासितोऽपि आपदि उन्मार्गगमने तथा कार्यकालात्ययेषु कार्यसमयातिक्रमेषु, प्रभोरिति शेषः, कल्याणभाषितं हितवाक्यं ब्रूयात् कथयेत् । शुनीटी.

**प्रियं तथ्यं च पथ्यं च वदेद्धर्मार्थकं वचः ।**
**समानवार्तया चापि तद्धितं बोधयेत्सदा ॥**

प्रियं प्रीतिकरं तथ्यं यथार्थं पथ्यं हितं धर्मार्थकं धर्मार्थयुक्तं च वचः वदेत् । समानवार्तया मानयुक्तसमाचारेण च सदा तस्य प्रभोः हितं बोधयेदपि ज्ञापयेच्च । शुनीटी.

**कीर्तिमन्यनृपाणां वा वदेन्नीतिफलं तथा ।**
**दाता त्वं धार्मिकः शूरो नीतिमानसि भूपते ॥**
**अनीतिस्ते तु मनसि वर्तते न कदाचन ।**
**ये ये भ्रष्टा अनीत्या तान् तदग्रे कीर्तयेत्सदा ॥**

अन्येषां नृपाणां कीर्तिं यशस्करकार्यं नीतिफलं वा वदेत् । किंच, हे भूपते, त्वं दाता धार्मिकः शूरः वीरः तथा नीतिमान् नयसंपन्नः असि । कदाचन ते तव मनसि अनीतिः दुर्नयः न तु नैव वर्तते । ये ये नृपाः अनीत्या दुर्नयेन भ्रष्टाः तान् तदग्रे तस्य प्रभोरग्रे सदा कीर्तयेत् । शुनीटी.

**नृपेभ्यो ह्यधिकोऽसीति सर्वेभ्यो न विशेषयेत् ।**
**परार्थं देशकालज्ञो देशे काले च साधयेत् ॥**

सर्वेभ्यः नृपेभ्यः अधिकः श्रेष्ठः असीति न विशेषयेत् विशिष्य ब्रूयात् । तथा देशकालज्ञः ' अस्मिन् देशे

† वस्तुतः ' नत्वा नमस्कृत्य आसीत ' इति विधिः, ततः परौ द्वौ निषेधौ ।

इदं कर्तव्यमस्मिन् काले एवं व्यवहर्तव्यम्' इति जानन् सन् देशे यथास्थाने काले यथासमये परार्थे परेषां अन्येषां अर्थे कार्ये श्रेष्ठकार्ये वा साधयेत्। शुनीटी.

**परार्थनाशनं न स्यात्तथा ब्रूयात्सदैव हि।**
**न कर्षयेत्प्रजाकार्यमिषतश्च नृपं सदा ॥**

यथा परार्थनाशनं परेषां प्रजादीनां कार्यहानिः न स्यात् तथा सदैव ब्रूयात्। तथा प्रजाकार्यमिषतः प्रजानां कार्यानुरोधेनेत्यर्थः, नृपं स्वामिनं सदा न कर्षयेत् न विरक्तीकुर्यात्। हिशब्दोऽवधारणे। शुनीटी.

**अपि स्थाणुवदासीत शुष्यन् परिगतः क्षुधा।**
**न त्वेवानर्थसंपन्नां वृत्तिमीहेत पण्डितः ॥**

पण्डितः प्राज्ञो जनः क्षुधा परिगतः क्षुधार्तः अत एव शुष्यन् शोषं गच्छन्नपि स्थाणुवत् शाखापल्लवादिहीनः शुष्कतरुरिव आसीत तिष्ठेत्। अनर्थसंपन्नां विपत्संकुलां असाध्वीमित्यर्थः, वृत्तिं जीविकां न त्वेव ईहेत चेष्टेत नैवावलम्बेतेत्यर्थः। शुनीटी.

**यत्कार्ये यो नियुक्तः स भूयात्तत्कार्यतत्परः।**
**नान्याधिकारमन्विच्छेन्नाभ्यसूयेच्च केनचित् ॥**

यः यस्मिन् कार्ये नियुक्तः स तत्कार्यतत्परः भूयात् भवेत्। अन्यस्याधिकारं न अन्विच्छेत्। तथा केनचित् नाभ्यसूयेच्च नासूयां कुर्याच्च। शुनीटी.

**न न्यूनं लक्षयेत्कस्य पूरयीत स्वशक्तितः।**
**परोपकरणादन्यन्न स्यान्मित्रकरं सदा ॥**

कस्य जनस्य, अपीति शेषः, न्यूनं त्रुटितमित्यर्थः, न लक्षयेत् न पश्येत्। प्रत्युत स्वशक्तितः निजशक्त्या पूरयीत न्यूनं पूरयेत्। सदा सर्वस्मिन् काले परेषामुपकारकरणात् अन्यत् किमपीत्यर्थः, मित्रकरं मैत्रीविधायकं न स्यात् न विद्यते। अतः परेषां न्यूनतापूरणं सर्वथा कर्तव्यमिति भावः। शुनीटी.

**करिष्यामीति ते कार्यं न कुर्यात्कार्यलम्बनम्।**
**द्राक् कुर्यात्तु समर्थश्चेत्साशं दीर्घं न रक्षयेत् ॥**

ते तव कार्यं करिष्यामीति, प्रतिश्रुत्येति शेषः, कार्यस्य लम्बनं विलम्बनं न कुर्यात्। समर्थः शक्तः चेत् द्राक् झटिति कुर्यात्। साशं आशासहितं आशां दत्त्वेति भावः, दीर्घं कालं न रक्षयेत् न कार्यमावृत्य तिष्ठेदित्यर्थः। शुनीटी.

**गुह्यं कर्म च मन्त्रं च न भर्तुः संप्रकाशयेत्।**
**विद्वेषं च विनाशं च मनसाऽपि न चिन्तयेत् ॥**

भर्तुः स्वामिनः गुह्यं गोपनीयं कर्म मन्त्रं परामर्शं च न संप्रकाशयेत्। विद्वेषं विनाशं च मनसाऽपि न चिन्तयेत् न भावयेत्। शुनीटी.

**राजा परममित्रोऽस्ति न कामं विचरेदिति।**
**स्त्रीभिस्तदर्थिभिः पापैर्वैरिभूतैर्निराकृतैः ॥**
**एकार्थचर्यां साहित्यं संसर्गं च विवर्जयेत्।**
**वेशभाषानुकरणं न कुर्यात्पृथिवीपतेः ॥**
**संपन्नोऽपि च मेधावी न स्पर्धेत च तद्गुणैः।**
**रागापरागौ जानीयाद्भर्तुः कुशलकर्मवित् ।**
**इङ्गिताकारचेष्टाभ्यस्तदभिप्रायतां तथा ॥**

राजा मम परममित्रः अस्ति वर्तते इति कामं सम्यक् न विचरेत् न भावयेत्। मित्रः इति पुंल्लिङ्गः आर्षः। तदर्थिभिः तस्य प्रभोः अर्थिभिः अभिलाषिणीभिरित्यर्थः। तदर्थिभिरिति आर्षम्। स्त्रीभिः तथा पापैः पापाचारैः अत एव निराकृतैः वैरिभूतैः शत्रुभिः, प्रभोरिति शेषः, एकार्थचर्यां संभूयव्यवहारं साहित्यं एकक्रियाकरणं संसर्गं च विवर्जयेत् त्यजेत्। किंच, पृथिवीपतेः वेशस्य भाषायाश्च अनुकरणं न कुर्यात्। तथा संपन्नोऽपि समृद्धोऽपि मेधावी अपि तस्य प्रभोः गुणैः न स्पर्धेत। अपि च, कुशलकर्मवित् शुभकार्यज्ञः सन् भर्तुः स्वामिनः रागापरागौ अनुरागविरागौ जानीयात् केन कर्मणा अनुरागः केन वा विरागो भवेदिति। तथा इङ्गितेन आकारेण चेष्टया च तस्य प्रभोः अभिप्रायतां मनोभावं जानीयात् बुध्येत। शुनीटी.

रक्तविरक्तराजलिङ्गानि

**त्यजेद्विरक्तं नृपतिं रक्ते वृत्तिं तु कारयेत् ॥**
**विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा ॥**

विरक्तं नृपतिं त्यजेत्। रक्ते अनुरक्ते नृपे वृत्तिं वर्तनं स्थितिमित्यर्थः, कारयेत् कुर्यादित्यर्थः। स्वार्थे

* ण्यन्तोऽयं कृधातुः । विरक्तः नृपः नाशं विपदं तथा विपक्षाणां शत्रूणां अभ्युदयं उन्नतिं कारयेत् जनयेत् । शुनीटी.

आशावर्धनकं कृत्वा फलनाशं करोति च ।
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः ।
वाक्यं च समदं वक्ति वृत्तिच्छेदं करोति च ॥
लक्ष्यते विमुखश्चैव गुणसंकीर्तने कृते ।
दृष्टिं क्षिपत्यथान्यत्र क्रियमाणे च कर्मणि ॥
विरक्तलक्षणं ह्येतद्रक्तस्य लक्षणं ब्रुवे ॥
दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चाऽऽदरात् ।
कुशलादिपरिप्रश्नी प्रदापयति चाऽऽसनम् ॥
विविक्तदर्शनं चास्य रहस्येनं न शङ्कते ।
ज्ञायेत हृष्टवदनः श्रुत्वा तस्य च तत्कथाम् ॥
अप्रियाण्यपि चान्यानि तद्युक्तान्यभिमन्यते ।
उपायनं च गृह्णाति स्तोकं संपादनैस्तथा ।
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ॥
इति रक्तस्य वै लक्ष्यं कर्तव्यं तस्य सेवनम् ॥

विरक्तरक्तलक्षणमाह— आशेत्यादि । यः प्रभुः आशावर्धनकं आशावृद्धिं कृत्वा फलनाशं करोति, आशां दत्त्वा फले वञ्चयतीत्यर्थः । अकोपः अक्रोधः अपि सकोपाभः सकोप इव, तथा प्रसन्नः अपि निष्फलः फलदानविमुखः भवति । किंच, समदं सगर्वं वाक्यं वक्ति । वृत्तिच्छेदं जीविकाव्याघातं करोति च । अपि च, गुणसंकीर्तने कृतेऽपि विमुख एव लक्ष्यते । तथा अन्यत्र क्रियमाणे कर्मणि दृष्टिं क्षिपति ददाति, न गुणसंकीर्तके इति भावः । एतत् विरक्तस्य लक्षणं चिह्नम् । उक्तमिति शेषः । इदानीं रक्तस्य लक्षणं ब्रुवे कथयामि । दृष्ट्वा प्रसन्नः भवति । आदरात् वाक्यं गृह्णाति । कुशलादिपरिप्रश्नी सन्, कुशलादिजिज्ञासानन्तरमित्यर्थः, आसनं अस्य सेवकस्य विविक्तदर्शनं एकान्ते दर्शनं च प्रददाति । रहसि एकान्ते, स्थितः इति शेषः, एनं सेवकं न शङ्कते । तस्य सेवकस्य तत्कथां श्रुत्वा हृष्टवदनः प्रसन्नमुखः ज्ञायते लक्ष्यते । प्रभुरिति शेषः । तेन सेवकेन युक्तानि अप्रियाणि अपि अन्यानि अभिमन्यते अनुमोदते । उपायनं उपढौकनं गृह्णाति । तथा स्तोकसंपादनैः यत्किंचनकार्यसंपादनैरपि कथान्तरेषु विविधालापेषु मध्ये प्रहृष्टवदनः प्रसन्नमुखः सन् स्मरति आह्वयति च । रक्तस्य अनुरागिणः प्रभोः इति उक्तप्रकारं लक्ष्यं चिह्नम् । तस्य अनुरक्तस्य प्रभोः सेवनं कर्तव्यम् । शुनीटी.

अमात्यमन्त्र्यादिभृत्यानां राजसेवाविधिः

तद्दत्तवस्त्रभूषादिचिह्नं संधारयेत्सदा ।
न्यूनाधिक्यं स्वाधिकारकार्ये नित्यं निवेदयेत् ।
तदर्थां तत्कृतां वार्तां शृणुयाद्वाऽपि कीर्तयेत् ॥

तेन प्रभुणा दत्तं वस्त्रभूषादि वसनभूषणादि चिह्नं सदा संधारयेत् । तथा स्वाधिकारकार्ये निजाधिकारकर्मणि न्यूनाधिक्यं न्यूनतां आधिक्यं च नित्यं निवेदयेत्, स्वामिने इति शेषः । किंच, तदर्थां प्रभुसंबद्धां वा तत्कृतां प्रभुकथितां वार्तां शृणुयात् कीर्तयेच्च । शुनीटी.

चारसूचकदोषेण त्वन्यथा यद्वदेन्नृपः ।
शृणुयान्मौनमाश्रित्य तथ्यवन्नानुमोदयेत् ॥

चाराणां सूचकानां दुर्जनानां दोषेण नृपः यत् अन्यथा विरुद्धमित्यर्थः, वदेत् कथयेत् मौनं तूष्णींभावं आश्रित्य तत् शृणुयात् । किंतु तथ्यवत् सत्यवत् न अनुमोदयेत् न स्वीकुर्यात् । शुनीटी.

आपद्गतं सुभर्तारं कदाऽपि न परित्यजेत् ॥
एकवारमप्यशितं यस्यान्नं ह्यादरेण च ।
तदिष्टं चिन्तयेन्नित्यं पालकस्याञ्जसा न किम् ॥

आपद्गतं विपद्ग्रस्तं सुभर्तारं अनुरक्तं प्रभुं कदाऽपि न परित्यजेत् । यस्य अन्नं एकवारमपि आदरेण अशितं भक्षितं तस्य इष्टं प्रियं हितमित्यर्थः, नित्यं चिन्तयेत् । तस्य पालकस्य अञ्जसा बलेन किं न भवति ? अपि तु सर्वमेव कार्यं सिध्यतीति भावः । शुनीटी.

* अत्र णिप्रत्ययः सारस्वतव्याकरणमनुसृत्य बोध्यः । पाणिनिस्तु णिच्प्रत्ययं तदर्थे आह ।

अप्रधानः प्रधानः स्यात्काले चात्यन्तसेवनात् ।
प्रधानोऽप्यप्रधानः स्यात्सेवालस्यादिना यतः ॥

अत्यन्तसेवनात्, प्रभोरिति शेषः, सेवकः अप्रधानोऽपि प्रधानः स्यात् । यतः प्रधानोऽपि सेवायां आलस्यादिना अप्रधानः स्यात् । शुनीटी.

नित्यं संसेवनरतो भृत्यो राज्ञः प्रियो भवेत् ।
स्वस्वाधिकारकार्यं यद्द्राक् कुर्यात्सुमना यतः ॥

नित्यं सततं संसेवनरतः सेवातत्परः भृत्यः राज्ञः प्रियो भवेत् । यत् यस्मात् भृत्यः द्राक् झटिति स्वस्वाधिकारकार्यं कुर्यात् करोति अतः राजा सुमना भवतीत्यर्थः । 'सुमनायतः' इति विसर्गस्थाने यादेशः* । शुनीटी.

न कुर्यात्सहसा कार्यं नीचं राजाऽपि नो दिशेत् ।
तत्कार्यकारकाभावे राज्ञः कार्यं सदैव हि ॥

सहसा अविविच्येत्यर्थः, कार्यं न कुर्यात्, भृत्य इति शेषः । राजाऽपि नीचं कार्यं कर्म नो दिशेत् कर्तुं नाऽऽज्ञापयेदित्यर्थः । राज्ञः तत्कार्यस्य नीचकार्यस्य मलमूत्रादिपरिष्काररूपस्य कारकाभावे सदैव तत्कार्यं कार्यं हि कर्तव्यमेव । शुनीटी.

काले यदुचितं कर्तुं नीचमप्युत्तमोऽर्हति ।
यस्मिन्प्रीतो भवेद्राजा तदनिष्टं न चिन्तयेत् ॥

काले समये यत् कर्तुमुचितं तत् नीचमपि निकृष्टमपि उत्तमः उत्कृष्टः भृत्यः अर्हति कर्तुमधिकरोति यस्मिन् कर्मणि राजा प्रीतः भवेत् । किंच, तस्य राज्ञः अनिष्टं न चिन्तयेत् । शुनीटी.

न दर्शयेत्स्वाधिकारगौरवं तु कदाचन ॥

कदाचन स्वाधिकारस्य निजकार्यस्य गौरवं गुरुत्वं दुःसाध्यत्वं न दर्शयेत् न प्रकाशयेत्, भृत्य इति शेषः । शुनीटी.

परस्परं नाभ्यसूयुर्न भेदं प्राप्नुयुः कदा ।
राज्ञा चाधिकृताः सन्तो स्वस्वाधिकारगुप्तये ॥

राज्ञा अधिकृताः सन्तः साधवः भृत्याः स्वस्वाधिकारगुप्तये निजनिजाधिकाररक्षणाय परस्परं न अभ्यसूयुः न दोषं दर्शयेयुः । तथा कदाऽपि भेदं मनोभङ्गरूपं न प्राप्नुयुः । शुनीटी.

अधिकारिगणो राजा सद्वृत्तौ यत्र तिष्ठतः ।
उभौ तत्र स्थिरा लक्ष्मीर्विपुला संमुखी भवेत् ॥

यत्र अधिकारिगणः भृत्यवर्गः राजा च उभौ सद्वृत्तौ सद्व्यवहाररतौ परस्परानुकूलावित्यर्थः, तिष्ठतः वर्तेते तत्र लक्ष्मीः स्थिरा अनपायिनी विपुला महती तथा संमुखी अनुकूलवर्तिनी भवेत् । शुनीटी.

अन्याधिकारवृत्तं तु न ब्रूयाच्छ्रुतमप्युत ।
राजा न शृणुयादन्यमुखतस्तु कदाचन ॥

अन्यस्य अपरस्य भृत्यस्य अधिकारे वृत्तं जातम्, दोषमिति शेषः, श्रुतमपि ज्ञातमपि न ब्रूयात्, राज्ञे इति शेषः । राजाऽपि कदाचन अन्यमुखतः अपरमुखात् अपरकथां न शृणुयात् । शुनीटी.

न बोधयन्ति च हितमहितं चाधिकारिणः ।
प्रच्छन्नवैरिणस्ते तु दास्यरूपमुपाश्रिताः ॥

ये अधिकारिणः हितं अहितं च न बोधयन्ति न ज्ञापयन्ति, राज्ञे इति शेषः, ते तु दास्यरूपं दासत्वं उपाश्रिताः प्रच्छन्नवैरिणः गूढशत्रवः । दासरूपेण प्रच्छन्नं वैरं साधयन्तीत्यर्थः । शुनीटी.

हिताहितं न शृणोति राजा मन्त्रिमुखाच्च यः ।
स दस्यू राजरूपेण प्रजानां धनहारकः ॥

यश्च राजा मन्त्रिमुखात् हिताहितं न शृणोति स राजरूपेण प्रजानां धनहारकः दस्युः । दस्युर्यथा प्रजानां धनहारकस्तथा स इत्यर्थः । शुनीटी.

---

* एतद्व्याख्यानं न समीचीनम् । अत्र हि पूर्वोत्तरवाक्ययोः हेतुहेतुमद्भावः । 'यतः' इति च यच्छतेर्निष्ठान्तं रूपम् । तथाचात्र अयमर्थः— यस्मात् नित्यं संसेवनरतः भृत्यः राज्ञः प्रियो भवेत् तस्मात् भृत्यः सुमनाः सुप्रसन्नमनाः सन् यतः यतक्रियः वशी च सन्, न तु स्वैराचारविहारी, यत् स्वस्वाधिकारकार्यं तत् द्राक् कुर्यादिति ।

सुपृष्टव्यवहारा ये राजपुत्रैश्च मन्त्रिणः ।
विरुध्यन्ति च तैः साकं ते तु प्रच्छन्नतस्कराः ॥

ये मन्त्रिणः राजपुत्रैः सुपृष्टः व्यवहारः येभ्यः तथोक्ताः सन्तः तैः राजपुत्रैः साकं सह विरुध्यन्ति विरोधं कुर्वन्ति ते तु प्रच्छन्नतस्कराः गूढचौराः । शुनीटी.

बाला अपि राजपुत्रा नावमान्यास्तु मन्त्रिभिः ।
सदा सुबहुवचनैः संबोध्यास्ते प्रयत्नतः ॥

राजपुत्राः बालाः शिशवोऽपि मन्त्रिभिः न अवमान्याः नावज्ञेयाः । परं सदा सततं सुबहुवचनैः शोभनैः बहुभिः वाक्यैः ते राजपुत्राः प्रयत्नतः अतियत्नेन संबोध्याः सम्यक् बोधनीयाः । शुनीटी.

असदाचरितं तेषां क्वचिद्राज्ञे न दर्शयेत् ।
स्त्रीपुत्रमोहो बलवान् न निन्दा श्रेयसे तयोः ॥

क्वचित् कदाचित् तेषां राजपुत्राणां असत् मन्दं आचरितं कार्यं राज्ञे न दर्शयेत्, भृत्य इति शेषः । स्त्रीपुत्रमोहः स्त्रियां पुत्रे च मोहः ममतारूपाज्ञानं बलवान् अतिप्रबलः, भवतीति शेषः । तस्मात् तयोः स्त्रीपुत्रयोः निन्दा कुत्सनं न श्रेयसे मङ्गलाय, भवतीति शेषः । स्त्रीपुत्रेषु ममतातिशयात् तन्निन्दा न कैरपि सह्यते इति भावः । शुनीटी.

राज्ञोऽवश्यतरं कार्यं प्राणसंशयितं च यत् ।
आज्ञापयाग्रतश्चाहं करिष्ये तत्तु निश्चितम् ।
इति विज्ञाप्य द्राक् कर्तुं प्रयतेत स्वशक्तितः ॥

भृत्यः राज्ञः अग्रतः अवश्यतरं सुनिश्चितं प्राणसंशयितं जीवनसंशयकरं यत् कार्यं तत् निश्चितं करिष्ये इति विज्ञाप्य प्रतिश्रुत्य द्राक् झटिति स्वशक्तितः निजसामर्थ्यानुसारेण कर्तुं प्रयतेत । शुनीटी.

प्राणानपि च संदद्यान्महत्कार्ये नृपाय च ।
भृत्यः कुटुम्बपुष्ट्यर्थं नान्यथा तु कदाचन ॥

भृत्यः कुटुम्बपुष्ट्यर्थं परिजनभरणार्थं महत्कार्ये महति संकटे कार्ये, आपतिते इति शेषः, नृपाय प्राणानपि संदद्यात् । प्राणव्ययेऽपि नृपकार्ये अपराङ्मुखो भवेदिति भावः । अन्यथा कुटुम्बभरणाभावे तु कदाचन न, प्राणान् दद्यादिति शेषः । शुनीटी.

भृत्या धनहराः सर्वे युक्त्या प्राणहरो नृपः ॥

सर्वे भृत्याः युक्त्या युक्तिमाश्रित्य हेतुमवलम्ब्येत्यर्थः, धनहराः, राज्ञ इति शेषः । नृपोऽपि प्राणहरः, भृत्यानामिति शेषः । युक्तिमाश्रित्य परस्परं धनप्राणहरौ भृत्यप्रभू इति भावः । शुनीटी.

युद्धादौ सुमहत्कार्ये भृत्या प्राणान् हरेन्नृपः ।
नान्यथा भृतिरूपेण भृत्यो राजधनं हरेत् ॥
अन्यथा हरतस्तौ तु भवतश्च स्वनाशकौ ॥

युक्तिमाह— युद्धादाविति । युद्धादौ सुमहत्कार्ये उपस्थिते नृपः भृत्या वेतनेन भृतिरूपनिष्क्रयेणेत्यर्थः, प्राणान्, भृत्यानामिति शेषः, हरेत् । भृतिलोभेन भृत्या युद्धादौ प्रभुजयार्थिनः प्राणान् त्यजन्तीति भावः । अन्यथा न युद्धादिव्यतिरिक्तविषये तु न, हरेदिति शेषः । भृत्यश्च भृतिरूपेण राजधनं हरेत्, अन्यथा न हरेदिति निष्कर्षः । अन्यथा अन्यप्रकारेण तौ राजभृत्यौ यदि हरतः, प्राणधने इति शेषः, तदा स्वनाशकौ आत्मक्षयकरौ भवतः । तथात्वे उभयविरागात् उभयनाशः अवश्यं भविष्यतीति भावः । शुनीटी.

राजाऽनु युवराजस्तु मान्योऽमात्यादिकैः सदा ।
तन्न्यूनामात्यनवकं तन्न्यूनाधिकृतो गणः ।
मन्त्रितुल्यश्चाऽऽयुतिको न्यूनः साहस्रिको मतः ॥

राजा अमात्यादिकैः सदा मान्यः । युवराजस्तु अनु राजापेक्षया न्यूनतया मान्य इत्यर्थः । अमात्यनवकं अमात्यादयः नव प्रकृतयः तन्न्यूनाः युवराजापेक्षया न्यूनतया मान्याः, अनुजीविभिरिति शेषः । तन्न्यूनाधिकृतो गणः अधिकारिवर्गः तदपेक्षया न्यूनतया मान्य इत्यर्थः । मन्त्री न्यूनः साहस्रिकः सहस्रसंख्यकधनशाली यस्मात् तादृशः अयुतिकः दशसहस्रधनशाली च तुल्यः समं माननीयौ एतौ इत्यर्थः । शुनीटी.

न क्रीडयेद्राजसमं क्रीडिते तं विशेषयेत् ।
नावमान्या राजपत्नी कन्या ह्यपि च मन्त्रिभिः ॥

राजसमं राज्ञा सहितं न क्रीडयेत् न विहरेत् । क्रीडिते सति तं राजानं विशेषयेत् न पराजितं कुर्यात् ।

तेन सह क्रीडने तदवमाननं न कुर्यादिति भावः। राजपत्नी कन्या च, राज्ञ इति शेषः, मन्त्रिभिः न अवमान्या नावज्ञेया। शुनीटी.

**राजसंबन्धिनः पूज्याः सुहृदश्च यथार्हतः।**
**नृपाहूतस्तुरं गच्छेत्त्यक्त्वा कार्यशतं महत्॥**

राजसंबन्धिनः सुहृदश्च, राज्ञ इति शेषः, यथार्हतः यथायोग्यं पूज्याः, भृत्यैरिति शेषः। नृपाहूतः राज्ञा आहूतस्तु भृत्यः महत् कार्यशतमपि त्यक्त्वा तुरं सत्वरं गच्छेत्। शुनीटी.

**मित्रायापि न वक्तव्यं राजकार्यं सुमन्त्रितम्।**
**भृतिं विना राजद्रव्यमदत्तं नाभिलाषयेत्॥**

सुमन्त्रितं कृतमन्त्रणं राजकार्यं मित्राय सुहृदेऽपि न वक्तव्यम्। किंच, भृतिं वेतनं विना अदत्तं अन्यत् राजद्रव्यं न अभिलाषयेत् नेच्छेत्। स्वार्थे ण्यन्तोऽयं लषधातुः। शुनीटी.

**राजाज्ञया विना नेच्छेत्कार्यमाध्यस्थिकीं भृतिम्।**
**न निहन्याद्द्रव्यलोभात्सत्कार्यं यस्य कस्यचित्॥**

राजाज्ञया विना कार्यमाध्यस्थिकीं भृतिं कार्यस्य मध्यवर्तिनीं भृतिं वेतनं कार्यमसमाप्य भृतिमित्यर्थः, न इच्छेत् न गृह्णीयात्। तथा द्रव्यलोभात् धनलोभात् यस्य कस्यचित् सत्कार्यं न निहन्यात् न नाशयेत्। शुनीटी.

**स्वस्त्रीपुत्रधनप्राणैः काले संरक्षयेन्नृपम्।**
**उत्कोचं नैव गृह्णीयान्नान्यथा बोधयेन्नृपम्॥**

काले स्वस्त्रीपुत्रधनप्राणैः स्वकीयैः स्त्रीपुत्रधनप्राणैः नृपं संरक्षयेत्। उत्कोचं नैव गृह्णीयात्। तथा नृपं अन्यथा न बोधयेत्। शुनीटी.

**अन्यथा दण्डकं भूपं नित्यं प्रबलदण्डकम्।**
**निगृह्य बोधयेत्सम्यगेकान्ते राज्यगुप्तये॥**

अन्यथा अयथाविधि दण्डकं दण्डयितारं नित्यं सततं प्रबलदण्डकं तीक्ष्णदण्डं च भूपं निगृह्य राज्यगुप्तये राज्यरक्षणाय एकान्ते रहसि सम्यक् बोधयेत् शिक्षयेत्। शुनीटी.

**हितं राज्ञश्चाहितं यल्लोकानां तन्न कारयेत्।**
**नवीनकरशुल्काद्यैर्लोक उद्विजते ततः॥**

यत् राज्ञः हितं किंतु लोकानां प्रजानां अहितं तन्न कारयेत्। यस्मात् नवीनैः नूतनैः करैः राजस्वैः शुल्काद्यैश्च लोकः प्रजा ततः तस्मात् नृपात् उद्विजते विरज्यते। अतस्तादृशं राजहितं न कर्तव्यमिति भावः। शुनीटी.

दुष्टः अधार्मिकश्च राजा त्याज्यः, तत्स्थाने तत्कुलजस्य गुणवतः स्थापनं पुरोहितस्य कर्तव्यम्

**गुणनीतिबलद्वेषी कुलभूतोऽप्यधार्मिकः।**
**नृपो यदि भवेत्तं तु त्यजेद्राष्ट्रविनाशकम्॥**

कुलभूतः महाकुलप्रसूतोऽपि नृपः यदि गुणनीतिबलद्वेषी गुणद्वेषी नीतिद्वेषी बलद्वेषी तथा अधार्मिकः भवेत्, राष्ट्रस्य राज्यस्य विनाशकं क्षयकारकं तं तु त्यजेत्। शुनीटी.

**तत्पदे तस्य कुलजं गुणयुक्तं पुरोहितः।**
**प्रकृत्यनुमतिं कृत्वा स्थापयेद्राज्यगुप्तये॥**

पुरोहितः प्रकृतीनां प्रधानपुरुषाणां अनुमतिं कृत्वा गृहीत्वा गुणयुक्तं गुणवन्तं तस्य कुनृपस्य कुलजं वंशभवं तत्पदे तस्य राज्ञः पदे राज्यगुप्तये राज्यस्य रक्षणाय स्थापयेत् अभिषिञ्चेत्। शुनीटी.

राजसभायां भृत्यस्थानानि, राज्ञः सभाप्रवेशविधिः

**सास्त्रो दूरं नृपात्तिष्ठेदस्त्रपाताद्बहिः सदा।**
**सशस्त्रो दशहस्तं तु यथादिष्टं नृपप्रियाः॥**
**पञ्चहस्तं वसेयुर्वै मन्त्रिणो लेखकाः सदा।**
**सेनपैस्तु विना नैव सशस्त्रास्त्रो विशेत्सभाम्॥**

सास्त्रः क्षेपणीयास्त्रसहितः नृपात् दूरं अस्त्रपातात् बहिः बाह्यदेशे सदा तिष्ठेत्। सशस्त्रः शस्त्रसहितस्तु दशहस्तं तु, दूरं तिष्ठेदिति शेषः। §नृपप्रियाः राजप्रणयिनः मन्त्रिणः लेखकाश्च सदा यथादिष्टं आदेशक्रमेण पञ्चहस्तं दूरं वै निश्चितं वसेयुः। †राजा तु सेनपैः सेनापतिभिः

§ 'नृपप्रियः यथादिष्टम्, मन्त्रिणो लेखकाश्च पञ्चहस्तम्' इति वाक्यभेदेनैव योजना साध्वी।

† 'सेनपातिरिक्तः कोऽपि भृत्यः सशस्त्रास्त्रः सन् न विशेत्' इत्येवार्थः साधुः।

विना सशस्त्रास्त्रः अस्त्रशस्त्रसहितः सन् सभां नैव विशेत्।
शुनीटी.

**पुरोहितः श्रेष्ठतरः श्रेष्ठः सेनापतिः स्मृतः ।**
**समः सुहृच्च संबन्धी ह्युत्तमा मन्त्रिणः स्मृताः ॥**

पुरोहितः श्रेष्ठतरः सर्वेभ्यः श्रेष्ठः इत्यर्थः । सेनापतिः श्रेष्ठः स्मृतः कथितः । सुहृच्च संबन्धी च समः तुल्यः । मन्त्रिणस्तु उत्तमाः उत्कृष्टाः स्मृताः । शुनीटी.

**अधिकारिगणो मध्योऽधमौ दर्शकलेखकौ ।**
**ज्ञेयोऽधमतमो भृत्यः परिचारगणः सदा ।**
**परिचारगणान्न्यूनो विज्ञेयो नीचसाधकः ॥**

अधिकारिगणः अपरकर्मचारिवर्गः मध्यमः । दर्शकलेखकौ अधमौ निकृष्टौ । भृत्यः परिचारकगणः सदा अधमतमः अतिनिकृष्टः ज्ञेयः । परिचारगणात् नीचसाधकः नीचकर्मकारकः न्यूनः निकृष्टतमः विज्ञेयः ।
शुनीटी.

**पुरोगमनमुत्थानं स्वासने संनिवेशनम् ।**
**कुर्यात्स कुशलप्रश्नं क्रमात्सुस्मितदर्शनम् ॥**
**राजा पुरोहितादीनां त्वन्येषां स्नेहदर्शनम् ।**
**अधिकारिगणादीनां सभास्थश्च निरालसः ॥**

सः राजा पुरोहितादीनां क्रमात् यथाक्रमं पुरः अग्रे गमनं उत्थानं आसनात् गात्रोत्थानं स्वस्य निजस्य आसने संनिवेशनं कुशलप्रश्नं तथा सुस्मितदर्शनं सहास्यदर्शनम्, अन्येषां तु अधिकारिगणादीनां सभास्थः सभायां स्थितः, न तु उत्थित इत्यर्थः, तथा निरालसः आलस्यरहितश्च सन् स्नेहदर्शनं सस्नेहमवलोकनं कुर्यात् ।
शुनीटी.

**विद्यावत्सु शरच्चन्द्रो निदाघार्को द्विषत्सु च ।**
**प्रजासु च वसन्तार्क इव स्यात्त्रिविधो नृपः ॥**

नृपः त्रिविधः त्रिप्रकारः स्यात् भवेत् । यथा–विद्यावत्सु पण्डितेषु शरच्चन्द्र इव, द्विषत्सु शत्रुषु निदाघार्कः ग्रीष्मकालसूर्यः इव, तथा प्रजासु वसन्तार्कः वसन्तकालिकः सूर्यः इव । एकः इवशब्दः सर्वत्र संबध्यते ।
शुनीटी.

राज्ञः भृत्येषु वर्तनविवेकः, भृत्यैः परिहासादीनि वर्जनीयानि राज्ञा

**यदि ब्राह्मणभिन्नेषु मृदुत्वं धारयेन्नृपः ।**
**परिभवन्ति तं नीचा यथा हस्तिपका गजम् ॥**

नृपः यदि ब्राह्मणभिन्नेषु । * ब्राह्मणशब्दोऽत्र द्विजातिपरः । ब्राह्मणक्षत्रियवैश्यव्यतिरिक्तेषु शूद्रेष्वित्यर्थः । मृदुत्वं धारयेत् मार्दवेन व्यवहरेदित्यर्थः । तदा नीचाः शूद्राः हस्तिपकाः गजमिव तं नृपं परिभवन्ति । इतरेषु स्पर्धा न दातव्येति भावः । शुनीटी.

**भृत्याद्यैर्यन्न कर्तव्याः परिहासाश्च क्रीडनम् ।**
**अपमानास्पदे ते तु राज्ञो नित्यं भयावहे ॥**

भृत्याद्यैः अधीनस्थजनैरित्यर्थः, क्रीडनं परिहासाश्च न कर्तव्याः । यत् यस्मात् ते परिहासक्रीडने राज्ञः अपमानास्पदे अपमानकारके नित्यं सततं भयावहे भयजनके च, भवत इति शेषः । शुनीटी.

**पृथक्पृथक्ख्यापयन्ति स्वार्थसिद्ध्यै नृपाय ते ।**
**स्वकार्यं गुणवत्कृत्वा सर्वे स्वार्थपरा यतः ॥**

यतः ते सहक्रीडनादिकारिणः भृत्याः स्वार्थपराः सन्तः स्वार्थस्य स्वकार्यस्य सिद्ध्यै साधनाय स्वकार्यं निजकार्यमेव गुणवत्, नान्यकार्यमिति भावः, इति कृत्वा नृपाय पृथक्पृथक् ख्यापयन्ति बोधयितुं यतन्ते इत्यर्थः ।
शुनीटी.

**विकल्पन्तेऽवमन्यन्ति लङ्घयन्ति च तद्वचः ।**
**राजभोज्यानि भुञ्जन्ति न तिष्ठन्ति स्वके पदे ॥**
**विस्रंसयन्ति तन्मन्त्रं विवृण्वन्ति च दुष्कृतम् ।**
**भवन्ति नृपवेशा हि वञ्चयन्ति नृपं सदा ॥**
**तत्स्त्रियं सज्जयन्ति स्म राज्ञि क्रुद्धे हसन्ति च ।**
**व्याहरन्ति च निर्लज्जा हेलयन्ति नृपं क्षणात् ॥**
**आज्ञामुल्लङ्घयन्ति स्म न भयं यान्त्यकर्मणि ।**
**एते दोषाः परीहासक्षमाक्रीडोद्भवा नृपे ॥**

नृपे राजनि विषये यः परिहासः या क्षमा या च क्रीडा तदुद्भवाः एते दोषाः, भवन्तीति शेषः । यथा–

* ब्राह्मणपदव्याख्यानं न सम्यक् । रूढार्थत्यागे कारणानुपलम्भात् ब्राह्मणजातिपर एवात्र ब्राह्मणशब्दः ।

तादृशा भृत्याः तस्य राज्ञः वचः वाक्यं विकल्पन्ते तर्केण परिहरन्ति अवमन्यन्ति कुत्सयन्ति लङ्घयन्ति च । तथा राजभोज्यानि वस्तूनि भुञ्जन्ति राजाज्ञां विना भक्षयन्ति स्वके निजे पदे न तिष्ठन्ति च । न स्वपदोचितं व्यवहरन्ति चेत्यर्थः । किंच, तस्य राज्ञः मन्त्रं विध्वंसयन्ति प्रकाशयन्ति । दुष्कृतं मन्दकार्यं विवृण्वन्ति प्रकटयन्ति । नृपवेशाः राजपरिच्छदधारिणः भवन्ति । किं बहुना ? सदा नृपं वञ्चयन्ति प्रतारयन्ति । अपि च, तस्य राज्ञः स्त्रियं राजमहिषीमित्यर्थः, सज्जयन्ति अनुरोधयन्ति । स्वार्थायेति भावः । राज्ञि क्रुद्धे सत्यपि हसन्ति । निर्लज्जाः सन्तः व्याहरन्ति कथयन्ति । क्षणात् अल्पेनैव क्षणेन नृपं हेलयन्ति नमयन्ति । आज्ञामुल्लङ्घयन्ति । तथा अकर्मणि मन्दकार्ये कृतेऽपीत्यर्थः, भयं न यान्ति न प्राप्नुवन्ति च । स्मद्वयं पादपूरणार्थम् । शुनीटी.

भृत्येन राजकार्ये लेख्यप्रमाणमेवानुसरणीयम्

न कार्यं भृतकः कुर्यान्नृपलेखाद्विना कचित् ।
नाऽऽज्ञापयेल्लेखनेन विनाऽल्पं वा महन्नृपः ॥

भृतकः भृत्यः क्वचित् नृपलेखाद्विना राजलिपिमन्तरेण कार्यं न कुर्यात् । नृपः वा राजा च लेखनेन विना अल्पं वा महत् कार्यं न आज्ञापयेत् । शुनीटी.

भ्रान्तेः पुरुषधर्मत्वाल्लेख्यं निर्णायकं परम् ।
अलेख्यमाज्ञापयति ह्यलेख्यं यत्करोति यः ।
राजकृत्यमुभौ चोरौ तौ भृत्यनृपती सदा ॥

भ्रान्तेः भ्रमस्य पुरुषधर्मत्वात् सर्वपुरुषेषु संभाव्यमानत्वादित्यर्थः, लेख्यं लिपिः परं प्रधानं निर्णायकं प्रमापकम् । यः राजा अलेख्यं लेख्यं विना आज्ञापयति, यश्च भृत्यः यत् अलेख्यं लेख्यं विना राजकृत्यं करोति, तौ उभौ भृत्यनृपती सदा चोरौ, विज्ञेयाविति शेषः । शुनीटी.

नृपसंचिह्नितं लेख्यं नृपस्तन्न नृपो नृपः ॥

नृपसंचिह्नितं तत् लेख्यं एव नृपः, नृपः नृपः न, लिपेरेव राजकार्यकारित्वादिति भावः । शुनीटी.

भृत्येषु वाक्पारुष्यादि शत्रुत्वकरम्

[1]वाक्पारुष्यान्न्यूनभृत्या स्वामी प्रबलदण्डतः ।
भृत्यं प्रशिक्षयेन्नित्यं शत्रुत्वं त्वपमानतः ॥

स्वामी वाक्पारुष्यात् निर्भर्त्सनात्, न्यूनभृत्या वेतनखण्डनेन, प्रबलदण्डतः गुरुदण्डात्, अपमानतः अन्यस्मादपि मानखण्डनादित्यर्थः, भृत्यं नित्यं सततं शत्रुत्वं प्रशिक्षयेत् शिक्षयति । भृत्यमनसि शत्रुभावमुपदिशतीत्यर्थः । तादृशव्यवहारेण भृत्याः शत्रवो भवन्तीति भावः । शुनीटी.

यथागुणं भृत्यानां भृतिसंमानादिविधिः

भृतिदानेन संतुष्टा मानेन परिवर्धिताः ।
सान्त्विता मृदुवाचा ये न त्यजन्त्यधिपं हि ते ॥

ये भृत्याः भृतिदानेन संतुष्टाः मानेन परिवर्धिताः तथा मृदुवाचा मधुरवचसा सान्त्विताः ते हि निश्चितं अधिपं स्वामिनं न त्यजन्ति । शुनीटी.

अधमा धनमिच्छन्ति धनमानौ तु मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥

अधमाः जनाः धनं इच्छन्ति, मध्यमा धनमानौ, उत्तमास्तु केवलं मानं इच्छन्ति । हि यतः मानः महतां धनम् । शुनीटी.

यथागुणान्स्वभृत्यांश्च प्रजाः संरञ्जयेन्नृपः ।
शाखाप्रदानतः कांश्चिदपरान् फलदानतः ॥
अन्यान् सुचक्षुषा हास्यैस्तथा कोमलया गिरा ।
सुभोजनैः सुवसनैस्ताम्बूलैश्च धनैरपि ॥
कांश्चित्सुकुशलप्रश्नैरधिकारप्रदानतः ।
वाहनानां प्रदानेन योग्याभरणदानतः ॥
छत्रातपत्रचमरदीपिकानां प्रदानतः ।
क्षमया प्रणिपातेन मानेनाभिगमेन च ॥
सत्कारेण च ज्ञानेन ह्यादरेण शमेन च ।
प्रेम्णा समीपवासेन स्वार्धासनप्रदानतः ।
संपूर्णासनदानेन स्तुत्योपकारकीर्तनात् ॥

नृपः यथागुणं गुणानुसारेण स्वभृत्यान् प्रजाश्च संरञ्जयेत् संतोषयेत् । तथा च कांश्चित् जनान् शाखा-

(१) शुनी. २।४१५–४३२.

प्रदानतः शाखाप्रदानेन यत्किंचनदानेनेत्यर्थः, अपरान् जनान् फलदानेन ततोऽप्यधिकदानेनेत्यर्थः, अन्यान् जनान् सुचक्षुषा शोभनदर्शनेन हास्यैः कोमलया मधुरया गिरा वाचा सुभोजनैः सुमिष्टाहारदानैः सुवसनैः शोभनवस्त्रदानैः ताम्बूलैः ताम्बूलदानैः तथा धनैरपि, कांश्चित् जनान् सुकुशलप्रश्नैः सुमङ्गलवार्तापृच्छाभिः अधिकारप्रदानतः कार्यभारप्रदानैः वाहनानां हस्त्यश्वादीनां प्रदानेन योग्यानामाभरणानां प्रदानतः प्रदानेन छत्राणां पत्रनिर्मितवृष्टिरौद्रादिनिवारकाणां आतपत्राणां वस्त्रनिर्मितवृष्ट्यादिनिवारकाणां चमराणां चामराणामित्यर्थः, तथा दीपिकानां प्रदानतः प्रदानेन क्षमया दोषमार्जनेन प्रणिपातेन गुरुजनप्रणामेन मानेन अभिगमेन समभिव्याहारगमनेन सत्कारेण पूजनेन ज्ञानेन शास्त्रीयप्रसङ्गेन आदरेण यत्नेन शमेन शान्त्या प्रेम्णा स्नेहेन समीपवासेन संनिधिस्थित्या स्वस्य अर्धासनस्य आसनार्धस्य प्रदानतः प्रदानेन संपूर्णस्य आसनस्य स्वोपवेशनीयस्य दानेन स्तुत्या गुणकीर्तनेन तथा उपकारकीर्तनात्, कृतज्ञतयेत्यर्थः, सर्वान् जनान् यथायोग्यं रञ्जयेदिति समुदायार्थः। शुनीटी.

भृत्यानां कार्याङ्कनम्

यत्कार्ये विनियुक्ता ये कार्याङ्कैरङ्कयेच्च तान्।
लोहजैस्ताम्रजै रीतिभवै रजतसंभवैः॥

सौवर्णै रत्नजैर्वाऽपि यथायोग्यैः स्वलाञ्छनैः।
प्रविज्ञानाय दूरात्तु वस्त्रैश्च मुकुटैरपि॥

ये भृत्याः यत्कार्ये यस्मिन् कार्ये विनियुक्ताः तान् दूरात् प्रविज्ञानाय अस्मिन् कार्ये अयं नियुक्तः इति झटिति परिज्ञानाय लोहजैः ताम्रजैः रीतिभवैः पित्तलजैरित्यर्थः, रजतसंभवैः रौप्यनिर्मितैः सौवर्णैः सुवर्णजैः रत्नजैः वाऽपि यथायोग्यैः स्वलाञ्छनैः स्वज्ञापकैः वस्त्रैः मुकुटैश्च कार्याङ्कैः कार्यचिह्नैः अङ्कयेत् चिह्नितान् कुर्यात्। शुनीटी.

वाद्यवाहनभेदैश्च भृत्यान् कुर्यात्पृथक्पृथक्।
स्वविशिष्टं च यच्चिह्नं न दद्यात्कस्यचिन्नृपः॥

किंचेति चार्थः। नृपः भृत्यान् वाद्यानां वाहनानां च भेदैः अस्य भृत्यस्य गमनागमनादिषु वाद्यं स्यात्, अयं च वाहनेन गतायातं कुर्यादित्येवंरूपैः विशेषैश्च भृत्यान् विशिष्टान् अधिकारिणः इत्यर्थः, पृथक्पृथक् विशेषचिह्नितानित्यर्थः, कुर्यात्। तथा स्वस्य विशिष्टं यत् चिह्नं छत्रचामरादिकं तत् कस्यचिन्न दद्यात्। शुनीटी.

पुरोहितादिनियोजने चातुर्वर्ण्यविवेकः

*दश प्रोक्ताः पुरोधाद्या ब्राह्मणाः सर्व एव ते।
अभावे क्षत्रिया योज्यास्तदभावे तथोरुजाः॥

नैव शूद्रास्तु संयोज्या गुणवन्तोऽपि पार्थिवैः॥

†भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः।
ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा॥

शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः।
§सेनाधिपः क्षत्रियस्तु ब्राह्मणस्तदभावतः॥

न वैश्यो न च वै शूद्रः कातरश्च कदाचन।
सेनापतिः शूर एव योज्यः सर्वासु जातिषु॥

ससंकरचतुर्वर्णधर्मोऽयं नैव पावनः।
यस्य वर्णस्य यो राजा स वर्णः सुखमेधते॥

अयं ससंकराणां मूर्धावसिक्ताम्बष्ठप्रभृतिसहितानां चतुर्णां वर्णानां ब्राह्मणादीनां धर्मः राजधर्मः न पावनः, पापाश्रयादिति भावः। यस्य वर्णस्य जातेरित्यर्थः, यः राजा राजा यद्वर्णीय इत्यर्थः, सः वर्णः सुखं एधते प्राप्नोति। शुनीटी.

---

* 'दश प्रोक्ताः' इत्यादिश्लोकद्वयस्य व्याख्यानं 'प्रकृतयः–मन्त्रिणः' इत्यस्मिन् प्रकरणे (पृ. १२६९) द्रष्टव्यम्।

† 'भागग्राही' इत्यादिसार्धश्लोकस्य व्याख्यानं 'राज्ञः सहायाः' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

§ 'सेनाधिपः' इत्यादिसार्धश्लोकस्य व्याख्यानं 'राज्ञः सहायाः– सेनापतिः' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

त्याज्यराजभृतकविवेकः

**नोपकृतं मन्यते स्म न तुष्यति सुसेवनैः ।**
**कथान्तरे न स्मरति शङ्कते प्रलपत्यपि ।**
**क्षुब्धस्तनोति मर्माणि तं नृपं भृतकस्त्यजेत् ॥**

यः नृपतिः उपकृतं उपकारं न मन्यते न स्वीकरोति, सुसेवनैः सुपरिचर्याभिश्च न तुष्यति न तुष्टो भवति, कथान्तरे प्रसङ्गविशेषे न स्मरति, प्रत्युत शङ्कते, तथा प्रलपति वृथा वाक्यं कथयति, तथा क्षुब्धः सन् मर्माणि तनोति पीडयति च, भतकः भृत्यः तं नृपं त्यजेत् । शुनीटी.

[1]**नृपस्यासद्‌गुणरताः के गुणद्वेषिणो नराः ।**
**असद्‌गुणोदासीनाः के हन्यात्तान्विमृशन्नृपः ।**
**सुखासक्तांस्त्यजेद्भृत्यान् गुणिनोऽपि नृपः सदा ॥**

के नराः असद्‌गुणेषु रताः ? के वा नृपस्य गुणद्वेषिणः ? के च असद्‌गुणेषु उदासीनाः उपेक्षमाणाः ? नृपः विमृशन् विचारयन् तान् हन्यात् । किंच, नृपः गुणिनोऽपि भृत्यान् सदा सुखेषु आसक्तान् त्यजेत् । शुनीटी.

अन्तःपुरधनादिव्ययबाह्यकृत्यादिषु नियोज्या भृत्याः, भिन्नेषु भृत्येषु कर्तव्यम्

**सुस्वान्तलोकविश्वस्ता योज्यास्त्वन्तःपुरादिषु ।**
**धार्याः सुस्वान्तविश्वस्ता धनादिव्ययकर्मणि ॥**

सुस्वान्ताः सदन्तःकरणाः लोकेषु जगत्सु विश्वस्ताः जनाः अन्तःपुरादिषु योज्याः नियोक्तव्याः । तथा सुस्वान्ताः विश्वस्ताश्च जनाः धनादीनां व्ययकर्मणि धार्याः नियोज्याः । शुनीटी.

**तथा हि लोकविश्वस्तो बाह्यकृत्ये नियुज्यते ।**
**अन्यथा योजितास्ते तु परिवादाय केवलम् ॥**

तथा लोकेषु विश्वस्तो जनः बाह्यकृत्ये बहिःकार्ये नियुज्यते हि नियुज्यते एव । ते तु अन्तःपुरधनादि-(व्यय)बाह्यकर्मसु योजिताः जनाः केवलं परिवादाय निन्दायै भवन्तीति भावः । शुनीटी.

(१) शुनी. ४।७।३९२–३९७.

**शत्रुसंबन्धिनो ये ये भिन्ना मन्त्रिगणादयः ।**
**नृपदुर्गुणतो नित्यं हृतमाना गणाधिकाः ।**
**स्वकार्यसाधका ये तु सुभृत्या पोषयेच्च तान् ॥**

ये ये शत्रुसंबन्धिनः मन्त्रिगणादयः ये च गणाधिकाः दलश्रेष्ठाः नृपस्य शत्रोः दुर्गुणतः दोषेण नित्यं सततं हृतमानाः मानभ्रष्टाः अत एव भिन्नाः विच्छेदं गताः अथ च स्वस्य आत्मनः कार्यसाधकाः तान् सुभृत्या उत्कृष्टवेतनेन पोषयेत् । शुनीटी.

**लोभेनासेवनाद्भिन्नास्तेष्वर्धां भृतिमावहेत् ।**
**शत्रुत्यक्तान् सुगुणिनः सुभृत्या पालयेन्नृपः ॥**

ये च लोभेन अधिकप्राप्त्याशया असेवनात् सेवाया-मुपेक्षणादित्यर्थः, भिन्नाः शत्रुतः विच्छिन्नाः, नृपः तेषु अर्धां भृतिं पूर्णभृतेरर्धमित्यर्थः, आवहेत् दद्यात् । तथा शत्रुत्यक्तान् अथ च सुगुणिनः जनान् सुभृत्या सुवेतनेन पालयेत् । शुनीटी.

परराष्ट्रहरणे भृतिविचारः

**परराष्ट्रे हृते दद्याद्भृतिं भिन्नावधि तथा ।**
**दद्यादर्धां तस्य पुत्रे स्त्रियै पादमितां किल ॥**

परराष्ट्रे शत्रुराज्ये हृते आत्मसात्कृते सति भिन्नावधिं राज्यहरणदिवसावधि भृतिं भरणोपयोगिधनं दद्यात् । तथा तस्य पुत्रे अर्धां स्त्रियै पादमितां चतुर्थभागरूपां भृतिं किल निश्चितं दद्यात् । शुनीटी.

स्वामिभृत्ययोः परस्परं कृतज्ञता प्रीतिश्च श्रेयस्करी

[1]**दानमानैर्वियुक्तोऽपि न भृत्यो भूपतिं त्यजेत् ।**
**समये शत्रुसान्नैव गच्छेज्जीवधनाशया ॥**

भृत्यः दानेन मानेन च वियुक्तः विरहितः अपि भूपतिं स्वामिनं न त्यजेत् । तथा जीवधनाशया जीवनोपयोगिधनप्रत्याशया शत्रुसात् नैव गच्छेत् । शत्रो-रधीनो न भवेदित्यर्थः । शुनीटी.

**मेघोदकैस्तु या पुष्टिः सा किं नद्यादिवारितः ।**
**प्रजापुष्टिर्नृपद्रव्यैस्तथा किं धनिनां धनात् ॥**

मेघोदकैः वारिदजलैः या पुष्टिः ; शस्यानामिति शेषः, सा नद्यादीनां वारितः जलैः किं स्यात् ?

(१) शुनी. ५।७–८.

नैवेत्यर्थः । यथा नृपस्य द्रव्यैः राजप्रसादलब्धैरिति भावः, प्रजानां पुष्टिः, धनिनां धनात् तथा पुष्टिः किम् ? नैवेत्यर्थः । शुनीटी.

**[1]भृतिं विना स्वामिकार्यं भृत्यः कुर्यात्समाष्टकम् ।**
**§षोडशाब्दधनी यः स्यादितरोऽर्थानुरूपतः ॥**

यः भृत्यः षोडशाब्दधनी षोडशवर्षीयव्ययोपयोगिधन-संपन्नः स्यात् सः भृतिं विना समाष्टकं अष्टौ वत्सरान् स्वामिकार्यं कुर्यात् । इतरः तद्भिन्नस्तु अर्थानुरूपतः यावदर्थमित्यर्थः, स्वामिकार्यं कुर्यादिति शेषः । शुनीटी.

**निर्धनैरन्नवस्त्रं तु नृपाद्ग्राह्यं न चान्यथा ।**
**यतो भुक्तं सुखं सम्यक् तद्दुःखैर्दुःखितो न चेत् ।**
**विनिन्दति कृतघ्नं तु स्वामी भृत्योऽन्य एव वा ॥**

निर्धनैः दरिद्रैः भृत्यैः नृपात् तथा विपन्नादिति भावः, अन्नवस्त्रं ग्राह्यम् । अन्यथा सधनत्वे न । यतः नृपात् सम्यक् सुखं भुक्तं चेत् यदि तस्य दुःखैः दुरवस्थाभिः दुःखितः न भवेत् तदा स्वामी वा अन्यः कृतज्ञः भृत्यः कृतघ्नं अकृतज्ञं तादृशं भृत्यं विनिन्दति । शुनीटी.

**सकृत्सुभुक्तं यस्यापि तदर्थं जीवितं त्यजेत् ।**
**भृत्यः स एव सुश्लोको नाऽऽपत्तौ स्वामिनं त्यजेत् ।**
**स्वामी स एव विज्ञेयो भृत्यार्थे जीवितं त्यजेत् ॥**

यस्य अन्नं सकृत् एकवारमपि सुभुक्तं भृत्यः तदर्थं जीवितं त्यजेत् । स एव भृत्यः सुश्लोकः पुण्य-कीर्तिः यः आपत्तौ आपदि स्वामिनं न त्यजेत् । तथा स एव स्वामी विज्ञेयः यः भृत्यार्थे भृत्यनिमित्तं जीवितं त्यजेत् । स्वामिभृत्याभ्यां परस्परानुरक्ताभ्यां भवित-व्यमिति भावः । शुनीटी.

§ 'षोडशाब्दधनी' इत्यत्र 'षोडशाब्दं धनी' इति पुस्तकान्तरस्थः पाठः ।

(१) शुनी. ५।४९–५३.

**न रामसदृशो राजा पृथिव्यां नीतिमानभूत् ।**
**सुभृत्यता तु यन्नीत्या वानरैरपि स्वीकृता ॥**

पृथिव्यां रामेण सदृशः नीतिमान् राजा न अभूत् । यस्य नीत्या सुनयेन वानरैरपि सुभृत्यता स्वीकृता । शुनीटी.

**अपि राष्ट्रविनाशाय चोराणामेकचित्तता ।**
**शक्ता भवेन्न किं शत्रुनाशाय नृपभृत्ययोः ॥**

चोराणां तस्कराणामपि एकचित्तता ऐकमत्यं राष्ट्रस्य विनाशाय उच्छेदाय शक्ता समर्था भवेत् । शत्रुनाशाय नृपभृत्ययोः सा किं न भवेत् ? अपि तु भवेदेवेत्यर्थः । शुनीटी.

त्रिविधा भृतकाः उत्तममध्यमाधमभेदेन, तेषामधिकारभेदेन परिचारकाश्वरथयानादीनि प्रकल्पनीयानि

**[1]स्वीया तथा च सामान्या परकीया तु स्त्री यथा ।**
**त्रिविधो भृतकस्तद्वदुत्तमो मध्यमोऽधमः ॥**

स्त्री स्वीया सामान्या साधारणी परकीया चेति त्रिविधा, तथा भृतकः उत्तमः मध्यमः अधमश्चेति त्रिविधः । शुनीटी.

**स्वामिन्येवानुरक्तो यो भृतकस्तूत्तमः स्मृतः ।**
**सेवते पुष्टभृतिदं प्रकरं स च मध्यमः ।**
**पुष्टोऽपि स्वामिनाऽव्यक्तं भजतेऽन्यं स चाधमः ॥**

यः भृतकः स्वामिनि एव अनुरक्तः स उत्तमः स्मृतः । यः पुष्टभृतिदं पर्याप्तवेतनदायिनं प्रकरं अधि-कारिणं स्वामिनमित्यर्थः, सेवते पर्याप्तवेतनलोभेन, न त्वनुरागेणेति भावः, स मध्यमः । यश्च स्वामिना पुष्टोऽपि सम्यक् पालितोऽपि अव्यक्तं गूढं अन्यं भजते सः अधमः । शुनीटी.

**†उपकरोत्यपकृतो ह्युत्तमोऽप्यन्यथाऽधमः ।**
**मध्यमः साम्यमन्विच्छेद्परः स्वार्थतत्परः ॥**

† योऽपकृतोऽप्युपकरोति स उत्तमः, य उपकृतोऽप्यपकरोति सोऽधमः, योऽपरः स्वार्थतत्परः सन् साम्यमन्विच्छेत् उपकृतः उपकरोति अपकृतः अपकरोतीत्यर्थः, स मध्यम इति सरलार्थः ।

(१) शुनी. ५।६६–६८.

यः अपकृतोऽपि उपकरोति स हि स एव उत्तमः। अन्यथा अधमः। मध्यमः भृतकः स्वाम्यं अन्विच्छेत् आप्तुमभिलषेत्। अपरः अधमः स्वार्थेषु स्वकार्येषु तत्परः। शुनीटी.

'दशग्रामी शतानीकः परिचारकसंयुतौ।
अश्वरथौ विचरेयातां ग्रामपा ह्यपि चाश्वगाः॥

दशग्रामी दशग्रामाधिपः शतानीकः शतसैन्याधिपश्च परिचारकैः भृत्यैः संयुतौ परिवृतौ तथा अश्वरथौ अश्वारूढौ सन्तौ विचरेयाताम्। ग्रामपाः एकग्रामाधिपतयः अपि अश्वगाः अश्वारूढाः विचरेयुरित्यर्थः। शुनीटी.

साहस्रिकः शतग्रामी एकाश्वरथवाहनौ।
दशशस्त्रास्त्रिभिर्युक्तौ गच्छेतां वाऽश्वसंगतौ॥

सहस्रसेनाधिपतिः शतग्रामी शतग्रामाधिपतिश्च दशशस्त्रास्त्रिभिः दशभिः शस्त्रिभिः अस्त्रिभिश्च युक्तौ एकाश्वरथवाहनौ एकाश्वयुतरथारूढौ वा अश्वसंगतौ अश्वारूढौ गच्छेताम्। शुनीटी.

सहस्रग्रामपो नित्यं नराश्वद्व्यश्वयानगः।
आयुतिको विंशतिभिः सेवकैर्हस्तिना व्रजेत्॥

सहस्रग्रामपः सहस्रग्रामाधिपतिः आयुतिकः दशसहस्रसैन्याध्यक्षश्च विंशतिभिः सेवकैः युतः तथा नराश्वद्व्यश्वयानगः नरयानं शिबिका, तद्गामी अश्वगामी वा द्व्यश्वयानगः अश्वद्वययुतरथगामी वा हस्तिना गजारूढः सन्नित्यर्थः, व्रजेत् गच्छेत्। शुनीटी.

अयुतग्रामपः सर्वयानैश्च चतुरश्वगः।
पञ्चायुती सेनपोऽपि संचरेद्बहुसेवकः॥

अयुतग्रामपः दशसहस्रग्रामाधिपः पञ्चायुतसेनपः अपि बहुसेवकः बहुभृत्यपरिवृतः चतुरश्वगः अश्वचतुष्टययुतरथारूढः सन् संचरेत्। शुनीटी.

यथाधिकाधिपत्यं तु वीक्ष्याऽऽधिक्यं प्रकल्पयेत्।
कल्पयेच्च यथाधिक्यं धनिकेषु गुणिष्वपि॥

यथाधिकाधिपत्यं वीक्ष्य आधिक्यं संमानाधिक्यं प्रकल्पयेत्। तथा धनिकेषु धनवत्सु गुणिष्वपि यथाधिक्यं आधिक्यानुसारेण कल्पयेच्च, संमानमिति भावः। शुनीटी.

श्रेष्ठो न मानहीनः स्यान्न्यूनो मानाधिकोऽपि न।
राष्ट्रे नित्यं प्रकुर्वीत श्रेयोर्थी नृपतिस्तथा॥

यथा श्रेष्ठः मानहीनः न स्यात्, न्यूनः निकृष्टश्च मानाधिकः अधिकमानयुतः न स्यात्, श्रेयोर्थी मङ्गलार्थी नृपतिः राष्ट्रे राज्ये तथा नित्यं प्रकुर्वीत। शुनीटी.

हीनमध्योत्तमानां तु ग्रामे भूमिं प्रकल्पयेत्।
कुटुम्बिनां गृहार्थं तु पत्तनेऽपि नृपः सदा॥

नृपः ग्रामे हीनानां मध्यानां उत्तमानां च तथा कुटुम्बिनां स्वजनानां गृहार्थे पत्तनेऽपि नगरेऽपि भूमिं वासस्थानं प्रकल्पयेत्। शुनीटी.

द्वात्रिंशत्प्रमितैर्हस्तैर्दीर्घाऽर्धा विस्तृताऽधमा।
उत्तमा द्विगुणा मध्या सार्धमाना यथार्हतः।
कुटुम्बसंस्थितिसमा न न्यूना वाऽधिकाऽपि न॥

वासभूमेर्मानमाह— द्वात्रिंशदिति। अधमा वासभूमिः द्वात्रिंशत्प्रमितैर्हस्तैः दीर्घा, विस्तृता अर्धा तदर्धा षोडशहस्तपरिमिता इत्यर्थः। उत्तमा वासभूमिः यथार्हतः यथायोग्यं द्विगुणा अधमद्विगुणा चतुःषष्टिहस्तदीर्घा द्वात्रिंशद्धस्तविस्तृता इत्यर्थः। मध्या वासभूमिः सार्धमाना अर्धसहिताधमा इत्यर्थः, अष्टचत्वारिंशद्धस्तदीर्घा चतुर्विंशतिहस्तविस्तृतेति यावत्। कुटुम्बानां संस्थितौ समा सर्वेषां कुटुम्बानां समाना वासभूमिः कार्या, न्यूना न, अधिकाऽपि च न। शुनीटी.

ग्रामाद्बहिर्वसेयुस्ते ये ये त्वधिकृता नृपैः॥

ये ये नृपैः अधिकृताः कार्ये नियुक्ताः ते ग्रामाद्बहिः वसेयुः। शुनीटी.

अधिकारगुणवर्णानुसारेण भृत्यानां भृतिविचारः, सेवानिवृत्त्यादौ च भृतिभेदाः

*'पुरोधाश्च प्रतिनिधिः प्रधानः सचिवस्तथा॥

(१) शुनी. ५।७६–८४.

* एतदादिसार्धश्लोकचतुष्टयस्य व्याख्यानं 'प्रकृतयः—मन्त्रिणः' इत्यस्मिन् प्रकरणे (पृ. १२६५) द्रष्टव्यम्।

(१) शुनी. २।६९–७३.

मन्त्री च प्राड्विवाकश्च पण्डितश्च सुमन्त्रकः ।
अमात्यो दूत इत्येता राज्ञः प्रकृतयो दश ॥
दशमांशाधिकाः पूर्वं दूतान्ताः क्रमशः स्मृताः ।
अष्टप्रकृतिभिर्युक्तो नृपः कैश्चित्स्मृतः सदा ॥
सुमन्त्रः पण्डितो मन्त्री प्रधानः सचिवस्तथा ।
अमात्यः प्राड्विवाकश्च तथा प्रतिनिधिः स्मृतः ॥
एता भृतिसमास्त्वष्टौ राज्ञः प्रकृतयः सदा ।
इङ्गिताकारतत्त्वज्ञो दूतस्तदनुगः स्मृतः ॥
कालमानं त्रिधा ज्ञेयं चान्द्रं सौरं च सावनम् ।
भृतिदाने सदा सौरं चान्द्रं कौसीदवृद्धिषु ।
कल्पयेत्सावनं नित्यं दिनभृत्येऽवधौ सदा ॥

कालस्य मानं परिमाणं त्रिधा ज्ञेयम्— चान्द्रं चन्द्रवृद्ध्यवधिकं शुक्लप्रतिपदादिरूपमित्यर्थः, सौरं संक्रमणदिनावधिकम्, सावनं उत्पत्तिदिनावधिकं च । भृत्याः वेतनस्य दाने सदा सौरम्, कौसीदवृद्धिषु ऋणव्यवहारेष्वित्यर्थः, नित्यं चान्द्रम्, दिनभृत्ये दैनिकपरिचारके अवधौ च सदा सावनं कल्पयेत् व्यवहरेत् । शुनीटी.

कार्यमाना कालमाना कार्यकालमितिस्त्रिधा ।
भृतिरुक्ता तु तद्विज्ञैः सा देया भाषिता यथा ॥

कार्यमाना कार्यपरिमिता कालमाना कालपरिमिता तथा कार्यकालमितिः कार्यकालोभयपरिमिता इत्यर्थः, त्रिधा त्रिविधा भृतिः तज्ज्ञैः पण्डितैः उक्ता । यथा भाषिता उक्ता सा भृतिः देया । शुनीटी.

अयं भारस्त्वया तत्र स्थाप्यस्त्वैतावतीं भृतिम् ।
दास्यामि कार्यमाना सा कीर्तिता तद्विदेशकैः ॥

त्वया तत्र अयं भारः स्थाप्यः रक्षितव्यः, (मया ?) एतावतीं भृतिं वेतनं दास्यामि, तुभ्यमिति शेषः, इत्येवं या परिभाषिता इति अध्याहार्यम्, तन्निर्देशकारिभिः विद्वद्भिः सा भृतिः कार्यमाना कीर्तिता । शुनीटी.

वत्सरे वत्सरे वाऽपि मासि मासि दिने दिने ।
एतावतीं भृतिं तेऽहं दास्यामीति च कालिका ॥

वत्सरे वत्सरे प्रतिवत्सरं मासि मासि प्रतिमासं वा दिने दिने प्रतिदिनं ते तुभ्यं एतावतीं भृतिं दास्यामीति, या परिभाषितेति शेषः, सा कालिका कालमाना भृतिः । शुनीटी.

एतावता कार्यमिदं कालेनापि त्वया कृतम् ।
भृतिमेतावतीं दास्ये कार्यकालमिता च सा ॥

त्वया एतावता कालेन इदं कार्यं कृतम्, यदीति अध्याहार्यम्, तदा एतावतीं भृतिं दास्ये इत्येवं परिभाषिता या भृतिः सा कार्यकालमिता । शुनीटी.

न कुर्याद्भृतिलोपं तु तथा भृतिविलम्बनम् ।
अवश्यपोष्यभरणा भृतिर्मध्या प्रकीर्तिता ॥
परिपोष्या भृतिः श्रेष्ठा समान्नाच्छादनार्थिका ।
भवेदेकस्य भरणं यया सा हीनसंज्ञिका ॥

भृतिलोपं वेतनच्छेदं भृतिविलम्बनं च न कुर्यात् । अवश्यपोष्याणां मातापित्रादीनां भरणं यया सा भृतिः मध्या । परिपोष्या अवश्यपोष्यव्यतिरिक्तानामपि पोषणकारिणी भृतिः श्रेष्ठा । तथा अन्नाच्छादनार्थिका अन्नवस्त्रमात्रपर्याप्ता भृतिः समा प्रकीर्तिता । किंच, यया एकस्य जनस्य भरणं भवेत् सा हीनसंज्ञका हीना नाम भृतिः भवेत् । शुनीटी.

यथा यथा तु गुणवान् भृतकस्तद्भृतिस्तथा ।
संयोज्या तु प्रयत्नेन नृपेणाऽऽत्महिताय वै ॥

भृतकः भृत्यः यथा यथा गुणवान् तथा तथा तस्य भृतिः नृपेण आत्महिताय प्रयत्नेन संयोज्या कल्पनीया । वैशब्दोऽवधारणार्थः । शुनीटी.

अवश्यपोष्यवर्गस्य भरणं भृतकाद्भवेत् ।
तथा भृतिस्तु संयोज्या तद्योग्या भृतकाय वै ॥

भृतकात् अवश्यपोष्यवर्गस्य तन्मातापित्रादेः यथा भरणं भवेत् संपद्येत तद्योग्यभृतकाय तथा भृतिस्तु संयोज्या देया । वैशब्दोऽवधारणार्थः । शुनीटी.

ये भृत्या हीनभृतिकाः शत्रवस्ते स्वयं कृताः ।
परस्य साधकास्ते तु च्छिद्रकोशप्रजाहराः ॥

ये भृत्याः हीनभृतिकाः अत्यल्पवेतनाः ते स्वयम्, प्रभुणेति शेषः, शत्रवः कृताः । यतः ते तु परस्य अन्यस्य साधकाः कार्यकारिणः, प्रभुकार्यं परिहृत्येति भावः, तथा च्छिद्रकोशप्रजाहराः च्छिद्रान्वेषिणः

(१) शुनी. २।३९१-४१४.

प्रभुधनापहारकाः प्रजानां च पीडका इत्यर्थः ।

शुनीटी.

**अन्नाच्छादनमात्रा हि भृतिः शूद्रादिषु स्मृता ।**
**तत्पापभागन्यथा स्यात्पोषको मांसभोजिषु ॥**

शूद्रादिषु नीचजातिषु भृतिः अन्नाच्छादनमात्रा ग्रासाच्छादनमात्रपर्याप्ता स्मृता कथिता । अन्यथा अन्येन प्रकारेण अतिरिक्तभृतिदानेनेत्यर्थः, मांसभोजिषु नीचजातिषु पोषकः नीचजातिपोषणकारीत्यर्थः, प्रभुः तेषां पापभाक् स्यात् भवेत् । शुनीटी.

**यद्ब्राह्मणेनापहृतं धनं तत्परलोकदम् ।**
**शूद्राय दत्तमपि यन्नरकायैव केवलम् ॥**

ब्राह्मणेन यद्धनं अपहृतं चोरितं तदपि परलोकदं शुभदमित्यर्थः । यत्तु धनं शूद्राय दत्तमपि केवलं नरकाय, भवतीति शेषः । शुनीटी.

**मन्दो मध्यस्तथा शीघ्रस्त्रिविधो भृत्य उच्यते ।**
**समा मध्या च श्रेष्ठा च भृतिस्तेषां क्रमात्स्मृता ॥**

भृत्यः त्रिविध उच्यते– मन्दः चिरक्रियः, मध्यः, तथा शीघ्रः क्षिप्रकारीत्यर्थः । तेषां भृतिश्च समा मध्या तथा श्रेष्ठा इति क्रमात् स्मृता निरूपिता ।

शुनीटी.

**भृत्यानां गृहकृत्यार्थं दिवा यामं समुत्सृजेत् ।**
**निशि यामत्रयं नित्यं दिनभृत्येऽर्धयामकम् ॥**

भृत्यानां गृहकृत्यार्थे गृहकार्यनिमित्तं दिवा दिवसे यामं प्रहरमेकं तथा निशि रात्रौ यामत्रयं प्रहरत्रयं नित्यं प्रतिदिनं समुत्सृजेत् अवकाशं दद्यादित्यर्थः । दिनभृत्ये दैनिकभृत्ये अर्धयामकम्, अवकाशदानमिति शेषः ।

शुनीटी.

**तेभ्यः कार्यं कारयीत ह्युत्सवाद्यैर्विना नृपः ।**
**अत्यावश्यं तूत्सवेऽपि हित्वा श्राद्धदिनं सदा ॥**

नृपः उत्सवाद्यैर्विना उत्सवदिवसव्यतिरेकेण तेभ्यः भृत्येभ्यः कार्यं कारयेत् । 'तेभ्यः' इति अपादानविवक्षायां करणे पञ्चमी । कारयीतेति आर्षः प्रयोगः । किंच, उत्सवेऽपि श्राद्धदिनं हित्वा अत्यावश्यं कार्यं सदा, कारयेदिति शेषः । शुनीटी.

**पादहीनां भृतिं त्वार्ते दद्यात्त्रैमासिकीं ततः ।**
**पञ्चवत्सरभृत्ये तु न्यूनाधिक्यं यथा तथा ॥**

भृत्ये आर्ते पीडिते तु पादहीनां चतुर्थांशन्यूनां भृतिं दद्यात् । एतच्च पञ्चवर्षादर्वाग्भृत्ये अल्पदिनपीडिते वेदितव्यम्, तृतीयपादे पञ्चवर्षभृत्यस्योपादानात् । वत्सरावधिपीडितं तु त्रैमासिकीं भृतिं भृतेश्चतुर्थांशमित्यर्थः, दद्यात् । पञ्चवत्सरभृत्ये तु, पीडिते इति शेषः, न्यूनाधिक्यं यथा, पीडादीनामिति शेषः, तथा भृतिं दद्यादिति निष्कर्षः । शुनीटी.

**षाण्मासिकीं तु दीर्घार्ते तदूर्ध्वं न च कल्पयेत् ।**
**नैव पक्षार्धमार्तस्य हातव्याऽल्पाऽपि वै भृतिः ॥**

दीर्घार्ते दीर्घकालपीडिते, संवत्सरादूर्ध्वमपीति शेषः, षाण्मासिकीं भृतिं दद्यात् । तदूर्ध्वं न च कल्पयेत् नैव दद्यादित्यर्थः । किंच, पक्षार्धं सप्ताहमित्यर्थः, आर्तस्य अल्पाऽपि भृतिः नैव हातव्या नैव छेत्तव्या इत्यर्थः ।

शुनीटी.

**संवत्सरोषितस्यापि ग्राह्यः प्रतिनिधिस्ततः ।**
**सुमहद्गुणिनं त्वार्तं भृत्यर्धं कल्पयेत्सदा ॥**

संवत्सरोषितस्य वर्षं यावत् रोगार्तस्य इत्यर्थः, प्रतिनिधिः ततः तस्मादेव भृत्यात् ग्राह्यः । किंच, सुमहद्गुणिनं अतिगुणवन्तम् । आर्षप्रयोग एषः । आर्तम्, भृत्यं प्रतीति शेषः, सदा भृतेः अर्धं कल्पयेत् व्यवस्थापयेत् । शुनीटी.

**सेवां विना नृपः पक्षं दद्याद्भृत्याय वत्सरे ॥**

नृपः सेवां विना वत्सरे पक्षं पक्षीयवेतनं दद्यात् ।

शुनीटी.

**चत्वारिंशत्समा नीताः सेवया येन वै नृपः ।**
**ततः सेवां विना तस्मै भृत्यर्धं कल्पयेत्सदा ॥**

येन भृत्येन सेवया चत्वारिंशत् समाः वत्सराः नीताः । वैशब्दोऽवधारणार्थः । नृपः ततः तदनन्तरं सेवां विना सदा तस्मै भृत्याय भृत्यर्धं वेतनार्धं कल्पयेत् दद्यात् । शुनीटी.

यावज्जीवं तु तत्पुत्रेऽक्षमे बाले तदर्धकम् ।
भार्यायां वा सुशीलायां कन्यायां वा स्वश्रेयसे ॥

यावज्जीवं अक्षमे कार्याक्षमे तस्य भृत्यस्य पुत्रे बाले अप्राप्तव्यवहारे च तत्पुत्रे, बाल्यपर्यन्तमिति भावः, सुशीलायां सुचरित्रायां तस्य भार्यायां वा, एतच्च यावज्जीवपर्यन्तमिति भावः, कन्यायां अनूढायां दुहितरि च स्वस्य आत्मनः श्रेयसे कल्याणाय तदर्धकं तस्य वेतनार्धस्य अर्धकम्, दद्यादिति शेषः । शुनीटी.

अष्टमांशं पारितोष्यं दद्याद्भृत्याय वत्सरे ।
कार्याष्टमांशं वा दद्यात्कार्यं द्रागधिकं कृतम् ॥

वत्सरे प्रतिवर्षं भृत्याय अष्टमांशम्, भृतेरिति शेषः, पारितोष्यं पुरस्कारं दद्यात् । किंच, द्राक् झटिति अधिकं कार्यं कृतम्, यदीति शेषः, तदा कार्यस्य अष्टमांशं पारितोष्यं दद्यात् । वाशब्दोऽवधारणार्थः । शुनीटी.

स्वामिकार्ये विनष्टो यस्तत्पुत्रे तद्भृतिं वहेत् ।
यावद्बालोऽन्यथा पुत्रगुणान् दृष्ट्वा भृतिं वहेत् ॥

यः भृत्यः स्वामिनः कार्ये विनष्टः, भवेदिति शेषः, तस्य पुत्रः यावद्बालः यावत्पर्यन्तं शिशुः तावत्कालपर्यन्तं तस्य भृतिं वहेत् प्राप्नुयात् । अन्यथा शैशवापगमे इत्यर्थः, पुत्रस्य गुणान् दृष्ट्वा भृतिं वहेत् दद्यादित्यर्थः । शुनीटी.

*षष्ठांशं वा चतुर्थांशं भृतेर्भृत्यस्य पालयेत् ।
दद्यात्तदर्धं भृत्याय द्वित्रिवर्षेऽखिलं तु वा ॥

भृत्यस्य भृतेः षष्ठांशं वा चतुर्थांशं पालयेत् रक्षेत्, दद्यादित्यर्थः । एतच्च यथायथं आर्तिविशेषे कालविशेषे बोद्धव्यम् । द्वित्रिवर्षे पीडिते भृत्याय तदर्धं वा अखिलं समग्रं दद्यात् । एतच्च गुणवत्त्वातिगुणवत्त्वाभ्यां व्यवस्थेयम् । शुनीटी.

*[1]सवयः सारवेशोच्चशस्त्रास्त्रं तु पृथक् शतम् ।
लघुनालिकयुक्तानां पदातीनां शतत्रयम् ॥
अशीत्यश्वान् रथं चैकं बृहन्नालद्वयं तथा ।
उष्ट्रान् दश गजौ द्वौ तु शकटौ षोडशर्षभान् ॥
तथा लेखकषट्कं हि मन्त्रित्रितयमेव च ।
धारयेन्नृपतिः सम्यग्वत्सरे लक्षकर्षभाक् ॥
संभारदानभोगार्थं धनं सार्धसहस्रकम् ।
लेखकार्थे शतं मासि मन्त्र्यर्थे तु शतत्रयम् ॥
त्रिशतं दारपुत्रार्थे विद्वदर्थे शतद्वयम् ।
साद्यश्वपदगार्थं हि राजा चतुःसहस्रकम् ॥
गजोष्ट्रवृषनालार्थं व्ययीकुर्याच्चतुःशतम् ।
शेषं कोशे धनं स्थाप्यं व्ययीकुर्यान्न चान्यथा ॥
याने सपादभृत्या तु स्वभृत्यान् वर्धयन् नृपः ।
स्वदेहं गोपयेत् ··· ··· ··· ॥

नृपः याने युद्धयात्रायां स्वभृत्यान् सपादभृत्या चतुर्थांशाधिकया भृत्या वेतनेन वर्धयन् रञ्जयन् युद्धे ······ स्वदेहं गोपयेत् रक्षेत् । शुनीटी.

[2]कालं भृत्यवधि देयं दत्तं भृत्यस्य लेखयेत् ।
कति दत्तं हि भृत्येभ्यो वेतनं पारितोषिकम् ।
तत्प्राप्तिपत्रं गृह्णीयाद्दद्याद्वेतनपत्रकम् ॥

भृत्यस्य भृतेः अवधिं सीमारूपं कालं तथा भृत्येभ्यः देयं दत्तं ( वेतनं ) कति दत्तं पारितोषिकं च कति इत्येतत् लेखयेत् । लेखयित्वा तेषां प्राप्तिपत्रं गृह्णीयात् वेतनपत्रं च दद्यात् । शुनीटी.

सैनिकाः शिक्षिता ये ये तेषु पूर्णा भृतिः स्मृता ।
व्यूहाभ्यासे नियुक्ता ये तेष्वर्धां भृतिमावहेत् ॥

ये ये सैनिकाः शिक्षिताः तेषु भृत्येषु पूर्णा भृतिः वेतनं स्मृता । ते पूर्णवेतनमर्हन्तीत्यर्थः । ये व्यूहानां

---

* अयमत्र स्वारसिकोऽर्थः प्रतीयते— भृतिदानावसरे भृत्याय क्लृप्ता भृतिः संपूर्णा न देया, किंतु क्लृप्तभृतेः षष्ठांशं चतुर्थांशं वा स्वसंनिधावेव स्थापयित्वा षष्ठांशेन न्यूनां चतुर्थांशेन न्यूनां वा भृतिं तदानीं तस्मै समर्पयेद् । वर्षद्वयानन्तरं वर्षत्रयानन्तरं वा पूर्वसंगृहीतभृत्यंशराशिं निखिलं तदर्धं वा प्रत्यर्पयेत् । भृत्येन कार्यासमाप्तावेव सेवात्यागे कृते कार्यविनाशे वा कृते या हानिः संजायेत तत्परिहाराय आपत्काले भृत्योपकाराय वा इदं षष्ठांशस्य चतुर्थांशस्य वा ग्रहणं भवेदिति ।

* एतदादिश्लोकषट्कस्य व्याख्यानं 'प्रकृतयः– बलम्' इत्यस्मिन् प्रकरणे ( पृ. १५२८ ) द्रष्टव्यम् ।

( १ ) शुनी. ४।७।२२–२७, ३५१.
( २ ) शुनी. ४।७।३८९–३९०.

अभ्यासे शिक्षायां नियुक्ताः तेषु अर्धां भृतिं आवहेत् दद्यात् । ते सैनिकाः पूर्णभृतेरर्धमर्हन्तीत्यर्थः ।

शुनीटी.

[1]त्यक्त्वा तु दर्पकार्पण्यमानोद्वेगभयानि च ।
कुर्वीत नृपतिर्नित्यं स्वार्थसिद्ध्यै तु नान्यथा ।
विशेषभृतितो भृत्यं प्रेममानाधिकारतः ॥

नृपतिः दर्पं कार्पण्यं कृपणतां मानं उद्वेगं भयं च त्यक्त्वा स्वार्थसिद्ध्यै स्वकार्यसिद्धये विशेषभृतितः विशिष्टया भृत्या तथा प्रेम्णा मानेन अधिकारतः अधिकारप्रदानेन नित्यं सततं भृत्यं कुर्वीत नियुञ्ज्यात् । अन्यथा अस्वार्थसिद्ध्यै इत्यर्थः, न । शुनीटी.

## नीतिवाक्यामृतम्

भृत्यानां स्वामिनश्च गुणा दोषाश्च,
भृत्यमरणं राजकर्तव्यम्

*[2]जीवोत्सर्गः स्वामिपदमभिलषतामेव ॥

बहुदोषेषु क्षणदुःखप्रदोऽपायोऽनुग्रह इव ॥

स्वामिदोषस्वदोषाभ्यामुपहतवृत्तयः, क्रुद्धभीतलुब्धमानिनः कृत्याः ॥

अचिकित्स्यदोषदुष्टान् खनिदुर्गसेतुबन्धाकरकर्मान्तरेषु क्लेशयेत् ॥

अपराध्यैरपराधकैश्च सह गोष्ठीं न कुर्यात् ॥

ते हि गृहप्रविष्टसर्पवत्सर्वव्यसनानामागमनद्वारम् ॥

न कस्यापि क्रुद्धस्य पुरतस्तिष्ठेत् ॥

क्रुद्धो हि सर्प इव यमेवाग्रे पश्यति तत्रैव रोषविषमुत्सृजति ॥

अप्रतिविधातुरागमनाद्वरमनागमनम् ॥

[1]स किं प्रभुर्यश्चिरसेवकेष्वेकमप्यपराधं न सहते ॥

अथ प्रभोः स्वरूपमाह— स किमिति । यः चिरसेवकस्य प्रभूतकालसेवकस्य एकमपि अपराधं दोषं न सहते । तस्मात् स्वामिना चिरकालसेवकस्य प्रथमोऽपराधः सहनीयः । तथा च शुक्रः— 'चिरकालचरो भृत्यो भक्तियुक्तः प्रसेवयेत् । न तस्य निग्रहः कार्यो दोषस्यैकस्य कारणात् ॥' । नीवाटी.

[2]स चिरं जीवति राजपुरुषो यो नगरनापित इवानुवृत्तिपरः सर्वासु प्रकृतिषु ॥

अथ राजपुरुषः यथा चिरं जीवति तदाह— स इति । यः राजपुरुषः राज्ञः सेवकसामान्यः भवति सः चिरं प्रभूतकालं जीवति । किंविशिष्टः सन् ? (अनुवृत्तिपरः) विनयपरः सन् । कासु ? सर्वासु प्रकृतिषु राजप्रधानपुरुषेषु । क इव ? नगरनापित इव । (सः) यथा परस्थः सन् पत्तनमध्यगः सर्वजनेषु विनयपरः चिरं नन्दति तथा राजपुरुषोऽपि । तथा च शुक्रः— 'सेवकः प्रकृतीनां यो नम्रतां याति सर्वदा । स नन्दति चिरं कालं भूपस्यापि प्रियो भवेत् ॥' । नीवाटी.

*[3]आश्रितभरणे स्वामिसेवायां धर्मानुष्ठाने पुत्रोत्पादने च खलु न सन्ति प्रतिहस्ताः ॥

तावद्देयं यावदाश्रिताः संपूर्णतामाप्नुवन्ति ॥

न हि स्वं द्रव्यमव्ययमानो राजा दण्डनीयः ॥

को नाम सचेताः स्वगुडं चौर्यात्खादेत ॥

किं तेन जलदेन यः काले न वर्षति ॥

स किं स्वामी य आश्रितेषु व्यसने न प्रविधत्ते ॥

अविशेषज्ञे राज्ञि को नाम तस्यार्थे प्राणव्ययेनोत्सहेत ॥

---

* एतदादिसूत्रत्रयस्य व्याख्यानं 'प्रकृतयः— अमात्याः' इत्यत्र (पृ. १२३८–१२३९), ततः परस्य सूत्रषट्कस्य व्याख्यानं 'प्रकृतयः— स्वामी' इत्यत्र (पृ. ११९३–११९७) द्रष्टव्यम्।

(१) शुनी. ५।४२.

(२) नीवा. १०।१६१–१६३, १६६–१७१.

* एतदादिसूत्रसप्तकस्य व्याख्यानं 'प्रकृतयः— बलम्' इत्यस्मिन् प्रकरणे (पृ. १५४१) द्रष्टव्यम् ।

(१) नीवा. ११।५५.

(२) नीवा. १२।३.

(३) नीवा. २२।१९–२५.

'स खलु स्वस्यैवापुण्योदयोऽपराधो वा सर्वेषु कल्पफलप्रदोऽपि स्वामी भवत्यात्मनि वन्ध्यः ॥

अथ पूर्वकर्मणः फलमाह– स इति । खलु निश्चयेन सः अपुण्योदयः अन्यजन्मकर्मप्राप्तिः । यत् किं स्यात् ? वन्ध्यः फलं न प्रयच्छति । कोऽसौ ? स्वामी । कस्मिन् ? आत्मनि । अपराधो वा । कस्मिन् ? स्वामिनः कृते (?)। यः सर्वेषु सेवकेषु कल्पवृक्षफलप्रदो भवति कल्पवृक्षवत् वाञ्छितं फलं ददाति । तथा च भागुरिः– 'यत्प्रयच्छति न स्वामी सेवितोऽप्यल्पकं फलम् । कल्पवृक्षोपमोऽन्येषां तत्फलं पूर्वकर्मणः ॥' । नीवाटी.

राज्ञोऽस्थाने कुपितस्य कुतः परिजनः ॥

आत्मानुरक्तं कथमपि न त्यजेद्यद्यस्ति तदन्ते तस्य संतोषः ॥

अथाऽऽत्मानुरक्तस्य यत्कर्तव्यं तदाह– आत्मेति । आत्मानुरक्तः कथमपि न संत्याज्यः यद्यस्ति चेत्तस्य संतोषः । तथा च गुरुः– 'अभियुक्तजनं यच्च न त्याज्यं तद्विवेकिना । पोषणीयं प्रयत्नेन यदि तस्य शुभार्थता ॥'। नीवाटी.

आत्मसंभावितः परेषां भृत्यानामसहमानश्च भृत्यो हि बहुपरिजनमपि करोत्येकाकिनं स्वामिनम् ॥

अथ यादृशो भृत्यो न करणीयस्तत्स्वरूपमाह– आत्मसंभावित इति । यो भृत्यः आत्मसंभावितः सगर्वः भवति सः परेषां भृत्यानामसहमानः बहुपरिजनमपि प्रभूतभृत्यमपि स्वामिनं एकाकिनं करोति । एतदुक्तं भवति– यस्य स्वामिनः सगर्वो भृत्यः अन्येषां भृत्यानामसहमानः अनुग्रहास्तो( ? ढ्यो ) भवति स स्वामी एकाकी भवति, तथा अपरभृत्यैः त्यज्यते इति । तथा च राजपुत्रः– 'प्रसादाढ्यो भवेद्भृत्यः स्वामिनो यस्य दुष्टधीः । स त्यज्यतेऽन्यभृत्यैश्च शुष्को वृक्षोऽण्डजैर्यथा ॥' । नीवाटी.

( १ ) नीवा. २६।१९,२५,३३–४०.

'स किं प्रभुर्यः कार्यकाल एव न संभावयति भृत्यान् ॥

अथ प्रभोर्दूषणमाह– स किमिति । ( स किं प्रभुः यः ) न ( संभावयति ) न नियोजयति । कान् ? भृत्यान् । क्व ? कार्यकाले प्रयोजने जाते । एवशब्दो नियमार्थः । तथा च भृगुः– 'कार्यकाले तु संप्राप्ते संभावयति यः ( ? न ) प्रभुः । यो भृत्यं सर्वकालेषु स त्याज्यो दूरतो बुधैः ॥' । नीवाटी.

स किं भृत्यः सखा वा यः कार्यमुद्दिश्यार्थं याचते ॥

अथ भृत्यस्य दूषणमाह– स किमिति । यः कार्यं प्रयोजनं उद्दिश्य अर्थं याचते स्वामिनो भृत्यः प्रत्यार्थानां कारणं( ? ) स च भृत्यो न भवति । सखाऽपि तादृग्रूपो न भवति । तथा च भारद्वाजः– 'कार्ये जाते च यो भृत्यः सखा वाऽर्थं प्रयाचते । न भृत्यः स सखा नैव तौ द्वावपि हि दुर्जनौ ॥' । नीवाटी.

स किं प्रभुर्यो न सहते परिजनसंबाधम् ॥

अथ प्रभोर्दूषणमाह– स किमिति । परिजनस्य परिग्रहस्य संबाधं व्ययोपद्रवं न सहते विरूपं कृत्वा मन्यते स किं प्रभुः ? स्वामी न भवति । स परिचितमात्रो ज्ञेयः । तथा च गौतमः– 'भृत्यवर्गार्थजे जाते योऽन्यथा कुरुते प्रभुः । स स्वामी न परिज्ञेय उदासीनः स उच्यते ॥' । नीवाटी.

विरक्तानुरक्तराजलिङ्गानि

'कथाव्यवच्छेदो व्याकुलत्वं मुखे वैरस्यमनवेक्षणं स्थानत्यागः साध्वाचरितेऽपि दोषोद्भावनं विज्ञप्ते च मौनमक्षमा कालयापनमदर्शनं वृथाभ्युपगमश्चेति विरक्तलिङ्गानि ॥

अथ विरक्तजनस्य लिङ्गान्याह– कथेति । कथाविच्छेदः कथायां कथ्यमानायां विच्छेदं करोति न शृणोति । तथा व्याकुलत्वं याति कथां शृण्वन् । तथा मुखे वैरस्यं करोति । तथा अनवेक्षणं वार्तायां कथ्य-

( १ ) नीवा. २७।५–६, ५९.

( २ ) नीवा. ३२।३–४.

मानायां संमुखं नावलोकयेत् । तथा स्थानत्यागः अन्यत्रोत्थाय गमनम् । साधुचरितेऽपि दोषोद्भावनं दोषकीर्तनं करोति । विज्ञप्ते च मौनं करोति, न प्रत्युत्तरं प्रयच्छति । तथा *अक्षमाकालयापनं अक्षमया योऽसौ कालः प्रस्तावः तस्य यापनं प्रापणं करोति । तथा अदर्शनं आस्यदर्शनं न प्रयच्छति । तथा वृथाभ्युपगमः सेवाद्वारेण यः कृतः तं व्यर्थतां नयति तेन ( न ) रज्यते । इति विरक्तजनस्य लिङ्गानि चिह्नानि ज्ञेयानि । नीवाटी.

दूरादेवेक्षणं मुखप्रसादः संप्रश्नेष्वादरः प्रियेषु वस्तुषु स्मरणं परोक्षे गुणग्रहणं तत्परिवारस्य सदाऽनुनयवृत्तिरित्यनुरक्तलिङ्गानि ॥

अथ सानुरागलिङ्गानि— दूरादिति । दूरादेवेक्षणं दूरादेव आगच्छन्तमवलोकयति । तथा मुखप्रसादः मुखप्रसन्नता । तथा संप्रश्नेष्वादरः यदि किंचित्संप्रश्नं करोति तत्सादरः । तथा प्रियेषु वस्तुषु स्मरणं यानि तेन पूर्वं प्रियाणि अभीष्टानि कृतानि तानि स्मरति । तथा परोक्षे गुणग्रहणं यदा समीपे न भवति तदा तद्गुणान् कीर्तयति । तथा तत्परिवारस्यानुनयवृत्तिः तत्परिवारस्य सदा सर्वकालं अनुनयवृत्तिः विनयवर्तनं करोति । इति सानुरागचिह्नानि । नीवाटी.

* 'अक्षमा कालयापनम्' इति व्यस्तं पदद्वयम् । व्याख्याकृता तु 'अक्षमाकालयापनम्' इति समस्तपदमङ्गीकृत्य कृतं व्याख्यानं न मनोहरम् ।

## मानसोल्लासः

भृत्यप्रकाराः, भृत्यरक्षणादि राजकर्तव्यम्

[1]वैतनाः किंकरा दास्यो दासाः कर्मकरास्तथा ।
बुद्धिखड्गसहायाश्च भृत्यास्ते परिकीर्तिताः ॥
एतेषां रक्षणं सम्यक् तथा भरणपोषणम् ।
दानं संमाननं कार्यं लोकद्वयहितैषिणा ॥

## अनिर्दिष्टकर्तृकवचनम्

विरक्तराजलिङ्गानि

[2]दत्त्वाऽनुतापः कृतपूर्वहोमं( ? हानं )
विमानना दुश्चरितानुकीर्तनम् ।
दृष्टेरदानं प्रतिकूलभाषण-
मेताश्च दुष्टस्य भवन्ति वृत्तयः ॥

दोषदर्शनलिङ्गान्याह— दत्त्वेति । मेधा. ७।१७६

( १ ) मासो. १।३०३–३०४.
( २ ) मेधा. ७।१७६.

—०—

## शङ्खलिखितौ

मन्त्रस्य गूहनमभिमतम्

[1]गूढमन्त्रप्रचारः ॥

गूढमन्त्रप्रचारः फलानुमितमन्त्रतत्त्वः ।

* राक. १८

[2]स्वविषयाश्रावः ॥

स्वविषयाश्रावः स्वविषयस्य मन्त्रस्य अश्रावणं अप्रकाशनं कार्यम् । * राक. ३१

## महाभारतम्

मन्त्राधिकारः, मन्त्रदेशकालादीनि, समस्तैर्व्यस्तैश्च सह मन्त्रणम्, मन्त्रानधिकारिणो मन्त्राधिकारिणश्च, मन्त्रगूहनरीतिः, गूढस्यैव मन्त्रस्य सिद्धिकारिता, मन्त्रभेदद्वाराणि, मन्त्रभेददोषः

[3]अगर्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता ।
अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सह ॥
[4]मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता ।
आकारमभिरक्षेत चारेणाप्यनुपालितः ॥

परचारेभ्यः मन्त्रस्य गूहनं आकारस्य क्रोधाद्यावेशस्य च गूहनं कर्तव्यं स्वयं च चारप्रधानः स्यादित्यर्थः । नीटी.

[5]न रात्रौ मन्त्रयेद्विद्वान् न च कैश्चिदुपासितः ।
प्रासादाग्रे शिलाग्रे वा विशाले विजनेऽपि वा ॥
समन्तात्तत्र पश्यद्भिः सहाऽऽप्तैरेव मन्त्रयेत् ।
नैव संवेशयेत्तत्र मन्त्रवेश्मनि शारिकाम् ॥
शुकान्वा शारिका वाऽपि बालमूर्खजडानपि ।
प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजैः ॥
नीतिज्ञैर्न्यायशास्त्रज्ञैरितिहासे सुनिष्ठितैः ।
रक्षां मन्त्रस्य निश्छिद्रां मन्त्रान्ते निश्चयेत्स्वयम् ॥
वीरोपवर्णितात्तस्माद्धर्मार्थाभ्यामथाऽऽत्मना ।
एकेन वाऽथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् ॥
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णश्छिद्यते मन्त्र इति नीतिषु पठ्यते ॥
निःसृतो नाशयेन्मन्त्रो हस्तप्राप्तामपि श्रियम् ।
स्वमतं च परेषां च विचार्य च पुनः पुनः ॥
गुणवद्वाक्यमादद्यान्नैव कुप्येद्विचक्षणः ॥
*[1]विजयो मन्त्रमूलो हि राज्ञां भवति भारत ॥
[2]कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रमनुधावति ॥
[3]राज्ञामुपायाश्चत्वारो बुद्धिमन्त्रः पराक्रमः ।
निग्रहानुग्रहौ चैव दाक्ष्यं तत्कार्यसाधनम् ॥
[4]मन्त्रमूला नयाः सर्वे चाराश्च भरतर्षभ ।
सुमन्त्रितैर्नयैः सिद्धिस्तद्विदैः सह मन्त्रयेत् ॥

---

* राप्र. राकवत् ।

( १ ) राक. १८ ; राप्र. ११६.

( २ ) राक. ३१ ; राप्र. १८६.

( ३ ) भामु. १।१४०।७१.

( ४ ) भामु. १।१४०।७६.

( ५ ) भामु. १।१४०।७६ इति श्लोकस्य पूर्वार्धानन्तरं सार्धश्लोकसप्तकमिदं भाण्डारकरपुस्तके परिशिष्टे टिप्पण्यां समुद्धृतम्.

* अस्य सार्धश्लोकस्य व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ५४४) द्रष्टव्यम् ।

( १ ) भा. २।५।१७ ; भामु. २।५।२७ राज्ञां (राज्ञो).

( २ ) भा. २।५।१९ ; भामु. २।५।३० धूमसु (धूं परि).

( ३ ) भा. ३।१४९।४१ ; भामु. ३।१५०।४१ (राज्ञामुपायश्चारश्च बुद्धिमन्त्रपराक्रमाः । निग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्यसाधकम् ॥ ).

( ४ ) भा. ३।१४९।४३ ; भामु. ३।१५०।४३ उत्तरार्धे ( सुमन्त्रितेन या सिद्धिस्तां द्विजैः सह मन्त्रयेत् ॥ ).

[१]स्त्रिया मूढेन लुब्धेन बालेन लघुना तथा ।
न मन्त्रयेत गुह्यानि येषु चोन्मादलक्षणम् ॥

[२]मन्त्रयेत्सह विद्वद्भिः शक्तैः कर्माणि कारयेत् ।
स्निग्धैश्च नीतिविन्यासान्मूर्खान्सर्वत्र वर्जयेत् ॥

स्निग्धैः हितेप्सुभिः । नीतेः प्रजादारापत्यादेः विन्यासाः स्थापनानि । नीटी.

[३]यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥

[४]एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥

[५]एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविस्रवः ॥

[६]चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रैरलसैश्चारणैश्च ॥

दीर्घसूत्रैः क्षिप्रसाध्ये कार्ये चिरं कुर्वद्भिः । रभसैः हर्षतरलैः । 'अलसैः' इत्यपि पाठः । चारणैः स्तावकैः । 'अरणैः' इति छेदो वा । रणविरोधिभिः द्यूताद्यासक्तैरित्यर्थः । 'अशनैः' इति पाठे बहुभोक्तृभिः । नीटी.

[१]चिकीर्षितं विप्रकृतं च यस्य
नान्ये जनाः कर्म जानन्ति किंचित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
स्वल्पो नास्य व्यथते कश्चिदर्थः ॥

[२]यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥

[३]यस्य मन्त्रं न जानन्ति बाह्याश्चाऽऽभ्यन्तराश्च ये ।
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥

सर्वतश्चक्षुः चारैः परमन्त्रं जानन् । नीटी.

[४]अरिष्यन्न प्रभाषेत कृतान्येव च दर्शयेत् ।
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥

[५]गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा तत्र मन्त्रो विधीयते ॥

निःशलाके तृणैरनावृते । तत्रापि कश्चिल्लीनश्चेन्मन्त्रभेदः संभवेदिति भावः । नीटी.

[६]नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ।
अपण्डितो वाऽपि सुहृत्पण्डितो वाऽप्यनात्मवान् ।
अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥

अनात्मवान् चपलवाक् । नीटी.

[७]कृतानि सर्वकार्याणि यस्य वा पार्षदा विदुः ।
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥

---

(१) भा. ३।१४९।४४; भामु. ३।१५०।४४ लुब्धेन बालेन (बालेन लुब्धेन) तथा (ऽपि वा) येत (यीत).

(२) भा. ३।१४९।४५; भामु. ३।१५०।४५.

(३) भा. ५।३३।१८; भामु.

(४) भा. ५।३३।४२; भामु. ५।३३।४३.

(५) भा. ५।३३।४४; भामु. ५।३३।४५ विस्रवः (विप्लवः).

(६) भा. ५।३३।५८; भामु. ५।३३।६९ रलसै (रभसै).

(१) भा. ५।३३।१००; भामु. ५।३३।११९. स्वल्पो नास्य व्यथते (नाल्पोऽप्यस्य च्यवते).

(२) भा. ५।३७।५१; भामु. ५।३७।५५.

(३) भा. ५।३८।१५; भामु. ५।३८।१५-१६.

(४) भा. ५।३८।१६; भामु. ५।३८।१६-१७ च (तु).

(५) भा. ५।३८।१७; भामु. ५।३८।१७-१८ विधी (ऽभिधी).

(६) भा. ५।३८।१८; भामु. ५।३८।१८-२० द्वितीयार्धानन्तरम् (नापरीक्ष्य महीपालः कुर्यात् सचिवमात्मनः ।) इत्यर्धमधिकम्.

(७) भा. ५।३८।१९; भामु. ५।३८।२०-२१ पूर्वार्धानन्तरम् (धर्मे चार्थे च कामे च स राजा राजसत्तमः ।) इत्यर्धमधिकम्.

पार्षदाः सभासदः कृतान्येव विदुः, किमुतान्ये ? नीटी.

[1]अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥

षाड्गुण्यं षण्णां संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां समूहः न श्रुतः येन सः । नीटी.

[2]मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ॥
[3]अर्थसंततिकामश्च रक्षेदेतानि नित्यशः ।
मदं स्वप्नमविज्ञानमाकारं चाऽऽत्मसंभवम् ॥
[4]दुष्टामात्येषु विश्रम्भं दूतं चाकुशलं तथा ।
द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृप ॥
त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ॥

अर्थसंततिः अर्थानामविच्छेदेन वृद्धिः, तत्कामः । मदं सुरापानजं चित्तवैक्लव्यम् । स्वप्नं निद्राम् । अविज्ञानं परकीयगुप्तचारादेरज्ञानम् । आत्मसंभवमाकारं नेत्रवक्त्रविकारादिकम् । तावतैव परदूता मन्त्रमुन्नयन्ति । मन्त्रभेदस्य द्वाराणि संवृणोति पिदधाति । नीटी.

[5]मन्त्रग्राहा हि राज्यस्य मन्त्रिणो ये मनीषिणः ।
मन्त्रसंहननो राजा मन्त्राङ्गानीतरो जनः ॥

मन्त्रो गूढो येषां ते । मन्त्रसंहननः मन्त्रकवचः । इतरे शूरजनादयः । नीटी.

[6]राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते ।
स्वामिनं त्वनुवर्तन्ति वृत्त्यर्थमिह मन्त्रिणः ॥

(१) भामु. ५।३८।२४.

(२) भामु. ५।३९।३७ ; राक. १०३ षट् (यत्); राप्र. ३१० राकवत्.

(३) भामु. ५।३९।३८ ; राक. १०३ अर्थसंतति (अथ संपत्ति) मवि (मव) ; राप्र. ३१० मवि (मव).

(४) भामु. ५।३९।३९–४० द्वितीयचरणे (दूताच्चाकुशलादपि) ; राक. १०३ पू. ; राप्र. ३१० पू.

(५) भा. १२।८४।४७ ; भामु. १२।८३।५० ग्राहा (गूढा) रो जनः (रे जनाः).

(६) भा. १२।८४।४८ ; भामु. १२।८३।५१ तृतीयचरणे (स्वामिनस्त्वनुवर्तन्ते).

[1]स विनीय मदक्रोधौ मानमीर्ष्यां च निर्वृतः ।
नित्यं पञ्चोपधातीतैर्मन्त्रयेत्सह मन्त्रिभिः ॥

स्वामिनः मन्त्रिणश्च मदादिरहिताः सन्तः यदि अन्योन्यमनुवर्तन्ते तर्हि निर्वृताः सुखिनः भवन्तीत्यर्थः । नित्यमित्यर्थः । उपधाः छलानि । तानि पञ्च । तेषु केवलं वाचिकी द्रोणवधे 'हतोऽश्वत्थामा कुञ्जरः' इत्युक्तिर्युधिष्ठिरस्य, मनसि छलाभावात् । भीमस्य तु तत्रैव कायिकी वाचिकी च । केवलं मानसिकी पाण्डवेषु धृतराष्ट्रस्य, वाचिक्या अभावात् । तत्रैव धार्तराष्ट्राणां कायवाङ्मनोभवा जतुगृहे । सौप्तिकेऽश्वत्थाम्नः कायिकी । इति पञ्चविधा उपधा, तामतीतैः । नीटी.

[2]तेषां त्रयाणां विविधं विमर्शं
बुध्येत चित्तं विनिवेश्य तत्र ।
स्वनिश्चयं तं परनिश्चयं च
निवेदयेदुत्तरमन्त्रकाले ॥

[3]धर्मार्थकामज्ञमुपेत्य पृच्छेद्
युक्तो गुरुं ब्राह्मणमुत्तमार्थम् ।
निष्ठा कृता तेन यदा सह स्यात्
तं तत्र मार्गं प्रणयेदसक्तम् ॥

त्रयाणां त्रीणि मतानि स्वनिश्चयं चावधार्य निश्चयज्ञं गुरुं प्रति तन्मतचतुष्टयं निवेदयेदिति द्वयोः संबन्धः । तेन गुरुणाऽपि चतुर्भिः सह ऊहापोहपूर्वकं यदा निष्ठा सिद्धान्तः कृतो भवेत् सोऽपि यदा सहः स्यात् सर्वेषामैकमत्येन स्यात्तदा तं मन्त्रं प्रणयेत् कार्ये नियोजयेत् । नीटी.

(१) भा. १२।८४।४९ ; भामु. १२।८३।५२ स वि (संवि) र्वृतः (र्वृताः).

(२) भा. १२।८४।५० ; भामु. १२।८३।५३ बुध्येत (विबुध्य) तं परनिश्चयं च (तत्प्रतिनिश्चयज्ञं).

(३) भा. १२।८४।५१ ; भामु. १२।८३।५४ मुत्तमा (मुत्तरा) सह (सहः) तत्र (मन्त्र) सक्तम् (सक्तः).

[1]एवं सदा मन्त्रयितव्यमाहु-
र्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः ।
तस्मात्त्वमेवं प्रणयेः सदैव
मन्त्रं प्रजासंग्रहणे समर्थम् ॥

[2]न वामनाः कुब्जकृशा न खञ्जा
नान्धा जडाः स्त्री न नपुंसकं च ।
न चात्र तिर्यङ् न पुरो न पश्चा-
न्नोर्ध्वं न चाधः प्रचरेत कश्चित् ॥

अत्र मन्त्रस्थाने । नीटी.

[3]आरुह्य वातायनमेव शून्यं
स्थलं प्रकाशं कुशकाशहीनम् ।
वागङ्गदोषान् परिहृत्य मन्त्रं
संमन्त्रयेत्कार्यमहीनकालम् ॥

वाग्दोषः उच्चैर्भाषणादिः, अङ्गदोषः नेत्रवक्त्र-विकारादिः, तेन अन्यं नाधिक्षिपेत् इत्यर्थः । नीटी.

[4]सुसंवृतं मन्त्रगृहं स्थलं चाऽऽरुह्य मन्त्रयेः ।
अरण्ये निःशलाके वा न च रात्रौ कथंचन ॥

(१) निःशलाके जनप्रचाररहिते । इयं देशकाल-व्यवस्था कालसापेक्षे । रार. २७

(२) निःशलाके अतृणे, सतृणे हि आसन्नः परचारः ज्ञातुमशक्य इति । नीटी.

(१) भा. १२।८४।५२ ; भामु. १२।८३।५५ त्वमेवं प्रणयेः ( त्तमेवं प्रणयेत् ).

(२) भा. १२।८४।५३ ; भामु. १२।८३।५६ नान्धा जडाः स्त्री न ( नान्धो जडः स्त्री च ) तिर्यङ् न ( तिर्यक्च ) त कश्चित ( त्कथंचित ).

(३) भा. १२।८४।५४ ; भामु. १२।८३।५७ वातायनमेव ( वा वेश्म तथैव ) मन्त्रं ( सर्वान् ).

(४) भा. १५।३।२२ ; भामु. १५।५।२२–२३ ; रार. २७.

[1]वानराः पक्षिणश्चैव ये मनुष्यानुकारिणः ।
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपङ्गुकाः ॥

[2]मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीक्षिताम् ।
न ते शक्याः समाधातुं कथंचिदिति मे मतिः ॥

[3]दोषांश्च मन्त्रभेदेषु ब्रूयास्त्वं मन्त्रिमण्डले ।
अभेदे च गुणान् राजन्पुनः पुनररिंदम ॥

## वाल्मीकिरामायणम्

मन्त्रप्रयोजनम्, मन्त्राधिकारिणः तत्संख्या च, समस्तैर्व्यस्तैश्च मन्त्रणम्, उत्तममध्यमाधमा मन्त्राधिकारिणः मन्त्राश्च

[4]मन्त्रमूलो हि विजयो राज्ञां भवति राघव ।
सुसंवृतो मन्त्रिवरैरमात्यैर्मन्त्रकोविदैः ॥

[5]कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित्ते मन्त्रितो मन्त्रो न राज्यमनुधावति ॥

[6]मन्त्रिभिस्त्वं यथोद्दिष्टैश्चतुर्भिस्त्रिभिरेव वा ।
कच्चित्समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे मिथः ॥

[7]अमन्त्रयित्वा सचिवैर्यो राजा संप्रवर्तते ।
न स तिष्ठेच्चिरं राज्ये सलिलं पुष्करे यथा ॥

(१) भा. १५।९।२३ ; भामु. १५।५।२३–२४ कारि ( सारि ) पङ्गुकाः ( पङ्गवः ) ; रार. २८ नराः ( नरः ) वर्ज्या ( वार्या ) शेषं भामुवत्.

(२) भा. १५।९।२४ ; भामु. १५।५।२४–२५ ; रार. २८.

(३) भा. १५।९।२५ ; भामु. १५।५।२५–२६ भेदेषु ( भेदस्य ) गुणान् ( गुणा ).

(४) वारा. २।११४।११ ; वाराकु. २।१००।१७ प्रथमचरणे ( मन्त्रो विजयमूलं हि ) मन्त्रिव ( मन्त्रध ) त्यैर्मन्त्र ( त्यैः शास्त्र ).

(५) वारा. २।११४।१३ ; वाराकु. २।१००।१९ त्राम ( त्ते म ) न राज्यमनु ( राष्ट्रं न परि ).

(६) वाराकु. २।१००।७२.

(७) वारा. ३।४५।१७ .

[१]मन्त्रमूलं हि विजयं प्राहुर्विजयकाङ्क्षिणः ।
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥
[२]त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां च समवेतानां गुणदोषान् वदाम्यहम् ॥
[३]मन्त्रिभिर्हितसंयुक्तैः समेतैर्मन्त्रनिश्चयैः ।
अमात्यैर्वा समेत्यार्थो बान्धवैरपि वा हितैः ॥
समानार्थैः समानप्रयोजनैः । * राक. १०२
[४]सुमन्त्रं मन्त्रयित्वा यः कार्यारम्भे प्रवर्तते ।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥
[५]एकोऽर्थं विमृशत्येको धर्मे च कुरुते मतिम् ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥

[१]गुणदोषावनिश्चित्य दैव एकपरायणः ।
करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः ॥
[२]यथैव पुरुषा लोके उत्तमाधममध्यमाः ।
एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ॥
[३]ऐकमत्यमुपागम्य शास्त्रदृष्टेन कर्मणा ।
मन्त्रिणो मन्त्रनिरतास्तमाहुर्मन्त्रमुत्तमम् ॥
[४]बह्व्योऽपि मतयो गत्वा मन्त्रिणामर्थसिद्धये ।
पुनर्यत्रैकतां यान्ति स मन्त्रो मध्यमः स्मृतः ॥
[५]मन्त्रं कृतं विलुम्पन्ति अन्यथा परिभाष्यते ।
न चैकमत्यलेशोऽस्ति मन्त्रः सोऽधम उच्यते ॥

---

* राप्र. राकवत् ।

(१) वारा. ५।७७।६ पू.; वाराकु. ६।६।५ द्वितीयचरणे (प्राहुरार्या मनस्विनः).

(२) वारा. ५।७७।७ ; वाराकु. ६।६।६ च (तु) दोषान् (दोषौ); राक. १०१ च (तु) दोषान् (दोषं); राप्र. ३०७ च (तु); नीम. ४८ महाभारते.

(३) वारा. ५।७७।८ ; वाराकु. ६।६।७ (मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये । मित्रैर्वाऽपि समानार्थैर्बान्धवैरपि वा हितैः ॥); राक. १०१ (मन्त्रिभिर्मन्त्रसंयुक्तैः समर्थैर्मन्त्रनिश्चये । मित्रैर्वाऽपि समानार्थैर्बान्धवैश्वातिवाहितैः ॥); राप्र. ३०७ अमात्यैर्वा स (मित्रैर्वाऽतिस) शेषं राकवत्; नीम. ४८ र्मन्त्रनिश्चयैः (र्थनिश्चये) रपि वा हितैः (रप्यगर्हितैः) शेषं वाराकुवत्, महाभारते.

(४) वारा. ५।७७।९ ; वाराकु. ६।६।८ पूर्वार्धे (सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत् ।); राक. १०१ सुमन्त्रं म (मन्त्रिभिर्म) कार्या (कर्मा) दैवे च (तत्रैव); राप्र. ३०७ राकवत्; नीम. ४८ पूर्वार्धे (संमन्त्रयित्वा यः कर्मप्रारम्भे संप्रवर्तते ।) दैवे च (धैर्याच्च) महाभारते.

(५) वारा. ५।७७।१० ; वाराकु. ६।६।९ पूर्वार्धे (एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ।); राक. १०१ च कु (प्रकु); राप्र. ३०७ राकवत्; नीम. ४८ ऽर्थं (ऽर्थान्) महाभारते.

(१) वारा. ५।७७।११ ; वाराकु. ६।६।१० द्वितीयचरणे (त्यक्त्वा धर्मंव्यपाश्रयम्); राक. १०१–१०२ (गुणदोषावनिश्चित्य त्यक्तधर्मव्यपाश्रयः । करिष्यामीत्युपेक्षेत यः कार्यं स नराधमः ॥); राप्र. ३०७ राकवत्; नीम. ४८ द्वितीयचरणे (दैवमेव व्यपाश्रितः) कार्यमुपेक्षेत्स (कार्योपेक्षकः स) महाभारते.

(२) वारा. ५।७७।१२ ; वाराकु. ६।६।११ यथैव (यथेमे) लोके (नित्यं) मन्त्रोऽपि विज्ञेय (मन्त्रा हि विज्ञेया) मध्यमः (मध्यमाः); राक. १०२ लोके (नित्यं); राप्र. ३०७ राकवत्.

(३) वारा. ५।७७।१३ ; वाराकु. ६।६।१२ कर्मणा (चक्षुषा) मन्त्रनि (यत्र नि); राक. १०२ गम्य (गत्य) कर्मणा (चक्षुषा) मन्त्रिणो (मन्त्रिणां) रता (यम); राप्र. ३०७ कर्मणा (चक्षुषा) मन्त्रिणो (मन्त्रिणां) रता (यम).

(४) वारा. ५।७७।१४ ; वाराकु. ६।६।१३ गत्वा (भूत्वा) सिद्ध (निर्ण) यान्ति (प्राप्ताः); राक. १०२ बह्व्योऽपि (बह्व्यस्तु) गत्वा (भूत्वा); राप्र. ३०७ राकवत्.

(५) वारा. ५।७७।१५ ; वाराकु. ६।६।१४ पूर्वार्धे (अन्योन्यं मतिमास्थाय यत्र संप्रतिभाष्यते ।) मत्यलेशो (मत्ये श्रेयो); राक. १०२ पूर्वार्धे (अन्योन्यमतिमास्थाय यत्र संप्रतिपद्यते ।) मत्यलेशो (मत्ये श्लेषो) मन्त्रः सो (स मन्त्रो); राप्र. ३०७ मन्त्रं कृ (अन्योन्यं) शेषं राकवत्.

सुव्यवस्थितमन्त्रलक्षणम्, अलक्षणीयता मन्त्रस्येष्टा, मन्त्रमूलानि राजकार्याणि, मन्त्रे चिन्तनीयाः शत्रुमित्रादयो विषयाः, मन्त्रनिश्चयविधिः, ऐकमत्येन मन्त्रानुसरणम्, मन्त्रविनाशकाः, मन्त्रभेदे दोषाः, मन्त्राधिकारिणोऽनधिकारिणश्च

[1]विभीषणवचः श्रुत्वा धर्मार्थसहितं तदा ।
मन्त्रिभिः सह मेधावी मन्त्रयामास रावणः ॥
वाक्यविद्वाक्यकुशलो दृप्तो दृप्तजनप्रियः ।
राक्षसाधिपतिर्वाक्यं युक्तार्थमिदमाददे ॥
स्वशक्तिं परशक्तिं च देशकालौ च तत्त्वतः ।
समीक्ष्याऽऽरभते कर्म यः स बुद्धिमतां वरः ॥
कर्मणामनुबन्धं च विदित्वा सर्वकर्मसु ।
अर्थानर्थानुबन्धं च पर्येषति स पण्डितः ॥
सुव्यवस्थितमन्त्रेण परमर्माभिघातिना ।
भवितव्यं नरेन्द्रेण न कामवशवर्तिना ॥
ऐश्वर्यमदमत्तेन सर्वलोकविमानिना ।
न हि धारयितुं शक्यं राज्यं चिरमनामयम् ॥
यः कार्यनिश्चयं कृत्वा विषयान् विषयाधिपः ।
प्राप्तुं कामयते लोके स राज्यफलमश्नुते ॥
अर्थानर्थौ विमृशता चेष्टमानेन निश्चितम् ।
भवितव्यं विशेषेण राज्ञा नित्यं कृतात्मना ॥
सुचेष्टया महात्मानः सततं वै विशेषतः ।
अलक्ष्याः सर्वभूतानां भवन्ति बहुकारिणः ॥
अलक्ष्या हि यथा लोके व्योम्नि चन्द्रार्कयोर्गतिः ।
नक्षत्राणां ग्रहाणां च तथा वृत्तं महात्मनाम् ॥
यं च पन्थानमाक्रम्य प्रयाति मनुजेश्वरः ।
तेनेश्वराभियातेन पथा याति ध्रुवं जनः ॥
यथा लोके तथा राज्ञां वृत्तानुगमनं नयः ।
बलस्य चतुरङ्गस्य नायकानुगतो नयः ॥
पर्याप्तं चाप्यभिज्ञानमिह स्वाधीनतां प्रति ।
यत्प्राप्तामपि वैदेहीं नैव मे स्पृशते मतिः ॥
तत्र केऽप्यकृतात्मानस्तपस्विजनधर्षणम् ।
गर्हेरंस्तत्र मे बुद्धिरियं प्रागेव निश्चिता ॥

(१) वारा. ५।८१।१–३०.

तापसानामलंकारं व्रतं धारयता कथम् ।
बाणचापासिहस्तेन विद्राव्या वनचारिणः ॥
ननु शान्तात्मभिर्वाऽपि सर्वभूतदयापरैः ।
भवितव्यं फलाहारैर्नित्यमाश्रमवासिभिः ॥
सूक्ष्मरक्ताम्बरधरा तप्तकुण्डलधारिणी ।
का द्वितीया यथा सीता वसत्याश्रमवासिनी ॥
केन नूपुरनिर्घोषाः सकलाभरणस्वनाः ।
श्रुतपूर्वा मनुष्येण धर्मार्थं वसता वने ॥
तदेवं धर्माचरणाद्विनिवृत्तः स राघवः ।
राक्षसानां वधं कृत्वा ते गतास्त्रिदिवं पुनः ॥
अतर्क्यमप्यनिश्चेयं दैवं कस्तु विलङ्घयेत् ।
अर्थानर्थं फलं लोके सर्वप्राणिषु वर्तते ॥
तत्र यन्मानुषं कर्म तत्सर्वं सुपरीक्षितम् ।
यच्च वै मानुषादन्यद्दैवं च तत्समीक्षितम् ॥
सर्वे समनुपश्यन्ति यां गतिं बुद्धिचिन्तकाः ।
तां कृतान्तः प्रभुर्भूत्वा यथेष्टमपकर्षति ॥
कथं वानरमात्रेण लङ्का हीयं विगाहितुम् ।
शक्या दैवादृते तस्माद्दैवं सुमहदद्भुतम् ॥
विपन्नेष्वपि कार्येषु यथा मन्त्रा महाबलाः ।
अरयोऽपि वशं यान्ति तस्मान्मन्त्रवशो नयः ॥
ब्राह्मणानां यथोंकारः प्राधीतानां सदा भवेत् ।
मन्त्रमूलानि कर्माणि तथा राज्ञां विशेषतः ॥
गीयते हि यथा लोके श्रुतिमार्गप्रदर्शनम् ।
तद्विधं कुरुते विद्वान् मन्त्रकर्मपरिग्रहम् ॥
यादृशैः सह मन्त्रश्च परिरक्षा च यादृशैः ।
राज्ञां नयवशान्मन्त्रः सर्वमेतत्सुनिश्चितम् ।
विपरीतं ततः सर्वं वर्जनीयमिति श्रुतिः ॥
तस्मात्सर्वैर्गुणैर्युक्तैर्भवद्भिः सह मन्त्रणम् ।
तत्रायं सर्वसंक्षेपः श्रूयतां निश्चयो मम ॥
ऐकमत्येन भवतां प्रकुर्याद्रिपुबन्धनम् ।
कार्यमेकार्थता दैवं मम चैव परस्य वा ॥
विदित्वा मन्त्र्यतां मन्त्रः समं निश्चयलक्षणम् ।
मन्त्रनिश्चयमापन्नो विधास्ये यदनन्तरम् ॥

[1]भिन्नैर्यन्मन्त्रिभिर्मन्त्रो नान्योन्येनाभि-
संहितम् ( ? तः ) ॥
संहता ह्यभिवर्तन्ते प्रीतियोगात्परस्परम् ।
भिन्ना नैकार्थतां यान्ति कालेष्वसुहृदो यथा ॥
परस्परमतै राजन्निह चित्तानुवर्तिभिः ।
भवत्याप्यायितो मन्त्रस्तद्भेदः प्रसमीक्ष्यताम् ॥
अविभिन्नस्तु राजेन्द्र भवत्येकार्थतां प्रति ।
यदि निःश्रेयसो मन्त्रस्तत्परं भूतिलक्षणम् ॥
एवं मन्त्रस्य भेदश्च संघातश्च न शोभनः ।
उभावेतौ महाबाहो त्याज्यौ मन्त्रविनाशनौ ॥
हेतुत्वं भजमानो हि सविशेषं परीक्षितः ।
सुश्रावितो विशुद्धत्वं मन्त्रः समुपगच्छति ॥
युद्धकालमिमं सर्वे वयं विद्मः सकारणम् ।
बुद्धिमद्भिर्विचेतव्यं तस्माद्राजन्बलाबलम् ॥
के वयं के परे युद्धे कानि प्रहरणानि च ।
देशकालबलं किं च किं च केषां सुखावहम् ॥
[2]यत्प्रियं च हितं चैव साधुधर्मं च सर्वशः ।
कुर्युस्तन्मन्त्रिणो वाक्यं मन्त्र्यमाणा विशेषतः ॥
[3]प्राप्य कार्यं गरीयस्तु नेतुर्वा गुणसंपदाम् ।
प्रियमुत्सृज्य वक्तव्यं हितमेवेह मन्त्रिणा ॥
[4]तव राजेन्द्र विस्तीर्णैर्गुणैर्विश्रब्धतां गतः ।
इममर्थं प्रवक्ष्यामि हितं बुद्ध्या परीक्षितम् ॥
इह धर्मार्थकामानामवाप्तिः फलमिष्यते ।
तत्रार्थः सह कामेन परीक्ष्यो धर्मचक्षुषा ॥

( १ ) वारा. ५।८३।५–१२.

( २ ) वारा. ५।८५।२ ; राक. १०६ धर्मं (धर्म्यं) कुर्यु ( ब्रूयु ) माणा ( माणे ) ; राप्र. ३११ मन्त्र्यमाणा ( मन्त्रमाणे ) शेषं राकवत्.

( ३ ) वारा. ५।८५।३ ; राक. १०६ पूर्वार्धे ( प्राप्ते कार्ये शरीरं तु नेतुं स्वां गुणसंपदम् । ) मेवेह ( मेव हि ) ; राप्र. ३११ मुत्सृज्य ( मेव हि ) शेषं राकवत्.

( ४ ) वारा. ५।८५।४–७.

परित्यज्य हि यो धर्ममर्थमर्थाय पश्यति ।
कामं वा कामलाभार्थं न स बुद्धि(? द्धे)षु
बुद्धिमान् ॥
मन्त्रितो यो बहुविधो निःसारः सारदर्शिभिः ।
अमात्यैर्मन्त्रिभिर्मन्त्रः सन्नि( ? स नि )योगान्न
शोभनः ॥
[1]यत्र नेता च गुणवान्सहायाश्च गुणान्विताः ।
तत्र धर्मार्थकामानां भवेत्सम्यक् परीक्षणम् ॥
इह नेता च विगुणः सहाया गुणवर्जिताः ।
एवं कृत्वा किमप्येतद्वर्तते मन्त्रसंज्ञकम् ॥
[2]अर्थानर्थौ हि यत्रोभौ संशयश्च परीक्ष्यते ।
स मन्त्र इति विज्ञेयः शेषास्तु खलु विक्रमाः ॥
[3]मन्त्रे समुपनीतेन सुहृदा शुद्धबुद्धिना ।
न युक्तं कैतवं कर्तुं हिताद्धि प्रतिबुद्धिना ॥
[4]यः पश्चात्पूर्वकार्याणि करोत्यैश्वर्यमोहितः ।
पूर्वं चोत्तरकार्याणि न स वेद नयानयौ ॥
[5]देशकालविहीनानि कर्माणि विपरीतवत् ।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥
[6]त्रयाणां पञ्चधा योगं कर्मणां प्रतिपद्यते ।
सचिवैः संविदं कृत्वा स सम्यग्वर्तते पथि ॥
[7]याथातथ्येन वै राजा समयं विजिगीषति ।
बुध्यते स शुचिर्बुद्ध्या सुहृदश्चानुपश्यति ॥

( १ ) वारा ५।८९।१५–१६.

( २ ) वारा. ५।८९।१७ ; राक. १०२ षास्तु (षस्तु) क्रमाः ( क्रमः ) ; राप्र. ३०७ राकवत्.

( ३ ) वारा. ५।८९।१८.

( ४ ) वारा. ६।४१।५ ; वाराकु. ६।६३।५ द्वितीय-चरणे ( कुर्यादैश्वर्यमास्थितः ) चोत्तर ( चापर ).

( ५ ) वारा. ६।४१।६ ; वाराकु. ६।६३।६.

( ६ ) वारा. ६।४१।७ ; वाराकु. ६।६३।७ प्रति-पद्यते ( यः प्रपश्यति ) संविदं ( समयं ) सम्यग् ( सभ्ये ).

( ७ ) वारा. ६।४१।८ ; वाराकु. ६।६३।८ पूर्वार्धे ( यथागमं च यो राजा समयं विचिकीर्षति । ) स शुचिर् ( सचिवान् ).

[1]धर्ममर्थं च कामं च सर्वथा रक्षसां पते ।
भजते पुरुषः काले सर्वद्वंद्वानि वै पुनः ॥
[2]त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते ।
राजा वा राजपुत्रो वा वृथा तस्य बहुश्रुतम् ॥
[3]उपप्रदानं सान्त्वं च भेदं काले च विक्रमम् ।
योगं च राक्षसश्रेष्ठ तावुभौ च नयानयौ ॥
[4]काले धर्मार्थकामान्यः संमन्त्र्य सचिवैः सह ।
निषेवेदात्मवाँल्लोके न तं व्यसनमाश्रयेत् ॥
[5]हितानुबन्धमालोक्य कार्याकार्यमिहाऽऽत्मनः ।
राजा सहार्थतत्त्वज्ञैः सचिवैर्बुद्धिनिश्चितैः ॥
[6]अनभिज्ञा हि शास्त्राणां बहवः पशुबुद्धयः ।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥
[7]मन्त्रिरूपा हि रिपवः संभाव्यास्ते विचक्षणैः ।
ये हितं नयमुत्सृज्य विपरीतोपसेविनः ॥
[8]अशास्त्रविदुषां तेषां न कार्यमहितं वचः ।
अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम् ॥

(१) वारा. ६।४१।९ ; वाराकु. ६।६३।९ सर्वथा (सर्वान् वा) भजते (भजेत) सर्वद्वंद्वानि वै (त्रीणि द्वंद्वानि वा).

(२) वारा. ६।४१।१० ; वाराकु. ६।६३।१० पुत्रो वा वृथा (मात्रो वा व्यर्थं).

(३) वारा. ६।४१।११ ; वाराकु. ६।६३।११ सान्त्वं च (सान्त्वं वा) राक्षस (रक्षसां).

(४) वारा. ६।४१।१२ ; वाराकु. ६।६३।१२ वेदा (वेता) तं (स) श्रयेत् (प्नुयात्).

(५) वारा. ६।४१।१३ ; वाराकु. ६।६३।१३ लोक्य (लोच्य) वैर्बुद्धिनिश्चितैः (वैः स हि जीवति).

(६) वारा. ६।४१।१४ ; वाराकु. ६।६३।१४ पूर्वार्धे (अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः ।) ; राक. १०५ प्रथमचरणे (अनभिज्ञाय शास्त्राणि) ; राप्र. ३०९-३१० राकवत्.

(७) वारा. ६।४१।१५ ; राक. १०५ हितं नय (हितोदय) ; राप्र. ३१० राकवत्.

(८) वारा. ६।४१।१७ ; वाराकु. ६।६३।१५.

[1]अहितं हि हिताकारं धाष्ट्र्याज्जल्पन्ति ये जनाः ।
अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृतदूषणाः ॥
[2]विनाशाय च भर्तुर्हि भेदिताः शत्रुभिर्बुधैः ।
विपरितानि कृत्यानि कारयन्तीह मन्त्रिणः ॥
[3]तान्भर्ता मित्रसंकाशानमित्रान्मन्त्रनिर्णये ।
व्यवहारे च जानीयात्सचिवानुपसंहितान् ॥
[4]चपलस्य हि कृत्यानि सहसाऽनुप्रधावतः ।
छिद्रमन्ये प्रपद्यन्ते क्रौञ्चच्छिद्रमिव द्विजाः ॥
[5]शक्तो व्यवसितः शत्रुः स्वेन चार्थेन तुष्यति ।
सर्वं तस्मै प्रदातव्यमिति बुद्धिमतां नयः ॥
[6]यो हि शत्रुमवज्ञाय नाऽऽत्मानं परिरक्षति ।
अवाप्नोति हि सोऽनर्थान् स्थानाच्च व्यवरोप्यते ॥

## कौटिलीयमर्थशास्त्रम्

मन्त्रमूलानि कार्याणि, मन्त्रस्य संवृतो देशः, मन्त्ररक्षणं मन्त्रभेदनिवारणमिष्टमत्यन्तम्, मन्त्राधिकारिणो मन्त्रणे तत्संख्याविवेकश्च, मन्त्ररीतिश्चिन्तनीया विषयाश्च, बहुमतत्वं कार्यसिद्धिकरत्वं वा प्रमाणम्, मन्त्राङ्गानि, मन्त्रिपरिषत्

[7]कृतस्वपक्षपरपक्षोपग्रहः कार्यारम्भांश्चिन्तयेत् । मन्त्रपूर्वाः सर्वारम्भाः ॥

(१) वारा. ६।४१।१८ ; वाराकु. ६।६३।१६ हि (च) जनाः (नराः) कृत (कृत्य) ; राक. १०५ जनाः (नराः) वेक्ष्य (वेक्ष्या) ; राप्र. ३१० राकवत्.

(२) वारा. ६।४१।१९ ; वाराकु. ६।६३।१७ पूर्वार्धे (विनाशयन्तो भर्तारं सहिताः शत्रुभिर्बुधैः ।) ; राक. १०५ च (स्व) भेदिताः (संहताः) ; राप्र. ३१० राकवत्.

(३) वारा. ६।४१।२० ; वाराकु. ६।६३।१८ रे च (रेण).

(४) वारा. ६।४१।२१ ; वाराकु. ६।६३।१९ स्य हि (स्येह) छिद्र (छिद्र) च्छिद्र (स्य ख).

(५) वारा. ६।४१।२२.

(६) वारा. ६।४१।२३ ; वाराकु. ६।६३।२० मवं (मभि) त्मानं परि (त्मानमभि).

(७) कौ. १।१५.

'मन्त्राधिकारः' इति सूत्रम् । कर्मणामारम्भोपायादिकार्यनिरूपणं मन्त्रः, स इहाधिक्रियते इत्यर्थः । सर्वोपधाशुद्धाः मन्त्रिणः कर्तव्या इत्युक्तम्, मन्त्रस्वरूपं तु नोक्तम्, तदिहोच्यत इति संबन्धः ।

स्वविषये परविषये च कृत्याकृत्यानां स्वानुकूलीकरणानन्तरं विजिगीषुणा स्वविषये दुर्गादीनां परविषये संधिविग्रहादीनां च कर्मणां आरम्भाः विमृश्य राज्ञा निर्धारयितव्या इत्याह– कृतेत्यादि । चिन्तयेत् मन्त्रयेत् । चिन्तने हेतुमाह– मन्त्रपूर्वाः सर्वारम्भा इति । प्रथमं मन्त्रः ततः आरम्भः इत्येष क्रमः कर्मसमृद्धिफलो लोके नियतो यस्मात् तस्माच्चिन्तयेदित्यभिप्रायः । श्रीमूला.

**तदुद्देशः संवृतः कथानामनिःस्रावी पक्षिभिरप्यनालोक्यः स्यात् । श्रूयते हि शुकशारिकाभिर्मन्त्रो भिन्नः श्वभिरन्यैश्च तिर्यग्योनिभिः । तस्मान्मन्त्रोद्देशमनायुक्तो नोपगच्छेत् । उच्छिद्येत मन्त्रभेदी ॥**

मन्त्रदेशमाह– तदित्यादि । तदुद्देशः मन्त्रयोग्यो देशः संवृतः सर्वत आवृतः, कथानां वचनानां अनिःस्रावी –निःस्रावः बहिर्निःष्यन्दः, तद्वान् न भवतीत्यनिःस्रावी, अन्तः कथ्यमानं बहिःस्थितैर्यथा न श्रूयेत तथा संनिवेशित इत्यर्थः, पक्षिभिरपि अनालोक्यः अदृश्यश्च स्यात् । कुत इत्यत आह– श्रूयते हीत्यादि । भिन्नः प्रकाशितः । तस्मादित्यादि । अनायुक्तः राज्ञा मन्त्रकर्मणि अनियुक्तः । मन्त्रभेदने दण्डमाह– उच्छिद्येतेति । उच्छेदनं उन्मूलनम् । श्रीमूला.

**मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्याम् । इङ्गितमन्यथावृत्तिः । आकृतिग्रहणमाकारः ॥**

विनैव वचनमायुक्तानामिङ्गिताकाराभ्यामपि मन्त्रभेदो भवतीत्याह– मन्त्रभेदो हीत्यादि । अन्यथावृत्तिः स्वाभाविकचेष्टितविलक्षणं चेष्टितम् । आकृतिग्रहणमाकारः– आकृतिः अङ्गसंस्थानम्, तद्रूपं ग्रहणं भावज्ञानसाधनम् । स्वाभाविकाकृतिविलक्षणो मुखमालिन्यादिराकृतिविशेष इत्यर्थः । स आकारः आकारशब्दवाच्यः । श्रीमूला.

**तस्य संवरणमायुक्तपुरुषरक्षणमा कार्यकालादिति । तेषां हि प्रमादमदसुप्तप्रलापकामादिरुत्सेकः प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति । तस्माद्रक्षेन्मन्त्रम् ॥**

तस्य संवरणं इङ्गिताकारयोर्गोपनम् । स च तच्च तत् इतीह 'नपुंसकमनपुंसकेन' (पा. १।२।६९) इति नपुंसकशेषः एकवद्भावश्च । आयुक्तपुरुषरक्षणं आयुक्तानां पुरुषाणां मन्त्राधिकृतानां दूतमन्त्रिप्रभृतीनां मन्त्रभेदस्थानेभ्यो रक्षणं च आ कार्यकालात् कार्यसिद्धिकालमभिव्याप्य, कर्तव्यमिति शेषः । मन्त्रभेदस्थानं प्रपञ्चयति– तेषां हीति । तेषां आयुक्तानां प्रमादमदसुप्तप्रलापकामादिः– प्रमादः कार्यान्तरवैयग्र्यप्रभवमनवधानम्, मदः मद्यपानादिजश्चित्तविकारः, सुप्तप्रलापः स्वप्नालापः, कामः विषयतृष्णा, एते आदयः यस्य दोषसमुदायस्य सः, उत्सेकः गर्वः, प्रच्छन्नः कुड्यान्तरितः श्रोता, अवमतः जडोऽयमित्यवज्ञातः, वाशब्दः समुच्चये, मन्त्रं भिनत्ति रहसि विमृश्य निर्णीतमर्थं बहिरुद्गिरति । तस्मादिति । तस्मात् प्रमादादेरवमतपर्यन्तात् वर्गात् मन्त्रं रक्षेत् । श्रीमूला.

**मन्त्रभेदो ह्ययोगक्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च । तस्माद्गुह्यमेको मन्त्रयेतेति भारद्वाजः । मन्त्रिणामपि हि मन्त्रिणो भवन्ति । तेषामप्यन्ये । सैषा मन्त्रिपरंपरा मन्त्रं भिनत्ति ॥**

अयोगक्षेमकरः योगक्षेमविघातकः । गुह्यं गोप्यमर्थम् । एकः मन्त्रिणाऽपि द्वितीयेन विनाभूतः । भारद्वाजपक्षस्य समर्थकमाह– मन्त्रिणामपीत्यादि । मन्त्रिपरंपरा मन्त्रिसंतानः । श्रीमूला.

**तस्मान्नास्य परे विद्युः कर्म किंचिच्चिकीर्षितम् ।**
**आरब्धारस्तु जानीयुरारब्धं कृतमेव वा ॥**

तस्मात् मन्त्रभेदप्रसङ्गात् अस्य विजिगीषोः चिकीर्षितं कर्तुमिष्टं कर्म परे अन्ये न विद्युः, किंतु आरब्धारः कर्मानुष्ठानोपक्रमकर्तारः जानीयुः । तेऽपि कदा जानीयुः ?

आरब्धं जानीयुः आरम्भानन्तरमनुमिनुयुः आरम्भमात्रेण कर्मणः कृत्स्ना गतिरनुमातुं शक्या चेत्। यदि न शक्या तेऽपि आ निष्पत्तेर्न जानीयुरित्यभिप्रायेणाऽऽह– कृतमेव वेति। श्रीमूला.

**नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयबलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्। तस्मात् बुद्धिवृद्धैः सार्धमासीत मन्त्रम्॥**

तदिदं भारद्वाजमतमाक्षिप्य विशालाक्षः प्रत्यवतिष्ठते इत्याह– नैकस्येत्यादि। प्रत्यक्षपरोक्षेत्यादिवाक्येन राजकर्मणः सर्वस्य सहायसापेक्षत्वं मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्तं स्मारयति। अज्ञातस्य ज्ञानम्, ज्ञातस्य निश्चयेन दृढीकरणम्, 'इदमदो वा' इत्यर्थयोर्द्विधाभवने संदेहनिवर्तनम्, अंशेनोपलब्धस्यांशान्तरानुमितिरित्येवंजातीयं कार्यं मन्त्रिसाध्यमित्याह– अनुपलब्धस्येत्यादिना। तस्मादिति। तस्मात् राजवृत्तेः सहायसापेक्षत्वनियमात् बुद्धिवृद्धैः बुद्धिप्रशस्तैः सार्धं मन्त्रं आसीत मन्त्रमुद्दिश्य आसीत। मन्त्रशब्दस्य भावार्थत्वाद्वा 'अकर्मकधातुभियोगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वक्तव्यम्' (वार्तिकम्) इति कर्मसंज्ञायां द्वितीया। श्रीमूला.

**न किंचिदवमन्येत सर्वस्य शृणुयान्मतम्।**
**बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः॥**

नावमन्येत नावजानीयात्। उपयुञ्जीत स्वीकुर्वीत। श्रीमूला.

**एतन्मन्त्रज्ञानं नैतन्मन्त्ररक्षणमिति पाराशराः। यदस्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्– कार्यमिदमेवमासीदेवं वा यदि भवेत्तत्कथं कर्तव्यमिति। ते यथा ब्रूयुस्तत्कुर्यात्। एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति॥**

सोऽयं विशालाक्षपक्षो मन्त्रज्ञानानुकूलः, न तु मन्त्ररक्षणानुकूल इति वदन्तः पराशरशिष्याः प्रत्यवतिष्ठन्ते इत्याह– एतदित्यादि। कस्तर्हि मन्त्ररक्षणोपाय इत्याह– यदस्येति। अस्य यत् कार्यं अभिप्रेतं मन्त्रयितुमिष्टं तत्प्रतिरूपकं तत्प्रतिबिम्बभूतं तत्समानरूपं कार्यं कथागतं पुराणगतं वाऽपदिश्य मन्त्रिणः पृच्छेत्। कथं पृच्छेत्? इदं कार्यं एवमासीत् यदि अनेन प्रकारेण निष्पन्नं चेत्, अथवा एवं भवेत् यदि अनेन प्रकारेण निष्पाद्यं चेत्, कथं कर्तव्यं तर्हि केन प्रकारेणानुष्ठेयमिति। ते पृष्टा मन्त्रिणः यथा ब्रूयुः तत् कुर्यात् अनुतिष्ठेत्। एवं अस्मिन् मन्त्रानुष्ठानप्रकारे मन्त्रोपलब्धिः संवृतिश्च भवति मन्त्रज्ञानं मन्त्रगोपनं च सिध्यतीति। श्रीमूला.

**नेति पिशुनः। मन्त्रिणो हि व्यवहितमर्थं वृत्तमवृत्तं वा पृष्टमनादरेण ब्रुवन्ति प्रकाशयन्ति वा। स दोषः। तस्मात् कर्मसु ये येष्वभिप्रेतास्तैः सह मन्त्रयेत्। तैर्मन्त्रयमाणो हि मन्त्रबुद्धिं गुप्तिं च लभत इति॥**

तदुभयमपि न सिध्यतीति वदन् नारदः प्रत्यवतिष्ठते– नेतीति। उभयासिद्धौ हेतुमाह– मन्त्रिणो हीत्यादि। व्यवहितं रूपान्तरावच्छादितस्वरूपम्। अनादरेण ब्रुवन्ति अनास्थया कथयन्ति, न तु पर्यालोच्य कथयन्ति, प्रकाशयन्ति वा भिन्दन्ति च, अस्मास्वविश्वस्तोऽयं राजा अस्मदनुष्ठेयमप्यर्थमस्मासु न प्रकाशयतीति कोपादिति भावः। तस्मादिति। तस्मात् यथोक्तदोषप्रसङ्गात् ये येषु कर्मसु अभिप्रेताः मन्त्रणानुष्ठाननिपुणतया विश्वस्ततया चाभिमताः तैः सह मन्त्रयेत्। तथा मन्त्रणे गुणमाह– तैरित्यादि। श्रीमूला.

**नेति कौटल्यः। अनवस्था ह्येषा। मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत। मन्त्रयमाणो ह्येकेनार्थकृच्छ्रेषु निश्चयं नाधिगच्छेत्। एकश्च मन्त्री यथेष्टमनवग्रहश्चरति। द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यामवगृह्यते, विगृहीताभ्यां विनाश्यते। त्रिषु चतुर्षु वा नैकान्तं कृच्छ्रेणोपपद्यते महादोषम्। उपपन्नं तु भवति। ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते, मन्त्रो वा रक्ष्यते॥**

इदमपि मतमयुक्तमित्याह– नेतीति । कुत इत्यत्राऽऽह– अनवस्थेति । हि यतः एषा अनवस्था यथोक्ताभ्युपगमः अनवस्थापादकः । अयं भावः– तत्तत्कर्माभिप्रेतैः सह मन्त्रणाङ्गीकारे कर्मणां बहुत्वात् बहुप्रकारत्वाच्च मन्त्रीयत्तानवधारणप्रसङ्ग इति । स्वमतमाह– मन्त्रिभिस्त्रिभिरित्यादि । एकेन सह मन्त्रणे दोषमाह– मन्त्रयमाण इत्यादि । अर्थकृच्छ्रेषु कार्यसंकटेषु क्लेशनिर्धारणीयेषु कार्येष्वित्यर्थः, अनवग्रहः निष्प्रतिद्वंद्वः चरति वक्ति अनुतिष्ठति च । द्वाभ्यां सह मन्त्रणे दोषमाह– द्वाभ्यामित्यादि । संहताभ्यां अवगृह्यते एकमताभ्यां सद्भ्यां स्ववशं नीयते राजा, विगृहीताभ्यां विनाश्यते परस्परविपरीतमताभ्यां सद्भ्यां कार्यहानिं प्राप्यते । त्रिचतुरमन्त्रिपक्षे विशेषमाह– त्रिष्विति । त्रिषु चतुर्षु वा मन्त्रसहायेषु महान् दोषः अनर्थः येन तत् महादोषं परमानर्थहेतुभूतं राजावग्रहणादिकं नैकान्तं नियतं न भवति, कृच्छ्रेण उपपद्यते कदाचिदुत्पाद्यमानमपि महता यत्नेनोत्पद्यते, नाल्पेन यत्नेनेत्यर्थः । ‘महादोषः’ इति पाठे एकद्विमन्त्रिपक्षोक्तो महान् दोष इत्यर्थः कर्मधारयेण लभ्यः । उपपन्नं तु भवति मन्त्रनिश्चयेन मन्त्ररक्षणेन च उपपत्तियुक्तं भवति, अर्थाच्चिन्त्यमानं कर्म । पञ्चादिषु मन्त्रसहायेषु को दोषस्तत्राऽऽह– तत इत्यादि । ततः परेषु चतुर्भ्योऽधिकेषु पञ्चादिषु । श्रीमूला.

**देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत ॥**

देशकालकार्यापेक्षया कदाचिदेकेन द्वाभ्यां च सह मन्त्रणं असहायस्य सतो वा मन्त्रणमिष्यते इत्याह– देशेत्यादि । यथासामर्थ्यं आत्मात्ममन्त्रिसामर्थ्यानतिक्रमेण । श्रीमूला.

**कर्मणामारम्भोपायः पुरुषद्रव्यसंपद् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः । तानेकैकशः पृच्छेत्समस्तांश्च । हेतुभिश्चैषां मतिप्रविवेकान् विद्यात् । अवाप्तार्थः कालं नातिक्रामयेत् । न दीर्घकालं मन्त्रयेत । न च तेषां पक्ष्यैर्येषामपकुर्यात् ॥**

अथ मन्त्रस्य पञ्चाङ्गत्वं व्युत्पादयति– कर्मणामिति । कर्मणां आरम्भोपायः स्वविषये परिखाप्राकारादिरूपदुर्गादिसृष्टिलक्षणानां परविषये संधिविग्रहादिनिमित्तदूतसंप्रेषणादिलक्षणानां च कार्याणामुपक्रमोपायः । पुरुषद्रव्यसंपत्– स्वविषये पुरुषाः दुर्गादिनिर्माणकुशलास्तक्षायस्कारादयः, द्रव्याणि पृथुच्छदादिदारव्यवृक्षादीनि, परविषये पुरुषाः संध्याद्यनुष्ठानकुशलाः दूतसेनापतिप्रभृतयः, द्रव्याणि रत्नस्वर्णादीनि, तेषां संपत् गुणवत्ता समृद्धिश्च । देशकालविभागः– देशः स्वविषये दुर्गाद्यारम्भे जनपदमध्यान्तादिरनूपादिश्च, कालः सुभिक्षदुर्भिक्षादिर्वर्षादिश्च, परविषये संध्यादौ देशः महाफलोर्वरादिः, कालः अभियोगानभियोगाद्यवस्था, तेषां सर्वेषां विभागः विवेकः । विनिपातप्रतीकारः– विनिपातः विघ्नः दुर्गनिर्माणादिविषयः संधिपुरुषप्रेषणादिविषयश्च, तस्य प्रतीकारः प्रशमनम् । कार्यसिद्धिः कर्मफलं क्षयः स्थानं वृद्धिरित्येवं त्रिरूपम् । इति पञ्चाङ्गो मन्त्रः । मन्त्रविषयमर्थं मन्त्रिष्वेकैकमाहूयान्यासंनिधाने पृच्छेत्– ‘कस्तेऽत्राभिप्रायः ?’ इति, संमेल्य च सभायां तान् सर्वान् ‘कोऽत्र वोऽभिप्रायः ?’ इति पृच्छेदित्याह– तानेकैकश इत्यादि । हेतुभिरित्यादि । एषां मतिप्रविवेकान् अभिप्रायविभागान् हेतुभिः विद्यात् कारणैः पर्यालोचयेत् अर्थनिश्चयार्थम् । अवाप्तार्थः निश्चितार्थः । अपकार्यजनबन्धुभिः सह न मन्त्रयेतेत्याह– न च तेषामित्यादि ।
श्रीमूला.

**मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः । षोडशेति बार्हस्पत्याः । विंशतिमित्यौशनसाः । यथासामर्थ्यमिति कौटल्यः ॥**

अथ राजनिर्णीतकार्यजातानुष्ठान–राजनिर्णेतव्यनवनवकार्यजातोल्लेखनादिसर्वराष्ट्रकर्मनिर्वहणप्रधाना मन्त्रिपरिषन्नाम काचित् राज्ञो भवति । तस्यां राज्ञा कति मन्त्रिणः पारिषदाः कर्तव्या इत्याकाङ्क्षायां द्वादशेति मनुशिष्याणाम्, षोडशेति बार्हस्पत्यानाम्, विंशतिरित्यौशनसानाम्, कार्यानुष्ठातृपुरुषसामर्थ्यानुगुण्येन यथोक्तसंख्यास्तन्न्यूनसंख्यास्तदधिकसंख्या वेत्यात्मनश्च मतमित्याह– मन्त्रिपरिषदमित्यादि । श्रीमूला.

ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः। अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसंपदं च कर्मणां कुर्युः। आसन्नैः सह कार्याणि पश्येत्, अनासन्नैः सह पत्रसंप्रेषणेन मन्त्रयेत। इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम्। स तच्चक्षुः। तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः॥

पारिषदानां व्यापारमाह— ते हीत्यादि। स्वपक्षं परपक्षं च चिन्तयेयुः स्वपक्षगतं परपक्षगतं च कार्यं समीक्षापूर्वमनुतिष्ठेयुः। कर्मणां मध्ये अकृतारम्भं अकृतस्य कर्मणः अनुष्ठानोपक्रमम्, आरब्धानुष्ठानं उपक्रान्तस्य परिसमापनम्, अनुष्ठितविशेषं परिसमापितस्य संस्कारं परिनिष्ठितप्रासादादिशोभार्थसुधालेपचित्रार्पणादिजातीयम्, नियोगसंपदं नियोगाः तत्तत्कर्मकराधिकाराः तेषां संपदं गुणवत्तां बाहुल्यं च कुर्युः। मन्त्रिपरिषत्सभ्येषु आसन्नानासन्नेषु विषये राजा कथं व्यवहरेदित्येतदाह— आसन्नैरित्यादि। पत्रसंप्रेषणेन लिखितसकलार्थस्य लेखस्य प्रेषणेन। इत्थं बहुमन्त्रिबुद्धिसाहाय्येनार्थदर्शनस्य महाफलतयाऽऽत्मसमर्थितस्य स्तुत्यर्थं सहस्राक्षपदनिर्वचनभङ्ग्याऽर्थवादमाह— इन्द्रस्य हीति। सः इन्द्रः तच्चक्षुः तत् ऋषिसहस्रं मन्त्रिपरिषदात्मकं चक्षुः कार्यतत्त्वदर्शनसाधनं यस्य सः। द्व्यक्षमिति विशेषणेन वस्तुतः पुरुषान्तरवत् द्विनयन एवासौ सहस्राक्ष इत्युपचर्यते इति दर्शितम्। श्रीमूला.

आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाऽऽहूय ब्रूयात्। तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत्कुर्यात्। कुर्वतश्च—

प्राणापायशङ्कावहे कार्ये पूर्वोक्तान् मन्त्रिणः मन्त्रिपरिषदं चेमां मेलयित्वा तत्त्वं पृच्छेदित्याह— आत्ययिक इत्यादि। तत्र भूयिष्ठाः बहुतमाः यत् ब्रूयुः तत् कुर्यात् अनुतिष्ठेत्, अथवा यत् कार्यसिद्धिकरं ब्रूयुः अर्थात् अभूयिष्ठा अपि, तत् कुर्यात्। कुर्वतश्चेति वक्ष्यमाणश्लोकान्वयि। श्रीमूला.

नास्य गुह्यं परे विद्युश्छिद्रं विद्यात्परस्य च।
गूहेत्कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः॥

यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति।
एवमश्रुतशास्त्रार्थो न मन्त्रं श्रोतुमर्हति॥

'नास्य' इति 'यथा ह्यश्रोत्रियः' इति च श्लोकावतिरोहितार्थौ। श्रीमूला.

## चाणक्यसूत्राणि

मन्त्रमूलानि कार्याणि, मन्त्ररक्षणं मन्त्रभेदनिवारणमत्यन्तमिष्टम्, मन्त्राधिकारिणः, ऐकमत्ये मन्त्रनिश्चयः

[1]मन्त्रमूलाः सर्वारम्भाः॥
मन्त्ररक्षणे कार्यसिद्धिर्भवति॥
मन्त्रविस्रावी कार्यं नाशयति॥
प्रमादाद्द्विषतां वशमुपयास्यति॥
सर्वद्वारेभ्यो मन्त्रो रक्षितव्यः॥
मन्त्रसंपदा राज्यं वर्धते॥
श्रेष्ठतमां मन्त्रगुप्तिमाहुः॥
कार्यान्धस्य प्रदीपो मन्त्रः॥
मन्त्रचक्षुषा परच्छिद्राण्यवलोकयन्ति॥
मन्त्रकाले न मत्सरः कर्तव्यः॥
त्रयाणामेकवाक्ये संप्रत्ययः॥
कार्याकार्यतत्त्वार्थदर्शिनो मन्त्रिणः॥
षट्कर्णाद्भिद्यते मन्त्रः॥

## चाणक्यनीतिदर्पणः

मन्त्रगूहनमत्यन्तमिष्टम्

[2]मनसा चिन्तितं कार्यं वाचा नैव प्रकाशयेत्।
मन्त्रेण रक्षयेद्गूढं कार्ये चापि नियोजयेत्॥

## चाणक्यनीतिशास्त्रम्

मन्त्रगूहनमत्यन्तमिष्टम्

[3]मनसा चिन्तितं कर्म वचसा न प्रकाशयेत्।
अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते॥

---

(१) चासू. २२–३४.

(२) चाद. २।७ ; वृचा. २।७ उत्तरार्धे ( मन्त्ररक्षणगूढात्मा कार्येष्वेव नियोजयेत्॥ ).

(३) चानी. ३६ ; चासा. २।८ कर्म ( कार्यं ). उत्तरार्धे ( मन्त्रलक्षणगूढात्मा कार्यसिद्धिश्च जायते॥ ).

## चाणक्यसारसंग्रहः

मन्त्रगूहनमत्यन्तमिष्टम्

'नाऽऽत्मच्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु।
गूहेत्कूर्म इवाङ्गानि परभावं च लक्षयेत् ॥

## लघुचाणक्यः

मन्त्रहानौ राज्यनाशः

'मन्त्रहीनो भवेद्राजा तस्य राज्यं विनश्यति ॥

## मनुः

मन्त्राधिकारिणः सचिवाः, मन्त्रणीया विषयाः,
समस्तैर्व्यस्तैश्च मन्त्रिभिर्मन्त्रणम्

*'मौलाञ्शास्त्रविदः शूराँल्लब्धलक्षान्कुलोद्भवान् ।
सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥
अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ।
विशेषतोऽसहायेन किंतु राज्यं महोदयम् ॥
'तैः सार्धं चिन्तयेन्नित्यं सामान्यं संधिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥

(१) †तैः बुद्धिसचिवैः मुख्यैश्चार्थाधिकारिभिः सह सामान्यं यत्नातिरहस्यं तच्चिन्तयेत् संधिविग्रहं 'किं संधिः संप्रति युक्तोऽथ विग्रहः ?', उभयत्र गुणदोषान् विचारयेत् । इदं कर्तव्यावधारणं तु स्वबुद्ध्या कुर्याद्यथाऽस्य परप्रयोज्यता न भवति । इदं चापरं चिन्तयेत्– स्थानम् । तच्चतुर्विधम्– दण्डकोशपुरराष्ट्राणि । तत्र दण्डो हस्त्यश्वरथपदातयः । तेषां प्रतिकर्म पोषणरक्षणादि चिन्त्यम् । न ह्यसमाधानं प्रधानम् । तथा कोशस्य हेमरूप्यबाहुल्यं प्रचुररूप्यता आयव्ययलक्षणं च । कोशस्य यानि यान्यायस्थानानि तानि न व्ययितव्यानि न विलम्बनीयानि भृत्यानाम् । तथा राष्ट्रस्य देशपर्यायस्य स्वाजीवः आत्मसंधारणं परसंधारणेन नदीवृक्षाः पशवः शत्रुद्वेषाक्रान्तप्रायः गुप्तिगोचरः पशुमान् अदेवमातृकः आपदि च दण्डकरग्रहः इत्येवमादि । पुरस्य वक्ष्यति– 'तत् स्यादायुधसंपन्नम्' (मस्मृ. ७।७५) इति । अथवा स्थानं स्वदेशाच्चाप्रच्यवनम् । एवं समुदयोऽपि चिन्त्यः । तत्र कृषिर्व्रजगुल्मस्थानानि वाणिज्यशुल्कदण्डाः इत्येवमादि । गुप्तिं स्वराष्ट्रगतां वक्ष्यति । लब्धप्रशमनं च देवताश्रमविद्यावतां धार्मिकाणां च मानदानत्यागायोगः उदितानां चाभ्यनुज्ञानं सर्वबन्धनमोक्षः अनुग्रहो दीनव्याधितानां उत्सवानां चापूर्वाणां प्रवर्तनं प्रवृत्तानामनुवृत्तिः । यच्च कोशदण्डोपाधिकमधार्मिकचरित्रं तदपनीय धर्मव्यवहारान् स्थापयेत् । अधर्मचारित्रमकृतमन्यस्य कृतं वाऽन्यैः प्रवर्तयेत् । न वा धर्मकृतं चान्यैर्निवर्तयेदिति । एवं स्थानादीनि चिन्त्यानि । मेधा.

(२) तैः सचिवैः सह सर्वदा यत्ना( ? यत्ना)-तिरहस्यं संधिविग्रहादि वक्ष्यमाणं तद्विचारयेत् । तथा तिष्ठत्यनेनेति स्थानं दण्डकोशपुरराष्ट्राख्यं चिन्तयेत् । तत्र दण्डो हस्त्यश्वरथपदात्यात्मकः, तस्य पोषणादि चिन्त्यम् । कोशोऽर्थनिचयः, तस्य व्ययादि चिन्त्यम् । पुरस्य 'तत् स्यादायुधसंपन्नम्' (मस्मृ. ७।७५) इति वक्ष्यति । राष्ट्रं देशः, तस्य च राष्ट्रीयजनपरवादिधारणक्षमत्वादि चिन्त्यम् । तथा समुद्यन्ति उत्पद्यन्ते अस्मादर्था इति समुदयः कृष्यादिधान्यहिरण्यादिस्थानम्, तच्चिन्तयेत् । गुप्तिं रक्षामात्मगताम् 'सुपरीक्षितमन्नाद्यमद्यात्' (मस्मृ. ७।२१७) 'परीक्षिताः स्त्रियश्चैनम्' (मस्मृ. ७।२१९) इत्यादिना वक्ष्यति, राष्ट्रगतां च 'राष्ट्रस्य संग्रहे नित्यम्' (मस्मृ. ७।११३) इत्यादिनाऽभिधास्यति । लब्धप्रशमनानि च 'जित्वा संपूजयेद्देवान्' (मस्मृ. ७।२०१) इति वक्ष्यति । गोरा.

* अस्य श्लोकद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः– मन्त्रिणः' इत्यस्मिन् प्रकरणे (पृ. १२५०–१२५२) द्रष्टव्यः ।

† अशुद्धिबहुलोऽयं ग्रन्थः कौ. ६।१, १३।५ इति कौटिलीयग्रन्थमनुसृत्य शोधनीयः ।

(१) चासा. २।७ ; चाश. ७।१३ पूर्वार्धे (नाऽऽत्मच्छिद्रं परे दद्यात् परच्छिद्राणि लक्षयेत् ।) च लक्ष (परीक्ष).

(२) लचा. ११९.

(३) मस्मृ. ७।५४,५५.

(४) मस्मृ. ७।५६ ; राक. १०६ ; मवि. लब्ध (सर्व) ; रार. ११ चिन्तये (मन्त्रये) ; पमा. ४०५–४०६ सामान्यं (सामादीन्) ग्रहम् (ग्रहान्) ; राप्र. ३१६.

(३) स्थानं चतुर्विधं सैन्यकोशपुरराष्ट्रभेदेन । समुदयः कृषिव्रजवनगुल्मस्थानवणिक्पथशुल्कदण्डादिः । गुप्तिः राष्ट्रादिरक्षा । लब्धप्रशमनं देवताश्रमविद्यावतां धार्मिकाणां दानसंमानयोगः । राक. १०८

(४) सामान्यं सर्वमेव, क्वचिद्विकारे पुनरविश्वासात् । संधिविग्रहाभ्यां षाड्गुण्योपलक्षणम् । स्थानं दण्डकोशपुरराष्ट्रम्, तत्र हि राजा स्थितः । समुदयं वार्तोपायम्, ततो धनस्योदयः । गुप्तिं लब्धस्य रक्षोपायम् । सर्वप्रशमनं जित्वा ब्राह्मणपूजनमित्यादि । 'जित्वा संपूजयेद्देवान्' (मस्मृ. ७।२०१) इति च वक्ष्यति । मवि.

(५) लब्धस्य च धनस्य प्रशमनानि सत्पात्रे प्रतिपादनादीनि चिन्तयेत् । * ममु.

(६) संधिविग्रहमिति समाहारः । † रार. ११

(७) सामान्यम्, यदपि( ? दनति- ) गोप्यं संधिविग्रहं तत् षट्कम् । दण्डः पणादिरूपो हस्त्यश्वरथपदातयो वा । § मच.

(८) संधिः पणबन्धः । विग्रहः वैर्यवस्कन्दः । अत्र 'सामान्यं संधिविग्रहम्' इत्युपादानात् सामान्यतः संधिविग्रहचिन्ता, विशेषतस्तु षाड्गुण्यप्रकरणे वक्ष्यते । ¶ राप्र. ३१६-३१७

(९) सामान्यं समानत्वं द्वैधीभावः इति । उभयोर्द्विषतोः समानो हि द्वैधीभावः । यथोक्तं कामन्दकेन— 'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥' (कानी. ११।२३) इति । स्थानं आसनम् । समुदयं यानम् । गुप्तिं आत्मगुप्तिम्, संश्रयमिति यावत् । आत्मगुप्तिलक्षणो हि संश्रयः । तथोक्तं कामन्दकेन— 'उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः । कुलोद्गतं सत्यमार्यं संश्रयेत बलोत्कटम् ॥' (कानी. ११।२७) इति । 'षाड्गुण्यात् स्वोपलब्धस्य परराष्ट्रस्य रञ्जनम् । अनुरागप्रतापाभ्यां लब्धप्रशमनं स्मृतम् ॥' इति च तेनैवोक्तम् । नन्द.

(१०) संधिः व्यवस्थाकरणम् । विग्रहः अपकारः । § भाच.

* शेषं गोरावत् ।
† शेषं मविगतम् ।
§ शेषं गोरागतं ममुगतं च ।
¶ शेषं राकवत् ।

[1]तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मने ॥

(१) तेषां पृथक् पृथक् एकैकस्य रहसि अभिप्रायं हृदयनिहितं भावं उपलभ्य । समस्तानां संहतानाम् । यत्कारणं कश्चित् पुरुषः परिषदि अप्रतिभानवान् भवति, रहसि प्रगल्भः, कश्चित् परिषद्यासादितप्रज्ञः । ततश्च तान् समस्तान् पृच्छेत् । ततः स्वयं यद्युक्ततरं हितमात्मने तत् व्यवस्येत् विदध्यात् तत्प्रामाण्यं तेषामेवान्यतमेनोपदिष्टं वा यदप्रत्यनीकं निर्दोषं च । $ मेधा.

(२) तेषां सचिवानां रहसि निष्प्रतिपक्षतया हृदयगतज्ञानसंभवात् प्रत्येकमभिप्रायं समस्तानामपि युगपदभिप्रायं बुद्ध्वा कार्ये यदात्मनो हितं तत् कुर्यात् । † ममु.

*[2]सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥
नित्यं तस्मिन्समाश्वस्तः सर्वकार्याणि निःक्षिपेत् ।
तेन सार्धं विनिश्चित्य ततः कर्म समारभेत् ॥

§ शेषं नन्दगतं ममुगतं च ।
$ गोरा., मवि., रार., मच. मेधागतम् ।
† नन्द., भाच. ममुगतम् ।
* अस्य श्लोकद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः- प्रधानमन्त्री' इत्यस्मिन् प्रकरणे (पृ. १२८५) द्रष्टव्यः ।

(१) मस्मृ. ७।५७ ; विश्व. १।३४८ चतुर्थचरणमात्रम् ; मेधा. विदध्या (व्यवस्ये) ; राक. २३, १०५ ; ममु. त्मने (त्मनः) ; रार. ११ समस्तानां (सामन्तानां) द्धितमात्मने (च्छिवमात्मनः) ; पमा. ४०६ ममुवत् ; मच. ममुवत् ; राप्र. १७८ ममुवत् ; भाच. ममुवत् .

(२) मस्मृ. ७।५८-५९.

*तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥

मन्त्रस्य गूहनमिष्टम्, मन्त्रार्हानर्हदेशकालादीनि

(१)गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥

(१) मन्त्रदेशविधिः । रहोगतः विविक्ते निर्जने देशे स्थितः । अविभावितः अनुमानेनापि यथा न जना जानन्ति 'इदं वस्तु विद्यते' इति तथा कुर्यात् । निःशलाकम् । शलाकाः इषीकाः । यत्र तृणमपि नास्ति, येन 'न कश्चित्तिष्ठति' इति संभावनाऽस्ति, तत् निःशलाकम् । †इमान्यङ्गानि– कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिरिति । अथवा प्रार्थनाकालं नातिपातयेत्तत्र दीर्घो मन्त्रः स्यात् । न तेषां ब्रूयात् गुप्तमन्त्रश्च स्यात् । ‡ मेधा.

(२) पर्वतपृष्ठमारुह्य धवलगृहं वा विविक्तदेशस्थः अरण्ये वा तृणादिरहिते मन्त्रभेदकभयादिवर्जिते पञ्चाङ्गं मन्त्रं ··· ···· विचिन्तयेत् । ¶ गोरा.

(३) मन्त्रभेदकारिभिरनुपलक्षितः । § ममु.

(४) मन्त्रयेदिदंयुक्तं तदुचितं स्थलमाह– गिरीति । प्रासादं रहोगतं अन्तःपुरगतम् । निःशलाके मन्त्रभेदकाः शलाकाः प्रतिरोधकजन्तवः वक्ष्यमाणाः जडादयः, तद्रहिते । विविक्ते इति यावत् । अविभावितः मन्त्रभेदकैरनुपलक्षितः । मच.

(१)यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ।
स कृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः ॥

(१) मन्त्रप्रकाशनिवारणार्थः श्लोकः । पृथग्जनाः अमन्त्रिणः मन्त्रविद्बाह्याः । मेधा.

(२) यस्य राज्ञः मन्त्रिव्यतिरिक्ताः जनाः संमील्य अभ्यूह्य मन्त्रं न जानन्ति स क्षीणकोशोऽपि समग्रां पृथिवीं भुनक्ति । * गोरा.

(३) पृथग्जनाः मन्त्रबाह्याः । समागम्य तन्मन्त्रज्ञैः सह । मवि.

(४) तत्रैव दृष्टार्थवादफलमाह– यस्येति । समागम्य मिलित्वा मन्त्रणं पृथङ्मन्त्रणं च । जनाः प्राणिनः । सः पार्थिवः दरिद्रोऽपि कृत्स्नां समुद्रमेखलां पृथ्वीं भुङ्क्ते इत्यन्वयः । मच.

(२)जडमूकान्धबधिरांस्तैर्यग्योनान्वयोतिगान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकालेऽपसारयेत् ॥

(१) यत् किंचित् प्राणिजातं तत् मन्त्रयमाणो विशोधयेत् ततः प्रदेशादपशोधयेत् मन्त्रभेदाशङ्कया । तिर्यग्योनिषु च शुकसारिकादयोऽपि मन्त्रं भिन्दन्ति । गवाश्वादयोऽपि योगारूढाः परिवर्तितनिकायाः सदसद्वार्ताहरा भवन्ति । तथा अन्तर्धानादयोऽपि नरेन्द्रविद्याः श्रूयन्ते । व्यङ्गत्वादेव ग्रहणे सिद्धे गोबलीवर्द-

---

* व्याख्यानसंग्रहः शेषस्थलादिनिदर्शश्च 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९४५) द्रष्टव्यः ।

† एतदादिर्ग्रन्थो गङ्गानाथझासंपादितमेधातिथिभाष्ये नास्ति । सर्वोऽप्ययं ग्रन्थः कौटिलीयग्रन्थानुवादः । पूर्वश्लोकभाष्यान्ते 'मन्त्रपञ्चाङ्गं दर्शयिष्यते' इति यदुक्तं तदेतत्पञ्चाङ्गदर्शनं स्यात् । 'अथवा प्रार्थना...' इत्यादिग्रन्थस्त्वतीवाशुद्धः । तच्छोधनार्थं 'अवाप्तार्थः कालं नातिक्रामयेत् । न दीर्घकालं मन्त्रयेत । न च तेषां पक्ष्यैर्येषामपकुर्यात्' (कौ. १।१५) इति कौटिलीयग्रन्थोऽनुसंधेयः ।

‡ मवि., रार., राप्र., नन्द., भाच. मेधागतम् ।

¶ शेषं मेधागतम् ।

§ शेषं गोरावत् ।

(१) मस्मृ. ७।१४६.

(२) मस्मृ. ७।१४७; राक. १०२; रार. २७ येदवि (येद्भूरि); पमा. ४१० येदवि (येतावि); मच. गतः (गतम्); राप्र. १५९ पमावत्.

* ममु., भाच. गोरावत् ।

(१) मस्मृ. ७।१४८; राक. १०२; रार. २८; दीक. १।३४४; राप्र. ३०८ गम्य (गत्य).

(२) मस्मृ. ७।१४९; मेधा. ऽपसारयेत् (विशोधयेत्); राक. १०३ ऽपसारयेत् (प्रसेधयेत्); रार. २७; मच. तिगान् (धिकान्); राप्र. ३०९ 'म्लेच्छ' इत्यत्र 'क्लीब' इत्यपि पाठः.

वदितरेषां ग्रहणम् । व्यङ्गस्य हस्तपादादिच्छेदने न मन्त्रनियमास्था कर्तव्या– 'नायं कुत्रचित् गन्तुं शक्नोति, इहैव अवरुद्ध आस्ते, कथं मन्त्रान् भेत्स्यति ?' इति । अथवा एवंविधा मन्त्रिणो न कर्तव्याः, बुद्धिविभ्रमसंभवात् । अतो नाऽऽप्ता अपि । ततोऽपसर्पः ।
* मेधा.

( २ ) बुद्धिवाक्चक्षुःश्रोत्रविकलान् तथा गोमृगशुकान् तथा वृद्धस्त्रीम्लेच्छातुरान् अङ्गहीनांश्च मन्त्रकालेऽपसारयेत् । § गोरा.

( ३ ) जडः देहस्पन्दनाशक्तः । तैर्यग्योनाः श्वकाकादयः । एतान् कृतकमूकान्धजडादिभावाशङ्कया म्लेच्छव्यङ्गादींश्च सहजदुष्टाश्रयतया अपनयेत् । मवि.

( ४ ) किंच, मन्त्रणे कर्तव्ये वर्ज्यान् सार्थवादमाह– जडेति द्वाभ्याम् । † मच.

( ५ ) म्लेच्छः अव्यक्तवाक् । 'क्लीब' इति क्वचित् पाठः । + राप्र. ३०९

**[१]भिन्दन्त्यवमता मन्त्रं तैर्यग्योनास्तथैव च ।**
**स्त्रियश्चैव विशेषेण तस्मात्तत्राऽऽदृतो भवेत् ॥**

( १ ) मानादपेताः अवमताः । क्षुद्रादयोऽपमानासत्त्वे( ? शुकादयोऽपसारासत्त्वे) कदाचित् किंचित् शृणुयुः, कदाचिद्वा अक्षराण्युच्चारयितुं शक्नुयुः, ततो मन्त्रभेदः स्यात् । शक्नुवन्ति निपुणाः किंचिदागमेष्वनुमातुम् । मेधा.

( २ ) स्त्रीतैर्यग्योनयोर्विशेषमाह– भिन्दन्तीति । तैर्यग्योना एवमेव मन्त्रं भिन्दन्ति, स्त्रियस्तु अवमानादिति विवेकः । तत्र तदपसारणे । मवि.

( ३ ) यस्मात् – भिन्दन्तीति । एते जडादयोऽपि प्राचीनदुष्कृतवशेन प्राप्तजडादिभावाः अधार्मिकतयैव अवमानिताः मन्त्रभेदं कुर्वन्ति । तथा शुकादयः अतिवृद्धाश्च स्त्रियश्च विशेषेण अस्थिरबुद्धितया मन्त्रं भिन्दन्ति । तस्मात् तदपसारणे यत्नवान् स्यात् ।
* ममु.

( ४ ) एते जडादयः मन्त्रे त्याज्याः । यतः एते स्वभावतः पापाः अवमानिताः सन्तः मन्त्रभेदका एवेत्यर्थः । रार. २८

( ५ ) तत्र हेतुः– भिन्दन्तीति । नृपेण अवमताः जडादयः मन्त्रं भिन्दन्ति इति कृत्वा तान् अपसारयेत् इत्यन्वयः । आदृतः यत्नवान् तेषु । मच.

( ६ ) आदृतः शङ्कितः । राप्र. ३०९

( ७ ) अत्र हेतुमाह– भिन्दन्त्यवमता इति । अवमतशब्देन जडादयो गृह्यन्ते । ते मनुष्यैरवमता भवन्ति । अथवा अवमतग्रहणं तद्वर्जनार्थम् । तस्मिन् पक्षे तैर्यग्योनग्रहणं जडान्धादीनामप्युपलक्षणार्थम् । आदृतो भवेत् वर्जने कृतयत्नो भवेत् । नन्द.

मन्त्रणीया विषयाः

**$[१]मध्यंदिनेऽर्धरात्रे वा विश्रान्तो विगतक्लमः ।**
**चिन्तयेद्धर्मकामार्थान् सार्धं तैरेक एव वा ॥**
**[२]परस्परविरुद्धानां तेषां च समुपार्जनम् ।**
**कन्यानां संप्रदानं च †कुमाराणां च रक्षणम् ॥**

( १ ) धर्मार्थकामानां वा मन्त्रिणां वा समुपार्जनं संग्रहणम् । कन्यानां संप्रदानं स्वकार्यसिद्धिवशेन चिन्त्यम् । मेधा.

---

* राक. मेधागतम् ।

§ ममु. गोरावत् । नन्द., भाच. गोरागतम् ।

† शेषं गोरावत् ।

\+ शेषं गोरागतम् ।

( १ ) मस्मृ. ७।१५० ; राक. १०३ भिन्द (निन्द) त्त्राऽऽ ( त्त्वा ) ; रार. २८ ; राप्र. ३०९.

* गोरा., भाच. ममुगतम् ।

$ व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे ( पृ. ९४६ ) द्रष्टव्यः ।

† चतुर्थचरणस्य व्याख्यानसंग्रहः 'राजपुत्ररक्षणम्' इत्यस्मिन प्रकरणे ( पृ. १०११ ) द्रष्टव्यः ।

( १ ) मस्मृ. ७।१५१.

( २ ) मस्मृ. ७।१५२ ; राक. १०६ ; रार. ८(=) उत्त. ; पमा. ४१० उत्त. ; राप्र. १५९, ३१७ ; नीम. ३८ उत्त.

( २ ) तेषां च धर्मकामार्थानां च परस्परं विरोधाविर्भावे सति अविरोधार्जनोपायं चिन्तयेत् । दुहितॄणां दानं स्वकार्यसंसिद्धिफलं विचारयेत् । ‡ गोरा.

( ३ ) समुपार्जनं संभूतानामविरोधेनार्जनम् । मवि.

( ४ ) परस्परविरुद्धानां प्रायेण समानोपायशून्यानां धर्मार्थकामानां समुपार्जनम्, चिन्तयेदित्यनुषङ्गः । अयमर्थः– अतिदण्डादिना अर्थे जन्ये धर्मो हीयेत, अतिक्लेशेन धर्मे जन्ये कामः विषयभोगः कुतस्त्यः ? इतिविरोधपरिहारेण अर्जनोपायम् । संप्रदानं संप्रदीयते अस्मै सत्कुलप्रसूतवरादिः । मच.

**'दूतसंप्रेषणं चैव कार्यशेषं तथैव च ।**
**अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ॥**

( १ ) येन संधानं विग्रहो वाऽपि कार्यस्तेन च दूतसंप्रेषणं चिन्त्यम् । आरब्धकार्यसंबन्धं चिन्तयेत् अवस्थापनाय । कक्षान्तरेषु अन्तर्वेशिकसैन्याधिष्ठितः अन्तःपुरं प्रविशेत् । तत्र स्थविरस्त्रीमतिशुद्धां देवीं परिपश्येत्, नापरिशुद्धां देवीम् । गृहलीनो हि भ्राता भद्रसेनं राजानं जघान । मातुः शयनान्तर्गतश्च पुत्रः कारूशम् । विषदिग्धेन नूपुरेणावन्त्यं देवी जघान, मेखलया सौवीरम्, वेण्यां गूढेन शस्त्रेण विदूरथम् । तस्मादेतानि विस्रम्भस्थानानि यत्नतः परीक्षेत । मुण्डजटिलकुहकप्रतिसंसर्गं बाह्यदासीभिः अन्तःपुरदासीनां प्रतिषेधयेत् । प्रणिधीनां च कार्पटिकादीनां वा परस्पराभिचेष्टितं चिन्तयेत् । * मेधा.

( २ ) दूतानां च निसृष्टार्थपरिमितार्थलेखहारित्वादिना परराष्ट्रसंप्रेषणं चिन्तयेत् । तथा आरब्धकार्यविशेषसंपादनाय चिन्तयेत् । स्त्रीणां चातिचपलविषमचेष्टितत्वात् आत्मसंरक्षणार्थं अव्यभिचाराय चान्तःपुरचेष्टितं चिन्तयेत् । चराणां चरान्तरैश्चेष्टितमागमयेत् । † गोरा.

( ३ ) कार्यशेषं दण्डशुल्कशेषम् । § मच.

( ४ ) अन्तःपुरप्रचारं पुरान्तर्वर्तिनां प्रवृत्तिम् । § नन्द.

***'कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ।**
**अनुरागापरागौ च प्रचारं मण्डलस्य च ॥**

( १ ) अकृतारम्भः, कृतानुष्ठानम्, अनुष्ठितविशेषणम्, कर्मफलसंग्रहः, तथा साममेददानदण्डम्, एतदष्टविधं कर्म । अथवा वणिक्पथः, उदकसेतुबन्धनम्, दुर्गकरणम्, कृतस्य वा तत्संस्कारनियमः, हस्तिबन्धनम्, खनिखननम्, शून्यनिवेशनम्, दारुवनच्छेदनं चेति । अपरे त्वाहुः– ' आदाने च विसर्गे च तथा प्रैषनिषेधयोः । पञ्चमे चानुवचने व्यवहारस्य चेक्षणे ॥ दण्डशुद्ध्योः सदा युक्तस्तेनाष्टगतिको नृपः । अष्टकर्मा दिवं याति राजा शत्रुभिरर्चितः ॥ ' इत्यौशनसौ श्लोकौ । तत्र स्वीकरणं आदानं बलीनाम् । भृत्येभ्यो धनदानं विसर्गः । प्रैषः दुष्टत्यागः । अर्थाधिकृतानां मतिप्रवृत्तिनिरोधः निषेधः असत्प्रवृत्तिनिषेधश्च । अनुवचनं वर्णाश्रमाणां स्वकर्मसंशये । व्यवहारावेक्षणं परस्पराभियोगे । दण्डनिपातनं पराजितानां च । प्रमादस्खलिते तु प्रायश्चित्तम् । इत्येतत् अष्टविधं कर्म । एवं पञ्चवर्गं प्रकल्प्य परस्य आत्मनश्च आत्मीयादेव पञ्चवर्गात् मन्त्रिपुरोहितादीनामनुरागापरागौ विद्यात् । तथा राजमण्डलप्रचारं को

‡ ममु. गोरावत् । राप्र., भाच. गोरागतम् ।

* ममु. मेधागतं गोरागतं च ।

( १ ) **मस्मृ.** ७।१५३ ; **राक.** १०६ ; **पमा.** ४१० दूतसंप्रे ( दूतस्य प्रे ) प्रचारं ( प्रजानां ) ; **राप्र.** १५९ प्रचारं ( प्रधानं ) : ३१७ ; **नीम.** ३८.

† मवि., भाच. गोरागतम् ।

§ शेषं गोरागतम् ।

* पञ्चवर्गशब्दस्य प्रणिधिपराणि व्याख्यानानि ' प्रणिधिः ' इत्यस्मिन् प्रकरणे ( पृ. १६५२–१६५३ ) द्रष्टव्यानि ।

( १ ) **मस्मृ.** ७।१५४ ; **राक.** १०७ तत्त्वतः ( यत्नतः ) ; **पमा.** ४११ ; **राप्र** १५९ : ३१७ राकवत् ; **नीम** ३८ .

माण्डलिकः संधिविग्रहादौ कस्मिन् प्रचारे प्रवर्तते इति । § मेधा.

( २ ) प्रेषः चरादेः । पञ्चवर्गस्तु कर्मारम्भोपायः, पुरुषद्रव्यसंपत्, विनिपातप्रतीकारः, देशकालविभागः, कार्यसिद्धिरिति । मण्डलस्य अरि–मित्रा–ऽरिमित्र–मित्रमित्रा–ऽरिमित्रमित्र–पार्ष्णिग्राहा–ऽऽक्रन्द–पार्ष्णिग्राहासारा–ऽऽक्रन्दासार–मध्यमो–दासीन–विजिगीषुरूपद्वादशनृपसमुदायस्य प्रचारं प्रवृत्तिम् । * मवि.

( ३ ) पञ्चवर्गद्वारेण आत्मनि अमात्यानामनुरागं प्रतिराज्ञः अपरागं विद्वेषम्, चिन्तयेदित्यनुषज्यते । * मच.

( ४ ) प्रचेताः पञ्चवर्गमन्यथाऽऽह– 'सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥ ' इति । सिद्धिः कार्यसिद्धिः । × राप्र. ३१८

( ५ ) अष्टविधं कर्म कामन्दकेनोक्तम्– 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरवनादाने सैन्यानां च निवेशनम् । अष्टवर्गमिमं साधुः स्वस्थचित्तो विचिन्तयेत् ॥' ( कानी. ५।७७–७८ ) । पञ्चवर्गः कर्मारम्भोपायादिः पूर्वोक्तः । मण्डलं द्विसप्ततिप्रकृतिकं वक्ष्यति । प्रचारः प्रवृत्तिः । नन्द.

( ६ ) द्विसप्ततिसंख्याकानि राज्याङ्गानि पञ्चभिराह– कृत्स्नमित्यादिना । + माच.

§[१]मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥
संधिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥
आयतिं सर्वकार्याणां तदात्वं च विचारयेत् ।
अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥
एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ।
व्यायम्याऽऽप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं विशेत् ॥

## याज्ञवल्क्यः

मन्त्राधिकारिणः, मन्त्रविषयो राज्यं राजमण्डलं च, मन्त्रगूहनमत्यन्तमिष्टम्

†[१]स मन्त्रिणः प्रकुर्वीत प्राज्ञान् मौलान् स्थिराञ्छुचीन् ।
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥
[२]मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ।
कुर्याद्यथाऽस्य न विदुः कर्मणामा फलोदयात् ॥

( १ ) कथं पुनः परराष्ट्रसिद्धिः ? मन्त्रत इति ब्रूमः । तदधीना हि कोशदण्डादयः । अतश्च स्वपरराष्ट्रप्राप्तिस्थितिवृद्धिहेतुः मन्त्र एव सुनिर्णीतः सुगुप्तो यस्मात् तस्मान्निर्णयगुप्तिभ्यां सुरक्षितः कार्यः, विपर्यये सर्वोच्छेदप्रसङ्गात् । न च फलोदयेऽपि मन्त्रः प्रकाश्यः, पुनरपि तथाकरणात् । फलदर्शनात्तु कारणमनुमिमानाः न विशेषनिर्धारणं कुर्युः कुतूहलेनात्र समुत्पन्नेन । अतः कृत्येतरवर्गयोः सर्वथा मन्त्रप्रच्छादनं नियोगतः कर्तव्यम् । मन्त्रशक्त्यधीने एव हि उत्साहप्रभुशक्ती, तदपायेऽपि हि मन्त्रशक्त्यैव सिद्धिदर्शनात् । अतस्तद्गुप्तौ यत्नः कार्य इति । विश्व.

§ गोरा., ममु., नीम. मेधागतम् ।

* शेषं मेधागतम् । पमा. मविगतम् ।

× नीम. राप्रवत् ।

+ शेषं मेधागतं मविगतं च ।

§ एतेषां व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च यथाक्रमं 'राजमण्डलविचारः' 'षाड्गुण्यम्– गुणगणना' 'षाड्गुण्यम्– सामान्यविचारः' 'राजदिनकृत्यम् (पृ. ९४६)' इत्येतेषु प्रकरणेषु द्रष्टव्यः ।

( १ ) मस्मृ. ७।१५५,१६०,१७८,२१६.

† अस्य श्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः– मन्त्रिणः' इत्यस्मिन् प्रकरणे (पृ. १२५२) द्रष्टव्यः ।

( १ ) यास्मृ. १।३१२.

( २ ) यास्मृ. १।३४४ ; विश्व. १।३४० ; मिता. राज्यमतो ( राज्यं तस्मात् ) ; अप. १।३४२–३४३ ; राक. १०३ ; रार. २७ ; वीमि. राज्यमतो ( राज्यं ततो ) ; राप्र. ३०६ (=) मूलं यतो ( मूलमिदं ) प्रथमचरणमात्रम् ; ३०८ मूलं यतो ( मूलमिदं ).

( २ ) यस्मात् 'तैः सार्धं चिन्तयेद्राज्यम्' ( यास्मृ. १।३१२ ) इत्याद्युक्तं मन्त्रमूलं राज्यं तस्मान्मन्त्रं यत्नेन तथा सुरक्षितं कुर्यात् यथा अस्य राज्ञः कर्मणां संधिविग्रहादीनां आ फलोदयात् फलनिष्पत्तेः प्राक् अन्ये मन्त्रं न जानन्ति । * मिता.

( ३ ) कर्मणां मन्त्रतः अनुष्ठेयतया निश्चितानाम् । ‡ अप.

×'अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ।
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥

## बार्हस्पत्यसूत्रम्

मन्त्रप्रयोजनम्, मन्त्रलक्षणम्, मन्त्रानधिकारिणः, त्रिविधा उत्तममध्यमाधमा मन्त्रिणो मन्त्राश्च, मन्त्रणविधिः, मन्त्रविषयाः

[१]सुव्यवस्थितमन्त्रेण परच्छिद्रज्ञानिना धार्मिकेण राज्यं परिपालयितुं ( न ? ) शक्यते ॥

स्वामिचित्तानुवृत्तिभिर्मत्यैक्यकारकमेव मन्त्र-(ण)म् ॥

मन्त्रिणा स्वामिनोऽभिमतमुत्सृज्य कार्यं वक्तव्यम् ॥

बालं दुष्टं साहसिकमज्ञातशास्त्रं मन्त्रे न प्रवेशयेत् ॥

मूढा दुराचारास्तीक्ष्णा आत्मबुद्धयः क्षिप्रकुद्धा बाला मन्त्रयोग्या न ॥

मन्त्रकाले न कोपयेत् ॥

+[२]मन्त्रमूलो विजयः ॥

त्रिविधाः पुरुषा उत्तमाधममध्यमाः ॥

मन्त्रोऽपि ॥

बन्धुभिर्बान्धवैर्हितैर्बहुश्रुतैर्धीरैः सह यत्कर्माऽऽरभते तदुत्तमम् ॥

धर्मद्विविधे गुरौ भक्तिश्च ॥

अर्थपरैः सह मन्त्रयित्वा य आरभते स उत्तमः ॥

गुणदोषागमं निश्चित्य मौर्ख्यबाहुल्याद्य आरभते सोऽधमः ॥

ऐकमत्येन दण्डनीतिनेत्रेण धीरैर्मन्त्रिभिर्यो मन्त्रः स उत्तमः ॥

पूर्वं बहुबुद्धयः पश्चादेकमतयो भवन्ति यत्र स मध्यमः ॥

यत्र कलहं भर्त्सनं चैकस्य धर्म एकस्यार्थो स्त्रीबालवृद्धैः सहैकस्य रुदितमेकस्य क्रोधो यस्मिन् सोऽधमः ॥

पूर्वं स्वामिना कार्यनिवेदनम् ॥

पुनर्वचसा कर्मणा मनसाऽञ्जलिना दण्डप्रणामेन यथागुरुत्वं स्वामिनमभिवन्दयेत् ॥

वृद्धो वैश्रवणो वाचस्पतिर्वा यस्यान्नं नाभुङ्क्ते तं वन्देत् ॥

यत्पुनर्यथाक्रममेकैकस्य मतं श्रोतव्यम् ॥

स्वामिनं प्रसाद्य कार्यं कल्पयितव्यम् ॥

पूर्वं स्वामिगुणं संकीर्त्य स्वामिदोषं परदोषं च मध्यस्थदोषं च मन्त्रयित्वा पुनः स्वामिगुणसंस्थापनं कुर्यात् ॥

पुनः कार्याण्युपायानि निरूप्य स्वामिनं प्रसाद्य कार्यं कल्पयितव्यम् ॥

प्रमत्तेष्वभियुक्तेषु दैवोपहतेषु च न सिध्यन्ति विक्रमाः ॥

अप्रमत्तं धर्मज्ञं जितेन्द्रियं विजिगीषुं बलिष्ठु जातकोपं दुराधर्षं प्रति विक्रमो न कार्यः ॥

शास्त्रवित्कथं कार्यं न प्रजानातीति न वदेत् ॥

बलिष्ठान् शत्रून् कामादीन् ये जयन्ति ते सर्वानरीन् जयन्ति ॥

---

* दीक., राप्र., वीमि. मितागतम् ।

‡ शेषं मितागतम् ।

× व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजमण्डलविचारः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

+ एतदादीनि 'यस्मिन् सोऽधमः' इत्यन्तानि (४।२७–३६) सूत्राणि वाल्मीकिरामायणस्थैः ( वारा. ५।७७।६–१५ ) श्लोकैः समानार्थानि । अतोऽत्रैतत्प्रकरणस्थास्ते श्लोका अशुद्धिपरिमार्जनार्थं सूत्राभिप्रायज्ञानार्थं च द्रष्टव्याः ।

( १ ) यास्मृ. १।३४५.

( २ ) बासू. २।३६,४१,४२,५१,५२,५४.

( ३ ) बासू. ४।२७–५०.

पूर्वमुपकारं न कार्येत् ( ? ) ॥
उपकारं नियतं कुर्याच्च ॥
नाभाविव्यसनं पूर्वं ज्ञात्वा व्यसनप्रतीकारं कार्यमिति गुरुराह ॥
[1]नमो ( ? नयो ) मन्त्रिभिर्निरूप्य कार्यते ॥
बुद्धिजीवनैरमात्यैः सह कार्यमकार्यं च निरूपयेत् ॥
अहितं विकारं यस्य प्रतिभाति स मन्त्रयोग्यः ॥

## बृहत्पराशरः

मन्त्राधिकारः, मन्त्रणदेशः

[2]प्राणिवर्जितदेशे च नीतिज्ञो मन्त्रकृद्भवेत् ॥

## प्रचेताः

मन्त्रविषयाः पञ्च

*[3]सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥

इति पञ्चवर्गः । पृ. १६०
सिद्धिः कार्यसिद्धिः । राप्र. ३१८

## आश्वलायनः

मन्त्राधिकारः मन्त्रविषयश्च

[4]कार्याकार्यौ विनिश्चित्य बुद्ध्या शास्त्रगृहीतया ।
कुर्यान्नित्यममात्यैश्च सहाऽऽत्मविदितैः समाः ॥

## मत्स्यपुराणम्

मन्त्रप्रयोजनम्, मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम्

[5]राज्ञा संवृतमन्त्रेण सदा भाव्यं नृपोत्तम ॥

* कामन्दकीयनीतिसारे १२।३६ इत्यत्र अयं श्लोकः उपलभ्यते ।

( १ ) बासू. ६।४–६.

( २ ) बृपसं. १२।१९.

( ३ ) राप्र. १६० क्रमेण प्रचेताः : ३१८ ; नीम. ३९ विपत्तेश्च ( विनिपात ) क्रमेण प्रचेताः .

( ४ ) आश्वस्मृ. ८।४३–४४.

( ५ ) मत्स्य. २२०।३१ ; विध. २।६५।३३ द्वितीयचरणे ( संभाव्यं द्विजसत्तम ) ; राप्र. ३०९ नृपो

[1]तस्यासंवृतमन्त्रस्य राज्ञः सर्वापदो ध्रुवम् ।
कृतान्येव तु कार्याणि ज्ञायन्ते यस्य भूपतेः ॥
[2]नाऽऽरब्धानि महाभाग तस्य स्याद्वसुधा वशे ।
मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रः सुरक्षितः ॥
[3]कर्तव्यः पृथिवीपालैर्मन्त्रभेदभयात्सदा ।
मन्त्रवित्साधितो मन्त्रः संपत्तीनां सुखावहः ॥
[4]मन्त्रच्छलेन बहवो विनष्टाः पृथिवीक्षितः ।
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥
[5]नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ।
न यस्य कुशलैस्तस्य वशे सर्वा वसुंधरा ॥
[6]भवतीह महीभर्तुः सदा पार्थिवनन्दन ।
नैकस्तु मन्त्रयेन्मन्त्रं राजा न बहुभिः सह ॥
[7]बहुभिर्मन्त्रयेत्कामं राजा मन्त्रं पृथक् पृथक् ।
मन्त्रिणामपि नो कुर्यान्मन्त्रिमन्त्रप्रकाशनम् ॥

( द्विजो ) इत आरभ्य श्लोकसप्तकं विष्णुधर्मोत्तरीयत्वेन समुद्धृतम् .

( १ ) मत्स्य. २२०।३२ ; विध. २।६५।३३–३४ राज्ञः ( ज्ञेयाः ) ध्रुवम् ( ध्रुवाः ) तु कार्या ( हि कर्मा ); राप्र. ३०९ तु कार्या ( हि कर्मा ).

( २ ) मत्स्य. २२०।३३ ; विध. २।६५।३४–३५ ; राप्र. ३०९.

( ३ ) मत्स्य. २२०।३४ ; विध. २।६५।३५–३६ संपत्तीनां ( संयतानां ) ; राप्र. ३०९ वित्सा ( वत्सा ) संपत्तीनां ( संघातानां ).

( ४ ) मत्स्य. २२०।३५ ; विध. २।६५।३६–३७ च्छलेन ( भेदेन ) ; राप्र. ३०९ षितेन ( षणेन ).

( ५ ) मत्स्य. २२०।३६ ; विध. २।६५।३७–३८ गृह्यते ( ज्ञायते ) ; राप्र. ३०९ रैश्च ( राभ्यां ).

( ६ ) मत्स्य. २२०।३७ ; विध. २।६५।३८–३९ पार्थिव ( भार्गव ) राजा न ( न राजा ) ; राक. १०४ विधवत् , उत्त. ; राप्र. ३०७ विधवत् , उत्त. : ३०९ विधवत् , पू.

( ७ ) मत्स्य. २१५।४८ ; विध. २।६५।३९–४० मन्त्रं ( मन्त्रान् ) न्मन्त्रिमन्त्र ( न्मन्त्री मन्त्र ) ;

एकः स्वयम् । बहुभिः द्व्यधिकैः । अत्र स्वस्यैकस्य मन्त्रनिषेधात् स्वभिन्नेनैकेन द्वाभ्यां वा सह मन्त्रः कार्यः । यदि बहुभिः सह मन्त्रयेत् तदा पृथक्पृथगित्यर्थः । तेन मन्त्रः सुरक्षितो भवति । राप्र. ३०८

[1]क्वचिन्न कस्य विश्वासो भवतीह सदा नृणाम् ।
निश्चयस्तु सदा मन्त्रे कार्य एकेन सूरिणा ॥

[2]भवेद्वा निश्चयावाप्तिः परबुद्ध्युपजीवनात् ।
एकस्यैव महीभर्तुर्भूयः कार्यो विनिश्चयः ॥

सुनिश्चिते, उपस्थिते इति शेषः । राप्र. १२३

## विष्णुधर्मोत्तरपुराणम्

मन्त्रप्रयोजनम्, मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम्

[3]त्यक्त्वा सभां ततः कुर्यान्मन्त्रं तु सह मन्त्रिभिः ॥
यत्रास्य कश्चित्तं मन्त्रं शृणुयान्न कथंचन ।
एकेन सह तं कुर्यान्न कुर्याद्बहुभिः सह ॥

[4]न च मूर्खैर्न चानाप्तैस्तथा नाधार्मिकैर्नृपः ।
मन्त्रं स्वधिष्ठितं कुर्याद्येन राष्ट्रं न धावति ॥

स्वदितं आस्वादितम् । न धावति न प्रसरति ।

राप्र. ३१०

[5]राज्ञां विनाशमूलस्तु कथितो मन्त्रविभ्रमः ।
नाशहेतुर्भवेन्मन्त्रः कुप्रयुक्तस्त्वमन्त्रवत् ॥

[1]मन्त्रे सुनिश्चिते सिद्धिः कथिता पृथिवीक्षिताम् ।
क्रियमाणानि कर्माणि यस्य वेत्ति न कश्चन ॥

[2]कृतान्येव विजानाति स राजा पृथिवीपतिः ।
पृथक् च मन्त्रिभिर्मन्त्रं कृतं वै संहितैः पुनः ॥

[3]विचार्यमात्मनः साधु पश्चात्तत्र समाश्रयेत् ।
प्रज्ञाभिमानी नृपतिर्न मन्त्रिवचने रतः ॥

[4]क्षिप्रं विनाशमायाति तडागमिव काजलम् ।
आकारगूहनै राज्ञो मन्त्ररक्षा परा मता ॥

[5]अकारैरिङ्गितैः प्राज्ञा मन्त्रं जानन्ति पण्डिताः ।
सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः ॥

[6]राजा विभूतिमाप्नोति चिरं यशसि तिष्ठति ।
त एनं मृगयासक्तं धारयन्ति विपश्चितः ॥

[7]स्त्रीषु माने तथाऽक्षेषु वृथा ज्यायांश्च
( ? वृथाख्यायां च ) भार्गव ।
करप्रणयने सक्तं हिंसायां च नराधिपम् ॥

तथा परोक्षनिन्दायां बलवद्विग्रहेऽपि च ।
अन्येषु चाप्यनर्थेषु प्रसक्तं वारयन्ति तम् ॥

## गरुडपुराणम्

मन्त्रगूहनमत्यन्तमिष्टम्

[8]नाऽऽत्मच्छिद्रं परे दद्याद्विद्याच्छिद्रं परस्य च ।
गूहेत्कूर्म इवाङ्गानि परभावं च लक्षयेत् ॥

---

राप्र. ३०७ मन्त्रं ( मन्त्रान् ) पू., विष्णुधर्मोत्तरे: ३०८ स्कामं ( न्मन्त्रं ) मन्त्रं ( कामं ).

( १ ) मत्स्य. २१५।४९ ; विध. २।६५।४०–४१ प्रथमचरणे ( क्वचित्कश्चिच्च विश्वास्यो ) तृतीयचरणे ( निश्चयश्च तथा मन्त्री ) ; राप्र. ३०८ पूर्वार्धं विधवत्.

( २ ) मत्स्य. २१५।५० ; विध. २।६५।४१–४२ कार्यो विनिश्चयः ( कार्ये सुनिश्चिते ) ; राप्र. १२३ विधवत्, उत्त. : ३०८ कार्यो विनिश्चयः ( कार्यविनिश्चये ).

( ३ ) विध. २।१५१।१९–२०.

( ४ ) विध. २।१५१।२१ चानाप्तै ( चानाप्तै ) ; राप्र. ३१० स्वधिष्ठितं ( तु स्वदितं ) राष्ट्रं ( राष्ट्रे ).

( ५ ) विध. २।१५१।२२; राप्र. ३१०.

( १ ) विध. २।१५१।२३ ; राप्र. ३१० निश्चिते ( रक्षिते ).

( २ ) विध. २।१५१।२४ ; राप्र. ३१० पू. : ३१२ मन्त्रं कृतं वै संहितैः ( मन्त्रः कृतो वै संहतैः ) उत्त.

( ३ ) विध. २।१५१।२५ ; राप्र. ३१२ मात्मनः ( आत्मना ).

( ४ ) विध. २।१५१।२६ ; राप्र. ३१२.

( ५ ) विध. २।१५१।२७ ; राप्र. ३१२ जानन्ति ( चोहन्ति ) सांवत्सराणां ( सच्चराणां च ).

( ६ ) विध. २।१५१।२८ ; राप्र. ३१२ पू.

( ७ ) विध. २।१५१।२९–३०.

( ८ ) गरुड. १।११४।१५,५४.

षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णश्च धार्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्यन्तं न बुध्यते ॥

## अग्निपुराणम्

मन्त्रगूहनमत्यन्तमिष्टम्, समस्तैर्व्यस्तैश्च मन्त्रणम्, मन्त्रानधिकारिणः, पञ्च मन्त्रणविषयाः, मन्त्रभेदकारणानि

[1]गुप्तमन्त्रो भवेद्राजा नाऽऽपद्गो गुप्तमन्त्रतः ॥
[2]ज्ञायते हि कृतं कर्म नाऽऽरब्धं तस्य राज्यकम् ।
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥
नेत्रवक्त्रविकाराभ्यां गृह्यतेऽन्तर्गतं पुनः ।
नैकस्तु मन्त्रयेन्मन्त्रं न राजा बहुभिः सह ॥
बहुभिर्मन्त्रयेत्कामं राजा मन्त्रान् पृथक्पृथक् ।
मन्त्रिणामपि नो कुर्यान्मन्त्री मन्त्रप्रकाशनम् ॥
क्वापि कस्यापि विश्वासो भवतीह सदा नृणाम् ।
निश्चयश्च तथा मन्त्रे कार्य एकेन सूरिणा ॥
[3]मन्त्रं कुर्यात्तु मन्त्रिभिः ॥
नैकेन सहितः कुर्यान्न कुर्याद्बहुभिः सह ।
न च मूर्खैर्न चानाप्तैर्गुप्तं न प्रकटं चरेत् ॥
मन्त्रं स्वधिष्ठितं कुर्याद्येन राष्ट्रं न बाधते ।
आकारग्रहणे राज्ञो मन्त्ररक्षा परा मता ॥
आकारैरिङ्गितैः प्राज्ञा मन्त्रं गृह्णन्ति पण्डिताः ।
सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः ॥
राजा विभूतिमाप्नोति वारयन्ति नृपं हिते ॥
[4]प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते ।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा ॥
[5]मन्त्रयेतेह कार्याणि नानाप्तैर्नाविपश्चिता ।
अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम् ॥

(१) अग्नि. २२५।१६; राप्र. ३०८ नाऽऽपद्गो (आपद्गोऽ).
(२) अग्नि. २२५।१७–२०.
(३) अग्नि. २३५।९–१३.
(४) अग्नि. २४१।१; राप्र. ३०६.
(५) अग्नि. २४१।२; राप्र. ३०६ कार्याणि (कर्माणि).

[1]अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः ।
अर्थद्वैधस्य संदेहच्छेदनं शेषदर्शनम् ॥
सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र इष्यते ॥
मनःप्रसादः श्रद्धा च तथा करणपाटवम् ।
सहायोत्थानसंपच्च कर्मणां सिद्धिलक्षणम् ॥
[2]मदः प्रमादः कामश्च सुप्तप्रलपितानि च ।
भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्यो रमतां तथा ॥

## कालिकापुराणम्

मन्त्राधिकारः, समस्तैर्व्यस्तैश्च मन्त्रणम्, मन्त्रणार्हानर्हदेशकालादयः

[3]मन्त्रनिश्चयसंभूतां बुद्धिं सर्वत्र योजयेत् ॥
मन्त्रिणस्तु नृपः कुर्याद्विप्रान् विद्याविशारदान् ।
विनयज्ञान् कुलीनांश्च धर्मार्थकुशलानृजून् ॥
मन्त्रयेत्तैः समं ज्ञानं नात्यर्थं बहुभिश्चरेत् ।
एकैकेनैव कर्तव्यं मन्त्रस्य च विनिश्चयम् ॥
व्यस्तैः समस्तैश्चान्यस्य व्यपदेशैः समन्ततः ।
सुसंवृतं मन्त्रगृहं स्थलं वाऽऽरुह्य मन्त्रयेत् ॥
अरण्ये निःशलाके वा न यामिन्यां कदाचन ।
शिशूञ्छाखामृगान् पण्डाञ्छुकान् वै सारिकास्तथा ॥
वर्जयेन्मन्त्रगेहे तु मनुष्यान् विकृतांस्तथा ।
दूषणं मन्त्रभेदेषु नृपाणां यत्तु जायते ।
न तच्छक्यं समाधातुं दक्षैर्नृपशतैरपि ॥

## कामन्दकीयनीतिसारः

मन्त्रप्रयोजनम्, मन्त्राधिकारिणो मन्त्रानधिकारिणश्च, मन्त्रविधिः, मन्त्रमहिमा

*[4]चतुरङ्गं बलं मुक्त्वा कोशो मन्त्रश्च युध्यते ।
तत्साधुमन्त्रो मन्त्रेण कोशेन च जयेदरीन् ॥

* अस्य व्याख्यानं 'प्रकृतयः– कोशः' इत्यस्मिन् प्रकरणे (पृ. १३६५) द्रष्टव्यम् ।

(१) अग्नि. २४१।३–५. (२) अग्नि. २४१।६.
(३) कालिका. ८७।५४, १०२–१०६.
(४) कानी. १८।२.

'षाड्गुण्यनिश्चितमतिर्गुह्यं गूढप्रचारवान् ।
मन्त्रयेतेह मन्त्रज्ञो मन्त्रज्ञैः सह मन्त्रिभिः ॥

( १ ) 'परमण्डलविजयोपायः षाड्गुण्यं सर्गत्रयेणोक्तम् । तत्र विज्ञाततत्स्वरूपस्यापि मन्त्रहीनस्य तत्प्रयोगासंभवः इति षाड्गुण्यप्रयोगाय तच्छेषभूतो मन्त्रस्य विमर्शोऽस्मिन् सर्गे विधीयते इति प्रकरणक्रमः । यदाह— षाड्गुण्यनिश्चितमतिरित्यादि । यथोक्ते षाड्गुण्ये प्रतिष्ठितमतिः । विग्रहे गूढप्रचारवान्, स्वपरैरविज्ञातचेष्टितत्वात् । इहेति स्वपरमण्डलविषये गुह्यं मन्त्रं मन्त्रयेतेति संबन्धः । मन्त्रज्ञः तदङ्गतत्त्वपरिज्ञानात् । सह मन्त्रिभिः । तथाहि— 'नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः' ( कौ. १।१५ ) । जम.

( २ ) षाड्गुण्यस्यानन्तरं मन्त्राधिकारं दर्शयन्नाह— षाड्गुण्यनिश्चितेति । षाड्गुण्ये पूर्वोक्ते निश्चिता निःसंदिग्धा मतिर्यस्य सः षाड्गुण्यनिश्चितमतिः । कृतषाड्गुण्यतत्त्वविनिर्णय इत्यर्थः । गूढं प्रचरन्ति ये ते गूढप्रचाराः स्वराष्ट्रे परराष्ट्रे वा अलक्षितसंचारभेदाभिज्ञाः । ते विद्यन्ते यस्येति गूढप्रचारवान् । मन्त्रज्ञः— षड्गुणानां मध्ये कस्मिन् गुणे स्थितस्य मे वृद्धिरवृद्धिर्वा भवेत् ? केनोपायेन मे धनधान्यहस्त्यश्वबलनिजद्रव्यादीनामुपचयो भवेत् ? केनोपायेन वा परस्यैतानि उपहन्तुं शक्नोमि ? केनोपायेन लब्धविषयस्य परिरक्षणमलब्धस्य च लाभो भवेत् ? केन च प्रकृतिरञ्जनं स्यात् ? इत्यादिविषयकं गुप्तभाषणं मन्त्रः, तं जानातीति मन्त्रज्ञः । विजिगीषुः मन्त्रज्ञैः मन्त्रिभिः सह इह अलब्धलाभलब्धपरिरक्षणादिविषये गुह्यं गोपनीयं कार्यं मन्त्रयेत् । उनिसा.

'मन्त्रार्थकुशलो राजा सुखं विजयमश्नुते ।
विपरीतस्तु विद्वद्भिः स्वतन्त्रोऽप्यवधूयते ॥

( १ ) मन्त्रज्ञ इत्यस्य स्थिरीकरणाय श्लोकद्वयमाह— मन्त्रार्थकुशल इत्यादि । विपरीतः मन्त्रार्थाकुशलः । स न केवलं भूतिं न समश्नुते, अवधूयते च विद्वद्भिः मूर्खोऽयमिति । स्वतन्त्रोऽपि स्वयं कार्ये प्रवर्तयन्नपि । जम.

( २ ) वक्ष्यमाणपञ्चाङ्गस्य मन्त्रस्य योऽर्थः वृद्धिलक्षणः तत्संपादने कुशलः मन्त्रार्थकुशलः राजा प्रकृतिरञ्जनादिना सुखं अनायासेन भूतिं श्रियं समश्नुते आक्रम्य भुङ्क्ते । विपरीतस्तु मन्त्रार्थाकुशलः स्वतन्त्रोऽपि स्वाधीनोऽपि विद्वद्भिः पण्डितैः अवभूयते परिभूयते इत्यर्थः । 'अवधूयते' इति पाठे तु अवधूयते राज्यात् प्रभ्रंशितो भवतीत्येवमर्थः । उनिसा.

'दुर्मन्त्रमेनं रिपवो यातुधाना इव क्रतुम् ।
समन्ततो विलुम्पन्ति तस्मान्मन्त्रपरो भवेत् ॥

( १ ) दुर्मन्त्रं अविशुद्धमन्त्रम् । यातुधानाः राक्षसाः । क्रतुं यज्ञम् । तस्मान्मन्त्रपरो भवेत् तत्पूर्वत्वात् सर्वारम्भाणाम् । जम.

( २ ) यातुधानाः राक्षसाः दुःप्रयुक्तवैदिकमन्त्रं क्रतुं यज्ञं इव रिपवः दुर्मन्त्रं दुष्टो मन्त्रो यस्य तम् । मन्त्रस्य दुष्टत्वं तु शास्त्रविरुद्धत्वम् । एनं नृपतिं समन्ततो विलुम्पन्ति । तस्मात् मन्त्रपरो भवेत् यथोक्तमन्त्रपर एव स्यादित्यर्थः । उनिसा.

मन्त्रयेतेह कार्याणि सहाऽऽप्तेन विपश्चिता ।
आप्तं मूर्खमनाप्तं च मन्त्रिणं परिवर्जयेत् ॥

( १ ) 'मन्त्रज्ञैः सह मन्त्रिभिः' इत्यस्य विशेषमाह— सहाऽऽप्तेन विपश्चितेति । आप्तेन मन्त्रज्ञेन च मन्त्रिणा कार्याणि मन्त्रयेतेत्यर्थः । यः पुनरनाप्तः योऽपि न मन्त्रज्ञस्तदुभयमपि त्यजेत् । जम.

( २ ) कीदृग्गुणेन मन्त्रिणा मन्त्रणं कर्तव्यमित्याह— मन्त्रयेतेत्यादि । यो हि षड्गुणैर्निरन्तरं व्याप्यते स तस्य आप्त इत्युच्यते । इह मन्त्रविषये आप्तेन विपश्चिता नीतिशास्त्रपण्डितेन सह कार्याणि मन्त्रयेत । आप्तोऽपि भूत्वा यदि विपश्चित् नीतिशास्त्रपण्डितो भवति तेन सह मन्त्रयेत्, एतत् गुणद्वयमेकत्र यस्मिन्न विद्यते तेन सह न मन्त्रयेदित्यर्थः । उनिसा.

---

( १ ) कानी. १२।१ ; उनिसा. येतेह ( येदिह ).

( २ ) कानी. १२।२ ; उनिसा. विजयम ( भूतिं सम ) धूय ( भूय ).

( १ ) कानी. १२।३–६ .

**मार्गं सन्मार्गगतिभिः सिद्धये सिद्धकर्मभिः ।**
**पूर्वैराचरितं सद्भिः शास्त्रीयं न परित्यजेत् ॥**

( १ ) असंमन्त्र्यैव कस्मान्न कार्यं कुर्यादित्याह– मार्गमित्यादि । शास्त्रीयं मार्गं मन्त्रनिर्णयाख्यं सिद्धये न परित्यजेदिति संबन्धः । पूर्वैः आचरितं सेवितम् । ते ह्यमुमेवाऽऽश्रित्य सिद्धकर्माणोऽभवन् । जम.

( २ ) मन्त्रश्च शास्त्रोक्तक्रमेणैव कार्यं इति दर्शयन्नाह– मार्गमिति । सिद्धये सिद्ध्यर्थं सिद्धकर्मभिः सन्मार्गगतिभिः सन्मार्गेणैव गतिर्येषां तैः पूर्वैः राजादिभिर्बृहस्पत्यादिभिश्च सद्भिः सत्पुरुषैः आचरितं शास्त्रीयं मार्गं न परित्यजेत् । मन्त्रविषये इति शेषः । 'सिद्धये सिद्धकर्मभिः' इत्यत्र 'मन्त्रणे सिद्धकर्मभिः' इति केचित्, 'पश्चोक्तं सिद्धकर्मभिः' इति च केचित्पठन्ति । उनिसा.

**उच्छास्त्रपदविन्यासः सहसैवाभिसंपतन् ।**
**शत्रुखड्गमुखग्रासमगत्वा न निवर्तते ॥**

( १ ) तत्परित्यागे दोषमाह– उच्छास्त्रपदविन्यास इति । उच्छास्त्रः पदविन्यासः कार्यानुष्ठानलक्षणः यस्येति विग्रहः । सहसैव विना निर्णयेन । जम.

( २ ) शास्त्रोक्तमन्त्रं विलङ्घयतो दोषं दर्शयन्नाह– उच्छास्त्रेति । शास्त्रेषु यः पदविन्यासः शास्त्रपदविन्यासः, उल्लङ्घितः शास्त्रपदविन्यासः येन सः, शास्त्रोपदेशं विलङ्घयन्नित्यर्थः, सहसैव मन्त्रालोचनं विनैव अभिसंपतन् शत्रूणामभिमुखं गच्छन् शत्रुखड्गमुखग्रासमगत्वा न निवर्तते । खड्गमुखं धारैव, तद्ग्रासम् । खड्गधाराग्रासः मरणम् । तत् अप्राप्य न निवर्तते इत्यर्थः । अतः मन्त्रपूर्वं प्रवर्तितव्यमिति भावः । 'अभिसंपतन्' इत्यत्र 'अभिसंपतेत्' इति, 'शत्रुखड्गमुखग्रासम्' इत्यत्र 'शत्रुखड्गमुखन्यासम्' इति च पाठान्तरम् । उनिसा.

**'प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते ।**
**प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा ॥**

---

( १ ) कानी. १२।७ ; रार. ३३.

( १ ) शक्तिस्त्रिविध– प्रभावजा, उत्साहजा, मन्त्रजा । एतास्वपि मन्त्रजा बलवती । तदाह कामन्दकः– प्रभावोत्साहेति । रार. ३३

( २ ) शक्तित्रये च मन्त्रशक्तिर्गरीयसीत्याह– प्रभावेत्यादि । काव्यो जितो देवपुरोधसेति । देवासुरसङ्ग्रामे देवैर्निहतानसुरांस्तन्मन्त्री शुक्रः संजीवन्या विद्यया जीवयतीति श्रुत्वा बृहस्पतिर्देवमन्त्री चिन्तामापन्नस्तदतिसंधानोपायं च ज्ञानबलेनाऽऽलोच्य तद्विद्याग्रहणार्थं कचाख्यं स्वपुत्रं शिष्यत्वेन प्रहितवान् । तस्य च तमाराधयतस्तद्दुहित्रा देवयान्या सह महान् स्नेहोऽभवत् । तं चैकदा शत्रुपक्षीय इति बहिर्गतमसुरा निजघ्नुः । देवयान्या च तमपश्यन्त्या 'तात, कचो नाऽऽयाति' इति पृष्टेन शुक्रेण योगचक्षुषा मृतमालोच्य पठित्वा च विद्यां 'एहि कच' इत्याहूतस्तन्मूले एवोपतस्थौ । एवमनेकधा व्यापादितं प्रापितजीवितं चासुरास्तं पुनरेकदा हत्वा पिष्ट्वा च तस्मै मदिरामदविह्वलाय शुक्राय पानेन सह ददुः । पुनश्च तया तथैव पृष्टो निरूपयन् स्वोदरगतं ददर्श । तत्र विद्याबलात् सुसंपूर्णदेहोऽपि कुक्षिमविदार्य न निर्गच्छतीति शुक्रस्तत्रस्थायैव तस्मै विद्यां ददौ । भित्त्वा च कच उदरान्निर्गत्य विद्यया पुनस्तमजीवयदिति ततो विद्यापहारात् जितः । पानव्यसनाच्चायं दोष इति ततः प्रभृति उशना द्विजानां मद्यमपेयं भविष्यतीति शापमुत्सृष्टवान् । जम.

( ३ ) मन्त्रशक्तेः प्राधान्यं दर्शयन्नाह– प्रभावेति । कोषदण्डबलं हि प्रभुशक्तिः । शौर्यममर्षः दाक्ष्यं च उत्साहशक्तिः । ताभ्यां प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिरेव गरीयसी । अत्र तावदितिहासं दर्शयति– प्रभावोत्साहवान् काव्यः शुक्रः देवपुरोधसा बृहस्पतिना, मन्त्रशक्त्या इति वाक्यशेषः, जितः । पुरा किल देवासुरसङ्ग्रामे मृतानसुरान् शुक्रो मृतसंजीवन्या विद्यया जीवयति, देवा मृता मृता एव । ततश्च शुक्रः असामान्यप्रभावोत्साहसंपन्नः समजनि । ततश्च तदभिसंधानार्थं मन्त्रशक्तिसंपन्नेन बृहस्पतिना स्वसुतः कचः शिष्यत्वेन प्रणिहितः । कचेन च शुक्रस्य प्रियसुता देवयानी वशी-

-कृता । तदवेत्य दैत्यैरभिसंधानभयात् कचो विपक्षः शुक्राय भक्षितुं प्रदत्तः । अथ शुक्रसुतया देवयान्या प्रार्थितेन तेन काव्येन उदरस्थ एव कचो मृतसंजीवन्या पुनः संजीवितः । उदरस्थस्यैव तस्य उपदिष्टा मृतसंजीवनी विद्या । आश्वस्तश्चासौ गुरुणा शुक्रेण– ' विदार्योदरं निर्याय त्वं मामनयैव विद्यया जीवय ' इति । कचस्तु तथैवाकरोत् । अथ गुरुकुलात् प्रतिनिवृत्ते च कचे समरे मृता देवाः पुनः संजीवन्ति । तदनया च मन्त्रशक्त्या सुरगुरुणा जितः काव्य इति पौराणिकी वार्ता ।
उनिसा.

[1]अशिक्षितनयः सिंहो हन्तीभं केवलं बलात् ।
तं च धीरो नरस्तेषां शतानि मतिमाञ्जयेत् ॥

( १ ) अशिक्षितनयः मन्त्रशक्तिविकलः । बलात् उत्साहशक्त्या । तत्र सिंहश्च ( १ तं च सिंहं च ) तेषां हस्तिनां शतानि जयेदिति संबन्धः । मतिमान् मन्त्रशक्त्युपेतः ।
जम.

( २ ) तदेव समर्थयन्नाह– अशिक्षितनय इति । अशिक्षितः नयः नीतिशास्त्रं येन स तथोक्तः, मन्त्रशक्तिरहित इत्यर्थः, सिंहः केवलं बलात् सामर्थ्यात्, केवलोत्साहशक्त्या इत्यर्थः, इभं हन्ति । मतिमान् धीरः नरः मन्त्रशक्तिसंपन्न इत्यर्थः, तं इभं तेषां सिंहानां शतानि च अनेकानि च जयेत् कूटकपटादिभिः स्ववशे स्थापयेत् मारयेद्वा इत्यर्थः । ' अशिक्षितनयः सिंहो हन्तीभम् ' इत्यत्र ' अशिक्षितनयः सिंहो हन्तीमम् ' इति मुद्रितपाठस्तु न सुसंगतः ।
उनिसा.

उपायानुपायशक्याशक्यादिविचारो मन्त्रणम्

[2]पश्यद्भिर्दूरतोऽपायान्सूपायप्रतिपत्तिभिः ।
भवन्तीह फलायैव विद्वद्भिर्मन्त्रिताः क्रियाः ॥

( १ ) तस्मात् मन्त्रशक्त्या निरूपित एव कार्यारम्भः फलायेत्याह– पश्यद्भिरित्यादि । सूपायप्रतिपत्तिभिः सदुपायानुष्ठानैः ।
जम.

( २ ) मन्त्रशक्तेः सामर्थ्यमभिधातुमाह– पश्यद्भिरिति । दूरतः देशव्यवधानात् कालव्यवधानाद्वा अपायान् विनिपातान् पश्यद्भिः प्रमाणबलात् प्रत्यक्षीकुर्वद्भिः सूपायप्रतिपत्तिभिः शोभनसामाद्युपायैः प्रतिपत्तिः ज्ञानाज्ञानपूर्विका फलप्राप्तिः येषां ते, तैः विद्वद्भिः चिन्तिताः सुपर्यालोचिताः क्रियाः, मन्त्राधिकारोक्ता इति शेषः, फलायैव भवन्ति निश्चयेन फलन्तीत्यर्थः ।
उनिसा.

[1]उपायपूर्वं लिप्सेत कालं वीक्ष्य समुत्पतेत् ।
पश्चात्तापाय भवति विक्रमैकरसज्ञता ॥

( १ ) इदानीं मन्त्रनिर्णयमेव विस्तरतो गुणख्यापनेन स्थिरीकर्तुं विंशतिश्लोकानाह । उपायपूर्वमिति मन्त्रशक्तिव्यापारं सूचयति । विक्रमैकरसज्ञता उत्साहशक्तितत्परता ।
जम.

( २ ) क्रियाचिन्तनमेव दर्शयन्नाह– उपायपूर्वमिति । उपायपूर्वं सामाद्युपायपूर्वं लब्धुमिच्छेत् । यानमात्रसाध्ये लाभे कालं यात्रानुरूपं समयं वीक्ष्य निर्णीय समुत्पतेत् यायात् । कस्मादित्याह– विक्रमैकरसज्ञता पश्चात्तापाय भवति । विक्रमः परमोत्साहः शौर्यातिशयश्च एको रसः तमेव जानातीति तस्य धर्मः । मन्त्रशक्तिरसाज्ञानात् देशकालादिनिरपेक्षस्य विपत्तिमूले व्यवसाये विक्रमैकरसज्ञता पश्चात्तापाय भवतीत्यर्थः । देशकालबलादिसापेक्षे व्यवसाये तु विक्रमोऽपि मन्त्रसहायतया फलतीति भावः । ' पश्चात्तापाय भवति ' इत्यत्र ' पश्चात्तापाय निर्दिष्टा ' इति मुद्रितपाठः ।
उनिसा.

[2]शक्याशक्यपरिच्छेदं कुर्याद्बुद्ध्या प्रसन्नया ।
केवलं दन्तभङ्गाय दन्तिनः शैलताडनम् ॥

( १ ) बुद्ध्या प्रसन्नया, अन्यथा ह्यपरिच्छेदे मोहादशक्येषु प्रवर्तमानस्याङ्गवैकल्यं निष्फलक्लेशता विपत्तिरन्तस्तापश्चेति दोषाः स्युः । तान् दर्शयति– केवलमित्यादिना । दन्तभङ्गायेति । गजो हि निर्मल-

---

( १ ) कानी. १२।८ ; रार. ३३ केवलं ( यौवनं ) धीरो ( वीरो ).

( २ ) कानी. १२।९ ; उनिसा. मन्त्रिताः (चिन्तिताः).

( १ ) कानी. १२।१० ; रार. ३४.

( २ ) कानी. १२।११ ; रार. ३४ दन्त ( दण्ड ), दन्तिनः ( दण्डिनः ).

शिलातलेषु स्वबिम्बं दृष्ट्वा प्रतिगजोऽयमिति मन्यमानो मोहात् तस्मिन् परिणतो दन्तभङ्गमवाप्नोति । जम.

(२) मन्त्रसापेक्षतां दर्शयति– शक्याशक्यपरिच्छेदमिति । आदावेव प्रसन्नया विशुद्धया, अतिनिर्मलयेति यावत्, बुद्ध्या 'शक्यमिदमशक्यं वा' इति परिच्छेदं कुर्यात् । दन्तिनो दन्ताभ्यां शैलताडनं दन्तभङ्गायैव भवतीत्यर्थः । उनिसा.

[1]अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम् ।
आकाशमास्वादयतः कुतस्तु कवलग्रहः ॥

(१) कुतस्तु कवलग्रहः ? शून्यत्वात् । जम.

(२) एतदेव द्रढयितुमाह– अशक्येति । आरभ्यते योऽसौ आरम्भः कार्यम् । अशक्ये असाध्ये आरम्भे वृत्तिः व्यवसायः प्रवर्तनं वा येषां ते, तेषां अशक्यारम्भवृत्तीनां क्लेशादृते क्लेशं विना नान्यत् फलं दृश्यते । तद्यथा– आकाशं आस्वादयतः आकाशास्वादमनुभवामीति यः कवलग्रहमाकाशस्य करोति तस्य कवलग्रहः कुतः ? आकाशस्यामूर्तत्वात् । एवमशक्यारम्भिणोऽपि कुतः फलमिति भावः । 'आकाशमास्वादयतः कुतो हि कवलग्रहः' इत्यस्य विनिमयेन मुद्रितपुस्तके 'भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः' इत्येवं पाठो दृश्यते । एतच्चरणद्वयं तु सार्धश्लोकानन्तरं लभ्यम् । अत्र कतिपयश्लोकाः मुद्रितपुस्तकानुसारेण अस्माभिः क्रमविपर्ययमापाद्य व्याख्याताः । श्लोकाङ्कस्तु यथाक्रममेव रक्षितः । इहापि पश्चात् प्रथमं व्याख्यास्यमानं श्लोकद्वयं मुद्रितपुस्तके न दृश्यते । उनिसा.

[2]नाग्निं पतङ्गवद्गच्छेत्स्पृश्यमेव तु संस्पृशेत् ।
किमन्यत्स्यादृते दाहात्पतङ्गस्याग्निमृच्छतः ॥

(१) स्पृश्यमेव तु संस्पृशेत् शक्यमेवाऽऽरभेत । जम.

(२) अशक्यारम्भो न केवलं विफलतामापद्यते, अपि तु आत्मविनाशायापि भवतीति दर्शयन्नाह– नाग्निमिति । यो हि पतङ्गो दीपाग्निदर्शनसुखी स्पर्शसुखमप्यनुभवामीति बुद्ध्या अग्निं गच्छेत् स तत्क्षणात् दग्धदेहः पञ्चत्वमापद्यते, तद्वन्न भवेत् । विजिगीषुपक्षे अग्निशब्देन बलवत्तरो भूपतिर्लक्ष्यते । अविविच्यैवाऽऽत्मनो बलवत्तरं भूपतिं आत्मविनाशाय नाभिगच्छेदिति तात्पर्यम् । पूर्वमेवापरिच्छिद्य अग्निं ऋच्छतः गच्छतः पतङ्गस्य दाहादृते किमन्यत् फलं स्यात् ? मन्त्ररहितस्यापि तथेति भावः । उनिसा.

[1]मोहात्प्रक्षिपतश्चेष्टां दुःखलभ्येषु वस्तुषु ।
भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः ॥

(१) चेष्टां प्रक्षिपतः कुर्वतः । परितापिन्यः परितापनशीलाः । कर्मविपत्तयः कर्मण्यापदः । जम.

(२) एतदेव द्रढयति– मोहादिति । मोहात् मन्त्राज्ञानात् दुःखलभ्येषु दुर्लभेषु वस्तुषु चेष्टां उद्योगं प्रकुर्वतः कर्मविपत्तयः अशुभफलानि व्यक्तं निश्चयमेव परितापिन्यः पश्चात्तापविधायिन्यः भवन्तीत्यर्थः । उनिसा.

[2]बुद्ध्या बोध्यानुगतया परीयात्संपदः पदम् ।
विशुद्धपदविन्यासः पर्वताग्रमिवोन्नतम् ॥

(१) यस्मादपरिच्छेद्या एते दोषास्तस्मात् बुद्ध्या सर्वं परिच्छिन्द्यादित्याह– बुद्ध्येति । बोध्यानुगतया यथावस्थितवस्तुविषयया विशुद्धपदविन्यासः इति संबन्धः । परीयात् संपदः पदं आक्रमेद्राज्यम् । जम.

(२) सुसंश्लिष्टमन्त्रफलं दर्शयन्नाह– बुद्ध्या बोध्यानुगतयेति । बोध्यानुगतया बुद्ध्या ज्ञेयानुयायिना ज्ञानेनेत्यर्थः । ज्ञानं साधनम्, ज्ञेयं साध्यम् । साधनं साध्यानुरूपं यदा भवति तदा अवश्यंभाविनी सिद्धिरिति भावः । तथा चोक्तम्– 'प्रत्यक्षादिप्रमाणत्रयनिर्णीतायां फलसिद्धौ यथासाध्यं साधनविनियोगलक्षणा क्रिया नीतिरन्यथा त्वनीतिः' । एवं बुद्धिर्यदा बोध्यानुगता भवति तदा सुविशुद्धपदन्यासः सुविशुद्धः अन्तरायरहितः पदन्यासः

---

(१) कानी. १२।१२ ; उनिसा. कुतस्तु (कुतो हि).
(२) कानी. १२।१३ ; उनिसा. तु ( हि ).

(१) कानी. १२।१४ ; उनिसा. त्प्रक्षिप ( त्प्रकुर्व ).
(२) कानी. १२।१५ ; उनिसा. विशुद्धपदवि ( सुविशुद्धपद ).

-न्यस्य सः उन्नतं पर्वताग्रमिव संपदः लक्ष्म्याः पदं परी-यात् प्राप्नुयात् । 'बोध्यानुगतया' इत्यत्र 'बोधा-नुगतया' इति, 'पर्वताग्रमिवोन्नतम्' इत्यत्र 'पर्वताग्र-मिवोदितम्' इति मुद्रितपाठः । उनिसा.

**[1]दुरारूढं पदं राज्ञां सर्वलोकनमस्कृतम् ।**
**स्वल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यति ॥**

(१) अविशुद्धे च पदन्यासे तत् स्वल्पेनापि दोषेण दुष्येदित्याह– दुरारूढमित्यादि । जम.

(२) कस्मान्मन्त्रे महान् यत्न इत्याह– दुरारोह-मिति । दुःखेन महता क्लेशेन आरुह्यते इति दुरारोहम्, सर्वलोकैर्नमस्कृतं महेन्द्रसमानमप्राप्यत्वादित्यर्थः, राज्ञां पदं राजत्वं स्वल्पेनापि अपचारेण मन्त्रभेदादिकेन ब्राह्मण्यमिव सर्वलोकनमस्कृतमपि संध्यावन्दनवञ्चनमात्रे-णापि दुष्यति सदोषं भवतीत्यर्थः । 'स्वल्पेनापि' इत्यत्र 'अल्पेनापि' इति मुद्रितपाठः । उनिसा.

**[2]आरब्धानि यथाशास्त्रं कार्याण्यमलबुद्धिभिः ।**
**वनानीव मनोहारि प्रयच्छन्त्यचिरात्फलम् ॥**

(१) गुणख्यापनेन मन्त्रनिर्णयं स्थिरीकर्तुमाह– आरब्धानीत्यादिना । वनानीवेति । तान्यपि वृक्षायुर्वेद-विहितेन विधिना ज्ञात्वा आरब्धानि अचिरात् फलं ददतीति । जम.

(२) शास्त्रोक्तमन्त्रफलं दर्शयन्नाह– प्रारब्धानीति । यथाशास्त्रं नीतिशास्त्रानतिक्रमेण । प्रारब्धानि अनुष्ठि-तानि कार्याणि पृथ्वीलाभपालनादीनि । आसन्नबुद्धिभिः सुपरिज्ञातपञ्चविधासनैः । विस्पष्टमन्यत् । 'प्रारब्धानि' इत्यत्र 'आरब्धानि' इति केचित् । उनिसा.

**[3]सम्यगारभ्यमाणं हि कर्म यद्यपि निष्फलम् ।**
**न तत्तथा तापयति यथा मोहसमीहितम् ॥**

(१) ननु सम्यगारब्धमपि कर्म कदाचिन्निष्फलं भवत्येव । ततश्च निर्णयानिर्णययोः को भेद इत्याह– सम्यगित्यादि । न तापयति, तत्र पुरुषस्यानुपालभ्यत्वात् । जम.

(२) यथानीति समारब्धं कार्यं विफलमपि न परितापयतीत्याह– सम्यगारभ्यमाणमिति । सुगमम् । उनिसा.

**यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम् ।**
**पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः ॥**

(१) यदाह– यत्तु सम्यगित्यादि । उपक्रान्तं आरब्धम् । विपर्ययं नैष्फल्यम् । दैवान्तरितपौरुषः अलक्षणेन दैवेन बलवता तिरस्कृतपुरुषकार इत्यर्थः । तत्र दैवमेवोपालभ्यम्, अत्र (? न तु) पुमान् । जम.

(२) यथाशास्त्रमनुष्ठितं कार्यं यदि दैवप्रतिबन्धेन विफलतामेति तदा नानुष्ठाता दोषभागित्याह– यत्त्विति । सुस्पष्टम् । 'एति' इत्यत्र 'एतत्' इति, 'पुमांस्तत्र' इत्यत्र 'पुमांस्तन्न' इति मुद्रितपाठः । उनिसा.

[यथा कु(? सु)कृष्टेऽपि क्षेत्रे दैवानुकूल्यमन्तरेण फलं नोत्पद्यते तथा दैवपुरुषकारयोरानुकूल्यं विना न फलसिद्धिरित्याह– द्वयमिति । एष श्लोकः अस्माभिरपि नाऽऽसादितः । परंतु अयं 'यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । तथा पुरुषकारेण विना दैवं न सिध्यति ॥' (यास्मृ. १।३५१) इति श्लोकेन समानार्थकः । उनिसा.]

**[1]प्रयत्नस्तावदास्थेयः फलायामलबुद्धिना ।**
**अपर्वभङ्गनिपुणं शेषं दैवं समाश्रयेत् ॥**

(१) यदि दैवं प्रधानं किं तर्हि पुरुषकारेणेत्याह– प्रयत्न इत्यादि । अमलबुद्धिनेति विचारपूर्वकः पुरुष-कारः कार्य इति दर्शयति । * अथर्ववेदनिपुणः अकाण्ड-विनाशकुशलः । दैवं समाश्रयेत् सहकारितया । जम.

---

(१) कानी. १२।१६ ; उनिसा. रूढं (रोहं).

(२) कानी. १२।१७ ; उनिसा. आर (प्रार) ण्यमल (ण्यासन).

(३) कानी. १२।१८–१९.

* 'अथर्ववेदनिपुणः' इत्ययं मूले टीकायां च लेखकप्रमादः स्पष्ट एव । वेदशब्दसादृश्यात् 'भेद' इति पाठः कल्प्यते ।

(१) कानी. १२।२० ; जम. भङ्गनिपुणं (भेद-निपुणः) ; उनिसा. दैवं समाश्रयेत् (दैवसमाश्रितम्).

( २ ) 'द्वयम्' इति पूर्वोक्तश्लोकेन यद्यपि दैवपुरुषकारयोरानुकूल्ये फलसिद्धिरुक्ता तथापि पुरुषकार एवावलम्बनीय इति दर्शयन्नाह– प्रयत्नस्तावदास्थेय इति। फलसिद्ध्यर्थं प्रयत्नः कर्तव्यः। दैवसमाश्रितं प्रतिकूलदैवायत्तमित्यर्थः, शेषं कार्यं अपर्वभङ्गनिपुणं पर्वभङ्गे ग्रन्थिच्छेदे न निपुणं न फलोपघायकमिति तात्पर्यम्। 'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता' इति भावः। 'अपर्वभङ्गनिपुणम्' इत्यत्र 'अपर्वण्येव निपुणम्' इति क्वचित् पाठः। उनिसा.

**[1]आत्मानं च परं चैव वीक्ष्य धीरः समुत्पतेत्।**
**एतदेव हि विज्ञानं यदात्मपरवेदनम्॥**

( १ ) उत्साहवतोऽपि विक्रमो विचारपूर्वक एव फलवानिति दर्शयितुमाह– आत्मानं चेत्यादि। एतदेव हि विज्ञानं बुद्धेः कौशलं यत् प्रथममेव आत्मपरवेदनं अभ्युच्चयापचयाभ्याम्। जम.

( २ ) मन्त्रतत्त्वमभिधातुमाह– आत्मानं च परं चैव वीक्ष्येति। धीरः धैर्यसंपन्नः विजिगीषुः आत्मानं च परं चैव वीक्ष्य आत्मानं शक्तित्रयेणोपचितं देशकालबलं अनुकूलशकुननिमित्तग्रहादिकसूचितविजयं च वीक्ष्य निर्णीय, परस्य तद्विपरीतं निरूप्य, उत्पतेत् यात्रां कुर्यात्। यत् आत्मपरवेदनं मन्त्रे यत् स्वपरबलाबलज्ञानं एतदेव हि विज्ञानं मन्त्रतत्त्वम्। 'वीक्ष्य' इत्यत्र 'ज्ञात्वा' इति मुद्रितपाठः। उनिसा.

**निष्फलं क्लेशबहुलं संदिग्धफलमेव च।**
**न कर्म कुर्यान्मतिमान् महावैरानुबन्धि च॥**

( १ ) 'उपायपूर्वं लिप्सेत' ( कानी. १२।१० ) इत्युक्तम्। कीदृशं पुनस्तत् कर्म लिप्सेत त्यजेच्चेति प्रसङ्गादाह– निष्फलमित्यादिना। जम.

( २ ) निषिद्धानुष्ठानमभिधातुमाह– निष्फलमिति। मतिमान् नीतिज्ञः। संदिग्धफलं अनिश्चितफलकम्। महावैरं अनुबध्नाति यत् तत् महावैरानुबन्धि। स्पष्टमन्यत्। उनिसा.

( १ ) कानी. १२।२१–२२.

**[1]तदात्वायतिसंशुद्धं सुविशुद्धक्रमागतम्।**
**हितानुबन्धि च सदा कर्म सद्भिः प्रशस्यते॥**

( १ ) सुविशुद्धक्रमागतं देशकालोपेतत्वात्। जम.

( २ ) कीदृक् कर्म कर्तव्यमित्याह– तदेति। तदा तत्कालं शुचि विशुद्धं आयतिसंशुद्धं विशुद्धोत्तरकालं शुद्धक्रमागतं शुद्धेन निर्दोषेण क्रमेण मार्गेण आगतं हितानुबन्धि उभयलोकहितं अनुबध्नाति यत् तत् कर्म सद्भिः सदा प्रशस्यते। 'शुद्धक्रमागतम्' इत्यत्र 'शुद्धं क्रमागतम्' इति केचित्। उनिसा.

**[2]हितानुबन्धि तज्जातु गच्छेद्येन न वाच्यताम्।**
**तस्मिन् कर्मणि सज्जेत तदात्वकटुकेऽपि हि॥**

( १ ) तदात्वकटुकेऽपि आरम्भकाले समुद्वेजनेऽपि तिक्तौषधपानवत्। जम.

( २ ) एतदेव समर्थयन्नाह– हितानुबन्धीति। तदा तत्कालं अकटुकेऽपि सौख्यरहितेऽपि (?)। शेषं स्पष्टम्। उनिसा.

**[3]बुद्ध्यैवोपक्रमः श्रेयान् फलनिष्पत्तये सदा।**
**कचित्कल्याणमित्रस्य दृश्यते सिंहवृत्तिता॥**

( १ ) बुद्ध्यैवोपक्रमः श्रेयान् यथोक्तेषु कर्मसु। क्वचिदिति भीते। तत्रापि कल्याणमित्रस्य सुसहायस्येत्यर्थः। जम.

( २ ) सर्वत्र नीतिशास्त्रानुसारेण देशकालादेरनुकूलतां विविच्य कार्यारम्भः प्रशंसनीयः, क्वचित्तु सिंहवृत्तिताऽपि प्रशस्यते इत्याह– बुद्ध्यैवोपक्रम इति। फलनिष्पत्तये फलसिद्ध्यर्थं सदा बुद्ध्यैव ज्ञेयानुगतेन ज्ञानेनैवेत्यर्थः, उपक्रमः प्रारम्भः श्रेयान् श्रेयस्करः। कल्याणमित्रस्य कल्याणं मित्रं यस्य, सर्वतः कुशलिन इति यावत्, क्वचित् कदाचित् समयानुसारेणेत्यर्थः, सिंहवृत्तिता आयामवृत्तिता व्यायामयुद्धेनोपक्रमोऽपीति यावत्,

( १ ) कानी. १२।२३; उनिसा. तदात्वा ( तदा त्वा ) सुविशु ( शुचि शु ).

( २ ) कानी. १२।२४; उनिसा. तदात्व (तदा त्व).

( ३ ) कानी. १२।२५; उनिसा. दृश्यते (शस्यते)–

शस्यते फलोपधायिका भवति । 'कच्चित्कल्याणमित्रस्य' इत्यत्र 'कच्चित्कल्याणमित्येतत्' इति, 'सिंहवृत्तिता' इत्यत्र 'सिंहवृत्तिना' इति च केचित् पठन्ति । उनिसा.

[१]सहसोत्पत्य दुष्टेभ्यो दुष्करं संपदर्जनम् ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनः ॥

(१) सहसोपक्रमे चार्थसिद्धिर्दुष्करैवेत्याह– सहसोत्पत्येति । उपायेन बुद्धिपूर्वकेण । जम.

(२) 'उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः' इत्याह– सहसोत्प्लुत्येति । सहसा उत्प्लुत्य देशकालनिरपेक्षया सहसा आक्रम्य दुष्टेभ्यः दुरारम्भ्यः संपदां धनधान्यादीनां श्रेयसां वा अर्जनं उपार्जनं दुष्करं दुःसाध्यम् । उपायेन शास्त्रोक्तेनोपदेशेन मत्तदन्तिनां मत्तहस्तिनां मूर्ध्नि पदं न्यस्यते, न पुनः सहसोत्पत्य मत्तदन्तिनो मूर्ध्नि पदन्यासं कर्तुं शक्यते । उपायाश्च मन्त्रेण निर्णीयन्ते इति भावः । 'सहसोत्पत्य दुष्टेभ्यो यातव्येभ्यः सहस्रशः । तद्वशाद्दुष्करं कर्तुमनशक्यं यदर्जनम् ॥' इति पाठान्तरम् । उनिसा.

[२]न किंचित्क्वचिदस्तीह वस्त्वसाध्यं विपश्चिताम् ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥

(१) न किंचित् क्वचिदस्तीत्यादि उपायस्याभिव्यापितां दर्शयति । अयो द्रवतां नीयते इति संबन्धः । अभेद्यमपि सत् । जम.

(२) तदेव समर्थयन्नाह– न किंचिदिति । इह लोके विपश्चितां पण्डितानां क्वचित् देशे कालेऽपि वा किंचित् किमपि सुदुर्लभमपीति यावत्, वस्तु असाध्यं नास्ति । अयः लोहकनकादि अभेद्यमपि उपायेन तापादिकर्मणा यन्त्रपाकादिना वा द्रवतां द्रवद्रव्यत्वं उपनीयते । मन्त्रेणैवेति भावः । उनिसा.

[१]वाह्यमानमयःपिण्डं महच्चापि न कृन्तति ।
तदल्पमपि धारावद्भवतीप्सितसिद्धये ॥

(१) वाह्यमानं व्यापार्यमाणम् । तत्रापि स्वल्पमपि छेद्यम् । धारावत् धारोपेतम् । ईप्सितसिद्धये छिदया अरिपीडयैव । जम.

(२) तदेव द्रढयति– वाह्यमानमिति । स्कन्धेन वाह्यमानं अयःखण्डं लोहशकलं नैवापि स्कन्धं कृन्तति अण्वपि छिनत्तीत्यर्थः । उपायरहितत्वादिति तात्पर्यम् । अल्पमपि तत् लोहशकलं धारावत् कृतधारं सत् शस्त्रस्थितं तीक्ष्णमित्यर्थः, ईप्सितसिद्धये शत्रुस्कन्धच्छेदनादिरूपामीष्टसाधनाय भवेत् । 'भवेत्' इत्यत्र 'भवति' इति मुद्रितपाठः । उनिसा.

[२]लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ।
उपायोपगृहीतेन तत्तेनैव विशोष्यते ॥

(१) उपायोपगृहीतेनेति । वह्निना अधस्तात् प्रतप्यमानायां स्थाल्यां तद्गतं वारि शोष्यते । तस्मात् मन्त्रनिर्णयः कार्य इति स्थिरीकृतम् । जम.

(२) उपायेन असाध्यसाधनमपि भवतीति दृष्टान्तेन समर्थयन्नाह– लोकप्रसिद्धमिति । वारि जलं वह्नेः अग्नेः नियामकं उपशमकारकं एतत् लोकप्रसिद्धमेव । तत् वारि उपायोपगृहीतेन तेनैव वह्निनैव परिशोष्यते परिशोषमापाद्यते । स्थाल्यादिसंस्थितं वह्न्युपशमकारणं सलिलं अधःप्रज्वलितेन तेनैव वह्निना परिशोष्यते इति मन्त्रानुमतोपायानामसाध्यं किमपि नास्तीति भावः । उनिसा.

[३]विषं सुविषमाहारं केवलं मारणात्मकम् ।
तदेव द्रव्यसंयोगादौषधाय प्रकल्प्यते ॥

---

(१) कानी. १२।२६ ; उनिसा. सोत्पत्य (सोत्प्लुत्य) हस्तिनः ( दन्तिनाम् ).

(२) कानी. १२।२७.



(१) कानी. १२।२८ ; उनिसा. पिण्डं महच्चापि न ( खण्डं स्कन्धं नैवापि ) द्भवती ( द्भवेदी ).

(२) कानी. १२।२९ ; उनिसा. तत्तेनैव वि ( तेनैव परि ).

(३) कानी. १२।२९ इति श्लोकादनन्तरं उपाध्यायनिरपेक्षानुसारिण्यां समुद्धृतोऽयं श्लोकः.

अहितमपि मन्त्रबलेन हिताय कल्प्यते इति दृष्टान्तेन समर्थयन्नाह– विषमिति। विषं सुविषमाहारं सुविषमः आहारः यस्य तत्, भोक्तुमशक्यं भुक्ते च महानिष्टकरमित्यर्थः, केवलं मारणात्मकं यत्पाने मृत्युव्यतिरिक्तमन्यत् फलं नास्तीत्यर्थः। तदेव विषमेव द्रव्यसंयोगात् मन्त्रबलेनेत्यर्थः, औषधाय प्रकल्प्यते पीडोपशमकारणं हितकरं च भवतीत्यर्थः। एष श्लोको मुद्रितपुस्तके नास्ति। उनिसा.

**'अविज्ञातस्य विज्ञानं विज्ञातस्य विनिश्चयः।**
**अर्थद्वैधस्य संदेहच्छेदनं शेषदर्शनम्॥**

(१) इदानीं मन्त्रस्य ज्ञानरक्षाप्रकाशनप्रशस्ताङ्गव्यापारोत्पत्तिक्रमशुद्धिसिद्ध्यावर्तनधारणप्रदेशानष्टादशभिः श्लोकैराह– अविज्ञातस्येत्यादि। मन्त्रनिर्णयः मन्त्रज्ञानम्। तच्च मन्त्रिभिः सह मन्त्रयमाणस्य, नैकाकिनः। तथाहि– देशकालान्तरितत्वात् असाक्षीकृतस्य विज्ञानं मन्त्रिभ्य एव। मन्त्रिसाक्षात्कृतस्यापि तत्त्वाभासनिश्चयभूयस्त्वे निश्चयो बुद्ध्यन्तरात्। अर्थद्वैधस्य दशाया यातव्ययोः कं प्रति यायात् इत्यादिसंदेहे तच्छेदनं मन्त्र्युपदेशात्। शेषदर्शनम्, एकदेशदृष्टस्येति शेषः। संधिविग्रहयोः संधिः श्रेयानिति शेषोपलब्धिः। एतच्चतुष्टयरूपं मन्त्रिसाध्यमिति तेषां शृणुयात्। जम.

(२) मन्त्रिकर्माभिधातुमाह– अविज्ञातस्येति। अविज्ञातस्य अपरिज्ञातस्य देशकालव्यवहितस्येति यावत्, विज्ञानं दर्शनम्, ज्ञानचक्षुषेति शेषः। विज्ञातस्य च निश्चयः। राज्ञां मन्त्रिमतसंवादात् विज्ञातस्य विनिर्णयो भवतीति भावः। अर्थद्वैधस्य संदेहच्छेदनं 'एतत् किमेवमथवा किमेवं भविष्यति?' इति द्वैधस्य संशयच्छेद इत्यर्थः। शेषदर्शनं एकदेशदृष्टस्य शेषोपलब्धिरित्यर्थः। एतच्चतुष्टयं मन्त्रिकर्मेति वाक्यशेषः। तथा च कौटिल्यः– 'अनुपलब्धस्य ज्ञानम्, उपलब्धस्य *निश्चयो वा अवधानम्, अर्थद्वैधस्य संशयच्छेदनम्, एकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्' इति, 'विद्वद्भिश्चतुर्भिर्मन्त्रिभिर्मन्त्रयेत्' (कौ. १।१५) इति। उनिसा.

**'विदुषां शासने तिष्ठन्नावमन्येत कंचन।**
**सर्वस्यैवोपशृणुयात्सुभाषितजिघृक्षया॥**

(१) यदाह– विदुषामिति। शासनं उपदेशः। सर्वस्य अशास्त्रज्ञानस्यापि। सुभाषितजिघृक्षया अर्थवत् वाक्यं ग्रहीतुमिच्छया। जम.

(२) 'ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः' (किरातार्जुनीये २।५) इत्याह– विदुषामिति। विदुषां नीतिशास्त्रविशारदानां शासने शास्त्रानुसारिण्युपदेशे तिष्ठन् कंचन हीनकुलोत्पन्नं निर्धनं मूर्खमपि न अवमन्येत। सुभाषितजिघृक्षया गुणवद्वाक्यग्रहणार्थम्, हंसः क्षीरमिवाम्भसः इति भावः, सर्वस्य च उक्तं वचनं शृणुयात्। 'सर्वस्य चोक्तम्' इत्यत्र 'सर्वस्य चापि' इति केचित् पठन्ति। उनिसा.

**'मदोद्वृत्तः क्रियामूढो योऽतिक्रामति मन्त्रिणम्।**
**अचिरात्तं वृथामन्त्रमतिक्रामन्ति विद्विषः॥**

(१) अवमानने दोषमाह– मदोद्वृत्त इति। अहमेव ज्ञानवान् इति मदावलिप्तः। क्रियामूढः प्रयोगानभिज्ञः। वृथामन्त्रं निष्फलमन्त्रम्। जम.

(२) मन्त्रिवचनातिक्रमो दोषावह इति दर्शयन्नाह– मदोद्धत इति। मदोद्धतः 'अहमेव सर्वं जानामि' इति ज्ञानमदेन उद्धतः क्रियामूढः कर्तव्यतामूढः यः मन्त्रिणमतिक्रामति तदुपदिष्टस्याकरणात्, वृथामन्त्रं मन्त्राभासविप्रलब्धं तं भूपतिं विद्विषः शत्रवः अचिरात् अनतिदीर्घकालेनैव अतिक्रामन्ति अतीत्य अतिसंधाय तद्राज्यमाक्रम्य गृह्णन्तीत्यर्थः। उनिसा.

---

* 'निश्चयो वा अवधानम्' इत्यत्र 'निश्चयबलाधानम्' इति, 'विद्वद्भिश्चतुर्भिर्मन्त्रिभिर्मन्त्रयेत्' इत्यत्र 'मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत' इति च कौटिलीयार्थशास्त्रस्य मुद्रितपुस्तके पाठः।

(१) कानी. १२।३०; उनिसा. विनि (च नि).

(१) कानी. १२।३१; उनिसा. स्यैवोप (स्य चोक्तं).

(२) कानी. १२।३२; उनिसा. मदोद्वृत्तः (मदोद्धतः).

मन्त्रगूहनमत्यन्तमिष्टम्

'संरक्षेन्मन्त्रबीजं हि तद्बीजं हि महीभृताम् ।
तस्मिन् भिन्ने ध्रुवो भेदो गुप्ते गुप्तिरनुत्तमा ॥

( १ ) रक्षितो मन्त्रः फलवानित्याह– संरक्षेदिति । निर्णयकालात् प्रभृति यावत्कर्मारम्भकालम् । मन्त्र एव बीजम्, ततो राज्यफलप्रसवात् । यदाह– तद्बीजमिति । भेदः विनाशः । अनुत्तमा श्रेयसी । जम.

( २ ) मन्त्रभेदनिवारणार्थमाह– संरक्षेदिति । मन्त्रबीजं मन्त्रः बीजमिव, तत् संरक्षेत् । यथा अन्येषामपरिज्ञायमानं फलजनकं भवति तथा कुर्यादिति भावः । हि यतः महीभुजां राज्ञां तत् मन्त्रबीजमेव बीजम् । तस्मात् सुरक्षिता महीभुजो भवन्तीति भावः । यस्मिन् मन्त्रबीजे भिन्ने ध्रुवं निश्चयं भेदः राज्ञ एव विनाश इत्यर्थः । यस्मिन् गुप्ते सुसंरक्षिते अनुत्तमा गुप्तिः, भवेदिति शेषः । 'यस्मिन्' इत्यत्र 'तस्मिन्' इति पाठान्तरम् । उनिसा.

'सिंहवच्चेष्टमानस्य काले कर्म विपश्चितः ।
क्रियमाणं स्वकुल्यास्तु विद्युरस्य परे कृतम् ॥

( १ ) कदा तर्हि मन्त्रः प्रकटीभवतीत्याह- सिंहवदित्यादि । सर्वकृतप्रतिविधानत्वात् सिंहस्येव निःशङ्कं चेष्टमानस्य काले प्रागवधारिते क्रियमाणं स्वकुल्या विद्युः, न तु चिकीर्षितम् । परे कृतं समाप्तं विद्युः । अनेन क्रियानुमेयतां मन्त्रस्य दर्शयति । जम.

( २ ) मन्त्रगुप्तिमेव दर्शयन्नाह– सिंहवदिति । सिंहो हि संकुपितः सर्वावयवाबद्धक्रमः परैरलक्षितचेष्टः मार्जारवदकस्मात् ग्रसते इत्येवं सिंहवच्चेष्टमानस्य विपश्चितः नीतिपण्डितस्य विजिगीषोः काले चेष्टानुकूले समये कर्म अनुष्ठानं अस्य सकुल्याः बन्धवः क्रियमाणम्, परे तु कृतं निष्पन्नं विदुः जानीयुः । अनुष्ठानात् पूर्वे न कोऽपि किमपि ज्ञातुं शक्नोतीति भावः । उनिसा.

'अपश्चात्तापकृत्सम्यगनुबन्धिफलप्रदः ।
अदीर्घकालोऽभीष्टश्च प्रशस्तो मन्त्र इष्यते ॥

( १ ) प्रशस्ते च मन्त्रे यत्नः कार्य इति दर्शयितुमाह– अपश्चात्तापेत्यादि । अदीर्घकालः चिरेण कालेन यो न निष्पद्यते । अभीष्टः ईप्सितार्थसाधनत्वात् । जम.

( २ ) गुणवन्मन्त्रमभिधातुमाह– अपश्चात्तापकृदिति । अपश्चात्तापकृत् यो हि मन्त्रः उत्तरकालं नानुतापं जनयति । सम्यक् अनुबन्धिफलप्रदः– अनुबन्धाः फलान्तराणि विद्यन्ते यस्य मुख्यफलस्य तत् अनुबन्धि, अनुबन्धिफलं प्रददातीति । 'अनुरक्तिफलप्रदः' इति मुद्रितपाठे तु प्रकृतिरञ्जनरूपफलदायक इत्यर्थः । अदीर्घकालः यो हि न सुदीर्घकालव्यापी । अभीष्टः भेदाभावात् वाञ्छितः । प्रशस्यः उभयलोकाविरोधात् प्रशंसनीयः । मन्त्र इष्यते, सद्भिरिति शेषः । उनिसा.

पञ्चाङ्गो मन्त्रः

'सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते ॥

( १ ) सहायाः मन्त्रिणः । साधनोपायाः तर्कादयः । देशकालविभागावुक्तौ [ तत्र मन्त्रणादेशमाह मनुः– 'गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः । अरण्ये निःशलाके वा मन्त्रयेद्भूरिभावितः ॥' ( मस्मृ. ७।१४७ ) । कालमाह– 'मध्यंदिनेऽर्धरात्रे वा विश्रान्तो गतकल्मषः । चिन्तयेद्धर्मकामार्थान् सार्धं तैरेक एव वा ॥' ( मस्मृ. ७।१५१ ) । महाभारते– 'सुसंवृतं मन्त्रगृहं स्थलं चाऽऽरुह्य मन्त्रयेः । अरण्ये निःशलाके वा न च रात्रौ कथंचन ॥' ( भा. १५।५।२२–२३ ) । निःशलाके जनप्रचाररहिते ।

---

( १ ) कानी. १२।३३ ; रार. २८ न्त्रबीजं हि ( न्त्रबीजं तु ) भृताम् ( भुजाम् ) अनेनोद्धृताः सर्वे श्लोकाः 'राजनीतौ' इति निर्दिष्टाः ; उनिसा. भृताम् ( भुजाम् ) तस्मिन् ( यस्मिन् ) ध्रुवो ( ध्रुवं ).

( २ ) कानी. १२।३४ ; उनिसा. विद्यु ( विदु ).

( १ ) कानी. १२।३५ ; उनिसा. शस्तो ( शस्यो ).

( २ ) कानी. १२।३६ ; रार. २९ चतुर्थचरणे ( पञ्चाङ्गो मन्त्र उच्यते ).

इयं देशकालव्यवस्था कालक्षापेक्षे । रार. २७ ] यदा इयं विपत्तिः तदा असौ प्रतीकारः । इति पञ्चाङ्गो मन्त्रः । रार. २९

( २ ) प्रशस्तः स्वाङ्गसाफ(?क)ल्याद्भवतीति तान्यङ्गान्याह– सहाया इत्यादि । अत्र दुर्गकर्मणि सहायाः मुख्याः क्षुद्राश्च पुरुषाः । साधनोपायाः दुर्गस्याऽऽरम्भं प्रति उपायाः कुद्दालकुठारकरपत्रादयः । विभागो देशकालयोरिति । तत्र जनपदान्ते जनपदमध्ये चेति देशविशेषः । वर्षासु काष्ठादिकर्म, ग्रीष्मे हेमन्ते चेष्टकादिकर्मेति कालविभागः । विपत्तेश्चेति । आरब्धे दुर्गकर्मणि दैव्यां मानुष्याश्चोत्पर्याय( ? त्पन्नायाः ) विपदः अथर्वभिरुपायैः सामादिभिश्च प्रतीकारः । सिद्धिरिति । कार्यस्येति शेषः । ( तत्र मन्त्रविषयान्ते निष्पन्नदुर्गमविग्रह्यमाश्रितः परकर्माण्यपहनिष्यामि जनपदमध्ये च समुदायस्थानं भवतीत्यादि ? ) पञ्चाङ्ग इष्यते, मन्त्र इत्येव । उक्तं च– ' कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः ' ( कौ. १।१५ ) इति । जम.

( ३ ) मन्त्राङ्गान्याह– सहाया इति । सहायाः पुरुषद्रव्यसंपदाख्यसमुद्भवं प्रथममङ्गम् । साधनोपायाः कर्मणां साधने ये उपायाः, कर्मणामारम्भोपायाख्यं द्वितीयमङ्गम् । विभागो देशकालयोः अस्मिन् देशे अस्मिन् काले अनुष्ठितं कर्म सिध्यतीति देशकालविभागस्तृतीयमङ्गम् । विपत्तेश्च प्रतीकारः । विपत्तेः विघ्नानां प्रतीकारः । विनिपातप्रतीकार इति यावत् । अयं च चतुर्थमङ्गम् । सिद्धिः फलसिद्धिः पञ्चममङ्गम् । मन्त्रः एवं पञ्चाङ्ग इष्यते इत्यर्थः । तथा च कौटिल्यः– ' कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः ' ( कौ. १।१५ ) इति । ' सिद्धिः पञ्चाङ्ग इष्यते' इत्यत्र ' मन्त्रः पञ्चाङ्ग उच्यते ' इति मुद्रितपाठः । उनिसा.

**'अनुतिष्ठेत्समारब्धमनारब्धं प्रयोजयेत् ।**
**अनुतिष्ठंश्च संवृत्य विशेषेणोपपादयेत् ॥**

( १ ) कानी. १२।३७ ; रार. २९ पू. ; उनिसा. तिष्ठंश्च संवृत्य ( ष्ठितं च सद्वृत्त्या ).

( १ ) मन्त्रव्यापारं दर्शयितुमाह– अनुतिष्ठेत् समापयेत् । प्रयोजयेत् आरम्भयेत् । संवृत्येति । इदमनेन विशिष्टं भवतीति कुशलैः संपाद्य ( ? ) । जम.

( २ ) मन्त्रिकर्तव्यमाह– अनुतिष्ठेदिति । समारब्धं यदारब्धं दुःसाध्यादिकं कर्म तत् अनुतिष्ठेत् यथा सुसमाप्तिं गच्छति तथा भूयो भूयः प्रेरयेत् । अनारब्धं प्रयोजयेत् यथा प्रारभ्यते तथा कुर्यात् । अनुष्ठितं च निष्पन्नं च कर्म सद्वृत्त्या शोभनवृत्तिकरणेन विशेषेण यथा स्थायि भवति तथा उपपादयेत् निष्पादयेत् । तथा च कौटिल्यः– ' अकृतारम्भम्, आरब्धानुष्ठानम्, अनुष्ठितविशेषम्, नियोगसंपदा च कर्मणां कुर्युः ' ( कौ. १।१५ ) । मन्त्रिण इत्यनुवर्तते । ' अनुष्ठितं च सद्वृत्त्या ' इत्यत्र ' अनुष्ठितं च संवृत्या ' इति केचित् पठन्ति । उनिसा.

**'प्रचारयेन्मन्त्रविदः कार्यद्वारेषु नैकधा ।**
**यत्र तच्चेतसां साम्यं तेषु साधु समुत्पतेत् ॥**

( १ ) कार्यद्वारेषु मन्त्रबहिःस्थलेषु मन्त्रविदः स्वमन्त्रिभिन्नान् अनेकधा अनियमितप्रकारेण प्रचारयेत् । तथा चान्योपदेशेन मन्त्रसंदेहो निरसनीयोऽन्यमन्त्रित इति । रार. २९

( २ ) मन्त्रोत्पत्तिक्रममाह– प्रचारयेन्मन्त्रविद इति । इदं कार्यमुपस्थितम्, तत्र किमाहुर्भवन्त इति कार्योपायेषु प्रवर्तयेत् । मन्त्रशुद्धिमाह– यत्रेति मन्त्रे तच्चेतसां साम्यं मन्त्रिणामेकाभिप्रायता तेषु समुत्पतेत् तेषु कार्येषु प्रवर्तेत । जम.

( ३ ) मन्त्रप्रयोगमाह– प्रचारयेदिति । मन्त्रिदूतगूढपुरुषाश्च भवन्ति मन्त्रिणः मन्त्रो मन्त्रिदूतगूढेषु पुरुषेषु यथायथं समर्प्यते इति । तान् त्रिविधानपि मन्त्रविदः यथासंभवं अनेकधा कार्यद्वारेषु पृथ्वीपालनादि कार्यं आयाति यैः द्वारैः तेषु शत्रुमित्रमध्यमोदासीनरूपेषु इत्यर्थः, प्रचारयेत् प्रणिदध्यात् । तत्र

( १ ) कानी. १२।३८ ; रार. २९ पु नै ( ध्वने ) तेषु ( तेन ) ; उनिसा. पु नै ( ध्वने ) यत्र तच्चे ( तत्र यच्चे ) तेषु ( तेन ).

चेतसां साम्यं मन्त्रिदूतगूढपुरुषाणां ऐकमन्त्यं साधु सुसंश्लिष्टं यथा भवति तथा तेन कार्यद्वारेण यानादिंगुणमनुतिष्ठन् समुत्पतेत् आक्रामेदित्यर्थः । 'साधु' इत्यत्र 'शीघ्रम्' इति मुद्रितपाठः । उनिसा.

[1]यत्र मन्त्रिमनःसाम्यं यत्र चेतो न शङ्कते ।
यत्र सन्तो न निन्दन्ति तत्परीयाच्चिकीर्षितम् ॥

(१) एवं स्वमन्त्रिमतसाम्ये ब्राह्मणानुमतं परीयात्। रार.२९

(२) यथा मतिसाम्यं शुद्धिप्रवृत्त्योर्निबन्धनं (तथा) शङ्कानिन्दाभ्युपगमा( ? शङ्कानिन्दाभ्याम )शुद्धिर्निवृत्तिश्चेत्याह– यत्रेत्यादि । चिकीर्षितमिति कार्यद्वारेण मन्त्रशुद्धिरुक्ता । जम.

(३) एतदेव द्रढयति– यत्र मन्त्रिमनःसाम्यमिति । यस्मिन् चिकीर्षिते मन्त्रिमनःसाम्यम्, यत्र चेतो न शङ्कते कर्तुः । शारीराण्यपि निमित्तानि शुभाशुभान्युदयन्ति, मनःशङ्कायां कार्यसिद्धिस्तु संशयितेति मनसि शङ्कारहिते कार्ये विधेयमिति भावः । यच्च चिकीर्षितं कर्तुमीप्सितं सन्तो न निन्दन्ति तत् परीयात् गच्छेत्, कर्तुमिति शेषः । उनिसा.

[2]धृतेऽपि मन्त्रे मन्त्रज्ञैः स्वयं भूयो विचारयेत् ।
तथा वर्तेत मन्त्रज्ञो यथा स्वार्थं न पीडयेत् ॥

(१) एवं निर्गलितार्थमपि स्वयं बहु विचारयेत्। रार. २९

(२) इदमपरं शुद्धिकारणं यत् स्वयमेव पुनर्विमर्शनमित्याह– धृतेऽपीत्यादि । इदमेव कर्तव्यमित्यवधारितेऽपि तथा वर्तेत यथा स्वार्थं न पीडयेदिति । इदमुक्तं भवति– न हि मन्त्रिमतेनैव तज्ज्ञो वर्तेत स्वार्थतात्पर्यादप्यन्यथाऽप्युपदिशेयुरिति । जम.

(३) सचिवादिभिर्निर्णीतेष्वपि मन्त्रेषु व्यभिचारः संभवतीति सर्वथा न विश्वसनीयं विजिगीषुणेति दर्शयन्नाह– धृतेऽपीति । मन्त्रज्ञैः मन्त्राधिकृतैः धृतेऽपि निर्णीय व्यवधारितेऽपि मन्त्रे विजिगीषुः स्वयं भूयो विचारयेत् । यथा स्वार्थे न पीडयेत् यथा विजिगीषोः स्वार्थहानिर्न भवेत् मन्त्रज्ञः विजिगीषुः तथा वर्तेत । दीर्घकालं व्याप्य विग्रहादौ स्वार्थपीडा भवतीति तत्र सावधानेन विजयिना भवितव्यमिति भावः । 'मन्त्रज्ञः' इत्यत्र 'तत्त्वज्ञः' इति मुद्रितपाठः । उनिसा.

[1]मन्त्रिणः स्वार्थतात्पर्याद्दीर्घमिच्छन्ति विग्रहम् ।
तेषां च भोग्यतामेति दीर्घकार्याकुलो नृपः ॥

(१) यदा दीर्घकार्याकुलः स्यात् तदा अस्मत्स्वार्थदः स्यादित्यभिप्रायः । रार. ३०

(२) यदाह– मन्त्रिण इत्यादि । दीर्घकार्याकुलः दीर्घविग्रहादिकार्यव्याकुलः । जम.

(३) एतदेव स्पष्टयन्नाह– मन्त्रिण इति । स्वार्थः एव तात्पर्यं कारणं तस्मात् । स्वार्थसिद्ध्यर्थं मन्त्रिणो दीर्घकालव्यापिनं विग्रहमभिलषन्तीत्यर्थः । स्पष्टमन्यत् । उनिसा.

[2]मनःप्रसादः श्रद्धा च तथा करणपाटवम् ।
सहायोत्थानसंपच्च कर्मणां सिद्धिलक्षणम् ॥

(१) प्रसादः प्रसन्नता । बुद्धिः यथार्थस्वमतपरमतानुसारिणी । कारणपाटवं कारणसम्यक्त्वम् । सहायोत्थानं प्रबलसाहित्यम् । संपत् धनम् । एभिः कार्यसिद्धिः । रार. ३०

(२) मन्त्रसिद्धिमूलान्याह– मनःप्रसाद इत्यादि । संशयाभावात् मनसो वैमल्यम् । श्रद्धा साध्येषु । करणपाटवं बुद्धिकर्मेन्द्रियाणां स्वविषयव्यापारसामर्थ्यम् । सहायसंपत् सत्त्वप्रतिज्ञादियोगो बाहुल्यं च । उत्थानसंपत्

---

(१) कानी. १२।३९ ; रार. २९ यत्र चेतो ( तत्र चेतो ) तत्परी ( तं परी ) ; उनिसा. यत्र सन्तो ( यच्च सन्तो ).

(२) कानी. १२।४० ; रार. २९ मन्त्रज्ञो ( नीतिज्ञो ).

(१) कानी. १२।४१ ; रार. २९ तेषां च (मन्त्रिणां). एतच्छ्लोकादनन्तरम् 'आवर्तयेन्मुहुर्मन्त्रम्' ( कानी. १२। ४४–४५ ) इत्यादिश्लोकद्वयं पठितम्.

(२) कानी. १२।४२ ; रार. ३० दः श्रद्धा ( दबुद्धी ) करण ( कारण ) कर्मणां ( कार्याणां ).

लघूत्थायिता । कर्मणां आरभ्यमाणानाम् । तत्कर्मसिद्धिरेव मन्त्रसिद्धिरिति मन्त्राणामिति नोक्तम् । जम.

( ३ ) मन्त्रिनिर्णीतकार्यस्य सिद्धिलक्षणान्याह– मनःप्रसाद इति । मनःप्रसादः चित्तस्य प्रसन्नता कलुषताराहित्यमिति यावत् । श्रद्धा च कार्यसिद्धौ अत्याग्रहः । तथा करणपाटवं करणानां इन्द्रियाणां एकादशानामपि पटुता । सहायोत्थानसंपच्च सहायेन सह उत्थानसंपच्च । एतत् सर्वं कर्मणां सिद्धिलक्षणं एभिर्लिङ्गैः सिद्धिरवश्यं भाविनीति लक्ष्यते इति । 'सहायोत्थानसंपच्च' इत्यत्र 'सत्त्वायोत्थानसंपच्च' इति मुद्रितपाठः । उनिसा.

'लघूत्थानान्यविघ्नानि संभवत्साधनानि च ।
कथयन्ति पुनः सिद्धिं करणान्येव कर्मणाम् ॥

( १ ) लघूत्थानानि करणानीति संबन्धः । साध्यस्य यान्युपादानसाधनानि तेषु विजिगीषोर्लघू( न्यु )त्थानानीति सप्तम्यर्थे बहुव्रीहिः । संभवत्साधनानि संभवत्सहकारिकारणानि । जम.

( २ ) एतदेव समर्थयन्नाह– लघूत्थानानीति । लघूत्थानानि लघु अविलम्बितं उत्थानं येषां तानि । अविघ्नानि विघ्नरहितानि । संभवत्साधनानि च संभवन्ति साधनानि संपदां उत्पत्तिनिमित्तानि च । एतानि कारणान्येव पुरः अग्रतः भाविनीं सिद्धिं कथयन्ति व्यञ्जयन्ति । उनिसा.

मन्त्ररक्षणम्, मन्त्रभेदकारणानि

'आवर्तयेन्मुहुर्मन्त्रं धारयेच्च प्रयत्नतः ।
अप्रयत्नधृतो मन्त्रः प्रचलन्नग्निवद्दहेत् ॥

( १ ) अग्निवदिति यथाऽग्निः प्रचलन् दहेत् तथैव मन्त्रोऽपि । रार. ३०

( २ ) धृतस्य मन्त्रस्य आप्रयोगकालमावर्तनं धारणं च कुर्यादित्याह– आवर्तयेदिति । अविस्मरणार्थं धारयेत् यथाऽधिष्ठानान्तरं न चलति । प्रचलन् अधिष्ठानान्तरं गच्छन् । जम.

( ३ ) मन्त्रस्तावत् प्रयत्नतो रक्षणीय इत्याह– आवर्तयेदिति । मन्त्रं मुहुः वारं वारं आवर्तयेत् आलोचयेत् । प्रयत्नवान् यत्नमास्थायेत्यर्थः, धारयेच्च संरक्षेच्च । अप्रयत्नधृतः प्रयत्नेनासंरक्षितः मन्त्रः प्रचलन् श्रुतिपरंपरया लोकेषु प्रकाश्यतामागच्छन्, समुद्रतरङ्गेषु तैलबिन्दुवत् सर्वत्र विसर्पन्निति यावत्, अग्निवत् अग्न्याधारगृहात् गृहान्तरमासाद्य क्रमशः समस्तनगरदाहकारी वह्निरिव दहेत् । मन्त्राधारं विजिगीषुं मन्त्रिणमखिलं प्रकृतिमण्डलं चेति शेषः । तथा च कौटिल्यः– '* मन्त्रभेदाद्ययोगक्षेमावहो राज्ञस्तथा युक्तपुरुषाणां च' इति ( कौ. १।१५ ) । 'नावर्तयेन्मुहुर्मन्त्रं संरक्षेत् तत् परिस्तुवन् । अरक्ष्यमाणं मन्त्रं हि भिनत्त्यात्मपरंपराम् ॥' इति मुद्रितपाठस्तु न संगच्छते । उनिसा.

'आप्ताप्तसंततेर्मन्त्रं संरक्षेत्तत्परस्तु सन् ।
अरक्ष्यमाणं मन्त्रं हि भिनत्त्याप्तपरंपरा ॥

( १ ) आत्मपरंपराः आत्मीयपरंपराः । य इष्टस्तस्यापि कोऽपीष्ट इत्यर्थः । रार. ३०

( २ ) 'संरक्षेन्मन्त्रबीजम्' ( कानी. १२।३३ ) इत्युक्तम्, तत् कुतो रक्षेदित्याह– आप्ताप्तसंततेरिति । कथमिदमेवं स्यादिति निर्णयाय विजिगीषुः आप्तं मन्त्रिणं पृच्छति, सोऽपि बृद्धयन्त( ? बुद्ध्यन्तर )मुपजीविष्य( ? ष्यन्न )न्यम्, सोऽप्यन्यमित्याप्तपरंपरा भिनत्ति । ततः 'संरक्षेन्मन्त्रबीजम्' इत्युक्तम् । जम.

( ३ ) तदेव प्रकारान्तरेण कथयति– अप्राप्तसंततिरिति । अप्राप्तसंततिः अप्राप्ता संततिः लोकेषु विस्तारः येन सः मन्त्रः परस्परं संरक्ष्येत, विजिगीषुणा मन्त्रिणा

---

( १ ) कानी. १२।४३ ; उनिसा. पुनः ( पुरः ) करणा ( कारणा ).

( २ ) कानी. १२।४४ ; रार. २९ धार ( पूर ) यत्नतः ( यत्नवान् ) अप्रयत्न ( प्रयत्नेना ) ; उनिसा. यत्नतः ( यत्नवान् ).

* 'मन्त्रभेदो ह्ययोगक्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च' इति कौटिलीयार्थशास्त्रस्य मुद्रितपुस्तके पाठः ।

( १ ) कानी. १२।४५ ; रार. ३० आप्ताप्त ( अप्यात्म ) उत्तरार्धे ( अरक्ष्यमाणमन्त्रं हि भिन्द्यात्मपरम्पराः ॥ ) ; उनिसा. पूर्वार्धे ( अप्राप्तसंततिर्मन्त्रः संरक्ष्येत परस्परम् । ).

गूढपुरुषादिना चेति शेषः । हि यतः आप्तपरंपरा— आप्ताः मित्रप्रभृतयः, तेषामप्याप्ता भवन्ति, तेषामपि, एवमाप्तपरंपरा भवति, अरक्ष्यमाणं मन्त्रं भिनत्ति । तथा च कौटिल्यः— 'मन्त्रिणामपि हि मन्त्रिणो भवन्ति, सैषा मन्त्रिपरंपरा मन्त्रं भिनत्ति' (कौ. १।१५) इति । उनिसा.

[1]मदः प्रमादः कामश्च सुप्तप्रलपितानि च ।
भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्योऽवमतास्तथा ॥

(१) तथाऽन्येऽपि मन्त्रभिद इत्याह— मद इत्यादि । सुरापानादिजनितो मदः । प्रमादः कार्यान्तरप्रसङ्गात् । कामः स्त्रीषु विश्वासहेतुः । सुप्तप्रलपितानि स्वप्नावस्थायाम् । प्रच्छन्नाः स्तम्भादितिरस्कृताः । कामिन्यः पार्श्ववर्तिन्यः । अवमताः (दिच्छा ?) मूकसमानाः । जम.

(२) मन्त्रप्रकाशद्वारमाह— मद इति । मदः मद्योपयोगजः । तत्परवशो विस्मृत्य मन्त्रभेदं करोतीत्यर्थः । तथा चोक्तं दर्पणकृता— 'संमोहानन्दसंभेदो मदो मद्योपयोगजः । अमुना चोत्तमः शेते मध्यो हसति गायति । अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥' इति । प्रमादः कार्यान्तराशक्तिः । कोपः, क्रोधोऽपि प्रवृद्धो मन्त्ररक्षाविस्मरणात् भेदक इत्यर्थः । सुप्तप्रलपितानि च । प्रच्छन्नकामिन्यः तिरोहितकामिन्यः । वशीकृतभर्तृका इत्यर्थः । अथवा प्रच्छन्नं याः कामयन्ते ताः प्रच्छन्नकामिन्यः वारनार्यः । तथा अवमताः न किमपि जानन्तीति अवज्ञाताः शुकसारिकाबालव्याधिप्रपीडितादयः । तथा च कौटिल्यः— 'श्रूयते हि शुकसारिकादिभिर्भिन्नो मन्त्रः पशुभिरन्यैश्च तिर्यग्योनिभिरवमतैः' (कौ. १।१५) इति । 'कोपश्च' इत्यत्र 'कामश्च' इति, 'कामिन्योऽवमताः' इत्यत्र 'कामिन्यश्च मताः' इति मुद्रितपाठः । उनिसा.

(१) कानी. १२।४६ ; रार. ३० प्रथमचरणे (मनोऽप्रसादोऽसत्यं च) ; उनिसा. काम (कोप) च्छन्नाः का (च्छन्नका).

मन्त्रार्हानर्हदेशकालादयः

[1]निस्तम्भे निर्गवाक्षे च निष्कुड्यान्तरसंश्रये ।
प्रासादाग्रे ह्यरण्ये वा मन्त्रयेदविभावितः ॥

(१) मन्त्रप्रदेशमाह— निस्तम्भ इत्यादि । निष्कुड्यान्तरसंश्रय इति । मध्ये कुड्यमवस्थाप्य यदवस्थानं क्रियते तत् कुड्यान्तरसंश्रयम् । 'भित्त्यन्तर' इति वा पाठः । तेन रहिते । अविभावितः अनुपलक्षितः । प्रज्ञाः हि दूरादेव ओष्ठपतनादिभिः अभिप्रायं विन्दन्ति । जम.

(२) मन्त्रप्रदेशमभिधातुमाह— निस्तम्भ इति । निस्तम्भे स्तम्भरहितस्थाने । निर्गवाक्षे वातायनरहिते, वातायनेन हि शब्दानां बहिर्निःसरणात् । निर्भिन्नान्तरसंश्रये निर्भिन्नः अन्तरसंश्रयो यत्र तस्मिन् । प्रच्छन्नश्रोतॄणां यत्र संश्रयो नास्ति । प्रासादाग्रे अरण्ये वा निर्जने इत्यर्थः । अविभावितः अलक्षितः सन् मन्त्रयेत । तथा च कौटिल्यः— 'मन्त्रपूर्वाः सर्वारम्भास्तस्योद्देशः संवृतः कथानामनिःस्रावी पक्षिभिरप्यनालोक्यः स्यात्' (कौ. १।१५) इति । 'निर्भिन्नान्तरसंश्रये' इत्यत्र 'निर्भेद्येऽन्तरसंश्रये' इति मुद्रितपाठः । 'निर्भिद्यान्तरसंश्रये' इति च क्वचित् पाठः । 'प्रासादाग्रे ह्यरण्ये वा' इत्यत्र 'प्रासादोपर्यरण्ये वा' इति मुद्रितपाठः । उनिसा.

[2]निश्छिद्रे निर्जनेऽशङ्के अनिरन्तरसंगमे ।
निर्वाते शुचिरस्तम्भे मन्त्रयेत महोदयः ॥

तमेवाऽऽह— निश्छिद्र इति । निश्छिद्रे छिद्ररहितगृहे, छिद्रेण हि शब्दनिर्गमसंभवात् । निर्जने जनशून्यस्थाने । अशङ्के विपक्षसमागमशङ्कारहितप्रदेशे । अनिरन्तरसंगमे नास्ति निरन्तरः संगमः जनसमागमः यत्र । निर्वाते, प्रबलवायुना हि शब्दो दूरेऽपि नीयते । अस्तम्भे, स्तम्भ-

(१) कानी. १२।४७ ; उनिसा. निष्कुड्या (निर्भिन्ना) येदवि (येतावि).

(२) कानी. १२।४७ इति श्लोकानन्तरं उपाध्यायनिरपेक्षानुसारिण्यां समुद्धृतोऽयं श्लोकः .

व्यवधानेन हि मन्त्रश्रवणसंभवात् । ईदृशे स्थाने महोदयः महान् उदयः यस्य सः शुचिः शुद्धाचारः सन् । अशुचेर्मनसि जडता संपद्यते, शुचिर्हि प्रतिभावान् भवतीति दर्शनात् । मन्त्रयेत, मन्त्रिभिः सहेति वाक्यशेषः । श्लोकोऽयं मुद्रितपुस्तके न धृतः । उनिसा.

मन्त्रणविधिः

........ ...... ...'तत्प्रविश्य यथाविधि ।
मन्त्रयेताऽऽहितमनाः कार्यं बुद्धिविवृद्धये ॥

(१) तत्र वृत्तमाह– तदित्यादिना । मन्त्रिमण्डलं प्रविश्य यथाविधि आहितमनाः एकाग्रचित्तः अनुद्धतवेषो भूत्वेत्यर्थः । बुद्धिविवृद्धये । मन्त्रप्रयोगार्थं तूत्तरमन्त्रिभिरेव सह मन्त्रयेतेत्याचार्येणोक्तम्– 'एतत्त्रिभिश्चतुर्भिर्वा मन्त्रयेत' (कौ. १।१५) इति । जम.

(२) यथाविधि विध्यनतिक्रमेण तत् मन्त्रिमण्डलं प्रविश्य आहितमनाः सावधानः सन् बुद्धिविवृद्धये कर्तव्यविषये ज्ञानवृद्ध्यर्थं कार्यं कर्तव्यं मन्त्रयेत । 'कार्यं बुद्धिविवृद्धये' इत्यत्र 'कार्यसिद्धिविवृद्धये' इति मुद्रितपाठः । उनिसा.

समस्तैर्व्यस्तैश्च मन्त्रिभिर्मन्त्रणम्

'एकैकेनापि कार्याणि प्रविचार्य पुनः पुनः ।
प्रविशेत्स्वहितान्वेषी मतमेषां पृथक् पृथक् ॥

(१) एकैकेन अमात्येन सह संभूय मतं प्रविशेत् कस्य किंसमुत्थोऽभिप्राय इति विद्यात् । जम.

(२) बृहत्कल्पिते मण्डले मन्त्रक्रममाह– एकैकेनेति । स्वहितान्वेषी आत्महिताकाङ्क्षी राजा एकैकेन प्रत्येकेन मन्त्रिणा सह कार्याणि कर्तव्यानि पुनः पुनः सुविचार्य यथाशास्त्रं विविच्य पृथक् पृथक् एषां मन्त्रिणां मतं प्रविशेत् प्रणिदध्यात् । तथा च कौटिल्यः– 'तानेकैकशः पृच्छेत् समस्तांश्च । हेतुभिश्चैकैकं मतं प्रविशेद्विद्वान्' (कौ. १।१५) इति । 'एकैकेन हि कार्याणि सुविचार्य पुनः पुनः' इत्यत्र 'अकथ्यानि तु कार्याणि संप्रधार्य पुनः पुनः' इति मुद्रितपाठः । उनिसा.

'महापक्षो यथाशास्त्रं दृष्टकर्मा हितः सुधीः ।
यद्यद्ब्रूयान्मतारूढस्तत्तत्साधु समाचरेत् ॥

(१) तत्रैषां यो महापक्षादिगुणयुक्तो यत् ब्रूयात्तदाचरेदित्याह– महापक्ष इत्यादि । बहुभिर्मन्त्रिभिरनुगम्यमानत्वात् महापक्षः । यथाशास्त्रं कुर्यादिति संबन्धः । दृष्टकर्मा अन्यत्र दृष्टमन्त्रप्रयोगः । हितः स्वामिने । मतारूढः निश्चयमतारूढः । जम.

(२) कीदृशस्य मन्त्रिणो वचनं कुर्यादिति दर्शयन्नाह– महापक्ष इति । महाप्रमाणः पक्षः बन्धुवर्गः यस्य सः महापक्षः । ईदृशो हि स्वकार्यार्थे नाहितमुपदिशतीत्यर्थः । यथाशास्त्रं शास्त्रानतिक्रमेण दृष्टकर्मा हितः प्रागप्यनुष्ठितषाड्गुण्याहितस्वामिहितः सुधीः प्रज्ञासंपन्नः मन्त्री मतारूढः इतरमन्त्रिमतारूढः सन् यत् ब्रूयात् साधु व्यभिचाररहितं तत् समाचरेत् अनुतिष्ठेत् । उनिसा.

मन्त्रनिर्णयोत्तरं कार्यकालानतिक्रम एव इष्टः

नातीयात्कार्यकालं हि कृत्वा मन्त्रविनिश्चयम् ।
अतिक्रान्तं तु तं भूयो यथायोगं प्रकल्पयेत् ॥

(१) तत्रोत्तरमन्त्रिभिः परिषदा वा मन्त्रं विनिश्चित्य कार्यकालं न हापयेदिति श्लोकत्रयेण दर्शयति– नातीयादित्यादिना । यथायोगमिति । यो यस्य साध्यस्य कालेन योगस्तं तेन पुनः प्रकल्पयेदिति । जम.

(२) मन्त्रानन्तरं कालातिक्रमे भेदसंभावनेति तन्निवारणार्थमाह– नातीयादिति । मन्त्रानन्तरं अतिक्रान्ते काले भूयो मन्त्रयेदिति भावः । वाक्यार्थस्तु न दुरवगाहः । उनिसा.

'न कार्यकालं मतिमानतिक्रामेत्कदाचन ।
कथंचिदेव भवति कार्ययोगः सुदुर्लभः ॥

---

(१) कानी. १२।४९.

(२) कानी. १२।५० ; उनिसा. केनापि (केन हि) प्रविचार्य (सुविचार्य).

(१) कानी. १२।५१–५२.

(२) कानी. १२।५३ ; उनिसा. कार्ययोगः (कार्ये योगः).

(१) कालस्य कार्ययोगो न सुलभ इति मन्यमान आह– न कार्यकालमित्यादि। जम.

(२) विलम्बे कार्यहानिः स्यादित्याह– न कार्यकालमिति। सुदुर्लभः कार्ये योगः कथंचिदेव भवतीति न कार्यकालमतिक्रामेदित्याशयः। वाक्यार्थस्तु सुगमः। 'कार्ये योगः' इत्यत्र 'कार्ययोगः' इति पाठान्तरम्। उनिसा.

[1]सतां मार्गेण मतिमान् काले कर्म समाचरेत्।
काले समाचरन् साधु रसवत्फलमश्नुते॥

(१) तस्मात् तत्रैव काले कर्म समाचरेदित्याह– सतां मार्गेणेति। मन्त्रिणामुपदेशेन। स्वादु साधु फलमश्नुते, रसवत्त्वात्। अन्यथा कालातिपत्तिः प्रत्यग्रं कार्यरसं विहन्ति। जम.

(२) कार्यं तु यथाकालमेव करणीयमित्याह– सतामिति। सुगमम्। उनिसा.

मन्त्रानुसरणविधिः

[2]इति चेति च संपश्यन् काले देशे सहायवान्।
विशुद्धपार्श्वसंसिद्धः समाक्रामेन्न चापलात्॥

(१) तत्रापि मन्त्राङ्गसव्यपेक्ष एव कार्यमारभेत, न चापलादिति श्लोकत्रयेण दर्शयति– इतीत्यादिना। अयमस्य साधनोपाय इत्यादातुं यस्य देशे काले प्रविभक्ते। क्षुद्रैर्मुख्यैश्च सहायैरुपेतः। विशुद्धपार्श्वः, कृतविपरप्रतीकारत्वात्। तदिति सद्यःसिद्धिकरम्। न चापलादिति। चपलः मन्त्रिभिः स्वयं वा अविमृश्यकारी। जम.

(२) आक्रमणकालमाह– इति चेति चेति। इति च इति च इति संपश्यन् 'एतत्करणे एतत् फलं भविष्यति, एतदकरणे च इयं हानिर्भविष्यति' इत्येवं पर्यालोचयन् अनुकूलदेशकालसहायसंपन्नः विशुद्धपार्ष्णिः विजिगीषुः सद्वस्तु आत्महितकरं देशनगरादिकं समाक्रामेत्, न तु असमये चापलात्, आक्रामेदिति शेषः। 'विशुद्धपार्ष्णिः सद्वस्तु' इत्यत्र 'विशुद्धपार्श्वशब्दस्तु' इति, 'कालदेशसहायवान्' इत्यत्र 'काले देशे सहायवान्' इति च क्वचित् पाठः। उनिसा.

[1]अहिते हितबुद्धिरल्पधी-
रवमन्येत मतानि मन्त्रिणाम्।
चपलः सहसैव संपत-
न्नरिखड्गाभिहतः प्रबुध्यते॥

(१) तदुभयमप्याह– अहित इत्यादि। दुःखहेतौ सुखहेतुरित्येवं बुद्धिः, अल्पबुद्धित्वात्। मतानि कृतपञ्चाङ्गविनिर्णयान् उपदेशान् यः अवमन्यते। सहसा संपतन् मन्त्रिभिरविमृश्य वर्तमानः शत्रुभिश्छिद्रेषु प्रहृतः चेतयते। जम.

(२) तदेव समर्थयन्नाह– अहिते हितबुद्धिरिति। वाक्यार्थस्तु न दुरवगाहः। 'अचिरं वै व्यसनी प्रबुध्यते' इत्यत्र 'चिरविभ्रान्तरतिः प्रबुध्यते' इति केचित् पठन्ति। उनिसा.

[2]अविचार्य बलाबलं द्विषा-
महमित्येव समुद्धतोऽनयात्।
चपलः स्वमतेन संपत-
न्ननिपत्याल्पमना न बुध्यते॥

(१) अविचार्य स्वयं बलात्। अहमिति जातदर्पो हि न स्वयं विमृशति। स्वमतेन विचारशून्येन। अनिपत्य न बुध्यते स्वपदात् परिभ्रष्ट एव वेदयते। अल्पमनाः अल्पबुद्धिः। जम.

(२) अविमृष्यकारितायाः दोषं दर्शयन्नाह– अविचार्येति। द्विषां बलाबलं अविचार्य अहमित्येव अहमेव बलवानिति समुद्धतः औद्धत्यशाली चपलः स्वमतेन मन्त्रिमतनिरपेक्षतया बलात् संपतन् आक्रामन् निपतति

---

(१) कानी. १२।५४; जम. साधु (स्वादु).

(२) कानी. १२।५५; जम. पार्श्व (पार्श्वः) 'संसिद्धः' इत्यत्र किमपि पाठान्तरं प्रतीयते; उनिसा. काले देशे स (कालदेशस) पार्श्वसंसिद्धः (पार्ष्णिः सद्वस्तु).

(१) कानी. १२।५६; उनिसा. न्नरिखड्गाभिहतः (न्नचिरं वै व्यसनी). अयं श्लोकः 'अविचार्य बलाबलं' (कानी. १२।५७) इत्यादिश्लोकानन्तरं पठितः.

(२) कानी. १२।५७; उनिसा. ऽनयात् (बलात्) न्ननिपत्या (न्निपतत्य).

सः अल्पमनाः क्षुद्रमतिः अदूरदर्शीत्यर्थः, न बुध्यते पतन्तमात्मानं न विजानाति । श्लोकोऽयं मुद्रितपुस्तके न दृश्यते । उनिसा.

'इति मन्त्रबलान्महीपति-
र्महतो दुष्टभुजंगमानिव ।
विनयेन्नयमार्गमास्थितो
वशमुद्योगसमन्वितो रिपून् ॥

(१) प्रकरणानुष्ठानफलमाह— इतीत्यादि । महतो रिपूनिति संबन्धः । दुष्टभुजंगमानिव । तेऽपि मन्त्रबलादेव वशीक्रियन्ते । विनयेत् वशमिति संबन्धः । नयमार्गे षाड्गुण्यविधिम् । उद्योगसमन्वित इति उद्योगः सर्वत्र प्रधानमिति मन्यते । जम.

(२) मन्त्रबलेन भुजंगा इव विपक्षभूपा वश्या भवन्तीत्याह— इतिमन्त्रबलादिति । इति एवं यो मन्त्रः तद्बलात् नयमार्गमास्थितः नीतिमार्गानुसारी उद्योगसमन्वितः उद्योगी महीपतिः दुष्टभुजंगमानिव महतो रिपून् वशं विनयेत् वशीकुर्यात् । उनिसा.

'आरिप्सुना मन्त्रबलान्वितेन
प्रागेव कार्यो निपुणं विचारः ।
दोष्णां बलान्मन्त्रबलं गरीयः
शक्रोऽसुरान् मन्त्रबलाद्विजिग्ये ॥

(१) अभियोगश्च मन्त्रपूर्वकः फलवानिति दर्शयति— आरिप्सुनेत्यादि । अरिमभियोक्तुमिच्छता । निपुणं सम्यक् । दोष्णां बलात् बाहुबलात् । अरिमभियुञ्जानेन मन्त्रेण योद्धव्यमित्यभिप्रायः । शक्रः असुरान् बलजम्भवृत्रप्रभृतीन् बाहुशालिनः । जम.

(२) बाहुबलात् मन्त्रबलं गरीय इत्याह— आरिप्सुनेति । आरिप्सुना सङ्ग्रामादिप्रयोगोपक्रमवता मन्त्रबलान्वितेन मन्त्रबलयुक्तेन, विजिगीषुणेति शेषः, प्रागेव प्रयोगात् प्रथममेव निपुणं यथा तथा विचारः मन्त्रणापूर्वकेतिकर्तव्यतानिरूपणं कार्यः विधेयः । यतः दोष्णां दोर्दण्डानां बलात् मन्त्रबलं गरीयः श्रेष्ठतरम् । तथा च कौटिल्यः— 'एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि ॥' इति । तथा च शुक्रः दैत्यगुरुः मन्त्रबलात् मृतसंजीवन्या विद्यया सुरान् देवान् विजिग्ये जितवान् । 'शक्रोऽसुरान् मन्त्रबलाद्विजिग्ये' इति पाठे शक्रः देवराजः बृहस्पतिना मन्त्रयित्वा तद्विद्यामुपलभ्य असुरान् जिगायेति पौराणिकी वार्ताऽत्र अनुसंधेया । उनिसा.

(१) कानी. १२।५८.

(२) कानी. १६।५७ ; उनिसा. शक्रोऽसुरान् ( शुक्रः सुरान् ) आदर्शपाठोऽपि.

## शुक्रनीतिः

मन्त्रणा मन्त्रिभिः सहैव, मन्त्रदेशकालादयः,
मन्त्राधिकारिणः मन्त्रानधिकारिणश्च,
बहुसंमतो मन्त्रोऽनुष्ठेयः

'सर्वविद्यासु कुशलो नृपो ह्यपि सुमन्त्रवित् ।
मन्त्रिभिस्तु विना मन्त्रं नैकोऽर्थं
चिन्तयेत्क्वचित् ॥

सर्वविद्यासु कुशलः सुमन्त्रवित् शोभनमन्त्रविज्ञः अपि नृपः एकः एकाकी सन् मन्त्रिभिः विना क्वचित् मन्त्रं मन्त्ररूपं अर्थं न चिन्तयेत् । तुशब्दोऽवधारणे । शुनीटी.

'अन्तर्वेश्मनि रात्रौ वा दिवाऽरण्ये विशोधिते ।
मन्त्रयेन्मन्त्रिभिः सार्धं भाविकृत्यं तु निर्जने ॥

रात्रौ दिवा दिवसे वा विशोधिते परिष्कृते निर्जने अन्तर्वेश्मनि गृहाभ्यन्तरे वा अरण्ये मन्त्रिभिः सार्धं भावि भविष्यत् कृत्यं मन्त्रयेत् । शुनीटी.

सुहृद्भिर्भ्रातृभिः सार्धं सभायां पुत्रबान्धवैः ।
राजकृत्यं सेनपैश्च सभ्याद्यैश्चिन्तयेत्सदा ॥

सभायां सुहृद्भिः मित्रैः भ्रातृभिः पुत्रबान्धवैः पुत्रैः बान्धवैः ज्ञातिभिः सेनपैः सेनाध्यक्षैः सभ्याद्यैश्च सदा राजकृत्यं चिन्तयेत् । एतत् प्रकाश्यविषयमिति बोध्यम् । शुनीटी.

(१) शुनी. २।२.

(२) शुनी. १।३५१–३५२.

[1]रागाल्लोभाद्भयाद्वाज्ञः स्युर्मूका इव मन्त्रिणः ॥
न ताननुमतान् विद्यान्नृपतिः स्वार्थसिद्धये ।
पृथक् पृथङ्मतं तेषां लेखयित्वा ससाधनम् ॥
विमृशेत्स्वमतेनैव यत्कुर्याद्बहुसंमतम् ॥

ये मन्त्रिणः रागात् कार्यार्थिनां केषुचित् अनुरागात् स्नेहादित्यर्थः, लोभात् तूष्णींभावे धनप्राप्तिलोभात् वा भयात् यथार्थकथने यस्य हानिः तस्मात् भीताः मूका इव स्युः भवेयुः । तान् स्वार्थसिद्धये स्वकार्यस्य राजकार्यस्य सिद्धये अनुमतान् न विद्यात् । तेभ्यः राजकार्याभिमतं न गृह्णीयादित्यर्थः । तेषां मन्त्रिणां पृथक् पृथक् प्रत्येकं भिन्नं भिन्नं ससाधनं सकारणं युक्तिसहितमित्यर्थः, मतं लेखयित्वा स्वमतेन विमृशेत् विवेचयेत् । यच्च बहुसंमतं भवेत् तत् कुर्यात् । शुनीटी.

मन्त्रणविषयाः

[2]संधिं च विग्रहं यानमासनं च समाश्रयम् ।
द्वैधीभावं च संविद्यान्मन्त्रस्यैतांस्तु षड्गुणान् ॥

संधिं परस्परसाहाय्यार्थं हस्त्यश्वादिदानेन आवाभ्यामन्योन्यस्य उपकर्तव्यमित्येवं नियमबन्धम्, विग्रहं विरुद्धाचरणाधिक्येन वैरभावम्, यानं शत्रुं प्रति गमनम्, आसनं उपेक्षणम् । समाश्रयं एकेन पीडितस्य अपरप्रबलतराश्रयणम्, द्वैधीभावं स्वार्थसिद्धये स्वबलस्य द्वैधीकरणम्, एतान् मन्त्रस्य षड्गुणान् संविद्यात् सम्यक् जानीयात् । शुनीटी.

[3]उपायान् षड्गुणान् मन्त्रं शत्रोः स्वस्यापि चिन्तयेत् ॥

शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन् षड्गुणान् संध्यादीन् मन्त्रं च चिन्तयेत् । शुनीटी.

[4]सदुपायैश्च सन्मन्त्रैः कार्यसिद्धिरथोद्यमैः ।
भवेदल्पजनस्यापि किं पुनर्नृपतेर्न हि ॥

अल्पजनस्य इतरस्यापि सदुपायैः सन्मन्त्रैः उत्कृष्टमन्त्रबलैः अथवा उद्यमैः चेष्टाभिः कार्यसिद्धिः भवेत् । नृपतेः किं न हि कार्यसिद्धिः भवेत् ? अपि तु भवेदेवेत्यर्थः । शुनीटी.

## नीतिवाक्यामृतम्

मन्त्रप्रयोजनम्, मन्त्रणाविषयाः, मन्त्राधिकारिणः

[1]मन्त्रपूर्वः सर्वोऽप्यारम्भः क्षितिपतीनाम् ॥

अथ भूपतीनां कार्यारम्भो यादृग्भवति तमाह— मन्त्रपूर्व इति । क्षितिपतीनां राज्ञां यः प्रयोजनारम्भः षाड्गुण्यलक्षणः स मन्त्रपूर्वः प्रथमं मन्त्रिभिः सह मन्त्रयित्वा ततः सर्वः प्रारभ्यते, न मन्त्रबाह्यः । तथा च शुक्रः— 'अमन्त्रसचिवैः सार्धं यः कार्यं कुरुते नृपः । तस्य तन्निष्फलं भावि षण्ढस्य सुरतं यथा ॥'। नीवाटी.

अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयो निश्चितस्य बलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्याशेषोपलब्धिरिति मन्त्रसाध्यमेतत् ॥

मन्त्रस्य यत्साध्यं तदाह— अनुपलब्धस्येति । एतत् पञ्चपदार्थलक्षणं भूपतीनां मन्त्रसाध्यम् । मन्त्रं विना न सिध्यतीत्यर्थः । तत्र तावत् अनुपलब्धस्य अज्ञातस्य पदार्थस्य ज्ञानम् । यत् शत्रुमध्यं न ज्ञायते अन्यस्य वा कस्यचित् गुरुवस्तुनि तत् मन्त्रेण ज्ञायते । गुप्तचरैः शोध्यते, ततो ज्ञायते । ज्ञातस्य निश्चयः । निश्चितस्य बलाधानम् । तस्य क्रमेण अर्थद्वैधस्य संशयपरिच्छेदः । यदेको गुप्तचरो वदति तदज्ञः(? न्यः) अन्यथा ब्रूते स द्वैधीभावो भवति । तृतीयं प्रेषयित्वा निःसंदेहं यथा भवति तथा कार्यम् । तथा एकदेशदृष्टस्य चरैः सर्वस्योपलब्धिः कार्या । तथा च गुरुः— 'अज्ञातं शत्रुसैन्यं च चरैर्ज्ञेयं विपश्चिता । तस्य विज्ञातमध्यस्य कार्यं सिद्धं न वेति च ॥'। नीवाटी.

अकृतारम्भमारब्धस्याप्यनुष्ठानमनुष्ठितविशेषं विनियोगसंपदं च ये कुर्युस्ते मन्त्रिणः ॥

---

(१) शुनी. १।३६३–३६५.
(२) शुनी. ४।७।२३४.
(३) शुनी. ४।७।३५०.
(४) शुनी. ४।७।२९२.

(१) नीवा. १०।२२–२४,५७–६५,७४–७६.

अथ मन्त्रिणां लक्षणमाह— अकृतेति । अकृतस्य पदार्थस्य ये मन्त्रशक्त्या आरम्भं कुर्युः, तथा आरब्धस्यानुष्ठानं कर्मवृद्धिः( ? द्धिम् ), अनुष्ठितस्य विशेषम्, विनियोगसंपदं च कर्म कुर्युस्ते मन्त्रिणः कथ्यन्ते । तथा च शुक्रः— ' दर्शयन्ति विशेषं ये सर्वकर्मसु भूपतेः । स्वाधिकारप्रभावं च मन्त्रिणस्तेऽन्यथा परे ॥ ' ।

नीवाटी.

पञ्चाङ्गो मन्त्रः

**कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः ॥**

अथ मन्त्रस्य लक्षणमाह— कर्मणामिति । सर्वेषां कृत्यानां तावत् उपायः सामभेदोपप्रदानलक्षणः चिन्तनीयः अनेनोपायेन एतत्कृत्यं सिद्धिं यास्यतीति । उक्तं च यतः— ' कार्यारम्भेषु नोपायं तत्सिद्ध्यर्थं च चिन्तयेत् । यः पूर्वं तस्य नो सिद्धिं तत्कार्यं याति कर्हिचित् ॥ ' । तथा पुरुषद्रव्यसंपत् चिन्तनीया । संपच्छब्देन सामर्थ्यमुच्यते अनेन पुरुषेण एतेन द्रव्येण एतत्कार्यं सिध्यति । उक्तं च यतः— ' समर्थं पुरुषं कृत्ये तदर्हं च तथा धनम् । योजयेद्यो न कृत्येषु तत्सिद्धिं तस्य नो व्रजेत् ॥ ' । तथा च देशकालविभागो भूभुजा चिन्तनीयः अस्मिन् देशे यावनसैन्धवे अस्मिन् काले वसन्तशरल्लक्षणे मम यात्रासिद्धिर्भविष्यतीति । उक्तं च यतः— ' यथाऽत्र सैन्धवस्तोये स्थले मत्स्यो विनश्यति । शीघ्रं तथा महीपालः कुदेशं प्राप्य सीदति ॥ यथा काको निशाकाले कौशिकश्च दिवा चरन् । स विनश्यति कालेन तथा भूपो न संशयः ॥ ' । तथा विनिपातप्रतीकारश्चिन्तनीयः । विनिपातशब्देन आपदभिधीयते । तस्याः प्रतीकारः उपशमः चिन्तनीयः कथमेषा यास्यति ? उक्तं च यतः— ' आपत्काले तु संप्राप्ते यो न मोहं प्रगच्छति । उद्यमं कुरुते शक्त्या स तं नाशयति ध्रुवम् ॥ ' । तथा कार्यसिद्धिश्चिन्तनीया । ' सामादिभि( रुपायै )र्यो कार्यसिद्धिं प्रचिन्तयेत् । न निर्वेगं क्वचिद्याति तस्य तत्सिध्यति ध्रुवम् ॥ ' ।

नीवाटी.

मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रभेदकारणानि

**आकाशे प्रतिशब्दवति चाऽऽश्रये मन्त्रं न कुर्यात् ॥**

अथ यत्र स्थाने मन्त्रं (न) कुर्यात् तदाह— आकाश इति । आकाशे आश्रयरहिते न मन्त्रः कार्यः । तथा प्रतिशब्दवति चाऽऽश्रये यत्र आश्रये स्थाने प्रतिशब्दः संजायते तत्रापि मन्त्रो न कार्यः । कदाचित्कश्चिद्गुप्तस्तत्र स्थित्वा आकर्णयति । तथा च गुरुः— ' निराश्रयप्रदेशे तु मन्त्रः कार्यो न भूभुजा । प्रतिशब्दो न यत्र स्यान्मन्त्रसिद्धिं प्रवाञ्छता ॥ ' ।

नीवाटी.

**मुखविकारकराभिनयाभ्यां प्रतिध्वानेन वा मनःस्थमप्यर्थमभ्यूहन्ति विचक्षणाः ॥**

अथाऽऽकारैर्यथा विचक्षणो( ? णेन ) मन्त्रो ज्ञायते तदाह— मुखविकारेति । यदि किंचित् गदति राजा तदपि मुखविकारं दृष्ट्वा विचक्षणो दूतः समागतः तन्मन्त्रं हृदि स्थितं जानाति, तथा कराभिनयेन हस्तचलनेन जानाति, प्रतिध्वानेन प्रतिशब्देन जानातीति तथा एते विकारा दूताग्रे रक्षणीयाः । तथा च वल्लभदेवः— ' आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकारेण गृह्यतेऽन्तर्गतं मनः ॥ ' ।

नीवाटी.

**आ कार्यसिद्धे रक्षितव्यो मन्त्रः ॥**

अथ यथा रक्षितव्यो मन्त्रस्तदाह— आ कार्यसिद्धेरिति । आङ् पर्यन्तवाचकः । यावत् मन्त्रकृतः कार्यस्य सिद्धिर्न भवति तावत् रक्षितव्यः । तथा च विदुरः— ' एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते । सराष्ट्रं सप्रजं हन्ति राजानं धर्म( ? मन्त्र )विप्लवः ॥ ' ( भामु. ५।३३।४५ ) ।

नीवाटी.

**दिवा नक्तं वाऽपरीक्ष्य मन्त्रयमाणस्याभिमतः प्रच्छन्नो वा भिनत्ति मन्त्रम् ॥**

अथापरीक्ष्य मन्त्रयमाणस्य यद्भवति तदाह— दिवा नक्तमिति । मन्त्रभेदभयात् दिवा नक्तं वा परीक्ष्य पार्श्वान् मन्त्रं कुर्यात् । यत् अभिमतः प्रच्छन्नः स्थितः आत्मीयः शृणोति ततो मन्त्रं भिनत्ति आत्मीयोऽपि ।

नीवाटी.

श्रूयते किल रजन्यां वटवृक्षे प्रच्छन्नो वररुचि-रप्रशिखेति पिशाचेभ्यो वृत्तान्तमुपश्रुत्य चतु-रक्षरार्द्यैः पादैः श्लोकं चकारेति ॥

तथा च वृत्तान्तः— श्रूयत इति । एतद्वररुचिवृत्तान्त-वदनं गुरुतरं बृहत्कथायां ज्ञेयम् । अप्रशिखेति पुनश्चतु-र्भिरक्षरैराद्यैर्यः कृतः श्लोकः स लिख्यते— 'अनेन तव पुत्रस्य प्रविष्टस्य वनान्तरे । शिलामाकृष्य पादेन खड्गे-नोपहतं शिरः ॥' । नीवाटी.

न तैः सह मन्त्रं कुर्याद्येषां पक्षीयेष्वपकुर्यात् ॥

अथ यैः सह मन्त्रो न कार्यस्तानाह— नेति । येषां पक्षीयेषु बान्धवादिषु अपकुर्यात् वधबन्धादिकं कुर्यात् तैः सह मन्त्रं न कारयेत् । यतस्ते मन्त्रभेदं चक्रुः (? कुर्युः) । तथा च शुक्रः— 'येषां वधादिकं कुर्यात् पार्थिवश्च विरोधिनाम् । तेषां संबन्धिभिः सार्धं मन्त्रः कार्यो न कर्हिचित् ॥' । नीवाटी.

अनायुक्तो मन्त्रकाले न तिष्ठेत् ॥

अथ मन्त्रकाले राज्ञां समीपे येन (न) स्थातव्यं तमाह— अनायुक्त इति । अनायुक्तः अप्रोक्तः भूभुजा मन्त्रकाले न तिष्ठेत् । यतः यद्यपि इष्टः स्यात् तथाऽप्यनेनापि द्वारेण मन्त्रभेदो भवतीति सशङ्कः स्यात् । तथा च शुक्रः— 'यो राज्ञो मन्त्रवेलायामनाहूतः प्रगच्छति । अतिप्रसादयुक्तोऽपि विप्रियत्वं व्रजेद्धि सः ॥' । नीवाटी.

तथा च श्रूयते शुकसारिकाभ्यामन्यैश्च तिर्य-ग्भिर्मन्त्रभेदः ॥

गतार्थमेतत् । एषा कथा बृहत्कथायां कथिता ज्ञातव्येति । नीवाटी.

मन्त्रभेदादुत्पन्नं व्यसनं दुष्प्रतिविधेयं स्यात् ॥

अथ मन्त्रभेदात् यादृक् व्यसनं जायते तदाह— मन्त्रेति । यत् मन्त्रभेदात् यादृक् व्यसनं जायते तत् दुष्प्र-तिविधेयं दुःखेन तस्य प्रतिविधानं नाशः क्रियते । (अ ?)प्रतिविधानं तस्य व्यसनस्य कष्टेनापि न याति (? भवति) । तस्मात् मन्त्रभेदो रक्षितव्यः । तथा च गर्गः— 'मन्त्रभेदाच्च भूपस्य व्यसनं संप्रजायते । तत्कृच्छ्रान्नाशमभ्येति कृच्छ्रेणाप्यथवा न वा ॥' । नीवाटी.

इङ्गितमाकारो मदः प्रमादो निद्रा च मन्त्रभेद-कारणानि ॥

इङ्गितमन्यथावृत्तिः ॥

कोपप्रसादजनिता शारीरी विकृतिराकारः ॥

पानस्त्रीसङ्गादिजनितो हर्षो मदः ॥

प्रमादो गोत्रस्खलनादिहेतुः ॥

अन्यथा चिकीर्षतोऽन्यथावृत्तिर्वा प्रमादः ॥

निद्रान्तरितः ॥

अथ मन्त्रभेदस्य यानि कारणानि भवन्ति तान्याह— इङ्गितमाकार इति । एतानि पञ्च मन्त्रभेदस्य निमित्ता-न्युच्यन्ते । प्रथममिङ्गितं तावत् मन्त्रे मन्त्रिते इङ्गितं चेष्टितं यद्भवति राज्ञस्तेन गुप्तचरा मन्त्रमध्यं जान-न्तीति । तथा आकारः शरीरस्य रौद्रत्वेन सौम्यत्वेन वा, तेन मन्त्रमध्यं जानन्तीति । तथा मदेन, यतो मदेन पीतेन हृदयस्थमुद्गिरति । तथा प्रमादेन क्षतेन, यत् मन्त्र-मन्यः शृणोति । तथा निद्रायमाणः निद्रान्तरितः पुमान् हृदयस्थमुद्गिरति । तथा च वशिष्ठः— 'मन्त्रयित्वा महीपेन कर्तव्यं शुभचेष्टितम् । आकारश्च शुभः कार्यस्त्याज्या निद्रामदालसाः ॥' । आचार्येण इङ्गितादीनां विशेषेण 'इङ्गितमन्यथावृत्तिः' इत्यादिभिः सूत्रैर्लक्षणं प्रोक्तं तद्गतार्थत्वान्नोच्यते । नीवाटी.

उद्धृतमन्त्रो न दीर्घसूत्रः स्यात् ॥

अथ मन्त्रे मन्त्रिते नृपेण यत्कर्तव्यं तदाह— उद्धृत-मन्त्र इति । यदा उद्धृतः कृतः मन्त्रः तदर्थं न दीर्घसूत्रः स्यात् न विलम्बः कार्यः, तत्क्षणादेवा-नुष्ठीयत इति । तथा च शुक्रः— 'यो मन्त्रं मन्त्रयित्वा तु नानुष्ठानं करोति च । तत्क्षणात्तस्य मन्त्रस्य जायते नात्र संशयः ॥' । नीवाटी.

मन्त्रानुसरणं कर्तव्यम्

अननुष्ठाने छात्रवत्किं मन्त्रेण ॥

अथ मन्त्रे कृते तत्क्षणान्नानुष्ठिते यद्भवति तदाह— अननुष्ठान इति । यथा छात्रः शिष्यः उपाध्यायसकाशात्

मन्त्रं गृहीत्वा तदर्हमनुष्ठानं जपादिकं न करोति किं तस्यापि तेन मन्त्रेण व्यर्थेनेति । तथा च शुक्रः– 'यो मन्त्रं मन्त्रयित्वा तु नानुष्ठानं करोति च । स तस्य व्यर्थतां याति च्छात्रस्येव प्रमादिनः ॥' । नीवाटी.

**न ह्यौषधिपरिज्ञानादेव व्याधिप्रशमः ॥**

अथ मन्त्रस्याननुष्ठितस्य दृष्टान्तमाह– नेति । न मन्त्रेण मन्त्रितेनानुष्ठानरहितेन कार्यसिद्धिर्भवति । यथा व्याधिग्रस्तस्य भेषजपरिज्ञानेन केवलेन न सिद्धिर्भवति भक्षणं विना, तथा मन्त्रेणापि अनुष्ठानवर्जितेन । तथा च नारदः– 'विज्ञाते भेषजे यद्वद्विना भक्षं न नश्यति । व्याधिस्तथा च मन्त्रेऽपि न सिद्धिः कृत्यवर्जिते ॥' । नीवाटी.

**नास्त्यविवेकात्परः प्राणिनां शत्रुः ॥**

अन्यो (? यदन्यो न) द्वितीयः प्राणिनां (यः ?) शत्रुस्तमाह– नास्तीति । अविवेकात् अव्यवहारात् द्वितीयो मनुष्याणां शत्रुर्नास्ति । स एव यतः शत्रुर्वधबन्धाद्यं करोति । तथा च गुरुः– 'अविवेकः शरीरस्थो मनुष्याणां महारिपुः । यश्चानुष्ठानमात्रोऽपि करोति वधबन्धनम् ॥' । नीवाटी.

**आत्मसाध्यमन्येन कारयन्नौषधमूल्यादिव व्याधिं चिकित्सति ॥**

अथ आत्मसाध्यमन्यसकाशात् साधयितुर्यद्भवति तदाह– आत्मसाध्यमिति । यो मूर्खः आत्मसाध्यं प्रयोजनमन्यस्य पार्श्वात् कारयेत् स किं करोति ? भेषजमूल्येन व्याधिचिकित्सां करोति (वैद्यकम् ?) औषधस्य यत्किंचिन्मूल्यं भवति तेन अन्यद्गृहीत्वा भक्षयति (समर्थम् ?) । यदि तेन तस्य व्याधिक्षयो भवति तदन्यस्यापि पार्श्वात् कारिते प्रयोजने सिद्धिर्भवति । तस्मात् आत्मसाध्यमात्मनैव क्रियते, नान्यस्य पार्श्वात् कारापणीयमिति । तथा च भृगुः– 'आत्मसाध्यं तु यत्कार्यं योऽन्यपार्श्वात् सुमन्दधीः । कारापयति स व्याधिं नयेद्भेषजमूल्यतः ॥' । नीवाटी.

**यो यत्प्रतिबद्धः स तेन सहोदयव्ययी ॥**

अथ भृत्यस्वामिनोर्यद्भवति तदाह– यो यत्प्रतिबद्ध इति । यः यस्मिन् स्वामिनि भृत्यः प्रतिबद्धः स्वामिनः अभ्युदयेन तस्याभ्युदयः व्ययेन नाशः विनाशः इति । तथा च भागुरिः– 'सरस्तोयसमो राजा भृत्यः पद्माकरोपमः । तद्वृद्ध्या वृद्धिमभ्येति तद्विनाशे विनश्यति ॥' । नीवाटी.

**स्वामिनाऽधिष्ठितो मेषोऽपि सिंहायते ॥**

अथ स्वाम्याश्रितस्य यद्भवति तदाह– स्वामिनाऽधिष्ठित इति । स्वामिपरिकरितः कापुरुषोऽपि भृत्यो वीरायते । तथा च रैभ्यः– स्वामिनाऽधिष्ठितो भृत्यः परस्मादपि कातरः । श्वाऽपि सिंहायते यद्वन्निजं स्वामिनमाश्रितः ॥' । नीवाटी.

मन्त्रणाविधिः, मन्त्रमहिमा

**मन्त्रकाले विगृह्य विवादः स्वैरालापश्च न कर्तव्यः ॥**

तथा मन्त्रकाले मन्त्रिभिर्यत् (न) कर्तव्यं तदाह– मन्त्रकाल इति । मन्त्रकाले मन्त्रिभिः विगृह्य विवादः विरोधविवादः न कार्यः । तथा स्वैरालापश्च (शूरी ?) न कार्यः । तथा च गुरुः– 'विरोधवाक्यहास्यानि मन्त्रकाल उपस्थिते । ये कुर्युर्मन्त्रिणस्तेषां मन्त्रकार्यं न सिध्यति ॥' । नीवाटी.

**अविरुद्धैरस्वैरैर्विहितो मन्त्रो लघुनोपायेन महतः कार्यस्य सिद्धिर्मन्त्रफलम् (?) ॥**

अथ मन्त्रस्य स्वरूपमाह– अविरुद्धैरिति । अविरुद्धैः अस्वैरैः यो मन्त्रः क्रियते स लघूपायेन स्तोकक्लेशेन महतोऽपि कृत्यस्य सिद्धिं जनयति सदैव मन्त्रः (?) । तथा च नारदः– 'सावधानाश्च ये मन्त्रं चक्रुरेकान्तमाश्रिताः । साधयन्ति नरेन्द्रस्य कृत्यं क्लेशविवर्जितम् ॥' । नीवाटी.

**न खलु तथा हस्तेनोत्थाप्यते ग्रावा यथा दारुणा ॥**

अथ भूयोऽपि मन्त्रमाहात्म्यमाह– नेति । ग्रावा पाषाणः तथा हस्तेन नोत्थाप्यते स्थानाच्चाल्यते दारुणा काष्ठेन यथा मन्त्रेणेति । तथा च हारीतः– 'यत्कार्यं साधयेद्राजा क्लेशैः संग्रामपूर्वकैः । मन्त्रेण सुखसाध्यं तत्तस्मान्मन्त्रं प्रकारयेत् ॥' । नीवाटी.

**स मन्त्री शत्रुर्यो नृपेच्छयाऽकार्यमपि कार्यरूपतयाऽनुशास्ति ॥**

अथ मन्त्रिरूपशत्रुस्वरूपमाह– स मन्त्रीति । स मन्त्री न भवति, स शत्रुः सचिवरूपेण । यः किं कुर्यात् ? यः नृपेच्छया स्व( ? स्वामि )च्छन्देन अकार्यमपि अकृत्यमपि कार्यतया कृत्यतया अनुशास्ति तत्तस्य कथयति । तथा च भागुरिः– 'अकृत्यं ( कृत्य )रूपं च सत्यं चाकृत्यसंज्ञितम् । निवेदयति भूपस्य स वैरी मन्त्रिरूपधृक् ॥ ' । नीवाटी.

**वरं स्वामिनो दुःखं न पुनरकार्योपदेशेन तद्विनाशः ॥**

अथ भूपस्य कृत्याकृत्यनिवेदने यथा मन्त्रिणा भाव्यं तदाह– वरमिति । मन्त्रिणा नृपस्य वरं कठोरवचनैर्दुःखमुत्पादितं यत्परिणामे सुखावहम् , न पुनः कर्णाह्लादकरं परिणामविनाशकारि वक्तव्यम् । तथा च नारदः– 'वरं पीडाकरं वाक्यं परिणामसुखावहम् । मन्त्रिणा भूमिपालस्य न मृष्टं यद्भयानकम् ॥ ' । नीवाटी.

**पीयूषमपिबतो बालस्य किं न क्रियते कपोलहननम् ॥**

अथ बलात्कारेणापि नृपस्य यत्क्रियते तदाह दृष्टान्तद्वारेण– पीयूषमिति । पीयूषं स्तनदुग्धं यो न पिबति तस्य किं जननी न कुरुते कपोलहननं तद्धिताय ? एवं मन्त्रिणाऽपि नृपतिहिताय कठोरमपि वाच्यम् । तथा च गर्गः– 'जननी बालकं यद्वद्दत्वा स्तन्यं प्रपाययेत् । एवमुन्मार्गगो राजा धार्यते मन्त्रिणा पथि ॥ ' । नीवाटी.

**स दैवस्यापराधो न मन्त्रिणां यत्सुघटितमपि कार्यं न घटते ॥**

अथ मन्त्रिणां नृपकार्योद्यतानां यत्कार्यं न सिध्यति तदर्थमाह– स इति । पूर्वोक्तसूत्रार्थेन मन्त्रिणः सदैव नृपकृत्ये सावधाना भवन्ति । यत् सावधानानामपि तेषां न सिध्यति स दैवस्य प्राक्तनकर्मणः दोषः , न तेषाम् । ते पुनः सावधाना नृपकृत्येषु । तथा च भार्गवः– 'मन्त्रिणां सावधानानां यत् कार्यं न प्रसिध्यति । तत्स दैवस्य दोषः स्यान्न तेषां सुहितैषिणाम् ॥ ' । नीवाटी.

**स खलु नो राजा यो मन्त्रिणोऽतिक्रम्य वर्तेत ॥**

अथ राज्ञः स्वरूपमाह– स खल्विति । यो राजा मन्त्रिभिरुक्तानि वचनानि न करोति तान्यतिक्रामति स खलु निश्चयेन राजा न भवति नश्यतीत्यर्थः । तथा च भारद्वाजः– 'यो राजा मन्त्रिणां वाक्यं न करोति हितैषिणाम् । न स तिष्ठेच्चिरं राज्ये पितृपैतामहेऽपि च ॥ ' । नीवाटी.

**सुविवेचितान्मन्त्राद्भवत्येव कार्यसिद्धिर्यदि स्वामिनो न दुराग्रहः स्यात् ॥**

अथ भूयोऽपि मन्त्रमाहात्म्यमाह– सुविवेचितादिति । यदि स्वामिनः नृपस्य न दुराग्रहः दुष्टः एकग्रहः स्यात् तत् सुविवेचितात् सुष्ठु पर्यालोचितात् मन्त्रात् कार्यसिद्धिर्भवत्येव नियमेन । तथा च ऋषिपुत्रकः– 'सुमन्त्रितस्य मन्त्रस्य सिद्धिर्भवति शाश्वती । यदि स्यान्नान्यथाभावो मन्त्रिणा सह पार्थिवः ॥ ' । नीवाटी.

**अविक्रमतो राज्यं वणिक्खड्गयष्टिरिव ॥**

अथ नृपस्य विक्रमरहितस्य यद्भवति तदाह– अविक्रमत इति । यथा श्रेष्ठिनः खड्गयष्टिः, वृथा इत्यर्थः, तथा राज्यमपि व्यर्थं विक्रमपरैरभिभूयत एवेति । तथा च भारद्वाजः– 'परेषां जायते साध्यो यो राजा विक्रमच्युतः । न तेन सिध्यते किंचिदसिना श्रेष्ठिनो यथा ॥ ' । नीवाटी.

**नीतिर्यथावस्थितमर्थमुपलम्भयति ॥**

अथ नीतिरनुष्ठिता यत्करोति तदाह– नीतिरिति । नीतिः नयः यथावस्थितं नीतौ यदुक्तं तत्सर्वमुपलम्भयति प्रयच्छति, न संदेहः । तस्मान्नीतिः कार्या । तथा च गर्गः– 'माताऽपि विकृतिं याति नैव नीतिः स्वनुष्ठिता । अनीतिर्भक्षयेन्मर्त्यं किंपाकमिव भक्षितम् ॥ ' । नीवाटी.

**हिताहितप्राप्तिपरिहारौ पुरुषकारायत्तौ ॥**

अथ हिताहितप्राप्तिर्यथा भवति तदाह– हिताहितेति। हितपदार्थस्य प्राप्तिः अनुष्ठानम्, अहितस्य परिहारः त्यागः, द्वावप्येतौ पुरुषकारायत्तौ। पुरुषकारः आत्मशक्तिः। दुर्लभमपि हितं यद्वस्तु तत् पुरुषकारः साधयति बहुलाभमप्यहितमात्माशक्तीन्द्रियाणि जित्वा परिहरतीति। तथा च बादरायणः– 'हितं वाऽप्यथवाऽनिष्टं दुर्लभं सुलभं च वा। आत्मशक्त्याऽऽप्नुयान्मर्त्यो हितं चैव सुलाभदम् ॥'। नीवाटी.

**अकालसहं कार्यमद्यस्वीनं* न कुर्यात् ॥**

अथ राज्ञो यत्कृत्यं तदाह– अकालसहमिति। अकालसहं कालक्षेपं न सहते यत् कार्यं तत् अद्यस्वीनं कालातिक्रमेण न कार्यम्। तथा च चारायणः– 'यस्य तस्य हि कार्यस्य सफलस्य विशेषतः। क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ॥'। नीवाटी.

**कालातिक्रमान्नखच्छेद्यमपि कार्यं भवति कुठारच्छेद्यम् ॥**

अथ कार्यस्य कालातिक्रमेण यो दोषस्तमाह– कालेति। कालातिक्रमेण यत्कार्यं क्रियते तत् नखच्छेद्यमपि कुठारच्छेद्यं स्यात्। एतदुक्तं भवति– स्वल्पायासेन साध्यमपि महता कृच्छ्रेण प्रसिध्यति। तथा च शुक्रः– 'तत्क्षणान्नात्र यत्कुर्यात् किंचित्कार्यमुपस्थितम्। स्वल्पायासेन साध्यं चेत्तत्कृच्छ्रेण प्रसिध्यति ॥'। नीवाटी.

**को नाम सचेतनः सुखसाध्यं कार्यं कृच्छ्रसाध्यमसाध्यं वा कुर्यात् ॥**

अथ विज्ञः पुरुषो यत् कुर्यात् तदाह– को नामेति। नामेति कोमलामन्त्रणे। अहो सचेतनः सन् जानन् सन् सुखेन कार्यं (यत्) सिध्यति तत् कृच्छ्रसाध्यं करोति असाध्यं वा यन्न कदाचित् सिध्यतीति। तथा च गुरुः– 'सुखसाध्यं च यत्कार्यं कृच्छ्रसाध्यं न कारयेत्। असाध्यं वा मतिर्यस्य भवेच्चिक्षे(? त्ते) निरर्गला ॥'। नीवाटी.

* 'अद्यस्वीनम्' इत्यत्र 'अद्यश्वीनम्' इति शुद्धिः कल्प्यते। अद्य श्वो वा भवतीति अद्यश्वीनम्। एतदनुरोधेन अकालसहमित्यस्य सद्यःकर्तव्यमित्यर्थः।

**स्वच्छन्दाश्च न विजृम्भते(? न्ते) ॥**

अथ स्वच्छन्दा मन्त्रिणो यादृशा भवन्ति तानुद्दिश्याऽऽह– स्वच्छन्दाश्चेति। यदा पुनस्ते मन्त्रिणः स्वच्छन्दा भवन्ति, न राजवश्या भवन्ति, तदा न विजृम्भते(? न्ते) मिथो मन्त्रं न मन्यन्ते। मन्त्रस्य दूषणं स्वाहंकारेण कुर्वन्ति स्वस्वामिनः क्षतिः (? क्षतिं च)। तथा चात्रिः– 'स्वच्छन्दा मन्त्रिणो नूनं न कुर्वन्ति यथोचितम्। मन्त्रं मन्त्रयमाणाश्च (ते) भूपस्याहिताः स्मृताः ॥'। नीवाटी.

**यद्बहुगुणमनपायबहुलं भवति तत्कार्यमनुष्ठेयम् ॥**

अथ राज्ञा यादृक् कार्यमनुष्ठेयं तदाह– यद्बहुगुणमिति। किं बहुना? राज्ञा यद्बहुगुणं कृत्यं भवति तत्कार्यम्। पुनरपि किंविशिष्टम्? अनपायबहुलम्। अपायः विनाशः। न अपायबहुलं अनपायबहुलम्। बहुक्षेमयुक्तमित्यर्थः। तथा च जैमिनिः– 'यद्यच्छ्रेष्ठतरं कृत्यं तत्तत् कार्यं महीभुजा। नोपघातो भवेद्यत्र राज्यं विपुलमिच्छता ॥'। नीवाटी.

**तदेव भुज्यते यदेव परिणमति ॥**

अथ राज्ञा यत्कृत्यं तदाह– तदेवेति। गतार्थमेतत्। नीवाटी.

## युक्तिकल्पतरुः

मन्त्रप्रयोजनम्, मन्त्रणाविषयाः, मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रार्हानर्हदेशकालादयः

**[1]मन्त्रमूलं यतो राज्यमतो मन्त्रः सुरक्षितः।**
**कुर्याद्राजा सदा मन्त्रान्कर्मणामा फलोदयात् ॥**
**अर्थानर्थौ हि यत्रोभौ संशयश्च परीक्ष्यते।**
**स मन्त्र इति विज्ञेयः शेषाश्च खलु विभ्रमाः ॥**
**एकमेव विषं हन्ति शस्त्रेणैकश्च वध्यते।**
**सराष्ट्रां संपदं हन्ति राज्ञां च मन्त्रविप्लवः ॥**
**करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत्।**
**धर्मार्थकामकार्याणि कृतो मन्त्रो न भिद्यते ॥**

(१) युक्त. १६–१७।१०९–११६.

गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
*सराष्ट्रं रभसं हन्ति राजानं मन्त्रविप्लवः ॥
अपथे निःशलाके वा तत्र मन्त्रो विधीयते ।
तत्र साम प्रयोक्तव्यं कार्येषु गुणवत्स्वपि ॥
दानं लुब्धेऽपि भेदश्च शङ्कितेष्वपि निश्चयः ।
जडमूकान्धबधिरान्तिर्यग्योनीन् वयोधिकान् ॥
स्त्रीम्लेच्छव्याधितव्यङ्गान् मन्त्रकाले निषेधयेत् ॥

## मानसोल्लासः

पञ्चाङ्गो मन्त्रः, युक्तमन्त्रलक्षणानि, मन्त्रगूहनमत्यन्तमिष्टम्, मन्त्रार्हानर्हदेशकालादयः, मन्त्रणाविषयाः, व्यस्तैर्मन्त्रिभिर्मन्त्रणमिष्टम्, मन्त्रनिर्णयविधिः

[1]कार्यस्य साधनोपायाः सहायास्तत्कृतौ क्षमाः ।
देशकालविचारश्च विघ्नानां च प्रतिक्रिया ॥
कार्यसिद्धौ सुखं चेति पञ्चाङ्गो मन्त्र इष्यते ।
गुरुशुक्रमतेऽप्येष चाणक्यादिमते तथा ॥
पश्चात्तापविहीनश्च सानुबन्धं सुखोदयः ।
अभीष्टश्चाविलम्बश्च विशिष्टो मन्त्र इष्यते ॥
बहुभिर्भिद्यते मन्त्रो द्वाभ्यां मन्त्रो न नश्यति ।
आत्मना विहितो मन्त्रो ब्रह्मणाऽपि न भिद्यते ॥
सततं गुप्तवाक्यस्य नित्यं गुप्तेङ्गिताकृतेः ।
फलैर्ज्ञेयाः सदाऽऽरम्भाः पुण्यं पूर्वार्जितं यथा ॥
बधिरान्धजडान्मूकान्व्याधितान्वृद्धबालकान् ।
प्रिया अपि स्त्रियो म्लेच्छांस्तिरश्चोऽपि शुकादिकान् ॥
श्रुतिगोचरतो देशात्तथा लोचनगोचरात् ।
धारयेत्परतो यत्नात्तत्र काले नरेश्वरः ॥
आरुह्य चोन्नतं स्थानं प्रासादं वा रहःस्थितम् ।
अरण्ये विजने वाऽपि मन्त्रं कुर्यादलक्षितः ॥
मध्याह्ने मन्त्रयेन्मन्त्रं कृताहारो गतक्लमः ।
रात्रावपरभागे वा गतनिद्रः सुखोत्थितः ॥

धर्ममर्थं च कामं च कृत्याकृत्यं बलाबलम् ।
अमित्रानपि मित्राणि देशरक्षाक्रियाक्रमम् ॥
रिपूणां निग्रहोपायमर्थानामर्जनोद्यमम् ।
भृत्यानां भरणं चैव प्रत्यूहानां प्रतिक्रियाम् ॥
सन्माननं च मित्राणां पुत्राणां नयशिक्षणम् ।
शुद्धान्तवनितारक्षां शिक्षां च गजवाजिनाम् ॥
मन्त्रिणां मन्त्रितं दुष्टममात्यानां विचेष्टितम् ।
रक्षणं च कुमाराणां सामन्तानां च शातनम् ॥
रागापरागौ लोकानामात्मनश्च गुणागुणौ ।
आयव्ययं च वित्तानां कोशस्यापि विवर्धनम् ॥
दुष्टानां दमनं चैव शिष्टानां परिपालनम् ।
पूजनं सुरविप्राणां वर्णाश्रमनिरीक्षणम् ॥
दुर्गाणां रक्षणं सम्यक् परभूपालचेष्टितम् ।
मारणं तस्करादीनामात्मरक्षाविधिक्रमम् ॥
प्रकृतीनां च सद्भावं धान्यादीनां समर्घताम् ।
शान्तिकं पौष्टिकं कर्म नित्यं नैमित्तिकं तथा ॥
माननं बुद्धिवृद्धानां देशकालविमर्शनम् ।
चिन्तयेन्मन्त्रिभिः सार्धं स्वयं वा वसुधाधिपः ॥
आहूय मन्त्रिणः सर्वान्मन्त्रयेत पृथक् पृथक् ।
अभिप्रायं विदित्वैषां गुणदोषौ विचारयेत् ॥
मन्त्रिभिर्मन्त्रिते मन्त्रे गुणदोषौ विचार्य च ।
स्वयं निश्चित्यान्यतरत्कार्यं कुर्यान्महीपतिः ॥
किं कृतं करणीयं किं क्रियमाणं च किं मया ।
किं सिद्धं किमु साध्यं मे इति चिन्त्यं मुहुर्मुहुः ॥
बहुलाभं सुसाध्यं च धर्म्यं कीर्तिविवर्धनम् ।
कार्यं विचार्य कर्तव्यं भूभुजा सुखमिच्छता ॥
समावायव्ययौ यत्र व्ययो यत्राधिको भवेत् ।
असाध्यं च शतोपायैः कथंचित्तन्न मन्त्रयेत् ॥
अधर्म्यमयशस्यं च पश्चात्तापकरं च यत् ।
दुर्लभं क्लेशबहुलं दुर्मन्त्रं तन्न मन्त्रयेत् ॥
कामात्क्रोधाद्भयादन्यल्लोभ्यमानो न मुह्यति ।
यथा शक्त्या युतः कार्ये मन्त्रशक्तिस्तु सा स्मृता ॥

---

* इदमर्धमसंगतं पुनरुक्तं च ।

(१) मासो. २।६९७–७२१.

## अनिर्दिष्टकर्तृकवचनम्

मन्त्रगूहनमत्यन्तमिष्टम्

[1]षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तस्य वार्तया ।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभुजा ॥

(१) रार. २८ नीतौ.

प्रभोर्द्वौ कर्णौ, मन्त्रिणां द्वौ कर्णौ, तद्भिन्नकर्णद्वयपतनान्मन्त्रभेद इत्यर्थः । रार. २८

# *व्यवहारदर्शनम्

## पारस्करगृह्यसूत्रम्

**सभाप्रवेशनविधिः–** सभानमस्कारः, सभाप्रवेशनम् , जपः, क्रोधापनयनं द्रोहापनयनं च मन्त्रपूर्वम्

**¹अथातः सभाप्रवेशनम् ॥**

**सभामभ्येति 'सभाऽऽङ्गिरसि नादिर्नामासि त्विषिर्नामासि तस्यै ते नमः ॥' इति ॥**

**अथ प्रविशति 'सभा च मा समितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ । यो मा न विद्यादुप मा स तिष्ठेत्सचेतनो भवतु शꣳसथे जनः ॥' इति ॥**

**पर्षदमेत्य जपेत् 'अभिभूरहमागम(? गमम)-विराडप्रतिवाश्याः । अस्याः पर्षद ईशानः सहसा सुदुष्टरो जनः ॥' इति ॥**

**स यदि मन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते 'या त एषा रराटच्या तनूर्मन्योः क्रोधस्य नाशनी । तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः ॥ द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि गर्भमश्वतर्यसहाऽसौ ॥' इति ॥**

**अथ यदि मन्येत द्रुग्धोऽयमिति तमभिमन्त्रयते 'तां ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो मत्तां ह्यस्व ॥' इति ॥**

**एतदेव वशीकरणम् ॥**

(१) सभाप्रवेशनम् । वक्ष्यते इति सूत्रशेषः । तत्र सभां प्रति अभ्येति अभिमुखं गच्छति 'सभाऽऽङ्गिरसि०' इत्यनेन मन्त्रेण । तस्यार्थः– सह धर्मेण सद्भिर्वा भातीति सभा । तथा नादिः नदनशीला नाम नाम्ना असि । हे आङ्गिरसि आ(? अ)ङ्गिरोदेवते बृहस्पत्यधिष्ठिते वा, त्विषिः दीप्ता नाम प्रसिद्धं असि, धर्मनिरूपणात् । तस्यै उक्तगुणवत्यै ते तुभ्यं नमोऽस्तु । अथ प्रवेशनमन्त्रार्थः– सभा च संसत् समितिश्च संगरः, ते उभे प्रजापतेः ब्रह्मणः दुहितरौ पुत्र्यौ मा माम् , अवतामिति शेषः । यत एते सचेतसौ शोभनज्ञानदात्र्यौ । अथ सभावचनं सभासदः प्रति– यः पुमान् (मा) मां न विद्यात् मद्व्यवहारं न जानीयात् स पुमान् मा मां उपतिष्ठेत् उपासीत । ततोऽसौ शंसथे संभाषणाय सचेतनः सुबुद्धिः वादकुशल इत्यर्थः , भवतु मत्प्रभावादित्याशंसा । पर्षदं सभां एत्य आगत्य जपेत् 'अभिभूरहम्०' इति मन्त्रम् । अस्यार्थः– अभिभूः परेषामभिभवनशीलः अहमागतोऽस्मि । किंभूतः ? अविराट्, विरुद्धतया राजते स विराट् रुद्धवीर्यः, न विराट् अविराट् । तथा अप्रतिवाशी प्रतिवादिशून्यः । आः इत्यव्ययं संबुद्ध्यर्थम् । यद्वा, अप्रतिवाश्याः इति पर्षदो विशेषणम् । अप्रतिक्षेपायाः अस्याः पर्षदः सभायाः ईशानः स्वामी स्वासु प्रजासु दुष्टरोऽपि स मयि सुजनः , अस्त्विति शेषः । दुष्टरश्च उग्रः । सभाधको यदि सभेशं क्रुद्धं जानीयात् तदा तमभिमन्त्रयते क्रोधापनोदाय 'या त एषा०' इति मन्त्रेण । अस्यार्थः– हे असौ अमुकनामन् सभेश, ते तव, रराटं ललाटम् , तत्र भवा रराटच्या या क्रोधस्य तनूः शरीरं तां देवाः इन्द्राद्याः ब्रह्मचारिणश्च सनकाद्याः विनयन्तु अपनयन्तु । कथंभूतस्य क्रोधस्य ? मन्योः दीप्तस्य । किंभूता देवाः ? सुमेधसः स्वबुद्ध्या क्रोधमपाकर्तुं शक्ताः । किंभूता तनूः ? नाशनी । चतुर्वर्गस्येत्यर्थात् । एषा ललाटत्रिवलिरूपा । मन्त्राभ्यासेनाऽऽत्मनोऽप्युत्कर्षमाह– द्यौः आकाशरूपोऽहमिति क्रोधावरकत्वमुक्तम् । पृथिवी च क्षितिरूपश्चाहमिति क्रोधाधारत्वेन स्वातन्त्र्यं चोक्तम् । अतः तौ तत्स्वरूपो भूत्वा ते तव क्रोधं नयामसि

---

* धर्मकोशस्य व्यवहारकाण्डे प्रथमभागे दर्शनविधिप्रकरणे विस्तरेण संगृहीतोऽप्ययं विषयोऽत्र राजनीतिकाण्डे पुनः संक्षेपेण संगृह्यते, संबद्धत्वात् ।

(१) पागृ. ३।१३।१–७.

मन्त्रबलेनापनयामि । कथम् ? यथा अश्वतरी गर्भपुष्टिमसहमाना अमार्गेण मुञ्चन्ती तथेति व्याख्येयम् । अथ साधको यदि मन्येत अयं सभेशो दुग्धः द्रोहकारीति तदा तमभिमन्त्रयते 'तां ते०' इति मन्त्रेण । अस्यार्थः— हे सभेश, भवान् मद्द्रोहकारिणीं वाचं आस्ये मुखे वर्तमानामादत्ते उपक्रामति । तामहं ते तव हृदये एवाऽऽदधे स्थापयामि । किंच, यत्र यत्र स्थाने वाक् वायुवशान्निहिता तां ततस्ततः स्थानात् आददे मद्वश्यां करोमि । किंच, यदहं ब्रवीमि तत्सत्यमस्तु । त्वं च मत् मत्तः अधरः नीचः । द्य अद्य इदानीं स्व भव । अद्येत्यत्र वर्णलोपः । अधर उ इति छेदः । तत्र उ इति दार्ढ्यार्थम् । अतिशयेन स्व भूयाः । यद्वा, तां मद्द्रोहकारिणीं वाचं तव हृदये एव अतिशयेन द्यस्व अवखण्डय । शिष्टं समानम् । जभा.

( २ ) एतदेव अवशस्य वशीकरणम् । * हभा.

( ३ ) 'उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये' इति मत्वा सभायां प्रत्यहं गन्तव्यं भवति, तदीयविधानमाह— अथात इति । * विभा.

## गौतमः

व्यवहारदर्शनप्रमाणानि वेदादीनि

**[1]तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् ॥**

व्यवह्रियते अनेनेति व्यवहारः । तस्य प्रजापालनाधिकृतस्य राज्ञो व्यवस्थासाधनान्येतानि वेदादीनि प्रसिद्धानि, वेदे 'गर्ताऽऽरुगिव सनये धनानाम्' (ऋसं. १।१२४।७) इत्यादिव्यवहारदर्शनात्, धर्मशास्त्रे वर्णाश्रमादिप्रतिपादनात्, अङ्गे शब्दादिव्यवस्थाप्रतिपादनात्, उपवेदे अस्त्रादिव्यवहारप्रतिपादनात्, पुराणे जगत्स्थितिविज्ञानात् । विसमासः पूर्वस्य पूर्वस्य बलीयस्त्वज्ञापनार्थः । ततश्च पूर्वोत्तरविरोधे पूर्वोक्तमेव आचरेत् । व्यवहारतत्त्वदर्शने वेदादीन्यङ्गानि भवन्तीति व्यवहारशब्देन उच्यन्ते । एतान्यालोच्य व्यवहारान् स्थापयेदित्यर्थः । * मभा.

**[2]तथा ह्यस्य निःश्रेयसं भवतीति ॥**

किमेवं कुर्वतो भवतीत्याह— तथेति । तस्य निर्णयं कुर्वतः निःश्रेयसं उभयलोकविजयित्वं अमुत्र धर्मप्राप्त्या इहापि जनानुरागादिति । इतिशब्दो हेत्वर्थः यस्मादेवमिति । * मभा.

कार्यदर्शनाधिकारी प्राड्विवाकः राजा ब्राह्मणो वा

**[3]राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित् ॥**

पृच्छतीति प्राट् । पृष्टं विवेक्तीति विवाकः । पृच्छति वा असौ विवादिनं साक्षिणो वा, तदुक्तं च विचारयतीति प्राड्विवाकः । स राजैव भवेत् । श्रान्ते तस्मिन् अन्यकर्मप्रवृत्ते ब्राह्मणो वा शास्त्रवित् बहुश्रुत इत्यर्थः । तथा च मनुः— 'यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् । तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शिनम् ॥' ( मस्मृ. ८।९ ) इति । मभा.

( २ ) पृच्छतीति प्राट् । विविच्य वक्तीति विवाकः । न्यङ्क्वादिषु ( पा. ७।३।५३ ) दर्शनात् वृद्धिकुत्वे । † गौमि.

**सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनम् ॥**

सर्वधर्मेभ्यः श्रुतिस्मृत्युपदिष्टेभ्यो धर्मसाधनेभ्यः गुरुतरं प्राड्विवाके व्यवहारद्रष्टरि यथाभूतार्थदर्शित्वमित्यर्थः । प्राड्विवाके वा संनिहिते साक्ष्यादीनां यत् सत्यवचनमिति । * मभा.

---

* शेषं जभागतम् ।

( १ ) गौध. ११।२१ ; गौमि. ११।१९ .

* गौमि. मभागतम् ।

† शेषं मभागतम् ।

( १ ) गौध. ११।२८ ; गौमि. ११।२६ ह्यस्य (ह्यस्य) भवतीति ( भवति ).

( २ ) गौध. १३।२६ ; गौमि.

( ३ ) गौध. १३।३१ ; गौमि.

## हारीतः

प्राड्विवाककर्तव्यं शल्योद्धरणम्

[1]यथा शल्यं भिषक्कार्यमु( ? कायादु)द्धरेन्मन्त्र-( ? यन्त्र )शक्तितः ।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः ॥

भिषक् वैद्यः । शल्यमत्र छलम् । रार. १७

## वृद्धहारीतः

राजा सभ्यसहकृतः व्यवहारदर्शने लघुगुरुतारतम्येन पापिदण्डने च अधिकारी

[2]गुरूणां तु गुरुं दण्डं पापानां च लघोर्लघुम् ।
व्यवहारांस्त्रयं पश्यन्कुर्यात्सद्भिर्वृतोऽन्वहम् ॥

## आपस्तम्बः

व्यवहारपरिषत्सभ्यलक्षणानि

[3]विवादे विद्याभिजनसंपन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥

अर्थिप्रत्यर्थिनोर्विप्रतिषिद्धो वादो विवादः । तत्र विद्यादिगुणसंयुक्ताः, निर्णेतारः स्युरिति वाक्यशेषः । विद्या अध्ययनसंपत् अध्ययनसहितं शास्त्रज्ञानं वा । अभिजनः कुलशुद्धिः । वृद्धाः परिणतवयसः । मेधाविनः ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेषु । अविनिपातिनः विनिपातः प्रमादः तद्रहिताः । उ.

## वसिष्ठः

व्यवहारपरिषत्सभ्याः राजमन्त्रिनागराः

[4]अथ व्यवहाराः ॥
राजमन्त्री सदःकार्याणि कुर्यात् ॥
ततोऽन्यथा( ? ) राजा मन्त्रिभिः सह नागरैश्च कार्याणि कुर्यात् ॥

( १ ) रार. १६.
( २ ) वृहास्मृ. ७।१९७.
( ३ ) आध. २।२९।५.
( ४ ) वस्मृ. १६।१-२, १८.

## विष्णुः

व्यवहारदर्शनाधिकारी राजा ब्राह्मणो वा, परिषत्सभ्यलक्षणानि

[1]स्वयमेव व्यवहारान् पश्येद्विद्वद्भिर्ब्राह्मणैः सार्धम् ॥
व्यवहारदर्शने ब्राह्मणं वा नियुञ्ज्यात् ॥
जन्मकर्मव्रतोपेताश्च राज्ञा सभासदः कार्याः रिपौ मित्रे च ये समाः कामक्रोधभयलोभादिभिः कार्यार्थिभिरनाहार्याः ॥

जन्म विशिष्टमातृपितृतः । कर्म जातकर्मादिसंस्कारः । अनाहार्याः अनाकर्षणीयाः । वै.

[2]धर्मकर्मक्रियोपेताः कार्या राज्ञा सभासदः ॥

## महाभारतम्

सभ्यकर्तव्यं धर्मशल्योद्धरणम्

[3]धर्मज्ञेषु सभासत्सु नेह युक्तमसाम्प्रतम् ॥
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ।
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥

आरुजति हिनस्ति । अनुकूलजान् कूलं कूलमनुसृत्य जातान् वृक्षादीन् । नीटी.

व्यवहारदर्शनाधिकारिसभ्यलक्षणम्

[4]सुतं च स्थापयेद्राजा प्राज्ञं सर्वार्थदर्शिनम् ।
व्यवहारेषु सततं तत्र राज्यं व्यवस्थितम् ॥

व्यवहारेषु अर्थिप्रत्यर्थिवाक्यविचारेषु विषयेषु राजा प्राज्ञान् पण्डितान् न्यसेत् । नीटी.

( १ ) विस्मृ. ३।७२-७४.
( २ ) रार. २०.
( ३ ) भा. ५।९३।४७-४९ ; भामु. ५।४५।४८-५०.
( ४ ) भा. १२।६९।२७ ; भामु. १२।६९।२८ पूर्वार्धे ( श्रोतुं चैव न्यसेद्राजा प्राज्ञान् सर्वार्थदर्शिनः । ) व्यवस्थितम् ( प्रतिष्ठितम् ).

भीष्म उवाच–

'ह्रीनिषेधाः सदा सन्तः सत्यार्जवसमन्विताः ।
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः ॥

कथयितुं न्यायान्यायौ वक्तुम् । नीटी.

युधिष्ठिर उवाच–

'कथं स्विदिह राजेन्द्र पालयन् पार्थिवः प्रजाः ।
प्रति धर्मं विशेषेण कीर्तिमाप्नोति शाश्वतीम् ॥

भीष्म उवाच–

'व्यवहारेण शुद्धेन प्रजापालनतत्परः ।
प्राप्य धर्मं च कीर्तिं च लोकावाप्नोत्युभौ शुचिः ॥

प्रीतिं स्वर्गम् । व्यवहारेण, एकस्मिन् गृहक्षेत्रादौ विषये ममेदमिति द्वयोर्विवदतोर्मध्येऽयं सत्योऽयमनृत इति विवेकः व्यवहारः, तेन । शुद्धेन पक्षपातहीनेन । नीटी.

सभ्यानां संख्या लक्षणानि च

युधिष्ठिर उवाच–

'कीदृशं व्यवहारं तु कैश्च व्यवहरेन्नृपः ।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥

कीदृशैः किंस्वरूपैः । कैः व्यवहारनिर्णायकैः । व्यवहरेत् निर्णयं कुर्यात् । नीटी.

'ये चैते पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन् पुरुषे ह्येते विद्यन्त इति मे मतिः ॥

भीष्म उवाच–

'एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान् ।
दुर्लभः पुरुषः कश्चिदेभिर्गुणगणैर्युतः ॥

'किंतु संक्षेपतः शीलं प्रयत्ने नेह दुर्लभम् ॥

'विवर्जितानां व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥

सप्तभिः मृगया अक्षाः स्त्रियः पानमिति चतुर्भिः कामजैः, दण्डपातनं वाक्पारुष्यं अर्थदूषणमिति त्रिभिः क्रोधजैरिति सप्तभिः । अष्टानां ब्राह्मणचतुष्टयं शूद्रत्रयं सूतश्चेति तेषाम् । नीटी.

'ततः संप्रेषयेद्राष्ट्रे राष्ट्रायाथ च दर्शयेत् ।
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥

'न चापि गूढं कार्यं ते ग्राह्यं कार्योपघातकम् ।
कार्ये खलु विपन्ने त्वां सोऽधर्मस्तांश्च पीडयेत् ॥

ते त्वया द्रष्टव्याः । गूढं न्यासापहारादिकं ते त्वया न ग्राह्यम् । अन्योन्यं विवदमानौ द्रव्ये परस्परसंबन्धं दूषयतः । तथा च उभयोः असंबन्धाद्राजकीयमिदमिति बुद्धिं न कारयेदित्यर्थः । सार्धः । नीटी.

'विद्रवेच्चैव राष्ट्रं ते श्येनात्पक्षिगणा इव ।
परिस्रवेच्च सततं नौर्विशीर्णेव सागरे ॥

परिस्रवेत् मन्दं मन्दमन्यत्र गच्छेत् । नीटी.

प्रजाः पालयतोऽसम्यगधर्मेणेह भूपतेः ।
हार्दं भयं संभवति स्वर्गश्चास्य विरुध्यते ॥

(१) भा. १२।८४।१ ; भामु. १२।८३।२ प्रथमचरणे ( ह्रीनिषेवास्तथा दान्ताः ).

(२) भा. १२।८६।१ ; भामु. १२।८५।१ प्रति धर्मं ( प्रीतिं धर्मं ).

(३) भा. १२।८६।२ ; भामु. १२।८५।२.

(४) भा. १२।८६।३ ; भामु. १२।८५।३ प्रथमचरणे ( कीदृशैर्व्यवहारैस्तु ).

(५) भा. १२।८६।४ ; भामु. १२।८५।४ चैते पूर्व ( चैव पूर्व ).

(६) भा. १२।८६।५ ; भामु. १२।८५।५ मान् ( मन् ) गुणगणैर्युतः ( युक्तो गुणैः शुभैः ).

(१) भा. १२।८६।६ ; भामु. १२।८५।६ त्ने नेह ( त्नेनेह ).

(२) भा. १२।८६।१० ; भामु. १२।८५।११ विवर्जितानां ( वर्जितं चैव ).

(३) भा. १२।८६।११ ; भामु. १२।८५।१२ राष्ट्रायाथ ( राष्ट्रीयाय ).

(४) भा. १२।८६।१२ ; भामु. १२।८५।१३ कार्यं ( द्रव्यं ).

(५) भा. १२।८६।१३–१४ ; भामु. १२।८५।१४–१५.

[१]अथ यो धर्मतः पाति राजाऽमात्योऽथ वाऽऽत्मजः ।
धर्मासने नियुक्तः सन् धर्ममूलं नरर्षभ ।
स्वर्गं याति महीपालो नियुक्तैः सचिवैः सह ॥

अधर्मतः इति च्छेदः । धर्ममूले राज्ये । नीटी.

अनाथासाक्षिककार्ये विशेषतः परीक्ष्यम्

[२]कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः ॥
बलात्कृतानां बलिभिः कृपणं बहु जल्पताम् ।
नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् ॥

[३]ततः साक्षिबलं साधु द्वैधे वादकृतं भवेत् ।
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ॥

यतः अपरीक्षायां सामात्यस्य राज्ञः अधोगतिः ततो हेतोस्तद्व्यवहारजातं परीक्ष्यम् । तथाहि– अर्थिना 'ममायं शतं सुवर्णान् धारयति' इति पक्षे उपन्यस्ते यदि प्रत्यर्थी 'धारयामि' इति वदेत् तदा न साक्ष्यादिप्रजोजनमस्ति । यदि त्वसौ 'न धारयामि' इति वदति तदा द्वैधवादकृतं अन्योन्यं विरुद्धो य उभयोर्वादस्तत्र कृतं साक्षिबलं साधु भवेत् । निर्णायकमिति शेषः । तत्र अर्थिना प्रत्यर्थिनि स्वार्थसाधनाय साक्षित्रं शपथो वा आस्थेयः । क्षेत्रादिविषये विवादश्चेत् भोगोऽपि प्रदर्शनीयः । यदा तु प्रत्यर्थी वदति – 'सत्यमस्य मया गृहीतं परंतु प्रत्यर्पितम्' इति वा, 'अस्मिन् अर्थे पूर्वमेवायं मया पराजितोऽस्ति, पुनर्निर्लज्जत्वादुपागतः' इति वा वदति तदा प्रत्यर्पणकालीना अर्थिपराजयकालीना वा साक्ष्यादयः प्रदर्शनीयाः । यदि अर्थिनः प्रत्यर्थिनो वा साक्ष्यादिकं नास्ति शपथं वा परो नानुमन्यते तदा तत् विवादास्पदं द्रव्यं असाक्षिकत्वादनाथं निःस्वामिकं भवति, अर्थी च तन्न मुञ्चति, तदा विशेषतस्तप्तपरशुग्रहणादिना तत्परीक्ष्यमिति । नीटी.

(१) भा. १२।८६।१५ तृतीयार्धं टिप्पण्यां समुद्धृतम्; भामु. १२।८५।१६ नियुक्तः सन् ( संनियुक्तो ) मूलं ( मूले ) तृतीयार्धं नास्ति.

(२) भा. १२।८६।१६–१७ ; भामु. १२।८५।१७–१८.

(३) भा. १२।८६।१८ ; भामु. १२।८५।१९ द्वैधे ( द्वैध ).

सम्यग्दण्डप्रणयनविधिः

[१]अपराधानुरूपं च दण्डं पापेषु पातयेत् ।
उद्वेजयेद्धनैर्ऋद्धान् दरिद्रान् वधबन्धनैः ॥

परीक्षोत्तरमपि किं कार्यमत आह– अपराधेति । नीटी.

[२]विनयैरपि दुर्वृत्तान् प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥

[३]राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् ।
आजीवकस्य स्तेनस्य वर्णसंकरकस्य च ॥

चित्रः अनेकधा । आदीपकस्य गृहादिदाहकस्य । चित्र इति सर्वत्रानुकृष्यते । नीटी.

[४]सम्यक् प्रणयतो दण्डं भूमिपस्य विशां पते ।
युक्तस्य वा नास्त्यधर्मो धर्म एवेह शाश्वतः ॥

युक्तस्य यथाशास्त्रमवहितस्य चित्रवधं कुर्वतोऽपि राज्ञो दोषो नास्ति, प्रत्युत धर्म एवास्तीत्यर्थः । नीटी.

[५]कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमाप्नुयात् ॥

(१) भा. १२।८६।१९ ; भामु. १२।८५।२० पात ( धार ) उत्तरार्धे ( वियोजयेद्धनैर्ऋद्धानधनानथ बन्धनैः ॥ ).

(२) भा. १२।८६।२० ; भामु. १२।८५।२१ यैरपि ( येच्चापि ).

(३) भा. १२।८६।२१ ; भामु. १२।८५।२२ जीव ( दीप ) करक ( करिक ).

(४) भा. १२।८६।२२ ; भामु. १२।८५।२३ एवेह ( एव हि ).

(५) भा. १२।८६।२३ ; भामु. १२।८५।२४ माप्नुयात ( मृच्छति ).

¹न परस्य श्रवादेव परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयेत वा ॥

पितुरपराधे पुत्रो न दण्ड्यः, अपि तु आगमानुगमः कार्यः। 'त्वं स्वपितरं पत्रादिद्वारा आनीय उपस्थापय' इति तदुपरि पित्रागमनस्य पर्यनुयोगः कार्यः। तावत्पर्यन्तं पुत्रं बध्नीयात्। यदि तु स बद्धेऽपि पुत्रे नाऽऽयाति तदा पुत्रमपि मोक्षयेत्। पितुः राष्ट्रान्निर्वासनरूपस्य दण्डस्य तेन स्वत एव संपादितत्वादिति भावः। नीटी.

## वाल्मीकिरामायणम्

पौरकार्यदर्शने विलम्बो महादोषावहः, एतन्निदर्शनं नृगराजकथया

²आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा ।
कार्यार्थी च जनः सर्वः क्षिप्रमिक्ष्वाकुनन्दन ॥
³पौरकार्याणि यो राजा न करोति दिने दिने ।
व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥
⁴श्रूयते हि पुरा राजा नृगो नाम महारथः ।
बभूव पृथिवीपालो ब्रह्मण्यः सत्यसंगरः ॥
⁵स कदाचिद्गवां कोटिं सवत्सां हेमभूषिताम् ।
नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥
⁶तत्र सङ्गागता धेनुः सवत्सा कामदोहना ।
ब्राह्मणस्याग्निवेशस्य तपसा भावितात्मनः ॥

(१) भा. १२।८६।२४; भामु. १२।८५।२५ श्रवादेव (प्रवादेन) क्षयेत (क्षयीत).

(२) वारा. ७।५५।५; वाराकु. ७।५३।५ उत्तरार्धे (कार्यार्थिनश्च पुरुषाः स्त्रियश्च पुरुषर्षभ ॥).

(३) वारा. ७।५५।६; वाराकु. ७।५३।६ व्यक्तं स (संवृते) पच्यते (पतितो).

(४) वारा. ७।५५।७; वाराकु. ७।५३।७ रथः (यशाः) संगरः (वाक्छुचिः).

(५) वारा. ७।५५।८; वाराकु. ७।५३।८ पूर्वार्धे (स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः ।).

(६) वाराकु. ७।५५।९; वाराकु. ७।५३।९ (ततः सङ्गाद् गता धेनुः सवत्सा स्पर्शिताऽनघ । ब्राह्मणस्याऽऽहिताग्नेश्च दरिद्रस्योञ्छवर्तिनः ॥).

¹स तु तत्राऽऽगतां धेनुमन्वेष्टुं तत्र तत्र वै ।
नापश्यत्सर्वराष्ट्रेषु संवत्सरगणान्बहून् ॥
²ततः कनखले गत्वा जीर्णां वत्सविनाकृताम् ।
स ददर्श तदा गां स्वां ब्राह्मणस्य निवेशने ॥
³स दृष्ट्वा नामधेयेन स्वेन तामाह्वयद्द्विजः ।
आगच्छ शबलेत्येवं सा च शुश्राव तं स्वनम् ॥
⁴तस्य तं स्वनमाज्ञाय क्षुधार्तस्य द्विजस्य वै ॥
अन्वयात्पृष्ठतः सा गौर्गच्छन्तमनलोपमम् ॥
⁵गां दृष्ट्वा ह्रियमाणां तां ब्राह्मणो येन राजतः ।
नृगात्प्रतिगृहीता सा स तूर्णं त्वरितोऽन्वगात् ॥
⁶तयोर्ब्राह्मणयोर्वादो महानासीद्विपश्चितोः ।
विवदन्तौ नृगं तं च राजानमभिजग्मतुः ॥

(१) वारा. ७।५५।१०; वाराकु. ७।५३।१० पूर्वार्धे (स नष्टां गां क्षुधार्तो वै अन्विष्यंस्तत्र तत्र च ।) राष्ट्रेषु (राज्येषु).

(२) वारा. ७।५५।११; वाराकु. ७।५३।११ (ततः कनखलं गत्वा जीर्णवत्सां निरामयाम् । ददर्श गां स्वकां धेनुं ब्राह्मणस्य निवेशने ॥).

(३) वारा. ७।५५।१२; वाराकु. ७।५३।१२ पूर्वार्धे (अथ तां नामधेयेन स्वकेनोवाच स द्विजः ।) च (तु) तं स्वनम् (गौः स्वरम्).

(४) वारा. ७।५५।१३; वाराकु. ७।५३।१३ तं स्वन (तु स्वर) अन्वया (अन्वगा) न्तमनलो (न्तं पावको).

(५) वारा. ७।५५।१४; वाराकु. ७।५३।१४-१५ (योऽपि पालयते विप्रः सोऽपि गामन्वगाद् द्रुतम् । गत्वा तमृषिमाचष्ट मम गौरिति सत्वरम् ॥ स्पर्शिता राजसिंहेन मम दत्ता नृगेण ह ।).

(६) वारा. ७।५५।१५; वाराकु. ७।५३।१५-१६ नृगं तं च राजान (ततोऽन्योऽन्यं दातार).

[1]तौ राजभवनद्वारि दिदृक्षू नृपतिं स्थितौ ।
बहूनहोरात्रगणान्क्षुधार्तौ द्वारमागतौ ॥

[2]ऊचतुश्च महात्मानौ नृगं तं ब्राह्मणर्षभौ ।
क्रुद्धौ परमसंतप्तौ वाक्यं घोराभिसंहितम् ॥

[3]अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् ।
अदृश्यः सर्वभूतानां कृकलासो भविष्यसि ॥

[4]अष्टादशयुगं कालं कृताविपरिवर्तनम् ।
श्वभ्रे त्वं कृकलीभूतो दीर्घकालं निवत्स्यसि ॥

[5]उत्पत्स्यति च लोकेऽस्मिन्यादवः पुरुषर्षभः ।
वसुदेवसुतः श्रीमान्विष्णुर्मानुषविग्रहः ॥

[6]स ते मोक्षयिता राजञ्शापादस्माद्भविष्यति ।
कृता ह्यनेन कालेन निष्कृतिस्ते भविष्यति ॥

[7]भारावतारणार्थं हि नरनारायणावुभौ ।
उत्पत्स्येते महावीर्यौ कलौ युग उपस्थिते ॥

एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ ।
तां गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै ॥

( १ ) वारा. ७।५५।१६ ; वाराकु. ७।५३।१६–१७ (तौ राजभवनद्वारि न प्राप्तौ नृगशासनम् । अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः ॥ ).

( २ ) वारा. ७।५५।१७ ; वाराकु. ७।५३।१७ द्वितीयचरणे ( तावुभौ द्विजसत्तमौ ).

( ३ ) वारा. ७।५५।१८ ; वाराकु. ७।५३।१८.

( ४ ) वारा. ७।५५।१९ ; वाराकु. ७।५३।१९ ( बहुवर्षसहस्राणि बहुवर्षशतानि च । श्वभ्रेऽस्मिन् कृकलासो वै दीर्घकालं वसिष्यसि ॥ ).

( ५ ) वारा. ७।५५।२० ; वाराकु. ७।५३।२० ( उत्पत्स्यते हि लोकेऽस्मिन् यदूनां कीर्तिवर्धनः । वासुदेव इति ख्यातो लोके पुरुषविग्रहः ॥ ).

( ६ ) वारा. ७।५५।२१ ; वाराकु. ७।५३।२१ ञ्शापादस्मा ( न्तस्माच्छापा ) ह्यनेन ( तेन च ).

( ७ ) वारा. ७।५५।२२–२३ ; वाराकु. ७।५३। २२–२३.



[1]एवं स राजा तं शापमुपभुङ्क्ते सुदारुणम् ।
कार्यार्थिनां विलम्बो हि राज्ञां दोषाय कल्पते ॥

[2]तच्छीघ्रं दर्शनं मह्यमभिवर्तन्तु कार्यिणः ।
विफलस्य हि कार्यस्य फलं नोपैति पार्थिवः ।
तस्मात्त्वयं प्रतीक्षस्व सौमित्रे कार्यवज्जनम् ॥

## कौटिलीयमर्थशास्त्रम्

राजकर्तव्यं कार्यदर्शनं कार्यार्थिनां क्रमेण कार्यगौरवात्ययिकताविवेकेन च, विलम्बे दर्शनपरिहारे च राजविपद्

[3]उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत् । दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते । तेन प्रकृतिकोपमरिवशं वा गच्छेत् । तस्माद्देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्कार्यगौरवादात्ययिकवशेन वा ॥

अद्वारासङ्गं कारयेत् द्वारे आसङ्गः सक्तिः निरोध इति यावत्, तदभावं कारयेत् । सुलभदर्शनो भवेदित्यभिप्रायः । दुर्लभदर्शनत्वे दोषमाह– दुर्दर्श इत्यादि । कार्याकार्यविपर्यासं कार्याकार्ययोरकरणं व्युत्क्रमकरणं वा । आसन्नैः अन्तिकसेवकैः । तेन कार्याकार्यविपर्यासनेन । प्रकृतिकोपं अमात्यादिरोषम् । अरिवशं शत्रुगोचरम् । कार्यदर्शने क्रममाह– तस्माद्देवताश्रमेत्यादि । अत्राऽऽश्रमशब्दो मुन्युपलक्षकः । व्यसनिशब्दो दुःखाभिभूतपरः । शेषं स्पष्टम् । कार्यगौरवात् आत्ययिकवशेन वा कार्याणि पश्येत् कार्यस्य महत्त्वापेक्षया वा अमहत्त्वेऽप्यतिपातित्वापेक्षया वा कार्याणि चिन्तयेत् क्रमं यथोक्तमनादृत्यापीत्यभिप्रायः । श्रीमूला.

( १ ) वारा. ७।५५।२४ ; वाराकु. ७।५३।२४–२५ लम्बो ( मर्दो ).

(२) वारा. ७।५५।२५ ; वाराकु. ७।५३।२५–२६ विफल ( सुकृत ) नोपै ( नापै ) त्त्वयं ( द्गच्छ ) वज्जनम् (वाञ्जनः ).

( ३ ) कौ. १।१९.

**सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत् ।**
**कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते ॥**

सर्वं गुरु लघु च आत्ययिकं कार्यं शृणुयात् श्रुत्वाऽनुतिष्ठेत् , नातिपातयेत् नातिक्रामयेत् । अतिक्रान्तं अतिपातितकालं किमपि सद्यःसुकरं कार्यं कृच्छ्रसाध्यमसाध्यं वा भवति कालान्तरे । श्रीमूला.

**अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् ।**
**पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च ॥**

अग्न्यगारगतः अग्निहोत्रशालागतः । वैद्यतपस्विनां विदुषां तापसानां च । श्रीमूला.

**तपस्विनां तु कार्याणि त्रैविद्यैः सह कारयेत् ।**
**मायायोगविदां चैव न स्वयं कोपकारणात् ॥**

त्रैविद्यैः सह त्रयीविद्याविद्भिः साकम् । त्रैविद्यसाहित्यवचनं कार्यनिर्णये प्रत्ययार्थम् । मायायोगविदां मायाप्रयोगाभिज्ञानाम् । न स्वयं एकाकी सन् न कारयेत् । कुतः ? कोपकारणात् कोपात्निमित्तात् । श्रीमूला.

व्यवहारदर्शनाधिकारिसंख्या दर्शनाधिकरणानि च

**[1]धर्मस्थास्त्रयस्त्रयोऽमात्याः जनपदसंधिसंग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ॥**

धर्मस्थास्त्रयस्त्रयः अमात्याः सहावस्थिताः जनपदसंध्यादिषु जनपदसंधौ अन्तपालदुर्गे संग्रहणे दशग्रामीप्रधानाधिष्ठाने चतुःशतग्रामीप्रधाने द्रोणमुखे अष्टशतग्रामीप्रधानाधिष्ठाने स्थानीये चेत्येतेषु व्यावहारिकान् अर्थान् कार्याणि कुर्युः । श्रीमूला.

व्यवहारदर्शनं सम्यग्दण्डनं च वर्णाश्रमाचाररक्षणाय

**चतुर्वर्णाश्रमस्यायं लोकस्याऽऽचाररक्षणात् ।**
**नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः ॥**

सम्यग्व्यवहारदर्शनस्य सर्वलोकयोगक्षेमसाधकतां श्लोकैराह— चतुर्वर्णेत्यादि । अयं राजधर्मः सम्यग्व्यवहारदर्शनरूपः चतुर्वर्णाश्रमस्य चत्वारो वर्णाः ब्राह्मणादयः आश्रमाश्च ब्रह्मचर्यादयः यस्मिंस्तथाभूतस्य लोकस्य आचाररक्षणात् स्वस्वसमुदाचारपरिरक्षणाद्धेतोः नश्यतां सर्वधर्माणां स्वतः क्षीयमाणानां सर्वेषां धर्माणां प्रवर्तकः प्रोज्जीवकः । श्रीमूला.

(१) कौ. ३।१.

**राज्ञः स्वधर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः ।**
**अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥**

राज्ञः स्वधर्मः शस्त्राजीवो भतरक्षणं च स्वर्गाय भवति । कथंभूतस्य ? प्रजा धर्मेण रक्षितुः । अरक्षितुर्वा अरक्षकस्य वा क्षेप्तुर्वा मिथ्यादण्डं अयथार्हदण्डं प्रणेतुर्वा राज्ञः अतोऽन्यथा उक्तादन्यः प्रकारः अर्थात् नरकः भवति । एवमदृष्टसाधकता सम्यग्व्यवहारदर्शनस्य दर्शिता । श्रीमूला.

**दण्डो हि केवलो लोकं परं चेमं च रक्षति ।**
**राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥**

दण्डं प्रशंसति— दण्डो हीति । दण्डो हि केवलः एकः अनितरसहायः लोकं परं च इमं च रक्षति उभयलोकसुखभोगसौभाग्यं प्रयोक्तुः प्रयच्छति । कथंभूतोऽसौ ? राज्ञा प्रयोक्त्रा पुत्रे च शत्रौ च यथादोषं अपराधानुरूप्येण समं धृतः अविशेषेण प्रयुक्तः । श्रीमूला.

**अनुशासद्धि धर्मेण व्यवहारेण संस्थया ।**
**न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥**

सम्यग्व्यवहारदर्शनस्य परमं दृष्टफलमाह— अनुशासद्धीति । अनुशासत् लोकं न्याय्ये पथि स्थापयन् । कथम् ? धर्मेण धर्मानुसारेण, व्यवहारेण साक्षिवाक्यानुसारेण, संस्थया लोकाचारेण, न्यायेन च चतुर्थेन न्यायोपपन्नराजकीयनिर्णयलक्षणेन चतुर्थपादरूपेण चतुरन्तां चतुःसागरपर्यन्तां महीं जयेत् , यथोक्तप्रकारानुशासनमहिम्ना सार्वभौमत्वं राजा प्राप्नुयादित्यर्थः । श्रीमूला.

## मनुः

विनीतो मन्त्रज्ञसभ्यसहकृतः सभागतो राजा राजनियुक्तो ब्राह्मणो वा कार्यदर्शने अधिकारी

**[1]व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।**
**मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥**

(१) प्रजानां पालनं राज्ञो वृत्तिर्विहिता । सा चात्र— 'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषीर्विशः । आजीवनार्थं शूद्रस्य द्विजातीनां निषेवणम् । एवं नृपो वर्तमानो

(१) मस्मृ. ८।१ ; मभा. ११।२३ हारान् दि (हारं दि) पू. ; राकौ. ३८२.

लोकानाप्नोत्यनुत्तमान् ॥' इति। तथा धर्मो वर्धते लोके। अन्येषामपि वर्णानां क्षत्रियवृत्त्या जीविनामस्त्येव राज्याधिकारः। 'यः कश्चित्सर्वलोकानां पालकश्च नृपः स्मृतः। कर्मनिष्ठा च विहिता लोकसाधारणे हिते ॥'। परिपालनं च पीडापहारः। द्वयी च पीडा– दृष्टा अदृष्टा च। तत्र दुर्बलस्य बलीयसा धनहरणादिना बाध्यमाना (? -नस्य) दृष्टा पीडा। इतरस्य तु विध्यतिक्रमजनितेन प्रत्यवायेनाऽऽमुत्रिकदुःखोत्पादनमदृष्टपीडा। प्रजा हि द्वेषमत्सरादिभिरितरेतरमयथावदाचरन्ति, कुपथेन यान्ति, अदृष्टदोषेण बाध्येरन्, अतश्च राज्यनाशः। प्रजैश्वर्यं हि राज्यमुच्यते। तासु विनश्यन्तीषु कस्य राज्यं स्यात्? व्यवहारादयोऽतः। शास्त्रदण्डेन व्यवस्थाप्यमाना न भयात् पृथक् प्रचलन्ति, तथा चोभयथाऽपि रक्षिता भवन्ति। धनदण्डश्च राज्ञः करः शुल्कादि वा। एतदन्या धर्मिष्ठजीविका न भवतीति वृत्तिपरिक्षयादपि राज्यावसादः। अतो राज्यस्थित्यर्थं व्यवहारदर्शनं कर्तव्यम्। तदिदानीमुच्यते। व्यवहारश्चात्र वादिप्रतिवादिनोरितरेतराशनोधाराय(? शयोद्धाराय) वृत्तिरुच्यते। अथवा ऋणादानादयः पदार्था एव विप्रतिपत्तिविषयाः सन्तो विचारगोचरसमर्थतया कर्तव्या इति। दिदृक्षुरित्युक्त्वा 'पश्येत् कार्याणि' (मस्मृ. ८।२) इति सामानाधिकरण्यम्। पुनश्च प्रत्यवमर्शः– 'तेषामाद्यमृणादानम्' (मस्मृ. ८।४) इति। तान् पदार्थान् विचारयेदिति संबन्धः। वक्ष्यमाणाधिकृतपुरुषाधिष्ठितः प्रदेशः सभा। प्रवेशः तदभ्यन्तरभावः। किमेक एव प्रविशेत्? नेत्याह– ब्राह्मणैः सहेति। अथ मन्त्रज्ञैरिति कस्य विशेषणम्? न तावन्मन्त्रिणः, मन्त्रित्वादेव सिद्धेः। न हि मन्त्रमजानानो मन्त्रीति शक्यते वक्तुम्। नापि ब्राह्मणानाम्, व्यवहारदर्शनेऽधिकृतानां तत्परिज्ञानमदृष्टं न (? मदृष्टाय) स्यात्। अत्रोच्यते– ब्राह्मणविशेषणमेवैतत्। ते ह्यमन्त्रज्ञा (? हि मन्त्रज्ञा) भूत्वा निरपेक्षमवधारयन्तः स्युः, अन्यथा राज्ञोऽनर्थमावहेयुः। तथाहि महामात्याश्रितः कश्चिज्जनपदेन व्यवहरन् सहसा जितो यदि न दण्ड्यते धनं वाऽवष्टभ्य न दाप्यते तदा समत्वेन व्यवहारदर्शनं न कृतं स्यात्, पक्षपातमशक्तिं वाऽस्य जनपदा मन्येरन्। अथ दण्ड्यते महामात्यक्षोभादपि प्रकृतिविकृतं स्यात्। मन्त्रज्ञास्तु सन्तः संशयितारो यदि निर्णेतव्यस्य केनचिदपदेशेन प्रसङ्गरोधं कृत्वा रहसि राजानं परिबोधयन्ति– 'अनयोर्विवादिनोरयं जीयतेऽयं जयतीति व्यवहारस्त्वस्माभिर्न तदानीमेव निर्णीत इति स्वामी प्रमाणम्'। तत्र राजैवं विदित्वा महामात्यमादेशयति– 'त्वदीयो मनुष्यो जीयते, मम हानिर्मा भूदिति संप्रति निर्णयोऽवधीरितः। त्वमेव तथा कुरु यथैष मनुष्यः संधीयते बाधाऽस्य व्यपनीयते'। ते मन्त्रिणो वाऽऽदेयवाक्या मनुष्याणां सर्वेषामनर्थ्यां च प्रवृत्तिं प्रतिबध्नन्ति। अन्ये तु काकाक्षिवदुभयविशेषणमर्थभेदेन मन्त्रज्ञपदं मन्यन्ते। यदा मन्त्रिणो विशेष्यन्ते तत्तद्धातु (? तदा तत्तद्धेतु)तत्परिज्ञानं मन्त्रज्ञानम्। ब्राह्मणपक्षे तु कार्यार्थसमभावश्च (? कार्यार्थज्ञानं समभावश्च)। मन्त्रिब्राह्मणानां न प्रवेशमात्रमेव, किं तर्हि? 'निर्णयं पश्येत्' इत्युत्तरत्र वाक्यानि (? इत्युत्तरवाक्यात्) यथायोग्यम्। इतरथाऽदृष्टाय प्रवेशः स्यात्। अतो नैकाकी निर्णयं कुर्यात्, किं तर्हि? तैः सह निरूप्येति। विनीतः वाक्पाणिपादचापलरहितः। वेपतो ह्यनर्थः स्यात्। पार्थिवग्रहणान्न क्षत्रियस्यैवायमुपदेशः, किं तर्हि? अन्यस्यापि पृथिव्यामधिपतेर्देशेश्वरस्य। न ह्यन्यथा राज्यमविचलितं भवतीति। * मेधा.

(२) अर्थिप्रत्यर्थिनोः ऋणादानादिविषयाणि इतरेतरविरुद्धावहरणरूपाणि कार्याणि द्रष्टुमिच्छन् राजा वक्ष्यमाणलक्षणैर्मन्त्रिभिश्चोक्तपञ्चाङ्गमन्त्रज्ञैः सह चापलादिरहितो वक्ष्यमाणसभां प्रविशेत्। गोरा.

(३) एवंविधविपक्षमहीक्षिद्भयः प्रजानां रक्षणादवाप्तवृत्तिः तासामेव इतरेतरविवादजपीडापरिहारार्थम्, ऋणादानाद्यष्टादशविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसंदेहहारी विचार एव व्यवहारः, तदाह कात्यायनः– 'वि नानार्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणात् व्यवहार इति स्मृतः ॥', तान् व्यवहारान्

---

* राकौ. मेधागतम्।

द्रष्टुमिच्छन् पृथिवीपतिः वक्ष्यमाणलक्षणलक्षितैर्ब्राह्मणैः अमात्यैश्च सप्तमाध्यायोक्तपञ्चाङ्गमन्त्रज्ञैः सह विनीतः वाक्पाणिपादचापलविरहादनुद्धतः । अविनीते हि नृपे वादिप्रतिवादिनां प्रतिभाक्षयादसम्यगभिधाने तत्त्वनिर्णयो न स्यात् । तादृशो वक्ष्यमाणां सभां प्रविशेत् । व्यवहार-दर्शनं चेदं प्रजानामितरेतरपीडायां तत्त्वनिर्णयेन रक्षणार्थे वक्ष्यमाणदृष्टात्मककरण(? रक्षण)फलेनैव फलवत् । ममु.

(४) संप्रति व्यवहारार्थे सभाप्रवेशप्रकारमाह– व्यवहारानिति द्वाभ्याम् । संगतिरानन्तर्यलक्षणा, व्यवहार-निर्णयस्य राजकृत्यत्वात् । मिताक्षरा तु– 'अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः । यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, (अन्योऽपि) तद्विरोधेन मदीयमिति' (मिता. २।१)। मन्त्रज्ञैः पूर्वाध्यायोक्त-पञ्चाङ्गमन्त्रज्ञैः नीतिशास्त्रज्ञैः कापटिकादिभिः प्रतिज्ञा-हेतूदाहरणोपनयनिगमनान्तै(? नज्ञै)र्वा । मन्त्रिभि-श्चामात्यैः । * मच.

(५) एवं राज्ञः स्वविषयरक्षणं परविषयलाभे प्रशमनं चोक्तम् । इदानीं तस्य व्यवहारदर्शनमुच्यते– व्यवहारानिति । मन्त्रज्ञैरिति विशेषणं ब्राह्मणानां मन्त्रिणां च । विनीतः उक्तैरेतैरुभयैः । नन्द.

(६) अन्यानन्य(? अन्योन्य)विरोधेन स्वात्मसंबन्धि-तया कथनं व्यवहारः । कीदृशैर्ब्राह्मणैः? मन्त्रज्ञैः वेद-व्याकरणधर्मशास्त्राभिज्ञैः । * भाच.

**'तत्राऽऽसीनः स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम् ।**
**विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥**

(१) आसीनः धर्मासनोपविष्टः । स्थितः निषिद्ध-गतिः अनुपविष्ट एव । स्थानासनयोश्च व्यवस्थितो विकल्पः कार्यविशेषापेक्षः । गरीयसि कार्ये बहुवक्तव्ये उपविष्टः आसीनः, लघीयसि स्वल्पवक्तव्ये स्थितः । क्रममाणस्य सर्वथा प्रतिषेधः । स हि मार्गावलोकनपरो नार्थिप्रत्य-र्थिनोर्निपुणतो वचनमवधारयेत् । अन्ये तु अदृष्टार्थे तथा मन्यन्ते– तपस्विब्राह्मणादिषु विवादिषु स्थितेषु स्थितः, आसीनेषु आसीनः । पाणिमुद्यम्येति उत्तरपाणिं (? उत्तरीयात् पाणिं) उद्धृत्य उत्थानं कृत्वेत्यर्थः । सूत्रकृतोऽयं व्यतिक्रमः (? सूत्रोपव्यानस्य) सर्वदा विहित-त्वात् वसनोपव्यानमेतत् । तेनायमर्थः– हस्तः उत्क्षेप्तव्यः, न पुनः समीपवर्तिनि संलग्नः कर्तव्यः । प्रश्ननिषेधावसरे च तेनाभिनेतव्यम्, न तु प्रव्याणादिना । अनेन व्यवहार-दर्शने तात्पर्यं ख्यापितं भवति । प्रायेण हि पुरुषाः कार्येषु प्रयत्नवन्तो हस्तमुद्यच्छन्ति । यथासुखोपविष्टे व्रजति कर्तारं ततश्च परिजने तदेतद्राजा वित्तं न ददाति सभ्यैर्निर्भयैर्वयं जिता इति (?)। पाणिग्रहणं बाहूपलक्षणार्थम् । केवलस्य हि हस्तस्य यावद्व्यवहार-दर्शनं व्यापारणं पीडाकरम् । न चायमदृष्टार्थ उपदेशः । विनीतवेषाभरण इति । पूर्वश्लोके बाह्याभ्यन्तरेन्द्रियविषया-वधानार्थोऽभिहितः । अयं तावल्लोकानां शालीनतया सुखोपसर्पणार्थः । उद्धतवेषे हि राजनि तथाविधानामप्रति-पत्तिः स्यात् । अत उद्धतवेषाभरणं न कथंचित् स्यात् । वेषः केशवसनविन्यासादिविशेषः । आभरणं कर्णिकादि । तत्र उद्धतवेषः ऊर्ध्ववस्त्रो जवनरक्ताम्बरधारितेत्यादि । उद्धताभरणः दीप्तिमद्बहुरत्नालंकारो बहुहारश्च । स हि आदित्य इव दुर्निरीक्ष्यः सामान्यजनानां विशेषतो-ऽभियुक्तानाम् । पश्येदिति सभाप्रवेशस्य प्रयोजनमाह । पश्येत् विचक्षणः । अयं च राज्ञो दर्शनोपदेशो दण्ड-प्रणयने यथास्थानार्थप्रतिपादनपर्यन्तो भविष्यति । तात्पर्ये तस्यैव रक्षाधिकारः प्रयुक्तः स्यात् । ईदृशस्य च दर्शनस्यान्येषामसंभावनादनधिकारः । सर्वेषां संशयच्छेद-मात्रफलं तु व्यवहारदर्शनं प्रायश्चित्तोपदेशवत् विदुषो ब्राह्मणस्यास्त्येव । उक्तं हि– 'धर्मसंकटेषु ब्रूयात्' इति । तथा एकवर्ग्याणां वाणिज्यकर्षकपशुपालप्रभृतीनां स्ववर्गसामयिकार्थविप्रतिपत्तौ अन्यस्यां बोत्सुकनिर्णयाद् भूतिरिति (?) तथाविधव्यवहारदर्शने नियोगः । तथा-हि पठितम्– 'कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः । प्रतिष्ठा व्यवहाराणां गुर्वेभ्यस्तूत्तरोत्तरम् ॥' (नास्मृ. १।७) इति । अतश्च यत्कैश्चित्पश्येदिति परिसंख्यार्थत्व-

* शेषं ममुगतम् ।

(१) मस्मृ. ८।२; राकौ. ३८२.

-मारोप्य ब्राह्मणादीनामधिकार आशङ्कितः पुनश्च क्लेशेन समर्थितः, तदयुक्तम्, विषयभेदादधिकारभेदात् (च)। स्वविषयो हि राज्ञो दण्डावधिकः, ब्राह्मणादीनां निर्णयावधिः। अधिकारोऽपि भिन्नः– राज्ञो राज्यस्थितिप्रयोजनम्, इतरेषां संशयच्छेदादेरपरोपकारकत्वम्। अतो नो वृत्तिसंकराशङ्कैव नास्ति। कार्यो विप्रतिपत्तिनिरासः। अर्थिनां विप्रतिपन्नयोर्हि साम्यं व्यवहारदर्शने राज्ञा कर्तव्यम्। नो चेत्संविदाने को राज्ञः स्वाधिगमे निरोधः? कायकशुद्धौ हि श्वानिरोधवानिति वक्ष्यामः (?)। * मेधा.

(२) आसीनः स्थितो वा, न तु शयानः। दक्षिणं पाणिमुद्यम्य अप्रावृतदक्षिणः इति यावत्। यज्ञोपवीतीत्यन्ये। कार्याणि व्यवहारान्। कार्यिणां व्यवहारिणाम्। नन्द.

**'यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम्।**
**तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥**

(१) 'अष्टादशपदाभिज्ञं प्राड्विवाकेतिसंज्ञितम्। आन्वीक्षिक्यां च कुशलं श्रुतिस्मृतिपरायणम् ॥'। कुतश्चिदतिपातिकार्यान्तरव्यासङ्गादपाटवाद्वा यदि स्वयं न पश्येत्तदा विद्वान् ब्राह्मणो नियोज्यः। विद्वत्ता च या व्यवहारविषया सा तदधिकारत एवार्थगृहीता। न हि यो यन्न जानाति स तत्राधिकारमर्हति। धर्मशास्त्रपरिज्ञानं तु रागद्वेषदोषेण विपरीतार्थावधारणनिवृत्त्यर्थमुपयुज्यते। धर्मज्ञस्तु सतोरपि रागद्वेषयोः शास्त्रभयेन न विपर्येतीत्युपयोगवद्धर्मशास्त्रपरिज्ञानम्। व्यवहारदर्शनं तु तदर्थगृहीतम्। येन विना न शक्यते व्यवहारनिर्णयः कर्तुं तद्विज्ञानं तदधिकाराक्षिप्तम्। यत्तु ज्ञात्वाऽन्यथा क्रियते तन्निवृत्तिरुपदेशान्तरविषया। वक्ष्यति चैवमर्थं यत्नान्तरमपि– 'वेदविदस्त्रयः। राज्ञश्च प्रकृतो विद्वान्' (मस्मृ. ८।११) इति। शास्त्रान्तरपरिज्ञानं तु व्यवहारे अविक्रियमाणस्यादृष्टाय स्यात्। 'नियोज्यो विद्वान् स्यात्' इति पठितव्यम्। नियुञ्ज्यादिति नियुञ्जीत। 'स्वराद्यन्तोपसृष्टात्' (वार्तिकम्) इति हि कातीया आत्मनेपदं स्मरन्ति। § मेधा.

(२) अत्रार्थे स्वयमसमर्थश्चेत् प्रतिनिधिं कुर्यादित्याह– यदेति। ब्राह्मणमेव नियुञ्ज्यात्, नान्यमिति नियमः। मच.

**'सोऽस्य कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः।**
**सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा ॥**

(१) सभ्यैरिति जातिविशेषानुपादानेऽप्युत्तरत्र विप्रग्रहणात् 'ब्राह्मणैः सह' (मस्मृ. ८।१) इति च पूर्वत्र ब्राह्मणग्रहणात् ब्राह्मणा एव विज्ञायन्ते। त्रिग्रहणं तु एकद्वयोः (?) प्रतिषेधार्थम्। त्रिप्रभृतयस्त्विष्यन्त एव। साक्षिप्रकरणे चैतद्वक्ष्यामः। सभामेव प्रविश्याग्र्यामिति। राजस्थानापरया सभां प्रविश्य स्थानासनेषु (? सभाप्रवेशस्थानासनेषु) तद्धर्मेषु पुनर्वचनं प्रदर्शनार्थं धर्मान्तरनिवृत्त्यर्थं वा। तेन राजस्थाने नोपविशति। * मेधा.

(२) सः ब्राह्मणः सभायां साधुभिः धार्मिकैः ब्राह्मणैः युक्तः तामेव राजसभां श्रेष्ठां प्रविश्य उपविष्टः स्थितो वा अस्य राज्ञो द्रष्टव्यान् व्यवहारान् संपश्येत्। † गोरा.

(३) तस्य प्रतिनिधेः कृत्यप्रकारमाह– सोऽस्येति। आसीनादिपदद्वयं गुरुलघुकार्यपरम्, चङ्क्रमणं प्रत्याचष्टे वा। × मच.

---

* गोरा., मवि., ममु., मच., भाच. मेधागतम्।

(१) मस्मृ. ८।९; मभा. १३।२६ दर्शने (दर्शिनम्); गौमि. १३।२६ यदा (यद्वा) दर्शनम् (निर्णयम्) दर्शने (निर्णये).

§ गोरा., मवि., ममु., नन्द., भाच. मेधागतम्।

* मवि., रार. मेधागतम्।

† ममु., भाच. गोरागतम्।

× शेषं गोरागतम्।

(१) मस्मृ. ८।१०; रार. १७ संपश्येत् (पश्येत) पू.

## याज्ञवल्क्यः

दण्ड्यदण्डनप्रयोजनकं व्यवहारदर्शनं सभ्यसहकृतस्य राज्ञः कर्तव्यम्

**†यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत्।**
**इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ॥[1]**

दण्डादिफलेन स्वर्गेणैव सफलं दण्डप्रयोजकं व्यवहारदर्शनमिति व्यवहारो राज्ञा द्रष्टव्य इत्याह– य इति। यः राजा दण्ड्यान् वधव्यतिरिक्तदण्डार्हान् सम्यक् शास्त्रानुसारेण दण्डयेत् अर्थाद्वधातिरिक्तेन, वध्यान् वधार्हान् सम्यक् शास्त्रोक्तप्रकारेण वीरणवेष्टनपूर्वकदाहादिना घातयेत्। चकारेण अकार्यिणां संदेहादिमतां संदेहाद्यपाकरणं समुच्चीयते। तेन राज्ञा सहस्रशतसुवर्णरूपभूरिदक्षिणैः क्रतुभिरिष्टं स्यात्। तादृशक्रतुजन्यफलभाजा भवितव्यमिति यावत्। 'समाप्तवरदक्षिणैः' इति क्वचित् पाठः। तत्र समाप्ता पर्याप्ता वरा भूयसी दक्षिणा येषां तैरित्यर्थः। वीमि.

**[2]इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक्।**
**व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥**

(१) दण्ड्यादण्ड्यवध्यावध्यविवेकक्लृप्त्यर्थमाह– इति संचिन्त्येति। पृथक् विविक्तानित्यर्थः। यद्वा क्रतुतुल्यफलं पृथगिति संबन्धः। एकैकदण्डने क्रतुफलप्राप्तिरित्यर्थः। विश्व.

(२) दुष्टे सम्यग्दण्डः प्रयोक्तव्य इत्युक्तम्, दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्तव्यमित्याह– इति संचिन्त्येति। इति एवमुक्तप्रकारेण क्रतुतुल्यं फलं दण्ड्यदण्डेन स्वर्गादिनाशं च अदण्ड्यदण्डेन सम्यग्विचिन्त्य पृथक् पृथक् वर्णादिक्रमेण सभ्यैः वक्ष्यमाणलक्षणैः परिवृतः प्रतिदिनं व्यवहारान् वक्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत्। मिता.

(३) पृथक् कार्यान्तरासंकरेण। * अप.

(४) साध्यमूलविवादः व्यवहारः। स तु प्रजानामेव, नृपस्य तदीशत्वादिति न राजेश्वरेण न्यायपथादुत्पथिकस्य धर्मभङ्गभिया व्यवहारो द्रष्टव्य एव विशेषपुरस्कारेण अन्यथा 'स्वतन्त्रः पृथिवीपतिः' इत्यस्य कृतनिवृत्त्यप्रसङ्गः स्यात् (?)। रार. ६४

(५) स्वयं व्यवहारान् भाषोत्तररूपान् पृथक्पृथक् प्रत्यहं पश्येत् निर्णयार्थं विचारयेत्। स्वयमिति सति संभवे। अन्यथा तु 'अपश्यता कार्यवशात्' (यास्मृ. २।३) इति अग्रिमाध्याये वक्ष्यते। इमामेव व्यवस्थामभिप्रेत्य बृहस्पतिरपि– 'राजा कार्याणि संपश्येत् प्राड्विवाकोऽथवा द्विजः। न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥' इति। मनुः– 'यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्। तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥' (मस्मृ. ८।२१)। व्यासः– 'द्विजान् विहाय यः पश्येत् कार्याणि वृषलैः सह। तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषश्च नश्यति ॥'। एतेन शूद्रसहायताऽपि निरस्ता। † वीमि.

व्यवहारदर्शने प्रमाणं धर्मशास्त्रानुसारी क्रोधादिदोषरहितो राजा

**[1]व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥**

(१) श्रियः समुदयं प्राप्तुमिच्छता विजिगीषुणा समृद्ध्यै राज्ञा प्रयत्नादमित्रराज्यान्याच्छिद्य स्वराज्यं विवर्धनीयमित्युक्तम्। तत्रापि कष्टतमाः खल्वरयः कापटिककुयन्त्रव्यवहारिणो दस्यवः। तेभ्योऽपि राष्ट्रं

---

† वीमिव्याख्यानेऽस्य व्यवहारदर्शनपरत्ववर्णनादयं श्लोकः वीमिव्याख्यानसहितोऽत्र संगृहीतः।

(१) **यास्मृ.** १।३५९. शेषः स्थलादिनिर्देशः 'उपायाः– दण्डः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(२) **यास्मृ.** १।३६०; **विश्व.** १।३५६; **मिता.**; **अप.** १।३५८–३५९; **रार.** ६४; **वीमि.**; **राप्र.** २९१.

† शेषं मितागतम्।

(१) **यास्मृ.** २।१; **विश्व.**; **मिता.**; **अप.**; **रार.** ८ प्रथमचरणमात्रम्; **वीमि.**; **राप्र.** १२२ प्रथमचरणमात्रम्; **राकौ.** ३८२.

रक्षणीयमित्येतदप्युक्तम् । अथेदानीं तदुद्धरणप्रकारविवेकार्थं व्यवहारनिरूपणं प्रस्तौति— व्यवहारानिति । ननु चैतत् प्रागेवोक्तम् 'इति संचिन्त्य नृपतिः' इत्यत्र । सत्यम् । गुणार्थस्त्वयमारम्भः । न कोशसंचिचीषया अर्थप्रधानो भवेत्, धर्मशास्त्रानुसारेणैव व्यवहारान्नृपः पश्येदित्यर्थः । किंच, विद्वद्भिर्ब्राह्मणैः सह । प्रवक्तृत्वेऽपि ब्राह्मणानां नृपसहायोपयोगितैव । द्रष्टा तु निग्रहानुग्रहसामर्थ्याद्राजैव । अत एवोक्तम्— क्रोधलोभविवर्जित इति । समर्थेनापि धर्मशास्त्रानुसारिणा भाव्यम्, न क्रोधादिवशेनान्यथा व्यवहर्तव्यमित्यर्थः । एकत्वेऽपि व्यवहारस्य स्वकीयविशेषापेक्षया बहुवचनम् । यथाऽऽह मनुः— 'तेषामाद्यमृणादानम्' ( मस्मृ.८।४ ) इत्यादि । नारदश्च— 'चतुष्पादश्चतुर्व्यापी' ( नासं. १।८ ) इत्यादि ।                                                   विश्व.

( २ ) अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न संभवति । दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण संभवति । तत् व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तम्— 'व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम्' ( यास्मृ. १।३६० ) इति । स च व्यवहारः कीदृशः कतिविधः कथं चेति इतिकर्तव्यताकलापो नाभिहितः । तदभिधानाय द्वितीयोऽध्याय आरभ्यते— व्यवहारानिति । अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः । यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति । तस्य अनेकविधत्वं दर्शयति बहुवचनेन । नृप इति न क्षत्रियमात्रस्यायं धर्मः, किंतु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति । पश्येदिति पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः । विद्वद्भिः वेदव्याकरणादिधर्मशास्त्राभिज्ञैः । ब्राह्मणैः, न क्षत्रियादिभिः । ब्राह्मणैः सह इति तृतीयानिर्देशादेषामप्राधान्यम्, 'सहयुक्तेऽप्रधाने' ( पा. २।३।१९ ) इति स्मरणात् । अतश्चादर्शने अन्यथादर्शने वा राज्ञो दोषः, न ब्राह्मणानाम् । यथाऽऽह मनुः— 'अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' ( मस्मृ. ८।१२८ ) इति । कथम् ? धर्मशास्त्रानुसारेण, नार्थशास्त्रानुसारेण । देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम् । तथा च वक्ष्यति— 'निजधर्माविरोधेन यस्तु सामयिको भवेत् । सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥' (यास्मृ. २।१८६ ) इति । क्रोधलोभविवर्जित इति । धर्मशास्त्रानुसारेणेति सिद्धे क्रोधलोभविवर्जित इति वचनमादरार्थम् । क्रोधः अमर्षः । लोभः लिप्सातिशयः ।                                                   मिता.

( ३ ) व्यवहारान् वादिप्रतिवादिनोर्भाषोत्तरक्रियात्मकान् विवादान् नृपः जनपदपरिपालकः विद्वद्भिः व्यवहारशास्त्रार्थज्ञैः विप्रैः सहितः लिखितसाक्ष्यादिप्रमाणपुरःसरतया क्रोधलोभादिविकारदोषगणमपहाय पश्येत् परीक्षेत । यद्यपि धर्मशास्त्रानुसारितयैव क्रोधादिवर्जनं प्राप्तं तथाऽपि प्राधान्येन क्रोधादिवर्जनस्य पृथगुपादानम् । न हि क्रोधादिमान् धर्मं शक्नोति व्यवस्थापयितुम् । अतो धर्मशास्त्रोक्तलिखितसाक्ष्यादिप्रमाणगण इव क्रोधादिविरहो नृपवर्ती धर्मव्यवस्थितौ प्रधानं साधनम् । क्रोधः जिघांसा । तथा च द्वेष उपलक्ष्यते । उत्कोचादिरूपेण परवित्तलिप्सा लोभः । अज्ञानप्रमादावप्यत्र वर्जनीयतया द्रष्टव्यौ ।                                                   अप.

( ४ ) ऋणादानादिनानाविवादपदविषयसंशयः निराक्रियते अनेनेति नानासंशयहारी विचारो व्यवहारः । तथा च कात्यायनः— 'वि नानार्थेऽव संदेहे हरणं हार उच्यते । नानासंदेहहरणाद्व्यवहार इति स्मृतः ॥' । तान् व्यवहारान् भूपतिः स्वयं निर्णयेत् धर्मशास्त्रज्ञैर्ब्राह्मणैः सह धर्मशास्त्रोक्तभाषोत्तरक्रियानिर्णयानुसारेण, न क्रोधद्वेषेण, न लोभात्, न पक्षपातेन ।                                                   § दीक.

( ५ ) विद्वद्भिः व्यवहारशास्त्राभिज्ञैः ब्राह्मणैः सह नृपः क्रोधलोभाभ्यां विशेषतो वर्जितः सन् धर्मशास्त्रानुसारेण अविरोधेन 'विनीतवेशो नृपतिः सभां गत्वा

---

§ शेषं मितागतम् ।

समाहितः । आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम् ॥' इत्यादिप्रकारेण च व्यवहारान् भाषोत्तरक्रियारूपान् पश्येत् विचारयेत् । नृपपदेन क्षत्रियातिरिक्तस्यापि प्रजापालकस्य ग्रहणम् । ब्राह्मणैरिति मुख्यः कल्पः । असंभवे क्षत्रियैर्वैश्यैर्वा सहेति प्रागुक्तम् । धर्मशास्त्रस्य प्राधान्यं दर्शयितुं विशेषोपन्यासः, विचारेऽर्थशास्त्रस्याप्यनुसरणीयत्वात् । तदुक्तं कात्यायनेन– 'धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः'। धर्मशास्त्रार्थशास्त्रयोर्विरोधे तु बलाबलमग्रे वक्ष्यति । धर्मशास्त्रानुसार्यपि निर्णयो न वादिक्षोभकरपरुषभाषणपराजिताधिकदण्डादियुक्तः कार्य इति दर्शयितुं क्रोधलोभविवर्जितत्वमुक्तम् । वीमि.

सभ्यलक्षणानि

**'श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥**

(१) यतश्च धर्मशास्त्रप्राधान्यं व्यवहारदृष्टौ, अत आह– श्रुताध्ययनेति । निगदोक्तः श्लोकः । विश्व.

(२) सभ्यांश्चाऽऽह– श्रुतेति । किंच, श्रुताध्ययनसंपन्नाः श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन संपन्नाः । धर्मज्ञाः धर्मशास्त्रज्ञाः । सत्यवादिनः सत्यवचनशीलाः । रिपौ मित्रे च ये समाः रागद्वेषादिरहिताः । एवंभूताः सभासदः सभायां संसदि यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्तव्याः । यद्यपि श्रुताध्ययनसंपन्ना इत्यविशेषेणोक्तं तथाऽपि ब्राह्मणा एव । यथाऽऽह कात्यायनः– 'स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥' इति । ते च त्रयः कर्तव्याः, बहुवचनस्यार्थवत्त्वात्, 'यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः' (मस्मृ. ८।११) इति मनुस्मरणाच्च । बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह– 'लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥' इति । न च 'ब्राह्मणैः सह' इति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसंपन्ना इत्यादि विशेषणमिति मन्तव्यम्, तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासंभवात्, विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च । तथा च कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः– 'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥' इति । तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु नियुक्ता इति भेदः । अत एवोक्तम्– 'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति' इति । तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति तदाऽसौ निवारणीयः, अन्यथा दोषः । उक्तं च कात्यायनेन– 'अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥' इति । अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषः, न तु राज्ञोऽनिवारणे, 'सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन् विब्रुवन्वाऽपि नरो भवति किल्बिषी ॥' (मस्मृ. ८।१३) इति मनुस्मरणात् । रिपौ मित्रे चेति स्मरणाल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम् । यथाऽऽह कात्यायनः– 'कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् ॥' इति । *मिता.

(३) ततश्च यद्गुणकास्ते कार्यास्तानाह– श्रुताध्ययनेति । श्रुतं वेदवाक्यार्थज्ञानोपयोगि मीमांसाया वेदाङ्गानां च कल्पनिरुक्तव्याकरणानामाचार्यादर्थज्ञानम् । अध्ययनं प्रसिद्धम् । ताभ्यां संपन्नाः उपेताः । धर्मज्ञाः धर्मशास्त्रज्ञाः । धर्मशास्त्राण्याह पितामहः– 'वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा । एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम् ॥' । सत्यवदनशीलाः मित्रामित्रयोः रागद्वेषाभावेन समोपदेशकारो राज्ञा सभासदः कार्याः मानदानाभ्यामापाद्याः । सभायां सीदन्तीति सभासदः । एते बहुशास्त्रज्ञा ब्राह्मणाः, तदलाभे तादृशाः क्षत्रियाः, तदलाभे तादृशा एव वैश्याः । तदाह

(१) यास्मृ. २।२ ; विश्व. धर्मज्ञाः (कुलीनाः) ; मिता. ; अप. ; वीमि.

* दीक., वीमि. मितागतं अपगतं च ।

कात्यायनः— 'अलुब्धा धनवन्तश्च धर्मज्ञाः सत्यवादिनः। सर्वशास्त्रप्रवीणाश्च सभ्याः कार्या द्विजोत्तमाः ॥ एकं शास्त्रमधीते यो न विद्यात्कार्यनिश्चयम्। तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः ॥ यत्र विप्रो न विद्वान् स्यात्क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥ अतोऽन्यैर्यत्कृतं कार्यमन्यायेन कृतं तु तत्। नियुक्तैरपि विज्ञेयं दैवाद्यद्यपि शास्त्रतः ॥'। मनुः— 'जातिमात्रोपजीवी वा वरं स्याद्ब्राह्मणध्रु(? ब्रु)वः। धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्। तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥' (मस्मृ. ८।२०-२१)। व्यासः— 'द्विजान् विहाय यः पश्येत्कार्याणि वृषलैः सह। तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति ॥'। बृहस्पतिः— 'देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः। उन्मत्तक्रुद्धलुब्धार्ता न प्रष्टव्या विनिर्णये ॥'। मनुः— 'स्मृतिशास्त्रे त्वविज्ञाते दुर्ज्ञाते वाऽविवेकतः। धर्मकार्ये महान्दोषः सभायां वदतः सदा ॥ शब्दाभिजनतत्त्वज्ञौ गणनाकुशलौ शुची। नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥ आकारके(? णे) रक्षणे च साक्ष्यर्थिप्रतिवादिनाम्। सभ्याधीनः सत्यवादी कर्तव्यस्तु स्वपूरुषः ॥'।  अप.

राजनियुक्तः ससभ्यो ब्राह्मणो व्यवहारदर्शनाधिकारी

**'अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥**

(१) दृष्टमूलत्वाच्च राज्ञः स्वयं व्यवहारदर्शनस्मृतेः, अदृष्टार्थत्वेऽपि च प्रयोजनानुसारात् कार्याणां गुरुलघुत्वे समीक्ष्य— अपश्यतेति। सोऽपि राजस्थानीयत्वात् क्रोधादिरहित एव स्यात्।  विश्व.

(२) 'व्यवहारान्नृपः पश्येत्' इत्युक्तम्। तत्रानुकल्पमाह— अपश्यतेति। कार्यान्तरव्याकुलतया व्यवहारानपश्यता नृपेण पूर्वोक्तैः सभ्यैः सह सर्वधर्मवित् सर्वान् धर्मशास्त्रोक्तान् सामयिकांश्च धर्मान्वेत्ति विचारयतीति सर्वधर्मवित् ब्राह्मणः, न क्षत्रियादिः नियोक्तव्यो व्यवहारदर्शने। तं च कात्यायनोक्तगुणविशिष्टं कुर्यात्। यथाऽऽह— 'दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥' इति। एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं वा नियुञ्जीत, न शूद्रम्। यथाऽऽह कात्यायनः— 'ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥' इति। नारदेन त्वयमेव मुख्यो दर्शितः— 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः। समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥' (नासं. १।२९) इति। प्राड्विवाकमते स्थितः, न स्वमते स्थितः राजा। चारचक्षुषा परसैन्यं पश्यतीतिवत्।  * मिता.

(३) प्राड्विवाकविधिमाह— अपश्यतेति। स्वयं (? अयं) च प्राड्विवाकसंज्ञकब्राह्मणः राजन्योऽपि (? न्यपि) व्यवहारान् पश्यति नियोक्तव्य एव। यदाह नारदः— 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः। समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥' (नासं. १।२९)। राजा चेत् व्यवहारान् पश्यति प्राड्विवाकोऽनुमन्ता, अन्यदा तु व्यवहारद्रष्टा। अत एव वृद्धबृहस्पतिः— 'राजा कार्याणि संपश्येत् प्राड्विवाकोऽथवा द्विजः। न्यायाङ्गान्यग्रतः कृत्वा सत्यशास्त्रमते स्थितः ॥ विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च। प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥ व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति श्रुतिः। विवदेत्तत्र यस्तस्मिन् प्राड्विवाकस्तु स स्मृतः ॥'। नारदः— 'यथा शल्यं भिषक् कायादुद्धरेद्यन्त्रयुक्तितः। प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः ॥' (नासं. १।७८)। गौतमः— 'सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनम्' (गौध. १३।२१)।  † अप.

(४) देशकालजात्यादिसकलधर्माभिज्ञः। योग्यब्राह्मणाभावे क्षत्रियवैश्यावपि नियोक्तव्यौ। यथाऽऽह कात्यायनः— 'यदि विप्रो न विद्वान् स्यात् क्षत्रियं तत्र

(१) वास्मृ. २।३; विश्व.; मिता.; अप.; वीमि.; राकौ. ३८४.

* वीमि. मितागतं अपगतं च।

† शेषं मितागतम्।

योजयेत् । वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥' । तथा च मनुः— 'जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः । धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् । तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥' ( मस्मृ. ८।२०–२१ ) । दीक.

## नारदः

धर्मशास्त्रप्रमाणेन व्यवहारदर्शने दण्ड्यदण्डने च अधिकारी राजा प्राड्विवाकसहकृतः

**[1]नष्टे धर्मे मनुष्येषु व्यवहारः प्रकल्पितः ।**
**द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः ॥**

नष्टे धर्मे मनुष्येषु । कालदोषान्नष्टे । नाश( शब्दः ? )श्च अधर्मानुबन्धः । मनुष्यग्रहणं देवनिवृत्त्यर्थम् । व्यवहारः न्यायः अन्यायनिवृत्त्यर्थं मन्वादिभिः शिष्टैः प्रवर्तितः । द्रष्टा च तस्य न्यायस्य राजा अन्यायप्रवृत्तानां दण्डस्य धारयिता सामर्थ्यात् स्वधर्मस्थानामनुग्राहकश्च कृतः । नाभा.

**[2]धर्मेणोद्धरतो राज्ञो व्यवहारान् कृतात्मनः ।**
**संभवन्ति गुणाः सप्त सप्त वह्नेरिवार्चिषः ॥**

धर्मेण शास्त्रोक्तेन न्यायेन उद्धरतः निर्णयतः व्यवहारान् कृतात्मनः । कृतात्मत्वं अनौदासीन्यम् । प्रादुर्भवन्ति गुणाः सप्त वक्ष्यमाणाः अग्नेर्यथा सप्तार्चिषः, 'सप्तजिह्वा' इति दर्शनात् । सम्यग्व्यवहारदर्शननिमित्तैर्गुणैः तस्य स्तुत्या कर्तव्यतोच्यते । नाभा.

**[3]धर्मश्चार्थश्च कीर्तिश्च लोकपक्तिरुपग्रहः ।**
**प्रजाभ्यो बहुमानं च स्वर्गे स्थानं च शाश्वतम् ॥**

धर्मः शिष्टानुग्रहात् स्वधर्मानुष्ठानात् । अर्थस्तत एव निष्पद्यते । कीर्तिः अपक्षपातात् 'साधुकारी' इति ।

---

( १ ) नासं. १।२ ; नास्मृ. १।२ ष्येषु ( ष्याणां ) कल्पितः ( वर्तते ) कृतः ( स्मृतः ).

( २ ) नासं. १।२६ ; नास्मृ. १।३२ .

( ३ ) नासं. १।२७ स्वर्गे( स्वर्गो ) ; नास्मृ. १।३३.

लोकपक्तिः दुष्टनिग्रहात् । उपग्रहः आश्रयणीयत्वात् अविसंवादात् धर्मे सर्वहितत्वात् । प्रजाभ्यः पूजा च । स्वर्गवासश्च नित्यम्, 'राजभिर्धृतदण्डाः' ( वस्मृ. १९।३० ) इत्यादिश्रवणात् दुष्टानामपि स्वर्गप्रापणात् शिष्टदुष्टानुग्रहनिमित्तात् धर्मतः । नाभा.

**[1]तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः ।**
**समः स्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥**

यस्मादेते गुणाः तस्मात् धर्मासनस्थः विगतमत्सरः विगतलोभः । तथा च 'मत्सर इति लोभनाम' इत्युक्तं निरुक्ते । समः प्रियद्वेष्ययोस्तुल्यः । एतदेव वैवस्वतं व्रतम् । नाभा.

**[2]धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।**
**समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥**

( १ ) प्राड्विवाकमते स्थितः, न स्वमते स्थितः राजा । चारचक्षुषा परसैन्यं पश्यतीतिवत् । तस्य चेयं यौगिकी संज्ञा । अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् । तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवेचयति वेति विवाकः । प्राट् चासौ विवाकश्च प्राड्विवाकः । उक्तं च— 'विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥' इति । मिता. २।३

( २ ) राजा चेद्व्यवहारान् पश्यति प्राड्विवाकोऽनुमन्ता, अन्यदा तु व्यवहारद्रष्टा । अप. २।३

( ३ ) धर्मशास्त्रं प्रमाणं कृत्वा, धर्मशास्त्रोक्तचिकीर्षयेत्यर्थः । प्राड्विवाकसहायः, तेन सह विचार्येत्यर्थः । प्राड्विवाकः धर्मपाठकः । पृच्छतीति प्राट्, विविधान् नयान् वदतीति विवाकः । पूर्वपक्षोत्तरपक्षौ पृच्छति, विविधान् नयान् वदतीत्यर्थः । संपदादिपाठात् भावे वा क्विप् । प्रश्नान् विशेषेण अपाकरोतीति प्राड्विवाकः । समाहितमतिः अव्यग्रचित्तः । व्यग्रचित्तः

---

( १ ) नासं. १।२८ ; नास्मृ. १।३४.

( २ ) नासं. १।२९ ; नास्मृ. १।३५ ; मिता. २।३ ; अप. २।३ ; राकौ. ३८३ .

कदाचिदन्यथा कुर्यात् । अनुक्रमात् अनु परिपाट्या यस्य व्यवहारस्य यः क्रम उक्तस्तेन क्रमेण । नाभा.

[1]एवं पश्यन्सदा राजा व्यवहारान् समाहितः ।
वितत्येह यशो दीप्तं ब्रध्नस्याऽऽप्नोति विष्टपम् ॥

एवं परीक्ष्य सार्वकालं व्यवहारान् पश्यन् समाहितः अप्रमादेन इमं लोकं प्रकृष्टेन यशसा व्याप्याऽऽदित्यस्थानं प्राप्नोति । नाभा.

प्राड्विवाकलक्षणम्, व्यवहारशल्योद्धरणं प्राड्विवाककर्तव्यम्

[2]अष्टादशपदाभिज्ञः षड्भेदाष्टसहस्रवित् ।
आन्वीक्षिक्यादिकुशलः श्रुतिस्मृतिपरायणः ॥
[3]विवादसंश्रितं धर्मं पृच्छति प्रकृतं मतम् ।
विवेचयति यस्तस्मात्प्राड्विवाकस्तु संस्मृतः ॥
[4]यथा शल्यं भिषग्विद्वानुद्धरेद्यन्त्रयुक्तिभिः ।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः ॥

यथा शल्यं शस्त्रं कायनिमग्नं वैद्यशास्त्रकुशलः शास्त्रोक्तयन्त्रयुक्त्या समुद्धरति एवं शक्यमुद्धर्तुं सुखं चास्य भवतीत्युपपत्त्या । तथा प्राड्विवाकः शल्यस्थानीयमन्यायं उद्धरेत् निरस्येदित्यर्थः, व्यवहारेण वादिप्रतिवादिसाक्षिवचनयुक्तिभिः । नाभा.

राजनियुक्तसभ्यलक्षणम्

[5]राजा तु धार्मिकान्सभ्यान्नियुञ्ज्यात्सुपरीक्षितान् ।
व्यवहारधुरं( ? धुरां ) वोढुं ये शक्ताः सद्गवा इव ॥

(१) नासं. १।६५ ; नास्मृ. १।७४ ब्रध्नस्याऽऽप्नोति ( प्रेत्याऽऽप्नोति त्रि ).

(२) मेधा. ८।९ ( अष्टादशपदाभिज्ञं प्राड्विवाकेति-संज्ञितम् । आन्वीक्षिक्यां च कुशलं श्रुतिस्मृतिपरायणम् ॥ ); पमा. ( व्यवहारः ) २८.

(३) पमा. ( व्यवहारः ) २८.

(४) नासं. १।७८ ; नास्मृ. ३।१६ युक्तिभिः ( शक्तितः ) ; अप. २।३ विद्वानु ( कायादु ) क्तिभिः ( क्तितः ).

(५) नासं. १।६८ ; नास्मृ. ३।४ ; रार. २० सद्गवा ( सद्वृषा ).

[1]धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥

(१) व्यवहारोऽत्र विचारः । धर्मशास्त्रार्थकुशलाः मन्वादिधर्मशास्त्राणामर्थे कुशला इति प्राञ्चः । नव्यास्तु —अत्र धर्मशास्त्रं मुनिप्रणीतधर्मप्रयोजकशास्त्रमात्रम्, तेन मीमांसादेरपि संग्रह इति । मन्मते उभयोरविरोधः, प्रथमे आदिपदोपादानात् । परंतु धर्मशास्त्रं मन्वादिप्रणीतम्, अर्थस्तु अर्थशास्त्रं राजनीत्यादि । 'यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः' ( नासं. १।३३ ) इति नारदवचनात् अर्थशास्त्रस्यापि निर्णायकत्वावगमादिति लक्ष्मीधरेणात्रैव व्याख्यातमिति युक्तम् । रार. २०

(२) तुशब्दोऽवधारणार्थः । राजा स्वयमेव, न परप्रत्ययेन । धार्मिकान् सभ्यान् सभार्हान् नियुञ्ज्यात् अधिकरणे । सुपरीक्षितान् सम्यगुपधाभिः शुद्धान् । व्यवहारस्य धूः व्यवहारधूः ( ? धुरा ) । 'ऋक्पूरब्धूः०' ( पा. ५।४।७४ ) इति समासान्तः । तां व्यवहारधुरं ( ? रां ) वोढुं ये शक्ताः सद्गवा इव अक्षधुरम् । ते विशेष्यन्ते— धर्मेति । धर्मशास्त्रस्य अर्थाः धर्मशास्त्रार्थाः, तेषु कुशलाः विवेकज्ञा इत्यर्थः । कुले जाताः कुलीनाः, सर्वे एव कुलजाः । तत्र कुलग्रहणात् प्रख्यातकुलजाता इति गम्यते । यथा 'अभिरूपाय कन्या देया' इति अनभिरूपाय प्रसङ्गाभावात् अभिरूपतमायेति गम्यते । सत्यं वदितुं शीलं येषां ते सत्यवादिनः । तथाभूता अपि द्वेषादिनाऽन्यथा कुर्युरित्यत आह— समाः शत्रौ च मित्रे च । रागद्वेषरहिताः । ते हि लज्जया नान्यथा कुर्वन्ति । तस्मादीदृशा नृपतेः सभासदः । सभायां सीदन्तीति सभासदः । अन्येषामपि सभायामासनाविरोधात् प्रकर्षो गम्यते, नियुक्ताः स्युरित्यर्थः । नाभा.

[2]तत्प्रतिष्ठः स्मृतो धर्मो धर्ममूलाश्च पार्थिवाः ।
सह सद्भिरतो राजा व्यवहारान् विशोधयेत् ॥

(१) नासं. १।६९ ; नास्मृ. ३।५ ; रार. २०.

(२) नासं. १।७० ; नास्मृ. ३।६ मूलाश्च पार्थिवाः ( मूलश्च पार्थिवः ).

विशिष्टनियोजने कारणमाह— तत्प्रतिष्ठः । तेषु सभ्येषु प्रतिष्ठित इति तत्प्रतिष्ठः स्मृतः शास्त्रेषु । धर्मस्तद्वशात् प्रवर्तते । धर्ममूलाश्च धर्मो मूलं निमित्तं येषां ते धर्ममूलाः । ते पूर्वकृताः इहकृताः इहानुरागनिमित्ताः प्रेत्य च सद्गतेः । अतो धर्ममूला राजानः । तस्मात् सह सद्भिर्व्यवहारान् विशोधयेत्, तैर्विचार्य निर्दोषान् पश्येदित्यर्थः । नाभा.

## बृहस्पतिः

राजा प्राड्विवाको वा सभ्यानां धर्मशास्त्रस्य च मतानुसारेण व्यवहारदर्शनाधिकारी, प्राड्विवाकसभ्यलक्षणम्

[1]भद्रासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥

[2]राजा कार्याणि पश्येत प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥

पृच्छति विविनक्ति चेति प्राड्विवाकः । 'विचारणपर्यन्तमेव प्राड्विवाकधर्मः' इति पल्लवकारः । 'न्यायाङ्गानि वह्निजलादीनि, तान्यग्रतः कृत्वेति स्वरसाद्दण्डादिरपि' इति लक्ष्मीधरः । वस्तुतस्तु यथा नृपाज्ञा तथा कुर्यादिति । व्यवहारोऽपि तथैव । रार. १६

[3]विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥

[4]साधुकर्मक्रियायुक्ताः सत्यधर्मपरायणाः ।
अक्रोधलोभाः शास्त्रज्ञाः सभ्याः कार्या महीभुजा ॥

(१) राकौ. ३८२.

(२) अप. २।३ पश्येत (संपश्येत्) सभ्य (सत्य) वृद्धबृहस्पतिः; रार. १६; वीमि. १।३६० पश्येत (संपश्येत्) वाको (वेको) ग्रतः (ग्रहं).

(३) अप. २।३ वृद्धबृहस्पतिः; रार. १६.

(४) रार. २०.

## वृद्धबृहस्पतिः

प्राड्विवाकलक्षणम्

[1]व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति श्रुतिः ।
विवदेत्तत्र यस्तस्मिन् प्राड्विवाकस्तु स स्मृतः ॥

## कात्यायनः

प्राड्विवाकामात्यपुरोहितसभ्यसहकृतः सभागतो राजा व्यवहारदर्शनाधिकारी

[2]विनीतवेषो नृपतिः सभां गत्वा समाहितः ।
आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम् ॥

[3]सह सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ।
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥

*[4]सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥

व्यवहारदर्शने राजनियुक्तो ब्राह्मणादिर्वा अधिकारी, अधिकारलक्षणम्, राजनियुक्तसभ्यलक्षणम्, शूद्रो वर्ज्यः

[5]यदा कार्यवशाद्राजा न पश्येत्कार्यनिर्णयम् ।
तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम् ॥

अन्यकार्यासक्तः स्वयं यदि निर्णेतुमशक्तस्तदा राजा उक्तलक्षणं ब्राह्मणं न्यायकारित्वे नियुञ्ज्यादित्यर्थः । रार. १६

[6]दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥

* मिताव्याख्यानं 'श्रुताध्ययनसंपन्नाः' (यास्मृ. २।२) इति याज्ञवल्क्यवचने (पृ. १८२०) द्रष्टव्यम् ।

(१) अप. २।३.

(२) राकौ. ३८३.

(३) रार. ७७ उत्त.; राकौ. ३८३.

(४) मिता. २।२; राकौ. ३८३.

(५) रार १६.

(६) मिता. २।३.

[१]अलुब्धा धनवन्तश्च धर्मज्ञाः सत्यवादिनः ।
सर्वशास्त्रप्रवीणाश्च सभ्याः कार्या नृपैर्द्विजाः ॥
[२]एकं शास्त्रमधीते यो न विद्यात्कार्यनिश्चयम् ।
तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः ॥
[३]यत्र विद्वान्न विप्रः स्यात्क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥
वृषलस्य धर्मशास्त्रज्ञानेऽपि धर्मनिर्णयार्थं न नियुञ्जीत ।
रार. २१

राजनिर्णयः अविचाल्यः

[४]क्षयोदयौ जीवनं च राजदैववशान्नृणाम् ।
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥

## व्यासः

प्राड्विवाकलक्षणम्, व्यवहारदर्शने द्विजाः सहकारिणः, न शूद्राः

[५]विवादानुगतं पृष्ट्वा ससभ्यस्तु प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥
[६]द्विजान्विहाय यः पश्येत्कार्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषश्च नश्यति ॥
एतेन शूद्रसहायताऽपि निरस्ता । वीमि. १।३६०

## बृहत्पराशरः

प्राड्विवाकादिनियुक्तिः

[७]प्राड्विवाकं सभास्तारान् ( राजा कुर्यात् ) ॥

( १ ) अप. २।२ नृपैर्द्विजाः ( द्विजोत्तमाः ); रार. २० लुब्धा ( लुब्ध ).
( २ ) अप. २।२; रार. २१ एकं ( एवं ) धीते यो ( धीयानो ) निश्च ( निर्ण ) ह्वागा ( द्दुर्गा ) षूत्तमो ( नोत्तमो ).
( ३ ) रार. २१. ( ४ ) रार. ६९.
( ५ ) मिता. २।३ (=) स्तु प्र ( स्तत्र ); रार. १७ पृष्ट्वा ( दृष्ट्वा ).
( ६ ) रार. २१ द्विजान् ( द्विजं ); वीमि. १।३६०.
( ७ ) बृपसं. १२।११ ( प्राड्विवाकान् समस्तान् वा ); राप्र. १७८ पराशरः.

## बुधः

व्यवहारदर्शनविधिः

[१]व्यवहाराननेकार्थान्निर्णयेत् ॥

## आश्वलायनः

सभालक्षणम्, व्यवहारदर्शनं शास्त्रीयव्यवहारप्रवर्तनं च राजकर्तव्यम्

[२]व्यवहारं दिदृक्षुस्तु सप्राणीकः(?) सभामियात् ।
न्यस्ताध(?स)नां माल्यवतीं वितानोपरिशोभिताम् ॥
सुप्रावृतां समतुलां विलिप्तां चन्दनाम्बुभिः ।
गुप्तां वप्रेक्षिभिर्द्वारैर्नानाधूपविधूपिताम् ॥
राजा सिंहासनासीनः सर्वाङ्गे कञ्चुकावृतः ।
हस्तं दक्षिणमुद्धृत्य व्यवहारं प्रकारयेत् ॥
विप्राञ्छास्त्रविदो वैश्याञ्छूद्रांश्च चतुरः प्रति ।
वृद्धान् मौलान् कुलीनांस्तु व्यवहारे हि ( ? नि-) वेशयेत् ॥
[३]यः शास्त्रबुद्धिर्निपुणो व्यवहारस्य सूक्ष्मवित् ॥
ईक्षेच्च धर्मतो नित्यं स राजा लभते महीम् ।
स्वर्गं कोशं महीमायुः श्रियं च विजयं यशः ॥
सुखं च लभते सम्यग्व्यवहारनिरीक्षणात् ।
एतानि राज्ञो नश्यन्ति व्यवहारानिरीक्षणात् ॥
तस्मात्परीक्ष्योऽमात्यादिव्यवहारपरो भवेत्(?) ।
आगोपालाविपालादिष्वजस्रं गतमत्सरः ॥
मर्यादां स्थापयेद्राजा पितृपैतामहीं ततः ।
स्नेहलोभौ परित्यज्य द्वेषं चैवारिमित्रयोः ॥
श्रुतिस्मृत्युक्तमार्गेण व्यवहारं प्रवर्तयेत् ।
अतद्विदस्त्वमात्यादींल्लुब्धान्द्वेषपरांश्च वा ॥
संत्यज्य दण्डयित्वा च व्यवहारं प्रवर्तयेत् ॥

( १ ) बुस्मृ. १।४५.
( २ ) आश्वस्मृ. ८।१३२–१३५.
( ३ ) आश्वस्मृ. ८।१४५–१५१.

## मत्स्यपुराणम्

व्यवहारदर्शनाधिकारी ब्राह्मणः, सभ्यनियुक्तिः

[1]समः शत्रौ च मित्रे च धर्मशास्त्रविशारदः।
विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत् ॥
कार्यास्तथाविधास्तत्र द्विजमुख्याः सभासदः ॥

## विष्णुधर्मोत्तरपुराणम्

व्यवहारदर्शनऽधिकारिणः कुलश्रेणिगणनृपाः, उत्तरोत्तरं तेषां गुरुत्वम्, विद्वत्सभ्यब्राह्मणसहकृतो धर्मशास्त्रानुसारी रागादिदोषरहितः राजाऽधिकारी ससभ्यो राजनियुक्तो ब्राह्मणादिर्वा, न शूद्रः

ऋषय ऊचुः–
[2]राज्ञो धर्मस्त्वया प्रोक्तो व्यवहारान्ववेक्षणम्।
तदस्माकं समाचक्ष्व त्वं हि सर्वविदुच्यसे ॥
हंस उवाच–
आसीत्कृतयुगे पूर्वं प्रजा धर्मनिबन्धनाः।
ततस्त्रेतायुगे तेषां (? तासां) धर्मो नाशमुपागमत् ॥
धर्मे नष्टे मनुष्याणां व्यवहारः प्रवर्तितः।
द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः ॥
कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः।
द्रष्टारो व्यवहाराणां गुरवो ह्युत्तरोत्तरम् ॥
व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।
धर्मशास्त्रानुसारेण रागद्वेषविवर्जितः ॥
कुलोद्गताः स्थिता धर्मे मृजायुक्ताः श्रुतान्विताः।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥
अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥
क्षत्रियस्त्वथवा वैश्यो न तु शूद्रः कदाचन।
यस्य राज्ञस्तु विषये शूद्रो धर्मविवेचकः ॥
तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥

(१) मत्स्य. २१५।२४–२५; विध. २।२४।२४–२५; राक. २७; राप्र. १८२.
(२) विध. ३।३२४।१–९.

## अग्निपुराणम्

ज्ञानादिगुणवद्भिर्विप्रैः सह व्यवहारदर्शनम्, कार्यवशत्वे व्यवहारदर्शने विप्रनियोजनम्

[1]व्यवहारान्नृपः पश्येज्ज्ञानिविप्रैरकोपनः।
शत्रुमित्रसमाः सभ्या अलोभाः श्रुतिवेदिनः ॥
अपश्यता कार्यवशात्सभ्यैर्विप्रं नियोजयेत् ॥

## कालिकापुराणम्

व्यवहारदर्शने शूद्रनियोजनस्य निषेधः

[2]न योजयेन्नृपः शूद्रं व्यवहारस्य दर्शने।
नियोज्य तत्र तं भूपस्तामिस्रे तेन पच्यते।
हीनायुश्च भवेल्लोको राजा वाऽपि सहायजः ॥

## कामन्दकीयनीतिसारः

व्यवहारदर्शनविधिः

[3]धर्मासनप्रतिष्ठानं (महीपतेः वृत्तम्) ॥
(१) धर्माधिकरणप्रवर्तनं धर्मस्थैः। जम.
(२) धर्मासनप्रतिष्ठानं विवादपदविचारार्थं धर्मासने प्रतिष्ठानं आस्थाने उपवेशनम्। उनिसा.

## शुक्रनीतिः

प्राड्विवाकलक्षणम्

[4]लोकशास्त्रनयज्ञस्तु प्राड्विवाकः स्मृतः सदा ॥
सदा लोकशास्त्रनयज्ञः लोकं लोकाचारं शास्त्रनयं च जानातीति तथाभूतः प्राड्विवाकः स्मृतः कथितः। शुनीटी.

व्यवहारदर्शनाङ्गानि साक्षिलेख्यभोगादीनि मानुषदिव्यानि प्रत्यक्षानुमानादीनि च, व्यवहारनिर्णयः प्राड्विवाकेन राज्ञे निवेदनीयः, सर्वजातीयाः सभ्या नियोज्याः

*साक्षिभिर्लिखितैर्भोगैश्छलैर्भूतैश्च मानुषान्।
स्वेनोत्पादितसंप्राप्तव्यवहारान् विचिन्त्य च ॥

* अस्य श्लोकत्रयस्य व्याख्यानं 'प्रकृतयः– मन्त्रिणः' इत्यस्मिन् प्रकरणे (पृ. १२६८) द्रष्टव्यम्।
(१) अग्नि. २५३।३२–३३.
(२) कालिका. ९१।५०–५१.
(३) कानी. १४।४७.
(४) शुनी. २।८५,९६–९८,१६६–१६७.

दिव्यसंसाधनाद्वाऽपि केषु किं साधनं परम् ।
युक्तिप्रत्यक्षानुमानोपमानैर्लोकशास्त्रतः ॥
बहुसंमतसंसिद्धान् विनिश्चित्य सभास्थितः ।
ससभ्यः प्राड्विवाकस्तु नृपं संबोधयेत्सदा ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।
रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥
निरालसा जितक्रोधकामलोभाः प्रियंवदाः ।
सभ्याः सभासदः कार्या वृद्धाः सर्वासु जातिषु ॥

ये च सर्वासु जातिषु मध्ये व्यवहारविदः ऋणादानाद्यष्टादशविवादज्ञा वा लौकिकाचारज्ञाः प्राज्ञाः विद्वांसः वृत्तैः सदाचारैः शीलैः सौजन्यादिभिः गुणैः दयादाक्षिण्यादिभिः अन्विताः युक्ताः रिपौ शत्रौ मित्रे सुहृदि च समाः धर्मज्ञाः धार्मिकाः सत्यवादिनः निरालसाः आलस्यवर्जिताः जितक्रोधकामलोभाः प्रियंवदाः प्रियभाषिणः वृद्धाः स्थविराः तथा सभ्याः सभासदः कार्याः । शुनीटी.

[1]दुष्टनिग्रहणं कुर्याद्व्यवहारानुदर्शनैः ॥

व्यवहाराणां विवादविषयाणां अनुदर्शनैः सम्यग्दर्शनैः दुष्टानां निग्रहं कुर्यात् । शुनीटी.

स्वप्रजाधर्मसंस्थानं सदसत्प्रविचारतः ।
जायते चार्थसंसिद्धिर्व्यवहारस्तु येन सः ॥

येन सदसत्प्रविचारतः सत्सु असत्सु च प्रविचारतः सम्यग्विचारेण स्वस्य प्रजानां धर्मसंस्थानं धर्मे सम्यक् स्थितिः अर्थानां कार्याणां संसिद्धिः समीचीना सिद्धिः जायते स व्यवहारः । शुनीटी.

धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ।
सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥

राजा क्रोधलोभविवर्जितः सप्राड्विवाकः प्राड्विकेन सहितः सामात्यः अमात्यपरिवृतः सब्राह्मणपुरोहितः ब्राह्मणैः पुरोहितैश्च सहितः तथा समाहितमतिः अवहितचित्तः सन् धर्मशास्त्रानुसारेण अनुक्रमात् यथाक्रमं व्यवहारान् पश्येत् । शुनीटी.

रहसि व्यवहारदर्शनस्य निषेधः

नैकः पश्येच्च कार्याणि वादिनोः शृणुयाद्वचः ।
रहसि च नृपः प्राज्ञः सभ्याश्चैव कदाचन ॥

प्राज्ञः नृपः एकः एकाकी रहसि निर्जने वादिनोः कार्याणि कदाचन न पश्येत् । वचश्च वचनं च न शृणुयात् । सभ्याश्च न पश्येयुः नापि शृणुयुरित्यर्थः । शुनीटी.

पौरकार्याणि यो राजा न करोति सुखे स्थितः ।
व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥

यः राजा सुखे स्थितः सुखासक्तः सन् पौराणां पुरवासिनां प्रजानामित्यर्थः, कार्याणि न करोति सः व्यक्तं निश्चितं घोरे नरके पच्यते । अत्र संशयः नास्ति । शुनीटी.

यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥

यः नराधिपः मोहात् अज्ञानात् अधर्मेण कार्याणि कुर्यात् शत्रवः अचिरात् तं दुरात्मानं वशे कुर्वन्ति । शुनीटी.

शास्त्रसभ्यनिरपेक्षदर्शने दोषः

अस्वर्ग्या लोकनाशाय परानीकभयापहा ।
आयुर्बीजहरी राज्ञामस्ति वाक्ये स्वयं कृतिः ॥

वाक्ये वादिनोर्वचने स्वयं कृतिः सभ्यनिरपेक्षेण स्वयं विचारदर्शनं राज्ञां अस्वर्ग्या अस्वर्गसाधनी, तथा परानीकभयावहा परानीकेभ्यः शत्रुसैन्येभ्यः भयमावहतीति तथोक्ता, शत्रुवृद्धिकरीत्यर्थः, अत एव आयुर्बीजहरी आयुःक्षयकरीत्यर्थः, सती लोकानां प्रजानां नाशाय अस्ति भवतीत्यर्थः । शुनीटी.

तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ॥

तस्मात् राजा शास्त्रानुसारेण कार्याणि साधयेत् संपश्येत् । शुनीटी.

---

(१) शुनी. ४।५।१, ४–६, ८–१७, २५–२७ ४५–४६, ५५.

व्यवहारनिर्णये नियोज्यब्राह्मणादिवर्णविवेकः, सभ्यलक्षणानि, सभ्यसंख्या

**यदा न कुर्यान्नृपतिः स्वयं कार्यविनिर्णयम् ।**
**तदा तत्र नियुञ्जीत ब्राह्मणं वेदपारगम् ॥**
**दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।**
**परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥**

यदा नृपतिः स्वयं न कुर्यात् तदा तत्र कार्यविनिर्णये विषये वेदपारगं दान्तं विनीतं कुलीनं सत्कुलप्रसूतं मध्यस्थं उदासीनं अपक्षपातिनमित्यर्थः, अनुद्वेगकरं शान्तप्रकृतिं स्थिरं अचञ्चलं परत्र भीरुं परलोकभयशीलं धर्मिष्ठं धार्मिकं उद्युक्तं यत्नवन्तं तथा क्रोधवर्जितं ब्राह्मणं नियुञ्जीत । शुनीटी.

**यदा विप्रो न विद्वान् स्यात्क्षत्रियं तत्र योजयेत् ।**
**वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥**

यदा विद्वान् विप्रः ब्राह्मणः न स्यात् तदा तत्र कार्यनिर्णये धर्मशास्त्रज्ञं क्षत्रियं वा वैश्यं योजयेत् नियुञ्ज्यात् , शूद्रं तु यत्नेन वर्जयेत् त्यजेत् । शूद्रो विचारदर्शने न नियोक्तव्य इति भावः । शुनीटी.

**यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा ।**
**तद्वर्ण एव गुणिनः प्रायशः संभवन्ति हि ॥**

राजा यद्वर्णजः यस्मिन् वर्णे ब्राह्मणादौ जातः भवेत् तद्वर्णजः तस्मिन् वर्णे जातः ब्राह्मणादिः सदा तत्र योज्यः नियोक्तव्यः । हि यतः तस्मिन् वर्णे एव प्रायशः बाहुल्येन गुणिनः गुणवन्तः जनाः संभवन्ति जायन्ते । शुनीटी.

**व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।**
**रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥**
**निरालसा जितक्रोधकामलोभाः प्रियंवदाः ।**
**राज्ञा नियोजितव्यास्ते सभ्याः सर्वासु जातिषु ॥**

सर्वासु जातिषु मध्ये ये जनाः व्यवहारविदः विचारदर्शनाभिज्ञाः प्राज्ञाः बुद्धिमन्तः वृत्तशीलगुणान्विताः सुचरित्राः सुस्वभावाश्च इत्यर्थः, रिपौ शत्रौ मित्रे सुहृदि च समाः समदर्शिनः धर्मज्ञाः सत्यवादिनः निरालसाः आलस्यवर्जिताः जितक्रोधकामलोभाः कामक्रोधलोभविरहिताः इत्यर्थः , तथा प्रियंवदाः प्रियभाषिणः ते राज्ञा नियोक्तव्याः । शुनीटी.

**राजा तु धार्मिकान्सभ्यान्नियुञ्ज्यात्सुपरीक्षितान् ।**
**व्यवहारधुरं वोढुं ये शक्ताः पुंगवा इव ॥**

ये जनाः पुंगवाः वृषभाः इव व्यवहारधुरं वोढुं शक्ताः समर्थाः भवन्ति राजा तान् धार्मिकान् सुपरीक्षितान् सभ्यान् नियुञ्ज्यात् । शुनीटी.

**लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।**
**यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥**

यत्र सभायां सप्त पञ्च अपि वा अथवा त्रयः लोकवेदज्ञधर्मज्ञाः लोकाचारज्ञाः वेदज्ञाः धर्मज्ञाश्च विप्राः उपविष्टाः सा सभा यज्ञसदृशी यज्ञस्थानसमा अतिपवित्रा इत्यर्थः । शुनीटी.

**श्रोतारो वणिजस्तत्र कर्तव्याः सुविचक्षणाः ॥**

तत्र विचारदर्शनस्थाने सुविचक्षणाः वणिजः श्रोतारः कर्तव्याः नियोक्तव्या इत्यर्थः । ते हि यथा स्वर्णादिपरीक्षकाः तथा कार्यनिर्णयस्यापि परीक्षकाः भवन्तीति भावः । शुनीटी.

**व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।**
**मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥**

व्यवहारान् दिदृक्षुः द्रष्टुमिच्छुः पार्थिवः विनीतः सन् मन्त्रज्ञैः मन्त्रणाकुशलैः ब्राह्मणैः मन्त्रिभिश्च सह सभां प्रविशेत् । शुनीटी.

**धर्मासनमधिष्ठाय कार्यदर्शनमारभेत् ॥**

राजा धर्मासनं विचारासनं अधिष्ठाय कार्यदर्शनं आरभेत् । शुनीटी.

**न्यायान् पश्येत्तु मध्याह्ने पूर्वाह्णे स्मृतिदर्शनम् ॥**

मध्याह्ने न्यायान् विचारान् पश्येत् । पूर्वाह्णे स्मृतिदर्शनं स्मृतीनां धर्मशास्त्राणां दर्शनं पर्यालोचनं कुर्यात् । शुनीटी.

## योगयात्रा

व्यवहारदर्शने राज्ञोऽवस्थानम्

[1]विनीतवेषाभरणः स दक्षिणं
करं समुद्यम्य विचक्षणान्वितः ।
सुखोपविष्टः स्थित एव वा नृपः
समारिमित्रो व्यवहारदर्शने ॥

## नीतिवाक्यामृतम्

व्यवहारदर्शनाधिकारः

[2]गुणदोषयोस्तुलादण्डसमो राजा स्वगुणदोषाभ्यां जन्तुषु गौरवलाघवे ॥

अथ विवादसमुद्देशो लिख्यते । तत्राऽऽदावेव राज्ञः स्वरूपमाह– गुणदोषेति । योऽसौ राजा स किंविशिष्टः ? तुलादण्डसमः । काभ्याम् ? स्वगुणदोषाभ्याम् । कयोः ? गुणदोषयोः । केषु ? जन्तुषु । कस्मिन् ? गौरवलाघवे । यस्य गुणा अधिकास्तस्य गुरुत्वं यस्य दोषा अधिकास्तस्य लघुत्वं कर्तव्यम् । नीवाटी.

राजा त्वपराधालिङ्गितानां समवर्ती तत्फलमनुभावयति ॥

अथ समवर्तिनो भूपस्य यत् भवति तदाह– राजेति । यो राजा भवति समवर्ती भूत्वा तेषामपराधालिङ्गितानां यत् फलं संबन्धः तत् स्वयमेव संभावयति चिन्तयति । तथा च गुरुः– 'विजानीयात् स्वयं वाऽथ भूभुजा (?) अपराधिनाम् । मृषा किंवाऽथवा सत्यं स्वराष्ट्रपरिवृद्धये ॥'। नीवाटी.

आदित्यवद्यथावस्थितार्थप्रकाशनप्रतिभाः सभ्याः ॥

अथ सभ्यानां स्वरूपमाह– आदित्येति । राज्ञां ये सभ्याः सभासदो भवन्ति ते किंविशिष्टाः ? आदित्यवद्यथा(वस्थिता)र्थप्रकाशनप्रतिभाः । यथा आदित्यो यथावस्थितार्थप्रकाशनप्रतिभो भवति तथा सभ्यैरपि सर्वव्यावहारिकपदार्थप्रयोजनपरैर्भाव्यम् । तथा च गुरुः– 'यथाऽऽदित्योऽपि सर्वार्थान् प्रकटान् प्रकरोति च । तथा च व्यवहारार्थाञ् ज्ञेयास्तेऽमी सभासदः ॥'। नीवाटी.

अदृष्टाश्रुतव्यवहाराः परिपन्थिनः सामिषा न सभ्याः ॥

अथ भूयोऽपि सभ्यानां स्वरूपमाह– अदृष्टेति । ये सभ्याः अदृष्टाश्रुतव्यवहारा भवन्ति यैः सभ्यैः स्मृत्युक्तो व्यवहारो दृष्टो न भवति, न च श्रुतः, ते सभ्या न भवन्ति । राज्ञः परिपन्थिनः शत्रवस्ते । यतो मूर्खत्वेन धर्माधिकरणं भवति । सत्यानां (? असभ्यानां) प्रसादपरा भवन्ति, सभ्यानां निग्रहं कुर्युः, ततो राष्ट्रशून्यता भवति । सचिवा अप्येवंविधा भवन्ति सामिषान्तरं योऽन्वेषयति वादिनो भवन्ति ते परिपन्थिनः(?) । तथा च शुक्रः– 'न दृष्टो न श्रुतो वाऽपि व्यवहारः सभासदैः । न ते सभ्यारयस्ते च विज्ञेयाः पृथिवीपतेः ॥'। नीवाटी.

## मानसोल्लासः

व्यवहारदर्शनाधिकारः, सम्यग्दण्डप्रणयनम्

[1]व्यवहारान्नृपः पश्येद्विप्रैर्विद्वद्भिः सह ।
स्मृतिशास्त्रानुरोधेन रागद्वेषविवर्जितः ॥
अदोषान् दूषयेद्राजा दोषयुक्तानदण्डयन् ।
अकीर्तिं महतीमेति दुर्गतिं चाधिगच्छति ॥
ऋत्विक्पुरोहितः पुत्रो भ्राता बन्धुस्तथा सुहृत् ।
अदण्ड्यो नृपतेर्नास्ति स्वधर्माच्चलितो नरः ॥

नियोज्यसभ्यलक्षणानि

वेदशास्त्रार्थतत्त्वज्ञाः सत्यसंधाश्च धार्मिकाः ।
सभ्या नृपतिना कार्या मित्रामित्रेषु वै समाः ॥
धीरैरलोलुपैर्मौलैर्लोकव्यापारकोविदैः ।
विप्रैः सह महीपालो गुणदोषौ विचारयेत् ॥
[2]स्मृतिशास्त्रार्थकुशला रागद्वेषविवर्जिताः ।
धर्माधिकारिणः कार्या विलोभा भयवर्जिताः ॥

(१) योया. २।२७.
(२) नीवा. २८।१–४.

(१) मासो. २।१२४३–१२४७.
(२) मासो. २।९३–९४.

स्मार्तैः सह समालोच्य यथोक्तं दण्डमाचरेत् ।
शक्तो राज्ञा विचारज्ञः कार्यो दण्डधरो द्विजः ॥

[1]कुलीनाः शीलवन्तश्च धनिनो वयसाऽधिकाः ।
अमत्सरा विशः कार्याः कियन्तोऽपि सभासदः ॥

प्राड्विवाकलक्षणानि, प्राड्विवाकनियुक्तौ वर्णविवेकः

अलोभं सत्यसंधं च धर्मशीलं प्रियंवदम् ।
धर्मशास्त्रार्थकुशलं लोकयात्राविचक्षणम् ॥
विचारे पण्डितं दक्षं प्राड्विवाकतया युतम् ।
इङ्गिताकारतत्त्वज्ञमूहापोहविशारदम् ॥
ब्राह्मणं श्रुतसंपन्नं धर्मशास्त्रविशारदम् ।
आत्मनः प्रतिरूपं तु कुर्यादेकं महीपतिः ॥
प्रागेव पृच्छति प्रायो वाक्यं वादार्थमागतौ ।
विचारयति यः सम्यक्प्राड्विवाकस्ततः स्मृतः ॥
व्यग्रस्य राजकार्येण देहजाड्येन वा स्वयम् ।
अपश्यतः प्रभोः कार्यं प्राड्विवाको विचारयेत् ॥

(१) मासो. २।१२५२–१२६१.

विप्रालाभे तु कर्तव्यः कुलीनो दमसंयुतः ।
परत्र भीरुर्धर्मज्ञः शूरः शान्तो विमत्सरः ॥

अनुद्वेगकरो नित्यं प्रजानां च हिते रतः ।
सदोद्युक्तः समर्थश्च क्षत्रियोऽपि सभापतिः ॥

दौर्लभ्यात्क्षत्रियस्यापि वैश्यं कुर्यात्सभापतिम् ।
गुणाधिकं च मध्यस्थं जनानां संमतं नृपः ॥

विप्रक्षत्रविशः कार्याः श्रेष्ठमध्याधमाः क्रमात् ।
सर्वथाऽपि न कर्तव्यः शूद्रः क्वापि विचारणे ॥

## अनिर्दिष्टकर्तृकवचनम्

धर्माध्यक्षनियोजनम्

[1]कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
प्रवीणः पेशलो दक्षो धर्माध्यक्षो विधीयते ॥

धर्माध्यक्षः न्यायकारी । रार. १६.

(१) रार. १६ स्मृतिः.

# *लेख्यम्

—०—

## हारीतः

शासनलेखकलक्षणानि

[1]सकृदुक्तं गृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्वशास्त्रसमालोकी एष शासनलेखकः ॥

## कौटिलीयमर्थशास्त्रम्

शासनं लिखितमेव राज्ञः आज्ञा संधिविग्रहादिमूलं च

[2]शासने शासनमित्याचक्षते । शासनप्रधाना हि राजानः, तन्मूलत्वात्संधिविग्रहयोः ॥

'शासनाधिकारः' इति सूत्रम् । शासनं नाम लिखितकार्यार्थे तालपत्रादि, तस्य अधिकारः विधिः उच्यते इति सूत्रार्थः । 'अर्धगुणहीनः शासनहरः' (कौ. १।१६) इति शासनं यत्सूत्रितं दूतप्रणिधौ तदिह निरूप्यते इति संगतिः ।

किं तच्छासनमित्याह– शासने शासनमित्याचक्षत इति । पत्रारूढोऽर्थः शासनम्, तस्मिन् शासनमिति व्यपदेशं कुर्वन्त्याचार्याः, न तु संदिष्टेऽर्थे वाचिकाख्ये इत्यर्थः । कुतः पुनः शासनवाचिकयोर्मध्ये शासनस्य निरूपणादरः, न तु वाचिकस्येत्याकाङ्क्षायामाह– शासनेत्यादि । संधिविग्रहयोरिति षाड्गुण्योपलक्षणम् । तेनायमर्थः– हि यस्मात् शासनमेव राज्ञां मन्त्रगुप्तिपुरःसरषाड्गुण्यव्यापाराव्यभिचारनिर्वाहकतया प्रधानम्, वाचिकं तु संदेशहरगतप्रमादादिदोषसंभावितमन्त्रभेदतया व्यभिचारित्वान्न प्रधानमिति । श्रीमूला.

लेखकलक्षणानि, लेखनविधिः

तस्मादमात्यसंपदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात् । सोऽव्यग्रमना राज्ञः संदेशं श्रुत्वा निश्चितार्थं लेखं विदध्यात्, देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य ॥

शासनस्य प्रधानत्वात् विशिष्टगुण एव तल्लेखको भवितुमर्हतीत्याह– तस्मादित्यादि । तस्मात् अमात्यसंपदोपेतः– 'जानपदोऽभिजातः' (कौ. १।९) इति मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्ताः पञ्चविंशतिः जानपदत्वादयो गुणा अमात्यसंपत्, तया युक्तः । सर्वसमयवित् सर्वेषां वर्णानां आश्रमाणां वर्णातिरिक्तानां चाऽऽचाराभिज्ञः । आशुग्रन्थः शीघ्रवाक्यसंदर्भप्रसरः । चार्वक्षरः चारूणि एकैकशः समुदायतश्च दर्शनीयानि अक्षराणि लिपयः यस्य सः । लेखवाचनसमर्थः लेखस्य स्फुटसुस्वरयथास्थानवाक्यविश्रमसुभगपठनप्रवीणः । लेखस्य अप्रकाश्यार्थस्य संज्ञालेखस्य वर्जिताक्षरस्य पदवाक्यसंकेतितलेखाविशेषात्मकस्य वाचने व्यवहारे समर्थ इत्यपरे । एवमेकोनत्रिंशता गुणैर्युक्तो लेखकः स्यात् । स च लेखको राज्ञोच्यमानं वाचिकमनाकुलेन मनसा श्रुत्वाऽर्थान् पौर्वापर्यक्रमेण परलेखार्थानुगुण्यानानुगुण्याभ्यां च निश्चित्य लेखं लिखेदित्याह– सोऽव्यग्रेत्यादि । तत्र युक्तानामव्यग्रमनस्कता राजसत्कारात् भवति । यदाहुः– 'नीचाऽपि बुद्धिर्नृपमानयोगाच्छ्रेष्ठत्वमायाति तदाश्रितानाम् । अन्याऽपि निर्वाति हि मानहीना स्नेहं विना दीपशिखेव तूर्णम् ॥' इति । परलेखानुरूप्यानानुरूप्यनिश्चयविषयेऽपि श्लोकमुदाहरन्ति– 'श्रुत्वा नरेन्द्रवाक्यं परभावं चावधार्य परलेखात् । लेखः खलु कर्तव्यो गुणदोषविनिश्चयज्ञेन ॥' इति । कीदृशं विदध्यात्? ईश्वरस्य राज्ञः देशैश्वर्यवंशनामधेयोपचारं देशादीनां चतुर्णामुपचारो यस्मिंस्तं तथाभूतम् । तत्र देशोपचारः

* धर्मकोशस्य व्यवहारकाण्डे प्रथमभागे अंशतः संगृहीतोऽयं विषयः अस्मिन् राजनीतिकाण्डे पुनः संगृह्यते, संबद्धत्वात् । तथा च पूर्वमसंगृहीतवचनानामपि अत्रोद्धारः कृतः । राजशासनलेखनिरूपणमत्र विशेषः । व्यवहारकाण्डे तु व्यवहारनिर्णयप्रमाणेषु परिगणितं लेख्यप्रमाणं निरूपितम् ।

(१) रार. १९.

(२) कौ. २।१०.

अध्युष्यमाणदेशनिर्देशेनोपचारः, यथा मध्यदेशमलंकुर्वाणमिति । ऐश्वर्योपचारः भूकोशदण्डसंपन्निर्देशोपचारः 'मध्यदेशाधिपतिमसंख्याताप्रतिहतदण्डक्षपितरिपुपक्षम्' इत्येवंजातीयः । वंशोपचारः 'सोमान्वयभूषणम्' इत्येवंप्रकारः । नामधेयोपचारः 'महाराजाधिराजश्रीसिंहवर्मदेवम्' इत्येवंजातीयः । अनीश्वरस्य अमात्यादेः देशनामधेयोपचारं देशोपचारनामोपचारयुक्तम् । तत्र देशोपचारः 'कान्यकुब्जमलंकुर्वाणम्' इत्यादिः । नामोपचारः 'श्रीसोमदत्तम्' इत्यादिः । श्रीमूला.

जातिं कुलं स्थानवयःश्रुतानि
कर्मर्द्धिशीलान्यथ देशकालौ ।
यौनानुबन्धं च समीक्ष्य कार्ये
लेखं विदध्यात्पुरुषानुरूपम् ॥

जातिकुलाद्येकादशकमपि लेखविधौ समीक्षणीयमित्याह— जातिमित्यादि । तत्र जातिः ब्राह्मणादिः । तत्समीक्षा च ब्राह्मणो ब्राह्मणस्य ज्यायसोऽभिवादपूर्वं कनीयसः आशीर्वचनपूर्वं क्षत्रियस्य स्वस्त्यादिपदपूर्वम्, क्षत्रियादिर्ब्राह्मणस्य प्रणामपूर्वमित्येवंजातीया । कुलं अन्ववायो भोजादिः । स्थानं अधिकारः सांधिविग्रहिकादिः । वयः यौवनादि । श्रुतं शास्त्रविज्ञानम् । कर्म वृत्तिः । ऋद्धिः धनसंपत् । शीलं सदाचारः । देशः वासस्थानम् । कालः तदात्वमायतिश्च । यौनानुबन्धः विवाहसंबन्धः । इदं जात्याद्येकादशकं समीक्ष्य पर्यालोच्य कार्ये कार्यविषये पुरुषानुरूपं पुरुषाणां हीनमध्यमोत्तमानां यथाक्रममाज्ञापनबोधनविज्ञापनाद्युक्तिप्रकारैरनुरूपं लेखं विदध्यात् । श्लोकं चात्रोदाहरन्ति— 'वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥' इति । श्रीमूला.

लेखगुणसंपत्

**अर्थक्रमः संबन्धः परिपूर्णता माधुर्यमौदार्यं स्पष्टत्वमिति लेखसंपत् ॥**

लेखसंपदमाह— अर्थक्रम इत्यादि । श्रीमूला.

**तत्र यथावदनुपूर्वक्रिया प्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थस्य क्रमः ॥**

अर्थक्रमादीन् षट् लेखगुणान् स्वयमेव व्याचष्टे— तत्रेत्यादि । तत्र अर्थक्रमादीनां मध्ये यथावदनुपूर्वक्रिया यथार्हं क्रमकरणम् । तदेव स्फुटप्रतिपत्तये विवृणोति— प्रधानस्यार्थस्य पूर्वमभिनिवेश इति । अभ्यर्हितस्यार्थस्य पूर्वं लेखनं पश्चादन्यस्येत्ययमर्थक्रमो नाम लेखगुणः । श्रीमूला.

**प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमा समाप्तेरिति संबन्धः ॥**

संबन्धमाह— प्रस्तुतस्येति । प्रस्तुतस्य प्रक्रान्तस्य अर्थस्य अनुपरोधात् अबाधात् उत्तरस्यार्थस्य आ समाप्तेर्विधानं आ लेखपरिसमापनाल्लेखनं पूर्वपूर्वलिखितार्थाविरोधेनोत्तरोत्तरार्थलेखनमिति यावत्, इत्ययं संबन्धाख्यो गुणः । श्रीमूला.

**अर्थपदाक्षराणामन्यूनानतिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाऽश्रान्तपदतेति परिपूर्णता ॥**

परिपूर्णतामाह— अर्थेत्यादि । अर्थपदाक्षराणामन्यूनानतिरिक्तता अर्थस्य पदानामक्षराणां चान्यूनताऽनतिरिक्तता च । अर्थन्यूनता यथा— 'हस्तिनौ प्रयच्छ' इत्युक्ते 'हस्तिनं प्रयच्छ' इति लेखनम् । इहार्थमात्रं न्यूनम्, पदाक्षराणि तु न न्यूनानि न चातिरिक्तानि । 'हस्तिनं प्रयच्छ' इत्युक्ते 'हस्तिनौ प्रयच्छ' इति लेखनेऽर्थातिरिक्तता, पदाक्षराणि तु तावन्त्येव । पदन्यूनता यथा— 'कालिङ्गं हस्तिनं प्रयच्छ' इत्युक्ते विशेषणपरित्यागेन 'हस्तिनं प्रयच्छ' इति लेखनम् । 'हस्तिनं प्रयच्छ' इति निर्विशेषणोक्तौ सविशेषणलेखनं पदाधिकता । अक्षरन्यूनता यथा— सलिलशब्दोक्तौ वारिशब्दलेखनम् । तद्वैपरीत्यलेखने अक्षराधिकता । हेतूदाहरणदृष्टान्तैरर्थोपवर्णना— हेतुः कारणम्, उदाहरणं शास्त्रसंवादाभिधानम्, दृष्टान्तः लोकसिद्धार्थनिदर्शनम्, हेत्वादिभिस्त्रिभिरर्थस्य प्रस्तुतस्य उपवर्णना संप्रतिपत्तिसंपादनम् । अश्रान्तपदता वाक्यार्थे पदवचनम् । यथा 'संधिं कुरु' इति पदसमूहप्रतिपाद्यस्यार्थस्य 'संधत्स्व' इत्येकेन

पदेन ' प्रतिपादनम् । इति परिपूर्णता अनेन प्रकारेण परिपूर्णता नाम गुणः । श्रीमूला.

**सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम् । अग्राम्यशब्दाभिधानमौदार्यम् । प्रतीतशब्दप्रयोगः स्पष्टत्वमिति ॥**

सुगमसुन्दरार्थप्रतिपादकशब्दप्रयोगो नाम माधुर्यम्, अग्राम्यशब्दप्रयोगः औदार्यम्, सुप्रसिद्धशब्दप्रयोगश्च स्पष्टत्वमित्याह– सुखोपनीतेत्यादि । श्रीमूला.

लेख्यभाषास्वरूपम्

**अकारादयो वर्णास्त्रिषष्टिः ॥**

शब्दप्रसङ्गात् तद्गतं पदवाक्यविभागं पदवाक्यगतं च लेखे करणीयं विशेषान्तरं निरूपयिष्यन् पदारम्भकत्वात् प्रथममक्षराणि निरूपयति– अकारादयो वर्णास्त्रिषष्टिरिति । तत्र ह्रस्वदीर्घप्लुतभेदादचो द्वाविंशतिः, कादयो मावसानाः स्पर्शाख्याः पञ्चविंशतिः, यरलवा अन्तःस्थाख्याश्चत्वारः, अयोगवाहा अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयाश्चत्वारः, यमाक्षराणि चत्वारि, शषसहा ऊष्माख्याश्चत्वार इत्येवं वर्णानां त्रिषष्टित्वम् । यदाहुः– ' दीर्घाः स्वराणां तत्राष्टौ पञ्च ह्रस्वाः प्लुता नव । चतुर्धाऽयोगवाहोष्मयमान्तःस्थाः पृथक् पृथक् । विंशतिः पञ्च च स्पर्शास्त्रिषष्टिरिति कीर्तिताः ॥ ' इति । स्वरानुनासिक्यकृतस्तु भेदो न संख्यातः, लौकिकप्रयोगे तदनादरात् । श्रीमूला.

**वर्णसंघातः पदम् । तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति । तत्र नाम सत्त्वाभिधायि । अविशिष्टलिङ्गमाख्यातं क्रियावाचि । क्रियाविशेषकाः प्रादय उपसर्गाः । अव्ययाश्चादयो निपाताः ॥**

पदस्वरूपमाह– वर्णसंघातः पदमिति । नियतानुपूर्वीकाणां वर्णानां समूहोऽर्थविशेषसंकेतितः पदमित्युच्यते । तच्चतुर्विधं नामादिभेदादित्याह– तदिति । नामादिस्वरूपमाह– तत्रेति । तेषु नामादिषु मध्ये सत्त्वाभिधायि जातिगुणद्रव्यवाचकं नाम इत्युच्यते । अविशिष्टलिङ्गं स्त्रीपुंनपुंसकरूपलिङ्गविशेषशून्यं क्रियावाचकं आख्यातम् । क्रियाविशेषकाः क्रियागतप्रकर्षादिविशेषद्योतकाः प्रादयः प्र परा अप सम् अनु इत्यादयः उपसर्गाः । अव्ययाः लिङ्गवचनविभक्तिभेदरहिताः चादयः च वा ह इत्यादयः निपाताः । श्रीमूला.

**पदसमूहो वाक्यमर्थपरिसमाप्तौ । एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन वर्गः कार्यः । लेखपरिसंहरणार्थ इतिशब्दो वाचिकमस्येति च ॥**

वाक्यस्वरूपमाह– पदेत्यादि । पदसमूहः पदानां संघातः वाक्यमित्युच्यते अर्थपरिसमाप्तौ अर्थस्य पर्यवसाने सति । तेन पदसमूहेन चेदेको विशिष्टार्थो नैराकाङ्क्ष्येण बुद्धौ प्रतिष्ठितो भवतीत्यर्थः । समासकरणविषयमाह– एकेत्यादि । वर्गः समासः परपदार्थानुरोधेन कार्यः परं यत् पदं समासघटकादेकस्मात् पदात् अन्यत् समासघटकं पदं तस्य अर्थानुरोधेन अर्थमनुसृत्य कार्यः । अर्थस्य समासघटकपदान्तरार्थेन सहैकीभावयोग्यतामभिलक्ष्य कार्य इत्यर्थः । पदयोः पदानां वा सति सामर्थ्ये समासः कार्यः, नान्यथेत्यभिप्रायः । स च कथंभूतः कार्यः ? एकपदावरस्त्रिपदपरः– समस्यमानपदातिरेकेण एकं पदं अवरं निकृष्टं यस्मिन् स तथाभूतः अर्थात् द्विपदावरः, त्रीणि पदानि पराणि उत्कृष्टानि यस्मिन् स तथाभूतश्च कार्यः । त्र्यधिकपदसमासस्तु न कार्यः, माधुर्याद्युक्तगुणहानात् । यदाहुः– ' माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः । समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ ' इति । अपरा व्याख्या– एकपदावरस्त्रिपदपरः इत्यनयोर्यथोक्त एवार्थः, विशेष्यस्तु पदसमूहः । स च सामर्थ्यात् समासलक्षणः । तावता च दीर्घसमासप्रतिषेधस्योक्तस्य सिद्धिः । ' परपदार्थानुरोधेन वर्गः कार्यः ' इत्यनेन त्वर्थान्तरं संगृह्यते । तद्यथा– वर्गो विरामोऽवसानं विच्छेद इति पर्यायाः । वर्गः अर्थविश्रान्तिचिह्नं सुखप्रतिपत्त्यर्थं क्रियमाणं परपदार्थानुरोधेन परपदार्थानुसारेण कार्यः । अनुपरोधेनेति पाठे परपदार्थानुपघातेन कार्यः । यथा– ' पुराणं मानवो धर्मः स्वको वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥ ' इत्यस्मिन् श्लोके चत्वारीत्यत्र विरामचिह्नस्य करणे परपदार्थेन नोपरोधः,

'चत्वारि न' इत्यत्र करणे तु स्फुट एव स इति। लेखपरिसमाप्तिचिह्नमाह– लेखेत्यादि। अन्ते इतिशब्दलेखनं 'वाचिकमस्य' इति लेखनं वा लेखसमाप्तिसूचनप्रयोजनकमित्यर्थः। तत्र लेखनीयार्थस्य निरवशेषतायामितिशब्दः, सावशेषतायां 'वाचिकमस्य' इत्युक्तिः। वाचिकमस्येति लेखनं च 'वाचिकमस्य लेखहरमुखाच्छ्रोतव्यम्' इत्यादिरीत्या लेखनमिति बोद्धव्यम्। श्रीमूला.

लेखार्थप्रकाराः

निन्दा प्रशंसा पृच्छा च तथाऽऽख्यानमथार्थना।
प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना॥
सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा।
एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः॥

अथ लेखनीयतया संभावितानर्थान् श्लोकाभ्यामुद्दिशति– निन्देत्यादि। निन्दाप्रशंसादित्रयोदशकविषयतया त्रयोदशविधा लेखार्था इत्यर्थः। श्रीमूला.

तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा। गुणवचनमेतेषामेव प्रशंसा। कथमेतदिति पृच्छा। एवमित्याख्यानम्। देहीत्यर्थना। न प्रयच्छामीति प्रत्याख्यानम्। अननुरूपं भवत इत्युपालम्भः। मा कार्षीरिति प्रतिषेधः। इदं क्रियतामिति चोदना। योऽहं स भवान्, मम यद्द्रव्यं तद्भवत इत्युपग्रहः सान्त्वम्। व्यसनसाहाय्यमभ्यवपत्तिः। सदोषमायतिप्रदर्शनमभिभर्त्सनम्॥

निन्दादिकं क्रमेण व्याचष्टे– तत्रेत्यादि। अभिजनशरीरकर्मणां दोषवचनम्– 'प्रकृतिकुटिला वैश्वामित्राः' इत्यभिजनदोषवचनम्, 'कुष्ठितो व्याधितः' इति शरीरदोषवचनम्, 'गोघ्नो ब्रह्महा' इति कर्मदोषवचनम्। सेयं निन्दा त्रिप्रकारा। तद्वैपरीत्येन तेषामेवाभिजनादीनां गुणवचनं प्रशंसा। 'कथमेतत्करणीयम्' इति कर्तव्यजिज्ञासा पृच्छा। 'एवमेतत्करणीयम्' इत्युपदेशः पृष्टेन क्रियमाणः आख्यानम्। 'संध्यादिनिमित्तं किंचित् कोशदण्डादिकं देहि' इति याचनं अर्थना। अर्थितस्य 'न प्रयच्छामि' इति वचनं प्रत्याख्यानम्। 'अननुरूपं भवत इदं कार्यम्' इत्युक्तिः उपालम्भः। 'मा कार्षीः' इत्यकार्यप्रवृत्तेर्वारणमासभावात् क्रियमाणं प्रतिषेधः। 'इदं क्रियतां संधानं विग्रहणं वाऽस्मिन् देशकाले' इति प्रेरणा चोदना। 'योऽहं स भवान्, मम यत् द्रव्यं तत् भवतः' इति स्वशरीरसंबोध्यशरीरयोः स्वद्रव्यसंबोध्यद्रव्ययोश्चाभेदवचनभङ्ग्याऽनुकूलनं सान्त्वम्। व्यसने रिपूपप्लवादौ साह्यकरणं अभ्यवपत्तिः। 'अनित्थंकुर्वाणमचिरात् त्वां घातयेयम्, बद्ध्वा वा कारागृहे निवेशयेयम्' इत्येवमनर्थदोषयुक्तमुत्तरकालकथनमभिभर्त्सनमित्युच्यते। श्रीमूला.

अनुनयस्त्रिविधोऽर्थकृतावतिक्रमे पुरुषादिव्यसने चेति॥

अर्थकृतावित्यादयो निमित्तसप्तम्यः। अर्थकरणनिमित्तोऽतिक्रमनिमित्तः पुरुषादिव्यसननिमित्त इति त्रिप्रकारोऽनुनयः। तत्र सामवायिकादिकार्यमवश्यकरणीयमकुर्वाणं प्रति तत्करणार्थे मित्रेण क्रियमाणोऽनुनय आद्यः। स्ववाक्यातिक्रमकुपितं प्रति कोपप्रशमनाय क्रियमाणोऽनुनयो द्वितीयः। पितृभ्रातृपुत्रमित्रामात्यमरणादिव्यसनेष्ववश्यानुग्राह्यं पूर्वमननुगृह्य पश्चात् कार्यवशात् तं प्रति क्रियमाणोऽनुनयस्तृतीयः। श्रीमूला.

शासनलेखप्रकाराः अष्टौ

प्रज्ञापनाज्ञापरिदानलेखा-
स्तथा परीहारनिसृष्टिलेखौ।
प्रावृत्तिकश्च प्रतिलेख एव
सर्वत्रगश्चेति हि शासनानि॥

भूयोऽप्यष्टौ शासनभेदान् श्लोकेनोद्दिशति– प्रज्ञापनेत्यादि। श्रीमूला.

अनेन विज्ञापितमेवमाह
तद्दीयतां चेद्यदि तत्त्वमस्ति।
राज्ञः समीपे वरकारमाह
प्रज्ञापनैषा विविधोपदिष्टा॥

श्लोकैरेव तेषां विवरणमारभमाणः प्रथमं प्रज्ञापनलेखं व्याचष्टे– अनेनेति। प्रज्ञापना नाम महामात्रादीन् प्रति तदीयगूढपुरुषैः क्रियमाणा तन्मित्रामित्रराजपुरुष-

वृत्तान्तस्याऽऽवेदना। एषा विविधा बहुप्रकारा उपदिष्टा। तामभित्रविषयां पूर्वार्धेन प्रदर्शयति— अनेन राजानुचरेण देवदत्तनाम्ना विज्ञापितं राजान्तिके 'महामात्रेण कुतश्चिन्निधिरधिगत आत्मसात्कृतः' इति। विज्ञापितश्च राजा अनेन प्रकारेणाऽऽह— 'यदि महामात्रः स्वयं तं निधिं न प्रयच्छति तदाऽहमेव तं द्विगुणमाहारयिष्यामि' इति। तत्त्वमस्ति चेद्यदि तत् दीयतां यदि निधिद्रव्याधिगमः सत्यः तर्हि तत् दीयतां राज्ञे इत्यर्थः। मित्रविषयां तृतीयपादेन दर्शयति— राज्ञः समीपे वरकारमाह कल्याणं कर्म त्वया क्रियमाणं निवेदयति, अर्थात् देवदत्तादिः। इह चेत्पदयदिपदयोः सहप्रयोगोऽपिशब्दचशब्दयोरिव द्रष्टव्यः।
श्रीमूला.

भर्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति।
विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम्॥

सामान्यतो यस्मिन्कस्मिंश्चिज्जने विषये विशेषेण पुनर्भृत्येषु विषये निग्रहमनुग्रहं वाऽधिकुर्वती भर्तुराज्ञा यस्मिन् लेखे स आज्ञालेख इत्याह— भर्तुरित्यादि।
श्रीमूला.

यथार्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते।
अप्याधौ परिदाने वा भवतस्तावुपग्रहौ॥

परिदानलेखमाह— यथार्हेत्यादि। यत्र यस्मिन् लेखे यथार्हगुणसंयुक्ता उत्तममध्यमाधमसंबोध्यतारतम्यानुसारिणी पूजा 'धार्मिकस्य गुणवतस्तवेदमसदृशं दुःखमुपनतम्, किं कुर्मः? क्षन्तव्यमेव विवेकिभिरीदृशं कथंचित्' इत्युक्तिरूपः शोककाले, 'स्वनियोगसविशेषानुष्ठानस्यापर्याप्तमपीदमस्माभिर्यत्किंचित् पारितोषिकं दीयमानं स्वीकरोतु भवान्' इत्युक्तिरूपः स्वामिपरितोषकाले स्वामिबहुमानः उपलक्ष्यते, स परिदानलेखः इति विधेयाध्याहारः, तस्यैव लक्षणीयतया क्रमप्राप्तत्वात्। तस्य विषयद्वैविध्येन द्वैविध्यं सूचयन्नाह— अपीति। तौ परिदानलेखौ। अप्याधौ परिदाने वा। अपिवाशब्दौ समुच्चयार्थौ। आधिः बन्धुमरणनिमित्ता भृत्यानां मनोव्यथा, परिदानं परिरक्षणं भृत्यविषयदयाविष्करणमिति यावत्। आधौ च परिदाने च उपग्रहौ स्वीकारहेतू स्वतातिशयप्रतिपत्तिहेतू भवतः।
श्रीमूला.

जातेर्विशेषेषु पुरेषु चैव
ग्रामेषु देशेषु च तेषु तेषु।
अनुग्रहो यो नृपतेर्निदेशात्
तज्ज्ञः परीहार इति व्यवस्येत्॥

परीहारलेखमाह— जातेरिति। 'अमुकस्य कालस्यामुकब्राह्मणेभ्यः करो न ग्राह्यः' इत्येवंप्रकारो यो जातिविशेषविषयोऽनुग्रहः, 'अमीषु नगरेषु वणिग्भ्यः शुल्कममुकस्य कालस्य न ग्राह्यम्' इत्येवंविधो यः पुरविषयः, 'नवागतकुटुम्बिभ्यः इयतः कालस्य न ग्राह्यः करः' इत्येवंप्रायो यो ग्रामविषयः, 'न कोऽपि राजभागधेयोऽमुकदेशे कालस्यैतावतो ग्राह्यः' इत्येवंजातीयो यो देशविषयः, स सर्वविधोऽप्यनुग्रहो राजशासनात् प्रवृत्तः परीहारसंज्ञित इति लेखप्रकाराभिज्ञो जानीयादिति श्लोकार्थः। तत्रानुग्रहः कश्चित् कराग्रहणरूपः, कश्चित् स्वयं धनदानरूपः, कश्चिदुभयरूप इति त्रिप्रकारो वेदितव्यः।
श्रीमूला.

निसृष्टिस्थापना कार्यकरणे वचने तथा।
एष वाचिकलेखः स्याद्भवेन्नैसृष्टिकोऽपि वा॥

निसृष्टिलेखमाह— निसृष्टीत्यादि। कार्यकरणे तथा वचने निसृष्टिस्थापना कस्यचिदाप्तपुरुषस्य प्रामाण्याख्यानं 'अमुकस्य क्रिया ममैव क्रिया, अमुकस्य वचनं ममैव वचनम्' इत्येवंरूपम्। निसृष्टिलेख इति लक्ष्यस्याध्याहारः, क्रमप्राप्तत्वात्। एतस्य प्रकारद्वयमाह— एषः निसृष्टिलेखः वाचिकलेखः स्यात् वचनप्रमाणीकरणाख्यायी सन् वाचिक इति वक्तुमर्हः, नैसृष्टिकोऽपि वा भवेत् क्रियाप्रमाणीकरणाख्यायी सन् नैसृष्टिक इति वक्तुमर्हः।
श्रीमूला.

विविधां दैवसंयुक्तां तत्त्वजां चैव मानुषीम्।
द्विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति॥

प्रावृत्तिकमाह— विविधामिति। विविधां अनेकप्रकारां दैवसंयुक्तां यथाकालवृष्टिपातसुभिक्षाद्यनुकूलदैवफलसिद्धिसंबद्धां अग्निवात्योपप्लवादिदुर्दैवफलसिद्धिसंबद्धां च तत्त्वजां पारमार्थिकीं मानुषीं चैव यातव्यसमुच्छेदादिरूपां परचक्रचोरादिजनितराज्योपद्रवादिरूपां च तां प्रवृत्तिं प्रावृत्तिक-

व्यपदेशनिमित्तभूतां वार्तां शासनं प्रति लेखविषये द्विविधां व्यवस्यन्ति शुभाशुभात्मना द्विप्रकारां निश्चिन्वन्ति । प्रवृत्तिद्वैविध्यवचनभङ्ग्या चानया तन्निवेदनफलकस्य प्रावृत्तिकलेखस्य द्वैविध्यमभिहितं बोद्धव्यम् । श्रीमूला.

**दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च ।**
**प्रतिलेखो भवेत्कार्यो यथा राजवचस्तथा ॥**

प्रतिलेखमाह– दृष्ट्वेति । लेखं परस्मादागतं यथातत्त्वं दृष्ट्वा यथावस्थितपदपदार्थानतिक्रमेण पूर्वं स्वयं वाचनया विज्ञाय ततः प्रत्यनुभाष्य च पश्चात् राज्ञः सकाशेऽनुवाच्य च यथा राजवचः राज्ञः उत्तरवचनं भवति तथा प्रतिलेखः कार्यो भवेत् । श्रीमूला.

**यत्रेश्वरांश्चाधिकृतांश्च राजा**
**रक्षोपकारौ पथिकार्थमाह ।**
**सर्वत्रगो नाम भवेत्स मार्गे**
**देशे च सर्वत्र च वेदितव्यः ॥**

यत्र लेखे राजा ईश्वरान् दुर्गराष्ट्रान्तपालादीन् समाहर्तृप्रशास्तृप्रभृतीनधिकृतांश्च पथिकानां पथि सहायदानलक्षणां रक्षां भक्तयवसेन्धनादिदानलक्षणमुपकारं चाऽऽज्ञापयति स लेखः राज्ञो देशान्तरसंचारणे स्वनिवासदेशे सर्वस्मिंश्च काले लेखनार्हत्वान्नाम्ना सर्वत्रगो भवेदित्याह– यत्रेश्वरांश्चेत्यादि । श्रीमूला.

उपायभेदज्ञानम्

***उपायाः सामोपप्रदानभेददण्डाः ॥**

शासनाधीनत्वं संधिविग्रहयोरुक्तमधस्तात् । संधिविग्रहानुष्ठानस्य उपायप्रयोगसापेक्षत्वात् तेष्वपि व्युत्पत्तिः शासनलेखकस्यापेक्षितेति कृत्वा तान् दर्शयति– उपाया इत्यादि ।

[ वधः परिक्लेशोऽर्थहरणं दण्ड इति ॥ ] इतिशब्दः समाप्तौ । लेखगुणाख्यानं परिसमाप्तमित्यर्थः । श्रीमूला.

* एतदादिरुपायविषयको ग्रन्थः 'उपायाः' इत्यस्मिन् प्रकरणे संग्रहीष्यते । अस्मिन् शासनाधिकाराध्याये तस्य संगतिं बोधयितुं प्रथमवाक्यमात्रमत्र संगृहीतम् ।

लेखदोषाः

**अकान्तिर्व्याघातः पुनरुक्तमपशब्दः संप्लव इति लेखदोषाः ॥**

अथ लेखदोषानाह– अकान्तिरित्यादि । श्रीमूला.

**तत्र कालपत्रकमचारुविषमविरागाक्षरत्वमकान्तिः ॥**

तत्र लेखदोषेषु पञ्चसूद्दिष्टेषु मध्ये कालपत्रकं काले मषीप्रसरणात् स्वभावतो वा मलिने पत्रे लिखितं अकान्तिः तदाख्यो दोषः । अचारुविषमविरागाक्षरत्वम्– अचारूणि असुन्दराणि विषमाणि अनियतस्थौल्यसौक्ष्म्याणि विरागाणि शुद्धोदकप्रायमषीलिखितानि चाक्षराणि यस्मिंस्तस्य भावस्तत्त्वं च अकान्तिः । एवमस्य दोषस्याऽऽधारप्रयुक्तत्वेनाऽऽधेयप्रयुक्तत्वेन च द्वैविध्यं दर्शितम् । श्रीमूला.

**पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः ॥**

व्याघातमाह– पूर्वेणेत्यादि । पूर्वेणार्थेनोत्तरस्य अनुपपत्तिः विरोधः व्याघातः । यथा 'प्रणम्याऽऽज्ञापयति' इति । इह हि प्रणामाज्ञापनयोर्विरोधः प्रतीतः । श्रीमूला.

**उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम् ॥**

पुनरुक्तमाह– उक्तस्येत्यादि । तद्यथा– 'पूज्यो मान्यः' इत्यादिलेखनम् । श्रीमूला.

**लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः ॥**

अपशब्दं व्याचष्टे– लिङ्गेत्यादि । स्त्रीलिङ्गे प्रयोक्तव्ये पुंनपुंसकप्रयोगो लिङ्गस्यान्यथाप्रयोगः । एकवचने द्विबहुवचनप्रयोगो वचनस्यान्यथाप्रयोगः । वर्तमाने भूतभविष्यत्प्रयोगः कालस्यान्यथाप्रयोगः । कर्मकारके कर्तृकरणादिकारकप्रयोगः कारकस्यान्यथाप्रयोगः । लिङ्गादीनामेवंजातीयोऽन्यथाप्रयोगोऽपशब्द इत्युच्यते । श्रीमूला.

**अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासः संप्लव इति ॥**

संप्लवमाह– अवर्ग इति । वर्गः यतिः छेदः इति पर्यायाः । अवर्गे वर्गायोग्ये वर्गकरणं वर्गे वर्गयोग्ये

अवर्गक्रिया चेति द्वयम् , गुणविपर्यासः गुणानां अर्थक्रमादिलेखगुणानां वैपरीत्यं च संप्लवो नाम नाम्ना भवति ।

श्रीमूला.

सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च ।
कौटल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः ॥

अध्यायान्ते श्लोकमाह– सर्वेत्यादि । कौटल्येन सर्वशास्त्राणि बार्हस्पत्यादीनि अनुक्रम्य ज्ञात्वा प्रयोगमुपलभ्य च शास्त्रानुष्ठानं दृष्ट्वा च नरेन्द्रार्थे राज्ञः कृते प्रयोजनाय शासनस्य विधिः कृतः उपदिष्टः । शास्त्रलोकदृष्टस्यापि सतः शासनविधेरिह कौटल्यकृतत्ववचनं कौटल्येन कार्त्स्न्यसौष्ठवातिशययोगसंपादनादिति बोद्धव्यम् ।

श्रीमूला.

## बृहस्पतिः

गणकलेखकलक्षणानि

[1]शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥

शब्दाभिधानं कोषः । गणकः ज्योतिर्वित् । लेखकः व्याकरणकोषवेत्ता । द्वावपि योगरूढौ । उभयत्र तयोरेव कुशलतेत्यर्थः । *

रार. २१

## बृहत्पराशरः

लेखकलक्षणानि

[2]लेखकानपि कायस्थांल्लेख्यकृत्यविचक्षणान्
( नृपः कुर्यात् ) ॥

## मत्स्यपुराणम्

लेखकलक्षणानि

[3]सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः ॥

[4]लेखकः कथितो राज्ञः सर्वाधिकरणेषु वै ।
शीर्षोपेतान्सुसंपूर्णान्समश्रेणिगतान्समान् ॥

[5]अक्षरान्वै लिखेद्यस्तु लेखकः स वरः स्मृतः ।
उपायवाक्यकुशलः सर्वशास्त्रविशारदः ॥

[6]बह्वर्थवक्ता चाल्पेन लेखकः स्यान्नृपोत्तम ।
वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित् ॥

[7]अनाहार्ये भवेत्सक्तो लेखकः स्यान्नृपोत्तम ॥

उपायाः सामदानभेददण्डाः । तेषु वाक्ये च निपुणः ।

* राक. २७

## गरुडपुराणम्

लेखकलक्षणानि

[5]मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।
सर्वशास्त्रसमालोकी ह्येष साधुः स लेखकः ॥

## शुक्रनीतिः

लेखकलक्षणानि

[6]गणनाकुशलो यस्तु देशभाषाप्रभेदवित् ।
असंदिग्धमगूढार्थं विलिखेत्स च लेखकः ॥

---

* त्रुटितोऽयं ग्रन्थः ।

( १ ) रार. २१.

( २ ) बृपसं. १२।१० उत्त.

( ३ ) मत्स्य. २१५।२५ ; विध. २।२४।२६ भिज्ञः ( भिज्ञाः ) रदः ( रदाः ) ; राक. २७ ; राप्र. १८२.

* राप्र. राकवत् ।

( १ ) मत्स्य. २१५।२६ ; विध. २।२४।२६–२७ प्रथमचरणे ( लेखकाः कथिता राम ) श्रेणि ( द्रोणी ) ; राक. २७ करणेषु वै ( करणो बुधैः ) न्समान् ( न्शुभान् ) ; राप्र. १८२ न्सम ( न्शुभ ).

( २ ) मत्स्य. २१५।२७ ; विध. २।२४।२७–२८ न्वै लि ( न्विलि ) ; राक. २७; राप्र. १८२–१८३.

( ३ ) मत्स्य. २१५।२८ ; विध २।२४।२८ न्नृपो ( द्भृगु ) पू. ; राक. २७ ; राप्र. १८३ वाक्याभि ( राजाभि ).

( ४ ) मत्स्य. २१५।२९ ; राक. २८ प्रथमचरणे ( अनाहार्यो नृपे भक्ते ) ; राप्र. १८३ त्सक्तो ( ञ्छक्तो ) शेषं राकवत्.

( ५ ) गरुड. १।११२।७ ; राप्र. १८२.

( ६ ) शुनी. २।१७३, २९०–२९१.

यस्तु गणनायां संख्याने कुशलः तथा देशानां भाषाणां च प्रभेदवित् विशेषज्ञानवान् असंदिग्धं संदेहरहितं तथा अगूढार्थं स्पष्टार्थं यथा तथा विलिखेत् स च लेखकः । शुनीटी.

नृपलेखानुसारेणैव भृत्यैः कार्यं निर्वर्तनीयम्

**न कार्यं भृतकः कुर्यान्नृपलेखाद्विना क्वचित् ।**
**नाऽऽज्ञापयेल्लेखनेन विनाऽल्पं वा महन्नृपः ॥**

भृतकः भृत्यः क्वचित् नृपलेखाद्विना राजलिपिमन्तरेण कार्यं न कुर्यात् । नृपः वा राजा च लेखनेन विना अल्पं वा महत् कार्यं न आज्ञापयेत् । शुनीटी.

**भ्रान्तेः पुरुषधर्मत्वाल्लेख्यं निर्णायकं परम् ।**
**अलेख्यमाज्ञापयति ह्यलेख्यं यत्करोति यः ।**
**राजकृत्यमुभौ चोरौ तौ भृत्यनृपती सदा ॥**

भ्रान्तेः भ्रमस्य पुरुषधर्मत्वात् सर्वपुरुषेषु संभाव्यमानत्वादित्यर्थः, लेख्यं लिपिः परं प्रधानं निर्णायकं प्रमापकम् । यः राजा अलेख्यं लेख्यं विना आज्ञापयति, यश्च भृत्यः यत् अलेख्यं लेख्यं विना राजकृत्यं करोति, तौ उभौ भृत्यनृपती सदा चोरौ, विज्ञेयाविति शेषः । शुनीटी.

**नृपसंचिह्नितं लेख्यं नृपस्तन्न नृपो नृपः ॥**

नृपसंचिह्नितं राजचिह्नितं तत् लेख्यमेव नृपः, नृपः नृपः न, लिपेरेव राजकार्यकारित्वादिति भावः । शुनीटी.

उत्तमोत्तमोत्तममध्यमाधमभेदाः लेख्यस्य

**समुद्रलिखितं राज्ञा लेख्यं तच्चोत्तमोत्तमम् ।**
**उत्तमं राजलिखितं मध्यं मन्त्र्यादिभिः कृतम् ।**
**पौरलेख्यं कनिष्ठं स्यात्सर्वं संसाधनक्षमम् ॥**

यत् लेख्यं समुद्रं मुद्रासहितं राज्ञा लिखितं तच्च तदेव उत्तमोत्तमं अत्युत्तमम् । राजलिखितं लेख्यम्, मुद्राहीनमिति शेषः, उत्तमम् । मन्त्र्यादिभिः कृतं लेख्यं मध्यम् । पौरैः पुरवासिभिः लेख्यं कनिष्ठं अधमं स्यात् । सर्वं अत्युत्तमादिलेख्यं संसाधने सम्यक् साधने, कार्यस्येति शेषः, क्षमं समर्थम् । सर्वैरेव कार्यं साध्यते, परं अत्युत्तमत्वादिभेदेनेति भावः । शुनीटी.

राज्ञे निवेद्यं वृत्तलेख्यम्

**यस्मिन्यस्मिन् हि कृत्ये तु राज्ञा योऽधिकृतो नरः ।**
**सामात्ययुवराजादिर्यथानुक्रमतश्च सः ॥**
**दैनिकं मासिकं वृत्तं वार्षिकं बहुवार्षिकम् ।**
**तत्कार्यजातलेख्यं तु राज्ञे सम्यङ् निवेदयेत् ॥**

यस्मिन् यस्मिन् कृत्ये यः यः सामात्ययुवराजादिः अमात्यसहितः युवराजादिः नरः राज्ञा अधिकृतः नियुक्तः सः सः यथानुक्रमतश्च यथाक्रमेणैव दैनिकं प्रात्यहिकं मासिकं वार्षिकं बहुवार्षिकं वा वृत्तं निष्पन्नं तत्तत् कार्यजातलेख्यं राज्ञे सम्यक् निवेदयेत् । शुनीटी.

राजादिकृतलेख्यस्य प्रतिलिपिः स्मृतिपत्रकम्

**राजाद्यङ्कितलेख्यस्य धारयेत्स्मृतिपत्रकम् ।**
**कालेऽतीते विस्मृतिर्वा भ्रान्तिः संजायते नृणाम् ॥**

राजादिभिः अङ्कितस्य चिह्नितस्य लेख्यस्य स्मृतिपत्रकं स्मरणलिपिं धारयेत् रक्षेत्, भृत्य इति शेषः । यतः काले अतीते गते सति नृणां विस्मृतिः भ्रान्तिः वा संजायते । शुनीटी.

**अनुभूतस्य स्मृत्यर्थं लिखितं निर्मितं पुरा ।**
**यत्नाच्च ब्रह्मणा वाचां वर्णस्वरविचिह्नितम् ॥**

पुरा पूर्वस्मिन् काले ब्रह्मणा अनुभूतस्य कृतस्य स्मृत्यर्थं स्मरणार्थं यत्नात् वाचां वर्णैः व्यञ्जनैः स्वरैश्च विचिह्नितं विशेषेण अङ्कितं लिखितं लेख्यं निर्मितम् । शुनीटी.

वृत्तलेख्यमायव्ययलेख्यं चेति द्विविधं लेख्यम्

**वृत्तलेख्यं तथा चाऽऽयव्ययलेख्यमिति द्विधा ।**
**व्यवहारक्रियाभेदादुभयं बहुतां गतम् ॥**

लेख्यं द्विधा— वृत्तलेख्यं तथा आयव्ययलेख्यं च । तदुभयं व्यवहारक्रियाभेदात् बहुतां गतं बहुविधत्वं प्राप्तम् । शुनीटी.

वृत्तलेख्यप्रकाराः

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमुच्यते ॥

यथोपन्यस्तेन यथायथकथितेन साध्येन अभियोज्येन अर्थेन विषयेण संयुक्तं उत्तरक्रियया सहितं सावधारणं सिद्धान्तसहितं लेख्यं जयपत्रकं उच्यते कथ्यते । शुनीटी.

सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु यत् ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥

येन लेख्येन सामन्तेषु अधीननृपतिषु अथवा राष्ट्रपालादिकेषु भृत्येषु यत् कार्यं आदिश्यते आज्ञाप्यते तत् आज्ञापत्रमुच्यते । शुनीटी.

ऋत्विक्पुरोहिताचार्यमन्येष्वभ्यर्चितेषु च ।
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥

येन ऋत्विक्पुरोहिताचार्येषु अन्येषु अभ्यर्चितेषु पूज्येषु च कार्यं निवेद्यते तत् प्रज्ञापनाय पत्रं प्रज्ञापनपत्रमित्यर्थः । शुनीटी.

सर्वे शृणुत कर्तव्यमाज्ञया मम निश्चितम् ।
स्वहस्तकालसंपन्नं शासनं पत्रमेव तत् ॥

सर्वे यूयं मम आज्ञया निश्चितं कर्तव्यं शृणुत, एवमुक्त्वेति शेषः । यत् स्वहस्तेन स्वाक्षरेण कालेन च संयुक्तं लेख्यं तदेव शासनं पत्रं शासनलेख्यमित्यर्थः । शुनीटी.

देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिभिस्तुष्टः प्रसादलिखितं हि तत् ॥

राजा सेवया परिचर्यया शौर्यादिभिः वीरत्वप्रकटनादिभिः च तुष्टः सन् यस्य लेख्यस्य लिखितेन लेखनेन देशादिकं प्रयच्छति, पुरस्काररूपेणेति भावः, तत् हि प्रसादलिखितम् । शुनीटी.

भोगपत्रं तु करदीकृतं चोपायनीकृतम् ।
पुरुषावधिकं तत्तु कालावधिकमेव वा ॥

त्वया एतत् भुज्यतामिति कृत्वा यत् लेख्यं दीयते तत् भोगपत्रम् । अस्य एतत् राजस्वमिति कृत्वा यत् लेख्यं दीयते तत् करदीकृतं करदपत्रमित्यर्थः । उपायनं उपढौकनं तद्रूपेण द्रव्यं दत्त्वा यत् लेख्यं दीयते तत् उपायनीकृतं उपायनपत्रमित्यर्थः । इदं वस्तु एकेन द्वाभ्यां त्रिभिर्वा पुरुषैर्भोक्तव्यमिति कृत्वा यत् लेख्यं दीयते तत् पुरुषावधिकम् । यच्च कालमुद्दिश्य लेख्यं दीयते तत् कालावधिकम्, लेख्यमिति शेषः । शुनीटी.

विभक्ता ये च भ्रात्राद्याः स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥

ये च भ्रात्राद्याः स्वरुच्या स्वेच्छया परस्परं विभक्ताः सन्तः विभागपत्रं वण्टनलेख्यं कुर्वन्ति तत् भागलेख्यमुच्यते । शुनीटी.

गृहभूम्यादिकं दत्त्वा पत्रं कुर्यात्प्रकाशकम् ।
अनुच्छेद्यमनाहार्यं दानलेख्यं तदुच्यते ॥

गृहं भूम्यादिकं च दत्त्वा यत् अनुच्छेद्यं अखण्डनीयं अनाहार्यं अलीकवादरहितं प्रकाशकं जनसमक्षं पत्रं कुर्यात् तत् दानलेख्यमुच्यते । शुनीटी.

गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्यप्रमाणयुक् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥

तुल्येन योग्येन मूल्येन प्रमाणेन परिमाणेन च युक्तं गृहक्षेत्रादिकं क्रीत्वा यत्तु पत्रं कारयते तत् क्रयपत्रमुच्यते । शुनीटी.

जङ्गमस्थावरं बन्धं कृत्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तं सादिलेख्यं तदुच्यते ॥

जङ्गमं स्वर्णरजतादि स्थावरं गृहभूम्यादि बन्धं बन्धकं कृत्वा यत् गोप्यभोग्यक्रियायुतं लेख्यं करोति तत् सादिलेख्यमुच्यते । शुनीटी.

ग्रामो देशश्च यत्कुर्यात्सत्यलेख्यं परस्परम् ।
राजाविरोधिधर्मार्थं संवित्पत्रं तदुच्यते ॥

ग्रामः अल्पजनवासभूमिः देशः बहुलोकालयपूर्णजनपदश्च परस्परं राजाविरोधिधर्मार्थं नृपाविरुद्धधर्मरक्षणार्थं यत् सत्यलेख्यं कुर्यात् तत् संवित्पत्रमुच्यते । शुनीटी.

वृद्ध्यै धनं गृहीत्वा तु कृतं वा कारितं च यत् ।
सुसाक्षिमच्च तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥

वृद्ध्यै वृद्धिं दास्यामि इति प्रतिश्रुत्य धनं गृहीत्वा सुसाक्षिमत् शोभनैः निर्दोषैरित्यर्थः, साक्षिभिर्युक्त-

मित्यर्थः, यत् लेख्यं कृतं कारितं वा तत् मनीषिभिः विद्वद्भिः ऋणलेख्यं प्रोक्तं कथितम्। शुनीटी.

**अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः।**
**दत्तं लेख्यं साक्षिमद्यच्छुद्धिपत्रं तदुच्यते॥**

अभिशापे अभियोगे अपवादे इत्यर्थः, समुत्तीर्णे अप्रमाणतादिभिः क्षालिते तथा प्रायश्चित्ते पापशोधकव्यापारे कृते सति यत् साक्षिमत् ससाक्षिकं लेख्यं दत्तं बुधैः तत् शुद्धिपत्रमुच्यते। शुनीटी.

**मेलयित्वा स्वधनांशान् व्यवहाराय साधकाः।**
**कुर्वन्ति लेखपत्रं यत्तच्च सामयिकं स्मृतम्॥**

साधकाः संभूयसमुत्थायिनः व्यवसायिनः स्वधनांशान् व्यवहाराय मेलयित्वा मिश्रयित्वा यत् लेख्यपत्रं कुर्वन्ति तत् सामयिकं समयकृतं लेख्यं स्मृतम्। शुनीटी.

**सभ्याधिकारिप्रकृतिसभासद्भिर्नयः कृतः।**
**तत्पत्रं वादिमान्यं चेज्ज्ञेयं संमतिपत्रकम्॥**

सभ्यैः अधिकारिभिः राजपुरुषैः प्रकृतिभिः अमात्यादिभिः सभासद्भिः व्यवहारदर्शिभिरित्यर्थः, यत् न कृतं तत् पत्रं (?) चेत् यदि वादिभिः प्रतिपक्षैः मान्यं ग्राह्यं भवति तदा तत् संमतिसंज्ञकं संमतिपत्रमित्यर्थः, ज्ञेयम्। शुनीटी.

**स्वकीयवृत्तज्ञानार्थं लिख्यते यत्परस्परम्।**
**श्रीमङ्गलपदाढ्यं वा सपूर्वोत्तरपक्षकम्॥**
**असंदिग्धमगूढार्थं स्पष्टाक्षरपदं सदा।**
**अन्यव्यावर्तकस्वात्मपरपित्रादिनामयुक्॥**
**एकद्विबहुवचनैर्यथार्हस्तुतिसंयुतम्।**
**समामासतदर्धाहर्नामजात्यादिचिह्नितम्॥**
**कार्यबोधि सुसंबन्धं नत्याशीर्वादपूर्वकम्।**
**स्वाम्यसेवकसेव्यार्थं क्षेमपत्रं तु तत्स्मृतम्॥**

स्वकीयस्य निजस्य वृत्तस्य चरितस्य ज्ञानार्थं बोधनार्थं श्रीमङ्गलपदैः आढ्यं युक्तं सपूर्वोत्तरपक्षकं पूर्वपक्षोत्तरपक्षसहितं असंदिग्धं संदेहरहितं अगूढार्थं अगुप्तविषयं सदा स्पष्टानि सुबोधानि अक्षरपदानि यस्मिन् तथोक्तं अन्येषां व्यावर्तकैः बोधनिवारकैः स्वात्मनः निजस्य परस्य च पित्रादिनामभिः युक्तं एकेन द्वाभ्यां वा बहुभिः वचनैः यथार्हया यथायोग्यया स्तुत्या प्रशंसावादेन संयुतं समामासतदर्धाहर्नामजात्यादिचिह्नितं वत्सरमासपक्षदिननामजात्यादिभिरङ्कितं कार्यबोधि कार्यज्ञापकं सुसंबन्धं सुसंगतं नत्याशीर्वादपूर्वकं प्रणत्या आशिषा च युक्तं स्वाम्यसेवकसेव्यार्थं प्रभुभृत्यसेवासंवलितं यत् परस्परं लिख्यते तत् क्षेमपत्रं मङ्गललेख्यं स्मृतं कथितम्। शुनीटी.

**एभिरेव गुणैर्युक्तस्वाधर्षकविबोधकम्।**
**भाषापत्रं तु तज्ज्ञेयमथवा वेदनार्थकम्॥**

एभिः क्षेमपत्रीयैरेव गुणैः धर्मैः युक्तं स्वस्य आत्मनः आधर्षणस्य पीडनस्य विबोधकं विशेषेण ज्ञापकं यत् लेख्यं तत् भाषापत्रं अभियोगपत्रं अथवा वेदनार्थकं पत्रं ज्ञेयम्। शुनीटी.

**प्रदर्शितं वृत्तलेख्यं समासाल्लक्षणान्वितम्।**
**समासात्कथ्यते चान्यच्छेषायव्ययबोधकम्॥**

समासात् संक्षेपात् लक्षणान्वितं लक्षणयुक्तं वृत्तलेख्यं प्रदर्शितम्। इदानीमन्यत् शेषं अवशिष्टं आयव्ययबोधकं लेख्यं समासात् संक्षेपात् कथ्यते। शुनीटी.

आयव्ययलेख्यविवरणम्

**व्याप्यव्यापकभेदैश्च मूल्यमानादिभिः पृथक्।**
**विशिष्टसंज्ञितैस्तद्धि यथार्थैर्बहुभेदयुक्॥**

तत् आयव्ययपत्रं व्याप्यानां अल्पविषयाणां व्यापकानां बहुविषयाणां भेदैः वैशिष्ट्यैः विशिष्टसंज्ञितैः बहुस्वल्पैः पृथक् यथार्थैः मूल्यमानादिभिश्च बहुभेदयुक् विविधं भवति। शुनीटी.

**वत्सरे वत्सरे वाऽपि मासि मासि दिने दिने।**
**हिरण्यपशुधान्यादि स्वाधीनं त्वायसंज्ञकम्।**
**पराधीनं कृतं यत्तु व्ययसंज्ञं धनं च तत्॥**

वत्सरे वत्सरे प्रतिवत्सरं मासि मासि प्रतिमासं दिने दिने प्रतिदिनं यत् हिरण्यपशुधान्यादि स्वाधीनं निजायत्तं भवति तत् तु तदेव आयसंज्ञकम्। यच्च धनं हिरण्यादि पराधीनं परस्वामिकं कृतं तत् व्ययसंज्ञम्। शुनीटी.

**सायस्कश्चैव प्राचीन आयः संचितसंज्ञकः ।**
**व्ययो द्विधा चोपभुक्तस्तथा विनिमयात्मकः ॥**

आयः सायस्कः सद्यो भवः प्राचीनश्च भवति । तत्र प्राचीनः आयः संचितमिति संज्ञा यस्य तादृशः संचितनामा इत्यर्थः । व्ययश्च द्विधा– उपभुक्तः तथा विनिमयात्मकः परिवर्तनरूपः । शुनीटी.

**निश्चितान्यस्वामिकं चानिश्चितस्वामिकं तथा ।**
**स्वस्वत्वनिश्चितं चेति त्रिविधं संचितं मतम् ॥**

संचितं संचितनामा आयः त्रिविधं मतं कथितम् । निश्चितः अन्यः स्वामी यस्य तथोक्तमेकम् । अनिश्चितः स्वामी यस्य तादृशं द्वितीयम् । तथा स्वस्य स्वत्वं निश्चितं यस्मिन् तथाभूतं तृतीयम् । शुनीटी.

**निश्चितान्यस्वामिकं यद्धनं तु त्रिविधं हि तत् ।**
**औपनिध्यं याचितकमौत्तमर्णिकमेव च ॥**

निश्चितान्यस्वामिकं यत् धनं संचितमित्यर्थः, तत् त्रिविधं हि त्रिप्रकारमेव । औपनिध्यं एकम्, याचितकं द्वितीयम्, औत्तमर्णिकं तृतीयम् । शुनीटी.

**विस्रम्भान्निहितं सद्भिर्यदौपनिधिकं हि तत् ।**
**अवृद्धिकं गृहीतान्यालंकारादि च याचितम् ॥**

विश्रम्भात् विश्वासात् सद्भिः साधुभिः यद्धनं निहितं गच्छितं (?) तद्धि तदेव औपनिधिकं औपनिध्यम् । यच्च अवृद्धिकं वृद्धिं विना गृहीतम्, प्रार्थनयेति भावः, अन्यस्य अलंकारादि तत् याचितम् । शुनीटी.

**सवृद्धिकं गृहीतं यद्दणं तच्चौत्तमर्णिकम् ।**
**निध्यादिकं च मार्गादौ प्राप्तमज्ञातस्वामिकम् ॥**

सवृद्धिकं वृद्धिं दास्यामीति प्रतिश्रुत्य यत् ऋणं गृहीतं तत् औत्तमर्णिकम् । मार्गादौ रथ्यादिस्थाने यत् निध्यादिकं धनं प्राप्तं तत् अज्ञातस्वामिकं अनिश्चितस्वामिकम् । शुनीटी.

**साहजिकं चाधिकं च द्विधा स्वस्वविनिश्चितम् ॥**

स्वस्वविनिश्चितं निश्चितस्वस्वत्वं धनं द्विधा– साहजिकं अधिकं च । शुनीटी.

**उत्पद्यते यो नियतो दिने मासि च वत्सरे ।**
**आयः साहजिकः सैव दायाद्यश्च स्ववृत्तितः ॥**

दिने मासि वत्सरे वा दायात् पैतृकात् धनात् स्ववृत्तितः स्वव्यवसायाच्च यः नियतः निर्धारितः आयः उत्पद्यते स एव साहजिकः । शुनीटी.

**दायः परिग्रहो यत्तु प्रकृष्टं तत्स्वभावजम् ।**
**मौल्याधिक्यं कुसीदं च गृहीतं याजनादिभिः ॥**
**पारितोष्यं भृतिप्राप्तं विजिताद्यं धनं च यत् ।**
**स्वस्वत्वेऽधिकसंज्ञं तदन्यत्साहजिकं स्मृतम् ॥**

यस्तु दायः पैतृकं धनं परिग्रहः दानग्रहणात् लब्धश्च आयः तत् प्रकृष्टं अक्लेशसाध्यत्वात् उत्तमं स्वभावजं साहजिकम्, धनमिति शेषः । यत् मौल्याधिक्यं यथायथमूल्यात् अधिकत्वेन प्राप्तं कुसीदं वृद्ध्या प्राप्तं याजनादिभिः करणैः गृहीतं पारितोष्यं पुरस्काररूपेण लब्धं भृतिप्राप्तं वेतनलब्धं तथा विजितं युद्धजयादिना लब्धं धनं तत् स्वस्वत्वे स्वस्वत्वनिश्चिते धने अधिकसंज्ञं अधिकमिति प्रसिद्धमित्यर्थः । अन्यत् सर्वं साहजिकं स्मृतं कथितम् । शुनीटी.

**पूर्ववत्सरशेषं च वर्तमानाब्दसंभवम् ।**
**स्वाधीनं संचितं द्वेधा धनं सर्वं प्रकीर्तितम् ॥**

स्वाधीनं संचितं सर्वं धनं द्वेधा द्विविधं प्रकीर्तितम्– पूर्ववत्सरशेषं वर्तमानाब्दसंभवं वर्तमानवर्षजातं च । शुनीटी.

**द्वेधाऽधिकं साहजिकं पार्थिवेतरभेदतः ।**
**भूमिभागसमुद्भूत आयः पार्थिव उच्यते ॥**

अधिकं साहजिकं च पूर्वोक्तं द्विविधं धनं पार्थिवेतरभेदतः पार्थिवं स्थावरं इतरं अस्थावरं जङ्गममिति भेदात् द्वेधा द्विविधम् । तत्र भूमिभागेभ्यः समुद्भूतः आयः पार्थिवः उच्यते । शुनीटी.

**स देवकृत्रिमजलैर्देशग्रामपुरैः पृथक् ।**
**बहुमध्याल्पफलतो भिद्यते भूविभागतः ॥**

सः पार्थिव आयः देवकृत्रिमजलैः देवालयादिभिः कृत्रिमैः कल्पितैः वस्तुभिः जलैः देशग्रामपुरैः पृथक् विभिन्नैः भूविभागतः पृथ्वीविभागैः बहु-

मध्याल्पफलतः बहुभिः मध्यैः अल्पैश्च फलैः भिद्यते भेदं गच्छति । शुनीटी.

**शुल्कदण्डाकरकरभाटकोपायनादिभिः ।**
**इतरः कीर्तितस्तज्ज्ञैरायो लेखविशारदैः ॥**

शुल्कैः वणिगादिभ्यः लब्धैः राजग्राह्यांशैः दण्डैः दुष्टदमनोत्थैः आकरैः खन्युत्पन्नैः करैः राजस्वैः भाटकैः भाडेति प्रसिद्धैः तथा उपायनैः उपदाभिः इत्येवमादिभिः आयः तज्ज्ञैः आयज्ञानवद्भिः लेखविशारदैः लेखकैः इतरः पार्थिवभिन्नः कीर्तितः । शुनीटी.

**यन्निमित्तो भवेदायो व्ययस्तन्नामपूर्वकः ।**
**व्ययश्चैवं समुद्दिष्टो व्याप्यव्यापकसंयुतः ॥**

आयः यन्निमित्तः येन निमित्तेन भवेत् व्ययोऽपि तन्नामपूर्वकः तन्नाम पूर्वं यस्य तादृशः तन्निमित्तसमुद्भव इत्यर्थः, भवेत् । व्ययश्च एवं आयवदित्यर्थः, व्याप्यव्यापकसंयुतः स्वल्पबहुविषयगोचरः समुद्दिष्टः कथितः । शुनीटी.

**पुनरावर्तकः स्वत्वनिवर्तक इति द्विधा ।**
**व्ययो यन्निध्युपनिधीकृतो विनिमयीकृतः ।**
**सकुसीदाकुसीदाधमर्णिकश्चाऽऽवृतः स्मृतः ॥**

स व्ययश्च द्विधा— पुनरावर्तकः स्वत्वनिवर्तकश्चेति । यः व्ययः निधिः कृतः उपनिधिः कृतः विनिमयीकृतः सकुसीदः सवृद्धिकः अकुसीदः अवृद्धिकः इति द्वेधा आधमर्णिकश्च आवृत्तः पुनरावर्तकः स्मृतः । शुनीटी.

**निधिर्भूमौ विनिहितोऽन्यस्मिन्नुपनिधिः स्थितः ।**
**दत्तमूल्यादिसंप्राप्तः सैव विनिमयीकृतः ॥**

भूमौ विनिहितः निखातः निधिः । तस्य कष्टातिपातेऽप्यग्रहणीयत्वात् व्ययव्यपदेशः । अन्यस्मिन् जने स्थितः गच्छित इत्यर्थः, उपनिधिः । दत्तेन मूल्यादिना संप्राप्तः सैव स एव, आर्षोऽयं संधिः, विनिमयीकृतः परिवर्तितः एकवस्तुप्रदानेन अपरवस्तुग्रहणमित्यर्थः । शुनीटी.

**वृद्ध्याऽवृद्ध्या च यो दत्तः स वै स्यादाधमर्णिकः ।**
**सवृद्धिकमृणं दत्तमकुसीदं तु याचितम् ॥**

यश्च वृद्ध्या अवृद्ध्या च दत्तः स वै एव आधमर्णिकः स्यात् । तत्र सवृद्धिकं यत् दत्तं तत् ऋणम्, अकुसीदं अवृद्धिकं तु याचितं भवति । शुनीटी.

**स्वत्वनिवर्तको द्वेधा त्वैहिकः पारलौकिकः ॥**
**प्रतिदानं पारितोष्यं वेतनं भोग्यमैहिकः ।**
**चतुर्विधस्तथा पारलौकिकोऽनन्तभेदभाक् ॥**

स्वत्वनिवर्तकः व्ययस्तु द्वेधा द्विविधः ऐहिकः पारलौकिकश्च । तत्र प्रतिदानं पारितोष्यं वेतनं भोग्यं चेति चतुर्विधः ऐहिकः । तथा पारलौकिकः अनन्तभेदभाक् बहुविध इत्यर्थः । शुनीटी.

**शेषं संयोजयेन्नित्यं पुनरावर्तको व्ययः ।**
**मूल्यत्वेन च यद्दत्तं प्रतिदानं स्मृतं हि तत् ॥**

पुनरावर्तकः व्ययः नित्यं शेषं संयोजयेत् । यच्च मूल्यत्वेन दत्तं तत् हि प्रतिदानं स्मृतम् । शुनीटी.

**सेवाशौर्यादिसंतुष्टैर्दत्तं तत्पारितोषिकम् ।**
**भृतिरूपेण संदत्तं वेतनं तत्प्रकीर्तितम् ॥**

सेवया शौर्यादिना च संतुष्टैः प्रभुभिः यत् दत्तं तत् पारितोषिकं पारितोष्यम् । यच्च भृतिरूपेण संदत्तं तत् वेतनं प्रकीर्तितं कथितम् । शुनीटी.

**धान्यवस्त्रगृहारामगोगजादिरथार्थकम् ।**
**विद्याराज्याद्यर्जनार्थं धनाद्यर्थं तथैव च ।**
**व्ययीकृतं रक्षणार्थमुपभोग्यं तदुच्यते ॥**

धान्यानि वस्त्राणि गृहाणि आरामाः उद्यानानि गावः गजाश्च आदयो येषां ते रथाश्च अर्थाः प्रयोजनानि यत्र तादृशं विद्याराज्याद्यर्जनार्थं धनाद्यर्थं रक्षणार्थं च यत् व्ययीकृतं तत् उपभोग्यमुच्यते । शुनीटी.

**सुवर्णरत्नरजतनिष्कशालास्तथैव च ।**
**रथाश्वगोगजोष्ट्राजावीनशालाः पृथक् पृथक् ॥**
**वाद्यशस्त्रास्त्रवस्त्राणां धान्यसंभारयोस्तथा ।**
**मन्त्रिशिल्पनाट्यवैद्यमृगाणां पाकपक्षिणाम् ।**
**शाला भोग्ये निविष्टास्तु तद्व्ययो भोग्य उच्यते ॥**

सुवर्णानां रत्नानां रजतानां निष्काणां 'मोहर' इति प्रसिद्धानां याः शालाः स्थानानि, पृथक् पृथक् रथानां अश्वानां गवां गजानां उष्ट्राणां अजानां छागानां अवीनां मेषाणां इनानां च याः शालाः, वाद्यानां शस्त्राणां अस्त्राणां वस्त्राणां च याः शालाः, धान्यस्य संभारस्य द्रव्यसमूहस्य च याः शालाः, तथा मन्त्रिणां शिल्पानां नाट्यानां वैद्यानां मृगाणां पाकानां पक्षिणां च याः शालाः भोग्ये निविष्टाः भोग्यान्तर्भूताः तद्व्ययः तासां व्ययः भोग्यः उच्यते । शुनीटी.

**जपहोमार्चनैर्दानैश्चतुर्धा पारलौकिकः ।**
**पुनर्यातो निवृत्तश्च विशेषायव्ययौ च तौ ।**
**आवर्तको निवर्ती च व्ययायौ तु पृथग् द्विधा ॥**

पारलौकिकः व्ययः जपहोमार्चनदानभेदेन चतुर्धा । तौ च विशेषायव्ययौ पुनर्यातः निवृत्तश्चेति द्वौ । तु व्ययायौ व्ययश्चाऽऽयश्च पृथक् द्विधा आवर्तकः निवर्ती चेति । शुनीटी.

**आवर्तकविहीनौ तु व्ययायौ लेखको लिखेत् ॥**

लेखकः आवर्तकविहीनौ आवर्तकनिवर्तिनौ व्ययायौ तु व्ययं आयं च लिखेत् । शुनीटी.

**क्रयाधमर्णघटनान्यस्थलाप्तो विवर्तकः ।**
**द्रव्यं लिखित्वा दद्यात्तु गृहीत्वा विलिखेत्स्वयम् ॥**

क्रयेषु अधमर्णघटनासु ऋणादिव्यवहारेषु अन्यस्थलेषु अन्येषु विषयेषु च आप्तः विश्वस्तः विवर्तकः लेखकः स्वयं द्रव्यं लिखित्वा दद्यात् । गृहीत्वा च, द्रव्यमिति शेषः, विलिखेच्च । शुनीटी.

**हीयते वर्धते नैवमायव्ययविलेखकः ॥**

एवं आयव्ययविलेखकः न हीयते वर्धते च । लिखितः आयः व्ययश्च न अल्पः नाप्यधिकः भवतीत्यर्थः । शुनीटी.

**हेतुप्रमाणसंबन्धकार्याङ्गव्याप्यव्यापकैः ।**
**आयाश्च बहुधा भिन्ना व्ययाः शेषं पृथक् पृथक् ।**
**मानेन संख्यया चैवोन्मानेन परिमाणकैः ॥**

शेषमित्यव्ययम् । अवशिष्टा इत्यर्थः । आयाः व्ययाश्च पृथक् पृथक् हेतुभिः कारणैः प्रमाणैः परिमाणैः संबन्धैः संयोगैः कार्याङ्गैः कार्याणामवान्तरव्यापारैः व्याप्यैः अल्पविषयैः व्यापकैः बहुविषयैश्च तथा मानेन संख्यया गणनेन उन्मानेन ऊर्ध्वमानेन परिमाणकैः प्रमाणैश्च बहुधा भिन्नाः भेदं गताः । शुनीटी.

**क्वचित्संख्या क्वचिन्मानमुन्मानं परिमाणकम् ।**
**समाहारः क्वचिच्चेष्टो व्यवहाराय तद्विदाम् ॥**

क्वचित् प्रदेशे तद्विदां मानादिज्ञानवतां व्यवहाराय संख्या गणना क्वचित् मानं क्वचित् उन्मानं क्वचित् परिमाणकं क्वचित् समाहारः संख्यादिसमुदायः इष्टः अभिलषितः । शुनीटी.

**अङ्गुलाद्यं स्मृतं मानमुन्मानं तु तुला स्मृता ।**
**परिमाणं पात्रमानं संख्यैकद्व्यादिसंज्ञिका ॥**

अङ्गुलाद्यम्, आद्यपदेन हस्तादीनां ग्रहणम्, अङ्गुलादिपरिमाणं मानं स्मृतम् । तुला तु उन्मानं स्मृता । पात्राणां मानं तु परिमाणम् । एकद्वित्रिप्रभृतिसंज्ञा संख्या, स्मृतेति शेषः । शुनीटी.

**यत्र यादृग् व्यवहारस्तत्र तादृक्प्रकल्पयेत् ॥**

यत्र यस्मिन् देशे यादृक् व्यवहारः चलनं तत्र तादृक् प्रकल्पयेत् व्यवहारयेत् । राजेति कर्तृपदमध्याहार्यम् । शुनीटी.

**रजतस्वर्णताम्रादि व्यवहारार्थमुद्रितम् ।**
**व्यवहार्यं वराटाद्यं रत्नान्तं द्रव्यमीरितम् ।**
**सपशुधान्यवस्त्रादि तृणान्तं धनसंज्ञकम् ॥**

व्यवहारार्थमुद्रितं लोकव्यवहाराय कृतमुद्रणं रजतस्वर्णताम्रादि व्यवहार्यम्, लोकैरिति शेषः, वराटाद्यं वराटकप्रभृति रत्नान्तं रत्नपर्यन्तं वस्तु द्रव्यं ईरितं कथितम् । तथा सपशु पशुसहितं धान्यवस्त्रादि तृणान्तं तृणपर्यन्तं वस्तु धनसंज्ञिकं धनमिति नाम्ना प्रसिद्धम् । शुनीटी.

**व्यवहारे चाधिकृतं स्वर्णाद्यं मूल्यतामियात् ॥**

व्यवहारे च अधिकृतं व्यवहारार्थे निर्धारितं स्वर्णाद्यं मूल्यतामियात् मूल्यत्वं प्राप्नुयात् । शुनीटी.

**कारणादिसमायोगात्पदार्थस्तु भवेद्भुवि ।**
**येन व्ययेन संसिद्धस्तद्व्ययस्तस्य मूल्यकम् ॥**

भुवि पृथिव्यां कारणादिसमायोगात् कारणादीनां संयोगात् येन व्ययेन पदार्थः द्रव्यं संसिद्धः निर्मितः तद्व्ययस्तु तस्य द्रव्यस्य मूल्यकम् । शुनीटी.

**सुलभासुलभत्वाच्चागुणत्वगुणसंश्रयैः ।**
**यथाकामात्पदार्थानामर्घं हीनाधिकं भवेत् ॥**

पदार्थानां वस्तूनां सुलभासुलभत्वात् सुलभत्वात् दुर्लभत्वाच्च तथा अगुणत्वगुणसंश्रयैः सगुणत्वात् निर्गुणत्वाच्च अर्घं मूल्यं यथाकामात् यथेच्छं हीनाधिकं अल्पं बहु च भवेत् । शुनीटी.

**न हीनं मणिधातूनां क्वचिन्मूल्यं प्रकल्पयेत् ।**
**मूल्यहानिस्तु चैतेषां राजदौष्ट्येन जायते ॥**

क्वचित् प्रदेशे मणीनां रत्नानां धातूनां स्वर्णरजतादीनां च मूल्यं हीनं अल्पं न प्रकल्पयेत् नावधारयेत्, राजेति शेषः । एतेषां मणिधातूनां च मूल्यहानिः मूल्याल्पता राज्ञः दौष्ट्येन दोषेण जायते । शुनीटी.

लेखनपद्धतिः

**दीर्घे चतुर्भागभूतपत्रे तिर्यग्गतावलिः ।**
**त्र्यंशगाऽभ्यन्तरगता चार्धगा पादगाऽपि वा ।**
**कार्या व्यापकव्याप्यानां लेखने पदसंज्ञिका ॥**

संप्रति लेखनप्रकारमाह— दीर्घइत्यादिसमासतइत्यन्तेन । दीर्घे इति । व्याप्यव्यापकानां अल्पाधिकानां विषयाणां लेखने दीर्घे प्रशस्ते चतुर्भागपत्रे विभागचतुष्टयीकृतपत्रे त्र्यंशगा तृतीयांशव्यापिनी अर्धगा अर्धव्यापिनी वा पादगा चतुर्थांशव्यापिनी अभ्यन्तरगता तिर्यग्गता तिर्यग्भावेन विन्यस्ता पदसंज्ञिका आवलिः पदावलिरित्यर्थः, कार्या लेख्या इत्यर्थः । शुनीटी.

**श्रेष्ठाऽभ्यन्तरगा तासु वामतस्त्र्यंशगाऽप्यनु ।**
**दक्षत्र्यंशगता चानु ह्यर्धगा पादगा ततः ॥**

तासु त्रिविधासु पदावलिषु वामतः वामभागे अभ्यन्तरगा त्र्यंशगा तृतीयांशगामिनी पदावलिः श्रेष्ठा । दक्षत्र्यंशगता दक्षिणभागे तृतीयांशव्यापिनी अनु तत्पश्चात् तदपेक्षया न्यूना इत्यर्थः, अप्रशस्तेति यावत् । अर्धगा ततः अनु न्यूना इत्यर्थः । पादगा चतुर्थांशगामिनी ततः तदपेक्षया हीना अप्रशस्ता इत्यर्थः । शुनीटी.

**स्वभ्यन्तरे स्वभेदाः स्युः सदृशाः सदृशे पदे ।**
**स्वारम्भपूर्तिसदृशे पदगे स्तः सदैव हि ॥**

शोभनं अभ्यन्तरं यस्य तादृशे सदृशे समविन्यस्ते पदे सुप्तिङन्तरूपे, वर्णा इत्यध्याहर्तव्यम्, स्वभेदाः सुष्ठु अभेदः येषां तथोक्ताः अत एव सदृशाः समानाः तुल्याकाराः स्युः भवेयुः । किंच, पदं गच्छतीति पदगं पत्रमित्यर्थः, सदैव स्वस्य लेख्यस्य यः आरम्भः कार्यं विषय इत्यर्थः, तस्य या पूर्तिः पूरणं तत्सदृशं स्यात् । हिशब्दः पादपूरणार्थः । शुनीटी.

राजमन्त्रिप्राड्विवाकपण्डितदूतामात्यसुमन्त्रप्रधानप्रतिनिधियुवराजानां लेख्ये स्वाक्षराङ्कनादिरीतिः

**राजा स्वलेख्यचिह्नं तु यथाऽभिलषितं तथा ।**
**लेखानुपूर्वं कुर्याद्धि दृष्ट्वा लेख्यं विचार्य च ॥**

राजा लेख्यं दृष्ट्वा विचार्य च लेखानुपूर्वं यथा तथा लिखनानुसारेणेत्यर्थः, यथाभिलषितं यथेच्छं ( ? च्छा ) तथा स्वस्य आत्मनः लेख्यचिह्नं अक्षराङ्कितं कुर्यात् । शुनीटी.

**मन्त्री च प्राड्विवाकश्च पण्डितो दूतसंज्ञकः ।**
**स्वाविरुद्धं लेख्यमिदं लिखेयुः प्रथमं त्विमे ॥**

मन्त्री प्राड्विवाकः विचारपतिः पण्डितः दूतसंज्ञकः दूतश्च इमे तु प्रथमं राजदर्शनार्थमित्यर्थः, स्वाविरुद्धं स्वाधिकाराविरोधि इदं लेख्यं लिखेयुः । शुनीटी.

**अमात्यः साधु लिखनमस्त्येतत्प्राग् लिखेदयम् ।**
**सम्यग्विचारितमिति सुमन्त्रो विलिखेत्ततः ॥**

अयं अमात्यः एतत् साधु लिखनं अस्तीति प्राक् लिखेत् । ततः सुमन्त्रः सम्यक् विचारितं दृष्टमेतदिति विलिखेत् । शुनीटी.

**सत्यं यथार्थमिति च प्रधानश्च लिखेत्स्वयम् ।**
**अङ्गीकर्तुं योग्यमिति ततः प्रतिनिधिर्लिखेत् ॥**

प्रधानश्च प्रधानाख्यः राजपुरुष इत्यर्थः, सत्यं यथार्थं अर्थानुगतमिदमिति स्वयं आत्मना लिखेत् । ततः प्रतिनिधिः, राज्ञ इति शेषः, अङ्गीकर्तुं ग्रहीतुं योग्यमिदमिति लिखेत् । शुनीटी.

**अङ्गीकर्तव्यमिति च युवराजो लिखेत्स्वयम् ।**
**लेख्यं स्वाभिमतं चैतद्विलिखेच्च पुरोहितः ॥**

युवराजश्च इदं अङ्गीकर्तव्यं ग्राह्यमिति स्वयं लिखेत्, पुरोहितश्च एतत् लेख्यं स्वाभिमतं आत्मनः संमतमिति विलिखेच्च । शुनीटी.

स्वस्वमुद्राचिह्नितं च लेख्यान्ते कुर्युरेव हि ।
अङ्गीकृतमिति लिखेन्मुद्रयेच्च ततो नृपः ॥

लेख्यान्ते लेख्यस्य अन्ते शेषे स्वस्वमुद्राभिः चिह्नितं कुर्युरेव, मन्त्र्यादय इति शेषः । हिशब्दः पादपूरणार्थः । ततः नृपः अङ्गीकृतं स्वीकृतं इति लिखेत् मुद्रयेच्च स्वनामाङ्कितं कुर्याच्च । शुनीटी.

कार्यान्तरस्याऽऽकुलत्वात्सम्यग् द्रष्टुं न शक्यते ।
युवराजादिभिर्लेख्यं तदनेन च दर्शितम् ॥

युवराजादिभिः कार्यान्तरस्य कार्यान्तरेणेत्यर्थः । संबन्धविवक्षया करणे षष्ठी । व्याकुलत्वात् व्यस्तत्वात् सम्यक् द्रष्टुं न शक्यते तत् तस्मात् तैः अनेन जनेन दर्शितं सम्यक् विवेचितमिति च लेख्यम् । शुनीटी.

समुद्रं विलिखेयुर्वै सर्वे मन्त्रिगणास्ततः ।
राजा दृष्टमिति लिखेद् द्राक् सम्यग्दर्शनाक्षमः ॥

सर्वे मन्त्रिगणाः समुद्रं मुद्रया सहितं मुद्राङ्कितमित्यर्थः, यथा तथा विलिखेयुः । वैशब्दः अवधारणे । ततः सम्यग्दर्शनाक्षमः बहुकार्यव्यापृतत्वादिति भावः, राजा द्राक् झटिति दृष्टमिति लिखेत्, मन्त्र्यादिषु विश्वासादिति भावः । शुनीटी.

आयव्ययलेख्यरीतिः

आयमादौ लिखेत्सम्यग् व्ययं पश्चाद्यथागतम् ।
वामे वाऽऽयं व्ययं दक्षे पत्रभागे च लेखयेत् ॥

आदौ सम्यक् समग्रं आयं पश्चात् यथागतं व्ययं लिखेत् । वामे पत्रभागे वा एव । वाशब्दोऽवधारणे । आयं, दक्षे पत्रभागे च व्ययं लेखयेत् । शुनीटी.

यत्रोभौ व्यापकव्याप्यौ वामोर्ध्वभागगौ क्रमात् ।
आधाराधेयरूपौ वा कालार्थं गणितं हि तत् ॥

यत्र उभौ लेखनीयौ विषयौ व्यापकव्याप्यौ अधिकाल्पौ वा आधाराधेयरूपौ आश्रयाश्रयिणौ, स्यातामिति शेषः, तत्र तौ क्रमात् यथाक्रमेण वामोर्ध्वभागगौ पत्रस्य वामभागीयोर्ध्वस्थानविन्यस्तौ, कार्यौ इति शेषः, तत् गणितं संख्यानं व्यवस्थापनमित्यर्थः, कालार्थं समयार्थं नियमार्थमिति यावत् । हिशब्दोऽवधारणार्थः । शुनीटी.

अधोऽधश्च क्रमात्तत्र व्यापकं वामतो लिखेत् ।
व्याप्यानां मूल्यमानादि तत्पङ्क्त्यां विनिवेशयेत् ॥

तत्र व्यापकं क्रमात् वामतः वामभागस्य अधः अधः लिखेत् । व्याप्यानां च मूल्यं मानादि च तत्पङ्क्त्यां तेषां व्याप्यानां श्रेण्यां च विनिवेशयेत् लिखेत् । शुनीटी.

ऊर्ध्वगानां तु गणितमधःपङ्क्त्यां प्रजायते ।
यत्रोभौ व्यापकव्याप्यौ व्यापकत्वेन संस्थितौ ॥

यत्र उभौ व्यापकव्याप्यौ व्यापकत्वेन बहुत्वेन संस्थितौ बहुसंख्यकावित्यर्थः, तत्र ऊर्ध्वगानां उपरिस्थितानां तेषां गणितं संख्यानं अधःपङ्क्त्यां प्रजायते भवति । शुनीटी.

व्यापकं बहुवृत्तित्वं व्याप्यं स्यान्न्यूनवृत्तिकम् ।
व्याप्याश्चावयवाः प्रोक्ता व्यापकोऽवयवी स्मृतः ॥

बहुवृत्तित्वं व्यापकं व्यापकधर्मः इत्यर्थः । न्यूनवृत्तिकं अल्पदेशव्यापि व्याप्यं स्यात् । अवयवाः व्याप्याः प्रोक्ताः कथिताः । अवयवी व्यापकः स्मृतः कथितः । शुनीटी.

सजातीनां च लिखनं कुर्याच्च समुदायतः ।
यथाप्राप्तं तु लिखनमाद्यन्तसमुदायतः ॥

समाना जातिर्येषां तादृशानां एकविधानामित्यर्थः, विषयाणां लिखनं समुदायतः साकल्येन कुर्यात् । एकस्मिन्नेव स्थाने इति अध्याहार्यम् । आद्यन्तसमुदायतः आदौ अन्ते समुदायतः सर्वत्र च यथाप्राप्तं यथोपस्थितं यथा तथा लिखनं कर्तव्यमिति, नानाविधानां विषयाणामिति च शेषः । शुनीटी.

व्यापकाश्च पदार्था वा यत्र सन्ति स्थलानि हि ।
व्याप्यमायव्ययं तत्र कुर्यात्कालेन सर्वदा ॥

यत्र पदार्थाः वस्तूनि व्यापकाः बहवः स्थलानि स्थानानि च बहूनीत्यर्थः, सन्ति हि वर्तन्त एव, तत्र सर्वदा आयव्ययं कालेन व्याप्यं कुर्यात् । शुनीटी.

स्थानटिप्पणिका चैषा ततोऽन्यत्संघटिप्पणम् ।
विशिष्टसंज्ञितं तत्र व्यापकं लेख्यभाषितम् ॥

एषा स्थानानां टिप्पनिका विवरणम्, अन्या इति शेषः । संघानां वस्तुसमूहानां च टिप्पनं विवरणं ततः स्थानटिप्पनिकायाः अन्यत् । तत्र लेख्यभाषितलेख्योक्तं व्यापकं विशिष्टसंज्ञितं विशिष्टमितिसंज्ञया प्रसिद्धमित्यर्थः । शुनीटी.

आयाः कति व्ययाः कस्य शेषं द्रव्यस्य चास्ति वै ।
विशिष्टसंज्ञकैरेषां संविज्ञानं प्रजायते ॥

आयाः कति, व्ययाश्च कति, कस्य द्रव्यस्य शेषं अवशेषं वक्रीत्यर्थः, अस्ति । वैशब्दोऽवधारणार्थः । विशिष्टसंज्ञकैः व्यापकलेख्यविशेषैः एषां आयादीनां संविज्ञानं सम्यक् ज्ञानं प्रजायते । शुनीटी.

आदौ लेख्यं यथा प्राप्तं पश्चात्तद्गणितं लिखेत् ।
यथा द्रव्यं च स्थानं चाधिकसंज्ञं च टिप्पणैः ॥

आदौ प्रथमतः यथा प्राप्तं पश्चात् तदनन्तरं तस्य प्राप्तस्य गणितं संख्या लेख्यम् । ततश्च टिप्पनैः विवरणैः सह यथा यादृशं द्रव्यं स्थानं अधिकसंज्ञं च तथा लिखेत् । शुनीटी.

शेषायव्ययविज्ञानं क्रमाल्लेख्यैः प्रजायते ।
स्थलायव्ययविज्ञानं व्यापकं स्थलतो भवेत् ॥

शेषायव्यययोः अवशिष्टस्य आयस्य व्ययस्य च विज्ञानं क्रमात् लेख्यैः प्रजायते भवति । किंच, व्यापकं बहुलं स्थलस्य आयव्ययविज्ञानं स्थलतः स्थलभागज्ञानादेवेत्यर्थः, भवेत् । शुनीटी.

पदार्थस्य स्थलानि स्युः पदार्थाश्च स्थलस्य तु ।
व्याप्यास्तिथ्यादयश्चापि यथेष्टा लेखने नृणाम् ॥

स्थलानि पदार्थस्य द्रव्यस्य पदार्थाश्च द्रव्याणि च स्थलस्य व्याप्याः स्युः भवेयुः । तिथ्यादयश्च नृणां लेखने यथा इष्टाः इच्छानुसारेण निवेश्याः । शुनीटी.

निश्चितान्यस्वामिकाद्या आया य इतरान्तगाः ।
विशिष्टसंज्ञका ये च पुनरावर्तकादयः ।
व्ययाश्च परलेखान्ता अन्तिमव्यापकाश्च ते ॥

निश्चिताः अन्ये स्वामिनः येषां तत्प्रभृतयः तथा इतरान्तगाः अपरसमीपस्थिताः ये आयाः, ये च विशिष्टसंज्ञकाः विशिष्टनामानः पुनरावर्तकादयः व्ययाः, ते परलेखान्ताः परेषां लेखः लेखनं अन्ते येषां तथोक्ताः तथा अन्तिमव्यापकाश्च शेषबहवः । शुनीटी.

इच्छया ताडितं कृत्वाऽऽदौ प्रमाणफलं ततः ।
प्रमाणभक्तं तल्लब्धं भवेदिच्छाफलं नृणाम् ॥

संप्रति त्रैराशिकविधिना आयव्ययान् निरूपयति—इच्छयेति । आदौ प्रमाणफलं सिद्धं वस्तु इच्छया साध्यवस्तुना ताडितं हतं गुणितमित्यर्थः, कृत्वा प्रमाणेन भक्तं सत् यत् लब्धं तत् नृणां इच्छाफलं भवेत् । उक्तं लीलावत्यां भास्करेण— 'प्रमाणमिच्छा च समानजाती आद्यन्तयोः स्तः फलमन्यजातिः । मध्ये तदिच्छाहतमाद्यहृत् स्यादिच्छाफलं व्यस्तविधिर्विलोमे ॥' इति । शुनीटी.

समासतो लेख्यमुक्तं सर्वेषां स्मृतिसाधनम् ॥

समासतः संक्षेपेण सर्वेषां स्मृतिसाधनं स्मरणकारणं लेख्यमुक्तम् । शुनीटी.

मानलक्षणम्

गुञ्जा माषस्तथा कर्षः पदार्थः प्रस्थ एव हि ।
यथोत्तरा दशगुणाः पञ्च प्रस्थस्य चाऽऽढकाः ॥

संप्रति मानान्याह— गुञ्जेति । गुञ्जाः माषः कर्षः पदार्थः तथा प्रस्थः एते यथोत्तराः दशगुणाः । हिशब्दोऽवधारणार्थः । अयमर्थः— गुञ्जा प्रसिद्धा । दश गुञ्जाः माषः । दश माषाः कर्षः । दश कर्षाः पदार्थः । दश पदार्थाः प्रस्थ इति । प्रस्थस्य पञ्च पञ्चकमित्यर्थः, पञ्च प्रस्थाः इति यावत्, आढकः । शुनीटी.

ततश्चाष्टाढकः प्रोक्तो ह्यर्मणस्ते तु विंशतिः ।
खारिका स्याद्भिद्यते तद्देशे देशे प्रमाणकम् ॥

ततश्च अष्टाढकः अष्टौ आढका इत्यर्थः, अर्मणः प्रोक्तः कथितः । हिशब्दोऽवधारणार्थः । ते विंशतिः अर्मणाः खारिका स्यात् । देशे देशे देशभेदेनेत्यर्थः, तत् प्रमाणकं परिमाणं भिद्यते विभिन्नं भवति । शुनीटी.

पञ्चाङ्गुलावटं पात्रं चतुरङ्गुलविस्तृतम् ।
प्रस्थपादं तु तज्ज्ञेयं परिमाणे सदा बुधैः ॥

पञ्चाङ्गुलावटं पञ्चाङ्गुलदीर्घं चतुरङ्गुलविस्तृतं यत् पात्रं बुधैः पण्डितैः सदा परिमाणे तत् प्रस्थपादं ज्ञेयम् । तुशब्दोऽवधारणार्थः । शुनीटी.

ऊर्ध्वाङ्कश्च यथासंज्ञस्तदधःस्थाश्च वामगाः ।
क्रमात्स्वदशगुणिताः परार्धान्ताः प्रकीर्तिताः ॥

ऊर्ध्वाङ्कः उपरिस्थितः अङ्कः यथासंज्ञः संज्ञापरिमितः । तदधःस्थाः तस्य ऊर्ध्वाङ्कस्य अधःस्थिताः वामगाः वामभागवर्तिनः, अङ्का इति शेषः, क्रमात् स्वदशगुणिताः स्वैः दशभिः गुणिताः सन्तः परार्धान्ताः परार्धपर्यन्ताः प्रकीर्तिताः । शुनीटी.

न कर्तुं शक्यते संख्यासंज्ञा कालस्य दुर्गमात् ।
ब्रह्मणो द्विपरार्धं तु आयुरुक्तं मनीषिभिः ॥

कालस्य दुर्गमात् दुरवसानात् संख्यानां संज्ञा परार्धाधिका इत्यर्थः, कर्तुं न शक्यते । तथाहि मनीषिभिः विद्वद्भिः ब्रह्मणः विधातुः द्विपरार्धं परार्धद्वयपरिमितं आयुः जीवनकालः उक्तम् । परार्धातिरिक्तायाः संख्यासंज्ञाया अभावादिति भावः । शुनीटी.

एको दश शतं चैव सहस्रं चायुतं क्रमात् ।
नियुतं प्रयुतं कोटिरर्बुदं चाब्जखर्वकौ ॥
निखर्वपद्मशङ्खाब्धिमध्यमान्तपरार्धकाः ॥

एकः दश शतं सहस्रं अयुतं नियुतं लक्षमित्यर्थः, प्रयुतं कोटिः अर्बुदं अब्जं खर्वः निखर्वः पद्मं शङ्खः अब्धिः मध्यं अन्तः परार्धमिति, संख्यासंज्ञका इति शेषः । शुनीटी.

कालमानं त्रिधा ज्ञेयं चान्द्रं सौरं च सावनम् ।
भृतिदाने सदा सौरं चान्द्रं कौसीदवृद्धिषु ।
कल्पयेत्सावनं नित्यं दिनभृत्येऽवधौ सदा ॥

कालस्य मानं परिमाणं त्रिधा ज्ञेयम्– चान्द्रं चन्द्रवृद्ध्यवधिकं शुक्लप्रतिपदादिरूपमित्यर्थः, सौरं संक्रमणदिनावधिकम्, सावनं उत्पत्तिदिनावधिकं च । भृत्याः वेतनस्य दाने सदा सौरम्, कौसीदवृद्धिषु ऋणव्यवहारेष्वित्यर्थः, नित्यं चान्द्रम्, दिनभृत्ये दैनिकपरिचारके अवधौ च सदा सावनं कल्पयेत् व्यवहरेत् । शुनीटी.

गणकलेखकनियोजनम्

[1]शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥

शब्दाभिधानतत्त्वज्ञौ शब्दतत्त्वज्ञौ अर्थतत्त्वज्ञौ चेत्यर्थः, गणनायां कुशलौ निपुणौ शुची निर्दोषौ नानालिपिज्ञौ विविधलेखनविज्ञौ गणकलेखकौ कर्तव्यौ नियोक्तव्यौ । शुनीटी.

राजकीयं लौकिकं चेति द्विविधं लिखितं सविवरणम्

[2]अधुना लिखितं वच्मि यथावदनुपूर्वशः ।
अनुभूतस्मारकं तु लिखितं ब्रह्मणा कृतम् ॥

अधुना संप्रति यथावत् अनुपूर्वशः अनुक्रमेण लिखितं साधनमित्यर्थः, वच्मि ब्रवीमि । ब्रह्मणा विधात्रा अनुभूतस्मारकं पूर्वकृतस्मरणार्थमित्यर्थः, लिखितं कृतं निर्मितम् । शुनीटी.

राजकीयं लौकिकं च द्विविधं लिखितं स्मृतम् ।
स्वहस्तलिखितं वाऽन्यहस्तेनापि विलेखितम् ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥

लिखितं द्विविधं स्मृतं राजकीयं लौकिकं च । तदपि द्विविधं स्वहस्तलिखितं अन्यहस्तलिखितं वा । पुनश्च द्विविधं असाक्षिकं साक्षिमच्च । देशस्थितेः स्थानानुसारेण उभयोः ससाक्षिकासाक्षिकयोः सिद्धिर्भवेदित्यर्थः । शुनीटी.

भागदानक्रियादानसंविद्दानऋणादिभिः ।
सप्तधा लौकिकं चैतत्त्रिविधं राजशासनम् ।
शासनार्थं ज्ञापनार्थं निर्णयार्थं तृतीयकम् ॥

लौकिकं च लिखितमेतत् भागदानक्रियादानसंविद्दानऋणादिभिः निमित्तभूतैः सप्तधा सप्तविधमित्यर्थः । राजशासनं तु त्रिविधम्– शासनार्थमेकम्, ज्ञापनार्थं द्वितीयम्, निर्णयार्थं तृतीयम् । शुनीटी.

---

(१) शुनी. ४।४।४३.
(२) शुनी. ४।५।१७२–१८२.

साक्षिमद्रिक्थ्यभिमतं भागपत्रं सुभक्तियुक् ।
सिद्धिकृच्चान्यथा पित्रा कृतमप्यकृतं स्मृतम् ॥

साक्षिमत् ससाक्षिकं रिक्थिभिः दायादैः अभिमतं सुभक्तियुक् सुष्ठुरचनायुक्तं भागपत्रं वण्टनलेख्यं सिद्धिकृत् । अन्यथा अतथात्वे इत्यर्थः, पित्रा कृतमपि भागपत्रं अकृतं स्मृतं अग्राह्यमित्यर्थः । शुनीटी.

दायादाभिमतं दानक्रयविक्रयपत्रकम् ।
स्थावरस्य ग्रामपादिसाक्षिकं सिद्धिकृत्स्मृतम् ॥

स्थावरस्य भूम्यादेः दानक्रयविक्रयपत्रं दानपत्रं क्रयपत्रं विक्रयपत्रं च दायादाभिमतं दायादैः अभिमतं संमतं ग्रामपादिसाक्षिकं ग्रामाध्यक्षसाक्ष्यसमेतं सत् सिद्धिकृत् स्मृतम् । शुनीटी.

राज्ञा स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं प्रकृतिभिश्च मुद्रितम् ॥

राजकीयं लेख्यं राज्ञा स्वहस्तसंयुक्तं स्वहस्ताक्षरितम्, वा स्वस्य मुद्रया चिह्नितम्, अथवा राजानुमत्या प्रकृतिभिः राजपुरुषैः मुद्रितम्, भवतीति शेषः । शुनीटी.

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥
साध्यं प्रमाणं द्रव्यं च संख्यां नाम तथाऽऽत्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥
क्रमात्पितॄणां नामानि पीडामाहर्तृदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षे संकीर्त्य लेखयेत् ॥

संप्रति लेखनप्रकारमाह– निवेश्येत्यादि । पक्षे साध्ये कालं वर्षं मासं पक्षं तिथिं वेलां प्रदेशं विषयं स्थानं जात्याकृती जातिं आकृतिं चेत्यर्थः; वयः यौवनादिकं साध्यं प्रमाणं द्रव्यं संख्यां आत्मनः नाम च निवेश्य तथा क्रमशः यथाक्रमं राज्ञां नाम निवासं साध्यनाम पितॄणाम्, आत्मनः राज्ञां चेति शेषः, नामानि पीडां अभियोगहेतुभूतामित्यर्थः, आहर्तृदायकौ अर्जकं दातारं चेत्यर्थः, क्षमालिङ्गानि क्षमायाः चिह्नानि अन्यानि आवश्यकानि च संकीर्त्य लेखयेत् । शुनीटी.

यत्रैतानि न लिख्यन्ते हीनं लेख्यं तदुच्यते ।
भिन्नक्रमं व्युत्क्रमार्थं प्रकीर्णार्थं निरर्थकम् ॥
अतीतकाललिखितं न स्यात्तत्साधनक्षमम् ।
अप्रगल्भेन च स्त्रिया बलात्कारेण यत्कृतम् ॥

यत्र एतानि उक्तानि न लिख्यन्ते तत् लेख्यं हीनं अप्रमाणमित्यर्थः, उच्यते । यत् भिन्नक्रमं क्रमभङ्गयुतं व्युत्क्रमार्थं विपरीतार्थं प्रकीर्णार्थं विक्षिप्तप्रतिपाद्यं निरर्थकं अर्थशून्यं वा अतीतकाललिखितं कालान्तरे लिखितं यच्च अप्रगल्भेन अचतुरेण निर्बोधेनेत्यर्थः, वा स्त्रिया स्त्रीलोकेन अथवा बलात्कारेण कृतं लिखितं तत् लेख्यं साधनक्षमं प्रामाणिकं न स्यात् । शुनीटी.

## नीतिवाक्यामृतम्

शत्रुलेखस्वरूपम्

[1]चत्वारि वेष्टनानि खड्गमुद्रा च प्रतिपक्षलेखानाम् ॥

अथ शत्रुलेखानां स्वरूपमाह– चत्वारीति । ये प्रतिपक्षलेखाः शत्रुलेखाः भवन्ति तेषामुपरि चत्वारि वेष्टनानि बन्धनानि भवन्ति तथा खड्गमुद्रा च । नीवाटी.

## अनिर्दिष्टकर्तृकवचनम्

राजशासनलेखनाधीनौ संधिविग्रहौ

[2]संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥

---

(१) नीवा. १३।२५.

(२) मिता. १।३२०; राप्र. १३० स्मृत्यन्तरे; नीम. ३८.

# राजमण्डलविचारः

## विष्णुः

मण्डलीयेषु राजसु उपायप्रयोगः

[1]शत्रुमित्रोदासीनमध्यमेषु सामभेददानदण्डान् यथार्हं यथाकालं प्रयुञ्जीत ॥

मध्यमः शत्रुविजिगीषुमध्यवर्ती नृपः । वै.

## महाभारतम्

राजमण्डलस्वरूपम्

धृतराष्ट्र उवाच–

[2]मण्डलानि च बुध्येथाः परेषामात्मनस्तथा ।
उदासीनगुणानां च मध्यमानां तथैव च ॥

मण्डलानीति । अरिमित्रमित्यादीनि । उदासीनादन्यो मध्यमः द्वयोरपि इष्टाकाङ्क्षी । नीटी.

[3]चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम् ।
मित्रं चामित्रमित्रं च बोद्धव्यं तेऽरिकर्शन ॥

चतुर्णां शत्रुपक्षे जातानां शत्रुः शत्रुमित्रं उभयोर्जयार्थी पराजयार्थी चेति । नीटी.

[4]तथाऽमात्या जनपदा दुर्गाणि विषमाणि च ।
बलानि च कुरुश्रेष्ठ भवन्त्येषां यथेच्छकम् ॥

यथेच्छकं परैर्भेद्यत्वमभेद्यत्वं च भवति । तस्मादवहितस्तिष्ठेत् यथा भेदो न भवेदिति । नीटी.

[5]ते च द्वादश कौन्तेय राज्ञां वै विविधात्मकाः ।
मन्त्रिप्रधानाश्च गुणाः षष्टिर्द्वादश च प्रभो ॥

---

(१) विस्मृ. ३।३८.

(२) भा. १५।११।१; भामु. १५।६।१ उत्तरार्धे (उदासीनगणानां च मध्यस्थानां च भारत ॥).

(३) भा. १५।११।२; भामु. १५।६।२.

(४) भा. १५।११।३; भामु. १५।६।३ विषमाणि (विविधानि) न्त्येषां (स्येषां).

(५) भा. १५।११।४; भामु. १५।६।४ विविधा (विषया).

---

द्वादश– चत्वारः शत्रुजाताः, षट् आततायिनः, मित्रं अमित्रमित्रं चेति । षष्टिर्गुणाः– कृष्यादीनि अष्टौ संधानकर्माणि, बालादयो विंशतिरसंधेयाः, नास्तिक्यादयश्चतुर्दश दोषाः, मन्त्रादीन्यष्टादश तीर्थानीति । एतेषु केचित् हानार्थं ज्ञातव्याः केचिदुपादानार्थम् । नीटी.

[1]एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः ॥

मण्डलीया राजानः

[2]विजिगीषोररिर्मित्रमरेर्मित्रमतः परम् ।
मित्रमित्रं शत्रुमित्रमित्रं ज्ञेयं पुरःसरम् ॥

[3]पार्ष्णिग्राहस्तथाऽऽक्रन्दः पार्ष्ण्यासारश्च पृष्ठतः ।
आक्रन्दासार इति च ज्ञेयं मण्डलचिन्तकैः ॥

[4]पार्ष्णिग्राहाभिसारं च पार्ष्णिग्राहं च विग्रहे ।
राजाऽऽक्रन्दाभिसारेण तथाऽऽक्रन्देन वर्धयेत् ॥
विरोधयेच्छत्रुमित्रं मित्रमित्रमरेस्तथा ।
मित्रेण मित्रमित्रेण मध्यमत्वाभिवाञ्छकः ॥

[5]मन्त्रप्रभूत्साहशक्तीः पालयेद्यत्नवान्नृपः ॥

(१) वर्धयेत् छेदयेत् । राक. ११०

(२) वर्धयेत् छेदयेत् । अत्र यद्यपि मध्यमोदासीनौ नोक्तौ तथाऽपि मन्वाद्येकवाक्यतयाऽत्रापि तौ बोध्यौ । कल्पतरुस्तु– विजिगीषुमित्रम्, विजिगीषुमित्रमित्रम्, अरिमित्रम्, अरिमित्रमित्रम्, मध्यममित्रम्, मध्यममित्रमित्रम्, उदासीनमित्रम्, उदासीनमित्रमित्रं चेत्यष्टौ,

---

(१) भा. १५।११।५; भामु. १५।६।५.

(२) राक. ११०; राप्र. ३२२.

(३) राक. ११०; राप्र. ३२२; बाल. १।३४५.

(४) राक. ११०; राप्र. ३२२.

(५) राक. ११० शक्तीः (शक्तिः) यत्न (दान); राप्र. ३२२.

प्रकृताश्च चतस्रः प्रकृतयः इति द्वादशेत्याह ।

राप्र. ३२२-३२३

## कौटिलीयमर्थशास्त्रम्

अरिमित्रमध्यमोदासीनानां चतुर्णां प्रत्येकं मण्डलमिति मण्डलानि चत्वारि

**[1]राजाऽऽत्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विजिगीषुः । तस्य समन्ततो मण्डलीभूता भूम्यनन्तराऽरिप्रकृतिः । तथैव भूम्येकान्तरा मित्रप्रकृतिः ॥**

इत्थं वैनयिकादिभिर्योगवृत्तपर्यन्तैः पञ्चभिरधिकरणैस्तन्त्रभागोऽभिहितः । आवाप इदानीमारभ्यते । तन्त्रमिति स्वराष्ट्रानुष्ठानस्य संज्ञा, आवाप इति परराष्ट्रानुष्ठानस्य । तन्यन्ते विस्तार्यन्ते दुर्गसेतुकर्मवणिक्पथशून्यनिवेशाः खनिद्रव्यहस्तिवनकर्माणि शक्तिसिद्धयो धर्मार्थकामाश्च विजिगीषुणा अस्मिन्निति तन्त्रव्युत्पत्तिः । आ समन्तात् परराष्ट्रेषु उप्यन्ते प्रयुज्यन्ते इत्यावापाः संध्यादयः, तदनुष्ठानमपि तद्विषयत्वात् आवापः इत्यावापव्युत्पत्तिः । अथवा, आ समन्तात् परराष्ट्रप्रयोज्याः संध्यादयः उप्यन्ते प्रतिपाद्यन्ते अत्रेत्यावापो मण्डलयोन्यादिसप्ताधिकरणसमुदाय उच्यते ।

तत्राऽऽदिममधिकरणं मण्डलयोनिर्नाम । विजिगीष्वरिमध्यमोदासीनाख्यचतुरवयवं मण्डलम् । योनिः उत्तराधिकरणार्थस्य षाड्गुण्यस्य विषयः । मण्डलं च तत् योनिश्च मण्डलयोनिः । मण्डलात्मा षाड्गुण्यप्रकृतिरित्यर्थः । मण्डलं हि विजिगीष्वादिलक्षणं परस्परानुष्ठेयस्य संधिविग्रहादेः षाड्गुण्यस्य प्रकृतिर्भवतीति ।

६।१

अथ मण्डलं वक्तुं तदवधिभूतं विजिगीषुमाह— राजेति । सः आत्मद्रव्यप्रकृतिसंपन्नः आत्मसंपद्युक्तः अमात्यादिद्रव्यप्रकृतिपञ्चकसंपद्युक्तश्च । तत्र महाकुलीनत्वादयो वृद्धोपदेशाचारत्वान्ता गुणाः पूर्वोक्ताः (कौ. ६।१) आत्मसंपत् । नयस्य संध्यादिसम्यक्प्रयोगलक्षणस्य अधिष्ठानं आश्रयः विजिगीषुः सामदानाद्युपायैः शत्रून् विजेतुमिच्छुः । तस्य विजिगीषोः समन्ततः मण्डलीभूता भूम्यनन्तरा स्वभूम्यव्यवहिता भूमिः अव्यवहिता भूमी वा अर्थादव्यवहितभूम्यधिपतिः अरिप्रकृतिः । तथैव भूम्येकान्तरा देशेनैकेन व्यवहिता एकभूव्यवहिता भूमी वा मित्रप्रकृतिः ।

श्रीमूला.

**अरिसंपद्युक्तः सामन्तः शत्रुः । व्यसनी यातव्यः । अनपाश्रयो दुर्बलाश्रयो वोच्छेदनीयः । विपर्यये पीडनीयः कर्शनीयो वा । इत्यरिविशेषाः ॥**

अथ शत्रुभेदाश्चत्वार उच्यन्ते— अरिसंपद्युक्त इति । अरिसंपदा 'अराजबीजी' (कौ. ६।१) इत्यादिना पूर्वमुक्तया युक्तः सामन्तः शत्रुः । व्यसनी यातव्य इति । शत्रुः मृगयादुर्भिक्षादिव्यसनवान् अभिषेणयितव्यः । अनपाश्रयः दुर्गमित्रहीनः दुर्बलाश्रयो वा दुर्बलदुर्गमित्रो वा शत्रुः उच्छेदनीयः । विपर्यये पीडनीयः कर्शनीयो वेति । अनपाश्रयत्वविपर्यये मध्यबलदुर्गमित्राश्रयत्वे पीडनीयोऽपकुर्वन्, दुर्बलाश्रयत्ववैपरीत्ये बलवदाश्रयत्वे कर्शनीयः धनदण्डक्षयतां नेतव्यः । इति चत्वारः अरिविशेषाः ।

श्रीमूला.

**तस्मान्मित्रमरिमित्रं मित्रमित्रमरिमित्रमित्रं चाऽऽनन्तर्येण भूमीनां प्रसज्यन्ते पुरस्तात् । पश्चात् पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासार आक्रन्दासार इति ॥**

तस्मादित्यादि । शत्रोरनन्तरं मित्रं तदनन्तरं अरिमित्रं तदनन्तरं मित्रमित्रं तदनन्तरं अरिमित्रमित्रं च आनन्तर्येण अव्यवधानेन भूमीनां प्रसज्यते पुरस्तात् विजिगीषोररिमभियोक्तुं प्रवृत्तस्याग्रतः । ते एते एवंसंज्ञकाः पुरस्तात् पञ्च राजानः । पश्चात् किंसंज्ञका इत्याह— पश्चादित्यादि । विजिगीषोः पृष्ठतः पार्ष्णिग्राहः अनन्तरः पार्ष्णिग्राहसंज्ञः शत्रुमित्रम्, विजिगीषोः पार्ष्णिं शत्रुहिताय गृह्णातीति व्युत्पत्तेः । आक्रन्दः पार्ष्णिग्राहानन्तरः आक्रन्दसंज्ञो विजिगीषुमित्रम्, 'आगत्य पार्ष्णिग्राहं मे वारय' इति आक्रन्द्यते इति व्युत्पत्तेः । पार्ष्णिग्राहासारः आक्रन्दानन्तरस्तत्संज्ञः अरिमित्रमित्रम्, अनुबलदानेन पार्ष्णिग्राहमासरतीति व्युत्पत्तेः । आक्रन्दासारः पार्ष्णि-

(१) कौ. ६।२.

आहासारानन्तरस्तत्संज्ञः विजिगीषुमित्रमित्रम् । इति एवं चत्वारः प्रसज्यन्ते । मध्ये च विजिगीषुरेकः । इत्याहत्य दशराजमण्डलम् । श्रीमूला.

*** भूम्यनन्तरः प्रकृत्यमित्रस्तुल्याभिजनः सहजः। विरुद्धो विरोधयिता वा कृत्रिमः ॥**

अथ शत्रवान्तरभेदमाह– भूम्यनन्तर इत्यादि । प्रकृत्यमित्रस्तुल्याभिजन इति द्वौ सहजशत्रू । प्रकृत्यमित्रः स्वभूम्यनन्तरः तुल्याभिजनः समानकुलोत्पन्नो दायाद्यः । अपराद्धः अपराधयिता च कृत्रिमः शत्रुः । श्रीमूला.

**भूम्येकान्तरं प्रकृतिमित्रं मातापितृसंबन्धं सहजम्, धनजीवितहेतोराश्रितं कृत्रिममिति ॥**

मित्रावान्तरभेदमाह– भूम्येकान्तरमित्यादि । स्वभूम्येकव्यवहितं प्रकृतिमित्रं एकं सहजमित्रम्, मातापितृसंबन्धं मातुलपैतृष्वसेयादिरूपमपरं सहजमित्रम् । धनार्थमुपजीवनार्थं चाऽऽश्रितं कृत्रिमं मित्रम् । श्रीमूला.

**अरिविजिगीष्वोर्भूम्यनन्तरः संहतासंहतयोरनुग्रहसमर्थो निग्रहे चासंहतयोर्मध्यमः ॥**

मध्यममाह– अरिविजिगीष्वोर्भूम्यनन्तर इत्यादि । तयोर्भूम्यव्यवहितः विदिग्भागाश्रितः तयोः कृतसंधिकयोर्विगृहीतयोश्चानुग्रहसमर्थः विगृहीतयोर्निग्रहे च समर्थो मध्यमः । तस्य भूम्यनन्तरत्वेन शत्रुत्वेऽपि भिन्नलक्षणत्वान्मध्यमसंज्ञा बोद्धव्या । श्रीमूला.

**अरिविजिगीषुमध्यानां बहिः प्रकृतिभ्यो बलवत्तरः संहतासंहतानामरिविजिगीषुमध्यमानामनुग्रहे समर्थो निग्रहे चासंहतानामुदासीनः । इति प्रकृतयः ॥**

उदासीनमाह– अरिविजिगीषुमध्यानामित्यादि । अर्यादीनां प्रकृतिभ्यो बाह्यः बलवतो मध्यमादपि दण्डकोशादितो बलवत्तरः तेषां संहतानां विगृहीतानां चानुग्रहशक्तः विगृहीतानां निग्रहे च शक्तः उदासीनाख्यः । इति प्रकृतयः एवं द्वादश राजप्रकृतयः उक्ताः । श्रीमूला.

**विजिगीषुर्मित्रं मित्रमित्रं वाऽस्य प्रकृतयस्तिस्रः। ताः पञ्चभिरमात्यजनपददुर्गकोशदण्डप्रकृतिभिरेकैकशः संयुक्ता मण्डलमष्टादशकं भवति । अनेन मण्डलपृथक्त्वं व्याख्यातमरिमध्यमोदासीनानाम् ॥**

अथ चतुर्मण्डलसंक्षेपमाह– विजिगीषुरित्यादि । अयमर्थः– विजिगीषुः तस्य मित्रं मित्रमित्रमिति तिस्रः प्रकृतयः । तासां प्रत्येकममात्यादिप्रकृतिपञ्चकसंयोगेन षट्कत्रयसंपत्तौ अष्टादशावयवकं मण्डलमेकं विजिगीषुसंबद्धं जायते । तथा अरिः तस्य मित्रं मित्रमित्रमिति तिसृणां प्रकृतीनां प्रत्येकममात्यादिपञ्चकयोगेन षट्कत्रयसंपत्तौ अष्टादशकमरिसंबद्धं मण्डलं द्वितीयं जायते । एवं मध्यमसंबद्धं तृतीयं उदासीनसंबद्धं चतुर्थं च मण्डलमूह्यमिति । श्रीमूला.

**एवं चतुर्मण्डलसंक्षेपः । द्वादश राजप्रकृतयः, षष्टिर्द्रव्यप्रकृतयः, संक्षेपेण द्विसप्ततिः ॥**

एतावतोक्तं पिण्डीकृत्याऽऽह– एवं चतुर्मण्डलसंक्षेप इत्यादि । द्विसप्ततिरिति राजप्रकृतयः शुद्धा द्वादश, अमात्यादिद्रव्यप्रकृतियुक्ताः (१ प्रकृतयः) षष्टिरित्याहत्य । श्रीमूला.

**तासां यथास्वं संपदः ॥**

प्रकृतीनां यथायथं संपदः । पूर्वमुक्ता इति शेषः । श्रीमूला.

शक्तित्रयं सिद्धित्रयं च

**शक्तिः सिद्धिश्च । बलं शक्तिः, सुखं सिद्धिः ॥**

शक्तिसिद्धी आह– शक्तिः सिद्धिश्चेत्यादि । श्रीमूला.

---

* अत्र उत्तरवाक्ये च प्राकृत–सहज–कृत्रिमरूपं सुप्रसिद्धं 'त्रिविधा रिपवः प्रोक्ताः कुल्यानन्तरकृत्रिमाः' (विध. २।१४५।१५) इत्यादिना पुराणादिषूपवर्णितं च शत्रुमित्रयोः प्रकारत्रयमेवाऽऽचार्येण लक्षितमिति प्रतीयते । महाकविना माघेनापि प्रकारत्रयमेव 'सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः । स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥' (शिशुपालवधे २।३६) इति वर्णितम् । कौटिलीयतुल्यान्येव लक्षणानि कथयता मल्लिनाथसूरिणाऽपि तदनुमोदितम् । एवं च सति श्रीमूलाकारेण श्री. ज. स. करन्दीकरमहोदयेन च प्रकृतवाक्ययोः शत्रुमित्रयोः सहज–कृत्रिमरूपं प्रकारद्वयमेव किमित्युपवर्णितमिति सुधीभिश्चिन्तनीयम् ।

**शक्तिस्त्रिविधा ज्ञानबलं मन्त्रशक्तिः, कोशदण्डबलं प्रभुशक्तिः, विक्रमबलमुत्साहशक्तिः ॥**

ज्ञानबलं ज्ञानयोगक्षेमसाधनसामर्थ्यं मन्त्रशक्तिरित्येकः प्रकारः। कोशदण्डबलं कोशदण्डयोगक्षेमसाधनसामर्थ्यं प्रभुशक्तिरिति द्वितीयः। विक्रमबलं विक्रमयोगक्षेमसाधनसामर्थ्यं उत्साहशक्तिरिति तृतीयः। श्रीमूला.

**एवं सिद्धिस्त्रिविधैव— मन्त्रशक्तिसाध्या मन्त्रसिद्धिः, प्रभुशक्तिसाध्या प्रभुसिद्धिः, उत्साहशक्तिसाध्योत्साहसिद्धिरिति ॥**

मन्त्रशक्तिप्रभुशक्त्युत्साहशक्तिसाध्याः क्रमान्मन्त्रसिद्धिः प्रभुसिद्धिरुत्साहसिद्धिरिति त्रिविधाः सिद्धय इत्याह— एवं सिद्धिस्त्रिविधैवेत्यादि। श्रीमूला.

**ताभिरभ्युच्चितो ज्यायान् भवति। अपचितो हीनः। तुल्यशक्तिः समः। तस्माच्छक्तिं सिद्धिं च घटेताऽऽत्मन्यावेशयितुम्। साधारणो वा द्रव्यप्रकृतिष्वानन्तर्येण शौचवशेन वा। दूष्यामित्राभ्यां वाऽपक्रष्टुं यतेत ॥**

ताभिरिति शक्तिभिः अभ्युचितः उपचितः ज्यायान् श्रेष्ठः, अपचितः हीनः अधमः। तुल्यशक्तिः अन्यूनानधिकशक्तिः समः मध्यमः। तस्मात् शक्तिसिद्धयोः प्राधान्यात् शक्तिं सिद्धिं च आत्मनि आवेशयितुं वर्धयितुं घटेत व्याप्रियेत। साधारणो वेति। आत्मनि तथा घटनपाटवरहितश्चेत् द्रव्यप्रकृतिषु अमात्यादिषु आनन्तर्येण पूर्वममात्ये ततो जनपदे ततो दुर्गे इति क्रमेण शौचवशेन वा क्रमासंभवे शुचित्ववशेन वा आवेशयितुं घटेत। द्रव्यप्रकृतिष्वप्यावेशनासामर्थ्ये आह— दूष्यामित्राभ्यां वाऽपक्रष्टुं यतेतेति। दूष्यमुखेन शत्रुमुखेन वा अपक्रष्टुं शत्रोः शक्तिं सिद्धिं च न्यूनयितुं व्यवस्येत्। श्रीमूला.

**यदि वा पश्येत्— 'अमित्रो मे शक्तियुक्तो वाग्दण्डपारुष्यार्थदूषणैः प्रकृतीरुपहनिष्यति, सिद्धियुक्तो वा मृगयाद्यूतमद्यस्त्रीभिः प्रमादं गमिष्यति, स विरक्तप्रकृतिरुपक्षीणः प्रमत्तो वा साध्यो मे भविष्यति, विग्रहाभियुक्तो वा सर्वसंदोहेनैकस्थो दुर्गस्थो वा स्थास्यति, स संहतसैन्यो मित्रदुर्गवियुक्तः साध्यो मे भविष्यति, बलवान् वा राजा परतः शत्रुमुच्छेत्तुकामस्तमुच्छिद्य न मामुच्छिन्द्यात्' इति, 'बलवता प्रार्थितस्य मे विपन्नकर्मारम्भस्य वा साहाय्यं दास्यति मध्यमलिप्सायां च' इति, एवमादिषु कारणेष्वमित्रस्यापि शक्तिं सिद्धिं चेच्छेत् ॥**

अपकर्षणापवादमाह— यदि वा पश्येदित्यादि। अयमर्थः— मम शत्रुः शक्तियुक्तश्चेत् तदा दर्पात् वाक्पारुष्यदण्डपारुष्यार्थदूषणैरमात्यादीनुपहनिष्यति, सुखयुक्तश्चेत् मृगयाद्यूतादिव्यसनैः प्रमत्तो भविष्यति, स विरक्तप्रकृतिरसहायः प्रमत्तश्च जय्यो मे भविष्यति, सर्वसैन्यसमुदायेन सह मया विग्रहार्थमभियुक्तः शक्तिगर्वादेकाकी दुर्गस्थो वा स्थास्यति, स संहतसैन्यो मित्रदुर्गरहितः साध्यो मे भविष्यति, बलवान् वा स राजा परदेशे शत्रुमुच्छेत्तुकामस्तमुच्छिद्य मां नोच्छिन्द्यात्, इति यदि मन्येत, बलवता प्रतियुध्यमानस्य कर्मारम्भेषु विपन्नेषु मध्यमे चापेक्ष्यमाणे साहाय्यं करिष्यति इति च यदि मन्येत, एवंजातीयेषु निमित्तेषु शत्रोरपि शक्तिं सिद्धिं च इच्छेदेव, न तु तां विहन्यादिति। श्रीमूला.

विजिगीषुणा कर्तव्या मण्डलकल्पना

**नेमिमेकान्तरान् राज्ञः कृत्वा चानन्तरानरान्।**
**नाभिमात्मानमायच्छेन्नेता प्रकृतिमण्डले ॥**

अध्यायप्रान्ते श्लोकमाह— नेमिमित्यादि। नेता द्वादशराजमण्डलनायको विजिगीषुः एकान्तरान् स्वभूम्येकव्यवहितान् मित्रभूतान् राज्ञः नेमिं कृत्वा अनन्तरान् राज्ञः अरान् कृत्वा अरस्थाने कल्पयित्वा आत्मानं नाभिं आयच्छेत् कल्पयेत्। कुत्र? प्रकृतिमण्डले राजमण्डलात्मके चक्रे। श्रीमूला.

**मध्ये ह्युपहितः शत्रुर्नेतुर्मित्रस्य चोभयोः।**
**उच्छेद्यः पीडनीयो वा बलवानपि जायते ॥***

* कौटिलीयो मण्डलविचारः षाड्गुण्यप्रकरणेऽपि द्रष्टव्यः।

: बलवानपि शत्रुः विजिगीषोर्मित्रस्येत्युभयोर्मध्ये उपहितः निवेशितश्चेत् उच्छेद्यः पीडनीयो वा जायते ।
श्रीमूला.

## चाणक्यसूत्राणि

मण्डलविचारप्रयोजनम् , मण्डले शत्रुमित्रविचारः

[१]आवापो मण्डलनिविष्टः ॥
संधिविग्रहयोनिर्मण्डलः ॥
अनन्तरप्रकृतिः शत्रुः ॥
एकान्तरितं मित्रमिष्यते ॥
हेतुतः शत्रुमित्रे भविष्यतः ॥

## चाणक्यसारसंग्रहः

मण्डलविचारप्रयोजनम्

[२]अरिं मित्रमुदासीनं मध्यस्थं स्थविरं गुरुम् ।
यो न बुध्यति मन्दात्मा स च सर्वत्र नश्यति ॥

## मनुः

राज्ञा चतुर्विधराजमण्डलविचारः कर्तव्यः ,
विविधमण्डलस्वरूपम्

*[३]प्रचारं मण्डलस्य च (राजा चिन्तयेत्) ॥
[४]मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥

(१) एतस्मिन् राजमण्डले इमाश्चतस्रो राजप्रकृतयो मुख्या भवन्ति— विजिगीषुः , अरिः , मध्यमः , उदासीन इति । तत्र च यो राजा प्रकृतिसंपन्नः ' अहमेवंविधां पृथिवीं विजेष्ये ' (इति) अभ्युत्थितः स विजिगीषुः , उत्साहशक्तियोगात् । शत्रुस्त्रिविधः–‡ सहजः , प्राकृतः , कृत्रिमः, स्वभूम्यनन्तर इति । मध्यमः अनयोररिविजिगीष्वोरसंहतयोर्निग्रहसमर्थः , न संहतयोः । उदासीनः अरिविजिगीषुमध्यमानामसंहतानां निग्रहसमर्थः , न तु संहतानाम् । * मेधा.

(२) अरिविजिगीष्वोः भूम्यनन्तरः संहतयोः अनुग्रहे समर्थः , निग्रहे वाऽसंहतयोः , स मध्यमः । तस्य प्रचारं चिन्तयेत् । तथा प्रज्ञोत्साहप्रकृतिगुणसंपन्नो विजिगीषुः । तस्य चेष्टितं चिन्तयेत्किमसौ चिकीर्षति । तथा अरिविजिगीषुमध्यमानां यः संहतानामनुग्रहे समर्थः, निग्रहे च असंहतानाम्, स उदासीनः । तत्प्रचारं चिन्तयेत् । शत्रोश्च सहजकृत्रिमभूम्यनन्तरस्य त्रिविधस्यापि पूर्वेभ्यः प्रयत्नेन प्रचारं चिन्तयेत् ।
§ गोरा.

(३) तत्रापि चतुर्णा यत्नतोऽन्वेष्यः प्रचारः , अधिककार्यत्वादित्याह— मध्यमस्येति । अरिविजिगीषुमध्यवर्ती क्षुद्रोऽपि मध्यमोऽन्यतरप्रवेशेनान्यतरं बाधते इति प्रतिसंधेयः । विजिगीषोः मण्डलमध्ये उत्साहवतः । उदासीनः सर्वतो बाह्यः । स तु सर्वानिवोत्थापयितुं शक्त इत्यन्वेष्यः । एवमरिः सर्वानर्थमूलतया । मवि.

(४) अस्यार्थः— विजिगीषुनृपस्य चतुर्दिक्षु क्रमशः अरिमित्रोदासीनास्त्रयः । एवं द्वादशराजकमण्डलं विजिगीषुणा त्रयोदशराजकमिति । अरिमित्रोदासीनास्त्रिविधाः , सहजकृत्रिमप्राकृतभेदात् । एतद्भिन्नो निग्रहानुग्रहसमर्थो मध्यमः । पार्ष्णिग्राहाक्रन्दासारा एषामन्तर्भवन्ति । नीतिशास्त्रे मयमैत्रविशालाक्षादिमनुबृहस्पतिशुक्रादिमतभेदेन चतुर्विंशत्यधिकत्रिशतं मण्डलम्, तद्विस्तरभयान्नोक्तम् । चिन्तयेदिति शेषः । रार. ५९

(५) कृत्रिमः भूम्याद्यप(रि ?)हारनिर्मितः । प्रचारो नाम प्रज्ञोत्साहगुणप्रकृतिसंपन्नत्वम् । † मच.

---

* अस्य व्याख्यानसंग्रहः शेषः स्थलादिनिर्देशश्च ' मन्त्रः ' इत्यस्मिन् प्रकरणे (पृ. १७७७) द्रष्टव्यः ।

‡ ग्रन्थोऽयं व्याकुलः । 'त्रिविधा रिपवः प्रोक्ताः कुल्यानन्तरकृत्रिमाः ' (विध. २।१४५।१५), ' भूम्यनन्तरः प्रकृत्यमित्रः ' (कौ. ६।२) इत्यादिवचनप्रामाण्यात् ' द्वादशप्रकृत्यन्यतमत्वात् प्राकृतः ' इति व्युत्पत्त्यर्थानुगमाच्च प्राकृतभूम्यनन्तरयोरेकत्वं प्रतीयते ।

(१) चासू. ४६–४७, ४९–५१.
(२) चासा. २।१८.
(३) मस्मृ. ७।१५४.
(४) मस्मृ. ७।१५५ ; राक. १०७ ; रार. ५९ ; राप्र. ३२० ; नन्द. प्रचारं (प्रचारः).

* राक. , राप्र. मेधागतम् ।
§ ममु. गोरावत् ।
† शेषं मेधागतम् ।

(६) मण्डलं वक्तुं क्रमते— मध्यमस्येति । प्रचारः मध्यमादीनां चतुर्णां लक्षणं तु वक्ष्यति । * बोद्धव्य इति वचनविपरिणामः । नन्द.

[1]एताः प्रकृतयो मूलं मण्डलस्य समासतः ।
अष्टौ चान्याः समाख्याता द्वादशैव तु ताः स्मृताः ॥

(१) एताः स्मृताः । एता मूलप्रकृतयो मण्डलस्य व्याख्याताः । अष्टौ चान्याः । आसां चतसृणां प्रकृतीनामेकैकस्याः † प्रकृतेर्मित्रममित्रं चेति द्वे द्वे प्रकृती । एता अष्टौ आद्याश्चतस्रः एवमुभयतो द्वादश भवन्ति । § मेधा.

(२) एताः मध्यमाद्याश्चतस्रः प्रकृतयः संक्षेपेण मण्डलस्य मूलम् । अन्यासां प्रकृतीनामाभ्यः प्रसूतेः एता मूलमित्युच्यन्ते । अन्याश्चाष्टौ समाख्याताः । तद्यथा— अग्रतोऽरिभूमीनां मित्रम्, अरिमित्रम्, मित्रमित्रम्, अरिमित्रमित्रं चेति । एवमन्याश्चतस्रो भवन्ति । पश्चाच्च पार्ष्णिग्राहः, आक्रन्दः, पार्ष्णिग्राहासारः, आक्रन्दासारः इति चतस्रः । एवमष्टौ मूलप्रकृतिभिः चतसृभिः सह द्वादश प्रकृतयः स्मृताः । + गोरा.

(३) एतदाह— एता इति । प्रकृतयः अवयवाः मण्डलस्य मूलं प्रधानम् । अष्टौ अन्याः मित्रप्रभृतयः । द्वादशैव ताः प्रकृतयः मिलित्वा । तदयं समुदायार्थः— मण्डलस्य मध्ये योऽधिकलाभार्थं नित्योत्साहः प्रवर्तते स विजिगीषुः, तस्याग्रतः अरिः, तदनन्तरो मित्रम्, तदनन्तरः अरिमित्रम्, ततः मित्रमित्रम्, ततः अरिमित्रमित्रम् । पृष्ठे तु पार्ष्णिग्राहः, तत्पृष्ठे आक्रन्दः, तत्पृष्ठे पार्ष्णिग्राहासारः, तत्पृष्ठे आक्रन्दासारः । अरिविजिगीष्वोः मध्यस्थः क्षुद्रो मध्यमः । उदासीनः सर्वेभ्यः परतरः । इति द्वादशभिर्नृपैर्मण्डलमुच्यते । क्षुद्रोऽपि उभयोरन्यतरप्रवेशेन अन्यतरेण सह विग्रहं कुर्वन् दुर्ग्रह इति मण्डले गम्यते । अत्र यः स्वापेक्षया विजिगीषुः तमादाय स्वात्मानमन्तर्भाव्य द्वादशराजमण्डलं प्रकल्प्यते । तेषां द्वादशानां प्रवृत्तिरन्वेष्टव्येत्यर्थः । + मवि.

(४) अग्रतः स्वभूमीनां अरिः अरिमित्रं मित्रं उदासीनश्चेति चतस्रः (१) । * मच.

[1]अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ।
प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥

(१) अमात्यादयः पञ्च प्रकृतयः द्वादशानां प्रकृतीनां एकैकस्या भवन्ति । अतः षट् द्वादशका द्विसप्ततिः । § मेधा.

(२) आसां चतसृणां मूलप्रकृतीनां (च !) शाखाप्रकृतीनामुक्तानां (च) एकैकस्याः प्रकृतेः अमात्यदेशदुर्गकोशदण्डाख्याः पञ्च द्रव्यप्रकृतयो भवन्ति । एवं च मूलप्रकृतयश्चतस्रः शाखाप्रकृतयः अष्टौ द्रव्यप्रकृतयः षष्टिरित्येवं संक्षेपतो द्विसप्ततिः कथिताः । ¶ गोरा.

---

* प्रकृतश्लोकात्पूर्वं 'वने वनेचराः कार्याः' 'परस्य चैते बोद्धव्याः' इति कौटिलीयं वचनद्वयं मानवमित्यभिमत्य नन्दनेन व्याख्यातम् । तत्रत्यस्य 'बोद्धव्याः' इति पदस्यायं वचनविपरिणाम उक्तः । तेन मूलश्लोके उभयत्र 'प्रचारः' इति पाठोऽस्याभिमत इति निर्णीयते । अयं ग्रन्थः 'प्रचारः' इत्यस्मात्परं भवितुं युक्तः ।

† ग्रन्थोऽयमशुद्धः, विजिगीषोरमित्रस्यारिरूपस्य अररमित्रस्य च विजिगीषुरूपस्य मूलप्रकृतिचतुष्टयेऽन्तर्भूतत्वेनानुपपन्नत्वात् । 'विजिगीषुर्मित्रं मित्रमित्रं वाऽस्य प्रकृतयः' (कौ. ६।२) इत्यादिवचनप्रामाण्यात् 'प्रकृतेर्मित्रं मित्रमित्रं चेति' इति भवितव्यम् ।

§ राक. मेधावत् ।

+ ममु. गोरावत् । नन्द. गोरागतम् ।

(१) मस्मृ. ७।१५६ ; राक. १०७ ; रार. ५९ ; राप्र. ३२०–३२१.

+ राप्र., भाच. मविगतम् ।

* शेषं गोरागतम् ।

§ राक., राप्र. मेधावत् ।

¶ ममु. गोरावत् ।

(१) मस्मृ. ७।१५७ ; राक. १०७ ; राप्र. ३२३.

(३) एवं तेषां या अङ्गभूता अमात्यकोशराष्ट्रदण्डदुर्गाख्याः प्रकृतयस्तासामपि प्रवृत्तिरनुसंधेयेत्याह– अमात्येति । * मवि.

( ४ ) तेषां प्रकृतीनां प्रत्येकं पुनः पञ्च पञ्च प्रकृतयः सन्तीति सविनिगमनमाह– अमात्येति । अमात्यः पुरोहितादिः । राष्ट्रं देशः । दुर्गः गिर्यादिः । अर्थः कोशः । दण्ड्यते पापी शत्रुर्वाऽनेनेति दण्डः पणग्रहणादिः सेनादिर्वा । * मच.

( ५ ) एता अनन्तरोक्ताश्चतस्रः अष्टौ च द्वादश पञ्चकानि च प्रकृतयो विस्तरेण कथिताः । संक्षेपेण द्विसप्ततिः संपद्यन्ते । एष मण्डलस्य विस्तारः संक्षेपश्चेत्यर्थः । † नन्द.

'अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥

( १ ) विजिगीषुभूम्यनन्तरं अरिं विद्यात्, तथा अरिमित्रं मित्रं तु ( ? अरिमित्रमित्रं च) । एवमरिभूम्यनन्तरं विजिगीषोर्मित्रं भवति । उदासीनस्तयोः परः । अरिमित्रलक्षणं च सहजकृत्रिमयोरपि द्रष्टव्यम् । मेधा.

( २ ) विजिगीषोः समन्तान्मण्डलीभूतानां भूम्यनन्तरानरीन् जानीयात् । तथा तत्सेवितं चारिमेव विद्यात् । अरेः पुनरनन्तरां विजिगीषोः भूम्येकान्तरां मित्रप्रकृतिं विद्यात् । तयोश्चारिमित्रयोः परामुदासीनप्रकृतिं विद्यात् । तासामेवाग्रेपश्चाद्भेदेन अरिपार्ष्णिग्राहादिव्यपदेशभेदः । + गोरा.

( ३ ) अमात्यादीनां च स्वाम्यधीनतया तन्मध्यगणनेन यदि द्वादशैव प्राधान्येन गण्यन्ते तदा तत्रापि विवक्षितविवेके वस्तुतश्चत्वार एव स्युरित्याह– अनन्तरमरिमिति । अरिसेविनं अरिमित्रादिं अरिमेव विद्यात् । एवं चानन्तरस्य तत्संयुक्तस्य चारित्वे पार्ष्णिग्राहतदासारादितन्मित्राणामरित्वमेव । एवमरेरनन्तरं तद्वैरिणं सर्वमेव मित्रकोटिं विद्यात् । तथा उदासीनः उभयप्रकाररहितः विजिगीषुश्च द्वावपि पृथक् इति चातुर्विध्यम् । तयोः परं ताभ्यामन्यम् । विजिगीषोश्चेति शेषः । मवि.

( ४ ) उक्तार्यादिचतुष्टयस्य लक्षणमाह– अनन्तरमिति । अनन्तरं स्वभूमेः चतुर्दिक्षु वर्तमानं राजचतुष्टयमरिं विद्यात् । तथा अरिसेविनमप्यरिं विद्यात् । अत एव तस्यापरपक्षनिक्षिप्तत्वात् अरिमित्रोदासीनपार्ष्णिग्राहाश्चतस्रः । तयोः अरिमित्रयोः परं बहिर्भूमौ वर्तमानमुदासीनं चिन्तयेदित्यन्वयः । वस्तुतस्तु मध्यमस्येत्यादेरयमर्थः– मध्यमस्य ( ? मण्डलस्य ) मित्रमुदासीनोऽरिर्विजिगीषुश्चेति चतस्रः प्रकृतयः । ते एव नामभेदेन अरिमित्रमित्रारिमित्रपार्ष्णिग्राहासाराक्रन्दासारतां प्रतिपद्यन्ते । न चैकस्य नामादिभेदादनेकत्वमदृष्टचरमिति वाच्यम्, 'एकचक्रश्चैकाश्वः सविता' इति श्रुतेर्भेदेन 'सप्तसप्तिवहः पद्मी ' इति स्मृतिदर्शनात्, कृष्णाष्टम्या एव जयन्त्यादिभेदेन फलभेददर्शनाच्च । अत एव ' अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ' (यास्मृ. १।३४५) इति याज्ञवल्क्यः, ' पार्ष्णिग्राहाक्रन्दासारादयश्चारिमित्रादिष्वन्तर्भवन्ति ' इति याज्ञवल्क्यमिताक्षरावचनमपि संगच्छते इति । स्वविषयस्य अग्रवर्ती अरिः, पश्चाद्वर्ती पार्ष्णिग्राहः, ' विषयानन्तरो राजा शत्रुर्मित्रमतः परम् । उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ॥ ' ( अमरकोशः २।८।९–१० ) इत्यभिधानात् । एवं चतुर्दिक्षु द्वादशैव राजानः । मच.

( ६ ) मध्यमादीनां लक्षणं श्लोकद्वयेनाऽऽह– अनन्तरमरिं विद्यादिति । विजिगीषोरनन्तरमरिं विद्यात् । अरिसेविनश्च अरिमित्रं ( अरिमित्रमित्रं ) पार्ष्णिग्राहः आसारश्चेति चत्वारः अरिसेविनः स्वयमरिश्चेति पञ्चारयः संपद्यन्ते । अरिप्रसङ्गान्मित्रलक्षणमुक्तम् – अरेरनन्तरं मित्रमिति । अरेरनन्तरं जातावेकवचनम् । अरीणां पञ्चानामनन्तरं मित्रं विद्यादित्यर्थः । मित्रं मित्रमित्र-

---

* शेषं गोरावत् ।

† शेषं मचगतम् ।

+ मसु. गोरावत् ।

( १ ) मस्मृ. ७।१५८ ; गोरा. सेविन ( सेवित ) ; राक. १०७ ; पमा. ४११ उत्त. ; राप्र. ३२१ पू.

माक्रन्दमासारश्चेति चत्वारि मित्राणि संपद्यन्ते । तयोः अरिवर्गमित्र(वर्ग)योः परं बहिःस्थितं उदासीनं विद्यादिति । उदासीनस्य लक्षणशेषमुत्तरत्र श्लोकेऽपि वक्ष्यते । नन्द.

[1]विकृष्टेऽध्वन्यनायत्त उदासीनो बलान्वितः ।
अखिलो मण्डलार्थस्तु यस्मिञ्ज्ञेयः स मध्यमः ॥

( १ ) उदासीनः अरिविजिगीषुमध्यमानामसंहतानां निग्रहसमर्थः । तदुक्तम् – विकृष्ट इति । विकृष्टेऽध्वनि अरिमित्रापेक्षया विप्रकृष्टे स्थले । अनायत्तः त्रयाणामप्यनधीनः । अखिलः अर्थाद्विजिगीषुयातव्ययोः । मण्डलार्थः मण्डलप्रयोजनं यस्मिन् स मध्यमो ज्ञेयः । राप्र. ३२०–३२१

( २ ) यो विप्रकृष्टे अध्वनि स्थितो यत्नरहितः स उदासीनः । यो महाबलः स विजिगीषुः । मण्डलार्थः मण्डलस्य कृत्यं निग्रहानुग्रहादिकं यस्मिन् तिष्ठति स मध्यमो ज्ञेयः । नन्द.

मण्डलेषु उपायप्रयोगविवेकः

[2]तान् सर्वानभिसंदध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥

( १ ) संदध्यात् वशीकुर्यात् । पौरुषनयौ सामदण्डावेव । तत्र चोक्तम्– 'सामदण्डौ प्रशंसन्ति' ( मस्मृ. ७।१०९ ) इति । + मेधा.

( २ ) तान् सर्वान् नृपतीन् सामदानभेददण्डाख्यैः यथासंभवं व्यस्तैः समस्तैर्वा, पौरुषेण वा दण्डेनैव केवलेन नयेन वा साम्नैव वा केवलेन वशीकुर्यात् । * गोरा.

( ३ ) अभिसंदध्यात् आत्मीयान् कुर्यात् । उपक्रमैः उपायैः । पौरुषेण दण्डकारणभूतेन । नयेन च मतिकौशलेन सामदानभेददण्डकारणभूतेन । मवि.

( ४ ) पौरुषेण प्रतापादिना । नयेन नीतिशास्त्रोक्तेन । * रार. ५६

( ५ ) एतेषां ज्ञाने किं स्यात्तदाह– तानिति । * मच.

## याज्ञवल्क्यः

मण्डले उपायप्रयोगविवेकः

[1]अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ।
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥

( १ ) विजिगीषोरवस्थितस्य भूम्यनन्तरः शत्रुः । तस्मात् परः मित्रम् । तत्परस्तूदासीनः । एवमिदं मण्डलमवस्थितं सामोपप्रदानभेददण्डैर्यथार्हं चिन्त्यम् । विश्व.

( २ ) किंच, अरिः शत्रुः मित्रं सुहृत् उभयविलक्षणः उदासीनश्च । ते च त्रयस्त्रिविधाः– सहजाः, कृत्रिमाः, प्राकृताश्चेति । तत्र सहजोऽरिः सापत्नपितृव्यतत्पुत्रादिः । कृत्रिमोऽरिः यस्यापकृतं येन, चापकृतम् । प्राकृतस्तु अनन्तरदेशाधिपतिः । सहजं मित्रं भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादि । कृत्रिमं मित्रं येनोपकृतं यस्य चोपकृतम् । प्राकृतमित्रं एकान्तरितदेशाधिपतिः । सहजकृत्रिममित्रशत्रुलक्षणरहितौ सहजकृत्रिमोदासीनौ । प्राकृतोदासीनः द्व्यन्तरितदेशाधिपतिः । अरिः पुनः चतुर्विधः यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन । तत्र यातव्यः अनन्तरभूमिपतिर्व्यसनी हीनबलो विरक्तप्रकृतिः, विदुर्गो मित्रहीनो दुर्बलश्च उच्छेत्तव्यः, पीडनीयः मन्त्रबलहीनः, प्रबलमन्त्रबलयुक्तः कर्शनीयः, 'निर्मूलनात्समुच्छेदं पीडनं बलनिग्रहम् । कर्शनं तु पुनः प्राहुः कोशदण्डापकर्शनात् ॥' इति । मित्रं द्विविधम्–

---

+ राप्र. मेधागतम् ।

* ममु., भाच. गोरावत् ।

( १ ) मस्मृ. ७।१५८ इति श्लोकादूर्ध्वं प्रक्षिप्तः; राक. १०७ अखिलो ( स खिलो ); राप्र. ३२० ( = ); नन्द. ( विप्रकृष्टेऽध्वन्ययत्न उदासीनो बलान्वितः । विजिगीषुर्मण्डलार्थो यस्मिन् ज्ञेयः स मध्यमः ॥ ).

( २ ) मस्मृ. ७।१५९ ; राक. १०८ ; रार. ५६ ; यमा. ४११ ; राप्र. ३२३.

* शेषं गोरागतम् ।

( १ ) यास्मृ. १।३४५ ; विश्व. १।३४१ ; मिता.; अप. १।३४३–३४४; रार. ५९; वीमि.; नीम. ४६ ; मच. ७।१५८.

बृंहणीयं कर्शनीयमिति । कोशबलहीनं बृंहणीयम् । कोशबलाधिकं कर्शनीयम् । ' अनन्तरस्तत्परः परः ' इति प्राकृतारिमित्रोदासीनानाह । अनन्तरः प्राकृतोऽरिः । तत्परः प्राकृतं मित्रम् । तस्मात् परः प्राकृत उदासीनः । शेषाः पुनः प्रसिद्धत्वान्नोक्ताः । एतद्राजमण्डलं क्रमशः पूर्वादिदिक्क्रमेण चिन्त्यं तेषां चेष्टितं ज्ञातव्यम् । ज्ञात्वा च सामादिभिरुपायैर्वक्ष्यमाणैरनुसंधेयम् । एवं पुरतः पृष्ठतः पार्श्वतश्च त्रयस्त्रय आत्मा चैक इति त्रयोदश-राजकमिदं राजमण्डलं पद्माकारम् । पार्ष्णिग्राहाक्रन्दासारा-दयस्तु अरिमित्रोदासीनेष्वेवान्तर्भवन्ति । संज्ञाभेदमात्रं ग्रन्थान्तरे दर्शितमिति योगीश्वरेण न पृथगुक्ताः ।

* मिता.

( ३ ) तत्र हीनो दण्डेन समः साम्ना ईषदधिको दानेन ततोऽप्यधिको भेदेन साध्यः । अथवा, शत्रुं दण्डेन मित्रं साम्ना उदासीनं दानेन, सर्वेऽपि भेदेन साध्याः ।

† अप.

## बार्हस्पत्यसूत्रम्

शत्रुमित्रोदासीनलक्षणानि

[1]अरिः शुभशीलो मित्रम् ॥

सुहृत्सु (अ)शुभशीलः शत्रुः ॥

चन्द्रादित्ययोरेकरुचित्वाच्छत्रुत्वम् ॥

यदि चेन्न स्थितिस्तयोः ॥

ज्ञातिषु यत्र वैरं तत्कुलद्वयमामूलं नश्यति ॥

[2]अष्टादश तीर्थानि निरूपयेत् ॥

षट् प्रकृतयस्तीर्थं शत्रुमित्रोदासीनाश्च ॥

अन्तःशत्रुरन्तर्मित्रोऽन्तरुदासीन इति तेऽप्यनु-जीविसखिसुहृदश्च ॥

भार्यापुत्रबान्धवाश्च ॥

* रार., दीक., वीमि., नीम. मितागतम् ।

† शेषं मितागतम् ।

( १ ) बासू. १।१०७–१११.

( २ ) बासू. ३।२२–२५.

## आश्वलायनः

मण्डलीयेषु राजसु उपायप्रयोगविवेकः

[1]शत्रून् मित्रानुदासीनांस्त्रीनुपायचतुष्टयैः ॥
वशीकुर्याद्विदित्वैतान्देशान्कालांश्च तत्त्वतः ।
शत्रोः शत्रुं च मित्रं च तस्मिन्नात्री (?) तथाऽऽत्मनः ॥
ज्ञात्वा त्रींस्त्रीनुपायेन राजा कर्माणि कारयेत् ।
साम्ना समानरीन्भेदैर्बलिष्ठं दुर्बलांस्तथा ॥
विग्रहेणाथवा दानैः प्रबलांस्तु वशं नयेत् ॥

## मत्स्यपुराणम्

बाह्याः त्रिविधाः शत्रवः त्रीणि च मित्राणि

[2]... ... ... शत्रून् बाह्यांस्ततो जयेत् ।
बाह्याश्च त्रिविधा ज्ञेयास्तु( ? याः कु )ल्याभ्य-न्तरकृत्रिमाः ॥
[3]गुरवस्ते यथापूर्वं तेषु यत्नपरो भवेत् ।
पितृपैतामहं मित्रममित्रं च तथा रिपोः ॥
[4]कृत्रिमं च महाभाग मित्रं त्रिविधमुच्यते ।
तथाऽपि च गुरुः पूर्वं भवेत्तत्रापि चाऽऽदृतः ॥

बाह्याः त्रिविधा उक्ताः– बाह्याश्चेत्यादिना ।

पृ. १२३

( १ ) आश्वस्मृ. ८।४४–४७.

( २ ) मत्स्य. २२०।१६ ; विध. २।६५।१७–१८ भ्यन्तर ( नन्तर ) ; राक. १४७ उत्तरार्धं नास्ति ; राप्र. १२२–१२३ मत्स्यपुराणविष्णुधर्मोत्तरयोः.

( ३ ) मत्स्य. २२०।१७ ; विध. २।६५।१८–१९ यत्नपरो ( यत्नः सदा ) ममित्रं ( माश्रितं ) ; राक. ९६ मित्रममित्रं च ( मित्रं सामन्ताश्च ) उत्त. ; राप्र. १२३ यत्नपरो ( यत्नः सदा ) पू., मत्स्यपुराणविष्णुधर्मोत्तरयोः : २७७ मत्स्यपुराणे राकवत्, विष्णुधर्मोत्तरे आदर्शवत्, उत्त.

( ४ ) मत्स्य. २२०।१८ ; विध. २।६५।१९–२० चाऽऽदृतः ( चाऽऽश्रितम् ) ; राक. ९६ मित्रं त्रिविध ( त्रिविधं मित्र ) पू. ; राप्र. २७७ मित्रं त्रिविध ( त्रिविधं मित्र ) तथाऽ ( तत्रा ) दृतः ( हृतः ).

सामन्तास्तु तस्य पीडया शत्रुत्वमापन्नाः । अत एव विष्णुधर्मोत्तरे– 'अमित्रं च तथा रिपोः' ( विध. २।६५।१९ ) इति पाठः । आहृतः कृत्रिमः ।

राप्र. २७७

## विष्णुधर्मोत्तरपुराणम्

द्वादशराजकं मण्डलम्, उपायप्रयोगविवेकः

राम उवाच–

[1]मण्डलानि समाचक्ष्व विजिगीषोर्यथाविधि ।
यान्याश्रित्य नृपैः कार्यं संधिविग्रहचिन्तनम् ॥

पुष्कर उवाच–

[2]आत्ममण्डलमेवात्र प्रथमं मण्डलं भवेत् ।
समन्तात्तस्य विज्ञेया रिपवो मण्डलस्य तु ॥
[3]अधिकृत्याभियोज्यं तु तत्रापि शृणु कल्पनम् ।
अभियोज्यः स्मृतः शत्रुस्तत्रापि च प्रतीक्षिता ॥

तस्य अरेः । प्रतीक्षिता सेवकः । तदुक्तं मनुना– 'अनन्तरमरिं विद्यादरिसेविनमेव च' ( मस्मृ. ७।१५८ ) इति ।

राप्र. ३२१

[4]तत्परस्तु सुहृज्ज्ञेयो रिपुमित्रमतः परम् ।
स्वमित्रमित्रं तत्पश्चान्मित्रमित्रं रिपोस्तथा ।
एतत्पुरस्तात्कथितं पश्चादपि निबोध मे ॥
[5]पार्ष्णिग्राहस्ततः पश्चात्ततस्त्वाक्रन्द उच्यते ।
आसारस्तु ततोऽप्यन्यस्त्वाक्रन्दासार उच्यते ॥

---

( १ ) विध. २।१४५।६.

( २ ) विध. २।१४५।७; अग्नि. २३३।१४ ( पुष्कर उवाच० ) समन्तात्त ( सामन्तास्त ).

( ३ ) विध. २।१४५।८; राप्र. ३२१ ल्पनम् ( ल्पनाम् ) स्तत्रा ( स्तस्या ).

( ४ ) विध. २।१४५।९ द्वितीयचरणे ( मित्रं मित्ररिपुस्तथा ) द्वितीयार्धं नास्ति; अग्नि. २३३।१५–१६ तत्पर ( उपेत ) रिपु ( शत्रु ) तृतीयचरणे ( मित्रमित्रं ततो ज्ञेयं ) स्तथा ( स्ततः ); राप्र. ३२१.

( ५ ) विध. २।१४५।१० ; अग्नि. २३३।१६–१७ ‍प्यन्यस्त्वा ( न्वः स्यादा ) ; राप्र. ३२१ हस्ततः ( हः स्थितः ).

आसारः पार्ष्णिग्राहासारः ।

राप्र. ३२१

[1]जिगीषोः शत्रुयुक्तस्य वियुक्तस्य तथा द्विज ।
निग्रहानुग्रहे शक्तो मध्यस्थः परिकीर्तितः ॥
[2]निग्रहानुग्रहे शक्तः सर्वेषामपि यो भवेत् ।
उदासीनः स कथितो बलवान् पृथिवीपतिः ॥
[3]एतावदेव ते राम प्रोक्तं द्वादशराजकम् ।
नात्रापि निश्चयः शक्यो वक्तुं मनुजपुंगव ॥
[4]नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥

सामर्थ्ययोगात् कारणात् ।

राप्र. ३२२

[5]त्रिविधा रिपवः प्रोक्ताः कुल्यानन्तरकृत्रिमाः ।
पूर्वः पूर्वो गुरुस्तेषां दुश्चिकित्स्यतमो मतः ॥
[6]अनन्तरोऽपि यः शत्रुः सोऽपि मे कृत्रिमो मतः ।
पार्ष्णिग्राहो भवेद्राजा शत्रोर्मित्राभियोगिनः ॥
[7]पार्ष्णिग्राहमुपायैस्तु शमयेच्च तथा स्वकम् ।
मित्रेण शत्रोरुच्छेदं प्रशंसन्ति पुरातनाः ॥

---

( १ ) विध. २।१४५।११ ; अग्नि. २३३।१७–१८ शस्त्र ( शत्रु ) वियु ( विमु ) मध्यस्थः ( मध्यमः ) ; राप्र. ३२१ शस्त्र ( शत्रु ).

( २ ) विध. २।१४५।१२; अग्नि. २३३।१९ ; राप्र. ३२१.

( ३ ) विध. २।१४५।१३ ; अग्नि. २३३।२० ( मण्डलं तव संप्रोक्तमेतद्द्वादशराजकम् । ) पू.: १८ उत्त. ; राप्र. ३२१ राम प्रोक्तं ( प्रोक्तं राम ).

( ४ ) विध. २।१४५।१४ ; अग्नि. २३३।२० ( न कस्यचिद् रिपुर्मित्रं कारणाच्छत्रुमित्रके ॥ ) एतावदेव ; राप्र. ३२२.

( ५ ) विध. २।१४५।१५; अग्नि. २३३।२१ प्रोक्ताः ( ज्ञेयाः ) पूर्वः ( पूर्वं ) ; राप्र. ३२२.

( ६ ) विध. २।१४५।१६; अग्नि. २३३।२२ उत्तरार्धे ( पार्ष्णिग्राहो भवेच्छत्रोर्मित्राणि रिपवस्तथा ॥ ) ; राप्र. ३२२ शत्रो ( शत्रु ).

( ७ ) विध. २।१४५।१७ प्रशं ( न शं ) ; अग्नि. २३३।२३ चैस्तु ( चैश्च ) ; राप्र. ३२२.

[1]मित्रं हि शत्रुतामेति सामन्तत्वादनन्तरम् ।
शत्रुं जिगीषुरुच्छिन्द्यात्स्वयं शक्नोति चेद्यदि ॥

[2]प्रतापवृद्धौ तेनास्य न मित्राज्जायते भयम् ।
नान्यथा पृथिवी जेतुं शक्या राम जिगीषुणा ॥

[3]प्रतापवृद्धिः कर्तव्या तस्माद्राज्ञा यथा तथा ।
तथाऽस्य नोद्विजेल्लोको विश्वास्यश्च यथा भवेत् ॥

[4]जिगीषुर्धर्मविजयी तथा लोकं वशं नयेत् ।
यः स्यादधर्मविजयी तस्मादुद्विजते जनः ।
प्राप्यापि वसुधां कृत्स्नां न चिरं श्रियमश्नुते ॥

[5]धर्मेण राज्ञो भवतीह वृद्धि-
धर्मेण वृद्धिश्च तथा परत्र ।
धर्मेण लब्ध्वा वसुधां जितारि-
र्भुक्त्वा चिरं नाकमनुप्रयाति ॥

विजिगीषुः धर्मेण परान् जयेदित्युक्तं विष्णुधर्मोत्तरे–यथास्येति । राप्र. ३२३–३२४

## अग्निपुराणम्

त्रिविधशत्रुमित्रलक्षणानि

[6]जयेद्वाह्यानरीन्पश्चाद्वाह्याश्च त्रिविधारयः ।
गुरवस्ते यथापूर्वं कुल्यानन्तरकृत्रिमाः ॥

पितृपैतामहं मित्रं सामन्तश्च तथा रिपोः ।
कृत्रिमं च महाभाग मित्रं त्रिविधमुच्यते ॥

(१) विध. २।१४५।१८; अग्नि. २३३।२४ हि (च); राप्र. ३२२.

(२) विध. २।१४५।१९; अग्नि. २३३।२५ स्य न मित्रा (पि नामित्रा) पू.; राप्र. ३२२.

(३) विध. २।१४५।२०; अग्नि. २३३।२५ तथा (यथा) स्यश्च (सश्च) उत्त.; राप्र. ३२४ तथा (यथा) उत्त.

(४) विध. २।१४५।२१; अग्नि. २३३।२६ प्रथमार्धमात्रम्; राप्र. ३२४.

(५) विध. २।१४५।२२; राप्र. ३२४.

(६) अग्नि. २२५।९–१०.

द्वादशराजकं मण्डलम्

राम उवाच–

[1]मण्डलं चिन्तयेन्मुख्यं राजा द्वादशराजकम् ।
अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ॥
तथाऽरिमित्रमित्रं च विजिगीषोः पुरः स्मृताः ।
पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरम् ॥
आसारावनयोश्चैवं विजिगीषोश्च मण्डलम् ।
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ॥
अनुग्रहे संहतयोर्निग्रहे व्यस्तयोः प्रभुः ।
मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः ॥
अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥

## कामन्दकीयनीतिसारः

विजिगीषया मण्डलचिन्तनं राज्ञा कर्तव्यम्

[2]उपेतः कोशदण्डाभ्यां सामात्यः सह मन्त्रिभिः ।
दुर्गस्थश्चिन्तयेत्साधु मण्डलं मण्डलाधिपः ॥

(१) एवं प्रतिष्ठितस्वराज्यस्य राज्ञः परराज्यलाभायेदानीं त्रयोदशभिः सर्गैरुपायः प्रदर्श्यते । स च षाड्गुण्यम् । तत्रास्मिन् सर्गे प्रकरणद्वयम्– मण्डलयोनिर्मण्डलचरितं च । तत्र षाड्गुण्यस्य मण्डलं कारणमिति मण्डलयोनिरुच्यते । यदाह– उपेत इत्यादि । द्रव्यप्रकृतिमुक्तो मण्डलं चिन्तयेत् । तथा तत् संपूर्णं विशुद्धं च मण्डलं भवतीति संक्षेपार्थः । तत्राऽऽद्यं प्रकरणं संपूर्णतार्थं द्वितीयं विशुद्ध्यर्थम् । सामात्य इति सिद्धत्वात् मन्त्रिग्रहणं बुद्धिसचिवोऽत्यन्तमस्मिन् व्याप्रियते इति दर्शनार्थम् । दुर्गस्थ इति परराज्यविजिगीषाकाले दुर्गमाद्रियेतेति तिष्ठतिप्रयोगेण दर्शयति । मण्डलाधिप इति मण्डलशब्दो जनपदे द्रष्टव्यः । स्वराष्ट्राधिप इत्यर्थः ।
जम.

(२) मण्डलाधिपस्य राज्ञो मण्डलशोधनप्रकारमभिधातुमाह– उपेत इति । उपेतः कोषदण्डाभ्यां पूर्वोक्तप्रकृतिसंपद्युक्तः । अवशिष्टार्थः सुगमः ।
उनिसा.

(१) अग्नि. २४०।१–५.

(२) कानी. ८।१.

**[1]रोचते सर्वभूतेभ्यः शशीवाखण्डमण्डलः ।
संपूर्णमण्डलस्तस्माद्विजिगीषुः सदा भवेत् ॥**

( १ ) रोचत इत्यादिना श्लोकद्वयेन प्रकरणद्वये व्यापारफलं दर्शयति । अखण्डमण्डलः संपूर्णमण्डलः इत्यर्थः। संपूर्णमण्डलस्तस्माद्विजिगीषुरिति निगमनम्। अत्र राजेति वक्तव्ये विजिगीषुग्रहणं यदा प्रतिष्ठितराज्यो राजा परराज्यं विजिगीषते तदा विजिगीषुरिति विशेषसंज्ञां लभते इति दर्शनार्थम् । तेनेतःप्रभृति विजिगीषुरधिक्रियते । जम.

( २ ) विजिगीषोः स्वमण्डलापेक्षत्वमभिधातुमाह– रोचत इति। रोचते प्रियो भवति सर्वभूतेभ्यः वर्णचतुष्टयसंकीर्णजात्यादिरूपप्रजाभ्यः। संपूर्णमण्डलः । सप्तप्रकृतिकं राज्यं मण्डलम्। ताश्च सप्त प्रकृतयो यदा स्वगुणसंपदुपेता भवन्ति तदा संपूर्णमण्डलशब्देनोच्यते । विजिगीषुणा सर्वदा संपूर्णमण्डलेन भाव्यमिति भावः । शिष्टं स्पष्टम् । उनिसा.

**[2]रथीव राजते राजा विशुद्धे मण्डले चरन् ।
अशुद्धे मण्डले *सर्वं शीर्यते रथचक्रवत् ॥**

( १ ) रथीव चरन्निति संबन्धः। राजा विजिगीषयाऽवस्थितः । मण्डले चक्रनेमिवत् विशुद्धे सति । जम.

( २ ) अपरं च– रथीति । रथी विजिगीषुः विशुद्धे मित्रभावापन्ने मण्डले अरिमित्रादिके चरन् विराजते । उत्तरार्धं स्पष्टम् । सर्वथा मण्डलशुद्धिर्विधेयेति भावः । उनिसा.

सप्तप्रकृतिकं राज्यम्

**[3]अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः ।
एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥**

( १ ) अमात्यादियुक्तो मण्डलं चिन्तयेदित्युक्तम् । तत्र राज्ञः अमात्यादिपञ्चकस्य (चा)नयोः कस्य प्रधानगुणभाव इत्याह– अमात्येत्यादि । एताः प्रकृतय इति । द्रव्यप्रकृतित्वादेताः पञ्च विजिगीषोः स्वत्वेनोदाहृताः । मित्रं राजप्रकृतित्वात् स्वामिप्रकृतावन्तर्भूतम् । तेन सप्त प्रकृतयो राजराज्यभेदात् द्विधाऽवस्थिताः । तथा चोक्तम्– 'राजा राज्यमिति प्रकृतिसंक्षेपः' (कौ. ८।२) इति । तत्र राज्यं अमात्यादिप्रकृतिपञ्चकम् । शेषा राजप्रकृतिः । जम.

( २ ) एतदेव समर्थयन्नाह– अमात्येति । एताः पञ्च प्रकृतयः विजिगीषोः भोग्यत्वेन उदाहृता इति भावः । श्लोकार्थः सुगमः । उनिसा.

**[1]एताः पञ्च तथा मित्रं सप्तमः पृथिवीपतिः ।
सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः ॥**

( १ ) सप्तप्रकृतिकं राज्यमिति । एवं मन्यते– यथा राज्यमित्यभिधानप्रत्यययोः प्रवृत्तिनिमित्तं द्रव्यप्रकृतयः, एवं राजप्रकृतिरपि । तस्मात् प्रकृतिसप्तकमेव राज्यमिति । जम.

( २ ) एतदतिरिक्तं प्रकृतिद्वयमभिधातुमाह– एता इति । मित्रराजभ्यां सह अनन्तरोक्ताः प्रकृतयः सप्त भवन्तीत्यर्थः । उनिसा.

विजिगीषुलक्षणम्, विजिगीषुगुणाः

**[2]संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः ।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥**

( १ ) कः पुनर्विजिगीषुरित्याह– संपन्न इत्यादि । प्रकृतिभिः अमात्यादिभिः । महोत्साहग्रहणमन्यगुणभावेऽपि विजिगीषोरुत्साहोऽत्यन्तं प्रधानमिति दर्शनार्थम् । कृतश्रमः अनेकधा विजिगीषायाम् । जेतुमेषणशीलश्च । अन्यथा विजिगीषाभावाद्राजैव स्यात्, न विजिगीषुः । जम.

( २ ) विजिगीषुलक्षणमभिधातुमाह– संपन्नस्त्विति । स्पष्टम् । उनिसा.

---

* 'सर्वम्' इत्यत्र 'सर्पन्' इति पुस्तकान्तरपाठः समीचीनः ।

( १ ) कानी. ८।२ ; उनिसा. द्वितीयतृतीयश्लोकौ व्यत्यासेन पठितौ.

( २ ) कानी. ८।३.

( ३ ) कानी. ८।४ ; नन्द. ७।१५८.

( १ ) कानी. ८।५.

( २ ) कानी. ८।६ ; नन्द. ७।१५८.

[1]कौलीन्यं वृद्धसेवित्वमुत्साहः स्थूललक्षता ।
चित्तज्ञता बुद्धिमत्त्वं प्रागल्भ्यं सत्यवादिता ॥

(१) इदानीं विजिगीषुगुणानाह– कौलीन्यमित्यादिना श्लोकपञ्चकेन । तत्र उत्साहः प्रधानम् । तथा ह्यस्य गुणानस्मिन् सर्गे निर्देक्ष्यति । चित्तज्ञता पराभिप्रायज्ञता । जम.

( २ ) किंच– कौलीनमिति । स्थूललक्षिता दानावसरे स्थूलं बहु एव लक्षीकरोति । स्वल्पं दातुं न जानातीत्यर्थः । प्रागल्भ्यं अपरिषद्भीरुत्वम् । शेषः सुगमः । उनिसा.

[2]अदीर्घसूत्रताऽक्षौद्र्यं प्रश्रयः स्वप्रधानता ।
देशकालज्ञता दाढर्यं सर्वक्लेशसहिष्णुता ॥

( १ ) अदीर्घसूत्रता उत्साहगुणः क्षिप्रकारितेत्यर्थः । अक्षौद्र्यं गुणवत्संग्रहणशीलता । प्रश्रयः सादरता । स्वप्रधानता अनेयता । जम.

( २ ) अपरं च– अदीर्घसूत्रतेति । अदीर्घसूत्रता दीर्घकालं सूत्र्यते पर्यालोच्यते कार्यमिति दीर्घसूत्रम्, तस्य भावः दीर्घसूत्रता, तदभावोऽदीर्घसूत्रता शीघ्रकारिता । अक्षौद्रं परगुणासहिष्णुत्वरूपक्षुद्रताविहीनत्वम् । प्रश्रयः विनीतभावः अलुब्धता च । स्वप्रधानता स्वयं प्रधानत्वम् । देशकालज्ञता कार्यानुगुणदेशकालस्वरूपज्ञानवत्त्वम् । दाढर्यं दृढता, परिगृहीतापरित्याग इत्यर्थः । सर्वक्लेशसहिष्णुता क्षुत्तृष्णादिसर्वसहत्वम् । उनिसा.

[3]सर्वविज्ञानिता दाक्ष्यमूर्जः संवृतमन्त्रता ।
अविसंवादिता शौर्यं भक्तिज्ञत्वं कृतज्ञता ॥

( १ ) सर्वविज्ञानिता सर्वसमयवित्त्वम् । दाक्ष्यं उत्साहगुणः । ऊर्जः औदार्यं बलम् । शौर्यं उत्साहगुणः । भक्तिज्ञत्वं भृत्यभक्त्यनुरूपानुष्ठानत्वम् । जम.

( २ ) अन्यच्च– सर्वेति । सर्वविज्ञानिता सकलकलाकुशलत्वम् । दाक्ष्यं आशुकारित्वम् । ऊर्जः कायबलवत्त्वम् । संवृतमन्त्रता, इङ्गिताकारादिगोपनात् । अविसंवादिता विरहितशब्दच्छलाभिसंधानशीलत्वम् । शौर्यं अभीरुत्वम् । भक्तिज्ञत्वं अनुजीव्यादिकृतभक्तिज्ञता । कृतज्ञता कृतोपकारमानित्वम् । उनिसा.

[1]शरणागतवात्सल्यममर्षित्वमचापलम् ।
स्वकर्मदृष्टशास्त्रत्वं कृतित्वं दीर्घदर्शिता ॥

( १ ) शरणागतवात्सल्यमिति । वात्सल्यं स्नेहः । अमर्षित्वं उत्साहगुणः । स्वकर्मदृष्टशास्त्रत्वमिति । स्वकर्मणि विजिगीषणे यच्छास्त्रं षाड्गुण्याभिधायकं तत् अर्थतः प्रयोगतश्च दृष्टं येनेति समासः । पश्चात् भावप्रत्ययः । कृतित्वं अशेषशास्त्रपरिज्ञानात् पाण्डित्यम् । जम.

( २ ) किंच– शरणागतेति । अमर्षित्वं अपराधिषु क्षान्तिः । स्वकर्मदृष्टशास्त्रित्वं प्रजापालनरूपं स्वकर्म सर्वायुधविषयं दृष्टशास्त्रं च यो जानाति तस्य भावः । कृतित्वं पाण्डित्यम् । दीर्घदर्शिता शास्त्रचक्षुषा सुदूरदेशकालदर्शनशीलत्वम् । स्पष्टमन्यत् । उनिसा.

[2]जितश्रमत्वं वाग्मित्वमक्रूरपरिवारता ।
प्रकृतिस्फीतता चेति विजिगीषोर्गुणोदयः ॥

( १ ) जितश्रमत्वं युद्धाध्वगमनादिषु अपरिरुग्णता । अक्रूरपरिवारता अक्षुद्रपरिषत्कता । प्रकृतिस्फीतता स्वसंपदुपेतामात्यादिप्रकृतियुक्तता । शेषा गुणा व्याख्यातप्रायाः । एते गुणा राज्ञो विजिगीषावस्थायां प्राधान्येन व्याप्रियन्ते । तेन प्रागुक्तायामपि स्वामिसंपदि न पुनरुक्ततादोषः । एवं सति केचित् तत्रानुक्ता अपि इहोक्ताः चित्तज्ञताप्रश्रयभक्तिज्ञत्वादयः, तत्रोक्ता अप्यन्ये कार्यसंभववशादिह नोक्ताः क्रोधलोभद्रोहवर्जनादयः । जम.

( २ ) अपरं च– जितेति । एते अनन्तरोक्ता गुणा विजिगीषोर्विजिगीषुत्वसंपादका भवन्तीति भावः । श्लोकार्थः सुगमः । उनिसा.

---

( १ ) कानी. ८।७ ; उनिसा. लीन्यं ( लीनं ) लक्षता ( लक्षिता ).

( २ ) कानी. ८।८ ; उनिसा. क्षौद्यं ( क्षौद्रं ).

( ३ ) कानी. ८।९.

( १ ) कानी. ८।१० ; उनिसा. शास्त्रत्वं (शास्त्रित्वं).

( २ ) कानी. ८।११.

[1]सर्वैर्गुणैर्विहीनोऽपि स राजा यः प्रतापवान् ।
प्रतापयुक्तात्त्रस्यन्ति परे सिंहान्मृगा इव ॥

(१) अत्रापि उत्साहः प्रधानमिति कार्यद्वारेण दर्शयितुं श्लोकद्वयमाह– सर्वैरित्यादि । गुणैरिति विजिगीषुगुणैः । स राजा, विजिगीषावस्थायां स्थित इति शेषः । जम.

(२) उत्साहगुणस्यैव प्राधान्यं दर्शयन्नाह– सर्वैरिति । सर्वैः अनन्तरोक्तैः गुणैः विहीनोऽपि यः प्रतापवान् यः प्रतापयुक्तः उत्साहविशेषशाली स एव राजा, प्रजारञ्जनात् । यतः प्रतापयुक्तात् राज्ञः सिंहात् मृगा इव परे शत्रवः इतरे जना वा त्रस्यन्ति बिभ्यति । उनिसा.

[2]प्रतापयुक्तो नृपतिः प्राप्नोति महतीं श्रियम् ।
तस्मादुत्थानयोगेन प्रतापं जनयेत्प्रभुः ॥

(१) उत्थानेति उत्साहयोगेन, तत्कार्यत्वात् प्रतापस्य । जम.

(२) एतदेव समर्थयन्नाह– प्रतापेति । प्रतापसिद्धौ सकलशत्रुविकर्तनजनितं यशः प्रतापः, तस्य सिद्धौ सत्याम् । उत्थानयोगेन सततविग्रहोद्योगयोगेन । स्पष्टमवशिष्टम् । उनिसा.

शत्रुलक्षणम्, दारुणसुखोच्छेद्यशत्रुलक्षणानि

[3]एकार्थाभिनिवेशित्वमरिलक्षणमुच्यते ।
दारुणस्तु स्मृतः शत्रुर्विजिगीषुगुणान्वितः ॥

(१) यमरिं विजिगीषमाणो विजिगीषुस्तस्य लक्षणमाह– एकार्थाभिनिवेशित्वमित्यादि । भूम्यनन्तरत्वात् एकार्थाभिनिवेशिता । स च शत्रुर्द्विविधः– दुरुच्छेदः सूच्छेदश्च । तत्र दुरुच्छेदमाह– दारुण इति । दुरुच्छेद इत्यर्थः । विजिगीषुगुणान्वित इति । विजिगीषुगुणाः प्रागुक्ताः कौलीन्यादयः । जम.

(२) विजिगीषुलक्षणमभिधातुमाह– एकेति । एकार्थाभिनिवेशित्वं एकार्थे भूहिरण्यादिरूपे अभिनिवेशित्वं आत्मसात्करणाग्रहात् द्वयोरपि यत्नः । तदेव अरिलक्षणम् । तौ परस्परं अरी भवतः । तयोरेको दारुणः अपरः सुखोच्छेद्यश्च भवति । दारुणस्तु शत्रुः विजिगीषुगुणशाली भवति । आत्मनो दुरुच्छेद्यता विजिगीषुणा संपादनीयेति भावः । उनिसा.

लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखोच्छेद्यो रिपुः स्मृतः ॥

(१) सूच्छेदमाह– लुब्ध इत्यादि । तत्र लुब्धः संप्रदानाभावादनाश्रयणीयः । क्रूरः सत्संग्रहाशीलः सतामनभिगम्यः । अलसः स्वयमेवावसीदति । असत्यः यथाप्रतिज्ञाताकरणान्मण्डलेनैवोपेक्ष्यते । प्रमादी स्वयमेव न भवतीति । भीरुः दूरादेवापसर्पति । अस्थिरः दुर्गुणः मित्ररहितः निराश्रयत्वादभियोगमात्रसाध्यः । मूढः अज्ञानबहुलत्वादवसीदति । योधावमन्ता स्वयोधैरेव हन्यते । जम.

(२) सुखोच्छेद्यं शत्रुं दर्शयन्नाह– लुब्ध इति । लुब्धः अर्थलोभात् दानशक्तिरहितः । दानाभावे प्रकृतयो विरज्यन्ते । क्रूरः अतितीक्ष्णदण्डः । स च उद्वेजनीयो भवति । अलसः निरुद्योगः । तस्य प्रकृतयोऽपि निरुद्योगा भवन्ति । असत्यः असत्यशीलः । तच्छीलाः प्रकृतयो भवन्तीत्यर्थः । भीरुः शौर्यरहितः । स च संग्रामासमर्थो भवति । अस्थिरः स्थितेः रहितत्वात् । स च प्रकृतिभिर्न सज्ज्यते । मूढः निर्विवेकः । स तु अकिंचनकारी भवति । योधावमन्ता युद्धविशारदशूरपुरुषावमानकृत् । स च योधविमुक्तः सुखेनैवोच्छिद्यते । उनिसा.

विजिगीषोर्मण्डले अरिमित्रादयः पुरस्तात् पार्ष्णिग्राहादयश्च पश्चात् राजानः

[4]अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ।
तथाऽरिमित्रमित्रं च विजिगीषोः पुरः स्मृताः ॥

(१) यथा शत्रुं विजिगीषते तथा मित्रादीनपीति दर्शयितुं तन्मण्डलमाह चतुर्भिः श्लोकैः– अरिरित्यादि । तत्र विजिगीषोः समन्ततो मण्डलीभूतो भूम्यनन्तरः शत्रुः । तथैव भूम्येकान्तरितं मित्रम् । तथा तदनन्तरमरेः

---

(१) कानी. ८।१२; नीम. ४३ त्रस्यान्ति (त्रस्यन्ते).
(२) कानी. ८।१३; उनिसा. युक्तो (सिद्धौ).
(३) कानी. ८।१४–१५.
(४) कानी. ८।१६; नन्द. ७।१५८.

मित्रम् । ततो मित्रमित्रम् । विजिगीषोः पुरः स्मृता इति । यदा विजिगीषुररिमभियोक्तुं प्रवृत्तस्तदा पुरस्ताद्देते राजान एवंसंज्ञका व्यवह्रियन्ते । जम.

(२) विजिगीषोः अरेः मित्रस्य च लक्षणानि अभिहितानि । इदानीं विजिगीषोः यातव्यं प्रति यियासोः अग्रतः पश्चादासन्नव्यवहितभेदेनारिमित्रादीनां संज्ञान्तराणि व्यवहारार्थमभिधातुमाह– अरिमि( ? मिं )त्रमिति । अरेः(? रिः) अनन्तरोक्ताया ( ? क्ता ) विजिगीषोर्भूम्यनन्तररूपदिग्भागेषु व्यवस्थिताया ( ? ता ) अरिप्रकृतेः( ? तिः) । मित्रं अनन्तरोक्तं भूम्येकान्तरस्थितम् । अरिमित्रं विजिगीषोर्भूम्यनन्तरस्यैका( न ? )न्तरम् । अतः परं अरिमित्रात्परं मित्रमित्रं विजिगीषोर्भूम्येकान्तररूपमित्रस्यापि भूम्येकान्तररूपम् । तथा अरिमित्रमित्रं च विजिगीषोर्भूम्यनन्तरस्य अरेर्भूम्येकान्तररूपारि( ? रूप )मित्रस्य भूम्येकान्तरम् । एता॰ अपि तिस्रः( ? पञ्च ) प्रकृतयः विजिगीषोः पुरः अग्रतः स्मृताः प्रोक्ताः गुरुभिः । उनिसा.

[1]पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः ।
आसारावनयोश्चेति विजिगीषोस्तु मण्डलम् ॥

(१) पृष्ठतः किंसंज्ञका इत्याह– पार्ष्णीत्यादि । विजिगीषोः शत्रुमभियुञ्जानस्य शत्रुहिताय पार्ष्णिं गृह्णातीति पार्ष्णिग्राहः शत्रुमित्रम् । 'आगत्य पार्ष्णिग्राहं मे वारय' इति विजिगीषुणा आक्रन्द्यते आहूयते इति आक्रन्दः विजिगीषुमित्रम् । आसारावनयोश्चेति । अनुबलदानेन पार्ष्णिग्राहं आसरतीति पार्ष्णिग्राहासारः अरिमित्रमित्रम् । तथा आक्रन्दासारः विजिगीषुमित्रमित्रम् । इति एतत् विजिगीषोर्मण्डलम्, तज्जेयत्वात् । विजिगीषुणा हि नवयोजनसहस्रप्रमाणं चक्रवर्तिक्षेत्रं जेतव्यम् । तत्रैते दश राजानः संभवन्तीति संभवापेक्षया एतावन्त उक्ताः । यदा ह्यधिकं जयति तदा परतो ह्यभ्यधिका भवन्ति । जम.

(२) पश्चाद्व्यवस्थितानां तेषां संज्ञान्तराण्याह– पार्ष्णिग्राह इति । पार्ष्णिग्राहः पश्चात्स्थितो विजिगीषोर्भूम्यनन्तरश्च । आक्रन्दः तदनन्तरं तत्पश्चाद्वर्ती विजिगीषोर्भूम्येकान्तरः । अनयोः पार्ष्णिग्राहाक्रन्दयोः पश्चात् आसारावेव मित्रम् । तद्यथा पार्ष्णिग्राहस्य च आसारः स पार्ष्णिग्राहासारः । एवं आक्रन्दासारः । इति पश्चाद्वर्तिनो राजानश्चत्वारः, पुरस्तात् पञ्च, तदधो विजिगीषुः इति दशराजकमिदं मण्डलं विजिगीषोः संबन्धि भवति । आसामेव प्रकृतीनां अग्रपश्चाद्भावभेदेन व्यपदेशभेदः । तत्र अग्रवर्तिनः अरिव्यपदेश एव । पश्चाद्वर्तिनस्तु अरित्वेऽपि पार्ष्णिग्राहव्यपदेशः । 'एताः प्रकृतयो मूलम्' ( मस्मृ. ७।१५६ ) इति मनुवचनव्याख्यायां कुल्लूकभट्टः– 'अन्यथाऽष्टौ§ समाख्याताः । तद्यथा– अग्रतोऽरिभूमीनां मित्रमरिमित्रं मित्रमित्रमरिमित्रमित्रं चेति । एवं च चतस्रः प्रकृतयो भवन्ति । पश्चाच्च पार्ष्णिग्राहः, आक्रन्दः, पार्ष्णिग्राहासारः, आक्रन्दासारः इति चतस्रः । एवमष्टौ प्रकृतयो भवन्ति' इति । उनिसा.

विजिगीषोर्मण्डले मध्यमोदासीनौ राजानौ

[1]अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥

(१) अत्रैव विशेषव्यवस्थामाह– अरेश्चेत्यादि । अरिविजिगीष्वोर्भूम्यनन्तर इति स्थाननिर्देशः, तस्य विदिग्भागमाश्रित्य स्थितत्वात् । स च तयोर्भूम्यनन्तरत्वाच्छत्रुरपि भिन्नलक्षणत्वात् मध्यमसंज्ञो भवति । अनुग्रह इति । संहतयोः, असंहतयोश्चेति शेषः । संधाय विगृह्य वा परं प्रति हन्तुकामयोररिविजिगीष्वोः कोशदण्डाभ्यामनुग्रहे समर्थः । व्यस्तयोर्वध इति । असंहतयोः एकैकमेव निग्रहीतुं समर्थः, न तु द्वौ संहतौ, तयोस्तद्विशिष्टबलत्वात् । जम.

---

(१) कानी. ८।१७ ; नन्द. ७।१५८ नन्तरः (नन्तरम्) ; उनिसा. नन्दवत्.

§ 'अन्यथाऽष्टौ' इत्यत्र 'अन्याश्चाष्टौ' इति मुद्रितमनुपुस्तकपाठः ।

(१) कानी. ८।१८ ; जम. चतुर्थचरणे (समर्थो व्यस्तयोर्वधे) ; नन्द. ७।१५८ नन्तरः (नन्तरम्) ; उनिसा. नन्दवत्.

(२) अरिप्रकृतेरेव बलापेक्षं संज्ञान्तरमभिधातुमाह– अरेश्चेति। अरेः यातव्यस्यापि भूम्यनन्तरं भूम्यनन्तररूपो रिपुः मध्यमः नाम विजिगीषोश्चापि रिपुरेव भवति उभयोररिभावादरित्वमित्रत्वयुक्तः(१)। स च मध्यमः संहतयोः एकीभूतयोः तयोः अरिविजिगीष्वोः अनुग्रहे कोषदण्डाभ्यामुपकारे समर्थः प्रभुः, तदपेक्षया हीनशक्तित्वात्। तयोरेव व्यस्तयोः भिन्नयोः निग्रहे दण्डने च प्रभुः, एकैको मध्यमस्य युद्धे समर्थो न भवतीति। अत्र 'मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम्' (मस्मृ. ७।१५५) इति मनुवचनव्याख्याने कुल्लूकभट्टेनैवं कृतम्– 'अरिविजिगीष्वोर्यो भूम्यनन्तरः संहतयोरनुग्रहे समर्थो निग्रहे चासंहतयोः समर्थः स मध्यमः। तस्य प्रचारं चिन्तयेत्' इत्यादि। उनिसा.

[१]मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः।
अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः॥

(१) अरिविजिगीषुमध्यमानां प्रकृतिभ्यो बहिरिति स्थाननिर्देशः। लक्षणमाह– बलाधिक इति। मध्यमः बलवान्, तस्मादपि यो बलवत्तरः स उदासीनसंज्ञः। शेषं पूर्ववद्योज्यम्। तस्मादुदासीनात् परतोऽधिकतरो नास्ति। तस्मात् द्वादशैवैते राजानश्चक्रवर्तिक्षेत्रे संभवन्ति। जम.

(२) मण्डलाद्बहिरुदासीनप्रचारमभिधातुमाह– मण्डलादिति। एतेषां विजिगीष्वरिमध्यमानां मण्डलात् भूभागात् बहिः सान्तरो विजिगीषोर्भूम्यनन्तरः उदासीनः नाम बलाधिकः बलापेक्षया भवति। स च संहतानां तेषामरिविजिगीषुमध्यमानां अनुग्रहे साहाय्यदाने व्यस्तानां तेषां वधे वधदण्डने च प्रभुः पूर्ववत् समर्थः। अत्र 'उदासीनप्रचारं च' (मस्मृ. ७।१५५) इति मनुवचनम्, '(न?) तथा अरिविजिगीषुमध्यमानां यः संहतानामनुग्रहे समर्थः निग्रहे चासंहतानां समर्थः स उदासीनः। तस्य प्रचारं चिन्तयेत्' (मसु.) इति तद्व्याख्यानं च। उनिसा.

(१) कानी. ८।१९; नन्द. ७।१५८ धिकः (न्वितः) च वधे (चैव वो).

मण्डलस्वरूपे पूर्वाचार्याणां मतानि

[१]मूलप्रकृतयस्त्वेताश्चतस्रः परिकीर्तिताः।
आहैतत्तन्त्रकुशलश्चतुष्कं मण्डलं मयः॥

(१) इदानीमेतेष्वेव पूर्वाचार्यमतेन मण्डलव्यवस्थाभेदमाहाष्टादशभिः श्लोकैः– मूलप्रकृतय इत्यादि। चतस्र इति अरिविजिगीषुमध्यमोदासीनाः। शेषाश्चाष्टौ शाखावदत्रैव प्रतिबद्धाः। तत्र मित्र(? मित्रं मित्रमित्र)माक्रन्दस्तदासारश्च विजिगीषौ, शेषाः शत्रौ प्रतिबद्धाः। तस्माच्चतुष्कं मण्डलमिति मयः। जम.

(२) विजिगीष्वरिमध्यमोदासीनानां मूलप्रकृतित्वमाह– मूलप्रकृतयस्त्विवति। एताः अनन्तरोक्ताः विजिगीष्वरिमध्यमोदासीनरूपाः चतस्रः चतुःसंख्याकाः मूलप्रकृतयः अपरासां प्रकृतीनाममात्यादीनां मूलभूताः प्रकृतयः कारुण्यप्रयोगसंनिहितत्वात् प्रकीर्तिताः कथिताः। एतत् चतुष्कं चतुर्भेदभिन्नं मण्डलं तन्त्रकुशलः नीतितन्त्रप्रवीणः मयः मयनामा आचार्यः आह। एतदुक्तं मनुनाऽपि– 'एताः प्रकृतयो मूलं मण्डलस्य समासतः' (मस्मृ. ७।१५६) इति। उनिसा.

[२]विजिगीषुररिर्मित्रं पार्ष्णिग्राहोऽथ मध्यमः।
उदासीनः पुलोमेन्द्रौ मण्डलं षट्कमूचतुः॥

(१) पुलोमेन्द्रौ षट्कमिति। अरिविजिगीषू मध्यमोदासीनाभ्यामनुगृहीतौ यदा परस्परं संधायासंधाय वा स्वं स्वं शत्रुमभियुञ्जाते तदैव राज्ञोऽधिकृतचिन्ता इति षट्कं मण्डलं भवति। जम.

(२) विजिगीष्वरिमित्रपार्ष्णिग्राहमध्यमोदासीनानां षण्णां षड्राजकमण्डलत्वं पुलोमेन्द्राभ्यामुक्तमित्याह– विजिगीषुरिति। स्पष्टम्। उनिसा.

उदासीनो मध्यमश्च विजिगीषोश्च मण्डलम्।
उशना मण्डलमिदं प्राह द्वादशराजकम्॥

(१) विजिगीषोश्च मण्डलमिति दशराजकम्। एवं मन्यते– द्वादशसु राजसु स्वमण्डलानुग्राहितया व्यव-

(१) कानी. ८।२०; उनिसा. 'परिकीर्तिताः' इत्यत्र 'च प्रकीर्तिताः' इति पाठः स्यात्.

(२) कानी. ८।२१–२२.

स्थितेषु यदाऽरिविजिगीषू परस्परमतिसंघातुकामौ व्युत्तिष्ठेते तदा सर्वस्य चलनात् द्वादशराजकमधिक्रियत इति यावन्मात्रकमाश्रित्य कार्यं चिन्त्यते तावन्मात्रकमेव मण्डलं भवितुमर्हति । जम.

( २ ) विजिगीषोर्द्वादशराजकमण्डलस्य उदासीनमध्यमसहितस्य द्वादशराजकमण्डलत्वं उशनःसंमतमित्याह— उदासीन इति । प्रतीतम् । उनिसा.

[1]द्वादशानां नरेन्द्राणामरिमित्रे पृथक्पृथक् ।
षट्त्रिंशत्कमिति प्राहुस्ते च ते च महर्षयः ॥

( १ ) एवं च सति आचार्याणां मतभेदः । अरिमित्रे पृथक्पृथगिति । कार्यसंभववशादेकैकस्यान्यतरपार्श्वतः अन्ये शत्रुमित्रे योजयितव्ये इति । ते च ते चेति । द्वादश चतुर्विंशतिश्च राजानः षट्त्रिंशत्कं भवति । जम.

( २ ) अनन्तरोक्तद्वादशराजकमण्डलस्यैकैकस्य मित्रामित्रसहितस्य द्वादशत्रिकरूपषट्त्रिंशद्राजकमण्डलत्वं मयाचार्येण पुनः कथितमित्याह— द्वादशानामिति । षट्त्रिंशत्कं द्वादशत्रिकं षट्त्रिंशद्भवन्तीति । ते च द्वादश नरेन्द्राः ते च मित्रामित्रे एकैकशो मित्रामित्ररूपेण चतुर्विंशतिरिति षट्त्रिंशत्कं मण्डलं पुनर्मयः आह । उनिसा.

[2]द्वादशानां नरेन्द्राणां पञ्च पञ्च पृथक्पृथक् ।
अमात्याद्याश्च प्रकृतीरामनन्तीह मानवाः ॥

( १ ) पञ्च पञ्चेति अमात्याद्याः प्रकृतीः आमनन्ति कथयन्ति । जम.

( २ ) अनन्तरोक्तानां द्वादशमण्डलनरेन्द्राणां पृथक् प्रत्येकं अमात्याद्याः पञ्च प्रकृतयो भवन्तीति मानवशिष्याणां मतमाह— द्वादशानां नरेन्द्राणां पञ्चेति । द्वादशानां नरेन्द्राणां द्वादशमण्डलनरेन्द्राणां पृथक्पृथक् प्रत्येकं पञ्च पञ्च ( भवन्ति । ? ) अमात्याद्याश्च अमात्यराष्ट्रदुर्गकोशदण्डाख्याः प्रकृतीः आमनन्ति विगणयन्ति मानवाः मनुशिष्याः । स्पष्टमन्यत् । उनिसा.

( १ ) कानी. ८।२३ ; उनिसा. प्राहुस्ते ( प्राह ते ) महर्षयः ( पुनर्मयः ).

( २ ) कानी. ८।२४ ; नन्द, ७।१५८ याश्च (यास्तु).

[1]मौला द्वादश चैवैता अमात्याद्यास्तथा च याः ।
सप्ततिर्द्व्यधिका ह्येषां सर्वप्रकृतिमण्डलम् ॥

( १ ) सप्ततिर्द्व्यधिकेति । षष्टिर्द्रव्यप्रकृतयः द्वादश च राजप्रकृतय इत्यर्थः । सर्वप्रकृतिमण्डलमिति । राज्ञां प्रकृतीनां च समुदायस्य चिन्त्यमानत्वात् सर्वे प्रकृतिमण्डलमाहुर्मानवाः । जम.

( २ ) ततश्च किं भवतीत्याह— मौला इति । मौलाः मूलभूताः द्वादश द्वादशसंख्याकाः याः स्वामिप्रकृतयः, तथा अमात्याद्याः याश्च गुणकस्वरूपाः पञ्च, ताः एताः द्व्यधिका सप्ततिः द्विसप्ततिसंख्याकाः प्रकृतयः । एतत् सर्वे प्रकृतिमण्डलमिति मानवा मन्यन्ते । एतदुक्तं मनुना— ' अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः । प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥ ' ( मस्मृ. ७।१५७ ) इति । मनुवचनव्याख्याने कुल्लूकभट्टेनैवं कृतम्— ' आसां मूलप्रकृतीनां चतसृणां अष्टानां शाखाप्रकृतीनां उक्तानां एकैकस्याः प्रकृतेः अमात्यदेशदुर्गकोषदण्डाख्याः पञ्च द्रव्यप्रकृतयो भवन्ति । एताश्च पञ्च द्वादशानां प्रत्येकं भवन्त्यो द्वादशगुणजाताः षष्टिरेव द्रव्यप्रकृतयो भवन्ति । तथा मूलप्रकृतिभिश्चतसृभिः शाखाप्रकृतिभिश्चाष्टाभिः सह संक्षेपतो द्विसप्ततिप्रकृतयो मुनिभिः कथिताः ' इति । उनिसा.

[2]संयुक्तस्त्वरिमित्राभ्यामुभयारिस्तथा सुहृत् ।
मौला द्वादश राजान इत्यष्टादशकं गुरुः ॥

( १ ) उभयारिस्तथा सुहृदिति । अरिविजिगीष्वोश्चोभयोरुपकारापकारित्वादरिर्मित्रं च । तयोः पार्श्वतः अरिमित्रयोः स्थानं कल्पनीयम् । तद्वहिश्च तदरिमित्रयोः । इत्येवमेते षट् मौलाश्च द्वादश इत्यष्टादशकं भवति । जम.

( २ ) बृहस्पतिसंमतमष्टादशराजकं मण्डलमभिधातुमाह— संयुक्तस्त्विति । उभयारिः विजिगीषुयातव्ययोः

( १ ) कानी. ८।२५ ; नन्द. ७।१५८ का ह्येषां सर्वं (काश्चैताः सर्वाः ) ; उनिसा. चैवैता (यास्त्वेता) ह्येषां सर्वं (ह्येताः सर्वं).

( २ ) कानी. ८।२६–२७.

भूम्यनन्तरम्, 'एकार्थाभिनिवेश( ? शित्व )मरिलक्षणम्' ( कानी. ८।१४ ) इति वचनात् । तथा सुहृत् ( एवं ? ) उभयमित्रः अरिमित्राभ्यां संयुक्तः । ( एवं ) षट् राजानो भवन्ति । मौला द्वादश राजानः । एवमष्टादशराजकमण्डलं गुरुर्मन्यते । उनिसा.

**अष्टादशानामेतेषाममात्याद्याः पृथक्पृथक् ।**
**अष्टोत्तरशतं ह्येतन्मण्डलं कवयो विदुः ॥**

( १ ) अष्टोत्तरशतमिति । अष्टादश राजप्रकृतयो नवतिश्च द्रव्यप्रकृतय इति । जम.

( २ ) एतद्राजमण्डलं अष्टोत्तरशतं कवयो मन्यन्त इत्याह– अष्टादशानामिति । अनन्तरोक्तानां अष्टादशानामेतेषां पृथक्पृथक् एकैकस्य अमात्याद्याः *अमात्यराष्ट्रदुर्गकोशदण्डमित्ररूपाः षट् राजानो भवन्ति । एवं षड्गुणिताष्टादशकं अष्टोत्तरशतं भवति । स्पष्टमन्यत् । उनिसा.

**[1]एतेऽष्टादश चैतेषां शत्रुमित्रे पृथक्पृथक् ।**
**चतुष्पञ्चाशत्कमिति विशालाक्षः प्रभाषते ॥**

( १ ) शत्रुमित्रे पृथक्पृथगिति । उभयारेरुभयमित्रस्य चारिमित्रे प्रागुक्ते परित्याज्ये एव । शत्रुमित्रे पृष्ठतः स्थाप्ये । तदरिमित्रयोश्च मित्रशत्रवस्त्रिंशत् ( ? ) मौलाश्चाष्टादशेति चतुष्पञ्चाशत्कं मण्डलं भवति । जम.

( २ ) चतुःपञ्चाशद्राजकं मण्डलं विशालाक्षसंमतमभिधातुमाह– अष्टेति । मतान्तराणि सर्वाणि देशकालप्रजापेक्षया सार्थकानि द्रष्टव्यानि । अस्मिन् मते उक्ताष्टादशानां प्रत्येकस्य †अमात्याद्याः अमात्यराष्ट्र-

* ग्रन्थोऽयं दुष्टः, मित्रप्रकृतेरष्टादशराजप्रकृतिष्वेवान्तर्भावात् । किंच, अष्टादशानां षड्गुणितत्वे अष्टोत्तरशतं द्रव्यप्रकृतयः अष्टादश राजप्रकृतयश्चेति मिलित्वा षड्विंशत्यधिकशतं प्रकृतयः स्युः ।

† ग्रन्थोऽयमप्रामाणिकः अष्टादशराजप्रकृतिमेलने चतुःपञ्चाशत्संख्याविरोधश्च ।

( १ ) कानी. ८।२८ ; जम. 'इतिप्रकारं बहुधा' ( कानी. ८।४१ ) इत्यादिश्लोकव्याख्याने 'मित्रशत्रू पृथक् पृथक्' इति प्रतीकोद्धरणात् 'शत्रुमित्रे' इत्यत्र 'मित्रशत्रू' इति पाठान्तरं स्यात् ; उनिसा. पूर्वार्धे ( अष्टादशानामेतेषाममात्याद्याः पृथक् पृथक् । ).

दुर्गाणीति त्रयं त्रयं भवति । तेन गुणिताश्चतुःपञ्चाशत् संपद्यन्ते । एतत्त्रिगुणितं मण्डलं विशालाक्षमतम् । उनिसा.

**[1]चतुष्पञ्चाशतो राज्ञाममात्याद्याः पृथक्पृथक् ।**
**सचतुर्विंशतीदं हि मण्डलं त्रिशतं मतम् ॥**

( १ ) सचतुर्विंशति त्रिशतं मण्डलमिति । मौलाश्चतुष्पञ्चाशत् राजानः, द्रव्यप्रकृतयश्च सप्ततिशतद्वयमित्यर्थः । जम.

( २ ) चतुर्विंशत्यधिकत्रिशतमण्डलं केषांचिन्मतमाह– चतुःपञ्चाशतामिति । अनन्तरोक्तानां चतुःपञ्चाशतां राज्ञां पृथक्पृथक् एकैकस्य *अमात्याद्याः षट् राजानो भवन्ति । तेनैतदपरमण्डलं चतुर्विंशत्यधिकत्रिशतमितं भवति । उनिसा.

**[2]सप्तप्रकृतिकं यत्तु विजिगीषोररेश्च तत् ।**
**चतुर्दशकमेवेह मण्डलं परिचक्षते ॥**

( १ ) विजिगीषोररेश्च सप्तप्रकृतिकमित्येवम् । ततश्चतुर्दशकं भवति, तावति कार्यस्य चिन्त्यमानत्वात् । जम.

( २ ) अपरे चतुर्दशराजकं मण्डलं मन्यन्त इत्याह— सप्तप्रकृतिकमिति । समूहवाचित्वान्मण्डलशब्दस्य एतदभिन्नं मण्डलं समूहं परिचक्षते । स्पष्टमन्यत् । उनिसा.

**[3]मण्डलं त्रिकमित्याहुर्विजिगीष्वरिमध्यमाः ।**
**मित्रयुक्ताः पृथक् चैते षट्कमित्यपरे जगुः ॥**

( १ ) तथा त्रिकेऽपि मण्डले मित्रयुक्ता इति । यदा तन्मित्राण्यपेक्ष्य चिन्ता तदा षट्कं परं भवति । जम.

* ग्रन्थोऽयमनुपपन्नः । अमात्यादीनां षट्त्वे सचतुर्विंशतित्रिशतत्वसंख्याविरोधात् मित्ररूपद्रव्यप्रकृतेर्मौलेषु चतुष्पञ्चाशत्स्वेवान्तर्भावाच्च 'पञ्च' इति युक्तम् । किंच, अमात्यादीनां राजत्वोक्तिरपि प्रामादिकी ।

( १ ) कानी. ८।२९ ; उनिसा. शतो ( शतां ).

( २ ) कानी. ८।३०.

( ३ ) कानी. ८।३१ ; उनिसा. लं त्रिक ( लत्रिक ).

(२) मण्डलत्रिकषट्कपक्षावाह– मण्डलत्रिकमिति । पूर्वार्धं सुगमम् । एते विजिगीष्वरिमध्यमाः पृथक् एकैकशः मित्रयुक्ताः षट् संपद्यन्ते इत्यर्थः । उनिसा.

[1]अमात्याद्याः प्रकृतय एकैकस्यैव भूपतेः ।
मण्डलं मण्डलविदः षट्त्रिंशत्कं प्रचक्षते ॥

(१) षट्त्रिंशत्कमिति । अनन्तरोक्ताः षट् राजप्रकृतयः त्रिंशच्च द्रव्यप्रकृतयः । जम.

(२) षट्त्रिंशत्कपक्षमाह– अमात्याद्या इति । भूपतेः अनन्तरोक्तभूपतिषट्कस्य एकैकस्य अमात्याद्याः प्रकृतयः षट् (? पञ्च) भवन्ति । तेन षट्त्रिंशत्संख्या संपद्यते । उनिसा.

[2]सप्तप्रकृतिकाः सर्वे विजिगीष्वरिमध्यमाः ।
एकविंशतिरित्याहुरपरे परिवादिनः ॥

(१) सप्तप्रकृतिकाः सर्वे, आत्मप्रक्षेपात् । जम.

(२) एकविंशतिराजकं मण्डलमपरनयवित्संमतमित्याह– सप्तप्रकृतिका इति । सप्तानामेकैकस्य विजिगीष्वरिमध्यमाः त्रयो भवन्ति । तेन एकविंशतिसंख्या भवति । उनिसा.

[3]चत्वारः पार्थिवा मौलाः पृथङ्मित्रैः सहाष्टकम् ।
अमात्यादिभिरेते च जगत्यक्षरसंमिताः ॥

(१) चत्वारो मौलाः अरिविजिगीषुमध्यमोदासीनाः । एते चेति अष्टौ राजानः । जगत्यक्षरसंमिता इति । जगती नाम छन्दोवृत्तिः अष्टाचत्वारिंशदक्षरा, तत्संख्यं मण्डलं भवतीत्यर्थः । जम.

(२) अष्टचत्वारिंशत्कं मण्डलमभिधातुमाह– चत्वार इति । मौलाः विजिगीष्वरिमध्यमोदासीनाः चत्वारः पार्थिवाः । पृथङ्मित्रैः सहाष्टकम् । पृथक्पृथक् मित्रसहिताः सन्तः अष्टकं भवति । तदेव अमात्यादिभिः पूर्वोक्तैः षड्भिः प्रकृतिभिः सह षड्गुणितमित्यर्थः, जगत्यक्षरसंमितं द्वादशाक्षरनिबद्धजगतीछन्दोगताष्टचत्वारिंशदक्षरसंमितं भवतीति । उनिसा.

[1]विजिगीषोः पुरस्ताच्च ये च पश्चात्प्रकीर्तिताः ।
दशकं मण्डलमिदं मण्डलज्ञाः प्रचक्षते ॥

(१) दशकं मण्डलं मध्यमोदासीनौ अपास्य योज्यम् । जम.

(२) दशराजकमण्डलमभिधातुमाह– विजिगीषोरिति । व्याख्यातपूर्वम् । उनिसा.

दशानां भूमिपालानाममात्याद्याः पृथक्पृथक् ।
मण्डलं मण्डलविदः षष्टिसंख्यं प्रचक्षते ॥

(१) षष्टिसंख्यमिति । दश राजप्रकृतयः, पञ्चाशत् द्रव्यप्रकृतयः । जम.

(२) षष्टिराजकं मण्डलमभिधातुमाह– दशानामिति । श्लोकव्याख्यानं सुप्रतीतम् । उनिसा.

[2]प्राग्यौ द्वौ विजिगीषुश्च पश्चिमौ चेति पञ्चकम् ।
अमात्याद्याः पृथक् चैषां त्रिंशत्कं हि प्रचक्षते ॥

(१) पञ्चकमिति । विजिगीषुः शत्रुमित्रे पार्ष्णिग्राहाक्रन्दौ चेत्यर्थः । त्रिंशत्कमिति । पञ्च राजप्रकृतयः पञ्चविंशतिर्द्रव्यप्रकृतयः । जम.

(२) त्रिंशत्काभिधं मण्डलमभिधातुमाह– अरिमित्रे इति । नेतुः विजिगीषोः पुरः अग्रतः अरिमित्रे भूम्यनन्तरभूम्येकान्तरौ द्वौ पश्चिमे ते च पश्चिमौ च तथैव भूम्यनन्तरभूम्येकान्तरसंज्ञौ द्वौ विजिगीषुणा सह पञ्चकं भवति । तेषां पृथगमात्याद्याः षट् (? पञ्च) भवन्ति । एवं गुणिते त्रिंशत्संख्या संपद्यते । उनिसा.

[3]अरेरप्येवमेवेति दृष्टं दृष्टिमतां वरैः ।
पञ्चकं मण्डलं न्याय्यं त्रितयं च मनीषिभिः ॥

(१) अरेरप्येवमेवेत्यतिदेशः । सोऽपि विजिगीषुवन्मण्डलं चिन्तयतीति तस्याप्ययं यथोक्तभेदो द्रष्टव्यः ।

---

(१) कानी. ८।३२.
(२) कानी. ८।३३.
(३) कानी. ८।३४ ; उनिसा. संमिताः (संमितम्).

(१) कानी. ८।३५–३६.
(२) कानी. ८।३७ ; उनिसा. पूर्वार्धे (अरिमित्रे पुरो नेतुः पश्चिमे चेति पञ्चकम् ।) चैषां (तेषां).
(३) कानी. ८।३८ ; उनिसा. न्याय्यं त्रितयं (योज्यं त्रिंशत्कं).

एषां कतमन्न्याय्यमिति परमतेनाऽऽह– पञ्चकमित्यादि । आक्रन्देन पार्ष्णिग्राहं निवर्त्य शुद्धपृष्ठस्य मित्रेण चोत्पादितकोपं शत्रुं पश्चादभियुञ्जानस्य विजिगीषोः कार्यसंसिद्धिः इति पञ्चकं न्याय्यम् । त्रितयं चेति । अरिमभियुञ्जानस्य मध्यमेनैव एकेन शत्रुसिद्धिरिति तत् न्याय्यम् । जम.

(२) यथा विजिगीषोस्तथा शत्रोरनन्तरोक्तन्यायेन पञ्चकं त्रिशल्कं चेति योज्यमित्याह– अरेरप्येवमेवेति । स्पष्टम् । उनिसा.

[1]द्वे एव प्रकृती न्याय्ये इत्युवाच पराशरः ।
अभियोक्तृप्र( ? क्ता प्र )धानत्वात्तथाऽन्यो योऽभियुज्यते ॥

(१) द्वे एव प्रकृती इति अरिविजिगीषू । तत्र अभियोक्तृत्वात् विजिगीषुः प्रधानम्, इतरश्च अप्रधानम्, अभियोज्यत्वात् । शेषाश्च स्वस्वमण्डलान्तर्गतत्वादभियोक्त्रभियोज्ययोरेवानुप्रविष्टाः । जम.

(२) पराशरसंमते द्वे प्रकृती न्याय्ये इत्याह– द्वे एवेति । न्याय्ये न्यायोपपन्ने । अभियोक्ता प्रधानः । विजिगीषुः अभियोक्ता । तथाऽन्यो योऽभियुज्यते । स्पष्टम् । उनिसा.

[2]परस्पराभियोगेन विजिगीषोररेस्तथा ।
अरित्वविजिगीषुत्वे एका प्रकृतिरित्यतः ॥

(१) यथा विजिगीषुरभियुङ्क्ते तथा शत्रुरपि प्रत्यभियुङ्क्ते इति परस्पराभियोगित्वम् । ततश्च तस्यामवस्थायां द्वयोरेकरूपत्वादेका प्रकृतिरिति पराशरः(?) एकसंख्यं मण्डलमिति यावत् । जम.

(२) एकायाः ( ? एकस्याः ) प्रकृतेरिष्टत्वमाह– परस्परेति । परस्पराभियोगेन । यथा विजिगीषुणाऽरिः एवमरिणाऽपि विजिगीषुरभियुज्यते । एवमेव विजिगीषुरभियोक्ता तथाऽरिरपि । य एवारिः स एव विजिगीषुः इत्यतः कारणात् एकैव प्रकृतिरित्येकप्रकृतिकमिदं मण्डलमित्यन्ये । उनिसा.

इतिप्रकारं बहुधा मण्डलं परिचक्षते ।
सर्वलोकप्रतीतं हि स्फुटं द्वादशराजकम् ॥

(१) इतिप्रकारमिति एवंभेदम् । इदानीं सर्वमण्डलसंग्राहि मण्डलमाह– स्फुटं द्वादशराजकमिति । स्फुटं युज्यमानकम् । कस्मादिति चेत् सर्वलोकप्रतीतत्वात् । तथाहि– तद्व्यतिरेकेणान्यस्य सर्वस्याप्यप्रसिद्धत्वात् इहैव संग्रहः । यथा–येऽपि मय( ? महर्षि )प्रोक्ते षट्त्रिंशत्के मण्डलेऽभ्यधिकाः 'अरिमित्रे पृथक्पृथक्' ( कानी. ८।२३ ) इति, गुरुप्रोक्ते चाष्टादशके 'संयुक्तस्त्वरिमित्राभ्यामुभयारिस्तथा सुहृत्' ( कानी. ८।२६ ) इति, तथा विशालाक्षभाषिते चतुष्पञ्चाशत्के 'मित्रशत्रू पृथक्पृथक्' ( कानी. ८।२८ ) इति, तेऽप्यर्यादीनामेव समन्ततो मण्डलीभूय तथाऽवस्थितत्वादिति द्वादशराजकादप्यनतिभिन्नाः, अमात्यादयोऽपि द्रव्यप्रकृतित्वात् तदवयवभूता इति द्वादशराजकमेव सर्वथा प्रतिपद्यते । तथा चौशनसम्– 'अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वये स्थितम् । षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिवित् ॥' इति । तत्र मित्रादिभिश्चतुर्भिः पार्ष्णिग्राहादिभिश्चतुर्भिश्चाष्टशाखम् । अरिविजिगीषुमध्यमोदासीनैश्चतुर्मूलम् । द्रव्यप्रकृतिभिर्मूलशाखाश्रिताभिः षष्टिपत्रम् । दैवे मानुषे च कर्मणि स्थितम् । षट् गुणाः पुष्पाण्यस्येति षट्पुष्पम् । क्षयस्थानवृद्धयस्तिस्रः फलान्यस्येति त्रिफलम् । यो जानाति स नीतिवित्, एतावन्मात्रत्वान्नयशरीरस्येति । जम.

(२) उपसंहरन्नाह– इतीति । परिचक्षते, पूर्वाचार्या इत्यर्थः । कामन्दकिना आत्मनो बहुश्रमित्वख्यापनार्थमयं ग्रन्थविस्तरदोषोऽपि न गणित इति । उत्तरार्धं सुगमम् । उनिसा.

*अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वये स्थितम् ।
षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिवित् ॥

(१) कानी. ८।३९ ; उनिसा. क्तृप्रधानत्वा ( क्ता प्रधानः स्या ).

(२) कानी. ८।४०–४५.

* यद्यपि त्रिवेन्द्रम्–मुद्रिते समूले जयमङ्गलापुस्तके अयं श्लोकः कामन्दकीयत्वेन स्वीकृतः, तथाऽपि नास्य कामन्दकीयत्वं जयमङ्गलासंमतम्, औशनसत्वोक्तिविरोधात् । किंतु तस्यां

एतदेव समर्थयन्मण्डलं वृक्षत्वेन रूपयति– अष्टशाख-मिति। चतुर्मूलं विजिगीष्वरिमध्यमोदासीनरूपाणि चत्वारि (राजमण्डल ? )मूलानि यस्य स तम्। अष्टशाखं उक्तानां चतुर्णां मूलानां प्रत्येकमरिमित्रे इत्यष्टौ राजानोऽष्टौ शाखा यस्य स तम्। षष्टिपत्रं विजिगीष्वादिद्वादशनृपाणां प्रत्येकममात्याद्याः पञ्च पञ्च प्रकृतय इति 'द्वादशानाम्' (कानी. ८।२४) इत्यनन्तरोक्तश्लोकोक्ता याः षष्टिसंख्याः प्रकृतयः ता एव पत्राणि यस्य स तम्। द्वये स्थितं दैवं पुरुषकारं चेति द्वयं आधारभूतं तस्मिन् स्थितम्। षट्पुष्पं संधिविग्रहासनयानसंश्रयद्वैधीभावाः षट् गुणाः सन्ति, ते पुष्पाणि यस्य स तम्। त्रिफलं उक्तषाड्गुण्यस्य फलभूता उत्तमा मध्यमा अवराः क्षयस्थानवृद्ध्यादयो ये लाभास्तान्येव फलानि यस्य स तम्। एवं मूलमण्डलवृक्षं यो जानाति स नीतिवित्। उनिसा.

पार्ष्णिग्राहादीनां शत्रुत्वमित्रत्वविवेकः

**पार्ष्णिग्राहस्तदासारः शत्रुमित्रे प्रकीर्तिते।**
**आक्रन्दोऽथ तदासारो विजिगीषोरुदाहृते॥**

(१) तस्मिन्मण्डले तद्विशुद्ध्यर्थं कथं वर्तेतेति षाड्गुण्यव्यापाररूपं मण्डलचरितमुच्यते। तत्र पार्ष्णिग्राहादीनां शत्रुमित्रतायां प्राक् विशेषस्यानुक्तत्वात् यदा-( ? तमा )ह– पार्ष्णिग्राह इत्यादि। शत्रुमित्रे इति शत्रोर्मित्रे इत्यर्थः। विजिगीषोरुदाहृते। मित्रे इत्येव। जम.

(२) मण्डले षाड्गुण्यप्रयोगमभिधातुमाह– पार्ष्णिग्राह इति। विजिगीषोः यातव्यं प्रति गच्छतः पार्ष्णिग्राहः पार्ष्णिग्रहणेन विघ्नविधायी पृष्ठतो भूम्यनन्तरः, तदासारः पार्ष्णिग्राहस्यैव भूम्येकान्तरः, एतौ द्वावपि शत्रुमित्रे प्रकीर्तिते एते शत्रोर्यातव्यस्य मित्रे भवतः। आक्रन्दः पार्ष्णिग्राहस्य भूम्यनन्तरः, विजिगीषुणा पार्ष्णिग्राहविग्रहणार्थमाक्रन्द्यते आहूयते इति। तदासारः आक्रन्दस्य भूम्येकान्तरः, आपदि परित्राणार्थमासरतीति। द्वावेतावपि विजिगीषोः यातव्यं प्रति ( गच्छतः ) उदाहृते। मित्रे ( भवतः ? ) इत्यनुवर्तते। उनिसा.

शत्रुमण्डले षाड्गुण्यप्रयोगस्वरूपम्

**पुरो यायाद्विगृह्यैव मित्राभ्यां पश्चिमावरी॥**
**पश्चिमाविव पूर्वाभ्यामरिं तन्मित्रमेव च॥**

(१) तत्र द्वादशराजके शत्रुमण्डलमधिकृत्य वृत्तिमेकादशभिः श्लोकैराह– पुरो यायादित्यादि। विगृह्यैवेति अन्तर्भावितण्यर्थत्वात् विग्राह्यैवेत्यर्थः। मित्राभ्यां पश्चिमावरी इति। पार्ष्णिग्राहमाक्रन्देन आक्रन्दासारेण पार्ष्णिग्राहासारमिति यावत्। पश्चिमाविव पूर्वाभ्यां मित्राभ्यां पूर्वावरी विगृह्येति संबन्धः। कौ तावित्याह– अरिं तन्मित्रमेव चेति। मित्रेण शत्रुं मित्रमित्रेण चारिमित्रमित्यर्थः। जम.

(२) अपरं च– पुरो यायादिति। पुरः अग्रतः यायात् यातव्यं प्रति, विगृह्यैव विग्रहं कारयित्वा मित्राभ्यां आक्रन्दतदासाराभ्यां पश्चिमौ पृष्ठस्थौ अरी पार्ष्णिग्राहमित्रे। पश्चिमाविव पृष्ठस्थावरीव पूर्वाभ्यां मित्र–मित्रमित्राभ्यां अरिं यातव्यं अरिमित्रमपि, यातव्यं प्रति यायादित्यर्थः। उनिसा.

**अरिमित्रस्य मित्रं तु कृतकृत्येन भूयसा।**
**संस्तभ्योभयमित्रेण पश्चाद्गच्छेन्नरेश्वरः॥**

(१) अरिमित्रमित्रं उभयमित्रेण संस्तभ्येति संबन्धः। तस्य विशेषणं कृतकृत्येन भूयसेति। अन्यथा हि असमापितस्वकार्यस्य स्वल्पतन्त्रस्य वा कथमुभयतो व्यापारः स्यात्? उभयमित्रेणेति विजिगीषोर्मित्रस्य चोभयोर्मित्रत्वात्। मित्रमित्रेणेत्यर्थः। यस्तूभयसुहृत् प्रागुक्तः सोऽरिविजिगीष्वपेक्षया। पश्चात् गच्छेत्। यातव्यमित्यर्थात्सिद्धम्। जम.

(२) किंच– अरिमित्रस्येति। अरिमित्रस्य यातव्यमित्रस्य मित्रं यत् तस्य पुरोवर्ति तच्च कृतकृत्येन साधितमहोपकारेण भूयसा उपचितशक्तिना संस्तभ्य निरुद्धचेष्टं कृत्वा गन्तव्यमित्रमित्रं स्तम्भितं कृत्वा उभयमित्रेण उदासीनेन। विशेषेण किमित्यसौ स्तम्भयति इति चेत्

---

'इतिप्रकारं बहुधा' इत्यादिपूर्वश्लोकव्याख्यानप्रसङ्गात् प्रमाणवचनत्वेन उपन्यस्तो व्याख्यातश्च। अत एवास्माभिरस्य जमव्याख्यानं पूर्वश्लोके एव संगृहीतम्। उनिसा. तु जयमङ्गलामप्रमाणीकृत्य कामन्दकीयत्वमस्याभिमन्यते।

विजिगीषुणा कृतकृत्यः कृत इत्येवं कृत्वा । पश्चाद्वच्छे-च्छेश्वरः । नात्येति ( ? ) इत्यर्थः । उनिसा.

[1]आक्रन्देनाऽऽत्मना चैव पार्ष्णिग्राहं प्रपीडयेत् ।
आक्रन्देन तदासारमाक्रन्दासारभागिना ॥

( १ ) एवं तावदेकपार्श्वतो विधिरुक्तः । इदानी-मुभयत्राप्याह– आक्रन्देनेत्यादि । आत्मनेति विजिगीषु-माह । आक्रन्देन तदासारमिति पार्ष्णिग्राहासारम् । आक्रन्दासारभागिनेति आक्रन्दविशेषणम् । आक्रन्दासार-सहितेनेति यावत् । जम.

( २ ) एतदेव समर्थयन्नाह– आक्रन्देनेति । आक्रन्देन अनन्तरोक्तेन आत्मना च पार्ष्णिग्राहं मध्यस्थं प्रपीडयेत् । आक्रन्दासारभाजिना आक्रन्देन तदासारं पार्ष्णिग्राहासारम् । प्रपीडयेदित्यनुवर्तते । उनिसा.

[2]मित्रेण चाऽऽत्मना चैव कुर्वीतोद्धरणं रिपोः ।
मित्रेण हि समित्रेण रिपुमित्रं प्रपीडयेत् ॥

( १ ) समित्रेणेति । मित्रेण मित्रमित्रेण चेत्यर्थः । जम.

( २ ) पुरस्ताद्विधेयमभिधातुमाह– मित्रेणेति । मित्रेण पुरस्तादवस्थितेन आत्मना स्वेन एव च रिपोः यातव्यस्य उद्धरणं उच्छेदनं कुर्वीत । मित्रेण सस्वमित्रेण स्वीयमित्रेण सह वर्तमानेन अरियातव्येन रिपुमित्रं यातव्यमित्रं प्रपीडयेत् । उनिसा.

[3]अरिमित्रस्य मित्रस्य पीडनं पृथिवीपतिः ।
कुर्वीतोभयमित्रेण मित्रमित्रेण चैव हि ॥

( १ ) अरिमित्रस्य मित्रस्येति । अरिमित्रमित्रस्येति यावत् । उभयमित्रेणेत्यस्य स्फुटीकरणार्थमाह– मित्र-मित्रेण चैव हीति । जम.

( २ ) अपरं च– अरिमित्रस्येति । अरिमित्रस्य मित्रस्य यातव्यमित्रमित्रस्य प्रपीडनं पृथिवीपतिः कुर्वीत उभयमित्रेण पूर्वोक्तेन मित्रमित्रेण विजिगीषुमित्र-मित्रेण च । प्रतीतमत्रशिष्टम् । उनिसा.

(१) कानी. ८।४६ ; उनिसा. गिना ( जिना ).
(२) कानी. ८।४७ ; उनिसा. हि समित्रेण (सस्वामित्रेण).
(३) कानी. ८।४८.

[1]अनेन क्रमयोगेन विजिगीषुः सदोत्थितः ।
पीडयेदहितं शत्रुं मित्राणामन्तराऽन्तरा ॥

( १ ) उत्थितः उद्युक्तः । अहितं प्रातिकूल्येन अव-स्थितम् । अन्तराऽन्तरा मित्रयोर्मध्ये मध्ये । जम.

( २ ) किंच– अनेनेति । अनेन अनन्तरोक्तेन क्रमयोगेन सदोत्थितः सर्वदोद्यमशाली अहितं सर्वदा-ऽपकारिणं शत्रुं भूम्यनन्तरं मित्राणामन्तरन्तरां मित्रभूम्य-नन्तरं शत्रुमित्रमित्यर्थः, पीडयेत् । उनिसा.

[2]पीड्यमानो ह्युभयतः सदोद्युक्तैर्मनीषिभिः ।
रिपुरुच्छेदमायाति तद्वशे वाऽवतिष्ठते ॥

( १ ) एवं सति किं भवतीत्याह– पीड्यमान इत्यादि । मनीषिभिः, मित्रैरिति शेषः । जम.

( २ ) रिपुपीडने फलमाह– पीड्यमान इति । उभयतः संदंशन्यायेन एकतो विजिगीषुणा अन्यतो विजिगीषुमित्रैः क्रमोत्क्रमं व्यवस्थितैः मनीषिभिः प्राज्ञैः पीड्यमानः रिपुः उच्छेदमायाति उच्छिन्नो भवति तद्वशे विजिगीषुवशे वा अवतिष्ठते । उनिसा.

[3]सर्वोपायेन कुर्वीत सामान्यं मित्रमात्मसात् ।
भवन्ति मित्रादुच्छिन्नाः सुखोच्छेद्या हि विद्विषः ॥

( १ ) एवं तावदसाधारणमित्रापेक्षया क्रम उक्तः । इदानीं साधारणमित्रापेक्षया क्रममाह– सर्वोपायेनेति । शत्रौ विजिगीषौ च वर्तमानं सामान्यं मित्रं बहुभि-रुपायैरात्मसात्कृत्य ( ? स्कृत्वा ) अनेन शत्रुं पीडयेत् । यदाह– मित्रादुच्छिन्ना इति । स्वीकृतान्मित्रात् वियोजिता हि सूच्छेदा भवन्ति, मित्रापेक्षाभावात् । जम.

( २ ) स्वपरोभयमित्रस्याऽऽत्मसात्करणार्थमाह– सर्वो-पायैरिति । सर्वोपायैः सामोपदानादिभिः सामान्यं शत्रोरात्मनः साधारणं मित्रं उक्तलक्षणं आत्मसात् आत्मन एवासाधारणं कुर्वीत । हि यस्मात् सुखोच्छेद्याः

( १ ) कानी. ८।४९ ; उनिसा. राऽन्तरा ( रन्तराम् ).
( २ ) कानी. ८।५०.
( ३ ) कानी. ८।५१ ; उनिसा. पायेन (पायैः [च]).

निःसहायत्वादित्यर्थः, शत्रवः मित्रात् उच्छिन्नाः विश्लेषिताः भवन्तीति । उनिसा.

[1]कारणेनैव जायन्ते मित्राणि रिपवस्तथा ।
रिपवो येन जायेरन् कारणं तत्परित्यजेत् ॥

(१) ननु च यो यस्य मित्रं स तस्मात् (कस्मात्) वियुज्यते इति चेत्, शत्रुमित्रव्यवहारस्य अनिसर्गसिद्धत्वात् । यदाह– कारणेनैवेत्यादि । जम.

(२) अरेरपि मित्रतापादनार्थमभिधातुमाह– कारणैश्चैवेति । कारणैः हेतुभिः उपकाराख्यैरपकाराख्यैश्च मित्राणि तथा शत्रवः जायन्ते । शेषार्धं स्पष्टम् । उनिसा.

[2]प्राधान्येन हि सर्वत्र सर्वाः संवर्जयेत्प्रजाः ।
तासां संवर्जनाद्राजा सर्वाङ्गीं श्रियमश्नुते ॥

(१) शत्रोर्मित्रस्य च मण्डले सर्वाः प्रजाः संवर्जनं महान्तं मध्यममवरं च अनुग्रहादिभिः स्वराष्ट्रे संश्लेषं नयेत् । तासां संवर्जनादिति । स्वराष्ट्रे प्रजानां निवेशनात् । सर्वाङ्गीम्, कोशदण्डाभ्युपेतत्वात् । उक्तं च– 'कोशो दण्डः कुप्यं विष्टिर्वाहनं निचयाश्च जनपदादुत्तिष्ठन्ते' (कौ. ८।१) इति । जम.

(२) विजिगीषुर्न केवलं मुख्यानेव जगति मित्रत्वेन स्थापयेत्, क्षुद्रकानपीति दर्शयन्नाह– प्राधान्येनेति । प्राधान्येन मुख्यतया सर्वत्र पत्तनग्रामादिषु दशसु स्वीयजनपदे यथायोगं परकीयजनपदेऽपि सर्वाश्च प्रजाः समस्ताः वर्णाश्रमादिलक्षणाः संसर्जयेत् सामादिभिः आनुरूप्येण अनुरञ्जयेत् । 'अनुरागे हि सार्वगुण्यम्' (कौ. ७।५) इति वचनात् तासां संसर्जनात् सर्वप्रजाजनानुरञ्जनात् राजा विजिगीषुः सर्वाङ्गीं सर्वावयवसंपन्नां श्रियं विभूतिं अश्नुते भुनक्ति । उनिसा.

[3]दूरेचरान् माण्डलिकांस्तथाऽन्यान्दुर्गवासिनः ।
मित्रीकुर्वीत तत्प्राणाः साधयन्तीह मण्डलम् ॥

(१) दूरेचरानिति विजिगीषुमण्डलाद्बहिर्वर्तमानान् । माण्डलिकान् स्वमण्डलाधिपतीन् राज्ञः । दुर्गवासिनः अनुच्छेद्यान् । तत्प्राणाः तत्कृतावष्टम्भाः विजिगीषवः । इह मण्डलमिति विजिगीषुभूमावर्यादिमण्डलं व्युत्तिष्ठमानं नियमयति । जम.

(२) विजिगीषोर्मण्डलसाधनं समर्थयन्नाह– दूरेचरानिति । दूरेचरान् अतिव्यवहितान् मण्डलिनः अनन्तरोक्तद्वादशराजकादीन् तथा अन्यान् बहिर्भूतांश्च दुर्गवासिनः आटविकान् तथा अरिमित्रादीनपि मित्रीकुर्वीत । यतः तत्प्राणाः मित्रप्राणाः इह जगति मण्डलं अनन्तरोक्तं साधयन्ति । उनिसा.

मध्यमोदासीनौ प्रति वृत्तिः

[1]चलेच्चेदूर्जितबलो मध्यमो विजिगीषया ।
एकीभूयारिणा तिष्ठेदशक्तः संधिना नमेत् ॥

(१) मध्यमोदासीनावधिकृत्य वृत्तिमाह– चलेदित्यादिना श्लोकत्रयेण । ऊर्जितबलः उद्यतसैन्यः । संभूय अरिणा तिष्ठेत्, विजिगीषुरित्यर्थात्, अरिविजिगीष्वोः संहतयोर्निग्रहे मध्यमस्यासमर्थत्वात् । अशक्तः संधिना नमेत्, यदा न शत्रुणा संहता(? तः, अ)संहतयोर्निग्रहे मध्यमस्या(? स्य)शक्तत्वात् । जम.

(२) सर्वधर्ममभिधातुमाह– चलेदिति । ऊर्जितबलः शक्तित्रयसंपन्नः मध्यमः अनन्तरोक्तः विजिगीषया चलेत् अभियायात्, विजिगीषुः तदा तदानीं एकीभूय मिलित्वा अरिणा यातव्येन सह कृतसंधिः तिष्ठेत् । अशक्तश्चेत् संधिना हेतुभूतेन नमेत् कोशादिभिरुपनमेत् । उनिसा.

[2]उदासीने विचलति सर्वे मण्डलिनः सह ।
संघधर्मेण तिष्ठेयुः संनमेयुरशक्तयः ॥

(१) उदासीने विचलति सतीति योज्यम् । सर्वे मण्डलिनः अरिविजिगीषुमध्यमाः । संघधर्मेण एकी-

---

(१) कानी. ८।५२; उनिसा. णेनैव (णेश्चैव).
(२) कानी. ८।५३; उनिसा. वर्ज (सर्ज).
(३) कानी. ८।५४; उनिसा. माण्डलिकांस्त (मण्डलिनस्त).

(१) कानी. ८।५५; उनिसा. च्चेदू (त्तदो).
(२) कानी. ८।५६; उनिसा. प्रथमचरणे (विजिगीषरबुदासीने) संघ (सर्वे) संन (प्रण).

भावेन, तेषां हि संहतानां निग्रहे उदासीनस्यासमर्थत्वात् । संनमेयुरशक्तयः यदा परस्परविश्लिष्टाः । जम.

( २ ) उदासीने विजिगीषति मण्डलिनां सर्वधर्मेणावस्थानमाह– विजिगीषत्युदासीन इति । उदासीने विजिगीषया विजिगीषति सति सर्वे मण्डलिनः विजिगीष्वरिमध्यमाः सह मिलित्वा सर्वधर्मेण वक्ष्यमाणलक्षणेन सह तिष्ठेयुः । अशक्तयः प्रणमेयुः आत्मरक्षार्थम् । उनिसा.

[1]समुत्पन्नेषु कृच्छ्रेषु संभूय स्वार्थसिद्धये ।
आपत्प्रतरणं सम्यक् संघधर्म इति स्थितिः ॥

( १ ) संघधर्मस्वरूपमाह—समुत्पन्नेष्वित्यादि । कृच्छ्रेषु बलवत्तराभियोगादिषु । प्रतरणं निर्वहणम् । जम.

( २ ) उक्तक्रमेण संधि( ? सर्व )धर्मं व्याख्यातुमाह—समुत्पन्नेष्विति । कृच्छ्रेषु महाव्यसनेषु समुत्पन्नेषु संभूय एकीभावमुपेत्य स्वार्थसिद्धये आपत्प्रतरणं सम्यक् कुर्वन्ति । यत्तदिति वाक्यशेषः । सर्वधर्म इति स्मृतः तत् सर्ववृत्तमिति स्मृतम् । उनिसा.

शत्रौ चतुर्विधा वृत्तिः तत्रापवादाश्च

[2]सहजः कार्यजश्चैव द्विविधः शत्रुरिष्यते ।
सहजः स्वकुलोत्पन्न इतरः कार्यजः स्मृतः ॥

( १ ) पुनः शत्रुमण्डलमधिकृत्य वैशेषिकीं वृत्तिं त्रयोदशभिः श्लोकैराह— सहज इत्यादि । तृतीयस्तु शत्रुः प्रकृत्यमित्रः । स च भूम्यनन्तरत्वात्प्रागुक्तः । स्वकुलोत्पन्नः एकामिषत्वात् रावणस्येव विभीषणो दूरस्थस्तद्देशस्थो वा सहजः शत्रुः । इतर इति । न भूम्यनन्तरः स्वकुल्यो वा, किंत्वपराधकारणात् यो रामस्येव रावणः स कार्यजः कृत्रिम इत्यर्थः । जम.

( २ ) अरिप्रकारकथनपूर्वकं तत्र विजिगीषोर्वृत्तमभिधातुमाह– सहज इति । सहजः स्वकुलोत्पन्नो दायादादिः, कार्यजः एकार्थाभिनिवेशित्वात् कार्ये जायते इति द्विविधः शत्रुरुच्यते । उनिसा.

[1]उच्छेदनं चापचयः पीडनं कर्शनं तथा ।
इति विद्याविदः प्राहुः शत्रौ वृत्तं चतुर्विधम् ॥

( १ ) उच्छेदनं स्थानप्रच्य( ? च्या )वनम् । अपचयः योग्यपुरुषादीनां क्षयः । जम.

( २ ) शत्रौ विजिगीषुवृत्तस्य चातुर्विध्यमभिधातुमाह– उच्छेदापचयाविति । उच्छेदः स्वभूमेः परित्य( ? त्या )जनम्, अपचयः शक्तिभिर्वियोजनम्, पीडनकर्शने वक्ष्यमाणलक्षणे, काले अनुकूलसमये इति एतत् विद्याविदः दण्डनीतिज्ञाः शत्रौ विषयभूते वृत्तं शीलं चतुर्विधं चतुःप्रकारं विजिगीषोरित्यर्थः, प्राहुः । उनिसा.

*[2]उच्छेदनं तु विज्ञेयं सर्वप्रकृतिनाशनम् ।
नाशो योग्यनरादीनां बुधैरपचयः स्मृतः ॥
रेचनं कोशदण्डाभ्यां महामात्रवधस्तथा ।
एतत्कर्शनमित्याहुराचार्याः पीडनं परम् ॥

( १ ) पीडनकर्शनयोर्लक्षणमाह– रेचनमित्यादि । महामात्रवधः प्रधाननायकव्यापादनम् । पीडनं परमिति । कर्शनात् परं पीडनं मूलवर्जदेशविलोपनम् । जम.

( २ ) कर्शनपीडनयोः स्वरूपमभिधातुमाह– रेचनमिति । रेचनं कोशदण्डाभ्यां कोशदण्डतनूकरणम् । महामात्रः प्रधानः । परं कर्शनादधिकं महामात्रवधादिकम् । स्पष्टमन्यत् । उनिसा.

[3]समाश्रयविहीनो वा दुर्बलं वा समाश्रितः ।
शक्योऽरिसंपदा युक्त उच्छेत्तुं भूम्यनन्तरः ॥

---

( १ ) कानी. ८।५७ ; उनिसा. संघ ( सर्व ) स्थितिः ( स्मृतः ).

( २ ) कानी. ८।५८.

* श्लोकोऽयं जम. उनिसा. इत्युभाभ्यामपि अव्याख्यातत्वात्प्रक्षिप्त इति निर्णीयते । यत्तु पूर्वश्लोकीयोच्छेदनापचयपदयोर्जमव्याख्यानस्यैतच्छ्लोकीयतत्पदयोरिति मत्वा आदर्शपुस्तकेऽस्मिन् श्लोके संग्रहणं तदपि स्फुटमेवानुपपन्नम् । तत्पदयोर्व्याख्यानं मूलकारेण न कृतमिति पूर्वश्लोकीयायाः उनिसाटीकातः स्पष्टं प्रतीयते ।

( १ ) कानी. ८।५९ ; उनिसा. उच्छेदनं चापचयः ( उच्छेदापचयौ काले ).

( २ ) कानी. ८।६०–६१.

( ३ ) कानी. ८।६२ ; उनिसा. ऽरि ( ऽरिः ).

(१) एतच्चतुर्विधं कदाऽनुष्ठातव्यमित्याह– समाश्रयविहीन इत्यादि। भूम्यनन्तरः शत्रुः यदा अनपाश्रयो (दुर्बलाश्रयो) वा शक्यो वा समुच्छेत्तुं अरिसंपद्युक्तत्वात् तदा उच्छेदनीयः। जम.

(२) उच्छेद्यलक्षणमभिधातुमाह– समाश्रयविहीन इति। समाश्रयविहीनः दुर्गमित्रबलरहितः। भूम्यनन्तरः विजिगीषुभूम्यनन्तर इति अरेर्विशेषणम्। यैः धर्मैः अरिः सुखोच्छेद्यो भवति तानाह– 'लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः। मूढो योधावमन्ता च सुखोच्छेद्यो रिपुः स्मृतः॥' (कानी. ८।१५) इति। एवंभूतया अरिसंपदा युक्तो रिपुः सदा सुखोच्छेद्यो भवति। उनिसा.

**[1]कर्शनं पीडनं काले कुर्वीताऽऽश्रयमानिनः।**
**समाश्रयं दुर्गमाहुर्मित्रं वा साधुसंमतम्॥**

(१) आश्रयमानिन इति। सापाश्रयस्य पीडनं बलवदपाश्रयस्य वा कर्शनमिति पूर्वोक्तविपर्ययेणाऽऽश्रयमानिनो योजनीयम्। यः अरिसंपद्युक्तविपर्ययो(? द्विपर्यययुक्तो) विजिगीषुगुणान्वितः तस्य अशक्यत्वात् अपचयं कुर्यादित्यर्थादापन्नम्। कः पुनः समाश्रय इत्याह– समाश्रयमिति। साधुसंमतम्, तद्धि समाश्रयणीयं भवति। जम.

(२) कर्शनपीडनयोर्विषयमभिधातुमाह– कर्शनमिति। कर्शनं तनूकरणं पीडनं कर्शनादप्यधिकदुःखोत्पादनं महामात्रवधादिकं काले सर्वथाऽनुकूले कुर्वीत, विजिगीषुरित्यर्थः। आश्रयमानिनः समाश्रयाभिमानिनः। उत्तरार्धं स्पष्टम्। उनिसा.

**विभीषणस्य सोदर्यस्तथा सूर्यसुतस्य च।**
**सर्वतन्त्रापहारित्वात्तथोच्छेद्यो निजो रिपुः॥**

(१) यथा भूम्यनन्तरः प्रकृत्यमित्र उच्छेद्यस्तथा सहजोऽपीत्याह– विभीषणस्येत्यादि। सोदर्यः भ्राता रावणो विभीषणस्य, वाली सूर्यसुतस्य। तौ हि सर्वं राज्यमपहृत्य लङ्काकिष्किन्धानिवासिनौ स्थितौ आभ्यां रामसमाश्रयादुच्छिन्नावित्यतिप्रतीतमेतत्। जम.

(२) पूर्वोक्तः सहजो रिपुः सर्वथा उच्छेद्य इत्येवं दर्शयन्नाह– विभीषणस्येति। सूर्यसुतस्य सुग्रीवस्य। विभीषणसुग्रीवयोः सोदर्यौ रावणवाली सहजौ रिपू। सर्वतन्त्रापहारित्वात् मन्त्रराजादिकं सर्वतन्त्रम्, तदपहरणशीलत्वात् हेतोः निजो रिपुरुच्छेद्य एव। उनिसा.

**छिद्रं मर्म च वीर्यं च स जानाति निजो रिपुः।**
**दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः॥**

(१) अनुच्छिन्नश्चेच्छिद्रादिकं प्राप्य हन्तीत्याह– छिद्रमित्यादि। छिद्रं रक्षाशैथिल्यम्। मर्म दुश्चेष्टितं यत् विनाशकरम्। वीर्यं सारम्। अन्तर्गतः प्रत्यासन्नः। दहति हन्ति। कार्यजोऽपि यदि महापराधी स्यात् रामस्येव रावणः, सोऽप्युच्छेद्य इति बोद्धव्यम्, अन्यथा कर्शनीयः पीडनीयो वेति। जम.

(२) सोदर्यः कथमुच्छेद्यो भवतीति दर्शयन्नाह– छिद्रमिति। छिद्रं रक्षाशैथिल्यादि। मर्म यत्राभियुक्तमात्रो म्रियते। वीर्यं बलवत्ताम्। निजो रिपुः सोदर्यादिः। असौ अन्तर्गतः अन्तःस्थितः दहति। अत उच्छेद्य एव। स्पष्टमन्यत्। उनिसा.

**[1]बलिना विगृहीतस्य जिगीषुः कृच्छ्रवर्तिनः।**
**कुर्वीतोपचयं शत्रोरात्मोच्छित्तिविशङ्कया॥**

(१) उच्छेदापवादमाह– बलिनेत्यादि। विगृहीतस्य शत्रोरिति संबन्धः। कृच्छ्रवर्तिनः सर्वतो निःष्पन्दीकृतस्य। उपचयं अनुबलाधानम्। आत्मोच्छित्तिविशङ्कया। तमुच्छिद्य आत्मानमप्युच्छिन्द्यात् बलवत्त्वादिति। जम.

(२) कार्यवशादरेरप्युपचयो विधेय इति दर्शयन्नाह– बलिनेति। बलिना बलवता द्विषता शत्रुणा विगृहीतस्य विग्रहकारिणः कृच्छ्रवर्तिनः संकटापन्नस्य शत्रोः उपचयं कुर्वीत। आत्मोच्छित्तिविशङ्कया। भूम्यनन्तरात् (? नन्तरे) अरौ उच्छिन्ने बली भूम्यनन्तरो भवति। बलवत्त्वात् विजिगीषुमप्युच्छिन्द्यादिति शङ्कया भूम्य-

---

(१) कानी. ८।६३–६५.

(१) कानी. ८।६६; उनिसा. जिगीषुः (द्विषता).

नन्तररूपे अरावपि उपचयः कार्य एवेति । उनिसा.

[1]यस्मिन्नुच्छिद्यमाने तु रिपुरन्यः प्रवर्तते ।
न तस्योच्छित्तिमातिष्ठेत्कुर्वीतैनं स्वगोचरम् ॥

( १ ) यस्मिन्नुच्छिद्यमाने विजिगीषुणा । रिपुरन्यः प्रवर्तते तदानीं भूम्यनन्तरात् परतो राज्ञः । स्वगोचरं आत्माधीनम् । जम.

( २ ) एतदेव समर्थयन्नाह– यस्मिन्निति । यस्मिन् भूम्यनन्तररूपेऽरौ । एनं स्वशत्रुं स्वगोचरं कुर्वीत भृत्यभावे स्थापयेत् । स्पष्टमवशिष्टम् । उनिसा.

[2]वशं गतो रिपुर्यश्च विचलेद्दुरुपग्रहः ।
तस्य संयमनायाऽऽशु तत्कुलीनं समुन्नयेत् ॥

( १ ) यद्यात्मीयः कृतोऽपि दुरुपग्रहात् विकुरुते तदा विधिमाह– वशं गत इत्यादि । संयमनाय नियमनाय । तत्कुलीनं समुन्नयेत् उपगृह्योत्थापयेदित्यर्थः । जम.

( २ ) अपरं च– वंशागत इति । वंशागतः स्वकुलप्रभवः यो रिपुः विचलेत् एकार्थाभिनिवेशित्वात् व्यभिचरति, यतः स दुरवग्रहः कथमप्यात्मसात्कर्तुं न याति, तस्य संशमनाय तद्दमनार्थं तत्कुलीनं तद्दायादं आशु समुन्नयेत् सत्वरमुत्थापयेत् अयमेवैतत्प्रतीकार इति । उनिसा.

[3]विषं विषेण व्यथते वज्रं वज्रेण भिद्यते ।
गजेन्द्रो दृष्टसारेण गजेन्द्रेणैव वध्यते ॥

( १ ) तदेव दृष्टान्तेन स्फुटयन्नाह– विषमित्यादि । सारः सामर्थ्यम् । जम.

( २ ) किंच– विषमिति । विषं विषेण स्थावरविषेण व्यथते निर्वीर्यं क्रियते, नान्येन । वज्रं वज्रेण भिद्यते । दृष्टसारेण परिचितबलेन पोषितेनेत्यर्थः । शेषः सुगमः । उनिसा.

( १ ) कानी. ८।६७.

( २ ) कानी. ८।६८; उनिसा. वशं गतो ( वंशागतो ) संयम ( संशम ).

( ३ ) कानी. ८।६९–७१.

मत्स्यो मत्स्यमुपादत्ते ज्ञातिर्ज्ञातिमसंशयम् ।
रावणोच्छित्तये रामो विभीषणमपूजयत् ॥

( १ ) विभीषणमपूजयदिति । रावणेन खलीकृत्य निर्वासितं विभीषणं समुद्रस्योत्तरे तीरे रामो लङ्काराज्येऽभिषिक्तवानिति प्रसिद्धमेतत् । जम.

( २ ) अपरं च– मत्स्य इति । विभीषणसूचितमर्मप्रहारैः रावणः उच्छिन्नः इति भावः । अवशिष्टं प्रतीतमिति । उनिसा.

यस्मिन्मण्डलसंक्षोभः कृते भवति कर्मणि ।
न तत्कुर्वीत मेधावी प्रकृतीरनुरञ्जयेत् ॥

( १ ) संक्षेपेणापवादमाह– यस्मिन्नित्यादि । उच्छेदादिकर्मणामन्यतमे क्वचित्क्वचित् कृते सति । प्रकृतीरनुरञ्जयेत् । अन्यथा तत्क्षोभकरं कर्म अनुतिष्ठन् कथममात्यादिप्रकृतिष्वनुरागं जनयेत् ? जम.

( २ ) द्वादशमण्डलाराधनायाऽऽह– यस्मिन्निति । यस्मिन् कर्मणि कृते मण्डलसंक्षोभः मण्डलस्य द्वादशराजकरूपस्य संक्षोभः अमर्षादक्षमा भवति मेधावी विजिगीषुः तन्न कुर्यात् । प्रकृतीः एकादशापि राजप्रकृतीः तदीयाश्च अमात्यादिकाः प्रकृतीः अनुरञ्जयेत् । एवं कृते सकलमण्डलेष्टो भवति । उनिसा.

उपायचतुष्टयप्रयोगविवेकः

[1]साम्ना दानेन मानेन प्रकृतीरनुरञ्जयेत् ।
आत्मीया भेददण्डाभ्यां परकीयास्तु भेदयेत् ॥

( १ ) स्वपरप्रकृतीरधिकृत्य श्लोकद्वयेन वृत्तिमाह– साम्नेत्यादि । मानेन पूजया । प्रकृतीरात्मीया इति संबन्धः । मित्रतन्मित्रप्रकृतीरित्यर्थः । परकीयाः शत्रुतन्मित्रप्रकृतीः । जम.

( २ ) स्वपरविभागेन प्रकृतिषु उपायप्रयोगमाह– साम्नेति । आत्मीयाः मित्रादिकाः प्रकृतीः साम्ना संधिना दानेन मानेन यथोचितपूजया अनुरञ्जयेत् । परकीयास्तु शत्रुतन्मित्रादिकाः प्रकृतीः भेददण्डाभ्यां दारयेत् हन्यात् । उनिसा.

( १ ) कानी. ८।७२; उनिसा. भेदयेत् ( दारयेत् ).

[1]आकीर्णं मण्डलं सर्वं मित्रैररिभिरेव च ।
सर्वः स्वार्थपरो लोकः कुतो मध्यस्थता क्वचित् ॥

(१) कस्मात्पुनरेवं द्विधा समाचरेत् इति चेत् अरिमित्रैर्मण्डलस्य व्याप्तत्वात् । यदाह– आकीर्णमित्यादि । मण्डलं द्वादशराजकम् । सर्वः स्वार्थपरो लोकः । यो मण्डले समवेतः योऽपि परस्य अरिणा विगृहीतस्य अनुबलाधानेनार्थं साधयति सोऽपि मा भून्ममाप्युच्छेद इति स्वार्थपर एव प्रवर्तते । स्वार्थं च परस्मात् सिषाधयिषुः मैत्र्या वैरेण वा साधयेत्, उपायान्तराभावात् । तस्मात्परतः स्वार्थसाधनाय मण्डले समवेतस्य अनियतोऽरिमित्रभाव इति कुतो मध्यस्थता ? मध्यमोदासीनावपि राजानावरिमित्रविशेषत्वात् तदन्य-(१ दन)तिभिन्नावेव । यत्तूच्यते– 'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥' (भामु. १२।१११।६०–६१) इति । तत्र विजिगीषोरवस्थामाश्रित्य यो नापकरोत्युपकरोति वा स उदासीनः । स यदा परस्मादर्थं (म)समीहमानः स्वभूमावेव स्वकीयकर्मानुष्ठानपर आस्ते तदा निरीहत्वान्नैव मण्डलेऽन्तर्भाव्यते । यदा कार्यसंभववशात् तस्यापि स्वार्थसाधनाय सामादयः प्रयुज्यन्ते तदाऽस्य साध्यमानस्यारिमित्रभावयोरन्यतररूपेणावस्थानात् कुतो माध्यस्थ्यमिति द्वाभ्यामेव मण्डलं व्याप्तम् । जम.

(२) मित्रादीनामप्यात्मीयत्वं कादाचित्कमित्येतद्दर्शयन्नाह– आकीर्णमिति । मण्डलं चक्रवर्तिक्षेत्रं सर्वं निरवशेषं आकीर्णं व्याप्तं मित्रैः अरिभिः एव च भूम्यनन्तरभूम्येकान्तरतया । तत्र मण्डले सर्वः निरवशेषः लोकः स्वार्थपर एव । तथा चोक्तम्– 'स नास्ति पुरुषो लोके यः श्रियं नाभिवाञ्छति । अशक्तिभग्नमानास्तु नरेन्द्रं पर्युपासते ॥' इति । एवं च कस्यचिदपि मित्रत्वं न विद्यते, एकार्थाभिनिवेशित्वादरित्वमेव संभाव्यमिति सर्वोऽपि लोकः स्वार्थपर एव । कुतो मध्यस्थता क्वचित् । क्वचिदपि कस्मात् माध्यस्थ्यं भवतीत्यर्थः । उनिसा.

(१) कानी. ८।७३.

[1]भोगप्राप्तं विकुर्वाणं मित्रमप्यवपीडयेत् ।
अत्यन्तविकृतं हन्यात्स पापीयान् रिपुर्मतः ॥

(१) इदानीं मित्रमण्डलमधिकृत्य साध्ये चतुर्दशभिः श्लोकैर्वृत्तिमाह– भोगप्राप्तमित्यादि । अतिवृद्धिप्राप्तत्वादुत्तिष्ठमानं अवपीडयेत् नियमयेदित्यर्थः । अत्यन्तविकृतं हन्यात् । अत्युपचरितस्य हि अरिलक्षणं प्राप्तस्योच्छेदेऽपि नाधर्मः, पापीयस्त्वात् । जम.

(२) एतदेव समर्थयन्नाह– भोगप्राप्तमिति । भोगप्राप्तं भोगहेतुककोषसंबद्धं विकुर्वाणं विकारं गच्छत् मित्रमपि उपपीडयेत् । अत्यन्तं विकृतं चेत् हन्यात् । पापीयान् निकृष्टतरः । स्पष्टमन्यत् । उनिसा.

[2]वर्तेते पक्षपातेन मित्रं चेदुभयात्मकम् ।
वज्रीव हि त्रिशिरसं तदुच्छिन्द्यात्कृतत्वरः ॥

(१) उभयात्मकमिति । शत्रोर्विजिगीषोश्च यन्मित्रं तच्चेच्छत्रावेव पक्षपातेन वर्तते उच्छिन्द्यात् । वज्रीव त्रिशिरसमिति । त्वष्टुः प्रजापतेरपत्यमसुरो ब्राह्मणस्त्रिशिरा नाम । सोऽत्यन्तमुग्रतपा देवासुरयोरुभयोरपि मैत्र्यां वर्तमानोऽपि असुरेषु पक्षपातेन प्रवृत्त इत्युपलभ्य शक्रेण 'असुरास्तावद्दुर्जया एव, अनेन च अपरेणोग्रतपसा कृतावष्टम्भाः सुतरां दुर्जयाः' इति जातशङ्केन सहसैव वज्रेण आहतोऽसौ मूर्च्छितः पपात । ततो यज्ञभागस्ते देय इति शक्रप्रलोभितस्तक्षा समुच्छूनसत एवास्य शिरांसि चिच्छेद । जम.

(२) न केवलं शत्रुविशेष एवोच्छेद्यः, मित्रविशेषस्योच्छेद्यताऽभीष्टेति दर्शयन्नाह– वर्तेत इति । यत् मित्रं उभयात्मकं अर्थादरिविजिगीष्वोर्मध्यवर्ति भूत्वा अरिपक्षपातेन वर्तते विश्वस्ते विजिगीषौ अपकरोमीति कृताध्यवसायं भवति तदुच्छिन्द्यात् वज्रीव त्रिशिरसं इन्द्र इव त्रिशिरोनामकदेवविशेषं कृतत्वरः

(१) कानी. ८।७४; उनिसा. प्यव (प्युप) अत्यन्त (अत्यन्तं).

(२) कानी. ८।७५; उनिसा. चेदुभ (यदुभ) अयं श्लोकः 'छिद्रं मर्म च वीर्यं च' (कानी. ८।६५) इत्यादिश्लोकादूर्ध्वं पठितः.

अकृतविलम्बः। त्रिशिरा नाम देवविशेषो दानवारिः इन्द्रस्यामित्रम् (?), स दानवाधिपत्ये सुतरां स्निग्ध इति वज्रिणा निहत इति पौराणिकी कथा। उनिसा.

[1]अमित्रानपि कुर्वीत मित्राण्युपचयावहान्।
अहिते वर्तमानानि मित्राण्यपि परित्यजेत्॥

(१) उपचयावहान् अरीनपि मित्रीकुर्वीत, मित्रलक्षणप्राप्तत्वात्। अहिते वर्तमानानि त्यजेत्, शत्रुलक्षणप्राप्तत्वात्। जम.

(२) हिताहितवर्तमानयोरेव मित्रामित्रस्वरूपत्वमित्याह– अमित्राण्यपीति। उपचयावहान् हितकारिणो जनान् अमित्राण्यपि पूर्वे मित्राणि कुर्वीत। शेषार्धं सुगमम्। उनिसा.

[2]स बन्धुर्योऽनुबध्नाति हितेष्वत्याहितादरः।
अनुरक्तं विरक्तं च तन्मित्रमुपकारि यत्॥

(१) तदेव स्फुटयन्नाह– स बन्धुरित्यादि। बन्धुमप्यहिते वर्तमानममित्रवत् त्यजेदिति दर्शनार्थं प्रासङ्गिकं तद्वचनम्। अनुरक्तं विरक्तं चेति। मित्रव्यवहारे अनुरागविरागौ नाऽऽद्रियेते, किंतूपकार इत्यर्थः। उक्तं च– 'यावदुपकरोति तावन्मित्रं भवति। उपकारलक्षणं हि मित्रम्, न मित्रं मित्रभावादुत्क्रान्तम्।' (कौ. ७।९) इति। जम.

(२) एतदेव समर्थयन्नाह– बन्धुरपीति। बन्धुरपि सोदर्योऽपि अहिते युक्तः अहितकारी स शत्रुः। तं परिवर्जयेत्। स्पष्टं शेषार्धम्। उनिसा.

[3]मित्रं विचार्य बहुशो ज्ञातदोषं परित्यजेत्।
त्यजन्नभूतदोषं हि धर्मार्थावुपहन्ति सः॥

(१) मित्रत्यागोऽपि नाविचार्येत्याह– मित्रमिति। धर्मार्थावुपहन्ति स इति। अदुष्टदूषणाद्धर्मं हन्ति, तत्परित्यागाच्चार्थम्। जम.

(२) मित्रं दोषवदिति सूचितं तदेवात्र समर्थयति– मित्रमिति। बहुशः वारंवारं ज्ञातदोषं सुविदितापराधं विचार्य निचाय्य परित्यजेत्, नान्यथा। हि यतः अभूतदोषं अकृतापराधं त्यजन् सः विजिगीषुः धर्मार्थौ उपहन्ति। मित्रसाध्यश्चार्थः। तत्त्यागे स उपहन्यते एव। उनिसा.

स्वयं दोषगुणान्वेषी भवेत्सर्वत्र सर्वदा।
स्वयं ज्ञातेषु दोषेषु शस्यं स्याद्दण्डपातनम्॥

(१) भूतमपि दोषमन्यतः श्रुत्वा स्वयमेव निरूपयेदित्याह– स्वयमित्यादि। सर्वत्र भृत्यमित्रबन्धुषु। दण्डपातनं वधपरिक्लेशादि। जम.

(२) विजिगीषोः स्वयमेव दोषगुणान्वेषित्वमाह– स्वयमिति। सुगमम्। उनिसा.

न ह्यविज्ञाय तत्त्वेन दोषं कुप्येत्कथंचन।
भुजङ्गमिव मन्यन्ते निर्दोषक्रोधिनं जनाः॥

(१) आस्तामज्ञातदोषेषु दण्डपातनम्, आत्मनः कोपमपि न दर्शयेदित्याह– न हीत्यादि। जम.

(२) व्यतिरेकमुखेनैतत् समर्थयति– न हीति। स्पष्टम्। उनिसा.

[1]मित्राणामन्तरं विद्यात्समज्यायःकनीयसाम्।
मध्यज्यायःकनीयांसि कार्याणि च पृथक्पृथक्॥

(१) अन्तरं विद्यात् मध्यमोत्तमहीनकर्मसु नियोगार्थम्। जम.

(२) मित्राणामन्तरं कर्मभेदेन ज्यायोमध्यमकनीयसां स्वरूपमाह– मित्राणामिति। कर्माणि उपकरणानि। ज्यायः कर्म उपकारलक्षणं यत्करोति तत् ज्यायो मित्रम्। मध्यमं उपकारलक्षणं यत् करोति तत् मध्यमं मित्रम्। कनीयः कर्म उपकारलक्षणं यत् करोति तत् कनीयो मित्रमित्यर्थः। श्लोकार्थः सुगमः। उनिसा.

[2]न हि मिथ्याऽभियुञ्जीत शृणुयाच्चापि तद्विधम्।
मित्रभेदं च ये कुर्युस्तान्समस्तान् परित्यजेत्॥

---

(१) कानी. ८।७६; उनिसा. त्रानपि (त्राण्यपि).

(२) कानी. ८।७७; उनिसा. पूर्वार्धे (बन्धुरप्यहिते युक्तः शत्रुस्तं परिवर्जयेत्।).

(३) कानी. ८।७८–८०.

(१) कानी. ८।८१; उनिसा. कार्याणि (कर्माणि).

(२) कानी. ८।८२.

( १ ) न हि मिथ्याऽभियुञ्जीत मम त्वयाऽपचरितमिति । तद्विषमिति मिथ्या इदं तु मित्रेण तवापचरितमिति । समस्तान् परित्यजेत् । अन्यथा हि मित्राद्वियोजितस्तैरेवोच्छिद्येत । जम.

( २ ) मिथ्याभियोगकरणश्रवणे निषेधति– न हि मिथ्येति । स्पष्टम् । उनिसा.

[1]प्रायोगिकं मात्सरिकं माध्यस्थं पाक्षपातिकम् ।
सोपन्यासं च जानीयाद्वचः सानुशयं तथा ॥

( १ ) तेषां मित्राणां वचः वाक्यतात्पर्यं लक्षयेत्, यदाह– प्रायोगिकमित्यादि । तत्र परप्रयुक्तस्य प्रायोगिकम् । संपदसहिष्णोर्मात्सरिकम् । उभयपक्षावनाश्रितस्य माध्यस्थम् । एकपक्षमाश्रितस्य पाक्षपातिकम् । अर्थलिप्सोः सोपन्यासम् । प्रत्ययचिकीर्षोश्च सानुशयमिति । जम.

( २ ) विजिगीषुणा मित्रारिविषये परप्रयुक्तानि वचनानि परीक्षणीयानि इति दर्शयन्नाह– प्रायोगिकमिति । प्रायोगिकं मेदाद्युपायरूपप्रयोगभवम् । यथा मुद्राराक्षसे चाणक्यचन्द्रगुप्तयोः कृतकृत्ययोर्भेदं कर्तुं राक्षसप्रयुक्तो वैतालिकः पठति– ' भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः । परैरपरिभूतो यैर्मन्यते त्वमिव प्रभुः ॥ ' (मुद्राराक्षसम् ३ ) इत्यादि । मात्सरिकं मत्सरभवम् । यथा तत्रैव नेपथ्ये चाणक्योक्तिः– 'आः, क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ' (मुद्राराक्षसम् १) इति । माध्यस्थ्यं इच्छाद्वेषराहित्यम् । यथा तत्रैव चाणक्यः चरवचनमाकर्ण्य– ' नूनं सुहृत्तमः । न ह्यनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति ' ( मुद्राराक्षसम् १ ) इति । पाक्षपातिकं पक्षपातेन युक्तम् । यथा तत्रैव चरेण समर्पितां राक्षसनामाङ्कितामङ्गुरीयकमुद्रामङ्गुल्यां निवेश्य चाणक्येन मनस्येवोक्तम्– ' ननु राक्षस एवास्मदङ्गुलिप्रणयी संवृत्तः ' ( मुद्राराक्षसम् १ ) इति । सोपन्यासं यस्मिन् वचसि स्थितस्य आर्यस्य उप समीपे न्यासः उपन्यासः तेन सह वर्तमानः सोपन्यासः । यथा तत्रैव चाणक्येन– ' भोः श्रेष्ठिन् , स्वागतम् । इदमासनमास्यताम् ' इत्युक्ते चन्दनदासः प्रणम्य– ' किं ण जाणादि अज्जो, जहा अनुचिदो उअआरो सहिअअस्स परिहवादोवि महन्तं दुःखमुप्पादेदि, ता इहज्जेव अहं उचिदाए भूमीए उववसामि' इति । चाणक्यः– 'भोः श्रेष्ठिन् , मा मैवं उचितमेतदस्मद्विधैः सह भवतः, तदुपविश्यतामासन एव ' । चन्दनदासः– ' ( स्वगतम् ) उवलक्खिदमणेण किंपि '(मुद्राराक्षसम् १) इति । एवंविध उपक्षेप उपन्यास उच्यते । सानुशयं अनुशयः पश्चात्तापः तेन सह वर्तमानः तम् । यथा तत्रैव राक्षसः– ' ( शस्त्रमाकृष्य ससंभ्रमम् ) मयि स्थिते कः कुसुमपुरमवरोत्स्यति ? प्रवीरक प्रवीरक, क्षिप्रमिदानीं– प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम् । मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः ॥ ' । विराधः– 'अमात्य, अलमावेगेन, वृत्तमिदं वर्ण्यते ' । राक्षसः– ' ( सलज्जम् ) कथं वृत्तमिदम् ? मया पुनर्ज्ञातं स एव कालो वर्तते ' ( मुद्राराक्षसम् २ ) इति । एतत्सर्वं सानुशयं वचः जानीयात् । उनिसा.

[2]प्रकाशपक्षग्रहणं न कुर्यात्सुहृदां स्वयम् ।
अन्योन्यमत्सरं चैषां स्वयमेवाऽऽशु वारयेत् ॥

( १ ) प्रकाशपक्षग्रहणं न कुर्यात्, अन्यथा हि इतरस्य ईर्ष्यया वैमुख्यं स्यात् । अप्रकाशं तु कार्यवशात् कुर्यादेवेत्यर्थोक्तम् । अन्योन्यमत्सरं परस्परसंपदसहिष्णुतां वारयेत् मा भूदेषामन्योन्यक्षय इति । जम.

( २ ) विजिगीषोर्मित्रविषये वृत्तमभिधातुमाह– प्रकाशेति । स्वयं विजिगीषुः सुहृदां मित्राणां प्रकाशपक्षग्रहणं स्पष्टतः एकपक्षपातं न कुर्यात् । परंतु एषां मित्राणां अन्योन्यमत्सरं अहमेव विजिगीषोर्मत इति परस्परमत्सरं आशु शीघ्रं धा( ? वा )रयेत् । स्पष्टम् । उनिसा.

[3]कार्यस्य हि गरीयस्त्वान्नीचानामपि कालवित् ।
सतोऽपि दोषान्प्रच्छाद्य गुणानप्यसतो वदेत् ॥

( १ ) कानी. ८।८३ ; उनिसा. ध्यस्तं ( ध्यस्थं ).

( १ ) कानी. ८।८४ ; उनिसा. वार ( धार ).
( २ ) कानी. ८।८५.

( १ ) नीचानां निकृष्टानाम् । सतः विद्यमानानपि । असतः अविद्यमानानपि । जम.

( २ ) मित्रविशेषे वृत्तमभिधातुमाह– कार्यस्येति । कार्यस्य पृथिवीपालनादेः गरीयस्त्वात् गुरुतरत्वात् नीचानां मित्रविशेषाणामपि कालवित् मित्रसाध्यकार्यकालज्ञः सतोऽपि विद्यमानानपि दोषान् प्रच्छाद्य संगोप्य असतः अविद्यमानान् गुणान् वदेत् । उनिसा.

[1]प्रायो मित्राणि कुर्वीत सर्वावस्थानि भूपतिः ।
बहुमित्रो हि शक्नोति वशे स्थापयितुं रिपून् ॥

( १ ) ननु चासत्यमुक्त्वा किमर्थं नीचान् मित्रीकुर्यादित्याह– प्राय इत्यादि । सर्वावस्थानि मध्यमोत्कृष्टनिकृष्टानि । जम.

( २ ) बहुमित्रप्रशंसामभिधातुमाह– प्राय इति । प्रायः बाहुल्येन मित्राणि सर्वावस्थानि उत्तमाधममध्यमानि म्लेच्छाटविकपुलिन्दयतिप्रभृतीनि भूपतिः विजिगीषुः कुर्वीत । हि यतः बहुमित्रः मित्रबाहुल्यवान् रिपून् शत्रून् वशे स्थापयितुं वशीकर्तुं शक्नोति समर्थो भवति, नान्यथेत्यर्थः । उनिसा.

[2]न तत्र तिष्ठति भ्राता न तथाऽन्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥

( १ ) सन्मित्रं मित्रलक्षणप्राप्तम् । जम.

( २ ) मित्रप्रशंसामाह– न तत्रेति । स्पष्टम् । उनिसा.

[3]अमित्रान् सर्वतो मित्रैर्निगृह्णीयाद् दृढव्रतैः ।
इति मण्डलवृत्तं तन्मण्डलज्ञाः प्रचक्षते ॥

( १ ) अमित्रान् मित्रैर्निगृह्णीयादिति मित्रोपग्रहफलं दर्शयति । सर्वतः समन्ततः । दृढव्रतैः स्थिरप्रकृतिभिः । इति मण्डलवृत्तमित्युपसंहारः । तत् यथोक्तं विजिगीषोर्मण्डलचरितम् । जम.

( २ ) मण्डलवृत्तमभिधातुमाह– अमित्राणीति । अमित्राणि( ? त्रान् ) अव्रतः पालयितॄन् दृढव्रतैः अचलैः मित्रैः न गृह्णीयात् । शेषः सुगमः । उनिसा.

[1]मित्रोदासीनरिपव एतन्मात्रं तु मण्डलम् ।
सम्यक् साधनमेतेषामिति मण्डलशोधनम् ॥

( १ ) तच्च मण्डलं संक्षेपेणाऽऽह– मित्रोदासीनरिपव इति । उदासीनस्योपादानं विजिगीषावस्थामाश्रित्य, यथोक्तं प्राक् । सम्यक् साधनं यथोक्तं चरितम्, तदेव मण्डलस्य शोधनम् । जम.

( २ ) मण्डलं तच्छोधनं चाभिधातुमाह– मित्रेति । स्पष्टम् । उनिसा.

इति स्म राजा नयवर्त्मना व्रजन्
समुद्यमी मण्डलशुद्धिमाचरेत् ।
विराजते साधु विशुद्धमण्डलः
शरच्छशीव प्रतिरञ्जयन् प्रजाः ॥

( १ ) प्रकरणार्थानुष्ठानफलमाह– इतीत्यादिना । एवमुक्तेन तथा अन्येन च नयमार्गेण मण्डले चरन् राजा विजिगीषावस्थावस्थितः । समुद्यमीति उत्साहः प्रधानमिति दर्शयति । मण्डलशुद्धिमाचरेत् यथा तत्र कुप्येत् कुपितं वा शाम्येत् । प्रतिरञ्जयन् प्रजा इति मण्डलशुद्धिफलमेतत् । जम.

( २ ) विशुद्धमण्डलस्य राज्ञः प्रजाह्लादकत्वं साधुराजत्वमुपसंहरन्नाह– इतीति । सुप्रतीतम् । उनिसा.

## शुक्रनीतिः

मित्रशत्रुविवेकः

[2]अथ मिश्रप्रकरणं प्रवक्ष्यामि समासतः ।
लक्षणं सुहृदादीनां समासाच्छृणुताधुना ॥

अथ अनन्तरं मिश्राणां विविधविषयाणां प्रकरणं समासतः संक्षेपात् प्रवक्ष्यामि । तत्र सुहृदादीनां लक्षणं समासतः संक्षेपात् अधुना सांप्रतं प्रथममित्यर्थः, शृणुत । शुनीटी.

( १ ) कानी. ८।८६ ; नीम. ४९ स्थानि ( स्थासु ).
( २ ) कानी. ८।८७ ; नीम. ४९ तथा ( पिता ).
( ३ ) कानी. ८।८८ ; नीम. ४९ पू. ; उनिसा. पूर्वार्धे ( अमित्राण्यव्रतो मित्रैर्न गृह्णीयाद्दृढव्रतैः । ).

( १ ) कानी. ८।८९–९०.
( २ ) शुनी. ४।१।१–२३,३१.

मित्रः शत्रुश्चतुर्धा स्यादुपकारापकारयोः ।
कर्ता कारयिता चानुमन्ता यश्च सहायकः ॥

उपकारापकारयोः सतोः क्रमेण मित्रः शत्रुश्च स्यात् । स च प्रत्येकं चतुर्धा चतुर्विधः– कर्ता कारयिता अनुमन्ता तथा यश्च सहायकः साहाय्यकारी सः । तथा च– कर्ता मित्रः कारयिता मित्रः अनुमन्ता मित्रः सहायमित्रः, कर्ता शत्रुः कारयिता शत्रुः अनुमन्ता शत्रुः सहायः शत्रुः । मित्रशब्दश्चात्र पुंलिङ्ग आर्षः । शुनीटी.

यस्य सुद्रवते चित्तं परदुःखेन सर्वदा ।
इष्टार्थे यततेऽन्यस्याप्रेरितः सत्करोति यः ॥
आत्मस्त्रीधनगुह्यानां शरणं समये सुहृत् ।
प्रोक्तोत्तमोऽयमन्यश्च त्रिद्व्येकपदमित्रकः ॥

यस्य चित्तं परदुःखेन सर्वदा सुद्रवते गलति, यः अन्यस्य इष्टार्थे अभिप्रेतार्थसाधने यतते, तथा अप्रेरितः अकथितः सन्नपि सत्करोति उपकरोति, किंतु यः समये यथासमये आत्मनः स्त्रियाः धनानां गुह्यानां अन्येषां गुप्तविषयाणां शरणं रक्षिता सः अयं उत्तमः सुहृत् प्रोक्तः कथितः । 'प्रोक्तोत्तमः' इति संधिरार्षः । अन्यश्च त्रिद्व्येकपदमित्रकः अस्ति । तथाहि– यस्य चित्तं परदुःखेन गलति, यश्च अन्यस्य इष्टार्थे यतते, तथा अप्रेरितोऽपि सत्करोति, स त्रिपदमित्रकः । यस्य चित्तं परदुःखेन गलति, यश्च अन्यस्य इष्टार्थे यतते, सः द्विपदमित्रकः । यस्य चित्तं परदुःखेन गलति स एकपदमित्रकः इति भावः । शुनीटी.

अनन्यस्वत्वकामत्वमेकस्मिन् विषये द्वयोः ।
वैरिलक्षणमेतद्वाऽन्येषुनाशनकारिता ॥

द्वयोरेकस्मिन् विषये वस्तुनि अनन्यस्वत्वकामत्वं निजस्वामित्वमात्रकामना, वा अथवा अन्येषां इष्टानां नाशनकारिता विनाशकत्वमित्यर्थः, एतत् उभयं वैरिलक्षणं शत्रुताप्रयोजकमित्यर्थः । शुनीटी.

भ्रातृभावे पितृद्रव्यमखिलं मम वै भवेत् ।
न स्यादेतस्य वश्येऽयं ममैव स्यात्परस्परम् ॥
भोक्ष्येऽखिलमहं चैतद्विनाऽन्यं स्तः सुवैरिणौ ।
द्वेष्टि द्विष्ट उभौ शत्रू त्वेकतरसंज्ञकौ ॥

उभयप्रकारं दृष्टान्तेन दर्शयति– भ्रातृभाव(?) इति । भ्रातुः अभावे विद्यमानतायामपीत्यर्थः, अखिलं समग्रं पितृद्रव्यं मम वै ममैव । वैशब्दोऽवधारणे । भवेत्, एतस्य भ्रातुः न स्यात् । अयं च भ्राता ममैव वश्यः स्यात् । अहं अन्यं विना अखिलं समग्रं एतत् वस्तु मोक्ष्ये । इत्येवं परस्परं यौ मन्त्रयत इति शेषः । तौ सुवैरिणौ परमशत्रू स्तः भवतः । यश्च द्वेष्टि द्वेषं करोति यश्च द्विष्टः द्वेषविषयीभूतः तौ एकतरसंज्ञकौ एकतरनामानौ शत्रू स्तः भवतः । शुनीटी.

शूरस्योत्थानशीलस्य बलनीतिमतः सदा ।
सर्वे मित्रा गूढवैरा नृपाः कालप्रतीक्षकाः ॥
भवन्तीति किमाश्चर्यं राज्यलुब्धा न ते हि किम् ।
न राज्ञो विद्यते मित्रं राजा मित्रं न कस्य वै ॥

शूरस्य विक्रमशालिनः सदा उत्थानशीलस्य उद्योगिनः तथा बलनीतिमतः बलशालिनो नीतिपरायणस्य च जनस्य सर्वे गूढवैराः गुप्तशात्रवाः कालप्रतीक्षकाः समयापेक्षिणः नृपाः मित्राः मित्रभूताः भवन्ति इत्यत्र आश्चर्यं किम्? ते हि नृपाः किं राज्यलुब्धा न? अपि तु राज्यलुब्धा एव केवलं कालं प्रतीक्षन्त इति भावः । कोऽपि जनः राज्ञः मित्रं न विद्यते । राजाऽपि कस्यापि मित्रं न वै नैवेत्यर्थः । शुनीटी.

प्रायः कृत्रिममित्रे ते भवतश्च परस्परम् ।
केचित्स्वभावतो मित्राः शत्रवः सन्ति सर्वदा ॥

प्रायः बाहुल्येन तौ (?) प्रजाराजानौ परस्परं कृत्रिममित्रे कार्यजबन्धू भवतः । किंच, केचित् स्वभावतः मित्राः सर्वदा कदाचिदित्यर्थः, शत्रवः सन्ति भवन्ति । शुनीटी.

माता मातृकुलं चैव पिता तत्पितरौ तथा ।
पितृपितृव्यात्मकन्या पत्नी तत्कुलमेव हि ॥
पितृमात्रात्मभगिनीकन्यकासंततिश्च या ।
प्रजापालो गुरुश्चैव मित्राणि सहजानि हि ॥

माता, मातृकुलं मातामहादिः, पिता, तथा तस्य पितुः पितरौ मातापितरौ पितामहः पितामही चेत्यर्थः, पितुः पितृव्यः, आत्मकन्या, पत्नी, तस्याः कुलं

श्वशुरादिः, पितृभगिनी, मातृभगिनी, आत्मभगिनी, तासां कन्यकाश्च, या च संततिः पुत्र इत्यर्थः, प्रजापालः भूपतिः, तथा गुरुः, एतानि सहजानि मित्राणि। हिशब्दोऽवधारणार्थः। शुनीटी.

विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चमम्।
मित्राणि सहजान्याहुर्वर्तयन्ति हि तैर्बुधाः॥

विद्या शौर्यं दाक्ष्यं नैपुण्यं बलं तथा पञ्चमं धैर्यं एतानि सहजानि मित्राणि आहुः कथयन्ति, बुधाः इति शेषः। बुधाः पण्डिताः तैः विद्यादिभिः वर्तयन्ति जीवन्ति। शुनीटी.

पित्रोर्निदेशवर्ती यः स पुत्रोऽन्वर्थनामवान्।
श्रेष्ठ एकस्तु गुणवान् किं शतैरपि निर्गुणैः॥

यः पुत्रः पित्रोः मातापित्रोः निदेशवर्ती आज्ञावर्ती स पुत्रः अन्वर्थनामवान् यथार्थनामा इत्यर्थः। एकः गुणवान् पुत्रः श्रेष्ठः, निर्गुणैः शतैरपि किम्? न किमपि प्रयोजनमित्यर्थः। शुनीटी.

स्वभावतो भवन्त्येते हिंस्रो दुर्वृत्त एव च।
ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी॥

एते पूर्वोक्ता मात्रादयः स्वभावतः मित्राणि अपि कदाचित् शत्रवः भवन्तीत्यन्वयः। तथाहि— हिंस्रः दुर्वृत्तः तथा ऋणकारी पिता व्यभिचारिणी माता स्त्री च शत्रुः। शुनीटी.

आत्मपितृभ्रातरश्च तत्स्त्रीपुत्राश्च शत्रवः।
स्नुषा श्वश्रूः सपत्नी च ननान्दा यातरस्तथा॥

आत्मनः पितुश्च भ्रातरः सोदराः पितृव्याश्च इत्यर्थः, तेषां स्त्रियः पुत्राश्च, तथा स्नुषा पुत्रवधूः, श्वश्रूः श्वशुरपत्नी, सपत्नी, ननान्दा, यातरः देवरपत्न्यश्च, कदाचित् विरुद्धाचाराः शत्रवः, भवन्तीति शेषः। शुनीटी.

मूर्खः पुत्रः कुवैद्यश्चारक्षकस्तु पतिः प्रभुः।
चण्डश्चण्डा प्रजा शत्रुरदाता धनिकश्च यः॥

मूर्खः पुत्रः, कुवैद्यः कुचिकित्सकः, अरक्षकः पतिः, चण्डः कोपनः प्रभुः स्वामी, चण्डा प्रजा च, तथा यः धनिकः धनवान् अथ च अदाता कृपणः स शत्रुः। शुनीटी.

दुष्टानां नृपतिः शत्रुः कुलटानां पतिव्रता।
साधुः खलानां शत्रुः स्यान्मूर्खाणां बोधको रिपुः॥

नृपतिः दुष्टानां शत्रुः, पतिव्रता कुलटानां व्यभिचारिणीनां शत्रुः, साधुः खलानां दुर्जनानां शत्रुः, बोधकः उपदेशकः मूर्खाणां शत्रुः स्यात्। शुनीटी.

उपदेशो हि मूर्खाणां क्रोधायैव शमाय न।
पयःपानं भुजंगानां विषायैवामृताय न॥

मूर्खाणां उपदेशः क्रोधाय एव केवलं कोपवर्धनाय, न शमाय न शान्तये, भवतीति शेषः। भुजंगानां सर्पाणां पयःपानं दुग्धपानं विषाय विषवर्धनाय एव, न अमृताय न अमृतक्षरणाय इत्यर्थः। शुनीटी.

आ समन्ताच्चतुर्दिक्षु संनिकृष्टाश्च ये नृपाः।
तत्परास्तत्परा येऽन्ये क्रमाद्धीनबलारयः॥
शत्रूदासीनमित्राणि क्रमात्ते स्युस्तु प्राकृताः।
अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः॥
क्रमशो वा नृपा ज्ञेयाश्चतुर्दिक्षु तथाऽरयः।
स्वसमीपतरा भृत्या ह्यमात्याद्याश्च कर्षिताः॥

आ समन्तात् सर्वतः चतुर्दिक्षु ये नृपाः निकटवर्तिनः ये च तत्पराः तदनन्तरवर्तिनः तत्पराः पुनश्च तदनन्तरवर्तिनः अन्ये नृपाः ते क्रमात् हीनानि बलानि अरयः शत्रवश्च येषां तादृशा भवन्ति। ते तु क्रमात् प्राकृताः सहजाः (?) मित्राणि उदासीनाः मध्यस्थाः तथा शत्रवः स्युः। किंच, अरिः, मित्रम्, उदासीनः, अनन्तरः तत्परवर्ती, तत्परः तथाऽपरः अन्यः, एते चतुर्दिक्षु क्रमशः स्थिता नृपाः प्राकृताः मित्रशत्रवः ज्ञेयाः। तथा स्वस्य समीपतराः अतिसंनिकृष्टाः भृत्याः कर्षिताः क्लेशिताः अमात्याद्याश्च अरयः शत्रवः, ज्ञेयाः इति शेषः। शुनीटी.

बृंहयेत्कर्षयेन्मित्रं हीनाधिकबलं क्रमात्॥

हीनाधिकबलं हीनबलं अधिकबलं च मित्रं क्रमात् बृंहयेत् वर्धयेत् कर्षयेच्च कृशीकुर्यात्। शुनीटी.

**योन संयोजयेदिष्टमन्यानिष्टमुपेक्षते ।**
**उदासीनः स न कथं भवेच्छत्रुः सुसांधिकः ॥**

यः इष्टं न संयोजयेत् न कुर्यात् तथा अन्यकृतमनिष्टमुपेक्षते न पश्यति स उदासीनः । सः सुसांधिकः सुष्ठु संधिना साध्यः शत्रुः कथं न भवेत् ? अपि तु शत्रुरेव । शुनीटी.

## नीतिवाक्यामृतम्

उदासीनादयो राजमण्डलाधिष्ठातारः

**[1]उदासीनमध्यमविजीगीष्वरिमित्रपार्ष्णिग्राहाक्रन्दासारान्तर्धयो यथासंभवगुणविभवान्तरतम्यान्मण्डलानामधिष्ठातारः ॥**

अथ राजमण्डलस्याधिकारः प्रोच्यते— उदासीनेति । उदासीनस्तावत्प्रथमः, ततो मध्यमः, ततो विजिगीषुः, ततोऽरिः, ततो मित्रम्, ततः पार्ष्णिग्राहः, ( तत आक्रन्दः, ) तत आसारपते अन्तरतम एकान्तर( ? ) (अन्तर्धिश्च) इति राजमण्डलाधिष्ठिताधिपतयो विज्ञेयाः । यथासंभवं नैकैकः मण्डलमेतत् । यो यस्यान्तिमो वर्तते राजा तेन तस्य ये स्थिता राजानस्ते एताभिः संज्ञाभिः यथावस्थिता ज्ञेयाः ( ? ) इति । नीवाटी.

**अग्रतः पृष्ठतः कोणे वा संनिकृष्टं वा मण्डले स्थितो मध्यमादीनां विगृहीतानां निग्रहे संहतानामनुग्रहे समर्थोऽपि केनचित्कारणेनान्यस्मिन् भूपतौ विजिगीषमाणे य उदास्ते स उदासीनः ॥**

अथोदासीनलक्षणमाह— अग्रत इति । यो राजा कस्यापि राज्ञः स्वमण्डलस्थः सन् अग्रतः पृष्ठतः पार्श्वे कोणे वा स्थितः संनिकृष्टे समीपे स्थितः मध्यमादीनां विगृहीतानां केनापि भूभुजा विग्रहे सङ्ग्रामे संहतानां प्रवृत्तानां अनुग्रहे निवारणे समर्थोऽपि येन केन कारणेन कयाऽपि कार्यापेक्षया अन्यस्मिन् भूपतौ राज्ञि विजिगीषमाणे विजेतुमिच्छति यः उदास्ते उपेक्षते स उदासीनः कथ्यते । नीवाटी

**उदासीनवदनियतमण्डलोऽपरभूपापेक्षया समधिकबलोऽपि कुतश्चित्कारणादन्यस्मिन्नृपतौ विजिगीषमाणे यो मध्यस्थभावमवलम्बते स मध्यस्थः ॥**

अथ मध्यस्थस्य लक्षणमाह —उदासीनेति । यो राजा अनियतमण्डलो भवति अनियतानि अपर्यन्तानि मण्डलानि भवन्ति सः अपरभूपालपेक्षया 'यद्यहमेकस्य साहाय्यं करोमि तत् द्वितीयो मे वैरी भवति' इति स्वं चिन्तयन् स्वयं समधिकबलोऽपि उदासीनवत् य आस्ते स मध्यस्थ उच्यत इति । नीवाटी.

**राजाऽऽत्मदैवद्रव्यप्रकृतिसंपन्नो नयविक्रमयोरधिष्ठानं विजिगीषुः ॥**

अथ विजिगीषुलक्षणमाह— राजाऽऽत्मदैवद्रव्येति । आत्मशब्देन राज्याभिषेक उच्यते । दैवं प्राक्कर्म शुभम् । द्रव्यं भाण्डागारः । प्रकृतिः अमात्याद्या राजपुरुषाः । एतैश्चतुर्भिः पदार्थैर्यो युक्तः । तथा अधिष्ठानं वसतिः । कयोः ? नयविक्रमयोः नीतिशौर्ययोः । स विजिगीषुरुच्यते । नीवाटी.

**य एव स्वस्याहितानुष्ठानेन प्रातिकूल्यमियर्ति स एवारिः ॥**

अथारिलक्षणमाह— य एवेति । य एव स्वस्य आत्मीयस्य कस्यचित् अहितानुष्ठानेन अपराधक्रियया प्रातिकूल्यं दुष्टत्वं आचरति सदैव सोऽरिः कथ्यते । नीवाटी.

**मित्रलक्षणमुक्तमेव पुरस्तात् * ॥**

**यो विजिगीषौ प्रस्थितेऽपि प्रतिष्ठमाने वा पश्चात्कोपं जनयति स पार्ष्णिग्राहः ॥**

पार्ष्णिग्राहलक्षणमाह— यो विजिगीषाविति । कश्चिद्राजा विजिगीषौ विजययात्रायां प्रस्थिते अन्यस्य भूपस्योपरि प्रतिष्ठमानेऽथवा गन्तुकामेऽथवा पश्चात्कोपं जनयति तद्देशमर्दनं करोति स पार्ष्णिग्राह उच्यते । नीवाटी.

[1] नीवा. २९।२०–२५.

* 'यः संपदीव विपद्यपि मेद्यति तन्मित्रम्' ( २३।१ ) इति पुरस्तात् मित्रसमुद्देशे उक्तमित्यर्थः ।

**पार्ष्णिग्राहाद्यः पश्चिमः स आक्रन्दः ॥**

अथाऽऽक्रन्दस्य लक्षणमाह– पार्ष्णिग्राहाद्य इति । आक्रन्दयति विजिगीषोः समित्रत्वे । यतः सर्वेऽपि सीमान्तरिता मित्रस्थाने भवन्ति । नीवाटी.

**पार्ष्णिग्राहमित्रमासार आक्रन्दमित्रं च ॥**

अथ आसारलक्षणमाह– पार्ष्णिग्राहमित्रमिति । पार्ष्णिग्राहाद्यः सीमान्तरितः तस्य मित्रत्वे वर्तमानः स आसारः कथ्यते । आङ्शब्दो मर्यादावाचकः । सर्वेषां विजिगीषुपार्ष्णिग्राहाक्रन्दादीनां पर्यन्ते सरति वर्तते तेन आसारः । तं पार्ष्णिग्राहमित्रमाक्रन्दमित्रं च एकसीमाधिपतित्वात् कथयन्ति । नीवाटी.

**अरिविजिगीष्वोर्मण्डलान्तर्विहितवृत्तिरुभयवेतनः पर्वताटवीकृताश्रयश्चान्तर्धिः ॥**

अथ अन्तर्धिलक्षणमाह– अरिविजिगीष्वोरिति । अन्तर्धिशब्देन चरटः कथ्यते । य इत्थंभूतो भवति सोऽन्तर्धिः । अरिविजिगीष्वोर्मण्डलान्तरसमः यः महाटवीनिवासः पर्वताश्रयो वा उभयवेतनो भवति । विषमाश्रयबलाद्विजिगीषुं तमरिं च द्वावपि दण्डेन योजयति असावन्तर्धिरुच्यते । एवं सप्तविधराजमण्डलमन्तर्धिसहितं भूभुजा विज्ञेयम् । नीवाटी.

शत्रुप्रकाराः

**अराजबीजी लुब्धः क्षुद्रो विरक्तप्रकृतिरन्यायपरो व्यसनी विप्रतिपन्नमित्रामात्यसामन्तसेनापतिः शत्रुरभियोक्तव्यः ॥**

अथ यादृग्रूपो रिपुर्विगृहीतव्यो विजिगीषुणा तत्स्वरूपमाह– अराजबीजीति । इत्थंभूतो यः शत्रुर्भवति स विजिगीषुणा अभियोक्तव्यः विगृहीतव्यः । किंविशिष्टः ? अराजबीजी जारजातः अन्न( ? अन्य )देशीयो वा । तथा यो लुब्धो भवति । क्षुद्रः दुष्टहृदयः । तथा विरक्तप्रकृतिः विरक्तपरिग्रहः । तथा अन्यायपरः उन्मार्गगामी । व्यसनी द्यूतपानादिभिर्व्यसनैः समेतः । तथा विप्रतिपन्नमित्रामात्यसामन्तसेनापतिः विप्रतिपन्नाः पराङ्मुखीभूताः मित्रामात्यसेनापतिसामन्ताः यस्य स तथा । एवंविधः शत्रुः साध्यो भवति । तथा च शुक्रः– 'विरक्तप्रकृतिर्वैरी व्यसनी लोभसंयुतः । क्षुद्रोऽमात्यादिभिर्मुक्तः स गम्यो विजिगीषुणा ॥' । नीवाटी.

**अनाश्रयो दुर्बलाश्रयो वा शत्रुरुच्छेदनीयः ॥**

अथ भूमिपेन शत्रोर्यत्करणीयं तदाह– अनाश्रय इति । यः शत्रुरनाश्रयो भवति आश्रयं न लभते दुर्बलं वा कमप्याश्रयेत् स उच्छेदनीयः योधनीयः । तथा च शुक्रः– 'अनाश्रयो भवेच्छत्रुर्यो वा स्याद्दुर्बलाश्रयः । तेनैव सहितः सोऽत्र निहन्तव्यो जिगीषुणा ॥' । नीवाटी.

**विपर्यये निष्पीडनीयः कर्षयेद्वा ॥**

अथ भूयोऽपि यत्कर्तव्यं तदाह– विपर्यय इति । यदि शत्रुविषये विपर्ययो भवति मैत्रं भावं गच्छति तत् तं निष्पीडयेत् विभवहीनं कुर्यात् कर्षयेद्वा व्यापादयेद्वा । तथा च गुरुः– 'शत्रुर्मित्रत्वमापन्नो यदि नो चिन्तयेच्छिवम् । तत्कुर्याद्विभवहीनं युद्धे वा तं नियोजयेत् ॥' । नीवाटी.

**समाभिजनः सहजशत्रुः ॥**

अथ सहजस्य शत्रोर्लक्षणमाह– समाभिजन इति । समाभिजनशब्देन दायाद उच्यते । स सहजशत्रुः । यथा मूषकस्य मार्जारः कदाचिच्छुभं न चिन्तयति । तथा च नारदः– 'गोत्रजः ( सहजः ) शत्रुः सदा तत्पदवाञ्छकः । रोगस्येव न तद्वृद्धिं कदाचित्कारयेत्सुधीः ॥' । नीवाटी.

***विराधो विराधयिता वा कृत्रिमः शत्रुः ॥**

अथ कृत्रिमशत्रोः स्वरूपमाह– विराध इति । करणेन निर्वृत्तः कृत्रिमः । यः शत्रुर्विराधो भवति, यस्य विरोधः क्रियते स विराध उच्यते, शत्रुर्यः पुनर्विजिगीषोरुपेत्य विरोधं करोति सोऽपि कृत्रिमः शत्रुः । यदि हीनबलो भवति विग्रहीतव्यः । यदि अधिकबलो भवति तदा साम्ना संतोषयेत् । तथा च गर्गः– 'यदि हीनबलः शत्रुः कृत्रिमः संप्रजायते । तदा दण्डोऽधिको वा स्याद्देयो दण्डः स्वशक्तितः ॥' । नीवाटी.

---

* 'विराधो विराधयिता' इत्यत्र 'विरुद्धो विरोधयिता' इत्येवं शुद्धिः कौपाठमनुसृत्य विधेया ।

शत्रुत्वमित्रत्वविवेकः

**अनन्तरः शत्रुरेकान्तरं मित्रमिति नैष एकान्तः। कार्यं हि मित्रत्वामित्रत्वयोः कारणम्, न पुनर्विप्रकर्षसंनिकर्षौ ॥**

अथ शत्रुमित्रकारणमाह– अनन्तर इति । यदेवं वदति– 'अनन्तरः सीमाधिपः शत्रुर्भवति, तस्यानन्तरं यस्तन्मित्रम्' तन्नैष एकान्तः सदा लक्षणकार्यः । (कार्यं) हि शत्रुमित्रत्वयोः (कारणम्) । कार्यवशात्सीमाधिपोऽपि मित्रतां याति शत्रुत्वं च । (एकान्तरः) शत्रुर्भवति, मित्रं भवति । न पुनः संनिकर्षः कारणं विप्रकर्षो वा । सीमान्तरितः मित्रम्, संनिकर्षः समीपस्थः सीमाधिपः शत्रुः, नैष एकान्तः सदैव भवतीति । तथा च शुक्रः– 'कार्यात्सीमाधिपो मित्रं भवेत्तत्परजो रिपुः । विजिगीषुणा प्रकर्तव्यः शत्रुमित्रोपकार्यतः ॥'। नीवाटी.